# वाचस्पत्यम्

( बृहत् संस्कृताभिधानम् )

[illegible]

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्येण

सङ्कलितम्
तेनैव संस्कृतम्

## षष्ठो भागः



राष्ट्रिय संस्कृत संस्थान
मानित विश्वविद्यालय
५६-५६ इ, इन्स्टीट्यूशनल एरिया, जनकपुरी
नई दिल्ली - ११००५८

प्रकाशक :
डॉ० सी. गिरि
कुलसचिव
राष्ट्रिय सस्कृत संस्थान
मानित विश्वविद्यालय
५६-५७, इन्स्टीट्यूशनल एरिया, जनकपुरी
नई दिल्ली - ११००५८

पुनर्मुद्रित सस्करण, २००६

मूल्य - १२९३ ०० (छः भागो का सेट)



मुद्रक
चौखम्बा संस्कृत सीरीज आफिस
के ३७/९९, गोपाल मन्दिर लेन
गोलघर (मैदागिन) के पास
पोस्ट बॉक्स न० १००८, वाराणसी-२२१ ००१ (भारत)
फोन ३३३४५८ (आफिस), ३३४०३२ एव ३३५०२० (आवास)
e-mail cssoffice@satyam net in

# VĀCASPATYAM

## (A Comprehensive Sanskrit Dictionary)

*Compiled by*

**Sri Taranatha Tarkavachaspati**

Professor of Grammar and Philosophy

Govt. Sanskrit College, Kolkata

**Vol. VI**



RASHTRIYA SANSKRIT SANSTHAN

Deemed University

56-57, Institutional Area, Janakpuri

New Delhi-110058

**पूर्णमुख** पु० जनमेजयसर्पसत्रे दग्धनागभेदे भा० आ० ५७ अ०।

**पूर्णयोग** पु० बाहुयुद्धभेदे तत्प्रकारः भा० स० २२ अ० उक्तो यथा "ततस्तौ नरशार्दूलौ बाहुशस्त्रौ समीयतुः। वीरौ परमसंहृष्टावन्योऽन्यजयकाङ्क्षिणौ। करग्रहणपूर्वं तु कृत्वा पादाभिवन्दनम्। कक्षैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः। स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः। अङ्गमङ्गैः समाश्लिष्य पुनरास्फालनं विभो!। चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः। गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम्। बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ। उरोहस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य तु। करसंपीडनं कृत्वा गर्जन्तौ वारणाविव। नर्दन्तौ मेघसङ्काशौ बाहुप्रहरणावुभौ। तलेनाहन्यमानौ तु अन्योऽन्यं कृतवीक्षणौ। सिंहाविव सुसंक्रुद्धावाकृष्याकृष्य युध्यताम्। अङ्गेनाङ्गं समापीड्य बाहुभ्यामुभयोरपि। आवृत्य बाहुभिश्चापि उदरं च प्रचक्रतुः। उभौ कट्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ। अधोहस्तं स्वकण्ठे तूदरस्योरसि चाक्षिपत्। सर्वातिक्रान्तमर्यादं पृष्ठभङ्गं च चक्रतुः। सम्पूर्णमूर्च्छां बाहुभ्यां पूर्णकुम्भं प्रचक्रतुः। तृणपीडं यथाकामं पूर्णयोगं समुष्टिकम्। एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम्" मू०। "कक्षैर्दोर्मूलैः कक्षां प्रकोष्ठगतां रज्जुं धुन्वानौ यत्र यत्र कक्षे आस्फोटं चक्रतुः बाहुमूलास्फालनेनाङ्गदवद्रज्जुवेष्टं कम्पयन्तावित्यर्थः। चित्रहस्तादिकं हस्तस्यातिवेगेनाकुञ्चनप्रसारणोपर्य्यधश्चालनसङ्कोचकरणानि चित्रहस्ताः। आदिपदात् पादस्याप्याकुञ्चनादि। कक्षाबन्धं परस्परकक्षायां हस्तौ कृत्वा बन्धनम्। गले गण्डेन भालदेशेनाभिघातस्तेन पाषाणसङ्घट्टात्तयोरभिघातेन विस्फुलिङ्गोत्पत्त्याऽशनिं वज्रमिव ससृजतुरित्यर्थः। बाहुपाशादिकं चरणपाश आदिशब्दार्थः। पादाभ्यामाहताः शिराः स्नायवो याभ्यां तौ दृढप्रहारेण नाडीपर्य्यन्तमपि वेदनावन्तावित्यर्थः। उरोहस्तमुरसि चपेटाप्रहारं पूर्णकुम्भौ ग्रथिताङ्गुलिभ्यां हस्ताभ्यां परशिरस पीडनं पूर्णकुम्भः द्वित्वं परस्परं द्वावपि चक्रतुरिति सङ्गतम्। तलेन चपेटया, आवृत्य जानुदेशे पृष्ठं कृत्वा बाहुभिर्वल्गुभ्यां द्वावपि शिर उदरमादाय प्रचक्रतुः प्रचिक्षिपतुः कृ विक्षेपेऽस्य रूपम्। एवं कट्यां सुपार्श्वे च प्रचक्रतुः। तक्षवन्तौ तक्षणं तनूकरणं गात्रसङ्कोच इत्यर्थः तद्वन्तौ। अधोहस्तमुदरस्याधस्तादस्तं कृत्वा हस्ताभ्यामुदरमावेष्ट्य स्वकण्ठे उरसि च कण्ठोरःसमीपे आनीयाक्षिपदास्फालितवान्। पृष्ठस्य भूमस्पर्शेन जातं भङ्गं पराभवं बाहुभ्यामुदरादीनि पीडने सम्पूर्णमूर्च्छं" नीलकण्ठः।

**पूर्णवैनाशिक** पु० सर्ववैनाशिके सर्वशून्यत्ववादिनि बौद्धभेदे सर्ववैनाशिकोऽप्यत्र।

**पूर्णहोम** पु० पूर्णो होमः। पूर्णाहुतौ।

**पूर्णा** स्त्री "नन्दा भद्रा जया रिक्ता पूर्णा प्रतिपद क्रमात्" ज्यो० त० उक्ते पञ्चमीदशमीपञ्चदशीरूपे तिथिभेदे।

**पूर्णाङ्गद** पु० नागभेदे भा० आ० ५७ अ०।

**पूर्णान(ल)क** न०। मङ्गलपात्रे पूर्णपात्रे मेदि० पूर्णपात्रशब्दे दृश्यम्। [कारे विदङ्केदे च।

**पूर्णानन्द** पु० पूर्ण आनन्दो यत्र। १परमेश्वरे २तन्त्रप्रकरण-

**पूर्णाभिषेक** पु० कर्म०। तन्त्रोक्ते कौलाभिषेकभेदे।

**पूर्णायुस्** पु० १प्राधेये गन्धर्वभेदे भा० आ० ६५ अ०। पूर्णमायुरस्य। २शतायुष्के कर्म०। ३शतवर्षमिते जीवनकाले न०।

**पूर्णावतार** पु० कर्म०। १नृसिंहे २रामे ३श्रीकृष्णे च तेषां भगवतः सम्पूर्णावतारत्वात् तथात्वं अन्ये भाग्यु कलावतारत्वम्। "पूर्णो नृसिंहो रामश्च श्वेतद्वीपविराड् विभुः। परिपूर्णतमः कृष्णो वैकुण्ठे गोकुले स्वयम्। वैकुण्ठे कमलाकान्तो रूपभेदाच्चतुर्भुजः। गोलोके गोकुले राधाकान्तोऽयं द्विभुजः स्वयम्" ब्रह्मवै० जन्मख० १८ अ० उक्तेस्तेषां तथात्वम्।

**पूर्णाशा** स्त्री नदीभेदे भा० भी० ६ अ०।

**पूर्णाहुति** स्त्री पूर्णा आहुतिः। होमसमाप्तौ होम्यायामाहुतौ शत० ब्रा० २।२।१।१।

**पूर्णि** स्त्री पृ—क्तिन्। पूर्त्तौ पूर्णता।

**पूर्णिका** स्त्री नासाच्छिन्नीनामकखगे त्रिका०।

**पूर्णिमा** स्त्री पूर्णिं पूर्त्तिं मिमीते मा—क। १पौर्णमास्यां तिथौ मरीचेः कलायां पत्न्यां जाते २कन्याभेदे "भार्य्या मरीचेस्तु कला सुषुवे कर्दमात्मजा। कश्यपं पूर्णिमानञ्च ययोरापूरितं जगत्। पूर्णिमाऽसूत विरजं विश्वगञ्च परन्तप!" भाग० ४।१।१२ तत्तिथिसम्बन्धे यज्ञभेदस्य कर्मभेदे याग्यतादिके च कात्या० न्यायेऽपि यथा "तत्र शुक्लायां पञ्चदश्यां चन्द्रमण्डलं सकलाभिः कलाभिः पूर्य्यते सेयं मण्डलपरिपूर्त्तिः पूर्णिमेत्यनेन नाम्ना गीयते। तदुक्तं ब्रह्माण्डमत्स्यपुराणयोः "कालक्रमे व्यतिक्रान्ते दिवापूर्णौ परस्परम्। चन्द्रादित्यौ प०

राकेन्दु पूर्णत्वात् पूर्णिमा स्मृता” इति । अह्नः परो भागः पराह्णः सूर्य्यास्तमयकाल इत्यर्थः । तत्र चादित्यस्य पूर्णमण्डलस्यास्तमिति तत्पोत्तरपार्श्वे चन्द्रः सम्पूर्णमण्डल उदेतीति । दृष्टान्तदार्ष्टान्तिकभावस्य विवक्षितत्वात् द्वयोरादित्यचन्द्रयोरुपन्यासः । यथा च मण्डलपूर्णत्वविवक्षया पूर्णिमाशब्दः प्रयुज्यते तथा मासपूर्णत्वविवक्षया पौर्णमासीशब्दः प्रयुज्यते । तदुक्तं भविष्योत्तरे “पौर्णमासी महाराज ! सोमस्य दयिता तिथिः । पूर्णो मासो भवेद् यस्मात् पौर्णमासी ततः स्मृता” इति । पूर्णिमामावास्ययोर्विकल्पेन मासान्तत्वं माघप्रस्तावे दर्शितम् । अतएव पौर्णमास्याम् अत्यन्तविप्रकर्षे सत्यनभिभूतत्वाच्चन्द्रमण्डलः सम्पूर्णो दृश्यते । तावेतौ सन्निकर्षविप्रकर्षौ गोभिल आह “यः परो विप्रकर्षः सूर्य्याचन्द्रमसोः सा पौर्णमासी । यः परः सन्निकर्षः सामावास्येति” । तदेव पर्व्वाभिधायाः पञ्चदश्याः पूर्णिमादिनामनिर्व्वचनेन स्वभावविशेषो दर्शितो भवति । ते च पूर्णिमामावास्ये प्रत्येकं द्विविधे । तच्च पुराणे दर्शितम् “राका चानुमतिश्चैव पौर्णमासी द्विधा स्मृता । सिनीवाली कुहूश्चैवममावास्या द्विधैव तु” इति । एतासां चतसृणां स्वरूपं काठकशाखायां विस्पष्टं श्रूयते “या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका । या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूः” इति । बृहद्वशिष्ठोऽपि “राका चानुमतिश्चैव पौर्णमास्यौ विदुः । राका संपूर्णचन्द्रा स्यात् कलोनाऽनुमतिर्मता । पौर्णमासी दिवा दृष्टे शशिन्यनुमतिः स्मृता । रात्रिदृष्टे पुनस्तस्मिन् सैव राकेति कीर्त्तिता” । मत्स्यब्रह्माण्डपुराणयोः “यस्मात्तामनुमन्यन्ते पितरो दैवतैः सह । तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता । अत्यर्थं राजते यस्मात् पौर्णमास्यां निशाकरः । रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः” इति । “अथ पञ्चदशी निर्णीयते । सा द्विविधा पौर्णमास्यमावास्या च । तत्र पौर्णमास्यां परस्परविरुद्धानि वाक्यान्युपलभ्यन्ते । तत्र परविद्धाया ग्राह्यत्वं विष्णुधर्म्मोत्तरे “एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्द्दशी । अमावास्या तृतीया च उपोष्याः स्युः परान्विताः” । परविद्धानिषेधः पूर्व्वविद्धाविधिश्च ब्रह्मपुराणपद्मपुराणयोः “षष्ठ्येकादश्यमावास्या पूर्व्वविद्धा तथाष्टमी । पूर्णिमा परविद्धा च नोपोष्यं तिथिपञ्चकम् । पूर्व्वविद्धा तु कर्त्तव्या सप्तमी व्रतिभिर्नरैः । पौर्णमासी, षष्ठीपात-परा वा नियमाकृता” इति । पूर्व्वविद्धायाग्राह्यत्वं च युग्मवाक्ये । “चतुर्द्दश्या च पूर्णिमेति” । एवं परस्परविरोधे सति या व्यवस्था सा ब्रह्मवैवर्त्ते दर्शिता “पूर्व्वविद्धा न कर्त्तव्या अमावास्या च पूर्णिमा । वर्ज्जयित्वा मुनिश्रेष्ठ ! सावित्रीव्रतमुत्तमम्” इति । सावित्री राजकन्या तया चीर्णं व्रतं सावित्रीव्रतम् । तच्च भविष्योत्तरपुराणे दर्शितम् “कथयामि कुरुश्रेष्ठ ! महिम्नो व्रतं परम् । यथा चीर्णं व्रतं पूर्व्वं सावित्र्या राजकन्यया” इति । एतच्च पौर्णमास्याममावास्यायां च विहितम् । तस्मिन् व्रते पूर्व्वविद्धा ग्राह्या । व्रतान्तरे पूर्व्वविद्धा न कर्त्तव्या किन्तु परविद्धैव कर्त्तव्येति परस्परविरुद्धस्य शास्त्रद्वयस्य व्यवस्था । यदा तु चतुर्द्दश्यष्टादशनाडिका भवति तदा सावित्रीव्रतमपि तत्र परित्याज्यम् । “भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिमिति” स्मृतेः । सोऽयं पौर्णमासीनिर्णयः स एवामावास्यायामप्यवगन्तव्यः । तथापि सावित्रीव्रतं पूर्व्वदिने कर्त्तव्यं व्रतान्तराण्युत्तरदिने । अस्यां च व्यवस्थायां ब्रह्मवैवर्त्तवचनं पूर्व्वमुदाहृतम् । स्कन्दपुराणेऽपि “भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत् । वर्ज्जयित्वा तु सावित्रीव्रतं तु शिखिवाहन !” इति । एवञ्च सति युग्मशास्त्रं सावित्रीव्रतव्यतिरिक्तेषु व्रतेषु द्रष्टव्यम् । प्रचेता अपि “नागविद्धा तु या षष्ठी सप्तम्या च युताष्टमी । दशम्येकादशीविद्धा त्रयोदश्या चतुर्द्दशी । भूतविद्धाप्यमावास्या न ग्राह्या मुनिपुङ्गव ! परतोत्तरविद्धास्ताः कर्त्तव्याः काठकी श्रुतिः” इति । पद्मपुराणेऽपि “अष्टमी तथा दर्शः शुक्लपक्षे त्रयोदशी । एताः परयुताः कार्य्याः पराः पूर्व्वेण संयुताः” इति । यत्तु नारदीयपुराणे “दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम् । पूर्व्वविद्धमकुर्व्वाणो नरकं प्रतिपद्यते” इति तत् सावित्रीव्रतविषयं श्राद्धविषयं वा । अमावास्यायामिव पौर्णमास्यामपि श्राद्धं विहितम् तथाच पितामहः “अमावास्याव्यतीपातपौर्णमास्यष्टकासु च । विद्वान् श्राद्धमकुर्व्वाणः प्रायश्चित्तीयते हि सः” इति । अमावास्याश्राद्धस्य च पार्व्वणरूपत्वमपराह्णस्य तत्कर्म्मकालत्वं कुतपस्य प्रारम्भकालत्वमित्येते तत्तिथितत्त्वे प्रतिपत्प्रकरणे महार्णवटिकनिबन्धे प्रपञ्चितम्” ।

“या चतुर्द्दशीयुता ग्राह्या युग्मात् । यमः “पञ्चाम्ये सो-

भा॰शा॰प॰स॰। पूर्व(र्व)काले भव॰ ठञ् वृद्धिः। पौर्व्व(र्व)-कालिक इत्येव तत्रार्थे त्रि॰ स्त्रियां ङीप् इति भेदः।

पूर्व(र्व)कृत् पु॰ पूर्वां(र्वा) करोति कृ—क्विप् वृत्तौ पुंवत्। १पूर्व(र्व)दिगधिपतौ आदित्ये २तदधिपे इन्द्रे च यजु॰ १०।२६। ३पूर्व(र्व)कारकमात्रे त्रि॰।

पूर्व(र्व)कोटि स्त्री विप्रतिपत्तौ पूर्वोपात्ते विषये पूर्वपक्षे

पूर्व(र्व)गङ्गा स्त्री नित्यक॰। नर्मदानद्यां हेम॰।

पूर्व(र्व)चित्ति त्रि॰चित–भावे क्तिन् पूर्व(र्व) चित्तिः कारणं यस्य। १पूर्वानुभवविषये यजु॰१२।११।१२।४२। २अप्सरो-भेदे स्त्री हरिवं॰ १२अ॰।

पूर्व(र्व)ज पु॰ पूर्वस्मिन् काले जायते जन–ड। १ज्येष्ठभ्रातरि रघु॰ १०।२६। २ज्येष्ठभगिन्यां स्त्री अमरः। ३पूर्वकाल-जातमात्रे त्रि॰। "ज्येष्ठाभ्लोयमिच्छन्ति मासमासाद पूर्व(र्व)जम्"। ४चन्द्रलोकस्थे दिव्यपितृगणे "अथ पूर्व(र्व)जाः पितरश्चन्द्रगोलस्था न्यस्तशस्त्राः स्वधाभुजः। कव्यमानादयस्ते च" त्रिका॰। ५पितामहादौ "स पूर्व(र्व)जानां कपिलेन रोषात्" रघु॰। [त्रिका॰

पूर्व(र्व)जिन पु॰ कर्म॰। प्राचीने जिनभेदे मञ्जुघोषाख्ये

पूर्व(र्व)दक्षिणा स्त्री पूर्व(र्व)स्या दक्षिणस्याश्चान्तराला दिक् "दिङ्नामान्यन्तराले" पा॰ स॰। पूर्वदक्षिणयोर्दिशोरन्त-रालायां दिशि १अग्निकोणे २तद्दिक्स्थे देशे च मार्क॰ पु॰ ५८ अ॰।

पूर्व(र्व)दिक्पति पु॰ कर्म॰ ६त॰। इन्द्रे हेम॰। पूर्व(र्व)दिशो प्राच्योऽप्यत्र। २मेषसिंहादिराशिषु। "प्रागादिककुभां माषा दवारस्यं प्रदक्षिणम्। मेषाद्या राशयो ज्ञेया स्त्रिरावृत्तिपरिभ्रमात्" ज्यो॰त॰।

पूर्व(र्व)दिग्बल न॰ दिग्बलशब्दे ३५७१ पृ॰ उक्ते खर्वा-दिषष्टानां कालभेदे पूर्वस्यां दिशिभवे बलभेदे

पूर्व(र्व)दिग्वदन न॰ पूर्वं दिशि वदनमस्य। दिग्वदनशब्दे ३५७१ पृ॰ उक्ते मेषसिंहधनूरूपराशित्रिके

पूर्व(र्व)दिश् स्त्री कर्म॰। प्राच्यां दिशि यस्यां दिशि येषां सूर्य्यस्य प्रथमदर्शनं तेषां सा दिक् प्राची। तत्प्रमाणो पायश्च दिग्ज्ञानशब्दे ३५७१ पृ॰ दृश्यम्।

पूर्व(र्व)दिष्ट त्रि॰ पूर्व(र्व) दिष्टं भाग्यं साधनत्वेनास्त्यस्य अच्। पूर्वभाग्यानुरूपेण जाते १ द्रव्यादौ "दैवैर्मर्त्यस्य यत्प्रोक्तं पूर्व(र्व)दिष्टं हि तत् स्मृतम्" भाग॰ ३।१७ श्लो॰। पूर्वं(र्वं) दिष्टम्। २पूर्वविहिते त्रि॰।

पूर्व(र्व)देव पु॰ पूर्व(र्व) देवाः। १असुरे अमरः। तेषां प्रथम देवत्वेन जायमानत्वेऽपि अन्यायाचरणात् ततो भ्रष्टानां दैत्यभावं प्राप्तिरिति पौराणिकी कथानुसन्धेया। कर्म॰। पूर्वतनयो देवयोः २नरनारायणयोः हि॰ व॰। भा॰ उ॰ ४८ अ॰।

पूर्व(र्व)देवता स्त्री कर्म॰। अनादिदेवभावेषु पितृषु "अक्रो-धनाः शौचपराः सततं ब्रह्मचारिणः। न्यस्तशस्त्रा महाभागाः पितरः पूर्व(र्व)देवताः" मनुः। तदधिकं पितृशब्दे दृश्यम्।

पूर्व(र्व)देश पु॰ पूर्व(र्व)स्मिन् देशः। जम्बुद्वीपस्थे देशभेदे स च देशः बृ॰ सं॰ १४ अ॰ कूर्मविभागे दर्शितः।

पूर्व(र्व)नदी स्त्री कर्म॰। कूर्मविभागे उक्तायां पूर्वदिक्स्थायां नद्याम् ततो नद्यन्तत्वात् ढक् उत्तरपदवृद्धिः पूर्वनादेय तत्र–भवे त्रि॰।

पूर्व(र्व)पक्ष पु॰ कर्म॰। १शुक्लपक्षे अमरः। शास्त्रीयसंशय-निरासार्थमाद्ये २फक्किकायाम् ।३सिद्धान्तविरुद्धकोटौ "वि-षयो विषयश्चैव पूर्वपक्षस्तथोत्तरम्" इत्युक्ताधिकरणा-वयवभेदे व्यवहारे प्रतिज्ञापरपर्य्याये भाषापत्ररूपे ४प्रथमावयवभेदे। तच्चतुष्पादिक वीरमि॰ उक्तं यथा "पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरस्तथा। क्रिया-पादस्तृतीयस्तु चतुर्थो निर्णयस्तथा" इति बृहस्पतिवच-नस्य निर्णयफलकपरामर्शरूपमत्याकाङ्क्षितपरमेव निर्णय-पदमुपचारादित्याह "इतरथा पूर्वोदाहृतमद्वचनविरोधः स्यात्। तत्र प्रतिज्ञावादी कः स्यादित्यपेक्षिते नारदः "राज्ञे कुर्य्यात् पूर्वमावेदनं यस्तस्य ज्ञेयः पूर्ववादो विधि-ज्ञैः" इति पूर्ववादः प्रतिज्ञा। पूर्ववादकस्यैव प्रतिज्ञावादि-त्वमपवादमाह स एव "यस्य वाभ्यधिका पीडा कार्य्यं वाभ्यधिकं भवेत्। तस्यार्थिवादो दातव्यो न यः पूर्वं निवेदयेत्"। अर्थिवादः प्रतिज्ञा। बृहस्पति "अहंपूर्वि(र्वि)का यातावर्थिप्रत्यर्थिनौ यदा। वादो वर्णा-नुपूर्व्येण ग्राह्यः पीडामवेक्ष्य चेति"। मनुरपि "धर्मा-नर्थावुभौ बुद्ध्वा धर्माधर्मौ च केवलौ। वर्णक्रमेण सर्वाणि पश्येत् कार्य्याणि कार्य्यिणाम्"। ब्राह्मणादीनां युग-पद्धर्माधिकरणं प्राप्तानां वर्णानुक्रमेण ब्राह्मणस्यादौ तत क्षत्रियस्येत्येवमादिक्रमेण चतुष्पाद्व्यवहारः प्रव-र्त्तनीयो राज्ञा पीडाधिक्यकार्य्यगौरव भेदार्थिप्रत्यर्थिनो-रन्यतरस्य तदा न पूर्वावेदनक्रमो नापि वर्णक्रम। यदा तु सर्वे समकालाः आवेदनक्रमः। युगपदावेदने च मानवत्वे समानपीडत्वे च इदमप्यभावतोऽप्येति

काल' पक्षोऽसौ प्रमाणे सत्यपि स्मृत'। यस्मिन् पक्षे द्विधा साध्यं भिन्नकालविमर्शनम्। विरुध्यते क्रिया भेद' स पक्षोऽदुष्ट उच्यते'। भूतसाधन भूतभूत साधन तेन वर्जित'। भूतकालः साध्यकाल'। अन्यानपि पक्षाभासानाह स एव "अन्याक्षरनिवेशेन अन्यार्थ गमनेन च। आकुलन्तु भवेत् खं क्रिया चैवाकुला भवेत्। साधनं सह साध्येन निर्दिष्टं यत्र लेखयेत्। उक्तक्रमविहीनत्वात् सोऽपि पक्षो न सिध्यतीति। विरुद्धाविरुद्धस्य द्वावप्यर्थौ निवेशितौ। एकस्मिन् यत्र दृश्येते तं पक्षं दूरतस्त्यजेत्। परस्परविरुद्धानि य. पदानि निवेशयेत्। विरुद्धपदसङ्कीर्णा भाषा तस्य न सिध्यतीति"। यत्तु "पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः। अनेकपदसङ्कीर्णः पूर्वपक्षो न सिध्यतीति" स्मरणात् तस्यायमर्थः। राज्ञा विवर्जितो राजन्यक्र-युक्तादिविषयकघोटानादिपदमिश्रितस्तु क्रियाभेदेन युगपन्न सिध्यतीति मदीया रूपका इयन्तोऽनया हस्ता-ऽनेन गृहीता सुवर्णञ्च मया निक्षेपोऽतमर्पित मदीयक्षेत्रमपहरतीत्यनेकपदविषयस्यापि पक्षस्य क्रमे-णाप्यनुपादेयत्वे तत्त्वनिर्णयाभावप्रसङ्गेन युक्तिविरोधात्। "बहुप्रतिज्ञं यत्कार्य्यं व्यवहारेषु निश्चितम्। कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सयेति" कात्यायनवचन-विरोधाच्च। तस्माद्युगपत् पक्षाभासतैत्वेव रमणीयम्। अनेकवस्तुसङ्कीर्णत्वादनुत्पन्नतत्पदसम्बद्धम्। हिरण्य रूपकवाससि वानेन मत्तो हृत्वा गृहीतान्यस्य हस्ते मया निक्षिप्तान्यनेनापहृतानि वेत्येकस्मिन्नपि पदे युग-पदपीदृशपक्षोपन्यासस्यादुष्टत्वात्। साध्यञ्च विधिमुखेन प्रतिषेधमुखेन वा पक्षनिक्षेपणीयमित्याह कात्यायनः "न्याय्यं संयच्छते कर्तुमन्याय्यं वा करोत्ययम्। न लेख्यति यस्त्वेवं तस्य पक्षो न सिध्यति"। न्याय्यं समित्यनेन मम्मैतावद्धनमादाय न ददातीत्यादि प्रतिषेध-मुखताऽपि सूचिता। अन्याय वेत्यनेन ममेदमपहर तीत्यादि विधिमुखता प्रदर्शिता। बृहस्पतिरपि "प्र-तिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम्। निश्चित लोकसिद्धञ्च पक्षं पक्षविदो विदु"रिति। प्रतिज्ञादोषै प्रतिज्ञासाध्यासादिभिर्मुक्तं रहितम्। ते च दर्शिता प्राक्। साध्यं साधनार्हम्। सत्कारणान्वित स्फुट-दोषरहितहेतुरहितम्। निश्चितं सन्देहजनकवाक्य रचनायुक्तं न तु स्वयमेव निश्चितं विप्रतिपत्त्यावर्थनि-र्णयाभावात्। लोकसिद्धं व्यवहारिकधर्माविरुद्धम्। अतएव मनुः "सत्या न भाषा भवति यद्यपि स्यात् प्रति-ष्ठिता। बहिश्चेद्भाष्यते धर्मान्नियताद्व्यवहारिकात्"। प्रतिष्ठिता प्रसिद्धत्वादिदोषनिर्मुक्ता। भाषा प्रतिज्ञा व्याव-हारिकधर्माद्विरुद्धा च सत्या ग्राह्या न भवति राज्ञा-दीनामित्यर्थः। भवदेवस्तु "यत्र स्तुतमात्र एव सति लोकाना सम्प्रत्ययस्तल्लोकसिद्ध तेन निर्धनकृतो लक्षादि-सङ्ख्यधनाक्षेपो न पक्ष इति व्याचष्टौ तद्बाधकरूपप्रतिज्ञा-दोषवत्त्वेनैव तादृशपक्षस्य निराकरणात्। प्रतिज्ञादोष-निर्मुक्तमित्यनेनैव गतार्थम्"। ततः गहा० भवार्थे छ। पूर्वपक्षीय तद्भवे त्रि०।

**पूर्व(र्व)पद** न० कर्म०। पूर्ववर्त्तिनि विभक्त्यन्ते पदे "पूर्व-पदात् सञ्ज्ञायामग"पा०। २पूर्ववर्त्तिस्थाने च। पूर्वपदमधीते "पूर्वोत्तरपदात्" वार्त्ति० इकन्। पूर्वपदिक तद्वेत्तरि तदध्यायिनि च।

**पूर्व(र्व)पर्वत** पु० नित्यक०। उदयाचले अमरः।

**पूर्व(र्व)पाञ्चालक** त्रि० पूर्वस्मिन् पञ्चाले भव' वुञ् उत्तर-पदवृद्धि'। पूर्वपञ्चालभवे। पूर्व पञ्चालानाम् एकदेशिस० तत्र भवः अणि तु नोत्तरपदवृद्धि'। पौर्वपञ्चाल इत्येव सि० कौ०।

**पूर्व(र्व)पाटलिपुत्रक** त्रि० पूर्वपाटलिपुत्रे भव' वुञ् न पूर्वपदवृद्धि'। पूर्वपाटलिपुत्रनगरभवे। [स्त्री०४।३।४

**पूर्व(र्व)पाद** पु०पूर्वं पादस्य एकदेशिस०। अग्रचरणे कात्या०

**पूर्व(र्व)पालिन्** पु०पूर्वं देश दिशं वा पालयति पालि–णिनि। १पौरस्त्यदेशपातिन्नृपभेदे २पूर्वदिगीशे इन्द्रे च। [१अ०।

**पूर्व(र्व)पितामह** पु०पूर्वः पितामहात्। प्रपितामहे भा०अ०

**पूर्व(र्व)पीठिका** स्त्री कर्म०। कथाप्रस्तावतरणिकाभेदे।

**पूर्व(र्व)पुरुष** पु० कर्म०। पित्रादित्रिके पुरुषे।

**पूर्व(र्व)पूर्व(र्व)** त्रि० पूर्व+वीप्सायां द्वित्वम्। वीप्सायाञ्च पूर्वशब्दार्थे। [अश्लेषाशब्दे तद्दीयादि दृश्यम्।

**पूर्व(र्व)फल्गुनी** स्त्री अश्विन्यादिषु एकादशे नक्षत्रे।

**पूर्व(र्व)फल्गुनीभव** पु० पूर्व(र्व)फल्गुन्यां भवति भू–अच्। बृहस्पतौ शब्दमाला।

**पूर्व(र्व)भ(भा)द्रपदा** स्त्री भद्रस्य वृषस्येव पद चरणमस्य तस्येदमण् वा कर्म०। अश्विन्यादिषु पञ्चविंशतितमनक्षत्रे तत्स्वरूपादिक नक्षत्रशब्दे उक्तम्।

**पूर्व(र्व)भाव** पु० पूर्वो भाव'। १पूर्ववर्त्तित्वे कारणत्वे येन सह पूर्वभाव. कारणमादाय वा यस्य" भाषा० कर्म०।

२पूर्ववर्त्तिनि भावे पदार्थधर्मभेदे शृङ्गाररसस्य पूर्वरागापरपर्य्याये ३भावभेदे ।

**पूर्व(र्व्व)भाविन्** त्रि॰ पूर्वं भवति भू—णिनि । १कारणे २पूर्ववर्त्तिनि पदार्थमात्रे च सां॰सू॰ १७५ ।

**पूर्व(र्व्व)यक्ष** पु॰ नित्यक॰ । मणिभद्रादौ जिनोत्तमे त्रिका॰ ।

**पूर्व(र्व्व)रङ्ग** पु॰ पूर्वं रज्यतेऽस्मिन् रञ्ज—आधारे घञ् । "यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्व(र्व्व)रङ्गः स उच्यते" दशरूपकोक्ते नान्द्यादौ ।

**पूर्व(र्व्व)राग** पु॰ पूर्वो रागः । नायकयोर्मेलनात् प्राक् सञ्जाते अनुरागभेदे "श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः । दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते । श्रवणन्तु भवेत्तत्र दूतवन्दिसखीमुखात् । इन्द्रजाले च चित्रे च साक्षात् स्वप्ने च दर्शनम् । अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसम्प्रलापाश्च । उन्मादोऽथ व्याधिर्जडता मृतिरिति दशात्र कामदशाः । अभिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनम् । उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि । अलक्ष्यवाक् प्रलापः स्याच्चेतसो भ्रमणाद्भृशम् । व्याधिस्तु दीर्घनिश्वासपाण्डुताकृशतादयः । जडता हीनचेष्टत्वमङ्गानां मनसस्तथा । रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते । जातप्रायन्तु तद्वाच्यं चेतसा चापि काङ्क्षितम् । "वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः" । "आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः । नीलीकुसुम्भमञ्जिष्ठा पूर्वरागोऽपि च त्रिधा । न चातिशोभते यन्नापैति प्रेम मनोगतम् । तन्नीलीरागमाख्यान्ति यथा श्रीरामसीतयोः । कुसुम्भरागं तत् प्राहुर्यदपैति च शोभते । मञ्जिष्ठारागमाहुस्तद्यन्नापैत्यतिशोभते" सा॰ द॰ ।

**पूर्व(र्व्व)रात्र** पु॰ पूर्वं रात्रेः एकदेशिस॰ अच्समा॰ रात्रान्तत्वात् पुंस्त्वम् । रात्रेः पूर्वभागे ।

**पूर्व(र्व्व)रूप** न॰ कर्म॰ । अर्थालङ्कारभेदे अलङ्कारशब्दे ४००पृ॰ दृश्यम् । भविष्यद्रोगस्य प्राग्जातरूपे तस्य लक्षणविशेषो भाविरोगस्य चोक्तो यथा

"प्राग्रूपं येन लक्ष्यते । उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः । लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् । द्विविधं हि पूर्वरूपं भवति सामान्यं विशिष्टञ्च सामान्यं येन दोषदूष्यसम्मूर्च्छनावस्थाजनितेन भाविज्वरादिव्याधिमात्रं प्रतीयते न तु वातादिजनितत्वादिविशेषः । यथा 'श्रमोऽरतिर्विवर्णत्व'मिति" । अत्र बालगुरुवाक्यप्रद्वेषादि । सामान्याभिप्रायेणैव तन्त्रान्तरे यथा "व्याधेर्जातिर्बुभूषा च पूर्वरूपेण लक्ष्यते । भावः क्रियात्मकत्वस्तु लक्ष्यते लक्षणेन तु" इति । तथाह पराशरः "पूर्वरूपं नाम येन भाविव्याधिविशेषो लक्ष्यते न तु दोषविशेष" इति । विशिष्टं यथा ज्वरादौ चिह्नान्येव वातादिजान्यव्यक्तानि । यदुक्तं तत्रैव "अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम्" । तथाह सुश्रुतः 'सामान्यतो विशेषात्तु जृम्भात्यर्थं समीरणात् । पित्तान्नयनयोर्दाहः कफाच्चान्नाभिनन्दन'मिति" । हारीतेनाप्युक्तम् "इति पूर्वरूपमष्टानां ज्वराणां सामान्यतो विशेषात्तु जृम्भात्यर्थं भूयिष्ठं हृदयोद्वेगि वातजमिति" । प्राग्रूपं येन लक्ष्यते इत्यस्यार्थमाह रक्षितः "येन श्रमादिना उत्पित्सुः सामग्रीसाकल्यादुत्पादेच्छुरामयो रोगः दोषविशेषेण वातादिजन्यासाधारणवेपथ्वादिना अनधिष्ठितोऽसम्बद्धो लक्ष्यते ज्ञायते तत् प्राग्रूपमिति" । लिङ्गमव्यक्तमल्पत्वादित्यस्यार्थमाह स एव "प्राग्रूपलिङ्गेन पूर्वोक्तेन सम्बन्धि लिङ्गं लक्षणम् अव्यक्तं नातिव्यक्तं तत्र हेतुरल्पत्वात् नत्वावरणादियोगादव्यक्तत्वमित्यर्थः" । अन्ये तु पूर्वरूपलक्षणमाहुः "स्थानसंश्रयणं कृत्वा भाविव्याधिप्रबोधनम् । दोषाः कुर्वन्ति यल्लिङ्गं पूर्वरूपं तदुच्यते" इति । सङ्क्षेपतस्तु लक्षणं भाविव्याधिबोधकमेव लिङ्गं पूर्वरूपम्" इति माधवकरविजयरक्षितौ ।

**पूर्व(र्व्व)वत्** अव्य॰ पूर्वस्येव पूर्वेण तुल्यं वा क्रियावति । १पूर्वेण तुल्यक्रियान्वितभेदे पूर्वस्य २तुल्ये च । पूर्वं कारणं विषयतयाऽस्त्यस्य मतुप् मस्य वः । ३कारणेन कार्य्यानुमाने न॰ । "अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टञ्च" गौत॰ सू॰ । "पूर्वं कारणं तद्वत् कारणलिङ्गकम् यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानमिति" गौत॰ वृत्तिः । "तत्रैकं दृष्टस्वलक्षणसामान्यविषयं यत् तत् पूर्ववत्, पूर्वं प्रसिद्धं दृष्टस्वलक्षणसामान्यमिति यावत् तदस्य विषयत्वेनास्त्यनुमानज्ञानस्येति पूर्ववत् यथा धूमाद्वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते तस्य च वह्नित्वसामान्यविशेषस्य स्वलक्षणो वह्निविशेषो दृष्टो रसवत्याम्" सां॰ त॰ कौ॰ ।

**पूर्व(र्व्व)वयस्** त्रि॰ पूर्वं वयः कालावस्थाभेदोऽस्य । १बाल्यावस्थान्विते । कर्म॰ । २बाल्यावस्थायाम् न॰ । वेदे बा॰ अच्समा॰ । पूर्ववयस बाल्यवयसि न॰ । शत॰ब्रा॰ १।२।१।४

**पूर्व(र्व)वर्त्तिन्** त्रि० पूर्वं वर्त्तते वृत–णिनि । अन्यथासिद्धिशून्ये १प्रागवर्त्तिनि कारणे २प्राग्वर्त्तिमात्रे च त्रि०।

**पूर्व(र्व)वाद** पु०पूर्वो वाद । व्यवहारे प्रथमावेदने पक्षभाषापरपर्य्याये पूर्वपक्षवादे । "पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः । पदसंक्रमणात् ज्ञेयो हीनवादी स वै नर·" मिताक्षरा ।

**पूर्व(र्व)वादिन्** त्रि० पूर्वं वदति वद–णिनि । पूर्ववादकारके व्यवहारे प्रथमावेदनकर्त्तरि अर्थिनि । "मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्" । "मिथ्योत्तरे पूर्ववादी कारणे प्रतिवादिनि च" मिता० ।

**पूर्व(र्व)वार्षिक** त्रि०पूर्वं वर्षाणाम् एकदेशिस० ततः "कालात् ठञ्" पा० ठञ् "अवयवादृतो" पा० उत्तरपदवृद्धि· । वर्षाणां पूर्वभागभवे अवयवादित्युक्तेः पूर्वासु वर्षासु भवः इत्यर्थे ठञि पूर्वपदवृद्धिः पौर्ववार्षिक इत्येव सि० कौ० ।

**पूर्व(र्व)वाह्** पु० पूर्वं वयसि वहति वह–ण्वि ७त० । पूर्व वयसि वाहके शत०ब्रा० २।३।४।१७ ।

**पूर्व(र्व)वृत्त** न०पूर्वं वृत्तम् । कर्म०। प्राचीने वृत्ते वृत्तिहासे ।

**पूर्व(र्व)शारद** त्रि० पूर्वं शरदः एकदेशिस०। तत्र भव· अण्वत् "अवयवादृतोः" पा० उत्तरपदवृद्धि· । शरदः पूर्वभवे ।

**पूर्व(र्व)शैल** पु० कर्म०। उदयाचले जटा०। पूर्वाचलादयोऽप्यत्र ।

**पूर्व(र्व)शक्थ** न० पूर्वं शक्थ्न· एकदेशिस०अच्समा० । शक्थ्न· पूर्वभागे । [दयोऽप्यत्र ।

**पूर्व(र्व)समुद्र** पु० कर्म० । पूर्ववर्त्तिनि समुद्रे पूर्वसागरा-

**पूर्व(र्व)सर** त्रि० पूर्वः सन् सरति कर्त्तरि उप पदे एव सृ+ट उप० स० । पूर्वभूयमामिनि स्त्रियां ङीप् । अन्यत्र पूर्वं सरतीति वाक्ये अच् पूर्वसार अग्रगामिनि त्रि० ।

**पूर्वा(र्वा)तिथि** पु० गोत्रप्रवरर्षिभेदे ।

**पूर्वा(र्वा)दि** पु० पूर्वं आदिर्यस्य । व्यवस्थायामसंज्ञायां सर्वनामकर्मनिमित्ते १शब्दगणे स च गण "पूर्व पर अवर दक्षिण उत्तर अपर स्व–अन्तर ।"पूर्वादिभ्यो नवभ्यो वा"पा० पूर्वे पूर्वा इत्यादि। पूर्वा आदिर्यस्या· ।२पूर्वादिकदिशि स्त्री

**पूर्वा(र्वा)निलः** पु० कर्म० । पूर्वदिक्स्थवायौ तद्गुणाश्च "पूर्वस्तु मधुरो वात· स्निग्धः कटुरसान्वितः । गुरुर्विदाहशमनो वातदः पित्तनाशन" राजनि० । "प्राग्वातो मधुर· क्षारो वह्निमान्द्यकरो गुरु· । वैरस्यगौरवौ आग्रामि करोत्यस्पोमधीषु च । श्लेष्मोत्पित्तताद्येष रागश्चश्वसुदाहकृत् । सन्निपातज्वरश्वासत्वगदोषार्शो विषक्रिमीन् । कोपयेदामवातञ्च घनसंघातकारणम्" राजवल्लभ· ।

**पूर्वा(र्वा)नुयोग** पु० दृष्टिवादभेदे "प्रतिकर्मसूत्रपूर्वानुयोग पूर्वगतचूलिका । पञ्च स्यु र्दृष्टिवादभेदा" हेम० ।

**पूर्वा(र्वा)पर** त्रि०द्वन्द्व० । पूर्वस्मिन् अपरस्मिन् च देशे तयोर्भावः ष्यञ् । पौर्वापर्य्यं तद्भावे न० । क्वचिन्न पूर्वपद वृद्धि· । पूर्वापर्य्यं तत्रार्थे न० ।

**पूर्वा(र्वा)पहाना** स्त्री पूर्वमपहीयते अप–हा–कर्मणि ल्युट् अजा० टाप् । पूर्वापहानकर्मणि अजादिगण· ।

**पूर्वा(र्वा)र्द्ध** त्रि० पूर्वार्द्धे भवः यत् । पूर्वार्द्ध भवे । पक्षे ठञ् । पौर्वा(र्वा)र्द्धिक तत्रार्थे त्रि० ।

**पूर्वा(र्वा)षाढ़ा** स्त्री कर्म०। अश्विन्यादिषु विंशे नक्षत्रे तत्स्वरूपादिकमश्लेषाशब्दे उक्तम् ।

**पूर्वा(र्वा)ह्ण** पु० पूर्वमह्न· एकदेशिस० टच्समा० अह्नादेशः "राजाहाह्नान्ता पुंसि" पा० पुंस्त्वम् । दिनस्य पूर्वभागे पूर्वाह्णस्य त्रिधा विभक्तदिनस्य प्रथमभाग· । "पूर्वाह्णो वै देवानां मध्याह्नो मनुष्याणामिति"श्रुति· । अह्न· प्रथमप्रहरद्वयकालश्च । "आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्तत· परम्"स्कन्दपु० । "आवर्त्तनाम् पश्चिमदिग्वर्त्तिच्छायाया· परिवर्त्तनम्" । अतएव "अश्वत्थं वन्दयेन्नित्यं पूर्वाह्णे प्रहरद्वये" मल०त० ।

**पूर्व(र्वा)ह्ण(ह्णे)तन** त्रि० पूर्वाह्णे काले भव· ट्यु तुट् च "कालतनेति" सप्तम्यानलुक् । १पूर्वाह्णभवे स्त्रियां ङीप् । पूर्वाह्णेण सोढाऽस्य इति विग्रहे तु पूर्वाह्णतन इत्येव । २पूर्वाह्णसहनकर्त्तरि त्रि० ।

**पूर्वा(र्वा)ह्णिक** त्रि० पूर्वाह्ण· साधनतयाऽस्त्यस्य ठन् पूर्वाह्णसाध्ये कर्मणि । "दैवं पूर्वाह्णिकं कुर्यादपराह्णे तु पैतृकम्" भा० आ० २३ अ० ।

**पूर्वि(र्वि)न्** त्रि०पूर्वं कृतमनेन "पूर्वादिनि "पा०इनि । १पूर्वक्रियाकारके । वेदे तु "पूर्वै· कृतमिनयौ च" पा० इन । पूर्विण पूर्वैं कृते "आयान्तु न. पितर· सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभि" पितृवाहनमन्त्र· । छान्दसी रूपसिद्धि· । [स्मिन् दिने इत्यर्थे ।

**पूर्वे(र्वे)द्युस्** अव्य० पूर्वस्मिन् अहनि पूर्व(र्व)+एद्युस् । पूर्वे

**पूर्वे(र्वे)षुकामशमी** स्त्री कर्म० । पूर्वदिग्वर्त्तिनगरीभेदे अन्तोदात्तताऽस्य । पूर्वेषुकामशम्या भव· अण् उत्तरपद वृद्धि पूर्वैषुकामशम तद्भवे त्रि० । [ईशानकोणे विदिशि

**पूर्वो(र्वो)त्तरा** स्त्री पूर्वस्याः उत्तरस्याश्चान्तराला दिक् बन्व०।

**पूर्व्य(र्व्व)** त्रि॰ पूर्वैः कृतम् “पूर्वैः कृतमिनयौ” पा॰ यत्ते य। पूर्वैः कृते पुराणे निघण्टुः।

**पूल** संहतौ (राशीकरणे) वा चु॰ उभ॰ पक्षे भ्वा॰पर॰सक॰ सेट्। पूलयति ते पूलति। अपूपुलत् त अपूलीत्।

**पूलक** पु॰ पूल–ण्वुल्। तृणादिस्तूपे धान्यतृणादिमुष्टौ कात्या॰श्रौ॰ २२।३।१०।

**पूलाक** पु॰ पुलाक+पृषो॰। तुच्छधान्ये। तस्य विकारः अवयवो वा पलाशा॰ अञ्। पौलाक तदवयवे तस्य विकारे च त्रि॰।

**पूलास** त्रि॰ पूल–राशीकरणे घञ् तमस्यति अस-क्षेपे अण्। तृणादिस्तूपविक्षेपके तेन निर्वृत्तम् बह्वा॰ अञ्। पौलास तन्निर्वृत्ते त्रि॰।

**पूलासककुरण्ड** न॰ कुरण्डस्य पूलासकः राजद॰ परनि॰। कुरण्डस्य तृणादेर्निरासके।

**पूलिका** स्त्री पूरिका+रस्य लः। पूपभेदे हेमच॰।

**पूष** वृद्धौ भ्वा॰पर॰सेट्। पूषति अपूषीत्। पुपूष।

**पूष** पु॰ पूष–वृद्धौ क। ब्रह्मदारवृक्षे (तुत) अमरः।

**पूषक** पु॰ पूष–ण्वुल्। ब्रह्मदारवृक्षे राजनि॰।

**पूषणा** स्त्री पूष-ल्यु। कुमारानुचरमातृभेदे भा॰शा॰४७अ॰। पूष्णः पृथिव्याः इदम् अण् भेदे न वृद्धिः नोपधा लोप॰। पार्थिवे पदार्थे त्रि॰ ऋ॰१०।५।५।

**पूषदन्तहर** पु॰ पूष्णः सूर्य्यभेदस्य दन्तं हरति हृ–अच्। दक्षयज्ञकाले पूष्णो दन्तोत्पाटके शिवांशे वीरभद्रे काशीखण्डे ८९ अ॰ कथा।

**पूषध्र** पु॰ वैवस्वतमनो पुत्रभेदे। मार्कण्डे॰ १११ अ॰।

**पूषन्** पु॰ पूष–कनिन्। १सूर्य्ये आदित्यभेदे भा॰ आ॰६५ अ॰। ङौ उ पूषि पूषणि पूषि। २पृथिव्यां स्त्री निघण्टुः। पूषणा मन्देदन्तम्। अवमन्तोदाजः। तार्थे च। तत्रार्थे। पूषा अन्यस्य मतुप् भेदे तुट् भावम्। पूषण्वत् सूर्य्य-युक्ते पृथिवीयुक्ते च त्रि॰। ऋ॰१।८२।६। भा॰ [शठाय॰।

**पूषभासा** स्त्री पूषेव भासते भास–अच्। इन्द्रनगर्य्यां

**पूषराति** पु॰ पूषा तदाख्यो देवो रातिर्दाता यस्य। सूर्य्यदेये वस्तुनि ऋ॰ १।१३८।

**पूषात्मज** पु॰ ६त॰। १मेघे २इन्द्रे देवे च। “आदित्यात् जायते वृष्टिरित्युक्तेः इन्द्राधिपमेघस्य आदित्याज्जायमानत्वात् तथात्वम्। “इन्द्रः पूषात्मजो यथा” भा॰ व॰२॰ अ॰। तत्र पूषात्मजेति पाठान्तरं इन्द्राधिपस्य मेघस्य सूर्य्याज्जातत्वात् तथात्वम्।

**पूषासुहृत्** पु॰ ६त॰। शिवे तस्य आत्मवीरभद्रेण पूष-दन्तोत्पाटनात् तथात्वम्। काशीखण्डे दृष्टम्।

**पृ** व्यापारे तु॰आत्म॰सक॰ अनिट्। प्रायेणायम् आङ्पूर्वः। व्याप्रियते व्यापृत। व्यापप्रिये। व्याप्रियते। व्यापृतः व्यापार॰। [अपार्षीत्। पपार।

**पृ** प्रीतौ अक॰ प्रीणने सक॰ स्वा॰ पर॰ अनिट्। पृणोति

**पृ** पालने पूरणे च जुहो॰ पर॰ सक॰अनिट् वा दीर्घे सेट्। पिपर्त्ति पिपृतः पिप्रति॰। अपार्षीत्–अपारीत्। पपार पप्रतुः पपरतुः। पूर्त्तः।

**पृ** पूर्त्तौ चु॰ उभ॰ सक॰ सेट्। पारयति ते–अपीपरत्–त।

**पृक्का** स्त्री पृच–कन् न्यङ्क्वा॰ कुत्वम्। (पिड़िङ्) शाक-भेदे रत्नमाला।

**पृक्त** त्रि॰ पृच–क्त। १सम्पृक्ते २धने न॰ हेमच॰।

**पृक्ति** स्त्री पृच-भावे क्तिन्। १सम्पर्के २स्पर्शे च अमरः।

**पृक्षस्** पु॰ पृच–बा॰ असि सुट् च। अन्ने निघण्टुः। ऋ॰ १।७३।१०।

**पृक्षे** अव्य॰ पृच–बा॰ क्से। संग्रामे निघण्टुः ऋ॰ १।६१।२

**पृक्षुध्** स्त्री प्र+क्षुध्–क्विप् भेदे वा॰ प्रस्य प्रकृतिभावश्च। प्रकृष्टक्षुधायाम् ऋ॰ १।१४१।४। [ईदित्। पृङ्क्ते।

**पृच** सम्पर्के अदा॰आत्म॰सक॰सेट्। पृक्ते अपर्चिष्ट। पपृचे

**पृच** संयमने सक॰ सम्पर्के अक॰चु॰उभ॰पक्षे भ्वा॰पर॰सेट्। पर्चयति–ते पर्चति। अपीपृचत्–त अपपर्चत्–त अपर्चीत्। [कवचाख्य भेदे अमर॰।

**पृच्छा** स्त्री प्रच्छ–अङ् सम्प्रसारणम्। प्रश्ने १प्राड्विवाक

**पृच्छ्य** त्रि॰ प्रच्छ–बा॰ कर्मणि क्यप् सम्प्र॰। जिज्ञास्ये।

**पृज** सम्पर्के, अदा॰ आ॰ सक॰ सेट्। पृक्ते अपर्जिष्ट। ईदित् पृङ्क्ते।

**पृड** हर्षे तु॰पर॰अक॰सेट्। पृडति। अपर्डीत् पपर्ड।

**पृण** तर्पणे तु॰पर॰सक॰सेट्। पृणति अपर्णीत्। पपर्ण।

**पृत्** स्त्री पृ–पालने क्विप्। सेनायाम् ऋ॰ १।१७४।१९।

**पृतना** स्त्री पृ–तनन्–किच्च। १सेनायाम् २सङ्ग्रामे ३अक्षौहिण्यां रथकुञ्जरादिसैन्यभेदे च (रथाः २४३ गजाः २४३ अश्वाः ७२९ पदातयः १२१५)। अमरः। अक्षौहिणी शब्दे १६६ पृ॰ रथादिसंख्या दृश्या। ४संग्रामे ५मनुष्ये च निघण्टुः।

**पृतनाज्य** न॰ संग्रामे निघण्टुः। “पृतनाजमनुशासाहा पृतनाज्यं जगमाहा” निरु॰ ८।२४।

**पृतनाषाह्** पु॰ पृतनां सहते सह–ण्वि। इन्द्रे त्रिकाः।

अस्य ऋत्वि पदान्ते च सस्य षत्वम् । पृतनाषाट् अन्यत्र न षत्वम् पृतनासाहम् इत्यादि ।

**पृत्सुध** पु० पृत्सु धीयते धा-कर्मणि घञर्थे क अलुक्स० । १सङ्ग्रामे निघण्टौ पाठान्तरम् ।

**पृथ** प्रक्षेपे चुरा०उभ०सक०सेट् । पार्थयति-ते अपीपृथत् त अपपर्थत्-त । [अमरः ।

**पृथक्** अव्य०पृथ-बा०कक् । १भिन्ने २नानारूपे ३विनार्थे च ।

**पृथक्त्व** न० पृथक् इत्यस्य भावः त्व । वैशेषिकोक्ते पृथक्त्व बुद्धिसमात्रके गुणभेदे । तत्परीक्षा च कणा० सू० वृत्त्योर्दर्शिता यथा "तथा पृथक्त्वम्" सू० । "एकत्वद्व्यतयैकपृथक्त्वमपि साधयितुमाह अपोद्धार व्यवहारस्तावदस्ति इदमस्मात् पृथगन्यदर्थान्तरमित्याकारः अपादानावधिमपेक्ष्य य उद्धारो निर्द्धारणं सह्यपोद्धारः तत्र च न रूपादि तन्त्रं व्यभिचारादनन्यथासिद्धत्वाच्च । नन्वन्योन्याभाव एव पृथक्त्वम् इदमस्मात् पृथगन्यदर्थान्तरमितिवद्भिन्नमिति प्रतीतेरन्योन्याभावावलम्बनत्वात्, न, पृथगादिशब्दानां पर्य्यायत्वेऽपि नान्योन्याभावार्थत्वं तत्र पञ्चमीप्रयोगानुपपत्तेः इदमस्मात् पृथक् इदमिदं न भवतीति प्रतीत्योर्भिन्नविषयत्वात्, न चान्योन्याभाववानर्थः पृथक्त्वम् अघटः पट इत्यत्रापि पञ्चमीप्रयोगापत्तेः । ननु पृथगिति विशिष्ट इति प्रतीत्योरेकाकारत्वाद्वैशिष्ट्यमेव पृथक्त्वमिति चेन्न नैतस्य दण्डवैशिष्ट्यदशायां नैतात् पृथगयं नैत इत्यपि प्रतीत्यापत्तेः । एवं शब्दविशिष्टे व्योम्नि बुद्धिविशिष्टे चात्मनि पृथक्त्वव्यवहारापत्तेः । अतएव वैधर्म्यमपि न पृथक्त्वं पाकरक्ते घटे श्यामाद्घटात् पृथगयं घट इति व्यवहारापत्तेः तद्विरोधिधर्मवत्त्वमेव हि तद्वैधर्म्यं तच्च श्यामावस्थायां रक्ततादशायामपि । न च सामान्यमेव पृथक्त्वं सामान्यस्यावधिनिरूप्यत्वात् जातिसङ्करप्रसङ्गाच्च । सत्त्वाभासस्य सत्तया, द्रव्यमात्रस्य द्रव्यत्वेनान्यूनानतिरिक्तवृत्तित्वापत्तेः" वृत्तिः । "एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः" क०सू० । "नन्वेकमेकत्वं रूपादिभ्यः पृथकपृथक्त्वमिति व्यवहारादेकत्वेऽप्येकत्वं पृथक्त्वेऽपि पृथक्त्वमेवं तत्र तत्रातिमीस्यत आह यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती तद्व्यवहारस्तत्र भाक्तस्तथैकत्वैकपृथक्त्वे नैकत्वैकपृथक्त्ववती तद्व्यवहारस्तत्र भाक्त इत्यर्थः । कर्मभिः कर्माणि गुणैर्गुणाः इत्यपि दृष्टान्तद्वयम् पूर्वदृष्टान्तस्यैवैक वाक्यतापन्नमेषाम् भासते यथा कर्माणि न कर्मवन्ति गुणाश्च न गुणवन्तस्तथैकत्वैकपृथक्त्वे न तद्वती इत्यर्थः" वृत्तिः ।

**पृथक्त्वचा** स्त्री पृथक् त्वचा यस्याः । मूर्वायाम् । रत्नमा०

**पृथक्पर्णी** स्त्री पृथक् पर्णान्यस्याः ङीप् । (चाकुलिया) क्षुपभेदे अमरः ।

**पृथक्क्षेत्र** पु० पृथक् भिन्नं क्षेत्रमुत्पत्तिस्थानमस्य एकस्मात् पितुर्विभिन्नमातृजाते पुत्रे मिता० । [१भेदे २विशेषे ।

**पृथगात्मता** स्त्री पृथक् आत्मा स्वरूप यस्य तस्य भावः तल् ।

**पृथगात्मिका** स्त्री पृथक् आत्मा स्वरूपं यस्याः कप् नलोपे कापि अत इत्त्वम् । व्यक्तौ । वह्नित्वेनैकरूपाणामपि वह्नीनां महाल्पवीर्यत्वादिरूपेण तेषां स्वरूपभेदात् तथात्वम् ।

**पृथग्जन** पु० पृथक् भिन्नो जनो महाजनो यस्मात् । १नीचे २मूर्खे ३पामरे च अमरः । [अमरः ।

**पृथग्विध** त्रि० पृथक् भिन्ना विधा यस्य । नानारूपे

**पृथग्बीज** पु०पृथक् बीजान्यस्य । भल्लातकवृक्षे (भेला) राजनि०

**पृथा** स्त्री कुन्तिभोजकन्यायाम् कुन्त्याम् जटाधर. ।

**पृथाज** पु० पृथाया जायते जन-ड ७त० । १युधिष्ठिरादौ कुन्तीपुत्रे २अर्जुनवृक्षे राजनि० ।

**पृथापति** पु० ६त० । पाण्डुराजे त्रिका० ।

**पृथिका** स्त्री पृप्रथ-घञर्थे-क स्वार्थे क शतपद्याम् अत इत्त्वम् । शतपद्याम् शब्दमाला ।

**पृथिन्** पु० प्रथ बा० किनि संप्र० । वेनपुत्रे पृथुनामके नृपे "पृथी ह वै वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे" शत०ब्रा०५।३५।४ "पृथी यद्वां वैन्यः" ऋ०८।९।१० "लोकेऽस्य पृथुसंज्ञा" ।

**पृथ(थि)(वि)वी** स्त्री प्रथते विस्तारमेति प्रथ षिवन् (षवन्) वा नि० सम्प्रसारणं षित्वात् ङीष् पृषो० वा ह्रस्व । धरायाम् क्षितौ तद्गुणादिकं यथा "रूपद्रवत्वप्रत्यक्षयोगि स्यात् प्रथमत्रिकम् । गुरुणी द्वे रसवती द्वयोर्नैमित्तिकोद्रवः । स्पर्शादयोऽष्टौ वेगश्च द्रव्यत्वञ्च गुरुत्वकम् । रूप रसस्तथा स्नेहो वारिण्येते चतुर्दश । स्नेहहीना गन्धयुता क्षितावेते चतुर्दश" । "तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता । षड्विधस्तु रसस्तत्र गन्धोऽपि द्विविधो मतः । स्पर्शस्तु तस्या विज्ञेयो ह्यनुष्णाशीतपाकजः । नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा । अनित्या तु तदन्या स्यात् सैवावयवयोगिनी । सा च त्रिधा भवेद्देह इन्द्रियं विषयस्तथा । योनिजादिर्भवेद्देह इन्द्रियं घ्राणलक्षणम् ।

विषयो ब्रह्माण्डादिस्तु ब्रह्माण्डान्त उदाहृतं भा॰शा॰प॰। तस्या अध्यात्मादिभेदा यथा “पृथिवी पञ्चमं भूतं प्राणश्चाध्यात्ममुच्यते। अधिभूतं तथा गन्धो वायुस्तत्राधिदैवतम्” भा॰आश्व॰ ४२अ॰। तस्या उत्पत्तिकारणं यथा “श्रूयतां वसुधाजन्म सर्वमङ्गलकारणम्। विघ्नविघ्नकरं पापनाशनं पुण्यवर्द्धनम्। अहो केचिद्वदन्तीति मधुकैटभमेदसा। बभूव वसुधा जन्म तद्विरुद्धमतं शृणु। ऊचतुस्तौ पुरा विष्णुं तुष्टौ युद्धेन तेजसा। आवां जहि न यत्रोर्वी पयसा संवृतेति च। तयोर्जीवनकाले च प्रत्यक्षा साऽभवत् स्फुटम्। ततो बभूव मेदश्च मरणस्यान्तरं तयोः। मेदिनीति च विख्यातेत्युक्ता यैस्तन्मतं शृणु। जलधौता कृता पूर्वं वर्द्धिता मेदसा यतः। कथयामि च तज्जन्म सार्थकं सर्वसम्मतम्। पुरा श्रुतं यत् श्रुत्युक्तं धर्मवक्त्राच्च पुष्करे। महाविराट्शरीरस्य जलस्थस्य चिरं स्फुटम्। मलो बभूव कालेन सर्वाङ्गव्यापको ध्रुवम्। स च प्रविष्टः सर्वेषां तल्लोम्नां विवरेषु च। कालेन महता तस्मादुद्बभूव वसुधा मुने!। प्रत्येकं प्रतिलोम्नाञ्च कूपेषु सा स्थिरा स्थिता। आविर्भूता तिरोभूता सा जले च पुनः पुनः। आविर्भूता सृष्टिकाले तज्जलोपर्यवस्थिता। प्रलये च तिरोभूता जलाभ्यन्तरवस्थिता। प्रतिविश्वेषु वसुधा शैलकाननसंयुता। सप्तसागरसंयुक्ता सप्तद्वीपयुता सती। हिमाद्रिमेरुसंयुक्ता ग्रहचन्द्रार्कसंयुता। ब्रह्मविष्णुशिवाद्यैश्च सुरैर्लोकैस्तदाज्ञया। पुण्यतीर्थसमायुक्ता पुण्यभारतसंयुता। पातालसप्त तदधस्तदूर्द्ध्वं ब्रह्मलोककः। ब्रह्मलोकश्च तत्रैव सर्वविश्वञ्च तत्र वै। एवं सर्वाणि विश्वानि पृथिव्यां निर्मितानि च। अनित्यौ गोलोकवैकुण्ठौ नित्यौ विश्वपरौ च तौ। नश्वराणि च विश्वानि सर्वाणि कल्पितानि च। प्रलये प्राकृते ब्रह्मन्! ब्रह्मणश्च निपातने। महाविराडादिसृष्टौ सृष्टेः कृष्णेन च त्वमा। नित्यैः स्थिता च प्रलये काष्ठाकाशेश्वरैः सह। शिवाधिष्ठातृदेवी सा वाराहे पूजिता सुरैः। मुनिभिस्तु निभिर्विप्रैर्गन्धर्वादिभिरेव च। विष्णोर्वराहरूपस्य पत्नी सा श्रुतिसम्मता। तत्पुत्रो मङ्गलो ज्ञेयो घण्टेशो मङ्गलात्मजः। अवनं यत्र सर्वेषां भूमिस्तेन कीर्त्तिता। वसुरत्नं या दधाति वसुधा सा वसुन्धरा। हरेरूरौ च या जाता सा चोर्वी परिकीर्त्तिता। धरा धरित्री धरणी सर्वेषां धारणात्तु या। इज्याय यागाधाराञ्च क्षौणी क्षीणा लये च या। महालये क्षयं याति क्षितिस्तेन प्रकीर्त्तिता। काश्यपी कश्यपस्येयमचला स्थिररूपतः। विश्वम्भरा तद्भरणादनन्तानन्तरूपतः। पृथिवी पृथुकन्यात्वाद्विस्तृतत्वान्महामुने!।” ब्रह्मवै॰प्र॰ख॰८अ॰।

तस्याः सर्वसहत्वेऽपि केषाञ्चित् भारासहनकथा यथा “कृष्णभक्तिविहीना ये ये च तद्भक्तनिन्दकाः। तेषां महापातकिनामशक्ता भारवाहने। स्वधर्माचारहीना ये नित्यकृत्यविवर्जिताः। श्रद्धाहीनाश्च वेदेषु तेषां भारेण पीडिता। पितृमातृगुरुस्त्रीणां पोषणं पुत्रपोष्ययोः। ये न कुर्वन्ति तेषाञ्च न शक्ता भारवाहने। ये मिथ्यावादिनस्तात! दयासत्यविहीनकाः। निन्दका गुरुदाराणां तेषां भारेण पीडिता। मित्रद्रोही कृतघ्नश्च मिथ्यासाक्ष्यप्रदायकः। विश्वासघ्नः स्थाप्यहारी तेषां भारेण पीडिता। कल्याणयुक्तनामानि हरेर्नामैकमङ्गलम्। कुर्वन्ति विक्रयं ये वै तेषां भारेण पीडिता। जीवघाती गुरुद्रोही ग्रामयाजी च लुब्धकः। शवदाही शूद्रभोजी तेषां भारेण पीडिता। पूजायज्ञोपवासादिव्रतानि नियमानि च। ये ये मूढा विहन्तारस्तेषां भारेण पीडिता। सदा द्विषन्ति ये पापा गोविप्रसुरवैष्णवान्। हरिं हरिकथां भक्तिं तेषां भारेण पीडिता। शङ्खचूडस्य भारेण पीडिताऽहं यथा विधे!। ततोऽधिकेन दैत्यानां तेषां भारेण पीडिता” ब्रह्मवै॰पु॰ जन्मख॰ ४ अ॰।

**पृथिवीचित्** पु॰ चि—ऐश्वर्य्ये क्विप् ६त॰। भूमीश्रे नृपे।

**पृथिवीञ्जय** पु॰ पृथिवीं जयति जि-वा॰ खच् मुम् च। दानवभेदे हरिवं॰ १२२ अ॰।

**पृथिवीतीर्थ** न॰ तीर्थभेदे भा॰ वन॰ ८३ अ॰।

**पृथिवीपति** पु॰ ६त॰। १भूमिपतौ राजनि २ऋषभनामौषधौ च मेदि॰। ३यमे हेम॰। पृथिवीनाथादयोऽपि राजनि।

**पृथिवीपाल** पु॰ पृथिवीं पालयति पालि—अण् उप॰स॰। भूमिपाले। ण्वुल्। पृथिवीपालक तत्रार्थे पु॰।

**पृथिवीभुज्** पु॰ पृथिवीं भुनक्ति अवति भुज अवने क्विप्। भूपाले च। पृथिवीभुजोऽपि तत्रार्थे।

**पृथिवीरुह** पु॰ पृथिव्या रोहति रुह—क। भूमिरुहे वृक्षे।

**पृथिवीशक्र** पु॰ पृथिव्याः शक्र इव। राजनि हेमच॰। पृथिवीन्द्रभूमीन्द्रादयोऽप्यत्र।

**पृथु** त्रि॰ प्रथ—कु सम्प्र॰। १विस्तीर्णे स्त्रियां गुणवचनोदन्तत्वात् ङीप्। २आदिराजे वेनपुत्रे सूर्य्यवंश्ये नृपभेदे पु॰ तदुत्पत्तिकथा भाग॰ ४।१५ अ॰।

अथ तस्य (वेनस्य) पुत्रविप्रैरपुत्रस्य महीपतेः। बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत। तद्दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः। ऊचुः परमसन्तुष्टा विदित्वा भगवत्कलाम्। एष विष्णोर्भगवतः कला भुवनपालिनी। इयञ्च लक्ष्मीः संभूतिः पुरुषस्यानपायिनी। अत्र यः प्रथमो राजा पुमान् प्रथयिता यशः। पृथुर्नाम महाराजो भविष्यति पृथुश्रवाः"। तेन च भगवदवतारेण पृथिवी समीकृता नानौषधीश्च मथिता दुहितृत्वेन कल्पिता च। तत्कथा तत्रत्याध्याये दृश्या ४।१८ अ॰।

"एवं पृथ्वादयः पृथ्वीं दुदुहुः स्वमभमात्मनः। दोहवत्सादिभेदेन क्षीरभेदं कुरूद्वह!। ततो महीपतिः प्रीतः सर्वकामदुघां पृथुः। दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः। चूर्णयन् स्वधनुःकोट्या गिरिकूटानि राजराट्। भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः" ३महादेवे भा॰ अनु॰ ८ अ॰। चतुर्थमन्वन्तरे काव्ये ४सप्तर्षिभेदे हरिवं॰ ७अ॰। काकुत्स्थे अनेनसः पुत्रे ५नृपभेदे १७अ॰। अजमीढवंश्ये पारपुत्रस्य ६पुत्रभेदे हरिव॰ २० अ॰। क्रोष्टुवंश्ये चित्ररथ पुत्रे ७नृपभेदे ३५ अ॰। ८दानवभेदे २६अ॰। ९अग्नौ मेदि॰। १०कृष्णजीरके पु॰ अमरः ११त्वक्पत्र्यां १२हिङ्गुपत्र्यां च स्त्री मेदि॰ १३अहिफेने शब्दरत्ना॰ १४महति त्रि॰ शब्दर॰ १५विष्णौ पु॰। "प्राग्वंशः प्रथनः पृथुः" विष्णुस॰।

**पृथुक** पु॰ पृथु क कनं मेयत्वेनास्त्यस्य अच्। १चिपिटके अमर। तस्य चर्वणे बहुकालयोग्यत्वात् तस्य तथात्वम्। अस्य क्लीवत्वमपि "द्विःखिन्नमन्नं पृथुकं गुडं देवविशेषकं" मत्स्यपु॰अ॰२१अ॰। पृथु कं शिरोऽस्य। २बालके पु स्त्री॰ मेदि॰। ३हिङ्गुपत्र्यां स्त्री शब्दरत्ना॰।

**पृथुकीय** त्रि॰ पृथुकाय हितं अपूपा॰छ। पृथुकहिते। पक्षे यत् पृथुक्य तदर्थे त्रि॰।

**पृथुकीर्त्ति** स्त्री शूरात्मजायाम् वसुदेवभगिनीभेदे "पृथुकीर्त्त्यां तु संजज्ञे तनयो दन्तवक्त्रकः। करूषाधिपतिर्वीरो दन्तवक्त्रो महाबलः"। हरिव॰ २७ अ॰ पृथु कीर्त्तिरस्य। २ख्यातयशस्के त्रि॰।

**पृथुकोल** पु॰ कर्म॰। राजबदरे राजनि॰।

**पृथुग्रीव** पु॰ १राक्षसभेदे रामा॰का॰८य॰। २विस्तीर्णग्रीवे त्रि॰

**पृथुच्छद** पु॰ पृथु छदोऽस्य। १हरिदर्भे राजनि॰। २दीर्घपत्रयुक्ते त्रि॰।

**पृथुपत्र** पु॰ पृथूनि पत्राण्यस्य। रक्तलशुने राजनि॰।

**पृथुपलाशिका** स्त्री पृथूनि पलाशान्यस्याः कप् कापि अत इत्वम्। शट्याम् राजनि॰।

**पृथुरुक्म** पु॰ क्रोष्टुवंश्ये रुक्मकवचपुत्रभेदे हरिवं॰ ३७अ॰।

**पृथुरोमन्** पु॰ पृथूनि रोमाणि रोमस्थानीयशल्कान्यस्य। १मत्स्ये अमरः। २दृढलोमयुक्ते त्रि॰ स्त्रियां वा ङाप्।

**पृथुल** त्रि॰ पृथु+स्वार्थे लच् पृथुः पृथुत्वमस्त्यस्य सिध्मा॰ लच् वा। १स्थूले अमरः। २हिङ्गुपत्र्यां स्त्री जटाध॰।

**पृथुलाक्ष** त्रि॰ पृथुले अक्षिणी यस्य षच्समा॰। १दीर्घनेत्रयुक्ते २पुरुवंश्ये चतुरङ्गपुत्रभेदे पु॰ हरिव॰ ३१ अ॰।

**पृथुवक्त्र** त्रि॰ पृथु वक्त्रमस्य। १दीर्घमुखयुक्ते। २कुमारानुचरमातृभेदे स्त्री भा॰ श॰ ४७ अ॰।

**पृथुशिम्ब** पु॰ पृथ्वी शिम्बा यस्य। श्योनाकभेदे राजनि॰

**पृथुशेखर** पु॰ पृथु शेखरं यस्य। पर्वते त्रिका॰

**पृथुश्रव(स)** त्रि॰ पृथु श्रवः कर्णोऽस्य। १दीर्घकर्णे अदन्तः २कुमारानुचरभेदे भा॰ श॰ ४६ अ॰। सान्तस्तु। ३शशबिन्दुनृपपुत्रभेदे पु॰ हरिवं॰३६अ॰।

**पृथुसेन** पु॰ ककुद्वंश्ये रुचिरनृपपुत्रभेदे हरिवं॰ २० अ॰।

**पृथुस्कन्ध** पु स्त्री पृथु स्कन्धोऽस्य। शूकरे राजनि॰ स्त्रियां जातित्वात् ङीष्।

**पृथूदक** न॰ तीर्थभेदे भा॰ व॰ ८३ अ॰।

तच्च सरस्वतीप्रदेशस्थितम् यथोक्तम् "जातिस्मरो रुषङ्गुस्तु गङ्गाद्वारे तदास्थितः। अन्तकाले ततो दृष्ट्वा पुत्रान् वचनमब्रवीत्। इह श्रेयो न पश्यामि नयध्वं मां पृथूदकम्। विज्ञाय तस्य तद्भावं रुषङ्गोस्ते तपोधनाः। तं वै तीर्थमुपानिन्युः सरस्वत्यास्तपोधनम्। स तैः पुत्रैः समानीतः सरस्वत्यां समीपतः। स्मृत्वा तीर्थगुणान् सर्वान् प्राहेदमृषिसत्तमः। सरस्वत्यास्तु तीरे यः संत्यजेदात्मनस्तनुम्। पृथूदके जप्यपरो नैनं श्वो मरणं भवेत्। तत्रैव ब्रह्मयोन्यस्ति ब्रह्मणा यत्र निर्मिता" वामनपु॰ ३८ अ॰।

**पृथूदर** पु॰स्त्री॰ पृथु उदरं यस्य। १मेषे स्त्रियां जातित्वात् ङीष्। २दीर्घकुक्षौ त्रि॰ हारा॰। स्त्रियां स्वाङ्गत्वात् वा ङीष्।

**पृथ्वादि** पु॰ "पृथ्वादिभ्य इमनिज् वा" पा॰ भावे इमनिच्प्रत्ययनिमित्ते शब्दगणे स च पा॰ग॰ उक्तो यथा

"पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु गुरु बहुल खण्ड दण्ड चण्ड अकिञ्चन क्रोड पाक वत्स मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु चिप्र क्षुद्र अणु"।

**पृथ्वी** स्त्री पृथुत्वगुणयुक्ता स्त्री ङीष्। १पृथुत्वयुक्तायां स्त्रियां २भूमौ ३हिङ्गुपत्र्यां ४कृष्णजीरके च। ५स्थूलैलायाम् ६पुनर्नवायाम् मेदि०। ७हस्तार्कमातृभेदे हेम०। स्वार्थे क। पृथ्वीका। बृहदेलायाम् हिङ्गुपत्र्यां कृष्णजीरके च। तत्र पृथिव्या पृथुराजेन दुहितृत्वस्य कल्पनात् पुंयोगे ङीष्। "दुहितृत्वमनुप्राप्ता देवी पृथ्वी तथोच्यते" अग्निपु०। "जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरुः" वृ० र० उक्ते दशसप्तदशाक्षरपादके छन्दोभेदे।

**पृथ्वीकुरबक** पु० पृथ्व्यां भूमौ कुरबक इव शुभ्रत्वात्। श्वेतमन्दारके राजनि०। [२गणेशे हेमच०।

**पृथ्वीगर्भ** पु० पृथ्वीव लम्बमानो गर्भ उदरमस्य। १लम्बोदरे

**पृथ्वीज** त्रि० पृथ्व्यां जायते जन–ड ७त०। १भूमिजाते २गडलवणे न० राजनि०।

**पृथ्वीधर** पु० पृथ्वीं धरति धृ–अच्। महीधरे पर्वते।

**पृदाकु** पु० स्पर्द–वा० आकु सम्प्रसारणे सलोपश्च। सर्पे अमरः। १वृश्चिके २व्याघ्रे ३चित्रके मेदि०। ४गजे ५वृक्षे च। सम्प्रसारणादिदर्शनात् [उ०।१।७।१५।

**पृदाकुसानु** पु० पृदाकुः गज इव सानु यस्य बहुव्री०। इन्द्रे च

**पृभन्य** पु० स्पृश–भामे क्यु पृषो० सलोप पृशन स्पर्शः तत्र साधु यत्। स्पर्शसाध्ये ऋ० १।७।१५ आत्मनः पृशनमिच्छति क्यच् उ। पृशनायु तदिच्छौ ऋ० १।८४।११।

**पृश्नि** त्रि० स्पृश–प्रच्छ–वा नि किच्च पृषो० सलोपः। १स्वल्पे २दुर्बलास्थियुक्ते ३खर्वे च अमरः। ४रश्मौ श्रीकृष्णस्य जन्मान्तरे मातृभूतायां देवकीरूपेण द्वापरे मातृभूतायां ५वसुदेवपत्न्याञ्च स्त्री। "त्वमेव पूर्वसर्गे भूः पृश्निः स्वायम्भुवे सति!। तदायं सुतपा नाम प्रजापतिरकल्मषः। अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः। तयोर्वां पुनरेवाहमदित्यामास कश्यपात्। उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः। तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषा हि वाम्। जातो भूयस्तयोरेव" भाग०१०।३ अ०। देवकीं प्रति वासुदेववाक्यम्। ६वामरचे त्रि० निघण्टुः ७ऋषिविशेषपत्नीभेदे स्त्री भाग० ६।१८।१। ८ऋषिभेदे पु० भा० शौ० १६१अ०। ९पृषाजिनपृषत्स मातृप्रां जाते मरुद्भेदे अग्निपु०। [शब्दमाला।

**पृश्निका** स्त्री पृश्नि स्वल्पं कं जलमत्र। कुम्भिकायां (पाना)

**पृश्निगर्भ** पृश्नेः सुतपःप्रजापतिपत्न्याः गर्भं भावकत्वेन" स्यस्य अच्। नारायणे पृश्निग्रन्दे दृश्यम्।

**पृश्निगु** त्रि० पृश्नयोनानावर्णत्वात् साधरणा गावो रश्मयोऽस्य। नानावर्णदीप्तिके ऋ० १।११२।७। वेदे क्वचित् "गोस्त्रियोरुपसर्जनस्येति न ह्रस्व." ऋ० ७।१८।१०।

उदा० दृश्यम्। [विख्यातायां लतायाम् अमरः।

**पृश्निपर्णी** स्त्री पृश्नि स्वल्पं पर्णमस्याः ङीप्। (चाकुलिया)

**पृश्निभद्र** पु० ७त०। पृश्निगर्भजाते नारायणांशभेदे।

**पृश्निमातृ** पु० पृश्नि नानावर्णा भूमिर्मातेव जन्मभूमिर्यस्य समासान्तविधेरनित्यत्वात् न कप्। नानावर्णभूमिजाते ऋ० १।२३।१७।

**पृश्निशृङ्ग** पु० पृश्नि शृङ्गमग्रमस्य। गणेशे त्रिका०। तस्य सर्वेगजसुखत्वेन शृङ्गाकारत्वात् तथात्वम्। पृश्निः शृङ्गमिवास्य उत्पत्तिस्थानत्वेन। पृश्निगर्भजाते २विष्णौ शब्दमाला। [ (पाना) शब्दमाला।

**पृश्नी** स्त्री पृश्नि+कृदिकारान्तत्वात् वा ङीप्। कुम्भिकायां

**पृष** सेके भ्वा०का०पर०सेट्। पर्षति अपर्षीत्। पपर्ष।

**पृषत्** न० पृष–अति कित् यद्वञ्च कार्यं तेन पृषन्ति। १विन्दौ अमरः। २सेकयुक्ते त्रि०। अत्र विन्दौ बहुत्वमिच्छन्त्येके।

**पृषत** पुंस्त्री० पृष–अतच् कित्। १शुभ्रविन्दुमति मृगभेदे स्त्रियां जातित्वात् ङीष्। २विन्दौ पु० अमरः। ३बाणुवाहने मृगे पुंस्त्री त्रिकाण्ड०। "पृषतो मरुताम्" इत्यत्र स्तोत्रमपि वर्णितम्। भरद्वाजसुते ४नृपभेदे पु० भा० आ० ११ अ०।

**पृषतांपति** पु० ६त० अलुक्स०। वायौ जटा०।

**पृषताश्व** पु० पृषतो मृगभेदोऽश्व इव गतिसाधनं यस्य। वायौ अमरः।

**पृषत्क** पु० पृषन्ति विन्दव इव को वायुरत्र। वाणे अमरः।

**पृषदंश** पु० पृषति विन्दौ अंशोऽस्य। वायौ तत्र उत्पा० प्रत्यादौ अच्। पार्षदंश तत्प्रत्यादौ त्रि०। [वायौ अमर०

**पृषदश्व** पु० पृषत् मृगभेदोऽश्व इव वाहकत्वात् यस्य।

**पृषदाज्य** न० पृषद्युक्तं दधिविन्दुयुक्तं दधिसेकयुक्तं वा आज्यम् शाक०त०। दधिमिश्रे घृते अमरः।

**पृषद्वल** पु० पृषदेव वलमस्य। वायोरश्वे शब्दमाला।

**पृषद्ध्र** पु० वैवस्वतमनोः पुत्रभेदे हरिव० ११ अ०। [१५१अ०

**पृषद्भ्रु** पु० द्वापरयुगीये युधिष्ठिरपक्षस्थे नृपभेदे भा०द्रो०

**पृषन्ति** पु० पृष–वा झि। विन्दौ। "पशः पृषन्तिभिः ऋ० ह्य

**पृष्ठजाह** त्रि॰ पृष्ठस्य मूलं कर्मा॰ मूले जाहच् । पृष्ठमूले ।

**पृष्ठतल्पन** न॰ तल्पमिवाचरति तल्प+क्विप् ततः भावे ल्युट् । पृष्ठस्य तल्पन तल्पवदाचरणम् । (पिठे शोओया) प्रवेष्टे त्रिका॰ ।

**पृष्ठतस्** अव्य॰ पृष्ठ+तसिल् । पश्चाद्भागे इत्यर्थे ।

**पृष्ठदृष्टि** पु॰ पृष्ठे दृष्टिस्तद्व्यापारोऽस्य । भल्लूके राजनि॰ ।

**पृष्ठमर्म्मन्** न॰ ७त॰ । सुश्रुतोक्ते पृष्ठस्थमर्मभेदे स च तत्रोक्तो यथा

"अत ऊर्द्धं पृष्ठमर्माण्यनुव्याख्यास्यामः । तत्र पृष्ठवंशमुभयतः प्रतिश्रोणीकाण्डमस्थिनी कटीकतरुणे नाम मर्मणी तत्र शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपश्च म्रियते । पार्श्वजघनबहिर्भागे पृष्ठवंशमुभयतो नातिनिम्ने कुकुन्दरे नाम मर्मणी तत्र स्पर्शाज्ञानमधःकाये चेष्टोपघातश्च । श्रोणीकाण्डयोरुपर्य्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ नाम तत्राधःकायशोषो दौर्बल्याच्च मरणम् । अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्य्यगूर्द्धं च जघनात् पार्श्वसन्धी नाम तत्र लोहितपूर्णकोष्ठतया म्रियते । स्तनमूलादृजुभयत पृष्ठवंशस्य बृहती नाम तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्रियते । पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बद्धे अंसफलके नाम तत्र बाह्वोः स्वापः शोषो वा । बाहुमूर्द्धग्रीवामध्येऽंसपीठस्कन्धनिबन्धनावंसौ नाम तत्र स्तब्धबाहुता । एवमेतानि चतुर्दश पृष्ठमर्म्माणि व्याख्यातानि" ।

**पृष्ठमांस** न॰ पृष्ठस्य मांसम् । पश्वादीनां पृष्ठस्थे मांसे । तस्याभक्ष्यता मार्कण्डे॰ उक्ता यथा "पृष्ठमांसं वृथामांसं गर्भमांसं च पुत्रक ! । न भक्षयीत सततं प्रत्यक्षलवणानि च" ।

**पृष्ठमांसाद्** त्रि॰ पृष्ठे परोक्षे मांसाद इव । १परोक्षे शाठ्येन वाक्याभिधायिनि पुरुषे दोषोद्घोषके त्रिका॰ । "क्षुत्त्वा विभवान्वेषीत्यतः कृतस्त्येति समाकर्णात् वाक्याभिधानेऽन्वये तथार्थत्वम् । पृष्ठमांसादनशब्दे दृश्यम् । पश्वादेः २पृष्ठमांसभक्षके त्रि॰ ।

**पृष्ठमांसादन** न॰ पृष्ठे परोक्षे मांसादनमिव । "पृष्ठमांसादनं तद् यत् परोक्षे दोषकीर्त्तनम्" हेमच॰ उक्तेऽर्थे २पश्वादीनां पृष्ठमांसस्य भक्षणे च ।

**पृष्ठयज्वन्** पु॰ पृष्ठै॰ रथन्तरादिभिरिष्टवान् यज–वनिप् । रथन्तरादिभिः षड्भिःस्तोत्रसमूहैरिष्टवति ऋ॰ ५।५४।१

**पृष्ठयान** न॰ पृष्ठेन यानं गमनम् । (पिठे वाओया) पृष्ठेन गमने । तत्र धर्म्मारोहे निदानं सुश्रुते उक्तं धर्मशब्दे दृश्यम् ।

**पृष्ठवंश** पु॰ ६त॰ । (पिटेर दाँडा) पृष्ठास्थि हेमच॰ । "चतुर्विंशति पृष्ठ वंशे" सुश्रुतोक्तेः तत्र चतुर्विंशति रस्थीनि । पृष्ठमर्म्मनशब्दे दृश्यम् ।

**पृष्ठवास्तु** न॰ ७त॰ । वप्रिटादः पृष्ठभागस्थे वास्तुनि "पृष्ठवास्तुनि कुर्वीत वलिं सर्वात्मभूतये" मनु. । "स्पष्टो परिस्तृच पृष्ठवास्तु" २कुल्लूकभट्टोक्तेऽर्थे च ।

**पृष्ठवाह्** त्रि॰ पृष्ठं पश्चाद्भागं वहति वह–ण्वि । १पश्चाद्भागवाहके हरिवं॰ १६६ अ॰ । भत्वे वाहुठ् । पृष्ठौहः । स्त्रियां ङीप् । पृष्ठं युगपार्श्वं वहति वह–ण्वि । २युगपार्श्ववाहकदम्ये [वृषे हेमच॰ ।

**पृष्ठवाह्य** पु॰ पृष्ठेन वाह्य वहनं यस्य । पृष्ठेन भारवाहके॰

**पृष्ठशय** त्रि॰ पृष्ठे शेते पृष्ठरूपाधिकरणोपपदे कर्त्तरि अच् । पृष्ठे शायिनि उत्तानशये ।

**पृष्ठशृङ्ग** पु॰ पृष्ठे शृङ्गमस्य । वनच्छागे हेमच॰ । स्त्रियां जातित्वात् ङीष् [मेदि॰ ।

**पृष्ठशृङ्गिन्** पु॰ ७त॰ । १महिषे २नपुंसके ३भीमसेने च

**पृष्ठसुख** पु॰ पृष्ठे सुखमस्य अचुकस॰ । कुमारानुचरभेदे भा॰ श॰ ४६ अ॰ ।

**पृष्ठोदय** पु॰ पृष्ठेनोदयो यस्य । ज्योतिषोक्ते पृष्ठेनोदययुक्ते राशिभेदे "अजो गोपतियुग्मश्च कर्किधन्विमकारकाः । निशासंज्ञाः प्रजायन्ते शेषाश्चान्ये दिनात्मकाः । निशासंज्ञा विमिथुनाः ख्याता पृष्ठोदयास्तथा । शेषाः शीर्षोदया ज्ञेते मीनश्चोभयसंज्ञकः" ।

**पृष्ठ्य** न॰ पृष्ठानां स्तोमभेदानां समूहः "पृष्ठ्योपसंख्यानम्" वार्त्ति॰ समूहे यत् । १स्तोमसमूहे । पृष्ठे भवः यत् । २पृष्ठभवे त्रि॰ । "सोमयागेषु छन्दोगैः क्रियमाणः पृष्ठ्यादिवर्णिका स्तुतिः स्तोमः" मि॰ कौ॰ । पृष्ठेन वहति यत् । ३पृष्ठेन भारवाहके अश्वे (घेटोघोड़ा) अमरः ।

**पृष्ठ्यस्तोम** पु॰ पृष्ठ्यस्तोमः साधनतयाऽस्त्यस्य अच् । काम्येष्टप्रसिद्धेषु षट्सु क्रतुभेदेषु "पृष्ठ्यस्तोमाश्चिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः" कात्या॰ श्रौ॰ २२।६।२६ "पृष्ठ्यस्तोमसञ्ज्ञकाः षट् क्रतवो भवन्ति त्रिवृदादयः" कर्क

**पृष्णि** पु॰ पृश्नि+पृषो॰ । नानावर्णयुक्ते भरत॰ २पार्ष्णिभागे स्त्री उणादि॰ ।

**पॄ** पालने पूर्त्तौ च क्र्या॰ भ्वा॰ पर॰ सक॰ सेट् अप्रत्यये परे

कुम्व'। पृणाति अपारीत् । पपार पपरतुः पपरुः ।

पृ पूर्त्तौ चु० उभ० सक० सेट् । पारयति ते अपीपरत् त ।

पेचक पुंस्त्री पच–वुन् अतइत्वम् । (पेँचा) १उलूके स्त्रियां जातित्वात् ङीष् । २गजपुच्छमूलोपान्ते ३गुटाच्छादकमांसपिण्डभेदे पु० अमर० । ४पर्य्यङ्के ५यूके पु० विश्वः । ६मेघे शब्दर० । [शब्दरत्ना० स्त्रियां ङीष् ।

पेचकिन् पु० पेचकः पुच्छमूलोपान्तोऽस्त्यस्य इनि । गजे

पेचिल पुंस्त्री० पच+बा० इलच् अतइत्वम् । गजे त्रिका० । स्त्रियां जातित्वात् ङीष् ।

पेचु न० पचि–उन् अत इत्वम् । पेचुल्यां त्रिका० । [त्रिका०।

पेचुली स्त्री पच–उलच् अतइत् गौरा० ङीष् । शाकभेदे ।

पेट पु० पिट–अच् । १प्रसृते राजनि०, २संहतिकारके त्रि०

पेटक पु०न० पिट–ण्वुल् । पुस्तकादीनां स्थापनार्थे वेत्रादिनिर्मिते १पटार्थे २कदम्बके ३समूहे च मेदि० । ४उशीरादिनिर्मिते समुद्गकाकारे (पेटारा) पदार्थे पु० अमरः ।

पेटाक पु० पेटक+पृषो० । पेटके द्विरूपकोषः ।

पेटिका स्त्री पिट–ण्वुल् कापि अत इत्वम् । (टेपारि) क्षुपभेदे रत्नमाला ।

पेटी स्त्री पिट–अच् स्वल्पार्थे ङीप् । क्षुद्रपेटके अमरः ।

पेडा स्त्री पेट+पृषो० । वृहत्पेटिकायां भरतः ।

पेढाल पु० अवसर्पिण्यां जिनोत्तमभेदे हेमच० ।

पेण गतौ पेषे च सक० श्लेषे अक० भ्वा० पर० सेट् । पेणति अपेणीत् । ऋदित् चङि न ह्रस्वः अपिपेणत् त ।

पेत्व न० पा· पाने कर्मणि इत्वन् । १अमृते २घृते च उज्ज्वल०

पेदु पु० राजभेदे ऋ० १।११६।१० भा० ।

पेय त्रि०पा–पाने कर्मणि यत् । १पातव्ये २जले मेदि०।३दुग्धे शब्दच०। ४अष्टविधान्नान्तर्गते तरलयवागवादौ अन्नभेदे "भोज्यं पेयतथा चूष्य लेह्य खाद्यञ्च चर्व्यम् । निष्पेय चैव भक्ष्यं स्यादन्नमष्टविध स्मृतम्" राजनि० । ५विकच मुक्तपेयद्रव्ये स्त्री । "पेया स्वेदाग्निजननी वातवर्चोऽनुलोमनी । क्षुत्तृष्णाग्लानिदौर्वल्यकुक्षिरोगज्वरापहा" राजव० । ६तापायां मेदि० ।

पेयूष पु०न० पीय–घो० ऊषन् प्राकृतकात् पद्ये गुणः । १अमृते २नवघृते । "नवप्रसूतमसूतायाः क्षीरं पेयूषमुच्यते" हारा० उक्ते आसप्तरात्राभ्यन्तरकालीने ३दुग्धे च ।

पेरज न० उपमणिभेदे राजनि० । पिरोजशब्दे दृश्यम् ।

पेरा स्त्री प्रि–बा० रे । वाद्यभेदे भक्तिः १३।७ ।

पेरु पु० पीयते रसान् पी–रु । १आदित्ये २वह्नौ च उज्ज्वल०। पुरु–उ नगय्वादेराकृतिगणत्वात् नि०। ३समुद्रे त्रिका० ।

पेरुक पु० राजभेदे ऋ० ६।६३।८

पेरोज न० उपमणिभेदे (पोरोजा) राजनि० तच्च द्विविध पीताभ हरिताभञ्च । तस्य गुणाः "पेरजं तु कषाय स्यान्मधुर दीपनं परम् । स्थावरं जङ्गमञ्चैव संयोगाच्च यथा विषम् । तत्सर्वं नाशयेत् शीघ्रं शूलं भूतादिदोषजम् । पाठान्तरं यथा "पेरजं तु कषायं स्यान्मधुरं दीपनं द्वयो० । स्थावरादिविषघ्नं स्याद्‌दरितघ्नापरं स्तृणु । पीताभं नाशयेच्छीघ्रं शूलं तिमिरभूतजम्" राजनि० ।

पेल कम्पे अक०गतौ सक०भ्वा०पर०सेट् । पेलति अपेलीत् । ऋदित् चङि न ह्रस्वः अपिपेलत् त । निघण्टौ अस्य गतिकर्मतया चुरादित्वेन पठितः । तेन पेलयति ते

पेल न० पेल–अच् । पुंश्चिह्ने अण्डभेदे (अण्डकोष) हेमच०।

पेलव त्रि० पेल–घञ् पेलं वाति वा–क । १कोमले त्रिका० २कृशे हेमच० । ३विरले अमर ।

पेलि पु०पेल–इन् । गन्तरि उज्ज्व०। तत्परं शाखाया न क्लीबत्वम् । आद्युदात्तता चास्य ।

पेव सेवने भ्वा०सक०आत्म०सेट् । पेवते अपेविष्ट । ऋदित् चङि न ह्रस्वः । अपिपेवत् त । ओष्ठान्त्यतयाऽयं धातुपाठे पठितस्तेनो भवरूपता ।

पेश पु० पिश–अच् । रूपे निघण्टुः पेशलशब्दे दृश्यम् ।

पेश(ष)(स)ल त्रि० पिश(ष)(स)–अलच् । १सुन्दरे २दक्षे ३कोमले च अमर० । मूर्द्धन्यदन्त्यमध्योऽप्युक्तार्थेषु भरत० । ४धूर्त्ते शब्दर०। पेशोरूपमस्त्यस्य सिध्मा० लच् । ५विष्णौ पु० । "अक्रूरः पेशलो दक्षः" विष्णुस०

पेशस् न० पिश–असुन् । १रूपे २हिरण्ये च निघण्टुः । ३कोषे च ।

पेशस्कार त्रि० पेशो रूपान्तरं करोति स्वगृहीतकीटस्य कृ–अण् उप०स०। स्वरूपकरे कीटभेदे स्त्रियां ङीप् । यजु०३०।८।

पेशस्कृत् त्रि० पेशो रूपान्तरं स्वगृहीतकीटस्य करोति कृ–क्विप् । कीटभेदे (काँचपोका) "कीटः पेशस्कृतं ध्यायन् कुड्यां तेन प्रवेशितः । याति तत्सात्मतां राजन् । पूर्वरूपमसंत्यजन्" भाग० ११।९।२३

पेशि(शी) स्त्री पिश–इन् वा ङीप् । १वज्रे २मांसपिण्डे च उणादि०। दीर्घान्तः इत्यन्ये अमर० । ४सुपक्वकणिकायां ५खर्वाशी ६खड्गपिधाने (खाप) ७मांसपिण्ड्यां च मेदि०। ८नदीभेदे ९पिशाचीभेदे ७राक्षसीभेदे शब्दरत्ना० ८गर्भो-

शेषनवमेसमये बोध्ये च “विन्दुर्मांसादयोऽमस्या” शुक्रशोणितसम्भावाः। यासामेव निपातेन कललं नाम जायते। कललात् बुद्बुदोत्पत्ति पेशी च बुद्बुदात् स्मृता। तेभ्यः अङ्गप्रत्यङ्गनिर्वृत्तिः” भा० शा० १२२ अ०। दलाद्यभेदे “तथा मेर्व्यं च पेश्यश्च क्रकचा गोविषाणिका” भा० भी० ४१ अ०।

पेशीकोष पु० ६त०। अण्डकोषे हेमच०।

पिष सेचने सिचये च भ्वा०आ०सक०सेट्। पेषते अपेषिष्ट पिपेषे ऋदित् चङि न ह्रस्वः। अपिपेषत् त।

पेषण न० पिष–भावे ल्युट्। १अवयवविभागेन चूर्णने। आधारे ल्युट्। २खले ओषधादेर्मर्दनपात्रभेदे (तेकाटा-खिल) ३हलभेदे पु० शब्दच०।

पेषणि(णी) स्त्री पिष–करणे अनि। (शिल) ख्याते हरिद्रादेः चूर्णसाधने शिलामये द्रव्यभेदे वा ङीप्।

पेषाक पु० पिष–आकन्। पेषणयाम् उज्ज्व०।

पेषि पु० पिष–इन्। वज्रे उज्ज्वलदत्त।

पेस गतौ भ्वा० पर० सक० सेट्। पेसति अपेसीत् पिपेसे। ऋदित् चङि न ह्रस्वः। अपिपेसत् त। [१८। भा०

पेसुक त्रि० पिस–बा० उक। अभिवर्द्धनशीले शत० ब्रा० १।७।२

पेस्वर त्रि० पिस–शीलार्थे वरच्। गतिशीले।

पै शोषे भ्वा०पर०सक०अनिट्। पायति अपासीत् पपौ।

पैङ्ग पु० ऋषिभेदे भा०स० ४अ०।

पैङ्गराज पु० पक्षिभेदे यजु० २४।३४ भा०।

पैङ्गल पु० न०ब०। पिङ्गलस्यापत्यं गर्गा० यञ्। पैङ्गल्य तस्य छात्रा कण्वा० अण् यलोपः। पिङ्गलस्यापत्यस्य छात्रेषु। [फक्। तन्नामकर्षेरपत्ये।

पैङ्गरा(ला)यन पुंस्त्री० पिङ्गर(ल)स्यर्षेः गोत्रापत्यम् नडा०

पैङ्गलोदायनि पुंस्त्री० पैङ्गलोदायनस्यापत्यम् इञ्। प्राच्यभवे तन्नामकर्षिगोत्रापत्ये ततः यूनि फक् तस्य पैला० लुक्। तदीये यूनपत्ये। [गोत्रापत्ये।

पैङ्गल्य पुंस्त्री० पिङ्गलस्य गोत्रापत्यं गर्गा०यञ्। पिङ्गलर्षे-

पैङ्गि पुंस्त्री० पिङ्गस्यापत्यमिञ्। पिङ्गर्षेः पुत्रे स्त्रियां ङीप्। “पैङ्गीपुत्रात् पैङ्गीपुत्रः” शत० ब्रा० १४।६।४।२०।

पैङ्गिन् पु० पिङ्गेनर्षिणा प्रोक्तः कल्पः इनि। पिङ्गर्षिप्रोक्ते कल्पशास्त्रे। [प्रवरर्षिभेदे।

पैङ्ग्य पु० पिङ्ग बा० अपत्ये यञ्। पैङ्गर्षिपुत्रे स च गोत्र-

पैयवन पु० पीयवनस्यापत्यमृष्यण्। पैयवने भवे मनुः ८।११० पैजवन इति पाठान्तरम्।

पैलूष पु० पिलु–ऊष स्वार्थे अण्। बर्बे पीलौ हेमच०।

पैठर त्रि० पिठरे संस्कृतं पक्वम्। स्थालीपक्वमांसादौ अमरः।

पैठिक पु० असुरभेदे हरिवं० १६१ अ०। [प्रवरा०

पैठिनसि पु० १उपस्मृतिकारके २ऋषिभेदे ३गोत्रर्षिभेदे च

पैण्डायन पुंस्त्री पिण्डस्यर्षेर्गोत्रापत्यम् नडा० फक्। पिण्डर्षि-गोत्रापत्ये।

पैण्डिक्य(न्य) पिण्डं परपिण्डं भक्ष्यतयाऽस्त्यस्य ठन् इनि वा पिण्डिक पिण्डिन् वा तस्य भावः पुरोहिता० यक् ष्यञ् वा। परपिण्डोपजीवित्वे भिक्षोपजीवने त्रिका०।

पैण्ड्र त्रि० पिण्ड्या भवः कृशा० ण्य। पिण्डीभवे।

पैतरावण पु० गोत्रप्रवरर्षिभेदे प्रवरा०।

पैतृक त्रि० पितृत आगतं पितुरिदं वा ठञ्। १पितृतः प्राप्ते २पितृसम्बन्धिनि च। पैतृकभूमिमाहात्म्यं ब्रह्मवै० जन्मख० १०२ अ० दर्शितं यथा

“वासुदेव! न यास्यामि भूमिं तां, पैतृकीं पुनः। सर्वतीर्थपरा शुद्धा दैवे कर्मणि पैतृके। पारक्ये भूमिदेशे च पितृणां निर्वपेत्तु यः। तद्भूमिस्वामिपितृभिः श्राद्धकर्म निहन्यते। पितॄणां निष्फलं श्राद्धं देवानामपि पूजनम्। किञ्चित्फलप्रदश्चैव सम्पूर्णं पैतृके स्थले। पुत्रपौत्रकलत्रेभ्यः प्राणेभ्य श्रेयसी सदा। दुर्लभा पैतृकी भूमिः पितृमातृर्गरीयसी। तस्यामेव पवित्रा च दैवे कर्मणि पैतृके। क्रीतञ्च लहते दानं परदत्तमशुद्धकम्। म्रियते पैतृकभूम्यां तीर्थतुल्यफलं लभेत्। गङ्गाजलसमं पूतं पितृखातोदकं हरे!। पितॄणां तर्पणं तत्र पवित्रं देवपूजनम्। पैतृकी जन्मभूमिश्चेत् सर्वं तद्द्विगुणं लभेत्। पैतृकभूमितुल्या न दानभूमिः सतामपि”।

पैतृमत्य त्रि० पितृमत्यां अनूढायां कन्यायां भवः कुर्वा० ण्य। कन्याया भवे कानीने। [पितृस्वसुरपत्ये।

पैतृष्वसेय पुंस्त्री पितुः स्वसुरपत्यम् ढक् अन्त्यलोप षत्वम्।

पैतृस्वस्रीय पुंस्त्री० पितुः स्वसुरपत्यम् छण्। पितृस्वसुरपत्ये

पैत्त त्रि० पित्तात् आगतः अण्। धातुविशेषपित्तकृते ज्वरादौ

पैत्तिक त्रि० पित्तेन निर्वृत्त ठञ्। धातुविशेषपित्तकृते व्याधौ।

पैत्र त्रि० पितुरिदम् अण्। १पितृसम्बन्धिनि श्राद्धादौ। अङ्गुष्ठतर्जन्योर्मध्यस्थाने २पितृतीर्थे न०। ३पितृसम्बन्धिदिने च तन्मानं च अहनुशब्दे ५७६पृ० उक्तं दृश्यम्।

पैद्व पुंस्त्री अश्वे निघण्टुः। ऋ० ८।८८।४। स्त्रियां जातित्वात् ङीष्।

**पोताधान** पु॰ पोतानां शिशूनामण्डजातमत्स्यानामाधानम्। क्षुद्रमत्स्यसङ्घे (पोनारमाँछ) अमरः। [राजनि॰।

**पोतास** पु॰ पोत इवास्यति अस–टीप्नौ अच्। कर्पूरभेदे

**पो(पौ)तिमत्स्यक** पु॰ मत्स्यभेदे भा॰ व॰ १३५॰।

**पोतिका** स्त्री पूतिका+पृषो॰। पूतिकायां १शाकभेदे भरतः २शतपुष्पायां ३मूलपोत्यां च राजनि॰।

**पोतु** पु॰ पु–तुन्। मानसाण्डपोषके हेमच॰।

**पोतृ** पु॰ पुनाति पु–तृन्। ऋत्विग्भेदे अच्छावाकशब्दे ८५ पृ॰ दृश्यम्। होतादिशब्देन द्वन्द्वे ऋत आत्। पोताहोतारौ।

**पोत्र** न॰ पू–त्र। १यज्ञे २शूकरमुखाग्रे ३लाङ्गलमुखाग्रे, ४वहित्रे च मेदि॰। [स्त्रियां जातित्वात् ङीष्।

**पोत्रायुध** पुंस्त्री पोत्रमायुधमिवास्य। शूकरे राजनि॰।

**पोत्रिन्** पु॰ पोत्रमस्त्यस्य इनि। शूकरे अमर॰। पोत्रयुक्ते त्रि॰। स्त्रियां ङीप्। [शक्तिभेदे त्रिका॰।

**पोत्रिरथा** स्त्री पोत्री रथ इव गतिसाधनमस्याः। जिन-

**पोत्रीय** त्रि॰ पोतुः कर्म छ। पोतृकर्त्तव्ये कर्मणि। कात्या॰ श्रौ॰ २४।४।४२।

**पोथकी** स्त्री "कण्डूलावास्थिता गुर्व्यो रक्तसर्षपसन्निभाः। पिड़काश्च कृशावर्त्म॰ पोथक्य इति संज्ञिता" सुश्रुतोक्ते पिडकाभेदे। [स्त्री गौरा॰ ङीष्।

**पोल** त्रि॰ पुल–ज्वला॰ ण। १महत्त्वयुक्ते। २पिष्टकभेदे

**पोलिका** स्त्री पूरिकाभेदे शतावशब्दे २१८१ पृ॰ दृश्यम्।

**पोलिन्द** पु॰ पोतस्यालिन्द इव पृषो॰। नौकायभेदे त्रिका॰।

**पोषयित्नु** त्रि॰ पुष–णिच्–इत्नु। १पोषके २काकपोषके पिके च उज्ज्वल॰।

**पोषुक** त्रि॰ पुष–बा॰ उक। पोषणकरणशीले "तमनुपोषं पोषुको भवति" शतपथब्रा॰। [भवे त्रि॰ शब्दच॰।

**पोष्टृ** पु॰ पुष–तृच्। (काटा करमजा) १करञ्जभेदे। २पो-

**पोष्य** त्रि॰ पुष–कर्मणि यत्। १पोषणीये। आवश्यके यत्। २अवश्यपोष्ये। अवश्यपोष्यश्च दर्शितो यथा "भरणं पोष्यवर्गस्य दृष्टादृष्टफलोदयम्। प्रत्यवायोऽप्यभरणे तस्मात्तत् प्रयत्नतः। माता पिता गुरुः पत्नी अपत्यानि समाश्रिताः। अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गा अमी नव" काशी॰ख॰ ४५ अ॰। "ज्ञातिर्बन्धुजनः क्षीणस्तथाऽनाथः समाश्रितः। अन्येऽप्यधनयुक्ताश्च पोष्यवर्गा उदाहृताः" दक्षसं॰।

**पौष्यपुत्र** पु॰ कर्म॰। मनवनादिना पुत्रत्वमापन्ने "अधुना कृत्तिकादीनां यस्यां च पौष्यपुत्रकः। तन्नाम चक्रुस्ता मेऽन्यथा कार्त्तिकयेति कौतुकात्" ब्रह्म॰वै॰गण॰ख॰१४अ॰। अधुना दत्तकपुत्रस्य पौष्यपुत्रत्वं व्यवह्रियते तद्विधानं दत्तकशब्दे ३४३८पृ॰ दृश्यम्।

**पौंश्चलेय** पुंस्त्री पुंश्चली+अपत्ये ढक्। पुंश्चल्या अपत्ये

**पौंश्चल्य** न॰ पुंश्चल+भावे ष्यञ्। १असतीत्वे परपुरुषगामित्वे २पुंस्त्रियोर्मिथोव्यभिचारे च मनु ९।१५।

**पौंसायन** पु॰ पौंसायनस्य याजके दृष्टरीतौ राजभेदे शत॰ब्रा॰ १३।८।४।२

**पौंस्न** न॰ पुंसो भाव स्नञ्। पुंस्त्वे।

**पौंस्य** न॰ पुंस अभिमर्द्दने भावे यत्। तत्र साधु वा॰ यत्। १बले निरु॰। २संग्रामे च निघण्टुः ऋ॰१।१८०।१०।

**पौगण्ड** न॰ पौगण्डस्य भाव। १पञ्चमावधिदशमवर्षान्तावस्थाभेदे पोगण्डशब्दे दृश्यम्। स्वार्थे अण्। २तद्वस्थायुते त्रि॰।

**पौञ्जिष्ठ** पुस्त्री अन्त्यजातिभेदे यजु॰ ३०।१८। वेददी॰।

**पौटायन** पुस्त्री पुटायानर्षेरपत्यम् अण्। पूटायनर्षेः गोत्रापत्ये। [गोत्रस्त्रियाम्।

**पौणिक्या** स्त्री पुणगोत्रस्य स्त्री अण् स्त्रिया ष्यङ्। पुण-

**पौण्डरीक** न॰ पुण्डरीकमिव शर्करा॰ अण्। पुण्डरीकवल्ये प्रपौण्डरीके राजनि॰

**पौण्डर्य्य** न॰ पुण्डर्य्यमेव ष्यञ्। पुण्डर्य्यं भरत॰।

**पौण्ड्र** पु॰ १देशभेदे स च वृ॰सं॰१४॰ पूर्वस्यामुक्तः भा॰भी॰६अ॰ सोऽस्य अभिजन तस्य राजा वा अण्। २तद्देशवासिनि च। ३पिष्टाटिकमेण तद्देशवासिनि च। "पौण्ड्रकश्च बलिना वर." हरिवं॰८१अ॰। स च तल्पेन निहत "पाण्ड्रं पौण्ड्रं कलिङ्गञ्च मातृव्यञ्चैव जनार्दन"। जघान सहितान् सर्वान्" हरिवं॰ १६१ अ॰। "वसुदेवस्य सुतनूपत्नीजाते ४पुत्रभेदे। "सुतनुश्च नराची च पौरेरास्त परिग्रहः। पौण्ड्रश्च कपिलश्चैव वसुदेवस्य तौ सुतौ। नराच्या कपिलो जज्ञे पौण्ड्रश्च सुतनूसुत॰। तयोर्नृपोऽभवत् पौण्ड्र॰ कपिलश्च वनं ययौ" हरिवं॰१६२ अ॰। ५भीमसेनशङ्खे ६इक्षुभेदे पु॰ शब्दमा॰। ७क्रियालोपेन वृषलत्वप्राप्ते क्षत्रियभेदे मनु १०।४४ स्वार्थे क। तन्नार्थे इक्षुभेदे (पुड़ि)।

**पौण्ड्रनागर** पु॰ पौण्ड्रनगरे भवः अण् तस्य प्राच्यदेशत्वेऽपि नगरान्तत्वेन उत्तरपदवृद्धि। पौण्ड्रनगरभवे।

**पौण्ड्रमातृस्यक** पु॰ राजभेदे भा॰ आ॰ ६७ अ॰।

पौण्ड्रवर्द्धन पु०(बेहार) ख्याते देशभेदे शब्दर० तत्र पौण्ड्रेषु प्राचुर्य्यात् तथात्वम् । [२गोत्रप्रवरर्षिभेदे प्रवराध्यायः ।

पौण्ड्रिक पु० पुण्ड्र+स्वार्थे ठञ् । १इक्षुभेदे शब्दमा० ।

पौण्य त्रि० पुण्येषु प्रौतस्नातकर्मसु साधु अण् । पूर्त्तकर्मकारके कात्या० श्रौ०१।५।५।

पौतव न० यौतव–पृषो० । परिमाणे हेमच० ।

पौतिक त्रि० पूतिकेन दुर्गन्धिना निर्वृत्तम् सङ्कला० अण् । पूतिकद्रव्यनिर्वृत्ते ।

पौतिमाष पु० बन्व०। पूतिमाषस्यर्षेः गोत्रापत्यं गर्गा० यञ्। तस्य छात्राः कण्वा० अण् यञोपः । पौतिमाषच्छात्रेषु ।

पौत्रक न० पौतृरिदं ठञ् । हृत्विग्भेदपोतृसम्बन्धिनि ।

पौत्तिक न० पुत्तिकाभिर्मधुमक्षिकाभेदैर्निर्वृत्तम् ठञ् । मधुनि रत्नमा० ।

पौत्र पुंस्त्री० पुत्रस्यापत्यं शिवा०अण् । पुत्रस्य पुत्रे नप्तरि "पौत्रेणानन्त्यमश्नुते" इति स्मृतिः । स्त्रियां ङीप् ।

पौदन्य पु० अश्मकस्थपनगरे भा० आ० १७७ अ० ।

पौनःपुनिक त्रि०पुनःपुनर्भवः ठञ टिलोपः । पुनःपुनर्भवे ।

पौनःपुन्य न० पुनः पुनरेव स्वार्थे चतुर्वर्णा० ष्यञ् टिलोपश्च । १पुनःपुनरित्यर्थे भावे ष्यञ् । २आभीक्ष्ण्ये

पौनरुक्त न० पुनरुक्तस्य भावः उद्गात्रा०अण् । पुनर्वादोक्तौ

पौनरुक्तिक न० पुनरुक्तमर्थं वेत्ति तत्पदं वाऽधीते उक्था० ठक् । १पुनरुक्तार्थाभिज्ञे २पुनरुक्तपदाध्येतरि च ।

पौनर्भव पुंस्त्री० पुनर्भू+शिवा० अपत्ये अञ् । पुनर्भ्वपत्ये १द्वादशपुत्रमध्ये पुत्रभेदे "पत्या वा च परित्यक्ता विधवा वा स्वयेच्छया । उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते" मनुः । २तथाविधकन्यायां स्त्री स्वार्थे अण् । तत्रार्थे "सप्त पौनर्भवाः कन्या वर्जनीया कुलाधमाः । वाचादत्ता मनोदत्ता कृतकौतुकमङ्गला । उदकस्पर्शिता या च या च पाणिगृहीतिका । अग्निं परिगता या च पुनर्भूप्रभवा च । इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्" काश्यपोक्ते सप्तविधे ३कन्याभेदे च । आर्षत्वात् ङीबभावः । अजादेराकृतिगणत्वात् वा टाप् इत्येके । पुनर्भवं विन्दति अण् । ४पुनर्भूवेदके भर्त्तरि । "सा चेदक्षतयोनिः स्यात् गतप्रत्यागताऽपि वा । पौनर्भवेन भर्त्त्रा सा पुनःसंस्कारमर्हति" मनुः ।

पौर त्रि० पुरे वसति गहादित्वात् अण् । १पुरवासिनि २रोहिषतृणे न०(रामकर्पूर) अमर । पूरः पूरक एव स्वार्थे अण् । ३उदरपूरके त्रि०ऋ०२।११।११भा०। पुरोभवः पुरस्+यण् टिलोपः । ४पूर्वदिग्देशकालभवे "पौरा अधरसुदरविजा नित्यम्" वृ०सं० १७ अ० ।

पौरक न० पौरं इव कायति कै–क । रहश्कप्राद्याने हेम०।

पौरकुत्सी स्त्री पुरकुत्सस्यापत्यं स्त्री इञ् ङीप् । गाधिराजमातरि हरिवं० २७ अ० । [समीपादौ ।

पौरगेय त्रि० पुरग+सख्या० चातुरर्थ्यां ढञ् । पुरगत०

पौरण पु० "पूरणवारिश्रायवन्नानां वैश्वामित्रदेवरातपौरणेति आश्व०श्रौ०१२।१४।५ उक्ते गोत्रप्रवरर्षिभेदे । पूरण+स्वार्थे अण् । २पूरणे स्त्रियां ङीप् । "पौरणीं भूषणक्रियाम्" हरिव० ८८अ० ।

पौरन्दर त्रि० पुरन्दरस्येदम् पुरन्दरोदेवताऽस्य वा अण् । १शक्रसम्बन्धिनि २ज्येष्ठानक्षत्रे च वृ०सं०१५अ० ।

पौरव पुंस्त्री० पु(पू)रोर्गोत्रापत्यम् अण् । १ययातिपुत्रभेदस्य पु(पू)रोरपत्ये २तत्सम्बन्धिनि च । ३उत्तरदेशभेदे वृ०सं०१४अ०। मार्क०पु०५८ अ० तत्र पूर्वोत्तरदिक्स्थत्वमुक्तं यथा "त्रिनेत्राः पौरवाश्चैव गन्धर्वाश्च द्विजोत्तम ! । पूर्वोत्तरन्तु कूर्मस्य पादमेते व्यवस्थिताः" सोऽभिजनोऽस्य तस्य राजा वा अण् । पित्रादिक्रमेण ४तद्देशवासिनि ५तन्नृपे च । [भक्तियुक्ते सि०कौ०।

पौरवीय त्रि० पौरवो राजा भक्तिरस्य छ । पौरवन्टप-

पौरश्चरणिक त्रि०पुरश्चरणस्य व्याख्यानस्तत्र भवो वा ठञ् । १पुरश्चरणप्रतिपादकग्रन्थव्याख्यानग्रन्थे २तत्र भवे च ।

पौरस्त्य त्रि०पुरस्+भवार्थे त्यक् । १पुरोभवे २प्रथमे च अमरः

पौरागेय त्रि० पुराग+सख्या० चातुरर्थ्यां ढञ् । पूर्वकालगतस्यादूरदेशादौ । [१अ०।

पौराण त्रि० पुराणे पठितः अण् । पुराणपठिते भा० आ०

पौराणिक त्रि० पुराणं वेत्त्यधीते वा "आख्यानाख्यायिकेतिहासपुराणेभ्यश्च" वार्त्ति० ठक् । १पुराणार्थाभिज्ञे २तदध्येतरि च । पुराणे पठितः ठक् । ३तत्र पठिते त्रि० स्त्रियां ङीप् ।

पौरिक पु० दाक्षिणात्ये देशभेदे मार्कपु० ५७ अ० ।

पौरुकुत्स पु० गोत्रप्रवरर्षिभेदे प्रवराध्यायः ।

पौरुष न० पुरुषस्य भावः कर्म वा युवा० अण् । १पुरुषत्वे २विक्रमे ३उद्यमे च । पुरुषस्येदम् अण् । ४ऊर्द्ध्वविस्तृतदोष्पाणिकमनुष्यपरिमाणे अमरः । "त्रयोऽपि मानेऽपि च पौरुषाधिकम्" नैष० । स्वार्थे अण् । ४पुरुषगन्धार्थे शत०ब्रा० १४।७।१।१० ।

पौरुषाध्यकिन् पु० बन्व० । पुरुषायकेन ऋषिणा प्रोक्त

साध्यतदभाववत्तावितिं तदर्थस्तथा च निर्णयार्थं हेतुर्यत्र निर्णयं जनयितुमशक्तस्तुल्यबलेन परेण प्रतिबन्धात् किन्तु धर्मिणः साध्यवत्त्वं तदभाववत्त्वं वेति चिन्तां जिज्ञासां प्रवर्त्तयति स प्रकरणसम । यद्वा प्रकृष्टं करणं लिङ्गं परामर्शो वा को हेतुरनयोः साधक एतयोः कः परामर्शः प्रमेति वा यत्र जिज्ञासा भवतीत्यर्थः । यथाऽऽदित्यादि वस्तुस्थितिमात्रं वक्तव्यन्तु तुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वं स्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शो वा । विरोधिपरामर्शस्य च हेतुनिष्ठत्वमेकज्ञानविषयत्वसम्बन्धेन अन्यथा हेतोर्दुष्टत्वं न स्यात् । अयञ्च दशाविशेषे दोषः इत्यतः सद्धेतोरपि विरोधिपरामर्शकाले दुष्टत्वमिष्टमेवेत्यवधेयम्" वृत्तिः ।

२जातिरूपासदुत्तरभेदे गौ० ५।१।१६।८८ सू० ।

"उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः" सू० "उभयसाधर्म्यात् अन्वयसहचाराद्व्यतिरेकसहचाराद्वा प्रक्रिया प्रकर्षेण क्रिया साधनं विपरीतसाधनमिति फलितार्थः तत्सिद्धेस्तस्य पूर्वमेव सिद्धे तथाचाधिकत्वेनारोपितप्रमाणान्तरेण बाधेन प्रत्यवस्थानं प्रकरणसमः यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते नैतदेव श्रावणत्वेन नित्यत्वसाधकेन बाधात् बाधादेशनाभासा चेयम् । वृ० । "प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः" सू० । अत्रोत्तरमाह प्रतिपक्षाद्विपरीतसाध्यसाधकत्वेनाभिमताच्छ्रावणत्वादितः प्रकरणसिद्धिद्वारा मदीयसाध्यस्य यः प्रतिषेधः त्वया क्रियते तस्यानुपपत्तिः कुत प्रतिपक्षोपपत्तेः त्वत्पक्षापेक्षया प्रतिपक्षस्य मदीयपक्षस्योपपत्तेः साधनात् । अयमाशय श्रावणत्वेन पूर्वं नित्यत्वस्य साधनात्तयो बाध उच्यते स नोपपद्यते पूर्वं साधितस्य बलवत्त्वाभावात् कदाचित्, कृतकत्वेनानित्यत्वस्यापि पूर्वं साधनादिति त्वत्पक्षप्रतिषेधोऽपि स्यात्" वृत्तिः ।

**प्रकरणी** न० नाटिकाभेदे "नाटिकैव प्रकरणी सार्थवाहादिनायका । समानवंशजा नेतुर्भवेद् यत्र च नायिका" सा०द० ।

**प्रकरी** स्त्री १नाट्याङ्गभेदे २चत्वरभूमौ च शब्दरत्ना० ।

**प्रकर्ष** पु० प्र+कृष–घञ् । १उत्कर्षे २प्रकृष्टतया कर्षणे च ।

**प्रकर्षण** न० प्र+कृष–ल्युट् । १उत्कर्षे २आकर्षणे च ।

**प्रकलविद्** पु० प्रकलां कलां वेत्ति विद–क्विप् पृषो० ह्रस्वः । १वणिग्जने निरु०६।६। २अल्पज्ञातरि त्रि० ऋ०७।१८।१५भा०

**प्रकाण्ड** पु० प्रकृष्टं काण्डं प्रा०त० । १वृक्षस्य मूलादारभ्य शाखान्ते भागे । २प्रशस्ते न० । ३विटपे पु० मेदि० ।

**प्रकाण्डर** पु० प्रकाण्ड+अस्त्यर्थे वा० र । वृक्षे शब्दच० ।

**प्रकाम** त्रि० प्रगतः कामम् प्रा०स० । १यथेष्टे अमरः । प्रा०ब० । २प्रकृष्टकामके त्रि० । ३देवभेदे पु० यजु० २०।१२ ।

**प्रकामम्** अव्य० प्र+कम–णमुल् । अत्यर्थे अनुमतौ च अमरः ।

**प्रकामोद्य** पु० देवभेदे यजु०१० ८

**प्रकार** पु० प्र+कृ+घञ् । १भेदे २सादृश्ये च अमरः । ३विशिष्टज्ञाने विशेषणतया भासमाने पदार्थे "स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तदनिरूपकत्वम् सर्वांशे भ्रमभिन्नत्वमिति" गदाधरः ।

**प्रकारता** स्त्री प्रकारस्य भावः तल् । १विषयताभेदे ज्ञायमानविशेषणप्रतियोगिकसमवायावच्छिन्नविषयत्वे ।

**प्रकालन** त्रि० प्रकालयति प्र+कालि ल्यु । १हिंसके २सर्पभेदे पु० भा०आ०७५ अ० । भावे ल्युट् । ३मारणे न० ।

**प्रकाश** पु० प्र+काश–घञ् । १आतपे २विकाशे च । कर्त्तरि अच् । ३विकाशयुक्ते त्रि० अमरः । प्रकाशश्च सत्त्वज्ञानतेजःसाधारणः यथोक्तम् "जडप्रकाशायोगात् प्रकाशः" सा०सू० "वैशेषिका आहुः । ज्ञानप्रकाशरूपस्य जडस्यात्मनो मनःसंयोगाज्ज्ञानाख्यप्रकाशो जायत इति तन्न । लोके जडस्याप्रकाशस्य लोष्टादेः प्रकाशोत्पत्त्यदर्शनेन तदयोगात् । अतः सूर्यादिवत् प्रकाशस्वरूप एव पुरुष इत्यर्थः । तथा च स्मृतिः "यथा प्रकाशतमसोः सम्बन्धो नोपपद्यते । तद्वदैक्यं न सम्बन्धः प्रपञ्चपरमात्मनोः" । इति । "यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् । ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु" इति च । प्रकाशत्वं च तेजःसत्त्वचैतन्येष्वनुगतमखण्डोपाधिरनुगतव्यवहारादिति । ननु प्रकाशस्वरूपत्वेऽपि तेजोवद्धर्मधर्मिभावोऽस्ति न वा तत्राह सा०प्र०भा० "निर्गुणत्वान्न चिद्धर्मा" सू० "पुरुषस्य प्रकाशरूपत्वे सिद्धे तत्सम्बन्धमात्रेणान्यत्र प्रकाशोपपत्तौ प्रकाशात्मकधर्मकल्पनागौरवमित्यपि बोध्यम् + तेजसश्च प्रकाशात्स्वरूपविशेषाश्रयत्वेऽपि स्पर्शपुरस्कारेण पृथक् प्रकाशतेजसोर्भेदः सिद्ध्यति । आत्मनस्तु ज्ञानाख्यप्रकाशाश्रयत्वकल्पने प्रमाणं नास्तीत्यतो धर्मधर्मिभावशून्यं प्रकाशरूपमेवात्मद्रव्यं कल्प्यते । तस्य च न गुणत्वम् संयोगादिमत्त्वात् अनाश्रितत्वाच्चेति । तथा च स्मर्यते "ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन । ज्ञानस्वरूप एवात्मा नित्य-

पूर्णः सदा शिवः” शां॰प॰मा॰। वैवस्वतमनोः २पुत्रभेदे हरिवं॰७अ॰।

**प्रकाशक** त्रि॰ प्रकाशयति प्र+काश-णिच् ण्वुल्। १प्रकाशकारके सूर्य्यादौ सांख्यमतसिद्धे २सत्त्वगुणे च “तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्” गीता।

**प्रकाशकज्ञातृ** पु॰ प्रकाशकस्य पूर्वं ज्ञाता। कुक्कुटे शब्दच॰ तस्य प्रथमं प्रकाशकसूर्य्यज्ञातृत्वात्तथात्वम्।

**प्रकाशन** त्रि॰ प्रकाशयति प्र+काश-णिच्-ल्यु। १प्रकाशकारके २विष्णौ पु॰। “नैकरूपो वृहद्रूपः शिपिविष्टः प्रकाशनः” विष्णुस॰।

**प्रकाशात्मन्** पु॰प्रकाश आत्मा स्वरूपमस्य। १विष्णौ “प्रकाशात्मा प्रतापनः” विष्णुस॰। २व्यक्तस्वभावे त्रि॰।

**प्रकाशित** त्रि॰प्र+काश+णिच्-कर्मणि क्त। १प्रकटिते हेम॰ प्र+काश कर्त्तरि क्त। २प्रकाशयुते त्रि॰। भावे क्त। ३प्रकाशे न॰।

**प्रकाश्य** त्रि॰ प्र+काशि-कर्मणि यत्। १प्रकाशनीये २प्रायोग्यर्णशुद्ध्यादौ नवके न॰ काशी॰ १० अ॰। नवनवकशब्दे ३९८८ पृ॰ दृश्यम्।

**प्रकीर्ण** न॰ प्र+कॄ-कर्मणि क्त। १चामरे जटा॰। २ग्रन्थविच्छेदे त्रिका॰। ३विक्षिप्ते ४मिश्रिते विभिन्नजातीये त्रि॰। ५पूतिकरञ्जे पु॰ राजनि॰। भावे क्त। भिन्नजातीयानां ६मिश्रणे ७विक्षेपे ८विस्तारे च न॰। स्वार्थे क। तत्रार्थे। अनुक्तप्रायश्चित्तविशेषे पातकविशेषे पातकशब्दे ४२९९ पृ॰ विष्णुवाक्यम् दृश्यम। “अनुक्तं तत्प्रकीर्णकम्” अनुक्तमनुक्तनिष्कृतिकं पापं प्रकीर्णकमित्यर्थः। “अनुक्तनिष्कृतीनां तु पापानामपनुत्तये। शक्तिञ्चावेक्ष्य पापञ्च प्रायश्चित्तं प्रकल्पयेत्” विश्वामित्र “प्रकीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवम्। प्रायश्चित्तं बुधः कुर्य्यात् ब्राह्मणानुमतः सदा” विष्णुः। “क्रयविक्रयदुष्टभोजनप्रतिग्रहेषु अनादिष्टप्रायश्चित्तेषु चान्द्रायणं प्राजापत्यं वा” शङ्खलिखितौ। भट्टिकाव्ये नानाजातीयप्रत्ययोदाहरणबोधककाण्डः प्रकीर्णकाण्डम्। संज्ञायां कन्। तुरङ्गमे पुस्त्री॰ स्त्रियां जातित्वात् ङीष्।

**प्रकीर्य्य** पु॰ प्रकीर्य्यतेऽसौ प्र+कॄ-क्यप्। (नाटाक-मचा) १करञ्जभेदे अमरः। २पूतिकरञ्जे (रीठाकरमचा) राजनि॰। ३विक्षेप्ये ४व्याप्ये च त्रि॰।

**प्रकुञ्च** पु॰ “प्रकुञ्च षोड़शी बिल्वं पलमेवात्र कीर्त्त्यते” भावप्र॰ उक्ते पलरूपे मानभेदे। “चूर्णप्रकुञ्चम्” इत्यादि सुश्रुत

**प्रकुल** न॰ प्र+कुल-कर्त्तरि क। प्रशस्तदेहे त्रिकाण्डशेषः।

**प्रकूष्माण्डी** स्त्री दुर्गायां हेमच॰।

**प्रकृत** त्रि॰ प्र+कृ-क्त। १अधिकृते २आरब्धे ३प्रकरणप्राप्ते च। ४ऋषिभेदे पु॰। प्रकृतस्यर्षेर्गोत्रापत्यम् अश्वा॰ फञ्। प्राकृतायन तद्गोत्रापत्ये पुस्त्री॰।

**प्रकृति** स्त्री प्र+कृ-कर्त्तरि क्तिच् भावादौ क्तिन् वा। १स्वभावे २योनौ ३लिङ्गे ४स्वाम्यमात्यादौ राज्याङ्गे अमरः। ५शिल्पिनि हेम॰। ६शक्तौ ७योषिति शब्दर॰। ८परमात्मनि धरणिः। १०आकाशादिभूतपञ्चके ११करणे १२गुणे १३जन्तौ च १४एकविंशत्यक्षरपादके छन्दोभेदे। १५मातरि १६प्रत्ययनिमित्ते शब्दभेदे तल्लक्षणं शब्द॰प्र॰ उक्तं यथा “स्वोपस्थाप्ययदर्थस्य बोधने यस्य निश्चयः। तत्त्वेन हेतुरस्य वा प्रकृतिः सा तदर्थिका। तत्त्वेन यन्निश्चयत्वेन स्वोपस्थाप्ययादृशार्थस्यान्वयबोधं प्रति स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्तानिश्चयत्वेन हेतुत्वं तादृश एव शब्दस्तथाविधार्थे प्रकृतिरिति तु फलितार्थः। वस्त्रगुडो द्राक्षेत्यादौ वस्त्रजाद्यर्थस्यान्वयबोधं प्रति गुडादिपदधर्मिकवस्त्रजादिनिश्चयत्वेन न हेतुत्वमपि तु सुबादिधर्मिकवस्त्रगुडादिपदनिश्चयत्वेन अन्यथा केवलादपि वस्त्रगुडादिशब्दात् द्राक्षादौ वस्त्रजाद्यर्थस्यान्वयबोधापत्तेरिति न तत्र प्रसङ्गः”। “निरुक्ता प्रकृतिर्द्वेधा नामधातुप्रभेदतः। यत् प्रातिपदिकं प्रोक्तं तन्नाम्नो नातिरिच्यते। निरुक्ता न तु साङ्ख्यानामिव जगदुपादानभूता। यच्च पाणिनिप्रभृतिभिः प्रातिपदिक प्रकृतिरित्युक्तं तदपि नाम्नो नातिरिच्यते नातो विभागन्यूनता”। वैयाकरणमते तल्लक्षणन्तु शब्दार्थरत्नेऽस्माभिरुक्तं यथा “तत्र प्रकृतिप्रत्ययादिसमुदायरूपपदस्वरूपे तद्विभागे च दर्शिते इदानीं तदवयवरूपप्रकृतिप्रत्ययस्वरूपविभागौ प्रदर्श्येते। तत्र प्रकृतिर्नाम अर्थावबोधहेतुः प्रत्ययविधानावधिभूतः शब्दविशेषः सर्वेषामेव च प्रत्ययानां प्रकृतिं निमित्तीकृत्यैव विधानात्। प्रत्ययानाञ्च प्रत्यायकत्वरूपेणैव निवेशः न तु वक्ष्यमाणप्रत्ययत्वेन तेन नान्योन्याश्रयः। अवधित्वञ्च पूर्वापरत्वरूपं ग्राह्यं तेन वस्त्रजादेर्निमित्तत्वेऽपि नाप्रसङ्गः। वस्तुतस्तु प्रवृत्तिनिमित्तशब्दानां समुदायशक्तिस्वीकारात् तद्धितादीनां निरर्थकत्वाच्च तत्र प्रकृतिप्रत्ययादिविभागः। अत एव भाष्ये “तावेव सुप्तिङौ यौ तत्र परौ नैव प्रकृतिरादौ” इति” सुप्तिङ्मात्रयोरेव प्रत्ययत्वमित्युक्तम्।

प्रत्ययविधानावधेः यौ परौ तावेव सुप्तिङौ या च तयो· राद्या विधानावधिभूता सैव प्रकृतिरिति तदर्थः। एतदभिप्रायेणैव हरिणा "य· शब्द स्वेतरस्यार्थे स्वार्थस्यान्वयबोधने। यदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः परः" इति प्रकृत्यादिलक्षणमुक्तम्। अत्र च पूर्वत्वं बोधकशब्दविधानावधित्वमेव बोध्यं भाष्यैकवाक्यत्वात् नत्वानुपूर्विकोपात्तपूर्वापरत्वं तथात्वे पचतीत्यादौ तिङादेरेव धात्वर्थे स्वार्थप्रकारकान्वयबोधजनकत्वस्वीकारात् तत्रातिव्याप्तिः। एवञ्च निरुक्तपूर्वत्वरूपलक्षणेनैव प्रसङ्गातिप्रसङ्गादिवारणसम्भवे प्रकृतिप्रत्यययोरर्थबोधकत्वसाकाङ्क्षत्वद्योतनायैव स· शब्द इत्यादिकथनं बोध्यमेवच स्वार्थे इत्यत्र विशेष्यतया विशेषणतया वान्वयबोधने इत्यर्थः तेन सिद्धान्ते तिङर्थप्रकारकान्वय· बोधेऽपि न क्षतिः। तथा च तदर्थान्वितस्वार्थबोधने तदपेक्षत्वे सति तद्विधानावधिभूतत्वं तत्प्रकृतित्वमिति फलितम्। एवञ्चावयवशक्तिस्वीकारेऽपि पङ्कजादावतिप्रसङ्गादिशङ्कापि नोदेति पङ्कजादेः प्रकृतिविधानावधित्वाभावात् अवधित्वस्य पूर्वापरत्वरूपस्य निवेशाच्च। अत एतत्पक्षे भाष्ये सुप्तिङ्शब्दौ प्रत्ययान्तरस्याप्युपलक्षणमिति दृष्टव्यम्। तथा शेखरकारेणापि प्रत्ययविधानुद्देश्यतावच्छेदकाक्रान्तत्वमेव प्रकृतित्वमित्यभिदधे पूर्वसिद्धवस्तुन एव उद्देश्यत्वसम्भवात् पूर्वत्वमर्थात्तं पङ्कजादेरपि सुप उद्देश्यत्वात् विशिष्टरूपस्याव्याप्तीति। एवञ्च प्रकरोति प्रत्ययं बोधयतीति व्युत्पत्तिसत्त्वात् प्रकृतिशब्दो योगरूढ इति बोध्यम्"। १७उपादानकारणे "प्रकृतिश्च दृष्टान्तानुपरोधात्" शा·सू· "सती वाऽविद्यमाना या प्रकृतिः परिणामिनी" हरिका·। १८उपदिष्टसर्वाङ्गके कर्मभेदे। तदेतत् ताण्ड्य·भा·निर्णीतं यथा "ननु का प्रकृतिः का विकृतिरिति चेत् उच्यते यत्र कर्त्तव्यं सर्वं प्रकरणे कर्मान्तरमनपेक्ष्योपदिश्यते सा प्रकृतिः यत्र विशेषरूपमेव कर्त्तव्यं मुखोपदिश्यते इतरत् सर्वं कर्मान्तरादतिदिश्यते सा विकृतिः। अथातिदेशः प्रत्यक्षवचनाद्वा साम्याद्वा लिङ्गाद्वाऽवगन्तव्य। तत् सर्वं सप्तमाष्टमाध्यायाभ्यां बहुधा विचारितम्। प्रकृतिश्च द्विविधा मूलप्रकृतिरवान्तरप्रकृतिश्चेति। सर्वात्मना कर्मान्तरनिरपेक्षा मूलप्रकृतिः कतिपयेष्वङ्गेषु कर्मान्तरं चापेक्षते स्वयञ्च केचित् कर्मनिरपेक्षणीया भवति सेयमवान्तरप्रकृतिः। तत्र तिस्रो मूलप्रकृतयः तासामष्टमाध्यायस्य प्रथमपादे तृतीयाधिकरणस्य द्वितीयवर्णके विचारिता·। "इष्ट्यग्निष्टोमसोमानां मूलप्रकृतिता न हि। अस्ति वा नालौकिकत्वादियत्तानवधारणात्। लोकवत् सन्निपत्यारादुपकारिद्वयस्मृतेः। इयत्तायानिश्चितत्वान्मूलप्रकृतिता नहि। अलौकिकत्वेनैताभिरङ्गैः स्वस्य च उपकार इति निश्चेतुमशक्यत्वात् इष्ट्यादीनां नास्ति मूलप्रकृतित्वमिति चेत् नैव लौकिकसदृशत्वात्। यथा लोके भुक्तिक्रियायामोदनं करणं तस्य सन्निपत्योपकारिणः शाकसूपादय·, आरादुपकारिणः पीठप्रदीपादयः। तथा भावनायां यागः करणम् अवघातादयः सन्निपातिनः, प्रयाजादय· आरादुपकारिणः। अतो नात्यन्तिकमलौकिकत्वम्। इयत्ता लौकिके यथा प्रत्यक्षेण निश्चीयते तथा श्रौते श्रुत्या निश्चीयता तथादिष्ट्यग्निष्टोमसोमानां मूलप्रकृतित्वमस्ति"।

१९सत्त्वरजस्तमसां साम्यावस्थायां साम्यावस्थोपलक्षिते सत्त्वादिगुणे। "सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम्। साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्त्तिता। केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः। एतदेव प्रजासृष्टिं करोति विकरोति च" मात्स्ये ४अ·।

"सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" सा· सू·। "तेषां सत्त्वादिद्रव्याणां या साम्यावस्था न्यूनानतिरिक्तावस्था· न्यूनाधिकभावेनासंहतावस्थेति यावत् अकार्यावस्थेति निष्कर्षः। अकार्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिरित्यर्थः। यथाश्रुते वैषम्यावस्थायां प्रकृतिनाश· प्रसङ्गात् "सत्त्वं रजस्तम इति एषैव प्रकृतिः सदा। एषैव संसृतिर्जन्तोरस्याः पारे परं पदम्" इत्यादि स्मृतिभिर्गुणमात्रस्यैव प्रकृतित्ववचनाच्च। सत्त्वादीनामनु· गमाय सामान्येति। पुरुषव्यावर्त्तनाय गुणेति। महदादिव्यावर्त्तनाय चोपलक्षितान्तमिति। महदादयोऽपि हि कार्यसत्त्वादिरूपा पुरुषोपकरणतया गुणाश्च भवन्तीति। तदत्र प्रकृतेः स्वरूपमेवोक्तम्। अस्या विशेषस्तु पश्चाद्वक्ष्यते" प्र·भा·। "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" सां· का·। "अपेक्षातो हि शास्त्रार्थस्य चतस्रो विधाः। कश्चिदर्थः प्रकृतिरेव, कश्चित् विकृतिरेव,कश्चित् प्रकृतिविकृतिः कश्चिदनुभयरूप इति। तत्र का प्रकृतिरेत्यत उक्तम् मूलप्रकृतिरविकृतिरिति प्रकरोतीति प्रकृतिः प्रधानं सत्त्वरज

सत्त्वरजस्तमसां साम्यावस्था सा अविकृतिः । प्रकृतिरेवेत्यर्थः कस्मादित्यत उक्तम् मूलेति मूलञ्चासौ प्रकृतिश्चेति मूलप्रकृतिः विश्वस्य कार्य्यसङ्घातस्य सा मूलं नत्वस्या मूलान्तरमस्तीति भावः । कतमाः पुनः प्रकृतिविकृतयः कियत्यश्चेत्यत उक्तम् महदाद्याः प्रकृतिविकृतयः सप्तेति प्रकृतयश्च ता विकृतयश्च ता इति । तथा हि महत्तत्त्वमहङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः । एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणाञ्च प्रकृतिर्विकृतयश्च महतः । एवं पञ्चतन्मात्राणि भूतानामाकाशादीनां प्रकृतयो विकृतयश्चाहङ्कारस्य । अथ विकृतिरेव कियती चेत्यत उक्तं षोडशकस्तु विकार इति । षोडशसंख्यापरिमितो गणः षोडशकः तुशब्दोऽवधारणे भिन्नक्रमश्च पञ्चमहाभूतान्येकादशेन्द्रियाणि चेति षोडशको गणो विकार एव "न प्रकृतिरिति । यद्यपि च पृथिव्यादीनामपि गोघटवृक्षादयो विकाराः एवं तद्विकारभेदानां दध्यङ्कुरादयस्तथापि गवादयो बीजादयो वा न पृथिव्यादिभ्यस्तत्त्वान्तरं तत्त्वान्तरोपादानत्वञ्च प्रकृतित्वमिहाभिमतमिति न दोषः सर्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वम् । अनुभयरूपमाह न प्रकृतिर्न विकृतिः पुरुषः" इति त०कौ० । शब्दस्पर्शविहीनं तद्रूपादिभिरसंयुतम् । त्रिगुणं तत् जगद्योनिः" स्मृतिः । तदनुमापका कार्य्यभेदाः तद्धर्माश्च सा०सू० भाष्याद्युक्ता यथा "तत्र प्रकृतेः" सा० सू० "ततो महत्तत्त्वात् कार्य्यात् कारणतया प्रकृतेरनुमानेन बोध इत्यर्थः । अन्तःकरणसामान्यस्यापि कार्य्यत्वं तावदेकदा पञ्चेन्द्रियज्ञानानुत्पत्त्या मध्यमपरिमाणतया देहादिवदेव सिद्धं श्रुतिस्मृतिप्रमाण्याच्च । तस्य च प्रकृतिकार्य्यत्वेऽयं प्रयोगः । सुखदुःखमोहधर्म्मिणी बुद्धिः सुखदुःखमोहधर्म्मकद्रव्यजन्या कार्य्यत्वे सति सुखदुःखमोहात्मकत्वात् कान्तादिवदिति कारणगुणानुसारेणैव कार्य्यगुणौचित्यं चात्रानुकूलतर्कः श्रुतिस्मृतयोऽपीतिमन्तव्यम् भा० "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्" सां० का० कारणानुमापकत्वाल्लयगमनाद्वाऽत्र लिङ्गं कार्य्यजातम् न तु महत्तत्त्वमात्रमत्र विवक्षितं हेतुमत्त्वादीनां सर्वकार्य्यसाधारणत्वात् । "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्" इति कारिकायामप्यत एव व्यक्तत्वं सर्वकार्य्यमेव लिङ्गमित्युक्तम् । तथा च तल्लिङ्गं हेतुमत्त्वादिधर्मकमिति वाक्यार्थः । तत्र हेतुमत्त्वं कारणवत्त्वम् अनित्यत्वं विनाशिता प्रधानस्य या व्यापिता पूर्वोक्ता तद्विपरीतत्वमव्यापित्वम् । सक्रियत्वमध्यवसायादिरूपावयतकार्य्यकारित्वम् । प्रधानस्य तु सर्वक्रियासाधारण्येन कारणत्वान्न कार्य्यैकदेशमात्रकारित्वम् । न च क्रिया कर्म्मैव वक्तुं शक्यते प्रकृतिक्षोभात् सृष्टिश्रवणेन प्रकृतेरपि कर्म्मवत्तया सक्रियत्वापत्तेरिति । अनेकत्वं सर्गभेदेन भिन्नत्वम् । सर्गस्थसाधारण्यमिति यावत् । न पुनः सजातीयानेकव्यक्तिकत्वम् प्रकृतावतिव्याप्तेः प्रकृतेरपि सत्त्वाद्यनेकरूपत्वात् "सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात्" इत्यागामिसूत्रादिति । आश्रितत्वं स्वावयवेष्विति" सा०प्र०भा० । एतद्विपरीतत्वमेव तद्धर्मत्वम् । २० प्रकृत्यंशदेवीपञ्चकरूपशक्तिभेदे "गणेशजननी दुर्गा१ राधा२ लक्ष्मीः३ सरस्वती४ । सावित्री५ च सृष्टिविधौ प्रकृतिः पञ्चधा स्मृता" । प्रकृतिशब्दनिरुक्तिर्यथा "प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः । सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्त्तिता । गुणे प्रकृष्टे सत्त्वे च प्रशब्दो वर्त्तते श्रुतौ । मध्यमे रजसि कृश्च तिशब्दस्तामसः स्मृतः । त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता । प्रधाना सृष्टिकरणे प्रकृतिस्तेन कथ्यते । प्रथमे वर्त्तते प्रश्च कृतिश्च सृष्टिवाचकः । सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्त्तिता" । तस्याः आविर्भूतिः स्वरूपञ्च यथा "योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः । पुमांश्च दक्षिणार्द्धाङ्गात् वामाङ्गात् प्रकृतिः स्मृता । सा च ब्रह्मस्वरूपा च यथा नित्या सनातनी । यथात्मा च यथा शक्तिर्यथाग्नौ दाहिका स्मृता । अत एव हि योगीन्द्रः स्त्रीपुंभेदं न मन्यते । सर्वं ब्रह्ममयं ब्रह्मन् ! शश्वत् पश्यति नारद ! । स्वेच्छामयं स्वेच्छया च श्रीकृष्णस्य सिसृक्षया । साविर्बभूव सहसा मूलप्रकृतिरीश्वरी । तथा ज्ञेया पञ्चविधा सृष्टिकर्म्मणि भेदतः । सर्वाः प्रकृतिसम्भूता उत्तमाधममध्यमाः । सत्त्वांशाश्चोत्तमा ज्ञेयाः सुशीलाश्च पतिव्रताः । मध्यमा राजसांशाश्च भोग्याः प्रकीर्त्तिताः । सुखसम्भोगवश्याश्च स्वकार्य्ये तत्पराः सदा । अधमास्तामसांशाश्च अज्ञातकुलसम्भवाः । दुर्मुखाः कुलटा धूर्त्ताः स्वतन्त्राः कलहप्रियाः । पृथिव्यां कुलटा याश्च स्वर्गे चाप्सरसां गणाः । प्रकृतेस्तामसांशास्ताः पुंश्चल्यः परिकीर्त्तिताः । एवं निगदितं सर्वं प्रकृतेः परिकीर्त्तनम्" ।

उत्तरपदस्य. ब्रह्म० । उपमायुक्तं यथा वज्रमस्य इत्यादि

प्रख्यात त्रि० प्र+ख्या- क्त । विख्याते सुप्रसिद्धे ।

प्रख्यातवप्तृ(क) पु० प्रख्यातो वप्ता जनयिता यस्य कप्। विख्यातपितृके प्रशस्तपुत्रे हेमच० ।

प्रख्यास् पु०प्र+चक्ष- अस 'बहुल मिह' इत्युक्तेर्न खित् तेन ख्यादेश । प्रजापतौ उज्ज्वल० ।

प्रगण्ड पु० गण्ड-वदनैकदेशे अच् प्रकृष्टो गण्डः अवयवः प्रा०स० । १कूर्परोपरिकक्षपर्यन्तभागे अमर । दुर्गप्राकारभित्तौ २कूराया निवेशनस्थाने च स्त्री गौरा० ङीष्। "प्रचारो यत्र लोकाना दूरादेवावबुध्यते । प्रगण्डी सा च विज्ञेया बहिःप्राकारचञ्चिता । अपिधिस्तत्र यत्नेन कर्त्तव्यो भूतिमिच्छता । स एवाकाशरथीति प्रोच्यते शस्त्रकोविदैः" भा०टी०धृतवाक्यम् । "प्रगण्डी कारयेत् सम्यगाकाशजननीस्तथा" भा० शा० ६९ अ० । "प्रगण्डीर्दुर्गप्राकारभित्तौ कूराणामुपवेशनस्थानानि । आकाशजननीस्तत्रैवैककच्छाया भित्तौ तत्स्थानां रक्षणभत्यां बाह्यार्थदर्शनार्थानि क्षुद्रच्छिद्राणि यद्द्वारा आग्नेयास्त्रगुलिकाः प्रक्षिप्यन्ते" नीलकण्ठः ।

प्रगतजानु(क) त्रि० प्रगते परस्परसंश्लिष्टे जानुनी यस्य वा कप्। अघष्टतजानुके प्रज्ञौ यस्य जानुनोर्मध्ये महदन्तरालं तस्मिन् अमर० । ज्ञुक्तं त्रि० ।

प्रगन्ध पु० प्रकृष्टो गन्धोऽस्य । १पर्पटे राजनि०, २प्रकृष्टगन्धे।

प्रगल्भ त्रि० प्र+गल्भ-अच् । १प्रत्युत्पन्नमतौ २प्रतिभान्विते च अमर । ३नायिकाभेदे स्त्री तल्लक्षणादि नायिकाशब्दे ४०४१ पृ० दृश्यम् ।

प्रगल्भता स्त्री प्रगल्भस्य भाव तल् । १औद्धत्ये २धृष्टत्वे च हेमच० । "निःशङ्कता प्रयोगेषु बुधैरुक्ता प्रगल्भता" उज्ज्वलमण्युक्ते प्रयोगेषु ३निःशङ्कत्वे च ४प्रतिभान्वितत्वे च ।

प्रगाढ त्रि० प्रकर्षेण गाढम् गाह-क्त । १अत्यन्तभये २कृच्छ्रे च अमर० । ३दृढे भरतः ।

प्रगातृ त्रि० प्र+गै तृच् । उत्तमगायके शब्दरत्ना० ।

प्रगाथ पु० प्र+प्रथ-वा० आधारे घञ् 'छन्दस. प्रगाथेषु' निर्देशात् नि०नरयोर्लोपे उपधाह्रस्वि । वेदे द्वे ऋचौ यत्र तिस्रः क्रियन्ते ।तत्रार्थे विस्तरस्तु सामसंहिताभाष्ये दृश्यः । टिड्ल्लात ततः समाप्तसु स्त्रे डोच्यते । "काकुभ प्रगाथ" इत्यत्र प्रगाथशब्दार्थपर्य्यालोचनेनापि ग्रथनं गम्यते प्रकर्षेण ग्रथन यत्र स प्रगाथ प्रकर्षो नाम आम्नाताद्दकपाठादाधिक्यम्, तच्च पूर्वोक्तरीत्या पादाभ्यासपुरःसरस्वगन्तरसम्पादनेनोपजायते । तत्र स्तोत्रपत्तिकक्रमौ प्रग्रहीतव्यौ किन्तर्हि प्रथमेन द्वे उत्तरे कनुभौ सम्पाद्य तासु तिसृषु रथन्तरं गातव्यम् । रौधसनामक किञ्चित् साम तथा यौधाजयनामकमपरम् तयोः साम्नोर्द्वे बृहतीच्छन्दस्कसृच आश्रय इति उत्तरायन्थे तु तस्य सामद्वयस्याश्रय एकः प्रगाथः आम्नातः तस्मिंश्च प्रगाथे पुनान. सोमेत्याद्यक् प्रथमा सा च बृहती "दुहान ऊधर्दिव्यमिति" द्वितीया सा तु विष्टारपङ्क्ति तामेतां विष्टारपङ्क्तिमपनीय तस्याः स्थाने उत्पादितबृहत्यौ द्वे ऋचौ आनेतव्ये इति पूर्वपक्षः । बृहतीविष्टारपङ्क्त्योः प्रथमविधिशेषेण द्वे बृहत्यावुत्तरे सम्पादनीये इति राद्धान्त । प्रगाथत्वेन ध्येये २मन्त्रे च यजु०१८।२४वेददी०

प्रगुण त्रि० प्रसृतो गुणो यत्र प्रकृष्टो गुणो यस्य वा प्रा०ब०। १ऋजुतायुते २दक्षे च अमर० । प्रकृष्टगुणोऽप्यत्र ।

प्रगृह्य न० प्र+ग्रह-क्यप् । व्याकरणोक्ते स्वरसन्धिराहित्ययोग्ये १पदभेदे २स्मृतौ ३वाक्ये च अमरः ।

प्रगे अव्य० प्रगीयतेऽत्र प्र+गै-के । प्रतिप्रात काले अमरः । तत्र भवः ञ्यु तुट् च । प्रगेतन प्रातर्भवे त्रि० राजनि०

प्रगेनिश त्रि०प्रगे प्रातःकाले निशेव स्वापहेतुर्यस्य । प्रातःकालशायिनि । "उत्सूर्य्यशायिनश्चापन् सर्वे चासन् प्रगेनिशाः" भा०शा० २२८अ० ।

प्रग्रथन न० प्रकर्षेण ग्रथने । प्रगाथशब्दे दृश्यम् ।

प्रग्रह पु०प्र+ग्रह कर्म्मकरणादौ पक्षे अप् । १तुलासूत्रे २हयादिसंयमनरज्जौ ३रश्म्या० च अमरः । ४नियमने ५भुजे ६सुवर्णालङ्कारे मेदि० । ७कर्णिकारवृक्षे राजनि० प्र+ग्रह-कर्त्तरि अच् । दविष्णौ "प्रग्रहो निग्रहो व्यग्र" विष्णुस० "भक्तैरुपाहृत पत्रपुष्पादिकं प्रगृह्णातीति प्रग्रहः" भा० । [२हयादिसंयमनदाम्नि च अमरः ।

प्रग्राह पु० प्र+ग्रह-कर्मकरणादौ वा घञ् । १तुलासूत्रे

प्रग्रीव पु०न०प्रकृष्टा ग्रीवा यस्य । १मत्तवारणे प्रासादाग्रदारुपङ्क्तौ २वातायने सुभतिः ३हर्म्यग्रीवके गोवर्द्धन० । ४प्रकृष्टग्रीवान्विते त्रि० ।

प्रघटाविद् पु०प्रकृष्टा घटा आडम्बरः तां वेत्ति विद्-क्विप् । शास्त्रगण्डे शास्त्राभिज्ञे त्रिका० ।

प्रघट्टक पु० प्र+घट्ट-ण्वुल् । एकार्थप्रतिपादनार्थग्रन्थावयवभेदे शा०सू०भाष्ये दृश्यम् ।

प्रघ(घा)ण(न) पु० प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते

हन-कर्मणि घञ् अप् वा अत्वम्। १परिघे अमरः। २प्रकोष्ठे सि॰कौ॰। अबन्तः ३ताम्रकुम्भे ४लोहमुद्गरे च मेदि॰। शकटमतेऽयमप्यत्वमध्यः।

**प्रघस** पु॰ प्र+अद्-अप् घसादेशः। १प्रकृष्टभक्षणे २राक्षसभेदे पु॰ भा॰ व॰ २८४ अ॰ ३असुरे ४दैत्ये च त्रिका॰ कुमारानुचरमातृभेदे स्त्री भा॰श॰ ४७अ॰।

**प्रघात** न॰ प्रहन्यतेऽत्र हन-आधारे घञ्। १युद्धे हेमच॰ भावे घञ्। २प्रहनने पु॰।

**प्रघास** पु॰ प्र+घस-कर्मणि घञ्। प्रकर्षेण भक्षणीये हविरादौ वरुणप्रघासशब्दसमीक्ष्ययागभेदे। प्रघासोऽस्त्यस्य भूम्ना इनि। प्रघासिन् मरुत्सु "प्रघासिनोहवामहे मरुतश्च" यजु॰ ३।४४ वेददीपे दृश्यम्।

**प्र(प्रा)घुण** पु॰ प्र(+आ+प्र) घुण-क। अतिथौ हेमच॰।

**प्रघूर्ण** पु॰ प्र+घूर्ण-अच्। अतिथौ हेमच॰।

**प्रघोष** पु॰ प्र+घुष-भावे घञ्। १प्रकृष्टघोषणे अत्यार्थे कन्। २अव्यक्तशब्दे ध्वनौ जटा॰।

**प्रचक्र** न॰ प्रगतचक्रं प्रा॰ स॰। स्वस्थानात् परचक्रं प्रति चलिते सैन्ये अमरः।

**प्रचक्षस्** पु॰प्र+चक्ष-असि न ख्यादेशः। वृहस्पतौ उणादि॰

**प्रचण्ड** त्रि॰ प्रकर्षेण चण्ड प्रा॰स॰। १दुर्द्धर्षे २दुर्वहे ३दुरन्ते ४प्रतापान्विते च ५श्वेतकरवीरे पु॰मेदि॰ ६दुर्गाया नायिकाभेदे स्त्री "उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका" कालिकापु॰। ७श्वेतदूर्वाया स्त्री राजनि॰।

**प्रचण्डमूर्त्ति** पु॰ प्रचण्डा मूर्त्तिरस्य। १वरुणवृक्षे २भयानकदेहे त्रि॰ शब्दच॰।

**प्रच(चा)य** पु॰ प्र+चि- "हस्तादाने चेरस्तेये" पा॰हस्तादाने अस्तेये घञ् अन्यत्र "एरच्" पा॰ अच्। तत्र घञन्तः यष्ट्यादिना हस्ताप्राप्यानां पुष्पाणां १चयने २समूहे शब्दच॰ ३उपचये ४शिथिलसंयोगभेदे परिमाणशब्दे ४२५॰पृ॰ दृश्यम् "संख्यातः परिमाणाच्च प्रचयादपि जायते। प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते। परिमाणन्तूलकादौ नाशस्तास्याश्रयनाशतः" भाषा॰ हस्तादाने तु घञ्। हस्तेन पुष्पप्रचाय इत्येव चौर्ये तु अच्। प्रचय इत्येव चौर्येण हस्तेन पुष्पादेश्चयने। [प्ररचि॰।

**प्रचर** पु॰ प्र+चर+गोचरप्रचरौ नि॰ आधारेऽप्। मार्गे

**प्रचल** त्रि॰ प्र+चल-अच्। प्रकृष्टचलनयुक्ते चञ्चले।

**प्रचलक** पु॰ प्र+चल+वा वुन्। कीटभेदे सुश्रुत कीटशब्दे २०५८पृ॰ दृश्यम्।

**प्रचलाक** पु॰ प्र+चल-वा॰ आकन्। १शराघाते २मयूरशिखण्डे ३भुजङ्गमे पुंस्त्री॰ मेदि॰ स्त्रियां ङीप्।

**प्रचलाकिन्** पु॰ प्रचलाक+मत्वर्थे इनि। मयूरे त्रिका॰।

**प्रचलाय** नामधातुः प्रचल+क्यङ्॰ अभूततद्भावे क्यङ् आ॰ अक॰सेट्। प्रचलायते अप्रचलायिष्ट प्रचलायिष्ट इत्यन्ये

**प्रचलायित** त्रि॰ प्रचलाय+नामधातुः कर्त्तरि क्त। निद्रादिना घूर्णिते अमरः।

**प्रचायिका** स्त्री प्र+चि+भावे ण्वुच्। १परिपाट्या पुष्पादेश्चयने। प्र+चि-ण्वुल् टाप् कापि अत इत्वम्। प्रचयनकर्त्र्यां २स्त्रियां स्त्री।

**प्रचार** पु॰ प्र+चर-भावे घञ्। १प्रसरणे २गतौ ३प्रकाशे च। ततः तारका॰ इतच्। प्रचारित सञ्जातप्रचारे त्रि॰। प्रकाशिते च।

**प्रचाल** पु॰ प्रकृष्टचाल। यूपस्य कटकभेदे। भा॰द्रो॰६१ अ॰।

**प्रचिकीर्षु** त्रि॰प्र+कृ-सन्+उ। प्रतीकारेच्छौ भाग॰४।१८।१६

**प्रचित** त्रि॰ प्र+कर्मणि क्त। १कृतप्रचयने पुष्पादौ स्वार्थे क तत्रार्थे। २प्रचयस्वरयुक्ते त्रि॰। संज्ञायां कन्। दण्डकभेदे "प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको मदयाड्गुरे" वृ॰र॰। [छन्द ।

**प्रचीवल** न॰ पृषो॰ वलं यत्र पृषो॰। गोरचे (वेणार मूल)

**प्रचीर** पु॰ पद्मयोनेपस्य १सुनन्दागर्भजाते २पुत्रे नृपभेदे मार्कपु॰ ११८ अ॰। [१चञ्चले अमरः।

**प्रचुर** त्रि॰ प्र+चुर-क प्रगतस्तु राया वा प्रा॰त॰। १चौरे

**प्रचुरपुरुष** पु॰ प्र+चुर-क नित्यक॰। चौरे त्रिका॰।

**प्रचेतसी** स्त्री प्रकर्षेण चेतयति मूर्च्छितं चित-णिच्-असच् गौरा॰ङीष्। कट्फले राजनि॰ तन्मूर्च्छास्य हि मूर्च्छानाशकता वैद्यकप्रसिद्धेति तस्यास्तथात्वम्।

**प्रचेतस्** पु॰ प्र+चित-असुन्। १वरुणे अमरः। २मुनिभेदे ३प्रकृष्टहृदये त्रि॰मेदि॰। ४अनुवंश्ये नृपभेदे हरिवं॰ ३२ अ॰। ५प्राचीनबर्हिष सामुद्रीभार्यायां जातेषु दशसु राजभेदेषु म॰भा॰। हरिवं॰२अ॰। ६प्रकृष्टज्ञानयुक्ते ऋ॰ २।२३।२ भा॰।

**प्रचेतृ** त्रि॰प्र+चि-तृच्। १प्रचयनकर्त्तरि २सारथौ पु॰हेमच॰

**प्रचेतुन** त्रि॰ प्र+चित-उनन्। प्रकृष्टज्ञानयुक्ते ऋ॰११२११६

**प्रचेल** न॰ प्र+चिल-चेल-वा अच्। पीतकाष्ठे शब्दच॰।

**प्रचेलक** पुस्त्री॰ प्र+चेल गतौ ण्वुल्। १घोटके शब्दमा॰। स्त्रियां जातित्वात् ङीष्। २प्रकृष्टगतियुक्ते त्रि॰ स्त्रियां टाप्।

**प्रचोदक** त्रि० प्र+चुद–प्रेरणे ण्वुल्। १प्रेरके स्त्रियां टापि अत इत्त्वम्। प्रचोदिका। सा च दुःसहस्य नियोजिताख्यायां कन्याया जाते २कन्याभेदे मार्कपु० ५१अ०।

**प्रचोदनी** स्त्री प्रचोद्यते अपसार्य्यते रोगोऽनया चुद–णिच् ल्युट् ङीप्। १कण्टकारिकायाम् अमरः। भावे ल्युट्। २प्रेरणे न०।

**प्रच्छ** जिज्ञासायां तु०पर०द्विक०अनिट्। पृच्छति अप्राक्षीत्। अप्रच्छ। द्विकर्मकत्वेन दुहादि०गौणे कर्मणि लकारादि। पृच्छ्यते शिष्येण गुरुः धर्मं, जिज्ञासाविषयकज्ञानानुकूलव्यापारः कथं धर्म आचरितव्य इमित्यभिलापादिः पृच्छेरर्थः, ज्ञानविषयत्वेन धर्मस्य, तज्ज्ञानाश्रयत्वाच्च गुरोः कर्मत्वम्।

**प्रच्छद्** न० प्रच्छादयति प्र+छादि–क्विप् ह्रस्वः। अन्ने "अन्नं वा प्रच्छच्छन्दोऽन्नं प्रच्छद् इति श्रुतेः" यजु० ५।४ वेददीपे दृश्यम्। [आच्छादने वस्त्रादौ।

**प्रच्छद** पु०प्रच्छाद्यतेऽनेन प्र+छद–णिच्–करणे घ ह्रस्वः।

**प्रच्छदपट** पु०प्रच्छाद्यतेऽनेन प्र+छद-णिच्–घ ह्रस्वः कर्म०। (पाछुडि) प्रावरणवस्त्रे अमरः।

**प्रच्छना** स्त्री प्रच्छ+बा० ल्यु। आमन्त्रणे जटा०।

**प्रच्छन्न** न० प्र+छद-क्त। १गुप्तद्वारे २अन्तर्द्वारे। ३आच्छन्ने त्रि० अमरः।

**प्रच्छर्दन** न० प्र+छर्द-भावे ल्युट्। १वमने २कोष्ठस्य वायोर्नासिकापुटाभ्यां निःसारणप्रयत्नभेदे रेचने "प्रच्छर्दनविधारणाभ्यां वा प्राणस्य" पात० सूत्रे भाष्यं दृश्यम्। कुम्भकशब्दे २११४ पृ० दृश्यम्।

**प्रच्छर्दिका** स्त्री प्र+छर्द–रोगाख्यायां ण्वुल्" पा० ण्वुल् तद्रन्त स्त्री। १वमनरोगे अमरः। कर्त्तरि ण्वुल्। २प्रच्छर्दके वमनकारके त्रि०स्त्रियां टाप् कापि अत इत्त्वम्।

**प्रच्छादन** न० प्रच्छाद्यतेऽनेन छद–णिच्-ल्युट्। १उत्तरीयवस्त्रे हेमच० भावे ल्युट्। २आच्छादने "नवोदके नमाग्ने च प्रच्छादने तथा" स्मृतिः।

**प्रच्छान** न०प्र+छो–भावे ल्युट्। १प्रकृष्टच्छेदने २सुश्रुतोक्ते रक्तविस्रावणभेदे "तत्र द्विविधं रक्तविस्रावणं सिराव्यधनञ्च" सुश्रुतः।

**प्रच्छिल** त्रि० प्रच्छ बा० इलच्। निर्जले जलभूम्ने हेमच०

**प्रच्यव** पु० प्र+च्यु–अप्। १प्रच्युतिस्रुते। भावे अप्। २प्रचरणे स्वभावचरणे "प्रकृतेः स्वभावप्रच्यव" इति सा० प्र०भाष्यम्। भावे ल्युट्। प्रच्यवन अरणे न०।

**प्रज** पु० प्रविश्य जायायां जायते जन–ड। पत्यौ भरतः

**प्रजङ्क** पु० प्रकृष्टा जङ्घाऽस्य। राक्षसभेदे रामा०लं०।८स्रो०।

**प्रजग्ध** त्रि० प्र+अद–भक्षणे क्त जग्धादेशः। प्रभक्षिते।

**प्रजग्मि** त्रि० प्र+गम–गाने कि द्वित्वम् उपधालोपः। प्रगा- शीले शत०ब्रा० ५।१।१।१५

**प्रजन** पु० प्र+जन–घञ् न वृद्धिः। १प्रजनने। प्रजायतेऽनेन करणे घञ्। स्त्रीगव्यादिषु २पुङ्ग्यादीनामभिगमने गर्भग्रहणार्थमैथुने २उपसरे (पालदेओया) अमरः।

**प्रजनन** न० प्रजायतेऽत्र प्र+जन–आधारे ल्युट्। १योनौ भावे ल्युट्। २जन्मनि मेदि०। करणे ल्युट्। ३उपसरे विश्वः। जनयति जनि–ल्यु। ४जनके त्रि० यजु०१९।४८

**प्रजनिका** स्त्री प्रजनयति प्र+जनि–ण्वुल्। मातरि जटा०।

**प्रजनिष्णु** त्रि०प्र+जन–इष्णुच्। जनने शत०ब्रा०६।४।१७

**प्रजनुक** त्रि० प्र+जन बा० उक। प्रजननशीले हेमच०।

**प्रजनू** स्त्री प्र+जन–बा० ऊ। प्रजनने तैत्ति०३।११।४२

**प्रजय** पु०प्र+जि–अच्। प्रकृष्टजये याथादि०अन्तोदात्ततास्य।

**प्रजल्प** पु०प्र+जल्प–भावे घञ् "असूयेर्ष्यामदयुजा योऽवधीरणमुद्रया। प्रियस्य कौशलोद्गारः प्रजल्पः स तु कथ्यते" उज्ज्वलमणिलक्षिते १वाक्यभेदे २प्रकृष्टकथाभेदे च।

**प्रजविन्** त्रि० प्र+जु–इनि। प्रकृष्टवेगयुक्ते अमरः।

**प्रजहित** पु० १पुराणे २गार्हपत्ये वह्नौ ताण्ड्य० ब्रा० १।४।१० भाष्यधृतवाक्यं दृश्यम्।

**प्रजा** स्त्री प्र+जन–ड।१सन्ततौ २जने च अमर "नञ्दुःसुभ्यः परस्य बहु०असिच्समा०। अप्रजाः दुःप्रजाः।३जनने च

**प्रजागर** पु० प्र+जागृ–अप्। प्रकर्षेण जागरणे १निद्राक्षये हला०। कर्त्तरि अच्। २विष्णौ "पुष्पहासः प्रजागरः" विष्णुस० "नित्यं प्रबुद्धत्वात् प्रजागर्त्तीति प्रजागर" भा० प्रजागरयति णिच्–अच्। ३अप्सरोभेदे स्त्री भा०व०४३अ०।

**प्रजाता** स्त्री प्रजातं प्रजननं गर्भमोचनमस्त्यस्याः अर्श आद्यच्। १प्रसूतायां स्त्रियाम् हला०। प्र+जन-क्त। प्रकर्षेण २जाते त्रि०। ३अग्निभेदे पु० "बडवायां कृतरेतस्कन्दनः प्रजात इत्युच्यते"कात्या०श्रौ०२०।२।२०भाष्यम्

**प्रजातन्तु** पु० प्रजाया प्रजननस्य तन्तुरिव। सन्ताने तैत्तिरीय०।

**प्रजाति** स्त्री प्र+जन-क्तिन्। १प्रजायां २प्रजनने च ३पौत्रोत्पत्तौ "प्रजा च स्वाध्यायवचने च प्रजनश्च स्वाध्यायवचने च प्रजातिश्च स्वाध्यायवचने च" तैत्तिरीय० "तत्र प्रजा स्वयमुत्पाद्या प्रजनश्च प्रजननमृतौ भार्या

गमनं प्रजाति पौत्रोत्पत्ति” भा० । ४पुत्रादिदृष्टौ शत० ब्रा०७।२।१।४६। ५प्राशुन्दपपुत्रभेदे पु० मार्क०पु०११८अ०

**प्रजादा** स्त्री प्रजा तद्धेतुगर्भं ददाति सेवनात् दा-क। गर्भधात्रीवृक्षे राजनि० ।

**प्रजादान** न० ६त० । १प्रजाया दाने २स्वादाने च । प्रजात जन्मत० दान शुद्धिरस्य । २रजते न० शब्दच० ।

**प्रजानाथ** पु० ६त०। लोकनाथे नृपे प्रजापालादयोऽप्यत्र ।

**प्रजाप** पु० प्रजा पाति पा-क। नृपे हेमच० ।

**प्रजापति** पु० ६त०। १चतुर्मुखे ब्रह्मणि अमर० । २दक्षादौ ३नृपे च मेदि० । ४जामातरि ५सूर्य्ये ६वह्नौ ७त्वष्टरि हेमच०। प्रजापतयश्च बहुविधा यथोक्तम् “आत्मार्थे चासृजत् पुत्रान् लोककर्तॄन् पितामहः। विश्वे प्रजानां पतयो येभ्यो लोका विनिःसृताः। विश्वेश प्रथमं नाम महातपसमात्मजम्। सर्वमन्त्रमयं पुण्यं नाम्ना धर्मं स सृष्टवान्। दक्षं मरीचिमत्रिञ्च पुलस्त्यं पुलहं क्रतुम्। वशिष्ठं गौतमञ्चैव भृगुमङ्गिरसं मनुम्। अथर्वभूता इत्येते ख्यातास्त्वेव महर्षयः। त्रयोदश सुता यथा यशास्तु समर्तिभिता” हरिवं० २०४अ० “ससर्ज सृष्टिं तद्रूपां स्रष्टुमिच्छन् प्रजापतीन्। मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम्। वशिष्ठञ्च महातेजाः सोऽसृजत् सप्त मानसान्। सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः” हरिवं० १अ० । एकविंशति प्रजापतयो यथा “ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तथा यमः। मरीचिरङ्गिरात्रिश्च पुलस्त्यः पुलहः क्रतुः। वशिष्ठः परमेष्ठी च विवस्वान् सोम एव च। कर्दमश्चापि यः प्रोक्तः क्रोधोऽर्वाक् क्रीत एव च। एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः” महाभारत मोक्षधर्मे । अन्येऽपि प्रजापतयः पुराणादौ प्रसिद्धा यथा “मनुः प्रजापति” श्रुति । ८विष्णौ पु० “पद्मनाभः प्रजापति” विष्णुस० । ९यज्ञे निघण्टुः । १०स्वनामख्याते कीटभेदे ।

**प्रजापतिहृदय** न० सामभेदे “प्रजापतेर्हृदयं गायति” शत०ब्रा० ६।१।२।४० “प्रजासु च प्रजापतौ च गायति प्रजापतेर्हृदयमिति किञ्चित् साम तदप्यत्र गायेत्। प्रजापतेर्हृदय गायत्रादि सामवत् कस्यांचिदृचि न गीयते अपि तु केवल प्रजाशब्दे प्रजापतिशब्दे च गीयते” भा० ।

**प्रजावत्** पुंस्त्री० प्रजाऽस्त्यस्य मतुप् मस्य वः । १सन्तानयुक्ते स्त्रियां ङीप् । ङीमन्तः । २भ्रातृजायायाम् स्त्री अमरः ।

२प्रकृतियुक्ते नृपे पु० । [यके यजु० १६।४८

**प्रजासनि** त्रि० प्रजा सनोति ददाति सन-इन् । सन्तानदा-

**प्रजाहित** त्रि० प्रजायै हितम् । सन्तानजनयोर्हितकारके जले न० शब्दमाला ।

**प्रजिन** पु० प्र+ज्या-बा० नक् सम्प्र० । वायौ शब्दमा०।

**प्रजेश** पु० ६त० । नृपे प्रजेश्वरादयोऽप्यत्र त्रिका०।

**प्रज्ञ** त्रि० प्रजानाति प्र+ज्ञा कर्त्तरि क । १प्रज्ञायुते प्रज्ञ एव प्रज्ञादि० स्वार्थे अण् । प्राज्ञ तत्रार्थे त्रि० भावे अङ् । २बुद्धौ स्त्री । प्रज्ञा अस्त्यस्य प्रज्ञा० ण । प्राज्ञ प्रज्ञायुते त्रि० ।

**प्रज्ञप्ति** स्त्री प्र+ज्ञपि-भावे क्तिन् । १बुद्धौ हेमच० “कृतस्मरा तत्र गता” पात०सू० “तत्र सप्तधा प्रान्तभूमिप्रज्ञा” पात०सू०। २सङ्केते ३देवीभेदे च त्रिका०।

**प्रज्ञाकाय** पु० प्रज्ञा काय इव यस्य । मञ्जुघोषे त्रिका०।

**प्रज्ञाचक्षुस्** पु० प्रज्ञैव चक्षुरस्य । धृतराष्ट्रे शब्दर०।

**प्रज्ञादि** पु० स्वार्थेऽण्प्रत्ययनिमित्ते १शब्दगणे स च गणः “प्रज्ञ वणिज उशिज् उष्णिज् प्रत्यक्ष विद्वस् विदन् षोडन् विद्या मनस् (श्रोत्र शरीरे) (जुह्वत् कृष्णमृगे) चिकीर्षत् चोर शत्रु योध चक्षुस् वसु एनस् मरुत् क्रुञ्च सत्वत् दशार्ह वयस् व्याकृत असुर रक्षस् पिशाच अशनि कार्षापण देवता बन्धु ।। अस्त्यर्थे णप्रत्ययनिमित्ते २शब्दगणे च । स च गणः प्रज्ञा श्रद्धा (अर्चाः आर्च्चे) (वृत्तेश्च वार्त्ते)” वार्त्ति० ।

**प्रज्ञान** न० प्र+ज्ञा-भावे ल्युट् । १बुद्धौ । करणे ल्युट् । २चिह्ने अमरः । प्रज्ञानमस्त्यस्य अच् । ३पण्डिते हिरूपकोषः ।

**प्रज्ञाल** त्रि० प्रज्ञाऽस्त्यस्य सिध्मा० लच् । बुद्धियुते त्रि०।

**प्रज्ञिन्** त्रि०प्रज्ञाऽस्त्यस्य इनि । पण्डिते हिरूपको०पक्षे मतुप् मस्य वः । प्रज्ञावत् तत्रार्थे उभयतः स्त्रियां ङीप् ।

**प्रज्ञिल** त्रि० प्रज्ञा+अस्त्यर्थे पिच्छा० इलच् । बुद्धियुते

**प्रज्ञु** त्रि० प्रगते विरले जानुनी यस्य जानुनोर्ज्ञुः । विरलजानुके जने अमरः ।

**प्रडीन** न०प्र+डी--क्त । खगगतिभेदे खगगतिशब्दे दृश्यम् ।

**प्रण** त्रि० पुरातन प्र+“न च पुराणात् प्राग्” ५।४।२० वार्त्ति० न । पुराणे प्राचीने णत्वात् पक्षे त्न प्रत्न+त्ना प्रीण तत्रार्थे त्रि० ।

**प्रणप्तृ** पु०प्रकृष्ट नप्ता पूर्वपदात् णत्वम् । नप्तुः पुत्रे “आप्रणपात् सर्व एव सुवर्णः” छान्दो०। [रविनयदृत क० ।

भिनिवेशे ३योगशास्त्रोक्ते चित्तनिवेशरूपे समाधिभेदे ४भक्तिविशेषे च "ईश्वरप्रणिधानाद्वा" पात० "प्रणिधानात् भक्तिविशेषात्" भाष्यम्। ५स्पर्शे ६कर्मणां फलत्यागे च "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोग" पात० "ईश्वरप्रणिधानं सर्वक्रियाणां तस्मिन् परमगुरावर्पणं फलसन्न्यासो वा" भा० ७मनसो विषयान्तरप्रचाराभावरूपे ऐकाग्र्ये च गौत० ३।२।२६ सूत्रवृत्तिः।

**प्रणिधि** पु० प्रणिधीयते प्र+नि+धा-कि। १गुप्तचरे अमरः। २अनुचरे च। भावे कि। ३याचने ४अवधाने च मेदि०। ५भाद्रपदस्य वृहद्रथस्य पुत्रभेदे भा०व० २१९अ०।

**प्रणिपात** पु० प्र+नि+पत-घञ्। प्रणामे हेमच० "तद्विद्धि प्रणिपातेनेति" गीता। [हिते च मेदि०।

**प्रणिहित** त्रि० प्र+नि+धा—क्त। १प्राप्ते २स्थापिते ३समा-

**प्रणी** त्रि० प्रणयति प्र+नी क्विप्। १कारके २ईश्वरे च "सायन्तनीं तिथिप्रणय" भट्टि।

**प्रणीत** त्रि०प्र+नी-कर्मणि क्त। पाकेन रूपरसान्यथाभावापादिते १पदार्थे २क्षिप्ते ३निवेशिते ४विहिते च हेमच०। ५यज्ञे संस्कृताग्नौ पु०अमर। ६यज्ञपात्रभेदे स्त्री मेदि० अग्निपदसान्निध्ये ७मन्त्रसंस्कृताग्नौ "यथाध्वरे वह्निरभिप्रणीत" भट्टि। ८मन्त्रसंस्कृतासु अप्सु स्त्री व०व०। तदाधारपात्री तु उपचारात् प्रणीताशब्दवाच्या। "प्रणीतानाम आपो मन्त्रसंस्कृता आहवनीयस्योत्तरतो निहिता" आश्व०श्रौ०१।११५ नारा०। "तदाप प्राण्यंसंस्कादाप' प्रणीतास्तत्प्रणीतानां प्रणीतात्वम्" शत० ब्रा० १।१।१।१।८।

**प्रणीय** त्रि० प्र+नी-कर्मणि वेदे क्यप्। "यस्य मन्त्रेण संस्कार कृतस्तस्मिन्। लोके तु प्रणेय इत्येव।

**प्रणुत** त्रि० प्र+णु—स्तुतौ कर्मणि क्त। स्तुते अमर०।

**प्रणेय** त्रि० प्र+नी यत्। १वश्ये अधीने २कृतलौकिकसंस्कारे च हेमच० ३प्रापणीये।

**प्रतक्वन्** पु० प्र+तक—गतौ वनिप्। प्रकर्षेण गतियुक्ते "नमोऽस्तु प्रतक्वा"-ता०ब्रा०१।४।२२ "प्रकर्षेण प्रतक्वा स्वामसवै पांशुभि सर्वान् धिष्ण्यान् प्रति गन्ता तद्गतिर्गतिकर्म्मा" भा०।

**प्रतति** स्त्री प्र+तन--भावे क्तिन्। १विस्तारे। कर्त्तरि क्तिच् वा ङीप्। २वल्ल्यां च अमर।

**प्रतद्वसु** पु० प्रतत् प्राप्तं वसु धनं येन। १प्राप्तधनके २विस्तीर्णधने च ऋ० ८।१३।२७।

**प्रतन** त्रि० प्र+"तन च पुराणात् प्रात्" वार्त्ति० चकारात् त्नप् तुट् च। पुरातने अमर०।

**प्रतनु** त्रि० प्रकृष्टस्तनुः प्रा०स०। १अतिस्वल्पे २अतिसूक्ष्मे च

**प्रतमा(रा)म्** अव्य०प्र+आम् तरप् तमप् वा। अत्यन्तप्रकर्षे

**प्रतर** पु० प्र+तॄ-भावे अप्। प्रकर्षेण १तरणे आधारे अप्। २प्रतरणाधारे गोप्रतरशब्दे दृश्यम्। [प्रतर्के तर्कार्थे।

**प्रतर्कण** न० प्र+तर्क-भावे ल्युट्। वितर्के शब्दर०। अच्।

**प्रतर्द्दन** न० प्र+तर्द-भावे ल्युट्। १ताडने। कर्त्तरि ल्यु। २ताडके त्रि० ३दिवोदासपुत्रभेदे पु० हरिव० २९अ०। ४इन्द्रोपदेश्यभेदे प्रतर्दनं प्रति इन्द्रेण ब्रह्मविद्योपदिष्टेति वेदान्ते प्रसिद्धम्।

**प्रतल** न० न० प्रकृष्टं तलम्। १पातालभेदे मेदि०। प्रकृष्टं तलमस्य। २विस्तृताङ्गुलिके पाणौ चपेटे पु० अमर०।

**प्रतान** पु० प्र+तन—घञ्। १विस्तारे २ऋषिभेदे च तस्य गोत्रापत्यम् इञ्। प्रातानि तद्गोत्रापत्ये बहुत्वे तु तस्य उपका० लुक्। प्रताना इत्येव। ३तन्तुयुक्ते अलाबूत्रपुषादौ। "गुच्छगुल्मन्तु विविधं तथैव तृणजातयः। बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव वा" मनु०। "प्रतानास्तन्तुयुक्तास्त्रपुषालाब्वप्रभृतय" कुल्लू०।

**प्रतानिन्** त्रि० प्र+तन—णिनि। १विस्तीर्णे २विस्तृतलतायाम् स्त्री ङीप् अमर०।

**प्रताप** पु० प्र+तप—घञ्। १कोषदण्डजाते नृपादेः तेजसि अमर०। २तापे ३अर्कवृक्षे च राजनि०।

**प्रतापन** पु० प्रतापयति तप—णिच्—ल्यु। १नरकविशेषे २तापके त्रि० शब्दरत्ना०। भावे ल्युट्। ३पीडने शब्दर०। कर्त्तरि ल्यु। ४विष्णौ पु०। "प्रकाशात्मा प्रतापन०" विष्णु स० "सूर्यप्रभृतिभिर्विश्वं प्रतापयतीति प्रतापन०" भा०

**प्रतापवत्** त्रि० प्रताप+अस्त्यर्थे मतुप् मस्य व। १प्रतापयुक्ते २स्कन्दानुचरगणभेदे पु० भा० श० ४६ अ०।

**प्रतापस** पु० तपसि साधु अण् प्रकृष्टस्तापसः प्रा०स०। १प्रकृष्टतापसे २शुक्लार्कवृक्षे च अमरः।

**प्रताम्** अव्य० प्र+तम बा० णमुल्—स्वरादि। ग्लानौ मनोरमा।

**प्रतारक** त्रि० प्र+तॄ—णिच्—ण्वुल्। १वञ्चके २धूर्त्ते च।

**प्रतारण** न० प्र+तॄ—णिच्—भावे ल्युट्। १वञ्चने अन्यपदार्थस्य अन्यथारूपेण ज्ञापने। युच्। प्रतारणाऽपि तत्रार्थे स्त्री। "प्रतारणासमर्थस्य विद्यया किं प्रयोजनम्" उद्भटः।

**प्रतारित** त्रि० प्र+तॄ—णिच्—क्त। १वञ्चिते त्रिका०।

**प्रति** अव्य° प्रथ–डति । १व्याप्तौ २लक्षणे ३कश्चित्प्रकारमापन्नस्य कथने ४भागे ५प्रतिदाने ६प्रतिनिधीकरणे मेदि° ७स्तोके ८वीप्से ९निश्चये १०व्यावृत्तौ ११आभिमुख्ये १२स्वभावे च शब्दर° । अस्य निपातत्वेऽपि क्रियायोगे उपसर्गत्वम् गतित्वञ्च । अस्यार्थभेदोदाहरणादि गणरत्नमहोदधिटी° उक्तं यथा "प्रति सादृश्यादानहिंसाक्षेत्रप्रतिनिधिव्याध्याभिमुख्यव्याप्तिवारणेषु । प्रतिदेवता । प्रतिगृह्णाति । प्रतिहन्ति प्रतिस्थानम् । अभिमन्युरर्जुनतः प्रति । प्रतिश्याय । प्रतिसूर्य्यं गतः । प्रतिकीर्णम् पांशुभि । प्रतिषिद्ध." । तत्र लक्षणेत्थम्भूताख्यानभागवीप्सायामस्य कर्मप्रवचनीयसंज्ञा तद्योगे द्वितीया परिगवृद्धे उदा° दृश्यम् । प्रतिनिधिप्रतिदानयोः कर्मप्रवचनीयसंज्ञा तद्योगे पञ्चमी । प्रद्युम्नः कृष्णात्प्रति प्रतिनिधिरित्यर्थः । तिलेभ्यः प्रतियच्छति माषान्, माषान् गृहीत्वा प्रतिरूपतया तिलान् ददातीत्यर्थः । मात्रार्थेऽस्याव्ययीभावे परनिपातः । शाकप्रति शाकस्य लेश इत्यर्थः । कर्मप्रवनीयत्वे नोपसर्गसंज्ञा तेन इत्वं इत्वं प्रतिसिञ्चतीत्यादौ न षत्वं तथा गतिसंज्ञापि न, तेन गतिर्गतावितिनिघातो न । "प्रतेरंश्वादयस्तत्पुरुषे" पा° प्रते परस्यांश्वादेः अन्तोदात्तता अंश्वादिगणे २७पृ° दृश्यम् ।

**प्रतिक** त्रि° कार्षापणेन क्रीतः टिठन् (इकार उच्चारणार्थं) प्रतिरादेशश्च । कार्षापणेन क्रीते स्त्रियां टित्त्वात् ङीप् । ततः पुरोहिता° भावे यक् । प्रातिक्य तद्भावे न°

**प्रतिकण्ठ** अव्य° वीप्सार्थे समीप्ये वा अव्ययीभाव । १कण्ठे कण्ठे इत्याद्यर्थे २कण्ठसामीप्ये च । प्रतिकण्ठ गृह्णाति ठक् । प्रातिकण्ठिक कण्ठसमीपग्राहिणि ।

**प्रतिकर** पु° प्रति+कॄ-विक्षेपे भावे अप् । १विस्तीर्णतायां २विक्षेपे च । [प्रतीकारकर्त्तरि ।

**प्रतिकर्त्तृ** त्रि° प्रति+कृ-तृच् । कृतस्यापकारस्य प्रत्यपकारके

**प्रतिकर्म्मन्** न° प्रति+कृ मनिन् । १विद्यमानस्य गुणान्तराधाने २कृत्रिमभूषायां प्रसाधने अमरः ।

**प्रतिकर्ष** पु° प्रति+कृष भावे घञ् । १समाकर्षणे अन्यत्रार्थपूर्व्वोपात्तस्य पदादेर्ग्रहणे कात्या° १५।८।१० कर्क° ।

**प्रतिक(ष्क)श** प्रति+कश-गतिशासनयो अच् सुट् नि° । षड्भव्य° । १सहाये २पुरोगे च हि°को° । ३वार्त्ताहरे मेदि° । प्रतिगतः कशाम् प्रा°स° । प्रतेः न कश्चित्प्रत्युपसर्गत्वम् किन्तु गमेरेवोपसर्गत्वमतो न सुट् । ४कशाघातप्राप्तेऽश्वे हि°को° । [२तद्धेतौ च ।

**प्रतिकष्ट** न° प्रतिरूप कष्टं प्रा°त° । १कर्मानुरूपकष्टे

**प्रतिकाम** अव्य° कामं काम प्रति अव्ययी° । प्रत्येककामे

**प्रतिकाय** पु° प्रति+चि-घञ् कादेश । १प्रतिरूपके २शरव्ये लक्ष्ये च जटा° ।

**प्रति(ती)कार** पु° प्रति+कृ घञ् वा दीर्घः । १वैरनिर्यातने कृतस्यापकारस्य तुल्यरूपापकारकरणेन २शोधने ३रोगादेश्चिकित्सायाञ्च शब्दरत्ना° ।

**प्रति(ती)काश** पु° प्रतिरूपः काशः प्र+काश घञ् वा प्रा°स° दीर्घः । तुल्यत्वे अस्य निभा° नित्यस° । अमरटीकायां रमानाथेनायं दन्त्यान्ततया पठित ।

**प्रतिकितव** पु° प्रतिकूलः कितवः प्रा°त° । द्यूतकारस्य प्रतिकूले द्यूतकारे येन सह द्यूतप्रवृत्तिस्तस्मिन् ।

**प्रतिकूप** पु° प्रतिरूपः कूपः प्रा°त° । परिखायां हारा° ।

**प्रतिकूल** त्रि° प्रतिरूप कूल पक्षोऽस्य प्रा°ब° । १अननुकूले विरुद्धपक्षावलम्बिनि प्रतीपे अमर प्रा°त° । २विपरीताचरणे न° ।

**प्रतिकृति** स्त्री प्र+कृ-कर्मादौ क्तिन् । १प्रतिमायां २सादृश्ये ३प्रतिनिधौ अमरः । ४प्रतिकाशे मेदि° ।

**प्रतिकृष्ट** त्रि° प्रति+कृष-क्त । १गर्ह्ये २द्विरावृत्त्यां ३कृष्टक्षेत्रादौ च मेदि° । [प्रति कोपे च

**प्रतिकोप** पु° प्रतिरूपः कोपः । १रोगस्यानुरूपे कोपे २विपक्ष

**प्रतिक्रिया** स्त्री प्रति+कृ-भावे श । प्रति(ती)कारे

**प्रतिक्षण** अव्य° क्षणं क्षणं व्याप्य व्याप्तौ अव्ययी° । आभीक्ष्ण्ये

**प्रतिक्षय** पु° प्रति+क्षि-ऐश्वर्य्ये अच् । रक्षके शब्दर°

**प्रतिक्षिप्त** त्रि° प्रति+क्षिप कर्मणि क्त । १प्रेषिते २वारिते मेदि° । ३बाधिते ४तिरस्कृते च अमर । "आहूय प्रेषितो यस्तु प्रतिक्षिप्त स उच्यते" इत्युक्ते ५आहूयप्रेषिते कृष्णदासः । [२तिरस्कारे च ।

**प्रतिक्षेप** पु° प्रति+क्षिप-भावे घञ् । १निरासे मेदि° ।

**प्रतिखुर** पु° सुश्रुते एकीयमतोक्ते मूढगर्भभेदे "निःसृतहस्तपादशिरःकायसङ्गी प्रतिखुरः" इति तत्र लक्षितम् ।

**प्रतिख्याति** स्त्री प्रति+ख्या-भावे क्तिन् । १विख्यातौ २अतिख्यातौ अमरः ।

**प्रतिगत** न° प्रति+गम-भावे क्त । "गतागतप्रतिगतसस्यातायाश्च पक्षिणाम्" जटाधरोक्ते १खगगतिभेदे २परावृत्यगमने च । कर्त्तरि क्त । ३परावृत्ते त्रि° ।

**प्रतिगर** पु° प्रतिगीर्य्यते प्रत्युच्चार्य्यते प्रति+गॄ-भावे अप् । वैदि-

क्रमन्त्रभेदस्य उच्चारणभेदे। तस्य प्रकार आश्व० श्रौ० ५।८।४ सूत्रादौ वृत्तौ च दर्शितो यथा "शस्त्रस्वरं प्रतिगर ओथामो दैवेति" सू० "शस्त्रस्य स्वर इव स्वरो यस्य स शस्त्रस्वरः। उत्तरपदलोपोऽत्र द्रष्टव्यः। शस्त्रतुल्यस्वर इत्यर्थः। वचनस्वरस्याविधेयत्वादन्योऽपि यो विशिष्टः स्वरो विहितः शस्त्रस्य तस्य प्राप्त्यर्थं वचनम्। ओथामोदैवेत्ययं प्रतिगरशब्दो भवति प्रतिगीर्यते प्रत्युच्चार्यते इति प्रतिगरः। वक्ष्यमाणविशेषविशिष्टतया सकृदेव विधातुं शक्येऽपि सामान्यस्य पृथग्विधानं प्रतिगरशब्दव्यवहारेऽपि सामान्येनास्य ग्रहणार्थम्" नारा० वृ० "अ सामो दैवेत्याहावे" सू० "प्रतिगरो भवतीति शेषः। अयं पुनरयं प्रतिगरोऽपरो विधीयते तज्ज्ञापयति। प्रतिगरान्तरमध्यवर्त्तिन्याहावेऽयं निमज्जते। तेन शस्त्रमध्येऽयमेव स्यात् शस्त्रादावयं ब्राह्मणोक्तः शंसावोदैवामिति वा" ना० वृ०। "प्लुतादिः प्रणवेऽप्लुतादिरवसाने" सू०। "व्यवहितस्योमो विशेषविधौ। अनन्तरस्य प्रणवावसानरूपेण विषयभेदासम्भवात्" वृ०। "प्रणवे प्रणव आहावोत्तरे" सू०। "प्लुतादेरयमपवादः। आहावोत्तरे प्रणवे प्रणव एव प्रतिगरो भवति"। "अवसाने च" सू०। "प्रणवः प्रतिगरो भवतीति शेषः। शस्त्रान्तरे शस्त्रमध्ये चावसानेऽयं विधिर्भवति" वृत्तिः। "प्रणवान्तो वा" सू०। विषयद्वयेऽयं विकल्पः यत्र यत्र चान्तःशस्त्रं प्रणवेनावस्यति। प्रणवान्त एव तत्र प्रतिगरः" वृत्तिः। शस्त्रान्ते तु प्रणव" वृ०।

प्रतिग्रह पु० प्रति+ग्रह—अप्। १स्वीकारे २यथेष्टार्थदत्तद्रव्यस्य ग्रहणे ३सैन्यपृष्ठे ४पतद्ग्रहे च मेदि०। प्रतिग्रहश्चादृष्टार्थत्यक्तद्रव्यस्वीकारः। तत्र दानस्यैव स्वत्वध्वंसस्य परस्वत्वोत्पत्तिं प्रति हेतुता प्रतिग्रहस्य तु यथेष्टविनियोगार्हत्वप्रयोजकत्वं प्रति कारणता यथोक्तं दायभागे

"दृष्टश्च लोकेऽपि दाने हि चेतनोद्देशविशिष्टत्यागादेव दातृव्यापारात् सम्प्रदानस्य द्रव्ये स्वामित्वम्। न च स्वीकरणात् स्वत्वं स्वीकर्त्तुरेव दातृत्वापत्तेः परस्वत्वापत्तिफलेन हि दानरूपता तच्च फलं सम्प्रदानाधीनं यथा देवतोद्देशेन द्रव्यत्यागं कुर्वन्नपि यजमानो न होता किन्तु मन्त्रं पठन् होमाभिधाननिमित्तं प्रक्षेपं कुर्वन् ऋत्विगेव होतेत्युच्यते तद्वदत्रापि स्यात्। किञ्च मनसा पात्रमुद्दिश्येत्यादिशास्त्रे स्वीकारात् प्रागेव दानपदं दृष्टम्। ननु ग्रहणं स्वीकारः अभूततद्भावे च्विप्रयोगात् अस्वं स्वं कुर्वन् व्यापारः स्वीकारो भवति कथं तत् प्रागेव स्वत्वम्। उच्यते उत्पन्नमपि स्वत्वं सम्प्रदानव्यापारेण ममेदमिति ज्ञानेन यथेष्टव्यवहारार्हं क्रियत इति स्वीकारशब्दार्थः। याजनाध्यापनसाधर्म्याच्च प्रतिग्रहस्य स्वत्वमजनयतोऽप्यर्जनरूपता न विरुद्धा याजनादौ दक्षिणादानादेव स्वत्वात्" मूलम्। व्याख्यातमेतत् श्रीकृष्णेन यथा

"ननु त्यागात् केवलं स्वत्वनाशः सम्प्रदानस्वत्वं तु ममेदमिति भावित्वस्वीकाराहितत्स्वीकारादेवेति मत निराकरोति नचेति। स्वीकर्त्तुरेवेत्येवकारेण त्यक्तुर्व्यवच्छेदः। इदमुपपादयति परस्वत्वापत्तिफलेन हीति। अयमाशयः धात्वर्थतावच्छेदकफलानुकूलव्यापारवत एव तज्जनकतद्धातुव्यपदेश्यत्वं यथा धात्वर्थतावच्छेदकोत्तरदेशसंयोगानुकूलव्यापारवति चैत्रे गच्छतीति व्यवहारः। स्वीकारस्य स्वत्वहेतुत्वे धात्वर्थतावच्छेदकपरस्वत्वानुकूलस्वीकाररूपव्यापारवतः स्वीकर्त्तुरेव दातृपदव्यपदेश्यत्वापत्तिरिति पूर्वस्वत्वध्वंसरूपफलस्य न तद्व्यपदेशनियामकता तथात्वे उपेक्षितुरपि दातृपदव्यपदेश्यत्वापत्तिरिति। केचित्तु स्वीकारस्य स्वत्वहेतुत्वे परस्वत्वफलोपहितत्यागात्मकदाने सर्वांशे एकस्यापि कर्त्तृत्वासम्भवात् एकांशमादायैव अदृष्टव्यवहारे कर्त्तव्ये प्रधानीभूतफलांशानुकूलव्यापारवत्त्वेन दातृव्यवहारः स्यादिति व्याचक्षुः। दृष्टान्तेनेदं द्रढयति यथा होतेति। होमाभिधाननिमित्तमिति। विशिष्टदेवताध्यानपूर्वकप्रक्षेपोपहितत्यागस्य होमत्वात् प्रक्षेपस्य तदभिधाननिमित्तत्वमित्यर्थः। तेन हुधात्वर्थतावच्छेदकप्रक्षेपानुकूलव्यापारवति ऋत्विजि होतेति व्यपदेशो यथा तथेत्यर्थः। त्यागस्य स्वत्वहेतुत्वे स्फुटमेव शास्त्रं प्रमाणयति किञ्चेति। आदिना भूमौ तोयं विनिःक्षिपेदित्युत्तरप्रतीकपरिग्रहः। शास्त्रे शास्त्रबोधितत्यागे। दानपदं दृष्टमिति। "विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते" इति तद्वचनस्योत्तरार्द्धे दानपदं प्रयुक्तमित्यर्थः। तथाच निरन्तरयोरेव स्वत्वध्वंसपरस्वत्वोत्पत्तिफलयोर्द्दाधात्वर्थतावच्छेदकत्वात् दानस्य परस्वत्वहेतुता शास्त्रसिद्धैवेति भावः। स्वीकारात् प्रागेव स्वत्वे ग्रहणस्य स्वीकारपदार्थत्वासम्भवमाशङ्कते नन्विति। स्वीकारशब्दार्थ इति। तथाच स्वत्वस्य यथेष्टविनियोगार्हत्वविशिष्टे वाच्यत्वेति भावः। ननु सम्-

स्थानानि वै द्विज ।" कृष्णाजिनान्यथादाय स्पृहा यो ब्राह्मणः पठेत् । प्रतिगृहीता सावित्रीं सर्वमेव प्रकीर्त्तयेत् । ततस्तु सार्द्धं कृष्णेन तस्य कृष्णस्य देव मम" भूमिर्विष्णुर्देवताकेत्यादि कीर्त्तयेदित्यर्थः । "सभा परोक्षतः पश्चात् कामस्तुल्या प्रतिग्रहम् । विधिं धर्म्मं मयो ज्ञात्वा यस्तु कुर्य्यात् प्रतिग्रहम् । दाता स ह तरत्येव नासादगोण्यसौ द्विज" । ब्रह्मपुराणे "ना-ख्याय प्रतिगृह्णीयाद्दुहत्यर्थं सापुत्रकथा । ब्रह्मघ्नमपि मातङ्गतिलहोहाय वर्जयेत् । कृष्णाजिनप्रयपात्रो न भूय पुरुषो भवेत् । गव्यानङ्गारवस्त्रादि प्रतिग्रहस्तस्य च । नरकान्न निवर्त्तन्ते धनु तिलमयीं तथा" । तथा "ब्रह्महत्या सुरापानमपि स्तेय तरिष्यति । ब्रा-तराद्दु यद्गृहीतन्तु तत्कथं वै तरिष्यति" एतदादि द्रव्य दान गृहीतुर्दोषजनकम् । अनिच्छवे विद्यारहित-त्वेनासमर्थाय च दातुरपि दोषजनकमाह दक्ष "न केवलं हि तद्याति शेषमस्य च नश्यति" । तत्र कर्म्मेण द्रव्यस्य अतएव याज्ञवल्क्यः "विद्यातपोभ्यां हीनेन न तु ग्राह्य प्रतिग्रह । गृह्णन् प्रदातारमधो-नयत्यात्मानमेव च" । अधो नरकम् । स्वतद्धागप्रति-ग्रहणोत्तर तपोजपादिभिरात्मतारणक्षमाय स्वेच्छया प्रतिगृहीत्रे दान न दोषायेत्याह विष्णु "एतानि यदि गृह्णाति स्वेच्छयाभ्यर्थितो न तु । तस्मै दाने न दोषो-ऽस्ति यस्मात्मानन्तु तारयेत्" । तारणप्रकारमाह हा-रीत "मणियाचोग्रदोना प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत् रत्नमध्यमे दशोत्तमे द्वादशरात्रं पयोव्रत शत-सहस्र जपन् प्रतिग्रहेष्विति" अष्टसहस्रमष्टाधिकसहस्रम् असत्प्रतिग्रहेषु उभयतोमुख्यादिप्रतिग्रहेषु तथा चादि पुराणे "किं करिष्यत्यसौ मूढो गृह्णात्युभयतोमुखीम् । नरकस्य वाक्षणा यामा क्षुरधाराऽग्निसन्निभा । पूर्वं स-ंसक्त्वो तु पाप एक प्रमुच्यते" । अत एव देवल "प्रतिग्रहसमर्थो हि ज्ञात्वा विप्रो यथाविधि । नि-स्तारयति दातारमात्मानञ्च स्वतेजसा" । स्कान्दे "वे-दाङ्गपारगो विप्रो यदि कुर्य्यात् प्रतिग्रहम् । स च पापैर्न लिप्येत पद्मपत्रमिवाम्भसा" एव "तीर्थे न प्रति गृह्णीयात् पुण्येष्वायतनेषु च । निमित्तेषु च सर्वेषु न प्रमत्तो भवेन्नर" इ० महाभारतवचनम् । प्रतिग्रहीतृ-दोषजनके गङ्गातीरादिदेशग्रहणादिकाले दानेऽपि बोध्यम् । किन्त्विदानीन्तथाविधपात्राभावात् "मनसा पात्रमुद्दिश्य" इत्यादि प्रागुक्तवचनात्तदुद्देशाच्चाङ्गीकृत्य देशान्तरे कालान्तरे च प्रतिपादनाचारः सर्व्वत्र प्रचोचीन. । गङ्गाशाख्यानस्वर्थ्यम् । याज्ञवल्क्य "प्रतिग्रहसमर्थो-ऽपि नादत्ते य प्रतिग्रहम् । ये लोका दानशीलानां स तानाप्नोति पुष्कलान्" । अपवादमाह स एव "कुशा शाक पयो मत्स्या गन्धा पुष्प दधि क्षिति । मांसं शय्यासनं धाना प्रत्याख्येय न वारि च" । बकारादृ-गृहादि "मध्वाहृतान् कुशान् गन्धानपः पुष्पं मणीन् दधि । मत्स्यान् धाना· पयोमांसं शाकञ्चैव न निर्णुदेत्" इति वचनात् । मणीन् हिरण्यादिनिरादरान् । तथा "एधोदक फलं मूलमन्नमभ्युद्यत यत् । सर्व्वतः प्रतिगृह्णीयात् मध्वथाभयदक्षिणाम्" । अभयदक्षिणाम् अ-भयदान अभयपद इति मत्स्यमाधवरचनात् । अभ्युद्यतम् अप्रार्थ्य दत्तम् । किमिति प्रत्याख्येयम् इत्याह । तथा च मनुः "अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः । अन्यत्र कुलटापण्डपतितेभ्यस्तथा द्विषः" एतद्वचनं याज्ञवल्क्य-स्येति मिताक्षराकृत् अपरार्कमाधवाचार्य्यौ । मनोरिति शूलपाणि । भरद्वाज "अयाचितोपपन्ने तु नास्ति दोष प्रतिग्रहे । अमृतं तद्विदुर्देवास्तस्मात्तन्नैव निर्णु-देत्" । अपवादान्तरमाह स एव "देवातिथ्यर्चनकृते गुरु-भृत्यार्थमेव च । सर्व्वत प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च" भृत्या भरणीया मातापित्रादय । तथा च मनुः "वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्य्य-शतं कृत्वा भर्त्तव्या मनुरब्रवीत्" । आत्मवृत्त्यर्थं जीवन-मात्रम् । "न तु तृप्येत् स्वय ततः" इति मनूक्तेः । प्रयोगसारे "प्रतिग्रह न गृह्णीयादात्मभोगोपलिप्सया । देवतातिथिपूजार्थं धनं यत्नादुपार्जयेत्" । अङ्गिराः "कुटुम्बार्थं द्विजः शूद्रात् प्रतिगृह्णीत याचितम् । स्व-तर्पणार्थमात्मने चैव न हि याचेत कर्हिचित्" । अत एव यथार्थं याचकत्वे निन्दामाह याज्ञवल्क्यः "चाण्डालो जायते यज्ञकरणाच्छूद्रभिक्षणात्" शूद्रस्यापि अयाचित-दातृत्वमाह नरसिंहपुराणम् "अयाचितप्रदाता च कवि उत्स्वर्गमाप्नुयात् । पुराण श्रुणुयान्नित्यं नरसिंहस्य पूजनम्"

**प्रतिगृहीतृ** त्रि० प्रति+ग्रह-तृच् । प्रतिग्रहकर्त्तरि प्रति-ग्रहीत्रधर्म्माश्च दानशब्दे पु० उक्ता दृश्याः ।

**प्रतिग्राह** त्रि० प्रति+ग्रह-कर्म्मणि ण । १प्रतिग्रहकारके २पतद्ग्रहे (पिकदानी) पु० अमर ।

**प्रतिघ** पु० प्रति+हन-ड न्यङ्क्वा० कुत्वम् । १प्रतिघाते मेदि०

यो धूमवान् स निरग्निरित्युदाहरणे निरग्निसाधर्म्यमित्युपनये तत्सत्त्वात् एवं निगमनेऽपि बोध्यम् ।

**प्रतिज्ञासन्न्यास** न॰ "पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः" गौ॰सू॰ उक्ते निग्रहस्थानभेदे विवृतिश्च वृत्तौ "प्रतिज्ञासन्न्यासं लक्षयति । पक्षस्य स्वाभिमतस्य परेण प्रतिषेधे कृते सति तत्परिजिहीर्षया प्रतिज्ञातार्थस्यापनयनमपलाप इत्यर्थः यथा शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्ये व्यभिचारेण परेण प्रत्युक्ते क एवमाह शब्दोऽनित्य इति ।

**प्रतिज्ञाहानि** न॰ "प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः" गौ॰सू॰ उक्ते निग्रहस्थानभेदे विवृतिश्च वृत्तौ "प्रतिज्ञाहानिं लक्षयति प्रतिकूलो दृष्टान्तो यत्र स प्रतिदृष्टान्तः परपक्षः स्वः स्वीयः दृष्टान्तो यत्र स स्वदृष्टान्तः स्वपक्षः तथा च स्वपक्षे परपक्षधर्माभ्यनुज्ञा प्रतिज्ञाहानिः स्वयं विशिष्याभिहितपरित्याग इति फलितार्थः अपसिद्धान्तस्तु स्वयं विशिष्य नाभिधीयते इति नापसिद्धान्तसाङ्कर्य्यं सेयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात् पञ्चधा भवति यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञया बाधितविषयोऽयमित्युच्चरिते अस्तु तर्हि घट एव पक्ष इति, एवं तत्रैव ऐन्द्रियकत्वादिति हेतोरनैकान्तिकत्वमिति प्रत्युक्ते अस्तु कृतकत्वादिति हेतुरिति, एवं पर्वतो वह्निमान् धूमादयोगोलकवदित्युक्ते दृष्टान्तः साधनविकल इति प्रत्युक्ते अस्तु तर्हि महानसवदिति, एवमत्रैव सिद्धसाधने च प्रत्युक्ते अस्तु तर्हि इन्धनवानिति अन्यहानिस्तु विशेषणहान्यादि यथा तत्रैव नीलधूमादित्युक्तेऽसमर्थविशेषणत्वेन प्रत्युक्ते अस्तु तर्हि धूमादिति हेतुरित्यादि ।

**प्रतितन्त्र** न॰ प्रतिकूलं तन्त्रं शास्त्रम् प्रा॰स॰ । स्वमतविरुद्धे शास्त्रे तन्त्रस्येतरेतराभिमतस्वस्वार्थस्योपदेशः शास्त्रमिति ।

**प्रतितन्त्रसिद्धान्त** पु॰ "समानतन्त्रसिद्धः परतन्त्रसिद्धः प्रतितन्त्रसिद्धान्तः" गौ॰सू॰ उक्ते सिद्धान्तभेदे विवृतिश्च वृत्तौ "प्रतितन्त्रसिद्धान्तं लक्षयति । समानशब्द एकार्थस्तेनैकतन्त्रसिद्ध इत्यर्थः स्वतन्त्रसिद्ध इति पर्यवसितोऽर्थः तथा च वादिप्रतिवाद्येकतरमात्राभ्युपगतस्तदेकतरस्य प्रतितन्त्रसिद्धान्त इति फलितार्थः । यथा मीमांसकानां शब्दनित्यत्वम् । उदाहृतं च भाष्ये यथा नासत आत्मलाभः, न सत आत्महानं निरतिशयाः चेतनाः देहेन्द्रियमनस्सु विषयेषु तत्तत्कारणेषु च विशेष इति सांख्यानाम् । पुरुषकर्मनिमित्तो भूतसर्गः कर्महेतवो दोषाः प्रवृत्तिश्च स्वगुणविशिष्टाश्चेतना असदुत्पद्यते उत्पन्नं निरुध्यत इति योगानाम्" ।

**प्रतितर** पु॰ प्रतितीर्य्यतेऽनेन प्रति+तॄ—करणे अप् । तरणसाधने नौकाचालनदण्डादौ सुश्रुतः ।

**प्रतिताल** पु॰ सङ्गीतदा॰ उक्ते तालभेदे तल्लक्षणभेदादिकं तत्रोक्तं यथा "कान्तारः समराख्यश्च वैकुण्ठो वाञ्छितस्तथा । कथिता शङ्करेणैव चत्वारः प्रतितालकाः । कान्तारः प्रतितालस्तु चन्द्रक्रीडे द्रुतद्वयम् । दशाक्षरपदेनाथ शृङ्गारे वर्त्तते रसे ॥१ लघुद्रुतौ लघुश्चान्ते नृपनाम उदाहृतः । रुद्रसंख्याक्षरपदः समरो वीरके रसे" ।२ "रुद्रत्रयस्तु वैकुण्ठे प्रतिताले समीरिताः । अर्कसंख्याक्षरैः पादो हास्ये त्रिपुटतालके" ।३ "वाञ्छितस्तृतीय ताले लघुरेको द्रुतस्तथा । त्रयोदशाक्षरैर्युक्तो रसेऽद्भुते प्रकीर्त्तितः" ।

**प्रतिताली** स्त्री प्रतिगता तालम् गौरा॰ ङीष् । (चावि) तालकोद्घाटके यन्त्रभेदे हेमच॰ ।

**प्रतिलूणी** स्त्री सुश्रुतोक्ते वातरोगभेदे "श्राह्यस्य वायुः सकफो धमनीः शब्दवाहिनीः । नरान् करोत्यक्रियकान् मूकमिन्मिणगद्गदान् । अधिका वेदना याति वर्चोमूत्राशयोत्थिता । भिन्दन्तीव गुदोपस्थं सा तूणीत्युपदिश्यते । गुदोपस्थोत्थिता सैव प्रतिलोमविसर्पिणी ॥ वेगैः पक्वाशयं याति प्रतितूणी तु सा स्मृता" । तूणीशब्दोऽपि तत्र कथितवातरोगभेदे स्त्री ।

**प्रतिदान** न॰ प्रतिरूपं तुल्यरूपं दानम् प्रा॰स॰ । विनिमये १तुल्यरूपदाने न्यस्तस्य द्रव्यस्य २प्रत्यर्पणे च अमरः ।

**प्रतिदारण** न॰ प्रति—दॄ+णिच्—आधारे ल्युट् । युद्धे शब्दमाला भावे ल्युट् । भेदने ।

**प्रतिदिवन्** पु॰ प्रतिदीव्यति दिव—कनिन् । प्रत्यहं १दीप्तिशीले सूर्य्ये त्रिका॰ अस्य भस्याऽल्लोपे दीर्घविधौ परनिमित्तलोपस्याजादेशस्य स्थानिवत्त्वाभावात् दीर्घः । प्रतिदीव्नः प्रतिदीव्नेत्यादि । शब्दरत्ना॰ प्रतिदीवन् इति शब्दान्तरं कृतं तत्र प्रमो॰ तत्राह्नि । [३१०१ पृ॰ दृश्यम् ।

**प्रतिदृष्टान्तसम** पु॰ गौ॰सू॰ उक्ते जात्युत्तरभेदे जातिशब्दे

**प्रतिद्वन्द्व** न॰ प्रतिरूपं द्वन्द्वम् प्रा॰स॰ । तुल्ययुद्धे मार्क॰ १८अ॰ ॥

**प्रतिद्वन्द्विन्** त्रि॰ प्रतिद्वन्द्वमस्त्यस्य इनि । १तुल्यरूपे येन सह द्वन्द्वं युद्धं क्रियते २तस्मिंश्च ।

**प्रतिधर्त्तृ** त्रि॰ प्रति+धृ तृच्। निराकारके यजु॰१५।१०वेददी॰

**प्रतिधा** स्त्री प्रति+धा—भावे क्विप्। प्रतिविधाने भावे ल्युट्। प्रतिधान निराकरणे न॰।

**प्रतिधि** पु॰ पु॰ प्रतिमुखं धीयते प्रति—धा कर्मणि कि। प्रातःसवनान्ते पाठ्ये १स्तोत्रभेदे ताण्ड्य॰ब्रा॰ भा॰। २दैवातिथ्यगगतकाष्ठे श॰ १८।८५।८ भा॰। ३अन्ने यजु॰ ६८ वेददी॰। [जायमाने शब्दे प्रतिशब्दे हेमच॰।

**प्रतिध्वनि** पु॰ प्रतिरूपोध्वनिः प्रा॰ स॰। शब्दानुसारेण

**प्रतिध्वान** पु॰ प्रति+ध्वन—घञ्। प्रतिशब्दे अमर.।

**प्रतिनन्दन** न॰ प्रति+नन्द—भावे ल्युट्। आशीर्वादादिना सम्भाषणे। [हेम॰।

**प्रतिनप्तृ** पु॰ प्रतिनिहितो नप्ता पौत्रः प्रा॰स॰। प्रपौत्रे

**प्रतिनव** त्रि॰प्रतिगतो नवं नूतनत्वम् अत्या॰स॰। नूतने जटा॰

**प्रतिनाद** पु॰ प्रतिरूपो नादः प्रा॰स॰। प्रतिध्वनौ

**प्रतिनायक** पु॰ प्रतिकूलो नायक. प्रा॰स॰। वीररसादौ प्रतिकूले नायके नायकस्य य प्रति कोपादि तस्मिन् "धीरोद्धतः पापकारी व्यसनी प्रतिनायकः" सा॰द॰। यथा रामस्य रावण इत्यादि।

**प्रतिनिधि** पु॰ प्रतिरूप निधीयते तुल्यरूपतया स्थाप्यते प्रति+नि+धा—कि। १प्रतिरूपे तुल्यरूपे अमर॰। वैदिककर्माङ्गद्रव्यादीना मुख्यानामलाभे २तुल्यरूपतया न्यस्मिन् निधीयमाने। कुत्र प्रतिनिधिर्भवति कुत्र वा न भवति तत्सर्वं विशेषसहितं कात्या॰श्रौ॰१।४ कण्डिकाया व्यवस्थापितं तस्य सविस्तारर्थस्तु कात्यायनशब्दे १८६५ पृष्ठादौ दर्शितः। तदनुसारेण स्मार्त्तादिस्मृत॰ व्यवस्था प्रदर्श्यते तत्र एकादशीतत्त्वे उक्तं यथा स्कन्दपुराणम् "पुत्रञ्च विनियोगेत भगिनीं भ्रातरन्तथा। एषामभाव एवान्यं ब्राह्मणं विनियोजयेत्"। गरुड़पुराणम् "भार्य्या भर्त्तृव्रतं कुर्य्याद्भार्य्यायाश्च पति स्तथा। असामर्थ्ये द्वयोस्ताभ्यां व्रतभङ्गो न जायते"। वराहपुराणे "पितृमातृपतिभ्रातृश्वशुर्वादिभूभुजाम्। अदृष्टार्थतपोवित्ता समस्य फलभाग् भवेत्"। अत्रैव विषये कात्यायनः "दक्षिणा नाम कर्त्तव्या शुश्रूषा विहिता च सा" ननु प्रतिनिधौ भवेद्धर्म इत्यादिमन्त्रस्य फलं कुतस्त्यैव इति चेत् प्रधान एव। तथाच शारीरकभाष्ये श्रुतिः "या वै काञ्चन यज्ञ आशिषमाशासते यजमानायैव तामाशासते इति होवाच" इति। ब्राह्मण सर्वस्वे यजमानायेत्यत्र यजमानस्येति पाठ। इरलाया स्तु "यां वै काञ्चन ऋत्विगाशिषमाशासते सा यजमानस्यैवेति"। अत्र ऋत्विग्यजमानपदे प्रतिनिधिप्रधानपरे आकाङ्क्षितत्वात्। अतएव प्रतिनिधिपुत्रादिना "आयान्तु नः पितरः" इत्यादिरनूह एव पठ्यते वाक्यस्य काल्पनिकत्वाच्च तद्वेति। कालमाधवीये "काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके हि स। काम्येष्वुपक्रमादूर्द्ध्वमन्ये प्रतिनिधिं विदु." यथा नित्यं नैमित्तिकञ्च प्रतिनिधिनाप्युपक्रम्य कारयेत् काम्ये तु स्वसामर्थ्यं परीक्ष्य स्वयमेवोपक्रम्य कुर्य्यात्। असामर्थ्ये उपक्रमादूर्द्ध्वं प्रतिनिधिनापि कारयेत्। एतच्च श्रौतकाम्यपरं स्मार्त्तकाम्यन्तु अन्यद्वाराप्युपक्रम्य कार्य्यम्। तथा च पराशरभाष्ये शातातप "श्रौत कर्म स्वय कुर्य्यादन्योऽपि स्मार्त्तमाचरेत्। अशक्तौ श्रौतमप्यन्यः कुर्य्यादाचारमन्तत"। अन्तत उपक्रमात् परत। एतच्च काम्येऽपि प्रतिनिधिविधायक नैमित्तिकमात्रपरत्वे श्रौतस्मार्त्तभेदोपादानं व्यर्थं स्यात् तयोरविशेषादेव प्रतिनिधिलाभात्। अत एव भारतपाठादौ तथा समाचार। भृत्यर्णवे 'नाभावस्य प्रतिनिधिरभावान्तरमिष्यते"। सजातीयत्वेऽप्यभावान्तरमभावस्य प्रतिनिधिर्नेष्यते। भावस्तु कदाचिद्यथोपवासादौ ब्राह्मणभोजनादीति। "नापि प्रतिनिधातव्य निषिद्धं वस्तु कुत्रचित्। श्रोत्रियाणामभोज्य यद्द्रव्य हि तदशेषत। याह्य प्रतिनिधित्वेन होमकार्य्ये न कुत्रचित्। द्रव्य वैकल्पिकं किञ्चिद् यत्र सङ्कल्पितं भवेत्। तदभावे सदृग्ग्राह्यं न तु वैकल्पिकान्तरम्। उपात्ते तु प्रतिनिधौ मुख्यार्थो लभ्यते यदि। तत्र मुख्यमनादृत्य गौणेनैव समापयेत्। संस्काराणामयोग्योऽपि मुख्य एव हि लभ्यते। न तु संस्कारयोग्योऽन्यो गृह्यते प्रतिरूपकः। मुख्ये कार्य्यासमर्थे तु तत्रेऽप्येतस्य नादर। प्रतिरूपकमादाय यज्ञमेवोपजायते। कार्य्यैरूपैस्तथा पत्रैः क्षीरैः पुष्पैस्तथा फलैः। गन्धै रसै सदृग् ग्राह्यं पूर्वालाभे पर परम्। ग्राम्याणान्तु भवेद्ग्राम्यमारण्यानामरण्यजम्। व्रीह्यलाभे तु गोधूमास्तथा रेणुयवादय। छागपत्रे गोघृतं ग्राह्य तदभावेऽपि माहिषम्। आज्यं वा तदभावे तु साक्षात्तैल प्रयुज्यते। तैलाभावे ग्रहीतव्य तैलज तिलसम्भवम्"। तैलज तैलभव तिलसम्भवम् तिलपिष्टादि। "तदभावे तु सर्वेऽङ्गं कौसुम्भ सर्षपोद्भवम्। इक्षव्रीहस्तथा ग्राह्य पूर्वाभावे

चर यत्"। तदभावे गवादीनां क्रमात् क्षीरं विधीयते। तदभावे दधि चाज्यमलाभे तिल इष्यते। यत्र मुख्यं दधि क्षीरं तत्रापि तद्वाभतः। अजादेः क्षीरदध्यादि तदभावेऽपि गोष्टतम्। मुख्याधिकोऽथ वा ग्राह्यः कार्य्यकारणसन्ततौ"। अत एव घृताभावे पूर्वं दधि ततः पय। तथा "सर्वत्र गौणकालेषु कर्मचोदितमाचरेत्। प्रायश्चित्तं व्याहृतिभिर्हुत्वा कर्म समाचरेत्"। मत्स्यसूक्ते "घृतं न लभ्यते यत्र शुष्कक्षीरेण होमयेत्। क्षीरस्य च दधि ज्ञेयं मधुनश्च गुडो भवेत्"। आयुर्वेदेऽपि "मधु यत्र न लभ्येत तत्र जीर्णो गुडो भवेत्"। काण्डमूलपर्णपुष्पफलप्ररोहरसगन्धादीनां सादृश्येन प्रतिनिधिं कुर्य्यात्। सर्वाभावे यवप्रतिनिधिर्भवतीति" काण्डमात्रं प्ररोहोऽङ्कुर। सर्वालाभे यव इति कल्पतरुः अव्यय इति नारायणोपाध्यायः। शान्तिदीपिकायां नारदीयपञ्चरात्रम् "अभावे चैव धातूनां हरितालं विधीयते। सीसाभावप्रभावे तु यव एकं प्रशस्यते। लोहधीनामभावे तु सप्तदेवी प्रशस्यते। रत्नानामप्यभावे तु मुक्ताफलमनुत्तमम्। कौशानामप्यभावे तु हेमपात्रं प्रकल्पयेत्"। कौशाना तैजसपात्राणाम्। न्यायप्राप्तप्रतिनिधिमधिकृत्य जैमिनिः "न देवताग्निशब्दक्रियाणामिति"। अस्यार्थः देवताया अग्नेश्च आहवनीयादेः शब्दस्य मन्त्रस्य क्रियाया प्रयाजाद्यदृष्टार्थकर्मणश्चादृष्टमात्रार्थकत्वेनाराडुपकारकत्वान्न प्रतिनिधिः, व्रीह्यादीनान्तु सन्निपत्योपकारकाणां पुरोडाशसाधनं दृष्टमेव प्रयोजनमिति तत्र प्रतिनिधिरुचित इत्युक्तम्। परिशिष्टम् "मुख्यकाले तु मुख्यस्यैव साधनं नैव लभ्यते। तत्कालद्रव्ययोः कस्य गौणता मुख्यतापि वा"। तत्र भरद्वाजः "मुख्यकालमुपाश्रित्य गौणमप्यस्तु साधनम्। न मुख्यद्रव्यलाभेन गौणकालप्रतीक्षणम्। गौणेषु तेषु कालेषु कर्म चोदितमारभेत्। प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत्"। उत्तरमतं सिद्धान्तमिति केचित्। तदभिप्रायकं मीमांसाषष्ठाध्यायसूत्रम्। "पौर्वापर्य्येऽपि पूर्वदौर्बल्यं प्रकृतिवदिति"। ज्योतिष्टोमेऽन्योन्यं सम्बद्ध यत्र याजातो वहिर्निर्गच्छता ऋत्विजा विच्छेदनिमित्तं प्रायश्चित्तं श्रूयते यद्युद्गाता विच्छिन्द्यादृक्षिणेन यजेत यदि प्रतिहर्त्ता सर्वस्वदक्षिणेनेति"। तत्र उद्गातृप्रतिहर्त्रोः क्रमेण विच्छेदे विरुद्धप्रायश्चित्तयोः सहप्रयोगासम्भवात्। किं पूर्वं कार्य्यम् उत

वा परमिति संशये हि अनुपजातविरोधात् पूर्वमिति पूर्वपक्षे राद्धान्तः पौर्वापर्य्ये सति निमित्तयोः पूर्वस्यैव निमित्तस्य दौर्बल्यम्। उत्तरस्य पूर्वनिरपेक्षस्य तद्बाधकतया उदितत्वात् पूर्वोदयकाले उत्तरस्याप्राप्तत्वेन पूर्वस्य बाध्यत्वायोगात्। उक्तं हि "पूर्वं परमजातत्वादबाधित्वैव जायते। परस्यानन्यथोत्पादान्नाबाधेन सम्भवः" इति प्रकृतिवदिति यथा हि प्रकृतौ क्लृप्तोपकाराः कथाः प्रथमप्रतिदेशेन विकृतावुपकाराकाङ्क्षिण्यां प्राप्ताः क्लृप्तोपकारतया चरमभाविभिरपि परैर्निरपेक्षैर्बाध्यन्ते तद्वदिति। अत एव शारीरकभाष्यटीकायां वाचस्पतिमिश्राः "अवयवज्ञानानपेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे रजतज्ञानस्य अपायवः शुक्तिज्ञानेन कनीयसा बाधदर्शनात् तदनपबाधने तद्बाधाकमस्योत्पत्तेरनुत्पत्तेः तथाच "पूर्वापरबलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेत्" इति। यदि च पूर्ववचनस्य पूर्वपक्षत्वे वैयर्थ्यं स्यात् अत उभयवचनार्थौ विवक्षणीयौ तदा विषयभेदेन व्यवस्थापनीयौ। तथाहि यत्राष्टकाश्राद्धादौ कालान्तराभावस्तत्र तत्कालानुरोधाद्विहितद्रव्यालाभेऽपि प्रतिनिहितद्रव्यमादाय मुख्यकाल एव तत्करणं न तु वचनानुपात्तसापेक्षाकल्प्यगौणकालप्रतीक्षणम्। तथाच छन्दोगपरिशिष्टम् "स्थालीपाकं पशुस्थाने कुर्य्याद् यद्यानुकल्पिकम्। श्रपयेत्तं समतृषायास्तद्गवादोः पयस्यतु" इत्यादि। यत्राब्दिकश्राद्धादौ कृष्णैकादश्यादिगौणकालोऽस्ति तत्र सदाशौचाद्यभावे तदनुरोधेन उपवासादिरूपं प्रायश्चित्तं कृत्वा गौणकाले तत् कर्त्तव्यम्। तथाच लघुहारीतः "एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम्। अभावे पाकपात्राणां तदहः समुपोषणम्"। तथाच छन्दोगपरिशिष्टम् "संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन। हुत्वैतदेव कुर्वीत ये तूपनयनादधः"। यत्र तु विनिगमकवचनाभावस्तत्र यद्यपि क्रियायाः प्राधान्यात् कालो द्रव्यं द्वयमपि गुणभूतमेव तथापि प्रयोगसहायसामर्थ्यं द्रव्यादरः कालस्य च आदिक्रियाघटितस्य कर्मणोऽनत्वाभावाद्वर्ज्जनीयत्वसिद्धिः अनधिकारिनिमित्तमात्रस्य च बहिरङ्गत्वात्। कालस्य निमित्तत्वं व्यक्तं भविष्ये "अतः काल प्रवक्ष्यामि निमित्तं कर्मणामिह"। द्रव्यस्य तु साक्षाद्रूपनिर्वाहकत्वेनाभ्यर्हितत्वात् कर्मणः कारकत्वेनान्तरङ्गत्वाच्च। मुख्यादि-

प्रतिनिध्यभावे तु मत्स्यसूक्ते: "उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत्। तावद्धनानि वा दद्यात् यद्भक्ताद् द्विगुणं भवेत्। सहस्रसम्मिता देवीं जपेद्वा प्राणसंयमान्। कुर्य्याद्द्वादशसंख्याकान् यथाशक्ति व्रते नरः"। देवीं गायत्रीम्। अत्र चान्द्रायणादौ परिसंख्या। काश्यपपञ्चरात्रे "मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने। फलमूलजलाहारी हृदि शल्यं समार्पयेत्। अत्र यो दीक्षितः कश्चिद्वैष्णवो भक्तितत्परः। निर्निमित्तमदीक्षायां न च व्याधिपीडितः। अन्नं वा यदि भुञ्जीत मूलं फलमथापि वा। अपराधमहं तस्य न क्षमामि तु कश्यप।। क्षिपामि नरके घोरे दुःखान्तं मम जायते"। निमित्तं प्रारब्धचान्द्रायणादिव्रतविरोध इत्यादि, दीक्षायां चरुशेषप्राशनस्य विहितत्वाद्दीक्षायामित्युक्तम्। व्याधिना पीडितः सर्वमेतत्प्रदर्शनमात्रं शक्तौ निर्विरोध इत्यर्थः। अन्नादिकमप्युपलक्षणमिति जीमूतवाहनः। अत्र निमित्तं प्रारब्धचान्द्रायणादीति यदुक्तं तत्र चान्द्रायणादौ भोजनस्यावश्यकत्वाभावात् किन्तु निमित्तं रविवाराद्युपवासपारणं जलपानरूपं दीक्षायामपि चरुप्राशनं प्राणरूपम् अन्यथा "पुरोडाशोऽपि होमो वा संप्राप्ते हरिवासरे। अभक्ष्यो मम प्रोक्तः किं पुनश्चाशनक्रिया" इति नारदीयं विरुध्येत। तत्प्राशस्य भोजनरूपतामाह कात्यायनः श्रुतिः "पितृभ्यश्चैवं तच्चैवं प्राशितं भवति" इति पितृयज्ञपक्षसूत्रम् आकाङ्क्षाया अवशिष्टत्वात्। तेनैकादश्यां तदुभयोर्जलपारणं चरुशेषघ्राणञ्च कृत्वा उपवासः कार्य्यः"।

आरब्धकार्त्तिकादिस्नाने तु व्याधादिनाऽसामर्थ्ये पुत्रादिभिः प्रतिनिधिना कारयितव्यं नानुकल्पविधिना नित्य स्नान एव तद्विधानादिति" इति मल०त० स्वयं करणाऽसामर्थ्ये अन्यद्वारा कारयितव्य यथा दक्षः "स्वयं होमे फलं यत्तु तदन्येन न जायते। ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः। एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि" विट्पतिर्जामाता। एवञ्च ऋत्विगादीनामत्र प्रतिनिधिता। अत्राशौचाशङ्कया बोधनदिनात् पूर्वं प्रवर्त्तितकालजीवित्वरूपाधिकाराभावेऽपि यद्वरणादिकं क्रियते तत्कर्मकाले तस्य वारदोक्तस्वयंप्रवर्त्तनवत् प्रवर्त्तनाय न तु तदानीं प्रतिनिधीयते अथ वा "निःक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा। प्रवसेत् कार्यवान् विप्रो वृथैव न चिरं वसेत्" इति छन्दोगपरिशिष्ट वदन्यत्रापि प्रतिनिधीयते एवं वरणं विनापि कश्चिद्यदि ऋत्विक् प्रवर्त्तते तथापि तत्कर्मसिद्धिः। दक्षिणा च तस्मै शुद्धिकाले दातव्येति तथा च नारदः "ऋत्विक् च त्रिविधो दृष्टः पूर्वैर्जुष्टः स्वयं कृतः। यदृच्छया वा यः कुर्य्यादार्त्विज्यं प्रीतिपूर्वकम्" यदृच्छया स्वेच्छया" ति०त०। परार्थस्नाने स्वयमशक्तौ कुशमयप्रतिमूर्त्तिस्नानेऽपि फलविशेषः प्रा०त० उक्तो यथा "प्रतिकृतिं कुशमयीं कृत्वा तीर्थवारिषु मज्जयेत्। यमुद्दिश्य निमज्जेत सोऽष्टभागं फलं लभेत्। मातरं पितरं वापि भ्रातरं सुहृदं गुरुम्। यमुद्दिश्य निमज्जेत द्वादशांशं फलं लभेत्"। "अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा। पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात् प्रयत्नतः" दत्तकमी०।

**प्रतिनियम** पु० प्रत्येकं नियमः। १एकमेकं प्रति नियमे २व्यवस्थायाम् "प्रतिनियमाद्युगपत्प्रवृत्तेश्च पुरुषबहुत्वं सिद्धम्" सां० का०।

**प्रतिनिर्द्देश्य** त्रि० प्रति+निर्—दिश-कर्मणि ण्यत्। प्रथमनिर्दिष्टस्य पुनर्गुणान्तरविधानार्थं अभ्युदितार्थप्रतिपादनार्थं च निर्देशविषये यथा "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" अत्र ताम्रतयोदितस्य पुनस्ताम्रगुणविशिष्टतयास्तत्वकीर्त्तनाय पुनर्निर्देशः। तत्र च कथितपदता न काव्यदोषः तदुक्तं काव्यप्रकाशे "उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो विषयः एकपदप्रयोगनिषेधस्य, तद्वति विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः। तथा हि "उदेति सविता ताम्रस्ताम्र एवास्तमेति च। सम्पत्तौ च विपत्तौ च महतामेकरूपता"। अत्र रक्त एवास्तमेतीति यदि क्रियते तदा पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति"। "तद्वतीति उद्देश्यप्रतिनिर्देश्यत्ववतीत्यर्थः दोष इति आपाततोऽर्थान्तरतावभासरूप इत्यर्थः। अयं भावः "न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते" इति नियमाच्छब्दभेदेनोपस्थाप्यमानोऽर्थः शब्दविशिष्ट एव भासते अतः शब्दभेदेनोपादाने तत्तच्छब्दविशिष्टेऽर्थे भासमाने विभिन्नशब्दरूपविशेषणभेदाद्भेदावभास इति। सर्वनाम्नापि पूर्वोपात्तशब्दविशिष्टभासनाच्च भेदावभास इत्याह सर्वनाम्नोवेति" नागेशः।

**प्रतिनिवर्त्तन** न० प्रति+निर्—वृत—भावे ल्युट्। १अभीष्टवस्तुतः निवृत्तौ णिच्—ल्युट्। २निवारणे

**प्रतिन्याय** अव्य० प्रति+नि+अय इ—वा घञ्। न्यायो

संभविष्यन्ति देवताः । अतस्ते प्रतिपन्नाम शिशिरेणा भविष्यति”। ४बहिष्पवमानस्तोत्रस्य प्रथमस्तुतौ ताण्ड्य॰ब्रा॰ ४।२।१५ यथा “कुर्वन्ते वाजसातये सोमा॰ सहस्र पाजस इति सहस्रवती प्रतिपत्कार्य्या”।“प्रतिपद्यते प्रक्रम्यते बहिष्पवमानस्तोत्रे एषा प्रतिपत् सा सहस्रवती सहस्रशब्दोपेता एषा कार्य्या” भा॰ । वा डाप् तत्रार्थे

**प्रतिपन्न** त्रि॰ प्रति+पद–क्त । १अवगते अमरः २स्वीकृते मेदि॰ “प्रतिपन्नं हि विचेतनैरपि” कुमार॰ । ३विक्रान्ते च हेमच॰ आचिता॰ अस्य गतिपूर्वकत्वेऽपि नान्तोदात्तता । [राजनि॰ ।

**प्रतिपर्णशिफा** स्त्री प्रतिपर्णं शिफाऽस्याः । द्रवन्तीवृक्षे

**प्रतिपाण** पु॰ प्रति+पण–घञ् । प्रतिरूपदेवने

**प्रतिपादक** त्रि॰ प्रति+पद–णिच्–ण्वुल् । बोधके ।

**प्रतिपादन** न॰ प्रति+पद–णिच् भावे ल्युट् । १दाने २बोधने ३प्रतिपत्तौ च मेदि॰ ।

**प्रतिपाद्य** त्रि॰ प्रति+पद–णिच् कर्मणि यत् । बोधनीये

**प्रतिपूजन** न॰ प्रतिरूप पूजनं प्रा॰स॰। केनचित् पूजने कृते तदनुरूपे तेन पूजकस्य १पूजने २आभिमुख्येन पूजने च ।

**प्रतिप्रदान** न॰ प्रति+प्र+दा–भावे ल्युट् । १प्रतिदाने २प्रत्यर्पणे च ।

**प्रतिप्रसव** पु॰ प्रति+प्र+सू–अप् । १निषिद्धस्य पुनःप्राप्तिसम्भावनायाम् । साकल्येऽव्ययी॰ । २प्रसवसाकल्ये प्रतिजन्मनीत्यर्थे । [भेदे अच्छावाकशब्दे ८५पृ॰दृश्यम् ।

**प्रतिप्रस्थातृ** पु॰ प्रति+प्र+स्था–तृच् । सोमयागीये ऋत्विग्

**प्रतिप्रस्थान** न॰ प्रतिकूलं प्रस्थानम् प्रा॰स॰। १विरुद्धपक्षाश्रयणे प्रतिकूलप्रस्थानं यस्य प्रा॰ब॰ । २तद्वति त्रि॰ ३निपात्ये यजु॰१८। १६ वेददी॰ ।

**प्रतिप्रहार** पु॰ प्रतिरूपः प्रहारः प्रा॰स॰। १कृतप्रहारानुरूपप्रहारे २प्रतिघातभेदे च ।

**प्रतिप्रैष** पु॰प्रतिरूपः प्रैषः प्रा॰स॰। नियोजितेन नियोक्तारं प्रति पुनःप्रेषणे कात्या॰ २५।१०।२ कर्कः ।

**प्रतिफल** त्रि॰ प्रतिफलति प्रति+फल–अच् । १प्रतिबिम्बे येन यत्कर्म कृतं २तस्यानुरूपप्रतीकारे । साकल्ये अव्ययी॰। ३फलसाकल्ये अव्य॰ ।

**प्रतिफलन** न॰प्रति+फल–भावे ल्युट् । प्रतिबिम्बने सादृश्ये

**प्रतिफुल्लक** त्रि॰ प्रति+फुल्ल-विकासे ण्वुल् । प्रफुल्ले शब्दच॰

**प्रतिबद्ध** त्रि॰प्रति+बन्ध–कर्मणि क्त । १प्रतिरुद्धे २साकल्येन सम्बद्धे व्यापके च प्रतिबन्धशब्दे दृश्यम् ।

**प्रतिबन्ध** पु॰प्रति+बन्ध–भावे घञ् । १प्रतिरोधे २साकल्येन सम्बन्धे व्याप्तौ च “प्रतिबन्धदृश” प्रतिबद्धज्ञानमनुमानम्” सा॰सू॰ “प्रतिबन्धो व्याप्तिर्व्याप्तिदर्शनाद्व्यापकज्ञानमनुमानम्” प्र॰भा॰ ।

**प्रतिबन्धक** त्रि॰ प्रतिबध्नाति प्रति+बन्ध+ण्वुल् । १प्रतिरोधके । स्त्रियां टाप् कापि अत इत्वम् । “बलवद्द्विष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका” भाषा॰। २विटपे शब्दच॰ प्रतिबन्धकत्वञ्च कारणीभूताभावप्रतियोगित्वम् तच्च मण्याद्यभावत्वेन न तु प्रतिबन्धकाभावत्वेनेति नान्योन्याश्रयः । एव प्रतिबन्धकाभावकूट एव कारणं तेन मणिसद्भावे मन्त्राद्यभावेऽपि न कार्य्यमिति” अनुमा॰ चि॰अतिरिक्तशक्तिनिरासे । तच्च पञ्चधा भवति यथा तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वम्१ । तदभावव्याप्यवत्तानिश्चयत्वेन२ तदभावावच्छेदकतया गृहीत धर्मवत्तानिश्चयत्वेन३ । तदसमानाधिकरणधर्मवत्तानिश्चयत्वेन४ । तद्व्यापकतावच्छेदकतया गृहीत धर्मावच्छिन्नाभाववत्तानिश्चयत्वेन५ चेति । तत्राद्यं यथा ह्रदो वह्निमानिति बुद्धिं प्रति ह्रदो न वह्निमानिति निश्चयस्य प्रतिबन्धकत्वम् । द्वितीयं ह्रदो वह्न्यभावव्याप्यवानिति निश्चयस्य । तृतीयं जलत्वावच्छिन्नवह्न्यभाववानिति निश्चयविशिष्टस्य जलवान् ह्रदः इति निश्चयस्य । चतुर्थं वह्न्यसमानाधिकरणजलवान् ह्रद इति निश्चयस्य । पञ्चमं ह्रदो धूमवानिति बुद्धिं प्रति धूमव्यापकतावच्छेदकतया गृहीत यद्वह्नित्वं तादृशवह्नित्वावच्छिन्नाभाववान् ह्रद इति निश्चयस्येति । कार्य्यमात्रं प्रति तु कामिनीजिज्ञासाया स्वातन्त्र्येण प्रतिबन्धकत्वम् । क्वचित् मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वम् यथा दाहं प्रति मणेः प्रतिबन्धकत्वम् इति ।

**प्रतिबन्धि(न्धी)** प्रति+बन्ध–इन् वा ङीप् । प्रकृतैककल्पे प्रदत्तं पुरुषबुद्धियाप्रकृतकल्पान्तरापादने प्रतिवादिमतेऽभिमतान्तरप्रसञ्जकवाक्ये तत्रार्थे प्रतिबन्दी इत्यपि तन्मूल कल्पम् । [मादौ भा॰ उ॰ १२०अ॰ ।

**प्रतिबन्धु** पु॰ प्रतिरूपो बन्धुः प्रा॰स॰ । बन्धुतुल्ये दौहि-

**प्रतिबल** पु॰प्रतिकूलं बलं यस्य । १शत्रौ “प्रतिबलजलधेरिति” वेणी॰ । प्रतिरूपं बलं यस्य । २तुल्यबले त्रि॰ “यो मे प्रतिबलो लोके” इति चण्डी । प्रतिगत बलम् प्रा॰स॰ । २सामर्थ्ये न॰ त्रिका॰ ।

**प्रतिबाहु** पु॰ प्रतिगतो बाहुम् अत्या॰स॰। बाहोरग्रे इ॰ह॰

९८।२१ श्वफल्कस्य २पुत्रभेदे च ब्रह्म० रम्भातटि भाग०६।२४।१८

**प्रतिबुद्ध** त्रि० प्रति+बुध–कर्त्तरि क्त । १जागरिते । कर्मणि क्त । २ज्ञाते च ।

**प्रतिबोध** पु० प्रति+बुध–भावे घञ् । १जागरणे २ज्ञाने च कर्त्तरि अच् । ३जागरिते ४ज्ञानिनि च त्रि० । तस्यापत्यम् विदा०अञ् । प्रातिबोध तदपत्ये यूनि तु हरिता० फक् । प्रातिबोधायन तदीये यूनपत्ये पुस्त्री० ।

**प्रतिबोधिन्** त्रि० प्रति+बुध–भविष्यति गम्या० णिनि । भाविप्रतिबोधयुते गम्यादि० द्वितीयात०। ग्रामम्प्रतिबोधी

**प्रतिभट** पु० प्रतिकूलो भटः प्रा० स०। प्रतियोधे येन सह युध्यते तस्मिन् ।

**प्रतिभय** त्रि० प्रतिगतं भयमस्मात् निरा०स०। १भयहेतौ भयङ्करे अमरः । प्रतिगतं भयम् प्रा०स० । २भये न० ।

**प्रतिभा** स्त्री प्रति+भा–भावे अङ् । १बुद्धौ २प्रत्युत्पन्नबुद्धौ च हेम० “प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता” रुद्रटोक्तौ च । [पदार्थे ४प्रदीप्तियुते च ।

**प्रतिभात** त्रि० प्रति+भा–कर्त्तरि क्त । १ज्ञानेभासमाने

**प्रतिभान्वित** त्रि० ३त० । प्रतिभायुक्ते प्रगल्भे अमरः ।

**प्रतिभामुख** त्रि० प्रतिभान्वित मुखं मुखव्यापारोऽस्य । प्रतिभान्विते हेमच० । [भन् । २प्रकाशमाने च ।

**प्रतिभास** पु० प्रति+भास–भावे घञ् । १प्रकाशे कर्त्तरि

**प्रतिभू** पु० प्रतिरूपो भवति प्रति+भू–क्विप् । (जामिन) ख्याते पदार्थे स्त्री । दर्शनप्रतिभूशब्दे ३४७५ पृष्ठादौ दृश्यम् । [२भेदने च ।

**प्रतिभेदन** न० प्रति+भिद–भावे ल्युट् । १नेत्रादिरुत्पाटने

**प्रतिमण्डल** त्रि० प्रतिरूप मण्डल प्रा०स० । सूर्यादिमण्डलस्य १परिधौ परिवेषे हरिव० २०६अ० । शब्दार्थ० । २मल्लेकमण्डले शब्द० ।

**प्रतिमल्ल** पु० प्रतिकूलो मल्लः प्रा०स० । प्रतियोधे

**प्रतिमा** स्त्री प्रति+मा–भावे अङ् । १सादृश्ये । करणे अङ् । २मृदादिनिर्मितदेवतादिमूर्त्तौ तन्मानादि देवताप्रतिमाशब्दे ३६८५ पृष्ठादौ दृश्यम् । ३गजदन्तबन्धे हेमच० उत्तरपदस्थ । ५सदृशार्थे त्रि० हेमच० । यथा देवप्रतिम ।

**प्रतिमान** न० प्रतिमीयतेऽनेन प्रति+मा–वा ल्युट् । १प्रतिबिम्बे २प्रतिमायां ३गजकुम्भयोरधोभागे ४तद्दन्तयोर्मध्यस्थाने च अमर ।

**प्रतिमार्गक** पु० सौभपुरे व्योमचारिपुरे त्रिका० ।

**प्रतिमित्र** पु० १रूपभेदे भा०द्रो० १०२अ०। शब्दार्थ० । २प्रत्येकमित्रे शब्द० । [अमर ।

**प्रतिमुक्त** त्रि० प्रति+मुच–क्त । १परिहिते २परित्यक्ते च

**प्रतिमुख** न० सा०द० उक्ते नाटकाङ्गसन्धिभेदे यथा “यथासङ्ख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः । पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः” इत्युपक्रमे तल्लक्षणमाह “अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति” । एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः सन्धिः । तद्भेदानाह “मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः । इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते” । तत्र प्रतिमुखाङ्गस्य भेदोदाहरणादि यथा “विलासः परिसर्पश्च विधूतं तापनं तथा । नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः । विरोधश्च प्रतिमुखे तथा स्यात् पर्युपासनम् । पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि” । तत्र “समीहा रतिभोगार्था विलास इति कथ्यते” । रतिलक्षणस्य भावस्य यो हेतुभूतो भोगोऽस्य विषयः प्रमदा पुरुषो वा तदर्था समीहा विलासः यथा शाकुन्तले “कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि । अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते” । “दृष्टनष्टानुसरणं परिसर्प इति कथ्यते” यथा शाकुन्तले राजा । भवितव्यमत्र तया । तथा हि “अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् । द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा” । “कृतस्यानुनयस्यादौ विधूतं त्वपरिग्रहः” यथा तत्रैव “अलं वो अन्तउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण” । केचित्तु “विधूतं स्यादरतिरिति” वदन्ति । “उपायादर्शनं यत्तु तापनं नाम तद्भवेत्” यथा रत्नावल्यां सागरिका “दुल्लहजणाणुराओ लज्जा गुरुई परवसो अप्पा । पियसहि ! विसमं पेम्मं मरणं सरणं णवरं एक्कं” । “परिहासवचो नर्म—यथा रत्नावल्याम् सुसङ्गता । “सहि जस्स किदे तुमं आअदा सो अअं दे पुरदो चिट्ठदि । सागरिका साभ्यसूयम् । कस्स किदे अहं आअदा । सुस । अइ अत्तसङ्किदे ण चित्तफलअस्स” ।—धृतिस्तु परिहासजा” । “नर्मद्युतिः—यथा तत्रैव । सुसङ्गता “सहि अदक्खिणा दाणिं सि तुमं जा एवं भट्टिणा हत्थावलम्बिदावि कोवं ण मुञ्चसि” । सागरिका । सभ्रूभङ्गमीषद्विहस्य “सुसङ्गदे दाणिं पि कीडिदुं ण विरमसि” । केचित्तु “दोषस्याच्छादनं हास्यं नर्मद्युतिरिति” वदन्ति ।—प्रग

गर्भं वाक्यं स्यादुत्तरोत्तरम्”। यथा विक्रमोर्वश्याम् उर्वशी “जअदु जअदु महाराओ। राजा। मया नाम जित यस्य त्वया जय उदीर्यते इत्यादि”। “वि-रोधो व्यसनप्राप्तिः—यथा चण्डकौशिके राजा “नू-नमसमीक्ष्यकारिणा मयान्धेनेव स्फुरच्छिखाकलापो ज्व-लनः पद्भ्यां समाक्रान्तः”—इतस्यानुशयः पुनः” “प्रा-त्यर्थं याचनं—रत्नावल्याम् विदू “भो मा कुप्य एसा हि कदलीघरन्तरं गदेत्यादि” —पुष्पं विशेषवचनं मतम्”। यथा तत्रैव राजा “हस्ते गृहीत्वा स्पर्शं नाटयति” विदू “भो वअस्स एसा अवरेक्ष सिरी तए समासादिदा” राजा। वयस्य सत्यम् “श्रीरेषा पा-णिरप्यस्याः पारिजातस्य पल्लवः। कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः”। “प्रत्यक्षनिष्ठुरं वज्रं—यथा तत्रैव राजा “कथमिह कोऽहं त्वया ज्ञातः” इत्यादि। न केवलं तुमं चित्तफलएण ता जाव गदुअ देवीए णि-वेदइस्सं”। —उपन्यासः प्रसादनम्”। यथा तत्रैव सुसं। भट्टा अलं सङ्काए मएवि भट्टिणीए पसादेण की-लिद एव्व मे एदिणा किं कण्णाभरणेण। अदोवि मे गरुअरो पसादो एसो ज तए अहं एत्थ आलिहिदात्ति कुविदा मे पिअसही सागरिआ एसा एव्व पसादीअदु”। केचित्तु “उपपत्तिकृतो योऽर्थ उपन्यास स्तु की-र्त्तित” इति वदन्ति उदाहरन्ति च। तत्रैव “अदिस-इरा क्खु सा गब्भदासीति। “चातुर्वर्ण्योपगमनं वर्ण-संहार इष्यते” यथा वीरचरिते तृतीयेऽङ्के “परिषदिय मृषीणामेष वीरो युधाजित् सममृषिभिरमात्यैर्लोम-पादश्च वृद्धः। अयमविरतयज्वा ब्रह्मवादी पुराणः प्रभुरपि जनकानामद्रुहो याजकास्ते”। [प्रतिमायाम्।

प्रतिमूर्त्ति स्त्री प्रतिरूपा मूर्त्तिः प्रा॰स॰। देवादिमूर्त्तिवदिति-

प्रतियत्न पु॰ प्रति+यत—नञ्। १वाञ्छायाम् २उपग्रहे ३निग्रहादौ ४बन्द्याम् भरतटीकायां भरतमल्लादयः। सतो गुणान्तराधानरूपे ५संस्कारे मेदि॰ ६यत्ने ७प्रतिपक्षे च त्रिका॰। प्रतिरूपो यत्नो यस्य प्रा॰। ८प्रतियत्नयुक्ते त्रि॰। ९रचनायां जटाधरः।

प्रतियातना स्त्री प्रति+यात्यतेऽनया णि॰ यत—युच्। १प्र-तिमायाम् प्रा॰स॰। २तत्स्वरूपयातनायाम् अमरः।

प्रतियायिन् त्रि॰ प्रति+या-भविष्यति गम्या॰ णिनि। भावि-यानयुते भा॰अ॰ १७७श्लो॰। [ल्पर्श्ये च।

प्रतियोग पु॰ प्रति+युज—भावे घञ्। १विरोधे २विरुद्ध-

प्रतियोगिन् त्रि॰ प्रतिरूपं युज्यते प्रति+युज—घिनुण्। १प्रतिकूलसम्बन्धवति। यथा अभावस्य प्रतिकूलसम्बन्धव-त्त्वात् घटादिस्तस्य प्रतियोगी। २विरुद्धपक्षे विशिष्ट-बुद्धिनियामकसंसर्गस्य ३सम्बन्धिभेदे यथा संयोगेन घटवद्भूतलमित्यादौ संयोगस्य घट प्रतियोगी भूतलमनुयोगि। चन्द्रवन्मुखमित्यादौ सादृश्यस्य चन्द्रः प्रतियोगी मुख-मनुयोगि। तत्र विशिष्टबुद्धौ प्रकारतया भासमानं संसर्गस्य प्रतियोगि विशेष्यतया भासमानं संसर्गस्यानुयोगीति भेदः। तस्य भावः त्व प्रतियोगित्व न॰ तल् प्रतियोगिता स्त्री तद्भावे। सा च “अभावविरहात्मत्वं वस्तुनः प्रतियोगिता” इत्याचार्योक्ता। स्वरूपसम्बन्धविशेषरूपा दीधितिकार॰। यथा घटो नास्तीत्यादौ घटेऽभावप्रतियोगिता। यथा वा घटवद्भूतलमित्यादौ घटे भूतलानुयोगिकसंयोगस-म्बन्धप्रतियोगिता। अखण्डोपाधिर्धर्मविशेष इति सम्प्र-दायः। विशिष्टवैशिष्ट्यमित्यन्ये यथा चन्द्रवन्मुखमित्यादौ चन्द्रस्य सादृश्यप्रतियोगित्वम्। अन्वयित्वमित्यपरे। यथा चैत्रस्य पुत्र इत्यादौ षष्ठ्यन्तार्थस्य चैत्रे प्रतियोगित्वम्। घटाभावादिबुद्धेर्विशिष्टवैशिष्ट्यावगाहिबुद्धितया अभा-वबुद्धि विशेष्यविशेषणसंसर्गावगाहिनी विशिष्टबुद्धि-त्वात् संयोगेन घटवद्भूतलमित्यादिबुद्धिवत् इत्यनुमानेन अभावे घटादिविशिष्टबुद्धौ सम्बन्धतया अतिरिक्तप्रतियो-गितासिद्धिरिति मध्यमैयायिकाः। नीरूपे वायुग्रहणादौ तस्य स्वरूपसम्बन्धविशेषरूपत्वेन प्रतियोगिस्वरूपत्व-मनुयोगिस्वरूपत्वं वा स्वीकार्यं तेनैवोपपत्तौ नाति-रिक्तपदार्थकल्पनेति स्थितम् विस्तरभयान्नोक्तम्।

प्रतियोगितावच्छेदक त्रि॰ ६त॰। येन रूपेण यस्या भावादौ प्रतियोगिता तादृशे धर्मे यथा घटाभावे घटस्य घटत्वरूपेण प्रतियोगिता अतस्तत्र घटत्वं प्रतियोगिता-वच्छेदकं तच्च क्वचित् एकं क्वचिदनेकं तत्र वह्निर्नास्ती-त्यत्र वह्नित्वमेकं महानसीयवह्निर्नास्तीत्यादौ महान-सीयत्व वह्नित्वद्व्यादिकमनेकमित्याकरे दृश्यम्। येन सम्बन्धेन प्रतियोगितावा. अभावांशे भानं तादृश-सम्बन्धे च यथा संयोगेन घटो नास्तीत्यादौ संयोगेन घटस्याभावांशे प्रतियोगिताभानं तत्र संयोगसम्बन्धः प्रतियोगितावच्छेदकसम्बन्ध एवमन्यत्रापि ज्ञेयम्।

प्रतिर लटरे चिरकालावस्थाने ऋ॰ ८।६८।१०।

प्रतिरथ पु॰ प्रतिकूलो रथो यस्य प्रा॰स॰। १प्रतियोद्धे स-मानबलांशे तं सुधातरि वररमेदे हरिवं॰१९५अ॰। २ दु॰

मुखयोरन्योन्याभिमुखत्वेन भेदोऽनुभूयते, नैवं मदीयमिदं मुखमित्यैक्यप्रत्यभिज्ञया भेदानुभवस्य बाधात्। न च प्रत्यभिज्ञैवेतरेण बाध्येति वाच्यं सति भेदे प्रतिबिम्बासम्भवात् किं प्रतिबिम्बो नाम मुखच्छायाच्छिन्नमुद्रा? उत दर्पणावयवा एव बिम्बस्य सन्निधिवशात्तथा परिणमन्ते? नाद्यः दर्पणस्य मुखस्येतरस्मादल्पत्वात् यत्र तु प्रौढदर्पणे प्रौढं मुखमुपलभ्यते तत्रापि तस्य न मुद्रात्वम् दर्पणमुखयो संयोगाभावात्। न द्वितीय निमित्तकारणस्य बिम्बस्यापायेऽपि तस्यावस्थानप्रसङ्गात् न हि तथाऽवतिष्ठते। तेनैव पुरुषेण दर्पणे तिर्य्यङ्निरीक्षिते पुरुषान्तरेण सम्यगवलोकिते वा तन्मुखानुपलम्भात्। न चैव मन्तव्यं क्वचिन्निमित्तापाये कार्य्यमप्यपैति हस्तसंयोगजन्यस्य कटप्रसारणस्य हस्तसंयोगापायेऽपायदर्शनात्। न तत्र निमित्तापायात् कार्य्यापायः चिरकालसंवेष्टनाहितेन संस्कारेण संवेष्टनलक्षणविरुद्धकार्य्योत्पादात् अन्यथा चिरकालप्रसारणेन संवेष्टनसंस्कारे विनाशितेऽपि हस्तापाये प्रसारणमपेयात् न चैवमपैति। इह तु चिरकालबिम्बसन्निधानमनुवृत्तं बिम्बापाये प्रतिबिम्बोऽपि गच्छत्येवेति न बिम्बः परिणामस्य निमित्तम्। अथ मन्यसे चिरकालस्थितोऽपि कमलविकासः सवितृकिरणस्य निमित्तस्यापायेऽप्यपगच्छतीति। तन्न तत्रापि प्रार्थमिकसङ्कुचत्वहेतुभिः पार्थिवैराप्यैश्च कमलावयवैः पुनरपि रात्रौ सङ्कुचत्वे विरुद्धकार्य्ये जनिते विकासापायात् अन्यथा तादृशावयवरहिते म्लाने कमलेऽपि रात्रौ विकासोऽपगच्छेत्। आदर्शे तु मुखाकारपरिणते पुनः केन हेतुना समतलाकारपरिणामः स्यात् तदवयवानां कारुकव्यतिरेकेणाकिञ्चित्करत्वात्। अतएव बिम्बसन्निधिमात्रेण नादर्शावयवा मुखाकारेण परिणमेरन् अन्यथा दर्पणद्रव्ये प्रतिमामुखे कर्त्तव्ये सति लौकिका बिम्बमेव सन्निधापयेयुः न तु कांस्यकारमपेक्षेरन्। दर्पणद्रव्यस्याद्याकारपरिणामे कारुकापेक्षायामपि प्रतिबिम्बपरिणामे पुनःस्वरूपपरिणामे वा न तदपेक्षेति चेत् एवमपि न मुखप्रतिबिम्बाकारपरिणामो युक्तिसहः चक्षुर्नासिकादिनिम्नोन्नतभागस्य स्पर्शनानुपलम्भात् समतलमेव हि पाणिनाऽनुभूयते। समतलेन अवरहितं मुखमिति चेत् तर्हि चाक्षुषमपि न स्यात्। तत्र एतत् सिद्धं विमत आदर्शोदकाद्यन्तर्हितमुखमकारशून्यत्वात् यथा विमान जन्मकारणशून्यं विमानरहितं गगनमण्डलमिति। ननु तर्हि शुक्तिरजतवन्मिथ्यात्वापत्तेर्न बिम्बैकत्वसिद्धिः प्रत्यभिज्ञा तु व्यभिचारिणी मिथ्यारजतेऽपि मदीयमिदं रजतमिति तद्दर्शनादिति चेत् विषमो दृष्टान्तः नेदं रजतमिति हि तत्र रजतस्वरूपबाधया रजताभिज्ञाया भ्रमत्वे तत्प्रत्यभिज्ञाया अपि भ्रमत्वमुचितम् अत्र न तथा नेदं मुखमिति स्वरूपबाधः किन्तु नात्र मुखमिति देशसम्बन्धमात्रबाधे सति उत्पन्ना मदीयमेव मुखमिति प्रत्यभिज्ञा कथं भ्रमः स्यात्। न च मुखावयवानामचाक्षुषत्वात् कथं प्रत्यभिज्ञानमिति वाच्यं नासाग्रादिकतिपयावयवदर्शनादपि घटादिवदवयविनश्चाक्षुषत्वोपपत्तेः। यः पुनर्दर्पणापगमे प्रतिबिम्बापगमः नासौ स्वरूपबाधः दर्पणेऽपि तत्प्रसङ्गात्। ननु तत्त्वमसिवाक्येन जीवरूपः प्रतिबिम्बो बाध्यते यथा स्थाणुरसौ न पुरुष इति बाधायां सामानाधिकरण्यदर्शनात् संसार्य्यविनाशे च मोक्षानुपपत्तेः सोऽयं देवदत्त इति वदैक्यपरत्वेनापि सामानाधिकरण्यसम्भवात् विरुद्धांशबाधमात्रे— मोक्षो-
पत्ते तत्त्वस्य जीवस्य बाधे मोक्षस्यापुरुष
मन्यते प्रतिबिम्ब एव नास्ति दर्पणप्रति॰हता रश्मयः परावृत्य बिम्बमेव दर्पणाद्विविक्तं गृह्णन्तीति तदसत् प्रत्यङ्मुखत्वाद्यनुभवेनासौ निराकरणीयः। कथं तर्हि मूर्त्तद्रव्यस्य मुखस्यैकस्य भिन्नदेशद्वये युगपत् कार्त्स्न्येन वृत्तिः, दर्पणदेशस्थत्वस्य मायाकृतत्वादिति ब्रूमः। न हि मायायामसम्भावनीयं नाम स्वशिरश्छेदादिकमपि स्वप्ने माया दर्शयति। नन्वेवमपि जलमध्येऽधोमुखस्य वृक्षप्रतिबिम्बस्य तीरस्थवृक्षैक्ये सति तीरस्थवृक्षोऽधिष्ठानं तत्र च मायया अवगतत्वमधोमुखत्वञ्चाध्यस्तमिति वक्तव्यं न चात्राध्यासहेतुरस्ति अधिष्ठानस्य साकल्येन प्रतीतेः तत्कथमत्राध्यासः, उच्यते किमत्र ह्यावरणाभावादध्यासाभावः? किं वा दोषाभावात्? उतोपादानाभावात्? आहो स्विदध्यासविरोधिनोऽधिष्ठानतत्त्वज्ञानस्य सद्भावात्? नाद्यः चैतन्यावरणस्यैवाध्यासोपादानतया जडे पृथगावरणानुपयोगात्। एतेन तृतीयोऽपि निरस्तः। न द्वितीयः सोपाधिकभ्रमेषूपाधेरेव दोषत्वात्। न चतुर्थः निरुपाधिकभ्रमस्यैवाधिष्ठानतत्त्वज्ञानविरोधित्वात्। तर्हि सोपाधिकभ्रमस्य कर्त्तृत्वादेर्नात्मतत्त्वज्ञानान्निवृत्तिः किन्तु अहङ्कारोपाध्यपगमादिति चेत् बाढं पारमार्थिकदर्पणाद्युपाधेस्तत्कृतभ्रमस्य च ज्ञानादनिवृत्तावप्यज्ञान-

न्योपाधेरहङ्कारस्य निरुपाधिकभ्रमरूपस्यात्मतत्त्वज्ञानान्निवृत्तौ कर्तृत्वादेर्जीवानामीश्वरस्य चार्थात् सिध्यति। ननु कथं तत्त्वज्ञानं जीवेनाऽनात्मतादात्म्यं जानाति न विद्वानात्मतामात्मनोऽवगन्तुमलं प्रतिबिम्बत्वात् दर्पणगतप्रतिबिम्बवदिति चेत् न अचेतनस्यैवोपाधित्वात्। यस्तु लोकायत. शरीरस्यैव चैतन्यं मन्यते तं प्रति दर्पणगत. जाड्येन प्रतिरुद्धत्वात् प्रतिबिम्बस्याचेतनत्वं तस्मात् चेतनत्वे तु बिम्बचेष्टया विनापि स्वयं चेष्टेत जीवस्य तु प्रतिबिम्बत्वेऽपि नोपाधिजाड्येन प्रतिबन्ध इत्यनुभवसिद्धं, यद्यपि लोके बिम्बभूतस्यैव देवदत्तस्य भ्रमनिवर्त्तकतत्त्वज्ञानाश्रयत्वम् दृष्टम्। तथापि न तत्र बिम्बत्वं प्रयोजकं किन्तु भ्रमाश्रयत्वं जीवस्य भ्रमाश्रय. अविद्यायाश्चिन्मात्राश्रयत्वेऽपि जीवपक्षपातित्वेन भ्रमोत्पादनात्। ननु ब्रह्म स्वस्य जीवैक्यं न जानाति चेत् असर्वज्ञं स्यात् जानाति चेत् जीवगतभ्रमं स्वगतत्वेन पश्येदिति चेत् न स्वमुखतत्प्रतिबिम्बयोरैक्यं जानतापि देवदत्तेन स्वमुखे प्रतिबिम्बगतात्मत्वमलिनत्वाद्य दर्शनात्। न च जीवस्य प्रतिबिम्बत्वे मानाभावः श्रुतिस्मृतिसूत्रेभ्यस्तत्सिद्धेः "रूपं रूपं प्रतिरूपो बभूवेति" श्रुतिः "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इति स्मृतिः। "अतएव चोपमा जलसूर्यकादिवदिति" सूत्रम्। न चामूर्त्तस्य ब्रह्मणः प्रतिबिम्बासम्भवः अमूर्त्तस्याप्याकाशस्य सान्निताभ्रनक्षत्रादिविशिष्टस्य जले प्रतिबिम्बभावदर्शनात्। जलान्तराकाश एवाभ्रादिप्रतिबिम्बाधार इति चेत् न जानुमात्रेऽपि जले दूरविशालाकाशदर्शनात्। जीवो घटाकाशवदुपाध्यवच्छिन्नो न प्रतिबिम्ब इति चेत् न तथा सति जीवोपाधिमध्ये ब्रह्मणोऽपि सत्त्वे चैतन्यं तत्र द्विगुणं स्यात् न चैवमाकाशस्य घटे द्वैगुण्यं दृष्टं ब्रह्मणस्तत्राभावे च सर्वगतत्वनियन्तृत्वादिहानिः। उभयानुगतचिद्रूपाकारस्यैव सर्वगतत्वनियन्तृत्वादि न ब्रह्मण इति चेत् न "य आत्मानमन्तरो यमतीति" श्रुतौ प्रकरणबलाद्ब्रह्मण एव जीवमध्ये नियन्तृत्वेनावस्थानश्रवणात्। अत शास्त्रे सर्वत्र घटाकाशदृष्टान्तोऽसङ्गत्वसाधको न जीवत्वसाधकः। प्रतिबिम्बपक्षे तु द्विगुणीकृत्य वृत्तिर्न्याय. जलमध्ये स्वाभाविकजानुमात्राकाशस्य प्रतिबिम्बितविशालाकाशस्य च दृष्टेः। तस्मादहङ्कारोपाधिकृतो ब्रह्मप्रतिबिम्बो जीवः"।

**प्रतिबिम्बन** न० प्रति+बिम्ब+नामधातु, भावे ल्युट्। अनुकरणे "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" सा०द०

**प्रतिबिम्बवाद** पु० ६त०। जीवस्य ईश्वरप्रतिबिम्बतास्थापनार्थे वादे। द्विधा हि वेदान्तिमते जीवेश्वरयोर्विभागकल्पना प्रतिबिम्बभावेन तत्तदवच्छिन्नभावेन च। तत्राद्यः पक्षः विवरणानुसारिभिर्मन्यते द्वितीयः पक्षोऽन्यैर्मन्यते तदेतत् सिद्धान्तलेशे प्रदर्शितं यथा

विवरणानुसारिणस्त्वाहुः। "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यतीति" स्मृत्या एकस्यैवाज्ञानस्य जीवेश्वरविभागोपाधित्व प्रतिपादनाद्बिम्बप्रतिबिम्बभावेन जीवेश्वरयोर्विभागः। नोभयोरपि प्रतिबिम्बभावेन उपाधिद्वयमन्तरेणोभयोः प्रतिबिम्बत्वायोगात्। तत्रापि प्रतिबिम्बो जीवः बिम्बस्थानीय ईश्वरः। तथा सत्येव लौकिकबिम्बप्रतिबिम्बदृष्टान्तेन स्वातन्त्र्यमीश्वरस्य तत्पारतन्त्र्यं जीवस्य च युज्यते। "प्रतिबिम्बगता पश्यन् ऋजुवक्रादिविक्रिया। पुमान् क्रीडेत् यथा ब्रह्म तथा जीवस्थविक्रिया" इति कल्पतरूक्तरीत्या "लोकवत्तु लीलाकैवल्यमिति" सूत्रमपि सङ्गच्छते। अज्ञानप्रतिबिम्बे तस्य जीवस्यान्तःकरणरूपोऽज्ञानपरिणामभेदो विशेषाभिव्यक्तिस्थानम् सर्वत्र प्रसृतस्य सवितृप्रकाशस्य दर्पण इव। अतस्तस्य तदुपाधिकत्वव्यवहारोऽपि न तावताऽज्ञानोपाधिपरित्यागः। अन्तःकरणोपाधिपरिच्छिन्नस्यैव चैतन्यस्य जीवत्वे योगिनः कायव्यूहाधिष्ठानानुपपत्तेः। न च योगप्रभावाद्योगिनोऽन्तःकरणं कायव्यूहाभिव्याप्तियोग्यं वैपुल्यं प्राप्नोतीति तदवच्छिन्नस्य कायव्यूहाधिष्ठानत्वं युज्यत इति वाच्यम्। "प्रदीपवदावेशस्तथा हि दर्शयतीति" शारीरकपाठ्याधिकरणभाष्यादिषु कायव्यूहे प्रतिदेहमन्तःकरणस्य चक्षुरादेर्वह्निनस्येव योगप्रभावात् सृष्टेरुपदर्शनात्। प्रतिबिम्बस्य बिम्बाभेदमात्मस्याध्यस्तत्वेन स्वरूपेण तस्य सत्यत्वात् प्रतिबिम्बरूपजीवस्य सकृदन्वयासम्भव इति न तदतिरेकेण सुक्त्यन्वयायच्छेदरूपं जीवान्तरं वा प्रतिबिम्बजीवातिरिक्तं जीवेश्वरविलक्षणं कूटस्थशब्दितं चैतन्यान्तरं कल्पनीयम् "अविनाशी वाऽरे अयमात्मेति" श्रवणाज्जीवस्य तदुपाधिनिवृत्तौ प्रतिबिम्बभावापगमेऽपि स्वरूपं न विनश्यतीत्येतत्परं, न तदतिरिक्तकूटस्थमात्मकचैतन्यान्तरपरम्। जीवोपाधिनाऽन्तःकरणादिनावच्छिन्नं चैतन्यं बिम्बभूत ईश्वर एव "यो विज्ञाने तिष्ठन्नित्यादि" श्रुत्या ईश्वरस्यैव जीवसन्निधानेन तदन्तर्यामिभावस्य

**प्रतिवेश** पु० प्रत्यासन्नो वेशः प्रा०स० । प्रत्यासन्ने प्रतिवासि-गृहे शब्दरत्ना० । प्रति+विश–आधारे घञ् वा दीर्घः । तत्रार्थे ।

**प्रतिवेशिन्** त्रि० प्रत्यासन्नं विशति प्रति+विश–णिनि । प्रत्यासन्नगृहवासिनि स्त्रियां ङीप् "दृष्टिं हि प्रति वेशिनि । क्षणमिहाप्यस्मद्गृहे दास्यसि" सा०द० ।

**प्रतिव्यूह** पु० प्रतिरूपः व्यूहः प्रा०स० । बलविन्यासस्य प्रतिरूपे व्यूहे भा०भी० ५० अ० ।

**प्रतिशब्द** पु० प्रतिरूपः शब्दः प्रा०स० । प्रतिध्वनौ शब्दानुरूपे शब्दजन्ये शब्दभेदे । प्रतिबिम्बवादशब्दे दृश्यम् ।

**प्रतिशयन** न० प्रति+शी–भावे ल्युट् । प्रतिस्वापे अभीष्टलाभाय प्रत्यादेशाशया देवोद्देशेन स्नानभोजनादिवर्जनपूर्वकस्वापे (हत्यादेओया) दशकु० ५ उ० ।

**प्रतिशयित** त्रि० प्रति+शी+क्त । प्रतिशयनकारिणि

**प्रतिशासन** न० प्रति+शास–भावे ल्युट् । भृत्यादेर्निकृष्टस्य नियोगे अमर । [ख्याते च त्रिका० ।

**प्रतिशिष्ट** त्रि० प्रति+शास–कर्मणि क्त । १प्रेषिते २प्रत्या-

**प्रतिश्या** स्त्री प्रति+श्यै–वा० करणे अङ् । प्रतिश्याये पीनसे रोगभेदे शब्दच० ।

**प्रतिश्याय** पु० प्रति+श्यै–करणे घञ् । पीनसे रोगभेदे तल्लक्षणादि सुश्रुतोक्तं यथा

"अथातः प्रतिश्यायप्रतिषेधं व्याख्यास्यामः । नारीप्रसङ्गः शिरसोऽभितापो धूमो रजः शीतमतिप्रतापः । सन्धारणं मूत्रपुरीषयोश्च सद्यः प्रतिश्यायनिदानमुक्तम् । चयङ्गता मूर्द्धनि मारुतादयः पृथक्समस्ताश्च तथैव शोणितम् । प्रकोप्यमाना विविधैः प्रकोपणैर्नृणां प्रतिश्यायकरा भवन्ति हि । शिरोगुरुत्वं क्षवथोः प्रवर्त्तनं तथाङ्गमर्दः परिहृष्टरोमता । उपद्रवाश्चाप्यपरे पृथग्विधा नृणां प्रतिश्यायपुरःसराः स्मृताः । आनद्धा पिहिता नासा तनुस्रावप्रवर्त्तिनी । गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा । स्वरोपघातश्च भवेत्प्रतिश्यायेऽनिलात्मके । उष्णः सपीतकः स्रावो घ्राणात् स्रवति पैत्तिके । कृशोऽतिपाण्डुः सन्तप्तो भवेत्तृष्णाभिपीडितः । सधूमं सहसा वह्निं वमतीव च मानवः । कफः कफकृते घ्राणाच्छुक्लः शीतः स्रवेन्मुहुः । शुक्लावभासः शूनाक्षो भवेद्गुरुशिरोमुखः । शिरोगलौष्ठतालूनां कण्डूयनमतीव च । भूत्वा भूत्वा प्रतिश्यायो योऽकस्माद्विनिवर्त्तते । सम्पक्वो वाप्यपक्वो वा स सर्वप्रभवः स्मृतः । लिङ्गानि चैव सर्वेषां पीनसानां च सर्वजे । रक्तजे तु प्रतिश्याये रक्तास्रावः प्रवर्त्तते । ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः । दुर्गन्धोच्छ्वासवदनस्तथा गन्धान्न वेत्ति च । मूर्च्छन्ति चात्र क्रमयः श्वेताः स्निग्धास्तथाऽणवः । क्रिमिमूर्द्धविकारेण समानं चास्य लक्षणम् । प्रक्लिद्यति पुनर्नासा पुनश्च परिशुष्यति । मुहुरानह्यते चापि मुहुर्विव्रियते तथा । निश्वासोच्छ्वासदौर्गन्ध्यं तथा गन्धांश्च वेत्ति न । एवं दुष्टं प्रतिश्यायं जानीयात्कृच्छ्रसाधनम् । सर्व एव प्रतिश्याया नरस्याप्रतिकारिणः । कालेन रोगजनना जायन्ते दुष्टपीनसाः । बाधिर्य्यमान्ध्यमघ्राणं घोरांश्च नयनामयान् । कासाग्निसादशोफांश्च वृद्धाः कुर्वन्ति पीनसाः" ।

**प्रतिश्रय** पु० प्रतिश्रीयते प्रति+श्रि–आधारे अच् । १यज्ञगृहे जटा० २सभायां ३आश्रये च मेदि० ४गृहे हेमच० ।

**प्रतिश्रव** पु० प्रति+श्रु–भावे अप् । स्वीकारे अमर ।

**प्रतिश्रवण** न० प्रति+श्रु–भावे ल्युट् । १अङ्गीकारे । प्रतिगतः श्रवणं कर्णम् अत्या०स० । २श्रवणानुगते त्रि० अस्य तत्पुरुषे अव्ययी० अन्तोदात्तता प्रतिगतं श्रवणं येन प्रा०ब० । तु न । [रूपभेदे भा०आ० ६५ अ० ।

**प्रतिश्रवस्** पु० १सोमश्रवर्षिभेदे । २परिक्षित्पुत्रभीमसेनात्मजे

**प्रतिश्रुत्** स्त्री प्रतिरूपं श्रूयते श्रु–सम्प० भा० कर्मणि क्विप् । प्रतिशब्दे प्रतिध्वनौ अमरः ।

**प्रतिश्रुत्का** स्त्री देवताभेदे यजु० २४।२२। ३।१८ [नौ च ।

**प्रतिश्रुति** स्त्री प्रति+श्रु–भावे क्तिन् । १अङ्गीकारे २प्रतिध्व-

**प्रतिषिद्ध** त्रि० प्रति+सिध–कर्मणि क्त । निषिद्धे

**प्रतिषेध** पु० प्रति+सिध–भावे घञ् । १निषेधे 'मा कुरु इत्यादिना निवारणे "प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता" मीमांसकका० । २अर्थालङ्कारभेदे अर्थालङ्कारशब्दे ४०० दृश्यम् । ३दूषणाभिधाने च । ल्युट् । प्रतिषेधन तत्रैव न० ।

**प्रतिषेधोपमा** स्त्री "न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् । कलङ्किनो जडस्येति प्रतिषेधोपमैव सा" । काव्याद० उक्ते अर्थालङ्कारभेदे सादृश्यप्रतिषेधेन अधिकवैचित्र्य प्रकटनात् तथात्वमस्याः ।

**प्रतिष्क** पु० प्रति+स्कन्द–बा० ड षत्वम् । दूते शब्दर० । [जटा० ।

**प्रतिष्कष** पु० प्रति+कष–अच् बा० सुट् षत्वम् । चर्मरज्जौ

**प्रतिष्कस** पु० प्रति+कस–अच् बा० सुट् षत्वम् । चरे शब्दर०

**प्रतिष्टम्भ** पु० प्रति+स्तम्भ–भावे घञ् षत्वम् । १प्रतिबन्धे अमरः २क्रियाराहित्यापादने 'नाङ्गप्रतिष्टम्भविमुक्तमन्युः' रघु०

प्रतिष्टुति स्त्री प्रति+स्तु-क्तिन् । प्रतिलक्ष्यीकृत्य स्तुतौ ऋ० ८।१।१

प्रतिष्ठ त्रि॰प्रतिष्ठा अस्त्यस्य अच् प्रति+स्था-क वा । १ख्यातियुक्ते २जैनभेदे पु० हेमच० ३कुमारानुचरमातृभेदे स्त्री भा॰श॰४७अ॰। ४चतुरक्षरपादके वर्णवृत्तभेदे स्त्री वृ॰र॰।

प्रतिष्ठा स्त्री प्रति+स्था-भावाधारादौ अङ् । १स्थितौ २स्थाने ३गौरवे ४यागादिसमाप्तौ कर्त्तव्ये कर्मभेदे मेदि॰। देवादीनां पूज्यतादिप्रयोजके ५संस्कारभेदे देवताप्रतिष्ठाशब्दे तद्विवरण दृश्यम् । ६स्थैर्ये ७सुखे स्त्री निघण्टुः पात० सू० स्थैर्यभेदे फलभेद उक्तो यथा

"अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः" सू०। "सर्वप्राणिनां भवति" भा०"सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्" सू०"धार्मिकोभव इति भवति धार्मिकः, स्वर्गं प्राप्नुहीति स्वर्गं प्राप्नोति अमोघास्य वाग्भवति" भा० "अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्" सू० "सर्वदिक्स्थान्यस्योपतिष्ठन्ते रत्नानि" भा० "ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः" सू० "यस्य लाभादप्रतिघान् गुणानुत्कर्षयति सिद्धश्च विनेयेषु ज्ञानमाधातुं समर्थो भवति इति" भा०। दशाक्षरे "ब्रह्म पुच्छं प्रतिष्ठा" श्रुतिः ।

प्रतिष्ठान न॰ प्रति+स्था-भावे ल्युट् । १व्रतादे समाप्तौ कर्त्तव्ये कर्मभेदे देवादीनां पूज्यताप्रयोजके २संस्कारभेदे ३विख्यातौ च । आधारे ल्युट् । (पिठोर) ख्याते ४नगरभेदे "गङ्गायमुनयोर्मध्ये प्रयागं जघनं स्मृतम् । प्रयागं जघनस्थानमुपस्थमृषयो विदुः । प्रयागं सप्रतिष्ठानं कम्बलाश्वतरौ तथा । तीर्थं भोगवती चैव वेदिरेषा प्रजापतेः" भा॰व॰८५अ॰। "प्रतिष्ठाने नरपतिर्ययाति पालुपस्थितः" भा॰उ॰११३॰अ॰ ।

"एवंप्रभावो राजासीदैलस्तु पुरुषोत्तम ! । देशे पुण्यतमे चैव महर्षिभिरभिष्टुते । राज्यं स कारयामास प्रयाने पुण्यशीर्षकि । उत्तरे जाह्नवीतीरे प्रतिष्ठाने महायशाः" हरिवं॰२६अ॰ । ५स्थाने च

प्रतिष्ठित त्रि॰ प्रतिष्ठा जाताऽस्य तारका॰ इतच् । १जातप्रतिष्ठे देवादौ २विख्यातियुक्ते च । ३विष्णौ पु० "अप्रमत्तः प्रतिष्ठितः" विष्णुस॰ ।

प्रतिष्ठिका स्त्री प्रति+स्था-क स्वार्थे क कापि अत इत्त्वम् सुषमा॰ षत्वम् । प्रतिष्ठानकर्त्र्यां स्त्रियाम् ।

प्रतिसङ्क्रम पु॰ प्रतिरूपः सङ्क्रमः प्रा॰स०। १प्रतिच्छायायाम् प्रा॰स०। २प्रतिसंक्रान्ते प्रतिच्छायापन्ने त्रि॰ । ३संहारे च "चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धाऽनन्ता चेति" पात॰भा०। "प्रतिसंक्रमः संहारः" विवरणम् ।

प्रतिसंख्या स्त्री प्रति+सम्+ख्या-भावे अङ् । १प्रसंख्याने २सांख्यादिसिद्धे ज्ञानभेदे च तस्य पञ्चविंशतिसंख्यान्विततत्त्वनिरूपणात् तदीयज्ञानस्य संख्यानियतत्वेन तथात्वम् ।

प्रतिसंख्यानिरोध पु॰ प्रतिसंख्याप्रपूर्वकोनिरोधः शा॰त॰ । बुद्धिपूर्वके भावानां नाशे बौद्धमतसिद्धे पदार्थभेदे अप्रतिसंख्यानिरोधशब्दे ५६१पृ० दृश्यम् ।

प्रतिसञ्चर पु० प्रतिसञ्चरन्ति क्रियाशून्यतया विलीयन्तेऽत्र प्रति+सम्+चर-आधारे अप् । १प्रलयभेदे "यदा तु प्रकृतौ याति लयं विश्वमिदं जगत् । तदोच्यते प्राकृतोऽयं विद्वद्भिः प्रतिसञ्चरः" मार्क॰पु॰४६अ०। २संहारमात्रे च ।

प्रतिसन्देश पु॰ प्रतिरूपः सन्देशः प्रा॰स॰ । सन्देशानुरूपे प्रत्युत्तररूपतया वाचिकरूपसन्देशभेदे ।

प्रतिसन्धान न॰ प्रति+सम्+धा-भावे ल्युट् । १अनुसन्धाने अनुचिन्तने ज्ञानभेदे नष्टस्य द्रव्यस्योपलब्धिहेतुव्यापारे २अन्वेषणे च ।

प्रतिसन्धि पु॰ प्रतीपः सन्धिः प्रा॰स॰। १वियोगे २उपरमे "अदृष्टतोऽस्तुपायाश्च प्रतिसन्धिश्च कर्मणः" भा॰शा॰२॰६अ० टी० नील० प्रति+सम्+धा-कि । ३प्रतिसन्धाने च सौपथायाम् अव्ययी॰ । ४सन्धौ सन्धौ इत्यर्थे ।

प्रतिसन्धेय त्रि॰ प्रति+सम्-धा-कर्मणि यत् । प्रतीकार्ये भा॰उ० ८५अ० ।

प्रतिसम त्रि॰ प्रतिकूलः समः । विसदृशे

प्रतिसमन्त त्रि॰ प्रतिगतं समन्तात् येन प्रा॰ब॰ प्रमो॰। प्रा प्रसमन्ताद्भावे शत॰ब्रा॰ ३।७ १।१२ भा॰ ।

प्रतिसमासन न॰ प्रति+सम्+आ+अस-क्षेपे भावे ल्युट् । निरसने निवारणे भा॰व॰ १८३१ श्लो॰ ।

प्रतिसर पु॰ प्रति+सृ अच् । १सैन्यपश्चाद्भागे २हस्तसूत्रे च त्रिका॰ । ३मन्त्रभेदे ४माल्ये व्रणशुद्धौ च मेदि॰। ६भूषणे ७रक्षावन्धनसूत्रे पु॰ न॰ अमरः । दनियोज्ये त्रि॰ मेदि॰ स्त्रीत्वमपि । "प्रतिसरया हरगाथा भक्ताहृतशालिकुसुमसिद्धार्थं कण्ठेषु निबध्नीयात्" वृ॰स॰४३अ॰।

प्रतिसर्ग पु॰प्रतिरूप प्रतिकूलो वा सर्गः । १ब्रह्मणः सृष्टितत्त्वाया मरीच्यादिसृष्टौ २प्रलये च "आदिसर्गस्तु यस्त्वं ! कथितो विस्तरेण च । प्रतिसर्गेण ये येषामधिपाः स्तान् वदस्व न" इति प्रश्ने प्रतिसर्ग उक्तः कालिकापु॰।

प्रत्याहृत्तौ २रोधे च । तस्य कामप्रतिहृत्या जायमानत्वात् तथात्वम् ।

**प्रतिहर्तृ** त्रि० प्रति+हृ—तृच् । १पुनराहरणकर्त्तरि २ऋत्विग्भेदे पु० स च छान्दोग्यशब्दे ८५९ पृ० दृश्यम् । स च प्रतिहारसामभेदगाता प्रतिहारशब्दे दृश्यम् ।

**प्रतिहर्षण** न० प्रतिरूपं हर्षणम् प्रा० स० । १हर्षणानुरूपे हर्षे णिच्—ल्युट् । २प्रतिरूपसन्तोषसम्पादने च ।

**प्रतिहस्तक** पु० प्रतिरूपः हस्तो यस्य प्रा० ब० कप् । हस्तसाध्यक्रियाप्रतिरूपक्रियाकारिणि प्रतिनिधौ हिर्तो० ।

**प्रति(ती)हार** पु० प्रत्येकं हरति स्वामिपार्श्वमानयति अण् वा दीर्घः । १द्वारपाले अमर । स्त्रियां ङीप् गौरा० ङीष् वा । आधारे घञ् । तदधिष्ठानस्थाने २द्वारे च शब्दर० । प्रतिरूपं हरति हृ—अण् उपस० । ३मायाकारे भरत । सामस्तृतीयभागे उद्गात्रा गेये ४सामावयवभेदे उद्गीथशब्दे ११७० पृ० दृश्यम् । तस्य देवता च अन्नं यथोक्तं छा० उ० "अथ हैनं प्रतिहर्त्तोपससाद प्रतिहर्त्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति । अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रत्यहरिष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति" ।

**प्रतिहारक** पु० प्रति+हृ—ण्वुल् । १मायाकारे भरतः २स्थानान्तरप्रापके त्रि० ३प्रतिहाररूपसामावयवगातरि पु० ।

**प्रति(ती)हास** पु० प्रतिरूपः हासः प्रा० स० वा दीर्घः । १येन हासः कृतः तं प्रति हासे प्रा० ब० । २तत्कारके त्रि० । ३करवीरवृक्षे पु० अमर ।

**प्रतिह्वर** पु० प्रति+ह्वृ—आधारे अप् । समीपे ऋ० ७।६६।१४

**प्रतीक** पु० प्रति+कन् नि० दीर्घः । १अवयवे अमर । २प्रतिरूपे ३विलोमे च मेदि० प्रतीकोपासनं च ब्रह्मप्रतीकनामादित्यादीनां ब्रह्मदृष्ट्युपासनं तच्च शा० सू० भा० दर्शितं यथा

"न प्रतीके न हि सः" सू० "मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्म" (छा० ३।१८) इति, तथा "आदित्यो ब्रह्मेत्यादेशः" (छा० ३।१९) "स यो नाम ब्रह्मेत्युपास्ते" (छा० ७।५) इत्येवमादिषु प्रतीकोपासनेषु संशयः, किमेष्वात्मग्रहः कर्त्तव्यो न वेति । किं तावत् प्राप्तमेतेष्वप्यात्मग्रह एव युक्तः, कस्मात्, ब्रह्मणः श्रुतिष्वात्मत्वेन प्रसिद्धत्वात् । प्रतीकानामपि ब्रह्मविकारत्वात् ब्रह्मत्वे सत्यात्मत्वोपपत्तेरित्येवं प्राप्ते ब्रूमः । न प्रतीकेष्वात्ममतिं बध्नीयात्, न हि स उपासकः प्रतीकानि व्यस्तान्यात्मत्वेनाकलयेत् । यत्पुनर्ब्रह्मविकारत्वात् प्रतीकानां ब्रह्मत्वं ततश्चात्मत्वमिति । तदसत् प्रतीकाभावप्रसङ्गात् । विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति, स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वा । न च ब्रह्मण आत्मत्वात् ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्या, कर्तृत्वाद्यनिराकरणात्, कर्तृत्वादिसर्वसंसारधर्मनिराकरणेन हि ब्रह्मण आत्मत्वोपदेशस्तदनिराकरणेन चोपासनविधानम्, अतश्चोपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते, न हि रुचकस्वस्तिकयोरितरेतरात्मत्वमस्ति, सुवर्णात्मनेव तु ब्रह्मात्मनैकत्वे प्रतीकाभावप्रसङ्गमवोचाम । अतो न प्रतीकेष्वात्मदृष्टिः क्रियते" भा० "ब्रह्मदृष्टिरुत्कर्षात्" सू० "तेष्वेवोदाहरणेषु अन्यः संशयः, किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः किं वा ब्रह्मदृष्टिरादित्यादिष्विति । कुतः संशयः, सामानाधिकरण्ये कारणानवधारणात् । अत्र हि ब्रह्मशब्दस्यादित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते, "आदित्यो ब्रह्म प्राणो ब्रह्म विद्युद्ब्रह्म" इत्यादिसमानविभक्तिनिर्देशात् । न चात्राञ्जसं सामानाधिकरण्यमवकल्पते अर्थान्तरवचनत्वात् ब्रह्मादित्यादिशब्दानां, न हि भवति गौरश्व इति सामानाधिकरण्यम् । ननु प्रकृतिविकारभावात् ब्रह्मादित्यादीनां मृच्छरावादिवत् सामानाधिकरण्यं स्यात्, नेत्युच्यते, विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात् स्यात्, ततश्च प्रतीकाभावप्रसङ्गमवोचाम, परमात्मवाक्यं चेदं तदानीं स्यात्, ततश्चोपासनाधिकारो बाध्येत, परिमितविकारोपासनञ्च व्यर्थम् । तस्मात् ब्राह्मणोऽग्निर्वैश्वानर इत्यादिवदन्यतरत्रान्यतरदृष्ट्यध्यासे सति क्व किंदृष्टिरध्यस्यतामिति संशयः तत्रानियम, नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्तम् । अथ वाऽऽदित्यादिदृष्टय एव ब्रह्मणि कर्त्तव्या इत्येवं प्राप्तम् । एवं हि आदित्यादिदृष्टिभिर्ब्रह्मोपासनं फलवदिति शास्त्रमर्यादा । तस्मात् न ब्रह्मदृष्टिरादित्यादिष्वित्येवं प्राप्ते ब्रूमः । ब्रह्मदृष्टिरेवादित्यादिषु स्यादिति । कस्मात् उत्कर्षात्, एवमुत्कर्षेणादित्यादयो दृष्टा भवन्त्युत्कृष्टदृष्टेस्तेष्वध्यासात् । तथा च

लौकिको न्यायोऽनुगतो भवति, उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्येति लौकिको न्यायः। यथा राजदृष्टिः क्षत्तरि, स चानुगन्तव्यो विपर्यये प्रत्यवायप्रसङ्गात्। न हि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात्। ननु शास्त्रप्रामाण्यादनाशङ्कनीयोऽत्र प्रत्यवायप्रसङ्गः, न च लौकिकेन न्यायेन शास्त्रीया दृष्टिर्नियन्तुं युक्तेति। अत्रोच्यते, निर्धारिते शास्त्रार्थे एतदेवं स्यात्, सन्दिग्धे तु तस्मिन् तन्निर्णयं प्रति लौकिकोऽपि न्याय आश्रीयमाणो न विरुध्यते, तेन चोत्कृष्टदृष्ट्यध्यासे शास्त्रार्थेऽवधार्यमाणे निकृष्टदृष्टिमध्यस्यन् प्रत्यवेयादिति श्लिष्यते। प्राथम्याच्चादित्यादिशब्दानां मुख्यार्थत्वमविरोधात् ग्रहीतव्यम्। तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ पश्चादवतरतो ब्रह्मशब्दस्य मुख्यया सामानाधिकरण्यासम्भवात् ब्रह्मदृष्टिविधानार्थतैवावतिष्ठते। इतिपरत्वादपि ब्रह्मशब्दस्यैष एवार्थो न्याय्यः। तथा हि ब्रह्मेत्यादेश ब्रह्मेत्युपासीत ब्रह्मेत्युपास्ते इति च सर्वत्रेतिपरं ब्रह्मशब्दमुच्चारयति शुद्धांस्त्वादित्यादिशब्दान्। ततश्च यथा शुक्तिकां रजतमिति प्रत्येतीत्यत्र शुक्तिवचन एव शुक्तिकाशब्दः रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः प्रतीत्यैव हि केवलं रजतमिति न तु तत्र रजतमस्ति, एवमत्राप्यादित्यादीन् ब्रह्मेति प्रतीयादिति गम्यते। वाक्यशेषोऽपि च द्वितीयानिर्देशेनादित्यादीनेवोपास्तिक्रियया व्याप्यमानान् दर्शयति "स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्ते" (छा०।३।१९) "यो वाचं ब्रह्मेत्युपास्ते"(छा०७।२।२) "यः सङ्कल्पं ब्रह्मेत्युपास्ते" (छा०७।४।३) इति। यत्तूक्तं ब्रह्मोपासनमेवात्रादरणीयं फलवत्त्वायेति, तदयुक्तं उक्तेन न्यायेनादित्यादीनामेवोपास्यत्वावगमात्। फलन्त्वतिथ्याद्युपासन इवादित्याद्युपासनेऽपि ब्रह्मैव दास्यति सर्वाध्यक्षत्वात्। वर्णितञ्चैतत्, "फलमत उपपत्तेः" इत्यत्र (वे०सू०।३।२।३८)। ईदृशञ्चात्र ब्रह्मण उपास्यत्वं यत्प्रतीकेषु तद्दृष्ट्यध्यारोपणं प्रतिमादिष्विव विष्ण्वादीनाम्"।

तत्फलविशेषोऽपि तत्र निर्णीतो यथा

"अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च" सू० "स्थितमेतत् कार्यविषया गतिर्न परविषयेति। इदमिदानीं सन्दिह्यते, किं सर्वान् विकारालम्बनानविशेषेणैवामानवः पुरुषः प्रापयति ब्रह्मलोकमुत कांश्चिदेवेति। किं तावत् प्राप्तं सर्वेषामेवैषां विदुषामन्यत्र परस्मात् ब्रह्मणो गतिः स्यात्। तथा हि "अनियमः सर्वासाम्" इत्यत्राविशेषेणैषा विद्यान्तरेष्ववतारितेत्येवं प्राप्ते प्रत्याह अप्रतीकालम्बनानिति। प्रतीकालम्बनान् वर्जयित्वा सर्वानन्यान् विकारालम्बनान्नयति ब्रह्मलोकमिति बादरायण आचार्यो मन्यते। न ह्येवमुभयथाभावाभ्युपगमे कश्चिद्दोषोऽस्ति। अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वप्युपासनेषूपपत्तेः। तत्क्रतुश्चास्योभयथाभावस्य समर्थको हेतुर्द्रष्टव्यः। यो हि ब्रह्मक्रतुः स ब्राह्ममैश्वर्यमासीदेदिति श्लिष्यते "तं यथा यथोपासते तदेव भवन्ति" इति श्रुतेः। न तु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति प्रतीकप्रधानत्वादुपासनस्य। नन्वब्रह्मक्रतुमानपि ब्रह्म गच्छतीति श्रूयते यथा पञ्चाग्निविद्यायाम् "स एनान् ब्रह्म गमयति" इति। भवतु यत्रैवमपवाद उपलभ्यते, तदभावे त्वौत्सर्गिकेण तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तत्प्राप्तिर्नेतरेषामिति मन्यते" भा० "विशेषञ्च दर्शयति" सू० "नामादिषु प्रतीकोपासनेषु पूर्वस्मात् पूर्वस्मात् फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयति "यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवति" "वाग्वाव नाम्नो भूयसी" "यावद्वाचो गतं तत्रास्य यथा कामचारो भवति" "मनो वाव वाचो भूयः" इत्यादिना। स चायं फलविशेषः प्रतीकतन्त्रत्वादुपासनानामुपपद्यते, ब्रह्मतन्त्रत्वे तु ब्रह्मणोऽविशिष्टत्वात् कथं फलविशेषः स्यात्। तस्मान्न प्रतीकालम्बनानामितरैस्तुल्यफलत्वमिति" भा०। ४वसुन्धरस्य पुत्रभेदे भाग० ९।२।१९

**प्रती(ति)कार** पु० प्रति+कृ घञ् दीर्घः। १कृतापकारस्य प्रत्यपकारे वैरनिर्यातने अमरः २रोगनिवारणोपाये चिकित्सायाम् शब्दमा०। [अमरः। अस्य नित्यसमासः। मेघप्रतीकाश।

**प्रती(ति)काश** पु० प्रति+काश–घञ् वा दीर्घः। उपमायाम्

**प्रतीकाश्व** पु० भानुमत्पुत्रभेदे भाग० ९।१२।६

**प्रतीक्षा** स्त्री प्रति+ईक्ष–भावे अङ्। अपेक्षायाम्। भावे ल्युट्। प्रतीक्षणं तत्रार्थे न०।

**प्रतीक्ष्य** त्रि० प्रति+ईक्ष–कर्मणि ण्यत्। १पूज्ये २अपेक्षणीये च "प्रतीक्ष्यं तत् प्रतीक्ष्यायै पितृष्वस्रे प्रतिश्रुतम्" इति माघः।

**प्रती(ति)घात** पु० प्रति+हन–भावे घञ् वा दीर्घः। प्रतिघाते

**प्रतीची** स्त्री प्रत्यच्+स्त्रियां ङीप् अल्लोपे दीर्घः। पश्चिमायां दिशि यदपेक्षया सूर्यास्ताचलसन्निहिता या दिक् सा तदपेक्षया तस्य प्रतीची कथा० प्रप० इति।

प्रतीचीन त्रि॰ प्रतीचि भवः प्रत्यच्+ख अल्लोपे दीर्घः। १प्रत्यग्भवे २पश्चिमदिग्भवे च। स्वार्थे ख। ३प्रतीचिपदार्थे हेमच॰। शत॰ब्रा॰ ५।२।४।२० प्रतीचीनफलम्।

प्रतीच्य त्रि॰ प्रतीचि भवः प्रत्यच्–भवार्थे यत्। १प्रत्यग्भवे २पुलस्त्यभ्रातरि स्त्री भा॰उ॰११६अ॰। ३अन्तर्हिते त्रि॰ निघण्टुः। [मनु॰ ४।९८।४ श्लो॰।

प्रतीच्छक त्रि॰ प्रतिगता इच्छा यस्य प्रा॰ब॰ कप्। ग्राहके

प्रतीत त्रि॰ प्रति+इण–क्त। १ख्याते २ज्ञाते अमरः। ३हृष्टे ४सादरे च राजनि॰। ५विश्वदेवगणभेदे पु॰भा॰अनु॰९१अ॰

प्रतीति स्त्री प्रति–इण–भावे क्तिन्। १ज्ञाने २ख्यातौ ३आदरे ४हर्षे च।

प्रतीतोद पु॰ "अर्हं श्राकरमष्टाक्षरमभ्यासवत् तस्य शब्दान् पटादीन् प्रतीतोदा इत्याचक्षते" इत्युक्तेऽर्थे।

प्रतीन्धक पु॰ विदेहदेशे रामा॰ अयो॰ ७१।८ श्लो॰।

प्रतीप त्रि॰ प्रतिगता आपोऽत्र अच्समा॰ नि॰ प्रतिप+इषो॰ वा। १प्रतिकूले चन्द्रवंश्ये २नृपभेदे पु॰ हेमच॰। प्रतिपशब्दे दृश्यम्। ३अलङ्कारभेदे अलङ्कारशब्दे ३८८पृ॰ दृश्यम्। क्रान्ते परेऽन्तोदात्ततास्य वा परनिपात प्रतीकतः क्ततप्रतीप इति वा। स्वार्थे क। ४तत्रार्थे। कर्य्यश्वन्तपुत्रयदोः पुत्रे भाग॰ ९।१४।१२ तत्र प्रतिपक इति पाठान्तरम् तत्रार्थे। तत सुखा॰ अस्त्यर्थे इनि। प्रतीपकिन् तद्युते त्रि॰ स्त्रियां ङीप्। सुखादिपाठात् ततः ठन्मतुपौ न स्तः।

प्रतीपदर्शिन् त्रि॰प्रतीप वामं पश्यति दृश–णिनि। १प्रतिकूलदर्शके स्त्रियां ङीप्। सा च २स्त्रियाम् अमरः।

प्रतीपाश्व पु॰ राजभेदे विष्णुपु॰।

प्रतीर न॰ प्रतीर्य्यते प्र+तीर–क। १तटे तीरे अमरः। २भौत्यमनुपुत्रभेदे मार्क॰पु॰ १००अ॰।

प्रतीवाप पु॰ प्रति+वप–घञ् दीर्घः। १गलितस्वर्णादेरवचूर्णने अमरः। २मेदोपधिभेदे औषधविशेषसंयोगभेदे च "तत्र वीरतर्वादिविधं जलमूषकादि प्रतीवापं पाययेत्" सुश्रुतः। [भाग॰ ५।१५।२

प्रतीह पु॰ भरतवंश्ये सुवर्चलायां जाते परमेष्ठिनः पुत्रभेदे

प्रतुद पु॰ प्र+तुद क। खगभेदे "हारीतो वदत पाण्डुविकयणो हम्मुक। पारावतः खञ्जरीटः पिकाद्याः प्रतुदाः स्मृताः"। "प्रतुद्य भक्षयन्त्येते तुण्डेन प्रतुदास्ततः" "प्रतुदा मधुरा पित्तकफनाःस्तुवरा हिमाः। अपयो भ्रमदवस्था किंचिद्वातकराः स्मृताः" भावप्र॰।

प्रतूर्त्त त्रि॰प्र+तूर-वेगे क्त। १प्रकृष्टवेगान्विते भावे क्त। २प्रकृष्टवेगे न॰। ततो गोपदादि॰मत्वर्थे वुन्। प्रतूर्त्तक तद्युते त्रि॰

प्रतूलिका स्त्री प्रकृष्ट तूलमत्र कप् कापि अत इत्त्वम् (तोषक) शय्याभेदे काशी॰७अ॰। [निद्रयके (चाबुक) अमरः।

प्रतोद पु॰ प्रतुद्यतेऽनेन प्र+तुद–करणे घञ्। अश्वादिताड॰

प्रतोली स्त्री प्र+तुल–अच् गौरा॰ङीष्। १रथ्यायाम् २पुराभ्यन्तरवर्त्मनि अमरः हट्टादौ निर्मिते ३पथि च भरतः।

प्रतोष पु॰प्र+तुष–भावे घञ्। १सन्तोषे प्रकृष्टस्तोषोऽस्य प्रा॰ब॰। २सन्तोषयुते त्रि॰। ३स्वायम्भुवमनोः पुत्रभेदे पु॰ भाग॰ ४।१।७ श्लो॰। [पुराणनामसु निघण्टुः।

प्रत्न त्रि॰ पुराणार्थे प्र+भवार्थे त्न। १पुरातने अमरः।

प्रत्यंशु त्रि॰प्रतिगतोंऽशुम् अत्या॰स॰। १प्राप्तांशुके। तत्पुरुषे अव्या॰ अन्तोदात्ततास्य। प्रतिगतोऽशुर्येन प्रा॰ब॰। २प्रतिगतांशुके त्रि॰ तत्पुरुषे इत्युक्तेः बहुव्रीहौ नान्तोदात्तता।

प्रत्यक्चेतन पु॰प्रतीपं विपरीतमञ्चति जानाति प्रति+अन्च॰ क्विप् कर्म॰। १सांख्यमतसिद्धे पुरुषे। "ततः प्रत्यक्चेतनाधिगमः अन्तरायाभावश्च" योगसू॰ भाष्यम्। प्रत्येकम् अञ्चति अनुते कर्म॰। सर्वस्य २अन्तरात्मनि परमेश्वरे तदभिन्ने ३जीवे च प्रत्यक्शब्दे दृश्यम्। [अमरः

प्रत्यक्पर्णी स्त्री प्रत्यञ्चि पर्णान्यस्याः ङीप्। १अपामार्गे

प्रत्यक्पुष्पी स्त्री प्रत्यक् पुष्पमस्याः ङीप्। अपामार्गे अमरः

प्रत्यक्श्रेणी स्त्री प्रतीची श्रेणीव अस्याः समासान्तविधेरनित्यत्वात् न कप्। १दन्तीवृक्षे २मूषिकपर्ण्याञ्च अमर।

प्रत्यक्ष अव्य॰ अक्ष्णः समीपम् "लक्षणेनाभिप्रती" पा॰ लक्षणार्थे प्रतिनाऽव्ययी॰ शरदा॰ अच्समा॰ अधिगन्तेन इन्द्रियमात्रम् लक्ष्यते। १इन्द्रियलक्षणे ततोऽस्त्यर्थे अच्। २इन्द्रियसन्निकर्षजन्ये ज्ञाने न॰। इन्द्रियाणाञ्च ज्ञानकरणत्व प्रत्येव सन्निकर्षद्वारा हेतुत्वात् तथात्वम्। ततः अस्त्यर्थे पुनः अर्श आद्यच्। ३प्रत्यक्षविषये त्रि॰। प्रत्यक्षत्वं च ज्ञानत्वव्याप्यजातिविशेष तल्लक्षणन्तु इन्द्रियार्थसन्निकर्षोत्पन्नज्ञानत्वमिति नैयायिकाः। अधिकमपरोक्षशब्दे २३५ पृ॰ दृष्टशब्दे च १६७२ पृ॰ दृश्यम्। वेदान्तमते तल्लक्षणन्तु "तत्तदिन्द्रिययोग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्। स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वशून्यत्वे सति वर्त्तमानयोग्यत्वं विषयस्य प्रत्यक्षत्वम्" वेदा॰प॰। तच्च लौकिकालौकिकभेदात् द्विधा।

**प्रत्यक्षदर्शिन्** त्रि॰ प्रत्यक्षेण पश्यति दृश–णिनि। साक्षिणि साक्षाद्दर्शिनि शब्दमाला। णिनि। प्रत्यक्षदर्शिन् तत्रार्थे त्रि॰ स्त्रियां ङीप्।

**प्रत्यक्षलवण** न॰ प्रत्यक्षं पृथक्तयोपलभ्यमानं लवणम्। पाकनिष्पत्त्युत्तरं व्यञ्जनादौ दीयमानलवणे। तस्य श्राद्धे वर्ज्यतोक्ता यथा श्रा॰त॰ ब्रह्मपु॰ “पिष्टाः कृताश्च ये भक्ष्याः प्रत्यक्षलवणीकृताः” श्राद्धे तस्य वर्ज्यतोक्ता “पिष्टा कृताः सिद्धग्रुत्तरकालं प्रत्यक्षलवणप्रक्षेपकृता” श्रा॰त॰ रघु॰। तत्रैव विष्णुना श्राद्धवर्ज्येषु “आरनालस्यैव नियोसाः प्रत्यक्षलवणानि च” इत्युक्तम्। शु॰त॰ ब्रह्मपु॰ “सैन्धवं लवणं चैव यच्च सामुद्रकं भवेत्। पवित्रे परमे ह्येते प्रत्यक्षेऽपि च नित्यशः”। “पृथक्तयोपलभ्यमानं लवणं प्रत्यक्षलवणं न तु व्यञ्जनादिसंस्कारकं संस्कारप्रत्यक्षयोर्भेदात्” शु॰त॰रघु॰। वस्तुतः सैन्धवादेरपि प्रत्यक्षलवणत्वेऽभक्ष्यता आर्द्रकादियोगे प्रतिप्रसवः न तु सिद्धग्रुत्तरकालप्रक्षेपेऽपि प्रतिप्रसवः। अतः सिद्धग्रुत्तरकाल लवणमात्रस्यैव प्रक्षेपे सर्वत्र भक्षणे दाने च निषेध इति बोध्यम्।

**प्रत्यक्षवादिन्** पु॰प्रत्यक्षमेव प्रमाणतया वदति वद–णिनि। चार्वाके चार्वाकशब्दे २९२१पृ॰ दृश्यम्।

**प्रत्यक्षिन्** त्रि॰ प्रत्यक्षमस्त्यस्य इनि। १साक्षाद्द्रष्टरि अक्ष्णं द्रष्टार्थे त्रिका॰ स्त्रियां ङीप्।

**प्रत्यक्स्रोतस्** पु॰ प्रत्यक् प्रतीचीगामि स्रोतो यस्य। १पश्चिमदिग्वाहिनि नदे “प्राक्स्रोतसो नद्यः प्रत्यक्स्रोतसो नदा नर्मदा विना” माघ ४।६६ श्लो॰ व्याख्यायां मल्लिनाथधृतवाक्यम्। २नर्म्मदायां स्त्री मा॰ व॰ ८८अ॰। प्रतीचि प्रत्यगात्मनि स्रोतश्चित्तप्रवाहोऽस्य। प्रत्यगात्मैकप्रवणचित्तवृत्तियुते ३यतिभेदे पु॰।

**प्रत्यगात्मन्** प्रतीचो जीवस्यात्मा स्वरूपम्। १परमेश्वरे ब्रह्मचैतन्ये भागव॰१।२४।४५ श्रीधरः। “कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्” कठो॰ भाष्ये तु अन्यथोक्तं यथा “प्रत्यक् चासावात्मा चेति प्रत्यगात्मा प्रतीच्येवात्मशब्दो रूढो लोके नान्यस्मिन् व्युत्पत्तिपक्षेऽपि तत्रैवात्मशब्दो वर्त्तते। “यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्त्यते” इत्यात्मशब्दव्युत्पत्तिस्मरणात्। तं प्रत्यगात्मानं स्वस्वभावमैक्षत् पश्यतीत्यर्थः” “स्वस्वभाव स्वस्वरूपमित्यर्थः” आनन्दगिरिः।

**प्रत्यगाशापति** पु॰ ६त॰। पश्चिमदिक्पाले वरुणे हलायुधः

**प्रत्यगुदच्** स्त्री प्रतीच्या उदीच्याश्च अन्तराला दिक् ब॰ब॰। पश्चिमोत्तरदिशोरन्तरालायां विदिशि वायुकोणे आश्व॰ श्रौ॰ २।६।४।

**प्रत्यग्र** त्रि॰ प्रतिगतमग्रमत्वम् अत्या॰स॰। १नूतने २शोधिते च अमरः। उपचरिचरन्तवंश्ये ३कुरुपुत्रे नृपभेदे पु॰ भाग॰ ९।२२।४

**प्रत्यग्रथ** पु॰ अहिच्छत्रदेशे हेमच॰। तत्र भवः तस्य राजा वा “साल्वावयवप्रत्यग्रथकालकूटाश्मकादिञ्” पा॰ इञ्। प्रात्यग्रथि तत्र भवे तद्भूपे च।

**प्रत्यग्रह** पु॰ चेदिदेशराजे नृपभेदे मा॰आ॰ ६३अ॰।

**प्रत्यङ्ग** न॰प्रतिगतमङ्गम् अत्या॰स॰। अङ्गानुगताङ्गभेदे अङ्गस्याङ्गभेदे कर्णादौ “तत्राङ्गाभ्यन्तराश्रिताङ्गविशेषैरपि तदवयवाः प्रत्यङ्गानि” सुश्रुत। अङ्गशब्दे ७२पृ॰ दृश्यम्। [भेदे हरिव॰ ३अ॰।

**प्रत्यङ्गिरस्** पु॰ चाक्षुषमन्वन्तरे आङ्गिरसे सप्तर्षिमध्ये ऋषि-

**प्रत्यङ्गिरा** स्त्री देवीभेदे “अथ प्रत्यङ्गिरा वक्ष्ये परकृत्याविनाशिनीम्” इत्यादिना मन्त्रमहोदधौ दतरङ्गे तत्प्रयोग उक्तः।

**प्रत्यङ्मुख** त्रि॰ प्रत्यङ् मुखं यस्य। पश्चिमाभिमुखे “श्रिय प्रत्यङ्मुखो भुङ्क्ते” मनुना तन्मुखभोजने श्रीलाभफलमुक्तम्। कर्म्मविशेषे सायंसन्ध्यावन्दने च तन्मुखता विहिता स्मृतौ दृश्या।

**प्रत्यच्(ञ्च्)** पु॰ प्रत्यञ्चति अञ्च–क्विप् क्विन् वा। १आत्मनि प्रत्यगात्मन्शब्दे दृश्यम्।२पश्चिमे देशे ३काले च ४पश्चिमायां दिशि स्त्री ङीप् भत्वे अलोपे दीर्घः प्रतीची। एवं शसादावपि प्रतीच. प्रतीचेत्यादि। क्विनि तु नलोपाभावात् न तथा प्रत्यञ्चः प्रत्यञ्चा इति। ततः सप्तम्यर्थे अस्ति तस्य लोपः। प्रत्यक् पञ्चम्यर्थेऽस्तौ पश्चिमदिग्देशकालादौ अव्य॰। [सुश्रुत।

**प्रत्यञ्जन** न॰ प्रतिरूपमनुरूपमञ्जनं प्रा॰स॰। अनुरूपाञ्जने

**प्रत्यनन्तर** त्रि॰ प्रतिप्राप्तमनन्तरम् अत्या॰स॰। प्रत्यासन्ने संनिकृष्टे मनुः १०,८०।

**प्रत्यनीक** पु॰प्रतिकूलमनीकं यस्य प्रा॰ब॰। १रिपौ २विघ्ने च हेम॰ उपचारात् ३प्रतिवादिनि ४अलङ्कारभेदे न॰ अलङ्कारशब्दे ४०१ पृ॰ दृश्यम्।

**प्रत्यनुमान** न॰ प्रतिरूपमनुमानं प्रा॰त॰। प्रतीपानुमाने यथा पर्वतो वह्निमान् धूमादिति वादिनोक्ते पर्वतो वह्न्यभा-

स्मात् पाषाणमयत्वादिति" प्रतिवादिन प्रतिपक्षानुमानम् ।

**प्रत्यन्त** पु० प्रतिगतोऽन्तम् अत्या०स० । १म्लेच्छदेशे २सन्निकृष्टे त्रि० अमरः । [पर्स्से पर्वते हेमच०।

**प्रत्यन्तपर्वत** पु० प्रत्यन्तं सन्निकृष्टः पर्वतः । क्षुद्रपर्वतसमी-

**प्रत्यभिज्ञा** स्त्री प्रतिगता अभिज्ञाम् अत्या०स० । १अभिज्ञातुल्ये तज्जन्यसंस्कारसहकारेण जनिते प्रत्यक्षभेदे यथा सोऽयं देवदत्त इत्यादि । तत्स्वरूपादिकं विवरणप्रमेयसंग्रहे निर्णीतं यथा

"ननु केयं प्रत्यभिज्ञा नाम न तावदेकस्यातीतवर्त्तमानकालद्वयसम्बन्धविषयं प्रत्यक्षज्ञानं प्रत्यभिज्ञा, प्रत्यक्षज्ञानस्य वर्त्तमानमात्रार्थग्राहित्वात् । पूर्वानुभवसंस्कारसहितादिदानीन्तनवस्तुप्रभितिकारणाज्जातस्य तस्य तथात्वमिति चेत् एवमप्यात्मनि सोऽहमिति प्रत्यभिज्ञा न सिध्येत् नित्ये स्वयम्प्रकाशे तस्मिन् संस्कारस्य जन्यज्ञानस्य चाऽसम्भवात् । नापि स्वरूपज्ञानमेव प्रत्यभिज्ञा-तस्य प्रदीपप्रभावत् वर्त्तमानार्थप्रकाशिनः पूर्वापरपरामर्शात्मकत्वायोगात्, अथ मन्यते तु सोऽहमित्याकारद्वयोपप्लुतं ज्ञानद्वयमेतच्च प्रत्यभिज्ञा। तस्मादनया दुर्निरूपया प्रत्यभिज्ञया कथमैक्यसिद्धिः । उच्यते । केवले चिदात्मनि जन्यज्ञानतत्संस्कारयोरसम्भवेऽप्यन्तःकरणविशिष्टे तत्सम्भवादुक्ता प्रत्यभिज्ञा किं न स्यात् । न च विशिष्टस्य प्रत्यभिज्ञाविषयत्वे तस्यैव प्रत्यभिज्ञातृत्वमपीति कर्मकर्तृविरोधः शङ्कनीयः, सर्वघादिनां देहव्यतिरिक्तात्मानुमानविषयतयात्मनि कर्मकर्तृभावस्य संप्रतिपन्नत्वात् । अथ मतं नानुमानादौ विषयस्य कर्मकारकत्वम् अतीतादेरनुमाने विषयस्याविद्यमानस्य ज्ञानजनकत्वायोगात् विषयत्वन्तु विद्यमानस्यापि कथञ्चित् सम्भविष्यति ज्ञानस्य तदाकारत्वात् अतोऽनुमानादौ कर्तृत्वमेवात्मनः, प्रत्यक्षे तु विषयस्य ज्ञानजनकतया कर्मकारकत्वम् अतो विरोधस्तदवस्थ इति नैवम् अन्तःकरणविशिष्टतयैवात्मनः प्रत्यभिज्ञातृत्व पूर्वापरकालविशिष्टतया च प्रत्यभिज्ञेयत्वमित्युपाधिभेदेनाविरोधात् । किमेतावता प्रयासेन प्रत्यभिज्ञैव मा भूदिति चेत् न, सोऽहमिति प्रत्यभिज्ञायाः स्वानुभवसिद्धत्वात् अविसंवादित्वेन च भ्रान्तित्वायोगात् । यदुक्तं सोऽहमित्याकारद्वयोपप्लुतं ज्ञानद्वयमिति तदसत् तथ सति विनाशं क्षणिकमित्यत्रापि ज्ञानद्वयप्रसङ्गेन विज्ञानस्य क्षणिकत्वासिद्धिप्रसङ्गात् । विज्ञानमात्रवादिना क्षणिकत्वादिधर्मो बलात्त्याज्य इति चेत् तर्हि स्थायित्वादिधर्मोऽप बालतया उपादीयन्तां सोऽहमित्याद्यनुभवानुसारित्वात् । यत्तु प्राभाकरा मन्यन्ते सोऽहमितिप्रत्यभिज्ञाया विषयत्वेनाश्रयोनात्मा सिध्यति किं तर्हि सोऽयं घट इत्यादि प्रत्यभिज्ञाश्रयत्वेनेति, तदयुक्तं पूर्वापरकालविशिष्टस्य क्षणमात्रवृत्तिप्रत्यभिज्ञाश्रयत्वासम्भवेन प्रत्यभिज्ञया स्थायित्वासिद्धिप्रसङ्गात् । अथ मतं मम संवेदनं जातमिति इदानीमनुस्मर्यमाणा पूर्वकालीना घटादिसंवित् स्वाश्रयं तदानीन्तनमात्मानं साधयति स्मृतिश्च स्वाश्रयमिदानीन्तनमात्मानं साधयति ततश्च स्थाय्यात्मसिद्धिः न पुनरप्रमाणिकं सोऽहमित्यात्मविषयकं प्रत्यभिज्ञानं किञ्चित् कल्पनीयमिति चेत् नैतत् सारम् स्मृतिपूर्वानुभवौ ह्यभिज्ञाद्वयवत्तत्कालीनमात्मानं यद्यपि साधयतः तथाप्येकस्यात्मनः कालद्वयसम्बन्धो न केनापि सिध्यति । संविद्द्वयमेव सम्बन्धस्यापि साधकमिति चेत् तर्हि तथैव घटादिष्वपि स्थायित्वसिद्धौ तत्सिद्धये प्रत्यभिज्ञा नापेक्ष्येत । दृढार्थं प्रत्यभिज्ञेति चेत् एवमपि प्रकृते संविद्द्वयं किं साक्षात्सम्बन्धस्य साधकमुत प्रत्यभिज्ञाद्वारा, आद्ये न तावदेकैकं तत्साधकम् एकैकस्य कालद्वयविशिष्टात्मन्यनाश्रितत्वात् नापि उभयं तत्साधकम्, अतीतानुभवस्य वर्त्तमानस्मृतेश्च यौगपद्यायोगात् । द्वितीये स्थाय्यात्मविषयं सोऽहमिति प्रत्यभिज्ञानं त्वयैवाङ्गीकृतं स्यात् । न च वाच्यं कदाचिदपि न ज्ञानविषयत्वमात्मनस्तत्कथं प्रत्यभिज्ञाविषयत्वमिति । मम संवेदनं जातमिति स्मृतिज्ञानविषयत्वात् यद्यप्यनेन स्मृतिज्ञानेन स्वोत्पत्तिकालीन आत्मा स्वाश्रयत्वेनैव प्रकाश्यते न विषयत्वेन तथापि स्मर्यमाणसंवेदनाश्रयभूतस्तत्संवेदनकालीन आत्मा विषयीक्रियत एव । अथोच्यते स्मृत्या संवेदनमेव विषयीक्रियते तच्च संवेदनं स्मृतं सत् स्वाश्रयमात्मानमाश्रयत्वेनैव प्रत्यायिष्यतीति तदसत् स्मृतिकाले संवेदनस्याविद्यमानस्य स्वाश्रयसाधकत्वायोगात् । स्वयंप्रकाशमानं हि संवेदनमाश्रयं साधयति न तु स्मृतिविषयतया परप्रकाश्यम् अन्यथा घटादीनामपि परतः सिद्धानां स्वाश्रयात्मसाधकत्वप्रसङ्गात् । तस्मादतीतकालीन आत्मा स्मृतिविषय एवेत्यभ्युपेयम् । तथा च सोऽहमिति प्रत्यभिज्ञाप्यात्मानं विषयीकरिष्यतीति प्राभाकरैरप्यात्मविषयप्रत्यभिज्ञयैव स्थिरात्मना क्षणिकत्वं निराकरणीयम्" ।

**प्रत्यभिज्ञादर्शन** न० प्रत्यभिज्ञायाः दर्शनम् शास्त्रम् । माहे-

श्वरशास्त्रभेदे तन्मतं च सर्वदर्शनसंग्रहे दर्शितं यथा "अपेक्षाविहीनानां जडानां कारणत्वं दुष्प्रतीत्य-परितुष्यन्तो मतान्तरमन्विष्यन्तः परमेश्वरेच्छावशादेव जगन्निर्माणं परिघुष्यन्तः स्वसंवेदनोपपत्त्यागमसिद्धप्रत्य-गात्मतादात्म्यो, नानाविधप्रमातृप्रमेयादिभेदाभेदशाली पर-मेश्वरोऽनन्यमुखप्रेक्षित्वलक्षणस्वातन्त्र्यभाक् स्वात्मदर्पणे भावान् प्रतिबिम्बवदवभासयेदिति भणन्तो बाह्याभ्यन्तर-चर्याप्राणायामादिक्लेशप्रयासकलावैधुर्येण सर्वसुलभ-मभिनवं प्रत्यभिज्ञामात्रं परापरसिद्ध्युपायमभ्युपगच्छन्त परे माहेश्वराः प्रत्यभिज्ञाशास्त्रमभ्यस्यन्ति। तस्येयत्तापि न्यरूपि परीक्षकैः "सूत्रं वृत्तिविवृतिर्लघ्वी बृहतीत्युभे विमर्शिन्यौ। प्रकरणविवरणपञ्चकमिति शास्त्रं प्रत्यभि-ज्ञायाः" तत्रेदं प्रथमं सूत्रम्। "कथञ्चिदासाद्य महे-श्वरस्य दास्यं जनस्याप्युपकारमिच्छन्। समस्त-सम्पत्समवाप्तिहेतुं तत्प्रत्यभिज्ञामुपपादयामि" इति। कथञ्चिदिति परमेश्वराभिन्नगुरुचरणारविन्दयुगलसमा-राधनेन परमेश्वरघटितेनेत्यर्थः आसाद्येति आ सम-न्तात् परिपूर्णतया सादयित्वा स्वात्मोपभोग्यतां निरर्गलां गमयित्वा तदनेन विदितवेद्यत्वेन परार्थशास्त्रकरणेऽधि-कारो दर्शितः अन्यथा प्रतारणमेव प्रसज्येत्। मायोत्तीर्णा अपि महामायाधिकृता विष्णुविरिञ्च्याद्या यदीयैश्वर्य-लेशेनेश्वरीभूताः स भगवाननवच्छिन्नप्रकाशानन्दस्वातन्त्र्य-परमार्थो महेश्वरः तस्य दास्यं दीयतेऽस्मै स्वामिना सर्वं यथाभिलषितमिति दासः परमेश्वरस्वरूपस्वातन्त्र्यपात्रमि-त्यर्थः। जनशब्देनाधिकारिविषयनियमाभावः प्रादर्शि। यस्य यस्य हीदं स्वरूपकथनं तस्य तस्य महाफलं भवति प्रधानस्यैव परमार्थफलत्वात्। तथोपदिष्टं शिवदृष्टौ परमगुरुभिर्भगवत्सोमानन्दनाथपादैः "एकवारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः। ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना। करणेन नास्ति कृत्यं क्वापि भावनयापि वा। ज्ञाते सुवर्णे करणं भावनां वा परित्यजेत्" इति। अपिशब्देन स्वात्मनस्तदभिन्नतामाविष्कुर्वता पूर्णत्वेन स्वात्मनि परार्थसम्पत्त्यतिरिक्तप्रयोजनान्तरावकाशस्य परा-कृतः। परार्थश्च प्रयोजनं भवत्येव तल्लक्षणयोगात् न ह्ययं दैवशापः, स्वार्थ एव प्रयोजनं न परार्थ इति। अत एवोक्तमक्षपादेन "यमर्थमधिकृत्य प्रवर्त्तते तत्प्रयो-जनम्" इति। उपशब्दः सामीप्यार्थः तेन जनस्य पर-मेश्वरसमीपताकरणमात्रं फलम् अत एवाह समस्तेति परमेश्वरतालाभे हि सर्वाः सम्पदस्तन्निष्यन्दमय्य स-म्पन्ना एव रोहणलाभे रत्नसम्पद इव। एवं परमेश्वरतालाभे किमन्यत् प्रार्थनीयम्। तदुक्तमुत्पला-चार्य्यैः "भक्तिलक्ष्मीसमृद्धानां किमन्यदुपयाचितम्। एतया वा दरिद्राणां किमन्यदुपयाचितम्" इति। इत्थं षष्ठीसमासपक्षे प्रयोजनं निर्दिष्टम्। बहुव्रीहिपक्षे-तूपायः समस्तस्य बाह्याभ्यन्तरस्य नित्यसुखादेर्या सम्पत्-सिद्धिः तथात्मप्रकाशः तस्या समवाप्तिर्यस्याः प्रत्यभि-ज्ञाया हेतो सा तथोक्ता तस्य महेश्वरस्य प्रत्यभिज्ञा प्रति-सन्धानाभिमुख्येन ज्ञानम्। लोके हि स एवायं चैत्र इति प्रतिसन्धानेनाभिमुखीभूते वस्तुनि ज्ञानं प्रत्यभिज्ञेति व्यव-ह्रियते इहापि प्रसिद्धपुराणसिद्धागमानुमानादिज्ञात-परिपूर्णशक्तिके परमेश्वरे सति स्वात्मन्यभिमुखीभूते तच्छक्तिप्रतिसन्धानेन ज्ञानमुदेति नूनं स एवेश्वरोऽह-मिति। तामेतां प्रत्यभिज्ञामुपपादयामि उपपन्नां स-म्पादयामीति तत्सम्भवाभावरूपेण प्रयोजनव्यापारेण सम्पा-दयामीत्यर्थः। यदीश्वरस्वभाव एवात्मा प्रकाशते तर्हि किमनेन प्रत्यभिज्ञाप्रदर्शनप्रयासेनेति चेत् तत्राय समाधि स्वप्रकाशतया सततमवभासमानेऽप्यात्मनि मायावशात् भागेन न प्रकाशते पूर्णतावभाससिद्धये दृक्क्रियात्मकशक्त्या-विष्करणेन प्रत्यभिज्ञा प्रदर्श्यते। तथा च प्रयोगः अय-मात्मा परमेश्वरो भवितुमर्हति ज्ञानक्रियाशक्तिमत्त्वात् यो यावति ज्ञाता कर्त्ता च स तावतीश्वरः प्रसिद्धेश्वर-वत् राजवद्वा आत्मा च विश्वज्ञाता कर्त्ता च तस्मादी-श्वरोऽयमिति अवयवपञ्चकस्याश्रयणं मायावादेन नैया-यिकमतस्य कक्षीकारात्। तदुक्तमुदयकरसूनुना "कर्त्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे। अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः। किन्तु मोहवशादस्मिन् दृष्टेऽप्यनुपलक्षिते। शक्त्याविष्करणेनेयं प्रत्यभिज्ञोप-दर्श्यते"। तथा हि "सर्वेषामिह भूतानां प्रतिष्ठा जीवदाश्रया। ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतम्। तत्र ज्ञानं स्वतः सिद्धं क्रिया कायाश्रिता सती। परैरप्युपलक्ष्येत तयाऽन्यज्ज्ञानमुच्यते" इति। "या चैषा प्रतिभा तत्तत्पदार्थक्रमरूपिता। अक्रमानन्द-चिद्रूपः प्रमाता स महेश्वरः" इति च। सोमानन्द-नाथपादैरपि "सदा शिवात्मना वेत्ति सदा वेत्ति मदा-त्मना" इत्यादि। ज्ञानाधिकारपरिसमाप्तावपि "तदैक्येन विना नास्ति संविदां लोकपद्धतिः। प्रकाशैक्यात्तदेकत्वं

नियमो न त्वेवं यवनृगवादिष्विति”। यत्र द्वयोरव्यभिचारेणान्वयव्यतिरेकाभ्यां, नियमः अर्थप्रतीतिनियमस्तयोः प्रकृतिप्रत्यययोः शक्तिकल्पनम्। यत्र चैवं न नियमस्तत्र यवनृगवादिषु नेत्यस्मोदन्त्या शक्तिकल्पनमेत्यर्थः”। ११विष्णौ पु० “प्रत्यय सर्वदर्शन” विष्णुस०। तस्य ज्ञानरूपत्वात् तथात्वम् भाष्ये दृश्यम्। प्रत्ययस्य बुद्धिरात्मगुण इति नैयायिकाः। सत्त्वधर्म इति सांख्याः। “एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टीनाम्” सां०का०। “प्रतीयतेऽनेनेति प्रत्ययो बुद्धिस्तस्य सर्गः तत्र विपर्ययोऽज्ञानमविद्या सा बुद्धिधर्मः अशक्तिरपि करणवैकल्यहेतुका बुद्धिधर्म एव तुष्टिसिद्धी अपि वक्ष्यमाणे बुद्धिधर्मावेव, तत्र विपर्ययाशक्तितुष्टिषु यथायोगमन्तर्भावः धर्मादीनां ज्ञानवर्जमन्तर्भावः सिद्धौ च ज्ञानस्येति” त०कौ०। कटभिन्दितो भावो द्रव्यवत् प्रकाशते” इति न्यायात् सर्गपदं सृज्यमानपरं तदा चाविद्यादेर्बुद्धिधर्मत्वात् तत्सृष्टत्वम्।

**प्रत्ययकारिन्** त्रि०प्रत्ययं करोति कृ-णिनि। १विश्वासकारके स्वमतलक्षके २मुद्राभेदे(मोहर)त्रिका०। (स्त्री) ङीप् अमरः।

**प्रत्ययित** त्रि० प्रति+अय-क्त। १आप्ते २विश्वस्ते ३प्रतिगते

**प्रत्यरा** स्त्री प्रतिनिहिता अरा प्रा०स०। अरादाढ्र्याय उपनिहिते कीलके “शताङ्गीरं विंशतिप्रत्यराभिः” श्वेताश्व०उ० “पूर्वोक्तानामराणां दाढ्र्याय ये प्रतिविधीयन्ते कीलकास्ते प्रत्यरा इत्युच्यन्ते” भाष्ये उक्तम्।

**प्रत्यरि** पु०प्रति+ऋ-इन्। १शत्रौ २जन्मताराात पञ्चमचतुर्दशत्रयोविंशतितारके “जन्म सम्पद्विपत् क्षेम प्रत्यरिः साधकोवधः। मित्रं परममित्रं च जन्मर्क्षात्तु त्रिधा पुनः” ज्यो०त०। “तारा पुनः पापाख्या त्रिविधा पञ्चचतुर्दशत्रिंशतिस्त्रियुता। सिद्धिफला हानिकरी विनाशसञ्ज्ञा क्रमात् कथिता” ज्यो०त०। तेन तृतीयस्यैव विशेषत आवश्यककार्यादौ निषेधात् त्याज्यता आद्ययोर्द्वयोस्तु प्रतिप्रसवः इति द्रष्टव्यम् “प्रत्यरौ लवणं दद्यादिति” दानमपि तृतीयप्रत्यरावेवेति विवेचनीयम्।

**प्रत्यर्थिन्** त्रि० प्रत्यर्थ्यते प्रति+अर्थ-पीडने णिनि। १शत्रौ अमरः। प्रतिकूलमर्थयते णिनि, प्रतिपक्ष अर्थिन० प्रा० स० वा। व्यवहारे २प्रतिवादिनि शब्दर०। “प्रत्यर्थिनोऽग्रतो लेख्यं प्रतिज्ञातार्थसाधनम्” या०।

**प्रत्यर्पण** न० प्रति+ऋ-णिच्-पुक्-ल्युट्। प्रतिदाने गृहीतस्य धनादेः पुनर्दाने प्रतिसमर्पणे।

**प्रत्यवनेजन** न० प्रतिरूपमवनेजनम् प्रा०स०। श्राद्धाङ्गे पञ्चकृत्यादिदानरूपानुरूपे पिण्डोपरि क्रियमाणे पुनरवनेजने तच्च छन्दोगेतरपरं यथोक्तम् “छन्दोगानान्तु पिण्डदानप्रक्षालनेन पूर्वदवनेजनम्। यथा छन्दोगपरिशिष्ट “तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्” अन्याव नेजयेदिति स्मृतेर्द्वितीयावनेजनेऽपि अवनेनिक्ष्वेति वक्तव्यं न तु प्रत्यवनेनिक्ष्वेति” श्रा०त० रघु०।

**प्रत्यवमर्श** पु० प्रति+अव-मृश-भावे घञ्। अनुसन्धाने “स्मृतिः प्रत्यवमर्शश्च तेषां जात्यन्तरेऽभवत्” हरिवं० २१अ०

**प्रत्यवमर्ष** पु० प्रति+अव+मृष-क्षान्तौ भावे घञ्। सहने “स्वल्पसङ्करः सपरिहारः सप्रत्यवमर्षः” पञ्चशिखाचार्यः। “स्वल्पसङ्करः ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य स्वल्पेन पशुहिंसादिजन्मनाऽनर्थहेतुना अपूर्वेण सङ्करः, सपरिहारः कियतापि प्रायश्चित्तेन परिहर्तुं शक्यः। अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्मविपाकसमये च पच्यते तथापि यावदसावनर्थं सूते तावत् सप्रत्यवमर्षः प्रत्यवमर्षेण सहिष्णुतया सह वर्त्तत इति सम्पन्ने हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहनः कुशला पापमात्रोपपादितां दुःखवह्निकणिकाम्” त०कौ०। भावे ल्युट्। प्रत्यवमर्षण तत्रार्थे न०।

**प्रत्यवर** त्रि० प्रतिरूपोऽवरः प्रा०स०। अतिनिकृष्टे “प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि। प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः” मनु।

**प्रत्यवरोह** पु० प्रति+अव+रुह-घञ्। (नामा) अवरोहे ल्युट्। प्रत्यवरोहण तत्रार्थे न०।

**प्रत्यवसान** न० प्रति+अव+सो-क्त। भोजने हेमच०।

**प्रत्यवसित** त्रि० प्रति+अव+सो-कर्मणि क्त। भुक्ते अमरः।

**प्रत्यवस्कन्द** पु० प्रति+अव+स्कन्द-करणे घञ्। व्यवहारे उत्तरभेदे उत्तरशब्दे १०६०पृ० दृश्यम्। करणे ल्युट्। प्रत्यवस्कन्दन तत्रार्थे न०।

**प्रत्यवस्था** स्त्री प्रति+अव+स्था-भावे अङ्। १प्रतिपक्षतया अवस्थाने। भावे ल्युट्। प्रत्यवस्थान तत्रार्थे न०। “साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानम्” गौ०त०

**प्रत्यवस्थातृ** त्रि० प्रति+अव+स्था-तृच्। १प्रतिपक्षतया अवस्थातरि प्रतिवादिनि। २शत्रौ हेम०।

**प्रत्यवहार** पु०प्रति+अव-हृ-भावे घञ्। १संहारे रघु ४।४४ २युद्धार्थमुद्युक्तानां दैत्यानां युद्धात् निवारणे भा०व० २८२अ०।

**प्रत्यवाय** पु॰ प्रति+अव+इण–करणे अच्। १पापे "अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते" जाबालि॰। भावे अच्। २वैपरीत्याचरणे मनुः ४।२४५।

**प्रत्यवेक्षण** न॰ प्रति+अव+ईक्ष–भावे ल्युट्। पूर्वापरालोचने २एतावत्कृतमेतावत् न कृतमित्यर्थानुसन्धाने च। प्रति+अव+ईक्ष–भावे अ। प्रत्यवेक्षा तदर्थे स्त्री रघु १७।५२।

**प्रत्यस्तम्** पु॰ प्रतिरूप॰ अस्तम् प्रा॰स॰। गैरिके हेम॰।

**प्रत्यष्ठीला** स्त्री सुश्रुतोक्ते अष्ठीलाख्ये रोगभेदे "अष्ठीलावद्घनं ग्रन्थिमूर्द्धमायतमुन्नतम्। वाताष्ठीलां विजानीयाद्बहिर्मार्गावरोधिनीम्। एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीम्। प्रत्यष्ठीलामिति वदेज्जठरे तिर्य्यगुत्थिताम्"।

**प्रत्याकार** प्रतिगत आकार खड्गाकारो येन प्रा॰ब॰। खड्गकोषे त्रिका॰। [२दूरीकृते अमरः।

**प्रत्याख्यात** त्रि॰ प्रति+आ+ख्या–कर्मणि क्त। १निराकृते

**प्रत्याख्यान** न॰ प्रति+आ+ख्या–भावे ल्युट्। निराकरणे अमरः। [(फिरे आशा) हरिव॰ १२५अ॰।

**प्रत्यागति** स्त्री प्रति+आ+गम–भावे क्तिन्। प्रत्यागमने

**प्रत्यागम** पु॰ प्रति+आ+गम–भावे अप्। (फिरे आशा) स्थानात् गतस्यापि पुनरागमने "तीर्थात् प्रत्यागमेऽपि च" प्रा॰त॰। भावे ल्युट्। प्रत्यागमन तदर्थे न॰।

**प्रत्यादिष्ट** त्रि॰ प्रति+आ+दिश–कर्मणि क्त। निरस्ते अमर॰

**प्रत्यादेश** पु॰प्रति+आ+दिश–भावे घञ्। १निराकरणे अमर॰ भक्तान् प्रति आदेशः। २भक्तान् प्रति अभीष्टसिद्ध्यर्थं देवतादेशे च।

**प्रत्याधान** न॰ प्रतिपक्षा धीयते प्रति+आ+धा–कर्मणि ल्युट्। १स्थाने "यो ह वै शिशुं साधानं प्रत्याधानम्" शत॰ब्रा॰ १४।५।२।१ भाष्यम्। "मस्तकस्य सर्वदेहेष्ववयवेषु आधीयमानत्वात् प्रत्याधानम्"। भावे ल्युट् प्रा॰स॰। २द्वितीयाधाने च॰।

**प्रत्याध्मान** पु॰ वातव्याधिभेदे। तस्य लक्षणमाह "विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम्। प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम्"। विमुक्तपार्श्वहृदय पार्श्वे हृदये च विमुक्ताय जात तदेवाध्मानम्। कफव्याकुलितानिल कफेनानिलस्यावृतत्वात्" भावप्र॰।

**प्रत्यापत्ति** स्त्री प्रति+आ+पद–भावे क्तिन्। १वैराग्ये भा॰ शा॰ २९१ अ॰ नीलकण्ठः। २पुनरागमने च।

**प्रत्याम्नात** त्रि॰ प्रतिरूपतया आम्नायते प्रति+आ+म्ना–कर्मणि ल्युट्। प्रतिनिधौ "यजमानकर्त्तृत्वेन विधीयन्ते प्रत्याम्नानाय कालिनो निवर्त्तन्ते" कात्या॰ श्रौ॰ ११६।१२ पद्धतौ।

**प्रत्याम्नाय** पु॰ प्रतिरूपतया आम्नायते प्रति+आ+म्ना–कर्मणि घञ्। प्रतिनिधित्वेन विधीयमाने।

**प्रत्यायक** त्रि॰प्रति+इ–ण्वुल्। १विश्वासकारके २बोधके च।

**प्रत्यायन** न॰ प्रति+आ+इ–णिच् "णौ गमिरबोधने" पा॰ उक्तेः न गमादेशः भावे ल्युट्। १बोधने २विवाहकरणे भा॰अनु॰१४४८ श्लो॰।

**प्रत्यारम्भ** पु॰ प्रतिरूप आरम्भ प्रा॰स॰। आरम्भात् पर तु आरम्भे गणपतिशब्दे २५६२ पृ॰दृश्यम्।

**प्रत्यालीढ** न॰ धन्विनां युद्धार्थमवस्थितिभेदे आलीढविपरीतरूपतया स्थितौ आलीढशब्दे ८२४ पृ॰ दृश्यम्

**प्रत्यावर्त्तन** न॰ प्रति+आ+वृत–णिच्–वा भावे ल्युट्। १प्रतिनिवृत्तौ २प्रतिनिवारणे च।

**प्रत्याशा** स्त्री किञ्चित् वस्तु प्रति+आशा प्रा॰स॰। किञ्चि दस्तु प्रति वाञ्छायाम्।

**प्रत्याश्राव** पु॰ प्रति+आ+श्रु–णिच्–अच्। १वहिष्ठ श्रावणे कर्मणि अच्। २अस्तुश्रौषडिति मन्त्रे यजु॰१८।२४वेददी॰

**प्रत्याश्रावण** न॰ प्रति+आ+श्रु–णिच् भावे ल्युट्। अग्नीध्रकर्त्तृके अध्वर्युं प्रति मन्त्रविशेषस्य श्रावणे शत॰ब्रा॰ १२।१।८ भाष्ये दृश्यम्। [नार्थमाश्वासने।

**प्रत्याश्वासन** न॰प्रति+आ+श्वस–णिच्–भावे ल्युट्। सान्त्व-

**प्रत्यासत्ति** स्त्री प्रति+आ–सद–भावे क्तिन्। १नैकट्ये न्यायमते २अलौकिकप्रत्यक्षजनके सम्बन्धमात्रे "आसत्तिराश्रयाणान्तु" भाषा॰ "आसत्तिः प्रत्यासत्तिः" सि॰मु॰।

**प्रत्यासन्न** त्रि॰ प्रति+आ+सद–क्त। १अतिनिकटस्थे जटा॰ २सम्बद्धे च।

**प्रत्यास(सा)र** पु॰ प्रति+आ+सृ–आधारे घञ् अप् वा। अवन्तः। १सैन्यपश्चाद्भागे पश्चात् तदर्थे अमरः। यत्र व्यूहस्य पश्चाद्व्यूहान्तरं क्रियते २तदर्थे भरत॰।

**प्रत्यास्वर** पु॰ प्रत्यास्वरति प्रति+आ+स्वृ–अच्। १प्रत्यागते अस्तभावात् पुनः २प्रत्यागते आदित्ये च "स्वर इतीव (प्राणम्) आचक्षते स्वर इति प्रत्यास्वर इति (आदित्यम्) छा॰उ॰। "किञ्च स्वर इतीम प्राणमाचक्षते कथयन्ति तथा स्वर इति प्रत्यास्वर इति चासु मभिसारम्। यस्मात् प्राणः स्वरत्येव न पुनरस्तं प्रत्यागच्छति।

**प्रदक्षिणित्** न॰ प्रदक्षिण+इष्ठो॰। प्रदक्षिणशब्दार्थे ऋ॰१।४१। १। भाष्ये दृश्यम् । [प्रदत्ते प्रकर्षेण दत्ते।

**प्रदत्त** त्रि॰ प्र+दा—कर्मणि क्त वा तादेशाभावे दत्तादः।

**प्रदर** पु॰ प्र+दृ—भावादौ अप्। १भङ्गे दारणसाधने २वाणे अमर॰। ३विदारे ४स्त्रीणां योनिरोगभेदे मेदि॰ तान्न दानकर्म च स्कन्दपुराणोक्तं कर्मविपाकशब्दे १७१६ पृ॰ दर्शितम्। स च असृग्दराख्यः स्त्रीणां योनिरोगभेदः। तल्लक्षणादि माधवनिदाने उक्तं यथा

"विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च। यानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयनाद्दिवा च। असृग्दरं भवेत् सर्वं साङ्गमर्दं सवेदनम्। तस्यातिवृद्धौ दौर्बल्यं भ्रमो मूर्च्छा मदस्तृषा। दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः"। स च चतुर्विधो यथा "तं श्लेष्मपित्तानिलसन्निपातैश्चतुःप्रकारं प्रवदन्ति वैद्याः। आमं सपिच्छाप्रतिमं सपाण्डु पुलाकतोयप्रतिमं कफात्तु। सपीतनीलासितरक्तमुष्णं पित्तार्त्तियुक्तं भृशवेगि पित्तात्। रूक्षारुणं फेनिलमल्पमल्पं वातार्त्ति वातात् पिशितोदकाभम्। सक्षौद्रसर्पिर्हरितालवर्णं मज्जप्रकाशं कुणपं त्रिदोषात्। तच्चाप्यसाध्यं प्रवदन्ति तज्ज्ञा न तत्र कुर्वीत भिषक् चिकित्साम्"।

**प्रदल** पु॰ प्रकर्षेण दलति प्र+दल-अच्। वाणे जटा॰

**प्रदव** पु॰ द्रुनोति दु-अच् "दुन्योरनुपसर्गे" पा॰ अनुपसर्गे इत्युक्तेः न ण। १प्रकृष्टतापके। भावे अप्। २प्रकृष्टतापे पु॰

**प्रदव्य** पु॰ प्रदवाय हितं वा॰ यत्। १दावाग्नौ ज्वाला॰ गौ॰ २५।४।१२ कर्क। [२प्रकृष्टदायके त्रि॰।

**प्रदा** स्त्री प्र+दा—भावे अङ्। प्रकृष्टदाने। कर्त्तरि क।

**प्रदान** न॰ प्र+दा—भावे ल्युट्। प्रकृष्टदाने "प्रदानं वाक्यकारणम्" मनु॰।

**प्रदि** त्रि॰ प्र+दा—"उपसर्गे घोः किः" पा॰ कि। प्रदानकर्त्तरि

**प्रदिग्ध** त्रि॰ प्र+दिह—कर्मणि क्त। १लिप्ते २भर्जनविशेषयुते मांसे न॰ "मांसं जलस्थैर्भृष्टं लिप्ता चोष्णाम्बुना सह। क्षीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते। तदेव घृततक्राढ्यं प्रदिग्धं परिभाषितम्" शब्दच॰।

**प्रदिव्** त्रि॰प्रकर्षेण दीव्यति प्र+दिव—क्विप्। १प्रकर्षेण द्योतमाने ऋ॰ १।१४०। मा॰भ॰। २प्रकृष्टदिने स्त्री ३पूर्वदिने ऋ॰ १।३७।१। ४पुरातने निघण्टुः वेदभा॰।

**प्रदिश्** स्त्री दिशोरन्तराल प्रगता दिक् प्रा॰स॰। विदिशि दिशोरन्तरालदिशि जटा॰।

**प्रदीप** पु॰ प्र+दीप—अच्। दीपे अमरः। दीपशब्दे १६०५ पृ॰ दृश्यम्। तत्र हित॰ अपूपा॰ छ। प्रदीपीय तद्धिते त्रि॰ पक्षे यत्। प्रदीप्य तत्रार्थे

**प्रदीपन** पु॰ प्रदीप्यते प्र+दीप—ल्यु। १स्थावरे २विषभेदे तल्लक्षणं राजनि॰ उक्तं यथा "वर्णतो लोहितो यः स्यात् दीप्तिमान् दहनप्रभः। महादाहकरः पूर्वैः कथितः स प्रदीपनः"। णिच्—ल्यु। ३प्रकाशके त्रि॰।

**प्रदुह्** त्रि॰ प्र+दुह—सत्सूद्विषेत्यादिना क्विप् पा॰ प्रकर्षेण दोग्धरि पदत्वेऽस्य हस्य घत्वे दस्य धः। प्रधुक् प्रधुग् भ्यामित्यादि। [न्यक्कृतमिते देशे १मित्तौ च मेदि॰।

**प्रदेश** पु॰ प्रा॰स॰। १एकदेशमात्रे राजनि॰ २स्थाने तर्ज्ज-

**प्रदेशन** न॰ प्र+दिश -भावादौ ल्युट्। १उपदेशे कर्मणि ल्युट्। २राजादेरुपढौकने उपहारे(भेटि) द्रव्ये अमरः

**प्रदेश(शि)नी** स्त्री प्रदिश्यतेऽनया प्र+दिश-करणे ल्युट् ङीप्। तर्जन्यां तया हि वस्तु निर्दिश्यते। प्रदेशः अङ्गुष्ठादिमध्यस्थानमस्त्यस्य इनि ङीप्। अत्रैव अमर।

**प्रदेह** पु॰ प्र+दिह—भावे घञ्। १प्रलेपे प्रणाशपशमार्थं द्रव्यविशेषस्य प्रणादौ २लेपने सुश्रुत॰।

**प्रदोष** पु॰ प्रक्रान्तो दोषा रात्रिरत्र काले प्रा॰ब॰। रात्रेः प्रथमभागभेदे तिथिभेदस्य प्रदोषेऽनध्यायः ति॰त॰उक्तो यथा "सारस्वतादिप्रदोषमाह स्मृति "त्रयोदश्यां चतुर्थ्यां च सप्तम्यां द्वादशीतिथेः। प्रदोषेऽध्ययनं धीमान् न कुर्वीत यथाक्रमम्। सारस्वतो मायपतः सौरश्च वैष्णवस्तथा" प्रदोषश्चाद्योऽत्र प्रथमप्रहर इति हेमाद्रिः। रात्रिपर इति निर्णयामृतकृत्। तथा व्रतभेदे रात्रिप्रथमयामपरता हेमाद्रौ व्रत॰उक्ता "त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम्। दृष्टेशं प्रथमे यामे मुच्यते सर्वपातकैः"। इद प्रदोषव्रतमिति हेमाद्रि। शिवरात्रिव्रते तु "प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी" हेमाद्रि॰ स्मृतिः। तत्रैव वत्स "प्रदोषोऽस्तमयादूर्द्ध्वं घटिकाद्वयमिष्यते" घटिकाद्वयहयम् "त्रयोदश्यस्तगे सूर्ये चतसृष्वपि नाडिषु। भूतविद्धा तु सा तत्र शिवरात्रिव्रतं चरेत्" ति॰त॰ वायुपु॰ वाक्यैकवाक्यत्वात्। तथा च प्रदोषपदस्य रात्रिमात्रे रात्रेः प्रथमयाम प्रथमदण्डचतुष्टय चार्थः कर्मभेदे तस्य चाद्भुता। तत्रानध्याये घर्द्दरीमात्रपरता प्रदोषव्रते प्रथमयामपरता शिवरात्रिव्रतादौ दण्डचतुष्टयपरतेति विवेक। "प्रदोषोरजनीमुखम्" इत्यमरोक्ति रात्रेः प्रथमप्रहरप्रथमदण्डचतुर-

त्वपरत्वाभिप्रायेण रात्रिमात्रे भक्तत्रेति बोध्यम् ।

**प्रदोषक** त्रि॰ प्रदोषे भवः कालात् ठञ बाधित्वा पूर्वाह्ने त्यादिना वुन् । प्रदोषकालभवे ।

**प्रद्युम्न** पु॰ प्रकृष्टं द्युम्नं बलं यस्य । १कन्दर्पे अमरः । स च वासुदेवस्य रुक्मिण्यां जातः हरिवं॰ ११८अ॰ । सनत्कुमारश्च जातश्च भा॰ आ॰ ६७अ॰ । २वैष्णवागमोक्ते चतुर्व्यूहात्मकविष्णोरंशभेदे च अनिरुद्धशब्दे १६२पृ॰ चतुर्व्यूहशब्दे २८७८ पृ॰ च दृश्यम् । मनोर्नड्वलायां जाते ३पुत्रभेदे पु॰ भाग॰ ४।१३।१४

**प्रद्यो** त्रि॰ प्रगता द्यौर्दिनं यस्य । प्रकृष्टदिने क्लीवत्वे ह्रस्व प्रद्यु तस्य क्लीव एव ह्रस्वत्वेन गत्वेऽपि भाषितपुंस्कत्वाभावात् टाद्यचि न पुंवत् प्रद्युना इत्यादि सि॰कौ॰मुग्ध॰ प्रद्युकाप्रद्युनेत्युदाहृतं तच्चिन्त्यम् । [भा॰स॰ १८अ॰ ।

**प्रद्योत** पु॰ प्र+द्युत–अच् । १रश्मौ हेमा॰ । २यक्षभेदे पु॰

**प्रद्योतन** पु॰ प्र+द्युत–"अनुदात्तेतश्च हलादेः" पा॰ युच् । १सूर्ये हेमा॰ । २द्योतनशीले त्रि॰ । भावे ल्युट् । ३दीप्तौ न॰ ।

**प्रद्रव** पु॰ प्रकृष्टो द्रवः प्रा॰स॰ । पलायने अमरः ।

**प्रद्रावक** त्रि॰ प्र+द्रु–कुत्सितायां गतौ क्त स्वार्थे क । कुत्सितां गतिं प्राप्ते अन्त्यावस्थां प्राप्ते "उपश्लिष्ट चाक्रायण इभ्यग्रामे प्रद्रावक उवास" छा॰उ॰ "प्रद्रावक कुत्सितां गतिं गतोऽन्त्यावस्थां प्राप्त इत्यर्थ" भा॰ ।

**प्रद्राव** पु॰ प्र+"प्रद्रुस्रुस्रुवः" पा॰ अपं बाधित्वा घञ् । पलायने अमरः । ञ्याशादि॰ अन्तोदात्तताच ।

**प्रद्राविन्** त्रि॰ प्र+द्रु–ताच्छील्ये णिनि । पलायनशीले ।

**प्रद्वार** न॰ प्रगतं द्वारं प्रा॰स॰ । द्वारप्रान्तभागे

**प्रधन** न॰ प्र+धा–क्यु । १युद्धे अमरः । प्रकृष्टं धनमस्य । २प्रकृष्टधनयुक्ते त्रि॰ । निघण्टौ सङ्ग्रामनामसु सङ्गमे इत्यत्र प्रधने" पाठान्तरम् । एदन्तमव्ययं तदर्थे ।

**प्रधमन** न॰ प्र+धा॰ धम–ध्माने भावे ल्युट् । सुश्रुतोक्ते मारुतव्यापारभेदे सुश्रुतः ।

**प्रधा** स्त्री प्र+धा–भावे अङ् । १निधाने २दक्षसुतायां कश्यपपत्नीभेदे भा॰आ॰६५अ॰ । प्रधाया अपत्यं ढञ् । प्राधेय तदपत्ये पुंस्त्री॰ । "प्राधेयास्तपसामयाः" मार्क॰ तत्कन्यास्त अलम्बुषादयोऽप्सरसः भा॰आ॰ ६५अ॰।

**प्रधान** न॰ प्र+धा–ल्युट् । साङ्ख्यमतसिद्धायां सत्त्वरजस्तमोरूपगुणत्रयात्मिकायां १प्रकृतौ प्रकृतिशब्दे दृश्यम् । महत्कार्ये २बुद्धितत्त्वे ३परमात्मनि ४प्रज्ञायां ५श्रेष्ठे च । ६सेनापत्यध्यक्षे पु॰ ७श्रेष्ठे त्रि॰ अमरः "सेनाध्यक्षः प्रधानः स्यात्" अस्य पुंस्त्वमिति बोपालित ।

**प्रधानधातु** पु॰ कर्म॰ । चरमधातौ वीर्ये शुक्रे त्रिका॰। शुक्रस्य चरमधातुत्वम् अस्थिशब्दे ५५८पृ॰ उक्तं दृश्यम्

**प्रधि** पु॰ प्रधीयन्ते काष्ठान्यत्र प्र+धा-आधारे कि । चक्रावयवकाष्ठसङ्गमस्थाने रथनाभौ अमरः ।

**प्रधी** त्रि॰ प्रकृष्टा धीर्यस्य । १प्रकृष्टबुद्धियुक्ते प्रा॰स॰। २प्रकृष्टायां बुद्धौ स्त्री । प्रकृष्टं ध्यायति ध्यै–कर्त्तरि क्विप् । ३प्रकृष्टध्यानकर्त्तरि त्रि॰। तत्र तृतीयार्थे गतिपूर्वकत्वात् यण् प्रध्य प्रध्या इत्यादि आद्ययोस्तु प्रगतत्वस्य धात्वर्थं प्रत्येशोपसर्गत्वम् न यण् किन्तु इयङ् । प्रधियौ इत्यादौ चान्यो सि॰कौ॰ तु "वृत्तिकारादीनां मते कर्म्मधारयपूर्वपदान्तरं विनाऽपि स्त्रिया वर्त्तमानस्य नित्यस्त्रीत्वमिति स्वीकारात् लिङ्गान्तरानभिधायक तदिति कैयटमते पुंवद्रूपम् प्रकृष्टा धीरिति विग्रहे तु लक्ष्मीवत् अमि शसि च प्रध्यं प्रध्य इति विशेषः" इत्युक्तम् ।

**प्रधूपित** त्रि॰ प्र+धूप क्त । सन्तापिते "व्यसनप्रधूपिताम्" इति कुमारः । ज्योतिषोक्तायां २सूर्यगन्तव्यायां दिशि स्त्री । तत्र प्रधूमिता इति पाठान्तरम् । [तावस्थायाञ्च ।

**प्रध्वंस** पु॰ प्र+ध्वन्स–भावे घञ् । १नाशे साङ्ख्यमते २अतीत-

**प्रध्वस्त** त्रि॰ प्र+ध्वन्स क्त । १नाशप्रतियोगिनि २अतीते च ३मन्त्रभेदे पु॰ "एकोनविंशत्यर्णो वा यो मन्त्रस्तारसंयुतः । हृल्लेखाङ्कुशबीजाढ्य प्रध्वस्त त प्रचक्षते" तन्त्रसा॰ ।

**प्रनप्तृ** पु॰ प्रगतो नप्तारं अनन्तरत्वात् प्रा॰स॰। पौत्रपुत्रे प्रपौत्रे उज्ज्वलद॰ । [प्रकर्षेण नर्द्दनकर्त्तरि ।

**प्रनर्द्दक** त्रि॰प्र+नर्द्द–ण्वुल् णोपदेशत्वाभावात् न णत्वम् ।

**प्रनष्ट** त्रि॰प्र+नश–क्त षान्तत्वाभावात् न णत्वम् । नाशप्रतियोगिनि "प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत्" मनुः ।

**प्रना(णा)यक** त्रि॰प्रगतो नायकोऽस्य प्रगतत्वस्य नयति प्रति उपसर्गत्वाभावात् न णत्वम् । प्रकृष्टनायकयुक्ते । प्र+नी–ण्वुलि तु णत्वम् । प्रणयकारके इति भेदः ।

**प्रपच** पु॰प्रगतः पचम् अत्या॰सं॰। पचाभे भा॰द्रो॰ २०अ॰।

**प्रपञ्च** पु॰ प्र+पचि–आधारे घञ् । १विस्तारे २वैपरीत्ये ३प्रतारणे । कर्त्तरि पचा॰अच् । ४संसारे च अमरः । तत्र वैपरीत्ये अस्त्री मायायां नेति स्वामी ।

**प्रपञ्चित** प्र+पन्च–णिच्-कर्मणि क्त । १विस्तारिते २प्रतारिते भ्रान्तिज्ञानविषयतया ३सम्पादिते च भाग॰ १०।१४अ॰

**प्रपतन** न॰ प्रपतत्यस्मात् प्र+पत—भीमा॰ अपादाने ल्युट्। १पतनापादाने दृष्टादौ। भावे ल्युट्। प्रकर्षेण २पाते तत्प्रयोजनमस्य छ। प्रपतनीय प्रपातसाधने त्रि॰।

**प्रपथ** पु॰ प्रकृष्टः पन्था॰ प्रकृष्टः पन्था यत्र वा अच्समा॰। १प्रकृष्टमार्गे २तद्युक्ते त्रि॰ ऋ॰१।१६६।१८ [स्त्री राजनि॰।

**प्रपथ्य** त्रि॰ प्रकृष्टं पथ्यं प्रा॰स॰। १अत्यन्तहिते २हरीतक्यां

**प्रपद** न॰ प्रारब्धं पदम् प्रा॰स॰। पादस्याग्रभागे अमरः। प्रपदं व्याप्नोति ख। प्रपदीन पादाग्रव्यापके त्रि॰ आप्रपदीनशब्दे माघः १।१२ दृश्यम्। [इति च भट्टिः।

**प्रपन्न** त्रि॰प्र+पद-क्त। शरणागते "प्रपन्नार्त्तिहरे! देवि!"

**प्रपन्नाड** पु॰ प्रपन्नान् अलति भूषयति अल-अण् उप॰स॰ लस्य डः। १चक्रमर्द्दे रत्नमा॰। तस्य दद्रुरोगिभिः सेवने तेषां रोगनिवारणेन भूषकत्वात्तथात्वम्।

**प्रपा** स्त्री प्रपीयतेऽस्यां प्र+पा-घञर्थे क। पानीयशालायाम्। पानीयशालिकाशब्दे ४१०६ पृ॰ दृश्यम्।

**प्रपाठक** पु॰प्रकृष्ट पाठोऽत्र कप्। १वेदस्याध्यायावभेदे २ग्रन्थान्यांशभेदे च। [तत्रे राजनि॰।

**प्रपाणि** पु॰ प्रकृष्टः पाणिः प्रा॰स॰। करस्याधोभागे पाणि-

**प्रपात** पु॰ प्रपतत्यस्मात् पत-अपा॰घञ्। १तटरहिते २निरवलम्बे ३पर्वतस्थानभेदे अमर॰। ४निर्झरे ५कूले च मेदि॰ यस्मात् पतने अवस्थानाय क्रियाभेदो न भवति तादृशे स्थाने। भावे घञ्। ७अवस्कन्दे हेमच॰।

**प्रपानक** न॰ प्रकृष्टं पानमस्य कप्। अम्लमरिचादिमिश्रिते पानीयद्रव्यभेदे "प्रपानकरसन्यायात्चर्व्यमाणो रसो भवेत्" यथा खण्डमरिचादीनां सम्मेलनादपूर्व इव कश्चिदास्वाद प्रपानकरसे सञ्जायते विभावादिसम्मेलनादिहापि तथेत्यर्थ" सा॰द॰। रसास्वादशब्दे २०८४पृ॰दृश्यम्।

**प्रपापूरणीय** त्रि॰ प्रपापूरण प्रयोजनमस्य "अप्रकरणे विधि पूरियतिरहितक्षतेरनात्" वार्त्ति॰ छ। प्रपापूरणप्रयोजनके। [शब्दमाला।

**प्रपावन** न॰ प्रमेव कामपूरकं वनम्। कामारण्ये वनभेदे

**प्रपितामह** पु॰ प्रगतः पितामहं कार्य्येण अत्या॰स॰। १पितामहपितरि अमरः। तस्य पत्नी ङीप् २प्रपितामही तत्पत्न्यां स्त्री "येन भर्त्रा सह माद्री माता भुङ्क्ते स्वधामयम्। पितामही च स्वेनैव स्वेनैव प्रपितामही" दायभागधृतवचनम्। पितामहस्य प्रजापतिजनकस्य चतुर्मुखब्रह्मण जनके ३परमब्रह्मणि "भूर्भुवः स्वःस्वसारः च पिता प्रपितामहः" विष्णुस॰। "यो वै ब्रह्माणं विदधाति पूर्वम्" श्रुतेस्तस्य पितामहब्रह्मस्रष्टृत्वात्तथात्वम्। "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु बीजमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" मनुना सर्वपितामहस्यापि तेन स्रष्टत्वात्तस्य तथात्वम्।

**प्रपित्वे** अव्य॰ उत्तरायणे निपातः। 

**प्रपुन्नाड(ट)** पु॰ पुमांस नाटयति नडयति नड–भ्रंशे नटअवस्यन्दने वा अण् प्रकृष्ट पुन्नाड॰ (पुन्नाट॰) प्रा॰स॰। १चक्रमर्द्दे (चाकुन्दा) दृक्षे। डस्य लत्वे प्रपुन्नालोऽप्यत्र। २दद्रुमर्द्दने अमरः। पृषो॰ प्रपुनाड (पुपुन्नड) इत्येता अपि तदर्थे अमरे पाठान्तरम्।

**प्रपूरिका** स्त्री प्रकर्षेण पूर्य्यते कण्टकैः पूर–कर्मणि घञ् स्वार्थे क टाप् कापि अत इत्त्वम्। १कण्टकार्य्याम् हेमचन्द्रः २प्रकर्षेण पूरके त्रि॰।

**प्रपूर्वग** पु॰ प्रकृष्टं पूर्वगः पूर्ववर्त्ती प्रा॰स॰। स्रष्टेः प्राग्वर्त्तिनि १परमेश्वरे "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुतेः तस्य तथात्वम्। तद्रूपेण ध्येये २अश्विनीकुमारद्वये द्वि॰व॰। भा॰आ॰३अ॰ अश्विनीकुमारस्तुति।

**प्रपौण्डरीक** पु॰ पुण्डरीक+स्वार्थेऽण् प्रकृष्ट नांटिष पुष्प यस्य। गजमनुष्याणां चक्षुर्हितकारके शालपर्णीसदृशपत्रके क्षुपभेदे अमरः।

**प्रपौण्डरीकाद्य** न॰ "प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः। सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा। सर्वान्मूर्द्धगदान् हन्ति पलितानि च शीलितम्" चक्रपाणिदत्तोक्ते तैलभेदे।

**प्रपौत्र** पु स्त्री॰प्रगतः कारणतया पौत्रम् अत्या॰स॰। पौत्रस्य १पुत्रे तत्कन्यायां स्त्री ङीप्।

**प्रफर्वी** स्त्री प्रकृष्टं पर्व नितम्बस्थानं यस्याः स्त्रियां ङीप् पृषो॰। प्रशस्तनितम्बायां स्त्रियां ऋ॰१०।८५।१२ भा॰। फर्वति गतिकर्मा इति वेददीप॰। २प्रकृष्टगतियुक्ते त्रि॰ यजु॰१२। ७६ वेददीपः।

**प्रफुल्त(ल्ल)** त्रि॰ प्र+फल—क्त आदित्त्वात् इटोऽभावे उत इत्त्वम् प्र+फुल्ल–विकासे अच् वा (लहयगुत)। विकाशयुते अमर। "लोध्रद्रुमं सानुमतः प्रफुल्त(ल्ल)म्" रघु॰ टीकायां मल्लिनाथेन द्वि-पाठः समर्थित। [त्रिका॰।

**प्रबन्ध** पु॰ प्र+बन्ध–भावे घञ्। सन्दर्भे ग्रन्थादेः २रचने च

तस्य मूलञ्च आपस्तम्बवाक्यं यथा "प्रयोजयिता अनुमन्ता कर्त्ता चेति सर्वे स्वर्गनरकफलभोक्तारो यो भूय आरभते तस्मिन् फले विशेषः" । तस्य भावः त्व प्रयोजकत्व न० तद्भावे तस्य स्वरूपसम्बन्धभेदः तन्निष्ठान्यथासिद्धिभिन्नान्यथासिद्धिशून्यत्वे इति कार्य्यव्यवस्थित पूर्ववर्त्तित्वम्" ।

प्रयोजन न० प्रयुज्यतेऽनेन प्र+युज–करणे ल्युट् । यमधिकृत्य प्रवर्त्तते १तस्मिन् प्रवृत्त्यङ्गेच्छाविषये यमर्थमाप्तव्यं हातव्यं वा अवसाय तदाप्तिप्रहाणोपायमनुतिष्ठति प्रयोजनं तद्वेदितव्यम् । प्रवृत्तिहेतुत्वाद् इममर्थमाप्स्यामि हास्यामि वेति व्यवसायोऽर्थस्याधिकारः । एवं व्यवसीयमानोऽर्थोऽधिक्रियते इति" वात्स्या० १।१।२४। करणे ल्युट् । २हेतौ । कर्मणि ल्युट् । ३कार्य्ये च मेदि० । प्रयोजनञ्च द्विविधं मुख्यं गौणं च । अत्र अन्येच्छानधीनेच्छाविषयत्वं मुख्यप्रयोजनत्वम् अन्येच्छाधीनेच्छाविषयत्वं गौणप्रयोजनत्वम् । तत्राद्यम् दुःखाभावः सुखञ्च द्वितीयं तदुपकारिव्ययनभोजनादि । तस्य मुख्यप्रयोजनेच्छयैव जन्यायाः इच्छाया विषयत्वात् तथात्वम् । "येन प्रयुक्तः प्रवर्त्तते तत्प्रयोजनम् । यमर्थमभीप्सन् जिहासन् वा कर्मारभते तेनानेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ताः । तदाश्रयश्च न्यायः प्रवर्त्तते" वात्स्या० १।१।१

प्रयोज्य त्रि० प्र+युज–ण्यत् । प्रयोक्तुं शक्ये १भृत्यादौ २मूलधने न० "प्रयोज्यस्यास्तु कर्त्तृत्वं गत्यादेर्विधितोऽचिता" हर्युक्ते ३णिजन्तधातुप्रकृत्यर्थकर्त्तरि च । तस्य भावः त्व प्रयोज्यत्व स्वरूपसम्बन्धभेदे न० प्रयुक्तशब्दे दृश्यम् ।

प्ररथ अव्य० प्रगतो रथो यत्र तिष्ठद्गु० अव्ययी० प्रगतरथयुक्ते देशे । [ऋ० १।१०।१५।

प्ररिच्वन् त्रि० प्र+रिच–क्वनिप् । प्रकर्षेण विरेचनकर्त्तरि

प्ररुज त्रि० प्र+रुज–क । १प्रकृष्टरोगकारके २दैत्यसैन्याधिपभेदे पु० भा०आ०२२अ० ३राक्षसभेदे पु० भा०स०२८४अ० ।

प्ररुह त्रि० प्र+रुह–क । प्ररोहणकर्त्तरि अङ्कुरादौ

प्ररूढ त्रि० प्र+रुह–क्त । १प्ररोहणकर्त्तरि २सञ्जाते अङ्कुरादौ ३वङ्गमूले च ४जटरे न० मेदि० । ५जाते ६प्रवृद्धे त्रि० शब्दमा० ।

प्ररोचन न० प्र+रुच–णिच्–भावे ल्युट् । १रुचिसम्पादने यथाऽश्वमेधादीनां विध्यर्थानुष्ठाने प्ररोचनार्थो प्रवृत्तिः । यच प्ररोचना तदर्थे स्त्री । सा च २प्रस्तावनाङ्गभेदे । "तस्याः प्ररोचना वीथी तथा प्रहसना मुखे । अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचना" सा०द० यथा "श्रीहर्षो निपुणः कविरित्यादि रत्नावल्याम् । ३नाटकाङ्गविमर्षाङ्गभेदे स्त्री "प्ररोचना विमर्षे स्यात्" विमर्षोपक्रमे "प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी" इति तत्र लक्षिता यथा वेणीसं० पाञ्चालक अहं देवेन चक्रपाणिना सहित इत्युपक्रमे कृतं सन्देहेन पूर्य्यन्तां सलिलेनेत्यादि ।

प्ररोह पु० प्र+रुह–अच् । १अङ्कुरे "लताप्ररोह इव सोधतत्र बिभेद" इति रघु० । २आरोहे च हेमच० । भावे घञ् । ३उत्पत्तौ पु० भावे ल्युट् । प्ररोहण उत्पत्तौ न०

प्रलपन न० प्र+लप–भावे ल्युट् । १प्रलापे २अनर्थकवाक्ये सा० द० १८८ कारिकायां दृश्यम् । भावे क्त । प्रलपित तदर्थे न० । "प्रलपितमिद केनापि" सिद्धा० कौमुदी

प्रलम्ब त्रि० प्रलम्बते प्र+लम्ब–अच् । १प्रलम्बमाने २दनुपुत्रे असुरभेदे पु० अग्निपु० । ३त्रपुषे (शशा) ४पयोधरे ५शताङ्कुरे ६गाथायां ७हारभेदे मेदि० । भावे घञ् । ८प्रलम्बने

प्रलम्बघ्न पु० प्रलम्बमसुरं हन्ति हन–क । १बलरामे अमरः तेन तस्य हननकथा हरिवं० ७१अ० दृश्या । प्रलम्बभिदादयोऽप्यत्र ।

प्रलम्बाण्ड पु० प्रलम्बः अण्डोऽस्य । दीर्घाण्डकोषयुते हेमच०

प्रलम्भ पु० प्र+लभ–घञ् मुम् । प्रकर्षेण लाभे । भावे ल्युट् । प्रलम्भन तदर्थे भाग० ५।२५।११।

प्रलय पु० प्रलीयतेऽस्मिन् प्र+ली–आधारे अच् । भूतादिलयाधारे कालभेदे स च चतुर्विधः नित्यनैमित्तिकप्राकृतात्यन्तिकभेदात् यथोक्तं कूर्मपु० ४२।४३ अ०

"कूर्म उवाच नित्यः नैमित्तिकश्चैव प्राकृतात्यन्तिकौ तथा । चतुर्धायं पुराणेऽस्मिन् प्रोच्यते प्रतिसञ्चरः" । नित्यो यथा "योऽयं संदृश्यते नूनं नित्यं लोके क्षयान्विह । नित्यं सङ्कीर्त्त्यते नाम्ना मुनिभिः प्रतिसञ्चरः" नैमित्तिको यथा "ब्राह्मो नैमित्तिको नाम कल्पान्ते यो भविष्यति । त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः" प्राकृतो यथा "महदाद्यं विशेषान्तं यदा संयाति सङ्क्षयम् । प्राकृतः प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः" आत्यन्तिको यथा "ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि । प्रलयः प्रतिसर्गोऽयं कालचिन्तापरैर्द्विजैः । आत्यन्तिकश्च कथितः प्रलयो लयसाधनः" । नैमित्तिकप्रत्यक्षप्रकारो यथा तत्रैव "नैमित्तिकमिदानीं

कीर्त्तयिष्ये समासतः । चतुर्युगसहस्रान्ते संप्राप्ते प्रतिसञ्चरे । आत्मस्थाः प्रजाः कर्त्तुं प्रतिपेदे प्रजापतिः । ततोऽभवत्यनावृष्टिस्तीव्रा सा शतवार्षिकी । भूतक्षयकरी घोरा सर्व्वभूतभयङ्करी । ततो यान्यल्पसाराणि सत्त्वानि पृथिवीतले । तानि चाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च । सप्तरश्मिरथो भूत्वा समुत्तिष्ठन् दिवाकरः । असह्यरश्मिर्भवति पिबन्नम्भो गभस्तिभिः । ततस्ते रश्मयः सप्त पिबन्त्यम्बु महार्णवे । तेनाहारेण ते सूर्य्याः दीप्ताः सप्त भवन्ति हि । ततस्ते रश्मयः सप्त सूर्य्या भूत्वा चतुर्दिशम् । चतुर्लोकमिदं सर्व्वं दहन्ति शिखिनो यथा । व्याप्नुवन्तश्च ते विप्रास्तूर्द्ध्वञ्चाधश्च रश्मिभिः । दीप्यन्ते भास्कराः सप्त युगान्तेऽग्निप्रतापिनः । ते सूर्य्याः वह्निवत् दीप्ता बहुसाहस्ररश्मयः । खं समावृत्य तिष्ठन्ति निर्द्दहन्तो वसुन्धराम् । ततस्तेषां प्रतापेन दह्यमाना वसुन्धरा । साद्रिनद्यर्णवद्वीपा निःस्नेहा समपद्यत । दीप्ताभिः सन्तताभिश्च ज्वालाभिश्च समाहताः । अधश्चोर्द्ध्वञ्च तिर्य्यक् च समावृत्य मण्डलम् । सूर्य्याग्निना प्रसृष्टानां संसृष्टानां परस्परम् । एकत्वमुपजातानामेकज्वालो भवेत् प्रभुः । सर्व्वलोकप्रणाशश्च सोऽग्निर्भूत्वान्तकृद्बली । चतुर्लोकमिदं कृत्स्नं निर्द्दहत्यात्मतेजसा । ततः प्रलीने सर्व्वस्मिन् जङ्गमे स्थावरे तथा । निर्वृक्षा निस्तृणा भूमिः कूर्म्मपृष्ठं प्रकाशते । अम्बरीषमिवाभाति सर्व्वमापूरितं जगत् । सर्व्वमेव तदार्च्चिर्भिः पूर्णं जाज्वल्यते नभः । पाताले यानि तीर्थानि महोदधिगतानि तु । ततस्तानि प्रलीयन्ते भूमित्वमुपयान्ति वै । द्वीपाश्च पर्व्वताश्चैव वर्षाण्यथ महोदधीन् । तान् सर्व्वान् भस्मसात् कृत्वा सप्तात्मा पावकः प्रभुः । समुद्रेभ्यो नदीभ्यश्च पातालेभ्यश्च सर्व्वशः । पिबन्नपः समिद्धोऽग्निः पृथिवीमाश्रितोऽज्वलत् । ततः संवर्त्तकः शैलानतिक्रम्य महाशनः । लोकान् दहति दीप्तात्मा रुद्रतेजोविजृम्भितः । स दग्ध्वा पृथिवीं देवो रसातलमशोषयत् । अधस्तात् पृथिवीं दग्ध्वा दिवमूर्द्ध्वं दहिष्यति । योजनानां शतानीह सहस्राण्ययुतानि च । उत्तिष्ठन्ति शिखास्तस्य अग्नेः संवर्त्तकस्य च । गन्धर्व्वांश्च पिशाचांश्च सयक्षोरगराक्षसान् । तदा दहत्यसौ दीप्तः कालरुद्रप्रचोदितः । भूर्लोकश्च भुवर्लोकः स्वर्लोकश्च तदा महः । दहेदशेषं कालाग्निः कालो विश्वतनुः स्वयम् । व्याप्तेषु तेषु लोकेषु तिर्य्यगूर्द्ध्वमथाग्निना । तत् तेजः समनुप्राप्य कृत्स्नं जगदिदं शनैः । अयोगुडनिभं सर्व्वं तदेवैकं प्रकाशते । ततो गजकुलोन्नादाः तडिद्भिः समलङ्कृताः । उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्त्तका घनाः । केचिन्नीलोत्पलश्यामाः केचित् कुमुदसन्निभाः । धूम्रवर्णास्तथा केचित्तथा पीताः पयोधराः । केचिद्रासभवर्णाश्च लाक्षारसनिभास्तथा । शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभाः परे । मनःशिलानिभास्त्वन्ये कपोतसदृशाः परे । केचित् रुद्राक्षवर्णाभास्तथान्ये घोरसन्निभाः । तथा कर्व्वुरवर्णाभा भिन्नाञ्जननिभास्तथा । इन्द्रगोपनिभाः केचिद्धरितालनिभास्तथा । काकाण्डकनिभाः केचिदुत्तिष्ठन्ति घना दिवि । केचित् पर्व्वतसङ्काशाः केचिद्गजकुलोपमाः । कूटागारनिभाश्चान्ये केचिन्मीनकुलाद्वहाः । बहुरूपा घोररूपा घोरस्वरनिनादिनः । तदा जलधराः सर्व्वे पूरयन्ति नभस्तलम् । ततस्ते जलदा घोरा वारिणा भास्करात्मजाः । सप्तधा संवृतात्मानस्तमग्निं शमयन्त्युत । ततस्ते जलदा वर्षं मुञ्चन्तीह महौघवत् । सुघोरमशिवं सर्व्वं नाशयन्ति च पावकम् । प्रवृत्तेन तदात्यर्थमम्भसा पूर्य्यते जगत् । अद्भिस्तेजोऽभिभूतत्वात्तदाग्निः प्रविशत्यपः । नष्टे चाग्नौ वर्षशतैः पयोदाः क्षयसम्भवाः । प्लावयन्तोऽथ भुवनं महाजलपरिस्रवैः । धाराभिः पूरयन्तीदं चोद्यमानाः स्वयम्भुवा । अभ्यन्तः सलिलौघैश्च वेला इव महोदधेः । साद्रिद्वीपा तथा पृथ्वी जलैः सञ्छाद्यते शनैः । आदित्यरश्मिभिः पीतं जलमभ्रेषु तिष्ठति । पुनः पतति तद्भूमौ पूर्य्यन्ते तेन चार्णवाः । ततः समुद्राः स्वां वेलामतिक्रान्तास्तु कृत्स्नशः । पर्व्वताश्च विलीयन्ते मही चाप्सु निमज्जति । तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे । योगनिद्रां समास्थाय शेते देवः प्रजापतिः । चतुर्युगसहस्रान्तं कल्पमाहुर्महर्षयः । वाराहो वर्त्तते कल्पो यस्य विस्तार ईरितः । असंख्यातास्तथा कल्पा ब्रह्मविष्णुशिवात्मकाः । कथिता हि पुराणेषु मुनिभिः कालचिन्तकैः । सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः । तामसेषु शिवस्योक्तं राजसेषु प्रजापतेः । योऽयं प्रवर्त्तते कल्पो वाराहः सात्त्विको मतः । अन्ये च सात्त्विकाः कल्पा मम तेषु परिग्रहः । ध्यानं तपस्तथा ज्ञानं लब्ध्वा तेष्वेव योगिनः । आराध्य गिरिशं यत्नात् यान्ति तत् परमं

पदम् । सोऽहं तत्त्वं समाधाय मायी मायामयं स्वयम् । एकार्णवे जगत्यस्मिन् योगनिद्रां व्रजामि तु । मां पश्यन्ति महात्मानः सुप्तं काले महर्षयः । जनलोके वर्त्तमानास्तपसा योगचक्षुषा । अहं पुराणपुरुषो भूर्भुवःप्रभवो विभुः । सहस्रचरणः श्रीमान् सहस्रांशुः सहस्रपात् । मन्त्रोऽग्निर्ब्राह्मणा गावः कुशाश्च समिधो ह्यहम् । प्रोक्षणी च स्रुवश्चैव सोमो घृतमथोऽस्म्यहम् । संवर्त्तको महानात्मा पवित्रं परमं यशः । वेदवेद्यः प्रभुर्गोप्ता गोपतिर्ब्रह्मणो मुखम् । अनन्तस्तारको योगी गतिर्गतिमतां वरः । हंसः प्राणोऽथ कपिलो विश्वमूर्त्तिः सनातनः । क्षेत्रज्ञः प्रकृतिः कालो जगद्बीजमथामृतम् । माता पिता महादेवो मत्तो ह्यन्यन्न विद्यते । आदित्यवर्णो भुवनस्य गोप्ता नारायणः पुरुषो योगमूर्त्तिः । मां पश्यन्तो यतयो योगनिष्ठा ज्ञात्वात्मानममृतत्वं व्रजन्ति" । प्राकृतप्रलयविस्तारो यथा तत्रैव "कूर्म्म उवाच । अतः परं प्रवक्ष्यामि प्रतिसर्गमनुत्तमम् । प्राकृतं च समासेन शृणुध्वं गदतो मम । गते परार्द्धद्वितये काले लोकप्रकालकः । कालाग्निर्भस्मसात् कर्त्तुं करोति निखिलं मतिम् । स्वात्मन्यात्मानमावेश्य भूत्वा देवो महेश्वरः । दहेदशेषं ब्रह्माण्डं सदेवासुरमानुषम् । तमाविश्य महादेवो भगवान्नीललोहितः । करोति लोकसंहारं भीषणं रूपमाश्रितः । प्रविश्य मण्डलं सौरं कृत्वासौ बहुधा पुनः । निर्दहत्यखिलं लोकं सप्तसप्तिस्वरूपधृक् । स दग्ध्वा सकलं सत्त्वं मन्त्रं ब्रह्मशिरो महत् । देवतानां शरीरेषु क्षिपत्यखिलदाहकम् । दग्धेष्वशेषदेवेषु देवी गिरिवरात्मजा । एका सा साक्षिणी शम्भोस्तिष्ठते वैदिकी श्रुतिः । शिरःकपालैर्द्देवानां कृतस्रग्वरभूषणः । आदित्यचन्द्रादिगणैः पूरयन् व्योममण्डलम् । सहस्रहस्तचरणः सहस्रार्चिर्महाभुजः । दंष्ट्राकरालवदनः प्रदीप्तानललोचनः । त्रिशूली कृत्तिवसनो योगमैश्वरमास्थितः । पीत्वा तत् परमानन्दं प्रभूतममृतं स्वयम् । करोति ताण्डवं देवीमालोक्य परमेश्वरः । पीत्वा नृत्यामृतं देवी भर्त्तुः परममङ्गला । योगमास्थाय देवस्य देहमायाति शूलिनः । स त्यक्त्वा ताण्डवरसं स्वेच्छयैव पिनाकधृक् । याति स्वभावं भगवान् दग्ध्वा ब्रह्माण्डमण्डलम् । संस्थितेष्वथ देवेषु ब्रह्मविष्णुपिनाकिषु । गुणैरशेषैः पृथिवी विलयं याति वारिषु । स वारितत्त्वं सगुणं ग्रसते हव्यवाहनः ।

तैजसं गुणसंयुक्तं वायौ संयाति संक्षयम् । आकाशे सगुणो वायुः प्रलयं याति सत्तम ।। भूतादौ च तथाऽऽकाशं लीयते गुणसंयुतम् । इन्द्रियाणि च सर्वाणि तैजसे यान्ति संक्षयम् । वैकारिके देवगणाः प्रलयं यान्ति सत्तमाः ।। वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः ।। त्रिविधोऽयमहङ्कारो महति प्रलयं व्रजेत् । महान्तमेभिः सहितं ब्रह्माणममितौजसम् । अव्यक्तं जगतो योनिः संहरेदेकमव्ययम् । एवं संहृत्य भूतानि तत्त्वानि च महेश्वरः । वियोजयत्यथान्योन्यं प्रधानं पुरुषं परम् । प्रधानपुंसोरजयोरेष संहार ईरितः । महेश्वरेच्छाजनितो न स्वयं विद्यते लयः । गुणसाम्यं तदव्यक्तं प्रकृतिः परिगीयते । प्रधानं जगतो योनिर्मायातत्त्वमचेतनम् । कूटस्थश्चिन्मयो ह्यात्मा केवलः पञ्चविंशकः । गीयते मुनिभिः साक्षी महानेकः पितामहः । एवं संहारकरणी शक्तिर्माहेश्वरी ध्रुवा । प्रधानाद्यं विशेषान्तं दहेद्रुद्र इति श्रुतिः । योगिनामथ सर्वेषां ज्ञानविन्यस्तचेतसाम् । आत्यन्तिकञ्चैव लयं विदधातीह शङ्करः" । आत्यन्तिकप्रलयविस्तारो यथा विष्णुपु० पराशर उवाच "आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः । उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् । आध्यात्मिको वै द्विविधः शारीरो मानसस्तथा । शारीरो बहुभिर्भेदैर्भिद्यते श्रूयताञ्च सः । शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः । गुल्मार्शःश्वयथुश्वासच्छर्द्यादिभिरनेकधा । तथाक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञकैः । भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि । कामक्रोधभयद्वेषलोभमोहविषादजः । शोकासूयावमानेर्ष्यामात्सर्यादिभवस्तथा । मानसोऽपि द्विजश्रेष्ठ तापो भवति नैकधा । इत्येवमादिभिर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः । मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः । सरीसृपाद्यैश्च नृणां जन्यते चाधिभौतिकः । शीतोष्णवातवर्षाम्बुवैद्युतादिसमुद्भवः । तापो द्विजवरश्रेष्ठ कथ्यते चाधिदैविकः । तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितैः । गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः । निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकात्यन्तिकी मता । तस्मात्तत्प्राप्तये यत्नः कर्त्तव्यः पण्डितैर्नरैः । तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म्म चोक्तं महामुने ।। आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते । शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् । अन्धन्तम इवा-

ज्ञानं दीपवच्चेन्द्रियोद्भवम्। यथा सूर्य्यस्तथा ज्ञानं यद्विप्रर्षे! विवेकजम्। मनुरप्याह वेदार्थं स्मृत्वा यन्मुनिसत्तम!। तदेतच्छ्रूयतामत्र साधु ते गदतो मम। द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत्। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति। द्वे विद्ये वेदितव्ये वै इति चाथर्वणी श्रुतिः। परया त्वक्षरप्राप्तिरृग्वेदादिमयाऽपरा। यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम्। अनिर्देश्यमरूपञ्च पाणिपादाद्यसंयुतम्। विभुं सर्वगतं नित्यं भूतयोनिमकारणम्। व्याप्यव्याप्यं यतः सर्वं तं वै पश्यन्ति सूरयः। तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकाङ्क्षिणाम्। श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम्। तदेव भगवद्वाच्यं स्वरूपं परमात्मनः। वाचको भगवच्छब्दस्तस्याद्यस्याक्षरात्मनः। एवं निगदितार्थस्य सतत्त्वं तस्य तत्त्वतः। ज्ञायते येन तज्ज्ञानं परमन्यत्त्रयीमयम्। अशब्दगोचरस्यापि तस्यैव ब्रह्मणो द्विज!। पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः। शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्त्तते। मैत्रेय! भगवच्छब्दः सर्वकारणकारणे। सर्वाणि तत्र भूतानि वसन्ति परमात्मनि। भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः। खाण्डिक्यं जनकायाह पृष्टः केशिध्वजः पुरा। नामव्याख्यामनन्तस्य वासुदेवस्य तत्त्वतः। भूतेषु वसते सोऽन्तर्वसन्त्यत्र च तानि यत्। धाता विधाता जगतां वासुदेवस्ततः प्रभुः। स सर्वभूतप्रकृतिविकारगुणाश्च दोषांश्च मुने! व्यतीतः। अतीतसर्व्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तरालम्। समस्तकल्याणगुणात्मको हि स्वशक्तिलेशावृतभूतसर्गः। इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ। तेजोबलैश्वर्य्यसमन्वितस्य सुवीर्य्यशक्त्यादिगुणैकराशिः। परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे। स ईश्वरो व्यष्टिसमष्टिरूपो व्यक्तस्वरूपः प्रकटस्वरूपः। सर्वेश्वरः सर्व्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः। स ज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम्। संदृश्यते वाप्यवगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्" विष्णुपु०। "नारद उवाच। कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम्। दिनमेकं युगं ज्ञेयं तस्य या चैकसप्ततिः। मन्वन्तरन्तु तज्ज्ञेयं ते तु यत्र चतुर्दश। स कल्पो नाम वै कालस्तदन्ते प्रलयस्तथा। सा ब्रह्मरात्री राजेन्द्र! यत्र शेतेऽम्बुजासनः। त्रयो लोकास्तदा राजन्! लीयन्ते तस्मिन्नित्तत। नैमित्तिको लयो नाम दैनन्दिन इतीर्य्यते। एवं दिनप्रमाणेन ब्रह्मणः शतवार्षिकम्। आयुः पूर्वपरार्द्धं तु परार्द्धं द्वे प्रकीर्त्तिते। द्विपरार्द्धे व्यतीते तु ब्रह्मणो जगदात्मनः। तदा प्रकृतयः सप्त प्रलयं यान्ति भूमिप!। लयः प्राकृतिको ह्येष लीने ब्रह्मणि भूपते!। ब्रह्माण्डकोषोऽपि सकलः प्रलयं याति सर्वशः। पूर्वरूपन्तु वक्ष्यामि प्रलयस्यास्य भूपते!। शतवर्षाणि भूमौ हि पर्जन्यो नैव वर्षति। दुर्भिक्षे निर्जले लोके प्रजाः सर्वाः क्षुधार्दिताः। परस्परं भक्ष्यमाणाः क्षयं यास्यन्ति भूमिप!। समुद्रे च धरण्याश्च वृक्षेषु च लतासु च। देहे च यो रसस्तं हि रविर्हरति रश्मिभिः। ततः संवर्त्तको नाम ज्वालामाली हुताशनः। सङ्कर्षणमुखोत्पन्नो दहत्यनिलसारथिः। सर्वं ब्रह्माण्डभाण्डं वै तत्कालक्षोभगर्जितः। एवं दग्धं महाराज! वह्न्यर्कोभ्यां समन्ततः। दग्ध्वा गोमयपिण्डाभं ब्रह्माण्डं भास्वर्जितम्। प्रचण्डः पवनो राजंस्ततो वर्षशतं पुनः। संवर्त्तको नाम महान् ब्रह्माण्डं चान्वयिष्यति। ततो मेघा महाघोरा नानावर्णा अनेकशः। शतं वर्षाणि वर्षन्ति गर्जन्ति च महास्वनाः। एकोदकं ततो विश्वं निर्गुणं निर्विकारकम्। भूमेर्गन्धगुणं राजन्! ग्रसन्त्यापः समन्ततः। गुणनाशात् स्वयं पृथ्वी प्रलयं प्राप्स्यते तदा। तेजस्त्वपां रसगुणं सगन्धं ग्रसते बलात्। ततः प्रलयमायान्ति राजन्नापोऽपि तत्क्षणात्। तेजसस्तु ततो रूपं रसगन्धसमन्वितम्। वायुर्हरति चण्डात्मा, तेजः प्रलयमृच्छति। आकाशस्तु ततो वायोः स्पर्शं परगुणैः सह। समादत्ते महाराज! अम्बरेऽथ प्रलीयते। आकाशस्य गुणं शब्दं गुणैरन्यैः समन्वितम्। अहङ्कारः समादत्ते नभस्तस्मिन् प्रलीयते। तैजसेन्द्रियवर्गाश्च देवा वैकारिकास्तथा। अहङ्कारे प्रलीयन्ते जगदेतच्चराचरम्। अहङ्कारं भक्षयन्ति ततः सत्त्वादयो गुणाः। ग्रसते तान् महाराज! आद्या प्रकृतिरुच्यते। न तस्याः कालदोषेण परिणामो नरर्षभ!। आद्यन्तरहिता सा हि नित्यं कारणमव्ययम्। शक्तिर्भगवतः सा हि तदेकपरमा च सा। इत्युक्तः प्रलयो राजन्! विश्वस्यास्य महामते!। यथोत्पत्तिक्रमेणास्य व्युत्क्रमेण लयस्तथा" स च प्रलयो न्यायादिमते द्विविधः खण्डप्रलयो महा-

प्रलयश्च तत्र जन्यद्रव्यानधिकरणकालत्वं खण्डप्रलयत्वं जन्यभावानधिकरणकालत्वं महाप्रलयत्वं महाप्रलयश्च न प्रमाणसिद्ध इति नव्यनैयायिकाः। तत्र नैमित्तिकप्रलयकालश्च कल्पतुल्यः "यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते" इति मनुना हिरण्यगर्भस्य निद्रासमये तत्प्रलयस्योक्तेः "शर्वरी तस्य तावती" इति तत्कालस्य च कल्पतुल्यकालत्वमुक्तम्। एतदभिप्रायेण अमरे "प्रलयो नष्टचेष्टता" इत्युक्तम् नैमित्तिकप्रलयकाले सर्वभूतानां चेष्टाशून्यत्वात्। "प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः" सा०द० उक्ते २सात्त्विकभावभेदे।

**प्रलव** पु० प्र+लू—भावे अप्। १प्रकर्षेण छेदने याज्ञा० अन्तोदात्ततास्य। प्रलूयते। कर्मणि अप्। २खण्डभेदे ३लेशे च कात्या० श्रौ० २६।१।१० (तुषप्रलवान्) तुषलेशान्।

**प्रलवित्र** न० प्रलूयतेऽनेन प्र+लू+करणे इत्र। छेदनसाधने अस्त्रादौ याज्ञा० अन्तोदात्ततास्य।

**प्रलाप** पु० प्र+लप—भावे घञ्। १अनर्थकवाक्ये २निष्प्रयोजने उन्मत्तादिवाक्ये च अमरः। ३रोगाणामुपसर्गभेदे "मूर्च्छा मारुतयोमोहः प्रलापो मरणमिति कथ्ये" सुश्रुते अस्योपसर्गोक्तौ। [राजनि०।

**प्रलापहन्** पु० प्रलापं हन्ति हन—क्विप्। कुलत्थजातेऽन्ने

**प्रलापिन्** त्रि० प्र+लप—ताच्छील्ये घिनुण्। प्रलपनशीले

**प्रलीन** त्रि० प्र+ली—कर्त्तरि क्त। १प्रलयं प्राप्ते २चेष्टाशून्ये च। तस्य भावः तल्। प्रलीनता चेष्टानाशे इन्द्रियलोपे च।

**प्रलेप** पु० प्र+लिप—भावे घञ्। व्रणादिरोगनाशके द्रव्यविशेषेण लेपनविशेषे। सुश्रुते आलेपोपक्रमे "स त्रिविधः प्रलेपः प्रदेह आलेपश्चेति। तेषामन्तरं प्रलेपः शीतस्तनुरविशोषी विशोषी च। प्रदेहस्तूष्णः शीतो वा बहलोऽबहुरविशोषी च। रक्तपित्तप्रसादनकृदालेप" इति आलेपनभेदलक्षणान्युक्तानि तत्र द्रव्यभेदास्तत्रोक्ता दृश्याः।

**प्रलेपक** त्रि० प्र+लिप—ण्वुल्। १प्रलेपकर्त्तरि स्त्रियां टाप् कापि अत इत्वम् प्रलेपिका तस्या धर्म्यम् अहिष्या० अन्। २प्रलेपिकाधर्म्ये त्रि०। सुश्रुतोक्ते ३ज्वरभेदे पु० "तथा प्रलेपको ज्ञेयः शोषिणां प्राणनाशनः। दुश्चिकित्स्यतमो मन्दः सुकष्टो धातुशोषकृत्" प्रलेपक कालवात कस्यचित्कालविशाखेन वदन्ति तेऽन्यथा" सुश्रुते तल्लक्षणाद्युक्तम्।

**प्रलेह** पु० प्रलिह्यतेऽसौ प्र+लिह—कर्मणि घञ्। व्यञ्जनभेदे (कोरमा) पाकराजेश्वरः।

**प्रलोलुप** त्रि० प्रा० स०। १अत्यन्तलोलुपे गरुडस्य सुते पुत्रे २पक्षिभेदे पु० मार्क०पु० ७अ०।

**प्रवक** त्रि० प्रु+गतौ साधुकारित्वे द्योत्ये वुन्। भूयोगतियुते तत्र साधुकारिणि तत्त्वबोधिनी।

**प्रवक्तृ** त्रि० प्रवक्ति प्र+वच—तृच्। प्रकर्षेण वक्तरि १अर्थानुसन्धानपूर्वकवेदादिपाठके २तदर्थोपदेशके च मनुः ६।१८६ वाक्य० २।३५७

**प्रवग** पुंस्त्री० प्लवग+मध्य र। खगे अमरटीका। एव प्रवङ्ग प्रवङ्गमावपि रस्य लत्वे तदर्थे। सर्वत्र जातित्वात् स्त्रियां ङीष्।

**प्रवचन** न० प्रोच्यते प्र+वच—कर्मणि ल्युट्। १वेदादौ शास्त्रे भावे ल्युट्। २अर्थानुसन्धानपूर्वकपठने च "नायमात्मा प्रवचनेन लभ्यः" कठोप०। अस्य तिङ परस्य गोत्रा० कुत्सायाम् उदात्तता।

**प्रवचनीय** त्रि० प्र+वच—कर्मणि अनीयर्। प्रकर्षेण अर्थानुसन्धानेन १वाच्ये। "भव्य गेयेत्यादि" पा० कर्त्तरि अनीयर्। प्रवक्तरि कर्मप्रवचनीया तच्छब्दे दृश्यम्।

**प्र(प्रा)वट** पु० प्रु+वा० अट—स्वार्थे अण् वा। यवे जटाधरः।

**प्र(व)वण** पु० प्र+व(क)ण—अच्। १चतुष्पथे अमरः २निम्नस्थाने ३उदरे ४मध्ये मेदिनिः। ५प्रावते ६प्रगुणे ७क्षणे शब्दर०। दशुते ८दीर्घके त्रि० विश्व० १०क्षीणे च त्रि० धरणिः। ११आसक्ते त्रि० हेमच०।

**प्रवत्** त्रि० प्रवणे वाति वा—बा० डति। १प्रवणदेशे निम्नस्थाने मन्तरि ऋ० ७।५०।४ अतोऽस्त्यर्थे मतुप मस्य व० तान्तत्वात् न पदत्वम्। प्रवत्वत् तद्युते त्रि०। ऋ० ११८।१भाष्यम्। स्त्रियां ङीप्। सोपसृष्ट धात्वर्थे वर्त्तमानात् सोपसर्गात् वति। ७प्रकृष्टगमनादौ च।

**प्रवत्स्यत्पतिका** स्त्री प्रवत्स्यन् पतिर्यस्याः। यस्याः पतिः परदेशं गमिष्यति तादृश्यां स्त्रियां रसमञ्जरी। तत्र तद्वयोभेदादिकमुक्तं यथा "यस्याः पतिरग्रिमक्षणे देशान्तरं यास्यत्येव सा प्रवत्स्यत्पतिका। अस्याश्चेष्टा काकुवचनकातरप्रेक्षणगमनविघ्नोपदर्शननिर्वेदसन्तापमोहनिश्वासवाष्पादय। सा च मुग्धामध्याप्रौढापरकीयाधारवीभेदात् षड्विधा तदुदाहरणानि तत्र दृश्यानि।

**प्रवद्यामन्** त्रि० या—भावे बा० मनिन् प्रवत् प्रकृष्टगतियुक्तः यामा गतिर्यस्य। प्रकृष्टगमनेन शीघ्रयायिनि ऋ० १।१

१८।१ भाष्ये दृश्यम्। तत्र टास्थाने "सुपांसुलोपः" इत्यादिना पा० आत्। अतो नोपधालोप इति बोध्यम्।

**प्रवयण** न० प्र+वय-गतौ भावे ल्युट्। १प्रकर्षेण २गमने करणे ल्युट्। ३प्रतोदे हेमच०। [२पुराणे निघण्टुः

**प्रवयस्** त्रि० प्रकृष्टं वयोऽस्य। १वृद्धे स्थविरे हेमच०।

**प्रवय्या** स्त्री प्र+वि-यत् "भव्यप्रवय्ये छन्दसि" पा०नि०। प्रकर्षेण गतियुतायां स्त्रियां स्त्रियामेवास्य निपातः पुंसि कर्मणि तु यत् प्रवेय इति सि०कौ०।

**प्रवर** पु० प्र+वृ-अप्। १सन्ततौ २गोत्रे गोत्रप्रवर्त्तकमुनिव्यावर्त्तके ३मुनिभेदे च। ४श्रेष्ठे त्रि० ५अगुरुचन्दने न०। मेदि०। गोत्रभेदे गोत्रप्रवर्त्तकमुनिगणाश्च आर्षशब्दे ८१४पृ० दृश्याः। तदधिक प्रवराध्यायादौ दृश्यम्।

**प्रवरललित** न० "यमौनः सौ रौग' प्रवरललित नाम बोध्यम्" वृ०र० टीकोक्ते षोडशाक्षरपादके छन्दोभेदे।

**प्रवरवाहन** पु० द्वि०व०। प्रवरं वाहनं ययोः। अश्विनीकुमारयोः हेमच०।

**प्रवर्ग** पु० प्रवृज्यतेऽसौ प्र+वृज-घञ्। १विष्णौ हरिवं० ४२ अ०। २प्रवर्ग्ये महावीरे हेमच०। तत्र प्रवर्ग्यं इत्येव पाठो न्याय्यः।

**प्रवर्ग्य** पु० प्र+वृज-कर्मणि ण्यत् कुत्वम्। १महावीरे तत्प्रकार कात्या० श्रौ० २६अ० प्रवर्ग्याध्याये दृश्यम्। अस्त्यर्थे मतुप्। प्रवर्ग्यवत्। २तद्युते ३यज्ञभेदे पु० शत०ब्रा० २।४।४।१

**प्रवर्त्तक** त्रि० प्रवर्त्तयति प्र+वृत-णिच्-ण्वुल्। प्रवृत्तिजनके "बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताविषयक ज्ञानम् इष्टसाधनताविषयकं कृतिसाध्यताज्ञानं वा प्रवर्त्तकमिति नव्यनैयायिकाः। यथा वा स्वविशेषणवत्ताप्रतिसन्धानजन्य कार्य्यताज्ञानं प्रवर्त्तकमिति गुरवः। "चोदनेति क्रियाया प्रवर्त्तकं वचनम्" चोदनासूत्रे शवरभाष्यम् "क्रियाया नियोगस्य ज्ञानद्वारा प्रवर्त्तकं वाक्यं चोदनेत्यर्थः।

**प्रवर्त्तना** स्त्री प्र+वृत-णिच्-युच्। प्रवृत्तिजनकव्यापारे विध्यादौ "अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि" इति भर्तृहरिः। भावे ल्युट् तत्रार्थे आरम्भे च न०।

**प्रवलाकिन्** पु० १भुजङ्गे २चित्रमेखलके च विश्वः।

**प्रवसु** पु० इलिनपुत्रे दुष्मन्तभ्रातरि नृपभेदे भा०आ०९४अ०।

**प्रवह** पु० प्र+वह-अच्। "यस्माद् ज्योतींषि वहति प्रवहस्तेन कीर्त्तितः" उक्ते १वायुभेदे। भावे अप्। २नगराद्बहिर्गमने

**प्रवहण** न० प्र+वह-करणे ल्युट्। १मनुष्यवाह्ये २वस्त्राच्छादिते स्त्रीवाहने कर्णीरथे (महापाल) अमरः।

**प्रवह्लि** स्त्री प्रवल्ह्-इन्-पृषो० अन्त्यस्यादि० वर्णव्यत्यासश्च। प्रहेलिकायां भरत० वा ङीप् तत्रार्थे स्वार्थे क। तत्रार्थे अम०

**प्रवा** पु० प्रकर्षेण वाति गच्छति वा-क्विप्। अश्वे यजु० १५।६ वेददी०।

**प्रवाच्** त्रि० प्रकृष्टा वाक् यस्य। युक्तियुक्तवाक्यवक्तरि जटा०।

**प्रवाणी** स्त्री प्र+वे-ल्युट् ङीप्। १तन्तुवायशलाकायाम् (माकु) निष्क्रान्ता प्रवाण्याः निरा०स० गौणत्वे प्रवाणिशब्दस्य ह्रस्वे सम्भवति भरतेन यत् वाणिशब्दस्यापि ह्रस्वान्तत्वं कल्पितं तच्चिन्त्यम्।

**प्रवात** त्रि० प्रकृष्टो वातो यत्र। १सुखसेव्यवातयुक्तदेशादौ प्र+वा-क्त। २निम्ने प्रवणे च प्रवातेजसशब्दे दृश्यम्।

**प्रवाल्ह** त्रि० प्रकर्षेण वाति प्र+वा-वल्ह। १प्रकृष्टगतियुते २प्राणे पु० "प्राणो वै प्रवान्" शत०ब्रा० १।४।२।२

**प्रवातेजस्** त्रि० प्रवात प्रवणं तेज ओजो यस्य। प्रवाततेजसि निरु० ६।८ [लोकवादे २परस्परकथोपकथने च।

**प्रवाद** पु० प्र+वद-घञ्। १परम्परागतवाक्ये लोकेषु २प्रसिद्धे

**प्रवादिन्** त्रि० प्र+वद-ताच्छील्ये णिनि। परस्परकथनकारके स्त्रियां ङीप्।

**प्रवार** पु० प्र+वृ-आच्छादने करणे घञ्। आच्छादने वस्त्रे विभाषेत्यनुवर्त्तमानात् अपि प्रवर तत्रार्थे सि०कौ०।

**प्रवारण** न० प्र+वृ-णिच् ल्युट्। १काम्ये दाने २काम्यस्य उत्तमवस्तुनो दाने च अमरः। ३प्रकर्षेण वारणे मेदि०। ४महादाने त्रिका०तस्य उत्तमवस्तुनो दानरूपत्वात्तथात्वम्

**प्रवास** पु० प्रस्थितस्य वासः। स्वदेशात् प्रस्थितस्य भिन्नदेशे वासे चिरप्रवासगतस्य पुनरनागतस्य वार्त्ताद्यश्रवणे कालविशेषे तस्य प्रेतत्वावधारणमुक्तं ति०त० "सन्देहे त्वाह यमः "गतस्य न भवेत् वार्त्ता यावत् द्वादशवार्षिकी। प्रेतावधारणं तस्य कर्त्तव्यं सुतबान्धवैः। यन्मासि यद्-हर्यातस्तन्मासि तदहःक्रिया। दिनाज्ञाने कुहूस्तस्य आषाढस्याथ वा कुहूः"। नि०सि० वृद्धमनुः "प्रोषितस्य तथा कालो गतश्चेद्द्वादशाब्दिकः। प्राप्ते त्रयोदशे वर्षे प्रेतकार्य्याणि कारयेत्"। बृहस्पतिः "यस्य न श्रूयते वार्त्ता यावद्द्वादश वत्सरान्। कुशपुत्तलकदाहेन तस्य स्यादवधारणा"। भविष्ये "पितरि प्रोषिते यस्य न वार्त्ता नैव चागमः। ऊर्द्ध्वं पञ्चदशाद्वर्षात् कृत्वा प्रतप्रतिरूपकम्। कुर्य्यात्तस्य तु संस्कारं यथोक्तविधिना

कम्” छ०र० उक्ते वैतालीयप्रकरणीये मात्रावृत्तभेदे ।

**प्रवृत्तचक्र** पु० प्रवृत्तं स्वाम्यानुसारेण चक्रं राष्ट्रादि यस्य । राष्ट्रादिष्वप्रतिहताज्ञे “प्रवृत्तचक्रतां चैव वाणिज्यं प्रभुता तथा” याज्ञ० व्या० मिताक्षरा ।

**प्रवृत्ति** स्त्री प्र+वृत–क्तिन् । १प्रवाहे २वार्त्तायाम् ३अवन्त्यादिदेशे मेदि० ४हस्तिमदे हेमच० । ५न्यायोक्ते चिकीर्षाकृतिसाध्यताज्ञानाधीने ६प्रयत्नभेदे च प्रयत्नशब्दे दृश्यम् । “चिकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा । उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं मतम्” भाषा० । “दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः” गौत०सू० “एतस्मान्मिथ्याज्ञानादनुकूलेषु रागः प्रतिकूलेषु द्वेषः रागद्वेषाधिकाराच्चासत्येर्ष्यासूयामायालोभादयो दोषा भवन्ति । दोषैः प्रयुक्तः शरीरेण प्रवर्त्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति वाचाऽनृतपरुषसूचनासम्बद्धानि, मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यञ्चेति सेयं पापात्मिकाऽधर्माय अथ शुभा शरीरेण दानं परित्राणं परिचरणञ्च । वाचा सत्यं हितं प्रियं स्वाध्यायञ्चेति मनसा दयामस्पृहां श्रद्धाञ्चेति सेयं धर्माय । अत्र प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ । यथा अन्नसाधनाः प्राणाः । अन्नं वै प्राणिनः प्राणा इति । सेयं कुत्सितस्याभिपूजितस्य च जन्मनः कारणम्” भाष्यम् । “प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः” गौ० सू० “प्रवृत्तिदोषजनितोऽर्थः फलम्” गौ०सू० “प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम्” कणा० । “प्रत्यगात्मनीति स्वात्मनीत्यर्थः इच्छाद्वेषजनिते प्रवृत्तिनिवृत्ती प्रयत्नविशेषौ ताभ्याञ्च हिताहितप्राप्तिपरिहारफलके शरीरकर्मणी चेष्टालक्षणे जन्येते तथा च परशरीरे चेष्टा दृष्टा इयं चेष्टा प्रयत्नजन्या चेष्टात्वात् मदीयचेष्टावत् स च प्रयत्न आत्मजन्य आत्मनिष्ठो वा प्रयत्नत्वात् मदीयप्रयत्नवदिति परात्मनोऽनुमानम्” उप०सू० । “इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्ति” गौ०सू० “विहितकर्मणि रागनिबन्धना निषिद्धे कर्मणि हिंसादौ द्वेषनिबन्धना प्रवृत्तिः । तत्र रागनिबन्धना यागादौ प्रवृत्तिर्धर्मं प्रसूते द्वेषनिबन्धना हिंसादौ प्रवृत्तिरधर्मम् । तावतौ रागद्वेषौ संसारमनुवर्त्तयतः” वात्स्या० । प्रवृत्तिस्तु द्वयी । कारणरूपा कार्य्यरूपा च । तत्राद्या यत्नत्वजातिमती प्रत्यक्षसिद्धा । द्वितीया तु धर्माधर्मरूपा यागादेरगस्यागमनादेश्च चिरध्वस्तस्य व्यापारतया कर्मनाशाजलस्पर्शादे प्रायश्चित्तादेश्च नाश्यतया सिध्यतीति । (गौ०वृ० ४।१) भट्टमते प्रवृत्तिर्द्विधा । स्वेच्छाधीना परप्रेरणाजन्या । तत्राद्यायां प्रवर्त्तनाया अनुपयोगोऽपि द्वितीयप्रवृत्तौ सा प्रयोजिका । यथा आचार्य्यप्रेरणयेदं करोमीति” दि०क० । ७शब्दानामर्थबोधनशक्तिभेदे “प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी” कुमा० । ८स्वस्वविषये इन्द्रियादीनां सञ्चारे च । [मिश्रे २स्वरभेदे पु० त्रिका० ।

**प्रवृत्तिज्ञ** त्रि०प्रवृत्तिं वृत्तान्तं जानाति ज्ञा–क । १वृत्तान्ता·

**प्रवृत्तिनिमित्त** न० ६त० । १शब्दानां बोधनाशक्तेर्निमित्ते शक्यतावच्छेदके । यथा घटशब्दस्य प्रवृत्तिनिमित्तं घटत्वमेव शुक्लादिशब्दस्य शुक्लत्वं पाचकादेः पाकः देवदत्तादेः तत्तत्पिण्डादि । “सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च” काव्यप्र० ।

**प्रवृद्ध** त्रि० प्र+वृध–क्त । १वृद्धियुक्ते २प्रौढे च हेमच० ।

**प्रवृद्धादि** न० उत्तरपदस्यान्तोदात्ततानिमित्ते शब्दगणे स च गणः पा०ग० उक्तो यथा “प्रवृद्ध प्रयुत आवहित अनवहित खट्वारूढ कविशस्त आकृतिगणः” ।

**प्रवेक** त्रि० प्र+विच–कर्मणि घञ् । प्रधाने अमरः ।

**प्रवेट** पु० प्र+वी–ट । यवे त्रिका० ।

**प्रवेणि(णी)** स्त्री प्र+वेण–इन् वा ङीप् । १गजस्कन्धस्थे कुथे चित्रकम्बले २वेण्यां जलादिप्रवाहे च मेदि० ।

**प्रवेल** पु० प्र+वेल–अच् । पीतमुद्गे (सोनामुग) हेमच० ।

**प्रवेश** पु० प्र+विश–घञ् । अन्तर्गमने हेमच० ।

**प्रवेशक** त्रि० प्रविशति प्र+विश–ण्वुल् । १मध्ये गन्तरि सा०द० उक्ते अर्थोपक्षेपके २नाट्याङ्गभेदे “अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ” इत्युपक्रमे “प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा” । अङ्कद्वयान्तरित्युक्ते प्रथमाङ्के चरमाङ्के चास्य प्रतिषेधः । यथा वेण्यामश्वत्थामाङ्के राक्षसमिथुनप्रयोजितः” एवमन्यत्रापि ।

**प्रवेशन** न० प्रविश्यतेऽनेन प्र+विश–करणे ल्युट् । १प्रधानद्वारे २सिंहद्वारे च । भावे ल्युट् । ३प्रवेशे हेमच० । प्र+विश+णिच–ल्युट् । ४प्रवेशसम्पादने । प्रवेशन प्रयोजनमस्य छ । प्रवेशनीय प्रवेशनसाधने त्रि० ।

**प्रवेष्ट** पु० प्र+वेष्ट–अच् । १बाहौ अमरः २बाहुनीचभागे शब्दच० ३हस्तिदन्तमांसे हारा० । ४गजपृष्ठस्थाने त्रिका० स्वार्थे प्रायस्ये क । प्रवेष्टक दक्षिणबाहौ “प्रविष्ट

प्रवेष्टकेन निबिडं सुघटिता" म०मु०"प्रवेष्टकेन दक्षिण-बाहुना तद्वत्सन्देन निबिडं कोलामदृपथुमस्तकं मकुलं सुघटिता "वामेतरभुजस्सन्दोदरस्थोपूरवक." बाहुमोक्षेः तद्वक्ष्यस कोलामसूचकलम् ।

**प्रव्यक्त** त्रि० प्रकर्षेण व्यक्तः । स्फुटे अमरः ।

**प्रव्याघ** पु० प्रकृष्टो व्याघो यत्र । वधाधिक्येन विहगरस्य पतनं यत्र तादृशे स्थाने शत०ब्रा० ५।१।५।१२ कात्या०१४।३।१६

**प्रव्रजन** न० प्रास्य गृहादि व्रजनम् । स्वस्थानं पुत्रादीन् च परित्यज्य व्रजने सन्न्यासे ।

**प्रव्रजित** पु० प्र+व्रज–क्त । १सन्न्यासिनि भिक्षौ० २मास्यां १रुदुत्थोयां ४तापस्यां स्त्री ५बुद्धभिक्षुकीभेदे मेदि० । परनिपाते प्रव्रजिताशब्दस्य पाठात् कुमारप्रव्रजिता पुंसि तु न प्रव्रजितकुमार इत्येव ।

**प्रव्रज्या** स्त्री प्रास्य पुत्रादीन् व्रज्या व्रज–भावे क्यप् । पुत्रादीन् परित्यज्य गमने सन्न्यासाश्रमे ।

**प्रव्रज्यावसित** पु० प्रव्रज्यातोऽवसितः । सन्न्यासच्युते "प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजोत्तमाः । निर्वास कारयेद्विप्रं दासत्वं क्षत्रवैश्ययोः" कात्यायनवचनम् । तत्प्रायश्चित्तमुक्तम् मा०सू० भाष्यकृतस्मृतौ "आत्मनश्चो दीक्षाभेदे कृच्छ्र द्वादशरात्रं चरित्वा महाव्रत पद्मयेत् भिक्षुर्वीजमध्यमत् सोमरुचिवर्जम" । कृतप्रायश्चित्तानामपि तेषामसंव्यवहार्यता यथोक्तम

"बहिष्कुर्यथापि कृतेराचाराच्च" मा० सू०। यद्यूर्ध्वरेतसां श्वापमेध्यः प्रध्वजनं महापातकं यदि योपपातकमुभययापि शिष्टैस्तो बहि कर्त्तव्य "आरूढपतित विप्र मण्डलाच्च विनिःसृतक्। उद्बद्ध कमिदष्ट महा चान्द्रायण चरेत्" इति चैवमादिनिन्दातिशयश्रुतिश्च शिष्टाचाराच्च। न हि यज्ञाध्ययनविवाहादीनि ते सहाचरन्ति शिष्टाः" भाष्यम् ।

**प्रव्राज** पु० प्र+व्रज-आधारे घञ् १अत्यन्तनिम्ने देशे ऋ० ७।६०।७ भा० । भावे घञ् । २सन्न्यासे च ।

**प्रशंसन** न० प्र+शन्स–भावे ल्युट् । गुणकीर्त्तनेन स्तुतौ । युच् । प्रशंसनाऽप्यत्र स्त्री ।

**प्रशंसा** स्त्री प्र+शन्स–भावे अ । गुणाविष्कारेण स्तुतौ हेम०

**प्रशंसोपमा** स्त्री काव्यादर्शोक्ते अर्थालङ्कारभेदे यथा "ब्रह्मणोऽप्युद्भवः पद्मचन्द्रः शम्भुशिरोधृत । तौ तुल्यौ त्वन्मुखेनेति सा प्रशंसोपमोच्यते"। तौ पद्मचन्द्रौ त्वन्मुखेन तुल्यौ इति पद्मचन्द्रयोः प्रशंसितयोरपि त्वन्मुखसाम्येन प्रशंसातिशयात् सदृशत्व च सर्वाधिकोत्कर्षव्यञ्जनात् प्रशंसोपमा उच्यते ।

**प्रशत्वन्** पु० प्र+शद-क्वनिप् तुट् च । १समुद्रे उज्ज्वल० स्त्रियां ङीप् वनोर च । प्रशत्वरी २नद्यां उज्ज्वल० ।

**प्रशम** पु० प्र+शम–गर्ज्ज च हविः । १शान्तौ २निवृत्तौ च । प्रशाम्यति प्र+शम-अच् गौरा०ङीष् । ३अपसरोभेदे स्त्री भा०अनु० १९अ०। ४रन्तिदेवस्य पुत्रे पु० भाग० ८।२४।११

**प्रशमन** न० प्र+शम–णिच्-ल्युट् । १वधे २शान्ततारकरणे च "अध्वप्रशमनक्षाम्यम्" रघु "सर्वपापप्रशमनम्" चण्डी शम–भावे ल्युट् । ३शान्तौ हेमच० । [शब्दच० ।

**प्रशस्त** त्रि० प्र+शन्स–क्त । १प्रशंसनीये २श्रेष्ठे ३क्षेमे च

**प्रशस्ताद्रि** पु० ह०सं० १४अ० उक्ते मध्यदेशस्थे गिरिभेदे ।

**प्रशस्ति** स्त्री प्र+शन्स-भावे क्तिन् । १प्रशंसायाम् २स्तुतौ पा० १।७४।॰

**प्रशस्य** स्त्री प्र+शन्स–कर्मणि क्यप् । १प्रशंसनीये । तस्य इष्टयसुभो परतः श्राद्देश अतिशयेन प्रशस्यः श्रेष्ठः श्रेयान् भावे क्यप् । २प्रशंसने न० ।

**प्रशाखा** स्त्री प्रगता शाखाम् प्रादि०स० । अपशाखायाम् भा०कर्ण० १०६८ श्लोक० ।

**प्रशान्** अव्य० प्र+शो वा० क्वनि सराट्ठि । सामर्थ्ये

**प्रशासन** न० प्र+शास–भावे ल्युट् । शिष्यादीनामिष्टादिबोधनाय कर्त्तव्यताबोधकवाक्योच्चारणे "शासस्तैव प्रशासनमभूत्" कु०उ० ।

**प्रशास्तृ** पु० प्र+शास– उणा० सू० तृन् संज्ञायां अनिट् च । यज्ञकर्मविशेषकर्त्तरि ऋत्विग्भेदे मैत्रावरुणे उप-दृष्ट । प्रशासितृ । प्रशासनकर्त्तरि राजादौ ।

**प्रशास्त** त्रि० प्रशास्तुरिदम् अण् सहावृद्ध्यविधेरनित्यत्वात् न वृद्धि० । यज्ञकर्मविशेषकर्त्तृसम्बन्धिनि ।

**प्रशिष्य** पु० प्रगतः शिष्यमध्यापकत्वेन प्रादि०स० । शिष्यस्य शिष्ये "शिष्यप्रशिष्यैरुपगीयमानमवेक्ष्य तन्मण्डनमिश्रधाम" शङ्करदिग्विजय ।

**प्रश्न** पु० प्रच्छ भावे नङ् । जिज्ञासायाम् ज्ञातुमिच्छया १कथनाय प्रेरणे अमरः । अविज्ञातार्थज्ञानार्थम् इच्छाप्रबोधकवाक्ये "अविज्ञातप्रवचनं प्रश्न इत्यभिधीयते" । जिज्ञासाशब्देन तत्प्रबोधकवाक्यानुकूलव्यापारोऽप्युच्यते को भवानृषी किमेतस्य लक्षणम् ? इत्यादि । २उपनिषद्भेदे पु० दैवज्ञं प्रति भाविशुभाशुभज्ञानार्थं दैवज्ञस्य वचनानुकूल व्यापारे तदुत्तरज्ञापकशास्त्र प्रश्नमनोरमादि ।

**प्रश्नदूती** स्त्री प्रश्नस्य दूतीव । प्रहेलिकायाम् त्रिका० ।

**प्रश्नविवाक** पु० कृतान् प्रश्नान् विवक्ति उत्तरयति वि+वच-कर्त्तरि संज्ञायां घञ् । प्रश्नोत्तरदायके ज्योतिर्विद्भेदे "मर्य्यादायै प्रश्नविवाकम्" यजु० ३०।१० वेददी० ।

**प्रश्नव्याकरण** पु० प्रश्नान् शिष्यकृतप्रश्नान् व्याकरोति उत्तरयति वि-व्या कृ-ल्यु ६त० । १जैनभेदे हेमच० । भावे ल्युट् । २पृष्टार्थोत्तरज्ञापने न० ।

**प्रश्नि** पु० १ऋषिभेदे भा०शा०२६५अ० । प्रच्छ-बा० नि बा ङीप् । २कुम्भिपाकायां (माना) त्रिका० ।

**प्रश्नोपनिषद्** प्रश्नाधिकारेण प्रवृत्ता उपनिषत् । आथर्वोपनिषद्भेदे "भगवन् ! कुतो वा ह्येवा इमा प्रजाः प्रजायन्ते" इत्यादि षट्प्रश्नाधिकारेण तस्याः प्रवृत्तेस्तथात्वम् ।

**प्रश्रय** पु० प्र+श्रि-करणे अच् । प्रणये अमरः ।

**प्रश्रित** त्रि० प्र+श्रि- क्त । १विनीते अमरः शान्तिदेवस्य २पुत्रभेदे पु० भाग० ८।२४।२५

**प्रश्लथ** त्रि० प्रकृष्टः श्लथ प्रा०स० । प्रकृष्टे शिथिले त्रिका० ।

**प्रश्लिष्ट** त्रि० प्र+श्लिष-क्त । सम्बद्धे युक्तियुक्ते श्याविता० नाद्यान्तोदात्तता ।

**प्रश्वास** पु० प्र+श्वस-भावे घञ् । कोष्ठस्य वायोर्बहिर्निःसारणे "श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" पा०त० सू० भाष्यम् । प्राणायामशब्दे २११४पृ० दृश्यम् ।

**प्रष्ट** त्रि० प्रच्छ-तृच् । प्रश्नकारके स्त्रियां ङीप् ।

**प्रष्टि** पु० प्रच्छ-कर्त्तरि बा० ति । वाहनत्रयमध्यवर्त्तिनि अश्वभेदे ऋ० १।१९।६

**प्रष्ठ** त्रि० प्र+स्था क "प्रष्ठोऽग्रगामिनि" पा० षत्वम् । १अग्रगामिनि । २श्रेष्ठे च अमरः । तस्य पत्नी ङीप् । २तत्पत्न्यां स्त्री । गौरा०ङीप् । ३बहुप्रसूतगव्यां स्त्री राजनि० ।

**प्रष्ठवाह्** त्रि०प्रष्ठं वहति वह-ण्वि । १युगपार्श्वगे युगमयोजिते दम्ये अनाहते अमरः युगपार्श्वे योजिते नवादिके शिक्षार्थं यं प्रथम वाहयति तस्मिन् । भत्वे वाह ऊट् प्रष्ठौहः प्रष्ठौहा इत्यादि । स्त्रियां ङीप् प्रष्ठौही तथाविधस्त्रियाम् २प्रथमगर्भिण्यां गवि धरणि० ।

**प्रस** प्रसवे ततौ च भ्वा०दिवा० आ० सेट् । प्रसते अप्रसिष्ट । सिद् घटादि मित् प्रसयति ते ।

**प्रसक्त** त्रि० प्र+सन्ज-क्त । १प्रसङ्गविशिष्टे "प्रसक्तं हि प्रतिषिध्यते" मीमांस० । २नित्ये नित्यतायुक्ते त्रि० जटा०

**प्रसक्ति** स्त्री प्र+सन्ज-भावे क्तिन् । १प्रसङ्गे २आपत्तौ ३अनुमितौ दीधितिः । ४व्याप्तौ च "अतिप्रसक्तिरन्यधर्मत्वे" सा०सू० । अतिव्याप्तिरित्यर्थः । [१०] भाष्ये दृश्यम् ।

**प्रसचिन्** पु० प्र+सच -बा० विनि । प्रसहनशीले ऋ०८।१४।

**प्रसंख्यान** न० प्र+सम्+ख्या -भावे ल्युट् । १सम्यग्ज्ञाने "हरः प्रसंख्यानपरो बभूव" कुमा० । प्रा०ब० । २प्रकर्षेण संख्यायुते त्रि० भा० व० १२१अ० ।

**प्रसङ्ग** पु० प्र+सन्ज-भावे घञ् । १प्रकृष्टसङ्गे २व्याप्तिरूपे सम्बन्धे यथाऽतिप्रसङ्ग अप्रसङ्ग इत्यादौ ३सङ्गतिभेदे "सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा । निर्वाहकैककार्य्यत्वे षोढा सङ्गतिरिष्यते" । तत्र "प्रसङ्गत्वम् स्मृतस्य उपेक्षानर्हत्वं तच्च स्मृतिविषयतापन्नत्वे सति द्वेषविषयतानापन्नत्वम्" अनुमितौ गदाधर । ४अनुरक्तत्वे ५प्रस्तावे ६मैथुनासक्तौ ७प्राप्तौ च "कृताकृतप्रसङ्गि नित्य तद्विपरीतमनित्यम्" व्या०परिभाषा । तत्र प्रसङ्गः प्राप्तिरेव "शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति शब्दान्तरात् प्राप्नुवत शब्दान्तरेऽप्राप्नुवतश्च लक्षणान्तरेण प्राप्नुवन् विधिरनित्य" नागेशः । कश्चित् कृताकृतप्रसङ्गमात्रेणापि नित्यता" व्या० परिभाषा । प्रसङ्गशब्देन प्राप्तेरेव ग्राह्यता । अन्योद्देशेन प्रवृत्तौ अन्यस्यापि दर्शितो तत्र यथान्यस्य सिद्धिस्तथा तदुदाहरणादिकञ्च मा०त० उक्तं यथा "अन्योद्देशेन प्रवृत्तावन्यस्यापि सिद्धिः प्रसङ्ग यथा पशुधर्मानुष्ठितेन प्रयाजादिना पशुतन्त्रमध्यपातिन पुरोडाशस्यापि उपकारः सिध्यति । यथा वा "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनम्" इत्यामिक्षार्थं प्रवृत्तौ वाजिनस्यापि सिद्धिः" । यथा वा आग्नेयागनिष्पत्त्यर्थमनुष्ठितैराग्नेयादिभिर्निरवधानादिसिद्धिरिति मिताक्षरोक्तम् । यथा दण्डनिपातप्रायश्चित्तेनैव शुद्धा तदान्तरीयकामनोरथप्रायश्चित्तमपि सम्पद्यत इति प्रायश्चित्तविवेकोक्तम् । तथा ... दाद्वशवार्षिके कृते च ... विहितस्य सिद्धिः । एवञ्च तत्प्रसङ्गयोरभावात्तेनैव ... नाम्नैव चेत् । ... कथं प्रसङ्गेन सिद्धिः ... तयोः ... इति चेत् ... अपि कथं ... इति चेत् ... । "एवञ्च ... प्रसङ्गविषये ... इति प्रसङ्गाधिक-

रप्योक्तेन "प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत् । प्रायश्चित्तमुपासीनो वाग्व्रतस्त्रिषवनं स्पृशेत्" इति विशिष्टवचने प्रत्येकं नियतं कालमिति तत्सद्व्रतकाल स्वस्याम् आत्मनो व्रतम् आत्मगम्यत्वित्यर्थ आत्मकर्तृत्वेन इति यावत् । तेनाप्यकव्रतमपक्रमिष्यु इति चादिसेद्वयं कुर्यात् इत्यनेन प्राप्तस्य समुच्चयस्य बाध." इत्याद्युक्त्वा तत्र समाहित यथा "प्रायश्चित्तस्य नित्यत्वेनाक्रुतेकस्येऽपि प्रवृत्तिरि" । अमेद बोध्यम् प्रसङ्गवत्त्वेन व्याप्तिरेवोच्यते तथा प्रोहिष्टकर्मणा व्याप्तस्य यत्र विधिसत्त्वैवास्य प्रवृत्तिः । उद्दिष्टकर्मणः व्याप्यत्वञ्च देशकालकर्त्रादीनां प्रयोगानुबन्धिना वेधहेतुभूतानामेवैक्ये भवति भवतस्त्वन्यदन्नापि कालदेशाद्यन्तर्भावेनैव व्याप्यता" ।

**प्रसङ्गसम** पु० स्थापनाहेतुप्रयोगे प्रतिषेधहेतुकथनात् जातभेदे "दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ" गौ०५।१।९" साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गे प्रत्यवस्थानं प्रसङ्गसमः प्रतिषेध क्रियाहेतुगुणयोगी क्रियावान्लोष्ट इति हेतुर्नोपदिश्यते । न च हेतुमन्तरेण सिद्धिरस्तीति । दृष्टान्तस्य कारण प्रमाणं तदनुपदेशोऽनभिधानम् अभिधानं प्रानतिप्रयोजनकं तथा च दृष्टान्तस्य साध्यवत्त्वे प्रमाणाभावाभावात् प्रत्यवस्थानमर्थः । यद्यपीद सदुत्तरमेव तथापि दृष्टान्ते प्रमाणं वाच्यं तत्रापि प्रमाणान्तरमित्यनवस्थया प्रत्यवस्थाने तात्पर्यं तद्दृष्टान्ताचार्यैरनवस्थाभासप्रसङ्गप्रसङ्गसम इति एतन्मते हेतोर्हेत्वन्तरमित्यनवस्थाऽपि प्रसङ्गसम एव पूर्वमते तु हेत्वनवस्थादिकं वक्ष्यमाणाक निग्रहस्थानार्भूतमिति विशेषः । अनवस्थादेश्नाभासा चेय प्रतिदृष्टान्तसमः प्रत्येतव्यः"वृत्तिः । अस्योत्तरं तत्रोक्तम् । 'प्रदीपादानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः" गौ०सू० "इदं तावदयं पृष्टो वक्तुमर्हति अथ के प्रदीपमुपाददते किमर्थं वेति दिदृक्षमाणाः दृश्यदर्शनार्थमिति । अथ प्रदीपं दिदृक्षमाणा प्रदीपान्तरं कस्मान्नोपाददते अन्तरेणापि प्रदीपान्तरं दृश्यते प्रदीपः तत्र प्रदीपदर्शनार्थं प्रदीपोपादानं निरर्थकम् । अथ दृष्टान्तः स किमर्थमुच्यत इति । अप्रज्ञातस्य ज्ञापनार्थमिति अथ दृष्टान्ते कारणापदेश किमर्थं इष्यते यदि प्रज्ञापनार्थम् प्रज्ञातो दृष्टान्त स खलु लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति. तत्प्रज्ञापनार्थः कारणापदेशो निरर्थक इति प्रसङ्गसमस्योत्तरम्" । प्रसङ्गसमे प्रत्युत्तरमाह । दृष्टान्तो हि निदर्शनस्थानत्वेन साध्यनियतार्थमपेक्ष्यते न तु दृष्टान्तदृष्टान्तादानवस्थितपरम्परा लोकसिद्धा युक्तिसिद्धा वा अन्यथा घटादिप्रत्यक्षाय प्रदीप इव प्रदीपप्रत्यक्षार्थमनवस्थितप्रदीपपरम्परा प्रसज्येत तदीयसाधनमपि व्याहन्येत" यावृत्त्या०।

**प्रसज्य** पु० भीमो भीमसेनवत् प्रसज्यप्रतिषेधस्यान्त्यलोपः । प्रसज्यप्रतिषेधे अत्यन्ताभावे अत्र रोगीति निन्दाप्रयभाव प्रसज्यता" मल०त० रघु० ।

**प्रसज्यप्रतिषेध** पु० प्रसज्य प्रसक्तिं सम्पाद्यारोप्येति यावत् प्रतिषेधः । अत्यन्ताभावे "प्रसक्तं हि प्रतिषिध्यते" इति न्यायेन आरोपितप्रसङ्गस्यैव निषेधः येन वायौ रूप नास्तीत्यादावपि वायौ रूपारोप्य तस्यैव निषेधो नञा बोध्यते इति विवेक । पश्चात्मिकपथस्ये १७७७पृ० नञ्शब्दे ११४२ पृष्ठादौ मतभेदेन नञः पर्युदासप्रसज्यप्रतिषेधपरता दृश्या । "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्" शाब्दिकाः । न कलञ्जं भक्षयेदित्यत्र बलवदनिष्टसाधनत्वविशिष्टेष्टसाधनत्वरूपस्य विध्यर्थस्याभावो नञा बोध्यते तेन विधेरप्राधान्यं नञर्थाभावस्य च प्राधान्यं तेन तत्र क्रियापदान्वयिनञ्प्रसज्यप्रतिषेधार्थक । गुरुमते तु कलञ्जभक्षणाभावविषयकं कार्यमिति बोधेन अभावविशेषत्वबोधेऽपि प्रतिषेधस्य प्राधान्यात् तथात्वं तथा च तन्मते क्वचित् विधेःप्राधान्येन क्वचित् प्रतिषेधस्य प्राधान्येन इति व्यक्तमेव प्रसज्यप्रतिषेधप्रबोधकप्रयोजकमिति बोध्यम् ।

**प्रसत्ति** स्त्री प्र+सद–क्तिन् । १नैर्मल्ये २प्रसन्नतायाम् अमर०

**प्रसत्वन्** पु०प्र+सद वनिप् । १धर्मे २प्रजापतौ च सं०उणा०। ३प्रतिपत्तौ स्त्री ङीप् वनोर च । [उज्ज्व० च ।

**प्रसन्धि** पु० १मनुपुत्रभेदे भा०आश्व०४अ०। प्रा०त० २प्रकृष्ट०

**प्रसन्न** त्रि० प्र+सद–कर्तरि क्त । १निर्मले २सन्तुष्टे ३कतकपङ्कभेदे अमरः । ४सुरायां स्त्री मेदि० "प्रसन्ना शुचप्रवातार्थीवित्कान्ताकाननाविनी । नूतमयाप्रिकाटोपकफवातार्ययां हिता" राजवल्लभ० । तस्य भावः तल् प्रसन्नता स्त्री त्व प्रसन्नत्व न० तद्धाने प्रसादे नैर्मल्ये च ।

**प्रसन्नात्मन्** त्रि०प्रसन्नो निर्मल आत्मा यस्य । १प्रसन्नात्म० करणे २विष्णौ पु० "प्रसादः प्रसन्नात्मा" विष्णुस० । तद्वत्रूपस्य निर्दोषलाभवात्तथ ।

प्रसन्नेरा स्त्री कर्म्म०। मदिराभेदे भरतः।

प्रसभ त्रि० प्रगता सभा सभाधिकारोऽस्मात् प्रा० ब०। बलात्कारे अमरः "प्रसभोद्धृतारिः" रघुः।

प्रसयन न० प्र+सि—बन्धने करणे ल्युट्। बन्धनसाधने १तन्तौ २जाले च "प्रसितिः प्रसयनात् तन्तुर्वा जालं वा" निरु० ६।१२।

प्रसर पु० प्र+सृ—भावाधारादौ यथायथम् अप् कर्त्तरि अच् वा। तन्तुविटपादेः प्रकर्षेण १सर्पणे प्रकर्षेण २सरणे अमरः ३वेगे ४प्रणये च मेदि०। ५समूहे शब्दर० ६युद्धे विश्वः। ७नाराचास्त्रे ८विसर्पणकर्त्तरि त्रि०।

प्रसरण न० प्र+सृ—भावे ल्युट्। १सैन्यादेः सर्वतो गमने तृणाद्याहरणार्थं सैन्यानामितस्ततो गतौ २आसारे अमरः। करणे प्रसरणि तयार्थे स्त्री रामाश्रमः वा ङीप्

प्रसर्पण न० प्र+सृप—ल्युट्। सैन्यानां सर्वतोव्याप्तौ अस्य स्त्रीत्वमपि तत्र ङीप्। [काले हेमच०।

प्र(प्रा)सल पु० प्र+सल—अच् पृषो० शस्य (षोवा) हेमन्त-

प्रसलवि अव्य० प्रदक्षिणे शत०ब्रा० २।६।११।१५ भाष्यम्।

प्रसव पु० प्र+सू—भावादौ अप्। १गर्भमोचने २उत्पत्तौ ३कार्य्ये ४फले ५कुसुमे ६अपत्ये च मेदि०। नारीणां गर्भोत्पत्तिकालश्च भावप्र० उक्तो यथा

"नवमे दशमे मासि नारी गर्भं प्रसूयते। एकादशे द्वादशे वा ततोऽन्यत्र विकारतः"। वैकृतं यथा "गर्ग उवाच "अकालप्रसवा नार्य्यः कालातीताः प्रजास्तथा। विकृतप्रसवाश्चैव युग्मप्रसवनास्तथा। अमानुषा अत्यङ्गाश्च सञ्जातव्यञ्जनास्तथा। हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः। पशवः पक्षिणश्चैव तथैव च सरीसृपाः। विनाशं तस्य देशस्य नृपस्य च विनिर्दिशेत्। निर्वासयेत्ता नृपतिः स्वराष्ट्रात् स्त्रियश्च, पूजयाच्च ततो द्विजेन्द्रान्। किमिच्छकैर्भोजनतर्पणैश्च लोके ततः शान्तिमुपैति पापम्" मात्स्ये २०८अ०। "भानौ सिंहगते चैव यस्य गौः संप्रसूयते। मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः। अत्र शान्तिं प्रवक्ष्यामि येन सम्पद्यते शुभम्। प्रसूतां तत्क्षणादेव तां गां विप्राय दापयेत्। ततो होमं प्रकुर्वीत हुताशे राजसर्षपैः। आहुतीनां हुताशानामयुतं जुहुयाच्च तत्" नारदः। "प्रसवविकारे स्त्रीणां द्वित्रिचतुःप्रभृति सम्प्रसूतौ वा। हीनातिरिक्तकाये च देशकुलसङ्क्षयो भवति। वडवोष्ट्रमहिषगोहस्तिनीषु यमलोद्भवे मरणमेषाम्। षण्मा-

स्यात् क्षतिफलं शान्तौ श्लोकौ च गर्गोक्तौ "मातुः परस्य विषये त्यक्तव्यास्ता हितार्थिना। तर्पयेच्च द्विजं कामैः शान्तिं चैवात्र कारयेत्। चतुष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु। नगरं स्वामिनं यूथमन्यथा हि विनाशयेत्" वृ०सं० ४६अ०। सुखप्रसवप्रकारः ज्यो० त० उक्तो यथा "अस्ति गोदावरीतीरे जम्भला नाम राक्षसी। तस्याः स्मरणमात्रेण विशल्या गर्भिणी भवेत्"। "पञ्च रेखा समुल्लिख्य तिर्य्यगूर्द्ध्वं क्रमेण हि। पदानि १६ षड्दशाभाद्य त्वेकमाद्यं मुनौ ७ त्रयम्। नवमे सप्त दद्यात्तु वाणौ ५ पञ्चदशे तथा। द्वितीयेऽष्टावष्टमे षट् दिशि १० द्वौ षोडशे श्रुति ४म्। एकादिना समं देयमिच्छाद्यङ्कं त्रिकोष्ठके। तदा त्रिंशद्यदादिः स्यात् चतुःकोष्ठेषु सर्वतः। दर्शनाद्धारणात्तासां शुभं स्यादेषु कर्म्मसु। त्रिंशद्यत् प्रसवे नार्य्याश्चतुस्त्रिंशद्गमे नृणाम्। भूतारिष्टेषु पञ्चाशद् मृतापत्यासु वै शतम्। द्वासप्ततिस्तु वन्ध्यायां चतुःषष्टीरणाध्वनि। विषे विंशो धान्यकोटेऽष्टाविंशतिरेव च। चतुरष्टौ ३२ च बालानां रोदने परिकीर्त्तितः"। स्थानविशेषादिस्थग्रहभेदाना विकृतप्रसवसूचकतद्भेदः ष०ज्ञा० उक्तो यथा

"उदयस्थेऽपि वा मन्दे कुजे वास्तं ७ समागते। स्थिते वाऽन्तःक्षपानाथे शशाङ्कसुतशुक्रयोः। शशाङ्के पापलग्ने वा वृश्चिकेश(कुज) त्रिभागगे। शुभे स्वाय११स्थितैर्जातः सर्पस्तद्वेष्टितोऽपि वा। चतुष्पदे गते भानौ शेषैर्वीर्य्यसमन्वितैः। द्वितनुस्थैश्च यमलौ भवतः कोशवेष्टितौ। छागसिंहवृषैर्लग्ने तत्स्थे सौरेऽथ वा कुजे। राश्यंशसदृशे गात्रे जायते नालवेष्टितः"।

स्थानभेदे प्रसवसूचकयोगः ष०ज्ञा० उक्तो यथा

"पूर्णे शशिनि स्वराशिगे सौम्ये लग्नगते शुभे खे। लग्नः जलजेऽस्तगेऽपि वा चन्द्रे पोतगता प्रसूयते। आप्योदयमाप्यगः शशी सम्पूर्णः समवेक्षतेऽथ वा। मेषूरणबन्धुलग्नगः स्यात् स्रुतिः सलिले न संशयः। उदयोडुपयोर्व्यय१२स्थिते गुप्तौ पापनिरीक्षिते यमे। अलिकर्कियुते विलग्नगे सौरे शीतकरेक्षितेऽवटे। मन्देऽङ्गगते विलग्नगे बुधसूर्येन्दू निरीक्षिते क्रमात्। क्रीडाभवने सुरालये सोषरभूमिषु च प्रसूयते। नृलग्नगं प्रेक्ष्य कुजः श्मशाने रम्ये सितेन्दू गुरुरग्निहोत्रे। रविर्नरेन्द्रामरगोकुलेषु शिल्पालये ज्ञः प्रसवं करोति। राश्यंशसमानगोचरे मार्गे जन्म चरे स्थिरे गृहे। स्वर्क्षांशगते स्वमन्दिरे

रसमात्रस्य धर्मत्वं तथा दर्शितम् । "एवं माधुर्य्यमो-जोऽथ प्रसाद इति ते त्रिधा" इत्युपक्रमे "चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः । स प्रसादः समस्तेषु रसेषु रचनासु च"। व्याप्नोति आविष्करोति । "शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः" यथा "सूचीमुखेन सकृदेव कृतव्रण ! त्वं मुक्ताकलाप ! लुठसि स्तनयोः प्रियायाः । बाणैः स्मरस्य शतशो विनिकृत्तमर्मा स्वप्नेऽपि तां कथमहं न विलोकयामि" सा०द०"प्रसादवत् प्रसिद्धार्थमिन्दोरिन्दीवरद्युति । लक्ष्म लक्ष्मीं तनोतीति प्रतीतिं सुभग वचः" काव्यादर्शः । धर्मस्य पत्न्यां मूर्त्तौ जाते ८पुत्रभेदे भाग० ४।१।२८।

प्रसादना स्त्री प्र+सद–णिच्-युच् । १सेवायां हेमच० । भावे ल्युट् । २प्रसादन तत्रार्थे न०"मैत्रीकरुणामुदितो-पेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" पा०सू० । चित्तप्रसादनशब्दे २८१४ पृ०दृश्यम् ।

प्रसादपट्ट पु० प्रसादसूचकः पट्टः शा०त० । अनुग्रहसूचके शु०स०५०स० उक्ते पट्टभेदे पट्टशब्दे ४२०१पृ० दृश्यम् ।

प्रसाधक त्रि० प्रसाधयति प्र+साधि–ण्वुल् । १भूषके स्त्रियां टापि अत इत्वम् । २अलङ्कर्त्र्यां ३नीराजनाख्ये स्त्री भावप्र०। राज्ञां प्रसाधनार्थं ४सेवकभेदे पु० "सूदव्यञ्जन-कर्त्तारस्तल्पका व्ययकास्तथा । प्रसाधका भोजकाश्च गात्र-संवाहका अपि । गन्धताम्बूलकुसुमगन्धभूषणदायकाः" कामन्द० ।

प्रसाधन न० प्र+सिध–णिच्–साधादेशः ल्युट् । १अतिभूषणे वेशे । करणे ल्युट् । २कङ्कतिकायाम् स्त्री ङीप् अमरः । ३निष्पादने ४सिद्धौ च मेदि० ।

प्रसाधित त्रि०प्र+साधि–क्त । १अलङ्कृते २निष्पादिते च ।

प्रसारण न० प्र+सृ–णिच्-ल्युट् । १विस्तारकरणे २क्रिया-भेदे च भाषा० कर्मन्शब्दे १७२०पृ०दृश्यम् । विप्रकृष्टदेश-संयोगहेतुक्रिया प्रसारणम् । करणे ल्युट् ङीप् । (गन्धभादाल) ३लताभेदे स्त्री राजवल्लभ० ।

प्रसारिन् त्रि० प्र+सृ–णिनि । १विस्तारयुते स्त्रियां ङीप् । सा च २लज्जालुलतायां स्त्री राजनि० ।

प्रसित त्रि० प्र+सो–क्त । १आसक्ते अमर० तद्योगे विषयाधारे तृतीयासप्तम्यौ आसक्त्यर्थपरत्वे हृतो यासप्तम्यौ हरिणा हरौ वा प्रसित इति तत्त्वबो० । मा०व० । ३प्रहृष्टलुब्धे त्रि० ४पूये न० शब्दच० । तस्य प्रकृष्टलुब्धत्वात् तथात्वम् ।

प्रसिति स्त्री प्र+सि–बन्धने करणे क्तिन् । बन्धनसाधने १निगडादौ अमरः । २तन्तौ ३जाले च प्रसयनशब्दे निरु० ।

प्रसिद्ध त्रि० प्र+सिध–क्त । १भूषिते २ख्याते च मेदि० ।

प्रसिद्धि स्त्री प्र+सिध–भावे–क्तिन् । १ख्यातौ २टङ्कारे त्रिका० ३भूषणे च ।

प्रसुह्म पु० १सुह्मदेशसमीपस्थे देशे २तन्नृपे च भा०स०२८अ० ।

प्रसू स्त्री प्र+सू–क्विप् । १मातरि अमर० २घोटक्यां च ३कदल्यां ४वीरुधि च मेदि० । स्वार्थे क । प्रसूका वाजिन्यां राजनि० ।

प्रसूत त्रि० प्र+सू–कर्मणि क्त । १कृतप्रसवे कर्त्तरि क्त । २सञ्जाते ३प्रकटीकृते त्रि० । ४कुसुमे न० मेदि०। ५जाता-पत्यायां स्त्रियां स्त्री अमर । चाक्षुषमन्वन्तरे ६देवगण-भेदे पु०मार्क०पु० ७६अ० ।

प्रसूति स्त्री+सू-क्तिन् क्तिच् वा । १प्रसवे अमरः २उद्भवे ३तनये ४दुहितरि च मेदि० ५मातरि । स्वार्थे क । प्रसूतिका जातप्रसवायां स्त्रियाम् अमरः ।

प्रसूतिज न० प्रसूतेः उद्भवादारभ्य जायते जन–ड । १दुःखे अमर० । २प्रसवजातमात्रे त्रि० ।

प्रसून न० प्र+सू–क्त ओदित्त्वात् तस्य नः । १कुसुमे २फले च अमरः । ३जाते त्रि०मेदि० । [नगरादयोऽप्यत्र ।

प्रसूनेषु पु० प्रसूनमिषुर्यस्य । पुष्पशरे कामे त्रिका० प्रसू-

प्रसृत न० प्र+सृ–क्त । १पवहस्ते शब्दमा० २अर्द्धाञ्जलौ न० । कर्त्तरि क्त । ३प्रसरणयुते त्रि० अमर० । ४विहिते ५वेगिते त्रि० मेदि०। ६गते त्रि० त्रिका० ७नियुक्ते त्रि० हारा० । ८जङ्घायां स्त्री मेदि० ।

प्रसृतज पु० १कुण्डगोलकरूपे पुत्रभेदे "आत्मा पुत्रश्च विज्ञे-यस्तस्यानन्तरजश्च यः । निरुक्तजश्च विज्ञेयः सुतः प्रसृतजस्तथा" भा०अनु० ४८अ० । "निरुक्तजः स्वक्षेत्रेऽन्योरेत सेवार्थसद्भावन (क्षेत्रज०) प्रसृतोऽनिरुक्तो यो योस्यात् परक्षेत्रे रेतः सिञ्चति तज्ज० प्रसृतज०" (कुण्डगोलकरूप०) नीलक० ।

प्रसृति स्त्री प्र+सृ–क्तिन् । प्रसृते अर्द्धाञ्जलिमाने रायमु० ।

प्रसृष्ट त्रि० प्र+सृज–क्त । १प्रकर्षेण सृष्टे "तथैवानिपातेन प्रसृष्टाभिस्तथैव च" भा०वि० १२अ० व्याख्याने "अङ्गुल्यः प्रसृता यासु ताः प्रसृष्टा उदीरिताः" नीलकण्ठोक्तायां २प्रसृतायामङ्गुलौ स्त्री ।

प्रसेक पु०प्र+सिच–भावे घञ् । १आसिञ्चने २च्युतौ च मेदि०

**प्रसेकिन्** पु० प्र+सिच–णिनि० घिनुण् । १प्रसेचनशीले प्रसेककर्त्तरि २व्रणभेदे असाध्ये रोगभेदे पु० सुश्रुतः “मांसपिण्डवद्गताः प्रसेकिनोऽन्त·पूयवेदनावन्तोऽसाध्याः पाकवद्व्रणाः” (व्रणभेदाः) ।

**प्रसेदिका** स्त्री क्षुद्रारामे हेमच० ।

**प्रसेन** पु० १अनमित्रपौत्रे सत्राजितः भ्रातरि क्षत्रियभेदे हरिवं० ३८अ० “सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः” स्यमन्तकोपाख्यानम् । [पत्तिर्यया ।

**प्रसेनजित्** पु० नृपभेदे भा० व० ८अ० । हरिवं०१२अ० तद्-

**प्रसेव** पु० प्र+सिव–कर्मणि घञ् । १वीणाङ्गे २स्यूते ३उपचिते च मेदि० । प्र+सेव–भावे घञ् । ४प्रकृष्टसेवने पु० ।

**प्रसेवक** पु० प्र+सिव–ण्वुल् । वीणाप्रान्तवक्रे १काष्ठे वीणादण्डाधः सन्दानार्थीयार्थेषु घनत्वसम्पादकं यत् अलाब्वादिना आच्छाद्य दीयते तस्मिन् पदार्थे अमरः । २स्यूतरचितपात्रे (थोकला) ३प्रकृष्टस्यूतिकारके त्रि० ।

**प्रस्कण्व** पु० प्रगतः कण्वं कारणत्वेन नि० कर्मणि सुट् । कण्वसुते ऋषिभेदे स च वक्ष्यमाणा वेदमन्त्राणां द्रष्टृत्वात् ऋषिः ।

**प्रस्कन्दन** न० प्र+स्कन्द–भावे ल्युट् । १आस्कन्दने ‘अग्निप्रस्कन्दनपरः” भा० आ० ८४अ० । अपादाने ल्युट् । आस्कन्दनमाप्रादाने यत आस्कन्दनं क्रियते २तस्मिन् । भावे ल्युट् । ३विरेके रत्नमा० तदर्थे प्रसन्दनमित्येव न्याय्यः पाठः स्कन्देर्धातोरर्थानुगमात् तदर्थे प्रस्कन्दनमिति पाठस्तु लिपिकरप्रमादात् । कर्त्तरि ल्यु । ४महादेवे भा० अ० १७अ० ।

**प्रस्कुन्द** पु० प्रगतः कुन्दम् चक्रम् अत्या०स० पारस्करा० सुट् । कुन्दाख्यचक्राकारवेदिकायाम् “प्रस्कुन्देन प्रतिष्ठम” भा० उ० ७२अ० । “प्रस्कन्देनेति पाठे मध्यसन्निकर्षेत्यर्थः” । नीलकण्ठः ।

**प्रस्तर** पु० प्र+स्तृ–अच् । १पाषाणे (पातर) २पल्लवादिरचिते शयनीये शब्दर० ३मणौ मेदि० ४दर्भमुष्टौ “अध्वर्युः प्रस्तरं प्रहरति” ताण्ड्य०ब्रा० ६।७।१६ “प्रस्तरो दर्भमुष्टिः” भाष्यम् । तं प्रशंसति “यजमानो वै प्रस्तरः” १७ । “प्रस्तरस्य हविरासादनादिद्वारा यागसाधनत्वात् यजमानोऽपि यज्ञसाधनमिति यागसाधनत्वसाम्यात् प्रस्तरो यजमानत्वेन स्तूयते” भा० ।

**प्रस्तारिणी** स्त्री प्रस्तरवदाकारोऽस्त्यस्य इनि ङीप् । गोजिह्वायां राजनि० ।

**प्रस्तरेष्ठा** पु० प्रस्तरे तिष्ठति स्था–क्विप् अमम्बा० अलुक् ष० । विश्वेदेवभेदे यजु० २।१७ ।

**प्रस्तार** पु० प्र+स्तृ–घञ् । १तृणप्रधानवने हेमच० । २पल्लवादिरचितशयनीये शब्दर० । ३समाभागे हारा० । प्रस्तार्यन्ते विस्तार्यन्ते गुरुलघुरूपतया वर्णा मात्रा वा अनेन प्र+स्तृ–णिच् करणे अच् । ४लघुगुरुवर्णज्ञापनक्रियाभेदे तत्प्रकारश्च वृ०र० उक्तो यथा

“पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः । यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् । ऊने दद्याद्गुरूनेव यावत् सर्वलघुर्भवेत् । प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः” । “प्रस्तारश्चायमुक्तसादीनां सर्वगुरवे पादे पादे स्थ्युपलक्षणं वर्णानामपि । प्रथमपङ्क्तौ लिखिते आद्यात् प्रथमगुरोरधः आरभ्येत्यर्थः । द्वितीयपङ्क्तौ अधः तस्यैव अधस्तात्पङ्क्तौ प्रथमं लघु न्यस्य यथा उपरि अग्रिमपङ्क्तौ अपरे अवशिष्टाः वर्णविन्यासवत् तस्य दक्षिणपार्श्वे गुर्वादयो लेख्याः । तृतीयपङ्क्तौ तु प्रथमाया गुरुव्यक्तेरधस्तात् लघुं न्यस्य शेषान् उपरिस्थद्वितीयपङ्क्तिस्थान् गुर्वादीन् न्यसेत् एवं तृतीयपङ्क्तौ आद्यस्थानस्य न्यूनता तत्र किं देयमित्याकाङ्क्षायामाह, ऊने प्रस्तार्यसंख्यातो न्यूने सति वामभागे गुरून् दद्यात् एवं भूयो सर्व्वं कुर्यात् यावत् सर्वलघुः पादो भवेत्, तावदेव कुर्यादित्यर्थः । त्र्यक्षरप्रस्तारे लघुगुर्वोः ऋजुवक्रतया तदाकारेणोदाहरणम्

प्रथमः भेदः ऽऽऽ मगणः द्वितीयो भेदः ।ऽऽ यगणः
तृतीयो भेदः ऽ।ऽ रगणः चतुर्थो भेदः ।।ऽ सगणः
पञ्चमो भेदः ऽऽ। तगणः षष्ठो भेदः ।ऽ। जगणः
सप्तमो भेदः ऽ।। भगणः अष्टमो भेदः ।।। नगणः ।

मात्राप्रस्तारे विशेषस्तु पिङ्गलादौ द्रष्टव्यः ।

मात्रावृत्तप्रस्तारेऽयं विशेषः ऊने गुर्वादिक्रमेण वर्णा देयाः । मात्राद्वये अवशेषे एको गुरुः त्रिमात्रावशेषे एको गुरुः तद्वामे एको लघुरेव देयः इत्थं मात्रासंख्याया न्यूनमात्राद्वारा संख्यापूरणार्थं गुरुलघुदानमिति बोध्यम् ।

**प्रस्तारपङ्क्ति** स्त्री छन्दोभेदे छन्दःशब्दे २९७८पृ० दृश्यम् ।

**प्रस्तार्य्यर्म्म** न० “समन्ताद्धिस्तृतः श्यावो रक्तो वा मांसमञ्चयः । सन्निपातेन दोषाणां प्रस्तार्य्यर्म्म तदुच्यते” वैद्यकोक्ते नेत्ररोगभेदे ।

**प्रस्ताव** पु० प्र+स्तु– “प्रे द्रुस्तुस्रुवः” पा० भावकरणादौ घञ् । १प्रकरणे ऽवसरे २अवसरे अमर० । ३प्रसङ्गे भाष०

स्तीर्णितः ४प्रकरणे काव्यप्र० । ५सामावयवभेदे स च प्रस्तोतृनामकेन ऋत्विजा गेयः साम्नः प्रथमो भाग० । "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" छा० उ० । तस्य देवता च ब्रह्मरूपः प्राणस्तत्रैवोक्त० ।

**प्रस्तावना** स्त्री प्र+स्तु–णिच्–ल्युट् । १आरम्भे अटा० "आर्य्यवालचरितप्रस्तावनाडिण्डिम" वीरच० । प्रस्तावयति प्र+स्तु–णिच्–ल्यु । नाटकाङ्गे आरम्भार्थके आमुखे स्त्री तल्लक्षणभेदादिकं सा० द० उक्तं तच्च आमुख शब्दे ७६६ पृष्ठादौ दृश्यम् ।

**प्रस्तर** न० प्र+स्तृ वा० क ऋत इत्वं रपरत्वं च । पल्लवादिरचिते शयनीये शब्दर० । [१स्तृते २ध्वनिते च ।

**प्रस्तीत(म)** त्रि० प्र+स्त्यै–क्त तस्य नोवा सम्प्रसारणञ्च ।

**प्रस्तुत** त्रि० प्र+स्तु–कर्मणि क्त । १प्रकरणप्राप्ते २प्रारब्धे ३उपस्थिते ४उद्यते ५प्रतिपन्ने ६प्रकर्षेण स्तुते च ।

**प्रस्तृत** त्रि० प्र+स्तृ–क्त । १अन्तरिते त्रिका० । २प्रकर्षेण विस्तारिते त्रि० ।

**प्रस्तोतृ** त्रि०प्रकृष्ट स्तौति प्र+स्तु–तृच् । १प्रकर्षेण स्तोतरि २साम्नः प्रथमभागगायके ऋत्विग्भेदे पु० अध्वर्युशब्दे ८१पृ० दृश्यम् । प्रस्तोतुर्हितं तच्छेदं वा घ । प्रस्तोत्रिय तत्साध्ये सामप्रथमभागे तत्सम्बन्धिनि च त्रि० ।

**प्रस्थ** त्रि० प्र+स्था–क । १प्रकर्षेण स्थितियुते २गन्तरि च प्रपूर्व कतिष्ठतेर्गत्यर्थत्वात् । ३आढ़कचतुर्थांशरूपे परिमाणभेदे पु० आढ़कशब्दे ६५५ पृ० दृश्यम् । ४द्विशरावपरिमाणे वैद्यकम् । आधारे घञर्थे क । ५पर्वतसमभूभागे स्थितियोग्यस्थाने सानौ पु०न० । ६उन्नितवस्तुनि मेदिनि० ७विस्तारे च "दीर्घप्रस्थे समानञ्च न कुर्य्यान्मन्दिरं बुधः" ब्रह्मवै०पु०ज०ख० १०२अ० । प्रस्थं पचति पच–ष्ट ज्ञम् । प्रस्थम्पच प्रस्थमितपाचके त्रि० ।

**प्रस्थपुष्प** पु०प्रस्थमिव पुष्पमस्य । १मरुवके अमरः २जम्बीरपत्र तुलस्यां ३जम्बीरभेदे त्रिका० ।

**प्रस्थल** धर्मराजसम्बन्धिनि देशभेदे भा०भी० ७५अ० ।

**प्रस्थान** प्र+स्था–भावे ल्युट् । १जिगीषोर्यात्रागमने २गमने च प्रस्थानं मतव्यं तदाऽस्यत्र ठन् । प्रस्थानप्रतिपादके ग्रन्थे यथा युधिष्ठिरादीनां महाप्रस्थानप्रतिपादकः भारतान्तर्गतपर्वभेदः ।

यात्रायां प्रयाणात् यात्रादिने प्रसंगमनासम्भवे दूरभेदाना (?) निमित्तादिभेदे प्रस्थापनमाह मु०चि०पी० यथा वसिष्ठः "तस्मिन् छत्रं स्ववनप्रयाणे प्रयोजनापेक्षि- तथा च दैवात् । तत्रैव सद्विनिर्गमनं च कार्य्यं स्त्रीयायानाश्वापि तदुच्यमानम् राजमार्त्तण्डः । "प्रस्थाने भार्ग्यवादीनां नयसूत्रमथाऽऽयुधम् । मध्यामलफलं चैव प्रशस्तं द्विजकारणम्" वसिष्ठः "श्वेतातपत्रध्वजचामराद्यैर्विभूषणोपप्लीमगजाश्वराभिः । आन्दोलिका रत्नरथाश्ववारान् शय्यासनाद्यं गमनस्य भीष्टम्" इति नारदोऽपि "अप्रयाणे स्वयं कार्य्यमपेक्ष्य भूपतिस्तथा । कुर्य्यान्निर्गमनं छत्रध्वजशाकुनसंयुतमिति" "गेहाद्गेहान्तरमपि गमस्तर्हि यात्रेति गर्गः सीम्नः सीमान्तरमपि भृगुर्बाणविक्षेपमात्रम् । प्रस्थानं स्यादिति कथयतेऽथो भरद्वाज एवं यात्रा कार्य्या बहिरिह पुरात् प्रादविष्ठो मनीति" । "प्रस्थानमत्र धनुर्षां हि शतानि पञ्च केचिज्जगदुर्दशगव्यूतिमन्ये । संस्थितो य इह मन्दिरतः प्रयातो गन्तव्यदिक्षु तदपि प्रयतेन कार्य्यम्" । "प्रस्थाने भूमिपालो दशदिवसमभिव्याप्य नैकत्र तिष्ठेत् सामन्तः सप्तरात्रं तदितरमनुजः पञ्चरात्रं तथैव । अर्द्धं गच्छेन्मुभाद्रेऽप्यथ गमनदिनात् सप्तरात्राणि पूर्वं चायक्षौ तद्दिनेऽसौ रिपुविजयमनामैथुनं नैव कुर्य्यात्" मु०चि० । श्रीपतिरपि "वसेञ्च चैकत्र दश क्षितीशो दिनान्यथो सप्त च मण्डलीकः । य प्राकृतः सोऽपि न पञ्चरात्र भद्रेण यात्रा परतः प्रयोज्या" । राजमार्त्तण्ड "प्रस्थानमाहानि वसन्त प्रवदन्ति सप्त यास्यामतीव सुमहान्ति दिनानि पञ्च । सौम्येव पश्चिमदिग्विजितिनायकाना प्रस्थानकेषु दिवसद्वयमुत्तरस्याम्" प्रस्थानप्रकारमाह र०रू "पूर्वं दक्षिणसंज्ञ्य पाद यायान्नराधिप० । वामे गत पदं गत्वा यानमारुह्य संव्रजेत्" । करणे ल्युट् । ३मार्गे ४उपदेशोपाये च यथा श्रुतिस्मृतिन्यायप्रदर्शकम् उपनिषद्गीताशारीरकसूत्ररूपसमाधत्रयरूप प्रस्थानत्रयम् । यथा वा भाष्यटीकाया पञ्चपादिकाभामतीरूप तप्रस्थानत्रयम् ।

**प्रस्थापित** त्रि० प्र+स्था–णिच्–पुक् कर्मणि क्त । १प्रेरिते हेमच० । २प्रकर्षेण स्थापिते त्रि० ।

**प्रस्थायिन्** त्रि० प्र+स्था–गम्या० भविष्यति णिनि । १भाविगमनकर्त्तरि । "प्रे स्थः" उणा० इति णिच्च । २गन्तुमनसि उज्ज्वलदत्तः । [भावप्र० ।

**प्रस्थिका** स्त्री प्रस्थसदाकारोऽस्त्यस्याः ठन् । अम्बष्ठालतायां

**प्रस्नुषा** स्त्री स्नुषायाः स्नुषा प्रगो० । नप्तृवध्वाम् । "स्नुषाच प्रस्नुषाश्चैव धृतराष्ट्रस्य विह्वलाः" भा०द०

६०अ० । नीलकण्ठः । [जलादौ कात्या०श्रौ० १०।२।१४।

**प्रस्नेय** त्रि० प्रस्नातमर्हति प्र+स्ना—अर्हार्थे यत् । स्नानार्हे

**प्रस्पन्दन** न० प्र+स्पन्द—भावे ल्युट् । प्रकर्षेण स्पन्दने चलनक्रियाभेदे तच्च सुश्रुते देहे वायुलक्षणतया उक्तम् "तत्र प्रस्पन्दनोद्वहनपूरणविरेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति" ।

**प्रस्फुट** त्रि० प्र+स्फुट-क । १प्रफुल्ले विकसिते पुष्पादौ शब्दरत्ना०। २सुस्पष्टे सुव्यक्ते च ।

**प्रस्फोटन** न० प्रस्फुट्यते अनेन प्र+स्फुट करणे ल्युट् । १शूर्पे (कुला) ख्याते अमर । भावे ल्युट् । २ताडने ३प्रकाशे च मेदि० ।

**प्रस्यन्द** पु०प्र+स्यन्द- भावे घञ् । १प्रकर्षेण क्षरणे "तदभिहितो भावो द्रव्यवत् प्रकाशते" उक्तेः २स्यन्दमाने घृतादौ कर्त्तरि अच् । ३प्रक्षरणकर्त्तरि त्रि० "प्रस्यन्दमानोलकभूः" कुमा० ।

**प्रस्रवण** न०प्र+स्रु—भावे ल्युट् । १अविच्छेदेन जलादिस्रवणे २स्वेदे च । आधारे ल्युट् । यत्र स्थाने स्वच्छजलं निपत्य सङ्कुलीभवति तादृशे ३स्थाने उत्से क्षीरस्वामी । अप् । प्रस्रव तत्रार्थे हेमच० । माल्यवति पर्वते पु० हेमच०।

**प्रस्राव** पु०प्र+स्रु--भावे घञ् । १प्रकर्षेण क्षरणे तदभिहितभावस्य द्रव्यवत्त्वेन २मूत्रे अमरः ।

**प्र(स्वा)स्वन** पु० प्र+स्वन- भावे अप् पक्षे घञ् । उच्चैः शब्दे

**प्रस्वादस्** त्रि० प्र+स्वद--णिच्—असुन् । प्रकर्षेण स्वादयितरि ऋ० १०।११।६६

**प्रस्वाप** पु० प्रस्वाप्यते शत्रुरनेन प्र+स्वप—णिच्--करणे अच् । शत्रोः प्रस्वापनसाधने अस्त्रभेदे भा० उद्यो० १८४अ० । करणे ल्युट् । प्रस्वापन तथाविधार्थे भा०व० ४१अ० ।

**प्रस्वापिनी** स्त्री सत्यभामाया भगिन्यां कृष्णभार्याभेदे हरिवं० १८८अ० । [१८८अ० उक्तम् ।

**प्रस्वेद** पु०प्र+स्विद्--भावे घञ् । अत्यन्तस्वेदे तद्योगार्थं मत्वर्थपु०

**प्रहत** त्रि० प्र+हन- क्त । १विततें २क्षुण्णे च शब्दरत्ना०।

**प्रहनेमि** पु० प्रहन्ति प्र+हन—ड तादृशो नेमिरिवास्य तस्य । चन्द्रे त्रिका०। [दिवसस्याष्टमे भागे अमरः ।

**प्रहर** पु०प्रह्रियते यामिकढक्कादिरस्मिन् प्र+हृ-आधारे अप् ।

**प्रहरकुटुम्बी** स्त्री कुटुम्बिनीक्षुपे राजनि०।

**प्रहरण** न० प्रह्रियतेऽनेन हृ—करणे ल्युट् । १अस्त्रे २अर्थीरथे च अमरः । आधारे ल्युट् । २युद्धे । भावे ल्युट् । ३प्रहारे ४दमे च ।

**प्रहरणकलिका** स्त्री "ननभनलघुनैः प्रहरणकलिका" वृ०र० उक्ते चतुर्दशाक्षरपादके छन्दोभेदे ।

**प्रहरिन्** पु० प्रहरोऽधिकारकालत्वेनास्त्यस्य इनि । १यामिके २प्रहरकालाधिकृते ३सैन्यभेदे ।

**प्रहर्षण** त्रि० प्रहर्षयति प्र+हृष--णिच्—ल्यु । १प्रकर्षेण हर्षकारके २बुधग्रहे पु० त्रिका० करणे ल्युट् । ३प्रहर्षसाधने त्रि०। स्त्रियां ङीप् । सा च ४हरिद्रायां हारा० "म्नौ ज्रौ गस्त्रिदशा१०यतिः प्रहर्षणीयम्" वृ०र० उक्ते त्रयदशाक्षरपादके छन्दोभेदे च ।

**प्रहस** पु० राक्षसभेदे रामा०सु० १८अ० ।

**प्रहसन** न०प्र+हस--भावे आधारे वा ल्युट् । १प्रकर्षेण हासे परिहासे २दृश्यकाव्यरूपकभेदे मेदि०। ३आक्षेपे हेमच० रूपकभेदस्य लक्षणमुक्तं सा०द० यथा

"भाणवत् सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम् । भवेत् प्रहसनं वृत्तं निन्द्यानां कविकल्पितम् । अत्र नाऽऽरभटी नापि विष्कम्भकप्रवेशकौ । अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा" । तत्र "तपस्विभगवद्विप्रप्रभृतिष्वत्र नायक । एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते" यथा कन्दर्पकेलि० ।

**प्रहसन्ती** स्त्री प्र+हस -शतृ ङीप् । १यूथ्यां त्रिका०२वासन्तीलतायां राजनि०। शा०व०। २महदङ्गारधान्याम् ।

**प्रहस्त** पु० प्रततो हस्तो यत्र । १विस्तृताङ्गुलिपाणौ चपेटे अमरः । रावणसैन्याधिपे २राक्षसभेदे भा०व० २७३अ० ।

**प्रहाणि** प्र+हा--नि क्तम् । अपचये ।

**प्रहार** पु० प्र+हृ--भावे घञ् । आघाते ।

**प्रहारण** न० प्र+हृ -णिच् ल्यु । काम्यदाने धारणन्दरी ।

**प्रहारवल्ली** स्त्री प्रहारस्य वेदनोपशमनार्थां वल्ली याक०त० ।

मांसरोहिण्याम् शब्दच० । [रामा०आर० ३।।१८

**प्रहारिन्** त्रि०प्र+हृ-णिनि । १प्रहारकर्त्तरि पु०२राक्षसभेदे

**प्रहास** पु० प्रकृष्टो हासोऽस्य । १शिवे त्रिका० २नटे धरणिः ३सोमतीर्थे जटा०। शा०स०। ४अट्टहासे पु०शब्दर०। ५नागभेदे पु० भा० आ० ५७अ० ।

**प्रहासिन्** त्रि० प्रकृष्टं हासयति हसति वा हासि—हस—वा णिनि । १परस्य हासक कारके (भाँड) २स्वयं हासके ३विदूषके पु० हेमच० ।

**प्रहि** पु०प्रह्रियते अत्र प्र+हृ आधारे इन् डिच्च । कूपे अमरः

**प्रहित** त्रि०प्र+हि-क्त । १प्रेरिते २क्षिप्ते ३सूपे न०हेमच०

**प्रहुत** न० प्र+हु–भावे क्त। भूतयज्ञे अटा०। "अहुतञ्च हुतञ्चैव तथा प्रहुतमेव च। ब्राह्म्यं हुतं प्राशितञ्च पञ्च यज्ञान् प्रचक्षते" इत्युपक्रम्य "प्रहुतो भौतिको बलिः" मनुनाऽस्य पारिभाषिकत्वमुक्तम् आर्षं पुंस्त्वम् "देवानभाजयत् हुतञ्च प्रहुतञ्च यद्देवेभ्यो जुह्वति प्रजुह्वति" इ०श०

"ये द्वे अन्ने सृष्टा देवानभाजयत् के ते द्वे इत्युच्यते हुतञ्च प्रहुतञ्च। हुतमित्यग्नौ हवनम्। प्रहुतं हुत्वा बलिहरणम्। यस्माद्द्वे एते अन्ने हुताहुते देवानभाजयत्। तस्माद्देवत्रापि एतर्हि काले देवेभ्यो जुह्वति देवेभ्य इदमन्नमस्माभिर्देयमानमिति मन्वाना एव जुह्वति प्रजुह्वति च हुत्वा बलिहरणञ्च कुर्वत इत्यर्थः" भा०।

**प्रहृत** न० प्र+हृ–भावे क्त। १प्रहारे २आघाते। कर्मणि क्त। ३कृतप्रहारे त्रि० ४ऋषिभेदे पु०। तस्यापत्यम् अश्वा० फञ्। प्राहृतायन तदपत्ये पुंस्त्री०।

**प्रहेण(ल)क** न० पिष्टकभेदे हारा०।

**प्रहेलिका** स्त्री प्र+हेल-इन् संज्ञायां कन्। दुर्विज्ञानार्थप्रश्ने (हेँयालि)अमरः। तद्भेदलक्षणादि विदग्धमुखमण्डने यथा "व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात्। यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका। सा द्विधार्थी च शाब्दी च विख्याता प्रश्नशासने। आर्थी स्यादर्थविज्ञानात् शाब्दी शब्दस्य भङ्गतः" आर्थी यथा "तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः। गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः" (ईषदूनजलपूर्णकुम्भः उत्तरम्) शाब्दी यथा "सदारिमध्यापि न वैरियुक्ता नितान्तरक्ताप्यसितैव नित्यम्। यथोक्तवादिन्यपि नैव दूती का नाम कान्तेति निवेदयन्ती" (सारिका उत्तरम्) काव्यादर्शे तु "प्रहेलिकाप्रकाराणां पुनरुद्दिश्यते गतिः। क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे। परव्यामोहने चापि सोपयोगाः प्रहेलिकाः। आहुः समागतां१ नाम गूढार्थां पदसन्धिना। वञ्चिताऽ२न्यत्र रूढेन यत्र शब्देन वञ्चना। व्युत्क्रान्ताऽ३तिव्यवहितप्रयोगान्मोहकारिणी। सा स्यात् प्रमुषिता४ यस्यां दुर्बोधार्था पदावली। समानरूपा५ गौणार्थारोपितैर्ग्रथिता पदैः। परुषा६ लक्षणास्तित्वमात्रव्युत्पादितश्रुतिः। संख्याता७ नाम संख्यानं यत्र व्यामोहकारणम्। अन्यथा भासते यत्र वाक्यार्थः सा प्रकल्पिता८। सा नामान्तरिता९ नाम यस्या नामार्थवञ्चना। निभृता१० निभृतान्यार्था तुल्यधर्मस्पृशा गिरा। समानशब्दो११पन्यस्तशब्दपर्यायसाधिता। संमूढा१२ नाम या साक्षान्निर्दिष्टार्थापि मूढये। योगमालात्मिका नाम या स्यात् सा परिहारिका१३। एकच्छन्ना१४ऽऽश्रितं व्यक्तं यस्यामाश्रयगोपनम्। सा भवेदुभयच्छन्ना१५ यस्यामुभयगोपनम्। सङ्कीर्णा१६ नाम सा यस्या नानालक्षणसङ्करः। एताः षोडश निर्दिष्टाः पूर्वाचार्यैः प्रहेलिकाः। दुष्टप्रहेलिकाश्चान्यास्तैरधीताश्चतुर्दश"। एताः समागताप्रभृतयः षोडश प्रहेलिकाः पूर्वाचार्यैः निर्दिष्टाः अदुष्टत्वेन कथिता इत्यर्थः, तैः पूर्वाचार्यैरेव अन्याः चतुर्दश दुष्टाः प्रहेलिकाः च्युताक्षरादिकाः अधीता पठिताः सदोषत्वेन कीर्त्तिता इत्यर्थः"। एतासामुदाहरणानि तत्र दृश्यानि। तासां चतुर्दश सरस्वतीकण्ठा० दृश्याः। "काव्यान्तर्गडुभूतत्वात् नालङ्कारः प्रहेलिका" सा०द०।

**प्रह्वोषिन्** त्रि० प्र+हु–वा० इनि सुगागमश्च। प्रकर्षेण हवनकर्त्तरि ऋ० ८६२।४

**प्रह्रा(ह्ला)द** पु० १हिरण्यकशिपोः पुत्रभेदे भा०आ० ६५अ०। महाभारत भाग० ७५ अध्यायादौ दृश्यम्। तस्य पूर्वजन्मकथा पाद्मे भूमि०५अ०। २नागभेदे भा०स०६अ०। ह्लाद–भावे घञ्। ३प्रमोदे विश्वः ह्लद–भावे घञ्। ४शब्दे शरणिः। [ज्वल०। २आसक्ते हेमच०।

**प्रह्व** त्रि० प्र+ह्वा त्यागे वन् नि० आलोपः। १नम्रे उज्ज्वल०।

**प्रह्वलीका** स्त्री प्रवह्लिक+पृषो०। प्रहेलिकायां हला०।

**प्रा** पूर्त्तौ अदा० प०सक० अनिट्। प्राति अप्रासीत् पप्रौ कविकल्पद्रुमे प्रा इति पाठ तत्रार्थे।

**प्रांशु** त्रि० प्रकृष्टा अंशवोऽस्य। १उच्चे उन्नते अमरः। वैवस्वतमनो २पुत्रभेदे पु० हरिवं०१०अ०। वत्सप्रीन्दपत्न्या सुदक्षिणाया जाते ३पुत्रभेदे पु० मार्कं०पु० ११८अ०।

**प्राकर** पु० द्युतिमत्पृथ्वीश्च पुत्रभेदे मार्कं०पु० ५३अ०।

**प्राकरणिक** त्रि० प्रकरणेन प्राप्त ठञ्। प्रकरणप्राप्ते।

**प्राकर्षिक** त्रि०प्रकर्षं नित्यमर्हति छेदा०ठञ्। नित्यप्रकर्षार्हे

**प्राकषिक** पु० प्र+आ+कष–किकन्। १स्त्रीणां नर्त्तके २परदारोपजीविनि च उज्ज्वलद०।

**प्राकाम्य** न० प्रकामस्य भावः ष्यञ्। १अष्टविधैश्वर्य्यमध्ये इच्छानभिघातरूपे ऐश्वर्य्ये २स्वाच्छन्द्यानुमतौ च हेमच० "प्राकाम्यं ते विभूतिषु" कुमारः। अणिमन्शब्दे ८६ पृ० ऐश्वर्य्यशब्दे १५४९ पृ० दृश्यम्।

**प्राकार** पु०प्रकीर्य्यते प्र+कॄ–आधारे घञ् दीर्घः। इष्टकादि-

रचिते वेष्टनाकारे प्राचीरादौ “ऊर्द्धं विंशतिहस्तेभ्यः प्राकारं न शुभावहम्। प्रस्थे हस्तद्वयात् पूर्वं दीर्घे हस्तत्रयं तथा। गृहस्थितां शुभदं द्वारं प्राकारस्य गृहस्य च। न मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिके शुभम्” ब्रह्मवै० पु० ११२अ० तन्त्राचाद्युक्तम्। अस्य कौशलमार्दम्। भावे घञ्। २सर्वतो विस्तारे पु०।

प्राकारमर्द्दिन् त्रि० प्राकारं मृद्नाति मृद–णिनि ६त०। प्राकारभेदके। तत बाह्वा० अपत्ये इञ् संयोगोपधेनन्तत्वात् न टिलोपः। प्राकारमर्द्दिनि तदपत्ये पुंस्त्री०।

प्राकारीय त्रि० प्राकारायायम् छ। १प्राकारप्रकृतौ इष्टकादौ। प्राकार आसामिष्टकानां स्यात् प्राकारोऽस्मिन् वा स्यात् छ। २सम्भवत्प्राकारायामिष्टकायाम् ३सम्भवत्प्राकारे देशे च।

प्राकृत त्रि० प्रकृष्टमकृतमपकार्य्यं यस्य। १नीचे। प्रकृतेरयम् अण्। २प्रकृतिसम्बन्धिनि। प्रकृत्या स्वभावेन निर्वृत्तः अण्। ३स्वभावसिद्धे “बभूव प्राकृतः शिशुः” भाग० १०। प्रकृतेः संस्कृतशब्दात् आगतः अण्। ४नाटकादौ प्रसिद्धे अपभ्रंशशब्दभेदे अमरः। प्राकृतभाषाया संस्कृतशब्दप्रकृतिकत्वात् तथात्वं प्राकृतलक्षणादौ वररुच्यादिप्रणीते ग्रन्थेऽस्य विस्तरो दृश्यः। स्वभावतः सिद्धयोः ५मित्रामित्रयोः। स्वदेशानन्तरदेशवर्त्ती नृपः प्राकृतः शत्रुः सन्निकृष्टविषयत्वाद्विरोधस्वभावात्तस्य तथात्वम् तदानन्तरविषयस्थो नृपः प्राकृतं मित्रं मध्यवर्त्तिनृपविषयस्य उभयोः जिगीषासम्भवात् तथात्वम्। “ख्यातामित्रौ मित्रे च सहजप्राकृतावपि” माघ २सर्गश्लोकव्याख्याने मल्लिनाथः।

प्राकृतज्वर पु० “वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्” ज्वराधिकारे माधवोक्ते ज्वरभेदे।

प्राकृतप्रलय कर्म०। प्रलयभेदे प्रलयशब्दे दृश्यम्।

प्राकृतमित्र न० कर्म०। स्वभावसिद्धे मित्रे विषयानन्तरस्य नृपरूपात् प्राकृतशत्रोः अव्यवहितोत्तरविषयस्थे नृपे।

प्राकृतशत्रु पु० कर्म०। विषयानन्तरवर्त्तिनि नृपे। [सिद्धे

प्राकृतिक त्रि० प्रकृत्या निर्वृत्त ठञ्। प्रकृतिसाध्ये स्वभाव-

प्राक्छाय त्रि०प्राक् पूर्वगामिनी छाया यत्र दिने। कुलिश-हस्तादयस्य पूर्ववर्त्तिच्छायायुते दिने “प्राक्छाये कुञ्जरस्य च” मनुः। कुञ्जरच्छायाशब्दे २०६८पृ०दृश्यम्।

प्राक्तन त्रि० प्राक् काले देशे प्राच्यां दिशि वा भवः ट्यु

ट्युल् च। प्रागभवे “प्रपेदिरे प्राक्तनजन्मविद्याः” कुमा०। स्त्रियां ङीप्। २पूर्ववर्त्तिनि कारणे च।

प्राक्तनकर्म्मन् न० प्राक्तनं कारणं कर्म यस्य। कर्मरूपकारणजन्यके अदृष्टे १पापे २पुण्ये च शब्दा०।

प्राक्पद पु० कर्म०। पूर्ववर्त्तिनि पदे।

प्राक्पुष्पा स्त्री प्राक् पुष्पं यस्याः अजा० टाप्। प्राग्वर्त्तिपुष्पान्वितलतायाम्। (काँटाल) शटाधर।

प्राक्फल पु० प्राक् फलमस्य। पुष्पं विना फलयुते पनसे

प्राक्फल्गुनी स्त्री कर्म०। पूर्वफल्गुनीनक्षत्रे तत्र भव ठञ्। प्राक्फल्गुनिक बृहस्पतौ। [बृहस्पतौ हारा०।

प्राक्फल्गुनीभव पु० प्राक्फल्गुन्यां भवति भू–अच्।

प्राक्फाल्गुन पु०प्राक्फाल्गुन्यां भवः अण्। बृहस्पतौ शब्दच०

प्राक्शृङ्गवत् पु० ऋषिभेदे भा०स०५२अ०। [सन्ध्यायाम्।

प्राक्सन्ध्या स्त्री कर्म०। पूर्वसन्ध्यायां सूर्योदयात् प्राक्

प्राक्सवन न० प्राक्तानिकं सवनम्। यज्ञिये प्रथमसवने।

प्राक्सौमिक त्रि०सोमात् सोमयागात् प्राक् अव्ययी० प्राक्सोमं तत्र भवः ठञ् उत्तरपदवृद्धिः। सोमयागात् प्राक्कर्त्तव्ये अग्निहोत्रदर्शपौर्णमासचातुर्मास्ययागरूपे १क्रियाकलापे २इष्टौ स्त्री ङीप्। “प्राक्सौमिकीः क्रियाः कुर्य्यात् यस्यान्नं वार्षिकं भवेत्” याज्ञ० वाक्य० व्याख्याया मिता० दृश्यम्।

प्राक्स्रोतस् स्त्री प्राञ्चि स्रोतांस्यस्याः। १नद्यां “प्राक्स्रोतसो नद्यः प्रत्यक्स्रोतसो नद्यः नर्मदां विनेत्याह” मल्लि० धृतवाक्यम्।

प्रागग्र त्रि० प्राक् अग्रं यस्य। पूर्वाभिमुखे।

प्रागद्य त्रि० प्रगदिनोऽदूरदेशादि प्रगद्या० चतुरर्थ्यां० ञ्य। प्रगदिनोऽदूरदेशादौ।

प्रागभाव पु० प्राग्वर्त्ती अभावः। इह कपाले घटो भविष्यतीत्यादिप्रतीतिसिद्धे संसर्गाभावभेदे “प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च। एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते” भाषा०। तल्लक्षणन्तु ध्वंसप्रतियोगित्वे सत्यभाववत्वम्। स च उपादानदेश एव वर्त्तते नान्यत्र। तस्य च सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं नास्ति किन्तु तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वम्। स च प्रतियोगिजनकः इति न्यायमते। सांख्यादिमते भावस्यानागतावस्थैव प्रागभावपदवाच्येति भेदः।

प्रागल्भ्य न० प्रगल्भस्य भावः ष्यञ्। १प्रगल्भतायां “प्रागल्भ्यहीनस्य नरस्य विद्या शस्त्रं यथा कापुरुषस्य हस्ते”

**प्राजहिता** अव्य॰ दक्षिणक्रियायाम् श्राश्व॰ वा गतिसंज्ञा। प्राजहिताकृत्य प्राजहिता कृत्वा वा।

**प्राजहित** पु॰ गार्हपत्येऽग्नौ कात्या॰श्रौ॰ ८।६।।१

**प्राजापत** त्रि॰प्रजापतेः धर्म्यं महिष्या॰अण्। प्रजापतेर्धर्म्ये

**प्राजापत्य** पु॰ प्रजापतिर्देवताऽस्य यक्। १अष्टविवाहमध्ये विवाहभेदे "ब्राह्मोदैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः" मनुना अष्ट विवाहानुद्दिश्य "सहोभौ चरतां धर्ममिति वाचानुभाष्य च। कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः" इति लक्षित "त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परञ्च नाश्नीयात् प्राजापत्यमिति स्मृतम्" इति स्मृत्युक्ते द्वादशाहसाध्ये २व्रतभेदे न॰। ३प्रजापत्यधिदेवताके चर्वादौ त्रि॰। ४प्रव्रज्याङ्गभाक्ते सर्वस्वदक्षिणकेष्टिभेदे स्त्री "प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्। आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्" याज्ञ॰। ५रोहिणीनक्षत्रे न॰ ६प्रयागतीर्थे न॰ त्रिका॰ ७जैनभेदे पु॰ हेमच॰। [जायाया धर्म्ये।

**प्राजावत** त्रि॰ प्रजावत्या धर्म्यं महिष्या॰ अण्। भ्रातृ-

**प्राजिन्** पु॰प्र+अज-णिनि व्यभावः। पक्षिभेदे मेदि॰ अमर

**प्राजितृ** पु॰ प्र+अज-तृच् वीभावाभावः। सारथौ।

**प्राजेश** न॰प्रजेशो देवताऽस्य अण्। १रोहिणीनक्षत्रे २प्रजापतिदेवताके चर्वादौ त्रि॰। प्राजेश्वरादयोऽप्युभयत्र।

**प्राज्ञ** पु॰प्रकर्षेण जानाति प्र-ज्ञा-क स्वार्थे अण्। १पण्डिते अमरः २राजशुके राजनि॰। प्रज्ञाऽस्त्यस्य अण्। ३बुद्धिमति ४दक्षे च त्रि॰। प्रज्ञा+स्वार्थे च। ६बुद्धौ स्त्री टाप् प्राज्ञस्य पत्नी ङीप्। प्राज्ञी ७प्राज्ञपत्न्यां स्त्री। ७कल्किनो ज्येष्ठभ्रातरि पु॰ कल्किपु॰ २अ॰। प्रकर्षेण अज्ञः। वेदान्तसारोक्ते दव्यष्टुपहितचैतन्ये एकाज्ञानमात्रभासके जीवचैतन्ये पु॰ "एतदुपहितचैतन्यमल्पज्ञत्वानीश्वरत्वादिगुणकं प्राज्ञ इत्युच्यते। एकाज्ञानावभासकत्वादस्य प्राज्ञत्वम् अस्पष्टोपाधितयाऽनतिप्रकाशकत्वम्" वेदान्तसारः। प्रज्ञ+स्वार्थे अण् स्त्रियां ङीप्। प्राज्ञी ८सूर्यपत्न्याम् स्त्री। [त्रि॰ हेमच॰।

**प्राज्य** न॰प्रकृष्टमाज्यं प्र+अनृज-क्यप् वा। १प्रकृष्टे २प्रचुरे

**प्राञ्च** त्रि॰ प्र+अनृच्+क्विन्। पूर्वदेशकालवर्त्तिनि। अल्लोपाभावात् भत्वे प्राञ्च प्राञ्चा इत्येव।

**प्राञ्जल** त्रि॰ प्र+अनृज-अलच्। १सरले २सुबोधे च जटा॰।

**प्राञ्जलि** त्रि॰ प्रबद्धोऽञ्जलियेन प्रा॰ब॰। १बद्धाञ्जलिपुटे प्रा॰ब॰। २बद्धाञ्जलौ ङ॰।

**प्राञ्जलिन्** त्रि॰ प्राञ्जलिरस्त्यस्य व्रीह्या॰ इनि। बद्धाञ्जलियुक्ते स्त्रियां ङीप्।

**प्राडाहत** पु॰ ६त॰। प्रसृकारकेणाहते तस्यापत्यमिञ् प्राडाहति तदपत्ये ततः यूनि फक् तौल्व॰ न लुक्। प्राडाहतायन तदीये यून्यपत्ये पुंस्त्री॰।

**प्राड्वि(वा)वेक** पु॰ अर्थिप्रत्यर्थिनौ पृच्छति प्रच्छ-क्विप् प्राट्, तयोर्वाक्यं विरुद्धाविरुद्धतया विवेचयति वक्ति वा वि+विच-वि+वच-वा सज्ञायां घञ् कर्म॰। व्यवहारदर्शनाय राजनियुक्ते १विचारके स्वयं विचारक २अपसहाये च तत्सभ्यादिकं वीरमि॰ उक्तं यथा "विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च। प्रियपूर्वं प्रागवदति प्राड्विवाकस्ततः स्मृतः" बृहस्पतिः। व्यासोऽपि "विवादानुगतं पृष्ट्वा ससभ्यस्तत् प्रयत्नतः। विचारयति येनासौ प्राड्विवेकस्ततः स्मृत" गौतमेन स बृहस्पतिपदुयोगार्थं प्राड्विवाकशब्दस्य दर्शितः। "प्राड्विवाको वादिप्रतिवादिनौ पृच्छतीति प्राट् ताभ्यामुक्तं सभ्यैः सह विविच्य वक्तीति प्राड्विवाक" इति बृहस्पतिना। विचारयतीत्यभिधानाद्विमक्ति इति विवेकशब्दस्य व्युत्पत्तिरुक्ता। विविच्य वक्तीति विवाक इति। इति गौतमेन। नारदहारीतौ "यथा शल्यं भिषक्कायादुद्धरेद्युक्तियुक्तितः। प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः" इति। शल्यञ्च धर्मस्याधर्मभिन्नत्वम्। यथा च मनुः "विद्धो धर्मो ह्यधर्मेण सभां यत्रोपतिष्ठते। शल्यञ्चास्य निकृन्तन्ति विद्धास्तत्र सभासद" इति। अयञ्च राज्ञा स्वयंव्यवहारदर्शने क्रियमाणेऽस्य सहायः "सप्राड्विवाक" इति करणात्। यदा तु राजा कार्यान्तरव्यग्रतया आलस्याभावेन वा स्वयं व्यवहारदर्शनासमर्थस्तदा तत्प्रतिनिधिः। "यदा स्वयं न कुर्यात् तु नृपतिः कार्यदर्शनम्। तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्यदर्शने। सोऽस्य कार्याणि सम्पश्येत् सभ्यैरेव त्रिभिर्वृतः। सभामेव प्रविश्याग्र्यामासीनः स्थित एव वा" इति मनुवचनात्। सभ्यग्रहणादौत्यादिनिवृत्तिः निपातनात् संख्यान्तरनिवृत्तिः। असभ्यानामिति स्मृतिचन्द्रिकाकारः। तत्र दृष्टार्थत्वप्रसङ्गादनुक्तमित्युपलक्षणत्वमेव न्याय्यम्। "अपश्यता कार्यवशाद्व्यवहारान् नृपेण तु। सभ्यैः स ह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित्" इति याज्ञवल्क्यवचनाच्च। "यदा न कुर्यान्नृपतिः स्वयं कार्यविनिर्णयम्। तदा तत्र

विशेत् । अधमे द्वादशी मात्रा मध्यमे द्विगुणा मता । उत्तमे त्रिगुणा ज्ञेया प्राणायामस्य निर्णये । कनीयसि भवेत् स्वेदः कम्पो भवति मध्यमे । उत्तिष्ठत्युत्तमे प्राणो बद्धपद्मासनो मुहुः । जलेन श्रमजातेन गात्रमार्जनमाचरेत् । दृढता लघुता दीप्तिस्तेन गात्रस्य जायते । यदा तु नाडीशुद्धिः स्यात्तदा चिह्नानि बाह्यतः । जायन्ते योगिनो देहे तानि वक्ष्याम्यशेषतः । शरीरलघुता दीप्तिर्जठराग्निविवर्द्धनम् । कृशत्वञ्च शरीरस्य तस्य जायेत निश्चितम् । पूर्वोक्तकाले कुर्वीत परमाभ्यासमेव च । ततःपरं यथेष्टन्तु शक्तिः स्याद् वायुधारणे । यथेष्टधारणाद्वायोः सिद्धिः कुम्भककेवला । केवले कुम्भके सिद्धे रेचपूरकवर्जिते । न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते" । [हेमच० ।

**प्राणावाय** न० प्राणेनावैति अव+इ अच् । क्रियाविशाले

**प्राणासन** न० "एतत् प्राणासनं नाम सर्वसिद्धिप्रदायकम् । वायुं मुखे समारोप्य ध्यात्वाऽऽकुञ्चं प्रसारयेत् । कीलवत् पादमेकञ्च स्कन्धे चारोप्य यत्नतः । एकपादेन गगने तिष्ठेत् स दण्डवत् प्रभो ! । आपानासनमेतद्धि सर्वेषां पूरकाश्रयम्" । कृत्वा सुषुम्णापक्षे समारोप्याथ वायुभिः । तदाचिरो भवेत् मर्त्यः प्राणापानसमागमम् । अपानासनयोगेन कृत्वा योगेश्वरो भुवि" रुद्रयामलोक्ते पूजाङ्गे आसनभेदे ।

**प्राणाहुति** स्त्री प्राणरूपेभ्योऽग्निभ्य आहुतिः । भोजनात् प्राक् कर्त्तव्ये प्राणरूपाग्न्युद्देश्यकाहुतौ तत्प्रकारश्च आह्नि०त० दर्शितो यथा

छन्दोगपरिशिष्टे "प्राणेभ्यस्त्वथ पञ्चभ्यः स्वाहा प्रणवसंयुताः । पञ्चाहुतीस्तु जुहुयात् प्रलयाग्निनिभेषु च" । प्राणाहुतिसङ्ग्रामाह शौनकः "तर्जनीमध्यमाङ्गुष्ठैर्लग्ना प्राणाहुतिर्भवेत् । मध्यमानामिकाङ्गुष्ठैरपाने जुहुयात्ततः । कनिष्ठानामिकाङ्गुष्ठैर्व्याने च जुहुयाद्धविः । तर्जनीन्तु बहिष्कृत्वा उदाने जुहुयात्ततः । समाने सर्वहस्तेन समुदायाहुतिर्भवेत्" । स्मृत्यर्थसारे "प्राणाहुतौ हुतायां तु पश्चात् भुञ्जीत नो द्विजः" अत्र पाठक्रमेण प्राणापानव्यानोदानसमानरूपेभ्य आहुतिरुक्ता । वैश्वानरविदस्तु छान्दो०उ० अन्यक्रम उक्तो यथा "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं, स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति" । "अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति" । "अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति" । "अथ यां चतुर्थीं जुहुयात्तां जुहुयात् समानाय स्वाहेति समानस्तृप्यति" । "अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति" ।

**प्राणिद्यूत** न० ६त० । समाह्वयाख्ये विवादपदभेदे अमरः । द्यूतशब्दे ३७७२ पृ० दृश्यम् "एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये" याज्ञ० द्यूतधर्मोऽतिदिष्टः । [भारत ।

**प्राणिन्** नित्यम् त्रि० प्राणोऽस्त्यस्य इनि । जीवे चेतने जन्तु-

**प्राणिमातृ** स्त्री प्राणिनो मातेव । गर्भदात्रीक्षुपे राजनि० ।

**प्राणिहित** त्रि० ६त० । १प्राणिनो हितसाधने २पादुकायां स्त्री त्रिका० । [प्राणीत्य तत्रार्थे पाठान्तरम् ।

**प्राणीत्य** न० प्रणीतस्य प्रयुक्तस्य भावः ष्यञ् । ऋणे त्रिका०

**प्राणेश** पु० ६त० । १पत्यौ जटा० । २भार्यायां स्त्री हेमच० । ३वायौ पु० त्रिका० । प्राणेश्वरादयोऽप्यत्र ।

**प्राण्यङ्ग** न० ६त० । प्राणिनोऽङ्गे अवयवे हस्तपादादौ तत्र उपसर्जने "स्वाङ्गं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टञ्च तेन चेत् तथा युतम्" इत्युक्तलक्षणस्वाङ्गरूपकत्वे असंयोगोपधत्वे ङीष् । तत्र क्रोडादिबह्वचो नासिकोदरजङ्घादन्तकर्णशृङ्गाणाम् पुच्छस्य च विशेषोक्तेः संयोगोपधत्वेऽपि ङीष् स्यात् ।

**प्रातःकृत्य** न० ७त० । शास्त्रविहिते प्रातःकर्त्तव्ये कर्मणि तच्च आचारशब्दे ६११पृ० दर्शितम् । एवमन्यत्रापि यथाकथं नानाशास्त्रे उक्तं दृश्यम् ।

**प्रातःकाल** पु० कर्म० । १प्रभातकाले "प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु" स्मृतिपरिभाषिते सूर्य्योदयावधि मुहूर्त्तत्रयमिते २काले च ।

**प्रातःसन्ध्या** स्त्री सन्धौ भवः यत् सन्ध्या ७त० । १गतरात्रेरनन्तरं मुहूर्त्तात्मके भाविसूर्य्योदयस्य मध्यवर्त्तिनि २दण्डचतुष्टयात्मके वा काले "त्रियामा रजनी प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् । नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते" ति०त० । सन्ध्या च ब्रह्मणो मनोजाता कन्या सा च वशिष्ठोपदेशेन तपः कृत्वा पूर्वप्रतिज्ञातस्याग्नौ शरीरत्यागस्य सम्पादनार्थं विष्णुवरेण पुरोडाशमयं देहमवाप्य मेधातिथियज्ञाग्नौ शरीरं जुहाव । तस्याः पूर्वार्द्धं प्रातःसन्ध्या । एतत्कथा च तत्कथा कालिकापु० २२अ० यथा "तदा विष्णोः प्रसादेन सा विवेश विधेः सुता । वह्निस्तस्याः शरीरं तद्दग्ध्वा सूर्य्यस्य मण्डले । शुद्धं प्रवेश

यामास विष्णोरेवाज्ञया पुनः । सन्ध्यां द्विधा विभज्याथ तच्छरीरं तदा रवौ । चक्रे संस्थापयामास प्रीतये पितृदेवयोः । यदर्द्धभागस्तस्यास्तु शरीरस्य द्विजोत्तमाः ! । प्रातःसन्ध्याभवत् सा तु अहोरात्रान्तमध्यगा । यः शेषभागस्तस्यास्तु अहोरात्रान्तमध्यगः । स सायमभवत् सन्ध्या पितृप्रीतिप्रदा सदा । सूर्य्योदयात् प्रथमं यदा स्यादरुणोदयः । प्रातःसन्ध्या तदोदेति देवानां प्रीतिकारिणी । अस्तं गते ततः सूर्य्ये शीर्णपद्मनिभा सदा । उदेति सायंसन्ध्यापि पितृणां मोदकारिणी" । सन्धौ काले उपास्या सन्ध्या ७अ० । पूर्व्वसन्ध्याकाले उपास्यायां गायत्रीप्रतिपाद्यपरमेश्वररूपायां देवतायाश्च यथोक्तं भरद्वाजस्मृतौ ७अ० यथा

"गायन्तं त्रायते यस्मात् गायत्रीति स्मृता ततः । माया गया इति प्रोक्तास्त्रायते तानथापि या । गायत्रीति भवेन्नाम केवलं त्रायतीति वा । व्यानशे प्राणिजिह्वासु सदा वाक्प्रवर्त्तनात् । सरस्वतीति आख्या च समाख्याता महर्षिभिः । सवितृप्रकाशकरणात् सावित्रीत्यभिधा भवेत् । जगतः प्रसवित्रीति हेतुनानेन वापि च । तस्मादियं सदोपास्या निशादिवसयोर्द्विजैः । गायत्री सन्धिवेलायां सैव सन्ध्येति कीर्त्तिता । यो जपेदर्थं ज्ञात्वा नश्यन्त्यंहांसि तज्जपात् । ऋषिश्छन्दो देवताश्च जपेत्साधान्विताः क्रमात् । ज्ञात्वा पदानि श्रुत्वाथ तुरीयं पादमव्ययम् । ब्रह्मणा याति तद्दास्यं पदं ज्ञात्वा तुरीयकम् । या गायत्री त्रिचरणा सा त्रिमूर्त्तिस्वरूपिणी । उपास्यानन्तरं विप्रैस्त्रिसन्ध्यासु त्रिमूर्त्तिषु । तुरीयपादमेतस्या ज्ञात्वा योपासिमाचरेत् । सा रत्नपूर्णां पृथिवीं दत्तवान् दोषभाग्भवेत् । ब्रह्मकेशवरुद्रादिदेवताभिरुपासिता । सन्ध्यान्तां कोऽन सेवेत विप्रः स्याटभिलाषुकः । प्रातः सतारकां सन्ध्यां सायं सन्ध्यां सभास्कराम् । स्नानकर्म्मणि तन्मध्यामुपासीत यथाविधि । प्रातरेवमुपास्यैव प्रकुर्य्यात् हवनं जपम् । स्नानस्यानन्तरं कुर्य्यात् तर्पणञ्च महाक्रतुम् । सायं सन्ध्यामुपासीत होमं कुर्व्वीत शासनात् । सन्ध्योपासनहीनो यो न योग्यः सर्व्वकर्म्मसु । तस्मादुपास्य विधिना सन्ध्यामन्यक्रियाचरेत् । नोपासयेद्द्विजः सन्ध्यां योऽसौ शूद्रत्वमाप्नुयात् । कर्म्माण्यन्यानि सन्त्यज्य सन्ध्यां यः केवलं द्विजः । उपास्ते, सर्व्वपुण्यानि कृतवान् स भवेद्ध्रुवम् । सन्ध्योपास्तिं विना विप्रः पुण्यान्यन्यानि चाचरेत् । यस्तस्य तानि पापानि भवन्त्येव न संशयः । नाशयेत् जन्मजनितं पापं दशजपादह । पुराकृतं शतजपाद्गायत्र्यास्तु द्विजन्मनः । शतं युगेऽपि चैकस्मिन् सहस्रेण जपेन तु । सहस्रा जपतस्त्वाद्यगायत्रीं सर्व्वदा जपेत् । समस्तयज्ञतन्त्रेभ्यो जपयज्ञः परः स्मृतः । हिंसया ते प्रवर्त्तन्ते जपयज्ञो न हिंसया । यावन्तः कर्म्मयज्ञाश्च दानानि च तपांसि च । ते सर्व्वे जपयज्ञस्य कलां नार्हन्ति षोडशीम् । जपेन देवता नित्यं स्तूयमाना प्रसीदति । प्रसन्ना विपुलान् भोगान् दद्यान्मुक्तिञ्च शाश्वतीम् । यक्षराक्षसवेतालप्रेतभूतपिशाचकाः । जपाश्रयं द्विजं दृष्ट्वा दूरन्ते यान्ति भीतितः । तस्माज्जपः सदा श्रेष्ठः सर्व्वस्मात् पुण्यसाधनात् । इत्येवं सर्व्वथा ज्ञात्वा विप्रो जपपरो भवेत् । एवं जपपरः सन्ध्यां भक्त्योपासीत यो द्विजः । नियमेन सदा गच्छेदमितं नात्र संशयः । तस्माज्जितेन्द्रियो नित्यं सन्ध्योपास्तिं समाचरेत् । स सर्व्वलोकान् जित्वाऽथ विप्रः स्ववशमानयेत् । तदन्ते ब्रह्मभावेन वसेदाभूतसंप्लवम् । तावन्नित्यो निरातङ्को भवेदत्र न संशयः । एवं सन्ध्याविधिं सर्व्वं यो विप्रोऽध्यापयेद् द्विजं । अध्यापको यथा यस्य श्रोता चैकाग्रमानसः । स सर्व्वपापनिर्म्मुक्तः सर्व्वविद्याविशारदः । अन्ते धान्यधनोपेतो जीवेद्वर्षशतं सुखी । एतद्विधानं योऽधीत्य श्रावयेत् ब्राह्मणोत्तमान् । प्रीतिपूर्व्वं प्रयत्नेन ब्राह्मणो नियमेन च । अज्ञानेन प्रमादेन दुरितं यत् समर्ज्जितम् । तत्र तत् सकलं नाशं व्रजेदत्र न संशयः । याः सन्ध्योपासनविधयो यत्र स्नाने विधीयते । पर्व्वणि श्रावणी यत्र तत् सर्व्वं पूर्व्वतामियात् । कामान्मोहाच्च लोभाच्च सन्ध्यां नातिक्रमेद् द्विजः । सन्ध्यातिक्रमणाद्विप्रो ब्राह्मण्यात्पतते यतः । अनागतां तु ये पूर्व्वामनतीताञ्च पश्चिमाम् । सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः ? । सायं प्रातः सदा सन्ध्यां ये न विप्रा उपासते । कामं तान् धार्म्मिको राजा शूद्रकर्म्मसु योजयेत् । विधानमेतन्नो देयं रहस्यं यस्य कस्यचित् । वेदाध्यायाभिलाषिताय प्रदेयं स द्विजन्मने" । ब्राह्मणस० योगियाज्ञवल्क्यः "अतःपरं प्रवक्ष्यामि सन्ध्योपासनमुत्तमम् । अहोरात्रकृतैः पापैर्यामुपास्य प्रमुच्यते" । तथा "यावन्तोऽस्यां पृथिव्यां हि विकर्म्मस्थास्तु वै द्विजाः । तेषां वै पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवा । या सन्ध्या सा तु गायत्री

द्विधा भूता प्रतिष्ठिता"। तथा "सा सन्ध्या कर्म विमानाम- होरात्रकृतस्य तु। पापापनुत्तये यस्मात् तस्मान्नित्यं समाचरेत्" यमः "सन्ध्यामुपासते ये तु सततं संशित- व्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्"। शा- तातपः "अनृतं मद्यगन्धञ्च दिवामैथुनमेव च। पुनाति वृषलस्यान्नं बहिः सन्ध्या ह्युपासिता"। याज्ञवल्क्यः "निशायां वा दिवा वापि यदज्ञानकृतं भवेत्। त्रिकाल- सन्ध्याकरणात् तत्सर्वं विप्रणश्यति"। दक्षः "सायं प्रातः सदा सन्ध्यामुपासीत शुचिर्बहिः"। विष्णुपु॰ "सर्वकाल- मुपस्थानं सन्ध्यायां पार्थिवेष्यते। अन्यत्र सूतकाशौच- विभ्रमातुरभीतितः"। योगियाज्ञवल्क्यः "यावन्तोऽपि यो विप्रः सन्ध्योपासनतत्परः। ब्राह्मण्यान्न स हीयेत अन्यजन्मगतोऽपि सन्। सन्ध्या सूपासिता येन तेन विष्णुरुपासितः। दीर्घमायुः स विन्देत सर्वपापैः प्रमु- च्यते"। तथा "सायं प्रातस्तु यः सन्ध्यां सम्यक् पर्यु- पासते। जपंश्च पावनीं देवीं सावित्रीं लोकमातरम्। स तया पावितो देव्या ब्राह्मणो धूतकिल्बिषः। न सीदेत् प्रतिगृह्णानोऽपि पृथ्वीं ससागराम्"। अग्नि- पुराणे "शृणु जन्तु "कथं शुभे! दिवं याति ब्राह्मणो हतकिल्बिषः। धर्मज्ञो हि नो ब्रूहि यदुक्तं वह्निना पुरा" इति उवाच "सायं प्रातश्च यः सन्ध्यामुपास्तेऽनुदिनं मानवः। जपते पावनीं देवीं गायत्रीं वेदमातरम्। तया स भावितो देव्या ब्राह्मणो धूतकिल्बिषः। न सी- देत् प्रतिगृह्णानः पृथिवीञ्च ससागराम्। ये चास्य दा- रुणाः केचिद्ग्रहाः सूर्यादयो दिवि। ते चास्य सौ- म्यतां यान्ति शिवाः शिवतरास्तथा। यत्र तत्र प्रतस्थैनं दारुणाः पिशिताशनाः। घोररूपा महाकायाः प्रभवन्ति न राक्षसाः। यावन्तश्च पृथिव्यां हि चीर्णवेदव्रता द्विजाः। अचीर्णव्रतवेदा वा विकर्मपथमाश्रिताः। ते- भ्यस्तु पावनार्थाय गायत्री नित्यमेव हि। द्वे सन्ध्ये ह्युपतिष्ठेत तदन्वर्थं महाव्रतम्"। तथा "द्वे सन्ध्ये ह्युपतिष्ठेत गायत्रीं प्रयतः शुचिः। यत्तस्य दुष्कृतं किञ्चित् पूर्वतः परतोऽपि वा। एवं किल्बिषयुक्तो हि विनिर्दहति पातकम्। उभे सन्ध्ये ह्युपासीत तस्मा- न्नित्यं द्विजोत्तमः"। तथा "सन्ध्या येन न विज्ञाता सन्ध्या नैवाप्युपासिता। जीवमानो भवेत् शूद्रो मृतः श्वा चाभि- जायते"। मनुः "न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्। स साधुभिर्बहिष्कार्यः सर्वस्माद् द्विजक- र्मणः"। व्यासः "बहिः सन्ध्या दशगुणा गोष्ठप्रस्रवणा- दिषु। ज्ञाते तीर्थे दशगुणा साहस्री जाह्नवीजले"। बहिरिति स्नानाच्छादितस्थाने प्राङ्गणादौ। शातातपः "गृहेषु प्राकृती सन्ध्या गोष्ठे शतगुणा स्मृता। नदीषु शतसाहस्रा अनन्ता शिवसन्निधौ"। गृहेषु गृहवीथ्यादौ। योगियाज्ञवल्क्यः "सन्धौ सन्ध्यामुपासीत नास्तगे नोद्- गते रवौ। सन्ध्यात्रयन्तु कर्त्तव्यं द्विजेनात्मविदा सदा"। संवर्त्तः "प्रातःसन्ध्यां सनक्षत्रामुपासीत यथाविधि। सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभा- स्कराम्"। नरसिंहपुराणे "पूर्वां सन्ध्यां सनक्षत्रामु- पक्रम्य यथाविधि। गायत्रीमभ्यसेत्तावद्यावदादित्य- दर्शनम्"। मनुः "ऋषयो दीर्घसन्ध्यत्वात् दीर्घमायुरवा- प्नुयुः। प्रज्ञां यशश्च कीर्त्तिञ्च ब्रह्मवर्चसमेव च। उ- पास्ते यस्तु नो सन्ध्यां ब्राह्मणो हि विशेषतः। स जीव- न्नेव शूद्रः स्यान्मृतः श्वा चाभिधीयते"। तथा "सन्ध्याहीनो- ऽशुचिर्नित्यमनर्हः सर्वकर्मसु। यदन्यत् कुरुते किञ्चित् न तस्य फलभाग्भवेत्"। यमः "अनागतान्तु ये पूर्वामतीतां चापि पश्चिमाम्। ये विप्रा नानुतिष्ठन्ति सन्ध्यां ते वृषलाः स्मृताः"। छन्दोगपरिशिष्टे कात्यायनः "सन्ध्या नोपास्य- चाकर्त्ता स्नानदानस्य यः सदा। तं दोषा नोपसर्पन्ति वैनतेयमिवोरगाः"। तथा "एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम्। यस्य नास्त्यादरस्तत्र न स ब्राह्मण उ- च्यते"। कूर्मपुराणे "न तिष्ठति तु यः पूर्वां नोपास्ते यस्तु पश्चिमाम्। स शूद्रेण समो लोके सर्वधर्मविवर्जितः"। मुख्यकाले सन्ध्यावन्दनाकरणे प्रायश्चित्तमाह। व्यासः "आदित्योऽभ्युदियाद्यस्य सन्ध्योपास्तिमकुर्वतः। स्नात्वा प्राणानायम्य गायत्र्यष्टशतं जपेत्" पारि- जाते तु "कालातिक्रमणे चैव चतुर्थार्घ्यं प्रदापयेत्" इत्युक्तम्। मलमासतत्त्वे तु "कालातीता तथा सन्ध्या वन्ध्यस्त्रीमैथुने यथा। गायत्रीं दशधा जप्त्वा पुनः सन्ध्यां समाचरेत्" काशीखण्डोक्तं प्रायश्चित्तान्तरमुक्तम्। अत्र यथाचारं व्यवस्था। सङ्गवपर्य्यन्तम् प्रातःसन्ध्याया गौण- कालः आप्रदोषावसानं सायंसन्ध्यायाः इति मदनः। "उदयास्तमयादूर्द्ध्वं यावत् स्याद्घटिकात्रयम्। तावत् सन्ध्यामुपासीत प्रायश्चित्तमतः परम्" इति स्कान्दे वि- शेष उक्तः। मध्याह्ने तु दक्षः "आध्यर्द्धयामादासायं सन्ध्या माध्याह्निकीष्यते। अर्घ्यप्रदानतः पूर्वमुदया- स्तमयेऽपि वा। गायत्र्यष्टशतं जप्यं प्रायश्चित्तं द्विजा-

तिभिः” इति। शौचकालेऽप्यसम्भवे यम “दिवोदितानि कर्म्माणि प्रमादादकृतानि चेत्। शर्व्वर्य्यां प्रथमे यामे तानि कुर्य्याद्यथाक्रमम्”। अत्र मुख्यकालातिरेकात् सायंसन्ध्योपासनं पूर्वं कृत्वा “आगन्तूनामन्ते निवेश” इति न्यायेनातीतकालं कर्म पश्चात् कार्य्यमिति न्यायत प्राप्तं तस्य निषेधार्थं यथाक्रममिति वचनमिति। “दिवोदितानि कर्म्माणि प्रागुक्तान्यितराणि च। दिवोदितानि कृत्वैव विदध्यादुत्तराणि तु” मदनपारिजाते वशिष्ठोक्तेः। सूतके विशेषः सूतके इत्यनुवृत्तौ “अवगाह्यापो मज्जनं सौरजप्यञ्च वर्जयेत्” इति “स्नानं सन्ध्यां त्यजन् विप्र सप्ताहाच्छूद्रतां व्रजेत्। तस्मात् स्नानञ्च सन्ध्याञ्च सूतकेऽपि न सन्त्यजेत्। सूतके मृतके चैव सन्ध्याकर्म्म समाचरेत्। मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विज” इत्यनयोरविरोधाय न मानससन्ध्यानिषेध इति कल्प्यम्। किन्तु प्राणायाममन्त्रा मनसापि नोच्चार्य्या इत्यर्थः। पैठिनसिस्तु “सूतके सावित्र्याञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यं ध्यायन्नमस्कुर्य्यात्” इत्यर्घ्यदानान्तां सन्ध्यामाह। अन्ये तु उच्चार्य्य वाचा गायत्रीं दद्यादर्घ्याञ्जलिमपि। अष्टविंशतिकृत्वोऽथ गायत्रीं मनसा जपेत्” इति गायत्रीजपमप्याहुः। “सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते” इति यद्यपि सन्ध्यायानिवृत्तिः श्रूयते तथाप्यञ्जलिप्रक्षेपादिकं कार्य्यम्। “सूतके सावित्र्या चाञ्जलिमक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यं ध्यायन्नमस्कुर्य्यादिति” पैठिनसिस्मरणात् इति मिताक्षरा सन्ध्यादीनामप्यपवादमाहापरार्के पुलस्त्यः “सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत्। न त्यजेत् सूतके वापि त्यजन् गच्छेदधो द्विज। सूतके मृतके चैव सन्ध्याकर्म्म समाचरेत्। मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विज”?। यत्तु चन्द्रिकायां जावाल “सन्ध्यां पञ्च महायज्ञान् नैत्यिकं स्मृतिकर्म्म च। तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया” यच्च संवर्त्तः “सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते” यच्च विष्णुपु० “सर्व्वकालमुपास्य तु सन्ध्ययोः पार्थिवेष्यते। अन्यत्र सूतकाशौचविभ्रमातुरभीतितः” इति। तत् सम्पूर्णसन्ध्यानिषेधपरम्। “अर्घ्यान्ता मानसी सन्ध्या कुशवारिविवर्ज्जिता” इति शुद्धिदीपे व्यवनोक्तेः। पैठीनसिस्तत्र मन्त्रोच्चारणमप्याह” सूतके सावित्र्याञ्जलिं प्रक्षिप्य सूर्य्यं ध्यायन्नमस्कुर्य्यात्”। मदनपारिजाते भरद्वाजोऽपि “सूतके मृतके कुर्य्यात् प्राणायाममन्त्रकम्। तथा मार्ज्जनमन्त्रांस्तु मनसोच्चार्य्य मार्ज्जयेत्। गायत्रीं सम्यगुच्चार्य्य सूर्य्यायार्घ्यं निवेदयेत्। मार्ज्जनं तु न वा कार्य्यमुपस्थानं न चैव हि”। इत्येवं मिताक्षरापरिजातादौ अशौचे सन्ध्याकरणविशेषस्योक्तेः गौडानां तदनाचरणमनाचार एव तस्य शीतलेन कृत्वा काशातुन्नितत्वादपि मिताक्षराद्युक्तं युक्तमिति द्रष्टव्यम्।

**प्रातःसवन** न० सवनं यज्ञाङ्गकर्म्मभेदः सोमाभिषवादि प्रातः कर्त्तव्यम् सवनम्। प्रातः कर्त्तव्ये यज्ञाङ्गकर्म्मभेदे। अप प्रातः सव तत्रार्थे पु०।

**प्रातःस्नान** ७त०। प्रातःकर्त्तव्ये जलावगाहनादिरूपे स्नाने तस्य कर्माङ्गताद्युक्तं गरुडपु० “उषःकाले तु सम्प्राप्ते कृत्वा चावश्यकं बुधः। स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि। प्रातःस्नानेन पूयन्ते येऽपि पापकृतो जनाः। तस्मात् सर्व्वप्रयत्नेन प्रातःस्नानं समाचरेत्। प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टशुभं हि तत्। सुखसुप्तस्य सततं लालाद्याः संस्रवन्ति हि। अतो नैवाचरेत् कर्म्माण्यकृत्वा स्नानमादितः। अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम्। प्रातःस्नानेन पापानि धूयन्ते नात्र संशयः। न च स्नानं विना पुंसां प्राशस्त्यं कर्म्म संस्मृतम्। होमे जप्ये विशेषेण तस्मात् स्नानं समाचरेत्। अशक्तावशिरस्कन्तु स्नानमस्य विधीयते”।

**प्रातःस्मरणीय** त्रि० ७त०। प्रातःकीर्त्तनीये देवादौ पुण्यचरिते। प्रभातशब्दे ४४७५ पृ० दृश्यम्।

**प्रातर्** अव्य० प्र+अत–अर। १प्रभाते अमरः “प्रातःकाले मुहूर्त्तां स्त्रीनि”ति स्मृत्युक्ते २सूर्य्योदयावधिमुहूर्त्तकाले च

**प्रातर** त्रि०प्रकृष्ट आतरो यत्र। प्रकृष्टातरयुक्ततरणपथयुक्ते देशे तत भवार्थे चतुरर्थ्यां छण्। प्रातरीय तत्रादूर देशादौ त्रि०।

**प्रातरचक** पु० सर्पभेदे भा०आ० ५७अ०।

**प्रातरनुवाक** पु० प्रातःपाठ्ये अनुवाके वेदांशभेदे यत्ते “प्रातरनुवाकं जाग्रदुपासीत” कात्या० श्रौ० ९।१।१२ “पुरा प्रातरनुवाकस्य” का०च० “प्रातरनुवाकस्य प्रारम्भात्” भा० “अप्रगीतमृग्जातं यस्मिन् यत् प्रातःकाले पठ्यते प्रातरनुवाकसंज्ञेति यावत्” आनन्द०। [शिक्षा०

**प्रातराश** पु अश+भावे घञ् ७त०। प्रातःकालिके भोजने

**प्रातर्गेय** पु प्रातर्गेयमस्य। १स्तुतिपाठके शिक्षा० २प्रातःकाले गातव्ये सामादौ च त्रि०।

**प्रातर्दिन** न० कर्म० । पूर्ववर्त्तिनि दिवसे त्रिकाण्डशेष० ।

**प्रातर्भोक्तृ** पु० ७त० । काके शब्दच० ।

**प्रातर्भोजन** न० ७त० । प्रातराशे जटाध० ।

**प्रातस्तरा(मा)म्** अव्य० प्रातर्+तरप् तमप् वा आमु । अत्यन्तप्रातःकाले "प्रातस्तरां पतत्रिभ्यः" भट्टिः ।

**प्रातस्त्रिवर्गा** स्त्री प्रातः प्रातःस्नानेन त्रिवर्गो यस्याः । गङ्गायां भा०अनु० २६अ० ।

**प्राति** स्त्री प्रा+भावे क्तिन् । १पूर्त्तौ २लाभे च मेदि० ।

**प्रातिकण्ठिक** त्रि० प्रतिकण्ठं गृह्णाति प्रतिकण्ठ+ठक् । प्रतिकण्ठग्राहके ।

**प्रातिका** स्त्री प्र+अत–ण्वुल् टाप् । जवापुष्पे राजनि० ।

**प्रातिकामिन्** दुर्य्योधनस्य दूतभेदे भा०स० ६५अ० ।

**प्रातिकूलिक** त्रि० प्रतिकूलं वर्त्तते प्रतिकूल+ठञ् । प्रतिकूलं वर्त्तमाने स्त्रियां ङीप् "तां प्रातिकूलिकीं मत्वा" भट्टिः

**प्रातिक्य** न० प्रतिकस्य भावः पुरोहिता० यक् । प्रतिकभावे

**प्रातिजनीन** त्रि० प्रतिजनं साधु प्रतिजना० खञ् । प्रतिजनं साधौ । कात्या०श्रौ०२५।१२।४

**प्रातिनिधिक** पु० प्रतिनिधि+स्वार्थे ठक् । प्रतिनिधौ

**प्रातिपथिक** त्रि० प्रतिपथमेति ठञ् । प्रतिपथं गन्तरि स्त्रियां ङीप् । [तिथौ भवे ।

**प्रातिपद** त्रि० प्रतिपदि भवः सन्धिवेला० अण् । प्रतिपदि-

**प्रातिपदिक** त्रि० प्रतिपदायां तिथौ भव "कालाट् ठञ्" पा० ठञ् । १प्रतिपदायां तिथौ भवे २आविर्भूते वह्नौ पु० "आदौ प्रतिपदा येन त्वमुत्पन्नोऽसि पावक । । त्वत्पदात् प्रातिपदिकं संभविष्यन्ति देवता" वराहपु० । ३नाम्नि शब्दभेदे "यत् प्रातिपदिकं नाम तदात्मा नातिरिच्यते" शब्दच०। तल्लक्षणन्तु "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" "कृत्तद्धितसमासाश्च" पा० व्याख्याने चैते सरलायामस्माभिः "अधातुरप्रत्यय इति पुंलिङ्गनिर्द्देशस्तु परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरित्यभिधानात् । एतत्सूत्रे परसूत्रे चार्थवत्त्वमेतत्संज्ञाफलीभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थबोधजनकत्वम् अन्यथाऽधातुरिति पर्य्युदासेन व्याख्यानाद्वाऽर्थवत्त्वं साधयत्प्रग्रहणेन सिद्धे उत्तरसूत्रे लटादीनामनर्थकानामसिद्धेश्चार्थवत्त्वग्रहणं व्यर्थं स्यात् । अहन्निति धातौ काण्डे इत्यादि प्रत्ययान्ते च एतत्साध्यविभक्त्यनपेक्षत्वेऽपि तदितरानपेक्षत्वसत्त्वेऽपि अधातुरप्रत्यय इति तत्पर्युदासः । एकदेशवर्णेऽर्थबोधजनकत्वाभावान्नातिप्रसङ्गः । अत्र प्रत्ययपदं प्रत्ययप्रत्ययान्तपरं तस्मादन्त्यवोभयग्रहणादित्याह (प्रत्ययं प्रत्ययान्तञ्चेति) सि०कौ०)। अतएव भाष्ये "न लोके केवलेन प्रत्ययेनार्थोऽवगम्यते केन तर्हि सप्रकृतिकेन" इत्युक्तम् हरिणाप्युक्तम् । "धात्वादीनां विशुद्धानां लौकिकार्थो न विद्यते । कृत्तद्धितानामर्थश्च केवलानामलौकिकः । प्राग्विभक्तेस्तदन्तस्य तदर्थार्थो न विद्यते" इति । भू सत्तायामित्यादौ कर्त्तव्यमित्यादौ चार्थकथनन्तु अलौकिकार्थकथनमात्रं प्रक्रियादशायामिति वेदितव्यम् "ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले । देवदत्तादयो वाक्ये तथैव स्युर्निरर्थकाः" इत्युक्तेः खण्डवाक्यस्यापि बोधकत्वात्तस्यापि प्रातिपदिकत्वापत्त्या तदुत्तरं स्वादिप्रसङ्ग इति तन्निवारणायेदं नियमसूत्रमित्याह "पूर्वसूत्रेणेति" सि०कौ०। प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणमिति न्यायादेव प्रत्ययान्तत्वलाभात् कृत्तद्धितादीनामपि प्रत्ययत्वात् पूर्वसूत्रेण संज्ञासिद्धेरिति भावः । पदमिति स्वातन्त्र्येण प्रयोगार्हमर्थवदित्यर्थः । अनुकरणस्य शब्दमात्रपरतया न प्रातिपदिकत्वमनुकरणस्यानितिपरस्य प्रयोगार्हत्वेऽपि इतिपरस्य पृथक् प्रयोगार्हत्वादिति गवित्ययमाहेत्यादौ न प्रसङ्गः" हरिणाप्युक्तम् । अतएव "गवित्याह भू सत्तायामितीदृशम् । न प्रातिपदिकं नापि पदं साधु तु तत् स्मृतम्" । प्रातिपदिकार्थे द्योत्ये प्रथमैव । तदर्थञ्च नामार्थाः "स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्या कर्मादिरेव च । अमी पञ्चैव नामार्थास्त्रयः केषाञ्चिदग्रिमाः" इत्युक्ताः । तत्र अलिङ्गा, नियतलिङ्गाश्च प्रातिपदिकार्थे प्रथमाया उदाहरणम्" सि० कौ० ।

**प्रातिपीय** पु० १नृपभेदे भा०द्रो०१५७अ०। २गोत्रप्रवर्षिभेदे च प्रवराध्यायः ।

**प्रातिपेय** पु० नृपभेदे भा०स० ६८अ० ।

**प्रातिभ** त्रि० प्रतिभाऽस्त्यस्य प्रज्ञा० अण् । १प्रतिभान्विते योगिनां योगविघ्नकारके २उपसर्गभेदे मार्कण्डेयपु० ४०अ० "यथा "प्रातिभः श्रावणो दैवो भ्रमावर्त्तौ तथापरौ । पञ्चैते योगिनां योगविघ्नाय कटुकोदयाः" । वेदार्थाः काव्यशास्त्रार्थाः विद्याः शिल्पान्यशेषतः । प्रतिभान्ति यदस्येति प्रातिभः स तु योगिनः । शब्दार्थानखिलान् वेत्ति शब्दं गृह्णाति चैव यत् । योजनानां सहस्रेभ्यः श्रावणः सोऽभिधीयते । समन्ताद्वीक्षते चाष्टौ स यदा देवतोपमः । उपसर्गमप्याहुर्दैवमुन्मत्तवद् बुधाः । भ्राम्यते यन्निरालम्बं मनो दोषेण योगिनः । समस्ता-

न्यारभिन्नं याद् भ्रमं स परिकीर्त्तितः। आवर्त्त इव तोयस्य प्राणावर्त्तो यदाकुलः। नाशयेच्चिरमावर्त्तम् उपसर्गः स उच्यते। एतैर्नानाविधयोगास्तु यथावा देवयोनयः। उपसर्गैर्महाघोरैरावर्त्तन्ते पुनःपुनः"।

**प्रातिभाव्य** न० प्रतिभुवो भावः ष्यञ् द्विपदवृद्धिः। (जामिनि) १प्रतिभूभावे प्रतिभूत्वेन देये २धने च मनु ८।१५८ दर्शनप्रतिभूशब्दे ३३७५ पृ० दृश्यम्।

**प्रातिभासिक** त्रि० प्रतिभासादागत ठक्। प्रतिभासाधीन सत्त्ववति मिथ्यारजतादौ वेदान्तमते हि सत्त्वं त्रिविधं पारमार्थिकं व्यावहारिकं प्रातिभासिकं च तत्र ब्रह्मणः सत्त्वं पारमार्थिकं त्रिकालाबाध्यत्वात्, घटादीनां सत्त्वं व्यावहारिकं व्यवहारकालेऽबाध्यत्वात्, शुक्तौ रजतादेः सत्त्वं प्रातिभासिकम् अधिष्ठानज्ञानबाध्यत्वात् प्रतिभासकालमात्रसत्त्वाच्चेति वेदान्तपरिभाषाया स्थितम्।

**प्रातिशाख्य** त्रि० प्रतिशाखं भवः परिमुखा० ञ्य। प्रतिशाख भवे व्याकरणभेदे न०।

**प्रातिश्रुत्क** पु० प्रतिश्रुति तद्वमने भवः ठञ्। प्रतिश्रवणवेलाया भवे पुरुषे "यत्र वाय ऋतौ प्रातिश्रुत्कः पुरुष" इ० उ०। [२प्रतिध्वनिभवे च।

**प्रातिस्विक** त्रि०प्रतिस्व भव ठक्। १असाधारणे २स्वकीये त्रिका०।

**प्रातिहत्य** न० प्रतिहर्तुर्भावः कर्म वा उद्गात्रा० अञ्। प्रतिहर्तृरूपस्य ऋत्विग्भेदस्य कर्मणि १प्रतिहरणे २तद्भावे च।

**प्रातिहारक** पु० प्रतिहारक एव स्वार्थे अण्। प्रतिहारकशब्दार्थे अमर। [कारके अमरः।

**प्रातिहारिक** त्रि० प्रतिहार प्रयोजनमस्य ठक्। माया-

**प्रातीतिक** त्रि०प्रतीत्या निर्वृत्तः ठञ्। प्रातिभासिके पदार्थे

**प्रातीप** प्रतीपस्यायम् अण्। प्रतीपनृपस्यापत्ये शान्तनौ नृपे त्रिका०। [कूलाचारिणि।

**प्रातीपिक** त्रि० प्रतीप वर्त्तते ठञ्। प्रतीपं वर्त्तमाने प्रति-

**प्रात्रट** पु० ऋषिभेदे शत०ब्रा० ११।८।११२

**प्रात्ययिक** त्रि० प्रत्ययाय स्थित ठक्। प्रतिभूभेदे "दर्शनप्रतिभूर्यत्र मृत प्रात्ययिकोऽपि वा" याज्ञ०। दर्शनप्रतिभूशब्दे ३३७८ पृ०दृश्यम्।

**प्राथमकल्पिक** त्रि० प्रथमकल्पे भव ठक्। १प्रथमारम्भोचिते वेदाध्ययनादौ। प्रथमं कल्पमधीते कल्पादित्वात् ठक्। २प्रथमकल्पकर्पविद्याध्याय्याध्यायिनि अमरः।

**प्राथमिक** त्रि० प्रथमे भवः ठञ। १प्रथमभवे स्त्रियां ङीप्।

प्रथममधीते प्रथम+ठक्। वेदादेः २प्रथमाध्येतरि च।

**प्रादि** पु० उपसर्गसमार्थं पा०उक्ते शब्दभेदे स च गण पा० ग०उक्तो यथा "प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत्(द्) अभि प्रति परि उप" एते प्रादयः। निस् दुस् शब्दौ निसस्तपतावनासेवने इति (८।३।१०) सूत्रे निस इति निर्देशात् निष्कृतं दुष्कृतमित्युदाहृत्य "इदुदुपधस्य चो विसर्जनीयः" इति भाष्योक्तेश्च। निरः कुषः इति (७।२।४६) "दुरोरधिकरणे" इति च निर्देशात् रान्तावपि सन्तौ। उदिति दान्तोऽपि "उदोऽनूर्ध्वचेष्टायामिति"। "उपसर्गाः क्रियायोगे" पा० "गतिश्च" पा० प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः" सि०कौ०।

**प्रादुराक्षि** पु० गोत्रप्रवरर्षिभेदे प्रवराध्यायः।

**प्रादुर्भाव** पु० प्रादुस्+भू—भावे घञ्। आविर्भावे प्रथमप्रकाशे

**प्रादुस्** अव्य० प्र+अट—उसि। प्राकाश्ये अमरो० अस्य क्रियायोगे गतिसंज्ञा प्रादुष्कृत्य प्रादुर्भूय। स्वार्थे वत् न द्विलोप प्रादुष्य प्रादुर्भावे न० उज्ज्वलदत्तः।

**प्रादेश** पु० प्र+दिश-घञ् दीर्घ.। १तर्जनीयुक्तविस्तृतांगुष्ठे अमर २देशमात्रे मेदि० "अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते" इत्युक्ते ३परिमाणभेदे च हेमच०।

**प्रादेशन** न० प्र+आ+दिश—ल्युट्। दाने अमरः।

**प्रादेशिक** त्रि० प्रदेशे भव ठक्। प्रदेशभवे [स्त्रियां ङीप्।

**प्रादोष(षि)क** त्रि० प्रदोषे भवः वा अणठञौ। प्रदोषभवे

**प्रादोहनि** पु०स्त्री प्रदोहनस्यापत्यम् इञ्। तदपत्ये। तत युनि फक् तौल्व० तस्य न लुक्। प्रादोहनायनि तदीये यून्यपत्ये पु स्त्री०। [करणे भाग०१।८।२१।

**प्राधनिक** त्रि० प्रधन सङ्ग्राम प्रयोजनमस्य ठञ्। युद्धोप-

**प्राधा** स्त्री प्रधैव स्वार्थे अण्। दक्षकन्याभेदे काश्यपपत्नीभेदे हरिवं०२२६अ०। तस्या. अपत्य ठक्। प्राधेय तदपत्ये पु स्त्री० तदपत्यानि च देवगन्धर्वादयः भा०आ०६५ अ०। अग्निपुराणे प्राधेया इत्येव पाठः शब्दकल्पद्रुमे प्राधेयं शब्दकल्पनं लिपिकरप्रमादजातपाठदर्शनात् इति बोध्यम्।

**प्राधानिक** त्रि० प्रधान+स्वार्थे ठक् तस्येद ठक् वा। १प्रधानशब्दार्थे २प्रधानसम्बन्धिनि च "प्राधानिकरहस्य" इत्यादि देवीमाहात्म्यव्याख्याया नागोजीभट्टेन स्थितम्।

**प्राधान्य** न० प्रधानस्य भाव ष्यञ्। श्रेष्ठत्वे। भावे त्वप्रधानत्व न० तल् प्रधानता स्त्री तत्रार्थे। "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता" शाब्दिककारिका।

प्रामाण्यभेदे तच्च न्यायमते परतोग्राह्यं मीमांसकादिमते स्वतः, स्वमात्मग्राह्यं वा ग्राह्यमिति भेदः। प्रमाणशब्दे दृश्यम्। [इष्टे ब्रह्मच०। भावे ष्यञ्। २प्रमादे न०।

प्रामाद्य पु० प्रमाद्यत्यनेन प्र+मद बा० करणे ण्यत्। १मादक-

प्रामीत्य न० प्र+मी—भावे क्विप् तत्र साधु ष्यञ्। १ऋणे लिङ्गा० पाठान्तरम्। प्रमीतस्य भावः ष्यञ्। २मरणे न०।

प्राय पु० प्र+अय—इण्—वा घञ्—अच् वा। १मृत्यौ २अनशनमृत्यौ ३बाहुल्ये च मेदि० "प्रायेण सामग्र्यविधौ गुणानाम्" कुमार। तत्र प्रकृत्यादि० सर्वविभक्त्यन्तात् तृतीया प्रायेण गार्ग्यः सि०कौ०।

प्रायण न० प्र+अय—भावे ल्युट्। १देहत्यागेन स्थानान्तरगमने मनु ८।२२१ श्लो० उदा०। २प्रारम्भे च "सैषा त्रिवृत्प्रायणा" ताण्ड्यब्रा० २।१५।१ "त्रिवृत् स्तोमस्तस्य प्रायणे प्रारम्भो यस्याः" भा०।

प्रायणीय त्रि० प्रायणे आरम्भदिने तत्र विहितः छ। १प्रारम्भदिने २गवामयनप्रथमाहादौ च विहिते अतिरात्रे यागभेदे च "प्रायणीयेऽद्य सुत्यामेके" कात्या० श्रौ० १०।६।२६ 'प्रायणीयोऽतिरात्र एवाह साध्य" देव नायः। ताण्ड्यब्रा० ४।२।१।२ भाष्ये द्वितीयाहस्यैव प्रायणीयसंज्ञा तन्निरुक्तिश्च दर्शिता यथा "प्रायणीयमेतदहर्भवति" मू०। "एतदहरारभ्यमाणमहः प्रायणीयं प्रकर्षेण यान्ति गच्छन्ति स्वर्गमनेनेति व्युत्पत्तेः। एतत् खलु गवामयनस्य द्वितीयमहरनुष्ठेयं भवति। यद्यपि श्रुत्यन्तरे प्रथमविहितस्यातिरात्रस्यैव प्रायणीय इति संज्ञा प्रसिद्धा तथापि प्रथमोत्तमयोरतिरात्रयोः सर्वत्र साधारणत्वात् तस्यैवाङ्गो गवामयने असाधारण्यं प्राथम्यमिति कृत्वा एतदादिकं गवायनस्वरूपमित्यभिन्न द्वितीयेऽहनि प्रायणीयशब्दोऽत्र प्रयुज्यते। उक्तमर्थमाम्नानविवेचनद्वारा प्रशंसति" भा० "प्रायणीयेन वा यज्ञा देवाः स्वर्गं लोकमायन् यत् प्रायंस्तत् प्रायणीयस्य प्रायणीयत्वम्" मू० "पुरा देवाः प्रायणीयेन प्रायणीयाख्येन अह्ना स्वर्गं लोकमायन् प्राप्ताः यद्यस्मात् प्रायन् स्वर्गं प्रागमन् तस्मादस्याह्नः प्रायणीयत्व प्रायणीयसाधारण्यात् प्रायणीयमिति नाम सम्पन्नम्" भा०। तदहःकर्त्तव्यत्वादतिरात्रस्य प्रायणीयत्वमिति बोध्यम्।

प्रायश्चित्त न० पापक्षयमात्रसाधनत्वेन विधिबोधिते कर्मभेदे यथोक्तं प्रा०वि०

अङ्गिराः "प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते। तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्। निश्चयसंयुक्तं पापक्षयसाधनत्वेन निश्चितमित्यर्थः। तथा हारीतः "प्रयतत्वाद्वोपचितमशुभं नाशयतीति प्रायश्चित्तम्"। एतेन पापक्षयमात्रसाधनं कर्म प्रायश्चित्तमिति तल्लक्षणम्। मात्रपदात् तपःपुरश्चाश्वमेधादिव्यावृत्तिः। तत्र पापविशेषस्यैव कामाकामकृतस्य शक्तिविशेषस्य ततो नाशः मतभेदेन व्यवहार्यशब्दे ४७०।७ दर्शितः। "प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्। कामतो व्यवहार्यस्तु वचनादिह जायते" याज्ञ० वचनस्य [illegible] व्याख्याने मतभेदेन दर्शितं यथा

"कामत इति अज्ञानकृतपापप्रायश्चित्तेन कामकृतपापापगमो न भवति। किन्तु व्यवहार्य्यतामात्रम्। ननु कृते पापे कथं व्यवहार्य्यतामात्रम् अत आह वचनादिति। अयमभिप्रायः यद्यपि प्रायश्चित्तानुष्ठानेनाशु पापक्षयात् सम्भाषणस्पर्शनदर्शनादिव्यवहारो न दुष्टः न तु भोजनपरिवेषणव्यवहारोऽपि वचनादेव यथा कृतनिर्णेजनादिरूषितमहापापशेषसद्भावे व्यवहार्य्यतेति। अथ वा अकारप्रश्लेषाद् यथोक्तेन प्रायश्चित्तेन कामतोऽपि पापक्षयो भवत्येव किन्त्वव्यवहार्य्यः पापाभावेऽपि वचनात्। अत एव मनुः "बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः। शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्"। याज्ञवल्क्यः "शरणागतबालस्त्रीहिंसकान् संवसेन्न तु। चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्"। कृतनिर्णेजनांश्चैव न जुगुप्सेत कर्हिचित्" इति मनुवचनं त्वज्ञानकृतमहापापे बोद्धव्यमिति। भवदेवस्तु सर्वत्र "अतः शुद्धिमवाप्नुयादिति" दर्शनादत्राव्यवहार्य्यतावचनं निन्दार्थमित्याह। [illegible]नस्तु पापकर्मणा हि द्वयं जन्यते शरीरगतमप्रायत्यमात्मगतञ्च पापं तत्र स्नानादौ वैदिककर्मणि चानर्हत्वलक्षणं तेनात्र कामनाकृते केवलशरीरदोषः प्रायश्चित्तेनापनीयते जन्मान्तरकृतदुरितस्येवात्मनः शरीरान्तरस्य व्यवहाराधिकारित्वम् आत्मगतञ्च पापं भोगादेव क्षीयते" तच्च कामकारकृतेऽप्याङ्गिरसे श्रुतिनिदर्शनात् इति वचनादुक्तश्रुतिविरोधाच्च"। मिताक्षरामतन्तु व्यवहार्यशब्दे दर्शितम्। प्रायश्चित्तस्य काम्यत्वं नैमित्तिकत्वं नित्यत्वञ्च यथाह जाबालः "काम्यानां सफलार्थञ्च दोषघातार्थमेव च। अतः काम्यं नैमित्तिकञ्च प्रायश्चित्तमिति स्थितिः। चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये। निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः"। कामाकामकृत०

-षधयोजनमात्रेण स्वल्पतरदण्डाघातेन वा मूर्च्छया पतनं भवति अनन्तरं गमनं ग्रासादौ कृते मरणं भवति तदा गमनग्रासजलपानैस्तदानीन्तनमरणे हेत्वभाव निश्चित्य पूर्वव्याधिनिमित्तत्वं ज्ञायते। यदि तु पूर्वव्याधिरहित एव प्रहारजनितव्याधिना ग्रासादि कृत्वापि म्रियते तदा प्रायश्चित्तमस्त्येव। संवर्त्तः "यन्त्रणे गोश्चिकित्सायां मूढगर्भविमोचने। यत्ने कृते विपत्तिः स्यात् प्रायश्चित्तं न विद्यते। औषधं स्नेहमाहारान् दद्याद् गोब्राह्मणेषु च। प्राणिनां प्राणहान्यर्थं प्रायश्चित्तं न विद्यते। दाहच्छेदशिराभेदप्रयत्नैरुपकुर्वताम्। द्विजानां गोहितार्थं वा प्रायश्चित्तं न विद्यते" मूढगर्भः अन्तर्मृतगर्भः अत्र वैचित्र्ये यत्नेन तथार्थत्वात्। याज्ञवल्क्यः "क्रियमाणोपकारे तु मृते विप्रे न पातकम्। विपाके गोवृषाणाञ्च भेषजाग्निक्रियासु च"। विशेषमाहाङ्गिराः "शृङ्गभङ्गेऽस्थिभङ्गे च चर्मनिर्मोचनेऽपि वा। दशरात्रं चरेत् कृच्छ्रं यावत् स्वस्था न यदि गौर्भवेत्"। द्विजानां गवाञ्च हितार्थमित्यर्थः। अत्र प्राणरक्षार्थमाहारादिदानैर्मरणे दोषाभावस्य वाचनिकत्वात् गलबन्धनादि मरणे नात्मघातादि। एवं "गोपालको गवां गोष्ठे धूमं यस्तु न कारयेत्। मक्षिकादीनरके मक्षिकाभिः स भक्ष्यते" इति देवीपुराणानुसाराटग्निप्रज्वालय तत्रैव स्थितस्य दैवात्तदग्निना मरणे दोषाभावः। तत्रास्थितस्य तु अपालननिमित्तगोवधजन्यदोषः। मिताक्षरायां पराशरः "कूपे खाते च धर्मार्थं गृहदाहे च ये मृताः। ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते" इदन्तु बन्धनरहितस्य पशोः कदाचित् दाहादिना मृतविषयम्। इतरत्रापस्तम्बोक्तम् "कान्तारेष्वथ वा दुर्गे गृहदाहाश्वटादिषु। यदि तत्र विपत्तिः स्यात् पाद एको विधीयते"। इति ज्ञेयम्। एतद्वचनं यत्नेति भवदेवभट्टः। चिकित्सायां पापाभावो यथावदुपचारे बोध्यः। न पुनः सन्निपाताभिभूतस्योदकपानादिना। अतएव मनुः "चिकित्सायास्तु सर्वेषां मिथ्याप्रचरतो दमः"। काश्यपोऽप्यत्र प्रायश्चित्तमाह "दोषी दमनातिदोहनासामाग्रदामघण्टाभरणयोजनात् तैलपानौषधविनियोगाद्व्यापन्नानां प्रायश्चित्तं ब्राह्मणेभ्यो विनिवेद्य अधिकवपनं कृत्वा प्राजापत्यकृच्छ्रमाचरेत्। चीर्णान्ते गां दक्षिणां ब्राह्मणाय दद्यात् पिष्टं तिलयेद्व नेति"।

प्रायश्चित्तपूर्वाहकृत्यम्। शङ्खलिखितौ "वाचं नियम्य प्रातः पूर्वं एव प्राच्य बहिर्निशि। प्रत्येक नियत कामात्मनो व्रतमादिशेत्। प्रायश्चित्तमुपासीनो वाग्यतस्त्रिषवन स्पृशेत्"। केशधारणेच्छाया द्विगुणव्रतादिकमाह हारीतः "राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः। केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत्। केशानां धारणार्थं तु द्विगुणं व्रतमाचरेत्। द्विगुणे तु व्रते चीर्णे द्विगुणा दक्षिणा भवेत्। विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम्। ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः"। स्त्रीणां विशेषमाह भवदेवभट्टधृत वचनम्। "वपनं नैव नारीणां नानुव्रज्या जपादिकम्। न गोष्ठे शयनं तासां न च दध्याद्गवाजिनम्। सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम्। सर्वत्रैवं हि नारीणां शिरसो मुण्डनं स्मृतम्"। पापभेदेषु प्रायश्चित्तभेदाः प्रायश्चित्तविवेकादौ दृश्याः विस्तरभयान्नोक्ताः। तस्येदं छ। प्रायश्चित्तीय तदाचरणे न०।

प्रायश्चित्ति स्त्री प्राय (अव्ययम्)। तपश्चित्तिः चित–भावे क्तिन् शक०। प्रायश्चित्तशब्दार्थे

प्रायश्चित्तिन् त्रि०प्रायश्चित्तं कर्त्तव्यत्वेनास्त्यस्य इनि। प्रायश्चित्तार्हे स्त्रियां ङीप्। "प्रायश्चित्ती भवेत् पूतस्तत् पापं तेषु गच्छति" मा० त०। ठन् प्रायश्चित्तिक तत्रार्थे

प्रायस् अव्य० प्र+अय–असि। १बाहुल्ये २तपसि अनशनादौ च "प्रायः पयोधरसमुन्नतिरत्र हेतुः" उद्भट। "प्रायो नाम तपः प्रोक्तम्" स्मृति।

प्रायाणिक त्रि० प्रयाणाय हित ठक्। यात्रिकद्रव्ये गजचामरादौ प्रायाणिकादयोऽप्यत्र।

प्रायिक त्रि० प्रायेण भव ठक्। प्रायभवे। [शब्दर०।

प्रायुद्धेषिन् पु०प्रायुधि प्रकृष्टयुद्धार्थं हेषते हेष–णिनि। अश्वे

प्रायोग पु० प्रयुज्यते शकटादौ प्र+युज–कर्मणि घञ् कुत्वम् दीर्घः। शकटादौ नियोगार्हे वृषे ऋ० १।१०६।२ भा०।

प्रायोगिक त्रि० प्रयोगं नित्यमर्हति छेदा० ठञ्। नित्यप्रयोगार्हे।

प्रायोज्य न० प्र+आ+युज–णिच्–कर्मणि यत्। प्रयोजनीये "प्रायोज्य न विभज्येत" कात्या०श्रौ०। "प्रायोज्यम् प्रयोजनार्हं यथा परिकृतस्य पुस्तकादि न तत् विभजनीयमिति" दायभागः।

प्रायोपविष्ट त्रि० प्रायाय अनशनमरणाय उपविष्टः उप+

विग्र—क्त । अनशनेन मरणायोद्युक्ते भा०आश्व०८०अ०।

**प्रायोपवेश** पु० प्रायाय अनशनस्थलये उपवेश स्थितिः । सङ्कल्पपूर्वकम् सकलकार्यत्यागेन अनशनमरणार्थमुद्यमे भा०व० २५० श्लो० । भावे ल्युट् । प्रायोपवेशन तत्रार्थे न०। भा०उ० १५१२८ श्लो०।

**प्रायोपेत** त्रि० भीष्मो भीमसेन वत् प्रायः प्रायोपवेश तेन उपेतः । प्रायोपवेशनयुते भा०भी० १६अ० ।

**प्रारब्ध** न० प्र+आ+रभ—आरम्भे क्त प्रकृष्टमारब्धं स्वकार्यं अननाय कृतारम्भं येन । १देहाद्यारम्भके २अदृष्टभेदे तस्य च भोगेनैव क्षय इति शास्त्रे प्रसिद्धम् । "अवश्यमेव भोक्तव्यं कृत कर्म शुभाशुभम् । नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" शास्त्रेण प्रारब्धकर्मणो भोगं विना नाशाभावश्चोक्तेः "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ।" गीतायां ज्ञानस्य सर्वकर्मनाशकत्वोक्तिः प्रारब्धकर्मातिरिक्तविषयेत्याकरे दृष्टव्यम् । २कृतारम्भे त्रि० ।

**प्रारब्धि** स्त्री प्र+आ+रभ—करणे क्तिच । १गजबन्धनदामनि त्रिका० । भावे क्त । २आरम्भे ।

**प्रारम्भण** न०प्र+आ+रभ—ल्युट् मुम् । प्रकर्षेणारम्भे । प्रारम्भणं प्रयोजनमस्य अनुम०छ । प्रारम्भणीय तत्प्रयोजनके त्रि०। प्र+आ+रभ—भावे घञ् मुम् । प्रारम्भ प्रकर्षेण आरम्भे पु० [स्त्रियां टाप् ।

**प्रारोह** त्रि० प्ररोहः प्रोजमस्य अच्चा० च । प्ररोहणशीले

**प्रार्ण** न०प्रकृष्टमृणं ऋद्धि० । १प्रकृष्टे ऋणे मा०व०। २तद्युते त्रि०

**प्रार्थना** स्त्री प्र+अर्थ—युच् । १याच्ञायां २स्पृहायां च । ३गर्भोत्क्रुमभेदे सा०द० "अपरञ्चानुमानस्तु प्रार्थना क्षिप्तिरेव च" गर्भाङ्कान्युद्दिश्य "रतिहर्षोत्सवानान्तु प्रार्थनं प्रार्थना भवेत्" इति लक्षिता । ल्युट् । प्रार्थन याचने स्पृहने च न० । ४मुद्राभेदे "प्रसृताकुञ्चितौ हस्तौ मिथःश्लिष्टौ च सम्मुखे । कुर्यात् स्वहृदये येयं मुद्रा स्यात् प्रार्थनाभिधा" तन्त्रसा० ।

**प्रार्थनीय** त्रि० प्र+अर्थ—कर्मणि अनीयर् । १याचनीये अर्थयतेर्याचनार्थत्वेन द्विकर्मकत्वात् गौणे कर्मणि अनीयर् । यतोऽभ्यते "तस्मिन् तद्याचिरभ्यायाः सम्ले याचनाकर्मणि इति बोध्यम् । २द्वापरयुगे शब्दर० ।

**प्रार्थित** त्रि० प्र+अर्थ+क्त । १याचिते २अभिहिते मेदि० ३शत्रुसयते च त्रिका० ।

**प्रालम्ब** न० प्रकर्षेणालम्बते प्र+आ+लम्ब—अच् । १ऋजुतया कण्ठात् लम्बमाने माल्यादौ अमरः । २प्रकर्षेण लम्ब-

मानमात्रे त्रि०। संज्ञायां कन् अत इत्वम् । प्रालम्बिका स्वर्णादिरचितलम्बनिकायां स्वर्णहारभेदे स्त्री अमर० ।

**प्रालेय** न०प्रकर्षेण लीयते प्र+आ—ली—यत् । आत्वं एत्वम्, प्रलयाय हितम् अण् त्रि० एत्वम् वा । हिमे अमरः ।

**प्रालेयांशु** पु० प्रालेयमंशौ यस्य । १चन्द्रे शब्दा०। तत्तुल्यनामके २कर्पूरे च । प्रालेयकरादयोऽप्युभयत्र पु० ।

**प्रावट** पु० प्र+अव—अट् । यवे जटा० ।

**प्रावण** न० प्र+आ+वन सम्भक्तौ करणे घ । खनित्रिकादि णत्वम् । खनित्रे । प्रकर्षेणावन्यते खन्यतेऽनेन स्तटनेन रू०१।२२।४भाष्ये दृश्यम् । वनं समासे खनित्रादाससास्य

**प्रावणि** स्त्री प्र+अव—अनि ।"छिन्नमीनानि कोट्" प० ८।४। १५।१६। छिन्नमीनानीति छित्वा उभयत्वस्यदर्शनेन पठित्वा तत णत्वमुक्तम् । प्रकृष्टावनौ तथायमाशयः "छोत्नमीना अनि कोट्" सूत्रद्वये सन्त्रप्रकरणे छिन्नमानीति जायते छिन्नमीना अनि इत्येवं णत्वम् । योगविभागाच्च आनि कोट् इत्यत्रापीति ।

**प्रावर** पु० प्र+आ+वृ—करणे अप् । १प्राचीरे शब्दरत्ना०। २देशभेदे भा०भी० ९अ० । [२उत्तरीयवस्त्रे हेमच० ।

**प्रावरण** न० प्र+आ+वृ—करणे ल्युट । १आच्छादनवस्त्रे

**प्रावार** पु० प्र+आ+वृ—करणे घञ् । १उत्तरीयवस्त्रे अमरः भावे घञ् । २प्रकर्षेण आवरणे पु० ।

**प्रावारकर्ण** पु० उलूकभेदे भा० व० १९८अ० ।

**प्रावारकीट** पु० ७त० । कीटभेदे जटाधरः ।

**प्रावास** त्रि० प्रवासे दीयते कार्यं वा अणु०उा० अण् । १प्रवासे दीयमाने २तत्र कार्ये च ।

**प्रावासिक** त्रि० प्रवासाय प्रभवति सन्तापा० ठञ् । १प्रवाससाधने । प्रवासे साधु गुडा० ठञ् । प्रवासे साधौ च ।

**प्रावृट्काल** पु०कर्म० । ६त०वा । वर्षाकाले प्रावृट्समयादयोऽप्यत्र ।

**प्रावृट्कालवहा** स्त्री ७त०। नदीभेदे मार्कण्डेयपु०५७अ०।

**प्रावृडत्यय** पु०६त०। १वर्षातिक्रमे वर्षापगमे भ०३०। २शरत्काले राजनि० । [प्रकर्षेण २आवृतमात्रे त्रि०।

**प्रावृत** न० प्र+आ+वृ—कर्मणि क्त । १प्रकर्षेण आवृते वस्त्रे

**प्रावृति** स्त्री प्र+आ+वृ—करणे क्तिन् । प्राचीरे शब्दर० ।

**प्रावृत्तिक** पु० प्रवृत्तौ तत्करणे हितः ठक् । प्रवृत्तिवाहके दूतभेदे हरिवं० १०४अ० ।

**प्रावृष्(षा)** स्त्री प्रवृष्यतेऽत्र प्र+वृष—आधारे क्विप् दीर्घः ह० वलन्तत्वात् वा टाप् । वर्षाकाले स च श्रावणभाद्रात्मकः

"नभश्च नभस्यश्च वार्षिकावृतू" यजु०। छन्दोमञ्जर्य्यां १४१३ पृ० अस्य गौरचन्द्रत्वविकल्पस्य दृश्यः।

**प्रावृषायणी** स्त्री प्रावृषा भवन यस्याः गौरा०ङीष्। कपिकच्छ्वाम् (आलकुशी) अमरः।

**प्रावृषिक** पु स्त्री प्रावृषि कायति मन्दायते कै–क अलुक्स०। १मयूरे धरणिः। स्त्रियां जातित्वात् ङीष्। प्रावृषि भवः ठञ्। २वर्षाकालभवे त्रि० स्त्रीयां ङीप्।

**प्रावृषिज** पु० प्रावृषि जायते जन–ड अलुक् स०। १झञ्झानिले त्रिका०। २वर्षाकालजाते त्रि० "जे विभाषा" वा अलुक् स०। तेन प्रावृड्ज तत्रार्थे त्रि०।

**प्रावृषीण** त्रि० प्रावृषि भव वा० ख। वर्षाकालभवे भट्टि० १०।३७ भाष्य।

**प्रावृषेण्य** त्रि० प्रावृषि भव एण्य। १वर्षाकालजाते २कदम्बवृक्षे पु० मेदि०। ३कुटजवृक्षे ४धाराकदम्बे च पु० राजनि०। ५कपिकच्छ्वाम् ६रक्तपुनर्नवायां स्त्री राजनि०। प्रावृषि दीयते कार्यं वा एण्य। ७वर्षाकाले देये करादौ ८तत्र कार्ये च त्रि०। ९पाचुर्य्ये न० शब्दर०।

**प्रावृषेय** पु० १देशभेदे भा०भी०८अ०। प्रावृषायां भवः ढक्। २वर्षाकालभवे त्रि० स्त्रियां ङीप्।

**प्रावृष्य** पु० प्रावृषि भवः वा० यत्। १धाराकदम्बे २कुटजे ३विकङ्कतवृक्षे च राजनि०।

**प्रावेशन** त्रि० प्रवेशने दीयते कार्यं वा अण्। १प्रवेशने दीयमाने २तत्कार्ये च। [ङीप्।

**प्रावेशिक** त्रि० प्रवेशाय साधु ठञ्। प्रवेशसाधने स्त्रियां

**प्राशन** न० प्र+अश–भावे ल्युट्। भक्षादेः प्रकर्षेण भोजने अन्नप्राशनम्।

**प्राशास्त्र** न० प्रशास्तुर्भावः कर्म वा उद्गा० अञ्। प्रशास्तृकर्त्विज कर्मणि १यज्ञसंशसने २तद्भावे च।

**प्राशित** त्रि० प्र+अश–भोजन कर्मणि क्त। १भक्षिते। भावे क्त। २भक्षणे न० ३पितृयज्ञे तर्पणे जटा०। "प्राशितं पितृतर्पणम्" मनुना तत्रार्थे परिभाषितत्वात्।

**प्राशित्र** न० यज्ञिये यवमात्रं पिष्टकमात्रं वाऽवत्तं ब्रह्मोद्देश्यके भागे पिण्डांशभेदे "पिश्यत् प्राशित्रादानम्"कात्या० ६।१।७। "मित्रस्य त्वा चक्षुषा प्रतीक्ष इति प्राशित्रं प्रतीक्षते" २।२।१५ "प्राशित्रमवदीयमानमङ्गुष्ठपर्वमात्रं च प्राशित्रं ब्रह्मणो भाग यवमात्रं पिष्टकमात्रं वाऽवत्तं" कर्क "स यत् प्राशित्रमवद्यति" इत्युपक्रमे। अथातो ब्रह्मभागं पर्यहरन्ति। ब्रह्मा वै यज्ञस्य दक्षिणत आस्तेऽभिगोप्ता स एतं भाग प्रतिविदाम आस्ते यत् प्राशित्रं तदस्मै पर्याहार्षुस्तत्प्राश्नीयादेव यमके ब्रह्मभागं पर्याहरन्ति तेन भागी स यद्यतञ्चक्रमसंस्थितं यज्ञस्य तदभिगोपायति तस्मात्रा अस्मै ब्रह्मभागं पर्याहरन्ति" शत०ब्रा० १।७।४।१८

**प्राशित्रहरण** प्राशित्रं ह्रियतेऽनेन हृ–करणे ल्युट्। प्राशित्रस्य ब्रह्मभागहरणसाधने गोकर्णाकृतिपात्रभेदे शत० ब्रा० १।३।१।६ भाष्यम्।

**प्राश्** पु० प्र+अश–भोजने क्विप्। भक्षणे प्राशने क्रिया वत्। प्राशव्य प्रकृष्टभक्षणकृते ऋ० ८।२।१६ भा०। प्रा०म०। २प्रकृष्टभोज्ये निघण्टु। [यजु०२४।२७

**प्राश्टङ्ग** त्रि० प्रकृष्ट श्टङ्गमस्य वेदे दीर्घ। प्रकृष्टश्टङ्गयुक्ते

**प्राश्निक** पु०प्रश्नाय तदुत्तरदानाय साधु ठक्। १सभ्ये त्रिका० २प्रश्नोत्तरदानाय साधौ त्रि०।

**प्राश्नीपुत्र** पु०यजुर्वेदवंशस्थे ऋषिभेदे शत०ब्रा० १४।८।४।३३

**प्राष्टवर्ण** पु०प्रकर्षेण अष्ट० प्राप्तो वर्णः। दृष्टिवर्णे नानावर्णे निरु० १०।२६

**प्रास** पु० प्रास्यते प्र+अस–क्षेपे कर्मणि घञ्। कुन्तास्त्रे अमरः। कुन्तशब्दे २००१८ पृ० दृश्यम्।

**प्रासक** पु०प्रास+संज्ञायां कन्। पाशके देमच० तस्य देवकैः क्षिप्यमाणत्वात् तथात्वम्। स्वार्थे क। २प्रासास्त्रे पु०।

**प्रासङ्ग** पु० प्र+सन्ज–कर्मणि घञ् दीर्घः। दम्यवत्सानां स्कन्धे निबध्यमानकाष्ठे युगभेदे अमरः। स वहति यत्। प्रासङ्ग्य तद्वाहके दम्यवृषे अमर।

**प्रासङ्गिक** त्रि०प्रसङ्गादागतः ठञ्। प्रसङ्गागते स्त्रियां ङीप्।

**प्रासाद** पु० प्रसीदत्यस्मिन् प्र+सद–आधारे घञ् दीर्घ। देवभूपयोर्गृहे अमर. देवगृहशब्दे ३६७८ पृ० दृश्यम्

**प्रासादकुक्कुट** पु स्त्री० प्रासादे कुक्कुट इव। पारावते त्रिका० स्त्रियां जातित्वात् ङीष्।

**प्रासिक** पु०प्रासः प्रहरणमस्य ठक्। कुन्तेन योद्धरि अमरः

**प्रास्तारिक** त्रि० प्रस्तारे व्यवहरति ठक्। प्रस्तारे व्यवहारिणि। [ष्यादौ अङ्गुलत्र्यां स्त्रियां ङीप्।

**प्रास्थानिक** त्रि० प्रस्थाने साधु ठञ्। यात्रिके मङ्गल-

**प्रास्थिक** त्रि०प्रस्थस्य वापः ठञ्। १प्रस्थमितधान्यवपनाधारे क्षेत्रे २मूल्ये स्त्री ङीप्। प्रस्थं सम्भवति (अस्मिन् समावेशयति) अवहरति पचति वा ठञ्। प्रस्थमितधान्यादेः अस्मिन् ३समावेशके ४अवहारक ५पाचके च त्रि० स्त्रियां ङीप्। प्रस्थः परिमाणमस्य ठञ्। ६प्रस्थपरिमाणयुक्ते

धान्यराश्यादौ त्रि० प्रस्थेन क्रीतम् ठञ् । ७प्रस्थेन क्रीते त्रि० स्त्रियां ङीप् । प्रस्थस्य निमित्तं संयोग उत्पातो वा ठञ् । प्रस्थस्य ८निमित्ते ६संयोगे १०उत्पाते वा ।

प्राह्ण पु० प्रकर्षेण आह्वेति शब्दोऽस्य । अल्लोपदेशे शब्दमा० ।

प्राह्ण पु० प्रारब्धोऽह्नः प्रा०स०अच्‌समा० अह्नादेशः णत्वञ्च । त्रिधाविभक्तदिनस्य पूर्वभागे १पूर्वाह्णे अमरः । प्रकृष्ट-त्वर्थेन तिङ्‌न्ते अव्ययी० । २प्रकृष्टदिनयुते अव्य० ।

प्राह्णेतन त्रि० प्राह्णे भवः ट्यु तुट् च निपातनात् णत्वम् । पूर्वा-ह्णभवे स्त्रियां ङीप् ।

प्राह्णेतरा(मा)म् अव्य० अतिशयेन प्राह्णे तरप् तमप् वा आमु घंकालेत्यादिना सप्तम्या अलुक् । अत्यन्तप्रातःकाले इत्यर्थे ।

प्रिय त्रि० प्रीणाति प्री-तर्पणे क । १भर्त्तरि पत्यौ अमरः २भार्य्यायां स्त्री । ३प्रियके मृगभेदे पु०स्त्री जटा० ४ऋद्धि-नामौषधौ ५हृद्ये त्रि० मेदि० ६जीवकौषधौ राजनि० ।

प्रियंवद त्रि० प्रियं वदति वद-खच् मुम् । १प्रियकरवादिनि मधुरभाषिणि । २खेचरे ३गन्धर्वभेदे पु० शब्दमा० वदेर-न्तःस्थवादित्वात् प्रियमुवदेति मुकुटधृतकल्पनं प्रामा-दिकमेव । "भुवि भवेन्नभजरैः प्रियंवदा" इ०र० उक्ते द्वादशाक्षरपादके ४छन्दोभेदे स्त्री । ५पक्षिजातिविशेषभेदे स्त्री शब्द० इत्यग्रम् ।

प्रियक पु० प्रिय+स्वार्थे क संज्ञायां कन् वा । १पीतसा-लके (पियासाल) २नीपे ३चित्रमृगे ४भ्रमरे ५प्रियङ्गौ ६कुङ्कुमे मेदि० ७धाराकदम्बे ८असनवृक्षे राजनि० । ९स्कन्दानुचरभेदे भा०श० ४६अ० । तस्यापत्यं विदा० अञ् । प्रैयक भित्रप्रजापत्ये पुंस्त्री० ।

प्रियकृत् त्रि० प्रियं करोति कृ-क्विप् तुक् । १प्रियकारिणि २विष्णौ पु० "प्रियकृत् प्रीतिवर्द्धन" विष्णुस० ।

प्रियङ्कर त्रि० प्रियं करोति कृ-खच् मुम् । १प्रियकारिणि २श्वेतकण्टकार्य्यां ३दुग्धजीवन्त्याम् ४असगन्धायाञ्च स्त्री राजनि० गौरा० ङीष् ।

प्रियङ्करण त्रि० अप्रियं प्रियं करोत्यनेन कृ-करणे ख्युन् । अप्रियस्य प्रियताकरणसाधने ।

प्रियङ्गु स्त्री प्रिय+गम-डु नि०मुम् च । १फलिन्याख्याते द्रव्ये अमर० "प्रियङ्गुः शीतला तिक्ता तुवरानिलपित्तहृत् । रक्तातिसारदौर्गन्ध्यस्वेददाहज्वरापहा । गुल्मतृड्‌-विषमोहघ्नी तद्वद्‌गन्धप्रियङ्गुका । तत्फलं मधुरं रूक्षं कषायं शीतलं गुरु । विबन्धाध्मानबलदं संग्राहि कफपित्तजित्" भावप्र० "प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम्" इति बुधप्रणाममन्त्रः । २राजिकायां राजनि० ३पिप्पल्याम् ४कङ्गौ (काङ्गनी) धान्ये मेदि० ५कटुकायां धरणिः । [शब्दच० ।

प्रियजन पु०कर्म० । १हृद्ये जने । २प्रौढभावानुविद्ध उत्तम-

प्रियजीव पु०प्रियो जीवो यस्मिन् । श्योनाकवृक्षे राजनि० ।

प्रियतम पु० अतिशयेन प्रियः तमप् । १मयूरशिखावृक्षे २अतिप्रिये त्रि० शब्दच० ।

प्रियता स्त्री प्रियस्य भावः तल् । १स्नेहे २प्रेमणि अमरः । त्व । प्रियत्व तत्रार्थे न० शब्दर० ।

प्रियतोषण त्रि० प्रियं तोषयति तुष-णिच् ल्यु । १प्रियसन्तोषकारके "नारीपादौ स्वहस्तेन धारयेत् जघनोपरि । स्तनापीडकरः कामी कामयेत् प्रियतोषणः" रतिमञ्जर्युक्ते २रतिबन्धभेदे ।

प्रियदत्ता स्त्री दीयमानपृथिव्याम् "नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् । दाने वाऽप्यथ वाऽऽदाने नामास्याः प्रथमं प्रियम् । य एतां विदुषे दद्यात् पृथिवीं पृथिवीपतिः । पृथिव्यामेतदिष्टं स राजा राज्यमितो व्रजेत्" भा०अनु० ६२अ० ।

प्रियदर्शन पु० प्रियं दर्शनमस्य । १क्षीरिकावृक्षे २शुकखगे च जटा० ३हृद्ये त्रि० । [हेमच० ।

प्रियप्रायस् न० प्रियस्य प्रायः बाहुल्यं यत्र । प्रियवाक्ये

प्रियप्रेप्सु त्रि० ७त० । इष्टार्थोद्युक्ते जटा० । [प्रिये त्रि० ।

प्रियमधु पु०प्रियं मधु मद्यं यस्य । १बलरामे हेमच० २मद्य-

प्रियमाल्यानुलेपन त्रि० प्रियं माल्यमनुलेपनं च यस्य । १माल्यानुलेपनप्रिये २स्कन्दानुचरभेदे पु०भा०श० ४६अ० ।

प्रियमेध पु० १अजमीढस्य पुत्रभेदे "अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः" भाग० ९।२१।१७श्लो० । २यज्ञो-पेते ऋषिभेदे ऋ० १।४५।४ भा० ।

प्रियम्भविष्णु त्रि०अप्रियः प्रियो भवति भू-कर्त्तरि खिष्णुच् । अप्रिये प्रिये भवितरि । खुकञ् प्रियम्भावुक तत्रार्थे त्रि० ।

प्रियरूप त्रि०प्रियं रूपमस्य । १हृद्यरूपे । तस्यभावः मनोज्ञा० वुञ् । प्रैयरूपक तस्य भावे न० । कर्म० । २हृद्ये रूपे न० ।

प्रियवचन त्रि०प्रियं वचनं वैद्यकवचनं वा यस्य । १प्रियवादिनि वैद्यकोक्तवाक्ये भक्तिमति २रोगिणि राजनि० । कर्म० । ३हृद्ये वाक्ये न० ।

प्रियवर्णी स्त्री प्रियो वर्णो यस्याः गौरा० ङीष् । प्रियङ्गौ जटाधरः । [चतायाञ्च ।

प्रियवल्ली स्त्री नित्यकर्म० । १प्रियङ्गौ राजनि० २इद्याया

**प्रियवादिन्** त्रि॰ प्रियं वदति वद–णिनि । प्रियवाक्यभाषके स्त्रियां ङीप् “भार्या चाप्रियवादिनी” चाणक्यः ।

**प्रियव्रत** त्रि॰ प्रियं व्रतमस्य । १व्रतप्रिये स्वायम्भुवमनोः २पुत्रभेदे पु॰ हरिवं॰ २अ॰ । [भा॰ ५।१।२२।

**प्रियश्रवस्** पु॰ प्रियं श्रवः श्रवणं यस्य । परमेश्वरे भाग॰

**प्रियसख** पु॰ कर्म॰ ह्रत॰ वा, टच्समा॰ । १इष्टे सखौ २प्रियस्य सखौ च । स्त्रियां ङीप् । ३खदिरे शब्दच॰ ।

**प्रियसङ्गमन** त्रि॰ प्रिययोः सङ्गमनं यत्र । १प्रिययोर्मेलनस्थाने २कश्यपादित्योर्मेलनस्थाने देशभेदे पु॰ “यत्रादितिः कश्यपश्च सङ्गतावास्तां तदन्तरा । प्रियसङ्गमनं नाम तद्देशं सुनयोऽवदन्” हरिवं॰ १२४अ॰ ।

**प्रियसत्य** न॰कर्म॰ । १तथ्ये अथच प्रिये सूनृतवाक्ये हेमच॰ प्रियं सत्यं यस्य । २सत्यप्रिये त्रि॰ ।

**प्रियसन्देश** पु॰ प्रियं सन्दिशति सम्+दिश–अच् उप॰स॰ । १चम्पकवृक्षे भावे घञ् ह्रत॰ । २प्रियसंवादे शब्दच॰ ।

**प्रियसाल(क)** पु॰कर्म॰ स्वार्थे क वा । असनवृक्षे (पियासाल) राजनि॰ ।

**प्रियादि** विशेष्यवाचिनि समानाधिकरणस्त्रीलिङ्गशब्दे परे व॰ब्री॰ पूर्वस्य पुंवद्भावे पर्युदस्ते शब्दगणे स च गणः पा॰ग॰सू॰ उक्तो यथा “प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वा क्षमा कान्ता क्षान्ता समा चपला दुहिता वामना तनया” । सुन्दरी प्रिया यस्य । सुन्दरीप्रिय इत्यादि ।

**प्रियाम्बु** पु॰ प्रिय पितृणां प्रियमम्बु मूले सिक्तं यस्य । १आम्रवृक्षे राजनि॰ । २जलप्रिये त्रि॰ ।

**प्रियार्ह** त्रि॰ प्रियमर्हति अर्ह–अच् उप॰स॰ । १प्रियवाक्यादियोग्ये २विष्णौ पु॰ “अभिप्रायः प्रियार्होऽर्हः” विष्णुस॰ ।

**प्रियाल** पु॰ प्रियानलति पर्याप्नोति अल–अच् । प्रियसाले (पियासाल) स्वनामख्याते वृक्षे राजनि॰ भावप्र॰ पियाल इत्येव पाठः । “पियालस्तु खरस्कन्धश्चारो बहुलवल्कलः । राजादनस्तापसेष्टः सन्नकद्रुर्धनुष्पटः । चार पित्तकफास्रघ्नस्तत्फलं मधुरं गुरु । स्निग्धं सरं मरुत्पित्तदाहज्वरतृषापहम् । पियालमज्जा मधुरो वृष्यः पित्तानिलापहः । हृद्योऽतिदुर्जरः स्निग्धो विष्टम्भी चामवर्द्धनः” भावप्र॰ ।

**प्रियोदित** न॰ कर्म॰ । चाटुवाक्ये शब्दरत्ना॰ ।

**प्री** तर्पणे क्या॰उभ॰सक॰अनिट् । प्रीणाति ते अप्रैषीत् अप्रेष्ट पिप्राय पिप्रिये

**प्री** प्रीतौ कान्तौ (इच्छायाम्) सक॰ दिवा॰ आत्म॰ अनिट् । प्रीयते अप्रेष्ट पिप्रिये ।

**प्री** तर्पणे सक॰ कान्तौ तृप्तौ अक॰ क्र्या॰उभ॰अनिट् । प्रीणाति प्रीणीते अप्रैषीत् अप्रेष्ट पिप्राय पिप्रिये । प्रीत । णिच् नुक् । प्रीणयति ते । [अप्रापि नुक् प्रीणयतीत्येके ।

**प्री** तर्पणे सक॰चु॰उभ॰अनिट् । प्राययति ते अपिप्रयत् ते ।

**प्रीण** त्रि॰ प्री–णिच कर्त्तरि अच् । १प्रीणनकारके करणे अच् । २मर्म्मणि मेदि॰ । पुरणार्थप्रयत्नात् प्रणार्थे च । ३पुराणे त्रि॰ त्रिका॰ ।

**प्रीणन** न॰ प्री–णिच्–नुक्–ल्युट् । तर्पणे अमर ।

**प्रीणस** पु॰ प्रीणि–बा॰ असच् । गण्डके राजनि॰ ।

**प्रीत** त्रि॰ प्री–कर्त्तरि क्त । हृष्टे अमरः ।

**प्रीति** स्त्री प्री–भावे क्तिन् । १हर्षे २आमोदे ३तृप्तौ च । विष्कम्भादियोगेषु ४द्वितीययोगे । ५कामस्य पत्नीभेदे रत्याः सपत्न्यां “वेश्याऽनङ्गवती नाम विभूतिद्वादशीव्रतम् । समाप्य माघमासस्य द्वादश्यां लवणाचलम् । निवेदयन्ती गुरवे शय्याञ्चोपस्करान्विताम् । अलङ्कृत्य हृषीकेशं सौवर्णामरपादपम् । स चानङ्गवती वेश्या कामदेवस्य साम्प्रतम् । पत्नी, सपत्नी संजाता रत्याः प्रीतिरिति श्रुता” मात्स्ये ८२अ॰ ।

**प्रीतिजुष** त्रि॰ प्रीतिं जुषते जुष–क । १प्रीतिभाजि २अनिरुद्धपत्न्यामुषायां स्त्री शब्दरत्ना॰ “विश्वकेतुः प्रीतिजुषासुतः” त्रिका॰ तत्पुत्रोक्तौ । [प्रह्लादिनि पु॰ हेमच॰ ।

**प्रीतिद** त्रि॰ प्रीतिं ददाति दा–क । प्रीतिदायके (भाण्ड)

**प्रीतिदत्त** त्रि॰३त॰ । १प्रीत्या दत्ते २स्त्रीधनभेदे न॰ यथाह मिता॰ कात्यायन॰ “प्रीत्या दत्तं तु यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा । पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते” । भर्त्तृप्रीतदत्तस्थावरे तु विशेषः दाय॰ उक्तो यथा “भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत् । सा यथा काम॰ मश्नीयात् दद्याद्वा स्थावरादृते” ।

**प्रीतिदाय** पु॰ प्रीत्या दायते दा–कर्मणि घञ् । प्रीत्या दत्ते “गुरुरान् प्रीतिदायं तु प्राप्य स प्रीतमानसः” भा॰सभा॰ ८६अ॰ ।

**प्रीतिभोज्य** न॰ प्रीत्या भोज्यम् । प्रीत्यैव भोज्ये अन्नादौ “अन्नानि प्रीतिभोज्यानि आपद्भोज्यानि वा पुनः । न च सम्प्रीयसे राजन् न चैवापद्गता वयम्” भा॰उ॰ ९१अ॰ । “संप्रीतिभोज्यान्यन्नानि” इति सहितपुस्तके पाठः ।

**प्रीतिवर्द्धन** त्रि॰ प्रीतिं वर्द्धयति वृध–णिच्–ल्यु । १सन्तोष-

वर्द्धने २विष्णौ पु० “प्रियकृत् प्रीतिवर्द्धनः” विष्णुस० ।

प्रु सर्पणे भ्वा० आत्म०सक० अनिट् । प्रवते अप्रोष्ट प्रुप्रुवे ।

प्रुट मर्द्दने भ्वा० पर०सक० सेट् । प्रोटति अप्रोटीत् पुप्रोट । अयं धातुपाठे पठितः ।

प्रुष भस्मीकरणे भ्वा० पर० सक० सेट् । प्रोषति अप्रोषीत् पुप्रोष । उदित् क्त्वा वेट् । प्रुषित्वा प्रुष्ट्वा प्रुष्टः ।

प्रुष सेके पूर्त्तौ च सक० स्नेहे अक० क्र्या० पर०सेट् । प्रुष्णाति अप्रोषीत् पुप्रोष ।

प्रुष्ट त्रि० प्रुष–क्त । दग्धे । [विन्दौ सि०कौ० ।

प्रुष्व प्र० प्रुष–क्वन् । १ऋतौ २सूर्य्ये च उज्ज्वल० । ३जल-

प्रेक्षा स्त्री प्र+ईक्ष–भावे अङ् । १विषयशुभाशुभपर्य्यालोच-नायां २बुद्धिपूर्वककर्मकरणे ततः प्रेक्षादि० चतुरर्थ्याम् इनि । प्रेक्षिन् आलोच्यमानतया तादौ । अस्मिन् शब्दे परे श्लोपादि० पूर्वपदस्योदात्तत्व । [प्रेक्षागृहादयोऽप्यत्र ।

प्रेक्षागार न० ६त० । राज्ञां मन्त्रणार्थगृहे हरिवं० ८५अ०

प्रेक्षादि चतुरर्थ्यामिनि प्रत्ययनिमित्ते शब्दगणः स च गण-पा०स० उक्तो यथा “प्रेक्षा हलका बन्धुका ध्रुवका क्षिपका न्यग्रोध इक्कट कङ्कट सङ्कट कटकूप धुक धुक पुट मह परिवाप यवाष ध्रुवका गर्त्त कूपक हिरण्य” ।

प्रेक्षावत् त्रि०प्रेक्षा अस्त्यर्थे मतुप् मस्य वः । समीक्ष्यकारिणि ।

प्रेक्षण न० प्र+ईक्ष–ल्युट् भावे । १प्रकर्षेण दर्शने अष्टा दशरूपकान्तर्गते २रूपकभेदे तल्लक्षणं सा०द० उक्तं यथा “गर्भावमर्शरहितं प्रेक्षणं हीननायकम् । असूत्र-धारमेकाङ्कमविष्कम्भप्रवेशकम् । नियुद्धसम्फोटयुतं सर्व-वृत्तिसमाश्रितम् । नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना” ।

प्रेङ्खा स्त्री प्र+इखि वा० आधारे अच् । १दोलायाम् अमर० भावे अच् । २परिभ्रमणे ३स्तावकगतौ अश्वगतौ इति पाठान्तरम् । ४गृहभेदे मेदि० ५नर्त्तने च धरणिः ।

प्रेङ्खित त्रि० प्र+इखि–क्त । कम्पिते अमर ।

प्रेङ्खोल दोलने अद०चुरा०उभ०सक० सेट् । प्रेङ्खोलयति ते अपिप्रेङ्खोलत् त । प्रस्योपसर्गत्वमपीच्छन्तीत्यन्ये तेन प्रा-त्रिप्रेङ्खोलत् त इत्येवरूपम् ।

प्रेण गतिप्रेरणाश्लेषणेषु भ्वा०पर० सक० सेट् माधवः । प्रे-णति अप्रेणीत् ऋदित् अपिप्रेणत् त ।

प्रेणि त्रि० प्रेण–इन् । प्रेरके ऋ० १।११२।१० भा०।

प्रेत त्रि० प्र–इ–क्त । १मृते अमरः । २नरकस्थे जीवभेदे ३पिशाचभेदे आतिवाहिकदेहोत्तरं ४आयमानदेहभेदे-

युते और्द्ध्वदेहिकक्रियाऽभावे तद्रूपप्राप्तिरुक्ता पाद्मोत्त०ख० १६अ० यथा “ततो मङ्गतिथे काले स राजा पञ्चता-ङ्गतः । वैदिकेन विधानेन न लेभे चौर्द्ध्वदेहिकम् । विष्णु-प्रहे पमात्रेण युक्तानां कर्मनिर्मितिम् । भुक्त्वा च यातनां यामीं निस्तीर्णनरको नृपः । अनया निरिराजस्तु पि-शाचोऽभूत्तदा महान्” । तस्य रूपं यथा “देवद्युतिर-यीयान्‌ पुत्राय दक्षवासनम् । समागत्य ततस्तत्र तं पिशाचं ददर्श सः । विकरालमुखं दीनं पिङ्गलनयन-भ्रगम् । अर्द्धमूर्द्धजलग्नाङ्गं यमदूतमिवापरम् । चल-ज्जिह्वं लम्बोष्ठं दीर्घजङ्घशिराकुलम् । दीर्घाङ्घ्रि-गुल्फतुण्डस्य मर्त्यं शुष्कपञ्जरम्” ।

और्द्ध्वदेहिककरणेऽपि केषाञ्चित् कर्मविशेषेण प्रेतत्वप्रा-प्तिस्तत्रोक्ता यथा “हरिर्जुहोति नाम्नो ये गोविन्दं नार्चयन्ति ये । अधन्ते मातृविध्वांसं सतीर्थविमुखाश्च ये । सुवर्णं वस्तताम्बूलं रत्नमन्नं फलं जलम् । ब्रा-ह्मणेभ्यो न प्रयच्छन्ति सर्वेषु जलदारकाः । अन्यस्य स्त्रीधनानि लोभादेव हरन्ति ये । बलेन छद्मना वापि धूर्त्ताश्च परवञ्चकाः । नास्तिका कुहका-चोरा ये चान्ये बहवस्तथा । बालवृद्धातुरस्त्रीषु नि-र्दया सत्यवर्जिताः । अग्निदा गरदा ये च ये चान्ये कूटसाक्षिणः । अगम्यागामिनः सर्वे ये चान्ये ग्राम-याजिनः । आधावरणसम्पन्ना वर्णादिधर्मवर्जिता । ये चोग्रदेवदत्तनरश्रीयज्ञादिसेविनः । सर्वदा मादकद्रव्य-पानमत्ता हरिद्विषः । देवतोद्दिष्टपतितन्नपन्नात्राद्यभो-जिनः । असत्कर्मरता नित्यं सर्वपातकपापिनः । पाषण्डधर्माचरणाः शूद्रोपोढ्यजीविनः । पितृमातृ-स्वसापत्न्यत्यागिनश्च ये । ये कदर्याश्च लुब्धाश्च नास्तिका धर्मदूषका । त्यजन्ति स्वामिनं युद्धे त्यजन्ति शरणागतम् । गवां भूमेश्च हर्त्तारो ये चान्ये रत्न-दूषका । महापातकेषु सर्वेषु प्रतिपङ्क्तिरताश्च ये । पर-द्रोहरता ये च तथा ये प्राणिहिंसकाः । परापवा-दिनः पापा देवतागुरुनिन्दकाः । कुप्रतिग्राहिणः सर्वे सम्भवन्ति पुनः पुनः । प्रेतराक्षसपैशाच्यतिर्य्यग्गत्यासुयो-निषु । न तेषां पुनस्तेषोऽस्ति इह लोके परत्र च” । पाद्मोत्तरखण्डे १८अ० । पञ्चप्रेतोपाख्यानं तत्रैव यथा “ब्राह्मण उवाच प्रेतानां नाम जातीनां युष्माकं सम्भवः कथम् । किं तत् कारणमुद्दिश्य यूयमीदृशनामका” । प्रेता ऊचुः “अहं स्वादु सदा भुक्त्वा दत्तं पर्युषित

सदा। एतत्कारणसमुद्दिष्टं नाम पर्य्युषितं मम। सूचिता बहवोऽनेन विप्राद्या ब्रह्मकाङ्क्षिणः। एतत्कारणमुद्दिष्टं सूचीमुख२मिमं विदुः। शीघ्रं गच्छति विप्रेण याचितः क्षुधितेन वै। पश्चाद्भुङ्क्ते द्विजः शिष्टेन शीघ्रक३ उच्यते। स्थाल्युपरि सदा भुङ्क्ते स्वादु द्विजभवेन हि। द्विजाय कुत्सितं दत्त्वा एष रोहक४ उच्यते। मौनेनापि स्थिरो नित्यं याचितो विश्विषन्महीम्। अस्माकमपि पापिष्ठो लेखको५ नाम एष वै। मेढ्रेण लेखको याति रोहक पार्श्वत-शिराः। शीघ्रक पङ्गुतां प्राप्तः सूची सूचीमुखोऽभवत्"। प्रेताहारसमोक्तौ यथा "द्विज उवाच "ये जीवा भुवि तिष्ठन्ति सर्वे आहारमूलकाः। युष्माकमपि आहारं श्रोतुमिच्छामि तत्त्वतः" प्रेता ऊचुः "शृणु आहारमस्माकं सर्वसत्त्वविगर्हितम्। श्लेष्ममूत्रपुरीषेण योषितान्तु मलेन च। गृहाणि त्यक्तशौचानि प्रेता भुञ्जन्ति तत्र वै। स्त्रीभिर्जग्धानि जीर्णानि संकीर्णोपहृतानि च। मलेनातिजुगुप्सानि प्रेता भुञ्जन्ति तत्र वै। भयलज्जाविहीनानि पतितैः सेवितानि च। अन्योन्यदस्युयुक्तानि प्रेता भुञ्जन्ति तत्र वै। कलहान्वितशौचानि त्यक्तशोभानि मण्डनैः। सधर्मस्थानि भाण्डानि प्रेता भुञ्जन्ति तत्र वै। बलिमन्त्रविहीनानि हिंसादष्टानि यानि च। नियमव्रतहीनानि प्रेता भुञ्जन्ति तत्र वै। गुरवो नैव पूज्यन्ते स्त्रीजितानि गृहाणि च। सक्रोधान्यपवित्राणि प्रेता भुञ्जन्ति तत्र वै। भुञ्जन्ति भिन्नभाण्डेषु मर्यादारहितेषु च। अन्योन्योच्छिष्टयुक्तेषु तत्र प्रेतास्तु भुञ्जति। सकेशमाक्षिकोच्छिष्टं पूति पर्युषितं तथा। सक्रोधश्च सशोकश्च तत्र प्रेतेषु भोजनम्। वमनं भोजनं यत्र नोत्तरीयं पदासनम्। शोष्णीषं सावरीकञ्च तत्र प्रेतेषु भोजनम्। खङ्गपातं महापातं भौतृच्छिन्नं पतितं तथा। दुर्भिक्षं गोष्ठिकञ्चैव तत्र प्रेतेषु भोजनम्। कौतिकं सूतकञ्चैव राजसं कलुषीकृतम्। निर्दीप्तं क्षमिध्वापि यद्भुक्तं प्रैतिकन्तु तत्। एतत्ते कथितं सर्वं यत् प्रेतेष्वेव भोजनम्। निर्वाणं प्रेतजात्या वै पृच्छामस्त्वां द्विजोत्तम"। प्रेतत्वाभावकारणं यथा न प्रेतो जायते येन येन चैवेह जायते। एतत्सर्वं समासेन प्रब्रूहि वदतां वर।" ब्राह्मण उवाच "एकरात्रं त्रिरात्रं वा कृच्छ्रं चान्द्रायणादिकम्। व्रतेष्वप्युपितो यस्तु न प्रेतो जायते नरः। मिष्टान्नपानदाता च सततं श्रद्धयान्वितः। देवपूजापरो नित्यं न प्रेतो जायते नरः। त्रिरग्निरेकवह्निर्निरग्निर्वाप्युपासकः। सर्वभूतदयापन्नो न प्रेतो जायते नरः। तुल्यमानापमानश्च तुल्यः काञ्चनलोष्टयोः। तुल्यः शत्रौ च मित्रे च न प्रेतो जायते नरः। देवतातिथिपूजासु गुरुजातिषु नित्यशः। वेदशास्त्ररतो नित्यं न प्रेतो जायते नरः। जितक्रोधो मदैश्वर्यतृष्णासङ्गविवर्जितः। क्षमाऽक्रोधसुशीलश्च न प्रेतो जायते नरः। देवतातिथिपूजासु पर्वतीर्थे नदीस्तथा। पथ्ये हि पाणयोश्चैव न प्रेतो जायते नर"। प्रेतत्वकारणं यथा "शूद्रान्नं यो द्विजो भुङ्क्ते यः क्रामति द्विजीसमम्। दुष्टिः हा द्विजदेवेषु स प्रेतो जायते नरः। मातरं पितरं स्वं याति बान्धवं तथा। लोभात् त्यजति यः स्निग्धं स प्रेतो जायते नरः। अयाज्ययाजकश्चैव याज्यञ्च परिवर्जयेत्। शूद्रानुपहर्त्ता च स प्रेतो जायते नरः। कुज्योतिषी कुविद्यासु कुजनेषु कुदेवकः। शूद्रसेवाकरो राजा स प्रेतो जायते नरः। सेवनायापकृतो यः सेवकस्तपरिग्रहः। तावुभावपि जायेते प्रेतौ काकाश किमदौ। द्विजात्रमन्त्रितो भुङ्क्ते शूद्रान्नं वा द्विजस्य तु। सूतेनैव द्विजः प्रेतो निरयानुपगच्छति। गीतवाद्यरतो नित्यं मद्यपः स्त्रीनिमेषणात्। द्यूतमांसप्रियो यस्तु स प्रेतो जायते नरः। वृथारेता वृथामांसो वृथावादो वृथामतिः। निन्दको द्विजदेवानां स प्रेतो जायते नरः। स्वं बाल गुरुं विप्रं योऽवमन्य भुनक्ति वै। कन्यां ददाति शुल्केन स प्रेतो जायते नरः। न्यासापहर्त्ता मित्रध्रुक् परपाकरतस्तथा। विश्वस्तघाती कूटश्च स प्रेतो जायते नरः। निर्दोषान् सुहृदो भार्यास्त्यजेद् बान्धवं पाति यः। धनमोहेन यस्तेषां स प्रेतो जायते नरः। हस्त्यश्वरथयानानि शतशय्यासनादि यः। कृष्णाजिनञ्च गृह्णाति अनापद्गतो द्विजः। तथोभयतश्शीकावं सर्वेषां मेदिनीं द्विजः। कुरुक्षेत्रस्य यद्दानं चाण्डालात् पतितात्तथा। मासिकेऽपि नवश्राद्धे भुञ्जन् प्रेतान्नभुङ्मतः। ब्रह्महा गोवधी स्तेयी सुरापो गुरुतल्पगः। भूमिकन्यापहर्त्ता यः स प्रेतो जायते नरः। नानासङ्करलिप्तं वर्णसङ्करतस्तथा। योनिसङ्करकश्चापि स प्रेतो जायते नरः। विक्रीणाति विष शङ्खं तिलानां लवणस्य तु। गवां कौशिरीणां मोहात् विक्रयात् प्रेततां व्रजेत्। कूटमार्य्येण तौल्येन क्रयं क्री

ख्याति विक्रयात्। मद्यमांसप्रदोदर्शी च प्रेतो जायते नरः। लोकरको मद्यपाने तु स्वर्गधामनुधावति। नि- त्यनैमित्तिकोऽदाता स प्रेतो जायते नरः" वह्निपु०। मृतस्य प्राप्यापि दाहादिक्रिययाऽतिवाहिकदेहानन्तरं प्रेत देहो भवति यथाह विष्णुधर्मोत्तरे

"तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम्। आतिवाहिकसंज्ञोऽसौ देहो भवति भार्गव!। केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित्। प्रेतपिण्डै- स्ततो दत्तैर्देहमाप्नोति भार्गव!। भोगदेहमिति प्रोक्तं क्रमादेव न संशयः। प्रेतपिण्डा न दीयन्ते यस्य तस्य विमोक्षणम्। श्मशानिकेभ्यो देवेभ्य आकल्पं नैव विद्यते। तत्रास्य यातना घोरा शीतवातातपोद्भवाः। ततः सपिण्डीकरणे बान्धवैः स कृते नरः। पूर्णे संवत्सरे देहमतोऽन्यं प्रतिपद्यते। ततः स नरके याति स्वर्गे वा स्वेन कर्मणा" शु०त०। ५प्राप्तपितृलोके "अत ऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात्" गोभिलः "प्रेतलोकं परित्यज्य आगता ये महालये" ति०त०।

**प्रेतकर्मन्** न० ६त०। मृतोद्देशेन कर्त्तव्ये दाहादि स- पिण्डनान्तकर्मणि मा०श्रौ०५।२अ०। प्रेतकार्यादयोऽप्यत्र। ५प्राप्तपितृलोकोद्देश्यककार्ये श्राद्धादौ च "कृत्वा प्रेतकार्याणि प्रेतस्य धनहारकः। वर्णानां यद्वधे प्रोक्तं तद्व्रतं नियतश्चरेत्" दाय०त० वचनम्।

**प्रेतगृह** न० प्रेतस्य मृतस्य गृहमिव। मृतस्य शरीराधारे श्मशाने हेमच०। प्रेतावासादयोऽप्यत्र।

**प्रेततर्पण** न० ६त०। मृतोद्देशेन वर्षपर्य्यन्तं प्रेतशब्दोल्ले- खेन कर्त्तव्ये तर्पणविशेषे तद्विधानं शु०ति० यथा

मिताक्षर्यां पृथ्वीधरधृतविष्णुवचनम् "अतः सर्वे संस्कारिणो गत्वा पितृपदस्थाने प्रेतपदोक्तेन द्वितीयान्तं तर्पयेयुः पितृशब्दोच्चारेण पितृहा भवति"। शाता- तपः "प्रेतान्तनामगोत्राभ्यामुत्सृजेदुपतिष्ठताम्" इति प्रेतान्तेति तत्पुरुषः न बहुव्रीहिः सर्वजघन्यत्वात् तेन प्रेतान्तनाम गोत्रञ्चेति समासः एतद्वचनाच्चितापि- ण्डदाने उपतिष्ठतामिति पितृदीयतायामप्युक्तम्। एतेन प्रेतकार्ये समन्त्रार्थकपदप्रयोगो नैमित्तिकोक्तो ज्ञेय। एते- नाशक्तानामसवर्णदेवशर्माणं तर्पयामीति मामगानां प्र- योग। अत्र प्रेततर्पणे अनिर्दोषत्वति विशेषोपादानात् दर्शादिदिवसेऽपि तिलैरेव तर्पणं प्रतीयते। व्यक्तमाह गार्ग्यपारिजातधृता स्मृतिः "अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च। उपाकर्मणि चोत्सर्गे युगादौ मृतवा- सरे। सूर्यशुक्रादिवारे च न दोषस्तिलतर्पणे"। तथा "तीर्थे तिथिविशेषे च कार्यं प्रेते च सर्वदा"। तिथिवि- शेषे अमावस्यादशहरादौ। अत्र दक्षिणाङ्गुष्ठसहित मध्यमादिना वामहस्ते तिलदानं "वामहस्ते तिलान् दत्त्वा जलमध्ये तु तर्पयेत्। सव्यहस्तेन्तु कर्त्तव्यं न दद्यां तत्र दर्शयेत्" इति विद्याकरधृतवचने वामहस्त इति सप्तम्यन्तत्वश्रवणात् "तिलान् समभिमन्त्र्येच्छले" इति तिलाधिकरणत्वोपलक्षस्याभिधानाच्च। "सव्येन च तिलाः ग्राह्याः" इत्यत्रापि वामहस्ते स्थाप्या इत्यर्थः। सव्येनेति स्थाप्या पञ्चमीतिपदाधिकरणे तृतीया "विवक्षातो हि कारकाणि भवन्ती"त्युक्तेः। सद्यः अङ्गुष्ठदर्जन्यात्मकयोग- रूपा तिलग्रहणायेति शेषः"।

**प्रेतधूम** पु०६त०। चिताधूमे मनु ४।६९। [नदीभेदे मत्स्यपु०।

**प्रेतनदी** स्त्री प्रेतगम्या नदी। यमद्वारस्थे वैतरणीनामके

**प्रेतनिर्हारक** पु० प्रेत निर्हरति गृहात् श्मशानभूमिं निर्+ हृ-ण्वुल्। शवहारके "प्रेतनिर्हारकाश्चैव वर्जनीयाः प्रयत्नतः" तत्र अपाङ्क्तेयता मनुनोक्ता। तत्र कुल्लू० धनग्रहणपूर्वकहरणपरतया व्याख्यातं यथा

"प्रेतनिर्हारको धनग्रहणेन न तु धर्मार्थम्। "एतद्वै परमन्तपो यत् प्रेतमरण्यं हरन्ती"ति श्रुत्या विहितत्वात्"

**प्रेतपक्ष** पु० प्रेतानां पितृणां प्रियः पक्षः शा०त०। गौणा- श्विनकृष्णपक्षे अत्र मृतयोः पित्रोः पार्वणविधिना क्षैपुरुषिकं श्राद्धं करणीय यथाह शा०त० स्मृतः

"सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते। तत्र तत्र त्रयं कुर्यात् वर्जयित्वा मृताहनि। अमावस्या क्षयो यस्य प्रेतपक्षोऽथ वा पुनः। सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्वणो विधिः"। तत्र सम्प्रदानानां त्रय कुर्यात् भिन्नो दद्यादित्यर्थः। अस्ताहपर्युदस्तनिर्दि- ष्टस्तत्र प्रतिप्रसवमाह अमावस्यामिति प्रेतपक्षोऽत्र पितृपक्षः आश्वयुजकृष्णपक्ष इति यावत् न तु कृष्ण पक्षमात्रं कृष्णपक्षसामान्यपरत्वे ऽमावास्यापदवैयर्थ्यापत्तेः पितृपक्षं विशेषयति हेमाद्रिमाधवाचार्यधृतं नाग रखण्डम् "नभो वाऽथ नभस्यो वा मलमासो यदा भवेत्। सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः"। अत्र- श्रावणभाद्रयोरन्यतरस्य मलमासत्वे आषाढ पेक्षया सप्तमपक्षस्य पितृपक्षत्वात् अत्र मृतस्यैव प्रेतपक्षमृतत्व न तु मलमासभाद्रकृष्णपक्षे मृतस्य। ततश्च तत्र मृतस्य

**प्रोत** त्रि॰ प्र+वे–ऊतौ क्त सम्प्रसारणम् । १प्रकर्षेण स्यूते २ग्रथिते वस्त्रे न॰ जटा॰। भावे क्त । ३सीवने न॰ ।

**प्रोतोत्सादन** न॰ प्रोतं सद् उत्सादयति उत्+सादि–ल्यु । १वस्त्रकुट्टिमे ३छत्रे च त्रिका॰ ।

**प्रोत्फल** पु॰ प्रकर्षेण उत्फलति प्र+उद्–फल–अच् । सिंहलाङ्गूलाकारपुष्पशालि वृक्षभेदे शब्दमाला ।

**प्रोत्फुल्ल** त्रि॰ प्र+उत्+फुल्ल–विकाशे अच् । विकसिते ।

**प्रोत्साहन** न॰ प्रकर्षेण उत्साहनम् । प्रवृत्तस्य कर्त्तव्ये कर्मणि १प्रकर्षेण यत्नसम्पादने सा॰द॰उक्ते २नाट्यालङ्कारभेदे । प्रोत्साहनञ्च इत्यादिना तान्युद्दिश्य “प्रोत्साहनं स्यादुत्साहगिरा कर्मणि योजनम्” इति लक्षितम् । यथा “कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि । तज्जगत्त्रितयं त्रातुं तात । ताडय ताडकाम्”।

**प्रोथ** परिपूर्णतायाम् सामर्थ्ये च भ्वा॰उभ॰सक॰सेट् । प्रोथति ते अप्रोथीत् अप्रोथिष्ट पुप्रोथ थे । ऋदित् चङि न ह्रस्वः । अपुप्रोथत् त ।

**प्रोथ** पु॰न॰ प्रु+थक् । १प्रस्थिते “दन्तान्तदन्तांश्च प्रियं प्रोथमनुप्रजेत्” । २अश्वनासिकायाम् अमरः । ३कट्यां पु॰ मेदि॰ ४शाटके पु॰ त्रिका॰ । ५स्त्रीगर्भे पु॰ विश्वः ६गर्त्ते ७भीषणे दस्युगृहे ८अश्वसत्त्वे च संक्षिप्तसारः १०पथिके त्रि॰ ११प्रथिते त्रि॰ त्रिका॰ १२स्थापिते त्रि॰ सि॰कौ॰ ।

**प्रोथथ** पु॰ प्रोथ–बा॰ अथ । सामगन्धे ऋ॰ १०।८४।६भा॰।

**प्रोष** पु॰ प्रुष–दाहे भावे घञ् । सन्तापे राजनि॰।

**प्रोषक** पु॰ देशभेदे भा॰ भी॰ ९अ॰ ।

**प्रोषित** त्रि॰ प्र+वस–क्त इट् । प्रवास गते विदेशं गते । “आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा” काशीख॰ पतिव्रताख्यानम् ।

**प्रोषितभर्त्तृका** स्त्री प्रोषितः भर्त्ता यस्याः कप् । यस्याः पतिः विदेशं गतस्तस्यां स्त्रियाम् “नानाकार्य्यवशाद् यस्यादूरदेशं गतः पतिः । सा मनोभवदुःखार्त्ता भवेत् प्रोषितभर्त्तृका” सा॰द॰ ।

**प्रो(प्रौ)ष्ठ** पु॰प्रकृष्ट ओष्ठोऽस्य वा वृद्धिः । (पुँटि) मत्स्यभेदे रायमुकुट । स्त्रियां ङीष् । २देशभेदे भा॰भी॰ ९अ॰। ३गवि च पुंस्त्री॰ सि॰कौ॰ । भाद्रपदशब्दे दृश्यम् ।

**प्रो(प्रौ)ष्ठपदा** स्त्री प्रो(प्रौ)ष्ठो गौस्तस्येव पदं यस्याः । नक्षत्रविशेषे । तद्युक्ता पौर्णमासी अण् सा यत्र मासे पुनरण् वा न वृद्धिः । १चान्द्रभाद्रमासे अमरः । प्रोष्ठपदासु जातः अण् उत्तरपदवृद्धिः । प्रोष्ठपाद तज्जे २भाद्रपदे । “जे प्रोष्ठपदानाम्” पा॰ उक्तेः भवादौ नोत्तरपदवृद्धिः प्रौष्ठपद इत्येव ।

२अश्विन्यादिषु पञ्चविंशषड्विंशनक्षत्रयोः स्त्री ब॰व॰ पूर्वोत्तरभाद्रपदयोः प्रत्येक द्वित्वेन चतुष्कत्वात् बहुत्वम् । प्रोष्ठपदाभिर्युक्ता पौर्णमासी अण् । प्रौष्ठपदी चान्द्रभाद्रपौर्णमास्यां स्त्री ङीप् “प्रौष्ठपद्यामतीतायाम्” । प्रेतशब्दे दृश्यम् ।

**प्रोष्य** अव्य॰ प्र+वस–ल्यप् । विदेशं गत्वेत्यर्थे तस्य पापीयसा सह मयू॰ समा॰ प्रोष्यपापीयस् । विदेश गत्वा पापचारे त्रि॰स्त्रियां ङीप् । “राघवः प्रोष्यपापीयान्” भट्टिः

**प्रो(प्रौ)ह** पु॰ प्र+ऊह–घ वा वृद्धिः । प्रकृष्टतर्के

**प्रोहकटा** पु॰ प्रोह कटं इत्युच्यते यस्यां क्रियायाम् मयूर॰ समा॰ । कटसम्बोधनप्रकृष्टोहार्थनिर्देशक्रियायाम् । एवं प्रोहकर्दमा इत्यपि तत्र पाठान्तरे कर्दमसम्प्रदानकोहनिर्देशक्रियायाम् ।

**प्रोह्यपदि** अव्य॰ प्रोह्यौ पादौ यत्र प्रहरणे द्विदण्ड्या॰ स॰इच् समा॰ पद्भाव । प्रकर्षेण द्वाभ्यां पादाभ्यां प्रहरणे

**प्रौढमनोरमा** प्रौढानां प्रगल्भानां मनोरमयति रम॰ णिच् अच् । भट्टोजिदीक्षितकृतायाम् सिद्धान्तकौमुदीव्याख्यायाम् । [ २निपुणे च धरणि ।

**प्रौण** त्रि॰ प्र+ओणृ–अपनयने अच् । १प्रकर्षेण अपनायके

**प्रौष्ठिक** त्रि॰ प्रोष्ठोऽस्त्यस्य ठन् । प्रकृष्टौष्ठयुते तत॰ स्त्रिया॰ अपत्ये अण् प्रौष्ठिक तदपत्ये । [भाम्रम् ।

**प्लक** पु॰प्र+कै–क रस्य लः । स्त्रीकामधोऽङ्गभेदे ऋ॰८।२१।१८

**प्लक्ष** भक्षणे भ्वा॰उभ॰सक॰ सेट् । प्लक्षति ते अप्लक्षीत् अप्लक्षिष्ट पप्लक्ष क्षे । प्लक्षः ।

**प्लक्ष** पु॰ प्लक्ष्यते कीटैः प्लक्ष–कर्मणि घञ् । (पाकुड़) १वृक्षे अमरः । प्लक्षसमीपस्थानात् २निःसृतायां सरस्वत्यां च भा॰व॰ ८४अ॰ । तस्याः प्लक्षप्रस्रवणात् जातत्वात् तथात्वम् “प्रभवश्च सरस्वत्याः प्लक्षप्रस्रवणं मतम्” भा॰व॰ ५॰अ॰ । ३प्लक्षद्वीपचिह्निते द्वीपभेदे पु॰

“प्लक्षो जम्बूप्रमाणो द्वीप ख्यातिकरो हिरण्मय उत्थितो यत्राग्निरुपास्ते सप्तजिह्व । तस्याधिपति प्रियव्रतात्मज इध्मजिह्वः स द्वीप सप्त वर्षाणि विभज्य सप्तवर्षनामभ्य आत्मजेभ्य आकलय्य स्वयमात्मयोगेनोपरराम । शिवं यवसं सुभद्रं शान्तं क्षेममृतमभयमिति वर्षाणि । तेषु गिरयो नद्यश्च सप्तैवाभिज्ञाताः मणिकूटो

वज्रकूटः शतशृङ्ग इन्द्रसेनो ज्योतिष्मान् सुवर्णो हिरण्यष्ठीवो मेघमाल इति सेतुशैलाः । अरुणा नृम्णाऽऽङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरेति महानद्यः । यासां जलोपस्पर्शनविधूतरजस्तमसो हंसपतङ्गोर्ध्वायनसत्याङ्गसंज्ञाश्चत्वारो वर्णाः सहस्रायुषो विबुधोपमसन्दर्शनप्रजननाः स्वर्गद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्यमात्मानं यजन्ते" भाग० ५।२०। "क्षारोदेन यथा द्वीपो जम्बुसंज्ञोऽभिवेष्टितः । संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः । जम्बुद्वीपस्य विस्तारः शतसाहस्रसम्मितः । स एव द्विगुणो ब्रह्मन् ! प्लक्षद्वीपोऽप्युदाहृतः । सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरस्य वै । ज्येष्ठः शान्तभयो नाम शिशिरस्तदनन्तरः । सुखोदयस्तथानन्दः शिवः क्षेमक एव च । ध्रुवश्च सप्तमस्तेषां प्लक्षद्वीपेश्वरा इमे । पूर्वं शान्तभयं वर्षं शिशिरं सुखदं तथा । आनन्दञ्च शिवञ्चैव क्षेमकं ध्रुवमेव च । मर्यादाकारकास्तेषां तथान्ये वर्षपर्वताः । सप्तैव तेषां नामानि शृणुष्व मुनिसत्तम ! । गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा । सोमकः सुमनाः शैलो वैभ्राजश्चैव सप्तमः । वर्षाचलेषु रम्येषु सर्वेष्वेतेषु चानघाः । वसन्ति देवगन्धर्वसहिताः सततं प्रजाः । तेषु पुण्याः जनपदाश्चिराच्च म्रियते जनः । नाधयो व्याधयो वापि सर्वकालसुखं हि तत् । तेषां नद्यश्च सप्तैव वर्षाणान्तु समुद्रगाः । नामतस्ताः प्रवक्ष्यामि श्रुताः पापं हरन्ति याः । अनुतप्ता शिखी चैव विपापा त्रिदिवा क्रमुः । अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः । एते शैलास्तथा नद्यः प्रधानाः कथितास्तव । क्षुद्रनद्यस्तथा शैलास्तत्र सन्ति सहस्रशः । ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते । अपसर्पिणी न तेषां वै न चैवोत्सर्पिणी प्रजा । न तत्रास्ति युगावस्था तेषु स्थानेषु सप्तसु । त्रेतायुगसमः कालः सर्वदैव महामते !" विष्णुपु० । कल्पभेदान्नामभेदः । तदुत्तरं वनस्य णत्वम् प्लक्षवणम् । प्लक्षस्यादूरदेशादि च नडा० कुक् च । प्लाक्षकीय तत्समीपादौ त्रि० ।

**प्लक्षजाता** स्त्री प्लक्षात् तत्समीपस्थप्रस्रवणात् जाता । सरस्वत्यां नद्यां भा०आ० १७०अ० । [२६अ० ।

**प्लक्षतीर्थ** न० प्लक्षसमीपस्थं तीर्थं शाक०त० । तीर्थभेदे हरिवं०

**प्लक्षप्रस्रवण** न० प्लक्षस्य समीपस्थ प्रस्रवणम् । सरस्वत्युत्पत्तिस्थाने भा०म० ५०अ० ।

**प्लक्षराज** पु० ६त० । सोमतीर्थस्थिते प्लक्षवृक्षे भा०म० ४४अ०

**प्लक्षादि** पु० फले अण्प्रत्ययलुगनिमित्ते शब्दगणे स च गणः पा० ग० उक्तो यथा "प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु रुरु कक्षतु बृहती" ।

**प्लक्षावतरण** न० अवतरत्यस्मात् अव–तॄ–अपादाने ल्युट् प्लक्षं तन्निकटस्थितप्रस्रवणरूपमवतरणम् । सरस्वत्या अवतरणस्थाने प्लक्षप्रस्रवणे भा०व० ८९अ० ।

**प्लति** पु० प्लु–बा० डति । ऋषिभेदे ऋ० १०।८४।१७

**प्लव** न० प्लु–अच् । १कैवर्त्तीमुस्तके २गन्धतृणे मेदि० । प्लुत्या ३गन्तरि त्रि० । भावे अप् । ४प्लवने (भासा) कर्त्तरि करणे वा अच् । ५भेके ६भेलके (भेला) ७मेषे ८श्वपचे ९वानरे १०जलकाके ११कुलके १२प्रवणे १३पर्कटीवृक्षे १४कारण्डवखगे १५शब्दे १६प्रतिगतौ च पु० मेदि० । जातित्वे स्त्रीत्वमपि स्त्रियां ङीप् । १७प्रेरणे १८गतौ च पु० शब्दरत्ना० । १९जालभेदे हेमच० २०पलवे (पोलो) मत्स्यधारणयन्त्रभेदे त्रिका० । २१जलकुक्कुटे त्रिका० २२जलचरपक्षिगणभेदे यथोक्तं भावप्र० "हंससारसकाचाक्षबकक्रौञ्चशरारिकाः । नन्दीमुखी सकादम्बा बलाकाद्याः प्लवाः स्मृताः । प्लवन्ते सलिले यस्मादेते तस्मात् प्लवाः स्मृताः" । एतेषां मांसगुणाः । "प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः । वातश्लेष्मप्रदाश्चापि बलशुक्रकराः सराः" ।

**प्लवक** त्रि० प्लु–वा० अक । १प्लुतगतिकारके २खङ्गधारादौ नर्त्तके त्रिका० ३चण्डाले हेमा० ४भेके ५प्लक्षे राजनि०

**प्लवग** पु० प्लवन् सन् गच्छति गम–ड नि० । १वानरे २भेके ३सूर्य्यसारथौ मेदि० ४प्लवसंज्ञखगे शब्दर० । ५शिरीषवृक्षे राजनि० । [भेकानां गतौ स्त्री ।

**प्लवगति** पु० प्लवेन गतिरस्य । १भेके शब्दच० । ६त० । प्लवानां

**प्लवङ्ग** पु० प्लवन् सन् गच्छति गम–ड खच् मुम् नि० । १वानरे २मृगे शब्दच० । ३प्लक्षवृक्षे राजनि० । [३वानरे अमर० ।

**प्लवङ्गम** पु० प्लवन् सन् गच्छति गम–खच् मुम् नि० । १भेके ।

**प्लवन** त्रि० प्लु–ल्यु । १निम्ने प्रवणे क्रमनिम्नतो गन्तरि "प्रागुदक्प्लवनां भूमिं कारयेत् यत्नतो नरः" ति०त० मत्स्यपु० । भावे ल्युट् । जलोपरि गतौ न० (भासा) ।

**प्लविक** त्रि० प्लवेन तरति ठन् । प्लवेन तारिणि ।

**प्लाक्ष** न० प्लक्षस्य समूहः, तस्य विकारस्तस्य फलं वा अण् न लुप् । १प्लक्षवृक्षफले २तद्विकारे ३तत्समुदाये च ।

**प्लायोगि** पु० प्रयोगनाम्नः राज्ञः पुत्रः इञ् वेदे रस्य लः । प्रयोगनाम्नः राज्ञः पुत्रे ऋ० ८।१।३३

फञ्जि(ञ्जी) स्त्री भनृज—इन् पृषो॰ वा ङीप्। भार्ग्याम् (वामनहाटि) राजनि॰।

फट पुस्त्री॰ स्फुट—विकासे अच् पृषो॰। १सर्पाणां फणायाम् अमर॰ स्त्रियां टाप्। सा च २दंन्ते मेदि॰ ३कितवे पु॰ हेमच॰।

फट् अव्य॰ स्फुट—क्विप् पृषो॰। १योगे तन्त्रोक्ते २अस्त्रनामके मन्त्रभेदे च। ३अनुकरणशब्दे तस्य नम आदिवत् द्रव्यविशेषस्य त्यागार्थताऽपि। शान्तिकुम्भस्थापने, अर्घ्यपात्रस्थापने, अर्घ्यजलेन पूजोपकरणाभ्युक्षणे, अन्तरीक्षगविघ्नोत्सारणाय विकिरक्षेपणे, गन्धपुष्पाभ्यां करशोधने, अघमर्षणे पापपुरुषताडने, कराङ्गन्यासे, नैवेद्यगोपणे, होमाग्ने क्रव्यादांशत्यागे, होमाग्न्यावाहने, तद्गन्धमोचनादौ च इत्यादिषु कर्मसु अस्य प्रयोग नानातन्त्रेषु दर्शित॰। [ख्यातायां क्षिल्लिकायां शब्दच॰।

फडिङ्गा स्त्री फडिति इङ्गते इङ्ग-अच्। (फडिङ)

फण अनायासेनोत्पत्तौ भ्वा॰पर॰ सक॰ सेट्। फणति अफाणीत्-अफणीत् पफाण। फणौ॰ फेणतुः पफणतुः।

फण गतौ भ्वा॰पर॰सक॰ सेट्। फणति अफाणीत् अफणीत् मित् वा घटादि॰। णिचि फाणयति फणयति फणादि॰।

फण पुस्त्री॰ फण—अच्। दर्व्याकारे सङ्कोचविकाशवति सर्पमस्तके अमर॰।

फण(णा)कर पु॰फण(णा) कर इव यस्य। सर्पे शब्दरत्ना॰।

फणादि न॰ "फणाञ्च सप्तानाम्" पा॰ किति लिटि सेटि थलि च परे एत्वाभ्यासलोपनिमित्ते धातुसप्तके तच्च धातुपाठे उक्तं यथा "फण राज भ्राज भ्राश भ्लाश स्यम स्वन" सि॰कौ॰ भ्वादौ दृश्य।

फण(णा)धर पुस्त्री॰ फण(णा) धरति धृ—अच। सर्पे शब्दरत्ना॰। स्त्रियां जातित्वात् ङीष्। फण(णा)भृदादयोऽप्यत्र।

फणाभर पुस्त्री॰ फणां बिभर्त्ति भृ—अच्। सर्पे हारा॰ स्त्रियां जातित्वात् ङीष्। [सिद्धा॰।

फणिकार पु॰ देशभेदे स च देश छ॰श॰ १४अ॰ दक्षिणस्या-

फणिकेसर पु॰ फणिनामक केसर। नागकेसरे राजनि॰।

फणिखेल पुस्त्री॰ फणिना खेलति खेल—अच्। (भाडुइ) खगे त्रिका॰ स्त्रियां ङीष्।

फणिचक्र न॰ फणाकारं चक्रम्। विवाहादौ शुभाशुभसूचकनाडीज्ञानज्ञापनार्थे चक्रभेदे उपयमशब्दे ११५४

फणिजा स्त्री फणीव जायते जन—ड। (फणिमनसा) इति नैघण्टु प्र॰। [शतावर्य्याम् २महासमङ्गायाञ्च राजनि॰।

फणिजिह्वा स्त्री फणि जिह्वा आकारोऽस्त्यस्य अच्। १महा

फणिज्झक पु॰ फणिनमुज्झति उज्झ—ण्वुल् पृषो॰। १तुलसीभेदे २जम्बीरसामान्ये च अमर॰।

फणितल्पग पु॰ फणिरूपे तल्पे गच्छति तिष्ठति गम—ड। शेषशायिनि विष्णौ शब्दार्थकल्प॰।

फणिन् पु॰ फणा अस्त्यस्य इनि। दर्वीकरे सर्पभेदे अमर॰। अहिशब्दे ५८१ पृ॰ तद्भेदाः दृश्याः। २सर्पिणीनामकौषधौ स्त्री राजनि॰। ३शेषावतारे पतञ्जलमुनौ पु॰ स च पाणिनीयभाष्यकारकः योगसूत्रकारकश्च तयोर्भेद ऐक्यं वा

फणिप्रिय पु॰ फणिना प्राणप्रदत्वात् प्रिय। वायौ शब्दर॰ सर्पाणां वायुभक्षकत्वेन वायोस्तत्प्रियत्वम्।

फणिफेन न॰फणिनां फेन इव। (आफिङ)अहिफेने रत्नमा॰

फणिभुज् पु॰फणिन भुङ्क्ते भुज—क्विप्। पक्षिराजे गरुडे

फणिमुख न॰फणिन इव मुखमस्य। स्तेय साधनोपयोगिनि खनित्रिकाक्षेपणार्थे यन्त्रभेदे दशकुमा॰।

फणिवल्ली स्त्री फणिसदृशी दीर्घा, फणिलोकस्था वा वल्ली। नागवल्ल्याम् (पानलता) फणिलतादयोऽप्यत्र हेमच॰।

फणिहन्त्री स्त्री फणिनं हन्ति हन—तृच् ङीप्। गन्धनाकुल्याम् राजनि॰। [दुरालभायां राजनि॰।

फणिहृत् स्त्री फणिन हरति अपसारयति हृ—क्विप्। क्षु

फणीन्द्र पु॰ ६त॰। सर्पेश्वरे अनन्ते २वासुकौ च।

फणीश्वर पु॰ ६त॰। १अनन्ते २वासुकौ शब्दरत्ना॰।

फणीश्वरचक्र न॰ नक्षत्रभेदे शनिस्थित्या सप्तद्वीपस्य शुभाशुभसूचके चक्रभेदे चक्रशब्दे २८२० दृश्यम्।

फण्ड पु॰ फण गतौ ड तस्य नेत्वम्। जठरे उणादिकोष।

फत्कारिन् पु॰ फडित्यव्यक्तं करोति कृ—णिनि। खगमात्रे शब्दच॰।

फर न॰ फल+अच् लस्य र॰। फलके भरत॰।

फरुवक न॰ पूगपात्रे हारा॰। [शफरी फर्फरायते" उद्भटः।

फर्फर त्रि॰ स्फुर-अच् पृषो॰। चञ्चलस्वभावे "गण्डूषजलमात्रेण

फर्फरीक न॰ स्फुर—ईकन् 'फर्फरीकादयश्च' उणा॰ नि॰। १नवपल्लवे उज्ज्वल॰। २चपेटे पु॰ ३मृदुत्वे न॰ मेदि॰। ४पादुकायां स्त्री शब्दसार॰।

फर्व गतौ भ्वा॰पर॰सक॰ सेट्। फर्वति अफर्वीत् पफर्व। "प्रफर्व्य च पौंश्चली"यजु॰ १२।७१ वेददी॰"फर्वति पर-

चक्षाः कप् । पियङ्गखर्ज्यूर्याम् (पियडीखेजुर) शब्दमा०

**फलयोग** पु० ६त० । फलसम्बन्धे नाटकाङ्गकार्य्यस्य अवस्था "अवस्था फलयोगः स्यात् य. समग्रफलागमः सा० द० लक्षिते २अवस्थाभेदे च ।

**फललक्षणा** स्त्री फलहेतुका लक्षणा । प्रयोजनहेतुकायां लक्षणायाम् "व्यङ्ग्यस्य गूढागूढत्वाद्द्विधा स्युः फललक्षणाः" सा० द० ।

**फलवत्** त्रि० फल+अस्त्यर्थे मतुप् मस्य वः । १फलयुते पुरुषे २तत्साधने यागादौ च "फलवत्सन्निधावफलं तदङ्गमिति न्याय । ३फलयुते वृक्षे पु० अमरः । [न० राजनि० ।

**फलवर्त्तुल** पु० फलं वर्त्तुलं यस्य । १कालिङ्गवृक्षे । २तत्फले

**फलवृक्षक** पु० फलप्रधानो वृक्षः संज्ञायां कन् । पनसवृक्षे राजनि० ।

**फलशाक** न० "पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा । शाक षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम्" भावप्र० उक्ते षड्विधशाकमध्ये फलरूपशाके तच्च कुष्माण्डादि तत्रोक्तम्

**फलशाडव** पु० दाडिमवृक्षे राजनि० ।

**फलशालिन्** त्रि० फलेन शालते श्लाघते शाल—णिनि । फलयुक्ते स्त्रियां ङीप् । [बदरवृक्षे राजनि० ।

**फलशैशिर** पु० शिशिरं शाम्रमस्य अण् फलं शैशिरं यस्य ।

**फलश्रुति** स्त्री श्रु—करणादौ क्तिन् ६त० । १वैदिककर्म्मणां फलप्रतिपादनार्थवाक्ये २फलश्रवणे च "फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् । श्रेयो विवक्षया प्रोक्तं यथा भैषज्यरोचनम्" । अपिच "वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे । नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः" भाग० ११स्क० ४अ० त० धृतवचनम् ।

**फलश्रेष्ठ** पु० फलेन श्रेष्ठ प्रशस्तनर० । आम्रवृक्षे शब्दच० ।

**फलस** पु० फल+तथा० स । १फलयुक्ते २पनसे भरतः फलस इति पाठान्तरं तदर्थे ।

**फलस्थापन** न० फलयोरौडुम्बरफलयोः स्थापनमत्र । सीमन्तोन्नयनसंस्कारे "फलस्थापनात् मातापितृकं पाप्मानमपोहति" हारीतः "फलस्थापनात् फलस्थापनाङ्गकसीमन्तोन्नयनात्" सं० त० रघु० । तत्र पश्चात् पतिरवस्थाप युगमन्तमौडुम्बर शलाटु पन्वमावध्नाति" गोभिलेन औडुम्बरफलयुगस्थापनस्य विधानात् तथात्वम् ।

**फलस्नेह** पु० फले स्नेहो यस्य । अक्षोटवृक्षे राजनि० ।

**फलहारिन्** त्रि० फल हरति हृ—णिनि । फलहारके ।

**फलहारी** स्त्री फलानां हारो हरणं यस्यै गौरा० ङीष् । कालीभेदे तत्पूजादिनञ्च "ज्यैष्ठे मासि अमायां वै मध्यरात्रे महेश्वरि ! । पूजयेत् कालिकां देवीं नानाद्रव्योपहारकैः । तत्रैवासितपक्षे तु चतुर्दश्यां निशार्द्धके । पूजयेच्च फलैर्लक्षैः शक्तितो वापि कालिकाम्" मायातन्त्र १७पटले । [राजनि० । २फलयुक्ते त्रि०

**फलाढ्या** स्त्री फलेनाढ्या सम्पन्ना ३त० । १काष्ठकदल्याम् ।

**फलादन** पु स्त्री० फलमदनमस्य । १शुकखगे हेमच० स्त्रियां जातित्वात् ङीष् । फलाशन तत्रार्थे त्रिका० । २फलभक्षके त्रि० स्त्रियां टाप् ।

**फलाध्यक्ष** पु० फलमध्यक्षमिव यस्य । १राजादने अमरः । २फलदाना-ध्यक्षे ईश्वरे च । फलमत उपपत्तेरित्यादयोऽपीश्वरे ।

**फलान्त** पु० फलेनान्तोऽस्य । १वंशे शब्दमा० । ६त० । २फलस्यान्ते च ।

**फलाफलिका** स्त्री फलसहितमफलं शा० त० तदस्त्यस्य ठन् टाप् कापि अत इत्वम् । फलसहिताफलयुतायां स्त्रियाम् ।

**फलावन्ध्य** पु० फलेनावन्ध्य । फलयोग्ये वृक्षे हेमच० ।

**फलाम्ल** न० फलमम्लं यस्य । १वृक्षाम्ले २अम्लवेतसे पु० राजनि० ।

**फलाम्लपञ्चक** न० अम्लपञ्चके तच्छब्दे दृश्यम् ।

**फलि** पु० फल—इन् । (फलुइ) मत्स्यभेदे रायमु० ।

**फलिका** स्त्री फल+अस्त्यर्थे ठन् टाप् । निष्पाव्याम् राजनि०

**फलिग** पु० फलिन गच्छति गम—ड । मेघे निघण्टुः० ।

**फलित** त्रि० फल—निष्पत्तौ क्त फल जातमस्य तार० इतच् वा । १निष्पन्ने २जातफले वृक्षे पु० शब्दच० । ३शैलेये न० राजनि० ।

**फलिन्** त्रि० फल+अस्त्यर्थे इनि । १फलयुते स्त्रियां ङीप् २वृक्षे पु० अमर० ३प्रियङ्गौ स्त्री ङीप् अमर० । [अमरः ।

**फलिन** पु० फल+अस्त्यर्थे इनच् । १फलयुक्ते २तादृशे वृक्षे पु०

**फली** स्त्री फलमस्त्यस्याः अच् गौ० ङीष् । प्रियङ्गुवृक्षे अमरः

**फलीकार** पु० फल+च्वि—कृ कर्म्मणि घञ् । फलेच्छायां भाग० ४।८।२६ श्रीधर० । भावे घञ् । २वितुषीकरणे अफलस्य १फलसम्पादने [यन्त्रिलादौ च ।

**फलीय** त्रि० फल+उत्करा० चतुरर्थ्यां छ । १फलयुक्ते २फल-

**फलेग्रहि** पु० फले फल (कर्म्मण आधारत्वविवक्षा) ग्रहाति धारयति स्वीकरोति वा इनि अलुक् स० । १योग्यकाले फलधारके वृक्षे यथाकालं फलधारिणि च । "फलेग्रहीन् हंसि वनस्पतीनाम्" भट्टिः । लुकि तु फलग्राहि तच्छब्दे दृश्यम् । पृषो० फलेग्राहिरप्यत्र शब्दरत्ना० ।

चतुरङ्गुलप्रमाणं फालमग्नौ तापयेत्। तत्र प्राङ्-निवाकोधर्मोत्पादनादिहवनान्तं कर्म कृत्वा दक्षिणां दत्त्वा समन्त्रकं प्रतिष्ठापनं शोध्यशिरसि निधाय चोम् "त्वमग्ने वेदाश्चत्वारस्त्वञ्च यज्ञेषु हूयसे। त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम्। जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम्। पापं पुनासि वै यस्मात् तस्मात् पावक उच्यसे। पापेषु दर्शयात्मानमर्चिष्मान् भव पावक!। अथ वा शुद्धभावेषु शीतो भव हुताशन!। त्वमेव सर्वभूतानामन्तश्चरसि साक्षिवत्। त्वमेव देव! जानीषे न विदुर्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति। तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि"। इत्येतैः फालस्थमग्निमभिमन्त्रयेत्। शोध्यस्तु "त्वमग्ने सर्वभूतानामन्तश्चरसि पावक!। साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं कवे! मम" इत्यनेनाभिमन्त्र्याग्निवर्णं फालं जिह्वया सकृत् लिह्यात्। न दह्येत् शुद्धः"।

फालगुन पु० फल्गुनीयुक्ता पौर्णमासी अण् सा यत्र मासे जेते वर्षे अर्द्धमासे वा अण्। चैत्रावधिके द्वादशे १स्वनामख्याते मासभेदे २तादृशे पक्षे ३जेते वर्षभेदे च कार्त्तिकशब्दे १८३८ पृ० दृश्यम्। "अन्त्योपान्त्यौ त्रिधौ ज्ञेयौ फाल्गुनश्च त्रिभोमत" इत्युक्ते पौर्णमास्याः फाल्गुनीरूपनक्षत्रद्वययोगात् तथात्वम्। स च मासः त्रिविधः मुख्यगौणचान्द्रसौरभेदात् तत्र कुम्भस्थरव्यारब्ध शुक्लप्रतिपदादिदर्शान्तो मुख्यचान्द्रः। तथाभूतकृष्णप्रतिपदादिपौर्णमास्यन्तो गौणः, कुम्भस्थरविक सौरः इति। अयञ्च शब्दः दन्त्यनान्ते मेदिनिकोशे पठितः। फाल्गुने गगने फेने णत्वमिच्छन्ति वर्वराः" कारिकायाम् णत्वनिषेधकथनं मेदिनिविरोधात् प्रामादिकमेव। ४तत्पौर्णमास्यां स्त्री ङीप्। ५अर्जुनाख्ये पाण्डवे तन्नामकारणम् भा०वि०४४अ०उक्तं यथा "उत्तराभ्यां फल्गुनीभ्यां नक्षत्राभ्यामहं दिवा। जातो हिमवतः पृष्ठे तेन मां फाल्गुनं विदुः"। ६अर्जुनवृक्षे पु० मेदि०।

फाल्गुनानुज पु० फाल्गुनादनुजायते अनु+जन–ड। १चैत्रे मासि २वसन्तकाले हारा०। ३नकुलसहदेवयोः द्वि० व०।

फाल्गुनिक पु० फाल्गुनीनक्षत्रयुक्ता पौर्णमासी अस्मिन् मासे ठक्। चैत्रावधिके द्वादशे मासे। [१कोषे शब्दर०

फि पु० फल–वा० ङि। १निष्फलवाक्ये २पापे च एकाक्ष०को०

फिङ्गक पु० कपिङ्ग+पृषो०। (फिङा) पक्षिभेदे शब्दमा०।

फिरङ्ग पु० स्वनामख्याते म्लेच्छदेशे १ रोगविशेषे २ भावप्र० तत्र फिरङ्गस्य निरुक्तिमाह। "फिरङ्गसंज्ञके देशे बाहुल्येनैव यद्भवेत्। तस्मात् फिरङ्ग इत्युक्तो व्याधिर्व्याधिविशारदैः"। तस्य विप्रकृष्टं निदानमाह गन्धरोगः फिरङ्गोऽयं जायते देहिनां ध्रुवम्। फिरङ्गिणोऽतिसंसर्गात् फिरङ्गिण्याः प्रसङ्गतः। व्याधिरागन्तुजो ह्येष दोषाणामनुसङ्क्रमः। भवेत्तां लक्षयेत्तेषां लक्षणैर्भिषजां वरः"। फिरङ्गिण्याः प्रसङ्गत इति विशेषार्थम्। रूपमाह "फिरङ्गस्त्रिविधो ज्ञेयो बाह्याभ्यान्तरतस्तथा। वहिरन्तर्भवश्चापि तेषां लिङ्गानि च ध्रुवम्। तत्र बाह्यं फिरङ्गं स्याद्विस्फोटसदृशोऽल्परुक्। स्फुटितो व्रणवद्वेद्यः सुखसाध्योऽपि स स्मृतः। सन्धिष्वाभ्यन्तरः स स्यादुभयोर्लक्षणैर्युतः। कष्टोऽतिचिरस्थायी कष्टसाध्यतमश्च सः"। उपद्रवानाह "कार्श्यं बलक्षयो नासाभङ्गो वह्नेश्च मन्दता। अस्थिशोषोऽस्थिवक्रत्वं फिरङ्गोपद्रवा अमी"। साध्यत्वादिकमाह वहिर्भवो भवेत् साध्यो नूतनो निरुपद्रवः। आभ्यन्तरस्तु कष्टेन साध्यः स्यादयमामयः। बहिरन्तर्भवो जीर्णः क्षीणस्योपद्रवैर्युतः। मोध्यो व्याधिरसाध्योऽयमित्यूचुर्मुनयः पुरा"। ततोऽस्त्यर्थे इनि। फिरङ्गिन् तद्देशस्थजने तद्रोगयुते च त्रि० स्त्रियां ङीप्। [विश्व।

फु पु० फल–डु। मन्त्रोच्चारणपूर्वके १फुत्कारे २तुच्छवाक्ये च [विश्व।

फुक पु० खगे शब्दच०। [फणायां पु० हेमच०।

फुट त्रि० स्फुट–क पृषो०। १विदीर्णे २प्रस्फुटिते च। ३सर्प-फणायां पु० हेमच०।

फु(फू)त् अव्य० फल–डुति पृषो० वा दीर्घः। अनुकरणशब्दे।

फुत्कार पु० फुदित्यव्यक्तं शब्दं करोति कृ–ट। वह्नौ शब्दच०

फुत्कार पु० कृ–भावे घञ् फुदित्यव्यशब्दस्य कारः। फुदित्यव्यक्तशब्दकरणे। फुत्कारयुक्ते वह्नौ आहुतिनिषेधो यथा "अल्पे कक्षे सस्फुलिङ्गे वामावर्ते भयानके। आर्द्रकाष्ठैः सञ्छन्ने फुत्कारवति पावके। कृष्णार्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम्। आहुतिं जुहुयाद्यस्तु तस्य नाशो भवेद् ध्रुवम्" ति०त०।

फुप्फुस पु० सुश्रुतोक्ते हृदयस्य वामपार्श्वस्थिते (फुच्का) इति ख्याते कोष्ठभेदे "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च। हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते" व्याख्यातं चेदम् "आमस्य स्थानमामाशयः नाभेरूर्द्ध्वम्। अग्नेः स्थानं पक्वामाशयः नाभिमध्यम्। पक्वस्य स्थानं पक्वाशयः नाभेरधः। मूत्रस्य स्थानं वस्तिः। रुधिरस्य स्थानं यकृत्प्लीहानौ। हृद् हृदयम्। हृद्रसपाकसम्बद्धं यः

त्रिनयनां नीलाम्बरधरां पराम्। नागहारोज्ज्वलां देवीं द्विभुजां पद्मलोचनाम्। एवं ध्यात्वा वकारन्तु तन्मन्त्रं दशधा जपेत्” वर्णोद्धारतन्त्रम्। अस्य ध्येयस्वरूपं यथा “वकारं शृणु चार्वङ्गि! चतुर्वर्गप्रदायकम्। शरच्चन्द्रप्रतीकाशं पञ्चदेवमयं सदा” कामधेनुत०। मातृन्यासेऽस्य दक्षकटौ न्यस्तता। काव्यादौ प्रथमप्रयोगे वकारशब्दोक्तं फलम्।

**व** पु० वल–ड। “वः पुमान् १वरुणे २सिन्धौ ३भगे ४तोये ५गते तु वा। ६गन्धने ७तनुसन्ताने पुंस्येव ८वपने स्मृत” मेदि०। ९कुम्भे शब्दर०।

**वंहिष्ठ** त्रि० अतिशयेन बहुः इष्ठन् वंहादेशः। अतिशयबहुले अमरः। [बहुले स्त्रियां ङीप्।

**वंहीयस्** त्रि० अतिशयेन बहु ईयसु वंहादेशः। अतिशय-

**वकुर** त्रि० भास्कर+भयङ्कर+वा पृषो०। १भास्करे २भयङ्करे च ऋ० १।११७।२१ भा०।

**वठ** दृढौ सामर्थ्ये च भ्वा०पर०सक०सेट्। वठति अवठीत् अवाठीत्। ववाठ वेठतुः। [अमर०।

**वडवा** स्त्री बलं वाति वा–क लस्य डः। १घोटक्याम्, २अश्विन्यादिनक्षत्रे ज्यो०। ३दास्याञ्च। वडवानलशब्दे दृश्या०

**वडवाकृ(हृ)त** न० वडवया दास्या कृतं (हृतं) वा। दासभेदे “भक्तदासश्च विज्ञेयस्तथैव वडवाकृ(हृ)तः” स्मृति।

**वडवाग्नि** पु० वडवायाः मिथःस्पर्शाद्यायाताश्चाश्वोऽग्निः। स समुद्रस्थिते घोटकीमुखस्थे कालानले। कालिकापु०४१अ०। तयोरुत्पत्तिरुक्ताऽस्य। और्वशब्दे १५८१।८२पृ० अस्यचोत्पत्तिरुक्ता दृश्या। वडवानलादयोऽप्यत्र।

**वडवामुख** पु० वडवाया मुखं स्थानत्वेनास्त्यस्य अर्श आदित्वादच्। समुद्रस्थे कालानले हेमच०।

**वडवासुत** पु० द्वि० व० ६त०। अश्विनीकुमारयोः। अश्विनीकुमारशब्दे दृश्यम्। [निघण्टु०

**वण** शब्दे भ्वा०पर०सक०सेट्। वणति अवाणीत्–अवणीत्

**वण** पु०-वण–अप्। शब्दे भरतः।

**वणिक्पथ** पु० ६त० अच्समा०। हट्टे। [शब्दच०

**वणिग्बन्धु** पु० वणिजां बन्धुरिव पोषकत्वात्। नीलीवृक्षे

**वणिग्भाव** पु० ६त०। वाणिज्ये आजीवनार्थं क्रयविक्रयकरणे अमरः।

**वणिग्वह** पु० वणिजं वहति वह–अच्। उष्ट्रे शब्दच०

**वणिज्(ज)** पु० पणायते व्यवहरति पण–इजि पस्य वो वा ग्रस्य वा। आजीवनार्थं क्रयविक्रयव्यवहारकर्त्तरि अमरः। २ज्योतिषोक्ते वणादितः षष्ठे करणे च ४वाणिज्ये स्त्री मेदि०। स्वार्थे अण् वाणिज तत्रार्थे अमर।

**वणिज्य** न० वणिजो भावः कर्म वा य। वाणिज्ये आजीवनार्थं क्रयविक्रयादिव्यवहारे भरतः स्त्रीत्वमपि। “चतुरेण चतुर्वर्गचिन्तामणिवणिज्ययेति” मुक्ताफलम्। ष्यञ्। वाणिज्य तत्रार्थे न०।

**वद** स्थैर्ये निश्चलभवने भ्वा०पर०सक०सेट्। वदति अवादीत् अवदीत्। ववाद वेदतुः।

**वद** भाषणे वा चु०उभ०पक्षे भ्वा०पर०सक०सेट्। वादयति ते अवीवदत्-त। पक्षे वदतीत्यादि।

**ब(व)दर** पु० वदति स्थिरीभवति छिन्नस्यापि पुनः प्ररोहेण वद+स्थैर्ये अरच्। १कोलिवृक्षे २देवसर्षपवृक्षे राजनि०। तस्य फलम् अण् तस्य लुक्। ३कोलिफले राजनि०। कर्कन्धूशब्दे दृश्यम्। ४कार्पासफले ५कोलिफले न० ६कोलिभेदे (सेओयाकुल) कार्पासास्थि पु० मेदि०। अन्त्यस्यादित्वमस्यान्येषाम्। ८वराहक्रान्तायां १कार्पासवृन्ते स्त्री अमरः।

**बदर(प)पाचन** न० तीर्थभेदे भा०श०४८अ०। तत्र इन्द्रोपदेशेन कुमार्य्याः पक्ववदरायाः पचनात्तथात्वम्।

**ब(व)दरफली** स्त्री ब(व)दरस्येव फलमस्याः ङीप्। भूमिब(व)दर्य्याम् राजनि०।

**ब(व)दरवल्ली** स्त्री ब(व)दरफलप्रधाना वल्ली शा०त०। भूमिब(व)दरीतिख्याते लताभेदे राजनि०।

**ब(व)दरामलक** न० ब(व)दरमिवामलकम्। १प्राचीनामलके हारा०। शमा त०। २वदरामलकफलयोः समाहारे न०

**ब(व)दरिकाश्रम** पु० न०। वदरी+स्वार्थे क तस्याः समीपे तच्चिह्नितोवाश्रमः। तीर्थविशेषे। ब(व)दरीशैलोऽप्यत्र। भा० व० ९२ अ० दृश्यम्। वदरिकावनमप्यत्र तच्च हिमालयपर्वतैकदेशे श्रीनगराख्यदेशसमीपे अलकनन्दामदीपश्चिमभागे स्थितम्।

**ब(व)दरी** स्त्री ब(व)दर+गौरा०ङीष्। १कोलिवृक्षे अमरः २कार्पासी शब्दर० कपिकच्छ्वाम् राजनि०। तत पीलादिषु पाके कुणच्। वदरीकुण तत्पाके न०।

**ब(व)दरीच्छदा** स्त्री ब(व)दर्य्या इव च्छदो यस्याः। १ह्रस्वकोलिवृक्षे २शङ्खमल्लायाञ्च राजनि०।

**बवदरीपत्र** पु० ब(व)दर्य्या इव पत्रमस्याः। नखीनामगन्धद्रव्ये जटा०। स्वार्थे क। तत्रैव। [लिकायाम् शब्दमा०

**बवदरीफला** स्त्री ब(व)दर्य्या इव फलमस्याः। नीलशेफा-

**बद्ध** त्रि० बन्ध–कर्मणि क्त। बन्धनकर्मणि अमरः।

**बद्धगुद** न० बद्धं गुदमत्र । कोष्ठस्थकारके रोगभेदे “यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वा पिहितं यथावत् । सञ्चीयते तस्य मलः सदोषात् शनैः शनैः सङ्करवच्च नाड्याम् । निरुध्यते तस्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम् । हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति” भावप्र० ।

**बद्धफल** पु० बद्धानि फलान्यस्य । करञ्जवृक्षे राजनि० ।

**बद्धमुष्टि** त्रि० बद्धः दानायाप्रसारितो मुष्टिर्यस्य । कृपणे ।

**बद्धमूल** त्रि० बद्धं मूलमस्य । दृढमूले ।

**बद्धरसाल** पु० नि०क० । राजाम्रभेदे राजनि० ।

**बद्धशिख** त्रि० बद्धा शिखा येन यस्य वा । “सदोपवीतिना भाव्यं सदा बद्धशिखेन च” प्रा०त०उक्ते १शिखाबन्धनयुक्ते २उच्चटायां स्त्री मेदि० ।

**वध** पु० हन-अप् । वधादेशः । हनने प्राणवियोगसाधने व्यापारे अमरः । वधपदार्थविशेषं वधिभेदञ्च प्रा० वि० उक्तो यथा

“अथ वधो निरूप्यते । ननु कोऽयं वधः किं वधित्वं कतिविधं च तत्, ? उच्यते प्राणवियोगफलकव्यापारो वधः तन्निष्पादकत्वञ्च साक्षात्परम्परोदासीनं अतिचारपरिगणितवधित्वम् अतो नेषुकारादिष्वतिव्याप्तिः तच्च पञ्चविधं स्मृतिस्वरसात् कर्त्ता प्रयोजकोऽनुमन्ता अनुग्राहको निमित्ती चेति यथाह आपस्तम्बः “प्रयोजयिता अनुमन्ता कर्त्ता चेति सर्वे स्वर्गनरकफलभोक्तारो यो भूय आरभते तस्मिन् फले विशेषः” । अनुग्राहकमाह याज्ञवल्क्यः “चरेद्व्रतमहत्वापि घातार्थञ्चेत् समागतः” । तथा मनुः “बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम् । यद्येको घातकस्तत्र सर्वे ते घातकाः स्मृताः” । भविष्ये “उद्दिश्य कुपितो विप्रो हन्ति विप्रमनागसम् । तदेवां निष्कृतिं वक्ष्ये शृणुष्वावहितो गुह ! । तेषां यस्य प्रहारेण स विप्रो निधनं गतः । सरस्वतीं प्रतिस्रोतः स व्रजेत् पापशुद्धये” । स च द्विविधः । एको वध्यप्रतिरोधकः अन्यः शस्त्रप्रहर्त्ता । निमित्तिनमाह विष्णुः “अन्यायेन गृहीतस्वो न्यायमर्थयते तु यः । यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्” । अत्र नरान्तरव्यापाराप्रधानेन वधनिष्पादकः कर्त्ता, यः कर्त्तारं कारयति स प्रयोजकः सोऽपि द्विविधः । एकः स्वतोऽप्रवृत्तमेव पदातिं वेतनादिना वधार्थं प्रवर्त्तयति अपरः स्वतः प्रवृत्तमेव मन्त्रोपायोपदेशादिना प्रोत्साहयति । अनुमतिदाता अनुमन्ता । अनुमतिश्च द्विविधा । एका यद्विरोधाद्धननं न सम्भवति तस्य विरोधिनो मया निरोधः कर्त्तव्य इति प्रयुक्तिः । अपरा एनं हनिष्यामीति वचने मन्तव्याप्रतिषेध एव” । हिंसायाः पापाद्यनिष्टजनकत्वेऽपि वैधहिंसायाः इष्टफलजनकत्वात् नानिष्टजनकता “यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा । अतस्त्वां घातयिष्यामि तस्माद्यज्ञे वधोऽवधः” ति० त० उक्तेः मनुनापि “या वेदविहिता हिंसा नियतास्मिंश्चराचरे । अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ” उक्तेश्च । अवधः अहिंसा च तज्जन्यपापाजनकत्वेन तद्विरोधीत्यर्थः । बहूनां रक्षार्थमेकस्य वधेऽपि पुण्यजनकत्वमुक्तम् “एकस्य यत्र निधने प्रहृष्टे दुष्टकारिणः । बहूनां भवति क्षेमं तस्य पुण्यप्रदो वधः । द्रव्यस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः । आत्मानं घातयेद्यस्तु तस्य पुण्यप्रदो वधः” कालिका०२०अ० । ब्रह्महत्ये वधेऽपि न राज्ञो दोषः प्रा०वि०स्थित “तथा नाततायिवधे दोषो हन्तुर्भवति कश्चन” स्मृतेः आततायिवधेऽपि नानिष्टफलमिति यथायथं बोध्यम् ।

**वध** संयमने चु०उ०सक०सेट् । बाधयति-ते अबीबधत्-त ।

**बध** निन्दायां बन्धने च भ्वादि०आत्म०सक०सेट् । बीभत्सते अबीभत्सिष्ट । निन्दनेऽर्थे एव स्वार्थे सन् बन्धने तु न तेन तत्र बधते अबधिष्ट इत्येव ।

**वधक** त्रि० वध-क्वुन । १वधकर्त्तरि त्रि० शब्दर० । २हिंस्रे १व्याधौ ३मृत्यौ च शब्दरत्ना० ।

**वधत्र** न० वध-करणे अत्रन् । अस्त्रे उणादि० । [त्रिका० ।

**वधस्थली** स्त्री ६त० । श्मशाने त्रिका० । वधस्थानमप्यत्र न०

**वधाङ्कक** न० वधः अङ्कमत्र कप् । कारागृहे त्रिका० ।

**वधार्ह** त्रि० वधमर्हति अर्ह-अण् उ०स० । वधदण्डार्हे ।

**बधिर** त्रि०बन्ध-किरच् । श्रोत्रेन्द्रियरहिते श्रवणशक्तिशून्ये । तस्यानर्हता मनुनोक्ता यथा “अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा” । तत अर्शआद्य० अच्(?) । बाधिरक तत्रिकटदेशादौ त्रि० । ततः दृढा०भावे वा इमनिच् पक्षे ष्यञ् । बधिरिमन् पु० बाधिर्य्य न० तद्भावे तन्निदानादि माधवकरेणोक्तं यथा “यदा शब्दवहं वायुः स्रोत आवृत्य तिष्ठति । शुद्धः श्लेष्मान्वितो वापि बाधिर्य्यं तेन जायते” ।

**ब(व)धू** स्त्री बध्नाति प्रेमतया बन्ध-ऊ नलोपः, उह्यते वह-ऊ पृषोदरादित्वात् वा । १नार्य्याम्, २स्नुषायाम् अमरः

३स्नुषायां, ४नवोढायाम्, भार्य्यायां ५शारिवौषधौ ६पद्यायाम्, च मेदि० ।

**ब(व)धूटी** स्त्री अल्पा ब(व)धूः अल्पार्थे टि वा ङीप्। अल्प-वयस्कायां नार्य्याम् "गोपवधूटीदुकूलचौराय" भाषाप०।

**ब(व)धूत्सव** पु०ब(व)ध्वा उत्सव आर्त्तवम् रजः स इव प्रसवः पत्रादिर्य्यस्य । रक्ताम्लाने राजनि० ।

**बधोद्यत** त्रि० बधाय उद्यतः । मारणार्थमुद्युक्ते आततायिनि, अमरः । आततायिनशब्दे ६४७ पृ० दृश्यम् ।

**बध्य** त्रि० बधमर्हति बध+यत् ।१बधार्हे अमरः। बन्ध कर्मणि क्यप् ।२कारारोद्धव्ये । आधारे क्यप् । ३बन्धनस्थाने च

**बध्यपाल** पु० बध्यं कारागारं पालयति पालि-अण् उप० स० । कारागाररक्षके । विष्णु० पु० २अंशे ६अ० ।

**बध्यभूमि** स्त्री हन-भावे यत् बधादेश बध्यस्य भूमिः । श्म-शाने बधस्थाने बध्यस्थानादयोऽप्यत्र [तद्गोत्रापत्ये पुंस्त्री०

**बध्योग** पु० ऋषिभेदे ततो विदा० गोत्रापत्ये अञ् । वाध्योग

**बध्र** न० बन्ध-ष्ट्रन् नलोपः । १सीसके, २चर्म्मयरज्ज्वां स्त्री ङीप् । पृषो० नस्य रः । बध्रौत्यप्यत्र स्त्री अमरः ।

**बन** याचने तना० आत्म० द्विक० सेट् । वनुते अवनिष्ट । वेने उदित् क्त्वा वेट् वनित्वा वान्त्वा वान्त । [बबन्ध बध्यते ।

**बन्ध** बन्धने क्र्या०पर०सक०अनिट् । बध्नाति अभान्त्सीत् उद्+उत्तोल्य बन्धने "उद्बन्धनमृता ये च" स्मृतिः ।

अनु+नियतपूर्ववर्त्तित्वे अनुगमने च । "तेषु किं भवतः स्नेहमनुबध्नाति मानसम्" देवीमा० ।

नि+नियमेन बन्धने निबन्धशब्दे दृश्यम् ।

निर्+आग्रहे निर्बन्धशब्दे दृश्यम् ।

प्र+ग्रन्थने कात्स्नर्यनिककथने च प्रबन्धशब्दे दृश्यम् ।

प्रति+निरोधे "प्रतिबध्नाति हि श्रेयः" रघुः । व्याप्तौ च प्रति-बन्धशब्दे दृश्यम् ।

सम्+सम्बन्धे संसर्गे च।

**बन्ध** संयमने चुरा०उभ०सक०सेट् । बन्धयति ते अबबन्धत् त

**बन्ध** पु०बन्ध-घञ् । १संयमने निगडादिना गतिरोधने २स्ट-हादिवेष्टनमूले च । स्तम्भशब्दे २६२५पृ०दृश्यम् । करणे कर्म्मणि वा घञ् ।३देहे ४ऋणशोधनविश्वासाय स्थापिते द्रव्ये आधौ च । आधिशब्दे ७११पृ० दृश्यम् । करणे घञ् ।५ग-तिरोधसाधने शब्दर० । रतिबन्धभेदाश्च रतिमञ्जर्य्युक्ता यथा "पद्मासनो नागपदो लतावेष्टोऽर्द्धसंपुटः कुलिशं सुन्दरश्चैव तथा केशर एव च । हिल्लोलो नरसिंहोऽपि विपरीतस्तथाऽपरः । क्षुब्धो वै धेनुकश्चैव उत्कण्ठ-स्तत परम् । सिंहासनो रतिनागो विद्याधरस्तु षोडशः" तत्तच्छब्दे तेषां लक्षणानि दृश्यानि । स्मरदीपिकोक्ता अन्येऽपि बन्धाः सन्ति यथा

"आसनप्रदो विपरीतो नागरो रतिपाशकः । केयूरः प्रिय-तोषश्च ततः समपदस्तथा । ततश्चैकपदो ज्ञेयः सम्पुट-श्चार्द्धसम्पुटः । ततः स्तनभरश्चैव ततोऽनुरतिसुन्दरः । ऊरुपीडासहचक्रौ तत्रोरुक्रमः स्मृतः । वेष्टको हसको-लस्तु ततो लीलासनस्तथा । अष्टादश क्रमाद्बन्धाः स्त्रीणां बहुसुखप्रदाः । पुंसां सुखकराश्चैव कथितास्तु क्रमा-गताः" । प्रवाहरूपेण सतत देहाद्देहान्तरगतिरूपे ६संसारे च ।

**बन्धक** न० बन्धे स्थापित धनम् कन् । ऋणशोधार्थम् विश्वास-हेतुतया आधीकृते १पदार्थे शब्दर०। स्वार्थे क ।२विनिमये पु० मेदि० । ३रतहिण्डके नानार्थमाला । ४पुंश्चल्यां स्त्री अमरः । ५हस्तिन्यां मेदि० उभयत्र गौरा० ङीष् । ६पञ्चपुरुषगामिन्यां स्त्रियाम् भा० आ० १२२अ०।

**बन्धन** न० बन्ध-भावे ल्युट् ।१निगडादिना २संयमने अमरः ३बधे मेदि०। करणे ल्युट् । ४तद्धेतौ रज्ज्वौ । हेमच०

**बन्धनवेश्मन्** न० ६त०। कारागारे हारा०। बन्धनागारादयो ऽप्यत्र । बन्धनालयोऽपि तत्रार्थे अमरः ।

**बन्धनस्तम्भ** पु० ६त० । हस्तिसंयमनकाष्ठे आलाने अमरः ।

**बन्धित्र** पु०बन्ध इत्र । १कामदेवे उणादि०। २चर्म्मव्यजने संक्षि०

**बन्धु** पु० बध्नाति मनः स्नेहादिना बन्ध-उ । १भ्रातौ मातुल-पुत्रादौ अमरः । "२बन्धुभ्यः पितृमातृत" इति स्मृतिः बान्धवे ३मित्रे ४पितरि ५मातरि ६भ्रातरि ७बन्धुजीववृक्षे च स्वार्थे अण् । बान्धव तत्रार्थे बन्धवस्त्रिविधाः पारिभाषिका आत्मबन्धुशब्दे पितृ-बन्धुशब्दे उक्ता मातृबन्धुशब्दे वक्ष्यमाणाश्च दृश्याः । अतएव "तत्सुतो गोत्रजो बन्धुरिति" याज्ञ० तएव ग्राह्या इति मिता० । दायभागमते तु मातामहादयोऽपि बन्धवः अतएव "तत्सुतो गोत्रजो बन्धुरिति" याज्ञ०व्या० तेन बन्धुपदेन असगोत्राणां मातामहादीनां ग्रहण-मित्युक्तम् । अतो मतभेदेन धनग्रहणे व्यवस्थाभेद ।

**बन्धुक** पु० बन्ध-उक । बन्धुजीववृक्षे शब्दरत्ना० ।

**बन्धुजीव(क)** पु०बन्धुरिव जीवयति जीवि-अण् ण्वुल् वा। बन्धुजीववृक्षे । (बांधुयालि) ख्याते अमरः । [च अमरः

**बन्धुता** स्त्री बन्धु+समूहे भावे तल् वा । १बन्धुसमूहे, २तद्भावे

**बन्धुदत्त** न० ३त० । १स्त्रीधनभेदे "बन्धुदत्तं तथा शुल्क

**बर्हिपुष्प** पु० बर्हि बर्हमुक्तमिव पुष्पमस्य । मयूरपिच्छतुल्ये नार्हकुसुमादयोऽप्यत्र ।

**बर्हिर्मुख** पु० बर्हिर्वह्निर्मुखमस्य । देवे अमरः ।

**बर्हिश्शुष्मन्** पु० बर्हिः कुशः बलमस्य । वह्नौ अमरः ।

**बर्हिषद्** पु० ब० व० बर्हिषि सीदति सद–क्विप् षत्वम् । पितृगणभेदे पितृशब्दे दृश्यम् ।

**बर्हिष्केश** पु० बर्हिः केश इव यस्य । वह्नौ ।

**बर्हिष्मत्** त्रि० बर्हिरस्त्यस्य मतुप् । कुशयुक्ते स्त्रियां ङीप् ।

**बर्हिष्य** त्रि० बर्हिषि दत्तम् यत् । कुशे दत्ते पिण्डादौ ।

**बर्हिष्ठ** त्रि० बर्हिषि कुशे तिष्ठति स्था–क ७त० वा विसर्गलोपः षत्वम् । कुशस्थिते ।

**बर्हिस्** न० बर्ह–कर्मणि इसि । कुशे १यज्ञिये कुशे "निहोता सत्सि बर्हिषि" सामार्चिकम् ।१।१।१। "उपमूललून बर्हिः पितृणां पर्वसु लून देवानाम्" कौ० त० । प्राचीनबर्हिःशब्दे दृश्यम् २दीप्तौ ३अग्नौ च "बर्हिषि रजतं न देयम्" श्रुतिः ।

**बल** जीवने, धान्यावरोधे च भ्वा० पर० सक० सेट् । बलति । अबालीत् बेलतुः । ज्वलादि० कर्त्तरि ण । बलः बालः ।

**बल** दाने वधे निरूपणे च भ्वा० उभ० सक० सेट् । बलति–ते अबालीत् अबलिष्ट । बेलतुः बेले । [बलत् त ।

**बल** जीवने चु० उभ० अक० सेट् मित् घटा० । बलयति–ते अबीबलत्

**बल** निरूपणे चु० आत्म० सक० सेट् । बालयते अबीबलत ।

**बल** न० बल–अच् । १सैन्ये २देहजे सामर्थ्ये ३स्थौल्ये ४गन्धरसे ५रूपे मेदि० ६शुक्रे हेमच० ७दर्द्देहे जटा० ८पद्मवीजे शब्दर० ९रक्ते च शब्दच० । १०बलयुक्ते त्रि० मेदि० ११काके १२बलदेवे अमरः । १३वरुणवृक्षे शब्दच० । १४दैत्यभेदे पु० मेदि० । तत्र पारिभाषिकबलानि ब्रह्मवै० ३५ अ० उक्तानि यथा

"क्षत्रियाणां बलं युद्धं व्यापारश्च बलं विशाम् । भिक्षाबलं भिक्षुकाणां शूद्राणां विप्रसेवनम् । हरौ भक्तिर्हरेर्दास्यं वैष्णवानां बलं हरिः । हिंसा बलं खलानाञ्च तपस्या च तपस्विनाम् । बलं वेशश्च वेश्यानां योषितां यौवनं बलम् । बलं प्रतापो भूपानां बालानां रुदितं बलम् । सतां सत्यं बलं, मिथ्या बलमेवासतां सदा । अनुगानामनुगमः स्वल्पस्थानाञ्च सञ्चय । विद्या बलं पण्डितानां वाणिज्यं वणिजां बलम् । अशत्रुकर्मशीलानां गाम्भीर्यं साहसं बलम् । धनं बलं च धनिनां गुणीनां शीलमेव च । बलं विवेकः शान्तानां गुणिनां बलमेकता । गुणो बलं च गुणिनां चौराणां चौर्यमेव च । विप्रकर्मश्च कापट्यमधर्मवर्णिनां बलम् । हिंसा च हिंस्रजन्तूनां सतीनां पतिसेवनम् । शरणापौ सुराणाञ्च शिष्याणां गुरुसेवनम् । बलं धर्मो हृष्टस्थानां भृत्यानां राजसेवनम् । बलं स्तवः स्तावकानां ब्रह्म च ब्रह्मचारिणाम् । यतीनाञ्च सदाचारो न्यासः सन्न्यासिनां बलम् । पापं बलं पातकिनां सुभक्तानां हरिर्बलम् । पुण्यं बलं पुण्यवतां प्रजानां नृपतिर्बलम् । फलं बलञ्च वृक्षाणां जलधीनां जलं बलम् । जलं बलञ्च मत्स्यानां मत्स्यानाञ्च जलं बलम् । शान्तिर्बलञ्च भूपानां विप्राणाञ्च विशेषतः । "विद्याभिजनमित्राणि बुद्धिसत्त्वधनानि च । तपःसहायवीर्य्याणि दैवञ्च दशमं बलम्" । भा० शा० ।

वैद्यके सद्योबलकरपदार्थाः संक्षेपतो दर्शिता यथा "सद्यो बलकरं प्रोक्तं बालाभ्यङ्गः सुभोजनम् । सद्यो बलकरं प्रोक्तं सर्पिश्च माषमप्युत" । "धातूनां यत् परं तेजस्तदोजस्तदेव बलमित्युच्यते" वैद्य० वायुदत्ते १५स्कन्दानुचरभेदे पु० । "बलञ्चातिबलश्चैव महावक्त्रौ महाबलौ" भा० श० ४५।२६ श्लो० । असुरभेदश्च इन्द्रेण हतः इन्द्रपर्य्याये बलारातिशब्ददर्शनात्" देवीपु० ४७अ० तु स विष्णुना हतः "तदा हतो तत्क्षणेन दानवेन महात्मना । विष्णुनापि स्वचक्रेण शिरश्छिन्नमभूत्तदा । तस्यावयवसञ्जाता वज्राद्या रत्नजातयः । शोषणे सुरतेजांसि पद्मरागाणि चाभवन् । शिशुपालदानेन कायो रत्नाकरोऽभवत्" । [अमर । अन्त्यस्यसादिरयमिति स्वामी ।

**बलक्ष** पु० बल क्षायत्यस्मात् क्षै–क । १शुक्लवर्णे । २तद्वति त्रि० ।

**बलज** न० बलात् जायते जन–ड । १क्षेत्रे २पुरद्वारे ३शस्ये ४युद्धे च । ५बलजाते त्रि० मेदि० । ६नरयोषायां ७यूथिकायां च स्त्री मेदि० ।

**बलद** पु० बलं ददाति दा–क । "पौष्टिके बलदः स्मृतः" १पौष्टिककर्माङ्गे वह्निभेदे । २अश्वगन्धायां स्त्री । राजनि० ३बलदातरि त्रि० । ४जीवके पु० राज.न० ।

**बलदीनता** स्त्री ६त० । ग्लानौ हेमच० ।

**बलदेव** पु० बलेन दीव्यति दिव–अच् बलोद्रिक्तो देवो वा शाक०त० । १बलरामे "बलदेवो बलोद्रेकात्" ब्रह्मवै० जन्मख० ४३ अ० । २त्रायमाणौषधौ स्त्री अमरः । ३वायौ पु० मेदि० ।

**बलप्रसू** स्त्री ६त०। रोहिण्यां वसुदेवभार्य्याभेदे स्त्री शब्दच० तज्जनन्यादयोऽप्यत्र।

**बलभद्र** पु०बल+अर्श आद्यच बलो बलवानपि भद्रः सौम्यः। १बलदेवे, अमर। २गवये राजनि०। ३अनन्ते पु० ४बलयुते त्रि० हेमच०। ५लोध्रे शब्दच०। बलेषु भद्रा। ६त्रायमाणौषधौ ६पूतकुमार्य्यां च स्त्री मेदि०। स्वार्थे क। बलभद्रिका तत्रार्थे स्त्री अमर।

**बलराम** पु० बलेन रमते रम सत्तायां कर्त्तरि घञ् बलोपपदको वा रामः शा०त०। कृष्णाग्रजे रोहिणीनन्दने संकर्षणे रामस्य दाशरथिपरशुरामबलरामभेदेन त्रित्वात् अस्य बलोपदकत्वात्तथात्वम्। [भरत०।

**बलल** पु० बल-आति ला—क बल-कलच वा। बलरामे

**बलवत** अव्य० बल+अतिशये मतुप् मस्य वः। १अतिशये अमरः। "बलवदपि शिक्षितानाम्" शकुन्तला। २बल विशिष्टे माधवे त्रि० अमरः स्त्रियां ङीप्। [जटाधर०।

**बलवर्द्धिनी** स्त्री० बल वर्द्धयति वृध—णिनि। जीवकौषधौ

**बलविन्यास** पु० बलानां सैन्यानां विशेषेण दुर्भेद्यतायै न्यासः स्थापनम्। व्यूहे सेनायाश्रितिवेशविशेषे अमरः।

**बलशालिन्** त्रि० बलेन शालते शाल-णिनि। बलविशिष्टे स्त्रियां ङीप्। [इन्द्रे हला०। बलनिसूदनोऽप्यत्र।

**बलसूदन** पु० बल तन्नामकमसुरं सूदयति सूद ल्यु।

**बलस्थिति** स्त्री स्था आधारे क्तिन् ६त०। शिविरे त्रिका०।

**बलहन्** पु०बलनामासुरं बल वा हन्ति हन क्विप्। बलारातौ १इन्द्रे २श्लेष्मधातौ शब्दर०। ३बलरामे हरिवं० १११ अ०।

**बला** स्त्री० बल कार्य्यत्वेनास्त्यस्याः। (बालियडा) १क्षुपभेदे, अमर। "बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत्। स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम्। बलामूलत्वचूर्णं पीतं सक्षीरशर्करम्। मूत्रातिसारं हरति दृष्टमेतन्न संशयः" भावप्र०। विश्वामित्रेण रामाय दत्ते २अस्त्रविद्याभेदे अतिबलशब्दे दृश्यम्।

**बलाका** स्त्री० बल-संवरणे आक। १बकपङ्क्तौ २बके बिसकण्ठिकायां ३बकभेदे ४कामुक्यां च शाश्वतः।

**बलाकाश्व** पु० अजकस्यपुत्रे नृपभेदे हरिवं० ७अ०।

**बलाकिन्** त्रि० बलाका+अस्त्यर्थे इनि। १बलाकायुक्ते स्त्रियां ङीप् २धृतराष्ट्रपुत्रभेदे पु० भा० आ० ६७अ०।

**बलाङ्गक** पु० बलयुक्तमङ्गमत्र कप्। वसन्तकाले हेमच०।

**बलाञ्चिता** स्त्री ३त०। बलरामवीणायां शब्दरत्ना०।

**बलाट** पु०बलाय तद्दानाय अटति गच्छति उदरम् अट-अच्। मुद्गे (मुग) हेमच०।

**बलात्** अव्य० बलं सामर्थ्यं कारणत्वेनातति अत-क्विप्। हठादित्यर्थे। पञ्चम्यन्तबलशब्देनास्य न गतार्थता बलात् कार इत्यादिसिद्धये तस्याव्ययत्वाङ्गीकार्य्यत्वात्। [च।

**बलात्कार** पु०बलात्+कृ-घञ्। बलपूर्व्वककरणे हठात्करणे

**बलात्मिका** स्त्री० बलमेवात्मा स्वरूप कारणत्वात् यस्या कप् अत इत्वम्। (हातिशुंडा) हस्तिशुण्डीवृक्षे शब्दर०

**बलादि** पु० चतुरर्थ्यां य प्रत्ययनिमित्ते १शब्दगणे स च गणः पा०ग०उक्तो यथा "बल चुल नल दल वट लकुल उरल पुल मूल उल डुल वन कूल"। अस्त्यर्थे मा १मतुप्प्रत्यय निमित्ते २शब्दगणे च स च गणः पा०ग०सूत्रे उक्तो यथा "बल उत्साह उद्भास उद्वास उद्वास शिखा कुल चूडा सुन कूल आयाम व्यायाम उपयाम आरोह अवरोह परिणाह युद्ध"।

**बलाया** स्त्री० बलाय अग्न्या। (वेलियाड़ा) क्षुपभेदे राजनि

**बलाध्यक्ष** पु० ६त०। सेनापतौ मनु० ७।१८६।

**बलानुज** पु० अनुजायते अनु+जन—ड ६त०। श्रीकृष्णे।

**बलाबलाधिकरण** न० बलञ्च अबलञ्च ते अधिक्रियेते अस्मिन् अधि+कृ-आधारे ल्युट्। आकाङ्क्षानाकाङ्क्षाकृतबलाबलयोर्निश्चायके जैमिन्युक्ते न्यायभेदे यथा "सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनम्" इत्यत्र वैश्वदेवयागस्यामिक्षानि तत्वेन वाजिनाकाङ्क्षेति न तत्र तद्यागाङ्गत्वम् वेदान्तप०।

**बलामोटा** स्त्री० बलमामोटयति आ+मुट—अच्। नागदमन्याम् भवाप्र०

**बलाय** पु० बलस्यायः स्थानम्। वरुणवृक्षे शब्दच०।

**बलाराति** पु० बलस्य तन्नामासुरस्यारातिः। इन्द्रे अमरः। बलशत्रु प्रभृतयोऽप्यत्र। [ल्ल। पानीयामलके शब्दच०।

**बलालक** पु० बलाय सामर्थ्याय अलति पर्य्याप्नोति अल-

**बलास** पु० बलमस्यति क्षिपति अस०अण् उप०स०। कफधातौ हेमच० "गौरव कफस्य स्वायोऽवधिबलस्योऽग्निमार्दवम्। माधुर्य्यमपि चास्यस्य बलासावततेर्वृद्धितः"

**बलासकन्द** पु० बलं सामर्थ्यमाक्रन्दयति आ+क्रन्द-अ ताट्ये कन्दः। शुशुन्धकन्दे राजनि०।

**बलि** पु० बल—इन्। १ पूजायाम् २उपहारे, "दद्यात्स्तौ बलिं चैव निजगात्रासृगुक्षितमिति" प्रयुक्ते ३राजग्राह्ये अमर० ४चामरदण्डे, स्तम्भस्यैकदेशस्यानुसन्धानसमये भागे, ५भूतयज्ञे, हेमच०। "बलिकर्म ततः कुर्य्यादिति" स्मृतिः।

विरोचनसुते ८दैत्यभेदे च "येन बद्धो बलीराजा दानवेन्द्रो महाबलः" रक्षाबन्धनमन्त्रः। ९जरया श्लथचर्मणि स्त्री॰ ङीप्। "गृहस्थस्तु यदा पश्येत् वलीपलितमात्मनः" इति मनुः। १०उदरावयवभेदे "वलि-त्रय चारु बभार बाला" इति कुमारः। ११गुह्यस्थे अङ्कु-राकारे मांसपिण्डे, वैद्यकम् अर्शःशब्दे दृश्यम्। १२गृह-दारुभेदे च (पाड) स्त्री॰ स्वार्थे क। बलिका तत्रार्थे अतिबलायाञ्च राजनि॰। १३ययातिवंश्यसुतपोनृपपुत्रे विष्णु पु॰। दानवभेदकथा भाग॰ ८स्क॰ दृश्या।

वैश्वदेववलिकरणप्रकारः मार्क॰ पु॰ उक्तो यथा। "ततोऽग्नेस्तर्पणं कुर्य्याद्दद्याच्च बलिमित्यथ। ब्रह्मणे गृहमध्ये तु विश्वदेवेभ्य एव च। धन्वन्तरिं समुद्दिश्य प्रागुदीच्यां बलिं क्षिपेत्। प्राच्यां शक्राय, याम्यायां यमाय बलिमाहरेत्। प्रतीच्यां वरुणायैव सोमायो-त्तरतो बलिम्। दद्याद्धात्रे विधात्रे च बलिं द्वारे गृहस्य च। अर्य्यम्णे च बलिं दद्यात् गृहेभ्यश्च सम-न्ततः। नक्तञ्चरेभ्यो भूतेभ्यो बलिमाकाशतो हरेत्। पितॄणां निर्वपेच्चैव दक्षिणाभिमुखस्थितः। गृहस्थ-स्तत्परो भूत्वा सुसमाहितमानसः। ततस्तोयमुपादाय तेष्वेवाचमनाय वै। स्थानेषु निक्षिपेत् प्राज्ञस्तास्ता उद्दिश्य देवताः। एवं गृहबलिं कृत्वा गृहे गृहपतिः शुचिः। आप्यायनाय भूतानां कुर्य्यादुत्सर्गमादरात्। श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्च वपेद्भुवि। वैश्वदेवं हि नामैतत् सायं प्रातरुदाहृतम्"।

देवोद्देश्यकबलिविशेषादिकं यथा

"साधकैर्बलिदानेषु ग्राह्याः सर्वस्य तु। प-क्षिणः कच्छपा ग्राहा मत्स्या नवविधा मृगाः। महिषो गोधिका गावश्छागो बभ्रुश्च शूकरः। खड्गश्च कृष्णसारश्च गोधिका शरभो हरिः। शार्दूलश्च नर-श्चैव स्वगात्ररुधिरन्तथा। चण्डिकाभैरवादीनां बलयः परिकीर्त्तिताः। बलिभिः साध्यते मुक्ति-र्बलिभिः साध्यते सुखम्। बलिदानेन सततं जयेत् शत्रू-न्नृपान्नृपः। मत्स्यानां कच्छपानाञ्च रुधिरैः सततं शिवा। मासैकं तृप्तिमायाति ग्राहैर्मासांस्तु त्रीनथ। मृगाणां शोणितैर्देवी नराणामपि शोणितैः। अष्टौ मासानवाप्नोति तृप्तिं कल्याणदा च सा। गोगोधि-कानां रुधिरैर्वार्षिकीं तृप्तिमाप्नुयात्। कृष्णसारस्य रुधिरैः शूकरस्य च शोणितैः। आप्नोति सततं देवी तृप्तिं द्वादशवार्षिकीम्। महिषाणाञ्च खड्गानां रुधिरैः शतवार्षिकीम्। तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथा। सिंहस्य शरभस्याथ स्वगात्रस्य च शोणितैः। देवी तृप्ति-मवाप्नोति सहस्रं परिवत्सरान्। मांसैरपि तथा प्रीती-रुधिरैर्यस्य यावती। कृष्णसारस्तते खड्गं तथा मत्स्यश्च रोहितम्। वार्ध्रीणसयुगस्यापि फलं तेषां पृथक् शृणु। कृष्णसारस्य मांसेन तथा खड्गेन चण्डिका। वर्षान् पञ्च शतान्येव तृप्तिमाप्नोति केवलाम्। रोहितस्य तु मत्स्यस्य मांसैर्वार्ध्रीणसस्य च। तृप्तिमाप्नोति वर्षाणां शतानि त्रीणि मत्प्रिया। त्रिःपिबस्त्वीन्द्रिय-क्षीणः श्वेतो वृद्धस्त्वजापतिः। वार्ध्रीणसः प्रोच्यतेऽसौ हव्ये कव्ये च सत्कृतः। नीलग्रीवो रक्तशीर्षः कृष्ण-पादः सितच्छदः। वार्ध्रीणसः स्यात् पक्षीशो मम विष्णो रतिप्रियः। "मन्त्रपूतं शोणितन्तु पीयूषं जायते सदा। मस्तकस्यापि तस्यास्ति मांसस्यापि सदा शिवा। तस्मात्तु पूजने दद्याद्बुधः शीर्षस्य लोहितम्। भोज्ये होमे च मांसानि नियुञ्जीयाद्विचक्षणः। भूपाद्य न मांसानि दद्याद्वै साधकः क्वचित्। मद्ये तु लोहि-[illegible] शीर्षममृतं तत्तु जायते। कुष्माण्डमिक्षुदण्डं मद्य-मासवमेव च। एते बलिसमाः प्रोक्तास्तृप्तौ छाग-समाः सदा। चन्द्रहासेन कर्त्र्या वा छेदनं सत्त्वसि-ध्यते। दात्रासिधेनुककचशङ्कुलाभिस्तु मध्यमम्। क्षुरस्तु रप्रभल्लैश्चैवाधमं परिकीर्त्तितम्। एभ्योऽन्यै-र्शक्तिरायुधाद्यैर्बलिच्छेद्यः कदापि न। नाप्नोति देवी बलिं तस्य दाता मृत्युमवाप्नुयात्। हस्तेन च्छेदयेद्यस्तु प्रोक्षितं साधकः पशुम्। पक्षिणं वा मन्त्रहत्वा सोऽप्य-प्नोति महद्दुःखम्। आमन्त्र्य खड्गन्तु बलिं नियुञ्जीत विचक्षणः।" "पशूनां पक्षिणाञ्चापि नराणाञ्च विशे-षतः। स्त्रियं न दद्यात्तु बलिं दत्त्वा नरकमाप्नुयात्। अज्ञातबलिदानेषु योषितं पशुपक्षिणोः। बलिं दद्या-न्मासुषीन्तु त्यक्त्वा अज्ञातपूजितम्। न त्रिमासीयकाच्यूनं पशुं दद्यात् शिवाबलिम्। न च त्रिपक्षकाच्यूनं प्रद-द्याद्वै पतत्रिणम्। काणाभ्यङ्गादिदुष्टन्तु न पशुं पक्षिण-न्तथा। देव्यै दद्याद्यथामर्त्यं तथैव पशुपक्षिणौ। छिन्नलाङ्गूलकर्णादिभग्नदन्तन्तथैव च। भग्नशृङ्गादि-कस्यापि न दद्यात्तु कदाचन।" "नारं सद्यो निरो-रक्तं देव्याः सम्यक् निवेदयेत्। छागन्तु वामतो दद्यान्म-हिषं वितरेत् पुरः। पक्षिणं वामतो दद्यादग्रतो दे[illegible]

शोणितम् । क्रव्यादीनां पशूनान्तु पक्षिणाञ्च शिरोऽसृजम् । वामे निवेदयेत् पात्रं जलजानाञ्च सर्व्वशः । कृष्णसारस्य कूर्म्मस्य खड्गस्य शशकस्य च । पाश्चात्यानामथ मत्स्यानामप एव निवेदयेत् । सिंहस्य दक्षिणे दद्यात् खड्गिनोऽपि च दक्षिणे । पृष्ठदेशे न दद्यात्तु शिरो वा रुधिरं बलेः" कालिकापु० नानास्थानीयम् ।

"बलिदानेन विप्रेन्द्र ! दुर्गाप्रीतिर्भवेन्नृणाम् । हिंसाजन्यञ्च पापञ्च लभते नात्र संशयः । उत्सर्गकर्त्ता दाता च छेत्ता पोष्टा च रक्षकः । अग्रपश्चान्निरोद्धा च सप्तैते वधभागिनः । यो यं हन्ति स तं हन्ति चेति वेदोक्तमेव च । कुर्व्वन्ति वैष्णवीं पूजां वैष्णवास्तेन हेतुना" ब्रह्म-प्रकृ० ६१ । ६२ अ० । बलिदाननिन्दा यथा,

"पार्वत्युवाच । ये समाचरमित्युक्त्वा प्राणिहिंसनतत्पराः । तत् पूजनं ममामेध्यं तद्दोषात्तदधोगतिः । मदर्थे शिव ! कुर्व्वन्ति तामसा जीवघातनम् । आकल्पकोटि निरये तेषां वासो न संशयः । मम नाम्नाथ वा यज्ञे पशुहत्यां करोति यः । क्वापि तन्निष्कृतिर्नास्ति कुम्भीपाकमवाप्नुयात् । दैवे पैत्र्ये तथात्मार्थे यः कुर्य्यात् प्राणिहिंसनम् । कल्पकोटिशतं शम्भो ! रौरवे स वसेद् ध्रुवम् । यो मोहान् मानवैर्हिंसां कृत्वा कुर्य्यात् कदाचन ॥ एकविंशतिकल्पं स तत्तद्योनिषु जायते । यस्तु यज्ञे पशून् हत्वा कुर्य्यात् शोणितकर्द्दमम् । स पचेन्नरके तावद् यावल्लोमानि तस्य वै । हन्ता कर्त्ता तथोत्सर्गकर्त्ता धर्त्ता तथैव च । तुल्याभवन्ति सर्व्वे ते ध्रुवं नरकगामिनः । सम्मोहाद्ये पशून् हत्वा नरक-पाकसहस्रलेत् । यो दुष्टः स तु पूयोदे वसेद् देव ! न संशयः । देवतान्तरसम्मानव्याजेन स्वेच्छया तथा । हत्वा जीवांस्ततो मोहात् नित्यं नरकमाप्नुयात् । यूपे बद्धा पशून् हत्वा यः कुर्य्याद्रक्तकर्द्दमम् । तेन चेत् प्राप्यते स्वर्गो नरकं केन गम्यते । उपदेष्टा वधे हन्ता कर्त्ता धर्त्ता च विक्रयी । उत्सर्गकर्त्ता जीवानां सर्व्वेषां नरकं भवेत् । मध्यस्थस्य कथायापि प्राणिनां क्रयविक्रये । तथा द्रष्टुश्च सूनायां कुम्भीपाको भवेद्ध्रुवम् । अयकामावधो भूत्वा योऽज्ञानेन विमोहितः । हन्यात् विविधान् जीवान् कुर्य्यान्मखाय शङ्कर ! । तद्रोव्यथवश्य तत्यातिदारादिकभ्रटाम् । पश्चिरादेव भवेन्नाशो मृत स नरकं व्रजेत् । देवयज्ञे पितृश्राद्धे तथा माङ्गल्यकर्म्मणि । तस्यैव नरके वासो यः कुर्य्याज्जीवघातनम् । मद्भ्राजेन पशून् हत्वा यो भवेत् मत्त मन्नुभिः । मद्गात्रलोमसंख्यादेरधिपमवते वसेत् । आवयोरन्यदेवानां नाम्ना च परकर्म्मणि । यः शपोत्थ पशून् हन्यात् सोऽस्मतामिषमाप्नुयात् । पशून् हत्वा तथा त्वां मां योऽर्चयेन्मांसशोणितैः । तावत्तन्नरके वासो यावच्चन्द्रदिवाकरौ । निर्व्विकारमभक्ष्यं तत् वस्त्वद्रव्येण यत् कृतम् । यस्मिन् यज्ञे शम्भो ! शम्भो ! जीवहत्या भवेद्ध्रुवम् । यज्ञमारभ्य चेद् यज्ञः कुर्य्याद्दै पशुघातनम् । स तदाऽधोगतिं गच्छेदितरेषाञ्च का कथा । आवयोः पूजनं मोहाद् ये कुर्य्युर्मांसशोणितैः । पतन्ति कुम्भीपाके ते भवन्ति पशवः पुनः । फलकामास्तु वेदोक्तैः पशोरालभनं मखे । पुनश्चासत् फलं भुक्त्वा ये कुर्व्वन्ति पतन्त्यधः । स्वर्गकामोऽश्वमेधं यः करोति निजमायया । तद्भोगान्ते पतेद्भूयः स जन्मनि भवार्णवे । ये हताः पशवो लोकैरिह स्वार्थेषु कोविदैः । ते परत्र तान् हन्युस्तथा खड्गेन शङ्कर ! ॥ आत्मसुखकामाद्दिष्ट-वन्मांसकुक्षेच्छया । यो दुरात्मा पशून् हन्यात् आत्मादीन् घातयेत् स तं । जानन्ति नो वेद पुराणतत्त्वं ये कर्म्मठाः पण्डितमानयुक्ताः । लोकाधमास्ते नरके पतन्ति कुर्व्वन्ति मूढाः पशुघातनं चेत् । येऽज्ञानिनो मन्दधियोऽकृतार्था भवे पशु घ्नन्ति न धर्म्मशास्त्रम् । जानन्ति नार्कं नरकं न मुक्तिं गच्छन्ति घोरं नरकं नराधमाः । मूढा अकाण्डौ न विदन्ति शास्त्रं न धर्म्ममार्गं परमार्थतत्त्वम् । पापं न पुण्यं पशुघातका ये पूयोदवासो भवतीह तेषाम् । जीवानुकम्पां न विदन्ति मूढा भ्रान्ताश्च वेदवृथाविनोद धर्म्मम् । आर्त्ता भवे प्रायश्चित्तं तु कुर्व्वन्ते यान्ति मर्त्याः खलु रौरवाख्यम् । ततस्तु खलु जन्तूनां घातनं नो करिष्यति । शुद्धात्मा धर्म्मवान् ज्ञानी शान्तिमेव मानवः । यदीच्छेदात्मनः क्षेमं त्यक्त्वाऽमानं तदा नरः । जीवान् क्वापि नो हन्यात् बद्धटापक एव चेत् । सम्पत्तौ च विपत्तौ वा परलोकेच्छुकः पुमान् । कदाचित् प्राणिनो हत्यां न कुर्य्यात् तत्त्ववित् सुधीः । मानवो यः परत्रेह तच्छुभिच्छेत् कदाचन ॥ सर्व्वविद्-भयत्नेन न कुर्य्यात् प्राणिनां वधम् । वधाद्भवति यो मर्त्त्यो जीवान् तत्त्वज्ञ । धर्म्मवित् ! किं पुण्यं तस्य यज्ञोऽयं मह्याप्तं स तु रक्षति । यो रक्षेत् घातनात् शम्भो ! जीवनाय दयापरः । तस्य भवतमो नित्यं सर्व्वरक्षां करोति च । एकस्मिन्नक्षिते जीवे त्रैलोक्यं तेन रक्ष

तम् । बजत् शङ्कर । येन तक्काद्धरम् पातयेत् । पशुच्छिदाविधियेन पुराणे निगमे तथा । उक्तो रज-स्तमोभ्यां स केवल मनसापि वा । नरकस्वर्गभोगार्थं संसाराय प्रवर्त्तितः । तयोस्तत्कर्मभोगेन गमनागमन भवेत् । सत्येन साम्प्रतमस्त्वे च विधिर्नैव शङ्कर ।। •प्रदर्शितो निवृत्तिस्तु यत्नापि सात्त्विकी क्रिया । एवं नानाविधं कर्म पयोराद्यमनादिकम् । कामाशयः फला-काङ्क्षी तस्वाऽस्थानेन मानव । पञ्चजन्मानाविना क्षिप्त्वा भ्रान्त्याशा तामसीं सदा । यमभीतिहर• भक्त्या यदि गोविन्दमाश्रयेत् ।" पाद्मोत्तरखण्डे १०४ १०५अ० ।

बलिध्वंसिन् पु० बलिं ध्वंसयति स्वस्थानात् पातयति ध्वन्स-णिच्-णिनि । विष्णौ वामनावतारेण हि तस्य तथात्वम् । तत्कथा च वामनपु० ११अ० दृश्या ।

बलिनन्दन पु० ६त० बाणासुरे शब्दर०। [कर्मवति अमर ।

बलिन(भ) त्रि० बलि+अस्त्यर्थे-इन भ वा । जरया शिथिल

बलिन् त्रि० बलमस्त्यस्य इनि । १बलवति । २उष्ट्रे, ३महिषे, ४वृषे, ५शूकरे, ६कुन्दवृक्षे, ७कफे पु० शब्दा० रत्नमा० पु० हेम० । ८माषरामे शब्दर० (बेलियाडा) १०क्षुपे स्त्री ङीप् शब्दच० ।

बलिपुष्ट पु० बलिना वैश्वदेववलिद्रव्येण पुष्ट पुष-क्त ३त० । काके अमर स्त्रियां ङीप् ।

बलिपोदकी स्त्री उपोदक्यां राजनि० ।

बलिप्रिय पु० बलिना प्रीणाति प्री-क । लोध्रवृक्षे शब्दच० ।

बलिबिन्ध्य पु० रैवतकमनोः पुत्रभेदे भाग०८।५।२ ।

बलिभुज् पु० बलिं वैश्वदेवद्रव्यम् स्वेच्छया दत्तवलिं भुङ्क्ते भुज-क्विप् । काके अमर० ।

बलि(ली)मुख पु० बलि(ली)युक्तं मुखमस्य शाक०त० । वानरे अमर० । [पति । २उष्ट्रे पु० राजनि० ।

बलिष्ठ त्रि० अतिशयेन बली बलिन्+इष्ठन् । १अतिशयबल

बलिष्णु त्रि०बल-संवरणे इष्णु । अपमानिते उणा० ।

बलिसद्मन् न०६त०।पाताले अमर० बलिमन्दिरादयोऽप्यत्र ।

बलीक पु० न०बालयति आवृणोति बल-ईकन् नि० । पटल प्रान्ते (ओलँच) अमर । [युते स्त्रियां ङीप् ।

बलीयस् त्रि० अतिशयेन बली बलिन्+ईयसु । अत्यन्तबल-

बलीवर्द्द पु० ई लक्ष्मी व-विच वर तौ ईवरौ ददाति दा-क ईवर्द्द. बली चासौ ईवर्द्दश्चेति । वृषे अमर० । तत शुभ्रा० अपत्ये ढक् । बालीवर्द्देय तदपत्य पु स्त्री०

बलूल त्रि० बल+सिध्मा० वा लच् ऊङ् । बलयुक्ते ।

बलोत्कटा स्त्री १स्कन्दानुचरमातृकाभेदे भा० शा०४५अ० । २बलेनोत्कटे त्रि० ।

बल्य न० बलाय हित बल+यत् १प्रधानधातौ शुक्रे, २बल साधने च ३अश्वगन्धायाम्, ४अतिबलायां, ५प्रसारण्यां च, ६प्रसारिण्यांच स्त्री राजनि०। बला०चतुरर्थ्यां यत् ।७बल-निर्वृत्ते त्रि०८बुद्धभिक्षुके पु०त्रिका०। [तृणभेदे हेमच

बल्वजा स्त्री० बल-क्विप् त वजति वज-गतौ अच् । उलपे

बल्ह स्तृतौ दाने, वधे, च सक० याचने द्विक० भ्वा०आत्म० सेट् । बल्हते अबल्हिष्ट बबल्हे ।

बल्हि पु०बल्ह-इन् ।१क्षत्रियभेदे२जनपदभेदे स्वार्थे क तत्रा र्थे । तत कोपधत्वात् भवे अण् । बाल्हिक हिङ्गुनि न०

बव पु०प्रथमे तिथ्यर्द्धरूपे करणभेदे करणशब्दे दृश्यम् ।

बष्क(ष्क)यि(णी)नी स्त्री मस्क गतौ अयन् पृषो० मस्य ब-सस्य वा षत्वम् । बष्क(ष्क)योऽस्त्यस्या इनि ङीप् सम-भ्यस्त्वे णत्वम् । चिरप्रसूतायां गवि अमर०। बष्क(ष्क)य नयतीति नी-ड गौ० ङीष् समभ्यस्त्वे पूर्व० णत्वम् बष्क(ष्क)यणी(नी) इत्यप्यत्र स्त्र. ।

ब(व)ह वृद्धौ भ्वा० आत्म० अक० से [illegible] ब(व)हते अब(व)हिष्ट । बवहे महिस। इत्यादिषु [illegible] दिरिति पाणिनीया । इन्तोष्ठ्यादिरिति वोपदेव ।

बहल त्रि०बहि-कलच् नलोपश्च १प्रचुरे २बहुशब्दार्थे च ।

ब(व)हु त्रि० बं(वं)हि-कु नलोप० । १निरन्तरनेकसङ्ख्यान्विते, २विपुले च । ब(व)ह्वादि० स्त्रियां वा ङीप् । बहुत्वं च त्रित्वपर्य्यवसायि कपिञ्जलन्यायात् धर्मोबहुत्वि शेषजन्यत्वं तच्च पर्य्याप्त्या सर्वत्र वर्त्तते समवायेन प्रत्येकं वृत्तिमत् । अस्य सङ्ख्यावत् कार्य्यम् तेन बहुत्व बहुल बहुतिथ इत्यादि । ४दाक्ष्ये खगे ५जलखातके च मेदि०

बहुक पु० बहु+संज्ञायां कन् । १कर्कटे २सूर्ये ३अर्कवृक्षे

ब(व)हुकण्टक पु० ब(व)हूनि कण्टकान्यस्य । १क्षुद्रगोक्षुरे । २यवासे (गाखुरी) ३हिन्ताले ४अग्निदमन्यां स्त्री० क्षुप-भेदे राजनि० । [कण्टकारिकायाम् राजनि० ।

ब(व)हुकण्टा स्त्री ब(व)हव कण्टा कण्टका यस्या ।

ब(व)हुकन्द पु० ६ब० । १सूरणे । २कर्कट्यां स्त्री० राजनि०।

बहुकर त्रि०ब(व)हूनि किरति कृ-अच् ।(फरास) १सम्मार्ज-नकरे खलपौ अमर । करणे अप् । २सम्मार्जन्यां स्त्री हेम० गौरा० ङीष् । कृ-अच् ६त० । १उष्ट्रे त्रिका० । ४अनेककार्य्यकरे त्रि० । [कियवीमृ राजनि ।

ब(व)हुकर्णिका स्त्री०ब(व)हव कर्णो इव पर्णान्यस्या । आखु

बहुकूर्च पु॰ बहूनि कूर्चान्यस्य । मधुनारिकेलिके राजनि॰ ।
ब(व)हुगन्ध पु॰ ६ब॰ । १कुन्दुरुके । २त्वचे, (तेजपात) न॰ । ३चम्पककलिकायां ४यूथिकायां५कृष्णजीरके च स्त्री राजनि॰
बहुगन्धदा स्त्री॰ ब(व)हुगन्धं ददाति दा—क । मृगमदे । राजनि॰ ।
ब(व)हुग्रन्थि पु॰ ६ब॰। झावुके (झाउ) । शब्दर॰
बहुच्छिन्ना स्त्री ब(व)हु यथा स्यात् छिद्यते वा छिद॰ क्त तस्य टस्य च न॰ । कन्दगुडूच्याम् राजनि॰ ।
बहुतरकणिश पु॰ ६त॰ । रागीधान्ये राजनि॰ ।
बहुतिक्ता स्त्री ब(व)हुस्तिक्तो रसोऽस्याः । काकमाच्याम् राजनि॰ ।
ब(व)हुतिथ त्रि॰ ब(व)हूनां पूरणः ब(व)हु+डट् तिथुक् च । अनेकसङ्ख्याते, "काले गते बहुतिथे" इत्युद्भट॰ ।
ब(व)हुत्र अव्य॰ ब(व)हुषु त्रल् । अनेकेषु दिग्देशकालेषु ।
ब(व)हुत्वच(क) पु॰ ६ब॰ वा कप् । भूर्जपत्रवृक्षे शब्दर॰ कवत्त हेमच॰ ।
ब(व)हुदुग्ध पु॰ ब(व)हूनि दुग्धानीव चूर्णानि शुभ्रवर्णत्वात् यस्य । १गोधूमे राजनि॰ । २प्रचुरक्षीरवत्यां ३गवि, स्त्री हेमच॰।वा कप् अत इत्त्वम् । बहुदुग्धिका स्नुही-वृक्षे स्त्री शब्दच॰ ।
ब(व)हुधा अव्य॰ ब(व)हु+प्रकारे—धाच् । अनेकप्रकारे
ब(व)हुधार न॰ ६ब॰ । वज्रास्त्रे राजनि॰ तस्य षट्कोण-त्वात् सर्वत्र कोणेषु धारायुक्तत्वात्तथात्वम् ।
बहुनाडीक पु॰ ६त॰। अस्वाङ्गत्वात् कप् । १अनेकदण्डयुते २दिवसे ३स्तम्भे च सि॰कौ॰।स्वाङ्गे न कप् न वा ह्रस्व॰ । बहुनाडी इत्येव अनेकान्त्रयुते एवं तन्त्रीशब्देऽपि ह्रस्वकपोर्भावाभावौ उह्यौ ।
बहुनाद पु॰ ६ब॰ । शङ्खे राजनि॰ ।
ब(व)हुपत्र पु॰ ६ब॰ । १पलाण्डौ २अनेकपत्रयुक्ते त्रि॰ । ३जिङ्गिन्याम् ४घृतकुमार्यां ५तरुण्यां ६भूम्यां,७गोरक्ष-दुग्धायां, ८जतुकायाञ्च स्त्री राजनि॰ । गौरा॰ ङीष् । ९तरणीपुष्पे स्त्री टाप् । तत संज्ञायां क । बहुपत्रिका भूम्यामलक्यां, मेथिकायां, महाशतावर्य्याञ्च राजनि॰ ।
ब(व)हुपर्ण पु॰ ६ब॰ ।१सप्तच्छदवृक्षे तस्य प्रतिपर्वं सप्तसप्त पर्णवत्त्वात् तथात्वम् । २अनेकपर्णयुक्ते त्रि॰३मेथिकायां स्त्री ङीप् । तत संज्ञायां क । बहुपर्णिका आखुकर्ण्यां स्त्री टाप् । राजनि॰ ।
ब(व)हुपाद(द) पु॰ ६ब॰ वा अन्त्यलोपः । वटवृक्षे इतन्तः अमर । अदन्त॰ राजनि॰।तस्यानेकशिफावत्त्वात्तथात्वम् ।
ब(व)हुपुत्र ब(व)हव पुत्रा—इव पर्णान्यस्य ।१सप्तच्छदे शब्दच॰ अनेके पुत्रा इव मूलान्यस्य ।२शतमूल्यां स्त्री ङीप् रत्नमा॰ ६ब॰ । ३अनेकतनयान्विते त्रि॰ ।
ब(व)हुपुष्प पु॰६ब॰। निम्बवृक्षे । संज्ञायां कन् अत इत्त्वम् । बहुपुष्पिका धातक्यां स्त्री राजनि॰ ।
ब(व)हुप्रज त्रि॰ ६ब॰। १बहुसन्तानवति । २शूकरे पु॰ हेम॰। प्रजात्वस्यप्रचुरत्वप्रवत्त्वात् ३मुञ्जतृणे पु॰ राजनि॰ ।
बहुप्रतिज्ञ पु॰७ब॰। अनेकविषयकप्रतिज्ञायुक्ते व्यवहारे यथा मदीयं रूपकमनेन स्वीकृत, सुवर्णञ्चास्य, इस्ते निक्षिप्तं न ददाति,मदीय क्षेत्रमपहरतीत्येवमादीनां पक्षत्वमिष्यत एव किन्तु क्रियाभेदात् क्रमेण व्यवहारो न युगपदित्येव "बहुप्रतिज्ञं यत् कार्य्यं व्यवहारेषु निश्चितम् । कामं तदपि गृह्णीयात् राजा तत्त्वबुभुत्सया" कात्यायनोक्तेः मिता॰ [अमर ।
बहुप्रद त्रि॰बहूनि प्रददाति प्र+दा—क । दानशीलके वदान्ये
ब(व)हुफल पु॰६ब॰। १कदम्बवृक्षे मेदि॰२विकङ्कते, ३तेजःफले च राजनि॰। ४अनेकफलयुक्ते त्रि॰।५माषपर्ण्यां,६क्षवि-कायां, ७काकमाच्यां, ८त्रिपुसा,(त्रपुषा)९क्षुद्रकारवेल्लां, स्त्री राजनि॰ १०भूम्यामलक्यां भावप्र॰स्त्री । ११आम-लक्यां स्त्री ङीप् मेदि॰ १२मृगेर्वारौ राजनि॰। संज्ञायां कन् इत्त्वम् । बहुफलिका । भूमिबदर्य्यां स्त्री राजनि॰।
बहुफेना स्त्री ६त॰ । सातलायां राजनि॰ । [बले त्रि॰
बहुबल पु॰ ६ब॰ । १सिंहे राजनि॰ स्त्रियां ङीष् । २अति-
बहुबली स्त्री नित्यक॰ । कोकिलमे राजनि॰ ।
ब(व)हुमञ्जरी स्त्री॰ ६ब॰ संज्ञात्वात् न कप् । तुलस्याम् भावप्र॰। [युक्ते त्रि॰ ।
ब(व)हुमल पु॰ ६ब॰ । १सीसके रत्नमा॰ । २अनेकमल-
बहुमार्ग न॰ ७ब॰ ।१चत्वरे हेमच॰। २अनेकपथयुते त्रि॰ ।
ब(व)हुमूर्त्ति स्त्री ६ब॰।१वनकार्पासे शब्दच॰। २नानाकार-युते त्रि॰ । [तथात्वम् ।
बहुमूर्द्धन् पु॰ ६ब॰ । विष्णौ सहस्रशीर्षत्वात्तस्य
ब(व)हुमूल त्रि॰ ६ब॰ । १अनेकमूलयुते । २शिग्रौ ३सूक-मरे पु॰राजनि॰। ४शाकम्भर्यां ५शतावर्य्यां स्त्री टाप् । ६वनकासके त्रि॰ ङीप् राजनि॰। ७नागभेदे भा॰ आ॰ ३५अ॰। संज्ञायां कन् । बहुमूलक उशीरे न॰ भावप्र॰ ।
बहुमूल्य त्रि॰ ६ब॰ । महार्घे महाधने अमरः । [राजनि॰।
बहुरन्ध्रिका स्त्री ६ब॰ वा कप् अत इत्त्वम् । मेदायाम्

ब(व)हुरसा स्त्री० ६ब० । १महाज्योतिष्मत्याम् राजनि० । २नानारसवति त्रि० ।

बहुरुहा स्त्री बहु रोहति रुह–क । कन्दगुडूच्या राजनि०

ब(व)हुरूप पु० ६ब० । १सर्जरसे (धुना) अमरः । २शिवे, ३विष्णौ ४सरटे ५कामे मेदि० ६केशे ७ब्रह्मणि शब्दर० । ८बुद्धभेदे त्रिका० ९नानारूपवति त्रि० ।

बहुरेतस् पु० ६ब० । ब्रह्मणि चतुर्मुखे शब्दरत्ना० । [हारा

ब(व)हुरोमन् त्रि०६ब०। १अनेकरोमवति रोमशे । २मेषे पु०

ब(व)हुल त्रि०ब(व)हि–कुलच् नि० नलोपः । १अनेकसंख्यान्विते २प्रचुरे । ब(व)हूनि लाति ला–क ।३अग्नौ ४कृष्ण-पक्षे पु० मेदि०। "ब(व)हुलेऽपि गते निशाकरः" कुमारः । ५आकाशे ६सितमरिचे न० ७कृष्णवर्णे ८तद्वति त्रि० ९एलायां १०नीलिकायां ११गवि स्त्री मेदि०। १२देवीभेदे स्त्री कालिकापु०२१अ० अग्निदैवतत्वात् १३कृत्तिकानक्षत्रे स्त्री ब०ब० मेदि० ।

बहुलगन्धा स्त्री० ६ब० । एलायाम् राजनि० ।

ब(व)हुलच्छद पु०६ब० । रक्तशोभाञ्जने राजनि० ।

बहुलवण न० नित्य०क० । ऊषरभूमिजे लवणभेदे राजनि० ।

बहुलाश्व पु० मैथिलवंश्ये नृपभेदे भाग० ९।१३।१६ ।

ब(व)हुलीकृत त्रि० ब(व)हुल+च्वि–कृ–क्त । (आगडा) बुषस्यापसारणेन राशीकृते खलस्थे १धान्ये, अमरः । २राशीकृतमात्रे च ।

बहुवचन न० बहुत्वं वक्ति वच–ल्यु । "द्व्येकयोर्द्विवचनैक-वचने बहुषु बहुवचनम्" पा०उक्ते बहुत्वबोधके जस्-प्रभृतौ सुब्विभक्तौ झिप्रभृतौ २तिङ्विभक्तौ च ।

ब(व)हुवल्क पु० ६ब० । पियाले । (पियासाल) राजनि० ।

ब(व)हुवारक पु० ब(व)हूनि वारयति अण्, ण्वुल् वा । श्लेष्मातके (लोमा आता) शब्दर० ।

बहुविध त्रि० ६त० । नानाप्रकारे अमरः ।

ब(व)हुविस्तीर्णा स्त्री० ब(व)हु यथा तथा विस्तीर्णा वि+स्तृ–क्त । (कांकुड) १शम्बिकाहक्षे शब्दच०। २अनेक-विस्तारयुते त्रि० । [पोआवति त्रि०

ब(व)हुबीज पु०६ब०। १आतमे वृक्षे(आता) शब्दच०।२प्रचुर-

ब(व)हुवीर्य पु० ६ब० । १विभीतके, (बयडा) जटा०। २तण्डुलीयशाके, (नटेशाक) ३ताम्रमल्लिवृक्षे ४मरुबके च राजनि० । ५भूम्यामलक्यां स्त्री राजनि० ।

ब(व)हुव्रीहि त्रि० ६ब०। १अनेकधान्यादियुक्ते "तत्पुरुष । कर्मधारय येन यस्य भवेत् बहुव्रीहि:" उद्भट । व्या-करणोक्ते प्रायेण अन्यपदार्थप्रधाने २समासभेदे पु० । तल्लक्षणादिकं शब्दशक्तिप्रकाशिकायामुक्तं यथा बहुव्रीहिं लक्षयति । "बहुव्रीहि: स्वगर्भार्थसम्बन्धि-त्वेन बोधक । निरूढया लक्षणया स्वाश्रयापकशब्द-वान्" समास इति प्रकृतं तथा च स्वाश्रय निरूढ-लक्षणया ज्ञापकेन शब्देन घटित स्वगर्भस्य यादृशार्थस्य सम्बन्धित्वप्रकारेणान्वयबोधं प्रति समर्थं समासः स्वगर्भ-तादृशार्थसम्बन्धिबोधेन बहुव्रीहिरित्यर्थः । आरूढवान-रोवृक्ष इत्यत्राऽऽरूढो वानरो यमिति व्युत्पत्त्या स्वकर्म-कारोहणकर्तृवानरसम्बन्धित्वेन वृक्ष, पीतपयस्कं पात्र-मित्यत्र पीतं पयो येन इति रीत्या स्वकरणकपानकर्म-जलसम्बन्धित्वेन पात्रम्, पक्कतण्डुलश्चैत्र इत्यत्र पक्क-स्तण्डुलो येनेति दिशा स्वकर्तृकपाककर्मतण्डुलसम्ब-न्धित्वेन चैत्रं, दत्तदक्षिणोद्विज इत्यत्र दत्ता दक्षिणा यस्मै इति क्रमेण स्वसम्प्रदानकदानकर्मदक्षिणासम्बन्धि-त्वेन द्विजं, पतितपत्रस्तरुरित्यत्र पतितं पत्रं यस्मा-दिति विग्रहेण स्वापादानकपतनाश्रयपत्रसम्बन्धित्वेन तरुं, चित्रगुरित्यत्र चित्रा गौर्यस्येति वाक्यानुसारेण चित्राभिन्नस्वगोसम्बन्धित्वेन चैत्रम्" रक्तपटः काय इत्यत्र रक्तः पटो यत्रेति व्युत्पत्त्या रक्ताभिन्नस्ववृत्तिपटसम्ब-न्धित्वेन कायम्" एवं वाणच्छिन्नकरो नर इत्यादावपि । वाणेन छिन्नः करो येन यस्य वा इत्यादि विग्रहे वाणकरणकच्छेदकर्तृकच्छेदकर्मकरसम्बन्धित्वादिना नरा-दिकं बहुव्रीहिर्बोधयतीति सर्वत्र स्वगर्भतत्तदर्थसम्बन्धि-त्वेन धर्मिणामवगमः । दक्षिणपूर्वा प्रवीसरेत्यादिदिग-न्तरबहुव्रीहिस्थले दक्षिणया पूर्वा यस्या इत्यादिविग्रहेण स्वपार्श्वस्थदक्षिणसहितपूर्वदिक्सम्बन्धित्वादिना आग्ने-योप्रभृतीनां विदिशां बोधः । अस्तिक्षीरा गौरीत्यादाव-प्यस्ति क्षीरं यस्या इत्यादिविग्रहेणास्तित्ववत्क्षीरसम्ब-न्धित्वादिप्रकारेण गवादेरवगतिः । इयांस्तु विशेषो यन्न-लैकेषाम्पतेऽस्तीत्यादिकं तिङन्तमन्येषां मते तत्प्रतिरूपक-मव्ययमिति । उप समीपे दश येषामिति समीपगणित-त्वार्थकेनोपशब्देन विग्रहादुपदशाः नवका इत्यादौ स्वकर्मी-पगणितत्वसम्बन्धित्वेन नवानामेकादशानाञ्च परिणा-मवगमः । दशशब्दस्य दशत्वलक्षणया अपवर्गप्रभृतयः समीपगणितत्वसम्बन्धित्वेनैव नवादेर्बोध इति तु प्रभृतयः । अधिका दश येषामित्यादिविग्रहे अधिकदशाः पुरुषा इत्यादावपि स्वपर्याप्तसंख्याधिकदशत्वसंख्याः-

पर्य्याप्त्यधिकरणद्वयसम्बन्धित्वेन नवादिपुंसां प्रत्ययः । द्वौ त्रयो वा येषां इत्यन्यतरार्थकवाशब्देन विग्रहे द्वित्रा पचित्राः इत्यादौ । द्वित्वत्र्यन्यतरपर्य्याप्तस्वपर्य्याप्तसङ्ख्यासम्बन्धित्वेन द्वयोस्त्रयाणां वा पचित्राणां बोधः । घटे घटे वा घटत्वमित्यादावनुरोधेन वाकारस्यान्यतरार्थकताया व्युत्पाद्यत्वात् तस्य च उक्तौ गतार्थत्वादस्तुति पञ्च षड् वा येषामित्यादिविग्रहात् पञ्चषाः पुरुषाः इत्यादावप्युक्तरीत्यैवान्वयोद्रष्टव्यः । परे तु द्वौ वा त्रयो वा येषामित्यादिविग्रहे वाशब्दस्य संशयकोट्यर्थकतया द्वित्रा इत्यादि बहुव्रीहेः स्वधर्मिकसंशयकोटितापन्नद्वित्वसम्बन्धित्वेन द्विमर्त्त्यबोधकत्वमित्याहुः"। वैयाकरणास्तु बहुव्रीहिप्रकरणपठितत्वमेव तत्त्वमित्याहुः तेन उन्मत्तगङ्गाद्यव्ययीभावे नातिव्याप्तिः । तद्भेदौ च तद्गुणातद्गुणसंविज्ञानौ तद्गुणसंविज्ञानशब्दे ६२१७ पृ० उक्तौ तत्र समानाधिकरणपदघटितस्यैव प्रायेण साधुत्वम् ।

बहुभक्त पु० ६ब० । १घटके शब्दच० । २अनेकभक्तयुते त्रि० । "बहुभक्तः पटोले स्यात्" ति० त० । [युक्ते त्रि० ।

ब(व)हुमल्य पु० ६ब० । १रक्तखदिरे राजनि० । २अनेककील-

ब(व)हुशस् अव्य० ब(व)हु+शस् । अनेकवारानित्यर्थे 'गुण कल्पे ब(व)हुशो नियोजिता' इति कुमारः ।

ब(व)हुशाल पु० ब(व)हुभिः शाखते शाल-सत्तायां कर्त्तरि पञ् । १स्नुहीवृक्षे राजनि० । [२अनेकशिखायुक्ते त्रि०

ब(व)हुशिखा स्त्री० ६ब० । १जलपिप्पल्याम् । राजनि० ।

बहुशिरस् पु० ६ब० । विष्णौ "रुद्रो बहुशिरा बभ्रुः" विष्णुस० ।

बहुशृङ्ग पु० ६ब० । विष्णौ क्षेमकरः "चत्वारि शृङ्गा" 'त्रयो अस्य पादा' इत्यादिश्रुत्या तस्य तथात्वम् ।

बहुश्रुत त्रि० श्रु-भावे क्त ६ब० । अनेकशास्त्रश्रुतियुक्ते मनु ४।१३५ । [अनेकश्रेयसीयुक्ते ।

बहुश्रेयसी त्रि० । ६ब० ईयसन्तत्वात् न कप् न वा ह्रस्वः ।

बहुसन्तति पु० बह्वी सन्ततिर्विस्तारोऽस्य (वेडवाँश) १वंशभेदे शब्दच० । २अनेकसन्तानयुक्ते त्रि० ।

बहुसम्पुट पु० ६ब० । विष्णुकन्दे राजनि० ।

ब(व)हुसार पु० ६ब० । १खदिरे राजनि० २अनेकसारवति त्रि०

ब(व)हुसुता स्त्री० ब(व)हवः सुता इव मूलान्यस्याः । १शतमूल्याम् अमरः । २अनेकपुत्रयुते त्रि० ।

बहुसू स्त्री० बहून् सूते सू-क्विप् । १शूकर्य्यां शब्दर० २अनेकप्रसवकर्त्र्यां स्त्रियाञ्च ।

ब(व)हुसूति स्त्री० ६ब० । १अनेकप्रसववत्यां १गवि अमरः । २ब(व)हुप्रसवयुते स्त्रीमात्रे च ।

ब(व)हुस्रवा स्त्री० ब(व)हु यथा तथा स्रवति स्रु-अच् । १शल्लकीवृक्षे शब्दच० । २अनेकधा क्षरणवति त्रि० ।

बह्वुदक न० बहूनि उदकानि शौचाङ्गतया यस्य । सन्न्यासिभेदे कुटीचकशब्दे दृश्यम् । [कालजयुते त्रि० ।

बह्वपत्य पु० ६ब० । १शूकरे २मूषिके च राजनि० । ३अने-

बह्वादि विभाषया स्त्रियां ङीप्प्रत्ययनिमित्ते शब्दगणे स च गण पा० ग० उक्तो यथा "बहु पद्धति अञ्चति अङ्कति अंहति शकटि शक्ति (शस्त्री) शारि वारि राति राधि अहि कपि यष्टि मुनि (इतः प्राण्यङ्गात्) चण्ड अराल कृपण कमल विकट विशाल विसङ्कट भरुज ध्वज चन्द्रभाग (अनद्यास) कल्याण उदार पुराण अहन् क्रोड नख खुर शिखा बाल शफ गुद" आकृतिगणोऽयम् "तेन भग गल राग इत्यादि ग्रहणम्" ।

बह्वाशिन् त्रि० बहु अश्नाति अश-णिनि । १बहुभोजनशीले स्त्रियां ङीप् । "बह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः । प्रभुभक्तश्च शूरश्च ज्ञातव्याः षट् शुनो गुणाः" चाणक्य । २धृतराष्ट्रपुत्रभेदे पु० भा० आ० ६७ अ० ।

ब(व)ह्वृच् (च) त्रि० ६ब० अध्येतव्येन ऋचः समा० मा० न्यत्र । १ऋग्वेदे २तज्ज्ञे न० । ३तदध्येतरि पु० । ४तत्पत्न्यां स्त्री ।

बा(वा)ड स्ना स्नाने अक० भ्वा० आ० सेट् । बा(वा)डते अबा(वा)डिष्ट । ऋदित् चङि न ह्रस्वः अबबाडत् त ।

बाडव न० वडवानां समूहः अण् । १घोटकीसमुदाये । बाडं वज् वल-अञ् तस्य डो वा बाडो हविः तं वाति वा-क वा । २ब्राह्मणे पु० । वडवाया जातः अण् । ३और्वे वडवारूपे कालाग्निभेदे पु० हेमच० । वाडवाग्नि-त्रादयोऽप्यत्र पु० । [शब्दमा० ।

बाडवेय पु० द्वित्र० वडवाया अपत्यम्-ढक् । अश्विनीकुमारयोः

बाडव्य न० बाडव+समूहे-यत् । विप्रसमुदाये । [रत्नमा० ।

बाडिङ्गन पु० बाडे इव इङ्गते इङ्ग-ल्यु । वार्त्ताकौ

बा(वा)ण पु० बण-शब्दे वण-गतौ वा सत्तायां कर्त्तरि घञ् । १शरे, २गोस्तने, (बांट) ३निरोधमध्यते ४दैत्यभेदे, ५केवले च ६शरपुङ्खे ७नीलझिण्टाम् पु० स्त्री० अमरः इवाणमूले स्त्री मेदि० । मेदिन्यां दन्त्योष्ठ्यादित्वेन पठित रायमुकुटादयस्तु बण शब्दे इति धातुप्रकृतिकत्वमाहुरतोऽस्योभयविधादित्वम् । वण-भावे घञ् । ८शब्दे १०तदधिष्ठातृदेव्यां सरस्वत्यां स्त्री उपचारात् ११वाक्ये अमर ।

**बाणगङ्गा** स्त्री रावणबाणनिर्भेदेन प्रवृत्तायां नद्याम् “सोमेशाद्दक्षिणे भागे बाणेनाभिविभिद्य वै। रावणेन प्रकटिता जलधारातिपुण्यदा। बाणगङ्गेतिविख्याता या स्नानादघहारिणी” वराहपु०। [२द्रुणे हेमच०।

**बाणधि** पु० बाणाधीयन्तेऽस्मिन् धा—आधारे कि। १इषुधौ

**बाणपुङ्खा** स्त्री बाणस्य पुङ्ख इवाऽस्त्या०पृ व०। शरपुङ्खायां राजनि०

**बाणपुर** न० ६त०। बाणासुरनगरे शोणितपुरे त्रिका०।

**बाणमुद्रा** स्त्री “यथा हस्तगता बाणास्तथा हस्ताङ्गुर प्रिये!। बाणमुद्रा समाख्याता रिपुवर्गनिकृन्तनी” तन्त्रसा० उक्ते मुद्राभेदे।

**बाणयुद्ध** न० ६त०। कृष्णेन सह मित्रबाहाय्यकस्य बाणस्य युद्धे तच्च युद्ध भाग० १०।६१ अध्यायादौ दृश्यम्।

**बा(व)णलिङ्ग**।बाणदैत्येन सपूज्य प्रतिस्थाप्य नर्मदायां निक्षिप्ते शिवलिङ्गभेदे। नर्मदाशब्दे ३६८७ पृ० विवृति।

**बाणवार** न० बाणं वारयति वारि—अण् उप०स०। १कञ्चुके सन्नाहे हारा०।

**बाणिज्य** न० वणिजो भावः, कर्म वा ब्राह्मणादित्वात् ष्यञ्। क्रयविक्रयादौ ‘बाणिज्येन गतस्य मे स्वदपतेर्वार्त्तापि न श्रूयते” सा०द० परि०।
तत्र विहितनिषिद्धानि मिता० उक्तानि यथा
“मानेन तुलया वापि योऽंशमष्टमकं हरेत्। दण्डं सदाप्यो द्विशतं वृद्धौ हानौ च कल्पितम्”। य. पुन वंणिक् ब्रीहिकार्पासादेः पण्यस्याष्टमभाग कूटमानेन कूटतुलया वाऽन्यथापहरत्यसौ पणाना द्विशत दण्डनीयः। अपहृतस्य पुनर्द्रव्यस्य वृद्धौ हानौ च दण्डस्यापि वृद्धिहानी कल्प्ये। “भेषजस्नेहलवणगन्धधान्यगुडादिषु। पण्येषु प्रक्षिपन् हीनं पणान् दाप्यस्तु षोडश” याज्ञ०। भेषजमौषधद्रव्यं स्नेहो घृतादिः। गन्धद्रव्यमुशीरादि धान्यमब्रीहिकुङ्कुमरिचादि। एतेष्वसारद्रव्यं विक्रयार्थं मिश्रयतः षोडशपणो दण्डः। किञ्च। “मृच्चर्ममणिसूत्रायः काष्ठवल्कलवाससाम्। अजातौ जातिकरणे विक्रेयाष्टगुणोदम” या०स्मृ०।“न विद्यते बहुमूल्या-जातिर्यस्मिन् मृच्चर्मादिके तद्जाति तस्मिन् जातिकरणे विक्रयार्थं गन्धवर्णरसान्तरसञ्चारणेन बहुमूल्यजातीयताद्रूप्यसम्पादने यथा मल्लिकामोदसञ्चारणेन मृत्तिकाया सुगन्धापादनमिति। मार्जारचर्मणि वर्णोत्कर्षापादनेन व्याघ्रचर्मेति स्फटिकमणौ वर्णान्तरकरणेन पद्मराग इति कार्पासिके सूत्रे गुणोत्कर्षाधानेन पट्टसूत्रमिति कार्ष्णायसे वर्णोत्कर्षाधानेन रजतमिति बिल्वकाष्ठे चन्दनामोदसञ्चारणेन चन्दनमिति कक्कोले त्वगाख्यं वल्कमिति कार्पासिके वाससि गुणोत्कर्षाधानेन कौशेयमिति विक्रेयस्यापादितस्य द्रव्यस्य मृच्चर्मादेः पण्यस्याष्टगुणो दण्डो वेदितव्य। “समुद्गपरिवर्त्तञ्च सारभाण्डञ्च कृत्रिमम्। आधानं विक्रयं वापि नयतो दण्डकल्पना। भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यते। द्विपणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान्” याज्ञ०। समुद्ग पिधानं सम्पुटेन सह वर्त्तत इति समुद्ग करण्डकम्। परिवर्त्तनं व्यत्यास। योऽन्यदेवमुद्गाना पूर्णं करण्डकं दर्शयित्वा हस्तलाघवेनान्यदेव स्फटिकाना पूर्णकरण्डकं समर्पयति यश्च सारं भाण्डं कस्तूरिकादिकं कृत्रिमं कृत्वा विक्रयमाधि वा नयति तस्य दण्डकल्पना वक्ष्यमाणा वेदितव्या। कृत्रिमकस्तूरिकादेर्मूल्यभूते पणे भिन्ने न्यूने न्यूनपण मूल्यमिति”।
“लोकेऽस्मिन् द्विविधं पण्यं जङ्गमं स्थावरं तथा। षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः। गणिमन्तु तिम मेयं क्रियया रूपतः श्रियेति” गणित क्रमुकफलादि तुलित कुङ्कुमादि मेय शाल्यादि क्रियया वाहदोहादिरूपयोपलक्षितमश्वमहिष्यादि। रूपत पण्याङ्गनादि श्रिया दीप्त्या मरकतपद्मरागादि। इत्येतत् षट् प्रकारमपि पण्यम्” मिता०। तत्र विप्रैरापदि स्वयं कार्यत्वं विदधे बृहस्पतिः “कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयकृतम्। आपत्काले स्वयं कुर्वन् मैनसा लिप्यते द्विज। लब्धलाभ पितॄन् देवान् ब्राह्मणांश्चैव पूजयेत्। ते तृप्तास्तस्य त दोष शमयन्ति न संशयः। वणिक् कुसीदी दद्यात्तु वस्त्रगोकाञ्चनादिकम्। कृषीवलोऽन्नपानादि यानशय्यासनानि च। पणशेभ्यो विंशक दत्त्वा पशुस्वर्णादिक शतम्। वणिक् कुसीददोषः स्यात् ब्राह्मणानाञ्च पूजनात्। राज्ञे दत्त्वा तु षड्भाग देवतानाञ्च विंशकम्” आ०त०। अधिक कृषिशब्दे २२०५ पृ०दृश्यम्।

**बाणिनी** स्त्री वण—णिनि ङीप्। १विदग्धायां स्त्रियां २नर्त्तक्याम् ३उन्मत्तस्त्रियाञ्च शब्दच०।

**बा(वा)दर** पु० ब(व)दर+स्वार्थेऽण्। १कार्पासवृक्षे, मेदि०। ब(व)दरस्येदं तस्य विकारो वा अण्। २कार्पाससूत्रे न०। ३तद्वस्त्रादौ त्रि० जटा०। ४कार्पासवृक्षे स्त्री अमन्तत्वेऽपि बलादराकृतिगणत्वात् टाप् शब्दच०। [बा(वा)दरिरप्यत्र।

**बा(वा)दरायण** पु० ब(व)दर्यां भव, फक्। वेदव्यासे। इजि।

बि(वि)ठ न० विट-क पृषो० अन्तरीक्षे निरुक्तकारः ६।२० ।

बिट् अवयवे भ्वा०पर०सक० सेट् इदित् । बिन्दति अबिन्दीत्

बि दल न०बिदि-कलच् नि०नलोपः ।१हिदले अमर. २खण्डे च

बिन्दवि पु० बिदि-अवयवे वा० अवि । बिन्दौ अर्थे । ततः गहा०छ । बिन्दवीय तत्सम्बन्धिनि ।

बिन्दु पु०बिदि-उ । १जलकणे अमर० । २राजभेदे ततोऽपत्ये बिदा० अञ् बैन्दव तदपत्ये पुंस्त्री० । ३रेखागणित प्रसिद्धे स्थूलत्वदैर्घ्यत्वहीने लक्षयितुं शक्ये २पदार्थे क्षेत्रशब्दे २३८६ पृ० दृश्यम् ।

सा०द० उक्ते ३अर्थप्रकृतिभेदे "बीजं बिन्दुः पताका च प्रकरी कार्य्यमेव च । अर्थप्रकृतयः पञ्च" उद्दिश्य "अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्" लक्षितम् । ४अनुस्वारसूचके रेखाभेदे । "बन्दुर्द्विबिन्दुमात्रौ" सुग्धबो० शा०ति० उक्ते ५नादजन्ये क्रियाप्राधान्यलक्षणे चिच्छक्तेरवस्थाभेदे यथा "सच्चिदानन्दविभवात् सकलात् परमेश्वरात् । आसीच्छक्तिस्ततो नादो नादात् बिन्दुसमुद्भवः" । तद्व्याख्यायां राघवभट्टधृतम् "सा तत्त्वसंज्ञा चिन्मात्रज्योतिषः सन्निधेस्तदा । विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम्" "अभिव्यक्ता परा शक्तिरविनाभावलक्षणा । अखण्डपरचिच्छक्तिर्व्याप्ता चिद्रूपिणी विभुः । समस्ततत्त्वभावेन विवर्त्तेच्छासमन्विता । प्रयाति बिन्दुभावञ्च क्रियाप्राधान्यलक्षणम्" । तस्मादेव रौद्री-वह्न्योराविर्भावः यथोक्तं शा० ति० "रौद्री बिन्दोस्ततो नादात् ज्येष्ठा बीजादजायत । वामेताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः" । ६बीजभेदे "बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः । समवायः समाख्यातः सर्वागमविशारदैः" शा० ति० ।

बिन्दुचित्रक पु० बिन्दुरूपं चित्रमस्य कप् । मृगभेदे शब्दर०

बिन्दुजाल न० ६त० । १बिन्दुसमूहे २हस्तिशुण्डोपरिस्थ बिन्दुसमूहे हेमच० । संज्ञायां कन् । बिन्दुजालक गजमुखादिस्थे तत्समूहे पद्मके अमर । [१पारदके हारा०

बिन्दुतन्त्र पु० । १शारीफलके २चतुरङ्गक्रीडने च मेदि० ।

बिन्दुदेव पु० ६त० । बिन्दुवर्णसेश्वरे शिवे मेदि० ।

बिन्दुपत्र पु० बिन्दुचिह्नितं पत्रमस्य । भुर्जपत्रवृक्षे रत्नमा० ।

बिन्दुमाधव पु० काशीस्थे वेणीमाधवे काशीख० ।

बिन्दुरेखक पु० बिन्दुरूपा रेखा पृष्ठिकाऽस्य कप् । १अनुस्वारे वर्णे २पक्षिभेदे शब्दच० ।

बिन्दुसरस् न० बिन्दुजातं सरः शा०त० । सरोवरभेदे यत्र गङ्गावतारणार्थं भगीरथेन तपस्तेपे तत्कथा "अथोत्तरेण कैलासात् मैनाकं पर्वतं प्रति । हिरण्यशृङ्गः सुमहान् महामणिमयो गिरिः । रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः । द्रष्टुं भागीरथीं गङ्गामुवास बहुलाः समाः" भा० स० ३अ० । मात्स्ये १०१ अ० तदुत्पत्तिकथा उक्ता यथा

"तत्र त्रिपथगा देवी प्रथमन्तु प्रतिष्ठिता । सोमपादात् प्रसृता सा सप्तधा प्रविभज्यते । यूपा मणिमयास्तत्र चितयश्च हिरण्मयाः । तत्रेष्ट्वा क्रतुभिः सिद्धः शक्रः सुरगणैः सह । दिव्यच्छायापथस्तत्र नक्षत्राणान्तु मण्डलम् । दृश्यते भास्वरा रात्रौ देवी त्रिपथगा तु सा । अन्तरीक्षं दिवञ्चैव भावयित्वा भुवङ्गता । भवोत्तमाङ्गे पतिता संरुद्धा योगमायया । तस्या ये बिन्दवः केचित् क्रुद्धायाः पतिता भुवि । कृतन्तु तैर्बिन्दुसरस्ततो बिन्दुसरः स्मृतम्" । बिन्दुहृदोऽप्यत्र पु० ।

बिल भेदने वा चुरा०उभ०पक्षे तु०पर०सक० सेट् । बेलयति ते बिलति । अबीबिलत् त अबेलीत् ।

बिल न०तु०बिल+क । रन्ध्रे १छिद्रे अमरः ।२गुहायाम् ३उच्चैःश्रवसि पु० मेदि० । ४वेतसे शब्दच० ५गर्त्ते च । ततः अश्मा० चतुरर्थ्यां र । बिलर तददूरदेशादौ त्रि० ।

बिलकारिन् त्रि० बिलं करोति कृ-णिनि । १गर्त्तकारके स्त्रियां ङीप् । २मूषके पुंस्त्री० राजनि० ।

बिलवास पु० बिले वासोऽस्य । जाहकजन्तौ राजनि० ।

बिलवासिन् पु० बिले वसति वस-णिनि । १सर्पे शब्दरत्ना० । २गर्त्तवासिनि त्रि० स्त्रियां ङीप् । अलुक्स० बिलेवासिन् तत्रार्थे । [स्त्रियां योपधत्वात् टाप् ।

बिलशय पुंस्त्री० बिले शेते शी-अच् । सर्पे शब्दरत्ना० ।

बिलेशय पुंस्त्री० बिले शेते शी-अच् अलुक्स० । १सर्पे अमरः २मूषिके जटा० ३गोधायां ४शशे ५शल्लक्यां च भावप्र० । "गोधाशशभुजङ्गाखु शल्लक्याद्या बिलेशयाः । बिलेशया वातहरा मधुरा रसपाकयोः । बृंहणा बद्धविण्मूत्रा वीर्य्योष्णा अपि कीर्त्तिताः" तत्र तन्मांसगुणा उक्ताः ।

बिल्म न० तु०बिल-बा०मक् । भासने निरु० ३।२० । ऋ०२।३५।१२ । २शिरस्त्राणे यजु०१६।३५ । तदस्यास्ति इनि । बिल्मिन् तद्वति त्रि० रुद्रभेदे पु० यजु०तन्मन्त्रे दृश्यम् ।

बिल्ल न० बिलं किम् तं लाति ला-क । १आलवाले त्रिका० । २हिङ्गुनि शब्दच० ।

बिल्लमूला स्त्री बिल्लमिव मूलमस्याः । वाराहीकन्दे शब्दच०

अवान्तरमाधेयं बीजे, तस्मिन्नप्युपकारे पूर्वन्यायेन सहकारिसापेक्षस्य बीजस्य जनकत्वे सहकारिजन्यबीजगतातिशयानवस्था प्रथमा व्यवस्थिता। अथोपकारः कार्य्यार्थमपेक्ष्यमाणोऽपि बीजादिनिरपेक्षं कार्य्यं जनयति तत्सापेक्षो वा। प्रथमे बीजादेरहेतुत्वमापतेत्। द्वितीये अपेक्ष्यमाणेन बीजादिना उपकारे अतिशय आधेयः एवं तत्र तत्रापीति बीजादिजन्यातिशयनिष्ठातिशयपरम्परापात इति द्वितीयानवस्था स्थिरा भवेत्। एवमपेक्ष्यमाणेनोपकारेण बीजादौ धर्मिण्युपकारान्तरमाधेयमित्युपकाराधेयबीजातिशयाश्रयातिशयपरम्परापात इति तृतीयानवस्था दुरवस्था स्यात्। अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयत इत्यभ्युपगम्यते तर्हि प्राचीनो भावोऽनतिशयात्मा निवृत्तः अन्यश्चातिशयात्मा कुर्वद्रूपादिपदवेदनीयो जायत इति फलितं ममापि मनोरथद्रुमेण। तस्मादक्षणिकस्यार्थक्रिया दुर्घटा। नाप्यक्रमेण घटते विकल्पासहत्वात्। तथा हि युगपत्सकलकार्य्यकरणसमर्थः स भावस्तदुत्तरकालमनुवर्त्तते न वा। प्रथमे तत्कालवत् कालान्तरेऽपि तावत्कार्य्यकरणमापतेत्। द्वितीये स्थायित्वप्रत्याशा मूषिकभक्षितबीजादावङ्कुरादिजननप्रार्थनामनुहरेत्। यत् विरुद्धधर्माध्यस्तं तन्नाना यथा शीतोष्णे। विरुद्धधर्माध्यस्तश्चायमिति जलधरे प्रतिबन्धसिद्धिः। न चायमसिद्धो हेतुः, स्थायिनि कालभेदेन सामर्थ्यासामर्थ्ययोः प्रसक्ततद्विपर्य्ययसिद्धत्वात् तत्रासामर्थ्यसाधकौ प्रसङ्गतद्विपर्य्ययौ प्रागुक्तौ सामर्थ्यसाधकावभिधीयेते यद्यदा यज्जननासमर्थं तत् तदा तन्न करोति यथा शिलाशकलमङ्कुरम् असमर्थश्चायं वर्त्तमानार्थक्रियाकरणकाले अतीतानागतयोरर्थक्रिययोरिति प्रसङ्गः यद्यदा यत् करोति तत् तदा तत्र समर्थं यथा सामग्री स्वकार्य्ये, करोति चायमतीतानागतकाले तत्कालवर्त्तिन्यावर्थक्रिये भाव इति प्रसङ्गव्यत्ययः विपर्य्ययः। तस्मात् विपक्षे क्रमयौगपद्यव्यावृत्त्या व्यापकानुपलम्भेनाधिगतव्यतिरेकव्याप्तिकं प्रसङ्गतद्विपर्य्ययबलात् स्फोटीतान्वयव्याप्तिकं सत्त्वं क्षणिकत्वपक्ष एव व्यवस्थास्यतीति सिद्धम्। तदुक्तं ज्ञानश्रिया "यत् सत् तत् क्षणिकं यथा जलधरः सन्तश्च भावा अमी सत्ताशक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न सा। नाप्येकैव विधाऽन्यथा परकृतेनापि क्रियादिर्भवेत् द्वेधापि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यतीति"। न च कणभक्षाक्षचरणादिपक्षकक्षीकारेण सत्तासामान्ययोगित्वमेव सत्त्वमिति मन्तव्यं सामान्यविशेषसमवायानामसत्त्वप्रसङ्गात्। न च तत्र स्वरूपसत्तानिबन्धनः सद्व्यवहारः प्रयोजकगौरवापत्तेः अनुगतत्वाननुगतत्वविकल्पपराहतेश्च, सर्षपमहीधरादिषु विलक्षणेषु क्षणेष्वनुगतस्याकारस्य मणिषु सूत्रवदनुभूतत्वेन गुणवच्चाप्रतिभासमानाच्च। किञ्च सामान्यं सर्वगतं स्वाश्रयसर्वगतं वा प्रथमे सर्ववस्तुसङ्करप्रसङ्गः अपसिद्धान्तापत्तिश्च यतः प्रोक्तं प्रशस्तपादेन "स्वविषयसर्वगतमिति"। किञ्च विद्यमाने घटे वर्त्तमानं सामान्यमन्यत्र जायमानेन सम्बध्यमानं तस्मादागच्छत् सम्बध्यते अनागच्छद् वा आद्ये द्रव्यत्वापत्तिः द्वितीये सम्बन्धानुपपत्तिः। किञ्च विनष्टे घटे सामान्यमवतिष्ठते, विनश्यति, स्थानान्तरं गच्छति वा प्रथमे निराधारत्वापत्तिः, द्वितीये नित्यत्ववाचोयुक्तिरयुक्तिः, तृतीये द्रव्यत्वप्रसक्तिः इत्यादि दूषणग्रहग्रस्तत्वात् सामान्यमप्रामाणिकम्। "अन्यत्र वर्त्तमानस्य ततोऽन्यस्थानजन्मनि। तस्मादचलतः स्थानाद् वृत्तिरित्यतियुक्तता। यत्रासौ वर्त्तते भावस्तेन सम्बध्यते न तु। तद्देशिनञ्च व्याप्नोति किमप्येतन्महाद्भुतम्। न याति न च तत्रासीदस्ति पश्चान्न चांशवत्। जहाति पूर्वं नाधारमहो व्यसनसन्ततिरिति"। अनुवृत्तप्रत्ययः किमालम्बन इति चेत् अङ्ग अन्यापोहालम्बन एवेति सन्तोष्टव्यमायुष्मतेति अलमतिप्रसङ्गेन। सर्वस्य संसारस्य दुःखात्मकत्वं सर्वतीर्थकरसम्मतम् अन्यथा तन्निविवर्त्तयिषूणां तेषां तन्निवृत्त्युपाये प्रवृत्त्यनुपपत्तेः। तस्मात् सर्वं दुःखं दुःखमिति भावनीयम्। ननु किंवदिति पृष्टे दृष्टान्तः कथनीय इति चेन्मैवं स्वलक्षणानां क्षणानां क्षणिकतया सालक्षण्याभावात् नैतेन सदृशमपरमिति वक्तुमशक्यत्वात्। ततः स्वलक्षणं स्वलक्षणमिति भावनीयम्। एवं शून्यं शून्यमपि भावनीयं स्वप्ने जागरणे च न मया दृष्टमिदं रजतादीति विशिष्टनिषेधस्योपलम्भात्। यदि दृष्टं सत् तदा तद्विशिष्टदर्शनस्येदन्ताया अधिष्ठानस्य च तस्मिन्नध्यस्तस्य रजतत्वादेस्तत्सम्बन्धस्य च समवायादेः सत्त्वं स्यात् न चैतदिष्टं कस्यचिद् वादिनः। न चार्द्धजरतीयमुचितम् न हि कुक्कुट्या एको भागः पाकाय अपरो भागः प्रस-

पाद कस्यप्रमाणमिति कल्प्यते । तस्मादध्यक्षाधिष्ठानतद्वयमन्दर्शनदृष्ट्या मध्ये एकस्यानेकस्य वा स्वपदे निषेधविषयत्वेन सर्वस्यासत्त्वं बलादापतेदिति ।

(माध्यमिकाः) भगवतोपदिष्टे माध्यमिकास्तावदुत्तमप्रज्ञा इत्थमचीकथन् भिक्षुपादप्रसारणन्यायेन क्षणभङ्गाद्यभिधानमुखेन स्थायित्वानुकूलवेदनीयत्वानुगतसर्वसत्यत्वभ्रमव्यावर्त्तनेन सर्वशून्यतायामेव पर्य्यवसानम् । अतस्तत्त्वं सदसदुभयानुभयात्मकचतुष्कोटिविनिर्मुक्तं शून्यमेव । तथा हि यदि घटादेः सत्त्वं स्वभावस्तर्हि कारकव्यापारवैयर्थ्यम् । असत्त्वं स्वभाव इति पक्षे प्राचीन एव दोषः प्रादुःष्यात् । यथोक्तम् "न सतः कारणापेक्षा व्योमादेरिव युज्यते । कार्य्यस्यासम्भवो हेतुः खपुष्पादेरिवासतः" इति विरोधादितरौ पक्षावनुपपन्नौ तदुक्तं भगवता लङ्कावतारे "बुद्ध्या विविच्यमानानां स्वभावो नावधार्य्यते । अतो निरभिलप्यास्ते निःस्वभावाश्च दर्शिताः" इति । "इदं वस्तु बलायातं यद्वदन्ति विपश्चितः । यथा यथार्थाश्चिन्त्यन्ते विशीर्य्यन्ते तथा तथेति" च । न क्वचिदपि पक्षे व्यवतिष्ठत इत्यर्थः । इष्टार्थव्यवहारश्च स्वप्नव्यवहारवत् संवृत्या सङ्गच्छते । अतएवोक्तम् "परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ । कुणपं कामिनी भक्ष्य इति तिस्रो विकल्पना इति ।" तदेवं भावनाचतुष्टयवशान्निखिलवासनानिवृत्तौ निर्वाणं शून्यरूपं सेत्स्यतीति वयं कृतार्थाः नास्माकमुपदेश्यं किञ्चिदस्तीति । शिष्यैश्चावद्योगाचारश्चेति द्वयं करणीयम् । तत्राप्राप्तस्यार्थस्य प्राप्तये पर्य्यनुयोगो योगः गुरूक्तस्यार्थस्याङ्गीकरणमाचारः गुरूक्तस्याङ्गीकरणादुत्तमाः पर्य्यनुयोगस्याकरणादधमाः अतस्तेषां माध्यमिका इति प्रसिद्धिः ।

(योगाचाराः) गुरूक्तभावनाचतुष्टयं बाह्यार्थस्य शून्यत्वमङ्गीकृत्याऽऽन्तरस्य शून्यत्वस्याङ्गीकृतं कथमिति? पर्य्यनुयोगस्य करणात् केषाञ्चिद् योगाचारप्रथा । एषा हि तेषां परिभाषा स्वयंवेदनं तावदङ्गीकार्य्यम् अन्यथा जगदान्ध्यं प्रसज्येत । तत्कीर्त्तितं धर्म्मकीर्त्तिना "अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यतीति ।" बाह्यं ग्राह्यं नोपपद्यत एव विकल्पानुपपत्तेः । अर्थो ज्ञानग्राह्यो भवन्नुत्पन्नो भवति अनुत्पन्नो वा, न पूर्व्वः उत्पन्नस्य स्थित्यभावात् नापरः अनुत्पन्नस्यासत्त्वात् । अथ मन्येथाः अतीत एवार्थो ज्ञानग्राह्यः तज्जनकत्वादिति तदपि बालभाषितं वर्त्तमानतावभासविरोधात् इन्द्रियादेरपि ग्राह्यत्वप्रसङ्गाच्च । किञ्च ग्राह्यः किं परमाणुरूपोऽर्थः अवयविरूपो वा । न चरमः कृत्स्नैकदेशविकल्पादिना तन्निराकरणात् । न प्रथमः अतीन्द्रियत्वात् षट्केन युगपद्योगस्य बाधकत्वाच्च । यथोक्तम् "षट्केन युगपद् योगात् परमाणोः षडंशता । तेषामप्येकदेशत्वे पिण्डः स्यादणुमात्रकः" इति । तस्मात् स्वव्यतिरिक्तग्राह्यविरहात्तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका प्रकाशवदिति सिद्धम् । तदुक्तम् "नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्य्यात् स्वयं सैव प्रकाशते इति ।" ग्राह्यग्राहकयोरभेदश्चानुमातव्यः यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते यथा ज्ञानेनात्मा, वेद्यन्ते तैश्च नीलादयः । भेदे हि सत्यधुना अनेनार्थस्य सम्बन्धित्वं न स्यात् तादात्म्यस्य नियमहेतोरभावात् तदुत्पत्तेरनियामकत्वात् यश्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः स एकस्मिंश्चन्द्रमसि द्वित्वावभास इव भ्रमः अत्राप्यनादिरविच्छिन्नप्रवाहा भेदवासनैव निमित्तम् । यथोक्तम् "सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये" इति । "अविभागोऽपि बुद्ध्यात्मा विपर्य्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इति च । न च रसवीर्य्यविपाकादिसमानमाशामोदकोपार्जितमोदकानां स्यादिति वेदितव्यं वस्तुतो वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्तृपरिज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकाररूपवत्तया तिमिराद्युपहताक्षाणां केशेन्द्रनाडीज्ञानाभेदवदनाद्युपप्लववासनासामर्थ्याद् व्यवस्थोपपत्तेः पर्य्यनुयोगायोगात् । यथोक्तम् "अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते । विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा । तथा कृतव्यवस्थेयं केशादिज्ञानभेदवत् । यदा तदा न सञ्चोद्या ग्राह्यग्राहकलक्षणेति" तस्माद् बुद्धिरेवानादिवासनावशादनेकाकारावभासत इति सिद्धम् । ततश्च प्रागुक्तभावनाप्रचयबलान्निखिलवासनोच्छेदविगलितविविधविषयाकारोपप्लवविशुद्धविज्ञानोदयो महोदय इति ।

(सौत्रान्तिकाः) अन्ये तु मन्यन्ते यदुक्तं बाह्यं वस्तुजातं नास्तीति तदयुक्तं प्रमाणाभावात् । न च सहोपलम्भनियमः प्रमाणमिति वक्तव्यं वेद्यवेदकयोरभेदसाधकत्वेनाभिमतस्य तस्याप्रयोजकत्वेन सन्दिग्धविपक्षव्यावृत्तिकत्वात् । ननु भेदे सहोपलम्भनियमात्मकं

न बाधते भूयःसहभावोपलम्भेऽपि व्यभिचारशङ्कायाः को निवारयिता। शिंशपावृक्षयोश्च तादात्म्यनिश्चयो वृक्षोऽयं शिंशपेति सामानाधिकरण्यबलादुपपद्यते। न ह्यत्यन्ताभेदे तत् सम्भवति पर्य्यायत्वेन युगपत्प्रयोगायोगात् नाप्यत्यन्तभेदे गवाश्वयोरिवानुपलम्भात्। तस्मात् कार्य्यात्मानौ कारणमात्मानमनुमापयत इति सिद्धम्। यदि कश्चित् प्रामाण्यमनुमानस्य नाङ्गीकुर्य्यात् तं प्रति ब्रूयात् अनुमानं न भवतीत्येतावन्मात्रं प्रमाणं तत्र न किञ्चन साधनमुपन्यस्यते उपन्यस्यते वा। न प्रथमः एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेदिति न्यायात्। नापि चरमः अनुमानं प्रमाणं न भवतीति ब्रुवाणेन त्वया अभिमतसाधनस्योपन्यासे मम माता वन्ध्येतिवद् व्याघातापातात्। किञ्च प्रमाणतदाभासव्यवस्थापनं तत्समानजातीयत्वादिति वदता भवतैव स्वीकृतं स्वभावानुमानम्। परगता विप्रतिपत्तिस्तु वचनलिङ्गेनेति ब्रुवता कार्य्यलिङ्गकमनुमानम्। अनुपलब्ध्या कञ्चिदर्थं प्रतिषेधयतानुपलब्धिलिङ्गकमनुमानम्। तथाचोक्तं तथागतैः "प्रमाणान्तरसामान्यस्थितेरन्यधियो गतेः। प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचिदिति" पराक्रान्तञ्चात्र सूरिभिरिति ग्रन्थभूयस्त्वभयादुपरम्यते। ते च बौद्धाश्चतुर्विधया भावनया परमपुरुषार्थं कथयन्ति। ते च माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाभिः प्रसिद्धा बौद्धा यथाक्रमं सर्वशून्यत्व-बाह्यशून्यत्व-बाह्यार्थानुमेयत्व-बाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते। यद्यपि भगवान् बुद्ध एक एव बोधयिता तथापि बोद्धव्यानां बुद्धिभेदाच्चातुर्विध्यं यथा गतोऽस्तमर्क इत्युक्ते जारचौरानूचानादयः स्वेष्टानुसारेणाभिसरणपरस्वहरणसदाचरणादिसमयं बुध्यन्ते। सर्वं क्षणिकं क्षणिकम्, दुःखं दुःखम्, स्वलक्षणं स्वलक्षणम्, शून्यं शून्यमिति भावनाचतुष्टयमुपदिष्टं द्रष्टव्यम्। तत्र क्षणिकत्वं नीलादिक्षणानां सत्त्वेनानुमातव्यं यत् सत् तत् क्षणिकं यथा जलधरपटलं सन्तश्चामी भावा इति। न चायमसिद्धो हेतुः अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य नीलादिक्षणानां प्रत्यक्षसिद्धत्वात् व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिरिति न्यायेन व्यापकक्रमाक्रमव्यावृत्तावक्षणिकात् सत्त्वव्यावृत्तेः सिद्धत्वाच्च। तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तं न च क्रमाक्रमाभ्यामन्यः प्रकारः समस्ति "परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकतापि विरुद्धानामुक्तिमात्रविरोधतः" इति न्यायेन व्याघातस्योद्भटत्वात्। तौ च क्रमाक्रमौ स्थायिनः सकाशाद् व्यावर्त्तमानौ अर्थक्रियामपि व्यावर्त्तयन्तौ क्षणिकत्वपक्ष एव सत्त्वं व्यवस्थापयत इति सिद्धम्। नन्वक्षणिकस्यार्थक्रियाकारित्वं किं न स्यादिति चेत् तदयुक्तं विकल्पासहत्वात् तथा हि वर्त्तमानार्थक्रियाकरणकाले अतीतानागतयोः किमर्थक्रिययोः स्थायिनः सामर्थ्यमस्ति? नो वा? आद्ये तयोरनिराकरणप्रसङ्गः समर्थस्य क्षेपायोगात् यत् यदा यत्करणसमर्थं तत् तदा तत्करोत्येव यथा सामग्री स्वकार्य्यं समर्थश्चायं भावः इति प्रसङ्गानुमानाच्च। द्वितीयेऽपि कदापि न कुर्य्यात् सामर्थ्यमात्रानुबन्धित्वादर्थक्रियाकारित्वस्य यत् यदा यन्न करोति तत् तदा तत्रासमर्थं यथा हि शिलाशकलमङ्कुरे, न चैष वर्त्तमानार्थक्रियाकरणकाले वृत्तवर्त्तिष्यमाणे अर्थक्रिये करोतीति तद्विपर्य्ययाच्च। ननु क्रमवत्सहकारिलाभात् स्थायिनः अतीतानागतयोः क्रमेण करणमुपपद्यते इति चेत् तत्रेदं भवान् पृष्टो व्याचष्टां सहकारिणः किं भावस्योपकुर्वन्ति? न वा? न चेत् नापेक्षणीयास्ते अकिञ्चित्कुर्वतां तेषां तादर्थ्यायोगात्। उपकारकत्वपक्षे सोऽयमुपकारः किं भावाद्भिद्यते? न वा? भेदपक्षे आगन्तुकस्यैव तस्य कारणत्वं स्यात् न भावस्याक्षणिकस्य, आगन्तुकातिशयान्वयव्यतिरेकानुविधायित्वात् कार्य्यस्य। तदुक्तम् "वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम्?। चर्मोपमश्च सोऽनित्यः खतुल्यश्चेदसत्फल इति"। अथ भावस्तैः सहकारिभिः सहैव कार्य्यं करोतीति स्वभाव इति चेत् अङ्ग तर्हि सहकारिणो न जह्यात् प्रत्युत पलायमानानपि पाशेन बद्ध्वा कृत्यं कार्य्यं कुर्य्यात् स्वभावस्यानपायात्। किञ्च सहकारिजन्योऽतिशयः किमतिशयान्तरमारभते न वा उभयथापि प्रागुक्तदूषणपाषाणवर्षणप्रसङ्गः। अतिशयान्तरारम्भपक्षे बहुमुखानवस्थादौस्थ्यमपि स्यात् अतिशये जनयितव्ये सहकार्य्यन्तरापेक्षायां तत्परम्परापात इत्यनेकानवस्थाऽवधेया, तथाहि सहकारिभिः सलिलपवनादिभिः पदार्थसार्थैराधीयमाने बीजस्यातिशये बीजमुत्पादकमभ्युपेयम् अपरथा तदभावेऽप्यतिशयः प्रादुर्भवेत् बीजञ्चातिशयमादधानं सहकारिसापेक्षमेवाधत्ते अन्यथा सर्वदोपकारापत्तौ अङ्कुरस्यापि सदोदय प्रसज्येत। तस्मादतिशयार्थमपेक्षमाणैः सहकारिभिरति-

वा तत्पत्रैर्वा प्रपूजयेत् । तत्काष्ठचन्दनैर्वापि स मे भक्तः स मे प्रियः । तत्काष्ठचन्दनं भाले यो धारयति सम्भ्रमात् । तत्तत् शिवस्वरूपा सा नमेद्देवी सदान्विता । अतस्तच्चन्दनं देवि ! न धारयति कश्चन । तत्पत्रं तत् प्रसूनं वा कदापि धारयेन्न हि । तन्मूले महेशानि ! प्राणांस्त्यजति यो नरः । रुद्रदेहो भवेत् सत्यं पापकोटियुतोऽपि सन्” योगिनीतन्त्रे पटले ।

“बिल्ववृक्षं तथा देवि ! भगवान् शङ्करः स्वयम् । बिल्ववृक्षतले स्थित्वा यदि प्राणांस्त्यजेत् सुधीः । तत्क्षणान्मोक्षमाप्नोति किन्नस्य तीर्थकोटिभिः । यत्र ब्रह्मादयो देवास्तिष्ठन्ति मुक्तिहेतवे । बिल्ववृक्षतले स्थानं यदि विष्ठादिपूरितम् । तदेव शाङ्करं क्षेत्रं सर्वतीर्थमयं सदा । सर्वपीठमयं तत्तु सर्वदेवमयं सदा । न त्यजेत् शाङ्करं क्षेत्रं न च गङ्गां त्यजेत् प्रिये ।। समीपे स च चार्वाङ्गि ! बिल्ववृक्षो यदि प्रिये ! । काशीपुरसमं तत्तु तत्र प्राणान् त्यजेद् यदि । किन्तस्य कोटितीर्थेन काशीवासेन किं प्रिये !। पुरश्चरणोल्लासे १० पटले । तद्दानविधिर्यथा

“पत्रं वा यदि वा पुष्पं फलं नैवेद्यमधोमुखम् । यथोत्पन्नं तथा देयं बिल्वपत्रमधोमुखम् ।” मातृकातन्त्रे ५५ पटले । “शिव उवाच । शृणु देवि ! प्रवक्ष्यामि रहस्यं त्रिजटात्मकम् । पत्रं ब्रह्ममयं देवि ! अद्भुत वरवर्णिनि !। श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः । विष्णुप्रीतिकरश्चैव मम प्रीतिकरः सदा । ब्रह्मविष्णुशिवाः पत्रे दलत्रयं शक्तिरूपकम् । दलमध्ये तु सत्स्यात् पत्रे ब्रह्मपदं प्रिये ।। त्रिजटापत्रमेकेन हरं वा हरिमर्चयेत् । कैवल्यं तस्य तेनैव शक्तिपूजा विशेषतः । पत्रं पुष्पं फलं तोयं नैवेद्यं धूपदीपकम् । दत्त्वा यद्यत् फलं प्राप्तं तस्मात् कोटिगुणं भवेत् । सर्वरत्नमतो देवि ! त्रिजटात्मसमर्पणम् । कैवल्यदो हरिश्चैव दासोऽहं त्वत्स्वरूपताम् । त्वयि कैवल्यदं प्राप्त धर्मकामार्थदं प्रिये ।। वज्रहीनमिदं देवि ! प्राप्नुयाद्वाञ्छितं फलम् । सपत्रे त्रियते न्यून वज्राघातेन पार्वति !। तस्माच्च साधकेन्द्रेण वज्रहीनं प्रदीयते” । ‘आपं गृहीत्वा यो गच्छेत् सर्वसिद्धिमवाप्नुयात् । ऊर्ध्वं तदर्धं रक्षेदधः पशुपतिस्तथा । हरो माहेश्वरी दक्षे पृष्ठे च शूलधारिणी । दक्षपार्श्वे च श्रीनाथो वामपार्श्वे प्रजापतिः । चन्द्रसूर्यौ स्थितौ तत्र कल्पपादहरौ सदा” । ज्ञानभैरवतन्त्रे ६ पटले । त्रिशब्दस्य बन्ध्यबोधकत्वेऽपि शङ्काभरे तादृग्वस्त्वो भावात् अन्त्यस्यबोधकत्वं पूजितं सर्वत्र तस्यायुक्तत्वं बोध्यम् । [शा० ६५ अ० ।

**विल्वक** न० १तीर्थभेदे भा०अनु० २५ अ०। २नागभेदे भा०

**विल्वकादि** पु० “बिल्वकादिभ्यश्छस्य लुक्” पा० उक्ते छप्रत्ययलुग्निमित्ते शब्दगणे स च पा० ग० उक्तो यथा “बिल्व वेणु वेत्र वेतस इक्षु काष्ठ कपोत तृण क्रुञ्चा (कुञ्चत्व) । तक्षन् (नलोपश्च)” बैल्वकीयाया भूमौ भवाः बैल्वकाः तस्य लुक् न कुको निवृत्तिः ।

**विल्वकीय** त्रि० बिल्वाः सन्ति यस्यां नडा० छ कुक् च । बिल्वयुक्तभूमौ ततो वहुत्वे बिल्वका० छमात्रस्य लुक् ।

**विल्वज** त्रि० बिल्वात् जायते जन–ड । मालूरजाते । बिल्वस्य विषयः राजन्या० वुञ् । बैल्वजक तद्विषये ।

**विल्वतेजस्** पु० नागभेदे भा० आ० ५७ अ० ।

**विल्वपत्र** पु० १नागभेदे भा० भी० १०२ । ६त० २मालूरस्य पत्रे न० “बिल्वपत्रलता पीठे दुर्गा” सप्तशती ।

**विल्वपाण्डर** पु० नागभेदे भा० आ० ५७ अ० ।

**विल्वपेषिका** स्त्री बिल्वस्य पेषः साधनत्वेन अस्त्यस्याः ठन् । (बेलशुंठ) शुष्कबिल्वखण्डे राजनि० ।

**विल्ववन** न० ६त० । मालूरसमुदाये तस्य विषयः राजन्या० वुञ् । बैल्ववनक तद्विषये ।

**विल्वा** स्त्री० बिल–भेदने उल्वा० नि०। हिङ्गुपत्र्यां राजनि० ।

**विल्वोदकेश्वर** पु० । शिवमूर्त्तिभेदे तस्याविर्भवकथा स्क० रेवा० १२६ अ० । [अबेसीत् विवेस ।

**विस** क्षेपे दि० पर० सक० सेट् । बिस्यति । इरित् अविसत्-

**बिस** न० बिस–क । मृणाले अमरः । [अमर ।

**विसकण्ठिका** स्त्री बिसमिव कण्ठोऽस्याः कप् । बलाकायाम्

**बिसकण्ठिन्** पु० बिसमिव कण्ठोऽस्त्यस्य इनि । बके राजनि०

**बिसकुसुम** न० बिसस्थितं कुसुमम् शा०त०। कमले राजनि०। बिसप्रसून तत्रार्थे अमरः । [खनकर्त्तरि ।

**विसखा** त्रि० बिसं मृणालं खनति खन–विट् आ । मृणाल-

**विसग्रन्थि** पु० ६त० । मृणालग्रन्थौ । तस्य जलकाणुप्रतिबारकता सुश्रुते उक्ता यथा “सप्त जलपात्र प्रसाधनानि भवन्ति । तद्यथा कतकगोमेदकबिसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति” ।

**विसनाभि** स्त्री बिस नाभिरिवास्या । पद्मिन्यां त्रिका०

**विसनालिका** स्त्री बिसस्य नालिकेव । मृणाले शब्दार्थकल्प० । तस्य मध्यरन्ध्रमासत्त्वात् तथात्वम् ।

**विसल** न०बिस–कलच् । किसलये त्रिका०।

रान्तरमाधेयं बीजे, तस्मिन्नुपकारे पूर्वन्यायेन सहकारिसापेक्षस्य बीजस्य जनकत्वे सहकारिजन्योपकारबीजजन्यातिशयानवस्था प्रथमा व्यवस्थिता। अथोपकारः कार्य्यार्थमपेक्ष्यमाणोऽपि बीजादिनिरपेक्षं कार्य्यं जनयति तत्सापेक्षो वा। प्रथमे बीजादेरहेतुत्वमापतेत्। द्वितीये अपेक्ष्यमाणेन बीजादिना उपकारे अतिशय आधेयः एवं तत्र तत्रापीति बीजादिजन्यातिशयनिष्ठातिशयपरम्परापात इति द्वितीयानवस्था स्थिरा भवेत्। एवमपेक्ष्यमाणेनोपकारेण बीजादौ धर्मिण्युपकारान्तरमाधेयमित्युपकाराधेयबीजातिशयाश्रयातिशयपरम्परापात इति तृतीयानवस्था दुरवस्था स्यात्। अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयत इत्यभ्युपगम्यते तर्हि प्राचीनो भावोऽनतिशयात्मा निवृत्तः अन्यश्चातिशयात्मा कुर्वद्रूपादिपदवेदनीयो जायत इति फलितं ममापि मनोरथद्रुमेण। तस्मादक्षणिकस्यार्थक्रिया दुर्घटा। नाप्यक्रमेण घटते विकल्पासहत्वात्। तथा हि युगपत्सकलकार्य्यकरणसमर्थः स भावस्तदुत्तरकालमनुवर्त्तते न वा। प्रथमे तत्कालवत् कालान्तरेऽपि तावत्कार्य्यकरणमापतेत्। द्वितीये स्थायित्वश्रद्धया मूषिकभक्षितबीजादङ्कुरादिजननमर्थनामनुसरेत्। यद् विरुद्धधर्माध्यस्तं तन्नाना यथा शीतोष्णे। विरुद्धधर्माध्यस्तश्चायमिति जलधरे प्रतिबन्धसिद्धिः। न चायमसिद्धो हेतुः, स्थायिनि कालभेदेन सामर्थ्यासामर्थ्ययोः प्रसक्तद्विपर्य्ययसिद्धत्वात्। तत्र सामर्थ्यसाधकौ प्रसङ्गतद्विपर्य्ययौ प्रागुक्तौ सामर्थ्यबाधकावभिधीयेते यद्यदा यज्जननासमर्थं तत् तदा तन्न करोति यथा शिलाशकलमङ्कुरम् असमर्थश्चायं वर्त्तमानार्थक्रियाकरणकाले अतीतानागतयोरर्थक्रिययोरिति प्रसङ्गः। यद्यदा यत् करोति तत् तदा तत्र समर्थं यथा सामग्री स्वकार्य्यमिति, करोति चायमतीतानागतकाले तत्कालवर्त्तिन्यावर्थक्रिये भाव इति प्रसङ्गव्यत्ययः विपर्य्ययः। तस्मात् विपक्षे क्रमयौगपद्यव्यावृत्त्या व्यापकानुपलम्भेनाधिगतव्यतिरेकव्याप्तिकं प्रसङ्गतद्विपर्य्ययबलात् सत्त्वान्वयव्याप्तिकं सत्त्वं क्षणिकत्वपक्ष एव व्यवस्थापयतीति सिद्धम्। तदुक्तं ज्ञानश्रिया "यत् सत् तत् क्षणिकं यथा जलधरः सन्तश्च भावा अमी सत्ताशक्तिरिहार्थकर्म्मणि मितेः सिद्धेषु सिद्धा न सा। नाप्येकैव विधाऽन्यथा परकृतेनापि क्रियादिर्भवेद् द्वेधापि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यतीति"। न च कणभक्षाक्षचरणादिपक्षकक्षीकारेण सत्तासामान्ययोगित्वमेव सत्त्वमिति मन्तव्यं सामान्यविशेषसमवायानामसत्त्वप्रसङ्गात्। न च तत्र स्वरूपसत्तानिबन्धनः सद्व्यवहारः प्रयोजकगौरवापत्तेः अनुगतत्वाननुगतत्वविकल्पपराहतेश्च, सर्षपमहीधरादिषु विलक्षणेषु क्षणेष्वनुगतस्याकारस्य मणिषु सूत्रवदनुभूतगणेषु गुणवदप्रतिभासनाच्च। किञ्च सामान्यं सर्वगतं स्वाश्रयसर्वगतं वा प्रथमे सर्ववस्तुसङ्करप्रसङ्गः अपसिद्धान्तापत्तिश्च यतः प्रोक्तं प्रशस्तपादेन "स्वविषयसर्वगतमिति। किञ्च विद्यमाने घटे वर्त्तमानं सामान्यमन्यत्र जायमानेन सम्बध्यमानं तस्मादागच्छत् सम्बध्यते अनागच्छद् वा आद्ये द्रव्यत्वापत्तिः द्वितीये सम्बन्धानुपपत्तिः। किञ्च विनष्टे घटे सामान्यमवतिष्ठते, विनश्यति, स्थानान्तरं गच्छति वा प्रथमे निराधारत्वापत्तिः, द्वितीये नित्यत्ववाचोयुक्तिः, तृतीये मूर्त्तत्वप्रसक्तिः इत्यादि दूषणग्रहग्रस्तत्वात् सामान्यमप्रामाणिकम्। "अन्यत्र वर्त्तमानस्य ततोऽन्यस्थानजन्मनि। तस्मादचलतः स्थानाद्वृत्तिरित्यतियुक्तता। यत्रासौ वर्त्तते भावस्तेन सम्बध्यते न तु। तद्देशिनञ्च व्याप्नोति किमप्येतन्महाद्भुतम्। न याति न च तत्रासीदस्ति पश्चान्न चांशवत्। जहाति पूर्वं नाधारमहो व्यसनसन्ततिरिति"। अनुवृत्तप्रत्ययः किमालम्बन इति चेत् अङ्ग अन्यापोहालम्बन एवेति सन्तोष्टव्यमायुष्मतेति अलमतिप्रसङ्गेन। सर्वस्य संसारस्य दुःखात्मकत्वं सर्वतीर्थकरसम्मतम् अन्यथा तन्निविवर्त्तयिषूणां तेषां तन्निवृत्त्युपाये प्रवृत्त्यनुपपत्तेः। तस्मात् सर्वं दुःखं दुःखमिति भावनीयम्। ननु किंवदिति दृष्टान्तः कथनीय इति चेन्मैवं स्वलक्षणानां क्षणानां क्षणिकतया सालक्षण्याभावात् नैतेन सदृशमपरमिति वक्तुमशक्यत्वात्। ततः स्वलक्षणं स्वलक्षणमिति भावनीयम्। एवं शून्यं शून्यमपि भावनीयं स्वप्ने जागरणे च न मया दृष्टमिदं रजतादीति विशिष्टनिषेधस्योपलम्भात्। यदि दृष्टं सत् तदा तद्विशिष्टस्य दर्शनस्येन्द्रियस्य अधिष्ठानस्य च तन्निमग्नस्य रजतादेस्तत्सम्बन्धस्य च समवायादेः सत्त्वं स्यात् न चैतदिष्टं कस्यचिद्वादिनः। न चार्द्धजरतीयमुचितं न हि कुक्कुट्या एको भागः पाकाय अपरो भागः प्र-

वाच्य मनुमानमिति कल्प्यते । तस्मादध्यक्षाभिधानज्ञानप्रबन्धदर्शनदृष्ट्या मध्ये एकस्यानेकस्य वा स्वरूपे निषेधविषयत्वेन सर्वस्यासत्त्वं प्रसादापतेदिति ।

(माध्यमिकाः) भगवतोपदिष्टे माध्यमिकास्तावदुत्तमप्रज्ञा इत्थं अचीकथन् भिक्षुपादप्रसारणन्यायेन क्षणभङ्गाद्यभिधानमुखेन स्थायित्वानुकूलवेदनीयत्वानुगतसर्वसत्यत्वभ्रमव्यावर्त्तनेन सर्वशून्यतायामेव पर्य्यवसानम् । अतस्तत्त्वं सदसदुभयानुभयात्मकचतुष्कोटिविनिर्मुक्तं शून्यमेव । तथा हि यदि घटादेः सत्त्वं स्वभावस्तर्हि कारकव्यापारवैयर्थ्यम् । असत्त्वं स्वभाव इति पक्षे प्राचीन एव दोषः प्रादुःष्यात् । यथोक्तम् "न सतः कारणापेक्षा व्योमादेरिव युज्यते । कार्य्यस्यासम्भवो हेतुः खपुष्पादेरिवासतः" इति विरोधादितरौ पक्षावप्यनुपपन्नौ तदुक्तं भगवता लङ्कावतारे "बुद्ध्या विविच्यमानानां स्वभावो नावधार्य्यते । अतो निरभिलप्यास्ते निःस्वभावाश्च दर्शिताः" इति । "इदं वस्तु बलायातं यद्वदन्ति विपश्चितः । यथा यथार्थाश्चिन्त्यन्ते विशीर्य्यन्ते तथा तथेति" च । न क्वचिदपि पक्षे व्यवतिष्ठत इत्यर्थः । इष्टार्थव्यवहारश्च न स्वप्नव्यवहारवत् संवृत्या सङ्गच्छते । अतएवोक्तम् "परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ । कुणपः कामिनी भक्ष्य इति तिस्रो विकल्पना इति ।" तदेव भावनाचतुष्टयवशान्निखिलवासनानिवृत्तौ निर्वाणं शून्यरूपं सेत्स्यतीति वयं कृतार्थाः नास्माकमुपदेश्यं किञ्चिदस्तीति । शिष्यैश्चावश्योगाचारश्चेति द्वयं करणीयम् । तत्राप्राप्तस्यार्थस्य प्राप्तये पर्य्यनुयोगो योगः गुरूक्तस्यार्थस्याङ्गीकरणमाचारः गुरूक्तस्याङ्गीकरणादुत्तमाः पर्य्यनुयोगस्याकरणादधमाश्च अतस्तेषां माध्यमिका इति प्रसिद्धिः ।

(योगाचाराः) गुरूक्तभावनाचतुष्टयं बाह्यार्थस्य शून्यत्वं चाङ्गीकृत्याऽऽन्तरस्य शून्यत्वस्याङ्गीकृत कथमिति ? पर्य्यनुयोगस्य करणात् केषाञ्चिद् योगाचारप्रथा एषा हि तेषां परिभाषा स्वयंवेदनं तावदङ्गीकार्य्यम् अन्यथा जगदान्ध्यं प्रसज्येत । तत्कीर्त्तितं धर्म्मकीर्त्तिना "अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यतीति ।" बाह्यं ग्राह्यं नोपपद्यत एव विकल्पानुपपत्तेः । अर्थो ज्ञानग्राह्यो भवन्नुत्पन्नो भवति अनुत्पन्नो वा, न पूर्वः उत्पन्नस्य स्थित्यभावात् नापरः अनुत्पन्नस्यासत्त्वात् । अथ मन्येथाः अतीत एवार्थो ज्ञानग्राह्यः तज्जनकत्वादिति तदपि बालभाषितं वर्त्तमानतावभासविरोधात् इन्द्रियादेरपि ग्राह्यत्वप्रसङ्गाच्च । किञ्च ग्राह्यः किं परमाणुरूपोऽर्थः अवयविरूपो वा । न चरमः कृत्स्नैकदेशविकल्पादिना तन्निराकरणात् । न प्रथमः अतीन्द्रियत्वात् षट्केन युगपद्योगस्य बाधकत्वाच्च । यथोक्तम् "षट्केन युगपद् योगात् परमाणोः षडंशता । तेषामप्येकदेशत्वे पिण्डः स्यादणुमात्रकः" इति । तस्मात् अव्यतिरिक्तग्राह्यविरहात्तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका प्रकाशवदिति सिद्धम् । तदुक्तम् "नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्य्यात् स्वयं सैव प्रकाशते इति ।" ग्राह्यग्राहकयोरभेदश्चानुमातव्यः यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते यथा ज्ञानेनात्मा, वेद्यन्ते तेन नीलादयः । भेदे हि अधुना अनेनार्थस्य सम्बन्धित्वं न स्यात् तादात्म्यस्य नियमहेतोरभावात् तदुत्पत्तेरनियामकत्वात् यश्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः स एकस्मिन् चन्द्रमसि द्वित्वावभास इव भ्रमः अत्राप्यनादिरविच्छिन्नप्रवाहा भेदवासनैव निमित्तम् । यथोक्तम् "सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये" इति । "अविभागोऽपि बुद्ध्यात्मा विपर्य्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इति च । न च रसवीर्य्यविपाकादिसमानमाशामोदकोपार्जितमोदकानां स्यादिति वेदितव्यं वस्तुतो वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्त्तृपरिज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकारवत्तया तिमिराद्युपहताक्षाणां केशेन्द्रनाडीज्ञानाभेदवदनाद्युपप्लववासनासामर्थ्याद् व्यवस्थोपपत्तेः पर्य्यनुयोगायोगात् । यथोक्तम् "अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते । विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा । तथा कृतव्यवस्थेयं केशादिज्ञानभेदवत् । यदा तदा न सञ्चोद्या ग्राह्यग्राहकलक्षणेति" तस्माद् बुद्धिरेवानादिवासनावशादनेकाकारावभासत इति सिद्धम् । ततश्च प्रागुक्तभावनाप्रचयबलान्निखिलवासनोच्छेदविगलितविविधविषयाकारोपप्लवविशुद्धविज्ञानोदयो महोदय इति ।

(सौत्रान्तिकाः) अन्ये तु मन्यन्ते यदुक्तं बाह्यं वस्तुजातं नास्तीति तदयुक्तं प्रमाणाभावात् । न च सहोपलम्भनियमः प्रमाणमिति वक्तव्यं वेद्यवेदकयोरभेदसाधकत्वेनाभिमतस्य तस्याप्रयोजकत्वेन सन्दिग्धविपक्षव्यावृत्तिकत्वात् । ननु भेदे सहोपलम्भनियमात्मकं

सर्वसंस्कारा इति या वासना स्थिरा। स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते। प्रत्यक्षमनुमानञ्च प्रमाणद्वितयं तथा। चतुःप्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः। अर्थो ज्ञानान्वितो वैभाषिकेण बहुमन्यते। सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः। आकारसहिता बुद्धिर्योगाचारस्य सम्मता। केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः। रागादिज्ञानसन्तानवासनाच्छेदसम्भवा। चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्त्तिता। कृत्तिः कमण्डलुर्मौण्ड्यं चीरं पूर्वाह्णभोजनम्। सङ्घो रक्ताम्बरत्वञ्च शिश्रिये बौद्धभिक्षुभिरिति"।

बुद्धगया स्त्री (बुधगया) प्रसिद्धे कीकटस्थे बुद्धाख्ये गयाभेदे।

बुद्धद्रव्य न० स्तौपिके स्तूपीकृते द्रव्ये त्रिका०।

बुद्धधर्म्म पु० ६त०। बुद्धानामहिंसादौ धर्म्मे।

बुद्धपुराण न० बुद्धस्याविर्भावादिज्ञापके पुराणभेदे।

बुद्धान्त पु० बुध–भावे क्त तस्यान्त परिच्छेद। जीवस्यावस्थाभेदे जाग्रदवस्थायाम् शत०ब्रा०१४। ७।१।१८।

बुद्धि स्त्री० बुध-क्तिन्। १ज्ञाने, २सांख्योक्ते सुखदुःखाद्यष्टविधधर्मयुते प्रकृतिपरिणामभेदे "महत्तत्त्वमिति प्रोक्तं बुद्धितत्त्वं तदुच्यते" सा० प्र० भा० धृतवाक्यम्। वेदान्तोक्ते निश्चयात्मकवृत्तियुते ३अन्तःकरणे च। "मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम्। संशयो निश्चयो गर्वः स्मरणं विषया अमी" वेदान्तप०। ४धर्मपत्नीभेदे भा०आ०६६अ०। कणा०सूत्रोपस्कारदृष्टौ सांख्यमतसिद्धमहत्तत्त्वरूपबुद्धितत्त्वनिराकरणेन बुद्धेर्ज्ञानपर्य्यायता तद्भेदाश्चोक्ता यथा "द्रव्येषु ज्ञानं व्याख्यातम्" सू० "विषयेण विषयिण इतीयाध्यायस्थमुपलक्षयति। "इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः" "आत्मेन्द्रियार्थसन्निकर्षाद् यन्निष्पद्यते तदन्यत्" इत्येताभ्यां सूत्राभ्यां ज्ञानं व्याख्यातमित्यर्थः"। तत्र "बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्य्यायाः" गौ०सू० समानतन्त्रे बुद्धिलक्षणे सांख्यमतनिरासार्थं पर्य्यायाभिधानम्। सांख्या हि बुद्ध्यादिशब्दानामर्थभेदमाचक्षते तथा हि सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, सा चैकैव पुरुषास्तु परं भिद्यन्ते ते च कूटस्था नित्या अपरिणामिनो नित्यचैतन्यस्वभावाः ते च पङ्गवोऽपरिणामित्वात् प्रकृतिस्त्वन्धा जडत्वात् यदा विषयभोगेच्छा प्रकृतिपुरुषभेददिदृक्षा च प्रकृतेर्भवति तदा सा पुरुषोपरागवशात् परिणमेत् तस्याश्चाद्यः परिणामो ऽन्तःकरणविशेषो बुद्धिरेव महत्तत्त्वं तदुक्तम् "प्रकृतेर्महान्" इति सां०सू०। सा च बुद्धिर्दर्पणवन्निर्म्मला तस्याश्च बहिरिन्द्रियप्रणालिकया विषयाकारो यः परिणतिभेदो घट इति पट इत्याद्याकारस्तज्ज्ञानं वृत्तिरिति चाख्यायते तस्यां बुद्धौ वर्त्तमानेन ज्ञानेन चेतनस्य पुरुषस्य भेदाग्रहात् अहं जानामीति योऽभिमानविशेषः सैवोपलब्धिः। अक्षचन्द्रादिविषयसन्निकर्षादिन्द्रियप्रणालिकयैव सुखदुःखाद्याकारो बुद्धेरेव यः परिणामविशेषः स प्रत्ययः। अतएव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माऽधर्माः सर्वएव बुद्धेः परिणामविशेषाः सूक्ष्ममानया प्रकृतावेव वर्त्तमाना अवस्थाभेदादाविर्भवन्ति तिरोभवन्ति च। पुरुषस्तु पुष्करपलाशवन्निर्लेपः प्रतिबिम्बते परं बुद्धाविति यन्मन्यन्ते। तदनेन पर्य्यायाभिधानसूचितप्रमाणेन निराक्रियते तथा हि बुद्धिशब्दो यदि बुध्यतेऽनयेति करणव्युत्पत्त्या तत्तदा मन एव तत्पर्य्यवस्यति मम मनः प्रत्यक्षम् बुद्धिस्त्वहं बुध्ये इति प्रत्ययवैयर्थ्यं। नचान्तःकरणस्य ज्ञानाद्याधर्मो कर्त्तृधर्मस्तेनैव तेषां सिद्धेः भवति हि अहं जाने अहं प्रत्येमि अहं सुखये इत्यहन्त्वसामानाधिकरण्येन प्रतिभासः। अभिमानोऽसाविति चेत् तात्त्विकत्वे बाधकाभावात्। पुरुषस्यागन्तुकधर्माधारत्वं कूटस्थत्वं तदेव बाधकमिति चेत् आगन्तुकधर्माधारत्वेऽपि नित्यत्वसम्भवात् न हि धर्मी धर्मश्चैकं तत्त्वं येन धर्मोत्पादविनाशाभ्यां धर्म्युत्पादविनाशौ स्यातां तथा च य एव चेतयते स एव बुध्यते जानाति उपलभ्यते प्रत्येति चेति नार्थान्तरकल्पना युक्तेति दिक्। तत्र ज्ञानं द्विविधं विद्या चाविद्या च विद्या चतुर्व्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा। अविद्याऽपि चतुर्व्विधा संशयविपर्य्ययस्वप्नानध्यवसायलक्षणा। तत्र यल्लैङ्गिकं तदनिन्द्रियजम् बुद्ध्यन्तद्विधाह" उप० ह०। "तत्रात्मा मनश्चाप्रत्यक्षे" कणा०सू०। "आत्माऽत्र परात्मा स्वात्मा वा आत्मनि मानसस्य कादाचित्कत्वादहम्प्रत्ययस्याह गौरः कृशो महाबाहुरित्यादि प्रत्ययतिरस्कृतत्वात् स्वात्मनोऽप्यप्रत्यक्षतोक्ता। चकारादाकाशकालदिशां वायोः परमाणूनाञ्च द्रव्याणामुपग्रहः। इन्द्रियजमपि द्विविधं सर्वज्ञीयमसर्वज्ञीयञ्च सर्वज्ञीयं योगधर्मसहकृतया प्रत्यासत्त्या तत्तत्पदार्थसार्वज्ञ्यं तथा हि परमाणवः प्रत्यक्षसक्ताः प्रमेयत्वादभिधेयत्वात् सत्त्वात्। सामग्रीविरहात् कथमेवं महत्त्वस्यापि प्रत्यक्षं प्रति कारणत्वात् न च परमाणवो महान्तः रूपवत्त्वस्यापि चाक्षुषप्रत्यक्षकारणत्वात् न च दिगादयो रूपवन्

इति चेन्न योगजधर्मसहकारिणा मनसैव तत्सम्भवात् तदुपग्रहाञ्चक्षुरादिना वा। अचिन्त्यप्रभावोहि योगजो धर्मो न सहकार्य्यान्तरमपेक्षते। विवादाध्यासितः पुरुषो न सर्वज्ञः पुरुषत्वादहमिवेत्यादि तु प्राभाकरो न मीमांसाभिज्ञः पुरुषत्वादहमिवेत्यादिवद्विपक्षबाधकतर्कशून्यत्वादप्रयोजकम्। अपरेषान्तुयत्तु प्रत्यक्षं द्विविधं सविकल्पकं निर्विकल्पकञ्च सविकल्पकं ज्ञानं न प्रमाणमिति कीर्त्तिदिङ्नागादयः तथा हि अभिलापसंसर्गयोग्यप्रतिभासं हि तत् नह्यभिलापेन नाम्ना सम्भवत्यर्थस्य सम्बन्धो येन घट इति पट इति वा नामानुरञ्जितः प्रत्ययः स्यात् नच जात्यादि परमार्थसत् येन तद्वैशिष्ट्यं विषयेषु इन्द्रियगोचरः तस्मादिन्द्रियेणालोचनं जन्यते आलोचनमहिम्ना सविकल्पकमुत्पद्यमानं तत्रार्थे प्रवर्त्तयत् प्रत्यक्षमिति प्रोच्यते इति। तन्न तदनुपपन्नमभिलापसंसर्गयोग्यप्रतिभासञ्च भवेत् प्रमाणञ्चेन्द्रियार्थसन्निकर्षजन्यं स्यादिति सन्दिग्धव्यतिरेकित्वं नामवैशिष्ट्यञ्च चाक्षुषज्ञाने सम्भवत्येव सुरभि चन्दनमितिवदुपनीतभानसम्भवात्। यद्वा संज्ञावैशिष्ट्यं प्रत्यक्षज्ञाने न भासते संज्ञायाः स्मरणमात्रमस्तैव याऽर्थव्यावर्त्तिका अभावज्ञाने प्रतियोगिस्मरणवत् जात्यादिकञ्च वस्तुभूतं साधितमेवातः सविकल्पकमपीन्द्रियार्थसन्निकर्षजत्वात् प्रत्यक्षम् प्रमाणम्। ननु निर्विकल्पकं न व्यवहारप्रवर्त्तकं न वा व्यवहारविषय इति किन्तत्प्रमाणमिति चेत् सविकल्पकमेव तद्धि विशिष्टज्ञानम् न च विशेषणज्ञानमन्तरेण तदुत्पद्यते विशिष्टज्ञाने हि विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहस्य कारणत्वावधारणात्” उपस्काररवृत्तिः।

“सा च सात्त्विकराजसतामसभेदेन त्रिविधा। तत्र सात्त्विकी यथा “प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये। बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ! सात्त्विकी”। राजसी यथा “यया धर्ममधर्मञ्च कार्य्यञ्चाकार्य्यमेव च। अयथावत् प्रजानाति बुद्धिः सा पार्थ! राजसी”। तामसी यथा “अधर्मं धर्ममिति या मन्यते तमसावृता। सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी” गीता०

तस्याः पञ्चगुणा यथा। “इष्टाऽनिष्टविपत्तिश्च व्यवसायः समाधिता। संशयप्रतिपत्तिश्च बुद्धेः पञ्च गुणान् विदुः” महाभारते मोक्षधर्मः “इष्टानिष्टविपत्तिः इष्टानिष्टानां वृत्तिविशेषाणां विपत्तिर्नाशः निद्रारूपा वृत्तिरित्यर्थः। व्यवसायः उत्साहः। समाधिता चित्तस्थैर्य्यं चित्तवृत्तिनिरोध इत्यर्थः संशयः द्वयस्पृक् ज्ञानम्। प्रतिपत्तिः प्रत्यक्षादिप्रमाणवृत्तिः” तट्टीका। तस्याः सप्त गुणा यथा। “शुश्रूषा श्रवणञ्चैव ग्रहणं धारणन्तथा। ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः” हेमच०। तस्या वृत्तिः पञ्चधा यथा। “प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः” पात०सू० तल्लक्षणञ्च तत्तच्छब्दे दृश्यम्।

बुद्धिक्षयकरा यथा “शोकः क्रोधश्च लोभश्च कामो मोहः परासुता। ईर्ष्या मानो विचिकित्सा कृपाऽसूया जुगुप्सता। द्वादशैते बुद्धिनाशहेतवो मानसा मलाः”। कालिकापु० १८अ०। “बुद्धिक्षयकरा एते मायकासारसंज्ञिकाः”। बुद्धिवृद्धिकरा यथा “निम्बाटरूषवृन्ताश्च बुद्धिवृद्धिकरा मताः। बुद्धिक्षयकरांस्त्यक्त्वा त्यजेद्राजा च भोजने। भोजयेदन्वहं बुद्धिवृद्धिहेतुं न्टपोत्तमः। कालिकापु० ८६ अ०।

**बुद्धिकाम** स्त्री कुमारानुचरमातृभेदे भा० श० ४७ अ०।

**बुद्धिजीविन्** त्रि० बुद्ध्या जीवति जीव–णिनि। बुद्धिरूपोपायेन जीविनि। “भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः” मनु।

**बुद्धिसहाय** पु० ६त०। धीसचिवे अमात्यभेदे हारा०।

**बुद्धीन्द्रिय** न०६०त०। “मनः कर्णौ तथा नेत्रं रसना त्वक् च नासिका। बुद्धीन्द्रियमिति प्रोक्तम्” इत्युक्तेषु इन्द्रियेषु उभयोः ज्ञानकर्मेन्द्रिययोरुपकारकत्वात् मनसो ज्ञानमात्रसहकारित्वविवक्षया बाह्यान्तरज्ञानकरणतया च तथात्वम् “चक्षुः श्रोत्रं स्पर्शनञ्च रसनाघ्राणमेव च। बुद्धीन्द्रियाणि जानीयात्” इत्यत्र बाह्यमात्रापेक्षया पञ्चकत्वमुक्तम्।

**बुद्बुद** न०बुद्-क पृषो० द्वित्वम्। जलस्य गोलाकारे विकारभेदे अमर। “पञ्चरात्रेण कललं बुद्बुदाकारतां व्रजेत्”। उपचारो० उक्ते २गर्भावस्थाभेदे च।

**बुध** ज्ञापने भ्वा०प०सक०अनिट्। बोधति अभौत्सीत् शिष्यं गुरुः। बोद्धा बुद्धः।

**बुध** ज्ञाने भ्वा०उभ०सक०सेट्। बोधति ते। इरित् अबुधत् अबोधीत् अबोधि अबोधिष्ट। ज्वला० वा ण पक्षे क। बोधः बुधः।

**बुध** ज्ञाने दि० आ०सक० अनिट्। बुध्यते अबोधि अबोधिष्ट। बुबुधे। उद्+बुध—जागरणे विषयस्फुरणाभिमुखीभावरूपे संस्कारनिष्ठे व्यापारभेदे उद्बुद्धसंस्कारादेव स्मृतिर्भवतीति शास्त्रे स्थितम्।

श्रुतो मित्रमन्त्रिभिः परिवारितः। जगाम हिमवत्-पार्श्वं महादेवाभिशापतः। योऽसौ प्रविशते भूमौ स स्त्री भवति निश्चितम्। स राजा मृगयाङ्गेन प्रवि-शत्तद्वनान्तरे। एकाकी तुरगोपेतः सहसा स्त्रीत्वं जगाम ह। सा बभ्राम वने शून्ये पीनोन्नतपयोधरा। का त्वं कस्य सुता प्राप्ता चतुरोधोऽसि कथय। तां ददर्श बुधस्तन्वीं रूपौदार्यगुणान्विताम्। अष्टमी बुध-वारेण तस्यां सृष्टो बुधो ग्रहः, ददौ स्वकामसंलक्षा-मानीयत प्रतोषिताम्। पुत्रमुत्पादयामास योऽसौ ख्यातः पुरूरवाः। चन्द्रवंशकरो राजा आद्यः सर्वमही-क्षिताम्। ततः प्रभृति पूज्येयमष्टमी बुधसंयुता। या च सम्पूर्णा प्राप्ता न भिन्ना यथोक्तं तत्रैव "बुधाष्टमी शुभा पूर्णा यथोक्तफलदायिनी" तत्र व्रतमष्टमं कार्यं तत्र भक्ष्यभेदादिकं च तत्रैवोक्तं यथा

"अष्टम्यष्टविधानेन विधिनाम्रैः पृथक् पृथक्। प्रथमा मोदकैर्भक्ष्यैः द्वितीया धानकैस्तथा। तृतीया घृतपूरैश्च चतुर्थी वटकैरपि।। पञ्चमी शुभका-सारैः षष्ठी सोहालकैः शुभैः। अशोकवर्त्तिभिः शुभ्रैः सप्तमीं पातिताम्भवेत्। अष्टमी फाणितैः पूर्णैः सप्त-वेष्टैर्युधिष्ठिर।।" तत्र विहितनिषेधकालादि राज-मार्त्तण्डे उक्तं यथा "चतुर्थे मकरे जाते देवे, जाग्रति माधवे। बुधाष्टमीं प्रकुर्वीत वर्जयित्वा तु चैत्रकम्। प्रसुप्ते च जगन्नाथे सन्ध्याकाले मधौ तथा। बुधाष्टमीं न कुर्वीत कृता हन्ति पुराकृतमिति"। एतद्व्रतमारम्भ-मपि चैत्रादौ न कर्त्तव्यं यथाह स्मृतिः "मीने धनुषि देवेशे सुप्तेऽप्यहदिने तथा। बुधाष्टमीं न कुर्वीत पूर्वविद्धामपि क्वचित्" अग्रहदिने समवायविद्धदिने।

बुधित त्रि० ज्ञा० बुध–क्त इट्। ज्ञाते अमरः।

बुधिल त्रि० बुध–किलच्। विदुषि उणादि०।

बुध्न पु० बन्ध–नक् बुधादेशः। १मूले अमरः २शिवे भरत ३अन्तरीक्षे ऋ० ४।१९।४ भाष्यम्। "बुध्नमोदरा-क्षितः" वेदान्तप०। "सर्वान् निवपमि अर्द्धं बुध्नः" मा०भा० धृता श्रुतिः। निरुक्ते तु बद्धा अस्मिन् धृता आप इति अन्तरिक्षं बुध्नम्" तत्र निरुक्तिरुक्ता।

बुध्न्य पु० बुध्ने मूले भवः यत्। १गार्हपत्ये अग्नौ "अहिरसि बुध्न्यः" ताण्ड्यब्रा० १।४।११ "अहिरसि हन्ता रक्षःप्रभृतीनां बुध्न्यः बुध्ने मूले आदौ आधानकाले प्रथमं जातोऽसि" तद्भा०। २रुद्रभेदे च। "बुध्ने निवसति बुध्न्यः योऽहिः सः अहिर्बुध्न्यः बुध्नमन्तरीक्षं तन्निवासात्" निरु०। "मानोऽहिर्बुध्न्यो रिषे" तद्धृता श्रुतिः।

बुन्द निशामने भ्वा० उभ० सक० सेट्। बुन्दति ते इरित् अबुदत् अबुन्दीत्। अबुन्दिष्ट। उदित् क्त्वा वेट्। निशामनमालोचनम् प्रणिधानमिति यावत्।

बुन्ध निशामने भ्वा० उभ० सक० सेट्। बुन्धति ते इरित् अबुधत्–अबुन्धीत् अबुन्धिष्ट। निशामनमालोचनम्। उदित् क्त्वा वेट्।

बुन्ध बन्धे चु० उभ० सक० सेट्। बुन्धयति ते अबुबुन्धत् त।

बुबुर न० उदके निघण्टौ बर्बुरमित्यत्र पाठान्तरम्।

बुभुक्षा स्त्री० भुज–सन्–भावे अ। भोजनेच्छायाम् क्षुधायाम्। सा च प्राणधर्मः यथोक्तं शा०ति० "बुभुक्षा च पिपासा च प्राणस्य" ऊर्मिषट्के इत्युक्तम्। सा चाऽजीर्णे च सा न भवति अथ भवति चेत् अनिष्टदा यथोक्तं सुश्रुते "उद्गा-रशुद्धावपि भक्तकाङ्क्षा न जायते हृद्गुरुता च यस्य" "अन्नं यदा दोषविदह्यमानं जीर्णं न तेजः पथ-माप्नोति। भवत्यजीर्णेऽपि तदा बुभुक्षा या मन्दबुद्धिं विनिहन्ति"। स्त्र्यादि०योगार्थे अण्। बौभुक्ष तद्बोधे त्रि०

बुभुक्षित त्रि० बुभुक्षा+तार० इतच्। क्षुधायुक्ते "बुभुक्षितः किं द्विकरेण भुङ्क्ते" इत्युद्भटः।

बुल मज्जने चु० उभ० अक० सेट्। बोलयति ते अबूबुलत्। बोलयति प्लवः पयसि मज्जतीत्यर्थः।

बुलि स्त्री उणा० बुड–इन् किच्च डस्य लः। भये हेमच०।

बुस्ख त्रि० बुक्–ख उणा० नि०। तिरश्चीने शत०ब्रा० ११।५।४।१४।

बुष(स) न० बुष्यते उत्सृज्यते बुष–उत्सर्गे क पृषो० वा सत्वम्। (भामड़ा) १तुच्छधान्ये फलरहितधान्ये अमरः। अयं षोपधः २उदके वेदनिघण्टुः ततः तृणा० चतुरर्थ्यां च। बुषच तत्समीपादौ त्रि०। पृषो० दीर्घः। बूषमप्यत्र। [अबोषीत् बुबोष

बुस उत्सर्गे दि०पर०सक०सेट्। बुस्यति। इरित् अबुसत्

बुस्त आदरे अनादरे च चु०उभ०सक०सेट्। बुस्तयति ते अबुबुस्तत् त।

बुस्त न० बुस्यते नाद्रियते आद्रियते वा बुस्त–घञ्। १पन-सादिफलस्य त्वाच्छे अंशे (भुचि) २मांसपिष्टकभेदे च अमरभरतौ।

बूक न० बुक+पृषो० दीर्घः। बुक्कशब्दार्थे रमानाथः।

बृबदुक्थ न० वदे निघण्टुः।

प्रकाशकमन्त्रभेदात् अत्र बोधनमन्त्रादुक्तावेव आम-न्त्रणगन्त्यौ तु "मेरुमन्दरकैलासहिमवच्छिखरे गिरौ"। इत्यादौ प्रागुक्तदेवीपुराणे नवमीषष्ठ्योर्बोधनामन्त्रणयोः पृथक्त्वाभिधानाच्च। ततश्च षष्ठ्यामुभयकरणेऽपि षष्ठी-प्रवेशपूर्वदिने सायंषष्ठीलाभे एकदैवोभयकरणम्। यदा तु पूर्वदिने सायंषष्ठीलाभः न परदिने सायंषष्ठी-लाभः तदा पूर्वेद्युर्बोधनं परदिने चामन्त्रणम्। यदा तूभयदिने सायंषष्ठ्यालाभस्तदा परदिने पूर्वाह्णे षष्ठ्यां बोधनं "बोधयेद् बिल्वशाखायां षष्ठ्यां देवीं फलेषु च। सप्तम्यां बिल्वशाखां तामाहृत्य प्रतिपूजयेत्"।

**बोधनी** स्त्री बोध्यतेऽनया अत्र वा बुध–णिच्–करणे आधारे वा ल्युट्। १पिप्पल्यां तया हि मूर्च्छितो बोध्यते। २कार्त्तिकशुक्लैकादश्यां तत्र हि हरेर्बोधनम्। "शयनीबोधनी मध्ये या कृष्णैकादशी भवेत्। सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन" इति तिथ्यादित०। "तावद्गर्जन्ति तीर्थानि वाजिमेधादयो मखाः। मथुरायां प्रिया विष्णोर्यावन्न नायाति बोधनी" हरिभक्तिविलासे ब्रह्मपु०वचनम्।

**बोधवासर** पु० ६त०। १हरिबोधनदिने कार्त्तिकशुक्लैकादश्याम् २तत्कर्त्तव्ये व्रते च। "जन्मप्रभृति यत् पुण्यं नरेणोपार्जितं भुवि। वृथा भवति तत् सर्वं न कृत्वा बोधवासरम्" हरिभक्तिविलासधृतस्कान्दपु०।

**बोधान** त्रि० बुध–आनच्। १विज्ञे २गीष्पतौ शब्दर०।

**बोधि** पु० बुध–इन्। १समाधिभेदे २पिप्पलवृक्षे ३बुद्धभेदे मेदि० ४बोधे त्रिका०। ५ज्ञातरि त्रि०। [ऽप्यत्र पु०

**बोधितरु** पु० कर्म०। अश्वत्थवृक्षे हेमच०। बोधिद्रुमादयो-

**बोधिसत्त्व** न० बोधि बोधयुत सत्त्वम्। बुद्धभेदे हेमच०।

**बौद्ध** न० बुद्धेन प्रोक्तमण्। १बुद्धशास्त्रभेदे तच्च शास्त्रं प्रथम बृहस्पतिना प्रयुक्तं तच्च बुद्धावतारे प्रपञ्चितम्। यथोक्तं मत्स्यपु० २४ अ०।

"आयुषो नहुषः पुत्रो वृद्धशर्मा तथैव च। रजिर्दम्भो विपाप्मा च वीराः पञ्च महारथाः। रजेः पुत्रशतं जज्ञे राजेयमिति विश्रुतम्" इत्युपक्रमे "रजिपुत्रैस्तदाच्छिन्नं बलादिन्द्रस्य वैभवम्। यज्ञभागश्च राज्यञ्च तपोबलगुणान्वितैः। राज्याद्भ्रष्टस्तदा शक्रो रजिपुत्रैर्निपीडितः। प्राह वाचस्पतिं दीनः पीडितोऽस्मि रजेः सुतैः। न यज्ञभागो राज्यं मे निर्जितश्च बृहस्पते।। राज्यलाभाय मे यत्नं विधत्स्व धिषणाधिप!। ततो बृहस्पतिः शक्रमकरोद्बलदर्पितम्। ग्रहशान्तिविधानेन पौष्टिकेन च कर्मणा। गत्वाथ मोहयामास रजिपुत्रान् बृहस्पतिः। जिनधर्मं समास्थाय वेदबाह्यं स वेदवित्। वेदत्रयीपरिभ्रष्टांश्चकार धिषणाधिपः। वेदबाह्यान् परिज्ञाय हेतुवादसमन्वितान्। जघान शक्रो वज्रेण सर्वान् धर्मबहिष्कृतान्"। तदधीते वेत्ति वा पुनः अण्। २तच्छास्त्राध्यायिनि ३तद्वेत्तरि च त्रि०। बुद्धशब्दे तन्मतं दर्शितम्।

**बौध** पु० बुधस्यायम् शैषिकोऽण्। बुधात्मजे पुरूरवसि हेम०।

**बौधायन** पु० बोधस्य गोत्रापत्यम् आङ्गिरसभिन्नम् इञ्। ततो यूनि इञन्तत्वात् फक्। यूनि बोधगोत्रापत्ये ऋषिभेदे तेन च कल्पसूत्रसपद्धतिश्च कृता।

**बौधि** पु० बोधस्य गोत्रापत्यमाङ्गिरसभिन्नम् इञ्। बोधस्य गोत्रापत्ये आङ्गिरसभिन्ने आङ्गिरसे तु यञ्। बौध्य इत्येव

**बौध्य** पु० बोधस्य गोत्रापत्यमाङ्गिरसं यञ्। आङ्गिरसे बोधगोत्रापत्ये तद्गीता च भा० शा० १७८अ० दर्शिता यथा "बौध्य उवाच। उपदेशेन वर्त्तामि नानुशास्मीह कञ्चन। लक्षणं तस्य वक्ष्येऽहं तत्स्वयं परिमृश्यताम्। पिङ्गला कुररः सर्पः सारङ्गान्वेषणं वने। इषुकारः कुमारी च षडेते गुरवो मम"। भीष्म उवाच "आशाबलवती राजन्नैराश्यं परमं सुखम्। आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला१। सामिषं कुररं दृष्ट्वा वध्यमानं निरामिषैः। आमिषस्य परित्यागात् कुररः२ सुखमेधते। गृहारम्भो हि दुःखाय न सुखाय कदाचन। सर्पः३ परकृतं वेश्म प्रविश्य सुखमेधते। सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिं समाश्रिताः। अद्रोहेणैव भूतानां सारङ्गा४ इव पक्षिणः। इषुकारो५ नरः कश्चिदिषावासक्तमानसः। समीपेनापि गच्छन्तं राजानं नावबुद्धवान्। बहूनां कलहो नित्यं द्वयोः सङ्कथनं ध्रुवम्। एकाकी विचरिष्यामि कुमारीशङ्खको६ यथा"। १बोधो देशभेदोऽभिजनोऽस्य तक्षशिला० अञ्। पित्रादिक्रमेण २तद्देशवासिनि त्रि०।

**ब(व्य)ध** ताडने दिवा० पर० सक० अनिट्। वि(वि)ध्यति अव्या(व्या)त्सीत् वि(वि)व्या(व्या)ध ग्रह्यादित्वे सनि विव्यत्सति। [अभ्युपत् त।

**ब्रध** उत्सर्गे विभागे च चु० उभ० सक० सेट्। ब्राधयति—ते

**ब्र(व्र)ण** शब्दे भ्वा० पर० अक० सेट्। (ब)व्रणति। अब्र(ब्र)-णीत्-अब(ब्र)ाणीत्। कविकल्पद्रुमेऽयमन्त्यस्थादिः।

**ब्रध्न** पु० बन्ध–नक् ब्रधादेशः। १सूर्ये २अर्कवृक्षे अमरः। ३मूले हेमच०। ४दिने ५अश्वे विजयर०: ६मुनिभेदे

बृ(ब्र)ह्मन् न॰ बृं ह-मनिन् "बृंहेर्नोऽच्चेति" उणा॰ नकारस्या कारे ऋतो रत्वम्। १वेदे "तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते श्रुतिः"। "तेन ब्रह्म हृदा" भाग॰ १।१।१। २तपसि, ३सत्ये ४तत्त्वे यथार्थे अमरः। सर्वगुणातीते विशुद्धे तुरीये ५चित्स्वरूपे च। ६द्विज-ग्रामे ७विप्रे ८ऋत्विग्विशेषे च पु॰ अमरः। विष्कम्भादिषु पञ्चविंशे ९योगे मेदि॰। उक्तलक्षणे दन्त्योष्ठ्यादित्वेन साधितम् मेदिनीकरेण ओष्ठ्यादित्वेन कीर्तनात्तथा अपि। ब्रह्म च सच्चिदानन्दात्मकम्। तच्च तस्य स्वरूपलक्षणम्। विवरणानुसारिणस्तु "आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्मा अपृथक्त्वेऽपि पृथगिवावभासन्ते" इति तत्रोक्तौ मिथ्याभावः सत्यत्वम् अज्ञानभावश्चित्त्वम्। दुःखाभाव आनन्द इत्याहुः। तेषामभावानाञ्च ब्रह्मरूपाधिकरणे स्थितत्वात् अभावस्याधिकरणस्वरूपतया ब्रह्मरूपत्वमिति। तस्य तटस्थलक्षणञ्च जगज्जन्मस्थितिप्रलयानामन्येकसुपादानमयचक्षिकीर्षाकृतिमत्त्वं तेन नव लक्षणवत्त्वम् वेदान्तप॰; अतएवोक्तं श्रीधरेण "विश्वसर्गविसर्गादिनवलक्षणलक्षितमिति"। तच्च ब्रह्म द्विविध निर्गुण सगुणञ्च। सच्चिदानन्दात्मकस्यैव निर्गुणस्य जगज्जन्मादिकर्तृत्व सगुणत्वम्। जाग्रदाद्यवस्थात्रयसाक्षित्वात् सगुणत्व अवस्थात्रयातीतस्य चतुरीयसत्ता "प्रपञ्चमद्वैतं चतुर्थं मन्यन्ते" इति श्रुतेस्तथात्वम्। तत्र तत्र तटस्थलक्षणाभिप्रायेण "जन्माद्यस्य यत" शा॰सू॰ "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तज्जिज्ञासस्व ब्रह्मेति" श्रुतिश्च प्रवर्त्तते तस्य स्वरूपलक्षणाभिप्रायेण "निर्गुणं निष्कलं शान्तं निरवद्यं निरञ्जनम्" इत्याद्याः श्रुतयः प्रवृत्ताः। आत्मबोधे तु तस्य ब्रह्मणोऽखिलवस्तुपेक्षया श्रेष्ठत्वाद्ब्रह्मत्वमुक्तं यथा "यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम्। यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत्। यद्दृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः। यज्ज्ञात्वा नापरं ज्ञेयं तद्ब्रह्मेत्यवधारयेत्। तिर्यगूर्द्ध्वमधः पूर्णं सच्चिदानन्दमद्वयम्। अनन्तं नित्यमेकं यत्तद्ब्रह्मेत्यवधारयेत्। अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽद्वयम्। अखण्डानन्दमेकं यत् तद्ब्रह्मेत्यवधारयेत्। दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत्। तत्त्वज्ञानाच्च तद्ब्रह्म सच्चिदानन्दमद्वयम्। सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते। अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत्"। तच्च निर्गुणमपि गुणभेदेन नानारूपं यथोक्तम् "ब्रह्मैकं मूर्त्तिभेदस्तु गुणभेदेन सन्ततम्। तद्ब्रह्म द्विविधं वस्तु सगुणं निर्गुणं शिव!। मायाश्रितो यः सगुणो मायातीतश्च निर्गुणः। स्वेच्छामयश्च भगवानिच्छया विकरोति च। इच्छाशक्तिश्च प्रकृतिः सर्वशक्तिप्रसूः सदा। केचिदेकं वदन्त्येवं ब्रह्म ज्योतिः सनातनम्। केचिद्वदन्ति द्विविधं ब्रह्मप्रकृतिपूर्वकम्। शृणु ये च वदन्त्येकं प्रकृतिपुरुषौ परम्। तस्मात्कुर्वति तौ द्वौ च तद्ब्रह्म सर्वकारणम्"। अथानेकं परं ब्रह्म द्विविधं भवतीच्छया। इच्छाशक्तिश्च प्रकृतिः सर्वशक्तिप्रसूः सदा" ब्रह्मवैवर्त्ते जन्मख॰ ४२ अ॰। तस्य नवधा रूपं यथा "योगिनो यं वदन्त्येवं ज्योतीरूपं सनातनम्। ज्योतिरभ्यन्तरे नित्यरूपं २ भक्ता वदन्ति यम्। वेदा वदन्ति सत्यं ३ यं नित्यमाद्यं ४ विचक्षणाः। यं वदन्ति सुराः सर्वे परं स्वेच्छामयं प्रभुम् ५। सिद्धेन्द्राश्च मुनयः सर्वे सर्वरूपं ६ वदन्ति यम्। यमनिर्वचनीयञ्च योगीन्द्रः शङ्करो वदेत् ७। स्वयं धाता च प्रवदेत् कारणानाञ्च कारणम् ८। शेषो वदेदनन्तं ९ यं नवधारूपमीश्वरम्। तर्काणामेव सङ्ख्या यं षड्विधं रूपमीश्वरम्। वैष्णवानामेकरूप वेदानामेकमेव च। पुराणानामेकरूप तथाद्यविधं स्मृतम्। न्यायोऽनिर्वचनीयञ्च यन्मतं शङ्करोऽब्रवीत्। नित्यं वैशेषिकास्तन्त्र वदन्ति च विचक्षणाः। सांख्यो वदति तं देवं ज्योतीरूपं सनातनम्। मीमांसा सर्वरूपञ्च वेदान्तं सर्वकारणम्। पातञ्जलोऽप्यनन्तञ्च वेदाः सत्यस्वरूपकम्। स्वेच्छामयं पुराणञ्च भक्ताश्च नित्यविग्रहम्" इति तत्रैव १०८अ॰। अन्यथाऽपि सत्त्वादिगुणभेदेन तस्य चतुर्धारूपं यथा "चतुर्विभागः संसृष्टौ चतुर्धा संस्थितः स्थितौ। प्रलयञ्च करोत्यन्ते चतुर्भेदो जनार्दनः। एकेनांशेन ब्रह्मासौ भवत्यव्यक्तमूर्त्तिमान्। मरीचिमिश्राः पतयः प्रजानामन्यभागतः। कालस्तृतीय स्तस्यांशः सर्वभूतानि चापरः। इत्थं चतुर्धा संसृष्टौ वर्त्ततेऽसौ रजोगुणः। एकांशेन स्थितो विष्णुः करोति परिपालनम्। मन्वादिरूपी चान्येन कालरूपी परेण च। सर्वभूतेषु चान्येन संस्थितिं कुरुते स्थितः। सत्त्वं गुणं समाश्रित्य जगतः पुरुषोत्तमः। आश्रित्य तमसो वृत्तिमन्तकाले तथा प्रभुः। रुद्रस्वरूपो भगवानेकांशेन भवत्यजः। अग्न्यन्तकादिरूपेण भागेनान्येन वर्त्तते।

बृ(ब्र)ह्मन् न० बृंह-मनिन् "बृंहेर्नोऽच्चेति" उणा० नकारस्याकारे ऋतो रत्वम्। १वेदे "तस्मादेतद् ब्रह्म नाम रूपमन्नञ्च जायते श्रुतिः"। "तेन ब्रह्म हृदा" भाग० १।१।१। २तपसि, ३सत्ये ४तत्त्वे यथार्थे अमरः। सर्वगुणातीते विशुद्धे तुरीये ५चित्स्वरूपे च। ६ब्रिर- ण्यगर्भे ७विप्रे ८ऋत्विग्विशेषे च पु० अमरः। विष्कम्भादिषु पञ्चविंशे ९योगे मेदि०। ब्रह्मन्शब्दस्तेन दन्त्योष्ठ्यादित्वेन साधितम् मेदिनीकरेण ओष्ठ्यादित्वेन कीर्त्तनाच्चासम्यक्। ब्रह्म च सच्चिदानन्दात्मकम्। तच्च तस्य स्वरूपलक्षणम्। विवरणानुसारिणस्तु "आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्मा अपृथक्त्वेऽपि पृथगिवावभासन्ते" इति तन्मोक्तौ मिथ्याभावः सत्यत्वम् अज्ञानबाधित्वम्। दुःखाभाव आनन्द इत्याहुः। तेषामभावानाञ्च ब्रह्मरूपाधिकरणे स्थितत्वात् अभावस्याधिकरणस्वरूपतया ब्रह्मरूपत्वमिति। तस्य तटस्थलक्षणन्तु जगज्जन्मस्थितिप्रलयानां मध्ये कस्यचिदपि कर्तृत्वम् । तत्र नव लक्षणवत्त्वम्" वेदान्तप०; अतएवोक्तं श्रीधरेण "विश्वसर्गविसर्गादिनवलक्षणलक्षितमिति"। तच्च ब्रह्म द्विविधं निर्गुणं सगुणञ्च। सच्चिदानन्दात्मकस्यैव निर्गुणस्य जगज्जन्मादिकर्तृत्वेन सगुणत्वम्। जाग्रदाद्यवस्थात्रयसाक्षिणश्च सगुणस्य अवस्थात्रयातीतस्य चतुरीयसंज्ञा "शिवमद्वैतं चतुर्थं मन्यन्ते" इति श्रुतेस्तथात्वम्। तत्र तस्य तटस्थलक्षणाभिप्रायेण "जन्माद्यस्य यत" शा० सू० "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति" श्रुतिश्च प्रवृत्ते तस्य स्वरूपलक्षणाभिप्रायेण "निर्गुणं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्याद्याः श्रुतयः प्रवृत्ताः। आत्मबोधे तु तस्य ब्रह्मणोऽखिलवस्त्वपेक्षया श्रेष्ठत्वाद्ब्रह्मत्वमुक्तं यथा

"यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम्।
यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत्। यद्दृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः। यज्ज्ञात्वा नापरं ज्ञेयं तद्ब्रह्मेत्यवधारयेत्। तिर्यगूर्द्ध्वमधः पूर्णं सच्चिदानन्दमद्वयम्। अनन्तं नित्यमेकं यत्तद्ब्रह्मेत्यवधारयेत्। अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽद्वयम्। अखण्डानन्दमेकं यत् तद्ब्रह्मेत्यवधारयेत्। दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत्। तत्त्वज्ञानाच्च तद्ब्रह्म सच्चिदानन्दमद्वयम्। सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते। अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत्"। तच्च निर्गुणमपि गुणभेदेन नानारूपं यथोक्तम् "ब्रह्मैकं मूर्त्तिभेदस्तु गुणभेदेन सन्ततम्। तद्ब्रह्म द्विविधं वस्तु सगुणं निर्गुणं शिवे!। मायाश्रितो यः सगुणो मायातीतश्च निर्गुणः। स्वेच्छामयश्च भगवानिच्छया विकरोति च। इच्छाशक्तिश्च प्रकृतिः सर्वशक्तिप्रसूः सदा। केचिद्वदन्त्येवं ब्रह्म ज्योतिः सनातनम्। केचिद्वदन्ति द्विविधं ब्रह्मप्रकृतिपूर्वकम्। शृणु ये च वदन्त्येक प्रकृतिपुरुषयोः परम्। तस्माद्भवति तौ द्वौ च तद्ब्रह्म सर्वकारणम्"। अथैकं परं ब्रह्म द्विविधं भवतीच्छया। इच्छाशक्तिश्च प्रकृतिः सर्वशक्तिप्रसूः सदा" ब्रह्मवैवर्त्ते जन्मख० ४२ अ०। तस्य नवधा रूपं यथा "योगिनो यं वदन्त्येवं ज्योतीरूपं सनातनम्१। ज्योतिरभ्यन्तरे नित्यरूपं२ भक्ता वदन्ति यम्। वेदा वदन्ति सत्यं३ यं नित्यमाद्यं४ विचक्षणा। यं वदन्ति सुराः सर्वे परं स्वेच्छामयं प्रभुम्५। सिद्धेन्द्रा मुनयः सर्वे सर्वरूपं६ वदन्ति यम्। यमनिर्वचनीयञ्च योगीन्द्रः शङ्करो वदेत्७। स्वयं धाता च प्रवदेत् कारणानाञ्च कारणम्८। शेषो वदेदनन्तं९ यं नवधारूपमीश्वरम्। तर्काणामेव सर्वांशं षड्विधं रूपमीश्वरम्। वैष्णवानामेकरूपं वेदानामेकमेव च। पुराणानामेकरूपं तथा नवविधं स्मृतम्। न्यायोऽनिर्वचनीयञ्च यन्मतं शङ्करोऽब्रवीत्। नित्यं वैशेषिकास्त्वन्ये वदन्ति च विचक्षणाः। सांख्यो वदति तं देवं ज्योतीरूपं सनातनम्। मीमांसा सर्वरूपञ्च वेदान्तः सर्वकारणम्। पातञ्जलोऽप्यनन्तञ्च वेदाः सत्यस्वरूपकम्। स्वेच्छामयं पुराणञ्च भक्ताश्च नित्यविग्रहम्" इति तत्रैव १२८अ०। अन्यथाऽपि सत्त्वादिगुणभेदेन तस्य चतुर्धारूपं यथा "चतुर्विभागः संसृष्टौ चतुर्धा संस्थितः स्थितौ। प्रलयञ्च करोत्यन्ते चतुर्भेदो जनार्दनः। एकेनांशेन ब्रह्माऽसौ भवत्यव्यक्तमूर्त्तिमान्। मरीचिमिश्राः पतयः प्रजानामन्यभागतः। कालस्तृतीयस्तस्यांशः सर्वभूतानि चापरः। इत्थं चतुर्धा संसृष्टौ वर्त्ततेऽसौ रजोगुणः। एकांशेन स्थितो विष्णुः करोति परिपालनम्। मन्वादिरूपी चान्येन कालरूपी परेण च। सर्वभूतेषु चान्येन संस्थितिं कुरुते स्थितः। सत्त्वं गुणमुपाश्रित्य जगतः पुरुषोत्तमः। आश्रित्य तमसो वृत्तिमन्तकाले तथा पुनः। रुद्रस्वरूपो भगवानेकांशेन भवत्यजः। अग्न्यन्तकादिरूपेण भागेनान्येन वर्त्तते।

समवृन्तकरो भीष्ट रतिं मां समयाचत। ततो मया भर्त्सितः स कुटजान्तर्गतोऽभवत्। प्रख्याप्य तेजः स गतो मम शापभयार्दितः। कुरु तत्र प्रतीकारं यदि शक्नोषि शान्तनो!। न हि तां धर्षणां सोढुं कश्चित् स शक्नोति कौरव्य। स तस्या वचनं श्रुत्वा स्वयं ब्रह्मा समागतः। इति निश्चित्य मनसा तत्र ध्यानपरोऽभवत्। दिव्यज्ञानेन स ज्ञात्वा देवकार्य्यमुपस्थितम्। तीर्थावतारयत्रापि हिताय जगतां मुनिः। ज्ञात्वोदर्कं चिन्तयित्वा स्वभार्य्यामिदमब्रवीत्। इदं तेजो ब्रह्मणस्त्वं विद्धामोघे महाशया। हिताय सर्व्वजगतां देवकार्य्यार्थसिद्धये। भवत्या निकटे ब्रह्मा स्वयमेव समागतः। त्वामप्राप्य स महात्मा च्यावयोः स समर्प्य च। गतो निजाश्रमं तस्य कर्त्तुमर्हसि सद्वचः। तत् श्रुत्वा शान्तनोर्वाक्यममोघातीव लज्जिता। सन्त्रपन्तीव तं प्राह पतिं नत्वा महासती। नाम्यथ तेजो धास्यामि न चेत्ते विमनस्कता। अवश्यं यदि कर्त्तव्यं पीत्वा त्वं मयि चोत्सृज। ततस्तस्या वचः श्रुत्वा युक्तं तथ्यञ्च शान्तनुः। स्वयं पीत्वा च तत्तेजस्तस्या गर्भेऽभ्यषेचयत्। सञ्चारिते शान्तनुना तेजोभिर्ब्रह्मणः सती। गर्भं दधारामोघाख्या हिताय जगतां ततः। तस्यां काले तु सम्प्राप्ते संजातो जलसञ्चय। तन्मध्ये तनयश्चापि नीलवासाः किरीटधृक्। रत्नमालासमायुक्तो रक्तगौरश्च ब्रह्मवत्। चतुर्भुजः पद्मविद्यावरशक्तिधरस्तथा। शिशुमारशिरस्थश्च तुल्यकायो जलोत्करैः। तं जातञ्च तथाभूतं शान्तनुर्लोकशान्तनुः। चतुर्णां पर्वतानाञ्च मध्यदेशे न्यवेशयत्। कैलासश्चोत्तरे पार्श्वे दक्षिणे गन्धमादनः। जारुधिः पश्चिमे चैव पूर्वे संवर्त्तकाह्वयः। तेषां मध्ये स्वयं कुण्डं पर्वतानां विधेः सुतः। कलयाऽतिववृधे नित्यं शरदीव निशाकरः। तं तोयमध्यगं प्रत्यमासाद्य ब्रह्मर्षिः स्वयम्। क्रमतस्तस्य संस्कारानकरोद्देहवृद्धये। अथ काले बहुतिथे व्यतीते ब्रह्मणः सुतः। तोयराशिस्वरूपेण ववृधे पञ्च योजनाम्। तस्मिन् देवाः पपुः सर्व्वे द्वितीय इव सागरे। शीतामलजले हृद्ये देव्याप्सरसां गणैः। तस्मिन्नवसरे रामो जामदग्न्यः प्रतापवान्। चक्रे मातृवधं घोरमत्युग्रं पितुराज्ञया। तस्य पापस्य मोक्षाय स्वपितुश्चोपदेशतः। स जगाम महाकुण्डं ब्राह्माख्यं स्नातुमिच्छया। तत्र स्नात्वा च पीत्वा च कृत्वा पापमपानयत्। तीर्थं

परशुना कृत्वा तस्य कूलमवातारयत्" तदुक्तम् "ब्रह्मकुण्डात् सुतः सोऽथ कासारे लौहिताह्वये। कैलासोपत्यकायान्तु न्यपतद् ब्रह्मणः सुतः। तस्यापि सरसस्तीरं समुत्ताल्य महाबलः। कुठारेण दिशं पूर्वामनयद् ब्रह्मणः सुतम्। ततोऽपरत्रापि गिरिं हेमशृङ्गं विभिद्य च। कामरूपान्तरं पीठमवाहयदसौ हरिः। तस्य नाम विधिश्चक्रे स्वयं लौहितगङ्गकम्। लौहित्यात् सरसो जातो लौहित्याख्यस्ततोऽभवत्। स कामरूपमखिलं पीठमाप्लाव्य वारिणा। गोपयन् सर्व्वतीर्थानि दक्षिणं याति सागरम्। प्रागेव दिव्ययमुनां संत्यज्य ब्रह्मणः सुतः। पुनः पतति लौहित्ये गत्वा द्वादशयोजनम्। चैत्रे मासि सिताष्टम्यां यो नरो नियतेन्द्रियः। स्नाति लौहित्यतोयेषु स याति ब्रह्मणः पदम्। चैत्रन्तु सकलं मासं शुचिः प्रयतमानसः। लौहित्यतोये यः स्नाति स कैवल्यमवाप्नुयात्" कालिकापु० ८४।८५ अ० "मीने मधौ शुक्लपक्षे अशोकाख्या तथाष्टमी। पिबेच्छोककलिकाः स्नायाल्लौहित्यवारिणि। पुनर्वसौ बुधे लग्ने चैत्रे मासि सिताष्टमीम्। लौहित्ये विरजे स्नायात् सर्व्वपापैः प्रमुच्यते" ति०त०।

**ब्र(व्र)ह्मपुर** न० ६त०। १ब्रह्मण उपासनार्थे हृदयस्थाने "अथ यदिदं ब्रह्मपुरे दहरं पुण्डरीकम्" छा० उ०। दहरशब्दे ३५१० पृ० दृश्यम्। "यः सर्व्वज्ञः सर्व्ववित् यस्यैष महिमा भुवि। दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः" मुण्डकोप०। "ब्रह्मणोऽत्र चैतन्यस्वरूपेण नित्याभिव्यक्तत्वाद्ब्रह्मणः पुरं हृदयपुण्डरीकं तस्मिन्" भा०। २विधातृनगर्य्यां ३काश्याञ्च वा स्त्री ङीप् तत्रार्थे। वृ०सं०१४अ०उक्ते ऐशानदिक्स्थे ४देशभेदे पु० (वरमा) देशे स्वार्थे क। तत्रार्थे मार्कपु० पूर्वोत्तरकूर्म्मभागस्थदेशोक्तौ।

**ब्र(व्र)ह्मपुराण** न० वेदव्यासप्रणीते महापुराणभेदे तत्प्रतिपाद्यविषयाश्च वृहन्नारदीये ४पा० ९२अ० उक्ता यथा "ब्राह्मं पुराणं तत्रादौ सर्व्वलोकहिताय वै। व्यासेन वेदविदुषा समाख्यातं महात्मना। तद्वै सर्व्वपुराणाग्र्यं धर्म्मकामार्थमोक्षदम्। नानाख्यानेतिहासाढ्यं दशसाहस्रमुच्यते" तत्पूर्व्वभागे "देवानामसुराणाञ्च यत्रोत्पत्तिः प्रकीर्त्तिता। प्रजापतीनाञ्च तथा दक्षादीनां मुनीश्वर!। ततो लोकेश्वरस्यात्र सूर्य्यस्य परमात्मनः। वंशानुकीर्त्तनं पुण्यं महापातकनाशनम्। तत्रावतारः कथितः परमानन्दरूपिणः। श्रीमतो रामचन्द्रस्य चतुर्व्यूहावतार-

कालस्वरूपो भागोऽन्यः सर्वभूतानि चापरः। विनाशकर्त्तृत्वस्य चतुर्द्धैव महात्मनः" विष्णुपु० १अंशे २अ०। वेधाश्च रजोगुणप्रधानोपाधिकं कार्य्यब्रह्म। ऋत्विग्भेदश्च ब्रह्मावाचकशब्दे ८५ पृ० दर्शितेषु प्रधानेषु चतुर्षु ऋत्विक्षु मध्ये एकतमः। "त्रयाणामपराधे तु ब्रह्मा परिहरेत् सदा" आश्व० भाष्यधृतकारिका। "त्रयाणामध्वर्य्युद्गातृहोतृणां वेदत्रयविदां मध्ये कस्यचित् योऽसौ ब्रह्मनामको वेदत्रयसम्बन्धिविहितकर्मविषये कस्य साधोर्न्यूनभावो यदि जायते तस्यापराधस्य परिहारं प्रतीकारं कुर्य्यात्' इति तदर्थः। "यज्ञस्य हैव भिषक् ब्रह्मेति" भाष्यधृतश्रुत्यन्तरम्। अतएवास्य कृताकृतावेक्षणार्थं वरणमन्यत्रोक्तम्। १०वृहस्पतौ च ब्रह्मपुरोहितशब्दे दृश्यम्।

ब्र(ब्र)ह्मनाल न० ब्रह्मणो नालमिव। काश्यां मणिकर्णिकासमीपस्थे तीर्थभेदे। "पितामहेश्वरं लिङ्गं ब्रह्मनालोपरि स्थितम्। पूजयित्वा नरो भक्त्या ब्रह्मलोकमवाप्नुयात्। ब्रह्मनालसमीपे तु कृतं कर्म शुभाशुभम्। परामक्षयतामेति शुभमेव ततश्चरेत्। अल्पमपि यत् कर्म कृतमत्र शुभाशुभम्। प्रलयेऽपि न तस्यास्ति प्रलयो मुनिसत्तम।। नाभीतीर्थमिदं प्रोक्तं नाभीभूतं यतः क्षितेः। अपि ब्रह्माण्डगोलस्य नाभिरेषा शुभोदया। सा मणिकर्णिकेयीय नाभिगाम्भीर्य्यभूमिका। ब्रह्माण्डगोलकं सर्वं यस्यामेति लये लयम्। ब्रह्मनालं परं तीर्थं त्रिषु लोकेषु विश्रुतम्। तत्सङ्गमे नरः स्नातः कोटिजन्माघं हरेत्। ब्रह्मनाले पतेद्देयमपि कीकसमात्रकम्। ब्रह्माण्डमण्डपान्तस्ते न विशन्ति कदाचन" काशीख० ६१अ०।

ब्र(ब्र)ह्मनिर्वाण न० ब्र(ब्र)ह्मणि निर्वाणं निर्वृतिः। ब्र(ब्र)ह्मभावलाभे सकलानर्थनिवृत्तिरूपे परमानन्दे "एषा ब्राह्मी स्थितिः पार्थ। नैनां प्राप्य विमुह्यति। स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति" गीता।

ब्र(ब्र)ह्मफल न० ब्रह्मण तपसामफलत्वस्य फलम्। फलश्रुतौ। 'मोक्षणं ब्रह्मफलेषु कथया लोचनं हृदे। दर्शनं वैश्यमानात्तु महापातकनाशनम्' पाद्मोत्तरख० ११८अ०।

ब्र(ब्र)ह्मपर्णी स्त्री ब्र(ब्र)ह्मेव विस्तीर्णानि मूलादारभ्य स्थितानि पर्णान्यस्याः ङीप्। पृश्निपर्ण्याम् राजनि०।

ब्र(ब्र)ह्मपवित्र पु० ब्र(ब्र)ह्मेव वेदोक्तकर्मेव वा पवित्रः। कुशे राजनि०।

ब्र(ब्र)ह्मपादप पु० ब्र(ब्र)ह्मणः प्रियः वैदिककर्मोपयोगित्वात् विप्र(ब्र)ह्मचारिधार्य्यदण्डार्थत्वाद्वा ब्रह्मनामकत्वाद्वा पादपः। पलाशवृक्षे हेमच०। "पलाशो वै ब्रह्म" शत०ब्रा०। पलाशशब्दे दृश्यम्।

ब्र(ब्र)ह्मपुत्र पु० ब्र(ब्र)ह्मणः पुत्र इव कपिलवर्णत्वात्। १विषभेदे अमरः। तद्विषस्य वत्सनाभभेदत्वं यथा "वर्णतः कपिलो यः स्यात्तथा भवति सारतः। ब्रह्मपुत्रः स विज्ञेयो जायते मलयाचले"। २उत्तरदेशगर्भस्थे नदभेदे ३क्षेत्रभेदे च। ४शरवत्यां नद्यां स्त्री। तस्याः पितामहजातत्वं ब्रह्मपीठशब्दे दृश्यम्। तस्य नदस्योत्पत्तिकथा "हरिवर्षे महावर्षे शान्तनुर्नाम नामतः। मुनिरासीन्महाभागो ज्ञानवान् स तपोधनः। तस्य भार्य्या महाभागा अमोघाख्या बभूव सती। हिरण्यगर्भस्य मुनेस्तु पद्मन्दाश्रमोत्तमा। तया सार्द्धं स कैलासस्योत्तरपर्वतेऽवसत्। लोहितास्यस्य सरसस्तीरे वै गन्धमादने। एकदा स तपोनिष्ठो निजपुष्पादिसञ्चये। जगाम वनमध्यन्तु चिन्वन् बहु फलानि च। तस्मिन्नवसरे ब्रह्मा सर्वलोकपितामहः। तत्राजगाम यत्रास्ते अमोघा शान्तनोः प्रिया। तां दृष्ट्वा देवगर्भाभां युवतीमतिसुन्दरीम्। मोहितो मदनेनाशु तदाऽभूत् क्षुभितेन्द्रियः। उदीरितेन्द्रियो भूत्वा किञ्चिद्धर्षाच्च हासतीम्। अथाधावत्तदा ब्रह्मा बध्नुको मदनार्दितः। आयान्तं विधातारं दृष्ट्वाऽमोघा महासती। नैवमिति प्रोच्य पर्णशाला न्यवीशत। इत्युवाच धातारममोघा कुपिता तदा। पर्णशालान्तरगता द्वारमाहत्य तद्रुपात्। अकार्य्यं न मया कार्य्यं मुनिपत्न्या विगर्हितम्। बलाद् यद्यथवा चेष्टास्तावच्छपाम्यहम्। अमोघया चैवमुक्ते विधातुश्च गता त्रपा।। रेतश्चस्कन्द च तदैवाश्रमे शान्तनोर्मुनेः। च्युतरेतसि धातापि हंसयानं समास्थितः। लज्जयाति परीतात्मा द्रुतं वै स्वाश्रमं ययौ। गते वेधसि शान्तनुर्निजमाश्रममागतः। आगत्य दृष्टवान् पदयोर्नतया भुवि। तेजश्च पतितं भूमौ विधातुर्ज्वलनोपमम्। अमोघां परिपप्रच्छ पर्णशालान्तरस्थिताम्। किमेतदत्र सुभगे। सहसा दृश्यते तु यत्। ब्रूहि चाशु पद्मयोनेस्तेजश्चेदत्र कीदृशम्। सा तत्र वचनं श्रुत्वा शान्तनुं मुनिसत्तमम्। अमर्षेणेव स्वकदाकृत्य विज्ञानवा। हृदयुक्तसन्दनेन कोऽभ्यागत भवेच्च।

मदनातुरो मोहं रतिं मां समयाचत । ततो मया भर्त्सितः स कुटजान्तरकोपवान् । प्रच्याव्य तेजः स गतो मम शापभयार्दितः । अद्य तत्प्रतीकारं यदि शक्नोषि शान्तनो ! । न हि तां धर्षितां सोढुं कश्चित् शक्नोति कोपवान् । स तस्या वचनं श्रुत्वा स्वयं ब्रह्मा समागतः । इति निश्चित्य मनसा तत्र ध्यानपरोऽभवत् । दिव्यज्ञानेन स ज्ञात्वा देवकार्य्यं समुपस्थितम् । तीर्थावतारणमपि हिताय जगतां मुनिः । ज्ञात्वोदकं निक्षिपित्वा स्वभार्यामिदमब्रवीत् । इदं तेजो ब्रह्मणस्त्वं विधामोघे ! समाश्रय । हिताय सर्वजगतां देवकार्य्यार्थसिद्धये । भवत्या निकटे ब्रह्मा स्वयमेव समागतः । त्वामप्राप्य स महात्मा व्यथयोः स समर्थ्य च । गतो निजाश्रमे तस्य कर्त्तुमर्हसि मद्वचः । तत् श्रुत्वा शान्तनोर्वाक्यममोघातीव लज्जिता । स त्वयन्तीव तं प्राह पतिं मत्वा महासती । नान्यस्य तेजो धारयामि न चेत्तेऽप्रमनस्कता । अवश्यं यदि कर्त्तव्यं पीत्वा त्वं मयि चोत्सृज । ततस्तस्या वचः श्रुत्वा युक्तं तथ्यञ्च शान्तनुः । स्वयं पीत्वा च तत्तेजस्तस्या गर्भेऽभ्यषेचयत् । सङ्क्रामितैः शान्तनुना तेजोभिर्ब्रह्मणः सती । गर्भं दधारामोघाख्या हिताय जगतां ततः । तस्यां काले तु सम्प्राप्ते संजातो जलसञ्चय । तन्मध्ये तनयश्चापि नीलवासाः किरीटभृत् । रत्नमालासमायुक्तो रक्तगौरश्च ब्रह्मवत् । चतुर्भुजः पद्मविद्याधरशक्तिधरस्तथा । शिशुमारशिरस्थश्च तुल्यकायो जलोत्करैः । तं जातञ्च तथाभूतं शान्तनुर्लोककान्ततः । चतुर्णां पर्वतानाञ्च मध्यदेशे न्यवेशयत् । कैलासस्योत्तरे पार्श्वे दक्षिणे गन्धमादनः । जारुधि पश्चिमे शैलः पूर्वे संवर्त्तकाह्वय । तेषां मध्ये स्वयं कुण्डं पर्वतानां विधेः सुतः । ववृधेऽतियद्धे नित्यं शरदीव निशाकरः । तं तोयमध्यगं पुत्रमासाद्य ब्रह्मचिन्तः स्वयम् । क्रमतस्तस्य संस्कारानकरोद्वेदपारगः । अथ काले बहुतिथे व्यतीते ब्रह्मणः सुत । तोयराशिस्वरूपेण ववृधे पञ्च योजनान् । तस्मिन् देवाः पञ्च मग्ना हि तीय रूप सागरे । शीतामलजले कृत्वा देव्यश्चाप्सरसां गणैः । तस्मिन्नवसरे रामो जामदग्न्यः प्रतापवान् । चक्रे मातृवधं घोरमनु पितुराज्ञया । तस्य पापस्य मोक्षाय स्वपितुश्चोपदेशतः । स जगाम महाकुण्डं ब्रह्माख्यं स्नातुमिच्छया । तत्र स्नात्वा च पीत्वा च मातृहत्यामपानयत् । तीर्थं परशुना कृत्वा तस्य मार्गमवतारयत्" तदुक्तम् "ब्रह्मकुण्डात् सुत सोऽयं कासारे लौहिताह्वये । कैलासोपत्यकायान्तु न्यपतद् ब्रह्मणः सुत. । तस्यापि सरसस्तीरं समुत्पाद्य महाबल. । कुठारेण द्विज पूर्वामनयद्ब्रह्मणः सुतम् । ततोऽपरत्रापि गिरिं हेमशृङ्गं विभिद्य च । कामरूपान्तरं पीठमवाहयदसौ हरिः । तत्र नाम विधिश्चक्रे स्वयं लौहितगङ्गकम् । लौहित्यात् सरसो जातो लौहित्याख्यस्ततोऽभवत् । स कामरूपमखिलं पीठमाप्लाव्य वारिणा । गोपयन् सर्वतीर्थानि दक्षिणं याति सागरम् । प्रागेव दिव्ययमुना संत्यज्य ब्रह्मणः सुत । पुनः पतति लौहित्ये गत्वा द्वादशयोजनम् । चैत्रे मासि सिताष्टम्यां यो नरो नियतेन्द्रियः । स्नाति लौहित्यतोयेषु स याति ब्रह्मणः पदम् । चैत्रन्तु सकलं मास शुचिः प्रयतमानसः । लौहित्यतोये यः स्नाति स कैवल्यमवाप्नुयात्" कालिकापु० ८४।८५ अ० "मीने मधौ शुक्लपक्षे अशोकाख्या तथाष्टमीम् । पिबेच्छोककलिका स्नायाल्लौहित्यवारिणि ! पुनर्वसौ बुधे लग्ने चैत्रे मासि सिताष्टमीम् । लौहित्ये विरजे स्नायात् सर्वपापैः प्रमुच्यते" ति० त० ।

ब्र(व्र)ह्मपुर न० ६त० । १ब्रह्मण उपासनार्थे हृदयस्थाने "अथ यदिदं ब्रह्मपुरे दहरं पुण्डरीकम्" छा० उ० । दहरशब्दे ३५१० पृ० दृश्यम् । "यः सर्वज्ञः सर्ववित् यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः" मुण्डकोप० । "ब्रह्मणोऽत्र चैतन्यस्वरूपेण नित्याभिव्यक्तत्वाद्ब्रह्मणः पुरं हृदयपुण्डरीकं तस्मिन्" भा० । २विधातृनगर्य्यां ३काश्याञ्च स्त्री ङीप् तत्रार्थे । वृ०स०१४अ०उक्ते ईशानादिकस्थे ४देशभेदे पु० (वरमा) देशे स्वार्थे क । तत्रार्थे मार्कपु० पूर्वोत्तरकूर्मभागस्थदेशोक्तौ ।

ब्र(व्र)ह्मपुराण न० वेदव्यासप्रणीते महापुराणभेदे तत्प्रतिपाद्यविषयाश्च बृहन्नारदीये ९पा० ९२अ० उक्ता यथा "ब्राह्मं पुराणं तत्रादौ सर्वलोकहिताय वै । व्यासेन वेदविदुषा समाख्यातं महात्मना । तद्वै सर्वपुराणाग्र्यं धर्मकामार्थमोक्षदम् । नानाख्यानेतिहासाढ्यं दशसाहस्रमुच्यते" तत्पूर्वभागे "देवानामसुराणाञ्च यत्रोत्पत्तिः प्रकीर्त्तिता । प्रजापतीनाञ्च तथा दक्षादीनां मुनीश्वर ! । ततो लोकेश्वरस्यात्र सूर्य्यस्य परमात्मनः । वंशानुकीर्त्तनं पुण्यं महापातकनाशनम् । यत्रावतारः कथितः परमानन्दरूपिणः । श्रीमतो रामचन्द्रस्य चतुर्व्यूहाव-

वैयासिकन्यायमालायामुक्तं यथा "शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः। समन्वयाविरोधौ २द्वौ साधनं३च फलं४ तथा। समन्वये स्पष्टलिङ्ग१मस्पष्टत्वे२ऽप्युपास्यगम्३। ज्ञेयगं४ पदमात्रञ्च चिन्त्यं पादेष्वनुक्रमात्। द्वितीये स्मृतितर्काभ्यामविरोधो१ऽन्यदुष्टता२। भूतभोक्तृश्रुते३र्लिङ्गश्रुते४रप्यविरुद्धता। तृतीये विरति१स्तत्त्वम्पदार्थपरिशोधनम्२। गुणोपसंहृति३र्ज्ञाने बहिरङ्गादिसाधनम्४। चतुर्थे जीवतो मुक्ति१रुत्क्रान्ति२र्गतिरुत्तरा३। ब्रह्मप्राप्तिर्ब्रह्मलोकाविति ४पादार्थसंग्रहः"। तेन तत्र प्रत्येकं चतुष्टयपादयुताः चत्वारोऽध्यायाः। तच्च शास्त्रं बहुभिः स्वस्वमतानुसारेण व्याख्यातम् तत्र गौडपादाचार्यशङ्कराचार्यादिभिरद्वैतपरतया व्याख्यातं रामानुजादिभिश्च विशिष्टाद्वैतपरतया, वल्लभाचार्यादिभिश्च विशुद्धाद्वैतपरतया माध्वाचार्यादिभिश्च द्वैतपरतया व्याख्यातं तत्तन्मतञ्च प्रायेण तत्तच्छब्दे दृश्यम्।

ब्र(ब्र)ह्मयज्ञ पु० ब्रह्मनिमित्तकस्तदध्ययनतदध्यापनाभिनिमित्तको यज्ञः। वेदाध्ययनाध्यापनादौ अमरः। "अध्यापनं ब्रह्मयज्ञः" मनुः। "स्वाध्यायो ब्रह्मयज्ञः" विष्णुसू०। तेन वेदाध्ययनाध्यापनयोर्ब्रह्मयज्ञता।

ब्र(ब्र)ह्मयष्टि स्त्री ब्रह्मणो यष्टिरिवाचरणत्वात्। (वामनहाटि) इति ख्याते शब्दरत्ना०।

ब्र(ब्र)ह्मयुग न० ब्रह्मा विप्रस्तदुपलक्षितं युगम्। हिरण्यगर्भस्य विप्रत्वस्थितियाने कालभेदे। तच्च हरिवं० २८८।२०९ अध्याये ततः क्षत्रादियुग्युपलक्षितं तद्युग २१०अ० उक्तम्

ब्र(ब्र)ह्मयोग पु० ब्रह्मणस्तत्साक्षात्कारस्य योगः समाधिः। ब्रह्मसाक्षात्कारसाधने समाधिभेदे हरिवं० २१० अ० "एष ब्रह्मणो यज्ञो योगः सांख्यश्च तप्यतः। विज्ञानञ्च स्वभावश्च क्षेत्रं क्षेत्रज्ञ एव च। एकत्वञ्च पृथक्त्वञ्च क्षमश्च नियमस्तथा। साम कालश्चैव ज्ञेयो विज्ञानमेव" च विष्णुपुराणादिषु पञ्चविधेश योगे च।

ब्र(ब्र)ह्मयोनि पु० ब्रह्मणो योनिरुत्पत्तिस्थानम्। १ब्रह्मगिरौ शब्दर०। २ब्रह्मप्राप्त्युपायभूतामविद्यायाम् "ब्राह्मणा ब्रह्मयोनिस्था" मनुः ३ब्रह्मानुरूपे त्रि०। ४सरस्वत्या स्त्री ङीप्। "सरस्वत्यास्तु तीरे यः संत्यजेदात्मनस्तनुम्। पृथूदके जप्यपरो नैनं श्वोमरणं भवेत्। तत्रैव ब्रह्मयोन्यस्ति ब्रह्मणा यत्र निर्मिता। पृथूदकं समाश्रित्य सरस्वत्यास्तटे स्थितः। चातुर्वर्ण्यस्य सृष्ट्यर्थमात्मज्ञानपरोऽभवत्। तस्याभिध्यायतः सृष्टिं ब्रह्मणोऽव्यक्तजन्मनः। मुखतो ब्राह्मणा जाता बाहुभ्यां क्षत्रियास्तथा। ऊरुभ्यां वैश्यजातीयाः पद्भ्यां शूद्रास्ततोऽभवन्। चातुर्वर्ण्यं ततो दृष्ट्वा आश्रमस्थान् सुतांस्ततः। एवं प्रतिष्ठितं तीर्थं ब्रह्मयोनीति संज्ञितम्। तत्र स्नात्वा मुक्तिकामः पुनर्योनिं न पश्यति" वामनपु० ३९अ० उक्ते तीर्थभेदे स्त्री वा ङीप्।

ब्र(ब्र)ह्मरन्ध्र न० उत्तमाङ्गस्य रन्ध्रभेदे। "तयोर्ध्वमायन्नमृतत्वमेति" श्रुत्या तद्रन्ध्रेण प्राणोत्क्रमणे ब्रह्मलोकप्राप्तेरुक्तत्वात् तथात्वम्।

ब्रह्मराक्षस पु० ब्र(ब्र)ह्मा विप्रोऽपि कुकर्मभिः राक्षसः। कुकर्मणा विप्रयानिता राक्षसरूपतां प्राप्ते भूतभेदे "संयोगं पतितैर्गत्वा परस्यैव च योषितम्। अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षस" इति मनुः। पतितप्रतिग्रहेऽपि तद्योनिप्राप्तिः भा० आनु० ११अ० दर्शिता। तच्च वाक्यं अधर्मशब्दे १२१ पृ० दर्शितं तच्च न हरिवंशवाक्यं किन्तु अनुशासनपर्वीयमिति बोध्यम्। पारिभाषिकब्रह्मराक्षसा यथा "मूर्खः स्त्री कृपणश्चैव वाजी बधिर एव च। गृहीतार्थं न मुञ्चन्ति पञ्चैते ब्रह्मराक्षसाः" व्यवहारप्रदीप.। २शिवानुचरभेदे भाग० १०।६२अ०।

ब्र(ब्र)ह्मरात न० ब्रह्म तज्ज्ञानं रातं यस्मै। १शुकदेवे "ब्रह्मरातो भृश प्रीतो विष्णुरातेन संसदि" भाग० १।८।२७। २याज्ञवल्क्ये मुनौ हेमच० ब्रह्मरातिरिति वा पाठः। तेन हि जनकाय ब्रह्मविद्यायादानात् तथात्वम् बृहदारण्यकोपनिषदि तत्कथा दृश्या।

ब्र(ब्र)ह्मरात्र पु० रात्रेरयम् अण् ६त०। ब्रह्मसामिके रात्रिशेषभागे मुहूर्ते "उपाहृते ब्रह्मरात्रे" भा० १०।२२।२९। व्याख्यायां श्रीधरः।

ब्र(ब्र)ह्मरीति ब्रह्मणो रीतिः। पित्तलभेदे हेमच०।

ब्र(ब्र)ह्मर्षि पु० ब्र(ब्र)ह्मा विप्रः सन्नृषि ऋषिस्ततो वा ऋषिः। वेदस्य वा ऋषिः कर्त्ता। ब्रह्मतुल्येषु वसिष्ठादिषु १वेदकर्तृषु २ऋषिषु हेमच०।

ब्र(ब्र)ह्मर्षिदेश ६त०। "कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः। एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरम्" मनूक्ते कुरुक्षेत्रादिदेशचतुष्टये। [ब्रह्मन्शब्दे दृश्यम्।

ब्र(ब्र)ह्मलक्षण न० ६त०। ब्रह्मण स्वरूपतटस्थलक्षणे

ब्र(ब्र)ह्मलोक पु० ६त०। १ब्रह्माधिष्ठाने भुवने सत्यलोके "सन्तु सप्तमो लोको ह्यपुनर्भववासिनाम्।

भवति” भा०। तत्र साम कङ्गाने। ६त०। ४क०। दर्शितम्।

**ब्र(ब्र)ह्मसायुज्य** न० सह युनक्ति युज–क्विप् तस्य भावः सायुज्यं ६त०। ब्र(ब्र)ह्मभावे।

**ब्र(ब्र)ह्मसार्ष्टिता** स्त्री ६त०। ब्रह्मतुल्यगतित्वे मनुः ४।२३२।

**ब्र(ब्र)ह्मसावर्णि** पु० दशमे मनुभेदे “दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान्। तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः। हविष्मान् सुकृतः सत्यो जयो मूर्त्तिस्तदा द्विजाः। सुवासनविरुद्धाद्या देवाः शम्भुः सुरेश्वरः। विष्वक्सेनो विषूच्यान्तु शम्भोः सख्यं करिष्यति। जातः स्वांशेन भगवान् गृहे विश्वसृजो प्रभुः” भाग० ८।१३।१० [वसिष्ठादौ च।

**ब्र(ब्र)ह्मसम्भव** पु० ६त०। १जैनमते हेम० २ब्रह्मणो जाते

**ब्र(ब्र)ह्मसिद्धान्त** ६त०। पैतामहे ज्योतिषसिद्धान्तभेदे “पौलिशरोम(सोम)क वासिष्ठसौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु” ह०च०१अ०। [दशत्रम्। २मरीच्यादौ च

**ब्र(ब्र)ह्मसुत** पु० ६त०। १केतुभेदे ह०स० ११ अ० केतुशब्दे

**ब्र(ब्र)ह्मसुवर्चला** स्त्री ओषधिभेदे तत्स्थानलक्षणादिकमुक्तं सुश्रुते “देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे। दशत्रते च जलान्तेषु मध्ये ब्रह्मसुवर्चला”। “कनकाभा जलान्तेषु सर्वतः परिसर्पति। सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला”। तत्क्वथिते २जले च “पिबेत् ब्रह्मसुवर्चलाम्” मनुः।

**ब्र(ब्र)ह्मसू** पु० ब्रह्माणं सूतवान् सू–क्विप्। चतुर्व्यूहात्मकस्य विष्णोर्मूर्त्तिभेदे अनिरुद्धे तस्यावतारभेदे २चपापतौ च अमरः। “अनिरुद्धात्ततो ब्रह्मा तन्नाभिकमलोद्भवः” ब्रह्मपु०। ब्रह्मणि तपसि सुवति प्रेरयति सू–प्रेरणे क्विप्। तत्र प्रवर्त्तके ३कामे च कामेनैव सर्वतपस्सु प्रेरणात्तस्य तथात्वम्। तदभिमानिदेवे ४कन्दर्पे च अमरः।

**ब्र(ब्र)ह्मसूत्र** न० ब्रह्मणि वेदपठनकाले उचितं सूत्रम्। १यज्ञोपवीते त्रिका०। २ब्रह्मनिरूपके शारीरकसूत्रे च। “ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः” गीता।

**ब्र(ब्र)ह्मसूनु** पु० ६त०। इक्ष्वाकुवंशोद्भवे १राजभेदे ब्रह्मदत्ते हेमच० २वसिष्ठादौ च।

**ब्र(ब्र)ह्मस्तेय** ६त०। स्वाध्यायमधीयानात् गतोऽनुज्ञामप्राप्य तदा व्यवसायेन वेदाध्येतरि। “ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात्। स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते” मनु

**ब्र(ब्र)ह्मस्थान** न० ६त०। तीर्थभेदे भा० व० ८१ अ०।

**ब्र(ब्र)ह्मस्व** ६त०। ब्रह्मस्वामिके धने। “ब्रह्मस्वं वा गुरस्वं वा देवस्वं वापि यो हरेत्। स ब्रह्मघ्न इति ज्ञेयो महापापी च भारत!। अवटोदे वसेत् सोऽपि यावदिन्द्राः शतं शतम्। ततो भवेत् सुरापीति ततः शूद्रस्ततः शुचिः”। ब्रह्मवै० प्रक० ९८अ०।

**ब्र(ब्र)ह्महत्या** स्त्री० हन–क्यप् ६त०। विप्रहनने। तस्य महापातकत्वमुक्तं मनुना “ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्येव संसर्गश्चापि तैः सह” तदधिष्ठातृस्वरूपमुक्तं ब्रह्मवै० पु० जन्म० ४७ अ० यथा “रक्तवस्त्रपरीधाना वृद्धा स्त्रीवेशधारिणी। सप्ततालप्रमाणा सा शुष्ककण्ठौष्ठतालुका। ईषाप्रमाणदशना महाभीतश्च कातरम्। धावन्तं परिधावन्ती बलिष्ठाहतचेतनम्। खड्गहस्ता हतास्त्रं तं दयाहीना च मूर्च्छितम्। इन्द्रो दृष्ट्वा च तां घोरां स्मारं स्मारं गुरोः पदम्। विवेश मानससरो मृणालसूक्ष्मसूत्रतः। तत्र गन्तुं न शक्ता सा ब्रह्मणः शापकारणात्”। इत्था सुरवधनिमित्तकब्रह्महत्यापनोदनाय शक्रेणाश्वमेधे कृते तस्या विभज्य स्थानविशेषे सङ्क्रामणकथा भा० उ० उ० १२अ० यथा “तत्राश्वमेधः सुमहान् महेन्द्रस्य महात्मनः। ववृते पावनार्थं वै ब्रह्महत्यापहो नृप!। विभज्य ब्रह्महत्यां तु वृक्षेषु च नदीषु च। पर्वतेषु पृथिव्याञ्च स्त्रीषु चैव युधिष्ठिर!” आतिदेशिकब्रह्महत्याः कतिचित् ब्रह्मवै० प्रक० २७अ० उक्ता यथा

“श्रीकृष्णे च तदंशायां तन्मय्यां प्रकृतौ तथा। शिवे च शिवलिङ्गे वा सूर्ये सूर्यतनौ तथा। गणेशे वा तदंशायामेवं सर्वत्र सुन्दरि!। यः करोति भेदबुद्धिं ब्रह्महत्यां लभेत् तु सः। स्वगुरौ स्वेष्टदेवेषु जन्मदातरि मातरि। करोति भेदबुद्धिं यो ब्रह्महत्यां लभेत् तु सः। वैष्णवेष्वन्यभक्तेषु, ब्राह्मणेष्वितरेषु च। करोति समतां यो हि ब्रह्महत्यां लभेत् तु सः। हरेः पादोदकेऽन्यदेवपादोदके तथा। करोति समतां यो हि ब्रह्महत्यां लभेत् तु सः। विष्णौ विष्णुनैवेद्ये चान्यदैनैवेद्यके तथा। करोति समतां यो हि ब्रह्महत्यां लभेत् तु सः। सर्वेश्वरेश्वरे कृष्णे सर्वकारणकारणे। सर्वाद्ये सर्वदेवानां सेव्ये सर्वात्मनात्मनि। मायया भेदरूपे श्राव्येऽतत्त्वेव हि निर्गुणे। करोत्यन्येन समतां ब्रह्महत्यां लभेत् तु सः। पितृश्राद्धेन गौर्वेदवेदविनिर्मितम्। यः करोति तन्निषेधं ब्रह्महत्यां स विन्दति। ये निन्दन्ति हृषीकेशं तन्मन्त्रोपासकं तथा।

पवित्राणां पवित्रञ्च ब्रह्महत्यां लभन्ति ते। ये निन्दन्ति विष्णुमायां विष्णुभक्तिप्रदां सतीम्। सर्वशक्तिस्वरूपाञ्च प्रकृतिं सर्वमातरम्। सर्वदेवस्वरूपाञ्च सर्वाद्यां सर्ववन्दिताम्। सर्वकारणरूपाञ्च ब्रह्महत्यां लभन्ति ते। कृष्णजन्माष्टमीं रामनवमीं पुण्यदां पराम्। शिवरात्रिं तथा चैकादशीं वारं रवेस्तथा। पञ्च पर्वाणि पुण्यानि ये न कुर्वन्ति मानवाः। लभन्ते ब्रह्महत्यां ते चाण्डालाधिकपापिनः। अम्बुवाच्यां भूखननं जले शौचादिकञ्च ये। कुर्वन्ति भारते वर्षे ब्रह्महत्यां लभन्ति ते। गुरुञ्च मातरं तातं साध्वीं भार्य्यां सुतं सुताम्। अनाथां यो न पुष्णाति ब्रह्महत्यां लभेत् तु सः। विवाहो यस्य न भवेत् न पश्यति सुतन्तु यः। हरिभक्तिविहीनो यो ब्रह्महत्यां लभेत् तु सः। हरेरनैवेद्यभोजी नित्यं विष्णुं न पूजयेत्। पुण्यं पार्थिवलिङ्गं वा ब्रह्महत्यां लभेत् तु सः"। आतिदेशिक्या तस्या विनाशनं हरिस्मरणगङ्गास्नानादि।

**ब्र(व्र)ह्महत्यासम** न० "अनृतञ्च समुत्कर्षे राजगामि च पैशुनम्। गुरोरलीकनिर्बन्धः समानि ब्रह्महत्यया" मनूक्ते अनुपातकभेदरूपे मिथ्याभेदकथनादौ।

**ब्र(व्र)ह्महन्** त्रि० ब्र(व्र)ह्माणं हतवान् हन-क्विप्। १विप्रहत्याकारिणि। "ब्र(व्र)ह्महा न भवत्यन्यो ब्र(व्र)ह्महा वृषलीपतिः। यस्तस्यामाहितो गर्भः स तेन ब्रा(व्रा)ह्मणो हतः" इत्युक्ते २वृषलीतौ च। "हुतोत्मतनजिह्मांशु जीवोज्जिष्टाकुलिध्वनिः। गुरोरपि च कर्त्तव्यमन्यथा ब्रह्महा भवेत्" ३इत्यादिस्मृत्युक्तातिदेशिकब्र(व्र)ह्महत्यापापयुक्ते च। तत्प्रायश्चित्तं मनुनोक्तं यथा

"ब्रह्महा द्वादश समाः कुटीं कृत्वा वने वसेत्। भैक्षाश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम्१। लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः२। प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः३। यजेत वाश्वमेधेन४ स्वर्जिता५ गोसवेन वा६। अभिजिद्विश्वजिद्भ्यां वा७। त्रिवृताग्निष्टुतापि८ वा। जपन् वान्यतमं१० वेदं योजनानां शतं व्रजेत्११। ब्रह्महत्यापनोदाय मितभुङ् नियतेन्द्रियः। सर्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत्१२। धनं वा जीवनायालं गृहं वा सपरिच्छदम्१३। हविष्यभुग्वाऽनुसरेत् प्रतिस्रोतः सरस्वतीम्१४। जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम्१५। कृतवापनो निवसेद् ग्रामान्ते गोव्रजेऽपि वा। आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः। ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजन्१६। मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च। त्रिवारं प्रतियोद्धा वा१७ सर्वस्वमवजित्य वा। विप्रस्य तन्निमित्ते वा प्राणालाभे विमुच्यते"।

**ब्र(व्र)ह्माङ्गभू** पु० ब्रह्मणोऽङ्गात् भवति भू-क्विप्। घोटके हारा०। ब्रह्मात्मभूशब्दे दृश्यम्।

**ब्र(व्र)ह्माञ्जलि** पु० ब्र(व्र)ह्मणे वेदपाठाय अञ्जलिः गुरौ कृतो विनयाञ्जलिः, स्वरविशेषज्ञापनार्थं वा कृतोऽञ्जलिः संकुचितपाणिः। वेदपाठार्थं गुरुनिकटे कार्य्ये १विनयाञ्जलौ स्वरविशेषार्थज्ञापनाय कृतसङ्कोचे २पाणिद्वये च अमरः।

**ब्र(व्र)ह्माणी** पु० ब्र(व्र)ह्माणम् आनयति जीवयति अन-णिच् अण् पूर्व०णत्वम्। ब्रह्मपत्न्यां "हंसयुक्तविमानस्था साक्षसूत्रकमण्डलुः। आयाता ब्रह्मणः शक्तिः ब्रह्माणी साऽभिधीयते" इति देवीमा०। "ब्रह्माणी ब्रह्मजननात्" देवीपु०। ब्रह्मशब्दात् ङीष् आनङ् चेति त्वपाणिनीयम्। २रेणुकानामगन्धद्रव्ये रत्नमा०। ३राजरीतौ राजनि०। ४ब्रह्मणोऽर्द्धशरीरादुत्पन्नायां शतरूपायाम्। "ततः संजपतस्तस्य भित्त्वा देहमकल्मषम्। स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत्। शतरूपा च सा ख्याता सावित्री च निगद्यते। सरस्वत्यथ गायत्री ब्रह्माणीत्युच्यते च सा" मत्स्यपु० ३अ०।

**ब्र(व्र)ह्माण्ड** न० ६त०। "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इति मनूक्ते ब्रह्मण उत्पादके अण्डाकारे १भुवनकोषे "ब्रह्माण्डभाण्डोदरभ्राम्यत्पिण्डितचण्डिमेति" वीरचरितम्।

ब्रह्माण्डसंस्था सू०सि० दर्शिता यथा

"वासुदेवः परं ब्रह्म तन्मूर्त्तिः पुरुषः परः। अव्यक्तो निर्गुणः शान्तः पञ्चविंशात् परोऽव्ययः। प्रकृत्यन्तर्गतो देवो बहिरन्तश्च सर्वगः। सङ्कर्षणोऽपः सृष्ट्वादौ तासु बीजमवासृजत्। तदण्डमभवद्धैमं सर्वत्र तमसावृतम्। तत्रानिरुद्धः प्रथमं व्यक्तीभूतः सनातनः। हिरण्यगर्भो भगवानेष छन्दसि पठ्यते। आदित्यो ह्यादिभूतत्वात् प्रसूत्या सूर्य उच्यते। परं ज्योतिस्तमःपारे सूर्योऽयं सवितेति च। पर्य्येति भुवनान्येष भावयन् भूतभावनः" इत्युपक्रमे "गुणकर्मविभागेन सृष्ट्वा प्राग्वदनुक्रमात्। विभागं कल्पयामास यथास्वं वेददर्शनात्। ग्रहनक्षत्रताराणां भूमेर्विश्वस्य वा विभुः। देवा-

स्थापयामास तस्मिन् स्वर्णसंस्थापनादस्याष्टदिक्षु तत्समा-
पद्यते । न च दिग्गजाष्टकसंयुक्तं लोकपालोपेतमित्या-
दिना एक एव तावद्ब्रह्माण्डरूपो निर्माप्यत इति ब्र-
ह्माण्डपदस्य स्वरूपेणैव दिग्गजादिप्रतिमानिर्मितो
न कश्चिद्बाध इति वाच्यं, "स्थापयेत् कारयेदिति" पुन-
रुक्तिरुपदेशानर्थक्यापत्तेः । अत्र प्रमाणपरिमाणानां प्र-
तिमानामङ्गुष्ठपर्वप्रभृतिवितस्तिपर्य्यन्तं यथाशक्ति परिमाणं
कल्पनीयम् । "पूर्वकुम्भान् स्थापयेदित्यत्र समन्तादिति
बोध्यम् । "दद्याच्च धेनवो देया सहेमाम्बरदोहनाः" । पा-
दुकोपानच्छत्रचामरासनदर्पणैः । भक्ष्यभोज्यान्नदीपेक्षु-
फलमाल्यानुलेपनैः । होमाधिवासनान्ते च स्थापितो
वेदपुङ्गवैः । इत्युच्चारयेन्मन्त्रं त्रिःकृत्वा प्रदक्षिणम्" ।
सहेमाम्बरदोहना इति, हेमशृङ्ग्यः ताम्रदोहना व-
स्त्राः पार्श्वतो दक्षिणार्थमुपकल्पनीयाः । तत्राचार्य्याय
द्वे, ऋत्विग्भ्योऽष्टौ संप्रदेया, जापकादीनां चान्यैव
यथाशक्ति दक्षिणेति, । भविष्योत्तरे तु "ध्येयं निष्कशतं
पार्थेत्यादिना स्वर्णेनैव दक्षिणार्थमुपकल्पनीयमित्युक्तं,
स्नानाधिवासनदिनादन्येद्युरग्निकुण्डे तु ऋत्विगुपवेशना-
दिकर्मशेषसमाप्तौ तुलापुरुषदानवद्विहितायां, पूर्ववदेव
स्नापितः शुक्लमाल्याम्बरधरो गृहीतकुसुमाञ्जलिर्यजमानो
ब्रह्माण्डं त्रिःप्रदक्षिणीकृत्य मन्त्रमुच्चारयेत् । मन्त्रः । "नमो-
ऽस्तु विश्वेश्वर ! विश्वधाम ! जगत्सवित्रे भगवन्नमस्ते ।
सप्ताधिलोकामरभूतलेन गर्भेण सार्द्धं वितराभिरक्षाम् ।
ये दुःखितास्ते सुखिनो भवन्तु प्रयान्तु पापानि चरा-
चराणाम् । त्वद्दानशस्त्राहतपातकानां ब्रह्माण्डदोषाः
प्रलयं प्रयान्तु । एवं प्रणम्यामरविश्वगर्भं दद्याद्द्विजेभ्यो
दशधा विभज्य । भागद्वयं तत्र गुरोः प्रकल्प्य समं भजे-
च्छेषमतः क्रमेण" । दानवाक्यं तुलापुरुषवद्वेदितव्यं
तत्र दशधा विभज्य गुरोर्भागद्वयं प्रकल्प्य अवशिष्टाष्ट-
भागानामेकैकं भागं त्रिधा विभज्य चतुर्विंशतिसंख्येभ्य
ऋत्विगादिभ्यः समं दद्यात्, तदनुज्ञयान्येभ्योऽपि ब्राह्म-
णेभ्यो दद्यात् । "अत्रं होमं गुरुरेक एव कुर्य्यादेकाग्नि-
विधानमुक्तम् । स एव सपूज्यतमोऽत्र विप्रैर्गोभूमिरत्ना-
म्बराद्यैरपि" । विंशतिपलादारभ्य पलसहस्रावधिद्रव्ये
ब्रह्माण्डे वक्ष्यमाणतद्वर्त्तिदिग्गजमध्यमादित्यैर्विश्वकल्प-
नाया कनीयोभागस्यापत्यमवश्येव, विंशतिपलनिर्मित
ब्रह्माण्डपत्तनिस्मे उक्तविंशतिपलादर्वाक् यथाशक्ति-
विधाने कल्पनमप्यनन्तमिति केचित् । एकाग्निविधानम्
एकस्मिन्नेव कुण्डे होमकरणम् कुण्डमपि मध्यदिग्-
भागस्थितं हस्ताकारञ्च कार्य्यं तदेतत्परिभाषायामुपपा-
दितम् । अथ पुण्याहवाचने कृते देवतावेदीसमीपं गत्वा
पूर्ववद्यजमानेन देवतापूजायां विहितायामाचार्य्यो विस-
र्जनं विदध्यात् । "इत्थं य एतदखिलं पुरुषोऽत्र कुर्य्या-
द्ब्रह्माण्डदानमधिगम्य महद्विमानम् । निर्धूतकल्मष-
विशुद्धतनुर्मुरारेरानन्दकृत् पदमुपैति सहाप्सरोभिः ।
सन्तारयेत् पितृपितामहपुत्रपौत्रबन्धुप्रियातिथिकलत्र-
शताष्टकं सः । ब्रह्माण्डदानशकलीकृतपातकौघमानन्द-
येच्च जननीकुलमप्यशेषम् । इति पठति शृणोति वा य
एतत् सुरभवनेषु गृहेषु धार्म्मिकाणाम् । मतिमपि च
ददाति मोदते सोऽमरपतिभवने सहाप्सरोभिः" ।
"राजोवाच विधिं ब्रह्माण्डदानस्य ज्ञात्वा च मोक्ष-
भाग्भवेत् । कालं देशं द्विजं तीर्थं सर्वमेत-
द्वदस्व मे । कृतेन येन धर्म्मस्य फलभागी भवा-
म्यहम् । शुश्रूषितस्तस्य भावस्य मोक्षं स्पष्टं चिराय मे ।
वशिष्ठ उवाच "एवं श्रुत्वा ततो राजन् । पुरोधास्तस्य
तं द्विज. । ब्रह्माण्डं कारयामास सौवर्णं सर्वधातुभिः ।
पीठं निष्कशतेनैव पद्मं तत्र प्रकल्पयेत् । तत्र ब्रह्मा
तस्य मध्ये पद्मरागैरलङ्कृत । सावित्र्या चैव गायत्र्या
ऋषिभिस्त्रिभिः सह । नारदाद्यैः सुतैः सर्वैरिन्द्राद्यैश्च
सुरैस्तथा । सौवर्णविग्रहाः सर्वे ब्रह्मणस्तु पुरःसराः ।
नाराहरूपो भगवान् लक्ष्म्या सह सनातनः । नीला-
म्बरतांश्चैव भूषावानस्य कारयेत् । रजतस्य विधाय
देहं रुद्रस्य कारयेत् । गोमेदकैस्तस्य शोभाङ्कारयेदथ
बुद्धिमान् । मौक्तिकैश्चापि शोभस्य शोभां वज्रकैर्दिवा-
करैः" । सावित्रीगायत्र्यौ तु, ब्रह्मणः पार्श्वभागे स्थाप-
नीयौ । तदाह नारदः "सावित्री दक्षिणे पार्श्वे गायत्री
वाम वामतः । विलोकयन्त्यौ ब्रह्माणं साक्षसूत्रकमण्ड-
लुम्" । ऋषयः सप्त गौतमाद्याः तदुक्तमादित्यपुराणे "गौ-
तमश्च भरद्वाजो विश्वामित्रश्च काश्यपः । जमदग्नि-
र्वशिष्ठोऽत्रिः सप्त वैवस्वतेऽन्तरे" । सप्तर्षिरूपमाह
यम "सप्तर्षयस्तु जटिलाः कमण्डल्वक्षसूत्रिणः । ध्यान-
निष्ठा वशिष्ठस्तु कार्य्यो भार्य्यासमन्वित" । सनको
नारदाद्याः, नारदाद्यैरिति तेषां विशेषणम्" । तानाह
मनुः "अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ।
पतीन् प्रजानामसृजं महर्षीनादितो दश । मरीचि-
मत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् । प्रचेतसं वशिष्ठञ्च

भृगुनारदमेव च"। तद्ब्रह्माण्डं विश्वकर्म्मा "जटिलाः श्मश्रुलाः शान्ता दण्डाऽऽश्रमनिषण्णताः। कमण्डलुधरा कार्य्या मुनयो द्विभुजाः सदा। तेषु ब्रह्मभुजान् वर्ज्जित चौरस्तु नारदः। कर्पूरगौरदेहश्च वाद्यमूलकमण्डलुः"। इत्यादिरूपाण्यपि प्रागभिहितानि। वाराहरूप विष्णु-धर्म्मोत्तरे "वाराहरूपः कार्य्यस्तु शेषोपरिगतः प्रभुः। शेषश्चतुर्भुजः कार्य्यश्चारुरत्नफणान्वितः। कर्त्तव्यौ घोर-मुसलौ करयोस्तस्य यादव!। सर्पभूषण कर्त्तव्यस्तथैव रचिताञ्जलिः। आलीढस्थानसंस्थानस्तत्पृष्ठे भगवान् भवेत्। वामारत्निगता तस्य योषिद्रूपा वसुन्धरा। नमस्कारपरा तस्य कर्त्तव्या द्विभुजा शुभा। यस्मिन् भुजे धरा देवी तत्र शङ्खः करे भवेत्। अन्ये तस्य कराः कार्य्याः पद्मचक्रगदाधराः। पद्माद्यस्था कुर्व्वीत श्रियं त्रैलोक्यमातरम्। गौरवर्णां शुक्लपाश्च सर्व्वालङ्कारभूषिताम्। रौप्यपद्मकरव्यग्रां वरदां दक्षिणेन तु"। इदरूपं प्रागभिहित पञ्चवर्णानि तद्वर्णेव नवपट्टानि वस्त्राणि। सर्व्ववर्णानि पञ्चसमानवर्णानि, रत्नानि भूषणार्थं दापयेदित्यर्थः। सर्व्वधातुभिः ब्रह्माण्डं कर्त्तव्यमित्युक्तं, तत्र सुवर्णस्य पीठनिर्माणादिविनियोगमभिधायेदानीं धात्वन्तरैः कर्त्तव्यं तदुच्यते "पीठात् सप्तगुणं रौप्यं रौप्यात्ताम्रं तथाविधम्। ताम्रात् सप्तगुणं कार्य्यं कांस्यमत्र नराधिप!। त्रपुणः परत सीसं तावल्लौहं च कारयेत्। सप्तद्वीपाः समुद्राश्च सप्तैव कुलपर्व्वताः। अनया संख्यया ज्ञात्वा निपुणैः शिल्पिभिः कृताः"। तथाविधं सप्तगुणमित्यर्थः सप्तद्वीपा इत्यादि एतेषामेकैकधातुना एकैकं द्वीपं समुद्रं कुलाचलञ्च रचयेदित्यर्थः। "यादृशानि च भूतानि राजतान्येव कारयेत्। आरण्यानि च सत्त्वानि सौवर्णानि च कारयेत्। वृक्षान् पनसतैलाञ्च तण्डुलौः सर्व्वदश"। याद·शानि, जलचराणि, पुष्पफलवन्तो वृक्षाः अपुष्पाः फलिनो वनस्पतयः, वीरुधो गुल्मलतादयः। "एवं प्रकल्प्य विधिवत्तीर्थे देयं विचक्षणैः। कुरुक्षेत्रे गयायां च तथानेऽमरकण्टके। द्वारवत्यां प्रभासे च गङ्गाद्वारे च पुष्करे। तीर्थेष्वेतेषु वै देयं चन्द्रे सोमसूर्य्ययोः। दिनक्षयेषु सर्व्वेषु अयने दक्षिणोत्तरे। अतीपाते सप्तगुणं विषुवे च विशेषतः। दातव्यमेतद्राजेन्द्र! वितानं मे कारयेत्। वामाग्निकोणेऽर्च्य विप्रं दक्षपक्षे सुप्रतिष्ठितम्। चन्दनं च कुङ्कुमं मूर्द्धिनि दि-भूषणैः। पुरोहितं समस्तञ्च ततोऽन्यांश्च तथर्त्विजः। चतुर्व्विंशद्गुणोपेतान् सपत्नीकानिमन्त्रितान्। अहताम्बरसंछन्नान् स्रग्विणः सुविभूषितान्। अङ्गुलीयकरत्नानि कर्णवेष्टांश्च दापयेत्। एवं विधाय सम्पूज्य तेषामग्रे स्वयं स्थितः। अष्टाङ्गप्रणिपातेन प्रणम्य च पुनः पुनः। पुरोहिताय पुरतः कृत्वा वै करसंपुटम्। यूयं वै ब्राह्मणा धात्रा, भेतत्वे मानुषरूपताम्। भोज्येनेह भवताम्भवेत् पूतोऽमरः स्वयम्। भवता प्रीतियोगेन स्वयं प्रीतः पितामहः। ब्रह्माण्डेन तु दत्तेन तेषां प्रीतो जनार्द्दनः। पिनाकपाणिर्भगवान् यक्षश्च त्रिदशेश्वरः। एते वै तोषमायान्ति अनुध्याता द्विजोत्तमैः। एवं स्तुत्वा ततो राजा ब्राह्मणान् वेदपारगान्। ब्रह्माण्डं गुरवे प्रादात् स-विधानं पुनः पुनः। सर्व्वकामैस्ततस्तुष्टो ययौ स्वर्गं नराधिपः। तेनापि गुरुणा तच्च विभक्तं ब्राह्मणैः सह। दत्तस्तैरपि चान्येभ्यो ब्रह्माण्डभागो नराधिप!। ब्रह्माण्डं भूमिदानं च प्राह्यं नैकेन तद्भवेत्। एकस्तन्दोषमवाप्नोति ब्रह्महत्या न संशयः। सर्व्वेषाञ्चैव प्रत्यक्षं दातव्यं तन्नराधिप!। दीयमानञ्च पश्यन्ति तेऽपि पूता भवन्ति हि। दर्शनादेव ते पूता भवेयुर्नात्र संशयः"। पद्मपुराणोक्तस्तद्विधिर्यथा

"शृणु वत्स! प्रवक्ष्यामि ब्रह्माण्डाख्यं पुरातनम्। तच्च द्वादशसाहस्रं भाविकल्पकथायुतम्। प्रक्रियाख्योऽनुषङ्गाख्यः उपोद्घातस्तृतीयकः। चतुर्थ उपसंहारः पादाश्चत्वार एव हि। पूर्व्वपादद्वयं पूर्व्वो भागोऽत्र समुदाहृतः। तृतीयो मध्यमो भागश्चतुर्थस्तूत्तरो मतः। तत्र पूर्व्वभागे प्रक्रियापादे "आदौ कृत्यसमुद्देशो नैमिषाख्यानकं ततः। हिरण्यगर्भोत्पत्तिश्च लोककल्पनमेव च। एष वै प्रथमः पादो द्वितीयं शृणु मानद"। पूर्व्वभागे अनुषङ्गपादे "कल्पमन्वन्तराख्यानं लोकज्ञानं ततः परम्। मानससृष्टिकथनं रुद्रप्रसववर्णनम्। महादेवविभूतिश्च ऋषिसर्गस्ततः परम्। अग्नीनां विचयश्चाथ कालसद्भाववर्णनम्। प्रियव्रतान्वयोद्देशः पृथिव्यायामविस्तरः। वर्णनं भारतस्यास्य ततोऽन्येषां निरूपणम्। जम्ब्वादिसप्तद्वीपाख्या ततोऽधोलोकवर्णनम्। ऊर्द्ध्वलोकानुकथनं ग्रहचारस्ततः परम्। आदित्यव्यूहकथनं देवग्रहानुकीर्त्तनम्। नीलकण्ठाह्वयाख्यानं महादेवस्य वैभवम्। अमावास्यानुकथनं युगतत्त्वनिरूपणम्। यज्ञप्रवर्त्तनञ्चाथ युगयोरन्त्ययोः कृतिः। युगप्रजालक्षणञ्च ऋषि-

प्रवरवर्णनम्। वेदानां व्यसनाख्यानं स्वायम्भुवनिरूपणम्। शेषमन्वन्तराख्यानं पृथिवीदोहनं ततः। चाक्षुषेऽद्यतने सर्गो द्वितीयोऽङ्घ्रिः पुरोदले”। मध्यभागे उपोद्घातपादे “अथोपोद्घातपादे तु सप्तर्षिपरिकीर्त्तनम्। प्राजापत्यान्वयस्तस्माद्देवादीनां समुद्भवः। ततो जयाभिव्याहारौ मरुदुत्पत्तिकीर्त्तनम्। काश्यपेयानुकथनम् ऋषिवंशनिरूपणम्। पितृकल्पानुकथनं श्राद्धकल्पस्ततः परम्। वैवस्वतसमुत्पत्तिः सृष्टिस्तस्य ततः परम्। मनुपुत्रान्वयश्चातो गान्धर्वस्य निरूपणम्। इक्ष्वाकुवंशकथनं वंशोऽत्रेः सुमहात्मनः। अमावसोरन्वयश्च रजेश्चरितमद्भुतम्। ययातिचरितञ्चाथ यदुवंशनिरूपणम्। कार्त्तवीर्य्यस्य चरितं जामदग्न्यं ततः परम्। वृष्णिवंशानुकथनं सगरस्याथ सम्भवः। भार्गवस्यानुचरितं तथा कार्त्तवधाश्रयम्। सगरस्याथ चरितं भार्गवस्य कथा पुनः। देवासुराहवकथा कृष्णाविर्भाववर्णनम्। इनस्य च स्तवः पुण्यः शुक्रेण परिकीर्त्तितः। विष्णुमाहात्म्यकथनं बलिवंशनिरूपणम्। भविष्यराजचरितं सम्प्राप्तेऽथ कलौ युगे। एवमुद्घातपादोऽयं तृतीयो मध्यमे दले”। उत्तरभागे उपसंहारपादे “चतुर्थमुपसंहारं वक्ष्ये खण्डे तथोत्तरे। वैवस्वतान्तराख्यानं विस्तरेण यथातथम्। पूर्वमेव समुद्दिष्टं संक्षेपादिह कथ्यते। भविष्याणां मनूनाञ्च चरितं हि ततः परम्। कल्पप्रलयनिर्द्देशः कालमानं ततः परम्। लोकाश्चतुर्दश ततः कथिता मानलक्षणैः। वर्णनं नरकाणाञ्च विकर्माचरणैस्ततः। मनोमयपुराख्यानं लयः प्राकृतिकस्ततः। शैवस्याथ पुरस्यापि वर्णनञ्च ततः परम्। त्रिविधाद्गुणसम्बन्धाज्जन्तूनां कीर्त्तिता गतिः। अनिर्द्देश्याप्रतर्क्यस्य ब्रह्मणः परमात्मनः। अन्वयव्यतिरेकाभ्यां वर्णनं हि ततः परम्। इत्येष उपसंहारः पादो वृत्तः सचोत्तरः। चतुष्पादं पुराणं ते ब्रह्माण्डं समुदाहृतम्। अष्टादशमनौपम्यं सारात् सारतरं द्विज!। ब्रह्माण्डञ्च चतुर्लक्षं पुराणत्वेन पठ्यते। तदेव व्यस्य गदितमत्राष्टादशधा पृथक्। पाराशर्य्येण मुनिना सर्वेषामपि मानद!। वस्तुद्रष्ट्राथ तेनैव मुनीनां भावितात्मनाम्। मत्तः श्रुत्वा पुराणानि लोकेभ्यः प्रचकाशिरे। मुनयो धर्मशीलास्ते दीनानुग्रहकारिणः। मया चेदं पुराणन्तु वशिष्ठाय पुरोदितम्। तेन शक्तिसुतायोक्तं जातूकर्ण्याय तेन च। व्यासो लब्ध्वा ततश्चैतत् प्रभञ्जनमुखोद्गतम्। प्रमाणीकृत्य लोकेऽस्मिन् प्रावर्त्तयदनुत्तमम्”। तत्फलश्रुतिः “य इदं कीर्त्तयेद्वत्स! शृणोति च समाहितः। स विधूयेह पापानि याति लोकमनामयम्। लिखित्वैतत् पुराणन्तु स्वर्णसिंहासनस्थितम्। पात्रेणाच्छादितं यस्तु ब्राह्मणाय प्रयच्छति। स याति ब्रह्मणो लोकं नात्र कार्य्या विचारणा। मरीचे!ऽष्टादशैतानि मया प्रोक्तानि यानि ते। पुराणानि तु संक्षेपाच्छ्रोतव्यानि च विस्तरात्। अष्टादश पुराणानि यः शृणोति नरोत्तम!। कथयेद्वा विधानेन नेह भूयः स जायते। सूत्रमेतत् पुराणानां यन्मयोक्तं तवाधुना। तन्नित्यं शीलनीयं हि पुराणफलमिच्छता। न दाम्भिकाय पापाय देवगुर्वनुसूयवे। देयं कदापि साधूनां द्वेषिणे न शठाय च। शान्ताय शमचित्ताय शुश्रूषाभिरताय च। निर्मत्सराय शुचये देयं सद्वैष्णवाय च” नारदीयपु० ४पा० १०९ अ०।

ब्र(ब्र)ह्मात्मभू पु० ब्रह्मण आत्मनः देहात् भवति भू–क्विप्। अश्वे शब्दमाला तस्य ब्रह्मदेहजातत्वं वृ० उ० उक्तं यथा “प्राणा वै यशोवीर्य्यं तत् प्राणेषूत्क्रान्तेषु शरीरं श्वयितुमध्रियत तस्य शरीर एव मन आसीत्। सोऽकामयत मेध्यं म इदं स्यादात्मन्व्यनेन स्यामिति। ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्” मू०। “तदेव यशोवीर्य्यभूतेषु प्राणेषूत्क्रान्तेषु शरीरान्निष्क्रान्तेषु तच्छरीरं प्रजापतेः श्वयितुं उच्छूनभावं गन्तुमध्रियत अमेध्यञ्चाभवत्। तस्य प्रजापतेः शरीरान्निर्गतस्यापि तस्मिन्नेव शरीरे मन आसीत्। यथा कस्मिंश्चित् प्रिये विषये दूरङ्गतस्यापि मनो भवति तद्वत्। स तस्मिन्नेव शरीरे गतमनाः सन् किमकरोदिति। उच्यते सोऽकामयत कथं मेध्यं मेध्यार्हं यज्ञियं मे ममेदं शरीरं स्यात्। किञ्चात्मन्वी आत्मवानेन शरीरेण शरीरवान् स्यामिति प्रविवेश। यस्मात्तच्छरीरं तद्वियोगात् गतयशोवीर्य्यं सदश्वयत् ततस्तस्मादश्वः समभवत्। ततोऽश्वनामा प्रजापतिरेव साक्षाद्यज्ञे स्तूयते। यस्माच्च पुनस्तत् प्रवेशात् गतयशोवीर्य्यत्वादमेध्यं सन्मेध्यमभूत्तदेव तस्मादेवाश्वमेधस्याश्वमेधनाम्नः क्रतोरश्वमेधत्वमश्वमेधनामलाभः” भा०।

ब्र(ब्र)ह्मादनी स्त्री ब्रह्मा ब्रह्मवाहनं हंस इव तस्येवादनं पादरूपं यस्याः गौरा० ङीष्। हंसपद्यां राजनि०।

ब्र(ब्र)ह्माभिजाता स्त्री गोदावर्य्यां राजनि०।

ब्र(ब्र)ह्मानन्द पु० ब्रह्मस्वरूपानन्दे तस्य दुःखा-

"ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः । क्षत्रियायां तथैव स्याद्वैश्यायामपि चैव हि" भा० दानधर्म-वाक्यस्यापि संकल्पभेदादेव तथात्वेन युगान्तरविषयत्वम् । तस्य लक्षणं यथा "जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च । एभिर्युक्तो हि यस्तिष्ठेन्नित्यं स द्विज उच्यते" वह्निपु० । "न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः । सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः । अहेरिव गणाद्भीतः सौहित्यान्नरकादिव । कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः । येन केनचिदाच्छन्नो येन केनचिदाशितः । यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः । विमुक्तं सर्वसङ्गेभ्यो मुनिमाकाशवत् स्थितम् । अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः । जीवितं यस्य धर्मार्थं धर्मो रत्यर्थमेव च । अहोरात्रश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः । निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् । अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः" भा० मोक्षध० । "विप्रा ऊचुः । विप्रस्य लक्षणं ब्रूहि त्वद्भक्तिः का च तत्कृता । यतस्तामनुतिष्ठेम वाग्बाणाः ब्राह्मणाः कृताः" । कल्किरुवाच "वेदा मामीश्वरं प्राहुरव्यक्तं व्यक्तिमत् परम् । ते वेदा ब्राह्मणमुखे नानाधर्माः प्रकाशिताः । यो धर्मो ब्राह्मणानां हि सा भक्तिर्मम पुष्कला । तयाहं तोषितः श्रीश सम्भवामि युगे युगे । ऊर्द्ध्वन्तु त्रिवृतं सूत्रं सधवानिर्मितं शनैः । तन्तुत्रयमधोवृत्तं यज्ञसूत्रं विदुर्बुधाः । त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरसम्मितम् । शिरोधरान्नाभिमध्यात् पृष्ठार्द्धपरिमाणकम् । यजुर्विदां नाभिमितं सामगानामयं विधिः । वामस्कन्धेन विधृतं यज्ञसूत्रं बलप्रदम् । मृद्भस्मचन्दनाद्यैस्तु धारयेत्तिलकं द्विजः । भाले त्रिपुण्ड्रं कर्माङ्गं केशपर्य्यन्तमुज्ज्वलम् । पुण्ड्रमङ्गुलिमानन्तु त्रिपुण्ड्रं तत्त्रिधा कृतम् । ब्रह्मविष्णुशिवावासं दर्शनात् पापनाशनम् । ब्राह्मणानां मुखे स्वर्गो वाचि वेदाः करे हरिः । गात्रे तीर्थानि यागाश्च नाडीषु प्रकृतिस्त्रिवृत् । सावित्री कण्ठकुहरा हृदयं ब्रह्मसञ्ज्ञितम् । तेषां स्तनान्तरे धर्मः पृष्ठेऽधर्मः प्रकीर्त्तितः । भूदेवा ब्राह्मणा राजन् ! पूज्या वन्द्याः सदुक्तिभिः । चातुराश्रम्यकुशला मम धर्मप्रवर्त्तकाः । बालाश्चापि ज्ञानवृद्धास्तपोवृद्धा मम प्रियाः । तेषां वचः पालयितुमवताराः कृता मया । माहाभाग्यं ब्राह्मणानां सर्वपापप्रणाशनम् । कलिदोषहरं श्रुत्वा मुच्यते सर्वतोभयात्" कल्किपु० ४ अ० । "कर्म्मणा ब्राह्मणो जातः करोति ब्रह्मभावनाम् । स्वधर्म्मनिरतः शुद्धस्तस्माद्ब्राह्मण उच्यते" ब्रह्मवै० गणेशख० ३५ अ० ।

"जातकर्म्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः । वेदाध्ययनसम्पन्नः षट्सु कर्म्मस्ववस्थितः । शौचाचारपरो नित्यं विघसाशी गुरुप्रियः । नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते । सत्यं दानमथाद्रोह आनृशंस्यं क्षमा घृणा । तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः" । तस्य धर्मो यथा "ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम् । दममेव महाराज ! धर्म्ममाहुः पुरातनम् । स्वाध्यायाभ्यसनञ्चैव तत्र कर्म्म समाप्यते । तञ्चेद्वित्तमुपागच्छेद्वर्त्तमानं स्वकर्म्मणि । अकुर्व्वाणं विकर्म्माणि शान्तं प्रज्ञानतर्पितम् । कुर्व्वीतापत्यसन्तानमथ दद्याद्यजेत च । संविभज्यापि भोक्तव्यं धनं सद्भिरितीष्यते । परिनिष्ठितकार्य्यस्तु स्वाध्यायेनैव ब्राह्मणः । कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते" पाद्मे स्वर्गख० २६ अ० । तस्य माहात्म्यादि यथा । "सर्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः । तस्मै दानानि देयानि भक्तिश्रद्धासमन्वितैः । सर्वदेवाग्रजो विप्रः प्रत्यक्षत्रिदशो भुवि । स तारयति दातारं दुस्तरे विश्वसागरे । हरिश्चन्द्र उवाच । सर्ववर्णगुरुर्विप्रस्त्वया प्रोक्तः सुरोत्तम ! । तेषां मध्ये च कः श्रेष्ठः कस्मै दानं प्रदीयते । ब्रह्मोवाच । सर्वेऽपि ब्राह्मणाः श्रेष्ठाः पूजनीयाः सदैव हि । अविद्या वा सविद्या वा नात्र कार्य्या विचारणा । स्तेयादिदोषतप्ता ये ब्राह्मणा ब्राह्मणोत्तम ! । आत्मभ्यो द्वेषिणस्तेऽपि परेभ्यो न कदाचन । अनाचारा द्विजाः पूज्या न च शूद्रा जितेन्द्रियाः । अभक्ष्यभक्षका गावः कोलाः सुमतयो न च । माहात्म्यं भूमिदेवानां विशेषादुच्यते मया । तव स्नेहाद्द्विजश्रेष्ठ ! निशामय समाहितः । क्षत्रियाणाञ्च वैश्यानां शूद्राणां गुरवो द्विजाः । अन्योऽन्यं गुरवो ज्ञेयाः पूजनीयाश्च भूसुर ! । ब्राह्मणं प्रणमेद्यस्तु विष्णुबुद्ध्या नरोत्तमः । आयुः पुत्राश्च कीर्त्तिश्च सम्पत्तिस्तस्य वर्द्धते । न च नौति द्विजं यस्तु मदघोर्णितो भुवि । स दर्शनेन तच्छीर्षं छेत्तुमिच्छति केशवः" । पुष्पादिहस्तस्य विप्रस्य प्रणामनिषेधो यथा । "पुष्पहस्तं पयोहस्तं देवहस्तञ्च भूसुर ! । न नमेद्ब्राह्मणं प्राज्ञस्तैलाभ्यक्तविग्रहम् । जलस्थं देवप्रसक्तं ध्यान-

रश्चिन्तयेत्सदा । देवपूजाञ्च कुर्वन्तं न नमेद् ब्राह्मणं बुधः । वह्निकार्यं प्रकुर्वन्तं भुञ्जानञ्च द्विजोत्तम ॥ तथा सामानि गायन्तं न नमेद्ब्राह्मणं बुध । ब्राह्मणा यत्र तिष्ठन्ति बहवो द्विजसत्तम । प्रत्येकन्तु नमस्कार स्तत्र कार्यो न धीमता । कृताभिवादनं विप्र मनुष्या यो नाभिवादयेत् । स चाण्डालसमो ज्ञेयो नाभिवाद्य कदापि च । कृतप्रणाम तनय नमेता पितरौ न च । कृतप्रणामाः सर्वेऽपि नमस्कार्या द्विजैर्द्विजाः । कृतदोषान् द्विजान् गाश्च न द्विषन्ति विचक्षणाः । द्विषन्ति चापि मोहेन तेषां रुष्ट सदा हरिः । याचकान् ब्राह्मणान् यस्तु कोपदृष्ट्या प्रपश्यति । सूचीप्रक्षेपणं तस्य नेत्रयो कुरुते यम । विप्रनिर्भर्त्सनं मूढा येन वक्त्रेण कुर्वते । तस्मिन् वक्त्रे यमस्तप्तं लौहपिण्डं ददाति वै । ब्राह्मणा यद्गृहे भुङ्क्ते तद्गृहे केशव स्वयम् । देवता सकला एव पितरश्च सुरर्षयः" । तस्य पादोदकादिमाहात्म्यं यथा "विप्रपादोदकं यस्तु कणमात्रं वहेद्बुध । देहस्थं पातकं तस्य सर्वमेवाशु नश्यति । कोटिब्रह्माण्डमध्येषु सन्ति तीर्थानि यानि च । तानि सर्वाणि तीर्थानि वसन्ति द्विजपादयोः । विप्रपादोदकैर्नित्यं सिक्तं स्याद् यस्य मस्तकम् । स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । सर्वपापानि घोराणि विप्रहत्यादिकानि च । सद्य एव विनश्यन्ति विप्रपादाम्बुधारणात् । छायाद्या व्याधयः सर्वे परमक्लेशदायकाः । गच्छन्ति विलयं सद्यो द्विजपादाम्बुभक्षणात् । पितरो यानि तोयानि दीयन्ते विप्रपादयोः । तैस्तृप्ताः पितरः स्वर्गे तिष्ठन्त्याचन्द्रतारकम् । प्रक्षाल्य विप्रचरणौ दूर्वाभिर्योऽर्चयेद्बुधः । तेनार्चितो जगत्स्वामी विष्णुः सर्वसुरोत्तम । विप्राणां पादनिर्माल्यं यो मर्त्यः शिरसा वहेत् । सत्यं सत्यमहं वच्मि तस्य शुद्धिर्हि शाश्वती" । तस्य प्रदक्षिणफलम् "विप्रं प्रदक्षिणीकृत्य वन्दते यो नरोत्तम । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा" । तस्य पादसेवनफलम् "यो दद्यात् फलताम्बूलं विप्राणां पादसेवने । इह लोके सुखं तस्य परलोके ततोऽधिकम् । पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् । मोक्षार्थी लभते मोक्षं विप्रपादस्य सेवनात् । रोगी रोगात् प्रमुच्येत पापी मुच्येत पातकात् । मुच्येत बन्धनाद्बद्धो विप्राणां पादसेवनात् । अनपत्याश्च या नार्यो मृतापत्याश्च याः स्त्रियः । बहुपुत्रा जीववत्सा स्युर्विप्रपादसेवनात्" पाद्मे क्रियायोगसारे १४ अ० । तस्य सन्ध्यापन्ननाकरणे दोषो यथा "नोपतिष्ठति यः पूर्वां नोपास्ते यस्तु पश्चिमाम् । स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः" मनुः । अन्यत्र च "न गृह्णन्ति सुराः तोयं पितरः पिण्डतर्पणम् । स्वेच्छया च द्विजातेश्च त्रिसन्ध्यारहितस्य च" । तस्य सन्ध्यावन्दनफलं यथा "यावज्जीवनपर्यन्तं यस्त्रिसन्ध्यं करोति हि । स च सूर्यसमो विप्रस्तेजसा तपसा सदा । तत्पादपद्मरजसा सद्यः पूता वसुन्धरा । जीवन्मुक्तः स तेजस्वी सन्ध्यापूतो हि यो द्विज । तीर्थानि च पवित्राणि तस्य स्पर्शमात्रतः । ततः पापानि यान्त्येव वैनतेयादिवोरगाः" । तस्य निन्द्यकर्माणि यथा "विष्णुमन्त्रविहीनश्च त्रिसन्ध्यारहितो द्विज । एकादशीविहीनश्च विषहीनो यथोरग । हरेरनैवेद्यभोगी च धावको वृषवाहक । शूद्रान्नभोजी विप्रश्च विषहीनो यथोरग । शवदाही च शूद्राणां यो विप्रो वृषलीपतिः । शूद्राणां सूपकारी च शूद्रयाजी च यो द्विज । असिजीवी मसीजीवी विषहीनो यथोरग । यो विप्रोऽवीरान्नभोजी ऋतुस्नातान्नभोजकः । भगजीवी वार्द्धुषिको विषहीनो यथोरगः । यः कन्याविक्रयी विप्रो यो हरेर्नामविक्रयी । यो विद्याविक्रयी विप्रो विषहीनो यथोरगः । सूर्योदये च द्विर्भोजी मत्स्यभोजी च यो द्विज । शिवपूजादिरहितो विषहीनो यथोरगः" ब्रह्मवैवर्त्ते प्र० २१ अ० । अन्यत्र च "यदि शूद्रां व्रजेद्विप्रो वृषलीपतिरेव सः । स भ्रष्टो विप्रजातेश्च चाण्डालात् सोऽधमः स्मृतः । विष्ठासमश्च तत्पिण्डो मूत्रं तस्य च तर्पणम् । तत्पितृणां सुराणाञ्च पूजने तत् समं सति ॥ कोटिजन्मार्जितं पुण्यं सन्ध्यार्चातपसार्जितम् । द्विजस्य वृषलीभोगान्नश्यत्येव न संशयः । ब्राह्मणश्च सुरापीतः विड्भोजी वृषलीपतिः । हरिवासरभोजी च कुम्भीपाकं व्रजेद्ध्रुवम्" । "करोत्यशुद्धां सन्ध्याञ्च सन्ध्यां वा न करोति यः । त्रिसन्ध्यं वर्जयेद् यो वा सन्ध्याहीनश्च स द्विजः" । नारायणक्षेत्रादितीर्थे तस्य प्रतिग्रहदोषो यथा "तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे । वाराणस्यां वदर्याञ्च गङ्गासागरसङ्गमे । पुष्करे भास्करक्षेत्रे प्रभासे रासमण्डले । हरिद्वारे च केदारे सोमे वदरपावने । सरस्वतीनदीतीरे पुण्ये वृन्दावने वने । गोदावर्याञ्च कौशिक्यां त्रिवेण्याञ्च हिमा-

क्षये। एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः। स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च"। पारिभाषिकमहापातकिब्राह्मणा यथा "सर्व्वोद्रिक्तशूद्रयाजी ग्रामयाजीति कीर्त्तितः। देवोपजीवजीवी च देवलश्च प्रकीर्त्तितः। शूद्रपाकोपजीवी यः सूपकारः प्रकीर्त्तितः। सन्ध्यापूजाविहीनश्च प्रमत्तः पतितः स्मृतः। एते महापातकिनः कुम्भीपाकं प्रयान्ति ते" ब्रह्मवै० ग० ख० २७ अ०। "ब्राह्मणस्य स्वधर्म्मञ्च निबन्ध्यमर्च्चनं हरेः। तत्पादोदकनैवेद्यभक्षणञ्च सुधाधिकम्। अन्नं विष्ठा जलं मूत्रमनिवेद्य हरेश्च यत्। भवन्ति सूकराः सर्व्वे ब्राह्मणा यदि भुञ्जते। आजीवं भुञ्जते विप्रा एकादश्यां न भुञ्जते। कृष्णजन्माष्टदिने चैव शिवरात्रौ सुनिश्चितम्। तथा रामनवम्याञ्च यत्नतः पुण्यवासरे। ब्राह्मणानां स्वधर्म्मश्च कथितो वेदसम्मतः।" ५६ अ०। स्नातकब्राह्मणनियमा यथा "वेदं वेदौ तथा वेदानधीत्य तु समाहितः। तदर्थमभिगम्याथ ततः स्नायाद् द्विजोत्तमः। गुरवे तु धनं दत्त्वा स्नायीत तदनुज्ञया। चीर्णव्रतोऽथ युक्तात्मा स शक्तः स्नातुमर्हति। वैणवीं धारयेद्यष्टिमन्तर्व्वासस्तथोत्तरम्। यज्ञोपवीतद्वितयं सोदकञ्च कमण्डलुम्। छत्रञ्चोष्णीषममलं पादुके चाप्युपानहौ। रौक्मे च कुण्डले धार्य्ये कृत्तकेशनखः शुचिः। स्वाध्याये नित्ययुक्तः स्याद्बहिर्माल्यं न धारयेत्। अन्यत्र काञ्चनाद्विप्रो न रक्तां बिभृयात् स्रजम्। शुक्लाम्बरधरो नित्यं सुगन्धः प्रियदर्शनः। न जीर्णमलवद्वासा भवेच्च विभवे सति। न रक्तमुल्वणञ्चान्यधृतं वासो न कुण्डिकाम्। नोपानहौ स्रजञ्चाथ पादुके च प्रयोजयेत्। उपवीतमलङ्कारं कुशान् कृष्णाजिनानि च। नापसव्यं परीदध्याद्वासो न विकृतं वसेत्। आहरेद्विधिवद्धीमान् सदृशीमात्मनः शुभाम्। रूपलक्षणसंयुक्तां योनिदोषविवर्जिताम्। अमातृगोत्रप्रभवामसमानार्षगोत्रजाम्। आहरेद्ब्राह्मणो भार्य्यां शीलशौचसमन्विताम्। ऋतुकालाभिगामी स्याद् यावत् पुत्त्रोऽभिजायते। वर्जयेत् प्रतिषिद्धानि प्रयत्नेन दिनानि तु। षष्ठ्यष्टमी पञ्चदशी द्वादशी च चतुर्द्दशी। ब्रह्मचारी भवेन्नित्यं तद्वज्जन्मत्रयाहनि। आदधीतावसथ्याग्निं जुहुयाज्जातवेदसम्। व्रतानि स्नातको नित्यं पावनानि च पालयेत्। वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः। अकुर्व्वाणः पतत्याशु नरकानतिभीषणान्। अभ्यसेत् प्रयतो नित्यं वेदं यज्ञान्न हापयेत्। कुर्य्यात् गृह्याणि कर्म्माणि सन्ध्योपासनमेव च। सख्यं समाधिकैः कुर्य्यादुपेयादीश्वरं सदा। दैवतान्यपि गच्छेत तु कुर्य्याद्भार्य्याभिपोषणम्। न धर्म्मं ख्यापयेद्विद्वान् न पापं गूहयेदपि। कुर्व्वीतात्महितं नित्यं सर्व्वभूतानुकम्पनम्। वयसः कर्म्मणोऽर्थस्य श्रुतस्याभिजनस्य च। वेशवाग्बुद्धिसारूप्यमाचरन् विचरेत् सदा। श्रुतिस्मृत्युदितः सम्यक् साधुभिर्यश्च सेवितः। तमाचारं निषेवेत नेहेतान्यत्र कर्हिचित्। येनास्य पितरो याता येन याताः पितामहाः। तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यति। नित्यं स्वाध्यायशीलः स्यान्नित्यं यज्ञोपवीतवान्। सत्यवादी जितक्रोधो ब्रह्मभूयाय कल्पते। सन्ध्यास्नानरतो नित्यं ब्रह्मयज्ञपरायणः। अनसूयुर्म्मृदुर्दान्तो गृहस्थः प्रत्ययान्वितः। वीतरागभयक्रोधो लोभमोहविवर्जितः। सावित्रीजापनिरतः श्रद्धावान् मुच्यते गृही। मातापित्रोर्हिते युक्तो गोब्राह्मणहिते रतः। दाता यज्वा देवभक्तो ब्रह्मलोके महीयते। त्रिवर्गसेवी सततं देवतानाञ्च पूजनम्। कुर्य्यादहरहर्नित्यं नमस्येत् प्रयतः सुरान्। विभागशीलः सततं क्षमायुक्तो दयालुकः। गृहस्थस्तपसा युक्तो न गृहेऽपि गृही भवेत्। क्षमा दया च विज्ञानं सत्यञ्चैव दमः शमः। अध्यात्मनिरतं ज्ञानमेतद्ब्राह्मणलक्षणम्। एतस्मान्न प्रमाद्येत विशेषेण द्विजोत्तमः। यथाशक्ति चरन् कर्म्म निन्दितानि विवर्जयेत्। विधूय मोहकलिलं लब्ध्वा योगमनुत्तमम्। गृहस्थो मुच्यते बन्धान्नात्र कार्य्या विचारणा। विगर्हातिक्रमाक्षेपहिंसाबन्धवधात्मनाम्। अन्यमन्युसमुत्थानां दोषाणां वर्जनं क्षमा। स्वदुःखेष्विव कारुण्यं परदुःखेषु सौहृदात्। दया या मुनयः प्राहुः साक्षाद्धर्म्मस्य साधनम्। चतुर्द्दशानां विद्यानां धारणं हि यथार्थतः। विज्ञानमेतद्विद्याद्येन धर्म्मो विवर्द्धते। अधीत्य विधिवद्विद्यामर्थञ्चैवोपलभ्य तु। धर्म्मकार्य्यान्निवृत्तश्चेन्न तद्विज्ञानमिष्यते। सत्येन लोकं जयति सत्यन्तत् परमं पदम्। यथाभूतप्रवादन्तु सत्यमाहुर्मनीषिणः। दमः शरीरोपरतिः शमः प्रज्ञाप्रसादजः। अध्यात्ममक्षरं विद्याद्यत्र गत्वा न शोचति। यया स देवो भगवान् विद्यया शिव ! वेद्यते। साक्षाद्देवो महादेवः तज्ज्ञानमिति कीर्त्तितम्। तन्निष्ठस्तत्परो विद्वान्नित्यमक्रोधनः शुचिः। महायज्ञपरो

विप्रो लभते तदनुत्तमम् । धर्म्मस्यायतनं यत्नाच्छरीरं परिपालयेत् । न हि देहं विना रुद्र ! पुरुषैर्विद्यते परः । नित्यं धर्म्मार्थकामेषु युञ्जीत नियतो द्विजः । न धर्म्मवर्जितं काममर्थं वा मनसा स्मरेत् । सीदन्नपि स्वधर्म्मेण न त्वधर्म्मं समाचरेत् । धर्म्मो हि भगवान् देवो गतिः सर्व्वेषु जन्तुषु । भूतानां प्रियकारी स्यान्न परद्रोहकर्म्मधीः । न वेददेवतानिन्दां कुर्य्यात्तैश्च न संवदेत् । यस्त्विमं नियतो विप्रो धर्म्माध्यायं पठेत् शुचिः । अध्यापयेच्छ्रावयेद्वा ब्रह्मलोके महीयते" । कूर्म्मपु० १४ अ० । "सूत उवाच । आनृशंस्यं क्षमा सत्यमहिंसा दममार्ज्जवम् । ध्यानं प्रसादो माधुर्य्यं मार्द्दवं शौचमेव च । इज्या दानं तपः सत्यं स्वाध्यायो ह्यात्मनिग्रहः । व्रतोपवासौ मौनञ्च स्नानं पैशुन्यवर्ज्जनम् । एभिर्युक्तो हनिर्म्मेधा । य सदा वर्त्तते द्विजः । हुत्वा तु पावकं पूर्व्वं परं ब्रह्माधिगच्छति । अविद्यो वा सविद्यो वा निरग्निः साग्निकोऽपि वा । यो विप्रस्तपसा युक्तः स परं स्वर्गमाप्नुयात् । सर्व्वासूत्तमं श्रेष्ठं विमुक्तिफलदायकम् । ब्राह्मणस्य तपो धर्म्मे तन्मे निगदतः शृणु । सायं प्रातश्च यः सन्ध्यामुपास्तेऽखिन्नमानसः । जपन् हि पावनीं देवीं गायत्रीं वेदमातरम् । तपसा भावितो देव्या ब्राह्मणः पूतकिल्विषः । न सीदेत् प्रतिगृह्णन् स स्वपि पृथ्वीं ससागराम् । द्वे सन्ध्ये ह्युपतिष्ठेत गायत्रीं प्रयतः शुचिः । यस्तस्य दुष्कृतं नास्ति पूर्व्वतः परतोऽपि वा । यज्ञदानरतो विद्वान् सान्तवेदस्य पाठकः । गायत्रीध्यानपूतस्य कलां नार्हति षोडशीम् । एष किल्विषयुक्तस्तु विनिर्दहति पातकम् । उभे सन्ध्ये ह्युपासीत तस्मान्नित्यं द्विजोत्तमः" । तस्य देहापवित्रताहेतुः यथा "यथा देहापवित्रत्वं विप्रादीनां यतो भवेत् । देवर्षे ! शृणु तत् सर्व्वं नराणामानुपूर्व्विकम् । जातके मृतके-ऽस्नाते जलौकाभिः क्षते तथा । अपवित्रो द्विजादीनां देहः सन्ध्यादिकर्म्मसु । अपूततनुरुत्सर्गे नरो मूत्रपुरीषयोः । अस्पृश्यस्पर्शने चैव ब्रह्मयज्ञजपादिषु । रक्तपाते नखश्मश्रुदन्तखड्गादिभिः क्षते । विप्रादेरशुचिः कायः शस्त्रास्त्रैः कण्टकादिभिः । भुक्तस्नानोच्छिष्टेऽपवित्रः शतमैथुने । शयने ब्राह्मणादीनां शरीरं शुचकर्म्मणि । ज्वरादिभिश्च बहिरोगैर्युक्ते द्विजन्मनाम् । वपुरप्रयतं पूजादानहोमजपादिषु । धूमोद्गारे वमौ च अपवित्रान्नादिभोजने । तथा च रेतस्खलने मत्या, देहापवित्रता । अपवित्रं द्विजातीनां वपुः स्वापाशुचिदर्शने । गर्हितदानग्रहणे पतिते पातकादिभिः । अशौचान्तेन शुद्धिः स्याज्जातके मृतके द्विज ॥" सर्व्ववर्णाश्रमादीनां तनोः सन्ध्यादिकर्म्मसु" पाद्मोत्तरखण्डे १०८ अ० । २मन्त्रेतरवेदभागे न०। भाष्योपोद्घाते चास्य लक्षणपूर्व्वकं तल्लक्षणमुक्तं यथा "तत्र ब्राह्मणस्य लक्षणं नास्ति । कुतः ? वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वमन्त्रभागेषु च लक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वात् । पूर्व्वोक्तमन्त्रभाग एकः । भागान्तराणि च कानिचित् पूर्व्वैरुदाहृतानि सङ्गृहीतानि "हेतुर्निर्व्वचनं निन्दा प्रशंसा संशयो विधिः । परक्रिया पुराकल्पो व्यवधारणकल्पनेति" । "तेन ह्यन्नं क्रियत" इति हेतुः१ । "तद्दध्नो दधित्वमिति" निर्व्वचनम्२ । "अमेध्या वै माषा" इति निन्दा३ । "वायुर्वै क्षेपिष्ठेति" प्रशंसा४ । "तद्व्यचिकित्सा जुहवानीश्मा हौषाश्मिति" संशयः५ । "यजमानेन सम्मितौदुम्बरी भवतीति" विधिः६ । "माषानेव मह्यं पचन्तीति" परकृतिः७ । "पुरा ब्राह्मणा अभैषु" इति पुराकल्पः८ । "यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्व्वपेदिति" विशेषावधारणकल्पना९ । एवमन्यदप्युदाहार्य्यम् । न च हेत्वादीनामन्यतमं ब्राह्मणमिति लक्षणम् । मन्त्रेष्वपि हेत्वादिसद्भावात् । "इन्द्रवो वा मुशन्ति हीति" हेतुः । "उदानिषुर्महीरिति तस्मादुदकमुच्यत इति" निर्व्वचनम् । "मोघमन्नं विन्दते अप्रचेता" इति निन्दा । "अग्निर्मूर्द्धा दिवः ककुद् इति" प्रशंसा । "अधः स्विदासीदुपरि स्विदासीदिति" संशयः । "वसन्ताय कपिञ्जलानालभेत" इति विधिः । "सहस्रमयुत ददाविति" परकृतिः । "यज्ञेन यज्ञमयजन्त देवाः" इति पुराकल्पः । इतिकरणबहुलं ब्राह्मणमिति चेत् न "इत्यदिदा इत्ययजथा इत्यपच इति ब्राह्मणो गायेत्" इत्यस्मिन् ब्राह्मणेन गातव्ये मन्त्रेऽतिव्याप्तेः । इत्याहेत्यनेन वाक्येनोपनिबद्धं ब्राह्मणमिति चेत् न "राजा चित्रां मगं भद्वीत्याह यो मायावं यातुधानेत्याह यो वा रक्ष" । "शुचिरग्नीत्याहेत्यनयोर्मन्त्रयो"रतिव्याप्तेः । आख्यायिकारूपं ब्राह्मणमिति चेत् न यमयमीसंवादसूक्तादावतिव्याप्तेः । तस्मान्नास्ति ब्राह्मणलक्षणमिति प्राप्ते ब्रूमः मन्त्रब्राह्मणरूपौ द्वावेव वेदभागावित्यङ्गीकारात् मन्त्रलक्षणस्य पूर्व्वमभिहितत्वादवशिष्टो वेदभागो ब्राह्मणमित्येतल्लक्षणं भविष्यति" ।

च) चोर धूर्त आराधय विराधय अपराधय उपराधय एकभाव द्विभाव त्रिभाव अन्यभाव अक्षेत्रज्ञ संवादिन् सर्वेशिन् संभाषिन् बहुभाषिन् शीर्षघातिन् विघातिन् समस्थ विषमस्थ परमस्थ मध्यमस्थ अनीश्वर कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ निघ्न बालिश अलस दुःपुरुष कापुरुष राजन् गणपति अधिपति गडुल दायाद विशस्ति विषम विपात निपात (सर्ववेदादिभ्य स्वार्थे) (चतुर्वेदस्योभयपदवृद्धिश्च) शौटीर पा॰ग॰सू॰। ब्राह्मणादिराकृतिगणः। तेन औचित्यादि।

ब्रा(व्रा)ह्मणायन पुस्त्री॰ ब्राह्मणापत्य नडा॰ फक्। विप्र गोत्रापत्ये शुद्धवंशजाते विप्रे त्रिका॰।

ब्रा(व्रा)ह्मणिक त्रि॰ ब्राह्मणस्य मन्त्रेतरवेदभागस्य व्याख्यानो ग्रन्थः ठक्। मन्त्रेतरवेदभागव्याख्याने ग्रन्थे।

ब्रा(व्रा)ह्मण्य न॰ ब्राह्मणानां समूहः भावो वा ष्यञ्। १विप्रसमूहे। २ब्राह्मणधर्मे ३विप्रत्वे च। जात्यन्तरगतस्य कारणविशेषाभावे ब्राह्मण्यप्राप्तिर्नास्तीति ब्राह्मण्यस्य दुष्प्रापत्वम् भा॰ १८ अ॰ मतङ्गोपाख्याने [illegible]रेण उक्तं यथा "तिर्य्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति। स जायते पुक्कशो वा चाण्डालो वाऽप्यसंशयम्। पुक्कशः पापयोनिर्वा यः कश्चिदिह लक्ष्यते। स तस्यामेव सुचिरं मतङ्ग! परिवर्त्तते। ततो दशगते काले लभते शूद्रतामिति। शूद्रयोनावपि ततो बहुशः परिवर्त्तते। ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि। वैश्यतायां चिरं कालं तत्रैव परिवर्त्तते। ततः षष्टिगुणे काले राजन्यो नाम जायते। ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम्। ब्रह्मबन्धुश्चिरं कालं तत्रैव परिवर्त्तते। ततस्तु द्विशते काले लभते काण्डपृष्ठताम्। काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्त्तते। ततस्तु त्रिशते काले लभते द्विजतामपि। तां च प्राप्य चिरं कालं तत्रैव परिवर्त्तते। ततश्चतुःशते काले श्रोत्रियो नाम जायते"। एतच्च जात्यभिप्रायं संस्कारादिना तु विशिष्टब्राह्मण्यलाभः यथोक्तमङ्गिरसा "चित्रं कर्म यथाऽनेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैः"। ४अनिष्टे पु॰ शब्दमाला। तादृशब्राह्मण्यप्राप्तिस्तु कर्मभेदात् यथा "शूद्रा शयनमारोप्य ब्राह्मणः पतत्यधः [illegible] हीयते" इत्यादि।

ब्रा(व्रा)ह्मणी स्त्री ब्राह्मणस्य पत्नी ङीष्। १ब्राह्मणस्य पत्न्याम् ब्राह्मणस्येयम् अण् ङीप्। २ब्रह्मसम्बन्धिन्यां स्त्रियाम्। ३बुद्धौ च। "मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम्"। "अरणीं ब्राह्मणीं विद्धि गुरुश्चाप्युत्तरारणिम्। तपःश्रुतेऽभिमथितो ज्ञानाग्निर्जायते ततः" भा॰आश्व॰२४अ॰।

ब्रा(व्रा)ह्मीकन्द पु॰ ब्राह्म्या इव कन्दोऽस्य। १वाराहीकन्दे राजनि॰। २ब्राह्मयष्टिकायां त्रिका॰।

ब्रा(व्रा)ह्म त्रि॰ ब्रह्मण इदं अण्। १ब्रह्मसम्बन्धिनि स्त्रियां ङीप्। २विवाहे ३हव्ये च धरणिः।

ब्रा(व्रा)ह्ममुहूर्त्त पु॰ ब्रह्मा देवताऽस्य अण् टिलोपः कर्म॰। अरुणोदयात् प्राग्वर्त्तिनि "रात्रेश्च पश्चिमे यामे मुहूर्त्तो ब्राह्म उच्यते" "रात्रेश्च पश्चिमे यामे मुहूर्त्तो यस्तृतीयकः। स ब्राह्म इति विख्यातो विहितः सम्प्रबोधने" आ॰त॰ सुमन्तुना उक्ते दण्डद्वयात्मके काले।

ब्रू कथने अदा॰उभ॰द्विक॰सेट्। ब्रवीति आह ब्रूते। अब्रवीत् अवोचत। उवाच ऊचतुः। अस्यार्द्धधातुके वच्यादेशोऽनित्य तेन "विब्रूतिः कटके हता"। ब्रह्मण्यं इत्यादि सिद्धम्। अनु+पश्चात् कथने अनुवादे। वि+विरुद्धतया कथने विवादे च।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्याभिधाने बकारादिशब्दार्थसङ्कलनम्।

---

# भ

भकारः पवर्गीयचतुर्थोवर्णो व्यञ्जनवर्णभेदः। तस्योच्चारणस्थानमोष्ठौ। अस्योच्चारणे आभ्यन्तरप्रयत्न ओष्ठाभ्यां सह जिह्वाग्रस्य स्पर्शः अतस्तस्य स्पर्शवर्णता। बाह्यप्रयत्नाश्च संवारनादघोषा महाप्राणश्च। तस्य ध्येयरूपं यथा "भकारं शृणु चार्वङ्गि! स्वयं परमकुण्डली। महामोक्षप्रदं वर्णं तरुणादित्यसप्रभम्। पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा" कामधेनुतन्त्रम्। अस्य अधिष्ठातृदेवताध्यानं यथा "तडित्प्रभां महादेवीं नागकङ्कणशोभिताम्। षड्भुजां वरदां भीमां रक्तपङ्कजलोचनाम्। रक्तवस्त्रपरीधानां रक्तगुञ्जाभिशोभिताम्। एव

अस्यापभक्तियुक्तस्य मद्भक्तो न प्रणश्यति। भ्रमन्ति भारते भक्ता लब्ध्वा जन्म सुदुर्लभम्। तेऽपि यान्ति मही पूत्वा परं तीर्थं ममालयम् ब्रह्मवै० प्र० ५अ०। "इति कृष्ण-कथायाञ्च यस्याश्रु पुलकोद्गमः। मनो निमग्नं यस्यैव स भक्तः कथितो बुधैः। पुत्रदारादिकं सर्वं जानाति श्री हरेरपि। आत्मना मनसा वाचा स भक्तः कथितो बुधैः। दयास्ति सर्वभूतेषु सर्वं कृष्णमयं जगत्। यो जानाति महाज्ञानी स भक्तो वैष्णवोत्तमः" ब्रह्मवै० जन्म० १अ०। त्रिविधभक्तलक्षणं यथा "भक्तानां त्रिविधा-नाञ्च लक्षणं श्रूयतामिति। देवगृह्यादरतो भक्तो ममाम गुणकीर्त्तिषु। मनोनिवेशयेत् त्यक्त्वा संसारसुखकारणम्। दास्यं विना नहीच्छेत्तु सालोक्यादिचतुष्टयम्। नैव निर्वाणमुक्तिञ्च सुधापानमभीप्सितम्। ध्यायते मत्पदा-ब्जञ्च पूजयेद्भक्तिभावतः। मोहेतुकास्तस्य नेवा सङ्कल्पर-हितस्य च। सर्वसिद्धिं न वाञ्छन्ति तेऽणिमादिकमीप्सि-तम्। ब्रह्मत्वममरत्वञ्च सुरत्वं सुखकारणम्। वाञ्छन्ति निश्चला भक्तिं मदीयामतुलामपि। स्त्रीपुंविभेदो ना-न्येव सर्वजीवेषु भिन्नता। तेषां सिद्धेश्वराणाञ्च परात्पर ब्रह्मेश्वर। क्षुत्पिपासादिकं निद्रा लोभमोहादिकं रिपुम्। त्यक्त्वा दिवानिशं चाश ध्यायते च दिगम्बरः। स भक्तोत्तमोऽनन्दे। श्रूयतां मध्यमादिकम्। नासक्तः कर्मसु दक्षो पूर्वप्राक्तनतः शुचिः। करोति सततञ्चैव पूर्वकर्मनिकृन्तनम्। न करोत्यपरं यस्मात् सङ्कल्परहि-तश्च सः। सर्वं कृष्णस्य यत्किञ्चिन्नाहं कर्त्ता च कर्मणः। कर्मणा मनसा वाचा सततं चिन्तयेदिति। न्यूनभक्तश्च तन्न्यूनः स च प्राकृतिकः स्मृतः। यमं वा यम-दूतं वा स्वप्ने च न पश्यति। पुरुषाणां शतञ्चैव पूर्वं भक्तः समुद्धरेत्। ५सा गतं मध्यमस्य तच्चतुर्थश्च प्राकृतः। भक्तस्य त्रिविधस्याथ कथितस्य तवाद्भुत" इति तत्रैव ८४ अ०। भावे क्त। ५भजने न०।

**भक्तकंस** पुं न० भक्तार्थं कंसः। भक्ताहरणार्थे पात्रे "भक्ता-स्यास्तद्वैषु" पा० आद्युदात्तताञ्च।

**भक्तकर** पु० भक्तं भजनं करोति कृ–ट। धूपे कृत्रिमधूपे शब्दच०।

**भक्तकार** त्रि० भक्तं करोति कृ–अण् ६त०स०। पाचके सूपकारे हेमच०।

**भक्ततूर्य्य** न० भक्ते तद्भोजनकाले वादनीयं तूर्य्यम् शा०त०। भोजनकाले वादनीये वाद्यभेदे त्रिका०।

**भक्तदास** पु० भक्तेन अन्नमात्रलाभेन दासः अङ्गीकृतदास-भावः। पञ्चदशदासान्तर्गते दासभेदे। "भक्तदासश्च विज्ञेयः" इति स्मृतिः। दासशब्दे दृश्यम्।

**भक्तपुलाक** पु० भक्तस्य पुलाक इव। सिक्थे अन्नमण्डे (माँड़) त्रिका०।

**भक्तमण्ड** पु० ६त०। भक्तस्य निस्रावे (माँड़)। हेमच०।

**भक्तवत्सल** त्रि० ६त०। १भक्तेषु स्निग्धे २विष्णौ पु०। "माधवो भक्तवत्सलः" विष्णुस०।

**भक्तसिक्थ** पु० ६त०। भक्तमण्डे अमरः।

**भक्ति** स्त्री भज–क्तिन्। १सेवायाम् आराधनायां, २तदेकताने चित्तवृत्तिभेदे ३विभागे ४गौण्यां वृत्तौ ५उपचारे ६अव-यवे ७भङ्ग्याम् ८श्रद्धायाम् ९रचनायाञ्च "भवति विरल-भक्ति" रघुः। भक्तिलक्षणसूत्र शाण्डिल्यसूत्रटीकयो यथा "सा परानुरक्तिरीश्वरे" सू० "अत्र सा परेति लक्ष्यनि-र्देशः। शेषं लक्षणम्। परेति गौणीं व्यावर्त्तयति। ईश्वर इति मतताभिप्रायम्। आराध्यविषयकरागत्वमेव भक्ति-त्वम्। इह तु परमेश्वरविषयकान्तःकरणवृत्तिविशेष एव भक्तिस्तद्वैशेष्यं च लौकिकानुरागादौ सुग्रहम्। यथोक्तं परमभक्तिमता प्रह्लादेन। (विष्णुपु०। अं०१।अ०२०। श्लो० १७)। "या प्रीतिरविवेकानां विषयेष्वनपायिनी। त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु"। अत्र प्रीति-पदेन सुखनियतो राग एव लक्ष्यते। अन्यथा प्रीतेः सुखरूपाया निर्विषयत्वेन विषयसप्तमी न स्यात् तथा सुखस्यानुरूपत्वेऽपि तल्लाभस्य सुखविषयत्वाद्विषयविषय-त्वासम्भवात्। तथाऽनुरक्तिरेव सविषयिणी कथिता। न च विषयजन्यप्रीतिरयं कामकप्रस्या अननुगामनात्। किन्तु "कथं तास्तु सदा त्वयि" इत्यत्र भक्तेरीश्वरविषय-ताभिधौ प्रीतिपदेनापि तदेकवाक्यतया सैवोच्यते। पूर्वं प्रतिजन्म भक्तिप्रार्थनमिह तु विषयरागदृष्टान्तेन तस्या एव सर्वथान्यपरिहार्यत्वप्रार्थनमिति विशेषः। विषयजन्यप्रीतिरपि रागं विना न सम्भवतीति रागा-वश्यकत्वम्। तथा च पातञ्जलसूत्रम्। (पा०२।६० ७सू०७८) "सुखानुशयी रागः" इति। तस्यैव वक्ष्यमाण-लिङ्गेषु व्यापनात्तावताच्च भक्तित्वम्। न तु कचित् स्मरणस्य, क्वचिच्च कीर्तनादेः अननुगमात्। न च तत् ज्ञानस्य तत्त्वं द्वेषादिमत्स्वपि तत्प्रसङ्गात्। नाप्या-राध्यत्वेन ज्ञानं सा पूजानमस्कारादावाराधनास्वनु-गमात्। अपि च बलाद्भयाद्वा नमस्कार्यत्वादिज्ञान-वत्यपि भक्तोऽयमनुरक्तोऽयमिति व्यवहारापत्तेः। अतः

इदानीं क्रान्तिं विक्षेपं चाह। "नाडिकामण्डलात् तिर्य्यगपमः क्रान्तिवृत्तावधिः क्रान्तिवृत्ताच्छरः। क्षेपवृत्तावधिस्तिर्य्यगेवं स्फुटो नाडिकावृत्तखेटान्तरालेऽपमः"। इदानीं क्रान्तिपातानां विषुवत्क्रान्तिवलययोः सम्पातः क्रान्तिपातः स्यात्। तद्भगणाः सौरोक्ता व्यस्ता अयुतत्रयं कल्पे। अयनचलनं यदुक्तं मुञ्जालाद्यैः स एवायम्। तत्पक्षे तद्भगणाः कल्पे गोऽङ्गर्त्तुनन्दगोचन्द्राः। तत् संजातं पातं क्षिप्त्वा खेटेऽपमः साध्यः। क्रान्तिवशाच्चरमुदयाश्चरदलकालापमे ततः क्षेप्यः"। इदानीं विक्षेपपातानाह। "एवं क्रान्तिविमण्डलसंपाताः क्षेपपाताः स्युः। चन्द्रादीनां व्यस्ताः क्षेपानयने तु ते योज्याः। मन्दस्फुटो द्राक् प्रतिमण्डले हि शशी भ्रमत्यत्र च तस्य पातः। पातेन युक्ताद्गणितागतेन मन्दस्फुटात् खेचरतः शरोऽस्मात्। पातेऽथ वा शीघ्रफलं विलोमं कृत्वा स्फुटात् तेन युताच्छरोऽतः। चन्द्रस्य कक्षावलये हि पातः स्फुटाद्विधोर्मध्यमपातयुक्तात्"। इदानीं ज्ञशुक्रयोर्विशेषमाह "ये चात्र पातभगणाः पठितास्तु ज्ञभृग्वोस्ते शीघ्रकेन्द्रभगणैरधिकाः यतः स्युः। तस्मात् चलार्थमुदिताश्चलकेन्द्रयुक्तौ पातौ तयोः पठितचक्रभवौ विधेयौ। चलाद्विशोध्य किल केन्द्रमिदं सपातं तयोश्चरस्तु योज्यः। अतश्चलात् पातयुताज्ज्ञभृग्वोः सुधीभिराद्यैः शरश्चिरुक्ताः। स्फुटो न शीघ्रोच्चयुतौ स्फुटौ तयोः पातौ भगोले स्फुट एव पातः"। इदानीं चन्द्रगोले विशेषमाह। "चन्द्रस्य गोले कथितापमण्डलं प्रकल्प्य कक्षावलयं यथोदितम्। निबध्य शीघ्रप्रतिवृत्तमस्मिन् विमण्डलं तत्पठितैः शरांशैः। मध्योऽत्र पातोऽत्र सदा ज्ञभृग्वोः स्वशीघ्रकेन्द्रेण युतस्तु देयः"। इदानीमहोरात्रवृत्तमाह। "इष्टचितक्रान्तितुल्येऽन्तरे सर्वतो नाडिकास्वादहोरात्रवृत्ताख्यम्। तत्र बद्धा घटीनां च षष्ट्याङ्कवेद्द्वयस्य विष्कम्भखण्डं द्युजीवा मता। इदानीमन्यदाह। "अथ कल्प्या मेषाद्या अनुलोमं क्रान्तिपाताद्वा। एवं मेषादीनां द्युरात्रवृत्तानि वशीवात्। नाडीवृत्तोभयतस्त्रीणि त्रीणि क्रमोत्क्रमात् तानि"। इदानीमस्योपसंहारमाह "एष भगोलः कथितः खेचरगोलोऽयमेव विज्ञेयः। क्रान्त्यापमण्डले वा स्वस्वाधारैरधश्च तस्यैव। चन्द्रादीनां कक्षा भगोलमध्यादूर्ध्वनाभकाश्चाराः। बद्ध्वा भगोलमेवं यष्ट्यां यष्टिं खगोलनाभिकान्तः। प्रक्षिप्य भ्रमयेत् तं यष्ट्याधारं स्थिरौ खद्रगोलौ" सि॰ शि॰।

**भग्न** त्रि॰ भन्ज–क्त। १लतावयवभेदे २रोगभेदे हेमच॰।

तन्निदानभेदादिकं सुश्रुते उक्तं यथा

"अथातो भग्नानां निदानं व्याख्यास्यामः। पतनपीडनप्रहाराक्षेपणव्यालमृगदशनप्रभृतिभिरभिघातविशेषैरनेकविधमस्थ्नां भङ्गमुपदिशन्ति तत् तु भङ्गजातमनुसार्य्यमाणं द्विविधमेवोत्पद्यते सन्धिमुक्तं काण्डभग्नञ्च। तत्र सन्धिमुक्तमुत्पिष्टं विश्लिष्टं विवर्त्तितमवक्षिप्तमतिक्षिप्तं तिर्य्यक्क्षिप्तमिति षड्विधम्। तत्र प्रसारणाकुञ्चनविवर्त्तनाक्षेपणाशक्तिरुग्रुजत्वं स्पर्शासहत्वं चेति सामान्यं सन्धिमुक्तलक्षणमुक्तम्। विशेषेणोत्पिष्टे सन्धावुभयतः शोफो वेदनाप्रादुर्भावो विशेषतश्च नानाप्रकारा वेदना रात्रौ प्रादुर्भवन्ति। विश्लिष्टेऽल्पशोफो वेदनासातत्यं सन्धिविक्रिया च। विवर्त्तिते तु सन्धिपार्श्वापगमनाद्विषमाङ्गता वेदना च। अवक्षिप्ते सन्धिविश्लेषस्तीव्ररुजत्वञ्च। अतिक्षिप्ते द्वयोः सन्ध्यस्थ्नोरतिक्रान्तता वेदना च। तिर्य्यक्क्षिप्ते त्वेकास्थिपार्श्वापगमनमत्यर्थं वेदना चेति। काण्डभग्नमत ऊर्द्धं वक्ष्यामः कर्कटकमश्वकर्णं चूर्णितं पिच्चितमस्थिच्छल्लितं काण्डभग्नं मज्जानुगतमतिपातितं वक्रं छिन्नं पाटितं स्फुटितमिति द्वादशविधम्। श्वयथुबाहुल्यं स्पन्दनविवर्त्तनस्पर्शासहिष्णुत्वमवपीड्यमाने शब्दः स्रस्ताङ्गता विविधवेदनाप्रादुर्भावः सर्वास्ववस्थासु न शर्म्मलाभ इति समासेन काण्डभग्नलक्षणमुक्तम्। विशेषतस्तु सम्मूढमुभयतोऽस्थिमध्यभग्नं ग्रन्थिरिवोन्नतं कर्कटकम्। चूर्णितमस्थि तत् तु शब्दस्पर्शाभ्यां बोद्धव्यम्। पिच्चितं पृथुतामुपगतमल्पशोफम्। पार्श्वयोरस्थिहीनोन्नतमस्थिच्छल्लितम्। वेल्लितं प्रकम्पमानं काण्डभग्नत्वम्। अस्थ्नश्चयवोऽस्थिमध्यमनुप्रविश्य मज्जानमनुप्रयातीति मज्जानुगतम्। अस्थि निःशेषतश्छिन्नमतिपतितम्। आभुग्नमविमुक्तास्थि वक्रम्। अन्यतरपार्श्वावशिष्टं छिन्नम्। पाटितमणु बहुविदारितं वेदनावच्च। शूकपूर्णमिवाध्मातं विपुलं विस्फुटीकृतं स्फुटितमिति। तेषु चूर्णितच्छिन्नातिपातितमज्जानुगतानि कृच्छ्रसाध्यानि कृशवृद्धबालानां क्षतक्षीणकुष्ठश्वासिनां सन्ध्युपगतञ्चेति। भवन्ति चात्र "भिन्नं कपालं कट्यान्तु सन्धिमुक्तं तथा च्युतम्। जघनं प्रतिपिष्टञ्च वर्जयेत् तच्चिकित्सकः। असंश्लिष्टं कपालन्तु ललाटे चूर्णितञ्च यत्। भग्नं

दीनं मया कृतम्। तदनेन चरुणा धातुत्रययुतेन च। सक्षौमाम्बरयुक्तेन सादर्शपादुकेन च। आसनेन सच्छत्रेण चामरोपानहेन च। सदानन्दविधानेन प्रीयतां विष्णुरीश्वरः। एवमुच्चार्य्य तन्दद्याद् द्विजाय हरिरूपिणे। गोप्येन विधिना दद्यान्नैवसंख्या न कीर्त्तयेत्। अकीर्त्तिते कोटिगुणायुतं फलं प्रगोपिते कल्पगुणैर्न संशयः। इतीदमन्यस्य न कीर्त्तयेत् सुधीः निधानमध्ये निहितञ्च यद्वत्। एवं कृते स्यान्मनुजः कृतात्मा तपेत्सदा स्यान्मरणं कदाचित्। प्रयाति विष्णोः पदमव्ययं तत् शिवात्मकानन्दमयं सुखाप्यम्" ।

**भद्रपदा** स्त्री ब०व० भद्रस्य वृषस्येव पदं यासाम्। पूर्वोत्तरभाद्रपदासु तारासु०। तत्र जातः अण् उत्तरपदवृद्धिः। भाद्रपाद तज्जाते त्रि०।

**भद्रपर्णा** स्त्री भद्रं पर्णमस्याः अजादि० टाप्। १कटम्भरावृक्षे शब्दमाला। २प्रसारिण्याम् अमरः। ३गाम्भार्य्याञ्च जटाध०। ङीप्। [पीठभेदे भद्र शब्दे दृश्यम्।

**भद्रपीठ** पुंन० भद्रार्थं पीठः। नृपदेवादीनामभिषेकार्थे

**भद्रबलन** पु० भद्रं वलनं बलमस्य। बलरामे शब्दमा०।

**भद्रब(व)ला** स्त्री भद्राय बलति चलति ब(व)ल—अच्। (गन्धभादाल) १लताभेदे २गन्धिकायां, ३माधवीलतायाञ्च अमर। ४बलायां राजनि०। [न्यासभेदे भा०आ०६६अ०

**भद्रभीमा** स्त्री कश्यपपत्न्या दक्षसुतायाः क्रोधायाः जाते क०

**भद्रमल्लिका** स्त्री कर्म०। मल्लिकाभेदे नवमल्लिकायाम् शब्दमाला।

**भद्रमुख** त्रि०भद्रं मुखं तद्व्यापारोऽस्य कप्। शुभकारिणि "ततो भद्रमुखात्मा च स्यासे स्थाणुरिवाचल" मार्कपु० १५८०।

**भद्रमुञ्ज** पु० कर्म०। शरभेदे भावप्र०।

**भद्रमुस्तक** पु० कर्म०। नागरमुस्तके। अमरः।

**भद्रमुस्ता** स्त्री कर्म०। भद्रमुस्तके "भद्रमुस्ता च गुन्द्रा च तथा नागरमुस्तकः। मुस्तं कटु हिमं ग्राहि तिक्तं दीपनपाचनम्। कषायं कफपित्तास्रतृड्ज्वरारुचिजन्तुहृत्। अनूपदेशे यज्जातं मुस्तकं तत् प्रशस्यते। तत्रापि मुनिभिः प्रोक्तं वरं नागरमुस्तकम्" भावप्र०।

**भद्रयव** पु० भद्रो यव इव। इन्द्रयवे अमर।

**भद्ररथ** पु० कलियुगस्थे हर्य्यङ्गनृपस्य पुत्रे हरिवं० ३१अ०।

**भद्ररेणु** द्वन्द्व०। ऐरावते गजे त्रिका०।

**भद्ररोहिणी** स्त्री भद्रार्थं रोहति रुह—णिनि ङीप्। कटुरोहिण्यां (कटकी) सुश्रुतः तस्याः भद्रदायकत्वात् तथात्वम्। "दार्वी त्वक् पिप्पली शुण्ठी वाचागमयवैः एतत्। संयुक्तं भद्ररोहिण्या पक्वं मेयादिमिश्रितम्"।

**भद्रवट** पु० ७त०। १आश्रमभेदे भा०व०२१०अ०, २तीर्थभेदे च।

**भद्रवत्** न० भद्र+मतुप् मस्य वः। देवदारुवृक्षे राजनि०।

**भद्रवती** स्त्री भद्राणि पर्णानि सन्त्यस्याः मतुप् मस्य वः ङीप्। १गाम्भार्य्याम्। २माद्रवतीजातायां भरतकन्यायां स्त्री हरिवं० १६१अ०।

**भद्रवर्मन्** पु०भद्रं दधाति धृ—मनिन्। नवमल्लिकायाम् शब्दच०

**भद्रवल्लिका** स्त्री नित्यक०। वल्ल्याः कन् ह्रस्वः अत इत्वम् कर्म०। (अनन्तमूलाख्याते) लताभेदे रत्नमा०।

**भद्रवल्ली** स्त्री नित्यक०। (अनन्तमूल) गोपवल्ल्याम् राजनि०।

**भद्रविराज्** "ओजे तपरौ जरौ गुरुश्चेन् मसौ जगौ भद्रविराड् भवेदनोजे" इत्युक्ते अर्द्धसमे वृत्तभेदे।

**भद्रशर्मन्** पु०भद्रं शर्म सुखं यस्य। कुमाराद्यानन्दश्रुते। ततो बाह्वा०अपत्ये इञ् भाद्रशर्मि तदपत्ये पु०स्त्री। [२२७अ०

**भद्रशाख** पु०भद्राः शाखाः ख्यायाः यस्य। कार्त्तिकेये भा०श०

**भद्रश्रय** न०भद्राय श्रीयते श्री—कर्मणि अच्। चन्दनवृक्षे रत्न०

**भद्रश्रवस्** पु० धर्मस्य पुत्रभेदे भाग० ५।१८।१।

**भद्रश्री** पु० भद्रा श्रीर्यस्य। चन्दनवृक्षे अमरः।

**भद्रश्रेण्य** पु० दिवोदासात् पूर्वं वाराणसीधीशे नृपभेदे हरिवं० २६अ०।

**भद्रसरस्** न० नित्यक०। सुपार्श्वपर्वतस्थे सरोभेदे धाम्याचलशब्दे दृश्यम्। [७अ०।

**भद्रसालवन** न० ६त०। भद्रसुवर्णस्थे वनभेदे भा० भी०

**भद्रसेन** पु० देवक्यां जाते वसुदेवस्य १पुत्रभेदे भाग० ६।२४।२५ २कुन्तिन्टपपुत्रभेदे च भाग० ६।२३।

**भद्रसोमा** स्त्री भद्रः सोम इव शुभ्रोऽस्याः। १गङ्गायां शब्दमा० २कुरुवर्षस्थे नदीभेदे मार्कपु० ५६अ०। [दृश्यम्।

**भद्रा** स्त्री भद्राश्ववर्षस्थे १नदीभेदे २विष्टिभद्रादौ भद्रशब्दे

**भद्राकरण** न०भद्र+डाच् कृ—ल्युट् शाकटा०स०। मुण्डने हेम०

**भद्राङ्ग** पु० भद्रमङ्गमस्य। बलरामे हेमच०।

**भद्रात्मज** पु० खड्गे त्रिका०।

**भद्रारक** पु० अष्टादशद्वीपान्तर्गते द्वीपभेदे शब्दमाला।

**भद्रालपत्रिका** स्त्री भद्रायालति पर्य्याप्नोति अल-अच् तादृशं पत्रं यस्याः कप् अत इत्वम्। गन्धाल्याम् (गान्धाल) शब्दमा०।

**भद्राली** स्त्री भद्रायालति पर्य्याप्नोति अच् गौरा० ङीष्। १गन्धाल्याम् (गान्धाल) शब्दमा०। ६त०। २भद्रश्रेणौ च।

**भद्रावती** स्त्री भद्र–अस्त्यर्थे मतुप् मस्य वः संज्ञायां पूर्वपद-दीर्घः । कट्फलवृक्षे राजनि० ।

**भटाश्रय** पु० ६त० । चन्दनवृक्षे ।

**भद्राश्व** न० भद्रा अश्वा यत्र । १जम्बुद्वीपस्य नववर्षान्तर्गते वर्षभेदे । २तद्वर्षस्थे जनपदे पु० ब० व० । तद्वर्षविवरणञ्च "माल्यवतः पूर्वपार्श्वे पूर्वगण्डिका एकत्रिंशद्योजनसहस्राणि मानन्तत्र च भद्राश्वा नाम जनपदा भद्रशालवनञ्च तत्र व्यवस्थितं, कालाम्रवृक्षाः, पुरुषाः श्वेताः, पद्मवर्णिनः, स्त्रियः कुमुदवर्णाः दशवर्षसहस्राणि च तेषामायुस्तत्र च पञ्च कुलपर्वताः तद्यथा शैलवर्णः मालाक्षः कोऽरजस्कः त्रिपर्णो नीलश्चेति तद्विनिर्गता नद्यस्तदन्तःस्थितानां देशानां तान्येव नामानि ते च देशाः एताः नदीः पिबन्ति तद्यथा सीता सुवाहिनी हंसवती कावेरी सरसा शाखावती इन्द्रनदी अङ्गारवाहिनी हरितोया सोमावर्त्ता शतह्रदा वनमाला वसुमती हंसावर्णा पञ्चगङ्गा धनुष्मती मणिवप्रा सुब्रह्मभागा विलासिनी कृष्णतोया पुण्योदा नागवती शिवा शैवालिनी मणितटा क्षीरोदा वरुणावती विष्णुपदी महानदी हिरण्यस्कन्धवाहा सुरावती वामोदा पताका चेत्येता महानद्यः एताश्च गङ्गासमाः कीर्त्तिताः आजन्मान्तं पापं विनाशयन्ति क्षुद्रनद्यश्च कोटिशश्चाश्च नदीर्ये पिबन्ति ते दशवर्षसहस्रायुषः रुद्रोमाभक्ता इति" वराहपु० गद्यम् । अधिक जम्बुद्वीपशब्दे ३०४५ पृ० दृश्यम् ।

**भद्रासन** न० भद्राय लोकक्षेमायास्यतेऽत्र आस–आधारे ल्युट् । नृपासने अमरः । तल्लक्षणादि वृ० स० ४८ अ० उक्तं यथा "आदावनडुहश्चर्म जरया संस्तृतं पुनः । प्रशस्तलक्षणभृतः प्राचीनग्रीवमास्तरेत् । ततो वृषस्य योधस्य चर्म रोहितमव्रणम् । सिंहस्याथ तृतीयं स्याद्व्याघ्रस्य च ततः परम् । चत्वार्येतानि चर्माणि तस्यां वेद्यामुपास्तरेत् । शुभे मुहूर्त्ते सम्प्राप्ते पुष्ययुक्ते निशाकरे । भद्रासनमेकतमेन कारितं कनकरजतताम्राणाम् । क्षीरतरुनिर्मितं वा विन्यस्तं चर्मणामुपरि । त्रिविधस्त्वोच्छ्रायो हस्तः पादाधिकोऽर्धयुक्तश्च । माण्डलिकानन्तरजित्समस्तराज्यार्थिनां शुभदः । अनधीय हिरण्यं तत्रोपविशेन्नरेश्वरः सुमनाः" ।

**भद्रिका** स्त्री भद्रा+स्वार्थे क । १पक्षयोः द्वितीयासप्तमी-द्वादशीषु तिथिषु । २योगिनीदशान्तर्गतायां पञ्चम्यां दशायाम् "मङ्गला पिङ्गला धान्या भ्रामरी भद्रिका तथा" दशाशब्दे दृश्यम् । "भद्रिका भवति रो नरौ" वृ० र० उक्ते नवाक्षरपादके ३छन्दोभेदे "ननरलगुरुभिश्च भद्रिका" वृ० र० उक्ते ४एकादशाक्षरपादके छन्दोभेदे च ।

**भद्रेश्वर** पु० १शिवलिङ्गभेदे । २कलशग्रामस्थ शिवलिङ्गभेदे च वामनपु० ४६ अ० ।

**भद्रैला** स्त्री स्थूलैलायाम् राजनि० ।

**भद्रोदनी** स्त्री भद्रमुदनित्यनया उद्+अन-बा० घञर्थे क गौरा० ङीष् । बलायां राजनि० । [बभाम ।

**भन** अर्चने भ्वा० प० सक० सेट् निघण्टुः । भनति अभा(भ)नीत

**भन्द** अर्चने दीप्तौ च भ्वा० आ० सक० सेट् निघण्टुः । भन्दते अभन्दिष्ट बभदे बभन्दे । कर्मणि भन्द्यते ।

**भन्दिल** त्रि० भदि–इलच् । १शुभे २कम्पे ३दूते च संक्षिप्तसा० ।

**भन्द्रक** पु० वक्रेश्वरसमीपस्थे देशभेदे स्कान्दपु० ।

**भपञ्जर** न० भानां पञ्जरमिव । नक्षत्रचक्रे सि० शि० ।

**भपति** पु० ६त० । १नक्षत्रेशे चन्द्रे हेमच० भनायादयोऽप्यत्र । २राशीश्वरे मङ्गलादौ च ।

**भमण्डल** न० ६त० । राशिचक्रे सू० सि० ।

**भम्भ** पु० भमित्यव्यक्तशब्देन भाति भा–क । मक्षिकाभेदे दंशे हारा० । २तत्तुल्यगतिके धूमे हेमच० ।

**भम्भराली** स्त्री भमित्यव्यक्तशब्दस्य भरमालाति गृह्णाति आ+ला–क गौ० ङीष् । (डांश) मक्षिकायाम् । स्वार्थे क अत इत्त्वम् । भम्भरालिका तत्रैवार्थे त्रिका० ।

**भम्भासार** पु० मगधदेशनृपभेदे हेमच० ।

**भय** न० बिभेत्यस्मात् भी–अपादाने अच् । १भयहेतौ । भावेऽच् । २दैन्यात्मके परतः स्वानिष्टसम्भावनारूपे वा चित्तवृत्तिभेदे ३नाटकप्रसिद्धे भयस्थायिभावके रसभेदे च । भयञ्च "रौद्रशक्त्या तु जनितं चित्तवैक्लव्यजं भयम्" सा० द० लक्षितम् । भयानकशब्दे दृश्यम् । ४निर्ऋतिपुत्रभेदे पु० भा० आ० ६६ अ० । [श० १५५२ श्लो० ।

**भयकर** त्रि० भयं करोति कृ–अच् ६त० । भयकारके भा०

**भयकृत्** त्रि० भयं करोति कृ–क्विप् । १भयकारके भयं कृन्तति कृत–छेदने क्विप् । २परमेश्वरे । "भयकृद्भयनाशनः" विष्णुस० ।

**भयङ्कर** पु० भयं करोति कृ–खच् मुम् च । १भयजनके २रसभेदे ३डुण्डुलविहगे च पुंस्त्री० स्त्रियां ङीष् । भा० व० २५ अ० उदा० ४विश्वदेवगणभेदे पु० भा० अनु० ९१ अ० । ५कुमारानुचरमातृभेदे स्त्री ङीप् भा० श० ४७ अ० ।

**भयडिण्डिम** पु० भयजनको डिण्डिमः । रणवाद्ये

लिङ्गा०। सूत्र्ये पु० स्वार्थे क। पूज्ये त्रि० जटा०। नाट्योक्तौ नृपे सम्बोध्ये अम्। देवे तपोधने पु० मेदि० अमर०। "भट्टे! आयुर्निर्मिता पाषाणदयं भट्टारकवारे कथमेतान् दत्तै० सं शाभि" शिशो०।

भट्टि पु० १द्वाविंशतिसर्गात्मके महाकाव्यभेदे तच्च जयमङ्गलेन श्रीधरस्वामिसूनो महाब्राह्मणस्य महावैयाकरणस्य भट्टे० कृतिरित्युक्तं भरतमल्लिकेन भर्तृहरिणा कृतमित्युक्तं तच्चिन्त्य "काव्यमिदं विहितं मया वलभ्यां श्रीधरसेननरेन्द्रपालितायाम्" तत्र द्वाविंशसर्गश्लोके उक्ते० न भर्तृहरिकृतत्वम् भर्तृहरेरुज्जयिनीवासव्यक्तेन तद्नृपतित्वेन च नृपान्तरराजधानीवासव्यक्तेरनुचितत्वात्।

भट्टिनी स्त्री भट्टं स्वामित्वेनास्त्यस्य इनि ङीप्। नाट्योक्तौ १अकृताभिषेकायां राज्ञः स्त्रियाम् अमर०। २विप्रभार्यायाम् मेदि०।

भट्टोजि पु० सिद्धान्तकौमुदीशब्दकौस्तुभादिग्रन्थकारके दीक्षितोपनामके वैयाकरणभेदे। [वसन्तः।

भण्ड परिभाषणे भ्वा०आ०सक०सेट् इदित्। भण्डते अभण्डिष्ट

भण्ड कल्याणभाषणे चु० उ०सक० सेट् इदित्। भण्डयति-ते अबभण्डत्-त। प्रतारणे च भण्डयति प्रतारकौ सभ्यं धनदानाङ्गीकारेण, समिन्द्रोपरमे परिहासे च उणा० स्व० भण्डिमभण्डीः पृथग्निर्देशात् अवमिदंद्रभिन्नोऽपि।

भण्ड पु० भडि-अच्। वर्णसङ्करभेदे "लेटस्तीवरकन्यायां जनयामास षड्नरान्। मालं मल्लं मातरं च भण्डं कोलं च कन्दरम्" ब्रह्मवै०ब्रह्मख०२०अ०।

भण्डिल पु० भड-इलच्। १वीरे २सेवके उज्ज्वल०। ३ऋषिभेदे तत गर्गा० अपत्ये यञ्। भाण्डिल्य तदपत्ये अश्वा० फञ्। भाण्डिल्यायन तदपत्ये बहुत्वे तस्य लुक्।

भण कथने भ्वा०पर०द्विक०सेट्। भणति। अभाणीत्-अभणीत्। भण्डि वा सुष्ठु। अबीभणत्-त अबभाणत्-त। कथनमिह व्यक्तवाक्यम्।

भणिति स्त्री भण-क्तिन् यहादित्वादिट्। कथने। मौलौ० मौग्ध्यमणयश्चिमणिते" नैष०। [२दृहत्यां रत्नमाला।

भण्टाकी स्त्री भटि-आकन् ङीष्। १वार्त्ताक्याम्, अमर०।

भण्ट(ण्ट)क पुं०भटि-उक ऊक वा। श्योनाकदृक्षे रत्नमा०

भण्ड पु० भडि-अच्। अश्लीलवाक्यभाषके (भाँड) "त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तनिशाचराः" सर्व०स०चार्वाकदर्शनम्

भण्डक पुंस्त्री० भण्ड+संज्ञायां कन्। खञ्जनखगे जटा०। स्त्रियां जातित्वात् ङीष्।

भण्डन न० भडि-भावाधारादौ ल्युट्। १कलीकारे (प्रतारणे) २कवचे मेदि०। [वेश्यायां शब्दर०।

भण्डहासिनी स्त्री भण्डेन सह हसति णिनि ङीप्।

भण्डि स्त्री भडि-इन्। १वीचौ कारा० वा ङीप् ङीभन्तः २शिरीषदृक्षे राजनि०। [शब्दर०

भण्डिका स्त्री भण्ड-ण्वुल् कापि अत इत्वम्। मञ्जिष्ठायां

भण्डित पु०भडि-क्त। १ऋषिभेदे तत० गर्गा० यञ्। भाण्डित्य तद्गोत्रापत्ये पुंस्त्री अश्वा०फञ्। भाण्डित्यायन तद्गोत्रापत्ये पुंस्त्री०। तस्य बहुत्वे वा लुक्।

भण्डिर(ल) पु०भण्ड-इरच् पृषो०रस्य वा लः। १शिरीषदृक्षे अमरः। रानः वाचस्पतिः॥ वाम० शुभे दूते त्रि० उणादिको०।

भण्डीतकी स्त्री भण्डो सती तकति तक-क्वाने अच् गौरा० ङीष्। मञ्जिष्ठायां भावप्र०।

भण्डीर पु० भडि-ईरन् बा०ईर। १समष्ठिलायुपे २तण्डुलीयशाके ३शिरीषदृक्षे च राजनि०हरिव०६५ अ०। तदनपवनम्

भण्डीरलतिका स्त्री भण्डीर इव लतति लत-अच् स्वार्थे क कापि अत इत्वम्। मञ्जिष्ठायां राजनि०।

भण्डीरी स्त्री भडि॥ बा० ईर गौरा० ङीष्। मञ्जिष्ठायाम् अमरः। रस्य लः। तत्रार्थे पु० शब्दच०।

भण्डु पु० भडि-उण्। देशभेदे तत० सुवास्वा० चतुरर्थ्यां अण्। भाण्डव तदद्भूरदेशादौ त्रि०।

भण्डु(ण्डू)क पु० भडि-उक ऊक वा। (भाकुन) मत्स्यभेदे रत्नमाला। दीर्घमध्यः २श्योनाकवृक्षे रत्नमाला।

भद शुभकथने प्रीतौ च भ्वा० आ० अक० सेट् इदित्। भन्दते अभन्दिष्ट। [भन्दत्-त।

भद कल्याणकरणे चु०उ०अक०सेट् इदित्। भन्दयति-ते अब-

भदन्त पु० भदि-झच् नलोपः। १बौद्धभेदे। २पूजिते त्रि०। उणादि० ३प्रव्रजिते उज्ज्वल०।

भदाक न०भदि कल्याणे आकन् नलोपः। कल्याणे उज्ज्वल०

भद्र न० भदि-रक् नि० नलोपः। १मङ्गले उणा०२सुवर्णे ३मुस्तायां च मेदि०। ज्योतिषोक्ते कल्यादितः सप्तमे करणे स्त्री न०। ४महादेवे ५वृषे ६खञ्जने ७कदम्बे ८हस्तिजातिभेदे ९बलदेवे १०रामचरभेदे पु० मेदि०। ११सुमेरुगिरौ पु० हेमच० १२स्थूलीरके च पु० राजनि०, ज्योतिषोक्तासु १३द्वितीयासप्तमीद्वादशीतिथिषु च स्त्री। १४साधौ १५श्रेष्ठे च त्रि० मेदि०। १६देवदारुणि पु०। १७कृष्णपत्न्या स्त्री "राम मां भद्रया सह" त्रि० इ०।

१८मध्यदेशभेदे पु० वृ० स० १४ अ० कूर्मविभागे दृश्यम्। १९वसुदेवपुत्रभेदे पु० भाग० ९।२४।४५ श्लो०। २०तुषितदेवगणभेदे भाग० ४।१।८। २१वैश्रवणपत्न्यां स्त्री० भा० १९८अ०। २२सोमस्य दुहितरि उतथ्यपत्न्यां स्त्री भा० अ० १५४अ०। २३रौद्राश्वस्य कन्याभेदे हरिव० ३६ अ०। २४नटभेदे पु० हरिव० १५० अ०। २५भारतवर्षस्थे नदीभेदे स्त्री मार्कपु० ५९ अ०। विष्टिभद्रायां सर्वकार्य्यवर्जनप्रतिप्रसवादिकं मु० चि० पी० धा० दर्शितं यथा “अयोगे सुयोगोऽपि चेत् स्यात् तदानीमयोगं निहत्यैष सिद्धिं तनोति। परे लग्नशुद्ध्या कुयोगादिनाशं दिनार्द्धोत्तरं विष्टिपूर्वं च शस्तम्(१)। शुक्ले पूर्वार्द्धेऽष्टमीपञ्चदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्द्धे। कृष्णेऽन्त्यार्द्धे स्यात् तृतीयादशम्योः पूर्वे भागे सप्तमीशम्भुतिथ्योः(२)। पञ्चद्व्यद्रिकृताष्टरामरसभूयामादिघट्यः शरा विष्टेरास्यमसद्गजेन्दुरसरामाद्यश्विबाणाब्धिषु। यामेष्वन्त्यघटीत्रयं शुभकरं पुच्छं तथा वासरे विष्टिस्तिथ्यपरार्द्धजा शुभकरी रात्रौ तु पूर्वार्द्धजा(३)। कुम्भकर्कद्वये मर्त्ये स्वर्गेऽब्जेऽजात्रयेऽलिगे। स्त्रीधनुर्जूकनक्रे धो भद्रा तत्रैव तत् फलम्(४)” मू०।

“अथावश्यकशुभकार्य्ये कालान्तरप्रतीक्षाऽयोग्यतायां परिहारमाह विष्टिर्वे विष्टिर्भद्रा तत्पूर्वं तदादि व्यतीपातादिकं दिनार्द्धोत्तरं मध्याह्नादनन्तरं शस्तं प्राहुः अर्थात् मध्याह्नं यावत्कालो निषिद्धः “विष्टिरङ्गारकश्चैव व्यतीपातश्च वैधृतिः। प्रत्यरं जन्मनक्षत्रं मध्याह्नात् परतः शुभम्” इति तेनैवोक्तत्वात्(१)। अथ भद्रा निषिद्धेति पूर्वमुक्तं तदधुना प्रस्तावात् तद्विषयकालं शालिनीच्छन्दसाह शुक्ले इति। शुक्लपक्षे अष्टम्यां पूर्णिमायाञ्च पूर्वार्द्धे भद्रा भवति एकादश्यां चतुर्थ्यां चोत्तरार्द्धे भद्रा। अथ कृष्णे कृष्णपक्षे तृतीयायां दशम्यां चान्त्यार्द्धे उत्तरार्द्धे भद्रा स्यात् सप्तम्यां शम्भुतिथौ चतुर्दश्याञ्च पूर्वे भागे पूर्वार्द्धे भद्रा स्यात् पूर्वे इति पूर्वादिभ्यो नवभ्यो वेति स्मिन्भावपक्षे रूपम्। अष्टम्यादीनां तिथीनां गतभोग्यघटिकायोगार्द्धं भद्राप्रमाणमिति यावत् “तिथेर्गतैष्यैक्यदलं तन्मानं करणं भवेत्” वोपदेवोक्तेः “तिथ्यर्द्धभागं सर्वेषां करणानां प्रकल्पयेत्” इति सूर्य्यसिद्धान्तोक्तेश्च। उक्तञ्च दीपिकायाम् “तृतीयादशमीशेषे तत्पञ्चम्योस्तु पूर्वतः। कृष्णे विष्टिः सिते तद्वत्तासां परतिथिष्वपि” बृहस्पतिना तु स्पष्टमुक्तम्। “सिते चतुर्थ्यामन्त्यार्द्धमष्टम्याद्यार्द्धमेव च। एकादश्यां परार्द्धे तु पूर्वार्द्धे पूर्णशीतगौ। कृष्णे तृतीयान्त्यार्द्धे हि सप्तम्याद्यार्द्धमेव च। दशम्यामुत्तरार्द्धे तु चतुर्दश्यर्द्धमादितः। विष्ट्याख्योऽयं महादोषः कथितोऽत्र समस्तगः। तदानीं कृतं तत्कर्म कर्त्रा सह विनश्यति” इति। पूर्णशीतगौ पूर्णिमायाम्। रत्नकोषे प्रत्येकं भद्रानामानि “हंसी नन्दिन्यपि च त्रिशिराः सुमुखी करालिकाचैव वैकृतिरौद्रमुखी च चतुर्मुखी विष्टयः क्रमशः”। चतुर्थ्यादितिथिसम्बन्धि भद्रानामामाभिधानं नामसादृश्येन फलतारतम्यसूचनार्थम्। भद्रास्वरूपं रत्नमालायाम् “उद्वद्धोत्कटतरपोङ्गिताऽतिकृष्णा दंष्ट्रोग्रा पृथुहनुगण्डदीर्घनासा। कार्य्यप्रीडनतत्परकुलसद्गिरन्ती विश्वान्तः पतति समन्ततोऽत्र विष्टिरिति”(२)। अथ चतुर्थ्यादितिथिषु भद्रायामुखपुच्छविभागादिकं शार्दूलविक्रीडितेनाह। पञ्चेति चतुर्थ्यादितिथीनां क्रमशः प्रञ्चादिप्रहरेषु शराः पञ्च नाड्यः आदिमा विष्टेर्भद्राया आस्यं मुखं यथा चतुर्थ्यां पञ्चमप्रहरे, आदिभूताः पञ्च घट्यो भद्रामुखम् एवमष्टम्यां द्वितीयप्रहरे, एकादश्याः सप्तमप्रहरे, पौर्णमास्याश्चतुर्थप्रहरे, तृतीयायां अष्टमप्रहरे, सप्तम्यास्तृतीयप्रहरे, भद्रामुखमित्यर्थः तच्च भद्रायामुखमसदशुभमित्यर्थः अथ पुनश्चतुर्थ्यादितिथीनां क्रमेण गजादिप्रहरेषु अन्त्यम् अन्ते भवमन्त्यं दिगादिभ्यो यदिति यत् घटीत्रयं पुच्छं पुच्छसञ्ज्ञं तच्छुभकरं समस्तकार्य्येष्वित्यर्थः। यथा चतुर्थ्यां अष्टमप्रहरस्यान्त्यं घटीत्रयं भद्रापुच्छम् एवमष्टम्यां प्रथमप्रहरस्य, एकादश्याः षष्ठप्रहरस्य, पूर्णिमायास्तृतीयप्रहरस्य, तृतीयायाः सप्तमप्रहरस्य, सप्तम्या द्वितीयप्रहरस्य, दशम्याः पञ्चमप्रहरस्य, चतुर्दश्याश्चतुर्थप्रहरस्यान्त्यं घटीत्रयं भद्रापुच्छमित्यर्थः। यदाह गुरुः “भूतदसस्वरामभोधिवसुभङ्गरङ्गरूपका। यामेष्वेवं क्रमादास्यं भवेत् तिथ्यर्द्धविष्टिष्विति”। व्यवहारसमुच्चये “दशम्यामष्टम्यां प्रथमघटिकापञ्चकपरं हरित्सु सप्तम्यां द्विदश १२घटिकान्ते त्रिघटिकम्। तृतीयाराकायां खयम २०घटिकाभ्यः परमतः शुभं विष्टेः पुच्छं शिवतिथिचतुर्थ्योस्तु विरमे” इति। हरित्सुरेकादशी राका पूर्णिमा। ननु भद्रा देवतेत्यभिधीयते तस्याः पुच्छकथनात् पशुत्वं सिद्ध्यति देवता च कथं पशुर्भवितुमर्हतीति। अत्र दैत्येन्द्रैर्देवेषु पराजितेषु हरस्य ज्वालामालाकुलनेत्रालोकितदेहात् देवी भद्रासमा मुखपुच्छादिमत्येव

उत्पन्ना दैत्यान् जघान यदुक्तं श्रीपतिना दैत्येन्द्रैः समरेऽमरेषु विजितेष्वीशः क्रुधा दृष्टवान् स्वाङ्गं किल निर्गता खरमुखी लाङ्गूलिनी च त्रिपात्। विष्टिः सप्तभुजा मृगेन्द्रगलका क्षामोदरी प्रेतगा दैत्यघ्नी मुदितैः सुरैस्तु करणप्रान्ते नियुक्ता सदेति”। भद्राकृत्यमाह वशिष्ठः “बधबन्धविषाग्न्यस्त्रच्छेदनोच्चाटनादि यत्। तुरङ्गमहिषोष्ट्रादि कर्म विष्ट्यान्तु सिध्यति। न कुर्य्यात् मङ्गलं विष्ट्यां जीवितार्थी कदाचन। कुर्वन्नज्ञस्तदा क्षिप्रं तत् सर्वं नाशतां व्रजेत्”। तदङ्गविभागः फलञ्च कश्यपसंहितायाम् “मुखे पञ्च गले त्वेका वक्षस्येकादश स्मृताः। नाभौ चतस्रः षट् कट्यां तिस्रः पुच्छे तु नाडिकाः। कार्य्यहानिर्मुखे मृत्युर्गले वक्षसि निःस्वता। कट्यामुन्मत्तता नाभौ च्युतिः पुच्छे ध्रुवो जयः”। अयञ्च भद्राङ्गविभागो नाडीनां त्रिंशतोऽन्यूनाधिकत्वे तु त्रैराशिकेन मुखादीनामङ्गानां विभागज्ञानं यथा यदि नाडी त्रिंशता इदमुक्तमङ्गपरिमाणं इष्टपरिमाणेन किमिति त्रैराशिकम् एवं सति उक्ताङ्गपरिमाणं भद्राभोगमितघटीभिः संगुण्य त्रिंशता भाज्य लब्धसमोऽङ्गविभागः। तत्र सुधादिकाया रत्नमालायाम् “अर्कशिखिशशिरसगर्तकीनाशवायुत्रिदशपतिकुपदमोक्षमासं हि विष्टेः। नियतमृषिभिराशासंख्यया प्रक्रमेण स्फुटमिह परिहार्य्यं मङ्गलेष्वेतदेव”। अस्य वस्य कीनाशा यमः शुक्लचतुर्थ्यां उत्तरार्द्धे पश्चिमदिशि भद्रामुखं तच्चाशासंख्याक्रमेण पञ्चमे प्रहरे भवति अर्थात् भद्राया प्रहरचतुष्टयाधिकस्थितमावादन्ते एव घटिकात्रयं पुच्छं ततोऽष्टम्यां द्वितीयप्रहरेऽनेन प्रकारेण आग्नेय्यां दिशि मुखं सुधाख्ये प्राक् पुच्छमिति प्रथमप्रहरान्त एव पुच्छघटिका इत्येवं सर्वास्वपि भद्रातिथिष्वनुगन्तव्य प्रयोजनमपि तत्रैव “मनुरसतुमितिथियुगद्यमिवशुच संख्यासु तिथिषु पूर्वशः। यायात विष्टिरेषा पृष्ठे शुभदा पुरस्तदशुभेति” तदेतदात्ययिककार्य्यस्यासम्भवे सति सङ्कटिकविषयाभावाभिप्रायकमवधेयम्। ग्रन्थान्तरे अन्यदप्युक्तम्। “अहिते सर्पिणी ज्ञेया सिते विष्टिस्तु वृश्चिकी। सर्पिण्यास्तु मुखं त्याज्यं वृश्चिक्याः पुच्छमेव च”। अथ परिहारमाह तथेति विष्टिस्तिथ्यपरार्द्धजाता तिथ्युत्तरार्द्धे सम्भूता वासरे दिवसे यदि स्यात् भद्रा तदा शुभकरी तथैव प्रकारेण तिथिपूर्वार्द्धजा भद्रा रात्रौ चेत् स्यात् तदा शुभा शुभकरी स्यात्। उक्तञ्च “रात्रिभद्रा यदाह्नि स्यात् दिवा भद्रा यदा निशि। न तत्र भद्रादोषः स्यात् सा भद्रा भद्रदायिनी” इति। रात्रिभद्रा तिथ्युत्तरार्द्धभवा दिवाभद्रा तिथिपूर्वार्द्धभवा अमुमर्थं स्पष्टमाह गुरुः। “निशि पूर्वार्द्धजा विष्टिर्दिवा चापरजा शुभा। क्रमागता तु या विष्टिः सा हालाहलोपमा” इति। अन्योऽपि “दिवा परार्द्धजा विष्टिः पूर्वार्द्धोत्था यदा निशि। तदा विष्टिः शुभा वेति व्यासमभाषितम्”। मल्लिवान्तेऽपि “दिवा परार्द्धजा विष्टिर्विष्टिरेव दिवानिशोः। सा त्याज्या त्वन्यथा विष्टिः सर्वकर्मशुभप्रदा”। ननु यत् तु नारदकश्यपादिभिरुक्तम्। “करणानि बवादीनि शुभदानि स्युः क्रमात्। क्रमायाता क्रमायाता विष्टिर्नेष्टा तु मङ्गले”। अत्र क्रमायाता दिवारात्रिक्रमायाता दिवाभद्रा रात्रौ रात्रिभद्रा च दिवेत्यर्थः। एवं सति द्विविधाया अपि भद्राया दोषवत्त्वे उक्ते पूर्वोक्तपरिहाराभिधानमयुक्तमुच्यते इदमेव क्रमायातेति वचनं ज्ञापकमुक्तार्थस्य अन्यथा सामान्यतो भद्रादये इत्युक्ते द्विविधभद्राया दोषवत्त्वसिद्धेरनर्थकमिदं स्यात् तस्मादशुभकार्य्याणां भद्रारूपदुष्टदिनव्यतिरिक्तकालप्रतीक्षायोग्यत्वे तदेव कार्य्यं न दुष्टदिने क्षेमोपपत्तौ बाधो न स्यादिति न्यायात् वचनस्य निषेध एव तात्पर्य्यात्। अवश्यकर्त्तव्यस्य तु शुभकर्मणः कालान्तरप्रतीक्षाऽसहत्वाद् उक्तवमादिपरिहारमाश्रित्य दुष्टदिने कर्त्तव्यतैव विहितकारकत्वेनेत्यपि परिहार एतत्पर एवेत्यत्र प वितेन। अथ भद्रानिवासं तत्फलञ्चाह (१)। कुम्भेति अस्ये चन्द्रमसि कुम्भद्वये कुम्भमीनयोः कर्कसिंहराशिस्थिते सति भद्रा मर्त्त्ये मनुष्यलोके तिष्ठति अथानन्तरमजे मेषवृषमिथुनस्थितेऽलिगे वृश्चिकस्थिते चन्द्रे स्वर्गे भद्रा तिष्ठति। कन्याधनुस्तुलामकरराशिस्थिते पाताललोके भद्रा तिष्ठति। अथ भद्रा तत्रैव मर्त्त्यस्वर्गपातालेषु फलं ददातीत्यपवादद्वारा प्रयोजनमुक्तं भवति। उक्तञ्च “मेषोक्षकर्किमिथुने घटसिंहमीनकर्के चापमृगतौलिषु तासु चन्द्रे। स्वर्मर्त्त्यनागभवने क्रमशः प्रयाति विष्टिः फलान्यपि ददाति हि तत्र तैसे” इति। भूपालवल्लभे “कन्यातुलामकरधन्विषु नागलोके मेषालिगोमिथुनगेषु सुरालये स्यात्। पाठीनसिंहघटकर्कटगे तु मर्त्त्ये चन्द्रे वदन्ति मुनयस्त्रिविधां हि विष्टिम्” (१) ज्यो॰ त॰

भद्रशब्दात् परिवापणे (मुण्डने)ऽर्थे गम्ये डाच्। कृञोऽनुप्रयोग मध्याद्या०ष०। भद्राकरोति माङ्गल्यं मुण्डनेन संस्करोतीत्यर्थः सि०कौ०। एवं मद्रशब्देऽपि बोध्यम्।

भद्रक त्रि०भद्र—स्वार्थे संज्ञायां वा कन्। १मनोहरे त्रिका०। २भद्रमुस्तके न० शब्दमाला। ३देवदारुवृक्षे शब्दर०। "भौ नरनारनावथ गुरुर्दिगर्कविरमं हि भद्रकमिदम्"। वृ०र०उक्ते द्वाविंशत्यक्षरपादके ४छन्दोभेदे।

भद्रकण्ट पु० भद्रः कण्टोऽस्य। गोक्षुरक्षुपे राजनि०।

भद्रकर्ण पु० भद्रस्य वृषस्य कर्णो यत्र। गोकर्णरूपे तीर्थभेदे।

भद्रकर्णेश्वर पु०६त०। गोकर्णस्थे शिवलिङ्गभेदे भा०व०८१अ०।

भद्रकार त्रि० भद्रं करोति कृ—अण् उप०स०। १मङ्गलकारके २देशभेदे पु० भा० स० १२ अ०।

भद्रकाय पु०। १माद्रवत्यां जाते श्रीकृष्णस्य पुत्रभेदे हरिवं० १६२ अ०। ६ब०। २मङ्गलदेहके त्रि०।

भद्रकाली स्त्री १दुर्गाशक्तिभेदे "जयन्ती मङ्गला काली भद्रकाली कपालिनी" दुर्गापूजामन्त्रः। तदाविर्भावकथा च कालिपु० ६०अ० दृश्या। तन्मन्त्रादिकं तन्त्रसारे दृश्यम्। २कुमारानुचरभेदे भा० श० ४७ अ०।

भद्रकाशी स्त्री भद्राय काशते काश-अच् गौरा० ङीष्। भद्रमुस्तायाम् राजनि०।

भद्रकाष्ठ न० ६त०। देवदारुवृक्षे सुश्रुत। [अमरः।

भद्रकुम्भ पु० भद्रकारकः कुम्भः शा०त०। पूर्णकुम्भे जलपूर्णघटे

भद्रगन्धिका पु० भद्रो गन्धोऽस्त्यस्या बाहुल्येन ठन्। मुस्तके रत्नमाला।

भद्रगौर पु० देशभेदे स च पूर्वदिग्वर्त्ती ब्र०कं०५८ अ०।

भद्रङ्कर त्रि०भद्र करोति कृ—खच् मुम्। मङ्गलकारके।

भद्रङ्करण न०भद्र क्रियतेऽनेन कृ—ल्युट् मुम्। मङ्गलसाधने।

भद्रचारु पु० रुक्मिण्यां जाते वासुदेवस्य पुत्रभेदे हरिवं०११८अ०

भद्रचूड पु० भद्रा चूडा यस्य। (बड्डासिज) वृक्षभेदे शब्दच०।

भद्रज पु० भद्राय जायते जन—ड। इन्द्रयवे राजनि०।

भद्रतरुणी स्त्री भद्र' तरुणीव। कुब्जकवृक्षे राजनि०।

भद्रतुङ्ग पु० तीर्थभेदे भा०अ० ८२अ०।

भद्रतुरग न० भद्रास्तुरगा यत्र। जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे। "माल्यवज्जलधिमध्यवर्त्ति यत्तत् भद्रतुरग जगुर्बुधा" सि० शि० जम्बुद्वीपशब्दे भद्राश्वशब्दे च विवरणं दृश्यम्।

भद्रदन्तिका स्त्री कर्म० स्वार्थे कन्। दन्तीवृक्षभेदे।

भद्रदारु पुंन०। कर्म०। देवदारुवृक्षभेदे अमरः।

भद्रद्वीप पु० कुरुवर्षान्तर्गते उपद्वीपभेदे मार्कपु० ५८ अ०।

भद्रनामन् पु०६ब०। (काटठोकरा) खगभेदे त्रिका०।

भद्रनामिका स्त्री भद्र मङ्गलं नामयति प्रापयति नम—णिच्—ण्वुल्। त्रायन्तीलतायां रत्नमा०।

भद्रनिधि पु० दानार्थकल्पिते ताम्रादिघटितघटे तद्दानविधिश्च हेमा० दा० वामनपु० उक्तो यथा

"पुण्यान्तिथिं प्र प्य तु पौर्णमास्यां तथोपरागे शशिसूर्ययोर्वा। चतुर्युगादिष्वयनद्वये वा प्रबोधने प्रस्वपनेऽथ विष्णोः। कुर्यादथौदुम्बरमेव कुम्भं हिरण्यभारेण यथात्मशक्त्या। तथाविधानस्य सुराजतं स्यात् हिरण्यभारेण तु पूरयेत् तम्। तदर्द्धतोऽर्द्धेन तदर्द्धतो वा यथाशक्ति स्वर्णपलैः शतेन। तदर्द्धमर्द्धेन तु वित्तशक्त्या पलत्रय द्वर्द्धमपि प्रकुर्य्यात्। तत्ताम्रभाण्डे कनकं निधाय सवज्रनीलोत्पलपद्मरागम्। सवैदूर्य्यं सविद्रुमञ्च तद्राजत पात्रमधोमुखं स्यात्। एतत्तु त भद्रनिधि सुविद्वान् कृत्वासने प्रावरणोपयुक्ते। क्षुमोत्तरे दर्पणचामराढ्ये सपादुकोपानहछत्रयुक्तम्। सदुक्तौमनस्तोत्रपुष्पयुक्तं संपूजयेन्मन्त्रवरैरथैतै" "आदौ तु पञ्चामृतकेन विष्णुं संस्नाप्य सद्यास्तरं समर्च्य। तथेश्वरं पावकमेव हुत्वा आमन्त्रयेद्भद्रनिधिं ततस्तम्। श्रीखण्डकर्पूरसकुङ्कुमेन पञ्चाक्षरं नाम श्रियः प्रलिख्य। नमस्तथोङ्कारयुक्तं च पाते तद्राजतेऽप्येवमथार्चयेत। त्वया समस्तामरसिद्धयक्षविद्याधरेन्द्रोरगकिंनरेन्द्रैः। गन्धर्वविद्याधरदानवेन्द्रैर्युतं धृतं विश्वमिदं नमस्ते। समस्तसंसारकरी त्वमेव विभो सदानन्दमयी च माया। समस्तकल्याणनिधिः सदाभि। हरिप्रिये। भद्रनिधिर्नमस्ते। एवं पूज्य विधानेन ततो विप्रमथार्चयेत्। किरीटाङ्गदनिष्काग्र्यकुण्डलाङ्गुलिभूषणैः। अलङ्कृत्य हरिं तद्वत् पीताम्बरधरं ततः। पूजयेदच्युतं ध्यात्वा मन्त्रेणानेन भक्तिमान्। भूदेवोऽसीत्यतो नित्यं नित्यानन्दमयो हरे!। हर मे दुष्कृतं कृष्ण! कृपाकर! नमस्तु ते। भूदेव! भगवद्धर्म! भवभङ्गकरेश्वर!। भवभूतिकरोजिष्णो! प्रभविष्णुर्नमोऽस्तु ते। एवं पूज्य हृदि ध्यात्वा तं द्विजं विष्णुरूपिणम्। ततो भद्रनिधिं दद्यान्मन्त्रेणानेन मानवः। स्वनामोच्चारणेनादौ वसुनाम तथात्मनः। यवदर्भतिलैः सार्द्धमुदकं संपरित्यजेत्। पितृसन्तारणार्थाय नित्यानन्दविवृद्धये। सर्वाघौघविनाशाय विष्णो

**भयद्रुत** त्रि॰ भयेन द्रुतः ३त॰। भयेन पलायिते अमरः।

**भयनाशन** त्रि॰ भयं नाशयति नाशि—ल्यु। १भयनिवारके २विष्णौ पु॰ "भयकृत् भयनाशन" विष्णुस॰।

**भयनाशिनी** स्त्री भयं रोगभयं नाशयति नश—णिच्—णिनि। त्रायमाणालतायाम् राजनि॰। [त्रिनः स्थापके।

**भयब्राह्मण** पु॰ भयेन ब्राह्मणः सम्पद्यते। भीत्या विप्रत्वेना-

**भयभ्रष्ट** त्रि॰ ६त॰। भयेन पलायिते जटाधरः।

**भयव्यूह** पु॰ भये सति व्यूह। पार्श्वादितो भयभेदेन राज्ञा कर्त्तव्ये व्यूहभेदे भयभेदेन तत्प्रकारः काम॰ नी॰ उक्तो यथा "यायाद्व्यूहेन महता मकरेण पुरोभये। श्येने-नोभयपक्षेण सूच्या वाधीरचक्रया। पश्चाद् भये तु शकटं पार्श्वयोर्वज्रसंज्ञितम्। सर्वतः सर्वतो भद्रं भयव्यूह प्रकल्पयेत्"।

**भयानक** पु॰ बिभेत्यस्मात् भी—आनक। १व्याघ्रे २राहौ ३रसभेदे च मेदि॰। ४भयङ्करे त्रि॰। ५भीते॰ अपादाने अमर। तद्लक्षणादि सा॰द॰ उक्तं यथा "भयानको भयस्थायिभावः कालाधिदैवतः। स्त्री-नीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः। यस्मादुत्-पद्यते भीतिस्तदत्रालम्बनं मतम्। चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः। अनुभावोऽत्र वैवर्ण्यं गद्गदस्वर-भाषणम्। प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः। जुगुप्सावेगसम्मोहसन्त्रासग्लानिदीनताः। शङ्कापस्मारसंभ्रान्तिमृत्य्वाद्या व्यभिचारिणः"।

**भयापह** त्रि॰ भयमपहन्ति अप+हन—ड। १भयनाशके २नृपे पु॰ त्रिका॰ ३विष्णौ पु॰ "जितमन्युर्भयापहः" विष्णुस॰

**भयावह** त्रि॰ भयमावहति आ+वह—अच् ६त॰। भय-कारके हेमच॰।

**भय्य** न॰ भी—भावे यत् वेदे नि॰। भये यजुर्मी॰ १०।५।६। लोके तु भेयमित्येव। [त्रि॰ अमर।

**भर** पु॰ भृ—अप्। १अतिशये। कर्त्तरि अच्। २भरणकर्त्तरि

**भरग** त्रि॰ भरमतिशयं गच्छति गम—ड। १अतिशयगन्तरि भरगेति पर्य्यायद्योत्ये २भर्गशब्दार्थे परमब्रह्मणि यथोक्तं ब्रह्म॰स॰ योगियाज्ञवल्क्येन "भेति भासयते यस्मात् रेति रञ्जयति प्रजाः। गेति च गच्छतेऽजस्रं भरगात् भर्ग उच्यते"। तत्र भासि—ड भ रञ्जि ड—रः। गम—ड गः तेषां समाहारः भरगम्। तदर्थत्वयोगात् भर्ग इत्युच्यते इत्यर्थः।

**भरट** पु॰ भृ—अटन्। १कुम्भकारे तेन हरति भस्त्रा॰ ष्ठन् भरटिक तेन हर्त्तरि त्रि॰ स्त्रियां षित्त्वात् ङीष् भरटिकी।

**भरण** न॰ भृ—भावकरणादौ ल्युट्। १वेतने २पोषणे ३धारणे च। अश्विन्यश्विके द्वितीये ४नक्षत्रे शब्दर॰ ५घोषक-लतायाञ्च स्त्री ङीप्। नक्षत्रभेदे पु॰ मेदि॰। तत्तारायोग-तारादिकम् अश्लेषाशब्दे उक्तम् सा च राशिचक्रस्य ४॰अ-शोत्तरं १३।२० कलाधिकशतात्मिका। उग्रगणान्तर्गता-अधोमुखान्तर्गता च। भरणेन हरति भस्त्रादि॰ ष्ठन् भर-णिक वेतनेन हारिणि त्रि॰ स्त्रियां ङीष्।

**भरणीभू** पु॰ भरण्यां भवति भू—क्विप्। राहुग्रहे हेमच॰ भगदैवतशब्दे दृश्यम्।

**भरण्ड** पु॰ भृ—अण्डन्। १स्वामिनि २नृपे च उणादिको॰।

**भरण्य** कण्ड्वा॰ नामधातु भुरण्येत्यत्र पाठान्तरम् धारणे पोषणे पर॰ सक॰ सेट् भरण्यति भुरण्यति वा।

**भरण्यभुज्** त्रि॰ भरण्यं वेतनं भुङ्क्ते भुज—क्विप्। वैत-निक कर्मकरे अमर॰। [इष्टे (रामदूती) शब्दच॰।

**भरण्याह्वा** स्त्री भरण्या आह्वा आख्या यस्याः। यष्टिपुष्पी-

**भ(भु)रण्यु** पु॰ कण्ड्वा॰ भ(भु)रण्य उन्। १शरण्ये २मित्रे च शब्दमाला। ३अग्नौ ४चन्द्रे ५स्वामिनि च सं॰ क्षिप्तसा॰। भुरण्युरिति पाठान्तरम्।

**भरत** पु॰ भर तनोति तन—ड। (जडभरत) इति ख्याते १मुनिभेदे जडभरतकथा च २०१५ पृ॰ दृश्या नाट्यशास्त्रस्य अलङ्कारशास्त्रस्य च २कर्त्तरि मुनिभेदे ३शबरे ४तन्तुवाये ५क्षेत्रे ६कैकेयीसुते रामानुजे च। भरतेन प्रोक्तम् भारतं नाट्यशास्त्रमधीयते अण् तस्य लुक्। ७तच्छास्त्राध्येतृषु ब॰व॰। ८दुष्मन्तेन शकुन्तलायामुत्पादिते पुत्रभेदे पु॰ तस्यापत्यानि इञ् तस्य बहुषु लुक्। ९भरतवंश्ये नृपे पु॰ब॰व॰। दौष्मन्तिभरतकथा भाग॰९।२०अ॰ दृश्या १०ऋषभदेवपुत्रभेदे भाग॰५।४अ॰। ११वह्निपुत्रभेदे "पावको लौकिको ह्यग्निः प्रथमो ब्रह्मणः सुतः। ब्रह्मौदनाग्निस्तत्पुत्रो भरतो नाम विश्रुतः" मात्स्ये ४८ अ॰। रामानुजभरतस्य जन्म यथा "भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः। साक्षा-द्विष्णोश्चतुर्भाग सर्वैः समुदितो गुणैः"। १२भौत्यमनुपुत्रभेदे मार्कपु॰ १००अ॰। १३आयुधजीविसङ्घभेदे पु॰ तत यौधेया॰ स्वार्थे अण्। भारत तदर्थे न॰ व॰। १४ऋत्विक्षु ब॰ व॰ निघण्टु॰।

**भरतखण्ड** कुमारिकाखण्डे "कुमारिकेति विख्याता यस्मा नाम्ना प्रकथ्यते। इदं कुमारिकाखण्डं चातुर्वर्ण्यक-प्रदम्। यथा वसावनीयस्य नाशायामादिलक्षणा।

**भयद्रुत** त्रि० भयेन द्रुतः ३त०। भयेन पलायिते अमरः।

**भयनाशन** त्रि० भयं नाशयति नाशि–ल्यु। १भयनिवारके २विष्णौ पु० "भयकृत् भयनाशन" विष्णुस०।

**भयनाशिनी** स्त्री भय रोगभयं नाशयति नश–णिच्–णिनि। त्रायमाणालतायाम् राजनि०। [त्रिनः स्त्रापके।

**भयब्राह्मण** पु० भयेन ब्राह्मणः सम्पद्यते। भीत्या विप्रत्वेना-

**भयभ्रष्ट** त्रि० ३त०। भयेन पलायिते जटाधरः।

**भयव्यूह** पु० भये सति व्यूहः। पार्श्वादितो भयभेदेन राज्ञा कर्त्तव्ये व्यूहभेदे भयभेदेन तत्प्रकारः कामं नी० उक्तो यथा "यायाद्व्यूहेन महता मकरेण पुरोभये। श्येने-नोभयपक्षेण सूच्या वाधीरचक्रया। पश्चाद् भये तु शकटं पार्श्वयोर्वज्रसञ्ज्ञितम्। सर्वतः सर्वतो भद्रं भयव्यूह प्रकल्पयेत्"।

**भयानक** पु० बिभेत्यस्मात् भी–आनक। १व्याघ्रे २राहौ ३रसभेदे च मेदि०। ४भयङ्करे त्रि०। ५भीतेः अपादाने अमर। तद्रसलक्षणादि सा०द० उक्तं यथा "भयानको भयस्थायिभावः कालाधिदैवतः। स्त्री-नीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः। यस्मादुत्-पद्यते भीतिस्तदत्रालम्बनं मतम्। चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः। अनुभावोऽत्र वैवर्ण्यं गद्गदस्वर-भाषणम्। प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः। जुगुप्सावेगसम्मोहसन्त्रासग्लानिदीनताः। शङ्काप-स्मारसंभ्रान्तिमृत्य्वाद्या व्यभिचारिणः"।

**भयापह** त्रि० भयमपहन्ति अप+हन–ड। १भयनाशके २नृपे पु० त्रिका०३विष्णौ पु० "जितमन्युर्भयापह" विष्णुस०

**भयावह** त्रि० भयमावहति आ+वह–अच् ३त०। भय-कारके हेमच०।

**भय्य** न० भी–भावे यत् वेदे नि०। भये यजु०भी० १०।५।६। लोके तु भेयमित्येव। [त्रि० अमर।

**भर** पु० भृ–अप्। १अतिशये। कर्त्तरि अच्। २भरणकर्त्तरि

**भरग** त्रि० भरमतिशयं गच्छति गम–ड। १अतिशयगन्तरि भरगेति वर्णत्रयद्योत्ये २भर्गशब्दार्थे परब्रह्मणि च यथोक्तं ब्राह्म०स० योगियाज्ञवल्क्येन "भेति भासयते यस्मात् रेति रञ्जयति प्रजाः। गेति च गच्छतेऽजस्रं भरगात् भर्ग उच्यते"। तत्र भासि–ड भ. रञ्जि ड–रः। गम–ड गः तेषां समाहारः भरगम्। तदर्थत्वय-योगात् भर्ग इत्युच्यते इत्यर्थः।

**भरट** पु०भृ–अटन्। १कुम्भकारे तेन हरति भस्त्रा०ष्ठन् भर-टिक तेन हर्त्तरि त्रि० स्त्रियां षित्त्वात् ङीष् भरटिकी।

**भरण** न० भृ–भावकरणादौ ल्युट्। १वेतने २पोषणे ३धारणे च। अश्विन्यवधिके द्वितीये ४नक्षत्रे शब्दर०। ५घोषक-लतायाञ्च स्त्री ङीप्। नक्षत्रभेदे पु० मेदि०। तस्याः योग-तारादिकम् अश्लेषाशब्दे उक्तम् सा च राशिचक्रस्य४०अं-शोत्तर १३।२० कलाविकलात्मिका। अधोमुखनक्षत्रगता-अधोमुखत्वगता च। भरणेन हरति भस्त्रादि०ष्ठन् भर-णिक वेतनेन हारिणि त्रि० स्त्रियां ङीप्।

**भरणीभू** पु० भरण्या भवति भू–क्विप्। राहुग्रस्ते हेमच० भगदैवतशब्दे दृश्यम्।

**भरण्ड** पु० भृ–अण्डन्। १स्वामिनि २वृषे च उणादिको०।

**भरण्य** कण्ड्वा० नामधातु भुरण्येत्यत्र पाठान्तरम् धारणे पोषणे पर० सक० सेट् भरण्यति भुरण्यति वा।

**भरण्यभुज्** त्रि० भरण्यं वेतनं भुङ्क्ते भुज–क्विप्। वैत-निक कर्मकरे अमर। [दूते (रामदूती) शब्दच०।

**भरण्याह्वा** स्त्री भरण्याः आह्वा आह्वा यस्याः। पर्ट्सुली-

**भ(भु)रण्यु** पु० कण्ड्वा० भ(भु)रण्य उन्। १शरण्ये २मित्रे च शब्दमाला। ३अग्नौ ४चन्द्रे ५स्वामिनि च सं-क्षिप्तसा०। भुरण्युरिति पाठान्तरम्।

**भरत** पु० भर तनोति तन–ड। (जड़भरत) इति ख्याते १मुनिभेदे जड़भरतकथा च २०१५ पृ० दृश्या नाट्यशास्त्र-प्रवर्त्तकस्य आचार्यस्य च २कर्त्तरि मुनिभेदे ३शबरे ४तन्तुवाये ५क्षेत्रे ६कैकेयीसुते रामानुजे च। भरतेन प्रोक्तम् भारत नाट्यशास्त्रमधीयते अण् तस्य लुक्। ७तच्छास्त्राध्येतृषु ब०व०।दुष्मन्तेन शकुन्तलायामुत्पादिते पुत्रभेदे पु०तस्याप-त्यानि इञ् तस्य बहुषु लुक्।८भरतवंश्ये नृपे पु०ब०व०। दौष्मन्तिभरतकथा भाग०६।२०अ०दृश्या १०ऋषभदेवपुत्रभेदे भाग०५।४अ०। ११वह्निपुत्रभेदे "पावनो लौकिको ह्यग्निः प्रथमो ब्रह्मणः सुत। ब्रह्मौदनाग्निस्तत्पुत्रो भरतो नाम विश्रुत" मात्स्ये ४८ अ०। रामानुजभरतस्य जन्म यथा "भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रम। साक्षा-द्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः"।१२भौत्यमनुपुत्रभेदे मार्कपु०१००अ०। १३आयुधजीविसङ्घभेदे पु० तत यौधेया० स्वार्थे अण्। भारत तदर्थे ब०व०। १४क्षत्रियजु ब० व० निघण्टुः।

**भरतखण्ड** कुमारिकाखण्डे "कुमारिकेति विख्याता यस्या नाम्ना प्रकथ्यते। इदं कुमारिकाखण्ड चतुर्वर्णोपल-क्षितम्। यथा भ्रातावनीयस्य नानाग्रामादिकल्पना।

ऽग्निदः । तथैवाग्नीसखो भल्ली वीरवृक्षश्च शोफहृत् । भल्लातकफलं पक्वं स्वादुपाकरसं लघु । कषायं पाचनं स्निग्धं तीक्ष्णोष्णं छेदि भेदनम् । मेध्यं वह्निकरं हन्ति कफवातव्रणोदरम् । कुष्ठार्शोग्रहणीगुल्मशोफानाह-ज्वरक्रिमीन् । तन्मज्जा मधुरो वृष्यो वृंहणो वातपित्तहा । वृन्तमायुष्करं स्वादु पित्तघ्नं केश्य-मग्निकृत् । भल्लातकः कषायोष्णः शुक्रलो मधुरो लघुः । वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् । हन्ति गुल्म-ज्वरं श्वित्रवह्निमान्द्यक्रिमिव्रणान्" भावप्र०। गुडभल्लातक-शब्दे भल्लातकीगुडपाकविधिर्दृश्यः ।

**भल्लातकतैल** सुश्रुतोक्ते भल्लातकफलच्यवनजाते तैलभेदे "दुष्टत्वात् तु शुक्लानां कृष्णकर्म हितं भवेत् । भल्ला-तकान्यासयेत् तु क्षीरे प्राङ्मूत्रभावितान् । ततो द्विधा छेदयित्वा लौहे कुम्भे निधापयेत् । कुम्भेऽन्यस्मिं-स्निखाते तु तं कुम्भमथ योजयेत् । सम्यं सुखेन स-न्धाय गोमयैर्दाहयेत् ततः । यः स्नेहश्च्यवते तस्मा-दुपाहरेत् तं शनैर्भिषक् । आनूपशफान्दग्ध्वान् सूक्ष्मचूर्णानि कारयेत् । तैलेनानेन संसृष्टं शुक्लमालेप-येद् व्रणम् । भल्लातकविधानेन सारस्नेहांस्तु कार-येत् । ये च केचित्फलस्नेहा विधानं तेषु कीर्त्तितम् । दुष्टत्वात्तु कृष्णानां पाण्डुकर्म हितं भवेत् । सप्तरात्रं स्थितं क्षीरे छागले रोहिणीफलम् । तेनैव पिष्टं सूक्ष्मं सवर्णकरणं हितम्" । [लौषधभेदे

**भल्लातकलौह** न० चक्रदत्तोक्ते भल्लातकादियुक्ते लौहरूपे "चित्रकं त्रिफला मुस्तं ग्रन्थिकं चविकाऽमृता । हस्ति-पिप्पल्यपामार्गदण्डोत्पलकुठेरकाः । एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत् । भल्लातकसहस्रे द्वे छित्त्वा तत्रैव दापयेत् । तेन पादावशेषेण लौहपात्रे पचेद्भिषक् । तुलार्द्धं तीक्ष्णलौहस्य घृतस्य कुडवद्वयम् । त्र्यूषणं त्रिफलावह्निसैन्धवं विडमौद्भिदम् । सौवर्च-लविडङ्गानि पलिकांशानि कल्पयेत् । कुडवं देवदारुस्य तालमूल्याश्चैव च । शूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिःक्षिपेत् । सिद्धे शीते प्रदातव्यं मधुनः कुडवद्वयम् । प्रातर्भोजनकाले च ततः खादेद् यथाबलम् । अर्शांसि ग्रहणीदोषं पाण्डुरोगमरोचकम् । क्रिमिगुल्मा-श्मरीमेहान् शूलञ्चाशु व्यपोहति । करोति शुक्रोप-चयं वलीपलितनाशनम् । रसायनमिदं श्रेष्ठं सर्व-रोगहरं परम्" ।

**भल्लातकविधान** सुश्रुतोक्ते भल्लातकफलसेवनप्रकारभेदे "अत ऊर्द्ध्वं भल्लातकविधानमुपदेक्ष्यामः । भल्लातकानि परिपक्वान्यनुपहतान्याहृत्यैकमादाय द्विधा त्रिधा चतुर्धा वा छेदयित्वा कषायकल्पेन विपाच्य कषायस्य शुक्तिमञ्जलिं घृताभ्यक्ततालुजिह्वौष्ठः प्रातः प्रातरुपसेवेत ततोऽपराह्णे क्षीरं सर्पिरोदन इत्याहार एवमेकैकं वर्द्धयेत् तावद्-यावत्पञ्चेति ततः पञ्च पञ्चाभिवर्द्धयेद्यावत् सप्ततिरिति प्राप्य च सप्ततिमपकर्षयेदूर्ध्वः पञ्च पञ्च यावत्पञ्चेति पञ्चभ्यश्चैकैकं यावदेकमिति । एवं भल्लातकसहस्र-मुपयुज्य सर्वकुष्ठार्शोभिर्विमुक्तो बलवानरोगः शतायु-र्भवति । द्वितीयोक्तेन विधानेन भल्लातकनिस्त्र-तितं स्नेहमादाय प्रातः प्रातः शुक्तिमात्रमुपयुञ्जीत जीर्णे पूर्ववदाहारः फलप्रकर्षश्च । भल्लातकमज्जभ्यो वा स्नेहमादायापहृतदोषः प्रतिसंसृष्टभक्तो निवातमा-गारं प्रविश्य यथाबलं प्रसृतिं प्रकुञ्चं चोपयुञ्जीत । तस्मिन् जीर्णे क्षीरं सर्पिरोदन इत्याहारः" ।

**भल्ली** स्त्री भल्ल हिंसे अच् गौरा० ङीष् । भल्लातके शब्द-रत्ना० तत्फलस्य स्पर्शेन व्रणकारितया हिंसकत्वा-त्तस्यास्तथात्वम् । स्वार्थे क भल्लिका तत्रार्थे शब्दच० ।

**भल्लु(ल्लू)क** पु०स्त्री भल्ल-उ(ऊ) क । (भालुक) १जन्तुभेदे अमरः स्त्रियां ङीष् । २श्योनाकभेदे राजनि० । स च वीरभल्लादिगणे सुश्रुते उक्तः । हृस्वमध्यशब्दे दृश्यम् । ३कोषस्थे जलजन्तुभेदे "शङ्खशङ्खनखशुक्तिशम्बूकभल्लूक-प्रभृतयः कोषस्थाः" सुश्रुत ।

**भव** पु० भवत्यस्मात् भू-अपादाने अप् । १महादेवे तस्य तन्नामनिरुक्तिः शत० ब्रा० ६।१।३।१५ । "तमब्रवीद्भवो-ऽसीति । तद्यदस्य तन्नामाकरोत्पर्जन्यस्तद्रूपमभवत् पर्जन्यो वै भवः पर्जन्याद्धीदं सर्वं भवति सोऽब्रवीज्ज्या-यान् वाऽतोऽस्मि धेह्येव मे नामेति" अतस्य पर्जन्यरूपेण-त्वात् तस्य जलमूर्त्तित्वम् । अतएवाष्टमूर्त्तिमध्ये जलरूपेण भवनाम्ना तस्याख्या । भावे अप् । २जन्मनि ३उत्पत्तौ ४प्राप्तौ ५संसारे मेदि० । कर्त्तरि अच् (चावता) ६सत्ते न०-राजनि० ।

**भवक** त्रि० भू-वुन् । १भवतरि २आशीर्वादके संक्षिप्तसा० ।

**भवकेतु** पु० केतुभेदे वृ०स० ११अ० केतुशब्दे दृश्यम् ।

**भवघस्मर** पु० ६त० । दावानले शब्दमा० ।

**भवत्** त्रि० भा-डवतु । १युष्मदर्थे, सर्वनामता चास्य । भवान् भवन्तौ भवन्तः । भू-शतृ । २वर्त्तमानकालार्थे

निजघ्निवान् । यत्रामुच्यन्त ते पार्थाः पञ्च कृष्णबलाश्रयात् । सात्यकिश्च महेष्वासः शेषाश्च निधनं गताः । पाञ्चालानां प्रसुप्तानां यत्र द्रोणसुताद्वधः । धृष्टद्युम्नस्य सूतेन पाण्डवेषु निवेदितः । द्रौपदी पुत्रशोकार्त्ता पितृभ्रातृवधार्दिता । कृतानशनसङ्कल्पा यत्र भर्त्तॄनुपाविशत् । द्रौपदीवचनाद्यत्र भीमो भीमपराक्रमः । प्रियं तस्याश्चिकीर्षन् वै गदामादाय वीर्यवान् । अन्वधावत् सुसंक्रुद्धो भारद्वाजं गुरोः सुतम् । भीमसेनभयाद्यत्र दैवेनाभिप्रचोदितः । अपाण्डवायेति रुषा द्रौणिरस्त्रमवासृजत् । मैवमित्यब्रवीत् कृष्णः शमयंस्तस्य तद्वचः । यत्रास्त्रमस्त्रेण च तच्छमयामास फाल्गुनः । द्रौणेश्च द्रोहबुद्धित्वं वीक्ष्य पापात्मनस्तदा । द्रौणिद्वैपायनादीनां शापाश्चान्योन्यकारिताः । मणिं तथा समादाय द्रोणपुत्रान्महारथात् । पाण्डवाः प्रददुर्हृष्टा द्रौपद्यै जितकाशिनः । एतद्वै दशमं पर्व सौप्तिकं समुदाहृतम् । अष्टादशास्मिन्नध्यायाः पर्वण्युक्ता महात्मना । श्लोकाश्च कथितान्यत्र शतान्यष्टौ प्रसंख्यया । श्लोकाश्च सप्ततिः प्रोक्ता मुनिना ब्रह्मवादिना । सौप्तिकैषीकसम्बद्धे पर्वण्युत्तमतेजसा (१०) । (सौप्तिकपर्व)

"अत ऊर्द्ध्वमिदं प्राहुः स्त्रीपर्व करुणोदयम् । पुत्रशोकाभिसन्तप्तः प्रज्ञाचक्षुर्नराधिपः । कृष्णोपनीतां यत्रासौ आयसीं प्रतिमां दृढाम् । भीमसेनद्रोहबुद्धिर्धृतराष्ट्रो बभञ्ज ह । तथा शोकाभितप्तस्य धृतराष्ट्रस्य धीमतः । संसारगहनं बुद्ध्या हेतुभिर्मोक्षदर्शनैः । विदुरेण च यत्रास्य राज्ञश्चाश्वासनं कृतम् । धृतराष्ट्रस्य चात्रैव कौरवायोधनन्तथा । सान्तःपुरस्य गमनं शोकार्त्तस्य प्रकीर्त्तितम् । विलापो वीरपत्नीनां यत्रातिकरुणः स्मृतः । क्रोधावेशः प्रमोहश्च गान्धारीधृतराष्ट्रयोः । यत्र तान् क्षत्रियान् शूरान् सङ्ग्रामेष्वनिवर्त्तिनः । पुत्रान् भ्रातॄन् पितॄंश्चैव ददृशुर्निहतान् रणे । पुत्रपौत्रवधार्त्तायास्तथात्रैव प्रकीर्त्तिता । गान्धार्य्याश्चापि कृष्णेन क्रोधोपशमनक्रिया । यत्र राजा महाप्राज्ञः सर्वधर्मभृतां वरः । राज्ञां तानि शरीराणि दाहयामास शास्त्रतः । तोयकर्मणि चारब्धे राज्ञामुदकदानिके । गूढोत्पन्नस्य चाख्यानं कर्णस्य पृथयात्मनः । सुतस्यैतदिह प्रोक्तं व्यासेन परमर्षिणा । एतदेकादशं पर्व शोकवैक्लव्यकारकम् । प्रणीतं सज्जनमनोवैक्लव्याश्रुप्रवर्त्तकम् । सप्तविंशतिरध्यायाः पर्वण्यस्मिन् प्रकीर्त्तिताः । श्लोकसप्तशती चापि पञ्चसप्ततिसंयुता । संख्यया भारताख्यानमुक्तं व्यासेन धीमता (११) (स्त्रीपर्व)

"अतःपरं शान्तिपर्व द्वादशं बुद्धिवर्द्धनम् । यत्र निर्वेदमापन्नो धर्मराजो युधिष्ठिरः । घातयित्वा पितॄन् भ्रातॄन् पुत्रान् सम्बन्धिमातुलान् । शान्तिपर्वणि धर्माश्च व्याख्याताः शारतल्पिकाः । राजभिर्वेदितव्यास्ते सम्यग्ज्ञानबुभुत्सुभिः । आपद्धर्माश्च तत्रैव कालहेतुप्रदर्शिनः । यान् बुद्ध्वा पुरुषः सम्यक् सर्वज्ञत्वमवाप्नुयात् । मोक्षधर्माश्च कथिता विचित्रा बहुविस्तराः । द्वादशं पर्व निर्द्दिष्टमेतत् प्राज्ञजनप्रियम् । अत्र पर्वणि विज्ञेयमध्यायानां शतत्रयम् । त्रिंशच्चैव तथाध्याया नव चैव तपोधनाः । चतुर्दशसहस्राणि तथा सप्त शतानि च । सप्त श्लोकास्तथैवात्र पञ्चविंशतिसंख्यया (१२) । (शान्तिपर्व)

"अत ऊर्द्ध्वञ्च विज्ञेयमनुशासनमुत्तमम् । यत्र प्रकृतिमापन्नः श्रुत्वा धर्मविनिश्चयम् । भीष्माद्भागीरथीपुत्रात् कुरुराजो युधिष्ठिरः । व्यवहारोऽत्र कार्त्स्न्येन धर्मार्थीयः प्रकीर्त्तितः । विविधानाञ्च दानानां फलयोगाः प्रकीर्त्तिताः । तथा पात्रविशेषाश्च दानानाञ्च परो विधिः । आचारविधियोगश्च सत्यस्य च परा गतिः । महाभाग्यं गवाञ्चैव ब्राह्मणानां तथैव च । रहस्यञ्चैव धर्माणां देशकालोपसंहितम् । एतत् सुबहुवृत्तान्तमुत्तमञ्चानुशासनम् । भीष्मस्यात्रैव सम्प्राप्तिः स्वर्गस्य परिकीर्त्तिता । एतत्त्रयोदशं पर्व धर्मनिश्चयकारकम् । अध्यायानां शतं त्वत्र षट्चत्वारिंशदेव तु । श्लोकानान्तु सहस्राणि प्रोक्तान्यष्टौ प्रसंख्यया (१३) । (अनुशासनपर्व)

"ततोऽश्वमेधिकं नाम पर्व प्रोक्तं चतुर्दशम् । तत् संवर्त्तमरुत्तीयं यत्राख्यानमनुत्तमम् । सुवर्णकोषसम्प्राप्तिर्जन्म चोक्तं परीक्षितः । दग्धस्यास्त्राग्निना पूर्वं कृष्णात् सञ्जीवनं पुनः । चर्य्यायां हयमुत्सृष्टं पाण्डवस्यानुगच्छतः । तत्र तत्र च युद्धानि राजपुत्रैरमर्षणैः । चित्राङ्गदायाः पुत्रेण पुत्रिकाया धनञ्जयः । सङ्ग्रामे बभ्रुवाहेन संशयञ्चात्र दर्शितः । अश्वमेधे महायज्ञे नकुलाख्यानमेव च । अनुगीता तथा प्रोक्ता सम्यग्भगवता पुनः । कथितः शाश्वतो धर्मः कृष्णेनार्ज्जुनसन्निधौ । तथा ब्राह्मणगीता च संवादो गुरुशिष्ययोः । इत्याश्वमेधिकं पर्व प्रोक्तमेतन्महाद्भुतम् । अध्यायानां शतञ्चैव त्रयोऽध्यायाश्च कीर्त्तिताः । त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च । विंशतिश्च तथा

श्लोकाः संख्यातास्तत्त्वदर्शिना” (१४ आश्वमेधिकपर्व)।

“ततस्त्वाश्रमवासाख्यं पर्व पञ्चदश स्मृतम्। यत्र राज्यं समुत्सृज्य गान्धार्या सहितो नृपः। धृतराष्ट्राश्रमपदं विदुरश्च जगाम ह। यं दृष्ट्वा प्रस्थितं साध्वी पृथाप्यनुययौ तदा। पुत्रराज्यं परित्यज्य गुरुशुश्रूषणे रता। यत्र राजा हतान् पुत्रान् पौत्रानन्यांश्च पार्थिवान्। लोकान्तरगतान् वीरानपश्यत् पुनरागतान्। ऋषेः प्रसादात् कृष्णस्य दृष्ट्वाश्चर्यमनुत्तमम्। त्यक्त्वा शोकं सदारश्च सिद्धिं परमिकां गतः। यत्र धर्मं समाश्रित्य विदुरः सुगतिं गतः। सञ्जयश्च महामात्यो विद्वान् गावल्गणिर्वशी। ददर्श नारदं यत्र धर्मराजो युधिष्ठिरः। नारदाच्चैव शुश्राव वृष्णीनां कदनं महत्। एतदाश्रमवासाख्यं पर्वोक्तं सुमहाद्भुतम्। द्विचत्वारिंशदध्यायाः पर्वैतदभिसंख्यया। सहस्रमेकं श्लोकानां पञ्च श्लोकशतानि च। षडेव च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना” (१५ आश्रमवासपर्व)

“अतः परं निबोधेदं मौषलं पर्व दारुणम्। यत्र ते पुरुषव्याघ्राः शस्त्रस्पर्शसहा युधि। ब्रह्मदण्डविनिष्पिष्टाः समीपे लवणाम्भसः। आपाने पानकलिता दैवेनाभिप्रचोदिताः। एरकारूपिभिर्वज्रैर्निजघ्नुरितरेतरम्। यत्र सर्वक्षयं कृत्वा तावुभौ रामकेशवौ। नातिचक्रमतुः कालं प्राप्तं सर्वहरं महत्। यत्रार्जुनो द्वारवतीमेत्य वृष्णिविनाकृताम्। दृष्ट्वा विषादमगमत् परां चार्त्तिं नरर्षभः। स संस्कृत्य नरश्रेष्ठं मातुलं शौरिमात्मनः। ददर्श यदुवीराणामापाने वैशसं महत्। शरीरं वासुदेवस्य रामस्य च महात्मनः। संस्कारं लम्भयामास वृष्णीनां च प्रधानतः। स वृद्धबालमादाय द्वारवत्यास्ततो जनम्। ददर्शापदि कष्टायां गाण्डीवस्य पराभवम्। सर्वेषाञ्चैव दिव्यानामस्त्राणामप्रसन्नताम्। नाशं वृष्णिकलत्राणां प्रभावाणामनित्यताम्। दृष्ट्वा निर्वेदमापन्नो व्यासवाक्यप्रचोदितः। धर्मराजं समासाद्य संन्यासं समरोचयत्। इत्येतन्मौषलं पर्व षोडशं परिकीर्त्तितम्। अध्यायाष्टौ समाख्याताः श्लोकानाञ्च शतत्रयम्। श्लोकानां विंशतिश्चैव संख्यातास्तत्त्वदर्शिना” (१६ मौषलपर्व)।

“महाप्रस्थानिकं तस्मादूर्द्ध्वं सप्तदशं स्मृतम्। यत्र राज्यं परित्यज्य पाण्डवाः पुरुषर्षभाः। द्रौपद्या सहिता देव्या महाप्रस्थानमास्थिताः। यत्र तेऽग्निं ददृशिरे लौहित्यं प्राप्य सागरम्। यत्राग्निना चोदितश्च पार्थस्तस्मै महात्मने। ददौ सम्पूज्य तद्दिव्यं गाण्डीवं धनुरुत्तमम्। यत्र भ्रातॄन् निपतितान् द्रौपदीञ्च युधिष्ठिरः। दृष्ट्वा हित्वा जगामैव सर्वाननवलोकयन्। एतत् सप्तदशं पर्व महाप्रस्थानिकं स्मृतम्। तत्राध्यायास्त्रयः प्रोक्ताः श्लोकानाञ्च शतत्रयम्। विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना”। (१७महाप्रस्थानिकपर्व)।

“स्वर्गपर्व ततो ज्ञेयं दिव्यं यत्तदमानुषम्। प्राप्तं दैवरथं स्वर्गान्नेष्टवान् यत्र धर्मराट्। आरोढुं सुमहाप्राज्ञ आनृशंस्याच्छुना विना। तामस्याविचलां ज्ञात्वा स्थितिं धर्मे महात्मनः। श्वरूपं यत्र तत्त्यक्त्वा धर्मेणासौ समन्वितः। स्वर्गं प्राप्तः स च तथा यातना विपुला भृशम्। देवदूतेन नरकं यत्र व्याजेन दर्शितम्। शुश्राव यत्र धर्मात्मा भ्रातॄणां करुणा गिरः। निदेशे वर्त्तमानानां देशे तत्रैव वर्त्तताम्। अनुदर्शितश्च धर्मेण देवराजेन पाण्डवः। आप्लुत्याकाशगङ्गायां देहं त्यक्त्वा स मानुषम्। स्वधर्मनिर्जितं स्थानं स्वर्गे प्राप्य स धर्मराट्। मुमुदे पूजितः सर्वैः सेन्द्रैः सुरगणैः सह। कर्णस्य नरकप्राप्तिः प्रमोक्षश्चात्र कीर्त्यते। समागमश्च वीराणां स्वर्गलोके महात्मनाम्। कीर्त्यते यत्र विधिवत् स्वर्गस्थानं पृथक् च। स्वानि स्थानानि च प्राप्ता यत्र ते पुरुषर्षभाः। एतदष्टादशं पर्व प्रोक्तं व्यासेन धीमता। अध्यायाः पञ्च संख्याताः पर्वण्यस्मिन्महात्मना। श्लोकानां द्वे शते चैव प्रसंख्याते तपोधनाः। नव श्लोकास्तथैवान्ये संख्याताः परमर्षिणा। (१८स्वर्गारोहणिकपर्व)।

अष्टादशैवमेतानि पर्वाण्युक्तान्यशेषतः। खिलेषु हरिवंशश्च भविष्यञ्च प्रकीर्त्तितम्। विष्णुपर्व शिशोश्चर्या विष्णोः कंसवधस्तथा। भविष्यं पर्व चाप्युक्तं खिलेष्वेवाद्भुतं महत्। दश श्लोकसहस्राणि विंशत् श्लोकशतानि च खिलेषु हरिवंशे च संख्यातानि महर्षिणा”। “भारतं शृणुयान्नित्यं भारतं परिकीर्त्तयेत्। भारतं भवने यस्य तस्य हस्तगतो जयः” भा० आ० १अ०। भर-तस्य अपत्यादि शुभ्रा०ढक् भारतेय तदपत्यादौ पुंस्त्री०।

**भारतवर्ष** पु न० जम्बुद्वीपान्तर्गते वर्षभेदे जम्बुद्वीपशब्दे २०४६ पृ० दृश्यम्।

**भारती** स्त्री भृ-अतच्। स्वार्थे प्रज्ञाद्यण्। १शब्दे तदधिदेवतायाः २सरस्वत्याः ३पक्षिभेदे “भारती सङ्कतप्रायो वाग्व्यापारो नराश्रयः” इति सा०द०प० अलङ्कारोक्ते

४वृत्तिभेदे च ५व्याधिनाशपाधिभेदे च स्त्री ।

भारद्वाज पु० भरद्वाजस्य गोत्रापत्यम् अण् । गोत्रप्रवर्त्तके १मुनिभेदे २द्रोणाचार्य्ये मेदि० ३अगस्त्यमुनौ शब्दर० ४व्याघ्राटविहगे ५बृहस्पतिपुत्रे च हेमच० ६वनकार्पास्यां स्त्री ङीप् । पृषो० । भाद्वाजीत्यप्यत्र । विदा० अञ् ततः अश्वा० फञ् । भारद्वाजायन तद्गोत्रापत्ये पुस्त्री० । स्त्रियां ङीप् । भारद्वाजी हृत० । भारद्वाजीपुत्र तत्पुत्रे च च यजुर्वेदस्य वंशस्थः ऋषिभेदः शत०ब्रा०१४।९।४।३।

भारभृत् त्रि० भारं बिभर्त्ति भृ—क्विप् । १भारधारके । २विष्णौ पु० "भारभृत् कथितो योगी" विष्णु स० ।

भारसेय त्रि० भारसस्येदम् शुभ्रा० ढक् । भरसम्बन्धिनि स्त्रियां ङीप् ।

भारय पु० भारेण रयो वेगो यस्य । (भारुइ) खगभेदे शब्दच० ।

भारयष्टि स्त्री भारस्य वहनार्थां यष्टिः शाक०त० । भारवहनदण्डे (बाँक) अमरः ।

भारव न० भारं वाति वा—क । धनुर्गुणे त्रिका० ।

भारवाह(ह) त्रि० भारं वहति अण् णिच वा । भारवाहिनि अमर० । भारवाहकोऽप्यत्र । अमर० स्त्रियां ङीप् णिचप्रत्ययान्तस्य शब्दादावन्तादौ ङीपि च ऊठ् । भारौह० भारौही ।

भारवि पु० किरातार्जुनीयकाव्यकारके १कविभेदे । "तावद्भा भारवेर्भाति यावन्माघस्य नोदयः । उदिते च पुनर्माघे भारवेर्भा रवेरिव" उद्भट० । तत्कृते २काव्ये च "उपमा कालिदासस्य भारवेरर्थगौरवम्" उद्भट ।

भारवृक्ष पु० भारीभूतो वृक्षः । कालोनागगन्धवृक्षे शब्दच० ।

भार(ह)हार त्रि० भार हरति हृ—अण् अच् वा । भारवाहके तथा तद्वहने अच् । उद्यमने तु अप् इति भेदः ।

भाराक्रान्त त्रि० ३त० । १भारेणाक्रान्ते "भाराक्रान्ता नमनरसना गुरुः श्रुतिरचहयै" छन्दोम०उक्ते २चतुर्दशाक्षरपादके वर्णवृत्तभेदे स्त्री ।

भारि पु० इभस्यारिः पृषो० । सिंहे हेमच० ।

भारिक त्रि० भारं वहति भार+ठक् । भारवाहके अमर० ।

भारिट पु० भारा रेटति रिट—क । शतपत्रके खगभेदे राजनि० ।

भारिन् त्रि० भारोऽस्त्यस्य प्राशस्त्येन इनि । भारवाहके एतदुत्तरस्थ माल्यशब्दस्य ह्रस्वः । मालभारी । "मल्लिकामालभारिण्य" काव्याद० ।

भारुण्ड पु० उत्तरकुरुवर्षस्थे १खगभेदे तद्रूपकस्मे "भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा भयानकाः । तानिर्हरन्तीह मृतान् दरीषु प्रक्षिपन्ति च" भा०भी० ७अ० । २साममेदे तत्र भारुण्डेति पाठभेदः । तत्साममन्त्रस्य ऋषिभेदे "भारुण्डसामगीताभिरथर्वशिरसोद्गते" भा०चा०६७ अ० । तत्र सामार्चिके १।२।२ "इमं स्तोमर्हते" इत्यादिमन्त्रे गेय साम, तत्कृत तथादानादिपद्धतौ १०२ पृ०दृश्यम् । "आज्यदोहानि सामानि शान्तिक भारुण्डानि च । पश्चिमे द्वारपालौ तु पठेतां सामगौ तथा" विधानपा० ।

भारूप न० भारूपमस्य । पिदादिके १अग्नौ २आत्मनि पु० ।

भार्ग पु० भर्गस्य देशभेदस्य राजा अण् । १भर्गदेशन्पे तत्र तद्राजस्य भार्गो० स्त्रियां न लुक् । भार्गी । २प्रतर्दनस्य पुत्रभेदे पु० हरिवं० २९ अ० ।

भार्गभूमि पु० आङ्गिरसे भार्गपुत्रभेदे हरिवं० ३अ० ।

भार्गव पुंस्त्री० भृगोरपत्यम् तद्गोत्रापत्यं वा अण् । भृगुवशे बहुत्वे तु अत्रिभृग्वित्यादिना अणो लुक् । भृगवः तद्गोत्रापत्येषु । २शुक्राचार्य्ये ३धन्विनि ४गजे च पु० मेदि० । तेन प्रोक्ता तेनाधीता ज्ञाता वा अण् । ५वेदप्रसिद्धे विद्याभेदे ६पार्वत्यां ७नल्याम् ८दूर्वायां च स्त्री मेदि० ङीप् । प्राच्ये ९देशभेदे पु० । "ब्रह्मोत्तरा प्रविजया भार्गवाग्नेयमत्स्यकाः" मार्कपु० । १०द्रुपदनगरस्थे कुम्भकारभेदे पु० भा०आ०१९०अ० । ११महादेवे पु० भा० द्रो० २०२अ० ।

भार्गवन न० द्वारकास्थे वनभेदे हरिवं० १५७ अ० ।

भार्गवप्रिय पु० ६त० । हीरके तस्य शुक्रग्रहप्रियत्वात् तथात्वम् । [भर्गगोत्रापत्ये ।

भार्गायण पुंस्त्री० भर्गस्य गोत्रापत्यं त्रैगर्त्त फञ् । त्रैगर्त्ते

भार्गी स्त्री भार्गस्येयमण् । (वामनहाटि) वृक्षभेदे राजनि० ।

भार्म्य पु० भर्गस्य गोत्रापत्यं गर्गा० यञ् । पुरुवंश्ये नृपभेदे भाग० ९।२१।२१ ।

भार्य्या स्त्री भृ—ण्यत् । १विधिनोढायां स्त्रियाम् २स्त्रीमात्रे ३भरणीयमात्रे त्रि० । भार्य्याशब्दस्य सूपाहवनीयादिवत् रूढ़ौ विवाहसंस्कारसहितस्त्रीबोधकः । तस्याः गुणदोषा यथा "सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रियंवदा । सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता । नित्यस्नाता सुगन्धा च नित्यञ्च प्रियवादिनी । अल्पभुक् अल्पभाषी च सततं मङ्गलैर्युता । सततं धर्म्मबहुला सततञ्च पतिप्रिया । सततं प्रियवक्त्री च सततं भर्तृकामिनी । पितृदेवक्रियायुक्ता सर्वसौभाग्यवर्द्धिनी ।

यस्येदृशी भवेद्भार्य्या देवेन्द्रो न च मानुषः"। "यस्य भार्य्या विरूपाक्षी कश्मला कलहप्रिया। उत्तरोत्तरवादा स्यात् सा जरा न जरा जरा। यस्य भार्य्या त्विताश्रया परवेश्माभिकाङ्क्षिणी। कुक्रिया त्यक्तलज्जा च सा जरा न जरा जरा। यस्य भार्य्या गुणज्ञा च भर्त्तारमनुगामिनी। अल्पाल्पेन तु सन्तुष्टा सा प्रिया न प्रिया प्रिया। दुष्टा भार्य्या शठो मित्रं भृत्याश्चोत्तरदायकाः। ससर्पे च गृहे वासो मृत्युरेव न संशयः। आपत्सु मित्रं जानीयात् युद्धे शूरं वने शुचिम्। भार्य्यांश्च विभवे क्षीणे दुर्भिक्षे च प्रियातिथिम्"। गारुडे १०८।१०९ अ०। "वृद्धस्मतिश्चाप "यस्य नास्ति सती भार्य्या गृहेषु प्रियवादिनी। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। सुशीला सुन्दरी शान्ता गता यस्य गृहोदरात्। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। भावानुरक्ता वनिता मृता यस्य च सत्गुणा। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। दैवेनापहृता यस्य पतिसाध्वी पतिव्रता। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। यस्य माता गृहे नास्ति भार्य्या चाप्रियवादिनी। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। प्रियाशून्यं गृहं यस्य पुत्रे चोधनमन्युभिः। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। भार्य्याशून्या वनसमा सभार्य्यांश्च गृहा गृहाः। गृहिणी च गृहं प्रोक्तं न गृहं गृहमुच्यते। अशुचिः स्त्रीविहीनस्तु दैवे पैत्रे च कर्मणि। यदह्ना कुरुते कर्म न तस्य फलभाग्भवेत्। दाहकशक्तिहीनश्च यथा वह्नो हुताशनः। प्रभाहीनो यथा सूर्य्यः शोभाहीनो यथा शशी। शक्तिहीनो यथा जीवो यथात्मा च तनुं विना। विनाधारं यथाधेयो यथैव प्रकृतिं विना। न च यज्ञो यथा यज्ञः फलदां दक्षिणां विना। कर्मिणे च फलं दातुं सामर्थ्यमेव च। विना स्वर्णं स्वर्णकारो यथाऽशक्तः स्वकर्मणि। यथाऽशक्तः कुलालश्च मृत्तिकाञ्च विना द्विजाः!। तथा गृही न शक्तश्च सततं सर्वकर्मणि। भार्य्यामूलाश्च पुत्राश्च भार्य्यामूला गृहास्तथा। भार्य्यामूलं सुखं शश्वद् गृहस्थानां गृहे सदा। भार्य्यामूलो सदा हर्षः भार्य्यामूलस्तु मङ्गलम्। भार्य्यामूलश्च संसारो भार्य्यामूलश्च सौरतम्। यथा रथश्च रथिनां गृहिणाञ्च तथा गृहम्। सारथिस्तु यथा तेषां गृहस्थानां तथा प्रिया। सर्वरत्नप्रधाना च स्त्रीरत्नं दुष्कुलादपि। सा गृहीता गृहस्थेनेत्याह कमलोद्भवः। यथा जलं विना पद्मं पद्मं शोभा विना यथा। तथैव च गृहं शश्वद् गृहिणा गृहिणीं विना"। ब्रह्मवै०पु० प्र० ख० ५६ अ०। "तोषयेत् सततं भार्य्या विधिवत् पाणिपीडिताः। तासां तुष्ट्या तु कल्याणमकल्याणमतोऽन्यथा। सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च। यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्। यया विरज्यते स्वामी सौभाग्यमदहृष्टया। असतीसङ्गमं कर्त्तुं सा स्यादेष्या भवान्तरे। इहापि लोकेऽवाच्यत्वमधर्मश्चापि विन्दति। न च पितृकुले स्वामिकुले तस्याः प्ररोहते। विरुध्यमाने पत्यौ यत् सपत्न्या वा प्रवर्त्तते। अतीव दुःखं भवति तदकल्याणकारणयोः" कालिकापु० २० अ०।

**भार्य्याट** पु० भार्य्यां तद्दानमटति अट्–अण् उप० स०। अन्यस्मै स्वभार्य्यादानार्थं गन्तार त्रिका०।

**भार्य्याटिक** पु० भार्य्यया आटो गतिः प्रयोजनमस्य ठक्। १स्त्रीजिते २हरिणभेदे च मेदि०।

**भार्य्यारु** पु० भार्य्यं धार्य्यमृच्छति ऋ–उण्। १शैलभेदे २हरिणभेदे। भार्य्यां परभार्य्यामृच्छति ऋ–उण्। ३अनियोगेन परभार्य्यागामिनि च मेदि०।

**भार्य्यावृक्ष** पु० भार्य्येव प्रियत्वात् वृक्षो यस्य। पतङ्गे राजनि०। [अवभार्य्ये

**भार्य्योढ** पु० ऊढा भार्य्या येन आहिता० वा परनिपातः।

**भाल** न० भा–लच्। १ललाटे भ्रुवोरूर्ध्वभागे २तमसि मेदि०।

**भालकृत्** पु० गोत्रप्रवर्षिभेदे प्रवराध्यायः।

**भालचन्द्र** पु० भाले चन्द्रोऽस्य। १शिवे २गणेशे ३दुर्गायां स्त्री

**भालदर्शन** न० भाले दृश्यते कर्मणि ल्युट्। १सिन्दूरे शब्द० भाले दर्शनं नेत्रमस्य। २कपाललोचने महादेवे।

**भालदृश्** पु० भाले दृगस्य। त्रिनयने महादेवे हेमच०।

**भालनेत्र** पु० भाले नेत्रमस्य। १शिवे। भालनेत्रमादयोऽप्यत्र। २त्रिनयनायां दुर्गायां स्त्री।

**भालाङ्क** पु० भाले अङ्को यस्य भाले अङ्को यस्य वा। १शाकभेदे २करपत्रेऽस्त्रे (करात्) ३रोहितमत्स्ये महालक्षणविशेष ललाटचिह्नयुक्ते ४पुरुषभेदे ५शिवे ६कच्छपे च मेदि०। [उज्ज्वल०।

**भालु** पु० भाति रोगान् भ–उद्‌वने ञुण् रस्य लः। आदित्ये

**भालु(लू)क** पु० स्त्री०चु० भल–उक्ञरोमे नक उक वा। स्वा-

मत्स्याते मत्स्यभेदे अमरः पाठान्तरम्। स्त्रियां जातित्वात् ङीष्।

भाल्लवि पु० १शामवाणभेदे २तदध्येतरि च। "तामेतां भाल्लवय उपासते" ताण्ड्य ब्रा० २।२।४ "तामेतां परिवर्त्तिनीं विष्टुतिम् भाल्लविशाखाध्यायिन उपासते" भा०।

भाल्लू(ल्लु)क पुंस्त्री० भल्लूक+स्वार्थे अण् वा पृषो० ह्रस्वः। जन्तुभेदे भल्लूके स्त्रियां ङीष्।

भाव पु० भावयति चिन्तयति पदार्थान् चु०भू—अच्। भावोक्तौ नानापदार्थचिन्तके १पण्डिते। भावयति व्यापयति हृदयगतम् भू—णिच्—अच्। २हृद्गतावस्थाबोधके मानसविकारे स्वेदकम्पादौ व्यभिचारिभावे। ३सत्तादिभावे मेदि० भू-भावे घञ्। साध्यरूपे सिद्धरूपे वा ४क्रियारूपे धात्वर्थे। ५रागे ६आशये च ७स्वभावे ७चेष्टायाम् ८जन्मनि च अमर० ९विभूतौ। १०कर्त्तरि च। ११आत्मनि ११बुधे १२जन्तौ करणे च। १३गौरविते १५अभिनयभेदे त्रिका०। १६योनौ १७उपदेशे धरणिः। सत्तायें भवनरूपार्थे च। ज्यो० उक्ते १८जन्मादितः तन्वादि द्वादशभावे तच्छब्दे ३८०२ पृ० तदानयनप्र दर्श्यम्। २०स्त्रीणां यौवनकाले सत्त्वभवाष्टाविंशत्यलङ्कारान्तर्गतेऽङ्गजे प्रथमालङ्कारे। यथा "यौवने सत्त्वजास्तासामष्टाविंशतिसङ्ख्यकाः। अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः। तत्र भावः "निर्विकारात्मके चित्ते भावः प्रथमविक्रिया"। अस्यातः प्रभृतिनिर्विकारे मनसि उद्बुद्धमात्रो विकारो भाव०। यथा "स एव सुरभिः काल० स एव मलयानिलः। सैवेयमबला किन्तु मनोऽन्यदिव दृश्यते" सा० द०। भावश्च बहुप्रकारः यथा "शरीरेन्द्रियवर्गस्य विकाराणां विधायकाः। भावा विभावजनिताश्चित्तवृत्तय ईरिताः। पुराणे नाट्यशास्त्रे च द्वयोस्तु रतिभावयोः। समानार्थतया चात्र द्वयमेकत्वेन लक्ष्यते"। २१जन्मकाले द्वादशविधचेष्टाभेदे तदानयनं फलं च ज्यो० त० उक्तं यथा

"शयनञ्चोपवेशश्च नेत्रपाणिः प्रकाशनम्। गमनं गमनेच्छा च सभायां वसतिस्तथा। आगमनं भोजनञ्च नृत्यलिप्सा च कौतुकम्। निद्रा चेष्टाख्या भावाश्च द्वादशैते प्रकीर्त्तिताः"। भावानयनक्रमो यथा "नक्षत्रे विद्यते छेदस्तेन त परिपूरयेत्। पुनरंशेन संपूर्णं चैव तत्र नियोजयेत्। आतदाङ्कं तथा चन्द्रमेकीकृत्य सदा बुधैः। रविणा भागहारेण शेषं कार्यं नियोजयेत्"। अंशेन चयसंख्यया। कार्यं चेष्टाख्यं सप्तमम्ततम्। तद्यथा। "विशाखानक्षत्रयोयानि वैष्णवं भगदैवतं पुष्या पौष्णोत्तम सर्पो जन्मभान्यर्कत० क्रमात्। अश्वोराशि। यदा शेषे चेष्टतदा १एकपूरितचेष्टसंख्याङ्कः। यदा द्वे चेष्टतदा २द्विपूरितो चेष्टसंख्याङ्कः कार्यः। जाया-सुतमत्युप्रकृष्टचन्द्रत्रिकोणस्थानस्थितपापचेष्टायां निद्राशयनभावयोः फलम् "निद्रायाञ्च यदा पापो जायास्थाने शुभं वदेत्। यदि पाप शुभैर्दृष्टो नाशुभैश्च कदाचन। यदि वा शत्रुगेहो स्वाच्छयने यदि वेक्षित। तदा नारीवधं तस्य नाशो भवति निश्चितम्। शुभाशुभैर्यदा दृष्टः शुभचेष्टसमन्वित०। नारी च म्रियते तस्य प्रथमा च विशेषत०। सुतस्थाने स्थित० पापो निद्रायां शयनेऽपि वा। तदा शुभं भवेत्तस्य नात्र कार्या विचारणा। सुतस्थाने चतुष्टये वा त्रिकोणे वा यदा भवेत्। अपत्यस्य तदा नाशो जायते नात्र संशय०। शुभचेष्टो यदा तत्र क्रूरो वा यदि वेक्षित०। तदा प्रथमापत्यस्य नाशो भवति निश्चितम्। मृत्युस्थाने स्थितः पापो निद्राया शयनेऽपि वा। तदात्मनोऽपमृत्युः स्यात् ज्ञातितोऽपरतोऽपि वा। शुभचेष्टो यदा तत्र मृत्युस्थानेऽपि संस्थित०। तदा च मरणं तस्य मृत्युस्थाने विशेषत। पापचेष्टैर्यदा दृष्टः शुभो वा शत्रुवीक्षित०। तदा तस्य शिरश्छेदो मुनिना परिकीर्त्तित०। एवं क्रमेण बोद्धव्य चेष्टभावे सुबुद्धिना। नक्षत्रविचारेण जायते च शुभाशुभम्। ज्योतिर्विद्भ्य च सर्वेषु परिहार० कृतो मया। शयनादिकभावेषु ज्ञातव्यश्चोपदेशत०। एकादशे वा दशमालये वा धनालये वा यदि वा विलग्ने। पापेन युक्तो न शुभचेष्टयेत्तथापि सिद्धिं महतीं वदन्ति"। चेष्टभेदेन दशाभेदे फल यथा

"मन्दाग्नि. पित्तशूली च जायते शयने नर १। उपवेशे भवेच्छिल्पी श्यामवर्णस्तथा नरः२। नेत्रपाणौ भवेत् क्रूरो जलदोषो भवेन्नर ३। पुण्यवान् धार्मिकश्चैव धनवांश्च प्रकाशने४। गमने च रवेर्जात० रूपवान् धनसंयुत। बहुभाषी क्षमी क्रोधी लुब्धचित्तः यदा भवेत् ५। स्वल्पभोक्ता शीघ्रगामी दीर्घायुः सर्पवल्लभः। शूर श्रीमान् सुशीलश्च गमनेच्छाभवो नर ६। सभायाञ्च रवेर्जातः सत्यो दात० क्षमी भवेत्। दयालुः पण्डितो धीमान् गुणवान् पण्डित प्रिय:७। आगमने भवेन्मूर्खः कुरूपो धनवान् भ-

वेत्८। भोजने भक्तको मांसलुब्धो महायशुर्भवेत्९। नृत्यलिप्सौ सुन्दरो वाग्मी पण्डितश्चमहाधिप १०। उत्साही च महाभोगी कौतुके च दिवाकरे११। दाता भोक्ता प्रिय पुत्रकलत्राढ्यो न संशयः। लिङ्गे देहे करे चैव गुदे रोगी तथैव च। निद्रायाश्च भवेद्भानोः क्रोधनो रक्तनेत्रकः१२। इति रवेः।

"शयने च विधौ क्रोधी दरिद्रो बहुलम्पटः१। उपवेशे महारोगी धनवांश्च भवेन्नरः२। नेत्रपाणौ नेत्ररोगी श्लीपदी बहुभाषकः। क्रूरः खलोऽतिशूरश्च जायते च विधौ तदा३। प्रकाशने निशानाथे धनवांश्च भवेन्नरः। दक्षो बुद्धिमान् दाता च परदारेषु लम्पटः ४। अरोगी वित्तहा चैव क्रूरकर्मा धनान्वितः। शिरोरोगी दन्तशूली जायते गमने विधौ५। नानामतिर्महाक्रोधी सम्पद्युक्तो भवेन्नरः। गमनेच्छाविधौ जातो धनहीनो भवेत् तदा६। दाता च धार्म्मिकश्चैव राजपालो भवेत् सदा। सभायाञ्च विधौ नित्यं जायते पुरुषोत्तम ७। नित्यक्रोधी महादुःखी भवेदागमने विधौ८। भोजने च भवेत्सुखी भक्षकश्च महासुर ९। यो जातो नृत्यलिप्सायां गुणवान् धार्म्मिको भवेत्। बहुपुत्रो धनी दाता जायते नात्र संशय १०। कौतुके च भवेद्रोगी नानाविद्यासु तत्परः। उत्साही च महाक्रोधी जायते च सुनिश्चितम्११। निद्रायां दद्रुरोगी स्यात् क्लेशपापरुजान्वित। पुत्रशोकमहादुःखी नित्यं भ्रमति मेदिनीम्"१२। इति चन्द्रस्य।

"शयने च कुजे जातो नरोऽवद्ध्यहिरङ्गक। क्षणक्रोधी महाढ्यश्च कृपणो जायते नरः१। उपवेशे यदा भौमे जायते च नराधमः। धनवान् क्रूरकर्मा च निष्ठुरो जातिवर्ज्जितः२। नेत्रपाणौ च यो जातोऽप्यशिरोगी भवेन्नरः। पुत्रदारधनैर्युक्ता दारिद्र्येणैव दह्यते३। प्रकाशने कुजे जातो धनवान् पण्डित सुधी, नारी च म्रियते तस्य प्रथमा च विशेषत४। गमने च यदा जात प्रवासी नित्य दुःखित। शरीरे च भवेद्रोगी कण्ड्वादिकुष्ठदद्रुक ५। प्रवासी गमनेच्छायां गुदरोगी भवेच्च स। धनहीन कुकर्मा च जायते क्षितिजस्य च ६। सभायाञ्च यदा जातः धार्म्मिको बहुसम्पदा। गुणवांश्च महादाता शिरोरोगी भवेद्ध्रुवम्"७। आगमने नित्य रक्तो भवति नान्यथा। कर्णरोगी पित्तशूली जायते च नराधम ८। भोजने भूमिजस्यापि यो जातो मांसलुब्धकः। दृढवृत्ताख्यो महाक्रोधी मिथ्योत्साही धनान्वित ९। कुजस्य नृत्यलिप्सायां यो जातो धनवान् भवेत्। दाता भोक्ता सदा मानी राजपालो भवन्नसः१०। कौतुके क्षितिजस्यापि जातो भवति पण्डित। नानाधनेन संयुक्तो बहुपुत्रो द्विभार्य्यकः११। निद्रायां भूमिपुत्रस्य यो जातो मूर्ख एव सः। कलही बान्धवैः सार्द्धं शोकक्लेशरुजान्वित"१२। इति मङ्गलस्य।

"बुधस्य शयने जातो धनवान् दुःखित सदा। खञ्जश्च भवेद्वापि रक्तो भवति नान्यथा१। उपवेशे च यो जात. प्रवासी जायते ध्रुवम्। कविता गुणधीयुक्तो गौरवर्णो महाशयः२। नेत्रपाणौ च यो जात श्लीपदादिरुजान्वित। वधूरोगी विशेष स्यात् पुत्रनाशो भवेद्ध्रुवम्३। प्रकाशने भवेज्जातो राजपालो धनान्वित.। नानाधनेन संयुक्तो जायते वेदपारग४। गमने यो नरो जातः प्रवासी नित्यदुःखितः। शरीर क्षतमाप्नोति नित्यं तृष्णो भवेच्च स ५। यो जातो गमनेच्छायां लम्पटो दुष्टचित्तकः। स्त्रीवशो दुष्टभार्य्यश्च स नरो बहुभाषक ६। सभायाञ्च बुधे जातो मूर्खो भवति पण्डित। धनवान् धार्म्मिकश्चैव शिरोरोगी भवेत्तु सः७। क्रूर. खलो हतो मूर्खः पापशीलो भवेन्नर। कुपश्यागमने नित्यं जायते च नराधम ८। भोजने च भवेद् यो धनहीनो भवेन्नरः। परद्वेषी प्रवासी च शोकगात्रव्यथान्वित.९। यो जातो नृत्यलिप्सायां धनवान् पण्डित कवि। उत्साही च महाहृष्टो भुनक्ति सुखमद्भुतम्१०। कौतुके च यदा जातो भवेत् सर्वजनप्रिय। सर्वरोगी दद्रुयुक्तो धनवान्स्त्रीसुखस्य ११। निद्रायाञ्च यदा जातः सर्वदा शोकपापतः। नानादुःखमवाप्नोति रोगशोकजमव्ययम्"१२। इति बुधस्य।

'धनवान् लम्पट श्याम स्थूलग्रन्थरुजान्वित। जीवस्य शयने जातो मानवो नात्र संशय १। उपवेशे गुरोर्ज्जातो बहुभाषी च रोगवान्। पशुघाती महाशिल्पी श्लीपदीरोगसंयुत २। नेत्रपाणौ गुरोर्ज्जात कामरोगी धनी भवेत्। वाताद्दिश्वरयो नित्यं जायते नात्र संशय ३। गुरो प्रकाशे धनवान् शिल्पगुणो रुजान्वित.। दक्षो लम्पट पापी च श्यामवर्णो रुजान्वित ४। सर्वभीतो गूढकर्मा साहसी गमनोन्मुखे। परवित्तेन धनवान् पुमान् भवति

वाक्पतौ५ । गुरोश्च गमनेच्छायां जातो भवति मानवः । शूरो धनी प्रवासी च सेवाकर्म्मणि तत्परः६ । वक्ता दाता च धनवान् राजसेवान्वितो नरः । शूलरोगी भवेन्नित्यं सभायां वाक्पतौ स्थिते७ । धार्म्मिकस्तीर्थकामी धनी चागमने गुरौ । परदारेषु सलुब्धो जायते नात्र संशयः । भोजने बहुसौख्याढ्यो मांसलुब्धो महासुरः । कामुकः प्रियवाक्यश्च जायते नात्र संशयः८ । नृत्यलिप्सायां शठो वाग्मी धनवान् सात्त्विकस्तथा । महदैश्वर्य्यसंयुक्तो जीवस्य च भवेन्नरः१० । कौतुके च गुरोर्जातो धनवान् धार्म्मिकः सदा । नृत्योत्साही महत्सङ्गी भुनक्ति सुखमद्भुतम्११ निद्रायाञ्चैव यो जातश्चक्षूरोगी भवेच्च सः । कृपणो बहुभाषी च दुःखितो भ्रमते महीम्"१२ । इति गुरौ ।

"शुक्रस्य शयने जातो लम्पटो बहुभाषकः । दन्तरोगी महाक्रोधी नीचो भवति नित्यश१ । उपवेशे तथा जातो बलवान् दाम्भिकः सदा । नित्यप्रवासी रोगी च जायते नीचसंस्थिते२ । नेत्रपाणौ भृगोर्दुःखी रोगशोकसमन्वितः । धनहीनो महारोगी मानवः स्यान्न संशयः३ । भृगोः प्रकाशने जातो विद्याधनसमन्वितः । दाता च धार्म्मिकश्चैव कीर्त्तिमान् जायते नरः४ । शुक्रस्य गमने जातः पादमूले रुजान्वितः । नित्योत्साही महाशिल्पी भवेत्तीर्थगतौ रतः५ । गमनेच्छौ यदा जातो भ्रातृनाशो भवेद्ध्रुवम् । माता च म्रियते तस्य शैशवे व्याधिसंयुतः६ । सभायाञ्च भृगोर्जातो राजपात्रो महाधनी । कुलश्रेष्ठो महादक्षः केवलं शूलरोगवान्७ । भृगोरागमने जातो दुःखितो बहुलम्पटः । दद्रुरोगी पुत्रशोकी जायते च नराधमः८ । शुक्रस्य भोजने जातो बलवान् दाम्भिकः सदा । महाधनी भवेन्नित्यं वाणिज्येन विशेषतः९ । यो जातो नृत्यलिप्सायां स वाग्मी जायते ध्रुवम् । पाण्डित्यं कविता चैव वर्द्धते च दिने दिने । यदि चैव भवेन्नीचे मूर्खो भवति निश्चयः । तुङ्गस्थाने विशेषेण राजपात्रो महाधनी । कामुको बहुकान्तश्च परयोषित्प्रियः सदा । महाहृष्टो महावक्ता कौतुकी च भवेत् सदा । बहुपुत्रकलत्रश्च नानासुखसमन्वितः । नीचे तद्विपरीतं स्यात् दुःखशोकसमन्वित ११ । निद्रायाञ्च भृगोर्जातो भवेद्रोगी स निश्चितम् । नित्यक्रोधी महादुःखी जायते नात्र संशयः । जायायाश्च सुतस्थाने यदि निद्रा भृगोर्भवेत् । तदा सर्व्वविनाशः स्याद्विष्णुना परिकीर्त्तितम्" १२ । शुक्रस्य ।

"शयने च शनेर्जातो लम्पटो बहुभाषकः । गुह्यस्थाने भवेद्रोगी कोषवृद्धिश्च जायते । लग्नात् सप्ताष्टमे चैव शयनस्थ शनैश्चरः । तदा नित्यप्रवासी स्यात् स्वल्पव्ययी भवेच्च सः१ । उपवेशे यदा जातः श्लीपदीदद्रुसंयुतः । धनहीनो भवेत् तस्य पीड़ा भवति नित्यश २ । नेत्रपाणौ यदा जातो मूर्खो भवति पण्डितः । धनवान् धार्म्मिकश्चैव द्विभार्य्यो बहुभाषकः३ । प्रकाशने च यो जातो राजपात्रो भवेच्च सः । नानागुणेन गुणवान् धार्म्मिकः पण्डितः शुचिः ।" मतान्तरे "जायास्थाने च लग्ने च प्रकाशने यदा शनिः । तदा सर्व्वविनाशः स्याज्जातिध्वंसो भवेद् ध्रुवम्४ । गमने च यदा जातः पादमूले रुजान्वितः । तीर्थे च गतिमान्नित्यं पुत्रदारैर्विवर्जित५ । यो जातो गमनेच्छायां श्लीपदीरोगसंयुतः । दन्ताघाती महाक्रोधी कृपणः परनिन्दकः६ । सभायाञ्च शनौ जातः पुत्रदारधनैर्युतः । सर्व्वत्र लभते वित्तं नानारत्नसमन्वितम्७ । आगमने यदा जातो महाक्रोधी रुजान्वितः । सर्पादिभिश्च सदष्टो भ्रातृनाशो भवेद् ध्रुवम्८ । भोजने चैव यो जातो मन्दाग्निश्च महानपि । कर्णरोगी तथा शूली चक्षूरोगी भवेच्च सः । यो जातो नृत्यलिप्सायां नर्त्तको बहुभाषकः । लोके दुःखितश्चैव प्रवासी परिदेवकः१० । कौतुके च शनेर्जातो राजपात्रो महाशयः । दाता भोक्ता महादक्षो धार्म्मिकः पण्डितः शुचिः११ । निद्रायाञ्च शनेर्जातो धनवान् पण्डितः शुचिः । चक्षूरोगी पित्तशूली द्विभार्य्यो बहुपुत्रकः । विशेषतश्च धर्म्मस्थे कर्म्मस्थे च कदाचन । यदि देवाद्भवेन्निद्रा नाशो भवति निश्चितम् । कर्म्मनाशो धर्म्मनाशः क्षुधार्त्तः दुःखितः सदा । नित्यप्रवासी रोगी च कार्य्यनाशः पदे पदे । अमित्रगेहे षष्ठे वा केन्द्रे वा खगेहे पुनः । तदा सर्व्वं विचार्य्यञ्च वैपरीत्येन चिन्तनम् । जायायाश्च सुतस्थाने यदि निद्रा भवेत् पुनः । तदा सर्व्वं शुभं विद्याद्विष्णुना परिकीर्त्तितम्"१२ । शनेः ।

"शयने च यदा राहोर्जन्म यस्य भवेत् पुनः । तस्य क्लेशो महादुःखं जायते च न संशयः१ । उपवेशे च यो जातः श्लीपदीरोगसंयुतः । बहुहानिर्नरेन्द्रस्य पीड़ा भवति नित्यश २ । नेत्रपाणौ यदा जातश्चक्षूरोगी भवेद् ध्रुवम् । सर्पघातो महाभीतिर्द्विभार्य्यो बहुभाषकः३ । प्रकाशने च यो जातो धनवान् धा-

**भावत्क** त्रि० युष्मदर्थकात् भवच्छब्दात् इदमर्थे पक्षे ठक्। भवत्सम्बन्धिनि पक्षे छस्। सित्त्वात् पदत्वम्। भवदीय तत्रार्थे त्रि०।

**भावन** न० भू–णिच्–ल्यु। (वालता)।फलभेदे २विष्णौ पु०। भावे ल्युट्। ३अधिवासने ४चिन्तायाम् ५ध्याने ६पर्य्यालोचनायां वैद्यकोक्ते ७औषधसंस्कारभेदे। भावि–युच्। "व्यापारो भावना सैवोत्पादना सैव च क्रिया" उक्ते ८भवितुर्भवनानुकूलव्यापारभेदे स्त्री भट्टशब्दे दृश्यम्। अनुभवजन्ये स्मृतिहेतौ ९संस्कारभेदे स्त्री। "संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने" "अतीन्द्रियोऽसौ विज्ञेयः क्वचित् स्पन्देऽपि कारणम्। भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः। उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत्। स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते" भाषाप०। "भावनाख्य इति। तस्य संस्कारस्य, उपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेरुपेक्षानात्मकनिश्चय इत्युक्तम्। तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः। ननु कारणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वं तेनोपेक्षादिस्थले न कारणम् इत्यत्र संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेन्न विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात्। किञ्च उपेक्षास्थले संस्कारकल्पनाया गुरुत्वात् संस्कारं प्रति चोपेक्षान्यत्वेन हेतुतायाः सिद्धत्वात्। तत्र प्रमाणं दर्शयति। स्मरणे इति। असौ संस्कारः स्मरणं प्रत्यभिज्ञानञ्च जनयति। अत संस्कारः कल्प्यते। विना व्यापारं पूर्वानुभवस्य स्मरणादिजननासामर्थ्यं स्वव्यापारान्यतराभावे कारणत्वासम्भवात्। न च प्रत्यभिज्ञां प्रति तत्तत्संस्कारस्य हेतुत्वेन प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम्। अप्रयोजकत्वात्। परे तु अनुद्बुद्धसंस्कारात् प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्साक्षात्सैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः" सि०मु०। भू–चिन्तायां युच्। १०चिन्तायां स्त्री। चिन्ता च मानसवृत्तिभेदः सा च त्रिविधा यथोक्तं विष्णुपु० ६अं० ७अ०। "त्रिविधा भावना विप्र! विश्वमेतन्निबोधत। ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका। ब्रह्मभावात्मिका ह्येका कर्मभावात्मिका परा। उभयात्मिका तथैवान्या त्रिविधा भावभावना। सनन्दनादयो ब्रह्मभावभावनया युताः। कर्मभावनया चान्ये देवाद्याः स्थावराश्चराः। हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा। बोधाधिकारयुक्तेषु विद्यते भावभावना"। तुल्यशब्दे दर्शितं बौद्धमतसिद्धभावनाचतुष्टयञ्च दृश्यम्। ११भू–मिश्रणे भावे युच्। १२नियासादिना चूर्णद्रव्यस्य मिश्रीकरणे चूर्णद्रव्यस्य नियासादिना संस्कारभेदो भावना तत्प्रमाणमुक्तं भावप्र० यथा "द्रवेण यावता मानेन चूर्णं सर्वं प्लुतं भवेत्। भावनायाः प्रमाणन्तु चूर्णे प्रोक्तं भिषग्वरैः"।

**भावबोधक** पु० भावस्य रत्यादेर्बोधकः अनुभापकः। रत्याद्यनुभापके १भ्रूभङ्गादिरूपचेष्टाविशेषे २सखरागादौ च अमरः।

**भावयु** त्रि० भावमिच्छति क्यच् उन् वेदे नि०। भावेच्छौ। ऋ०१०।८६।१५। [ङीप्।

**भाववत्** त्रि० भाव+अस्त्यर्थे मतुप् मस्य वः। भावयुते स्त्रियां

**भावविकार** पु० ६त०। यास्कोक्तेषु उत्पत्तियुतपदार्थस्य जन्मादिषु षट्सु धर्मेषु "षड्भावविकारा भवन्तीति वार्ष्यायणिः, जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति, जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारं, वर्धत इति स्वाङ्गाभ्युच्चयं, सांयोगिकानां वार्थानां, वर्धते विजयेनेति वा वर्धते शरीरेणेति वा, अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमं, विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति"।

**भाववृत्त** पु० भावे वृत्तः प्रवृत्तः भावो वृत्तो जातो यस्माद्वा। सृष्टिकर्त्तरि ब्रह्मणि "अनुष्टुप् च भवेच्छन्दो भाववृत्तस्तु दैवतम्" स्मृतिः।

**भावाट** पु० भावं भावेन वा अटति अट–अण् अच् वा। १भावके २साधौ ३कामुके ४नटे ५निवेशे च मेदि०। भावे घञ् ६त०। ६भावप्राप्तौ।

**भावानुगा** स्त्री भावं पदार्थमाश्रय यानुगच्छति गम–ड। १छायायाम् २अभिप्रायानुगन्तरि त्रि० राजनि०।

**भावालीना** स्त्री भावे पदार्थे आलीना। छायायां राजनि०

**भाविक** त्रि० भावेन निर्वृत्तम् ठञ्। १भावसाध्ये पदार्थे २अर्थालङ्कारभेदे ४०१ पृ० दृश्यम्।

**भावित** त्रि० चु०भू–प्राप्तौ चिन्तायां मिश्रणे वा कर्मणि क्त। १वासिते २प्राप्ते मेदि०। ३शुद्धे ४चिन्तिते ५मिश्रिते वैद्यकोक्तनियासादिना मिश्रिते ६चूर्णादौ च। बीजग० उक्ते अव्यक्तानेकवर्गघातीकरणेन ७अङ्कीकरणे।

**भावित्र** त्रि० भू–सत्तायां णित्रन् । त्रैलोक्ये उज्ज्वल० ।

**भाविन्** त्रि० भू–गम्या० भविष्यति णिनि । १भविष्यत्पदार्थे "भाविनि भूतवदुपचार" न्याय । स्त्रियां ङीप् । भावो रत्यादिभाव सात्त्विकभावो वाऽस्त्यस्य एकाक्षरकृदन्तत्वेऽपि बाहुल्यार्थे इनि ङीप् । २बहुभावान्वितायां स्त्रियाम् भरत ३स्त्रीमात्रे राजनि० । ४गन्धर्वकन्याभेदे स्त्री मार्कपु०१२८ तत्र भामिनीति पाठान्तरम् ।

**भावुक** न० भू–उकञ् । १मङ्गले २तद्वति त्रि० अमर । ३भावनायुते त्रि० हेमच० । "मुहुरहो रसिका भुवि भावुकाः" इति भाग०१।१।३ ।

**भाव्य** न० भू–आवश्यके भावे ण्यत् ।१अवश्यम्भवितव्ये । भू–कर्त्तरि यत् भव्य स्वार्थे अण् । २भव्यशब्दार्थे "भावीत्यवश्यं यत् भाव्यं तत्र ब्रह्मा न बाधक "कालि०पु०३८अ० ।

**भाष** वचने भ्वा० आत्म० द्विक० सेट् । भाषते अभाषिष्ट । ऋदित् चङि न ह्रस्व । उपसर्गपूर्वकस्तु तत्तदुपसर्गद्योत्यार्थयुक्तकथने । परि+शास्त्रकारसङ्केते ।

**भाषण** न० भाष–भावे ल्युट् । कथने अमर । सा०द० उक्ते निर्वहणाङ्गभेदे "सन्धिर्विरोधो ग्रथनम्" इत्युपक्रमे "भाषणं पूर्ववाक्यञ्च" इत्यादिनोद्दिश्य लक्षित यथा "सामदानादि भाषणम्" ।

**भाषा** स्त्री भाष–अ । १वाक्ये २संस्कृतादिवाक्ये च "अष्टादश भाषावारविलासिनीभुजङ्ग" इति सा०द०। भाषाभेदाश्च प्राकृतशब्दे ४५४८पृ० दर्शिता । व्यवहारे ३प्रतिज्ञारूपपक्षवाक्ये "यदावेदयते राज्ञे तद्भाषेत्यभिधीयते" इति स्मृतिः । पूर्वपक्षशब्दे ४४०६ पृ० दृश्यम् । ४रागिणीभेदे हला० ।

**भाषासम** न० शब्दालङ्कारभेदे यथोक्तं सा०द० १०परि० । "शब्दैरेकविधैरेव भाषासु विविधास्वपि । वाक्यं यत्र भवेत् सोऽयं भाषासम इतीष्यते" यथा "मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे । विरसासि केलिकीरे किमालि । धीरे च गन्धसारसमीरे" एष श्लोक संस्कृतप्राकृतशौरसेनीप्राच्यावन्तीनागरापभ्रंशेष्वेकविध एव" ।

**भाषापाद** पु०कर्म०। चतुष्पाद्व्यवहारे प्रतिज्ञारूपके वाक्यरूपे प्रथमेऽंशे पूर्वपक्षशब्दे ४४०६ पृ० दृश्यम् ।

**भाषिक** त्रि०भाषया निर्वृत्त ठञ् । वेदादिपरिभाषानिर्वृत्ते निरु०२।२ । [कात्या०श्रौ०१।१।१८।१०। भाष्ये दृश्यम् ।

**भाषिकस्वर** पु० कर्म । मन्त्रेतरवेदभागब्राह्मणे पाठस्वरे

**भाषित** न०भाष–भावे–क्त । १कथने कर्मणि–क्त । २कथिते त्रि०। "भाषितपुंस्कात्" पा०। भाषित उक्त पुमान् येन अर्थ

**भाष्य** न० "सूत्रार्थो वर्ण्यते यत्र पदै सूत्रानुसारिभि । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो जना "इत्युक्तलक्षणे १सूत्रव्याख्याग्रन्थभेदे "फणिभाषितभाष्यफक्किका" नैष० । २कथनीये त्रि० ।

**भाष्यकार** पु० भाष्यं करोति कृ–अण् उप०स० । पाणिन्यादिसूत्रभाष्यकारके पतञ्जलिप्रभृतौ भाष्यकाराश्च सूत्रभेदे विभिन्ना यथा पाणिनिसूत्रस्य पतञ्जलि ब्रह्मसूत्रस्य शङ्कराचार्यादय । योगसूत्रस्य वेदव्यास, सांख्यसूत्रस्य विज्ञानभिक्षु, गौतमसूत्रस्य वात्स्यायन, कणादसूत्रस्य प्रशस्तपाद । मीमांसासूत्रस्य शबरस्वामी इत्यादय । "अहह्व भाष्यकारस्य कषायमीयधियावुभौ । नैव शब्दाम्बुधे पारं किमन्यो जडबुद्धय." दुगाह्व नैव न ऐव गतवन्तावित्यर्थः । क्विप् दुत०। भाष्यकृदप्यत्र ।

**भास** दीप्तौ भ्वा०आत्म०सक०सेट् । भासते अभासिष्ट । चङि वा ह्रस्व । अबीभसत् त अबभासत त । ज्ञानविषयत्वे च "प्रकारोभय भासते" । [मेदि० ३इच्छायां धरणि ।

**भास्** स्त्री भास–सम्प०भावे क्विप् ।१प्रभायाम् अमर० २मयूखे

**भास** पु० भास–भावे घञ् । १दीप्तौ विश्व आधारे घञ् २गोष्ठे । कर्त्तरि अच् । ३कुक्कुरे ४शुक्रे च ५शकुन्तपक्षिणि हेमच० "यज्ञार्थमददत् वस्तु भास काकोऽथवा भवेत्" स्मृति । ६कविभेदे "भासो हास कविकुलगुरु कालिदासो विलास" प्रसन्नरा० ।

**भासद्** न०भसद कटिदेशस्येदम् अण् । नितम्बे ऋ०१०।१६३ भाष्यम् । यजु०२५।६ वेददीपे तु भासते भास–बा०अदि। भासद् दीप्त तत्रार्थे इत्युक्तम् ।

**भासन्त** पु० भास–झच् । १सूर्ये २चन्द्रे उणा० ४नक्षत्रे हेमच०। ५सुन्दराकारे त्रि० ६भासखगे पुस्त्री० मेदि०। ७तारायां स्त्री गौरा० ङीष् ।

**भासस्** न० भास–भावे असुन् । दीप्तौ दिक्पकोष ।

**भासाकेतु** पु० भास–भावे अ । भासा दीप्त्या० ६त०। दीप्तिकारके वह्नौ ऋ० १०।२०।३ ।

**भासापुर** न० पुरभेदे उ०ख० १६अ० ।

**भासु** पु० भास–उण् । सूर्ये त्रिका० ।

**भासुर** त्रि०भास–घुरच् ।१दीप्तियुक्ते २स्फटिके च त्रिका०३वीरे पु० धरणि ४कुष्ठौषधे न०शब्दा०। [(विचारिते) राजनि०।

**भासुरपुष्पी** स्त्री० भासुरापि पुष्पाण्यस्याः । वृश्चिकाली

**भास्कर** पु० भास करोति भास्+कृ–ट च अस्क० । १सूर्ये

२अग्नौ मेदि० ३वीरे धरणिः। ४अर्कवृक्षे ५शिग्रुमानशिरो-मणिप्रसन्नकल्पद्रुमयिङ्गते। ६स्वर्णे न० राजनि०। ७मल्ला-देवे पु० भा० आनु० दश०। ८भास्करेण कृते पक्कलवण-भेदे न० चक्रदत्तः। भास्करलवणशब्दे दृश्यम्।

**भास्करद्युति** पु०भास्करे द्युतिरस्य। १विष्णौ पु० "चन्द्रांशु-र्भास्करद्युतिः" विष्णु स०। "यदादित्यगतं तेज" इत्युक्ते-स्तस्य तथात्वम्। ६त०। २सूर्यस्य द्युतौ स्त्री।

**भास्करप्रिय** पु० ६त०। पद्मरागमणौ (चुनि)।

**भास्करलवण** न० भास्करनिर्मिते लवणभेदे "पिप्पली पिप्पलीमूलं धन्याककृष्णजीरकम्। सैन्धवञ्च बिड्ञ्चैव पत्रं तालीशकेसरम्। एषां द्विपलिकान् भागान् पञ्चसौवर्चलस्य च। मरिचाजाजिशुण्ठीनामे-कैकस्य पलं पलम्। त्वगेला चार्द्धभागे च सामुद्रात् कु-डवद्वयम्। दाडिमात् कुडवश्चैव द्वे पले चाम्लवेत-सात्। एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम्। लवणं भास्करं नाम भास्करेण विनिर्मितम्। जगतस्तु हितार्थाय वातश्लेष्मामयापहम्। वातगुल्मं निहन्त्येत-द्वातशूलानि यानि च। तक्रमस्तुसुरासीधुयुक्तकाञ्जि-कयोजितम्। जाङ्गलानान्तु मांसेन रसेषु विविधेषु च। मन्दाग्नेरश्नत शक्तो भवेदाश्वेव पावकः। अर्शांसि च ग्रहणीदोषकुष्ठामयभगन्दरान्। हृद्रोगमामदोषांश्च वि-विधानुदरांस्तथा। प्लीहानमश्मरीञ्चैव श्वासकासोदर-क्रिमीन्। विशेषतः शर्करादीन् रोगान्नानाविधांस्तथा। पाण्डुरोगांश्च विविधान् शमयत्ययनिर्यथा" चक्रद०।

**भास्करावर्त्त** पु० सुश्रुतोक्ते शिरोरोगभेदे "सूर्योदयं या प्रतिमन्दमन्दमक्षिभ्रुवं रुक् समुपैति गाढम्। विव-र्द्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्त्तते च। शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नु-याच्च। तं भास्करावर्त्तमुदाहरन्ति सर्वात्मकं कष्टतमं विकारम्"। [२मुनिभेदे भा० शा० ४७ अ०।

**भास्करि** पु०भास्करस्यापत्यम्०इञ्।१वैवस्वते मनौ २कर्णे च।

**भास्करेष्टा** स्त्री ६त०। आदित्यभक्तायां राजनि०।

**भास्मन** त्रि० भस्मनो विकारः अण् मन्नन्तत्वात् न टिलोपः। भस्मविकारे।

**भास्मायन** प० भस्मनो गोत्रापत्यम् फक्ज्। भस्मर्षिगोत्रापत्ये तत आर्षे अण् स्त्रियां ङीप् भास्मायन्या तत्रार्थे स्त्री

**भास्वत्** पु० भास+अस्त्यर्थे मतुप् मस्य वः। १सूर्ये २अर्क-वृक्षे ३वीरे मेदि० ४दीप्ते त्रि० हेमच०। स्त्रियां ङीप्

सा च ५नद्यां श०र० ६उषसि च स्त्री निघण्टुः। ७ज्यो-तिषनिबन्धभेदे स्त्री यत्र सूर्यग्रहणादिनिरूपणमस्ति।

**भास्वर** त्रि० भास–वरच्।१दीप्तियुक्ते २सूर्ये ३अग्नौ मेदि० ४दिने ५अर्कवृक्षे च पु०। ६कुष्ठौषधे (कुड) न० राजनि० ७स्कन्दानुचरभेदे पु० भा० श० ४६ अ०।

**भिक्ष** लोभे लाभालाभोक्तौ सक० याचने द्विक० क्लेशे अक० भ्वा० आत्म० सेट्। भिक्षते अभिक्षिष्ट बिभिक्षे।

**भिक्षा** स्त्री भिक्ष–अ। १याच्ञायाम् अमरः। २सेवायां ३भृतौ च मेदि०। उपचारात् ४भिक्षिते वस्तुनि। तत्र ब्रह्मचारिभिक्षाप्रकारः ब्रह्मचर्यशब्दे ४५८६ पृ० उक्तः। तस्या दानावश्यकत्वम् प्रमाणं च प्रा०त० मार्कण्डे०उक्तं यथा"भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा। अदत्त्वा नैव भोक्तव्यं यथाविभवमात्मनः। ग्रासप्रमा-णाक्षिक्षा स्यात् अग्रं ग्रासचतुष्टयम्। अग्राच्चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः"। ग्रास परमात्मर्मित नव्य वर्द्धमानः"। भिक्षाया दानपात्राणि उक्तानि विष्णुपु० "दद्याच्च भिक्षात्रितयं परिव्राट्ब्रह्मचारिणाम्। स्वे-च्छया तु नरो दद्यात् विभवे सत्यवारितम्। इत्येते-ऽतिथयः प्रोक्ताः संप्राप्ता भिक्षुकाश्च ये। चतुरः पूजय-न्नेतान् न्वयतमात् प्रमुच्यते"। चकारः पूर्वोक्तातिथि-भोजनेन समुच्चयार्थः। सन्यासिभिक्षादाने तु "यति-हस्ते जलं दद्यात् भैक्ष्यं दद्यात् पुनर्जलम्। तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम्"। विष्णुधर्मोत्तरे "चाण्डालो वाथ पापी वा शत्रुर्वा पितृघातकः। देश-कालात्ययगतो भरणीयो मतो मम" विष्णुपु०। "व्या-धितस्याद्रहीनस्य कुटुम्बात् प्रच्युतस्य च। अध्वानं वा प्रपन्नस्य भिक्षाचर्यं विधीयते"। अत्र भिक्षाप्रदाने भो-जननिषेधात् मनुष्ययज्ञस्य नित्यत्वाच्च अतिथिप्राप्तेरनित्य-त्वात् यज्ञसिद्धये न प्राप्यमात्राय भिक्षादिदानमावश्यकम्। अतएव बोधायन. "अहरहर्ब्राह्मणेभ्योऽन्नं दद्यात् आमूलफलशाकेभ्यः अथैव मनुष्ययज्ञमाप्नोति"। विष्णुः भिक्षुकाभावे चापि गोभ्यो दद्यात् अग्नौ वा क्षिपेत्"।

**भिक्षाटन** न० भिक्षार्थमटनम्। भिक्षार्थं गमने तस्य सायं प्रातश्च निषेधो यथा "सायं प्रातर्द्विजश्चारं भिक्षार्थं नावघट्टयेत्" कूर्मपु० ९५ अ०।

**भिक्षादि** पु० "बहूनां भिक्षादिभ्योऽण्" पा० उक्ते अण्-प्रत्ययनिमित्ते शब्दगणे स च गणो यथा"भिक्षा भार्मणा

दद्देवगन्धर्वभेदे भा० आ० ६५ अ० । आङ्गिरसे यज्ञि-भेदे भा० व० २१६ अ० । १०दानवभेदे भा० श० २२७ अ० । ११अवाक्सुवंश्ये नृपभेदे हरिवं० २७ अ० । सात्वतवंश्ये १२नृपभेदे हरिवं० ८५अ० । १३विदर्भदेशीये नृपभेदे दमयन्तीपितरि तत्कथा भा० व०५१अ० । १४अष्टादशाक्षरमन्त्रभेदे "आदौ मध्ये तथा चान्ते चतुरक्षरयुतो मनुः । ध्यातव्यो भीम इत्येष वै साष्टादशाक्षरः" तन्त्रसा० ।

**भीमक** पु० पार्वत्यारोषजाते गणभेदे हरिवं० १६८अ० ।

**भीमजानु** पु० यमसभास्थे नृपभेदे भा० स० ८अ० ।

**भीमतिथि** स्त्री भीमोपासिता तिथिः शा०त० । भीमैका-दश्याम् माघशुक्लैकादश्याम् ।

**भीमद्वादशी** स्त्री भीमोपासिता द्वादशी १माघशुक्लद्वादश्याम् तत्र भीमसेनकृते २व्रतभेदे च हेमा० व० पद्मपु० ।

**भीमनाद** पु०६ब०। १सिंहे शब्दच०। कर्म०। २भयानकशब्दे पु०

**भीमपराक्रम** त्रि० भीम: पराक्रमोऽस्य । १भयानकपराक्रमे २विष्णौ पु० "भीमो भीमपराक्रम" विष्णुस० ।

**भीमपुर** न० ६त० । विदर्भराजस्य नगरे कुण्डिनपुरे भीम-नगरादयोऽप्यत्र ।

**भीमबल** त्रि० ६ब० । १भयानकवीर्ये २धृतराष्ट्रपुत्रभेदे पु० भा० आ० १७ अ० । ३वह्निभेदे पु० भा० व० २१८ अ० ।

**भीमयु** स्त्री आत्मनो भीमं इच्छति क्यच् वेदे नि० उनृ । आत्मनो इच्छत्वौ स्त्रीगव्याम् ऋ० ५।५६।३।

**भीमरथ** पु० १असुरभेदे गरुडपु० ८६अ० । २धृतराष्ट्रपुत्रभेदे भा० आ० ६७ अ० । ३धन्वन्तरिवंश्ये नृपभेदे हरिवं० २८ अ० । ४दशार्हवंश्ये नृपभेदे हरिव ३७ अ० । सत्यभामायां जाते वासुदेवस्य ५पुत्रभेदे हरिव १६२अ० ।

**भीमरथी** स्त्री "सप्तसप्ततिमे वर्षे सप्तमे मासि सप्तमी । रात्रि भीमरथी नाम नराणामतिदुस्तरा" इत्युक्तायां १रात्रौ । "तामतीत्य नरो योऽसौ दिनानि यानि जीवति । क्रतु भिक्षानि तस्मानि सुवर्णशतदक्षिणे । गति प्रदक्षिण विष्णोर्जल्पन मन्त्रभाषणम् । ध्यानं निद्रा सुधा चास्य भीमरथ्या फलश्रुति वैद्यके । २नदीभेदे भा०व०८८अ० ।

**भीमरिका** स्त्री सत्यभामागर्भजातायां श्रीकृष्णस्य कन्यायां हरिवं० १६२ अ० ।

**भीमल** त्रि०भियोमल सम्बन्धो यत्र । भयङ्करे यजु०२०।६ ।

**भीमविक्रम** पु० १धृतराष्ट्रपुत्रभेदे भा०आ० ६७ अ० । ६ब० । २भयानकविक्रमे त्रि० ।

**भीमविक्रान्त** पु स्त्री ६ब० । १सिंहे त्रिका० स्त्रियां जाति-त्वात् ङीष् । ६ब० । २भयानकविक्रमयुते त्रि० ।

**भीमवेग** त्रि० ६ब० । १भयानकवेगयुते २धृतराष्ट्रपुत्रभेदे पु० भा०आ० ५७ अ० । ३दानवभेदे पु०हरिव २४ अ० ।

**भीमवेगवत्** पु० धृतराष्ट्रपुत्रभेदे भा० आ० १८६ अ० ।

**भीमशर** पु० धृतराष्ट्रपुत्रभेदे भा० आ० ६७ अ० ।

**भीमशासन** पु०भीमं शासनमस्य । १यमे शब्दार्थच० भयान-कशासनकर्त्तरि २नृपादौ च ।

**भीमसेन** पु० युधिष्ठिरानुजे १मध्यमपाण्डवे २कर्पूरभेदे च शब्दरत्ना० । ३जनमेजयस्य भ्रातृभेदे भा० आ० ३अ० । ४पौरवप्राचीनजनमेजयस्य पुत्रभेदे भा०आ० ६४ अ० ।

**भीमहास** पु० इन्द्रद्रुवे (वुडिरमूला) शब्दरत्ना० ।

**भीमा** स्त्री १भीमाख्यायाम् दुर्गायाम् २रोचनाख्यगन्धद्रव्ये शब्दरत्ना० ३कशायां शब्दमाला ४नदीभेदे भा०व०२२२अ०

**भीमादेवी** स्त्री भीमाख्या देवी । दुर्गामूर्त्तिभेदे "पुनश्चाहं यदा भीम रूपं कृत्वा हिमाचले । रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात् । तदा मां मुनयः सर्वे स्तोष्यन्त्यानम्रमू-र्त्तय । भीमादेवीतिविख्यात तन्मे नाम भविष्यति" देवीमा० ।

**भीमादि** पु० "भीमादयोऽपादाने" पा० अपादाने निपातन० साध्ये शब्दगणे स च गण. पा० ग० उक्तो यथा "भीम भीष्म भयानक वाह चरु प्रस्कन्दन प्रपात समुद्र स्रुव स्रुक् दृष्टि रक्षः शङ्कु सुक मूर्खं स्खलति" ।

**भीमैकादशी** स्त्री भीमेनोपास्या एकादशी शाक० त० । माघशुक्लैकादश्याम् । तत्कर्त्तव्यव्रतादिकं मत्स्यपु०६५अ० उक्तम् ।

**भीरु** त्रि०भी—क्रु । १भयशीले अमरः । २शतावर्यां स्त्री ध-रणि । ३कण्टकार्यां ४शतपादिकायां शब्दर० । ५छायायां ६दोषिति ७अजायां स्त्री मेदि० ८इक्षुगाभे पु०शब्दमा०। ९व्याघ्रे राजनि० १०इक्षुभेदे रत्नमा० ।

**भीरुक** पु० भी—क्रुकन् । १इक्षगाभे २व्याघ्रे ३इक्षुभेदे च । "वातपित्तप्रशमनो मधुरो रसपाकयोः । सुशीतो वृष्यो बल्यः पौण्ड्रको भीरुकस्तथा" भावप्र०। ४भययुक्ते त्रि०।

**भीरुकाच्छ** पु० देशभेदे मार्कपु० ५७ अ० । [अमरः

**भीरुपत्री** स्त्री भीरूणि पत्राणि यस्याः ङीष् । शतमूल्याम्

**भीरुस्थान** न० ६त० अम्बान्वेति प्रत्यम् । भीरुणां स्थाने ।

**भीरुहृदय** पु० ६ब० । १मृगे त्रिका० २भयशीलहृदये त्रि० ।

**भीरू** स्त्री भीरु+स्त्रियामूङ् । भयशीलायां नार्यां भरत ।

**भीलु(क)(लूक)** त्रि०भी क्रु । भयशीले । क्रुकन् । तत्र भल्लूके पु०

क्षेत्र करीष अङ्गार चर्मन् शकृत् युवति पदादि पश्यति अथर्वन् दक्षिणा भत विषय श्रोत्र” पा॰ग॰।

**भिक्षापात्र** न॰ भिक्षाहरणार्थं पात्रम् शा॰त॰। १भिक्षाया आहरणार्थे पात्रे भिक्षुशब्दे दृश्यम्। २भिक्षादानसम्प्रदाने ब्रह्मचार्य्यादौ भिक्षाशब्दे दृश्यम्। [२पैशुन्ये हारा॰।

**भिक्षाशित्व** न॰ भिक्षाशिनो भावः त्व। १भिक्षाशिनोभावे

**भिक्षाशिन्** त्रि॰ भिक्षालब्धमश्नाति अश—णिनि। भिक्षालब्धोपजीविनि। “भिक्षाशी विचरेत् ग्रामम्” स्मृतिः।

**भिक्षु** त्रि॰ भिक्ष—उन्। १भिक्षाकारके २चतुर्थाश्रमे पु॰ ३तद्वति च। तदाश्रमे अधिकारिणश्च आश्रमशब्दे उक्ताः। तद्धर्मा नि॰ सि॰ उक्ता यथा

“अथ यतिधर्मा प्रातरुत्थाय ब्रह्मणस्पते इति जपित्वा दण्डादीनि स्वदक्षे निधाय मूत्रपुरीषयोर्गृहस्थचतुर्गुणं शौचं कृत्वाऽचम्य पर्णद्वादशीवर्जं प्रणवेन दन्तधावनं कृत्वा तेनैव मृदा वहिःकटिं प्रक्षाल्य जलतर्पणवर्जं स्नात्वा पुनरङ्गं प्रक्षाल्य वस्त्रादीनि गृहीत्वा मार्जनान्तं कृत्वा केशवादिनमोऽन्तनामभिस्तर्पयित्वा ओं भूस्तर्पयामीत्यादि व्यस्तसमस्तव्याहृतिभिर्महर्जनस्तर्पयामीति तर्पयेत्। “ओं भूः स्वाहेति स्वाहाशब्दान्ते स्वधाशब्दान्तैर्वाभिरेव पुनस्तर्पयेदिति केचित्। तत आचम्य अञ्जलिना प्रणवेन जलमादाय व्याहृतिभिरुद्धृत्य गायत्र्याभिमन्त्र्य क्षिप्त्वा गायत्रीं जपेत्। उदिते सूर्ये प्रणवेन व्याहृतिभिरर्घ्यं त्रिर्दत्त्वा मित्रस्य चर्षणीत्याद्यैः पूर्वोक्तसौरीभिरिदं विष्णुस्त्रिर्देवो ब्रह्मजज्ञानमिति चोपस्थाय सर्वभूतेभ्यो नम इति प्रदक्षिणमावर्त्तते ततो नत्वा “आदित्याय विद्महे सहस्राक्षाय धीमहि। तन्नः सूर्यः प्रचोदयादिति” त्रिर्जपेत्। एवं त्रिकालं विष्णुपूजा ब्रह्मयज्ञश्च कुर्य्यात्। अथ भिक्षा। विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने। काले पराह्णभूयिष्ठे नित्यं भिक्षां यतिश्चरेत्” इत्युक्ते काले उद्वयमिति चतसृभिरादित्यमुपस्थाय तनैक्यं ध्यात्वा आत्मनोऽनेनेति प्रदक्षिणं कृत्वा ये ते पन्थान इति जप्त्वा “योऽसौ विष्णुाख्य आदित्ये पुरुषोऽन्तर्हृदि स्थितः। सोऽहं नारायणो देव इति ध्यात्वा प्रणम्य तम्”। त्रिदण्डं दक्षिणे स्कन्धे ततः सव्याय बाहुना। पात्रं वामकरे कृत्वा ग्रन्थदृक्षिणेन त्विति बौधायनोक्त्या दश त्रीन् पञ्च सप्त वा गृहान् गत्वा भवत्पूर्वं भिक्षां याचित्वा “पूर्णमसि पूर्णं मे भूया” इत्यभिमन्त्र्य सिञ्चन् प्रोक्ष्य ओं भूः स्वधा नम इत्यादिव्यस्तसमस्तव्याहृतिभिः सूर्य्यादिदेवेभ्यो भूतेभ्यश्च भूमौ दत्त्वा भुक्त्वा प्रणवेन षोडश प्राणायामान् कुर्य्यादिति संक्षेपः। गौतमव्याख्यायां भृगुः। “यतिहस्ते जलं दत्त्वा भैक्ष्यं दद्यात् पुनर्जलम्। भैक्ष्यं पर्वतमात्रं स्यात् तज्जलं वा सागरोपमम्”। अत्र सर्वत्र मूलं माधवापरार्कमदनरत्नस्मृत्यर्थसारादौ ज्ञेयम्। कण्वः “एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकम्। वर्षाभ्योऽन्यत्र वर्षासु मासांस्तु चतुरो वसेत्”। आपस्तम्बः “शून्यागारे देवगृहकुटीवल्मीकवृक्षमूलकुलालशालाग्निहोत्रगृहनदीपुलिनगिरिकुहरनिर्झरस्थण्डिलेष्वनिकेतनः” इति। मात्स्ये “अष्टौ मासान् विहारः स्याद् यतीनां संयतात्मनाम्। एकत्र चतुरो मासान् वार्षिकान्निवसेत् पुनः। अविमुक्तप्रविष्टानां विहारस्तु न विद्यते”। अत्रि “भिक्षाटनं जपं स्नानं ध्यानं शौचं सुरार्चनम्। कर्त्तव्यानि षडेतानि सर्वथा नृपदण्डवत्। मञ्चकं शुक्लवस्त्रञ्च स्त्रीकथा लौल्यमेव च। दिवास्वापश्च यानञ्च यतीनां पतनानि षट्। आसनं पात्रलोभश्च सञ्चयः शिष्यसंग्रहः। दिवास्वापो वृथाजल्पो यतेर्बन्धकराणि षट्”। दक्ष “नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कथञ्चन। यतिपात्राणि मृद्वेणुदार्वलाबूमयानि च”। मदनरत्ने अत्रिः “पितर्यं कल्पितं पूर्वमन्नं देशादिकारणात्। वर्जयेत् तादृशीं भिक्षां परबाधाकरीं तथा”। बृहस्पतिः “न तीर्थवासी नित्यं स्याच्चोपवासपरो यतिः। न चाध्ययनशीलः स्यान्न व्याख्यानपरो भवेत्”। एतद्वेदार्थभिन्नपरम्। अत्रि “स्नानं सुरार्चनं ध्यानं प्राणायामो बलिस्तुतिः। भिक्षाटनं जपः सन्ध्या त्यागः कर्मफलस्य च”। एते धर्मा मिता॰ प्रायेणोक्तास्तदाश्रयाश्रमशब्दे दृश्यम्। ४वृक्षभेदे जटा॰ ५श्रावणीवृक्षे राजनि॰। ६कोकिलाक्षे भावप्र॰ ७उपनिषद्भेदे च।

**भिक्षुक** पु॰ भिक्ष—उक। भिक्षोपजीविनि। “ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः। अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः” इत्युक्त्या पारिभाषिका दर्शिताः। तत समूहे खण्डिका॰ ठञ्। भैक्षुक तत्समुदाये न॰। कडारा॰ कर्म॰ वा परनिपातः। विप्रभिक्षुकः भिक्षुकविप्र इत्यादि। [उप॰स॰। चीवरे हेमच॰।

**भिक्षुसङ्घाटी** स्त्री भिक्षुं सङ्घटते प्राप्नोति सम्+घट—अच्

**भिक्षुसूत्र** न॰ भिक्षोः तदाश्रमविहितधर्मस्य ज्ञापकं सूत्रम् शा॰त॰। व्यासकृते ब्रह्मसूत्रे शारीरकसूत्रे।

भिण्ड पुंस्त्री० भण–ड पृषो०। वराहतिरस्कारपर्य्याये बहुबाकारबीजे क्षुपभेदे। स्त्रीत्वे टाप् राजनि० गौरा० ङीष तत्रार्थे [भिण्डीक्षुपे राजनि०।

भिण्डीतक पु० भिण्डी सती तकते तक–हासे अच्।

भित्त न० भिद–क्त नि० तस्य न न०। खण्डे अमरः।

भित्ति स्त्री भिद–क्तिन्। १कटकादेः कुड्ये (देयाल) २प्रभेदे शब्दरत्ना०। ३अवकाशे ४संविभागे विश्वः। स्वार्थे क। तत्रार्थे संज्ञायां कन्–। पक्षत्रां हेमच०।

भित्तिचोर पु० भित्त्या कुड्यादिभेदनेन चोरयति चुर–अच्। (सिँधेल) सन्धिभेदकचोरे।

भित्तिपातन पुंस्त्री० भित्तिं कुड्यं पातयति भेदनेन पाति–ल्यु। महामूषिकभेदे राजनि० स्त्रियां जातित्वात् ङीष्।

भिद् द्विधाकरणे विशेषकरणे च रुधा० उभ० सक० अनिट्। भिनत्ति भिन्ते इरित् अभिदत् अभैत्सीत् अभित्त। बिभेद बिभिदे। भिन्नः। भेत्ता।

भिद् आवरणे भ्वा० पर० सक० सेट् इदित्। भिन्दति अभिन्दीत्

भिद् स्त्री भिद्–सम्प० भावे क्विप्। १भेदे २विशेषकरणे च। कर्त्तरि क्विप्। ३भेत्तरि त्रि०।

भिदक न० भिद–क्वुन्। वज्रे १हीरके। २खड्गे उणा०को०

भिदा स्त्री भिद–भावे अङ्। १विदारणे द्वैधीकरणे २विशेषकरणे च।

भिदादि स्त्री अङ्प्रत्ययनिर्द्दिष्टे शब्दगणे स च गणः पा० ग० उक्तो यथा "भिदा छिदा विदा क्षिपा गुहा श्रद्धा मेधा गोधा आरा हारा कारा (बन्धनस्थाने) क्षिपा तारा (ज्योतिषि) धारा रे(ले)खा चूडा पीडा वपा वसा मृजा कृपा। अत्र छिदा द्वैधीकरण एवान्यत्र छित्तिः। आरा शस्त्र्यामन्यत्र आर्त्तिः। धारा जलप्रपातेऽन्यत्र धृतिः। गुहा गिर्य्योषध्योः अन्यत्र गूढिरिति बोध्यम्"।

भिदि पु० भिद–कि। वज्रे सिद्धा०को०।

भिदिर न० भिद–किरच्। वज्रे त्रिका०।

भिदु न० भिद–कु। वज्रे त्रिका०।

भिदुर न० भिद–कुरच्। १स्वयंभेदनशीले अमरः। २प्लक्षवृक्षे राजनि०। तस्य सौधभेदकाङ्कुरवत्त्वात् तथात्वम्।

भिदेलिम त्रि० भिद–कर्मकर्त्तरि केलिम। स्वयं भिद्यमाने।

भिद्य पु० भिद–कर्त्तरि क्यप् नदे नि०। नदे हेमच०।

भिद्र न० भिद–रक्। वज्रे त्रिका०।

भिन्दिपाल पु० भिदि विदारणे इन् भिन्दिं भेदनं पालयति पालि–अण्। १हस्तक्षेप्ये नालिकास्त्रे, अमरटीकायां भरतः। हस्तप्रमाणे अस्त्रभेदे क्षीरस्वामी। हेमा० प० तल्लक्षणमस्त्ययोक्तं यथा "भिन्दिपालस्य लक्षणं प्रोच्यते तस्य च आयामो यत्प्रमाणं दण्डस्य च यः परिणाहो यत्संस्थानं द्रव्यादिप्रमाणं फलमोक्षौ दुष्टादुष्टाश्च गतयस्तत्सर्वं यथोक्तं वक्ष्यामि तत्र। निबोध। तत्र भिन्दिपालस्य दण्डः फलाचितः सप्तहस्तो ज्येष्ठो भवति द्वादशाङ्गुलहीनो मध्यमो वितस्तिहीनस्तु कनिष्ठो मानतः स्याद्दण्डस्य सप्ताङ्गुलपरिणाहः श्रेष्ठो भवति मध्यमो द्व्यङ्गुलहीनस्त्र्यङ्गुलहीनश्च कनिष्ठो भवति मूले परीणाहो ग्राह्यः स च गोपुच्छवत् वेदितव्यो दण्डार्धं पुनः कूटजन्यज वैणवं अङ्कुशिकं खदिरजं वा दारुमयं वा कारयेत् तन्मया हि दण्डा दृढाः स्युः काचाकुचोत्पादकारिणं कलभमा विवर्द्धयन्ति चतस्त्रिंशद्वका आवनोदकारजानलोमनसहा पूर्वभारपरीक्षमाश्च भवन्ति ते नित्यं दण्डेषु कुशलैः शुभलक्षणा विज्ञेया दण्डस्योपरि यत्नं कर्णिकासंस्थाना प्रयोजयेत् कर्णिका च द्व्यङ्गुलोत्सेधा षडङ्गुला च वेष्ट्या स्यात् यथा दण्डपरीणाह वलित्यां कारयेत् सौवर्णं रजतमयं वा कांस्यं वा ताम्रं वा लौहमयं शाङ्कं जातमस्थिजं योजयेत् तदाभावे तु वैणवं दृढं वा विदध्यात् भिन्दिपालफलन्तु विंशत्यङ्गुलप्रमाणं भवति निस्त्रिंशवदायसम् पीतं सुनिशितधारसत्तमं कुर्वीत अष्टादशाङ्गुलप्रमाणं मध्यं, षोडशाङ्गुलप्रमाणं नीचं निर्द्दिष्टं तत्र यावत्यः फलपत्रपुष्पाणां योनयो दृश्यन्ते तावत्यो भिन्दिपालफलकाः, कर्त्तव्या तथा विस्तारे त्र्यङ्गुलमूले षोडशकसहस्रकोर्वं सप्ताङ्गुल दण्डमूलं चावेष्टयेत् पूर्वभागे मध्यान्तादिपात्रैरित्युत्तमाधममध्यमाना भवेत् दण्डस्य प्रमाणद्विगुणं फलं तस्य गौरवात् भवति तत्राष्टदशाङ्गुलं भिन्दिपालफलायसम् उक्तु कार्य्यं पञ्चभिः पञ्चभिः पलैर्वर्द्धिततया यावच्छतपलं श्रेष्ठं पलान्येव शतिकः उत्तमः कर्त्तव्यः अशीतिपलो मध्यमः षष्टिपालो नीचः"।

भिन्न त्रि० भिद–क्त। १विदारिते अमर० २सङ्गते ३अन्यार्थे ४प्रस्फुटिते च मेदि०। ५रोगभेदे न०। "शक्तिकुन्तेषुखड्गाग्रविषाणैराशयो हतः। यत्किञ्चित् प्रस्रवेत्तद्धि भिन्नमित्यभिधीयते" भावप्र०। आशयः कोष्ठ.।

भिन्नक पु० भिन्नं कं यस्य। बौद्धे त्रिका०। तन्मते विश्वस्य क्षणभङ्गुरत्वेन स्थायित्वस्याङ्गीकाराभावात् तथात्वम्।

भिन्नकूट न० कामन्द० उक्ते बलव्यसनभेदे। तत्र च बल-

वृहत्सं० पुषो० भोकृक ततार्थे भक्षके वृहत्सा० ।

**भीषक** त्रि० भीषयते भी-णिच्-षुक् ण्वुल् । भयकारके हेमच० ।

**भीषण** पु० भीषयते भी-णिच्-षुक् ल्यु १भयानकरसे २कुन्दुरुके ३हिन्ताले राजनि० ४शल्लक्यां ५मङ्गादेवे वृहत्सं० ६कपोते च पु० ७गाढे दारुणे च त्रि० मेदि० ।

**भीषा** स्त्री भी-णिच्-षुक् भावे अङ् । १भयप्रदर्शने "बलं वा भीषया हरन्" मनुः । स्वार्थे णिच् । २भये च "भीषास्माद्वातः पवते" श्रुतिः । तृतीयास्थाने वेदे आच् ।

**भीष्म** न० भी-णिच्-षुक् अपादाने मक् । १भयानकरसे अमर० । २भयानके त्रि० ३रुद्रे ४राक्षसे पु० हेमच० ५गङ्गागर्भजाते शान्तनुपुत्रभेदे पु० गङ्गाशब्दे दृश्यम् ।

**भीष्मक** पु० रुक्मिण्याः पितरि नृपभेदे हरिवं० ८१ अ० ।

**भीष्मकेशव** पु० काशीस्थे केशवमूर्त्तिभेदे काशी० ६२अ० ।

**भीष्मजननी** स्त्री ६त० । गङ्गायाम् राजनि० । गङ्गाशब्दे २४८१ पृ० दृश्यम् ।

**भीष्मपञ्चक** न०भीष्मेण प्राप्तमुपदिष्टं वा पञ्चकम् । कार्त्तिकशुक्लैकादश्यादिषु १पञ्चसु तिथिषु तत्कर्त्तव्ये २व्रतभेदे च । तन्निरुक्तिर्यथा "भीष्मेणैतत् पुरा प्राप्तं व्रतं पञ्चदिनात्मकम् । सकाशात् वासुदेवस्य तेनोक्तं भीष्मपञ्चकम्" हेमा०प्र० नारदपु० । पश्चात् तेन च पाण्डुशयोपदिष्टं यथोक्तं तत्रैव "इदं भीष्मेण धर्मज्ञ शरतल्पगतेन च । तदेवाम समाख्यातं दुष्करं भीष्मपञ्चकम्" । तत्कालश्च तत्रोक्तो यथा "कार्त्तिकस्य शुभे पक्षे स्नात्वा सम्यग्यतव्रत । एकादश्यान्तु गृह्णीयात् व्रतं पञ्चदिनात्मकम्" । तत्रैव तद्विधानं दृश्यम् ।

**भीष्मरत्न** हिमालयोत्तरदेशजातशुक्लवर्णमस्तरविशेषे । तस्योत्पत्त्यादि यथा "सूत उवाच । "हिमवत्युत्तरे देशे वीर्य्यं पतितं सुरद्विषस्तस्य । सम्प्राप्तमुत्तमानामाकरता भीष्मरत्नानाम् । शुक्ला शङ्खाब्जनिभाः स्योनाकसन्निभाः प्रभावन्तः । प्रभवन्ति ततस्तस्मात् वज्रनिभा भीष्मपाषाणाः । हेमाद्रिप्रतिबद्धं शुद्धमपि श्रद्धया बिभर्त्ति यः । भीष्ममणिं ग्रीवादिषु स सम्पदं सर्वदा लभते । गुणयुक्तस्य तस्यैव धारणान्मुनिपुङ्गव ! । विषाणि तानि नश्यन्ति सर्वाण्येव महीतले । विषमा न बाधन्ते ये तमरण्यनिवासिनः समीपेऽपि । द्वीपिवृकशरभकुञ्जरसिंहव्याघ्रादयो हिंस्राः । तस्योत्कर्षितज्ञातिनो भवन्ति भय न चापि समुपस्थितम् । भीष्ममणिं शुक्लः सम्यक् संप्राप्ताङ्गुलिकलितः । पितृतर्पणे पितॄणां तृप्तिर्बहुशो भवति । शाम्यन्ति भूतान्यपि सर्पोन्मादाद्युपचिकविकाराणि । वनिकाग्निवैरितस्करभवानि भीमानि नश्यन्ति । शैवलवलाहकाभं परुषं पीतप्रभं प्रभाहीनम् । मलिनद्युतिं विवर्णं दूरात् परिवर्जयेत् प्राज्ञः । मूल्यं प्रकल्पमेषां विबुधवरैर्देशकालविज्ञानात् । दूरे भूतानां नक्षुः किञ्चित् विकटप्रसूतानाम्" गारुडे ७६ अ० । भीष्मपाषाणादयोऽप्यत्र ।

**भीष्मसू** स्त्री भीष्मं सूते सू-क्विप् । गङ्गायाम् अमरः ।

**भीष्माष्टमी** स्त्री ६त० । भीष्मस्य देहत्यागदिवसे माघस्य शुक्लाष्टम्याम् । एतस्मिन् दिने सर्ववर्णैस्तस्य तर्पणं कार्य्यम् यथोक्तं ति० त० भविष्योत्तरे "शुक्लाष्टम्यान्तु माघस्य दद्याद्भीष्माय यो जलम् । संवत्सरकृतं पापं तत्क्षणादेव नश्यति" । अपरमपि स्मृतिः "अष्टम्यान्तु सिते पक्षे भीष्माय सतिलोदकम् । अप्रवद्विधिवद्दद्युः सर्वे वर्णा द्विजातयः" । सर्वे इत्युपादानात् ब्राह्मणशूद्रयोरप्यधिकारः । द्विजातय इति सम्बोधनम् "ब्राह्मणाद्याश्च ये वर्णाः करोत्वौर्ध्वदैहिकम् । तद्वर्षात् मृतो याति इह लोके परत्र च" इति मरीचिवचनन्तु भीष्मभक्तेतरपरम् । तथा च स्मृतिः । "ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय नो जलम् । संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम !" । अपसव्यजलदाननिषेधस्तु मकरस्थादपि भ्रामादिविषय इति श्रीदत्त० । "आभिरङ्गिरसानेतः पुत्रपौत्रोचितां क्रियाम्" इत्यादिवामनके पुत्रपौत्रोचिताभिधानात् पितृकर्मरीत्या तत्र अर्घ्यम् । ब्राह्मणः पितृतर्पणानन्तरं क्षत्रियादिकस्तु तत् पूर्वं तर्पयेत् इति संवत्सरप्रदीपादयः । "अत्र बीजं सर्वेषामेवैतत्रम्" रघु० ।

**भुक्त** त्रि० भुज-कर्मणि क्त । १भक्षिते २कृतभोगे च "भुक्तं भोग्यं त्वेत्सृजेत्" भीष्म०ता० । भावे-क्त । ३भक्षणे न० ।

**भुक्तभोग** त्रि० भुक्तः कृतो भोगो येन । कृतभोगे "अनात्वेनां भुक्तभोगामनाथोऽस्य," शकु० उ० ।

**भुक्तसमुज्झित** त्रि० पूर्वं भुक्तं पश्चात् समुज्झितं त्यक्तम् । भोजनोत्तरं त्यक्ते अन्नादौ ॥

**भुक्ति** स्त्री भुज-क्तिन् । १भोजने २राश्यादिग्रहाणां राश्यादिषु गमने ३भोगे च "आगमो लिखितं भुक्तिः साक्षिणो यत्र नो" इति स्मृतिः । भुक्तिप्रामाण्यनिर्णयादिकम् आगमशब्दे ६१४ पृ० दृश्यम् । अत्र

कश्चिद्विशेषो वीरमित्रोदयग्रन्थे दर्शितो यथा 'नारदः "आगमेन विशुद्धेन भोगो याति प्रमाणताम्। अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति। आगमस्याविशुद्धत्वं विरोध्याक्रन्दनं भवेत्"। व्यासः 'आगमो दीर्घकालश्च विच्छेदोपरवोज्झितः। प्रत्यर्थिसन्निधानञ्च परिभोगोऽपि पञ्चधा"। विच्छेदोऽन्तरा ऽन्तरा उपरव आक्रोशस्ताभ्यामुज्झितो रहितः। यद्वा विच्छेदो व्यवधानं तद्विगमवान् विच्छेदो निरन्तर इति यावत्। अपरवो वर्जनविषयोरवः। मदीयं क्षेत्रादि त्वया किमिति भुज्यते इति प्रतिषेधः अपशब्दस्य वर्जनार्थत्वात् तेनोज्झितः। नारदः "सम्भोगं केवलं यस्तु कीर्त्तयेन्नागमं क्वचित्। भोगच्छलापदेशेन विज्ञेयः स तु तस्करः।। विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु। विशेषतः स्थावराणां यन्न भुक्तं न तत् स्थिरम्"। दानविक्रयादेरुपभोगसापेक्षस्यैव स्वत्वोत्पादकत्वात् कियान् भोगलवोऽप्यवश्यं तत्रापेक्ष्यते इत्याशङ्कायामुपपत्तिरुक्ता विज्ञानेश्वराचार्य्यैः। "दानादेः परस्वत्वापादने परकर्त्तृकस्वीकारापेक्षाऽवश्यम्भावनीया। स्वीकारश्च त्रिविधो मानसो वाचिकः कायिकश्च। ममेदमित्यध्यवसायो मानसः। ममेदमित्याद्यभिलापो वाचिकः। उपादानाभिमर्षनादिरूपेणानेकप्रकारकः कायिकः। तत्र मानसं विना स्वत्वासम्भवात् स त्वावश्यक एव। दानविशेषपुरस्कारेण शब्दप्रयोगविशेषनियमवद्धस्तादिदर्शनादिचेष्टाविशेषनियमाच्च वाचिककायिकावप्यावश्यकावित्यवसीयते। तत्र हिरण्यवस्त्रादौ दातृकर्त्तृकजलत्यागादनन्तरमेव प्रतिपत्त्रीतुरुपादानादिसम्भवात् त्रिविधोऽपि व्यापारः सम्पद्यते। क्षेत्रादौ तु फलोपभोगं विना कायिकस्वीकारासम्भवादल्पेनाप्युपभोगेनावश्यम्भवितव्यमन्यथा दानविक्रयादेः सम्पूर्णता न भवत्युत्तरकालीनाङ्गीकाराभावात्। तेन तत्सहितादागमादन्तराहितकल आगमो दुर्बलो भवति। एतच्च द्वयोरागमयोः पूर्वापरभावानवगमे तदपगमे तु स्वल्पभोगविकलोऽपि प्राक्तन एवागमो बलवान्। पूर्वेण दानादिना स्वत्वागमे दानाद्यन्तरासम्भवात्। न चैवं तस्य क्षेत्रादेर्मध्यस्थत्वापत्तिः पूर्वस्वाम्यपगमादुत्तरस्वाम्यानुत्पत्तेश्चेति वाच्यम्। प्रतिश्रुतन्यायेनापेक्षणीयस्वत्वस्य सत्त्वात् पूर्वस्वाम्यसत्त्वेऽपि राज्ञैव प्रतिदत्तक्षीरादे: कायिकस्वीकारस्थानिप्रतिपत्तुस्सम्पादनीयत्वात्"

**भुक्तिप्रद** पु॰ भुक्तिं भोगं भोजनं वा प्रददाति स्वल्पायासभक्ष्यत्वात्। मुद्गे राजनि॰ लघुपाकत्वात्तस्य। [भोगे

**भुक्तिसुहित** त्रि॰ सुहितस्य भुक्तिः मयूर॰परनि॰। सतृप्त-

**भुग्न** त्रि॰ भुज—मोटने क्त। रोगादिना कुटिलीकृते।

**भुज** मोटने तु॰प॰सक॰अनिट। भुजति अभौक्षीत्। क्त ओदित् भुग्न।

**भुज** भक्षणे भोगे च आ॰ पालने पर॰ सक॰ रुधा॰ अनिट्। भुङ्क्तेऽन्नम्। अभौक्षीत्। भूमिं भुनक्ति पालयति। "दिव मरुत्वानिव भोक्ष्यते महीम्" रघु॰। भुक्तः। उपसर्गपूर्वस्तु तत्तदुपसर्गद्योत्ययुक्तभोगादौ। भोगश्च सुखदुःखाद्यनुभव सुखं दुःखं वा भुङ्क्ते सुखादिकमनुभवतीत्यर्थः।

**भुज** त्रि॰ भुज+क। १भोगकर्त्तरि २कुटिलीभूते च।

**भुज** पुंस्त्री॰ भुज्यतेऽनेन भुज—घञर्थे करणे क। १बाहौ २करे मेदि॰। लीलावत्यादौ त्रिकोणचतुष्कोणादिक्षेत्रप्रसिद्धे क्षेत्रांशभेदे "तथायते तद्भुजकोटिघातः" इति लीलावती। क्षेत्रशब्दे दृश्यम्।

**भुजकोटर** पु॰ भुजस्य कोटर इव। कक्षदेशे (काँक) हेम॰

**भुजग** पुंस्त्री॰भुज—वक्रणे क भुजः कुटिलीभवन् सन् गच्छति गम—ड। १सर्पे अमरः स्त्रियां ङीष्। २अश्लेषानक्षत्रे ज्यो॰त॰। तस्य तद्देवताकत्वात् तथात्वम्। अश्लेषाशब्दे दृश्यम्।

**भुजगदारण** पु॰ भुजगं दारयति दारि—ल्यु। गरुडे त्रिका॰

**भुजगनिसृता** स्त्री "भुजगनिसृता नसौ म" वृ॰ र॰ उक्ते नवाक्षरपादके छन्दोभेदे। [राजनि॰

**भुजगान्तक** पु॰ ६त॰। गरुडे। भुजगनाशनादयोऽप्यत्र।

**भुजगभोजिन्** पु॰भुजगं भुङ्क्ते भुज—णिनि। मयूरे राजनि॰ स्त्रियां ङीप्। [त्रिका॰ भुजगभक्षकादयोऽप्यत्र।

**भुजगाशन** पु॰ भुजगान् अश्नाति अश—ल्यु। गरुडे

**भुजङ्ग** पुंस्त्री॰भुजः सन् गच्छति गम—खच् मुम् डिच्च। १सर्पे स्त्रियां ङीष् २जारे च पु॰अमरः। ३अश्लेषानक्षत्रे पु॰ज्यो॰त॰

**भुजङ्गघातिनी** स्त्री ६त॰। भुजङ्गं तद्विषं हन्ति—हन णिनि ङीप्। सर्पाक्षीलतायाम् राजनि॰।

**भुजङ्गजिह्वा** स्त्री ६त॰। १सर्पजिह्वायाः ६त॰, २तदाकारवृतायां महासमङ्गायाम् राजनि॰।

**भुजङ्गदमनी** स्त्री भुजङ्गो दम्यतेऽनया दम—करणे ल्युट् गौरा॰ङीष्। नकुलेष्टायाम् नैघण्टु प्र॰

**भुजङ्गपर्णिनी** भुजङ्गस्येवाकार इव पर्णानि अस्ति यस्याः

इति ङीप्। भावप्रकाशी नैघण्टुप्रकाशिकायाम्।

**भुजङ्गपुष्प** पु० भुजङ्ग इव पुष्पमस्य। क्षुपभेदे सुश्रुत।

**भुजङ्गप्रयात** न० “भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः” वृ०र० उक्ते द्वादशाक्षरपादके छन्दोभेदे।

**भुजङ्गभुज्** पु० भुजङ्गं भुङ्क्ते भुज–क्विप् ६त०। १गरुडे शब्दर० २मयूरे अमरः।

**भुजङ्गभोजिन्** पु० भुजङ्गं भुङ्क्ते भुज–णिनि ६त०। राजसर्पे हेमच०। २गरुडे ३मयूरे च।

**भुजङ्गम** पुंस्त्री० भुजं कुटिलीभवन् सन् गच्छति गम–खच् मुम्। १सर्पे अमरः स्त्रियां जातित्वात् ङीष्। २सीसके न० राजनि०। ३अश्लेषानक्षत्रे पु०। [ताम्बूल्यां राजनि०।

**भुजङ्गलता** स्त्री भुजङ्ग इव कुटिला तत्प्रियत्वा वा लता।

**भुजङ्गविजृम्भित** न० “वस्वीशाश्वच्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम्” वृ०र० उक्ते षड्विंशत्यक्षरपादके १छन्दोभेदे। ६त०। २सर्पचेष्टिते च।

**भुजङ्गहन्** पु० भुजङ्गं हन्ति हन-क्विप्। गरुडे त्रिका०।

**भुजङ्गाक्षी** स्त्री भुजङ्गस्याक्षीव पुष्पं यस्याः षच् समा० ङीष्। रास्नायाम् अमर। [शब्दमा०

**भुजङ्गाख्य** पु० भुजङ्गस्याख्या आख्या यस्य। नागकेसर।

**भुजङ्गेश** पु० ६त०। १वासुकौ २शेषे तदवतारे ३पिङ्गलमुनौ ४पतञ्जलिमुनौ च भुजङ्गेशादयोऽप्यत्र।

**भुजज्या** स्त्री सू०सि०-उक्तायाम् त्रिकोणक्षेत्रस्य भुजजीवायाम् “यद्वा शोध्य मन्दोच्चात् तथा शीघ्राद्विशोध्य च। शेषं केन्द्रपदं तस्माद्भुजज्या कोटिरेव च” सू०सि०।

‘एवं राश्यादिक मन्दोच्चात् प्रागानीतस्वकीयराश्यादिकमन्दोच्चभोगात् शोध्योऽवशिष्टत्य शीघ्रात् प्रागानीत राश्यादिशीघ्रोच्चात्। च॰ समुच्चये। अनीकृत्य शेषं राश्यादिकं तथोच्चसम्बन्धेन केन्द्रं मन्दोच्चाच्छोनो ग्रहो मन्दकेन्द्रम्। शीघ्रोच्चाच्छोनो ग्रहः शीघ्रकेन्द्रं भवतीत्यर्थः। तस्मात् केन्द्रात् पदं राशित्रयात्मकं विषमं समं च पदं ज्ञेयम्। त्रिराश्यन्तर्गतं चेत् प्रथमं विषमं पदम्। ततः षड्राश्यन्तर्गतं चेत् मयूनं केन्द्रं द्वितीय समं पदम्। ततो नवराश्यन्तर्गतं चेत् षड्नं तृतीयं विषमं पदम्। ततो भयोनं चतुर्थं पदं सममित्यर्थः। तस्मात् पदाद्भुजस्य ज्या कोटि कोटिज्या च” रङ्ग०। तदानयनं यथा “गताद्भुजज्या विषमे गम्यात् कोटि. पदे भवेत्। युग्मे तु गम्याद्बाहुज्या कोटिज्या तु गतात्स्मृता” सू०सि०। “विषमे पदे गतात् भुक्तस्य पदादितो यद्गतं राशि-भागात्मकं प्रागुक्तं तस्मादित्यर्थः। भुजज्या स्यात्। गम्यात् भोग्यं शेषं पदात् पादान्तावधिकमित्यर्थम्। तस्मात् कोटिः कोटिज्या स्यात्। युग्मे समे तु कारात् पदे एतद्भुजज्या गतात् कोटिज्या स्यात्। तुकारो विशेषद्योतकः। एवमाद्युक्तरीत्या ह्येव साधितम्” रङ्ग०।

**भुजफल** न० “स्वं नाहते परिधिना भुजकोटिजीवे भांशे १६० हृते च भुजकोटिफलाह्वये स्तः” सि०शि० उक्ते भुजेनानीते फलभेदे

**भुजमध्य** न० ६त०। भुजान्तरे क्रोडे हेमा०।

**भुजशिखर** पु० ६त०। स्कन्धे हेम०।

**भुजशिरस्** न० ६त०। स्कन्धदेशे अमर।

**भुजाग्र** पु० ६त०। करे हेमा०।

**भुजादल** पु० भुजाया बाहोर्दल इव। करे हस्ते त्रिका०।

**भुजान्तर** न० ६त०। भुजयोरन्तरं मध्यम्। क्रोडे अमरः। इष्टघटीसम्बन्धिक्रान्तिवृत्तप्रदेशे गणितागते पदार्थे यथोक्तं सि०शि० “भानोः फलं गणितजं कुगुणस्य राशेर्व्यस्तोदयेन स्वचरनाडिगुणं १८०० विभक्तम्। गत्या ग्रहस्य गुणितं द्युनिशा विभक्तं स्वर्णं ग्रहेऽर्कवदिदं तु भुजान्तराख्यम्”।

**भुजि** पु० भुज–धातुनिर्देशे इक्। १भुजधातौ भुज-इन् किच्च। २वह्नौ उणादि० तस्य सर्वभक्षकत्वात् तथात्वम्।

**भुजिङ्ग** पु० देशभेदे भा० भी० ९अ०।

**भुजिष्य** त्रि० भुज–किष्यन्। १दासे २रोगे ३स्वतन्त्रे ४हस्तसूत्रे च। ५दास्यां ६वेश्यायाञ्च स्त्री मेदि०।

**भुज्यु** पु० भुज–युच् न अनादेश। १भाजने उज्ज्वल०। २भोजने उणा०। ३अग्नौ संक्षिप्त० ४यज्ञे यजु० १८।४२ वेददी० “यज्ञो हि सर्वाणि भूतानि पालयतीति” श्रुतेः सर्वलोकपालकत्वात्तस्य तथात्वम्।

**भुड** भरणे वरणे च भ्वा० आ० सक० सेट् इदित्। भुण्डते अभुण्डिष्ट बुभुण्डे सर्वाणि भुण्ड्यते।

**भुणिक** पु० मोक्षावयवभेदे तस्यापत्यम् तत० इञ्। भौणिकि तदपत्ये पुंस्त्री० स्त्रियां ष्यङ्। भौणिक्या तद्गोत्रापत्यस्त्रियाम् सि० कौ०।

**भुमन्यु** पु० १पौरवे भरतपुत्रे नृपभेदे भा० आ० ९४अ०। २तद्वंश्ये प्राचीनदृतराजपुत्रभेदे भा० आ० ९४अ०।

**भुरज** प्राप्तौ भ्वा०आ०सक०सेट्। भुरजते “भुरजन्त पथा” ऋ० ४।४३।५। अस्य धातु. धातुपाठादौ न दृश्यते।

**भुरण** धारणपोषणयोः कण्ड्वा० पर० सक० सेट्। भुरण्यति अभुरणी(णी)त् अत्र गतौ निघण्टुः।

**भुरण्यु** न० भुर-भरणे कन्यु । १भरणे यजु० १८।५२ १२।४२ वेददीपे कण्डू०भुरण-इत्युक्तम् । २चिप्रे निघण्टुः ३तद्वति त्रि० ।

**भुरिज्** स्त्री “भ्रस्ज पाके” धा० भुर-इजि किच्च धातोरुका-रादेश । बहुस्वरायाम् उज्ज्वल० । २बाहौ द्वि०व० निघण्टुः । [वा० १७ न्या० ।

**भुरुण्ड** पु० १प्रवरर्षिभेदे प्रवराध्याय भारुण्डस्तगे भा०

**भुर्व** अदने भ्वा०सक०सेट् । भुर्वति अभुर्वीत् “भुर्वतिरत्तिकर्मा” इति यास्कोक्तेः अयं तत्रार्थे पाठ्योऽप्यस्य ।

**भुर्वणि** पु० भुर्व-अनि न दीर्घः । १कर्त्तरि । ऋ० १।५६।१।

**भुव** पु० भवन्तीति भू-क । अग्नौ यजु० १३।५४ । वेददी० २भुवोलोके च “तदिदं भूर्भुवादिकम्” इत्यं०सि० ।

**भुवद्वत्** पु० भू-शतृ गणव्यत्यासे तुदा० । भुवन् धारयन् न्यस्यास्य मतुप् मस्य व तान्तत्वेऽपि “भुवद्वद्भ्ये धारयद्भ्य्र पदसंज्ञा वक्तव्या” वार्त्ति० उक्तेः पदत्वम् । धारकवति आदित्ये आ०श्रौ० ४।२।५

**भुवन** न०भवत्यत्र भू-आधारादौ क्युन् । १जगति २जने ३आ-काशे ४चतुर्दशसंख्यायाम् । ५जले च मेदि०। भुवनानि च चतुर्दश यथा “चतुर्दशविध ह्येतद्भूतवृन्द प्रकीर्त्तितम् । भूर्भुवः स्वर्महश्चैव जनश्च तप एव च । सत्यलोकश्च सप्तैते लोकास्तु परिकीर्त्तिताः” “अतलं सुतलञ्चैव वितलञ्च गभस्तिमत् । महातल रसातल पाताल सप्तमं स्मृतम् । कृष्णभौम शिलाभौमं पाताल नील मृत्तिकम् । रक्तपीतश्वेतकृष्णभौमानि च भवन्त्यपि । पातालानाञ्च सप्तानां लोकानाञ्च यदन्तरम् । सुषिरं तानि कथ्यन्ते भुवनानि चतुर्दश” वह्निपु० ।

**भुवनकोष** पु० भुवनस्य कोष इव । १भूगोले २ज्योतिषग्रन्थ-भेदे च । पुराणसर्वस्वे विष्णुपु० तद्दर्शनं यथा “रविचन्द्रमसोर्यावन्मयूखैरवभास्यते । ससमुद्रसरि-च्छैला तावती पृथिवी स्मृता । यावत्प्रमाणा पृथिवी विस्तारपरिमण्डला । नभस्तावत्प्रमाणं वै विस्तार-परिमण्डलम् । भूमेर्योजनलक्षे तु सौरं मैत्रेय ! मण्ड-लम् । लक्षे दिवाकरस्यापि मण्डलं शशिनः स्मृतम् । पूर्णे शतसहस्रे तु योजनानां निशाकरात् । नक्षत्र मण्डलं कृत्स्नमुपरिष्टात् प्रकाशते । द्विलक्षे चोत्तरे ब्रह्मन् ! बुधो नक्षत्रमण्डलात् । तावत्प्रमाणभागे तु बुधस्याप्युशना स्थितः । अङ्गारकोऽपि शुक्रस्य तत् प्रमाणे व्यवस्थितः । लक्षद्वयेन भौमस्य स्थितो देव पुरोहितः । सौरिर्बृहस्पतेश्चोर्द्ध्वं द्विलक्षे समवस्थितः । सप्तर्षिमण्डलं तस्माल्लक्षमेकं द्विजोत्तम ! । ऋषिभ्यस्तु सहस्राणां शतादूर्द्ध्वं व्यवस्थितः । मेधीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः । त्रैलोक्यमेतत् कथितमुत्से-धेन महामुने ! । इज्याफलस्य भूरेषा इज्या चात्र प्रति-ष्ठिता । ध्रुवादूर्द्ध्वं महर्लोको यत्र ते कल्पवासिनः । एका योजनकोटी तु महर्लोको विधीयते । द्वे कोट्यौ तु जनो लोको यत्र ते ब्रह्मणः सुताः । सनन्द-नाद्याः कथिता मैत्रेयामलचेतसः । चतुर्गुणोत्तरे चोर्द्ध्वं जनलोकात्तपः स्मृतः । वैराजा यत्र ते देवाः स्थिता दाहविवर्जिताः । षड्गुणेन तपोलोकात् सत्य-लोको विराजते । अपुनर्मारकायत्र ब्रह्मलोको हि स स्मृतः । पादगम्यन्तु यत् किञ्चिद्वस्त्वस्ति पृथिवीम-यम् । स भूर्लोकः समाख्यातो विस्तारोऽस्य मयोदितः । भूमिसूर्यान्तरं यत्तु सिद्धादिमुनिसेवितम् । भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तम ! । ध्रुवसूर्यान्तरं यत्तु नियुतानि चतुर्दश । स्वर्लोकः सोऽपि कथितो लोकसंस्थानचिन्तकैः । त्रैलोक्यमेतत् कृतकं मैत्रेय ! परि-पठ्यते । जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम् । कृतकाकृतकोर्मध्ये महर्लोक इति स्मृतिः । शून्यो भवति कल्पान्ते योऽत्यन्तं न विनश्यति । एते सप्त-मया लोका मैत्रेय ! कथितास्तव । पातालानि च सप्तैव ब्रह्माण्डस्यैव विस्तरः । एतदण्डकटाहेन तिर्यक् चोर्द्ध्वमधस्तथा । कपित्थस्य यथा वीजं सर्वतो वै समा-वृतम् । दशोत्तरेण पयसा मैत्रेयाण्डञ्च तद्वृतम् । सर्वोऽम्बुपरिवारोऽसौ वह्निना वेष्टितो बहिः । वह्निश्च वायुना, वायुर्मैत्रेय ! नभसावृतः । भूतादिना नभः सो-ऽपि महता परिवारितः । दशोत्तराण्यशेषाणि मैत्रे-यैतानि ब्रह्म वै । महान्तञ्च समावृत्य प्रधानं समव-स्थितम् । अनन्तस्य न तस्यान्तः संख्यानं नापि विद्यते । भाग० ५।१६।१८ अ० विस्तरो दृश्यः ।

**भुवनेश्वरी** स्त्री ६त० । महाविद्यामध्ये देवीमूर्त्तिभेदे तन्मन्त्रध्यानादिकं तन्त्रसा० दृश्यम् ।

**भुवन्ति** पु० भुवं तनोति अच बा० डि चित्र च्चम् । रुद्रभेदे यजु० १६।१८ । [२१वह्नौ ३चन्द्रे च मेदि० ।

**भुवन्यु** पु० भू-बन्युच् । १स्वामिनि २सूर्ये च उज्ज्वल० ।

**भुवपति** पु० ६त० । भुवोलोकपतौ यजु०२।२ । भुवभर्त्राद-योऽप्यत्र ।

भुवर् अव्य० भू-अर-किच्च । आकाशात्मके १द्वितीये लोके भुवनकोषशब्दे विष्णुपु०वाक्यं दृश्यम् । २व्याहृतिभेदे च

भुवर्लोक पु० कर्म० । द्वितीये लोके ।

भुवस् अव्य० भू-असुन् किच्च । १आकाशात्मके द्वितीये लोके २व्याहृतिभेदे भुव. स्वाहा ।

भुवस्पति पु० कर्म०। भुवो लोकस्वामिनि अथर्व० १०५

भुविष्ठ त्रि०भुवि तिष्ठति स्था-क अलुक्स० षत्वम् । भूमिस्थिते भाग० १।५।१७ ।

भुविस् पु० भू-इषिन् किच्च । समुद्रे उज्ज्वल० ।

भुशुण्डी स्त्री पाषाणक्षेपणार्थे चर्ममययन्त्ररूपे अस्त्रभेदे 'भुशुण्डी शतघ्नी च" भा० आ० २२७ अ० नीलकण्ठ

भू प्राप्तौ चु० आ० सक० सेट् । भावयते अबीभवत ।

भू प्राप्तौ भ्वा०उ०सक०सेट् । भवति-ते अभूत् अभविष्ट ।

भू शुद्धौ अक० चिन्तने मिश्रणे च सक० चुरा० उभ० सेट् । भावयति-ते अबीभवत्-त ।

भू सत्तायां भ्वा०पर०अक०सेट्। भवति अभूत् बभूव । "भवत दुरितचय यथोक्तैः क्रतुभिर्भावयते च नागलोकम्। भवति त्रिदशैश्च पूजितो यस्तु पदद्भावयति द्विषश्च सर्वान्" कविर०

अधि—आधिक्येन भवने ऐश्वर्ये ।

अनु—अनुभवे ज्ञानभेदे सक० अनुभवशब्दे दृश्यम् ।

अन्तर्-तिरोभावे अक० ।

अभि+तिरस्कारे सक० । अभिभवति शत्रून् ।

आविस्+प्रादुस्+प्रथमप्रकाशे ।

उद्—उत्पत्तौ अक० ।

तिरस् अन्तर्धाने स्थितस्य वस्तुन कारणात्मनाऽवस्थाने अक०

परा+अवज्ञने पराभव० ।

परि+तिरस्कारे परिभवति अतिक्रम्य भवने ।

प्रति+तुल्यरूपभवने अक० प्रतिभू ।

वि+व्याप्तौ विभु । [वोपदेव

वि+अति—परस्परभवने आत्म० सक० व्यतिभवतेऽर्कमिन्दु .

सम्+योग्यत्वे अक० । सम्भाति भू-णिच् सम्भावना रूपज्ञानविषयत्वे सम्भाव्यते ।

भू स्त्री भू-आधारे कर्त्तरि अपादाने वा यथायथम् क्विप् । १भूमौ अमर २स्थानमात्रे मेदि० ३यज्ञाग्नौ पु० जटा० ४उत्पद्यमाने त्रि० ५परमेश्वरे पु० "अनिर्विस्स स्थविष्ठो भूः" विष्णुस० ।

भूक न० भू-कक् । १छिद्रे काले मेदि० ।

भूकदम्ब पु० भूमि कदम्ब इव । (कोकशिमा) १अलम्बुषवृक्षे रत्नमा० २गोरक्षतण्डुलां स्त्री नैघण्टुप्र० । तस्य या अ.। भूकदम्बक । यवान्यां राजनि० । [राजनि०।

भूकन्द पु० भुव. कन्द इव । (युलकुडि) महाश्रावणिकावृक्षे

भूकम्प पु० ६त० । लोकानामनिष्टादिसूचके अद्भुतरूपे पृथिव्याः स्वयंचलने । तस्य शुभाशुभसूचकता अद्भुतसागरे उक्ता यथा "मेषे हरिकमे तद्‌. प्रचलति व्यासादिभि कथ्यते चापे मीनकुलीरयोश्च वृषभे सत्य चलेत् कच्छप । युक्ते कुम्भधरे मृगेन्द्रविहरे कन्यास्तगे पन्नगस्तेषामेकतमो यदि प्रचलति क्षौणी तदा कम्पते । कच्छपे मरणं न्येय मरणञ्चापि पन्नगे, सर्वत्र सुखदश्चैव पृथिव्या चलिते गजे। प्रावततरश मरणं व्यसनान्याग्नेयमारुतयो । चतुर्भवयतिरम्भि भिरुपपीड्यन्ते जनाश्चापि । त्रिचतुर्दशपञ्चदिने च पक्षे त्रिपक्षके । भवति यदा भूकम्प प्रधाननृपनाशं कुरुते" । स च भूमिजोत्पातविशेष यथा "स्थिरमव भौम भूकम्पनपि भूमिजम् । तन्नाशनाय वैशल्य भौमन्तदपि कीर्तयेत् । भौम चाप्य फल पुंसः चिरेण परिपच्यते" ज्यो०त० ।

भूकर्वुदारक पु० भूयेलौ राजनि०।

भूकल पु स्त्री० दुर्विनीताश्वे राजनि० ।

भूकश्यप पु० भूमिजात० कश्यपस्तदवतार। वसुदेवे त्रि० कश्यपस्य वसुदेवरूपेणावतारकथा च हरिवं० ५६ अ० "तदस्य कश्यपस्यांशस्तेजसा कश्यपोपम । वसुदेव इति ख्यातो गोषु तिष्ठति भूतले" ।

भूकाक पु० भुवि ख्यात० काकः । १लघुद्रकाके २क्रौञ्चे ३नीलकपोते च राजनि० ।

भूकुम्भी स्त्री भुवि कुम्भीव । भूमिपाटलौ राजनि ।

भूकुष्माण्डी स्त्री भुवि कुष्माण्डीव । वदर्याम् राजनि०

भूकेश पु० भुवः पृथिव्या केश इव । १वटे २शैवले च मेदि० ३राक्षस्यां स्त्री गौरा० ङीष् ।

भूक्षित् पु० भुवं क्षिणोति क्षित-क्विप् । शूकरे त्रिका०

भूखर्जूरी स्त्री भुवि लग्ना खर्जूरी शाक०त०। मधुरखर्जूरे राजनि० । भूमिखर्जूर्यादयोऽप्यत्र ।

भूगर न०१विषे राजनि० २भवभूतिशब्दे पु० त्रिका०।[सि०

भूगर्भ पु०भूर्गर्भोऽस्य । विष्णौ पु० "हिरण्यगर्भो भूगर्भः

भूगृह न० भूमध्यस्थ गृहम् । १भूमध्यस्थे गृहे १तर सटनादयोऽप्यत्र । २तन्त्रोक्ते यन्त्रभेदस्य रेखा- वशिषेपात्मके पदार्थे "धरणीसदनत्रयस्य" इदमादि

दुग्धजलैः समः। जम्बूद्वीपः समस्तानामेतेषां मध्यसंस्थितः। तस्यापि मेरुर्मैत्रेय! मध्ये कनकपर्वतः। चतुरशीतिसाहस्रो योजनैरस्य चोच्छ्रयः। प्रविष्टः षोड़शाधस्तात् द्वात्रिंशन्मूर्द्ध्नि विस्तृत। मूले षोड़शसाहस्रो विस्तारस्तस्य भूभृतः। भूपद्मस्यास्य शैलोऽसौ कर्णिकासंस्थितिः स्थित। हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे। नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः। लक्षप्रमाणौ द्वौ मध्यौ दशहीनास्तथा परे। सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते। भारतं प्रथमं वर्षं ततः किम्पुरुषं स्मृतम्। हरिवर्षं तथैवान्यं मेरोर्दक्षिणतो द्विज। रम्यकञ्चोत्तरं वर्षं तथैवानु हिरण्मयम्। उत्तराः कुरवश्चैव यथा वै भारतं तथा। नवसाहस्रमेकैकमेतेषां द्विजसत्तम।। इलावृतञ्च तन्मध्ये सौवर्णो मेरुरुच्छ्रित। मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम्। इलावृतं महाभाग। चत्वार उपपर्वताः। विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः। पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः। विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे स्मृतः। कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च। एकादशशतायामाः पादपा गिरिकेतवः। जम्बूद्वीपस्य सा जम्बूर्नामहेतुर्महामुने।। महागजप्रमाणानि जम्ब्वास्तस्याः फलानि वै। पतन्ति भूभृतः पृष्ठे शीर्य्यमाणानि सर्व्वत। रसेन तेषां प्रख्याता तत्र जम्बूनदीति वै। सरित् प्रवर्त्तते सा च पीयते तन्निवासिभिः। न स्वेदो न च दौर्गन्ध्यं न जरा नेन्द्रियक्षयः। तत्पानसुस्थमनसां जनानां तत्र जायते। तीरमृत्तत्र सम्प्राप्य सुखवायुविशोषिता। जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणम्। भद्राश्वं पूर्व्वतो मेरोः केतुमालञ्च पश्चिमे। वर्षे द्वे तु मुनिश्रेष्ठ। तयोर्मध्यमिलावृतम्। वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादने। वैभ्राजं पश्चिमे तद्वदुत्तरे नन्दनं स्मृतम्। अरुणोदं महाभद्रं शीतोदं समानसम्। सरांस्येतानि चत्वारि देवभोग्यानि सर्व्वदा। शीतान्तश्चैव सुञ्जश्च कुररो माल्यवांस्तथा। वैकङ्कप्रमुखामेरोः पूर्व्वतः केशराचलाः। त्रिकूटः शिशिरश्चैव पतङ्गो रुचकस्तथा। निषधाद्या दक्षिणतस्तस्य केशरपर्व्वताः। शिखिवासः सवैदूर्य्यः कपिलो गन्धमादनः। जारुधिप्रमुखास्तद्वत् पश्चिमे केशराचलाः। मेरोरनन्तराङ्गेषु जठरादिष्ववस्थिताः। शङ्खकूटोऽथ ऋषभो हंसो

नागस्तथा परः। कालञ्जराद्याश्च तथा उत्तरे केशराचलाः। चतुर्द्दशसहस्राणि योजनानां महापुरी। मेरोरुपरि मैत्रेय। ब्रह्मणः प्रथिता पुरी। तस्याः समन्ततश्चाष्टौ दिशासु विदिशासु च। इन्द्रादिलोकपालानां प्रख्याताः प्रवराः पुरः। विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम्। समन्तात् ब्रह्मणः पुर्य्यां गङ्गा पतति वै दिवः। सा तत्र पतिता दिक्षु चतुर्द्धा प्रत्यपद्यत। सीता चालकनन्दा च वङ्क्षुर्भद्रा च वै क्रमात्। पूर्वेण शैलात् सीता तु शैलं यात्यन्तरीक्षगा। ततश्च पूर्व्ववर्षेण भद्राश्वेनैति सार्णवम्। भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून्। अतीत्योत्तरमम्भोधिं समभ्येति महामुने।। वङ्क्षुश्च पश्चिमगिरीनतीत्य सकलांस्ततः। पश्चिमं केतुमालाख्यं वर्षमभ्येति सार्णवम्। तथा चालकनन्दापि दक्षिणेनेत्य भारतम्। प्रयाति सागरं भूत्वा सप्तभेदा महामुने।। आनीलनिषधायामौ माल्यवद्गन्धमादनौ। तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः। भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा। पत्राणि लोकपद्मस्य मर्य्यादाशैलबाह्यतः। जठरो देवकूटश्च मर्य्यादापर्वतावुभौ। तौ दक्षिणोत्तरायामावानीलनिषधायतौ। मेरोः पश्चिमदिग्भागे यथा पूर्व्वौ तथा स्थितौ। त्रिशृङ्गो जारुधिश्चैव उत्तरे वर्षपर्व्वतौ। पूर्व्वपश्चायतावेतावर्णवान्तव्यवस्थितौ। इत्येते मुनिवर्य्योक्ता मर्य्यादापर्वतास्तव। जठराद्याः स्थिता मेरोर्येषां द्वौ द्वौ चतुर्दिशम्। मेरोश्चतुर्दिशं ये तु प्रोक्ताः केशरपर्वताः। शीतान्ताद्या मुने! तेषामतीव सुमनोरमा। शैलानामन्तरे द्रोण्यः सिद्धचारणसेविताः। सुरम्याणि तथा तेषु काननानि पुराणि च। लक्ष्मीविष्ण्वग्निसूर्य्यादिदेवानां मुनिसत्तम।। तान्यायतनवर्य्याणि जुष्टानि वरकिन्नरैः। गन्धर्व्वयक्षरक्षांसि तथा दैतेयदानवाः। क्रीड़न्ति तासु रम्यासु शैलद्रोणीष्वहर्निशम्। भौमा ह्येते स्मृता स्वर्गा धर्म्मिणामालया मुने।। नैतेषु पापकर्म्माणो यान्ति जन्मशतैरपि। भद्राश्वे भगवान् विष्णुरास्ते हयशिरा द्विज।। वराहः केतुमाले तु भारते कूर्म्मरूपधृक्। मत्स्यरूपश्च गोविन्दः कुरुष्वास्ते सनातन। विश्वरूपेण सर्व्वत्र सर्व्वः सर्व्वेश्वरो हरिः। सर्व्वस्याधारभूतोऽसौ मैत्रेयास्तेऽखिलात्मकः। यानि किम्पुरुषाद्यानि वर्षाण्यष्टौ महामुने।। न तेषु शोको नायासो नोद्वेगः क्षुद्भयादिकम्। सुस्था

प्रजा निरातङ्काः सर्व्वदुःखविवर्जिताः । दशद्वादशवर्षाणां सहस्राणि स्थिरायुषः ॥ न तेषु वर्षवर्येषु भौमान्यम्भांसि तेषु वै । कृतत्रेतादिका नैव तेषु स्थानेषु कल्पना ॥ सर्व्वेष्वेतेषु वर्षेषु सप्त सप्त कुलाचलाः । नद्यश्च शतशस्तेभ्यः प्रसूता या द्विजोत्तम !"। "पराशर उवाच । उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः । नवयोजनसाहस्रो विस्तारोऽस्य महामुने ॥ कर्म्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम् । महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्व्वतः ॥ विन्ध्यश्च पारि(या)पात्रश्च सप्तात्र कुलपर्व्वताः । अतः संप्राप्यते स्वर्गो मुक्तिमस्मात् प्रयान्ति च । तिर्य्यक्त्वं नरकञ्चापि यान्त्यतः पुरुषा मुने ॥ इतः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते । न खल्वन्यत्र मर्त्त्यानां कर्म्म भूमौ विधीयते । भारतस्यास्य वर्षस्य नवभेदान्निशामय । इन्द्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गन्धर्व्वस्त्वथ वारुणः । अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः । योजनानां सहस्रन्तु द्वीपोऽयं दक्षिणोत्तरात् । पूर्व्वे किराता यस्यान्ते पश्चिमे यवनाः स्थिताः । ब्राह्मणाः क्षत्त्रिया वैश्या मध्ये शूद्राश्च भा-[illegible]शः । इज्यायुद्धवणिज्याद्यैर्व्वर्त्तयन्तो व्यवस्थिताः । वेदस्मृतिमुखाश्चान्याः पारि(या)पात्रोद्भवा मुने ॥ नर्म्मदा सुरसाद्याश्च नद्यो विन्ध्यविनिर्गताः । तापीपयोष्णीनिर्व्विन्ध्या कावेरीप्रमुखा नदी । गोदावरीभीमरथीकृष्णवेण्यादिकास्तथा । सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः । कृतमालाताम्रपर्णीप्रमुखा मलयोद्भवाः । त्रिसामा ऋषिकुल्याद्या महेन्द्रप्रभवाः स्मृताः । ऋषिकुल्याकुमाराद्याः शुक्तिमत्पादसम्भवाः । शतद्रूचन्द्रभागाद्या हिमवत्पादनिःसृताः । आसां नद्युपनद्यश्च सन्त्यन्याश्च सहस्रशः । तास्विमे कुरुपाञ्चालमध्यदेशादयो जनाः । पूर्व्वदेशादिकाश्चैव कामरूपनिवासिनः । औड्राः कलिङ्गा मगधा दाक्षिणात्याश्च सर्व्वशः । तथापरान्ताः सौराष्ट्राः शू[illegible]रास्तथा[illegible]र्बुदाः । मारुकामालवाश्चैव [illegible]ारि(या)प[illegible]सिनः । सौवीराः सैन्धवा हूणाः शाल्वाः शाकलवा[illegible] द्राः नागास्तथाम्बष्ठाः पारसीकादयस्तथा । आसां [illegible] पिबन्ति सलिलं वसन्ति सरितां सदा । चत्वारि भारते वर्षे युगान्यत्र महामुने ॥ कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न क्वचित् । तपस्तप्यन्ति मुनयो जुह्वते चात्र यज्विनः । दानानि चात्र दीयन्ते परलोकार्थमादरात् । पुरुषैर्यज्ञपुरुषो जम्बुद्वीपे सदेज्यते । तत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने ॥ यतो हि कर्म्मभूरेषा ततोऽन्या भोगभूमयः । अत्र जन्मसहस्राणां सहस्रैरपि सत्तम । कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयम् । गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे । स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात् । कर्म्माण्यसंकल्पिततत्फलानि संन्यस्य विष्णौ परमात्मरूपे । अवाप्य तां कर्म्ममहीमनन्ते तस्मिँल्लयं ये त्वमलाः प्रयान्ति । जानीम नैतत् क्व वयं विलीने स्वर्गप्रदे कर्म्मणि देहबन्धम् । प्राप्स्याम धन्याः खलु ते मनुष्या ये भारते नेन्द्रियविप्रहीनाः । नववर्षन्तु मैत्रेय ! जम्बुद्वीपमिदं मया । लक्षयोजनविस्तारं संक्षेपात् कथितं तव । जम्बुद्वीपं समावृत्य लक्षयोजनविस्तृतः । मैत्रेय ! वलयाकारः स्थितः क्षीरोदधिर्बहिः ।" "पराशर उवाच । क्षीरोदेन यथा द्वीपो जम्बुसंज्ञोऽभिवेष्टितः । संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः । जम्बुद्वीपस्य विस्तारः शतसाहस्रसम्मितः । स एव द्विगुणो ब्रह्मन् ! प्लक्षद्वीपोऽप्युदाहृतः । सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरस्य वै । ज्येष्ठः शान्तभयो नाम शिशिरस्तदनन्तरः । सुखोदयस्तथानन्दः शिवः क्षेमक एव च । ध्रुवश्च सप्तमस्तेषां प्लक्षद्वीपेश्वरा इमे । पूर्व्वं शान्तभयं वर्षं शिशिरं सुखदं तथा । आनन्दञ्च शिवञ्चैव क्षेमकं ध्रुवमेव च । मर्य्यादाकारकास्तेषां तथान्ये वर्षपर्व्वताः । सप्तैव तेषां नामानि शृणुष्व मुनिसत्तम ॥ गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा । सोमकः सुमनाः शैलो वैभ्राजश्चैव सप्तमः । वर्षाचलेषु रम्येषु सर्व्वेष्वेतेषु चानघाः । वसन्ति देवगन्धर्व्वसहिताः सततं प्रजाः । तेषु पुण्या जनपदाश्चिराच्च म्रियते जनः । नाधयो व्याधयो वापि सर्व्वकालसुखं हि तत् । तेषां नद्यश्च सप्तैव वर्षाणान्तु समुद्रगाः । नामतस्ताः प्रवक्ष्यामि श्रुताः पापं हरन्ति याः । अनुतप्ता शिखी चैव विपाशा त्रिदिवा क्रमुः । अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः । एते शैलास्तथा नद्यः प्रधानाः कथितास्तव । क्षुद्रनद्यस्तथा शैलास्तत्र सन्ति सहस्रशः । ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते । अपसर्प्पिणी न तेषां वै न चैवोत्सर्प्पिणी प्रजा । नाप्यस्ति युगावस्था तेषु स्थानेषु सप्तसु । त्रेतायुगसमः कालः सर्व्वदैव महामुने ॥ प्लक्षद्वीपादिषु ब्रह्मन् ! शाकद्वीपान्तिकेषु वै । पञ्चवर्षसहस्राणि जना जीवन्त्यना-

भवाः । धर्म्माः पञ्चस्वथैतेषु वर्णाश्रमविभागजाः ॥ वर्णाश्च तत्र चत्वारस्तान्निबोध वदामि ते । आर्य्यकाः कुररश्चैव विविंशा भाविनश्च ते ॥ विप्रक्षत्रियवैश्यास्ते शूद्राश्च द्विजसत्तम ! ॥ जम्बूवृक्षप्रमाणस्तु तन्मध्ये सुमहातरुः । प्लक्षस्तन्नामसंज्ञोऽयं प्लक्षद्वीपो द्विजोत्तम ! ॥ इज्यते भगवांस्तत्र तैर्व्वर्णैरार्य्यकादिभिः । सोमरूपी जगत्स्रष्टा सर्व्वः सर्व्वेश्वरो हरिः ॥ प्लक्षद्वीपप्रमाणेन प्लक्षद्वीपः समावृतः । तथैवेक्षुरसोदेन परिवेषानुकारिणा ॥ इत्येतत्तव मैत्रेय । प्लक्षद्वीपमुदाहृतम् । संक्षेपेण मया भूयः शाल्मलं मे निशामय । शाल्मलस्येश्वरो वीरो वपुष्मांस्तत्सुतान् शृणु । तेषान्तु नामसंज्ञानि सप्त वर्षाणि तानि वै । श्वेतोऽत्र हरितश्चैव जीमूतो हरितस्तथा । वैद्युतो मानसश्चैव सुप्रभश्च महामुने ॥ शाल्मलेन समुद्रोऽसौ द्वीपेनेक्षुरसोदकः । विस्तारद्विगुणेनाथ सर्व्वतः संवृतः स्थितः । तत्रापि पर्व्वताः सप्त विज्ञेया रत्नयोनयः । वर्षाभिव्यञ्जकास्ते तु तथा सप्तैव निम्नगाः । कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः । द्रोणो यत्र महौषध्यः स चतुर्थो महीधरः । कङ्कस्तु पञ्चमः षष्ठो महिषः सप्तमस्तथा । ककुद्मान् पर्व्वतवरः सरिन्नामानि मे शृणु । योनितोया वितृष्णा च चन्द्रा शुक्ला विमोचनी । निवृत्तिः सप्तमी तासां स्मृतास्ताः पापशान्तिदाः । श्वेतञ्च लोहितञ्चैव जीमूतं हरितं तथा । वैद्युतं मानसञ्चैव सुप्रभं नाम सप्तमम् । सप्तैतानि तु वर्षाणि चातुर्व्वर्ण्ययुतानि वै । शाल्मलेऽपि च ये वर्णा वसन्त्येते महामुने ! । कपिलाश्चारुणाः पीताः कृष्णाश्चैव पृथक् पृथक् । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव यजन्ति तम् । भगवन्तं समस्तस्य विष्णुमात्मानमव्ययम् । वायुभूतं मखश्रेष्ठैर्य्यज्विनोऽयज्ञसंस्थितम् । देवानामत्र सान्निध्यमतीव सुमनोरमे । शाल्मलिश्च महावृक्षो नाम निर्वृतिकारकः एष द्वीपः समुद्रेण सुरोदेन समावृतः । विस्तारः शाल्मलस्यैव समेन तु समन्ततः । सुरोदकः परिवृतः कुशद्वीपेन सर्व्वतः । शाल्मलस्य तु विस्ताराद्द्विगुणेन समन्ततः । ज्योतिष्मतः कुशद्वीपे सप्त पुत्राः शृणुष्व तान् । उद्भिदो वेणुमांश्चैव स्वैरथो लम्बनो धृतिः । प्रभाकरोऽथ कपिलस्तन्नाम्ना वर्ष उच्यते । तस्मिन् वसन्ति मनुजाः सह दैतेयदानवैः । तथैव देवगन्धर्व्वयक्षकिम्पुरुषादिभिः । वर्णास्तत्रापि चत्वारो निजानुष्ठानतत्पराः ।

दमिनः शुष्मिणः स्नेहा मन्देहाश्च महामुने ! ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चानुक्रमोदिताः । यथोक्तकर्म्मकर्त्तृत्वात् स्वाधिकारक्षयाय ते । तत्र यजन् कुशद्वीपे ब्रह्मरूपं जनार्द्दनम् । यजन्तः क्षपयन्त्युग्रमधिकारफलप्रदम् । विद्रुमो हेमशैलश्च द्युतिमान् पुष्पवांस्तथा । कुशेशयो हरिश्चैव सप्तमो मन्दराचलः । वर्षाचलास्तु सप्तैव तत्र द्वीपे महामुने ॥ नद्योऽपि सप्त तासाञ्च शृणु नामान्यनुक्रमात् । धूतपापा शिवा चैव पवित्रा सम्मतिस्तथा । विद्युदम्भा मही चैव सर्व्वपापहरास्त्विमाः । अन्याः सहस्रशस्तत्र क्षुद्रनद्यस्तथाऽचलाः । कुशद्वीपे कुशस्तम्बः संज्ञया तस्य तत् स्मृतम् । तत्प्रमाणेन स द्वीपो घृतोदेन समावृतः । घृतोदश्च समुद्रो वै क्रौञ्चद्वीपेन संवृतः । क्रौञ्चद्वीपो महाभाग ! श्रूयताञ्चापरो महान् । कुशद्वीपस्य विस्ताराद्द्विगुणो यस्य विस्तरः । क्रौञ्चद्वीपे द्युतिमतः पुत्राः सप्त महात्मनः । तन्नामानि च वर्षाणि तेषाञ्चक्रे महीपतिः । कुशलो मन्दगश्चोष्णः पीवरोऽथान्धकारकः । मुनिश्च दुन्दुभिश्चैव सप्तैते तत्सुता मुने ! । तत्रापि देवगन्धर्व्वसेविताः सुमनोरमाः । वर्षाचला महाबुद्धे ! तेषां नामानि मे शृणु । क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः । चतुर्थो रत्नशैलश्च स्वभाभिर्भासयन्नभः । देवावृत् पञ्चमश्चैव तथा च पुण्डरीकवान् । दुन्दुभिश्च महाशैलो द्विगुणास्ते परस्परम् । द्वीपद्वीपेषु ये शैला यथा द्वीपानि ते तथा । वर्षेष्वेतेषु रम्येषु वर्षशैलवरेषु च । निवसन्ति निरातङ्का सह देवगणैः प्रजाः । पुष्कराः पुष्कला धन्यास्तिष्याख्याश्च महामुने ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चानुक्रमोदिताः । ते तत्र नद्यो मैत्रेय । याः पिबन्ति शृणुष्व ताः । सप्त प्रधानाः परतस्तथान्याः क्षुद्रनिम्नगाः । गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा । क्षान्तिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः । तत्रापि वर्णैर्भगवान् पुष्कराद्यैर्जनार्द्दनः । योगिरुद्रस्वरूपस्तु इज्यते यज्ञसन्निधौ ॥ क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन च । आवृतः सर्व्वतः क्रौञ्चद्वीपतुल्येन मानतः । दधिमण्डोदकश्चापि शाकद्वीपेन संवृतः । क्रौञ्चद्वीपस्य विस्ताराद् द्विगुणेन महामते ॥ शाकद्वीपेश्वरस्यापि भव्यस्य सुमहात्मनः । सप्तैव तनयास्तेषां ददौ वर्षाणि सप्त च । जलदश्च कुमारश्च सुकुमारो मणीरकः । कुसुमोदः समौदाकिः सप्तमश्च महाद्रुमः । तत्संज्ञान्यपि-

तान्येव सप्त वर्षाण्यनुक्रमात् । तत्रापि पर्वताः सप्त वर्षविच्छेदकारिणः ॥ पूर्वस्तत्रोदयगिरिर्जलाधारस्तथा परः । तथा रैवतकः श्यामस्तथैवास्तगिरिर्द्विज ॥ आम्बिकेयस्तथा रम्यः केशरी पर्वतोत्तमः । शाकस्तत्र महावृक्षः सिद्धगन्धर्वसेवितः ॥ यत्पत्रवातसंस्पर्शादाह्लादो जायते परः । तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः ॥ नद्यश्चात्र महापुण्याः सर्वपापभयापहाः । सुकुमारी कुमारी च नलिनी रेणुका तथा ॥ इक्षुश्च धेनुका चैव गभस्ती सप्तमी तथा । अन्याश्च शतशस्तत्र क्षुद्रनद्यो महामुने ॥ महीधरास्तथा चात्र शतशोऽथ सहस्रशः । ताः पिबन्ति मुदा युक्ता जलदादिषु ये स्थिताः ॥ वर्षेष्वेते जनपदाः स्वर्गादभ्येत्य मेदिनीम् । धर्महानिर्न तेष्वस्ति न सङ्घर्षः परस्परम् ॥ मर्यादाव्युत्क्रमो नापि तेषु देशेषु सप्तसु । मगाश्च मागधाश्चैव मानसा मन्दगास्तथा ॥ मगा ब्राह्मणभूयिष्ठा मागधाः क्षत्रियास्तथा । वैश्यास्तु मानसास्तेषां शूद्रास्तेषां तु मन्दगाः ॥ शाकद्वीपे तु तैर्विष्णुः सूर्यरूपधरो मुने ॥ यथोक्तैरिज्यते सम्यक्कर्मभिर्नियतात्मभिः । शाकद्वीपस्तु मैत्रेय क्षीरोदेन समन्ततः ॥ शाकद्वीपप्रमाणेन वलयेनेव वेष्टितः । क्षीराब्धिः सर्वतो ब्रह्मन् पुष्कराख्येन वेष्टितः ॥ द्वीपेन शाकद्वीपात्तु द्विगुणेन समन्ततः । पुष्कराख्यद्वीपपतेर्महावीतोऽभवत् सुतः ॥ धातकिश्च तयोस्तत्र द्वे वर्षे नामचिह्निते । महावीतं तथैवान्यद्धातकीखण्डसंज्ञितम् ॥ एकश्चात्र महाभाग प्रख्यातो वर्षपर्वतः । मानसोत्तरसंज्ञो वै मध्यतो वलयाकृतिः ॥ योजनानां सहस्राणि ऊर्द्ध्वं पञ्चाशदुच्छ्रितः । तावदेव च विस्तीर्णः सर्वतः परिमण्डलः ॥ पुष्करद्वीपवलयं मध्ये संविभजन्निव । स्थितोऽसौ सुमहान् शैलो व्याप्य तद्वर्षकद्वयम् ॥ वलयाकारमेकैकं तयोर्वर्षं तथा गिरिः । दशवर्षसहस्राणि तत्र जीवन्ति मानवाः ॥ निरामया विशोकाश्च रागद्वेषविवर्जिताः ॥ अधमोत्तमौ न तेष्वास्तां न वध्यवधकौ द्विज ! नेर्ष्यासूयाभयं रोषो दोषो लोभादिको न च ॥ महावीतं महावर्षं धातकीखण्डमन्ततः । मानसोत्तरशैलस्य देवदैत्यादिसेवितम् ॥ सत्यानृते न तत्रास्तां द्वीपे पुष्करसंज्ञिते । न तत्र शैलनद्यो वा द्वीपे वर्षद्वयान्विते ॥ तुल्यवेषास्तु मनुजा देवैस्तत्रैकरूपिणः । वर्णाश्रमाचारहीनं धर्माहरणवर्जितम् ॥ त्रयीवार्त्तादण्डनीतिशुश्रूषारहितञ्च तत् । वर्षद्वयन्तु मैत्रेय ! भौमः स्वर्गोऽयमुत्तमः ॥ सर्वर्त्तुसुखदः कालो जरारोगादिवर्जितः । पुष्करे धातकीखण्डे महावीते च वै मुने ॥ न्यग्रोधः पुष्करद्वीपे ब्रह्मणः स्थानमुत्तमम् । तस्मिन्निवसति ब्रह्मा पूज्यमानः सुरासुरैः ॥ स्वादूदकेनोदधिना पुष्करः परिवेष्टितः । समेन पुष्करस्यैव विस्तारान्मण्डलात्तथा ॥ एवं द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः । द्वीपश्चैव समुद्रश्च समानौ द्विगुणौ परौ ॥ पयांसि सर्वदा सर्वसमुद्रेषु समानि वै । न्यूनातिरिक्तता तेषां कदाचिन्नैव जायते ॥ स्थालीस्थमग्निसंयोगादुद्रेकि सलिलं यथा । तथेन्दुवृद्धौ सलिलमम्भोधौ मुनिसत्तम ॥ अन्यूनानतिरिक्ताश्च वर्द्धन्त्यापो ह्रसन्ति च । उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥ दशोत्तराणि पञ्चैव ह्यङ्गुलानां शतानि वै । अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां महामुने ॥ भोजनं पुष्करद्वीपे तत्र स्वयमुपस्थितम् । षड्रसं भुञ्जते विप्र ! प्रजाः सर्वाः सदैव हि ॥ स्वादूदकस्य पुरतो दृश्यते लोकसंस्थितिः । द्विगुणा काञ्चनी भूमिः सर्वजन्तुविवर्जिता ॥ लोकालोकस्ततः शैलो योजनायुतविस्तरः । उच्छ्रायेणापि तावन्ति सहस्राण्यचलो हि सः ॥ ततस्तमः समावृत्य तं शैलं सर्वतः स्थितम् । तमश्चाण्डकटाहेन समन्तात् परिवेष्टितम् ॥ पञ्चाशत्कोटिविस्तीर्णा सेयमुर्वी महामुने ! ॥ सहैवाण्डकटाहेन सद्वीपाब्धिमहीधरा । सेयं धात्री विधात्री च सर्वभूतगुणाधिका ॥ आधारभूता सर्वेषां मैत्रेय ! जगतामिति ॥

भूगोलस्य स्थिरत्वे युक्तिः खगोलशब्दे उक्ता अधिकमत्र किञ्चिदुच्यते इङ्गलण्डीयज्योतिर्विदां मते भूगोलस्यैव दक्षिणोत्तरगतिभ्यां सूर्यस्य उत्तरदक्षिणगतिरत्र कल्प्यते स्थिरस्य सूर्यस्य उत्तरदक्षिणायनयोरसम्भवादिति । तदेतन्मतमतीवासमञ्जसं भूगोलस्य दक्षिणोत्तरगतिस्वीकारे सूर्य्यस्येव कृत्तिकारोहिणीशकटमृगव्याधादीनामपि उत्तरदक्षिणयोर्गतिः प्रसज्येत न च तथा दृश्यते तेषाञ्च यथा विक्षेपनामशरसंख्या सौरागमे पठिता तादृशान्तर एव प्रत्यह दर्शनं न मनागपि उत्तरदक्षिणायनमिति विवेच्य भूगोलस्य स्थिरत्वमदुष्टमस्माकम् ॥

**भूच्छाया**, स्त्री, भुवश्छाया । सूर्य्यकिरणासम्पर्कात् राहुपदाभिधाने १तमसि २अन्धकारे च ।

**भूजन्तुः**, पुं, भूरिव जन्तुः । नागे हस्तिनि ।

**भूजम्बूः**, स्त्री, भुवो जम्बूरिव स्वादुत्वात् ।

तफले च (वर्रुचि) मेदि० भूमिचीना जम्बूः शाक०त० १मुद्गजम्ब्वाम् । भूमिजम्ब्वादयोऽप्यत्र स्त्री

**भूत** न० भू क्त । न्यायोक्ते वर्त्तते पृथिवीजलतेजोवायुगगन-रूपेषु गन्धादिविशेषगुणवत्सु २द्रव्येषु, ३सत्ये, यथार्थे वास्तविके 'भूतमप्यनुपन्यस्तं हीयते व्यवहारत." इति स्मृति । ५तत्त्वानुसन्धाने च "ऊर्जं निरस्य भूतेन" स्मृति । ६पिशाचादौ पु०७कुमारे दयोगीन्द्रे ८कृष्णपक्षे १०प्राणिनि च न०। ११अतीत इत्ते १२सदृशे १३प्राप्ते १४सत्यार्थे त्रि० । १५कृष्णचतुर्दश्यां स्त्री टाप् । भूतत्वं च आत्मान्यत्वे सति विशेषगुणवत्त्वम् न तु जाति मूर्त्तत्वेन साङ्कर्यात् तथाहि भूतत्वाभाववति मनसि मूर्त्तत्वस्य सत्त्वात् मूर्त्तत्वाभाववति गगने भूतत्वस्य सत्त्वात् उभयोः परस्परभावसामानाधिकरण्यम् पृथिव्यादिषु चतुर्षु च भूतत्वमूर्त्तत्वयोरुभयोः सत्त्वात् परस्परसामानाधिकरण्यमिति साङ्कर्यात् जातित्वबाधकता ।

**भूतकला** स्त्री कर्म०। शा० ति० उक्ते धरादिभूतानामुत्पादके निवृत्त्यादौ शक्तिभेदे "धरादिपञ्चभूतानां निवृत्त्याद्याः कलाः स्मृताः । निवृत्तिः प्रतिष्ठा स्यात् विद्या शान्तिरनन्तरम् । शान्त्यतीतेति ता ज्ञेया नादरेफस्वरूपया" शा० ति० "शक्तिः प्रथमसम्भूता शान्त्यतीतापदोत्तरा शान्त्यतीतापदाच्छक्तेः शान्तिपदं क्रमात् । ततो विद्यापदं तस्मात् प्रतिष्ठापदसंभवः । निवृत्तिपदमुत्पन्नं प्रतिष्ठापदतः परम् । एवमुक्ता समासेन सृष्टिरीश्वरचोदिता । अनुलोमादवैतस्य प्रतिलोम्येन संहृतिः । अस्मात् पञ्चपदोद्दिष्टात् सृष्ट्यन्तरमिष्यते । कलाभिः पञ्चभिर्व्याप्तं यस्मादिश्वमिदं जगत्" राघवभट्टधृतवायवीयसंहिता ।

**भूतकेश** पु० भूतानां केश इव । (भूतकेश) नामके १तृणभेदे स्त्रीत्वमपि ङीप् । सा च तत्र, २शेफालिकायां च टाप् । ३मोलसिन्धुवारे स्त्री ङीप् ।

**भूतकान्ति** स्त्री कर्म०। पिशाचावेशे राजनि० ।

**भूतगन्धा** स्त्री० भूतः प्रभूतः गन्धो यस्याः । मुरानामगन्धद्रव्ये शब्दच० ।

**भूतगुण** पु० कर्म०। आकाशादीनां शब्दस्पर्शादिषु विशेषगुणेषु "शब्दस्पर्शरूपरसगन्धा भूतगुणाः स्मृताः" शा०ति० 'भूतगुणा भूतविशेषगुणा इत्यर्थः राघव." । तत्रैव भूतानामेकैकविशेषगुणा उक्ता यथा आकाशस्य गुणः शब्दो वायोः स्पर्शः तेजसो रूपं जलस्य रसः भूमेर्गन्धः इति नैयायिकादयः । सांख्यादयस्तु अन्यथाङ्गीचक्रुर्यथोक्तं मौमानसंहितायाम् "शब्दैकगुण आकाशं शब्दस्पर्शगुणो मरुत् । शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज उच्यते । शब्दस्पर्शरूपरसैरापो वेदाश्चतुर्गुणाः । शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा मही" ।

**भूतघ्न** पु०भूतं हन्ति हन–टक् । १भूर्जपत्रे राजनि० तद्धारणे हि बालग्रहभूतादिनिवारणं शास्त्रे प्रसिद्धम् । भूतं प्रकृतं गन्धं हन्ति नाशं करोति । २लशुने ३उष्ट्रे च राजनि० । ४भूतनाशके त्रि० त्रेमच० । ५तुलस्यां स्त्री राजनि० ङीप् ।

**भूतचतुर्दशी** स्त्री० भूतप्रिया चतुर्दशी तदुद्देशेन तस्या दीपदानात् । आश्विनकृष्णपक्षचतुर्दश्यां दीपान्वितामावास्यापूर्वतिथौ यमचतुर्दश्याम् ।

**भूतजटा** स्त्री भूतस्य पिशाचस्य जटेव । १जटामांस्याम् शब्दमा० । २गन्धमांस्यां राजनि० ।

**भूतद्राविन्** पु० भूतान् पिशाचान् द्रावयत्यपसारयति द्रु-णिच्-णिनि । १रक्तकरवीरवृक्षे २भूताङ्कुशवृक्षे च राजनि०

**भूतद्रुम** पु० भूतइव द्रुमः । १श्लेष्मातकवृक्षे । भूतवृक्षादयोऽप्यत्र । भूतप्रिय द्रुमः शाक०त० । २आक्षोटकवृक्षे ।

**भूतधात्री** स्त्री० भूतानि जन्तून् धारयति धा-तृच् ङीप् । पृथिव्याम् त्रिका० ।

**भूतनाथ** पु० कर्म०। १शिवे २बटुकभैरवे च । "भैरवो भूतनाथश्च" इति वटुकस्तोत्रम् । भूतेशभूतपत्यादयोऽप्यत्र ।

**भूतनाशन** न० भूतान् नाशयति नश–णिच्–ल्यु । १रुद्राक्षे राजनि० २भन्ये पु० ३भल्लातके च रत्नमा० ।

**भूतपत्त्र** पु० भूतप्रियं पत्त्रं अस्य कारकत्वात् । अर्जकवृक्षे ।

**भूतपत्त्री** स्त्री भूतइव कृष्णं पत्त्रं यस्याः ङीप् । कृष्णतुलस्याम् राजनि० । [रत्नमा० ।

**भूतपुष्प** पु० भूत इव पुष्पं कृष्णत्वात् यस्य । श्योनाकवृक्षे

**भूतपूर्णिमा** स्त्री आश्विनपूर्णिमायाम् शब्दर० ।

**भूतभावन** पु० भूतानि पृथिव्यादीनि भावयति जनयति भू-णिच्–ल्यु, भूता सत्या यथार्था भावना यस्य वा । १विष्णौ, २वटुकभैरवे च "भूतात्मा भूतभावन." इति । तयोः स्तोत्रे ।

**भूतमण्डल** न० कर्म०। शा०ति० उक्ते पृथिव्यादीनां मण्डलभेदे तत्स्वरूपं तत्रोक्तं यथा "इत दिःसत् पञ्च विन्दुवाञ्छितं मातरिश्वनः । त्रिकोणं स्वस्तिकोपेतं वह्नेरर्धेन्दुसंयुतम् । अम्भोजमम्भसो भूमेश्चतुरस्रं वज्रकम् । तत्तद्भूतसमानानि मण्डलानि विदुर्बुधाः । वर्णैः

स्वैरङ्कितान्याहुः स्वस्वनामाङ्कितान्यपि"। "वर्णैः श्वेतादिभिर्भूतवर्णैरक्षोभिरङ्कितानीति पदार्थादर्शः। तत्रैतद्व्याख्या विस्तरेण दृश्या। मण्डलस्योद्धारे तेषां स्वरूपं कर्मविशेषे विनियोगश्चोक्तो यथा "अर्द्धचन्द्रनिभं पार्श्वद्वये पद्मद्वयाङ्कितम्। जलस्य मण्डलं प्रोक्तं प्रशस्तं शान्तिकर्मणि। त्रिकोणं स्वस्तिकोपेतं वश्ये वह्नेस्तु मण्डलम्। चतुरस्रं वज्रयुक्तं स्तम्भे भूमेस्तु मण्डलम्। वृत्तं दिवस्तु विद्वेषे बिन्दुषट्काङ्कितं तु तत्। वायुमण्डलमुच्चाटे मारणे वह्निमण्डलम्"।

**भूतमारिन्** पु० भूतान् पिशाचान् मारयति अपसारयति मृ–णिच्–णिनि। चिड़ानामगन्धद्रव्ये राजनि०।

**भूतयज्ञ** पु० भूतानि प्राणिनो वायसादीन् उद्दिश्य यज्ञो बलिः। नित्यं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गते बलिवैश्वदेवकर्मणि 'भूतेभ्यो बलिहरणं भूतयज्ञ" हारीतस्मृतिः।

**भूतयोनि** स्त्री ६त०। भूतानामाकाशादीनां कारणे परमेश्वरे वेदान्तोप०। [भूमेरधोभागे।

**भूतल** न० भूरेव तलम्। १पृथिव्याम्। ६त०। २पाताले

**भूतलिका** स्त्री भूतलं पातालं मूलत्वेनास्त्यस्याः ठन्। पृक्कायाम् (पिडिङ्शाक) राजनि० बहुदूरगमूलत्वात्तस्यास्तथात्वम्।

**भूतलिपि** स्त्री ६त०। भूतदैवत्ये वर्णभेदे "वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात्। पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः सन्धिसम्भवाः। पञ्च कादयः पञ्चपञ्चान्ताः प्रकीर्त्तिताः" शा० ति०। कुलाकुलचक्रशब्दे २११४पृ० दृश्यम्।

**भूतलोन्माथ** पु० दानवभेदे हरिवं० २४अ०।

**भूतवर्ण** पु० ६त०। ध्येये भूतानां श्वेतादिवर्णे यथोक्तं शा०ति० "स्वच्छं वियन्मरुच्छ्यामो रक्तोऽग्निर्विशदं पयः। पीता भूमिः पञ्चभूतान्येकैकाधारतो विदुः"। "स्वच्छं श्वेतं तत्र केचिदच्छपिङ्गल्यापत्या वर्णकथनमुपादानमाहुः स्वपाठानुरोधेन" राघव०। भूतदैवते ह्रस्वदीर्घसहिते वर्गादिवर्णे च। भूतलिपिशब्दे कुलाकुलचक्रशब्दे च दृश्यम्।

**भूतवास** पु० ७त०। (बयड़ा) विभीतकवृक्षे। भूतावासादयोऽप्यत्र [यत्र। अपस्माररोगे राजनि०

**भूतविक्रिया** स्त्री भूतानां तदाविष्टानामिव विक्रिया

**भूतविद्या** स्त्री भूतादिनिवारणार्था विद्या। सुश्रुतोक्ते दैवाद्युपसर्गोपशमार्थे बलिहरणादौ "भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्म बलिहरणादि ग्रहोपशमनार्थम्" सु० च तत्र उत्तरतन्त्रे दर्शिता "ब्रह्मविद्या क्षत्रविद्या नक्षत्रविद्या भूतविद्या सर्पविद्या" छा० उ०। [पिशाचिकायाम् अमरः।

**भूतवेशी** स्त्री भूतानामिव वेशोऽस्याः गौरा० ङीष्। श्वेत-

**भूतब्रह्मन्** पु० भूतः पिशाच इव ब्रह्मा। देवले यन्द्रमाला।

**भूतशुद्धि** स्त्री० भूतानां देहारम्भकपृथिव्यादीनां शुद्धिर्यत्र विशेषात् शोधनम्। तन्त्रादौ प्रसिद्धे देहारम्भकचतुर्विंशतितत्त्वानां भावनाविशेषेण संस्कारेण देवरूपतासम्पादने। भूतशुद्धिप्रकारस्तन्त्रसारे उक्तो यथा गौतमीये "सुषुम्णावर्त्मना सोऽहमिति मन्त्रेण यो जयेत्। सहस्रारे शिवे स्थाने परमात्मनि देशिकः। धूम्रवर्णं ततो वायुबीजं(यं) षड्बिन्दुलाञ्छितम्। पूरके दिव्यवायुं च धी० षोडशमात्रया। मात्रया तु चतुःषष्ट्या कुम्भयेत् सुषुम्णया। द्वात्रिंशन्मात्रया मन्त्री रेचयेत् पिङ्गलाख्यया। पूरयेदनया चैव संचिन्त्य शोषमाद्रतम्। रक्तवर्णं वह्निबीजं (रं) त्रिकोणं स्वस्तिकान्वितम्। तेन पूरकयोगेन मात्रया षोडशाख्यया। चतुःषष्ट्या मात्रया च निर्दहेत् कुम्भकेन च। वामपार्श्वस्थितं पापपुरुषं कज्जलप्रभम्। ब्रह्महत्याशिरस्कञ्च स्वर्णस्तेयभुजद्वयम्। सुरापानहृदायुक्तं गुरुतल्पकटिद्वयम्। तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम्। उपपातकरोमाणं रक्तश्मश्रुविलोचनम्। खड्गचर्मधरं क्रुद्धमेवं कुक्षौ विचिन्तयेत्। मूलाधारोत्थितेनैव वह्निना निर्दहेत् ततः। एवं सन्दह्य परितो द्वात्रिंशन्मात्रया ततः। भस्मना सहितं मन्त्री रेचयेदिडया पुनः। वामनासापुटे चन्द्रबीजं (ठं) शुक्लमृतसन्निभम्। आनीय बीजे संयोज्य ततः षोडशमात्रया। सुषुम्णया चतुःषष्टिमात्रया तोयबीजकम् (वं)। ध्यात्वाऽमृतमयीं दृष्ट्वा पञ्चाशद्वर्णरूपिणीम्। तया देहं विचिन्त्यैवं मनसा पिङ्गलाख्यया। द्वात्रिंशन्मात्रया मन्त्री लंबीजेन दृढं नयेत्। स्वस्थाने हंसमन्त्रेण पुनस्तेनैव वर्त्मना। जीवं तत्त्वानि चानीय स्वस्थाने स्थापयेत् ततः। इति कृत्वा भूतशुद्धिं मातृकान्यासमाचरेत्"। ततो हंस इति बीजं हृदयमानीय कुलकुण्डलिनीं पृथिव्यादीनि च यथास्थाने स्थापयेत्। विशेषतस्तु शक्तिविषये। हंस इति जीवादिकं परशिवे संयोज्य सोऽहमिति मन्त्रेण स्थाने नयेत्। तदनन्तरं "सोऽहमेव

तव्यः । भूमानं भगवो विजिज्ञास इति” छा० उ० । “यो वै भूमा महत् निरतिशयम् बहुरितिपर्य्यायास्तत् सुखं ततोऽर्वाक् सातिशयत्वादल्पम् । अतस्तस्मिन्नल्पे सुखं नास्ति अल्पमात्र तृष्णाहेतुत्वात् तृष्णा च दुःखवीजम् । न हि दुःखवीजं ज्वरादि सुखं दृष्टं लोके । तस्माद्युक्तं नाल्पे सुखमस्तीति । अतो भूमैव सुखम् तृष्णादिदुःखवीजत्वासम्भवात् भूम” भाष्यम् तस्मिन् प्रपाठके च यस्मात् यो भूमा तस्मिन्नुपदिष्टं द्रष्टव्यम् ।

**भूमय** त्रि० भू+मयट् । १मृदात्मके २छायायां स्त्री० ङीप् ।

**भूमि(मी)** स्त्री भवन्त्यस्मिन् भूतानि भू–मि किच्च वा ङीप् । १पृथिव्याम् २स्थानमात्रे मेदि० ३जिह्वायां शब्दच० उणा० योगशास्त्रोक्ते ४योगिनां चित्तस्यावस्थाभेदे, ५एक-सङ्ख्यायाञ्च । पाण्डुसंख्यादित्वोऽच् समा०बहु० । द्विभूम० प्रसाद पाण्डुभूमो देशः । योगोक्तभूमयश्च “तस्य भूमिषु विनियोगः” पा० सू० उक्ताः । “तस्य संयमस्य जितभूमेर्याऽनन्तरा भूमिस्तत्र विनियोग । नह्यजिता-धरभूमिरनन्तरभूमिं विलङ्घ्य प्रान्तभूमिषु संयमं लभते तदभावाच्च कुतः तस्य प्रज्ञालोकः, ईश्वरप्रसादा ज्जितोत्तरभूमिकस्य च नाधरभूमिषु परचित्तज्ञानादि ष्वयमो युक्तः कस्मात् तदर्थस्यान्यत एवावगतत्वात् भूमेरस्या इयमनन्तरा भूमिः”भा० । सा च भूमिः सप्तप्रकारा यथोक्तं तत्रैव “तस्य सप्तधा प्रान्तभूमिः प्रज्ञा” पात०सू० । “तस्येति प्रत्युदितख्यातेः प्रत्याम्नायः सप्तधेति अशुद्ध्या-वरणमलापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे सति सप्त प्रकारैव प्रज्ञा विवेकिनो भवति । तद्यथा परिज्ञातं हेयं नास्य पुनः परिज्ञेयमस्ति क्षीणा हेयहेतवो न पुनरेतेषां क्षेतव्यमस्ति साक्षात्कृतं निरोधसमाधिना हानम् । भावितो विवेकख्यातिरूपो हानोपाय इत्येषा चतुष्टयी कार्य्यविमुक्तिः प्रज्ञायाः । चित्तविमुक्तिस्तु त्रयी चरिताधिकारा बुद्धिर्गुणा गिरिशिखरकूटच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति । न चैषां विप्रलीनानां पुन-रस्त्युत्पादः प्रयोजनाभावादिति एतस्यामवस्थायां गुणसम्बन्धातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुष इत्येता सप्तविधा प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः कुशल इत्याख्यायते प्रतिप्रसवेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति सिद्धा भवति विवेक-ख्यातिर्हानोपायः इति” भा० । “प्रत्युदितख्यातेः प्रत्य-मानख्यातेः योगिनः प्रत्याम्नाय परामर्शः अशुद्धिरेवा-वरणं चित्तसत्त्वस्य तदेव मलं तस्यापगमात् चित्तस्य प्रत्ययान्तरानुत्पादे तामसराजसव्युत्थानप्रत्ययानुत्पादे निरस्तविवेकख्यातिनिष्ठामापन्नस्य सप्तप्रकारैव प्रज्ञा विवेकिनो भवति विषयभेदात् प्रज्ञाभेदः प्रकृष्टोऽन्तो यासां भूमीनामवस्थानां तास्तथोक्ता यतः परं नास्ति संप्रकर्षः प्रान्ता भूमयः यस्याः प्रज्ञायाः विवेकख्यातेः सा तथोक्ता ता एव सप्तप्रकाराः प्रज्ञा भूमीः उदाहरति । तद्यथेति तत्र पुरुष-प्रयत्ननिष्पाद्यासु चतसृषु भूमिषु प्रथमामुदाहरति परिज्ञातं हेयं यावत् किञ्च प्राधानिकं तत् सर्वं परिणामतापसंस्कारैर्गुणवृत्तिविरोधात् दुःखमेवेति हेयं तत् परिज्ञातम् । प्रान्ततां दर्शयति नास्य पुनः किञ्चिद् परिज्ञातं परिज्ञेयमस्ति । द्वितीयामाह क्षीणा इति । प्रान्ततामाह न पुनरिति । तृतीयामाह साक्षात्कृतं प्रत्यक्षेण निश्चितं यया संप्रज्ञातावस्थायामेव निरोध० समाधिसाध्यं हानं न पुनरस्मात् परं निश्चेतव्यमस्तीति शेषः । चतुर्थीमाह भावितो निष्पादितः विवेकख्याति-रूपो हानोपायो नास्याः परं भावनीयमस्ति इति शेष । एषा चतुष्टयी कार्य्यविमुक्तिरिति कार्य्यान्तरेण विमुक्तिः प्रज्ञाया इत्यर्थः प्रयत्ननिष्पाद्यायुक्त्वाऽनिष्पा-दनीयामप्रयत्नसाध्यां चित्तविमुक्तिमाह चित्तविमुक्तिस्तु त्रयी । तत्र प्रथमामाह चरिताधिकारा बुद्धिः कृतभोगाप-वर्गकार्य्येत्यर्थः । द्वितीयामाह गुणा इति प्रान्ततामाह न चैषामिति । तृतीयामाह एतस्यामवस्थायामिति तस्या-मवस्थायां जीवन्नेव पुरुषः कुशलो मुक्त इत्युच्यते चरमदेहत्वादित्याह एतामिति । अनौपचारिकं मुक्त-माह प्रतिप्रसवे प्रधानलयेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति” विवरणम् ।

पृथिवीरूपभूमिगुणाश्च भा०प०उक्ता यथा “भूमेः स्थैर्य्यं गुरुत्वञ्च काठिन्यं प्रसवार्थता । गन्धो गुरुत्वं शक्तिश्च सङ्घातः स्थापना धृतिः” । प्रथमगुरुत्वं पतनविरोधी गुण द्वितीयगुरुत्वम् पिच्छिलेतरो न पौनरुक्त्यम् । शक्तिः धारणादिसामर्थ्यम् संघातः संश्लिष्टावयवत्वम् । स्थापना चतुर्णामादेर्धारणात्मकव्यापारः । धृतिर्धारणा इत्यर्थः ।

**भूमिकदम्ब** पु० भूमिजातः कदम्बः शा० त० । कदम्बभेदे “भूमिकदम्बाः कटुकाश्च हृद्या दोषहरा हिमाः । कषाय

तिक्ता पित्तघ्नी वीर्यवृद्धिकरी परा" राजनि० ।

**भूमिकन्दली** स्त्री भूलग्ना कन्दली शा॰त॰। कन्दलीभेदे माघ॰ ६।१०। मल्लि॰।

**भूमिकम्प** पु॰ ६त॰। क्षितिचलने तत्कारणादिकं स फलविशेष वृ॰स॰ ३२अ॰ उक्तं यथा।

"क्षितिकम्पमाहुरेके बृहदन्तर्जलनिवासिसत्त्वकृतम्। भूभारखिन्नदिग्गजविश्रामसमुद्भवं चान्ये। अनिलोऽनिलेन निहतः क्षितौ पतन् सस्वनं करोत्यन्ये। केचित्त्वदृष्टकारितमिदमन्ये प्राहुराचार्याः। गिरिभिः पुरा सपक्षैर्वसुधा प्रपतद्भिरुत्पतद्भिश्च। आकम्पिता पितामहमाहामरसदसि सव्रीडम्। भगवन्नाम ममैतत्त्वया कृतं यदचलेति तन्न तथा। क्रियतेऽचलैश्चलद्भिः शक्ताहं नास्य खेदस्य। तस्याः सगद्गदगिरं किञ्चित् स्फुरिताधरं विनतमीषत्। साश्रुविलोचनमवलोक्य पितामहः प्राह। मन्युं हरेन्द्र धात्र्याः क्षिप कुलिशं शैलपक्षभङ्गाय। शक्रः कृतमित्युक्त्वा मा भैरिति वसुमतीमाह। किन्त्वनिलदहनसुरपतिवरुणाः सदसत्फलावबोधार्थम्। प्रागर्द्धनिशचतुर्भागेषु दिननिशोः कम्पयिष्यन्ति। चत्वार्यार्यमणाद्यान्यादित्यं मृगशिरोऽश्वयुक् चेति। मण्डलमेतद्वायव्यमस्य रूपाणि सप्ताहात्। धूमाकुलीकृताशे नभसि नभस्वान् रजः क्षिपन् भौमम्। विरुजन् द्रुमांश्च विचरति रविरपटुकरावभासी च। वायव्ये भूकम्पे सस्याम्बुवनौषधीक्षयोऽभिहितः। श्वयथुश्वासोन्मादज्वरकासभवो वणिक्पीडा। रूपायुधभृद्वैद्याः स्त्रीकविगान्धर्वपण्यशिल्पिजनाः। पीड्यन्ते सौराष्ट्रककुरुमगधदशार्णमत्स्याश्च। पुष्याग्नेयविशाखाभरणीपित्र्याजभाग्यसंज्ञानि। वर्गो हुतभुजोऽयं करोति रूपाण्यथैतानि। तारोल्कापातावृतमादीप्तमिवाम्बरं सदिग्दाहम्। विचरन्ति मरुत्सहायः सप्तार्चिः सप्तदिवसान्तः। आग्नेयेऽम्बुदनाशः सलिलाशयसंक्षयो नृपतिवैरम्। दद्रुविचर्चिकाज्वरविसर्पिकाः पाण्डुरोगश्च। दीप्तौजसः प्रचण्डाः पीड्यन्ते चाश्मकाङ्गबाह्लीकाः। तङ्गणकलिङ्गवङ्गद्रविडाः शबराश्च नैकविधाः। अभिजिच्छ्रवणधनिष्ठाप्राजापत्यैन्द्रवैश्वमैत्राणि। सुरपतिमण्डलमेतद्भवन्ति चास्य स्वरूपाणि। चलिताचलवर्ष्माणो गम्भीरविराविणस्तडित्वन्तः। गवलालिकुलाहिनिभा विसृजन्ति पयः पयोवाहाः। ऐन्द्रं श्रुतिकुलजातिख्यातावनिपालगणपविध्वंसि। अतिसारगलग्रहवदनरोगकृच्छर्दिकोपाय। काशियुगन्धरपौरवकिरातकीराभिसारहलमद्राः। अर्बुदसुराष्ट्रमालवपीडाकरमिष्टवृष्टिकरम्। पौष्णाप्याद्रीश्लेषामूलाहिर्बुध्न्यवरुणदेवानि। मण्डलमेतद्वारुणमस्यापि भवन्ति रूपाणि। नीलोत्पलालिभिन्नाञ्जनत्विषो मधुरराविणो बहुलाः। तडिदुद्भासितदेहा धाराङ्कुरवर्षिणो जलदाः। वारुणमर्णवसरिदाश्रितघ्नमतिवृष्टिदं विगतवैरम्। गोनर्दचेदिकुकुरान् किरातवैदेहकान् हन्ति। षड्भिर्मासैः कम्पो द्वाभ्यां पाकं च याति निर्घातः। अन्यानप्युत्पातान् जगुरन्ये मण्डलैरेतैः। हरिचन्द्रपुरं रजश्च निर्घातभूकम्पककुप्प्रदाहाः। वातोऽतिचण्डो ग्रहणं रवीन्द्वोर्नक्षत्रताराग्रहवैकृतानि। व्यभ्रे हविर्वैकृतं वातवृष्टिर्धूमोऽनग्नेर्विस्फुलिङ्गार्चिषो वा। वन्यं सत्त्वं ग्राममध्ये विशेद्वा रात्रावैन्द्रं कार्मुकं दृश्यते वा। सन्ध्याविकाराः परिवेषखण्डा नद्यः प्रतीपा दिवि तूर्यनादाः। अन्यच्च यत् स्यात् प्रकृतेः प्रतीपं तन्मण्डलैरेव फलं निगाद्यम्। ऐन्द्रो वायुश्चाग्नेयमैन्द्रमेवमन्योऽन्यम्। वारुणहौतभुजावपि वा भवसजा कम्पा। प्रथितनरेश्वरमरणव्यसनान्याग्नेयवायुमण्डलयोः। क्षुद्भयमरकावृष्टिभिरुपताप्यन्ते जनाश्चापि। वारुणपौरन्दरयोः सुभिक्षशिववृष्टिहार्दा लोके। गावोऽतिभूरिपयसो निवृत्तवैराश्च भूपालाः। पक्षैश्चतुर्भिरनिलस्त्रिभिरग्निर्दहनराट् च सप्ताहात्। सद्यः फलति च वरुणो येषु न कालोऽद्भुतस्योक्तः। चलति पवने शतद्वयं शतमनलो दशयोजनान्वितम्। सलिलपतिरशीतिसंयुतं कुलिशधरोऽभ्यधिकं च षष्टियुक्। त्रिचतुर्थसप्तमदिने मासे पक्षे तथा त्रिपक्षे च। यदि भवति भूमिकम्पः प्रधाननृपनाशनो भवति।"

भूमिचलनादयोऽप्यत्र। "निर्घाते भूमिचलने" मनु॰।

**भूमिका** स्त्री भूमिरिव कायति कै—क। रचनायां "स्वरूपान्तरेणान्यस्य प्रवेशस्तत्र भूमिका" इत्युक्ते नाट्ये अभिनेयपात्रादिवेशान्तरग्रहणे २ अन्यैरुक्तस्य व्यक्तीकरणे ३ यां च "नैयायिकादिभिरात्मा प्रथमभूमिकायामवतारितः" इति सांख्यप्रवचनभाष्यम्।

**भूमिकुष्माण्ड** पु॰ भूमिजातः कुष्माण्डः शा॰त॰ (भुंइ कुमडा) ख्याते लताभेदे रत्नमा॰।

**भूमिखर्जूरिका** स्त्री भुवि जाता खर्जूरिका शा॰त॰। खर्जूरिकाभेदे "भूमिखर्जूरिका स्वाद्वी दुरारोहा मृ

च्छदा। अथ स्वल्पफला काककर्कटी स्वादुमस्तका। पिण्डखर्जूरिका त्वन्या सा देशे पश्चिमे भवेत्। खर्जूरी गोस्तनाकारा परद्वीपादिहागता। जायते पश्चिमे देशे सा छोहारेति कीर्त्तिता। खर्जूरीत्रितयं शीत मधुरं रसपाकयोः। स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु। तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भशुक्रदम्। कोष्ठमारुतकृद्बल्यं वान्तिवातकफापहम्। ज्वराभिघातक्षुत्तृष्णाकासश्वासनिवारणम्। मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत्। महतीभ्यां गुणैरल्पा स्वल्पखर्जूरिका स्मृता। खर्जूरीतरुतोयन्तु मदपित्तकरं भवेत्। वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत्" भावप्र०।

भूमिचम्पक पु० भूमिचम्पः चम्पक शाक०त०(भूइचांपा) [illegible] भेदे शब्दच०।

भूमिज पु० भूमेर्जायते जन–ड। १मङ्गलग्रहे २नरकासुरे मेदि० ३भूमिकदम्बे ४मनुष्ये च राजनि०। ५भूमिजातमात्रे त्रि०। ६सीतायां स्त्री।

भूमिजगुग्गुलु पु० कर्म०। भाषापुरजाते गुग्गुलौ राजनि०

भूमिजम्बु स्त्री ७त०। क्षुद्रजम्ब्वां रत्नमा० वा ङीप्। तदर्थे राजनि०। स्वार्थे क। तदर्थे स्त्री अमरः।

भूमिजीविन् पु० भूमिं तत्कर्षणं जीवति जीव–णिनि। वैश्ये शब्दरत्ना०।

भूमिञ्जय पु० विराटनृपस्य पुत्रभेदे भा० वि० ३६ अ०।

भूमिधर पु० भूमिं धरति धृ–अच्। १कुलपर्वते उपचारात् २पर्वतमात्रे।

भूमिप पु० भूमिं पाति पा–क। नृपे जटा०। भूमिपाला-[द्योऽप्यत्र।

भूमिपक्ष पु० भूमिः पक्ष इवास्य। वाताश्वे हारा०।

भूमिपति पु० ६त०। भूपतौ भूमिनाथादयोऽप्यत्र।

भूमिपिशाच पु० भूमौ पिशाच इव। तालवृक्षे जटा०।

भूमिपुत्र पु० ६त०। १मङ्गलग्रहे २नरकासुरे च भूमिसुतादयोऽप्यत्र। ३जानक्यां स्त्री गौरा० ङीष्।

भूमिप्रविभाग पु० सुश्रुतोक्ते औषधार्थभूमिविभागे "अथातो भूमिप्रविभागविज्ञानीयमध्यायं व्याख्यास्यामः। श्वभ्रशर्कराश्मविषमवल्मीकश्मशानाघातनदेवतायतनसिकताभिरनुपहतामनूषरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधार्थं परीक्षेत तस्यां जातमपि कृमिविषशस्त्रातपपवनदहनतोयसम्बाधमार्गैरनुपहतमेकरसं पुष्टं पृथ्ववगाढमूलमुदीच्यां चौषधमाददीतेत्यौषधभूमिपरीक्षाविशेषः सामान्यः। विशेषतस्तु। तत्राश्मवती स्थिरा गुर्वी श्यामा कृष्णा वा स्थूलवृक्षसस्यप्राया स्वगुणभूयिष्ठा। स्निग्धा शीतलाऽऽसन्नोदका स्निग्धसस्यतृणकोमलवृक्षप्राया शुक्लाऽम्बुगुणभूयिष्ठा। नानावर्णा लघ्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा। रूक्षा भस्मरासभवर्णा तनुवृक्षकोटराल्परसवृक्षप्रायाऽनिलगुणभूयिष्ठा। मृद्वी समाश्वभ्रवत्यव्यक्तरसजला सर्वतोऽसारवृक्षा महापर्वतवृक्षप्राया श्यामा चाकाशगुणभूयिष्ठा। तत्र केचिदाचार्या ब्रुवते प्रावृड्वर्षाशरद्धेमन्तवसन्तग्रीष्मेषु यथासङ्ख्यं मूलपत्रत्वक्क्षीरसारफलान्याददीतेति तत्तु न सम्यक् कस्मात् सौम्याग्नेयत्वाज्जगतः। सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीत आग्नेयान्याग्नेयेष्वेवमव्यापन्नगुणानि भवन्ति। सौम्यान्यौषधानि सौम्येष्वृतुषु गृहीतानि सोमगुणभूयिष्ठायां भूमौ जातान्यतिमधुरस्निग्धशीतानि जायन्ते। एतेन शेषं व्याख्यातम्। तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचनद्रव्याण्याददीत अग्न्याकाशमारुतगुणभूयिष्ठायां वमनद्रव्याणि। उभयगुणभूयिष्ठायामुभयतोभागानि। आकाशगुणभूयिष्ठायां संशमनान्येवं बलवत्तराणि भवन्ति। सर्वाण्येव चाभिनवान्यन्यत्र मधुघृतगुडपिप्पलीविडङ्गेभ्यः। सर्वाण्येव सक्षीराणि वीर्यवन्ति तेषामसम्पत्तावतिक्रान्तसंवत्सराण्याददीतेति। भवन्ति चात्र। गोपालास्तापसा व्याधा ये चान्ये वनचारिणः। मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते। सर्वावयवसाध्येषु पलाशलवणादिषु। व्यवस्थितो न कालोऽस्ति तत्र सर्वो विधीयते। गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते। तस्माद्भूमिस्वभावेन बीजिनः षड्रसैर्युताः। अव्यक्तः किल तोयस्य रसो निश्चयनिश्चितः। रस एव स चाव्यक्तो भूमेर्व्यक्तो रसाद्भवेत्। सर्वलक्षणसम्पन्ना भूमिः साधारणी स्मृता। द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषतः। विगन्धेनापरामृष्टमविपन्नं रसादिभिः। नवं द्रव्यं पुराणं वा ग्राह्यमेव विनिर्दिशेत्। विडङ्गं पिप्पली क्षौद्रं सर्पिश्चाप्यनवं हितम्। शेषमन्यत्त्वभिनवं स्वच्छीयाद्दोषवर्जितम्। जङ्गमानां वयस्थानां रक्तरोमनखादिकम्। क्षीरमूत्रपुरीषाणि जीर्णाहारेषु संहरेत्। प्लोतमृद्भाण्डफलकशङ्कुविन्यस्तभेषजम्। प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते।"

राजनि०. २प्रचुरबले त्रि० ३एतदाख्यबुद्धभेदे पु० भा० श० २७अ०

**भूरिमल्ली** स्त्री भूरि बहु यथा स्यात् यथा मल्लति मल्ल-अच् गौरा० ङीष्। अम्बष्ठायाम् राजनि०।

**भूरिमाय** पुंस्त्री० भूरयः माया यस्य। १शृगाले अमरः स्त्रियां योपधत्वात् टाप्। २प्रभूतमायायुते त्रि०

**भूरिमूलिका** स्त्री भूरीणि मूलानि यस्याः कप् टापि अत इत्वम्। अम्बष्ठायाम् नैघण्टुप्र०।

**भूरिशस्** अव्य० भूरि-शस्। बहुश इत्यर्थे।

**भूरिश्रवस्** पु० ६ब०। चन्द्रवंश्ये १सोमदत्तसुते न्टपभेदे। भा० आ० १८७ अ०। २प्रचुरयशस्के त्रि०।

**भूरिश्रेष्ठिक** पु० भूरयः श्रेष्ठिनो यत्र। (भुरशुट्) गौडदेशस्थे पुरभेदे "गौडे राष्ट्रमनुत्तमं निरुपमा तत्रापि राढा पुरी भूरिश्रेष्ठिकनाम धाम परमं तत्रोत्तमोनः पिता" प्रबोधच०।

**भूरिहन्** त्रि० भूरीन् हन्ति हन-क्विप्। १बहुतरनाशके २असुरभेदे पु० भा० शा० २२७ अ०।

**भूरुण्डी** स्त्री भुवं रुण्डति आच्छादयति रुडि-आवृतौ (माधवटत्तौ पठितः) अण् उप० स०। (हातिशुँड़ा) क्षुपभेदे अमरः। [शब्दमा०

**भूरुह** पु० भुवि रोहति रुह क ७त०। महीरुहे दृक्षे

**भूर्ज्ज** पु० ऊर्ज्ज-अच् ७त०। स्वनामख्याते वल्कप्रधाने वृक्षे। "भूर्जत्वचः स्पर्शवतीर्दधानाः" कुमा०। "भूर्जः कटुः कषायोष्णो भूतरक्षाकरः परः। त्रिदोषशमनः पथ्य. दुष्टकौटिल्यनाशनः" राजनि०। "कर्णरोगपित्तकफमेदोविषहरश्च सः" भावप्र०।

**भूर्जकण्टक** पुंस्त्री० "व्रात्यात्तु जायते विप्रात् पापात्मा भूर्जकण्टकः" मनूक्ते जातिभेदे स्त्रियां ङीष्।

**भूर्जपत्र** पु० भुवि-ऊर्ज्जं पत्रं यस्य। स्वनामख्याते दृक्षे। भूर्जत्वगादयोऽप्यत्र रत्नमा०।

**भूर्णि** स्त्री भृ-नि नि० अत उरः। पृथिव्या सि० कौ०।

**भूर्लोक** पु० कर्म०। पादसञ्चारयोग्यस्यामस्थे लोके।

**भूलग्ना** स्त्री भुवि लग्ना ७त०। बहुपर्ण्याम् राजनि०।

**भूलता** स्त्री भुवि लतेव। महीलतायां (केँचो) सरीसृपभेदे हेम०।

**भूलिङ्गशकुनि** पु० भूलिङ्ग' शकुनि कर्म०। नित्यायितिपक्षिभेदे "प्रकृति यान्ति भूतानि भूलिङ्गशकुनिर्यथा" भा० स० ४१अ०। तद्दिष्टतिर्यथा "अथ चेमा न ते बुद्धिः प्रकृतिं याति भारत।। मयैव कथितं पूर्वं भूलिङ्गशकुनिर्यथा। भूलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे। भीष्म। तस्या सदा वाचः श्रूयन्तेऽर्थविगर्हिताः। मा साहसमितीदं सा सततं वाशते किल। साहसं चात्मनातीव चरन्ती नाववुध्यते। सा हि मांसार्गलं भीष्म! मुखात् सिंहस्य खादतः। दन्तान्तरविलग्नं यत्तदादत्तेऽल्पचेतना। इच्छतः सा हि सिंहस्य भीष्म! जीवत्यसंशयम्। तद्वत्त्वमप्यधर्मिष्ठ। सदा वाचः प्रभाषसे भा०स०४४अ०। "भूलिङ्गशकुनिर्यथान्यद्वदत्यन्यत् करोति तद्वत्ते गुड कामयन्ते शबल वदतीत्यर्थः भुवं लिङ्गतीति भूलिङ्गो नित्यशायी पक्षिविशेषः एषेति पाठे एषा अस्मदीया बुद्धिस्त्वदीया त्वद्वत्ते इति योज्यं तदा स्वस्यैव शकुन्युपमत्वम् अर्थविगर्हिताः उक्तिविपरीतक्रियया अर्थोविगर्हितो यासां ताः। वाशते शब्दं करोति। मांसार्गलं दृष्टान्तरलग्नस्य मांसस्य बहिर्निर्गतभागमुल्लोलम् इच्छति इति। सा हि पक्षिणी मृत्युमुखे प्रविष्टापि तदुपेक्षया जीवन्ती यथा लोकानुपदिशति मा साहसमिति तथा त्वमुपदेशकारित्वात् मृत्युमुखे पतितोऽपि मृत्युना उपेक्षितो जीवसि परोपदिश्यपि मृत्युमुखे न पतितव्यमिति" नील०।

**भूवलय** न० भूर्वलयमिव। भूमिपरिधौ। [निघण्टुः

**भूशमी** स्त्री भूलग्ना शमी शाक०त०। लघुशम्यां मदनपाल-

**भूशय** पु० भुवि शेते शी-अच् ७त०। १बिलशये नकुलादौ। २विष्णौ च "भूशयो भूषणो भूतिः" विष्णुस०। स हि रामावतारे समुद्रवत्समाय सागरोपान्तभूमौ शयित इति तस्य तथात्वम्। [नैघण्टुप्र०

**भूशर्करा** स्त्री भुवि ख्याता शर्करा शा० त०। कन्दभेदे

**भूशेलु** पु० भुवि ख्याता शेलुः शा० त०। भूकर्वुदारके राजनि०।

**भूष** मण्डने वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। भूषयति ते भूषति अबुभूषत्-त अभूषीत्।

**भूषण** न० भूष्यतेऽनेन भूष-करणे ल्युट्। १अलङ्कारे किरीटादौ। भावे ल्युट्। २भूषायाम्। अलङ्कारभेदाः तत्साधनद्रव्याणि यथा "किरीटञ्च शिरोरत्नं कुण्डलञ्च ललाटिका। तालपत्रञ्च हारञ्च ग्रैवेयकमथोर्मिका। प्रालम्बिका रत्नसूत्रमुत्तरीयं तथाङ्गदम् ऽप्यक्षमालिका। पार्श्वद्योतो नखद्योतोऽङ्गुलीच्छादक कथा। कटिलग्नं मायकौ मुद्गतारा लवनिका। अङ्गदो

बाहुवलयः शिखाभूषणमिङ्गिका । प्रगण्डबन्धं तत्-पार्श्वं नाभिपूरोऽथ मालिका । सप्तकी शृङ्खलञ्चैव दण्डपक्षश्च वर्णकः । अरसनञ्च नीवी च सुविन्दं प्रकीर्णकम् । पादाङ्गदं हंसकञ्च नूपुरं क्षुद्रघण्टिका । सुखपट्टमिति प्रोक्ता अलङ्काराः सुशोभनाः । चत्वारिंशदमी प्रोक्ता लोके वेदे च सौख्यदाः । अलङ्कारा-प्रदानेन चतुर्वर्गप्रदायकाः । एतेषां पूजनं कृत्वा प्रदद्यादिष्टसिद्धये । तेषां दैवतमन्त्राभ्यां पूजयेत्तु विचक्षणः । शिरोगतानि चाद्द्यात् सौवर्णानि तु सर्वदा । चूडारत्नादिकानीह भूषणानि तु भैरव ! । ग्रैवेयकादिहंसान्तं सौवर्णं राजतञ्च वा । निवेदयेत् तु देवेभ्यो नान्यतैजससम्भवम् । रीतिसङ्गादिसञ्जातं पात्रोपकारणादिकम् । दद्यादायसवर्जन्तु भूषणं न कदाचन । घण्टाचामरकुम्भादिपात्रोपकरणादिकम् । तद्भूषणान्तरे दद्यात् यस्मात्तु तदुपभूषणम् । सर्वं ताम्रमयं दद्याद् यत् किञ्चिद्भूषणादिकम् । सर्वत्र स्वर्णयत्ताम्रमर्घ्यं पात्रं ततोऽधिकम् । पूजार्घ्यपात्रं नैवेद्याधारपात्रञ्च पानकम् । औदुम्बरं सदा विष्णोः प्रीतिदं तोषदं तदा । ताम्रे देवाः प्रमोदन्ते ताम्रे देवाः सदा स्थिताः । सर्वप्रीतिकरं ताम्रं तस्मात्ताम्रं प्रयोजयेत् । स्वोपयोगे नरः कुर्याद्देवानामपि भैरव ! । सीसोद्भवे रौप्यन्तु न कदाचिच्च भूषणम् । प्राकार पानपात्रञ्च गेन्दुक खट्वमेव च । पर्यङ्कादि यदन्यच्च सर्वं तदुपभूषणम् । पयोमयस्तुते काष्ठसूते यद्भूषणं भवेत् । स्वर्णरौप्यस्य चाभावे लघुकाये नियोजयेत् । एतेषां भूषणादीनां यद्दातुं शक्यते नरैः । तत्तद्दद्यात् सम्भवे तु सर्वमेव प्रदापयेत् । चतुर्वर्गप्रदं नित्यं भूषणं सर्वसौख्यदम् । तुष्टिपुष्टिप्रीतिकरं यथाशक्तीरयेत् सृजेत् । इति ते भूषणं प्रोक्तं सर्वदेवस्य तुष्टिदम्” कालि०पु०८६अ० । तत्कारणदिनमुच्यते “रेवत्यश्विनीतिष्य हस्तादिष्वपि पञ्चसु । गुरुशुक्रबुधस्याह्नि वस्त्रालङ्कारधारणम् । अनिष्टेष्वपि निर्दिष्टं वस्त्रालङ्कारधारणम् । उद्वाहे राजसम्माने ब्राह्मणानाञ्च सम्मते । शिरस्त्रं मुकुटं हारं कुण्डलञ्चाङ्गदं तथा । कङ्कणं वालकञ्चैव मेखलाद्यामिति क्रमात् । प्रधानभूषणान्येषु यथास्यं याति निश्चय । पद्मरागश्च वज्रञ्च विजयो गोमेदस्तथा । मुक्ताञ्च दूर्वानीलञ्च तथा मरकतं क्रमात् । आदित्यादिदशाजाना सर्वसम्पत्तिदायकाः । शुभर्क्षेष्वपि घटना सर्वेषामुपयुज्यते । प्रधानभूषणेष्वेवमप्रधाने न निर्णयः । प्रधानभूषणं प्रायः शिरसो ह्यभिधीयते । तच्च प्रधानभूतत्वादिवाच्च भृगुनन्दन । सुखदा मणयः शुद्धा दुःखगाः दोषशालिनः ।” इति युक्तिकल्पतरुः ।

**भूषा** स्त्री भूष भावे अ । मण्डनक्रियायाम् अमरः ।

**भूषित** त्रि० भूष-क्त । अलङ्कृते ।

**भूष्णु** त्रि० भू-ग्स्नु । भवनशीले ।

**भूसंस्कार** पु०६त० । यज्ञादौ भूमिभागस्य परिसमूहनोपलेपनरेखाकरणपांशूद्धरणजलकरणकाभ्युक्षणरूपेषु पञ्चसु संस्कारेषु तत्प्रकारश्च कात्या० श्रौ० २।१।२४सूत्रभाष्ये दर्शितो यथा “तत्र पूर्वमाहवनीयखरे पञ्च भूसंस्काराः कर्त्तव्याः तद्यथा दर्भैः खरं प्राक्संस्थमुदक्संस्थं वा त्रिः परिसमुह्य १गोमयेन त्रिरुपलिप्य २स्फ्येन प्रागायता उदक्संस्था उदगायताः प्राक्संस्था वा तिस्रो रेखाः खरप्रमाणाः कृत्वा ३अनामिकाङ्गुष्ठेन ताभ्यो रेखाभ्यः पांशूनुद्धृत्य ४अद्भिस्त्रिरभ्युक्षेत् ५। परिसमूहनं (तृणानामपसारणम्) कात्या०श्रौ० ४।१३।१० कर्क” ।

**भूसुत** पु० ६त० । १मङ्गलग्रहे शब्दमा० २नरकासुरे च ३सीतायां स्त्री ।

**भूस्तृण** न० भुवस्तृणम् पृषो० सुट् । भूतृणे ख्याते पदार्थे “गुह्यबीजञ्च भूतीकं सुगन्धं गोमयप्रियम् । भूस्तृणन्तु भवेच्छत्रा माला तृणकमित्यपि । भूस्तृणं कटुकं तिक्तं तीक्ष्णोष्णं रोचनं लघु । विदाहि दीपनं रूक्षमनेत्र्यं मुखशोधनम् । अहृद्यं बद्धविट्कञ्च पित्तरक्तप्रदूषणम्” भावप्र० ।

**भूस्पृश्** पु० भूमिं स्पृशति स्पृश क्विन् । मनुष्ये हेमच० ।

**भूस्वर्ग** पु० भूमिस्थितः स्वर्गः शा० त० । सुमेरुपर्वते तत्र अमरधारत्वेन स्वर्गत्वात् तथात्वम् ।

**भृ** भरणे भ्वा० उभ० सक० अनिट् । भरति-ते अभार्षीत् बभार [बभ्रे ।

**भृ** धारणे पोषणे च जु० उभ० सक० अनिट् । बिभर्त्ति बिभृते अभार्षीत् अभृत । बिभरामास-बभार । द्वि । बभर्थ । द्वित् । क्त्रि-मप् च । भृत्रिमम् ।

**भृकुंस(श)** पु० भ्रुवा कुंसा(शा) इङ्गितज्ञापनं यस्य बि० भ्रुवः वा सम्प्रसारणम् । स्त्रीवेशधारिणि नटे अमरः ।

**भृकुटि(टी)** स्त्री भ्रुवः कुटि भङ्गिः वा सम्प्रसारणम् वा ङीप् । भ्रूभङ्गे “रचितभृकुटिबन्धं नन्दिना द्वारि रोषात् हरविगाह ।

**भृगु** पु० । भ्रज्जति क्विप् भृक् ज्वाला तया सहोत्पन्न

१ब्रह्मणः पुत्रे ऋषिभेदे "भृगित्येव भृगुः पूर्वमङ्गारेभ्योऽङ्गिराऽभवत्। अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत्। सह ज्वालाभिरुत्पन्नो भृगुस्तस्मात् भृगुः स्मृतः" भा० अनु० ८५अ०। "भृगोः ख्याता समुत्पन्ना श्रीः पूर्वमुदधेः पुनः। तथो धाता विधाता च तस्यां जातौ भृगोः सुतौ। आयतिर्नियतिश्चैव मेरुकन्ये महाप्रभो!। धातृविधात्रोस्ते भार्य्ये तयोर्जातौ सुतावुभौ। प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः। ततो वेदशिरा जज्ञे प्राणस्य द्युतिमान् सुतः। ततो वंशो मुनिश्रेष्ठ। विस्तरं भार्गवो गतः" वह्निपु०। २महादेवे ३शुक्रग्रहे मेदि०। ४गिरिसानौ ५जमदग्नौ हेम०। ६निरवलम्बने पर्वतादुच्चस्थाने यतः पातेऽवलम्बनं न भवति तस्मिन् उच्चस्थाने अमरः। भृगोर्गोत्रापत्यानि अण् बहुषु तस्य लुक्। ७भृगोरपत्येषु ब०व०। ८वरुणापत्ये ऋषिभेदे "भृगुर्वै वारुणिर्वरुणं पितरमुपससार" तैत्ति०उ०।

भृगुक पु० कूर्मचक्रस्य दक्षिणपार्श्वस्थे देशभेदे मार्कपु०५८अ०।

भृगुकर्णा पु० तीर्थभेदे का०खो० ६अ०। [२३अ०।

भृगुकेशव पु० काशीस्थे भृगुस्थापितकेशवमूर्त्तिभेदे काशी०

भृगुज पु० भृगोर्जायते जन–ड। भार्गवे शुक्राचार्य्ये।

भृगुतनय पु०६त०। शुक्राचार्य्ये भृगुनन्दनभृगुसुतादयोऽप्यत्र

भृगुतुङ्ग न० तीर्थभेदे भा० आ० २१५ अ०। भा०व० ८४अ०।

भृगुपति पु०भृगूणां भार्गववंशस्य पतिः। परशुरामे शब्दमा० तेषां हैहयपातितो हि तेन रक्षा कृता इति तस्य तथात्वम्

भृगुभूमि पु० भार्गवपुत्रभेदे हरिवं० ३अ०।

भृगुवल्ली स्त्री भृगुणाऽधीता वल्ली। "भृगुर्वै वारुणिर्वरुणं पितरमुपससार" इत्यादिकायां तैत्तिरीयोपनिषद् तृतीयवल्ल्याम्।

भृगूणांपति पु० ६त० अलुक्स०। परशुरामे शब्दर०।

भृङ्ग पु० भृ–गन् कित् नुट् च। भ्रमरे २काकजङ्घविहगे (भिङ्गा) अमरः। ३भृङ्गराजे ४जारे मेदि० ५भृङ्गारे ६भृङ्गराले च कीटभेदे (भीमरुल) शब्दरत्ना०।

भृङ्गक पु० भृङ्ग इव कायति कै–क। राजशासनखगे शब्दच०

भृङ्गजा स्त्री भृङ्ग इव जायते जन–ड। १भार्ग्याम्। २अगुरुचन्दने न० राजनि० ३अभ्रके ४गुडत्वचि न०रत्नमा०।

भृङ्गपर्णी स्त्री भृङ्ग इव कृष्णत्वात् पर्णं यस्याः ङीप्। सूक्ष्मैलायाम्। स्वार्थे क। भृङ्गपर्णिका तत्रार्थे शब्दच०

भृङ्गप्रिया स्त्री ६त०। माधवीलतायां प्रचुरमधुमत्त्वात् तस्यास्तत्प्रियत्वम् राजनि०।

भृङ्गमूलिका स्त्री भृङ्गस्य भृङ्गराजस्येव मूलमस्याः कप् कापि अत इत्त्वम्। भ्रमरच्छल्ल्याम् राजनि०।

भृङ्गरज पु० भृङ्गान् रञ्जयति अन्तर्भूतण्यर्थे रन्ज–अच् पृषो० नलोपः। भृङ्गराजे (केशुरिया)। भरत०।

भृङ्गरजस् पु० भृङ्गान् रञ्जयति अन्तर्भूतण्यर्थे रन्ज–असुन् नलोपः। भृङ्गराजे अमरटीकायां भरत०।

भृङ्गराज पु० भृङ्गान् रञ्जयति रन्ज–णिच्–अण् नि० ६त०। (केशुरिया)। १क्षुपभेदे। "भृङ्गराजः कटुस्तिक्तो रूक्षोष्णः कफवातनुत्। केश्यस्त्वच्यः कृमिश्वासकासशोथामयापहृत्। दन्त्यो रसायनो बल्यः कुष्ठनेत्रशिरोर्त्तिजित्" भावप्र० २पक्षिभेदे ६त० टच्। ३भ्रमरश्रेष्ठे मेदि० ४यन्त्रभेदे च धरणिः।

भृङ्गराजाद्य न० "भृङ्गराजरसप्रस्थे यष्टीमधुपलेन च। तैलस्य कुडवं पक्वं सद्यो दृष्टिं प्रसादयेत्। तत् स्याद् वलीपलितघ्नं मासेनैतन्न संशयः" चक्रदत्तोक्ते तैलभेदे।

भृङ्गरिट (टि) पु० भृङ्ग इव रटति अच् इन् वा पृषो० अत इत्त्वम्। शिवपार्श्वचरभेदे। [कीटभेदे त्रिका०।

भृङ्गरोल पु० भृङ्ग इव रौति रु–लच्। (भीमरुल) ख्याते

भृङ्गवल्लभ पु० ६त०। १धाराकदम्बे २भूमिकदम्बे च। भृङ्गवत् लभ्यते लभ–क। ३भूमिजम्ब्वाम् स्त्री राजनि०। [त्रिका०

भृङ्गसोदर पु० भृङ्गस्य सोदर इव। (केशुरिया) केशराजे

भृङ्गानन्दा स्त्री आनन्दयति आ+नन्द+णिच्–अच् ६त०। यूथिकायाम् (युइ) राजनि०।

भृङ्गाभीष्ट पु० अभि+इष–क्त ६त०। आम्रवृक्षे राजनि०।

भृङ्गार पु० बभर्त्ति जलं भृ–आरक् नि०। १स्वर्णमयजलपात्रभेदे अमरः २जलपात्रभेदे च (भारी)। भृङ्ग इव ऋच्छति ऋ–अच्। ३भृङ्गराजे जटा०। ४लवङ्गे ५सुवर्णे च न० राजनि०। ६झिल्लीनामकीटे स्त्री अमरः गौरा० ङीप्। स्वार्थे क। भृङ्गारिका तत्रैव। तत्र भृङ्गारपात्ररचनादिकं युक्तिकल्पतरावुक्तं यथा "राज्ञोऽभिषेकपात्रं यद् भृङ्गार इति तन्मतम्। तदष्टधा तस्य मानं प्रमाणञ्चापि चाष्टधा। सौवर्णं राजतं भौमं ताम्रं स्फाटिकमेव च। चान्दनं वौटजं शार्ङ्गमेतदष्टविधं मतम्। मातृ२दिङ्८नवसप्त८षट्१२१लोक३रुद्रोन्मिता ११। अष्टावष्टौ समाख्याता व्यायामपरिमाणया। दिङ्नव१०९वेदब्धि ४४१०४सप्ताष्टवाग्मिता। यथाक्रमं समुद्दिष्टं दिव्यादिदशभूभुजाम्। पद्मरागस्तथा वज्रं वैदूर्यं मौक्तिकन्तथा। नीलं मारकतञ्चैव सुता

योगं न सहते । सावेत पृष्टवदनः सुखा तद्विरमन्तरा । अप्रियाण्यपि चान्यानि तथ्यान्यभिमन्यते । उपायनं च गृह्णाति स्तोकं सम्पादयेत्तथा । कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा । इति रक्तस्य वै कर्म कर्त्तव्यं तस्य सेवनम् । तद्दत्तवस्त्रभूषादि चिह्नं संधारयेत् सदा । न्यूनाधिके स्वाधिकारे नित्योद्युक्तो भवेत् सदा । तदर्थां तत्कृतां वार्त्तां सुरुवाक्षापि कीर्त्तयेत् । चारसूचकदोषेण कुद्ध्यथा यदर्थे नृपः । मृदुवाक्यैर्नमाश्रित्य तथ्यं यत्नेन बोधयेत् । आपद्गतं स्वभर्त्तारं कदापि न परित्यजेत् । दशवारमथादिष्टं यत्स्वामं कुर्य्यादरेण तत् । तदिष्टं चिन्तयेन्नित्यं पाचकस्ताम्रथा न किम् । अप्रधानः प्रधानः स्यात्, काले चात्यन्तसेवनात् । प्रधानोऽप्यप्रधानः स्यात् सेवालस्यादिना यतः । नित्यं संसेवनरतो भृत्यो राज्ञः प्रियो भवेत् । स्वाधिकारकार्य्यं यत् द्राक् कुर्य्यात् सुधामा यतः । न कुर्य्यात् सहसा कार्य्यं नीच राजापि चोदयेत् । तत् कार्य्यकारकाभावे राज्ञः कार्य्यं सदैव हि । काले यदुचितं कर्त्तुं नीचमप्युत्तमोऽर्हति । यस्मिन् प्रीतो भवेद्राजा तदनिष्टं न चिन्तयेत् । न दर्शयेत् स्वाधिकारगौरवं तु कदाचन । परस्परं नाभ्यसूयुर्न भेदं प्राप्नुयुस्तथा । राज्ञा चाधिकृताः सन्तः स्वस्वाधिकारगुप्तये । अधिकारिगणो राजा सद्वृत्तौ यत्र तिष्ठतः । उभौ, तत्र स्थिरा लक्ष्मीर्विपुला सम्मुखीभवेत् । अन्याधिकारवृत्तं तु न ब्रूयाच्छ्रुतमप्युत । राजा न शृणुयादन्यवचनस्तु कदाचन । न बोधयन्ति च हितमहितं चाधिकारिणः । प्रच्छन्नवैरिणस्ते तु दासरूपसमाश्रिताः । हिताहितं न शृणोति राजा मन्त्रिमुखात्तु यः । स दस्यू राजरूपेण प्रजानां धनहारकः । सुपुष्टव्यवहारा ये राजपुत्राश्च मन्त्रिणः । विरज्यन्ति च तैः साकं ते तु प्रच्छन्नतस्कराः । माता अपि राजपत्न्यः नावमान्यास्तु मन्त्रिभिः । सदा सुमधुवाक्यैस्तु संबोध्यास्ते प्रयत्नतः । अपवादचरितं तेषां क्वचित् राज्ञे न दर्शयेत् । स्त्रीपुत्रयोर्हि वचनात् तयोर्निन्दा न चैव हि । राज्ञोऽवश्यतरं कार्य्यं प्राणसंशयितं च यत् । आज्ञापयाप्यतत्कार्य्यं कारिणे तत्तु निश्चितम् । इति विज्ञाप्य तत् कर्त्तुं प्रवर्त्तेत यथास्थित । प्राणानपि च संदद्यात्स्वामिकार्य्ये नृपस्य च । भृत्यकुटुम्बपुष्ट्यर्थं नान्यथा तु कदाचन । भृत्या धनहराः सर्वे शुक्रा प्राणहरो नृपः । युद्धादौ तु महाकार्य्ये भृत्यप्राणान् हरेन्नृपः । नान्यथा भृतिरूपेण भृत्यो राजधनं हरेत् । अन्यथा हरतस्तौ तु भवतश्च स्वनाशकौ । राजा च युवराजश्च मान्योऽमात्यादिकैः सदा । तन्न्यूनाधात्वेन च किं तन्न्यूनाधिकृतेन किम् । मन्त्रित्वस्य भृतको न्यूनः साहसिको मतः । न क्रीडयेद्राजसम क्रीडिते न विशेषयेत् । नावमान्या राजपत्नी कन्या स्नुषापि च मन्त्रिभिः । राजसम्बन्धिनः पूज्याः सुहृदश्च यथार्हतः । नृपाहूतस्त्वरं गच्छेत् त्यक्त्वा कार्य्यशतं महत् । मित्रायापि न वक्तव्यं राजकृत्यं सुमन्त्रितम् । भृतं विना राजद्रव्यमदत्तं नाभिलाषयेत् । राजाज्ञया विना नेच्छेत् कार्य्यं नाप्यस्थिरां भृतिम् । न हि हन्यात् द्रव्यलोभात् न कार्य्यं यस्य कस्यचित् । स्वस्तोपुत्रधनप्राणैः काले संरक्षयेन्नृपम् । उत्कोचं नैव गृह्णीयात् नान्यथा बोधयेन्नृपम् । अन्यथा दण्डश्च भूपं नित्यं प्रवदद्दण्डकम् । निरुद्धा बाधयेत् सत्यं एकान्ते राज्यगुप्तये । हितं राज्ञोऽहितं यल्लोकानां तत्र कारयेत् । नवीनकरशुल्काद्यैर्लोक उद्विजते ततः ।"

"भृत्यः कुर्य्यात् तु राजानं मित्रवत् सत्प्रियः पतेः । न छिन्द्यात् वचनं राज्ञो ह्यतथ्यं न प्रियं वदेत् । रहोगतश्च वक्तव्यमप्रियं यद्धितं भवेत् । न नियुक्तो हरेद्वित्तं नोपेक्षेत् तस्य मानकम् । राज्ञश्च न तथाकार्य्यं वेशभाषाविचेष्टितम् । अन्तःपुरचराध्यक्षो वैरभूतैर्निराकृते । सङ्गं न गच्छेत् भृत्यो राज्ञो गुह्यञ्च गोपयेत् । दर्शयेत् कौशलं किञ्चिन्नाधिकं च विशेषयेत् । राज्ञा स्वकृतावितं गुह्यं न तल्लोके प्रकाशयेत् । आज्ञाप्यमाने चान्यस्मिन् किङ्करोमीति वा वदेत् । वस्त्रं रत्नमलङ्कारं राज्ञा दत्तं च धारयेत् । नानिर्दिष्टो द्वारि विशेन्नाभोग्यभुवि राजवत् । जृम्भां निष्ठीवनं कासं कोपं पर्य्यङ्किकाश्रयम् । भृकुटीं वातमुद्गारं तत्समीपे विसर्जयेत् । स्वगुणाख्यापने युक्त्या परानेव नियोजयेत् । शाठ्यं लौल्यं सपैशुन्यं नास्तिक्यं क्षुद्रता तथा । चापल्यञ्च परित्याज्यं नित्यं राजानुजीविना । श्रुतेन विद्याशिल्पैश्च संयोज्यात्मानमात्मना । राजसेवां ततः कुर्य्याद् भूतये भूतिवर्द्धनः । नमस्कार्य्याः सदा चास्य पुत्रवल्लभमन्त्रिणः । सचिवैर्नास्य विश्वासो राजचित्तप्रियश्चरेत् । त्यजेद् विरक्तं रक्तात् तु वृत्तिमीहेत राजवित् । अपृष्टश्चात्र न ब्रूयात् कामं कुर्य्यात् तथा-

पदि। आसन्नो वाक्यसल्लापी रहस्ये न च सज्जते। कुशलादि परिप्रश्नं सम्प्रयच्छति चासनम्। तत्कथा श्रवणाद् हृष्टो ह्यप्रियाण्यपि मन्यते। अल्पं दत्तं प्रहृष्टः स्यात् स्मरेत् तत्तु कथान्तरे। रक्तस्य राज्ञः कर्त्तव्या सेवामन्यस्य वर्जयेत्" अग्निपु० २२१अ०।

ते च दशधा तेषां प्राधान्याप्राधान्ये च तत्रैव उक्ते यथा "पुरोधाः प्रथमं श्रेष्ठः सर्वेभ्यो राजराड्भवेत्। तदनु स्यात् प्रतिनिधिः प्रधानस्तदनन्तरम्। सचिवस्तु ततः प्रोक्तो मन्त्री तदनु चोच्यते। प्राड्विवाकस्ततः प्रोक्तः पण्डितस्तदनन्तरम्। सुमन्त्रस्तु ततः ख्यातो ह्यमात्यस्तु ततःपरम्। दूतस्ततः क्रमादेते पूर्वश्रेष्ठा यथा गुणाः"। तत्करणमुहूर्त्तादि मु०चि० उक्तं यथा

"क्षिप्रे मैत्रे चित्सितार्केज्यवारे सौम्ये लग्नेऽर्के कुजे वा खलाभे। योनौ मैत्र्यां राशिपोश्चापि मैत्र्या सेवा कार्य्या स्वामिनः सेवकेन" मु० चि०। "अथ सेवकस्य स्वामिसेवाया मुहूर्तं शार्दूलेनाह। क्षिप्रे मैत्रे इति। क्षिप्रे मैत्रे अश्विनीपुष्यहस्ताभिजिदनुराधामृगरेवतीचित्रानक्षत्रेषु, चित्सितार्केज्यवारे बुधशुक्रसूर्य्यगुरुवारे तथा सौम्यग्रहे लग्नस्थे सति अर्के वा अथ वा कुजे भौमे वा खलाभे दशमैकादशस्थे सति सेवकेन भक्तेन स्वामिनो राजादेः सेवा कार्य्या। राजादिदर्शनं प्रागुक्तं नैतन्नक्षत्रवारादौ क्रियाकल्पा सेवाऽस्मिन् मुहूर्ते कार्य्या तत्रापि स्वामिसेवकयोर्योनिमैत्र्यां सत्यां पुनः राशिपोः स्वामिसेवकयोर्यौ जन्मराशी तयोर्योऽधिपती तयोरपि मैत्र्यां प्रीतौ सत्यां कार्य्या उक्तञ्च श्रीपतिना"शुभे विलग्ने दशमायगे च रवौ कुजे वा स्ववशेन योने। विद्याद्युधाभ्यासरतेन कार्य्य समाश्रयः स्वामिनि सेवकेन"। कश्यपोऽपि "दशमैकादशे सूर्य्ये कुजे वा शुभलग्नके। विद्यायुधाभ्यासयुक्तसेवा, कर्मापि सिद्ध्यति"। राशिमैत्रीसाहित्यं तु "मध्वूरग श्वैणमिभेन्द्रसिंहमोतुश्वाखुसर्पं नकुलानरञ्च गोव्याघ्रनाखोत्तरमाहिषञ्च वैरं मृगाणां पशुयोश्चेति" वशिष्ठोक्तिमङ्गीकृत्य तल्लक्ष्मायत्वात्तत्प्रयुक्तं यच्छता योनिमैत्री राशिमैत्री च विवाहप्रकरणे अश्विन्यश्वपयोरिति "निमाशि द्युमणेरिति वक्ष्यते" पी० धा०। उपनयशब्दे १२५० पृ० दृश्यम्।

**भृतिम** त्रि० भरणाज्जातः भृ-क्ति-मप् च। भरणाज्जाते।

**भृ(भ्र)मि** पु० भ्रम-इन् पृषो० वा सम्प्रसारणम्। (घूर्णी) १वायुभेदे २भ्रमणे च। "भ्रमि भ्रमभ्रमिकारितागुणः" नैषधम्।

**भृम्यश्व** पु० भ्रमय अश्वाः यस्य। ऋषिभेदे तस्य पुत्रः अण्। भार्म्यश्व तदपत्ये ऋग्वे नि० ६।४।

**भृश** अध पतने दि०पर०अक०सेट्। भृश्यति इरित् अभृशत् अभर्शीत् बभर्श। उदित्त्वा वेट्।

**भृश** न० भृश क। १अतिशये २तद्वति त्रि०। ततो भृशादि० च्व्यर्थे भवतो क्यङ् भृशायते। [ शब्दरत्ना०।

**भृशम्** अव्य०मान्तमव्ययम् भृश-बा० अम्। १उत्कर्षे २शोभने

**भृशादि** पु० च्व्यर्थे भवतो क्यङ्प्रत्ययनिमित्ते शब्दगणे स च गणः पा० ग० उक्तो यथा

"भृश शीघ्र चपल मन्द पण्डित उत्सुक सुमनस् दुर्मनस् अभिमनस् उन्मनस् रहस् रोहत् रेहत् संश्चत् तृपत् शश्वत् भ्रमत् वेहत् शुचिस् शुचिवर्चस् अन्तर् वर्चस् ओजस् सुरजस् अरजस् एते भृशादयः। आकृतिगणोऽयं तेन श्यामायते इत्यादि सि० कौ०। एवं घूर्णायते "घूर्णायमानेषवम्" घूर्णायमानशब्दे दर्शितम्

**भृमद्** स्त्री इमद्+पृषो०। पामायां शब्दरत्ना०। तत्र इमदु इत्येव पाठः भृमदिति अपपाठः।

**भृष्ट** त्रि० भ्रस्ज-क्त। जलोपसेकं विना वालुकाग्निसंयोगाभ्यां पक्वे हेम०। "सुगन्धि कफहा रुच्यः पित्तघ्नो भृष्टतण्डुलः" राजनि०।

**भृष्टयव** पु० कर्म०। धानाशब्दार्थे अमर०।

**भृष्टान्न** न० कर्म०। जलोपसेकेन भृष्टे तण्डुले (छड़ि)शब्दच०

**भृष्टि** स्त्री भ्रस्ज–भावे क्तिन्।१भर्जने २शून्यवाटिकायां मेदि०

**भॄ** भर्जने भर्त्सने भरणे च क्र्यादि०प्वा०पर०सक०सेट्। भृणाति अभारीत् बभार बभरतु।

**भेक** पुंस्त्री०भी-कन् तस्य नेत्वम्। (ब्याङ)१जन्तुभेदे अमर स्त्रियां जातित्वात् ङीप्। "तेजःशुद्धोबलकरः भ्रमदाहमेहहरः। स्थापकुष्ठादिनाशी भेकस्तु परिकीर्त्तित" राजनि०।२मेघे मेदि०३मण्डूकपर्ण्यां स्त्री ङीप् अमरः

**भेकट** पु० भेक इव टलति टल-ड। मत्स्यभेदे हिरूपकोष०।

**भेकनि(लि)** पु० (भाङन) मत्स्यभेदे राजव०।

**भेकपर्णी** स्त्री भेक इव पर्णमस्याः ङीप्। मण्डूकपर्ण्याम्

**भेकभुज्** पु० भेकं भुङ्क्ते भुज-क्विप्। सर्पे त्रिका०।

**भेकासन** न०रुद्रयामलोक्ते पूजाङ्गे आसनभेदे तल्लक्षणं यथा "भेकनामासनं योग निरायच्छति च सत्यम्। निधाय पादयुगलं स्कन्धे बाहू पदोपरि। ध्यायेदिष्टपदं श्रीमान्

शासनस्थः सुखाञ्च तत्। यदि मर्त्याङ्कसत्तोत्थ गगने खेचरासनम्। महाभेकासनं प्रोक्तं सर्वसिद्धिप्रदायकम्। महाविद्यामहामन्त्रं प्राप्नोति जपतीह यः”।

**भेकुरि** स्त्री अप्सरोरूपे नक्षत्रे “सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम” यजु॰ १८।४० “तस्य चन्द्रमसः नक्षत्राणि नाम अप्सरसः कीदृश्यः भेकुरयः भा कान्तिं कुर्वन्तीति भेकुरयः पृषोदरादित्वात्साधु” “चन्द्रमाह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोच्चक्राम भेकुरयो नामेति भेकुरयोह नामैते भा हि नक्षत्राणि कुर्वन्तीति” शत॰ब्रा॰ ९।४।१।९। [स्त्रियां ङीप्।

**भेड** पुस्त्री॰ भी-ड तस्य नेत्त्वम्। मेषे (भेड़ा) हेमच॰

**भेड्र** पुंस्त्री॰ भेड+पृषो॰। मेषे त्रिका॰ स्त्रियां ङीष्।

**भेद** पु॰ भिद-घञ्। १पृथक्करणे २अन्यतो विश्लेषे राज्ञामुपायभेदे विपक्षशासनार्थं ३तत्पक्षीयामात्यादिभेदने ४न्यायमतोक्ते अन्योऽन्याभावे च यथा घटात् पटस्य भेदः (तादात्म्येनाभावः) उपायभेदभेदप्रकारो यथा “परस्परन्तु ये द्विष्टाः क्रुद्धभीतावमानिताः। तेषां भेदं प्रयुञ्जीत परमं दर्शयेत् भयम्। आत्मीयान् दर्शयेदाशां येन दोषेण बिभ्यति। परास्तेनैव ते भेद्या रक्ष्यो वै ज्ञातिभेदकः। सामन्तकोपो बाह्यस्तु मन्त्र्यमात्यात्मजादिकः। अन्तःकोपश्चोपशाम्यं कुर्वन् शत्रोस्तं जयेत्” अग्निपु॰२२५ अ॰। ५द्वैधे ६विदारणे मेदि॰। ७विरेके वैद्यकम्।

**भेदक** त्रि॰ भिद-ण्वुल्। १रेचके २विदारके ३भेदकारके ४विशेषणे च। “श्वेतारावाद्यैर्द्विशेषत्वं यादृशे प्रस्तुत पदैः। गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः” अमर

**भेदन** त्रि॰भेदयति भिद-णिच्-ल्यु। १विरेचने २विश्लेषणे च ३हिङ्गौ न॰४शूकरे ५अम्लवेतसे च पु॰ राजनि॰। भिद-भावे ल्युट्। ६विदारणे ७द्वैधीकरणे न॰।

**भेदित** त्रि॰ भिद-णिच्-क्त। १विदारिते भिन्ने च ‘आद्यं हृदये, शीर्षे वषट् वौषट् च मध्यमे। स एव भेदितो मन्त्रः सर्वशास्त्रविवर्जितः” तन्त्रसारोक्ते २मन्त्रभेदे पु॰।

**भेदिन्** त्रि॰ भिद-णिनि। १भेदकारके स्त्रियां ङीप्। २अम्लवेतसे पु॰ राजनि॰।

**भेदुर** न॰ भिदुर+पृषो॰। वज्रे द्विरूपकोषः।

**भेद्य** त्रि॰ भिद-ण्यत्। १शस्त्रादिना विदार्य्ये २विशेष्ये च। “विशेष्यं भेद्यगामि यत्” अमरः। भेद्यरोगप्रतिषेधश्च सुश्रुते उक्तो यथा

“अथातो भेद्यरोगप्रतिषेधं व्याख्यास्यामः। स्वेदयित्वा विसर्पन्ति छिद्रमस्य निराश्रयम्। पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत्। कासीसमागधीपुष्पनैपाल्यैलायुगेन तु। ततः क्षौद्रं घृत दत्त्वा सम्यगेवमुपाचरेत्। रोचनाक्षारतुल्यानि पिप्पल्यः क्षौद्रमेव च। प्रतिसारणमेकैकं भिन्ने च गण इष्यते। महत्यपि च युञ्जीत क्षाराग्निविधिकोविदः। स्विन्नां भिन्नां विनिर्म्मृद्य भिषगञ्जननामिकाम्। शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत्। रसाञ्जनमधुभ्यां वा भिन्नां वा शस्त्रकर्मवित्। प्रतिसार्य्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः। सम्यक्स्विन्ने कृमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम्। त्रिफलातुल्यकासीससैन्धवैस्तु रसक्रियाम्। भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः। लेखयेन्मण्डलाग्रेण समन्तात् प्रोञ्छयेदपि। सशोफं पत्रभङ्गैश्च स्वेदयित्वा यथासुखम्। आपाकाद्विधिनोक्तेन पक्वं भेद्यानुपाचरेत्। सर्वेष्वेतेषु विहितं विधानं स्नेहपूर्वकम्। सम्यक् प्रयतो भूत्वा कुर्वीत व्रणरोपणम्”।

**भेर** पु॰ भी-रन्। पटहे शब्दच॰। उज्ज्वलदत्तेन गौरा॰ ङीष् भेरीत्येवमुक्ता भेरी दुन्दुभिरित्युक्तम्।

**भेरि(री)** स्त्री भी-क्रिन् बहु॰ नि॰ वा ङीष्। १ढक्कायाम्। २पटहे “रवः प्रगल्भाहतभेरिसम्भवः” कुमारः उज्ज्वलदत्तः। “ततः शङ्खाश्च भेर्य्यश्च” गीता।

**भेरीस्वनमहास्वना** स्त्री कुमारानुचरमातृभेदे भा॰श॰४७अ॰

**भेरुण्ड** न॰ १गर्भधारणे शब्दर॰ २भयानके त्रि॰ ३देवताभेदे कालिपु॰ “महाविश्वेश्वरी श्वेता भेरुण्डा कुलसुन्दरी” तत्सहस्रनाम। ४पक्षिणीभेदे स्त्री मेदि॰

**भेल** त्रि॰ भी-र रस्य लः। १पुरे २भीरुके ३निर्बुद्धौ ४मुनिभेदे विश्वः। ५चञ्चले शब्दर॰। स्वार्थे क। भेलक प्लवे उडुपे (भेला) शब्दर॰।

**भेष** भये भ्वा॰उभ॰अक॰सेट्। भेषति ते अभेषीत् अभेषिष्ट। ऋदित् चङि न ह्रस्वः। अबिभेषत् त।

**भेषज** न॰ भेष-घञ् भेषं रोगभयं जयति जि ड। १औषधे। स्वार्थे ष्यञ्। भैषज्य तत्रार्थे भेषजसेवनकालादि भावप्र॰ उक्तं यथा

“अथ भेषजभक्षणसमयः” “भैषज्यमभ्यवहरेत् प्रभाते प्रायशो बुधः। कषायास्तु विशेषेण तत्र भेदस्तु दर्शितः। ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम्। किञ्चित् सूर्योदये जाते तथा दिवसभोजने। सायन्तने

महाकालो वेतालो भैरवस्तथा । अङ्गं भूत्वा महेशस्य शीतभीतास्तपोधनाः । येनांशेनशरीरेण प्रापिरे तपसोवलात् । गणानामाधिपत्यन्तु ते जानन्ति हरं परम् ।” शिवायकरवीरभूपचन्द्रशेखरस्य पार्वत्यंश तारावतीगर्भजाते १०वेतालसोदरे च यथोक्तं कालिपु०४५अ०। “प्रविवेश ततो देवी स्वयं तारावतीतनौ । महादेवोऽपि तस्यान्तु कामार्थं समुपस्थितः । कामावसाने तस्यान्तु सद्योजातं सुतद्वयम् । अभवत् पश्चाद्दृष्ट ! तथा शाखामृगाननम् । ततस्तयोर्नाम चक्रे नारदवचनान्नृपः । ज्येष्ठो भैरवनामाभूत् भीरोः पुत्रो भयङ्करः । वेतालसदृशः कृष्णो वेतालोऽभूत्तथाऽपरः” । अपि च “योऽसौ भृङ्गी हरसुतो महाकालोऽपि भूपतः । तावेव गौरी शापेन सम्भूय नरयोनिजौ । वेतालभैरवौ जातौ पृथिव्यां कपिवेशतनि । यथा भृङ्गिमहाकालावुत्पन्नौ प्राक् तथा शृणु । योऽसौ महाभैरवाख्यः सकायः शरभो हरः । भैरवः पृथगेवाय गणाध्यक्षो हरात्मजः ।” देवीभेदेषु शिवरूपभैरवभेदाश्च तोडलतन्त्रे १पटले उक्ता यथा “शिव उवाच । शृणु चार्वङ्गि ! शुभगे । कालिकायाश्च भैरवम् । महाकालं दक्षिणाया दक्षभागे प्रपूजयेत् । महाकालेन वै सार्द्धं दक्षिणा रमते सदा । तारायाः दक्षिणे भागे अक्षोभ्यं परिपूजयेत् । समुद्रमथने देवि ! कालकूटं समुत्थितम् । सर्वे देवाः सदाराश्च महाक्षोभमवाप्नुयुः । क्षोभादिरहितं यस्माच्च पीतं हालाहलं विषम् । अतएव महेशानि ! अक्षोभ्य परिकीर्त्तित । तेन सार्द्धं महामाया तारिणी रमते सदा । महात्रिपुरसुन्दर्य्याः दक्षिणे पूजयेत् शिवम् । पञ्चवक्त्रं त्रिनेत्रञ्च प्रतिवक्त्रे सुरेश्वरि ! । तेन सार्द्धं महादेवी सदा कामकुतूहला । अतएव महेशानि ! पञ्चमीति प्रकीर्त्तिता । श्रीमद्भुवनसुन्दर्य्याः दक्षिणे त्र्यम्बकं यजेत् । स्वर्गे मर्त्ये च पाताले या आद्या भुवनेश्वरी । एतया रमते तेन त्र्यम्बकस्तेन कथ्यते । सर्वशक्तिश्च समाख्यातः सर्वतन्त्रे प्रपूजितः । भैरव्या दक्षिणे भागे दक्षिणामूर्त्तिसंज्ञकम् । पूजयेत् परयत्नेन पञ्चवक्त्रं तमेव हि । छिन्नमस्तादक्षिणांशे कबन्धं पूजयेत् शिवम् । कबन्धपूजनाद्देवि ! सर्वसिद्धीश्वरो भवेत् । धूमावती महाविद्या विधवा रूपधारिणी । बगलाया दक्षभागे एकवक्त्रं प्रपूजयेत् । महारुद्रेति विख्यात जगत्संहारकारकम् । मातङ्गीदक्षिणांशे च मतङ्गं पूजयेत् शिवम् । तमेव दक्षिणामूर्त्तिं जगदानन्दकारकम् । कमलाया दक्षिणांशे विष्णुरूपं सदाशिवम् । पूजयेत् परमेशानि ! स सिद्धो नात्र संशयः । पूजयेदन्नपूर्णाया दक्षिणांशे च—रूपकम् । महामोक्षप्रदं देव दशवक्त्रं महेश्वरम् । दुर्गाया दक्षिणे देशे नारदं परिपूजयेत् । नकारः सृष्टिकर्त्ता च दकारः पालकः सदा । रेफसंहाररूपत्वान्नारदः परिकीर्त्तित । अन्याश्च सर्वविद्याश्च ऋषिर्यः परिकीर्त्तितः । स एव तस्या भर्त्ता च दक्षभागे तु पूज्यते” । ११रागभेदे स च महादेवस्वरूपः । धैवतनिषादषड्जगान्धारमध्यमऋषभपञ्चस्वरमिलितैर्गेय । अस्य स्थान धैवतस्वर शरदृतौ प्रातर्गेयता । मतान्तरे अस्य रागिण्यः पञ्च । भैरवी वैराटी मधुमाधवी सिन्धवी बङ्गाली चेति” कल्लिनाथमते भैरवी गुर्जरी भाषा विलावली कर्णाटी बतसा बङ्गहंसी चेति षट् । भरतमते मधुमाधवी ललिता वरारी बहाडुली भैरवी चेति अन्यविधा पञ्च सङ्गी० दा० दर्पणः । १२महाविद्यामूर्त्तिभेदे स्त्री ङीप् सा च पञ्चदशविधा तन्त्रसारे उक्ता यथा

१त्रिपुरभैरवी २सम्पत्प्रदा भैरवी ३कौलेशभैरवी ४भयविध्वंसिनी भैरवी ५सकलसिद्धिदा भैरवी ६चैतन्यभैरवी ७कामेश्वरी भैरवी ८षट्कूटा भैरवी ९नित्या भैरवी १०रुद्रभैरवी ११भुवनेश्वरी भैरवी १२सकलेश्वरी भैरवी १३त्रिपुरबालाभैरवी १४नवकूटा बालाभैरवी १५अन्नपूर्णेश्वरीभैरवी च एतासां मन्त्रध्यानादिकं क्रमेण तत्र द्रष्टव्यम् । १३तारिणीशक्तियोगिनीभेदे च “महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च । घोरा सा भ्रामरी चैव महारात्रिश्च सप्तमी । अष्टमी भैरवी प्रोक्ता योगिनीस्ताः प्रपूजयेत्”तन्त्रसा० । तत्र शिवस्य पत्न्याः “कालीतन्त्रादौ “भैरव्युवाच “कालीपूजा श्रुता नाथ” कालीस्तवश्च १४भैरवरागस्य पत्नीरूपरागिणीभेदे स्त्री “भैरवी कौशिकी चैव भाषा वेलावली तथा । बङ्गाली चेति रागिण्यो भैरवस्यैव वल्लभा ”सङ्गीतसा० । मतान्तरे १५मालवरागस्य पत्नीभेदे “धानसी मानसी चैव रामकीरी च विश्रुता । सावेरी भैरवी च मालवस्य प्रिया इमा.” । तस्या गानकालः पूर्वोक्तः । “विभाषा ललिता चैव कामोदा पटमञ्जरी । रामकीरी रामकेली वेला सारी च गुर्जरी । देशकारी च सुभगा पञ्चमी च गडारुली । भैरवी चाथ

कौमारी रागिण्यो दश पञ्च च । एता पूर्वाह्णकाले तु गीयन्ते गायनोत्तमैः” सङ्गीतदा० । १५नागभेदे पु० भा० आ० ५७ अ० ।

भैरवीचक्र न० भैरव्याः पूजनार्थं चक्रम् । देवीपूजार्थं कुलाचारवतां चक्राकारसमूहे तद्विधिर्यथा उत्पत्तितन्त्रे “नित्यं नैमित्तिकं काम्यं प्रकुर्य्याच्च दिने दिने । कुलवारे कुलर्क्षे च तिथौ चन्द्रनके तथा । भैरव्याः कल्पितं चक्रं संस्थाप्य पूर्ववत् प्रिये । सुरायाः शोधनं कुर्य्याद् यथावत् परमेश्वरि ! । प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजोत्तमाः । निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक्” ।

भैषज न० भेषजमेव स्वार्थे अण् । १औषधे २लावकपक्षिणि जटा० भिषजो गोत्रापत्यं गर्गा० यञ् । भैषज्य तस्य छात्राः कण्वा० अण् यलोपः । ३भिषजो गोत्रापत्यच्छात्रेषु व० व० ।

भैषज्य न० भिषजः कर्म भेषज-स्वार्थे वा ष्यञ् । १औषधे भिषजोऽपत्यं गर्गा० यञ् । २भिषजोऽपत्ये पुंस्त्री० ।

भैष्णज पु० ब० व० भिष्णजो गोत्रापत्यं गर्गा० यञ् तस्य छात्राः कण्वा० अण् यलोपः । भिष्णगगोत्रापत्यच्छात्रेषु ।

भैष्णज्य पुंस्त्री० भिष्णजो गोत्रापत्यं गर्गा० यञ् । तद्गोत्रापत्ये

भैष्मकी स्त्री भीष्मकस्य अपत्यम् इञ् ङीप् । भीष्मकनृपकन्यायां रुक्मिण्याम् हरिवं० १२० अ० ।

भोक्तृ त्रि० भुज-भोजने अवने च तृच् । १भोजनकर्त्तरि २भोगकर्त्तरि च ३त्रायकर्त्तरि हेमच० । स्त्रियां ङीप् । ४विष्णौ पु० “भ्राजिष्णुर्भोजनं भोक्ता” विष्णुस० ।

भोग पु० भुज-भावकर्मादौ घञ् । १सुखे २दुःखे ३सुखदुःखाद्यनुभवे ४स्त्र्यादीनां भाटके ५भाटकमात्रे च ६सर्पदेहे ७तत्फणायाञ्च अमर० । ८धने ९पालने १०भोजने च मेदि० ११देहे १२सर्पे १३माने च शब्दरत्ना० । १४रव्यादीनां राशिगतिकाले “अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः” तिथित० । १५भूम्यादीनां फलभुक्तौ भुक्तिशब्दे दृश्यम् । १६विभवभेदे “कर्त्ता च देही भोक्ता च आत्मा भोजयिता सदा । भोगो विभवभेदश्च निष्कृतिर्मुक्तिरेव च” ब्रह्मवै० प्र० ख० २३अ० ।

भोगक त्रि० भोग+संज्ञायां कन् । भोगकाशीने ततः विदा० अपत्ये अञ् । भौगक तदपत्ये पुंस्त्री० ।

भोगगृह न० भोगार्थं गृहम् । वासगृहे हेमच० ।

भोगदेह पु० भुज्यते सुखदुःखादिकमत्र भुज-आधारे घञ् कर्म० । सुखपापफलभोगार्थे देहे “प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते” शु० त० । २भोगसाधने देहे स च लिङ्गशरीरात्मकः तस्यैव भोगसाधनत्वात् “पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्” वेदान्तिन० । सांख्यमते पञ्चप्राणस्थाने पञ्चभूतमात्रा इति भेदः । स्थूलदेहस्य भोगावच्छेदकत्वात् उपचारात् तथात्वमिति बोध्यम् । तद्वृत्तिर्यथा “शृणु देहविवरणं कथयामि यथागमम् । पृथिवी वायुराकाशस्तेजस्तोयमिति स्फुटम् । देहिनां देहबीजञ्च स्रष्टुः सृष्टिविधौ परम् । पृथिव्यादिपञ्चभूतैर्यो देहो निर्म्मितो भवेत् । स कृत्रिमो नश्वरश्च भस्मसाच्च भवेदिह । वृद्धाङ्गुष्ठप्रमाणश्च यो जीवः पुरुषः कृतः । बिभर्त्ति सूक्ष्मदेहन्तं तद्रूपं भोगहेतवे । स देहो न भवेद्भस्म ज्वलदग्नौ यमालये । जले न नष्टो देहो वा प्रहारे सुचिरे कृते । न शस्त्रे च न चास्त्रे च न तीक्ष्णकण्टके तथा । तप्तद्रवे तप्तलोहे तप्तपाषाण एव च । प्रतप्तप्रतिमाश्लेषेऽप्यत्युच्चपतनेऽपि च । न च दग्धो न भग्नश्च भुङ्क्ते सन्तापमेव च” ब्रह्मवै० प्र० २९अ० ।

भोगपाल पु० भोगं भोगसाधनमश्वं पालयति पालि-अण् उप० स० । अश्वरक्षके शब्दमा० ।

भोगपिशाचिका स्त्री भोगे पिशाचिकेव । क्षुधायाम् हारा० ।

भोगप्रस्थ पु० उत्तरस्थदेशभेदे वृ० सं० १४अ० दृश्यम् ।

भोगभूमि स्त्री भोगार्थैव भूमिः न कर्मार्था । भारतवर्षातिरिक्ते वर्षे “तत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने ! । यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः” विष्णुपु० २अंशे ३अ० ।

भोगवती स्त्री भोगः सर्पशरीरं भूम्नाऽस्त्यस्याम् मतुप् मस्य वः ङीप् । १पातालगङ्गायाम् “भोगवती च पाताले स्वर्गे मन्दाकिनी तथा” इति पुराणम् । २कुमारानुचरमातृभेदे भा० श० ४७ अ० । ३नदीभेदे भा० व० ।२अ० । ४भोगयुक्ते त्रि० स्त्रियां ङीप् ।

भोगवर्द्धन पु० देशभेदे मार्कं० पु० ५७ अ० ४८ श्लो० ।

भोगसद्मन् न० भोगार्थं सद्म । वासगृहे शब्दरत्ना० ।

भोगायतन न० ६त० । स्थूलदेहे “भोक्तुरधिष्ठानात् भोगायतननिर्माणमन्यथा प्रतिभावः” सा० सू० ।

भोगार्ह न० भोगमर्हति अर्ह-अच् उप० स० । १धान्ये राजनि० भोग्ये २वस्तुमात्रे च त्रि० ।

भोगावली स्त्री ६त० । १भोगश्रेण्यौ । २स्तुतौ उपचारात् ३स्तुतिपाठके जटा० ३नागपुर्य्यां हेमच० ।

**भोस्** अव्य० भा-डोसि । १सम्बोधने अमरः २प्रश्नविधाने शब्दर०

**भौजीय** त्रि० भोजे देशभेदे भवः गहा०छ । भोजदेशभवे ।

**भौत** पु० भूतानि प्राणिनोऽधिकृत्य प्रवृत्त तानि देवता वा अस्य अण् । १देवले ब्राह्मणे शब्दमा० । बलिकर्मरूपे गृहस्थ-कर्त्तव्ये पञ्चयज्ञान्तर्गते २महायज्ञभेदे । "होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्" मनु० । ३रात्रौ स्त्री ङीप् हेमच० । भूतप्रियत्वात्तस्यास्तथात्वम् ।

**भौतिक** त्रि० भूतानि पृथिव्यादीनि पिशाचान् वा अधिकृत्य जातानि ठञ् । १भूताधिकारेण जाते "अहङ्कारिकत्व-श्रुतेर्न भौतिकानि" सा० सू० । २उपद्रवे आध्यादौ । ३उत्तायां राजनि० । ४महादेवे पु० त्रिका० ।

**भौत्य** पु० भूतेरपत्य ना० यञ् । चतुर्दशमनौ हरिव ७अ० । "बभूवाङ्गिरस पुत्रो भूतनौम्नातिकोपन." इत्युपक्रमे मार्कपु० १०० तदुत्पत्त्यादिकमुक्तम् ।

**भौम** पु० भूमेरपत्य तस्या इद वा अण् । १नरकासुरे "त्वयि भौम गते जेतुम्" माघ । २मङ्गलग्रहे च । ३भूमिभवे त्रि० मेदि० । भौमजलगुणादिकम् अम्बुशब्दे ३१०पृ० दृश्यम् । ४भूमिव्यापके अम्बरे धरणि । ५रक्तपुनर्नवायां राजनि०

**भौमन** पु० भूम्नोऽपत्यम् अण् मन्नन्तत्वात् न टिलोपः । विश्वकर्मणि भा० आ० ३२अ० ।

**भौमिक** त्रि० भूमौ तिष्ठति अधिकरोति वा ठञ् । भूम्यधि-कारिणि २भूमिस्थिते च मनु० ५।१४२ । [अमरः ।

**भौरिक** त्रि० भूरि स्वर्णमधिकरोति ठञ् । कनकाध्यक्षे

**भौरिकि** पु०स्त्री० भूरिकस्यर्षेरपत्यमिञ् । भूरिकर्षेरपत्ये स्त्रियां क्रौड्या० ष्यङ् । भौरिक्या तदपत्ये स्त्रियां त्रित्वात् ङीप् च भौरिकीत्यपि तत्रार्थे । तत अपत्ये तिका० फिञ् । भौरिक्यायणि भौरिकेरपत्ये पु०स्त्री० । भौरिक्या० विषये थे विधल् । भौरिकिविध तद्विषये देशे

**भौरिक्यादि** पु० देशे विषये विधल्प्रत्ययनिमित्ते शब्दगणे स च गण पा०ग० उक्तो यथा "भौरिकि भौलिकि चौपयत चैटयत काणेय वाणिजक वालिकाज्य सैकयत छैकयत" । [भौरिकिशब्दवत् सर्वम् ।

**भौलिकि** पु०स्त्री० भौरिकि+रस्य ल । भौरिकिशब्दार्थे

**भौलिङ्ग** पु०स्त्री० भूलिङ्गस्य ऋषिभेदस्यापत्यम् अण् । भुलिङ्ग-ऋष्यपत्ये स्त्रियां गौरा०ङीष् । तत युवापत्यस्य लुक्

**भौवादिक** पु० भ्वादौ गणे पठित ठक् वातृद्धिम् ऐच् । भ्वादिगणपठिते धातौ । एवम् आदादिकजौहोत्यादि-कदैवादिकादयोऽपि अदाद्यादिगणपठिते धातौ ।

**भ्यस** भये भ्वा० आ० अक० सेट् । भ्यसते अभ्यसिष्ट ।

**भ्यसते** अव्य० । उत्तरदिशि निघण्टुः ।

**भ्रंश** पु० भ्रन्श-भावे घञ् । व्यसने अमरः । अधःपाते च

**भ्रंशकला** अव्य०डाच्० । हिंसायाम् गण० रत्न० टी० । भ्रंश-कलाकृत्य हिंसित्वेत्यर्थः ।

**भ्र(भ्रु)(भ्रू)कुंश** पु० भ्रुवा कुंशा इङ्गितज्ञापनं यस्य । "इको ह्रस्वोऽङ्यो गालवस्य" वार्त्ति० अ पक्षे वा ह्रस्व इति रूपत्रयम् स्त्रीवेशधारिणि नटे अमरः ।

**भ्र(भ्रु)(भ्रू)कुटि** पुंस्त्री० भ्रुवः कुटि कौटिल्यम् । भ्रकुं-शवत् रूपत्रयम् । भ्रुव कौटिल्ये अमर ।

**भ्र(भ्रु)क्ष** अदने भ्वा० उ०सक० सेट् वा रस्य लः धातुपाठः । भ्र(भ्रु)क्षति ते अभ्र(भ्रु)क्षीत् । बभ्र(भ्रु)क्ष ।

**भ्रजस्** पु० भ्राजते भ्राज-असुन् पृषो० ह्रस्वः । १अग्नौ छन्दसि यजु०१५।५ । "अग्निर्वै भ्रजश्छन्द" शत० ब्रा० ८।५।२।५ । २आदित्यरूपे क्षुरे च "क्षुरो भ्रजश्छन्द इत्यसौ वा आदित्य क्षुरो भ्रजश्छन्द" तत्रैव ।

**भ्रण** शब्दे भ्वा०पर०सक०सेट् । भ्रणति अभ्राणीत् अभ्रणीत् बभ्राण । [अभ्रणीत् भ्रणत ।

**भ्रन्श** अधःपतने दिवा०अक०सेट् । भ्रश्यति इरित् अभ्रशत्

**भ्रन्श** अधःपाते अक० सेट् । भ्रंशते इदित् अभ्रंशत् । उदित् । भ्रंशित्वा भ्रष्ट्वा । भ्रष्ट. । [भ्रुवो भङ्गे ।

**भ्र(भ्रु)(भ्रू)भङ्ग** पु० ६त० । भ्रुकुशवत् वा अकारह्रस्वौ

**भ्रम** चलने भ्वा०पर०सक०सेट् । भ्रमति कौटिल्ये इरित् । अभ्रमत् अभ्रमीत् । बभ्राम फणा० भ्रेमतुः बभ्रमतुः ।

**भ्रम** चलने दिवा०पर०सक०सेट् शमा० । भ्राम्यति अभ्रमीत् ।

**भ्रम** भ्वा०पर०अक०सेट् । भ्रमति अभ्रमीत् फणा० भ्रेमतुः बभ्रमतुः घटि न ह्रस्व० । ज्वला० भ्रम भ्रामः ।

**भ्रम** पु० भ्रम-घञ् । १मिथ्याज्ञाने ( अन्यथाभूतस्य वस्तुनो-ऽन्यथारूपेण ज्ञाने ) २जलनिर्गमस्थाने ३कुन्दे (कुद) ४भ्रमणे च मेदि० भ्रमश्च तद्वति तत्प्रकारकज्ञानम् । व्यधिकरणप्रकारावच्छिन्नविषयताशालिज्ञानम् । यत्प्रका-रिका या विषयता तत्प्रकारव्यधिकरणविषयताकज्ञानम् । स्वप्रकारव्यधिकरणविषयताकज्ञानम् । स्वव्यधिकरणप्र-कारावच्छिन्नविषयताप्रतियोगिज्ञानम्" (चि०) तदभाव-वन्निरूपिततन्निष्ठविषयताप्रतियोगिताकतदभाववति तत्-सम्बन्धेन तद्धर्मविशिष्टतन्निरूपितवैशिष्ट्यविषयताशालि ज्ञानम् । विशेष्यितासम्बन्धेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियो-गिताकतदभाववदवच्छिन्ना या तद्व्यक्तिप्रकारिता त-

भ्रान्तिज्ञानम् । ( सु०मा० ) "मिथ्याज्ञानमपरपर्य्यायोऽयं निश्चयः" (गौ०सू०) अतस्मिंस्तद्ग्रहः (सा०प०) । तदभाववति तत्प्रकारकं ज्ञानम् यथा शुक्तौ इदं रजतम् इति ज्ञानम् । (त०म०) भ्रमो द्विविधः । विपर्य्यासः संशयश्च । तद्धेतवश्च दोषा दोषशब्दे ३७६१ पृ० दृश्याः

**भ्रमण** न० भ्रम–ल्युट् । गतिभेदे पर्य्यटने वर्त्तनशब्दे दृश्यम् ।

**भ्रमणी** स्त्री भ्रम–करणे ल्युट् ङीप् । १क्रीडार्थपर्य्यटने तत्साधने २कोलिकायाञ्च मेदि० । [त्रिका०

**भ्रमत्कुटी** स्त्री भ्रमन्ती कुटीव । छत्रादिनिर्म्मिते छत्रे

**भ्रमर** पुंस्त्री० भ्रम-करन् । १मधुकरे भ्रमरः स्त्रियां जातित्वात् ङीप् । २कामुके मेदि० ।३भ्रमरच्छल्लीलताभेदे स्त्री राजनि० टाप् ।

**भ्रमरक** पु० भ्रमर इव कायति कै-क । ललाटलम्बिते भ्रमरतुल्ये चूर्णकुन्तले अमरः । स्वार्थे क । भ्रमरक भ्रमरे वालमृत्तिकायाञ्च मेदि० । (लरमौल) वैधमयन्त्रभेदे दृश्यमा० । जलभ्रमणे विश्वः ।

**भ्रमरकीट** पु० भ्रमर इव कीटः । (कुमेरपोका) कीटभेदे

**भ्रमरच्छल्ली** स्त्री लताभेदे राजनि० । भृङ्गच्छल्ल्यादयोऽप्यत्र "भृङ्गच्छल्ली च कटुका तिक्ता दीपनरोचनी" राजनि०।

**भ्रमरपदक** न० "भ्रमरपदकमिदमभिहितम्" द्वादशाक्षरपादके वृ० र० टी० उक्ते छन्दोभेदे ।

**भ्रमरप्रिय** पु० ६त० । धाराकदम्बे रत्नमा० ।

**भ्रमरमारी** स्त्री भ्रमरं मारयति मारि अण् उप०स०गौरा० ङीप् । भृङ्गारिलतायाम् राजनि० । भृङ्गार्य्यादयोऽप्यत्र "भ्रमरारिस्तिक्ता स्यात् पित्तश्लेष्मकफापहा । त्रिदोषकुष्ठकण्डूतिशोफव्रणविनाशिनी" राजनि० ।

**भ्रमरविलसिता** स्त्री "भोभौ गौ भ्रमरविलसिता" छन्दोम० उक्ते एकादशाक्षरपादके छन्दोभेदे अस्य श्रीवलमेके वदन्ति ।

**भ्रमरातिथि** पु० भ्रमरः अतिथिर्यस्य । चम्पके राजनि० ।

**भ्रमरानन्द** पु० भ्रमरान् आनन्दयति आ+नन्द–णिच् अण् उप०स०।१बकुले २अतिमुक्तके रक्ताम्लाने च राजनि०

**भ्रमरालक** पु० भ्रमर इव अलति पर्य्याप्नोति अल–ण्वुल् । ललाटके चूर्णकुन्तले हेमच० ।

**भ्रमरी** स्त्री भ्रमर+ङीष् । १षट्पद्यां स्वार्थे अण् गौरा० ङीष् । तदाकारवत्याः २जतुकायां ३पुत्रदात्र्याञ्च राजनि०

**भ्रमरेष्ट** पु० ६त० । १श्योनाकवृक्षे २भार्ग्यां ३भूमिजम्ब्वाञ्च स्त्री राजनि० ।

**भ्रमरोत्सवा** स्त्री भ्रमराणामुत्सवो मोदो यत्र । माधवीलतायाम् राजनि०। [निशानासक्ते शस्त्रमार्जके हेमच०।

**भ्रमासक्त** त्रि० भ्रमे निशानार्थचक्रभ्रमणे आसक्तः । शस्त्र-

**भ्रंश** अधःपतने दि०पर०सक०सेट् । भ्रश्यति अभ्रंशीत् अभ्रशीत् । ऌदित् क्त्वा वेट् । भ्रंशित्वा भ्रष्ट्वा । भ्रष्टः ।

**भ्रशिमन्** पु०भृशस्य भावः अतिशये वा इमनिच् ऋतोर' । १भृशत्वे २अतिशयभवे च । अतिशये इष्ठन् भ्रशिष्ठ ईयसुन् भ्रशीयस् अतिशयवति त्रि०ईयसुनि स्त्रियां ङीप् ।

**भ्रष्ट** त्रि० भ्रंश–क्त । च्युते गलिते स्वार्थे क । तत्रार्थे स च उपका० ।

**भ्रस्ज** पाके तु० उभ०सक० अनिट् । भृज्जति आर्द्धधातुके वा भर्जादेशः स च सेट् अभ्राक्षीत् अभार्क्षीत् । बभ्रष्ट बभर्जिष्ठ । बभर्ज बभ्रज्ज ।

**भ्राज** दीप्तौ भ्वा०आत्म०अक०सेट् । भ्राजते अभ्राजिष्ट फणा० भ्रेजे बभ्राजे । षडि वा ह्रस्वः । ञित् अथु भ्राजथुः ।

**भ्राज** न० वर्षसाध्ये गवामयनसत्रे विषुवन्नामके प्रधानदिने गेये दिवाकीर्त्ये सामभेदे "दिवाकीर्त्यं साम भवति" इत्युपक्रमे तस्य दिवाकीर्त्यत्वं समर्थ्य "भ्राजाभ्राजे पवमानस्य भवतो सप्तत एवास्य ताभ्यां तमोऽपघ्नन्ति" ता०ब्रा०४।६।१४ । "यद्यप्यत्र पवमानस्य इति सामान्यसम्बन्ध एव दृश्यते ये गायत्रे ते गायत्रीभूतयोः पवमानयोरिति विशेषावगतेरेवं व्याख्यातं सम्भवत् । अनेन भ्राजाभ्राजयोः साम्नोः स्थाननियमोऽर्थादुक्तो भवति" भा० तच्च साम "परिखाणो गिरिष्ट" इत्यस्मिन् गेयम् तच्च ऊहगाने ३प्र०१२ ।

**भ्राजक** त्रि० भ्राज–ण्वुल् । १दीप्तिशीले २पित्तभेदे न०शब्दरत्ना० पित्तशब्दे ४२२५ पृ० भावप्र० वाक्यं दृश्यम् ।

**भ्राजिर** पु० भौत्यमन्वन्तरे देवभेदे मार्कपु० १००अ० ।

**भ्राजिष्णु** त्रि० भ्राज–इष्णुच् । १दीप्तिशीले २विष्णौ पु० । "भ्राजिष्णुर्भोजनं भोक्ता" विष्णुस० ।

**भ्रातुष्पुत्र** पु० ६त० अलुक्स० कस्का० । भ्रातुः पुत्रे ।

**भ्रातृ** पु० भ्राज–तृच् पृषो० । एकपितृजाते (भाइ) इति ख्याते पदार्थे तस्य स्वसा सहोक्तौ एक० । २भ्रातृभगिन्योः द्वि०व० ।

**भ्रातृक** त्रि० भ्रातुरिदम् ठञ् । भ्रातृसम्बन्धिनि ।

**भ्रातृज** पुंस्त्री० भ्रातुर्जायते जन–ड ५त० । १भ्रातुःपुत्रे २तत्कन्यायां स्त्री ।

**भ्रातृजाया** स्त्री ६त० । भ्रातृपत्न्यां वधौ नियोगेनापि तदु-

हितः। विद्युद्वदनः प्रीतो भुञ्जीत न विदिङ्मुखः" जीवत्पितृकस्य दक्षिणामुखत्वनिषेधमाह आपस्तम्बः 'दक्षिणामुखो न भुञ्जीत एवंविधभोजनमनायुष्यमातृत्वदर्शितम्" केचित्तु "कुरुक्षेत्रं गयाश्राद्धं तिलैस्तर्पणमेव च। न जीवत्पितृकः कुर्य्याद्दक्षिणामुखभोजनम्" इत्याचारतन्त्रमत्वेति जीवत्पितृकस्यापि निषेध इत्याहुः। व्यासः "पञ्चार्द्रो भोजनं कुर्य्यात् प्राङ्मुखो मौनमास्थितः। हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता।" गोभिलः "भुञ्जानेषु तु विप्रेषु यस्तु पात्रं परित्यजेत्। भोजने विघ्नकर्त्तासौ ब्रह्महापि तथोच्यते"। आपस्तम्बः "द्विः पुनर्न भुञ्जीतान्यत्र फलमूलेभ्यः"। मनुः "नातिप्रगे नातिसायं न सायं प्रातराशितः"। अतिप्रगेऽचिरोदितसूर्य्ये अतिसायं सूर्य्यास्तमितिसमये एव प्रातराशितः दिनभोजनेनातितृप्तः न सायं न रात्रौ भुञ्जीतेत्यर्थः। आपस्तम्बः "यस्तु भोजनशालायां भोक्तुकामः उपस्पृशेत्। आसनस्थो न चान्यत्र स विप्रः पङ्क्तिदूषकः" भोजनशालायां भोक्तुकामः सन् आसनस्थो वान्यत्र स्थितो वा न चोपस्पृशेत्। बौधायनः "उपलिप्ते समे स्थाने शुचौ श्लक्ष्णसमन्विते। चतुरस्रं त्रिकोणञ्च वर्त्तुलञ्चार्द्धचन्द्रकम्। कर्त्तव्यमानुपूर्व्व्येण ब्राह्मणादिषु मण्डलम्। अकृत्वा मण्डलं ये तु भुञ्जतेऽधमयोनयः। तेषान्तु यक्षरक्षांसि हरन्त्यन्नानि तद्वशात्"। आपस्तम्बः "भिन्नकांस्ये तु यो विप्रो यदि भुङ्क्ते तु कामतः। उपवासेन चैकेन पञ्चगव्येन शुद्ध्यति"। तथा शूद्रादिभोजनेनापरिष्कृतपात्रेऽपि। वृद्धमनुः "ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलाविले। पलाशपद्मपत्रे वा गृही भुक्त्वैन्दवं चरेत्"। नव्यवर्द्धमानधृताग्निपुराणम् "अर्कपत्रे तथा पृष्ठे आयसे ताम्रभाजने। वटे कर्पटके चैव भुक्त्वा चान्द्रायणं चरेत्" पृष्ठे कदलीपत्रादिपृष्ठे। पैठीनसिः "ताम्ररजतसुवर्णाश्मशङ्खशुक्तिस्फटिकानां भिन्नमभिन्नम् इति न दोषः"। अत्र पाषाणपात्रं भोजने विहितम् "तैजसानां मणीनाञ्च सर्व्वस्याश्ममयस्य च। भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः" इति मनुना पाषाणपात्रस्य शुद्धिविधानाच्च। प्रचेताः "ताम्बूलाभ्यञ्जने चैव कांस्यपात्रे च भोजनम्। यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्"। अत्रिः "आसने पादमारोप्य यो भुङ्क्ते ब्राह्मणः क्वचित्। मुखेन चान्नमश्नाति तुल्यं गोमांसभक्षणैः"। मुखेन हस्तोत्तोलनं विना गवादिवदित्यर्थः। आश्वमेधिके "आर्द्रपादस्तु भुञ्जीत प्राङ्मुखश्चासने शुचौ। पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः"। बौधायनः "भोजनं हवनं दानमुपहारः परिग्रहः। बहिर्जानु न कार्य्याणि तद्वदाचमनं स्मृतम्"। हारीतः "मार्ज्जनान्नवलिकर्म भोजनानि दैवतीर्थेन कुर्य्यात्"। पराशरभाष्ये स्मृतिः "न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना। नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत्"। मार्कण्डेयपुराणम् "पादप्रसारणं कृत्वा न च वेष्टितमस्तकः"। मनुः "पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन्। दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्व्वदा। अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः प्रार्थयेत् ततः। अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत्"। विष्णुपु० "नागः कूर्म्मश्च कृकरो देवदत्तो धनञ्जयः। वहिःस्था वायवः पञ्च तेषां भूमौ प्रदीयते। अदत्त्वा चाह्यवायुभ्यः प्राणादिभ्यो न होमयेत्"। इति शिष्टपठितवचनात् नागादिभ्यो बलिदानमिति प्राचीनाचारः। तस्मात् देवेभ्योऽदत्त्वा भोक्तव्यं तथा च भगवद्गीतायाम् "इष्टान् भोगान् हि वो देवा दास्यन्ति यज्ञभाविताः। तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः"। यज्ञैः संवर्द्धिता देवा वो युष्मभ्यं भोगानन्नादीनि वृष्ट्यादिद्वारा दास्यन्ति। अतो देवैर्दत्तान् अन्नादीन् तेभ्योऽदत्त्वा यो भुङ्क्ते स चोर एव। स्मृतिः "निवेद्य प्राशनात् पूर्व्वं देवपादोदकाञ्जलिः। होतव्या जठरे वह्नौ स्वेन पाणितलेन तु"। तेन पादोदकोपयोगान् कृत्वा प्राणाहुतिर्नैवेद्येन कार्य्या" आ० त० रघु०।

भोजनगर न० भोजदेशस्थे नगरे धारापुरे भा० उ० ११७ अ० भोजपुराद्योऽप्यत्र। [१०।४७ अ० भोजनाथाद्योऽप्यत्र

भोजपति पु० ६त०। १भोजदेशाधिपे २कंसराजे च भाग०

भोजिन् त्रि० भुज–णिनि। भोजनकर्त्तरि स्त्रियां ङीप्।

भोज्य त्रि० भुज–ण्यत् भक्ष्यार्थत्वात् न कुत्वम्। १भक्षणीयद्रव्यमात्रे २भक्ष्यभेदे आहारशब्दे दृश्यम्। ३आद्यन्तकल्पे पितॄणां तृप्त्यर्थं देये ४अन्नादौ च।

भोज्यसम्भव पु० सम्भवत्यस्मात् सम्+भू-अपादाने अप् ६त०। भोज्यजाते देहस्थे रसधातौ शब्दच०।

भोट पु० (भोटान) देशभेदे शब्दरत्ना०।

भोटाङ्ग पु० (भोटान) देशभेदे शब्दर०।

भोलि पु० भा–उलि। उष्ट्रे त्रिका०।

भ्राष्ट्रिव्रतिन् पु० गोत्रप्रवरर्षिभेदे हेमा० व्र० प्रवराध्यायः।

भ्रास दीप्तौ दिवा०आ०अक०सेट्। भ्रास्यते अभ्रासिष्ट।

भ्रास दीप्तौ भ्वा०आ०अक०सेट्। भ्रासते अभ्रासिष्ट फणा० भ्रेसे बभ्रासे ह्वित्। भ्रासयु' ऋदित् चङि न ह्रस्वः।

भ्री भये अक० भरणे सक० क्र्या० वा प्वा० पर० अनिट्। भ्रीणाति भ्रिणाति अभ्रैषीत्।

भ्रुड संवरणे सक० संघाते अक० तु० कु० पर० सेट्। भ्रुडति अभ्रुडीत् बुभ्रोड।

भ्रू स्त्री भ्रम-डू। नेत्रयोरूर्ध्वस्थायां रोमराजौ अमरः। तच्छुभाशुभलक्षणं गरु०६६अ० उक्तं यथा "विशालोन्नता सुखिनो दरिद्रा विषमभ्रुवः। धनी दीर्घासंसक्तभ्रूर्बालेन्दूत्रतसुभ्रुवः। आढ्यो निःस्वश्च खण्डभ्रूर्मध्याश्च विनतभ्रुवः"। भ्रुवो मूलम् जाहच्। भ्रूजाह भ्रूमूले न०।

भ्रूक्षेप पु० ६त०। १भ्रूभङ्गे २सङ्केतज्ञापनाय भ्रुवोस्तिर्य्यक्चालने "भ्रूक्षेपमात्रानुमितप्रवेशाम्" कुमारः।

भ्रूण आशायां विशङ्कायाञ्च चु०आत्म०सक०सेट्। भ्रूणयते अबुभ्रूणत।

भ्रूण पु० भ्रूण-घञ्। स्त्रीणां १गर्भे २बालके च अमरः।

भ्रूणघ्न त्रि० भ्रूणं गर्भं हन्ति हन-क। भ्रूणहत्याकारके क्विप् भ्रूणहाप्यत्र। "अपि भ्रूणहनं मासात्" मनुः। तत्प्रायश्चित्तं प्रा० वि० उक्तं यथा "तत्र पुंस्त्वेन ज्ञाते पुरुषवधप्रायश्चित्तं स्त्रीत्वेन ज्ञाते स्त्रीवधप्रायश्चित्तम्। अविज्ञाते तु पुंवधप्रायश्चित्तमाह मनुः "हत्वा गर्भमविज्ञातमेतदेव व्रतञ्चरेत्। राजन्यवैश्यौ चेजानावात्रेयी(रजस्वला)मेव च स्त्रियम्" एतदेवेति। ब्रह्मवधप्रायश्चित्तमित्यर्थः। ब्राह्मणीगर्भवधविषयमिदं तस्यैव प्रकृतत्वात्। क्षत्रियादिगर्भवधे तु यद्वर्णो गर्भस्तद्वर्णवधप्रायश्चित्तं कार्य्यं यथा याज्ञवल्क्यः "यागस्थक्षत्रविड्घाते चरेद्ब्रह्महणो व्रतम्। गर्भहा च यथावर्णं तथात्रेयीनिषूदने" व्रतपदोपादानात् ज्ञानत इदम् अज्ञानतस्तदर्द्धं तेन ज्ञानकृते ब्राह्मणगर्भवधे द्वादशवार्षिकम्। क्षत्रियगर्भवधे नैवार्षिकं वैश्यगर्भवधे सार्द्धवार्षिकं शूद्रगर्भवधे नवमासिकं, धेनुसङ्कलनमप्यूहनीयम्"।

भ्रूभङ्ग पु० ६त०। क्रोधादिज्ञापनार्थं भ्रुवस्तिर्य्यक्चालने "भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य" इति कुमारः।

भ्रेज भासे भ्वा०आत्म०अक०सेट। भ्रेजते अभ्रेजिष्ट। ऋदित् चङि न ह्रस्वः। अबिभ्रेजत् त।

भ्रे(भ्रे)ष पतने चलने च अक०भ्वा०उभ० सेट्। भ्रे(भ्ले)षति ते अभ्रे(भ्ले)षीत् अभ्रे(भ्ले)षिष्ट। ऋदित् चङि न ह्रस्व। अबिभ्रे(भ्ले)षत् त। तत्र पतने आ० भये चलने उभ० अक० इति भेदः।

भ्रेष पु० भ्रेष-घञ्। उचितस्थानात् पतने अमरः। "कारणभ्रेषे कार्य्यभ्रेषो मा भूदिति" सु०उ० भा०।

भ्रौवेय त्रि० भ्रुव इदम् "भ्रुवो वुक् च" पा० ढक् वुक् च भ्रूसम्बन्धिनि च।

भ्लक्ष भक्षणे भ्वा०उभ०सक०सेट्। भ्लक्षति ते अभ्लक्षीत् अभ्लक्षिष्ट। दुर्गमते भक्षधातुरयम्।

भ्लाश दीप्तौ वा दिवा० पक्षे भ्वा० आ० अक० सेट्। भ्लाश्यते भ्लाशते अभ्लाशिष्ट फणा० भ्लेशे बभ्लाशे। ह्वि (अपु) भ्लाशयु'। बोपदेवमते भ्राशधातुरयम्।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्ये भकारादिशब्दार्थसङ्कलनम्।

---

# म

मकारः पवर्गस्य पञ्चमवर्णः। अस्योच्चारणस्थानमोष्ठौ नासिका च जिह्वाग्रेण ओष्ठयोः स्पर्शेनोच्चारणम् आभ्यन्तरप्रयत्नः अतएवास्य स्पर्शवर्णता अनुनासिकता च। तद्बाह्यप्रयत्नाश्च संवारनादघोषा अल्पप्राणश्च। अस्य ध्येयस्वरूपमुक्तं कामधेनुत० "मकारं शृणु चार्वङ्गि! स्वयं परमकुण्डली। तरुणादित्यसङ्काशं चतुर्वर्गप्रदायकम्। पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा"।

वर्णाभिधानेऽस्य पर्य्याया उक्ता यथा "म-कालो क्रोधिनः कालो महाकालो महान्तकः। वैकुण्ठो वसुधा चन्द्रो रविः पुरुषराजकः। कालभद्रो जया मेधा विश्वः दीप्तसंज्ञकः। जठरश्च श्रमो मान लक्ष्मीर्मातोग्रवस्त्रनी। विष शिवो महावीरः शशिप्रभा जनेश्वरः। प्रमत्तः प्रियस्तु रुद्रः सर्वाङ्गो वह्निमण्डलम्। मातङ्गमालिनी विन्दुः श्रवणा भरणो वियत्"। तदधिष्ठातृदेवताध्यानं यथा "कृष्णां दशभुजा भीमा पीतलोहितलोचनाम्।

कृष्णाम्बरधरां नित्यां धर्मकामार्थमोक्षदाम् । एवं ध्यात्वा मकारन्तु तन्मन्त्रं दशधा जपेत्” । मातृकान्यासेऽस्य जठरे न्यास्यता । काव्यादौ प्रथम प्रयोगे दुःख फल “सुखभयमरणं क्लेशदुःखं पवर्गः” वृ० र० टी० उक्ते । [क्लिष्ट ममक्के ।

**म** पु० मा—क । १शिवे २चन्द्रे ३चतुर्मुखे ब्रह्मणि एकाक्ष० ४यमे ५समये ६विषे ७विष्णौ च मेदि० । छन्दःशास्त्रोक्ते त्रिगुरुके गणे “मो भूमिस्त्रिगुरुः श्रियं दिशति यः” वृ० र० टी० । तस्य देवता भूमिः काव्यादौ प्रथमप्रयोगे श्रीलाभः फलम् ।

**मक्क** भूषणे गतौ च भ्वा० आ० सक० सेट् इदित् । मङ्क्ते अम-

**मक** पु न० म इव कायति कै—क अर्द्धर्चादि । शिवादितुल्ये ।

**मकर** पुंस्त्री० मं विषं किरति कॄ—अच् । १जलजन्तुभेदे अमरः स्त्रियां जातित्वात् ङीष् । स च गङ्गावाहनं कामस्य ध्वजश्च । मकराकारत्वात् २मेषादितो दशमे राशौ । तद्राशिश्च उत्तराषाढाशेषपादत्रयसहितं श्रवणं धनिष्ठार्द्धञ्चेति नवपादात्मकः । तद्राशिस्वरूपादिकं नी० ता० उक्तं यथा “मृगास्यः क्ष्माऽर्द्धरवौ यमाशाक्षो पिङ्गरूपः शुभभूमिशीतः । स्वल्पप्रजासङ्गसमीरराशिरादौ चतुष्पात् विषमोदयो विट्” । मकि—घञ् पृषो० मकं भूषणं राति ददाति रा—क । ३निधिभेदे निधिशब्दे ४६८ पृ० दृश्यम् । [कारे कर्णभूषणे ।

**मकरकुण्डल** पु० मकराकृति कुण्डलं कर्णभूषणम् । मकरा-

**मकरकेतन** पु० मकरः मकरचिह्नितं केतनं ध्वजो यस्य । कन्दर्पे हेमच० मकरकेत्वादयोऽप्यत्र ।

**मकरध्वज** पु० मकरो ध्वजोऽस्य । कामदेवे अमरः ।

**मकरन्द** पु० मकरमपि द्यति कामजनकत्वात् दो-अवखण्डने क पृषो० मुम् । १पुष्पमधौ अमरः । २कुन्दवृक्षे च ३किञ्जल्के न० राजनि० ।

**मकरन्दवती** स्त्री मकरन्द+बाहुल्ये मतुप् मस्य व ङीप् । १पाटलायाम् शब्दच० २मधुविशिष्टे त्रि० ।

**मकरन्दिका** स्त्री “रसैः षड्भिर्लोकैर्मनसजजा गुरुर्मकरन्दिका” वृ० र० टीकोक्ते ऊनविंशत्यक्षरपादके छन्दोभेदे । [भेदे भा० भी० ६९ अ० ।

**मकरव्यूह** पु० मकर इव व्यूहः । मकराकारे सैन्यनिवेशन-

**मकरसंक्रान्ति** स्त्री ६त० । मकरे राशौ रवेः १संक्रमणे २तदुपलक्षितपुण्यकालोपलक्षिते च दिने ।

**मकराकर** पु० ६त० । समुद्रे हेमच० । [करञ्जभेदे शब्दच० ।

**मकराकार** पु० मकरस्येवाकारः फले यस्य । (काँटाकरमचा)

**मकराक्ष** पु० रावणपक्षस्थे राक्षसभेदे रामा० लङ्का० १७अ० ।

**मकराङ्क** पु० मकरोऽङ्को यस्य । १कामदेवे २मनुभेदे अजयपाल०

**मकरालय** पु० ६त० । समुद्रे मकरावासादयोऽप्यत्र ।

**मकरासन** न० रुद्रयामलोक्ते पूजाङ्गे आसनभेदे “मकरासनमावक्ष्ये वायूनां स्तम्भकारणात् पृष्ठे पादद्वयं बद्ध्वा हस्ताभ्यां पृष्ठबन्धनम्” ।

**मकरीप्रस्थ** पु० मकर्या उपलक्षितः प्रस्थः । यदा कदाचित् मकरीसम्बद्धे प्रस्थे स्थाने कर्क्या० अस्य माद्युदात्तता ।

**मकष्टु** पु० ऋषिभेदे तस्यापत्यं शुभ्रा० ढक् । माकष्टवेय तदपत्ये पुंस्त्री० ।

**मकार** पु० म+स्वरूपे कार । मस्वरूपे वर्णे । मकारादिर्वर्ण आद्यक्षरेऽस्त्यस्य अच् । मद्यमत्स्यमांसमैथुनमुद्रारूपे मकारादिवर्णयुक्ते तन्त्रोक्ते पदार्थपञ्चके । [रूपका० ।

**मकुट** न० मकि—भूषणे उट पृषो० । शिरोभूषणे मुकुटे हि-

**मकुति** स्त्री मकि—उति पृषो० । शूद्रशासने त्रिका० ।

**मकुर** पु० मकि-उरच् पृषो० । १दर्पणे २बकुलवृक्षे ३कुलालदण्डे ४कलिकायाञ्च हेमच० ।

**मकुल** पु० मकि—उलच् पृषो० । १मुकुले २बकुलवृक्षे शब्दरत्ना० ।

**मकुष्टक** पु० मकि-भूषायां उ-पृषो० मकु भूषा स्तकति प्रतिहन्ति स्तक-अच् सुषामा० षत्वम् । वनमुद्गे (मुगानि) राजनि० ।

**मकुष्ठ** पु० मीयते मा—उ कुत्सितं तिष्ठति स्था—क अम्बष्ठा० षत्वम् कर्म० । १व्रीहिभेदे “मकुष्ठो वातलो ग्राही कफपित्तहरो लघुः । वह्निकृन्मधुरः पाके कृमिकृज्ज्वरनाशनः” भावप्र० । २मन्दगामिनि त्रि० । स्वार्थे क । ३वनमुद्गे

**मकूलक** पु० मकि—ऊलच् पृषो० संज्ञायां कन् । १दन्तीवृक्षे अमरः । २मुकुले रमानाथः ।

**मक्क** गतौ भ्वा० आ० सक० सेट् । मक्कते अमक्किष्ट ममक्के ।

**मक्कल्ल** पु० शूलरोगभेदे “प्रजातायाश्च नार्या रूक्षशरीराया-स्तीक्ष्णैरविशोधितं रक्तं वायुना तद्देशगेनातिसंवृतं नाभेरधःपार्श्वयोर्वस्तौ वस्तिशिरसि वा ग्रन्थिं करोति । ततश्च नाभिवस्त्युदरशूलानि भवन्ति सूचीभिरिव निस्तुद्यते भिद्यते दीर्य्यत इव च पक्वाशयः । समन्तादाध्मानमुदरे मूत्रसङ्गश्च भवतीति मक्कल्ललक्षणम्” सुश्रुत ।

**मक्कूल** न० मक्क—ऊलच् । शिलाजतुनि शब्दर० ।

**मक्कोल** पु० मक्क-बा० ओल । खटिकायां त्रिका० ।

**मक्ष** रोषे सङ्घाते च भ्वा० पर० अक० सेट् । मक्षति अमक्षीत् ।

**मक्षवीर्य्य** पु० मक्ष सङ्घातं वीर्य्यं यस्मात् । ५ब० पियालवृक्षे राजनि० ।

**मक्षिका** स्त्री मश-सिकन्। कीटभेदे बंभराकीकीटे (मौ-माछि) उज्ज्वल०। पृषो० दीर्घः तत्रार्थे राजनि०।

**मक्षिकामल** न० ६त०। सिक्थके (मोम) राजनि०।

**मक्षिकासन** न० ६त०। (मौचाक) सिक्थकाधारे राजनि० पाठान्तरम्। [ऋ०८।२६।६

**मक्षु** न० मश–उन्। १शीघ्रे निघण्टुः २शीघ्रगतियुते त्रि०

**मख** सर्पणे भ्वा०पर०सक०सेट्। मखति अमाखीत् अमखीत् ममाख मेखतुः। [मङ्ख्यते।

**मख** सर्पणे भ्वा०पर०सक०सेट् इदित्। मङ्खति अमङ्खीत्

**मख** पु० मख–संज्ञायां घ। यज्ञे अमरः।

**मखत्राट्** पु० मखं विश्वामित्रादिमखं त्रायते त्रै–तृष्। श्रीरामे शब्दर०। [त्रि०।

**मखद्विष्** पु० मखाय द्वेष्टि द्विष-क्विप्। १राक्षसे २यज्ञद्वेषिणि

**मखाग्नि** पु० ६त०। यज्ञे संस्कृताग्नौ शब्दा०। मखानलादयोऽप्यत्र।

**मखान्न** न० मखे तत्काले भोज्यमन्नं सन्यग्भत्वात् शा०त०। (माखना) जलजाते मूलजे फलभेदे "मखान्नं पद्मबीजस्य गुणैस्तुल्यं विनिर्दिशेत्" भावप्र०। ६त०। २यज्ञान्ने च।

**मखासुहृद्** पु० ६त०। दक्षयज्ञस्य नाशके महादेवे हेमच०

**मग** सर्पणे भ्वा०पर०सक०सेट् इदित्। मङ्गति अमङ्गीत्।

**मगध** पु० मङ्ग्यते अधोगम्यतेऽनेन मगि–क पृषो० मग दोषं पापं वा दधाति धा क। १देशभेदे २तद्देशस्थे जने ब०व०। स च कीकटेतिसंज्ञः अङ्गदेशस्थश्च। "कीकटेषु गया पुण्या नदी पुण्या पुनःपुना" इत्युक्तेः गयादीनामेव पुण्यत्वम्। अन्येषामपुण्यत्वं प्रत्युत पापजनकत्वम् "अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति" मिता० देवलोक्तेः। "तीर्थयात्रां व्यतिरेकेणैतान् गत्वा तत्रैव चिरमुषित्वा गङ्गागमनं प्रायश्चित्तम्। तदशक्तौ पुनरुपनयनं अतिचिरवासे तु पुनरुपनयनं कृत्वा चान्द्रायणं कर्त्तव्यम्" प्रा० वि०। अतस्तस्य पापजनकत्वात् तथात्वम्। ततः भवार्थे गहा० छ। मगधीय तत्र भवे त्रि०

**मगधा** स्त्री मगध उत्पत्तिस्थानत्वेनास्त्यस्या अच्। पिप्पल्यां रत्नमा०। [मागे च।

**मगधेश्वर** पु० ६त०। १जरासन्धनृपे हेम०। २तद्देशपति-

**मगधोद्भवा** स्त्री मगधदेशे बाहुल्येनोद्भवति अच्। पिप्पल्याम् राजनि०। तद्देशे तस्याः मधुरभवत्वात्तथात्वम्।

**मगध्य** परिवेष्टने कण्ड्वा० प० सक०सेट्। मगध्यति अमगध्यी(धी)त्।

**मगन्द** पु० मगं पापं ददाति दा ड पृषो० मुम् च। कुसीदिनि निरु० ६।३२।

**मगण** पु० छन्दःशास्त्रोक्ते सर्वगुरुके वर्णत्रये।

**मगल** पु० गोत्रप्रवरर्षिभेदे प्रवरा०।

**मग्न** त्रि० मस्ज–क्त। (डोवा) जलादौ कृतमज्जने।

**मघ** कैतवे द्यूतक्रीडादौ अक० गतौ निन्दायां आरम्भे च सक०भ्वा०आ०सेट् इदित्। मङ्घते अमङ्घिष्ट। [मङ्घ्यते

**मघ** भूषणे भ्वा०पर०सक०सेट् इदित्। मङ्घति अमङ्घीत्।

**मघ** पु० मंघ-अच् पृषो०। १द्वीपभेदे मेदि०। (मग)नामके २म्लेच्छदेशभेदे। ३पुष्पभेदे न० शब्दरत्ना०।

**मघवन्(त्)** पु० मह–कनिन् नि० हस्य घः "मघवा बहुलम्" पा० वा तृ च। १इन्द्रे अमरः २तन्नामनामके पेचके च। तृचि मघवान् अतृचि मघवा। एवं मघवानौ मघवन्तावित्यादिरूपद्वयम्। भत्वे अतृन्तस्य सम्प्र०। मघोनः तृजन्तस्य न मघवतः इत्यादि ङीपि मघोनी मघवतीत्यादि तद्धिते न सम्प्र०। माघवनम् इत्यादि भाष्ये तु मघवशब्दात् मतुपि रूपं साधयित्वा शब्दान्तरमित्युक्ता न तृजित्युक्तम्।

**मघा** स्त्री मह्-घ हस्य घत्वम्। अश्विन्यवधिके दशमे नक्षत्रे तस्याश्च पञ्चताराकत्वात् बहुत्वमपि "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च" स्मृतिः। "मघां मूलञ्च वर्जयेदिति" "मघायां पिण्डदानञ्चेति" स्मृतिस्तु समुदायस्यैकत्वाभिप्रायेण। अस्या योगताराद्रिकमत्र माघशब्दे ४८७ पृ० उक्तम्। २औषधभेदे धरणिः।

**मघात्रयोदशी** स्त्री मघानक्षत्रेण युक्ता त्रयोदशी शा०त०। भाद्रकृष्णत्रयोदश्यां तत्रैव मघानक्षत्रसंयोगसम्भवात्। तत्र श्राद्धमावश्यकं यथोक्तं ति० त०

"प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदश्यां मघायुक्तायामनिबिड यत्किञ्चिद्द्रव्येण श्राद्धमावश्यकं यज्ञादिविधिवाक्ये नक्षत्रविशिष्टतिथेः श्रुतेः। तत्र केवलत्रयोदशीकेवलमघाश्राद्धार्थवादा अपि क्रमविशिष्टविधिप्राप्तसंख्यो नित्यत्वबोधकाः न तु केवलविध्यन्तरकल्पना गौरवात्। तथाच यमः "प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम्। प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च" मनुः "यत्किञ्चित् मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम्। तदप्यक्षयमेव स्यात् वर्षासु च मघासु च"। विष्णुधर्मोत्तरम् "प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी। प्राप्तास्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः"। ज्ञाता-

तपः "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च। तस्माद्दद्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च"। अत्रान्नमात्रश्रुतेः मनुवचने यत्किञ्चिदिति श्रुतेश्च मध्वोक्तपायसं फलातिशयार्थम्। "गुणविशेषे फलविशेषः स्यात्" इति न्यायात्। व्यक्तं विष्णुधर्मोत्तरे "मघायुक्ता च तत्रापि शस्ता राजंस्त्रयोदशी। तत्राक्षयं भवेच्छ्राद्धं मधुना पायसेन च"। तत्रान्वयुक्तकृष्णपक्षे। अत्र यत् श्राद्धं तन्मधुयोगेन पायसयोगेन वाऽक्षयं भवेत्। एवं मनुवचने यत्किञ्चिन्मधुना मिश्रम् इत्यनेन मधुमात्रयुक्तत्वमुक्तम्। अतोऽत्र सुतरां शूद्रस्याप्यधिकारः। अत्र गजच्छायायोगे फलातिशयः। तथाच श्राद्धचिन्तामणौ स्मृतिः "कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः। यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते। करे हस्तानक्षत्रे कन्यादशमांशोपरि सपादत्रयोविंशांशं यावत्। अविभक्तानामप्यत्र पृथक् श्राद्धमावश्यकम्"। यथा श्राद्धचिन्तामणौ स्मृतिः "विभक्ता अविभक्ता वा कुर्युः श्राद्धमदैविकम्। मघासु च तथान्यत्र नाधिकारः पृथग्विना"। अदैविकं प्रत्याब्दिकैकोद्दिष्टम् अन्यत्र कृष्णपक्षादौ नाधिकारः न नित्याधिकारः। "सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश। पृथक् नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्" इत्यनेनापि सञ्चितानामपृथग्द्रव्याणां पुंसां सपिण्डीकरणान्तानीति विशेषणात् तदुत्तरं श्राद्धानां पृथक्करणमपि प्रतीयते। मघात्रयोदशीनिमित्तकश्राद्धे पुत्रवता पिण्डा न देयाः। "भौजङ्गीं तिथिमासाद्य यावच्चन्द्रार्कसङ्गमम्। तत्रापि महती पूजा कर्त्तव्या पितृदैवते। कर्त्ते पिण्डप्रदानन्तु ज्येष्ठपुत्री विवर्जयेत्" इति देवीपुराणात् भौजङ्गी पञ्चमी चन्द्रार्कसङ्गमम् अमावास्या पितृदैवते ऋक्ष मघायाम। शातातपः "पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते। स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते। अक्षय्यदक्षिणा स्वस्ति सौमनस्य तथास्त्विति" रघु०।

मघाभू पु० मघासन्निकृष्टे ऋक्षे भवति भू–क्विप्। पूर्वफल्गुनी जाते शुक्रग्रहे त्रिका०। भगदैवतशब्दे ४६२१पृ० दृश्यम्

मघी पु० मघानक्षत्रसत्पत्तिकालत्वेनास्त्यस्य अच् गौरा० ङीष्। मघानक्षत्रस्वरविभुज्यमानयुक्ते काले घोरमासमासे जायमाने (काउन्) धान्यभेदे मेदि०।

मङ्कुलक पु० १ऋषिभेदे भा० व० ८३अ०। २यक्षभेदे तत्रैव।

मङ्खि पु० मखि–इन्। धनेश्वरयक्षभेदे भा०भा० १७७अ०।

मङ्क्षु पु० मखि–उन्। यक्षबहुगतिके शत०ब्रा० ५।५।४।११।

मङ्खुर पु० मखि–उरच्। दर्पणे भरत।

मङ्खण मङ्क्षु–ल्युट्। जङ्घाभागे हारा०।

मङ्क्षु(क्षू) अव्य० मखि–उन्। १शैघ्र्ये २अत्यर्थे च। पृषो० स्वस्य दीर्घत्वमपि।

मङ्ग पु० मगि–घञ्। नौकाशिरसि हेम०।

मङ्गल पु० मगि–अलच्। १भूमिसुते ग्रहभेदे २मङ्गलशब्दे ३अभीष्टार्थसिद्धौ च। ४तद्वति त्रि० अमरः। स्त्रियां ङीप् "सुमङ्गलीरिव वधूः" सि०कौ०। ५दुर्गायां ६हरिद्रायां ७दूर्वायां ८पतिव्रतायाश्च स्त्री शब्दरत्ना० ९करञ्जभेदे स्त्री शब्दच०। १०हस्तार्कमार्गभेदे स्त्री हेम० ११योगिनीदशाभेदे "मङ्गला पिङ्गलेति" दशाशब्दे दृश्यम्। अभिप्रेतसिद्धिर्मङ्गलं तद्धेतुत्वात् गोरोचनादेरपि तथात्वम्। मङ्गलद्रव्याणि च मत्स्यसूक्ते ४२प०उक्तानि यथा "लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः। हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः। एतानि सततं पश्येन्नमस्येदर्चयेत्ततः। प्रदक्षिणन्तु कुर्वीत तथा चायुर्न हीयते। दूर्वां दधि सर्पिरथोदकुम्भं धेनुं सवत्सां वृषभं सुवर्णम्। मृद्गोमयं स्वस्तिकमक्षतानि लाजा मधु ब्राह्मणकन्यकाश्च। श्वेतानि पुष्पाणि तथा शमीञ्च हुताशनं चन्दनमर्कबिम्बम्। अश्वत्थवृक्षञ्च समालभेत ततश्च कुर्यान्निजजातिधर्मम्" इत्युक्तविस्तारार्थम्। १२विष्णौ न० "पवित्रं मङ्गलं परम्" विष्णु स०। कुलमङ्गलपवाक्यादि शब्दे २०११पृ० मङ्गलपथ्यवाक्यादि दृश्यम्। "प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम्। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः" अत्रि० उक्ते १३प्रशस्ताचरणे निन्द्यवर्जने।

मङ्गलचण्डी स्त्री मङ्गले चण्डी दक्षा। १देवीभेदे शार्ङ्ग० क। मङ्गलचण्डिकाप्यत्र तन्नामनिरुक्तिः ब्रह्मवै० प्र० ४१ अ० उक्ता यथा "दक्षायां वर्त्तते चण्डी कल्याणेषु च मङ्गलम्। मङ्गलेषु च या दक्षा सा च मङ्गलचण्डिका। पूज्यायां वर्त्तते चण्डी मङ्गलेऽपि महीसुतः। मङ्गलाभीष्टदेवी या सा वा मङ्गलचण्डिका। मङ्गलो मनुवंशश्च सप्तद्वीपधरापतिः। तस्य पूज्याभीष्टदेवी तेन मङ्गलचण्डिका"। [राजनि०।

मङ्गलच्छाय पु० मङ्गला प्रशस्ता छाया यस्य। वटवृक्षे

मङ्गलपाठक पु० मङ्गलार्थं स्तुतीः पठति पठ–ण्वुल्। स्तुतिपाठके हेमच०। "आः इमा मङ्गलपाठक!" नैषी०।

मङ्गलागुरु न० नित्यक०। अगुरुभेदे राजनि०।

**मङ्गल्य** न० मङ्गलाय हितं यत्। १चन्दने २मङ्गल्यागुरुणि ३स्वर्णे ४सिन्दूरे राजनि० ५दध्नि च। ६रुचिरे त्रि० हेम० ७मङ्गलकरे त्रि० मेदि०। "सर्वमङ्गलमङ्गल्ये" इति देवीमा०। ८अश्वत्थे ९बिल्वे १०जीरके ११मसूरके च पु० मेदि० १२नारिकेले १३कपित्थे १४रीठाकरञ्जे च पु० राजनि०। १५त्रायमाणौषधौ पु० शब्दच०।

**मङ्गल्यक** पु० मङ्गल्यमपक्वस्य प्रियः तद्दोषनिवारणार्थं दीयमानत्वेन शास्त्रविधानात्। मसूरे अमरः। [भावप्र०।

**मङ्गल्यकुसुमा** स्त्री मङ्गल्यं कुसुमं यस्याः। शतपुष्पायाम्

**मङ्गल्यनामधेया** स्त्री ६ब०। जीवन्त्यामोषधौ जटा०।

**मङ्गल्या** स्त्री मङ्गलाय हिता यत्। १मल्लिकागन्धयुक्ताऽगुरुणि अमरः २रोचनायाम् ३शमीकपुष्प्याम् ४शम्यां ५शुक्लवचायां मेदि० ६प्रियङ्गौ ७माषपर्ण्यां हेमच० ८शतपुष्पायाम् ९जीवन्त्याम् १०ऋद्धिनामौषधौ ११हरिद्रायां १२दूर्वायां राजनि० १३दुर्गायाञ्च स्त्री रत्नमा०। "मङ्गल्याऽगुरुशिशिरा गन्धाढ्या दोषनाशिका" राजनि०

**मङ्गिनी** स्त्री मङ्गो नौकाशिरः अस्त्यस्याः इनि ङीप्। नौकायां हेमच०। [पत्ये पुंस्त्री

**मङ्कुष** पु० ऋषिभेदे तस्यापत्यं कुर्वा० ण्य। माङ्कुष्य तद-

**मच** दम्भे शाठ्ये च भ्वा०आ०सेट्। मचते अमचिष्ट मेचे।

**मच** उन्नतीकरणे धारणे पूजायां च चक्र० दीप्तौ भ्वा० आत्म० सेट् इदित्। मञ्चते अमञ्चिष्ट। ममञ्चे।

**मचक्रुक** न० कुरुक्षेत्रान्तर्गते तीर्थभेदे। कुरुक्षेत्रशब्दे दृश्यम्

**मचर्चिका** स्त्री चर्च-धात्वर्थनिर्देशे ण्वुल् मस्य मयोरिव चर्चिका ध्यानम्। प्रशस्ते अमरः अव्ययत्वप्रयोऽयमित्यके "मतल्लिकादयो नियतलिङ्गा न तु विशेष्यनिघ्नाः" सि० कौ० "प्रशंसावचनैश्च" पा० अस्य विशेषणत्वेऽपि परनिपातः गोमचर्चिका गोमतल्लिका इत्यादि।

**मच्छ** पुंस्त्री० माद्यति मद्-क्विप् तथा सन् शेते शी-ड। मत्स्ये शब्दर०। स्त्रियां जातित्वात् ङीष्।

**मजिर** पु० ऋषिभेदे तस्यापत्यं शिवा० अण्। माजिर तदपत्ये पुंस्त्री०।

**मज्जकृत्** न० मज्जानं करोति कृ-क्विप्। १देहस्थे अस्थिरूपे पदार्थे हेमच० अन्नादिषु भुक्तेषु रसादिपरिपाकेन क्रमेणशोणितमांसत्वगस्थिशुक्राणामुत्पत्तेः अस्थ्नः मज्जाजनकत्वम्।

**मज्जन्** पु० मस्ज-कनिन्। १अस्थिजाते अस्थिमध्यस्थे स्नेहाकारे पदार्थे २वृक्षादेः सारांशे च अमरः। फलमज्ज-मुखाः "यस्य यस्य फलस्येह वीर्य्यं भवति यादृशम्। तस्य तस्यैव वीर्य्येण मज्जानमपि निर्दिशेत्" राजवल्लभः "अस्थि यत्स्याग्निना पक्वं तस्य सारो द्रवो घनः। यः स्नेहवत् पृथग्भूतः स मज्जेत्यभिधीयते"। मज्जस्थानमाह "स्थूलादिषु विशेषेण मज्जा त्वभ्यन्तरे स्थितः" भावप्र०।

**मज्जन** न० मस्ज-भावे ल्युट्। १स्नाने (डोवा) जटाध०। कर्त्तरि ल्यु। २मज्जायां शब्दर०। अस्थिमध्यमज्जनात् तस्यास्तथात्वम्। ३कुमारानुचरगणभेदे भा०श०४६अ०।

**मज्जसमुद्भव** न० मज्जः समुद्भवति सम्+उद्+भू-अच् ५त०। शुक्रे तस्य मज्जजातत्वम् मज्जकृच्छब्दे दृश्यम्।

**मज्जा** स्त्री मस्ज-अच् टाप्। १अस्थिसारे २वृक्षादेः सारांशे च हेम०। "मज्जातको मूलकशिम्बिदैः प्रियालमज्जाघटिते" सुश्रुतः। [राजनि० २शुक्रधातौ न०

**मज्जाज** न० मज्जातो जायते जन-ड। १भूमिजे गुग्गुलौ

**मज्जारस** मज्जायाः रस परिपाकः। शुक्रे राजनि०। तस्य मज्जासम्भवत्वं मज्जकृच्छब्दे उक्तम्।

**मज्जासार** न० मज्जाया सारोऽस्य। जातीफले राजनि०।

**मञ्जूषा** स्त्री मस्ज-ऊषन्। मञ्जूषायां रायमुकुटः।

**मज्मन्** न० मस्ज-मनिन् उणा०। बले निघण्टुः।

**मञ्च** पु० मचि-उच्छ्राये घञ्। १खट्वायाम् अमरः (मांचा) मञ्चनिर्मिते २उच्चासने ३उच्चमञ्चरूपभेदे शब्दा० "मञ्चस्थं रघुनन्दनम्" पुराणम्। स्वार्थे क। तत्रैव "तस्मोऽन्धः पतिरेव मञ्चकगतः" इति सा० द०।

**मञ्चकाश्रय** पु० ६ब०। मत्कुणे (छारपोका) राजनि०।

**मञ्चमण्डप** पु० मञ्च इव मण्डपः। शस्यरक्षार्थे उच्चे पक्षादिकुटीरे (टङ्) शब्दा०। [शब्दरत्ना०।

**मञ्जर** न० मन्ज-अरच्। १तिलकवृक्षे २मुक्तायाञ्च ३वज्राच

**मञ्जरि(री)** स्त्री मञ्जु ऋच्छति ऋ-इन् शक० पररूपं वा ङीप्। अभिनवोद्गतायां सुकुमारायां पल्लवाङ्कुररूपायां १वल्लर्य्याम् अमरः जीवनस्तु तत्र २मुक्तायां ३तिलकलतायां शब्दरत्ना०। ४तुलस्याम् राजनि० तत तारका० इतच्। मञ्जरित जातमञ्जरीके त्रि०। ङीवन्त "नजसा जगौ गिति यदपह्नैर्मञ्जरी" वृ० र० टी० उक्ते चतुर्दशाक्षरपादके छन्दोभेदे। [राजनि०।

**मञ्जरीनम्र** पु० मञ्जर्य्यां तदवस्थायामपि नम्रः। वेतसे।

**मञ्जा** स्त्री मजि-अच्। १छाग्यां त्रिका०। २मञ्जर्य्यां हेमच०।

**मञ्जि(ञ्जी)** स्त्री मन्ज-इन् वा ङीप्। मञ्जर्य्याम् त्रिका०।

**मञ्जिका** स्त्री मजि–ण्वुल् टाप् अत इत्वम्। वेश्यायां हारा०।

**मञ्जिफला** स्त्री मञ्जिः मञ्जरी फले यस्याः। कदल्याम् त्रिका०

**मञ्जिष्ठा** स्त्री अतिशयेन मञ्जीमती इष्ठन् मतुपो लोपः। स्वनामख्यातायां लतायाम् अमरः। "मञ्जिष्ठा मधुरा तिक्ता कषाया स्वर्यवर्णकृत्। गुरूष्णा विषश्लेष्मघ्नी शोथयोन्यक्षिकर्णरुक्। रक्तातीसारकुष्ठास्रविसर्पव्रणमेहनुत्" भावप्र०। मञ्जिष्ठया रक्तम् अण्। माञ्जिष्ठ तद्रक्तवर्णेन रक्ते त्रि०।

**मञ्जिष्ठामेह** पु० सुश्रुतोक्ते मेहभेदे तल्लक्षणं तत्रोक्तं यथा मेहतीत्यनुवृत्तौ "मञ्जिष्ठोदकप्रकाशं मञ्जिष्ठामेही"।

**मञ्जिष्ठाराग** पु० मञ्जिष्ठेव रागः। "मञ्जिष्ठारागमाहुस्तं यन्नापैत्यतिशोभते" सा०द० उक्ते पूर्वानुरागभेदे।

**मञ्जीर** न० मञ्ज–ध्वनौ ईरन्। १नूपुरे अमरः। "मञ्जुमणिमञ्जीरे कलगम्भीरे" इति सा०१०प०। २दधिमन्थन-दण्डबन्धस्तम्भे पु० हेमच०।

**मञ्जीरक** पु० मञ्जीर इव कायति शब्दायते कै–क; नूपुर-ध्वनितुल्यध्वनियुते तत, शिवा० अपत्ये अण्। माञ्जीर तदपत्ये पुंस्त्री०। [मञ्जु ल तद्वति त्रि०।

**मञ्जु** त्रि० मञ्ज–उन्। मनोहरे अमर०। सिध्मा०लच्।

**मञ्जुकेशिन्** पु० कर्म० प्रशस्ते इनि। १श्रीकृष्णे हला० २सुन्दरकेशयुते त्रि० स्त्रियां ङीप्। [त्रि०।

**मञ्जुगमना** स्त्री ६ब०। १हंस्यां राजनि० २सुन्दरगतियुते

**मञ्जुघोष** पु०। तन्त्रोक्ते १उपास्यदेवभेदे तन्त्रसारे दृश्यम्। २पूर्वजिनभेदे त्रिका०। कर्म०। ३मनोहरशब्दे पु०।

**मञ्जुपाठक** पुंस्त्री० मञ्जु पठति पठ–ण्वुल्। १शुकखगे राजनि० स्त्रियां जातित्वात् ङीष्। २मनोहरपाठके त्रि०

**मञ्जुप्राण** पु० ६ब०। चतुर्मुखे ब्रह्मणि जटा० सर्वस्यापि स्रष्टृत्वेन विधातृप्राणस्य मञ्जुप्राणत्वात् तस्य तथात्वम्।

**मञ्जुभद्र** पु० जिनभेदे त्रिका०।

**मञ्जुभाषिन्** त्रि० मञ्जु भाषते भाष–णिनि। १सुन्दरभाषके स्त्रियां ङीप् सा च "सजसा जगौ भवति मञ्जुभाषिणी" वृ०र० उक्ते २त्रयोदशाक्षरपादके छन्दोभेदे।

**मञ्जुल** त्रि० मञ्ज–सिध्मा० लच् मञ्जि-उलच् वा। १मनोहरे २निकुञ्जे मेदि० ३जलके न० विश्व०। ४जलरङ्कुखगे पुंस्त्री० मेदि० स्त्रियां ङीष्। [५सुन्दरश्रीके त्रि०।

**मञ्जुश्री** पु० ६ब०। १मञ्जुघोषे २पूर्वजिनभेदे त्रिका०।

**मञ्जुहासिनी** स्त्री "ततो यतौ गो भवति मञ्जुहासिनी" वृ०र०टी०उक्ते १त्रयोदशाक्षरपादके २छन्दोभेदे। ३सुन्दरहासयुते त्रि०।

**मञ्जूषा** स्त्री मञ्ज ऊषन् (पेटरा) १पेटिकायाम् अमर। २मञ्जिष्ठायाञ्च राजनि० ३पाषाणे उणा० को०।

**मट** वासे भ्वा०प०सक०सेट्। मटति अमटीत् अमाटीत् मेटतुः

**मटची** स्त्री मट–बा० अचि ङीप्। १पाषाणवृष्टौ "मटचीहतेषु कुरुषु" छान्दोग्यश्रुति। २रक्तवर्णक्षुद्रखगभेदे गोविन्द०।

**मटस्फटि** पु० दर्पारम्भे जटा०। [अमाठीत् मेठतुः।

**मठ** वासे अक०मर्दने सक० भ्वा० पर० सेट्। मठति अमठीत्-

**मठ** व्याध्याने भ्वा०अक०सेट् इदित्। मण्ठते अमण्ठिष्ट।

**मठ** पु न० अर्द्धर्चा० मठत्यत्र मठ–घञर्थे क। १छात्रादिवासे २देवागारे अमरः। मठप्रतिष्ठातत्त्वे तत्प्रतिष्ठाविधि-र्दृश्यः। देवमठशब्दे चास्य दृश्यम्। ३रथस्थाने हारा०।

**मठर** पु० मठ–अरन्। १मुनिभेदे २शौण्डे त्रि० उज्ज्वल०। राजद०परनिपातः राजमठरः। गर्गा० यञ्। माठर्य तस्य मुनेरपत्ये पुंस्त्री० स्त्रियां ङीप् यलोपः। शौण्डार्थ-कस्यापत्ये शिवा० अण्। माठर तदपत्ये पुंस्त्री०।

**मड** भेदे चु०उभ०सक०सेट् इदित्। मण्डयति-ते अममण्डत् त। विभागे भ्वा० आत्म०। मण्डते।

**मड** भूषणे चुरा०उभ०पक्षे भ्वा०पर०सक०सेट् इदित्। मण्डयति ते मण्डति अममण्डत्-त अमण्डीत्। [जटा०।

**मडक** पु० मडि–क्वुन् पृषो० नलोप। धान्यभेदे (मेडुया)

**मडर** पु० मडि–बा० अरन् पृषो० नलोपः। भिक्षिभेदे मल्लादशब्दे परे अस्याद्युदात्तता।

**मडार** पु० मडि–बा० आरन् पृषो०। भूषके ततः चतु-रर्थ्यां प्रगद्या०ञ्य। माडार्य तेन निर्वृत्तादौ त्रि०।

**मड्डु** पु० मज्जन्ति अन्ये यस्मात् मस्ज+उन् पृषो०। वाद्यभेदे अमर० स्वार्थे क मड्डुक तत्रार्थे। मड्डुक-वादकं शिल्पमस्य वा ठक् पक्षे अण्। माड्डुकिक माड्डुक तद्वादनशिल्पयुते त्रि०। [मणीत् मेणतुः।

**मण** अव्यक्तशब्दे भ्वा०प०अक०सेट्। मणति अमाणीत् अ-

**मणि(णी)** पुंस्त्री० मण–इन् स्त्रीत्वपक्षे वा ङीप्। तत्रादौ रत्ने "मणिरत्नं सरं शीतं कषायं स्वादु लेखनम्। चक्षुष्यं धारणात्तत्तु पापालक्ष्मीविनाशनम्" राजवल्लभ०। "मणिहारावलिरामणीयकमिति" "मणीकमणी-न्द्रुहितेति च" नैषधम्। २अजमृगगलभेदे अलिञ्जरे (जाला) ३लिङ्गाग्रे ४मात्रभेदे जटा० ५मणिबन्धे हेमच० स्वार्थे क वंशाद्या कन् वा। मणिक अलिञ्जरे म०अमरः।

स्त्रानलक्षणे मेदि० योन्यर्थे शब्दार्थ० [हगन्रम् ।

**मणिकर्ण** पु० १कामरूपस्थे २शिवलिङ्गभेदे मणिकूटशब्दे

**मणिकर्णिका** स्त्री मणिकर्णं मणिमयकर्णभूषणमस्त्यस्याः ठन् । विष्णुतपश्चादर्शनात् विस्मयेन शिवस्य मणिमय कुण्डलपतनस्थाने काशीस्थे १तीर्थभेदे। तन्नामनिरुक्तिः काशी० २६अ० यथा विष्णुं प्रति शिववाक्यम् "त्वदीयस्यास्य तपसो महो - पचयदर्शनात् । यन्मयान्दोलितो मौलिरुच्चैश्चैव भूषणः । तदान्दोलनतः कर्णात् पपात मणिकर्णिका । मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका । चक्र-पुष्करिणीतीर्थं पुराख्यातमिदं शुभम् । त्वया चक्रेण खननाच्छङ्खचक्रगदाधर ।। मम कर्णात् पपातेयं यदा च मणिकर्णिका । तदा प्रभृति लोकेऽत्र ख्यातास्तु मणि-कर्णिका" मणिकर्णीत्यप्यत्र । २मणिमयकर्णभूषणे च ।

**मणिकर्णीश्वर** न० काशीस्थे शिवलिङ्गभेदे काशीख०१००अ०

**मणिकर्णेश्वर** न०कामरूपस्थे शिवलिङ्गभेदे कालिपु०८१अ०,

**मणिकानन** न० मणिकमिवाननं यत्र । कण्ठे शब्दर० ।

**मणिकार** पु० मणिमय भूषणं करोति क अण् । (जहरि) १मणिमयभूषणकारके,२प्रत्यक्षादिचतुष्टयप्रमाणतत्त्वचिन्तामणिनामकग्रन्थकारे गङ्गेशोपाध्याये च । कृ-क्विप् कृत० । मणिकृदप्यत्र ।

**मणिकुट्टिका** स्त्री कुमारानुचरमातृभेदे भा०श०४७अ० ।

**मणिकूट** पु०मणिमयः कूटोऽस्य। कामरूपस्थे पर्वतभेदे यथोक्तम् "भस्मकूटस्य चैशान्यां मणिकूटो महागिरिः । मणिकर्णो नाम हरस्तस्य तिष्ठति लिङ्गक"कालिकापु०८१अ०।

**मणिकेतु** पु० केतुभेदे वृ०स० ११अ० केतुशब्दे दृश्यम् ।

**मणिगणनिकर** पु० "वसुहयमतिरिह मणिगणनिकरः" वृ०र० उक्ते पञ्चदशाक्षरपादके छन्दोभेदे द्विगुणहय-लघुरित्यस्यान्तरवृत्ति ।

**मणिग्रीव** पु० कुबेरपुत्रभेदे शब्दर० ।

**मणिच्छिद्रा** स्त्री मणिरिव छिद्रमस्याम् । १मेदानामौषधौ २ऋषभानामौषधौ च मेदि० । [११अ० ।

**मणिजला** स्त्री मणिप्रचुरं जलमस्याम् । नदीभेदे भा० भ०

**मणित** न० मण-क्त । रतिकाले स्त्रीणामव्यक्तशब्दभेदे हेम०

**मणितारक** पुंस्त्री० मणिरिव तारकास्य । सारसखगे राजनि० स्त्रियां जातित्वात् ङीष् ।

**मणिद्वीप** पु० मणिमय मणिप्रचुरो वा द्वीपः । क्षीरसमुद्र-मध्यस्थे श्रीविद्यापीठरूपे द्वीपभेदे "सुधाब्धेर्मध्ये सुरविटपिवाटीपरिवृते मणिद्वीपे नीपोपवनवति चिन्ता-मणिगृहे" आनन्दल० ।

**मणिनाग** पु० नागभेदे भा० स० १५ अ० । [१५८अ० ।

**मणिपर्वत** पु० मणिप्रचुरः पर्वतः शा०त०। पर्वतभेदे हरिवं०

**मणिपालि** त्रि० मणिं पालयति पालि-इनि । मणिपालके तस्य धर्म्यं महिष्या०अण् । मणिपाल तस्य धर्म्ये त्रि० । तस्यापत्यम् रेवत्या०ठक् । माणिपालिक तदपत्ये पुंस्त्री०

**मणिपुच्छी** स्त्री मणिरिव पुच्छं यस्याः नित्यं ङीष् । मणिवत्पुच्छयुतायां स्त्रियाम् ।

**मणिपुष्पक** पु० सहदेवस्य शङ्खे गीता १।१६ ।

**मणिपुर** न० पौरस्त्ये देशभेदे ।

**मणिपूर** न० सुषुम्णान्तर्गते षट्चक्रमध्ये नाभिस्थे पद्मभेदे "तदूर्ध्वे नाभिदेशे तु मणिपूरं महाप्रभम् । मेघाभं विद्युदाभञ्च बहुतेजोमयं ततः । मणिवद्भिन्नं तत्पद्मं मणिपूरं तथोच्यते । दशभिश्च दलैर्युक्तं डादिफान्ता-क्षरान्वितम् । शिवेनाधिष्ठितं पद्मं विश्वालोकनकारणम्"

**मणिबन्ध** पु० मणिर्बध्यतेऽत्र बन्ध-आधारे घञ् । प्रकोष्ठ-पाण्योर्मध्यस्थे १करग्रन्थौ तस्य शुभाशुभलक्षणं गरु०पु० ६६अ० उक्तं यथा "मणिबन्धैर्निगूढैश्च सुश्लिष्ट-शुभलक्षिभिः । नृपा हीनैः करच्छेदस्य सदैर्धनवर्जिता" २सैन्धवलवणाकारे पर्वतभेदे च । [राजनि० ।

**मणिबी(वी)ज** पु० मणिरिव बी(वी)जमस्य । दाडिमवृक्षे

**मणिभद्र** पु० यक्षभेदे भा० स० १०अ० ।

**मणिभूमि** स्त्री ६त० । मणीनामाकरे ।

**मणिमञ्जरी** स्त्री "इनाश्वैः स्यात् यभनयसजगाः कीर्तिता मणिमञ्जरी" वृ० र० टीकोक्ते ऊनविंशत्यक्षरपादके छन्दोभेदे ।

**मणिमण्डप** पु० मणिमयः मणिप्रचुरो वा मण्डपः । १मणि-खचिते मण्डपे २देवतापीठस्थानभेदे तन्त्रसारः ।

**मणिमत्** त्रि० मणिरस्त्यस्य मतुप् । १मणियुते त्रि० स्त्रियां ङीप् । २यक्षभेदे पु० भा० स० १अ० । ३सत्याद्धर्मा-ज्जाते द्वापरयुगीये २नृपभेदे पु० भा० स० ६७अ० । ४नागभेदे भा० स० ८अ० । ५राक्षसभेदे भा०व०१६०अ० । ६दैत्यभेदे हरिवं०३अ०। ७पश्चिमस्थे देशभेदे वृ०स०१४अ०।

**मणिमध्य** न० "स्यान्मणिमध्यं चेद्भमसाः" छन्दोम० उक्ते नवाक्षरपादके छन्दोभेदे । [तस्ये अमर ।

**मणिमन्थ** न०मणिरिव मथ्यते मन्थ कर्मणि घञ् । सैन्धव-

**मणिमाला** स्त्री ६त० । "तौ यौ मणिमाला छिन्ना गुह-

मणौ" छन्दो० उक्ते द्वादशाक्षरपादके १छन्दोभेदे । २हारे ३दन्तक्षतभेदे मेदि०। ४वस्त्राग्रे शब्दर०।५दीप्तौ शब्दमा०

**मणिराग** न० मणेरिव रागो वर्णोऽस्य । १हिङ्गुले राजनि० ६त० । २मणिवर्णे पु० ।

**मणिल** त्रि० मणि+सिध्मा० अस्त्यर्थे लच् । मणियुते ।

**मणिव** पु० मणि–अस्त्यर्थे व । नागभेदे सि०कौ० ।

**मणिवाल** पु० मणिरिव शुक्लत्वात् वालः केशोऽस्य । अग्निदैवत्ये पशुभेदे यजु० २४।२ ।

**मणिवाहन** पु० नृपभेदे भा० स० ६२अ० ।

**मणिशैल** पु० मन्दराचलस्य पूर्वस्थे पर्वतभेदे मार्कपु० ५५ ।

**मणिसर** पु० मणीन् सरति कारणत्वेन गच्छति सृ–अच् ६त०। मणिखचिते हारभेदे ।

**मणिस्कन्ध** पु० नागभेदे भा० आ० ५७अ० ।

**मणीचक** न० मणेः ई शोभा चकते प्रतिहन्ति चक–अच् ६त०। १चन्द्रकान्तमणौ त्रिका०। २मत्स्यरङ्कखगे पुंस्त्री० हारा० स्त्रियां ङीष् ।

**मणीवक** न० मणीव कायति कै–क । पुष्पे हारा० ।

**मणीवती** स्त्री मणि+अस्त्यर्थे मतुप् नि० मस्य वः शरा० दीर्घः । मणियुक्तनदीभेदे । [ब्धायाम् राजनि० ।

**मण्टपी** स्त्री मण्टं पाति पा-क गौरा० ङीष् । कुक्षोपद

**मणिट** पु० गोत्रप्रवरर्षिभेदे प्रवराध्यायः ।

**मण्ड(ठ)** पु०मठ-अच् पृषो०णत्वम् । (माठ) कृतान्नभेदे राजनि० "समितां घृतमेदाद्यैः संवेगापि च पाचयेत् । अथास्य वटक कृत्वा पचेत् सर्पिषि नीरजम् । एलाकर्पूरमरिचाद्यैरवधूतैः । अवलम्बिता वितापाके ततश्च समुद्धरेत् । अयं प्रकार संसिद्धो मण्ड इत्यभिधीयते" । अस्य गुणा "मण्डस्तु बृंहणो हृद्यो बल्यः सुमधुरो गुरु । पित्तानिलहरो वृष्यो दीप्ताग्नीनां सुपूजित" भावप्र०मठ इति पठितम् कृतान्नवर्गे २१८१ पृ० दृश्यम्

**मण्ड** पुंन० मन–ड तस्य नेत्वम् ।१वर्णाकानामप्रत्वे (माड) २सारे ३पिच्छे च । ४आमलक्यां ५सुरायाञ्च स्त्री । ६दधिमस्तुनि (मात्) न० मेदि० । ७एरण्डवृक्षे दशाकभेदे भूषायां च पुन० हेमच० अर्द्धर्चादि भावप्र० तद्विधानं यथा "तण्डुलानां सुसिद्धानां चतुर्दशगुणे जले । रसः सिक्थैर्विरहितो मण्ड इत्यभिधीयते । शुण्ठीसैन्धवसंयुक्तो दीपनः पाचनश्च च । अथस्य बलस्यपिषञ्चास्य ज्ञेया मण्डस्य विज्ञता । मेथा सूपयवागूनां विलेपी भक्तयोरपि" । तस्य गुणाः "मण्डो ग्राही लघुः शीतो दीपनो धातुसाम्यकृत् । स्रोतमार्दवकृत् बल्य पित्तश्लेष्मापहः" । "सुदुबोधनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च । ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः । लाजमण्डोऽग्निजननो दाहतृष्णानिवारण । ज्वरातीसारशमनोऽशेषदोषामपाचन । भाटूमण्डोऽग्निजनन शूलानाहविनाशन । पाचनो दीपनो हृद्यः पित्तश्लेष्मानिवापहः" राजवल्लभ । भाटूमण्डो भृष्टयवमण्डः ।

**मण्डक** पु० भाव० उक्ते पिष्टकभेदे कृतान्नवर्गे २१८१ पृ० दृश्यम् सङ्गीतदामो० उक्ते गीताङ्गभेदे यथा "जयप्रियः कलापश्च कमल सुन्दरस्तथा । मङ्गलो वल्लभश्चेति मण्डकाः षट् प्रकीर्त्तिताः । जयप्रियो द्रुतावेकमध्ये यदा गुरु । अनविंशाक्षरैर्युक्तो रसे वीरे च वर्त्तते । लघुर्गुरुर्लघुर्यत्र द्रुतास्त्र स उच्यते ।। कलापो रङ्गतालेन युक्तो रौद्ररसे हि स. । द्वाविंशत्यक्षरैर्युक्ता लघुरादौ गुरुद्वयम् । लघुरादौ गुरुद्वयं रङ्गताल इतीरित. २ । लघुद्वयं गुरुश्चैकोऽनिलोऽस्य वणात्मकः । पञ्चविंशत्यक्षरैः स्यात् कमल शान्तहास्ययोः ३। गुरुरेको लघुद्वयं त्रिपुटे भगणात्मके । षट्त्रिंशत्यक्षरैस्तु शृङ्गारे सुन्दरे मतः ४ । आदौ गुरुर्लघुर्मध्ये गुरुतोऽन्ते भङ्गतालके । एकत्रिंशत्यक्षरैस्तु वीरे मङ्गलमण्डकः ५ । यत्र मितापुलके ताले गणसामकलात्मके । चतुस्त्रिंशदक्षरोऽयं वल्लभो रौद्रके रसे ६।"

**मण्डन** पु० मण्डयति मडि-ल्यु ।१अलङ्कारके २प्रसिद्धमीमांसकभेदे पु० "विश्वप्रसिद्धे रपगीयमानमवेहि तत् मण्डनमिश्रधाम" । शङ्करदिग्विजयः तेन सह शङ्कराचार्यस्य विचारकथा तत्र दृश्या । भावे ल्युट् । ३भूषायाम् न०

**मण्डप** पुंन० मडि–कप् मण्डं भूषां पाति रक्षति पा–क मडि–कपन् वा । १जनविश्रामस्थाने०२देवादिगृहे च अमर० । यथा चण्डीमण्डप विष्णुमण्डप इत्यादि । ३मण्डपामवर्त्तरि त्रि० शब्दरत्ना० । ४त्रिवृतायां (व्रूकत्रिवृद्भेदे) स्त्री राजनि०। [त्रिति स्त्री त्रिका०ङीप् ।

**मण्डयन्त** त्रि० मडि–झच् । १अलङ्कारके सि०कौ०। २स्त्रो-

**मण्डर** त्रि० मडि–अरन् । १भूषके ततः अस्त्यर्था० स्वार्थे ठक् । माण्डरिक तत्रार्थे ।२गुञ्ज्यां स्त्री हारा०ङीप् ।

**मण्डल** न० मडि–कलच् । १चक्राकारेण वेष्टने अमरः यथा ग्रहमण्डल भूमण्डलम् । उभयतोविंशतियोजनमिते

२देशभेदे ३सूर्य्यचन्द्रयोः परिवेषे ४द्वादशराजचक्रे ५कोठरोगे च मेदि०। ६गावे अनेकार्थको०। ७समूहे हेम० "सर्वमण्डलमण्डलम्" इति बोपदेवः। ८चक्रे त्रिका०। "मण्डलाकारपादाद्यं मण्डलं स्थानमीरितम्" इत्युक्ते ९धन्विनां स्थानभेदे शब्दर०। "मण्डलं सर्वतो वृत्तः" इत्युक्ते १०सैन्यव्यूहभेदे कामन्द०। अतिमरेखाविशेषेण रचिते ११पदार्थे च यथा पद्ममण्डलं सर्वतोभद्रमण्डलमित्यादि। १२बिम्बे त्रि० अमरः स्त्रियां गौरा० ङीष्। सा च १३दूर्वायाम् हारा० १४कुक्कुरे पु० मेदि० १५सर्पभेदे पु० विश्वः १६व्याघ्रनखाख्यगन्धद्रव्ये शब्दच०। ततः स्वार्थे क। बिम्बे कुष्ठभेदे आदर्शे च। अतिममण्डलविधानमुक्तं देवीपु० यथा

"चतुर्हस्तं समारभ्य यावद्धस्तशतं भवेत्। मण्डलं तत्र कर्त्तव्यमत ऊर्ध्वं न कारयेत्। विमलं१ विजयं२ भद्रं३ विमानं४ शुभदं५ चित्रम्६। वर्द्धमानश्च७ देवश्च८ जताख्यं० कामदायकम्। रुचक११ स्वस्तिकाख्यश्च१२ द्वि-टयमिति मण्डलम्। सितादिहरितान्ताश्च रागाः कार्य्याः सुशोभनाः। शालिपिष्टककौसुम्भरजनीहरिपत्रजा। मणिविद्रुमरागाश्च भवना अभिमन्त्रिताः। सितसर्षपचूर्णाढ्यं रजः कृत्वा तु पातयेत्। अस्त्रबीजं न्यसेन्मन्त्री सम्भवेति पदं च वा। समीत्यानं शुभं कृत्वा गोमयेनोपलेपितम्। चन्दनागुरुकर्पूरक्षोदधूपाधिवासितम्। भूभागं सुमितं चित्रं पूर्वपश्चिमकोत्तरम्। यास्यं स्वस्तिकमत्स्याद्यैः सूत्रैर्वोर्ध्वाग्रपल्लवैः। पद्मपत्राष्टकं मध्ये द्विगुणं त्रिगुणञ्च वा। द्वाराणि समस्तानि कर्णिकाकेसरोज्ज्वलम्। पद्मं तथावशेषाणि स्वस्तिकान्युत्पलानि च। मध्यात् स्वस्वहस्तस्तु रजःपातं समाचरेत्। मध्यमानामिकाङ्गुष्ठैरुपरिष्टाद् यथेप्सया। अधोमुखाङ्गुलिं कृत्वा पातयेत्तु विचक्षणः। समा रेखा तु कर्त्तव्याऽविच्छिन्ना प्रशंसिता। अङ्गुष्ठपर्ववैपुल्या समा कार्य्या विजानता। स्थूलं विषमं स्थूलं विच्छिन्नं कपराहतम्। पर्य्यन्तमपि तु समाविशेषेण कदाचन। स्थूले कलहं विद्यात् कृशरेखे तु विग्रहम्। अतिस्थाने भवेद्व्याधिर्नित्यं पीडा विभिन्निते। दुन्दुभेर्भयमाप्नोति मन्त्रपत्नाश्च संशयः। कृशायामर्थहानिः स्याद् विच्छिन्ने मरणं ध्रुवम्। वियोगात्तु भवेत्तस्य रुद्रव्यसनतस्य वा। अविदित्वा लिखेद्यस्तु मण्डलन्तु यथेप्सया। सर्वदोषानवाप्नोति ये दोषाः पूर्वभाषितः"। भोजनमण्डलं यथा "यातुधानाः पिशाचाश्च असुरा राक्षसास्तथा। घ्नन्ति ते बलमन्नस्य मण्डलस्य विवर्जनात्। आदित्या वसवो रुद्रा ब्रह्मा चैव पितामहः। मण्डलान्युपजीवन्ति तस्मात् कुर्वन्ति मण्डलम्। चतुःकोणं द्विजाग्र्यस्य त्रिकोणं क्षत्रियस्य तु। द्विकोणाकृति वैश्यस्य शूद्रस्य वर्त्तुलं सदा" वह्नि पु०। भोजनशब्दे आह्निकत० वाक्यं दृश्यम्।

व्यूहभेदलक्षणं कामन्दकीये उक्तं यथा "मण्डलोऽसंहतो भोगो दण्डश्चेति मनीषिभिः। कथिताः प्रकृतिव्यूहा भेदास्तेषां प्रकीर्त्तिताः। वसन्तं व्यूहं मतिमान् कार्य्ये स्थाने प्रकल्पयेत्। तिर्य्यग्वृत्तिस्तु दण्डः स्याद्भोगः स्याद् वृत्तिरेव च। प्रदरो दृढकोऽसह्यश्चापो वै तद्विपर्य्ययः। प्रतिष्ठः सुप्रतिष्ठश्च श्येनौ विजयसञ्जयौ। विशालविजयः सूची स्थूणाकर्णश्च मूसुखः। सर्पास्यो वलयश्चैव दण्डभेदाः सुदुर्जयाः। अतिक्रान्तः प्रतिक्रान्तः कक्षाभ्याञ्चैकपक्षतः। अतिक्रान्तश्च पक्षाभ्यां ततोऽन्यस्तु विपर्य्ययः। स्थूणापक्षो धनुःपक्षो द्विस्थूणो दण्ड ऊर्ध्वगः। द्विगुणान्तस्त्वतिक्रान्तपक्षोऽन्योऽस्य विपर्य्ययः। द्विचतुर्दण्ड इत्येवं ज्ञेयो लक्षणतः क्रमात्। गोमूत्रिकाऽहिसञ्चारी शकटो मकरस्तथा। भोगभेदाः समाख्यातास्तथा परिपतन्तकः। दण्डपक्षो युगोरस्यः शकटस्तद्विपर्य्ययः। मकरो व्यत्ययेनैव शेषः कुञ्जरराजिभिः। मण्डलव्यूहभेदौ च सर्वतोभद्रदुर्जयौ। अष्टानीको द्वितीयस्तु प्रथमः सर्वतोमुखः। अर्द्धचन्द्रक उद्धारो वज्रभेदास्त्वसंहताः। तथा कर्कटशृङ्गी च काकपादी च गोधिका। त्रिचतुःपञ्चसैन्यानां ज्ञेया आकारभेदतः। इति व्यूहाः समाख्याता व्यूहभेदप्रयोक्तृभिः। एते सप्तदश प्रोक्ता दण्डव्यूहाश्च पञ्चधा। तथा व्यूहद्वयञ्चैव मण्डलस्य प्रयोक्तृभिः। असंहतास्तु षड्व्यूहा भोगव्यूहाश्च पञ्चधा। व्यूहा एते प्रयोक्तव्याः युद्धकाले उपस्थिते।" [भ्रमणरूपे नृत्ये शब्दमाला।

मण्डलनृत्य न० मण्डलाकारेण नृत्यम्। चक्राकारेण परि-

मण्डलपत्रिका स्त्री मण्डलाकारं पत्रमस्याः। रक्तपुनर्णवायाम् राजनि०।

मण्डलपुच्छक पु० कीटभेदे सुश्रुतः कीटशब्दे दृश्यम्।

मण्डलब्राह्मण न० शत०ब्रा०१०अध्याये पठिते "यदेतन्मण्डलं तपतीत्यादिके" ब्राह्मणे मण्डलाध्यायोऽयम्।

**मण्डलाग्र** पु॰ मण्डलं इवाग्रमस्य । खड्गभेदे अमर॰ ।

**मण्डलाधिप** पु॰ ६त॰ । मण्डलेश्वरे नृपभेदे चतुर्योजन-पर्य्यन्तो ह्यधिकारो नृपस्य च । यो राजा तच्छतगुण स एव मण्डलेश्वर "ब्रह्मवै॰जन्म॰खं॰८६अ॰ । मण्डलाधीश मण्डलेश्वरादयोऽप्यत्र । [शब्दर॰ ।

**मण्डलाकृत** त्रि॰ मण्डल+कृ कर्त्तरि क्त । वर्त्तुलाकारे

**मण्डलिन्** पु॰ मण्डलं कुण्डलनमस्त्यस्य इनि । १सर्पे २वि-डाले शब्दमाला । ३नाकुले (गन्धनकुल) हेमच॰ । ४वट-वृक्षे त्रिका॰ ५गोनससर्पे च राजनि॰ ।

**मण्डहारक** पु॰मण्ड हरति हृ-ण्वुल् । शौण्डिके अमरः

**मण्डा** स्त्री मण्ड कारणत्वेनास्त्यस्या अच् । सुरायां हारा॰ मडि—अच् टाप् । २आमलक्यां मेदि॰ ।

**मण्डित** त्रि॰ मडि-क्त । १भूषिते २बौद्धभेदे पु॰ हेमच॰ ।

**मण्डु** पु॰ ऋषिभेदे तस्यापत्यं गर्गा॰ यञ् । माण्डव्य तद-पत्ये ऋषिभेदे ।

**मण्डूक** पुंस्त्री॰ मण्डयति वर्षासमयम् मडि—ऊक । १भेके अमर स्त्रियां जातित्वात् ङीष् । २शोणके ३मुनिभेदे च पु॰मेदि॰ ४बन्धभेदे चिन्ता॰ । ५नाटकेतले त्रि॰शब्दर॰ ।

**मण्डूकपर्ण** पु॰ मण्डूक इव पर्णमस्य । १श्योनाके अमर २शोणके मेदि॰ । ३मञ्जिष्ठायां-स्त्री टाप् ङीप् वा । ४ब्राह्म्यां (वामनहाटि) ५ओषधिभेदे(थुलकुडी) रत्नमा॰ । स्त्री ङीप् मेदि॰ । ६आदित्यभक्तायां स्त्री ङीप् राजनि॰ । स्वार्थे क । मण्डूकपर्णिका तत्रार्थे "मण्डूकपर्णिका शीता स्वादुपाका सरा हिमा" । "मण्डूकपर्णिका शीता रूचा वातविबन्धकृत्" राजवल्लभ ।

**मण्डूकमाता** स्त्री मण्डूकस्य मातेव पोषकत्वात् । ब्राह्म्या (वामनहाटी) राजनि॰ । [सरोवरभेदे अमर ।

**मण्डूकसरस** न॰ मण्डूकप्रचुरं सरः जातौ अच्समा॰ ।

**मण्डूर** न॰ मडि—ऊरच् । लोहमले अमर ।

**मण्डूरवज्र** पु॰ चक्रदत्तोक्ते वज्रकभेदे

"पञ्चकोलं समरिचं देवदारु फलत्रिकम् । विडङ्ग-मुस्तयुक्ताश्च भागास्त्रिपलसम्मिता । यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः । पक्त्वा चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् । ततोऽक्षमात्रान् गुडकान् पिबेत् तक्रेण तक्रभुक् । पाण्डुरोगं जयत्येष मन्दाग्नित्व मरोचकम् । अर्शांसि ग्रहणीदोषमूरुस्तम्भमथापि वा । क्रिमिं प्लीहानमुदरं गररोगञ्च नाशयेत् । मण्डूरवज्र नामाय रोगाणीकविनाशनः ।"

**मण्डूरवटक** पु॰ चक्रदत्तोक्ते मण्डूरादिघटिते वटकभेदे "त्र्यूषणं त्रिफलामुस्तं विडङ्गं चव्यचित्रकौ । दार्वी त्व-गमाक्षिको धातुर्ग्रन्थिकं देवदारु च । एषां द्विपलि-कान् भागाञ्चूर्णं कृत्वा पृथक् पृथक् । मण्डूरं द्विगुणं चूर्णं शुद्धमञ्जनसन्निभम् । मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत् ततः । उदुम्बरसमान् कुर्य्याद्वटका-स्तान् यथाग्नितः । उपयुञ्जीत तक्रेण साक्रं जीर्णे च भोजनम् । मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् । कुष्ठान्यजरक शोथमूरुस्तम्भकफा-मयान् । अर्शांसि कामलां मेहान् प्लीहानं शाम-यन्ति ते । पाण्डुयन्त्यष्टगुणित मूत्र मण्डूरचूर्णत॰ ।"

**मण्डोदक** न॰ मण्ड इवोदकं यत्र । १चातुर्य्ये (चालियोना) २चित्तरागे ३चित्तयर्ये मेदि॰ । सुश्रुतोक्ते सुराकल्पान्त-र्गतक्वाथभेदे "वैरेचनिकमूलानां क्वाथे माषान् सुभावि-तान् । सुधौतांस्तत्कषायेण शालीनाञ्चापि तण्डुलान् । अवक्षुद्यैकतः पिण्डान् कृत्वा शुष्कान् सुचूर्णितान् । गालितस्य कषायस्य तत्कषायोष्णसाधितम् । तस्य पिष्टय भागांस्त्रीन् किण्वभागविमिश्रितान् । मण्डोदकार्थे क्वाथस्य दद्यात्तत् सर्वमेकत॰ । निदध्यात् कलसे तान्तु सुरा जातरसां पिबेत् । एष एव सुराकल्पो वसनेष्वपि कीर्त्तित॰ ।"

**मत** त्रि॰ मन-क्त । १सम्मते २अभिमते ३ज्ञाते ४अर्च्चिते च । भावे क्त । ५समातौ ६अभिप्राये ७ज्ञाने ८उपचारे न॰ । ९समीकृते त्रि॰ मत्यशब्दे दृश्यम् । तत ऋश्या॰ चतु-रर्थ्यां क । मतक तत्समीपादौ त्रि॰ । स्वार्थे क । मत शब्दार्थे ।

**मतङ्ग** पु॰ माद्यति अनेन मद-अङ्गच् दस्य तः । १मेघे उणा॰ दिकोषः । २मुनिभेदे भा॰ अ॰ ८४॰ । ३दानवभेदे हरिवं॰ २४२ अ॰ । ४राजर्षिभेदे भा॰ ७१ अ॰ । ब्राह्मण्यां नापितेन जाते ५चण्डालभेदे च तत्कथा भा॰ आनु॰ २९ अ॰ ।

**मतङ्गज** पुस्त्री॰ मतङ्गः मेघ इव जायते जन-ड । १गजे अमर तस्य मेघजातित्वात् तथात्वम् । स्त्रियां ङीष् । ग्रीष्मे गजानामूष्मणा कुष्ठादिरोगो भवति यथोक्तं कामन्द॰ "घृते त्यक्तो ग्रीष्मतताद् प्रतापाज्जनयन्ति कुष्ठानि मतङ्गजानाम् । स्नानक्रियायामपि कुञ्जराणामूष्मा शरीरेष्वभिजायतीति । छायाप्रयोगेन हि वारणाः प्रबद्ध हन्ति द्विरदान् प्रतापः । यानीह वस्त्राणि

चकूटकाले विनाम्बुना यान्ति परामवस्थाम्। अम्बष्ठ-कुण्डप्रवितप्रकाया' प्रयान्ति सद्यः करिणोऽपि वन्त'।"

**मतङ्गवापी** स्त्री तीर्थभेदे भा° अनु° २° अ°।

**मतल्ल** पु° पार्श्वस्थे आम्रफलाकृतियुक्ते अ°१°।१६४।२भा°

**मतल्लिका** स्त्री मत मतिमल्लति भूषयति अच् ल प्रपो°। प्रशस्ते अमर। अव्ययत्वद्योऽयमित्यके नियतलिङ्गोऽयम् सि°कौ°।

**मतानुज्ञा** स्त्री निग्रहस्थानभेदे गौ°सू° तल्लक्षणमुक्तं यथा "स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञा" "यः परेण चोदित दोष स्वपक्षेऽभ्युपगम्यानुद्धृत्य वदति भवत्पक्षे समानो दोष इति स स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषं प्रसञ्जयन् परमतमनुजानातीति मतानुज्ञा नाम निग्रहस्थानमापद्यते" भा°।

**मति** स्त्री मन-भावे क्तिन्। १ज्ञाने अमर। २इच्छायां ३स्मृतौ च। कर्त्तरि क्तिच्। ४अर्च्ये मेदि° ५शाकभेदे शब्दच°। ६मेधाविनि निघण्टुः। ७मतिकरौषध गरु° १६८अ° उक्त यथा "पाठा हे जीरके शुण्ठमज्जगन्धाजमोदकम्। वचाचित्रकटुकवैव वचस्य चूर्णमुत्तमम्। आर्द्रकरसे भावितञ्च सर्पिर्मधुसमन्वितम्। सप्ताहभक्षितं कुर्यान्मदेश्वर्यं मतिं पराम्।"

**मतिदा** स्त्री मतिं ददाति दा-क। १ज्योतिष्मतीलतायाम् (लिपडी) राजनि°। दा—क। २बुद्धिदातरि त्रि°।

**मतिनार** पु° नृपभेदे भा° आ° ६४अ°।

**मतिभ्रम** पु°मतेर्भ्रम अयथार्थविषयत्वेन भ्रमणम्। १बुद्धिभ्रंशे भ्रान्तौ अमर.। भ्रम-भावे क्तिन्। मतिभ्रान्तिरप्यत्र स्त्री। [मतिभ्रंशादयोऽप्यत्र।

**मतिविभ्रम** पु° मतेर्विभ्रमोऽत्र। उन्मादरोगे र त्न° नं°।

**मतुख** त्रि° १मतगायके आ°८।७१।५। २मेधाविनि निघ°।

**मत्क** पु° मद-क्विप् स्वार्थे क। १मत्कुणे (छारपोका) ममेदम् कन् मदादेश। २मत्सम्बन्धिनि "मैतन्मतं मत्कमिति ब्रुवाणः" भट्टिः।

**मत्कुण** पु° मद—क्विप् कुणति कुण-अच् कर्म°। १कीटभेदे (छारपोका) राजनि°। २निर्दन्तगजे ३श्मश्रुशून्यपुरुषे ४नारिकेले मेदि°। ५जङ्घात्राणे हेम°। ६अजातलोमभगायां स्त्रियां स्त्री शब्दर°।

**मत्कुणारि** पु° ६त°। (सिद्धि) भङ्गायां शब्दमाला। तद्भक्षणेन हि तन्नाशः।

**मत्कुणिका** स्त्री कुमारानुचरमातृभेदे भा° श° १७अ°।

**मत्त** पु° मद—क्त। १दुर्मदे गजे अमरः। २क्षीबे ३मदयुक्ते ४हृष्टे च त्रि°। ५धुस्तूरे ६कोकिले ७महिषे पु° राजनि° मत्तं मदोऽस्त्यस्याम् अच्। ८मदिरायां स्त्री राजनि°। "ज्ञेया मत्ता भभनगयुता" वृ° र° उक्ते ६दशाक्षरपादके छन्दोभेदे स्त्री।

**मत्तकाशि(सि)नी** स्त्री मत्तेव क्षीबेव काशते कसति गच्छति वा णिनि पृषो° नुम्व। उत्तमयोषिति अमर.।

**मत्तकीश** पु° मत्तः कीश इव। गजे शब्दमा° स्त्रियां जातित्वात् ङीष्।

**मत्तमयूर** पु° मत्तो मयूरो यस्मात्। १मेघे "वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरम्" वृ° र° उक्ते त्रयोदशाक्षरपादके २छन्दोभेदे च।

**मत्तवारण** पु°कर्म°। १मत्तहस्तिनि। मत्तं वारयति वृ-णिच् ल्यु। २प्रासादवरण्डे न° (बारण्डा) हेमच°। ३पूगचूर्णे शब्दमा°।

**मत्ताक्रीडा** स्त्री "मत्ताक्रीडा मौ त्नौ भौ नलगिति भवति वसुशरदशयतियुता" वृ° र° उक्ते त्रयोविंशत्यक्षरपादके छन्दोभेदे। [(बारण्डा) प्रासादवरण्डे हेमच°।

**मत्तालम्ब** पु° मत्तैरालम्ब्यते आ+लबि—कर्मणि घञ्।

**मत्तेभविक्रीडित** न°"सभरा न्मौ यलगास्त्रयोदशयतिर्मत्तेभविक्रीडितम्" वृ° र° टी° उक्ते एकविंशत्यक्षरपादके १छन्दोभेदे। ६त°। २मत्तगजक्रीडायाञ्च।

**मत्य** न° मते समीकरणे साधु यत्। कृष्टक्षेत्रस्य समीकरणसाधने १फलकभेदे (मइ) "सप्तास्थितेन मत्येन मतीकरोति" ताण्ड्य°ब्रा°२।६।२। "यथा लोके सप्तास्थितेन सप्तभिरनडुद्भिः सप्तभिर्नीयमाने महद्भिर्वा अधिष्ठितेन मत्येन मत्यनाम लगुडस्य स्थलस्य समीकरणादिसाधन फलकम्। तेन मतीकरोति समीकरणार्थं कर्षकः प्रव्रजति क्षेत्रम्" भा° २द्वादशादिसहतौ हेम°। [मन्त्रत।

**मत्र** गुप्तभाषणे चु° आ° सक° सेट् इदित्। मन्त्रयते अम-

**मत्स** पुंस्त्री° मद—स। मत्स्ये उज्ज्व°।

**मत्सगण्ड** पु° मत्सेन गण्डो लेपोऽत्र (माछेरघण्ट) व्य-ञ्जनभेदे शब्दच°।

**मत्सर** पु° मद-सरन्। १अन्यशुभद्वेषे परसम्पत्त्यसहने २क्रोधे च ३तद्वति ४कृपणे च त्रि° अमरः। ५कीटभेदे मक्षिकायां स्त्री त्रिक°। मत्सरस्य "निन्दन्ति मां सदा लोका धिगस्तु मम जीवनम्। इत्यात्मनि भवेद्यस्तु धिक्कारः स च मत्सर." क्रिया-

योगशारीरम्’ ।“स्वप्रयोजनप्रतिसन्धानं विना पराभिमतनिवारणेच्छा ।” गौ० सू० उक्तश्च बोध्यः ।

**मत्स्य** पु० मद–स्यन् । (माछ) १मीने २जलचरभेदे स्त्रियां ङीष् यलोपः मत्सी । तद्भेदगुणादि भावप्र०उक्तं यथा तत्र मत्स्येषु रोहितस्य “रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षतिः । कृष्णपुच्छो भागश्रेष्ठो रोहित कथितो बुधैः । रोहितः सर्वमत्स्यानां वरो वृष्योऽर्दितार्त्तिजित् । कषायानुरसः स्वादुर्वातघ्नो नातिपित्तकृत् । ऊर्ध्वजत्रुगतान् रोगान् हन्याद्रोहितमुण्डकम् ।” (चितल्या) “चितल्यः श्लेष्मलो बल्यो विपाके मधुरो गुरुः । वातपित्तहरो हृद्य आमवातकरश्च सः ।” (अथ भांगन) “भङ्कुरो मधुरः शीतो वृष्यः श्लेष्मकरो गुरुः । विष्टम्भजनकश्चापि रक्तपित्तहरः स्मृतः”। (मोमाचिका) “मोचिका वातहृद्बल्या बृंहणी मधुरा गुरुः । पित्तहृत् कफकृद्रुच्या वृष्या दीप्ताग्नये हिता । (बोदाल) “पाठीनः श्लेष्मलो बल्यो निद्रालुः पिशिताशनः । दूषयेद्रुधिरं पित्तकुष्ठरोगं करोति च ।” (अथ शीङ्गी) “शृङ्गी तु वातशमनी स्निग्धा श्लेष्मप्रकोपणी । रसे तिक्ता कषाया च लघ्वी रुच्या स्मृता बुधैः ।” (अथ कौलस) “कवयी मधुरः स्निग्धो रोचनो वह्निवर्द्धनः । पित्तहृत्कफकृत्किञ्चिल्लघुर्बल्योऽनिलापहः।” (अथ शौल) “शल्कुली ग्राहिणी हृद्या मधुरा तु वरा स्मृता ।” अथ (गर्गरा) “गर्गरः पित्तलः किञ्चिद्वातजित् कफकोपनः ।” अथ (कवइ) “कविका मधुरा स्निग्धा कफघ्नी रुचिकारिणी । किञ्चित्पित्तकरी वातनाशिनी वह्निवर्द्धिनी ।” अथ-(वर्मी) “वर्मिमत्स्यो हरेद्वातं पित्तं रुचिकरो लघुः ।” अथ (दण्डारी) “दण्डमत्स्यो रसे तिक्तः पित्तरक्तं कफं हरेत् । वातसाधारणः प्रोक्तः शुक्रलो बलवर्द्धनः ।” (अथ आड़ि) “एरङ्गी मधुरः स्निग्धो विष्टम्भी शीतलो लघुः ।” (अथ पावता) “महाशफरसंज्ञस्तु तिक्तः पित्तकफापहः । शिशिरो मधुरो रुच्यो वातसाधारणः स्मृतः ।” अथ (गरइ) “गरई मधुरा तिक्ता तुवरा वातपित्तहृत् । कफघ्नी रुचिकृल्लघ्वी दीपनी बलवीर्यकृत् ।” अथ (मागुर) “मद्गुरो वातहृद्बल्यो वृष्यः कफकरो लघुः ।” अथ टेङ्गरा “वपादमत्स्यो भेधाकृत् श्लेष्मलयकरश्च सः । वातपित्तकरश्चापि रुचिकृत् परमो मतः ।” अथ शफरी (पोठी) “प्रोष्ठी तिक्ता कटुः स्वादुः शुक्रघ्नी कफवातजित् । स्निग्धास्य-कण्ठरोगघ्नी रोचनी च लघुः स्मृता ।” अथ क्षुद्रमत्स्याः “क्षुद्रा मत्स्याः स्वादुरसाः दोषत्रयविनाशनाः । लघुपाका रुचिकरा बलदास्ते हिता मताः ।” अथातिक्षुद्रमत्स्याः “अतिसूक्ष्माः पुंस्त्वहरा रुच्याः कासानिलापहाः ।” अथ मत्स्याण्ड “मत्स्यगर्भो भृशं वृष्यः स्निग्धः पुष्टिकरो लघुः । कफमेहप्रदो बल्यो ग्लानिकृन्मेहनाशनः ।” अथ (शुकटी) “शुष्कमत्स्या नवा बल्या दुर्जरा विड्विबन्धिनः ।” अथ दग्धमत्स्याः “दग्धमत्स्यो गुणैः श्रेष्ठः पुष्टिकृद्बलवर्द्धनः ।” अथ कूपजादिमत्स्यगुणाः “कौपमत्स्या मूत्रकृच्छ्रगुल्मश्लेष्मविवर्द्धनाः । सरोजा मधुराः स्निग्धा बल्या वातविनाशनाः । नादेया बृंहणा मत्स्या गुरवोऽनिलनाशनाः । रक्तपित्तकरा वृष्याः स्निग्धोष्णाः स्वल्पवर्चसः । चौञ्जा पित्तकराः स्निग्धा मधुरा लघवो हिमाः । ताडागा गुरवो वृष्याः शीतला बलमूत्रदाः । ताडागाश्चिप्रजाता बलायुर्मतिवर्द्धकराः ।” अथर्त्तुविशेषे मत्स्यविशेषगुणाः “हेमन्ते कूपजा मत्स्याः शिशिरे सारसा हिताः । वसन्ते ते तु नादेया ग्रीष्मे चौञ्जभवास्तथा । तडागजाता वर्षासु ताम्रपथ्या नदीभवाः । नैर्झराः शरदि श्रेष्ठा विशेषोऽयमुदाहृतः ।” तद्भक्षणनिषेधादिकम्

“यो यस्य मांसमश्नाति स तन्मांसाद उच्यते । मत्स्यादः सर्वमांसादस्तस्मान्मत्स्यान् विवर्जयेत्” मनु ।

“जलस्थलचरा ये च प्राणिनस्तान् मृतानपि । न भक्षेत् मानवो धामी हत्वा तेषां भवेन्नहि । हत्वा हत्वा तु मत्स्याशी सर्वथा यो विशेषतः । मांसादः प्राणिनां सोऽपि तस्मात् मत्स्यं परित्यजेत्” । पाद्मोत्तरखण्डे १०५ अ० । वर्जनीया मत्स्या यथा । “शृणु देवि । प्रवक्ष्यामि मांसभेदान् निशोध मे । नादेयं तिक्तकमठं पशुं शल्लिणमेव च । गोमीनं चक्रशकुलं यडालं राघवं तथा । वामीनं चलकर्णश्च सचक्रं चेङ्गमेव च । भूविलस्थानिरुद्धस्थं गाङ्गेयानि विवर्जयेत्” मत्स्यसूक्तमहातन्त्रम् । रविवारे मत्स्यभक्षणे निषेधो यथा “आमिषं रक्तशाकञ्च यो भुङ्क्ते च रवेर्दिने । सप्तजन्म भवेत् कुष्ठी दरिद्रश्चोपजायते” भविष्यपु० । “माषमामिषमासञ्च मसूरं निम्बपत्रकम् । भक्षयेद्यो रवेर्वारे सप्तजन्मान्यपुत्रकः” ति० त० । कार्त्तिके मत्स्यभक्षणनिषेधो यथा “न मत्स्यं भक्षयेन्मांसं न कौर्म्यं

नान्यदेव हि । चण्डालो जायते राजन् । कार्त्तिके मासभक्षणात्" नारदीयपु० । माघवैशाखयोर्विशेष्य ब्रह्मचर्य्यविधानात् मत्स्यभक्षणं नितरां निषिद्धमिति ज्ञातव्यम् । "नाभक्ष्यं नैवेद्यार्थे भक्ष्येष्वप्यजामहिषी क्षीरं वर्जयेत् पञ्चनखमत्स्यवराहमांसानि च" इत्याह्नि०त० विष्णुसूत्रम् । अमातिथौ मत्स्यभक्षणनिषेधो यथा "आमिषं कलहं हिंसा पर्व्वस्वपि विवर्ज्जयेत्"। "भुङ्क्ते यस्तु निरामिषं स हि भवेज्जन्मान्तरे पण्डितः" ति०त०। गौडस्य मत्स्यभक्षणनिषेधो यथा

"क्व मद्यं क्व शिवे भक्तिः क्व मांसं क्व शिवार्च्चनम् ।
मत्स्यमांसरतानां वै दूरे तिष्ठति शङ्करः" काशीख० ।

विन्ध्यपर्व्वतस्य पश्चिमे मत्स्यभक्षणनिषेधो यथा

"विन्ध्यस्य पश्चिमे भागे मत्स्यभुक् पतितो नरः"

पुराणम् । कामतो मत्स्यभक्षणप्रायश्चित्तं यथा "मत्स्यांस्तु कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्" इत्यादि [illegible] प्रा०वि०। मत्स्यभक्षणनिषेधे प्रतिप्रसवो यथा "मत्स्यान् सशल्कान् भुञ्जीत मांसं रौरवमेव च । निवेद्य देवताभ्यश्च ब्राह्मणेभ्यश्च नान्यथा । शफरं सिंहतुण्डञ्च तथा पाठीनरोहितौ । मत्स्याश्चैते समुद्दिष्टा भक्ष्यार्थं तपोधनैः । प्रोक्षितं भक्षयेदेषां मांसञ्च द्विजकाम्यया । यथाविधि नियुक्तश्च प्राणानामपि चात्यये" कौर्म्मे पु० १६ अ० । "पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः । राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्व्वशः" मनुः । "अनिवेद्य न भोक्तव्यं मत्स्यं मांसञ्च यद्भवेत् । अन्नं विना यथा भक्तं यद्विष्णोरनिवेदितम्" आ०त० । प्रेतश्राद्धे मत्स्यदानविधिर्यथा "सपिण्डीकरणं यावत् प्रेतश्राद्धानि षोडश । पक्वान्नेनैव कर्त्तव्यं सामिषेण द्विजातिभिः" श्राद्ध०त० । २ विराटदेशे पुं० सोऽभिजनोऽस्य तस्य राजा वा अण् । मात्स्य पित्रादिक्रमेण तद्देशवासिनि तस्य नृपे च बहुषु अणो लुक् । तद्देशवासिषु ब० व० । ३ मेषादितो द्वादशराशौ मीनराशौ, ४ भगवतः प्रथमावतारे तत्कथा मत्स्यपु० १ अ० । भा० व० १८७ अ० च । मत्स्यं [illegible] कतो यत्र अत । मात्स्य [illegible] पुराणभेदे तत्प्रतिपाद्यविषया: तत्रैव २९० अ० यथा यथा "[illegible] एतद् कथितं सर्वं [illegible] [illegible] पुराणमखिलं [illegible] । [illegible]

शारीरकं प्रोक्तं चतुर्मुखमुखोद्गतम् । देवासुराणां सदुत्पत्तिर्मारुतोत्पत्तिरेव च । मदनद्वादशी तद्वल्लोकपालाभिपूजनम् । मन्वन्तराणामुद्देशो वैन्यराज्याभिवर्णनम् । सूर्य्यवैवस्वतोत्पत्तिर्बुधस्यागमनं तथा । पितृवंशानुकथनं श्राद्धकालस्तथैव च । पितृतीर्थप्रवासश्च सोमोत्पत्तिस्तथैव च । कीर्त्तनं सोमवंशस्य ययातिचरितं तथा । कार्त्तवीर्य्यस्य माहात्म्यं वृष्णिवंशानुकीर्त्तनम् । भृगुशापस्तथा विष्णोर्दैत्यशापस्तथैव च । कीर्त्तनं पुरुवंशस्य वंशो हौताशनस्तथा । पुराणकीर्त्तनं तद्वत् क्रियायोगस्तथैव च । व्रतं नक्षत्रसंख्याकं मार्त्तण्डशयनं तथा । कृष्णाष्टमीव्रतं तद्वद्रोहिणीचन्द्रसंज्ञितम् । तडागविधिमाहात्म्यं पादपोत्सर्ग एव च । सौभाग्यशयनं तद्वदगस्त्यव्रतमेव च । तथानन्ततृतीया तु रसकल्याणिनी तथा । आर्द्रानन्दकरी तद्वद् व्रतं सारस्वतं पुनः । उपरागाभिषेकश्च सप्तमीस्नपनं पुनः । भीमाख्या द्वादशी तद्वदनङ्गशयनं तथा । अशून्यशयनं तद्वत्तथैवाङ्गारकव्रतम् । सप्तमीसप्तकं तद्वद्विशोकद्वादशी तथा । मेरुप्रदानं दशधा ग्रहशान्तिस्तथैव च । ग्रहस्वरूपकथनं तथा शिवचतुर्द्दशी । तथा सर्व्वफलत्यागः सूर्य्यवारव्रतं तथा । सङ्क्रान्तिस्नपनं तद्वद्विभूतिद्वादशीव्रतम् । षष्टिव्रतानां माहात्म्यं तथा स्नानविधिक्रमः । प्रयागस्य तु माहात्म्यं सर्व्वतीर्थानुकीर्त्तनम् । पैलाश्रमफलं तद्वद्द्वीपलोकानुकीर्त्तनम् । तथान्तरिक्षचारश्च ध्रुवमाहात्म्यमेव च । भवनानि सुरेन्द्राणां त्रिपुरायोधनं तथा । पितृपिण्डदमाहात्म्यं मन्वन्तरविनिर्णयः । वज्राङ्गस्य तु सम्भूतिस्तारकोत्पत्तिरेव च । तारकासुरमाहात्म्यं ब्रह्मदेवानुकीर्त्तनम् । पार्व्वतीसम्भवस्तद्वत् तथा शिवतपोवनम् । अनङ्गदेहदाहश्च रतिशोकस्तथैव च । गौरीतपोवनं तद्वद्विश्वनाथप्रसादनम् । पार्व्वतीऋषिसंवादस्तथैवोद्वाहमङ्गलम् । कुमारसम्भवस्तद्वत् कुमारविजयस्तथा । तारकस्य वधो घोरो नरसिंहोपवर्णनम् । पद्मोद्भवविसर्गस्तु तथैवान्धकघातनम् । वाराणस्यास्तु माहात्म्यं नर्म्मदायास्तथैव च । प्रवरानुक्रमस्तद्वत् पितृगाथानुकीर्त्तनम् । तथोभयमुखीदानं [illegible] कृष्णाजिनस्य च । तथा सावित्र्युपाख्यानं राजधर्म्मा: [illegible] [illegible] दानमहाकल्पं [illegible] [illegible] माहात्म्यं [illegible]

क्षीरोदमथनं तद्वत् कालकूटाभिशाधनम् । प्रासाद-कल्पश्च तदनुमत्स्यपुराणान्तु समाप्यते । पुरुषमेध तु समाप्त भविष्यद्राजवर्णनम् । तुलादानादि बहुशो महादानानुकीर्त्तनम् । कल्पानुकीर्त्तनं तद्वद् ग्रन्थानुक्रमणी तथा । एततपवित्रमायुष्यमेतत् कीर्त्तिविवर्धनम् । एतत् पवित्रं कल्याणं महापापहरं शुभम् । अस्मात् पुराणादपि पादमेकं पठेत्तु यः सोऽपि विमुक्तपापः । नारायणाख्यं पदमेति नूनमनङ्गवद्दिव्यसुखानि भुङ्क्ते ।"

तद्दानविधि मत्स्यपु० "श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दन । मत्स्यरूपी च मनवे नरसिंहोपवर्णनम् । अधिकृत्याब्रवीत् सप्तकल्पवृत्तमनुमता" ।। तन्मासमिति जानीध्वं सहस्राणि चतुर्दश । विषुवे हेममत्स्येन धेन्वा चैव समन्वितम् । यो दद्यात् पृथिवी तेन दत्ता भवति चाखिला" ।

**मत्स्यकरण्डिका** स्त्री मत्स्यानां करण्डिकेवाधारः । (खालुइ) मत्स्यरक्षणाधारे पात्रभेदे जटा० ।

**मत्स्यगन्धा** स्त्री मत्स्यस्येव गन्धोऽस्याः ।१व्यासमातरि सत्यवत्याम् भा० आ० ६३अ० । २जलपिप्पल्याञ्च जटा० ।

**मत्स्यघण्ट** पु० घनामख्याते व्यञ्जनभेदे शब्दच० ।

**मत्स्यजाल** न० मत्स्यधारणं जालम् शा०त० । मत्स्यधारणार्थे जालभेदे हेमच० ।

**मत्स्यजीविन्** पु० मत्स्येन तद्धारणविक्रयादिना जीवति जीव-णिनि । निषादे "मत्स्यघातो निषादानाम्" मनुना तस्य तज्जीविकोक्तेस्तस्य तथात्वम् ।

**मत्स्यण्डी** स्त्री (राव) ख्याते गुडविकारभेदे भावप्र० "इक्षो रसो यः संपक्वो घनः किञ्चिद्द्रवान्वितः । मन्दवत् स्यन्दते यस्मान्मत्स्यण्डीति निगद्यते" । अस्या गुणाः "मत्स्यण्डी भेदिनी बल्या बृष्या पित्तानिलापहा । मधुरा तु वृष्या हृद्या रक्तदोषापहा स्मृता" ।

**मत्स्यद्वीप** पु० मत्स्यप्रधानो द्वीपः शा०त० । द्वीपभेदे विष्णुपु० ।

**मत्स्यधानी** स्त्री मत्स्या धीयन्तेऽस्यां धा-आधारे ल्युट् ङीप् । मत्स्यरक्षणाधारे (खालुइ) पात्रभेदे अमरः ।

**मत्स्यनाशन** पु-स्त्री० मत्स्यान् नाशयति ल्यु । १कुररपक्षिणि हेमच० । स्त्रियां जातित्वात् ङीष् एव न । मत्स्यनाशकोऽपि तत्रार्थे हेमचन्द्रः २मीनघातके त्रि० ।

**मत्स्यपित्ता** स्त्री मत्स्यस्य पित्तमिव रसोऽस्त्यस्याः अच् । कटरोहिण्याम् (कट्की) अमरः ।

**मत्स्यबन्धक** त्रि० मत्स्यान् बध्नाति बन्ध-ण्वुल् । १धीवरे । "न्यायाधीश तस्यैव जातो मत्स्यबन्धकः" ब्रह्मपु० वर्णसङ्कीर्णजातिभेदे २धीवरे पुंस्त्री० । स्त्रियां जातित्वात् ङीष् । २यत्न । मत्स्यबन्धिन् तत्रार्थे मत्स्यधान्यां स्त्री ङीप् पूजा० ।

**मत्स्यमुद्रा** पूजाङ्गे मुद्राभेदे

"दक्षपाणिपृष्ठदेशे वामपाणितलं न्यसेत् । अङ्गुष्ठौ चालयेत् सम्यक् मुद्रेयं मत्स्यरूपिणी । मत्स्यमुद्रा च कूर्माख्या लेलिहा मुण्डसञ्ज्ञिका । महायोनिरिति ख्याता सर्वसिद्धिप्रदायिका" तन्त्रसारः ।

"श्यामादौ मत्स्यमुद्रिका । मत्स्यमुद्रलेलिहाख्या मुद्रा साधकेन मता" तन्त्रोक्तम् ।

**मत्स्यरङ्ग** पुंस्त्री० मत्स्ये रजति रञ्ज-कर्त्तरि बाहुलकात् घञ् । (माछराङ्गा) पक्षिभेदे शब्दर० "त्रिभुवनविदितो स्यात् मत्स्यरङ्कः कङ्कः" जटा० । स्त्रियां ङीष् ।

**मत्स्यराज** पु० ६त० । १रोहितमत्स्ये त्रिका० । २विराटनृपे "नगरं मत्स्यराजस्य" भा० व० ७२ अ० । तस्य मत्स्यदेशाधिपत्यात् तथात्वम् ।

**मत्स्यविन्ना** स्त्री विद-लाभे क्त मत्स्यो मत्स्यरूपो विन्ना यया तदुत्पत्तिकत्वात् । कटुम्यां वैद्यकम् ।

**मत्स्यवेधन** न० मत्स्यो विध्यतेऽनेन विध-करणे ल्युट् । १वडिशे अमरः स्त्रीत्वमपि जटा० ङीप् । कर्त्तरि ल्यु । २मद्गुपक्षिणि (पानकौडि) स्त्री जटा० ।

**मत्स्यसन्तानिक** पु० व्यञ्जनभेदे "दध्नाऽङ्गारे समस्यो वेसवारैरुपस्कृत । सार्द्रक कटुतैलेन मत्स्यसन्तानिको भवेत्" शब्दच० ।

**मत्स्याची** स्त्री मत्स्यस्याक्षीवाकारोऽस्त्यस्याः अच् समा० ङीप् । १गण्डदूर्वायां राजनि० २सोमवल्लयाम् ३हिलमोचिकायाम् ४ब्राह्मीशाके रत्नमाला ।

**मत्स्याङ्गी** स्त्री मत्स्य तत्पित्तमिवाङ्गं तिक्तत्वात् अस्याः ङीष् । हिलमोचिकायाम् त्रिका० ।

**मत्स्यादनी** स्त्री मत्स्य इवाद्यते आस्वाद्यते अद-कर्मणि ल्युट् । जलपिप्पल्याम् राजनि० ।

**मत्स्याशन** पुस्त्री० मत्स्यमश्नाति अश-ल्यु । (माछराङ्गा) खगे त्रिका० स्त्रियां ङीप् ।

**मत्स्यासन** न० रुद्रयामलोक्ते आसनभेदे "अथ मत्स्यासनं पृष्ठे फणोपरिकराङ्घ्रिः । पादद्वयबन्धनेन मुद्राकुम्भस्य बोधनम्" ।

**मत्स्योदरी** स्त्री मत्स्यगन्धयुक्तमुदरमस्याः । १व्यासमातरि मत्स्यगन्धायां २काशीस्थे तीर्थभेदे च काशी० ६९ अ० "दुर्गाणि तैः कृतानीह सप्त स्वर्गसमानि च । महाराणि बध्वान्यपि कवाटविकटानि च । कोटिकोटिभटाढ्यानि सर्वर्द्धिर्बहितान्यपि । ततः शैवमहादुर्गैः तैः काशी परितः कृतम् । परिखा च कृतानिन्द्रा मत्स्योदर्या जलान्विता । मत्स्योदरी द्विधा जाता बहिरन्तश्चरा पुनः । तस्य तीर्थं महत् ख्यातं मिश्रितं गाङ्गवारिणि । यदा संहारमार्गेण गङ्गाम्भः प्रसरेदिह । तदा मत्स्योदरीतीर्थं लभ्यते पुण्यगौरवात् । सूर्याचन्द्रमसोः पर्वं तदा कोटिगुणं शतम् । सर्वपर्वाणि तत्रैव सर्वतीर्थानि तत्र वै । तत्रैव सर्वलिङ्गानि गङ्गामत्स्योदरी यतः । मत्स्योदर्यान्तु ये स्नाता यत्र कुत्रापि मानवाः । कृतपिण्डप्रदानास्ते न मातुरुदरेशयाः । अधिष्ठानमिदं क्षेत्रं मत्स्याकारत्वमाप्नुयात् । परितः सधुनीशादिसंहारे परितोषदे । मत्स्योदर्यां कृतस्नाना ये नरास्ते नरोत्तमाः । कृत्वापि बहुपापानि नेक्षन्ते भास्करेः पुरीम् । किं स्नात्वा बहुतीर्थेषु किं तप्त्वा दुष्करं तपः । यदि मत्स्योदरीस्नाताः कुतो गर्भभयं ततः । यत्र यत्र हि लिङ्गानि स्वदेवर्षिकृतान्यपि । तत्र मत्स्योदरीं प्राप्य सुस्नातो मोक्षभाजनम् । सन्ति तीर्थान्यनेकानि भूर्भुवःस्वर्गतान्यपि । न समानि परं तानि कोट्यंशेनापि निश्चितम् । इत्थं तीर्थं कृतं तेन विभो ! कैलासवासिना । गणाधिपेन भवतः स्वमङ्गोदारकर्मणा ।"

**मथ** विलोडने भ्वा०पर०सक०सेट् । मथति इदित् अमथीत् ज्वला० वा ण । मथः माथः । इर्दित् चङि न ह्रस्वः ।

**मथ** वधे चक्र०क्र्ये च अक०भ्वा०पर०सेट् इदित् । मन्थति अमन्थीत् मन्थ्यते ।

**मथन** न०मथ-ल्युट् ।१वधे २क्षोभे ३विलोडने च ।"क्षीरोदमथनोद्भूत "चन्द्रस्तवः । ४गणिकारिकावृक्षे पु०रत्नमा० ।

**मथित** न० मथ-क्त । १निर्जलतक्रे २पीडिते ३हते च त्रि० ।

**मथु(थू)रा** स्त्री मथ-उ(ऊ)रच् । स्वनामख्यातायां नगर्याम् । "अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः" काशी०ख० । तन्माहात्म्यं विष्णुपु० ६ अंशे ८अ० । वराहपु०२७अ० । ततः चतुरर्थ्यां वरणा० अण् । माथुर तत्पुर्य्यदूरभवे त्रि० । मथूराप्यत्र द्विरूपको० ।

**मथुरेश** पु० ६त० । श्रीकृष्णे शब्दर० । मथुरानाथादयोऽप्यत्र

**मद** हर्षे दिवा०पर०अक० सेट् शमा० । माद्यति इरित्-अमदत् अमादीत् अमदीत् । ईदित् निष्ठायामनिट् पुषादित्वं तेन अमददित्यप्येवेति पाणिनीयाः । घटा० मदयति ज्वोत् मत्तोऽस्ति । प्र+अनवधाने । [दीत् घटा० मदयति ।

**मद** गर्वे दैन्ये च भ्वा०पर०अक०सेट् । मदति अमादीत्-अम-

**मद** तर्पणे चु०आ०सक०सेट् । मादयते । अमीमदत ।

**मद** जाड्ये स्वप्ने मदे आमोदे स्तुतौ दीप्तौ च यथायथं अक० सक० च भ्वा० आत्म० इदित् । मन्दते अमन्दिष्ट । तत्र स्तुतौ "मन्दमानः सुमन्मभिः" ऋ०१।७।६। "मन्दमानः स्तूयमानः मदि-स्तुतौ कर्मणि यकि प्राप्ते व्यत्ययेन शप्" भा० ।

**मद** पु० मद अच् । १हस्तिगण्डादिस्रुतजले दानजले अमरः २गर्वे हर्षे ३रेतसि ४मृगमदे मेदि०५मत्ततायाम् हेमच० । ४नदे ५कस्यावकरे वस्तुनि च धरणिः ।

**मदकट** पु० मदेन कटति कट-अच् षण्ढे (षाण्ड) हेमच० ।

**मदकल** त्रि० मदेन कलते कल अच् । १मत्तहस्तिनि मदोत्कटे अमरः । २अव्यक्तशब्दकारिणि त्रि० शब्दरत्ना० । मदेन कलो यस्य । ३मदाव्यक्तभाषिणि त्रि० मेदि० ।

**मदगन्ध** पु० मदस्य हस्तिदानस्येव गन्धोऽस्य । १सप्तच्छदवृक्षे २मदिरायां स्त्री टाप् । ३अतसायां राजनि० ।

**मदघ्नी** स्त्री मदं मदिरामत्ततां हन्ति हन-ट ङीप् । पूतिकायाम् जटा० ।

**मदधार** पु० मदप्रधाना धारा यत्र । पर्वतभेदे भा०स०२९अ० ।

**मदन** पु० मादयत्यनेन मद करणे ल्युट् । १कामदेवे अमरः । २सुरायां हेमच० । ३वसन्ते काले ४सिक्थके ५धुस्तूरे च पु० मेदि० । (मयना) ६वृक्षभेदे रत्नमाला । ७भ्रमरे जटा० मावे ८कषायभेदे हेमच० । ९खदिरवृक्षे शब्दच० १०अङ्कोटवृक्षे ११बकुलवृक्षे (मयनफल) १२वृक्षभेदे च राजनि० । १३आलिङ्गनभेदे कामशास्त्रम् ।

**मदनक** पु० मदयति मद-णिच्-ल्युट् स्वार्थे क । १दमनकवृक्षे राजनि० । [२रोमाञ्चे त्रिका० ।

**मदनकण्टक** पु० मदननिमित्तः कण्टक इव । १सात्त्विके

**मदनकाकुरव** पुंस्त्री० मदनेन हेतुना काकुरवोऽस्य । पारावते स्त्रियां जातित्वात् ङीष् ।

**मदनगृह** न० ६त० । १स्त्रीचिह्नभेदे सुरतगृहादयोऽप्यत्र । २लग्नावधिके सप्तमस्थाने ज्यो० ।

**मदनगोपाल** पु० मदन इव गोपालः । श्रीकृष्णे ।

**मदनचतुर्दशी** स्त्री मदनपूजार्थां चतुर्दशी शा०त० । चैत्रशुक्लचतुर्दश्याम् तत्र दमनकेन मदनपूजाविहितेति तस्यास्तथात्वम् । ति०त० दृश्यम् ।

**मदनत्रयोदशी** स्त्री मदनपूजार्थां त्रयोदशी । चैत्रशुक्लत्रयोदश्याम् ति०त० दृश्यम् । [मत्स्यपु०७अ०

**मदनद्वादशी** स्त्री मदनपूजार्थां द्वादशी । चैत्रशुक्लद्वादश्याम्

**मदनपक्षिन्** पु० मादयति मद-ल्यु कर्म० । खञ्जनखगे शब्दच०

**मदनपाठक** पु० मदनोद्दीपनार्थं पठति पठ-ण्वुल् । स्मरोद्दीपनशब्दकारके कोकिले राजनि० ।

**मदनमोहन** पु० मदनमपि मोहयति सौन्दर्येण मुह-णिच् ल्यु । श्रीकृष्णे ।

**मदनललिता** स्त्री "वेदाङ्गाऽऽङ्कैर्मदनललिता मो भौ नम नया" इ०र० टीकोक्ते षोडशाक्षरपादके छन्दोभेदे ।

**मदनलेख** पु० मदनज्ञापनार्थं लेखः । स्वकीयानुरागज्ञापनार्थे नायकयोः परस्परं प्रति प्रेष्ये लेख्ये पत्रभेदे । यथा शकुन्तलायाम् "तव न जाने हृदयम्" इत्यादि ।

**मदनवीज** न० तन्त्रोक्ते (क्लीम्) इति बीजे

**मदनशलाका** स्त्री मदनोद्दीपिका शलाका तथाभूत शलाकेव वा । १स्मरोद्दीपकौषधे २सारसखगे मेदि० ३कोकिले शब्दर० ।

**मदनसदन** न० ६त० । १स्त्रीचिह्नभेदे । ज्योतिषोक्ते लग्नावधिके २सप्तमे स्थाने च ।

**मदनसारिका** स्त्री मदनोद्दीपिका सारिका शा०त० । (सालिक) पक्षिभेदे जटा० । [धान्यभेदे राजनि० ।

**मदनाग्रक** पु० मदनं मादकमग्रमस्य कप् । कोद्रवे (कोदो)

**मदनाङ्कुश** पु० मदनस्याङ्कुश इव । १पुरुषचिह्ने लिङ्गे त्रिका० २वैद्युनकाले नखाघाते च ।

**मदनायुध** न० ६त० । स्त्रीचिह्ने शब्दच० । [राजनि० ।

**मदनायुस** पु० मदनस्यायुर्यत्र ५बहुव्री० । क्षविकरखुपभेदे

**मदनालय** पु० ६त० । २स्त्रीचिह्ने ज्योतिषोक्ते लग्नावधिके सप्तमस्थाने मदनभवनादयोऽप्यत्र ।

**मदनावस्था** स्त्री मदनकृतावस्था शा०त० । कामिनः स्मरकृते उन्मादादौ दशाभेदे दशाशब्दे दृश्यम् ।

**मदनी** स्त्री माद्यत्यनया मद-ल्युट् ङीप् । १सुरायाम् हारा० २मृगनाभौ ३अतिमुक्तके च राजनि० ।

**मदनेच्छाफल** पु० मदनेच्छां फलति फल-अच् ६त० । राजाम्रे राजनि० ।

**मदनोत्सव** पु० मदननिमित्त उत्सवः । १होलाकोत्सवे २त्रि० । २स्वर्वेश्यायाम् स्त्री शब्दर० ।

**मदप्रयोग** पु० ६त० । गजानां मदोद्गमे त्रिका० । [शब्दच० ।

**मदभञ्जिनी** स्त्री मदं भनक्ति भन्ज-णिनि । शतमूल्याम्

**मदयन्ती** स्त्री मद-णिच्-शतृ गौरा० ङीष् । वनमल्लिकायाम् (काठमल्लिका) राजनि० । स्वार्थे क ह्रस्व । मदयन्तिका तत्रैवार्थे शब्दरत्ना० ।

**मदयित्नु** पु० मद-णिच्-इत्नुच् । १कामदेवे, २मेघे ३शौण्डिके च मेदि० । ४मद्ये न० शब्दर० । ५मादके त्रि० त्रिका० ।

**मदलेखा** स्त्री "मृसौ गः स्यात् मदलेखा" इ०र०उक्ते सप्ताक्षरपादके १छन्दोभेदे ६त० । २गजानां दानवारिपङ्क्तौ

**मदविक्षिप्त** पु० ३त० १मत्तगजे शब्दच० । २मदेन क्षिप्ते त्रि० ।

**मदशाक** पु० मदार्थं शाकमस्य । उपोदक्यां शब्दच० ।

**मदसार** पु० मदं सारयति गमयति सृ णिच् अण् उप०स० । तूलवृक्षे राजनि० ।

**मदस्थल** पु० ६त० । १सुरापाने शब्दरत्ना० । मदस्थानादयोऽप्यत्र । ज्योतिषोक्ते लग्नावधिके २सप्तमस्थाने च ।

**मदहस्तिनी** स्त्री मदेन हस्तिनीव । महाकरञ्जवृक्षे राजनि०

**मदहेतु** पु० ६त० । १मत्तताहेतौ २धातक्यां वैद्यकम् ।

**मदाघ** पु० ऋषिभेदे ततः । उपका० गोत्रप्रत्ययस्य द्वन्द्वे च बहुत्वे च लुक् ।

**मदाढ्य** पु० मदेन मदकारणेन (ताडि) रसेनाढ्यः । १तालवृक्षे राजनि० । २दृश्चिकद्र्वाम् स्त्री शब्दच० । ३मदयुक्ते त्रि० ।

**मदातङ्क** पु० ६त० । मदनजरोगभेदे राजनि० ।

**मदात्यय** पु० ६त० । मदनिमित्ते रोगभेदे तस्य निदानादि चरु०पु० १६० अ० उक्तं दृश्यम् । भावप्र० उक्तन्तु यथा "विषस्य ये गुणा दृष्टाः सन्निपातप्रकोपनाः । त एव मद्ये दृश्यन्ते विषे तु बलवत्तराः । तस्माद्विधिपीतेन तथा मात्राधिकेन च । युक्तेन चाहितैरन्यैरकाले सेवितेन च । मद्येन खलु जायन्ते मदात्ययमुखा गदाः" । अविधिप्रयुक्तं मद्यं विकारान्तरमप्युत्पादयतीत्याह । "निर्भक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यम् । उत्पादयेत् कष्टतमान् विकारानुत्पादयेच्चापि शरीरभेदम्" । एकान्ततो नैरन्तर्येण, विकारान् मदात्ययादीन् । शरीरस्य भेद नाशम् । मदात्ययादीनां हेत्वन्तरमप्याह "क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन । व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि । अत्यम्लभक्ष्यावततोदरेण सा-

जीर्णभुक्तेन तथाऽबलेन। उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान् विकारान्"। तानेव विकारान् विवृणोति। "पानात्ययं परमदं पानाजीर्णमथापि वा"। पानविकारान् विवृणोति। "पानविभ्रमसुग्रञ्च तेषां वक्ष्यामि लक्षणम्। तत्र मदात्ययस्य सामान्यलक्षणमाह "शरीरदुःखं बलवत्प्रमोहो हृदयव्यथा। अरुचिः प्रततं तृष्णा ज्वरः शीतोष्णलक्षणः। शिरःपार्श्वास्थिसन्धीनां वेदना विद्युते तथा। जायतेऽतिबलात् जृम्भास्फुरणं वेपनं श्रमः। उरोविबन्धः कासश्च श्वासो हिक्काप्रजागरः। शरीरकम्पः कर्णाक्षिमुखरोगास्त्रिकग्रहः। छर्दिर्विड्भेदउत्क्लेशो वातपित्तकफात्मकः। भ्रमः प्रलापो रूपाणामसताञ्चैव दर्शनम्। तृणभस्मलतापर्णपांशुभिश्चावपूरितम्। प्रधर्षणं विहङ्गैश्च भ्रान्तचेताः स मन्यते। व्याकुलानामशस्तानां स्वप्नानां दर्शनानि च। मदात्ययस्य रूपाणि सर्वाण्येतानि लक्षयेत्"। अथ मदात्ययस्य वातिकस्य निदानमाह "स्त्रीशोकभयभाराध्वकर्मभिर्योऽतिकर्षितः। रूक्षाल्पप्रमिताशी च यः पिबत्यतिमात्रया। रूक्षं परिणतं मद्यं निशि निद्रां निहन्ति च। करोति तस्य तच्छीघ्रं वातप्रायं मदात्ययम्"। तद् भद्यम्। अथ तस्य लक्षणमाह। "हिक्काश्वासशिराःकम्पपार्श्वशूलप्रजागरैः। विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम्"। अथ पैत्तिकस्य निदानमाह "तीक्ष्णोष्णं मद्यमम्लञ्च योऽतिमात्रं निषेवते। अम्लोष्णतीक्ष्णभोजी च क्रोधनोऽग्न्यातपप्रियः। तस्योपजायते तीव्रः पित्तप्रायो मदात्ययः"। अथ तस्य लक्षणमाह "तृष्णादाहज्वरस्वेदमोहातीसारविभ्रमैः। विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम्"। अथ श्लैष्मिकस्य मदात्ययस्य निदानमाह "मधुरस्निग्धगुर्वाशी यः पिबत्यतिमात्रया। अव्यायामदिवास्वप्नशय्यासनसुखे रतः। मदात्ययं कफप्रायं स नरो लभते ध्रुवम्"। अथ तस्य लक्षणमाह "छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः। विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम्"। अथ सान्निपातिकस्य मदात्ययस्य निदानं लक्षणञ्चाह "त्रिदोषहेतुभिः सर्वैः सर्वैलिङ्गैर्मदात्ययः"। अथ परमदलक्षणमाह "श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च विण्मूत्रसक्तिरथ तन्द्रिररोचकश्च। लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञा तृष्णा रुजा शिरसि सन्धिषु चापि भेदः"। तन्द्रिस्तन्द्रा। पानाजीर्णमाह "आध्मानमुग्रमथ चोद्गिरणं विदाहः पाने त्वजीर्णमुपगच्छति लक्षणानि"। उद्गिरणं वान्तिः उद्गारो वा। पीयत इति पानं मद्यम्। पानविभ्रममाह "हृद्गात्रतोदकफसंस्रवकण्ठधूममूर्च्छावमीज्वरशिरोरुजनप्रदेहाः। द्वेषः सुरान्नविकृतेषु च तेषु तेषु तं पानविभ्रममुशन्त्यखिलेषु धीराः। कण्ठधूमः निर्गम इव। प्रदेहः कफेन लिप्तास्यता। द्वेषः सुरान्नविकृतेषु सुराविकारेषु अन्नविकारेषु च द्वेषः। असाध्यानां मदात्ययादीनां लक्षणमाह। "हीनोत्तरोष्ठमतिशीतममन्ददाहम् तैलप्रभास्यमतिपानहतं त्यजेच्च। जिह्वोष्ठदन्तमसितं त्वथ वापि नीलम् पीते च यस्य नयने रुधिरप्रभे च। हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः कासभ्रमावपि च पानहतं त्यजेत्तम्"।

**मदाम्नात** पु॰ मदस्यातिक्रमे आम्नातः। गजपृष्ठस्थे ढक्कावाद्ये हारा॰।

**मदाम्बर** पु॰ मदो दानमम्बरमिवास्य। मत्तगजे त्रिका॰।

**मदार** पुंस्त्री॰ मद आरन्। १वराहे उज्ज्वल॰ स्त्रियां ङीष्। २धूर्ते ३मत्तगजे विश्वः। ४कामुके ५गन्धभेदे उणादिको॰। [त्रिका॰।

**मदार्मद** पु॰ मदजन्यमर्मं ददाति दा-क। फलकमतृक्षे

**मदालस** त्रि॰ मदेनालसः। १मदेनालसे २गन्धर्वराजविश्वकेतुकन्यायां स्त्री। [शब्दमाला

**मदालापिन्** पु॰ मदेनालपति आ+लप-णिनि। कोकिले

**मदाढ्य** पु॰ मदं मृगमदं आढ्यं यस्य। मृगमदे कस्तूर्यां त्रिका॰।

**मदि** स्त्री मद्यन्ति हृष्यन्त्यनेन मद-इन् पृषो॰। (मइ) ख्याते कृषिसाधने कृषकयन्त्रभेदे स्वार्थे कन्। तत्रार्थे कृषिशब्दे २१९९ पृ॰ मटिकादानविधिर्दृश्यः। तल्लक्षणन्तु २११८ पृ॰ तत्र शब्दे दृश्यम्।

**मदिन्** त्रि॰ मदयतीति मदि-णिनि। तर्पके यजु॰ ६।२७।

**मदिन्तम** त्रि॰ अतिशयेन मदी तमप् वेदे नुट्।तमः। अतिशयतर्पके यजु॰ ६।२७।

**मदिरा** स्त्री मद-करणे किरच्। "माध्वीकं पानसं द्राक्षं खार्जूरं तालमैक्षवम्। मैरेयं माक्षिकं टाङ्कं मधूकं नारिकेलजम्। मुख्यमन्नविकारोत्थं मद्यानि द्वादशैव तु" इत्युक्ते १मद्यसामान्ये २मत्तखञ्जने शब्दरत्ना॰। ३रक्तखदिरे पु॰ शब्दच॰। कालभेदे तद्भेदपाठाज्ञता यथा

"गौडी तु शिशिरे पेया पैष्टी हेमन्तवर्षयोः। शरद्ग्रीष्मवसन्तेषु माध्वी ग्राह्या न चान्यथा। कादम्बरी शर्करजादिमद्यं सुशीतलं हृद्यकरं मदाढ्यम्। माध्वीसम स्यात् ऋष्यजकातं मद्यं सुशीत गुरु तर्पणञ्च। अन्यथा कुरुते पानं मद्यं सन्तापशोषदम्। पञ्चदोषमदात्ययकारकं मूर्च्छनञ्च तत्"। "पर्य्युषितमम्लगेयमम्लं वा पिच्छिलं विगन्धं वा। दोषावहमविशेषात् मद्यं हृद्यं विवर्जयेत् सर्व्वम्। मद्यप्रयोगं कुर्व्वन्ति शूद्रादिषु महर्षिषु। द्विजैर्ब्राह्मणैस्तु न पातव्यं यद्यप्युज्जीवयेन्मृतम्" राजनि०। अधिकं मद्यशब्दे दृश्यम्। ४वसुदेवस्य पत्न्यां हरिव० १६अ०। ५दुर्गायां १७८अ०। "सप्तभकारगतावथितौ च गुरू कविभिः कथिता मदिरा" वृ० र० टी० उक्ते द्वाविंशत्यक्षरपादके छन्दोभेदे स्त्री।

**मदिराक्षी** पु० १विराटस्य भ्रातरि भा०वि०३१अ०। मदिरामत्तखञ्जनाक्षीवाक्षियस्य पचस्मा०। खञ्जनतुल्यनेत्रे त्रि० स्त्रियां ङीप्। [गञ्जाख्ये मद्यसञ्चानार्थे गृहे अमर.

**मदिरागृह** न० मदिरसञ्चानार्थं गृहम् शाक० त०।

**मदिराश्व** पु० १विराटनृपसेनापतिभेदे भा० आश्व० २अ०। हिरण्यहस्तस्य श्वशुरे २प्राचीने नृपभेदे भा०अनु०१४७अ०

**मदिरासख** पु० ६त० टच्समा०। आम्रवृक्षे जटा०। तस्य मदिरातुल्यास्वादत्वात् तथात्वम्। [मदिरायां हेमच०।

**मदिष्ठा** स्त्री अतिशयेन मदिनी मदयित्री इष्ठन् टिलोपः।

**मदेमघि** पु० प्रार्थनायाम् निघण्टुः।

**मदेव** पु० मद-वा० एव। मत्ते ऋ०।०।११०६।६।

**मदोत्कट** पु० मदेन दानवारिणा उत्कट उद्दाम। १मत्तगजे अमरः २मदिरायां स्त्री राजनि०। ३मदोद्धते त्रि०।

**मदोदग्र** पु० मदेन हर्षेण दर्पेण वा उदग्र उन्नः। १मत्ते "मदोदग्राः ककुद्मन्त." रघु। २नार्य्यां स्त्री शब्दमा०।

**मदोद्धत** त्रि० मदेन उद्धतः। मत्ते जटा०।

**मदोन्मत्त** पु० "मन्त्रो वाण्यथ वा विद्या सप्ताधिकदशाक्षरः। फट्कारपञ्चकादिर्यो मदोन्मत्त उदाहृत" तन्त्रसारोक्ते १मन्त्रभेदे २मदेनोन्मत्ते त्रि०।

**मद्गु** पु०मस्ज-उ न्यङ्क्वा०। (पानिकौडि) १पक्षिभेदे अमर०। "मद्गुः स्निग्धो वातनाशी मेदश्च रक्तकारकः। रक्तपित्तविनाशी च शीतलः परिकीर्त्तितः" राजव०। २मद्गुरमीने नीलकण्ठ।

**मद्गुर** पु स्त्री०मद-उरच् न्यङ्क्वा०। (मागुर)१मत्स्यभेदे। स्वार्थे क। तत्रैव अमर. स्त्रियां ङीष्। तद्गुणाः मत्स्यशब्दे भावप्र०उक्ताः। "निशादो मद्गुरं हते" भा० अनु० ४८ अ० उक्ते २सङ्कीर्णजातिभेदे (कुबुरि) पुंस्त्री०। "मद्गुरान् मीनभेदान् चाति वा क वस्य रः" नीलकण्ठः। अस्यमज्जनेन मीनचारित्वात् तस्य तथात्वम्। "तस्मादेते हते मत्स्याः मद्गुरा नाम विश्रुताः। ये चरन्ति सदाऽर्णवस्थान् सहद्रोदरचारिणः" हरिव० ८५अ०।

**मद्गुरप्रिया** स्त्री मद्गुरस्य प्रियेव। शृङ्गीमत्स्ये हेमच० "मद्गुरस्य प्रिया शृङ्गी" अमर.।

**मद्गुरसी** स्त्री मद्गोः मद्गुरस्येव रस-आस्वादोऽस्याः गौरा० ङीष्। शृङ्गीमत्स्ये शब्दर०।

**मद्य** न० माद्यत्यनेन करणे यत्। मदिराशब्दे उक्ते माध्वीकादिमादकविधे मादकद्रव्ये अमरः। मद्यभेदा वर्णभेदेन तत्पाननिषेधादिक प्रा० वि० उक्तं यथा "पुलस्त्य. "पानसं द्राक्षमाधूक खार्ज्जूरं तालमैक्षवम्। माध्वीकं टाङ्कमाध्वीकं मैरेयं नारिकेलजम्। समानानि विजानीयान्मद्यान्येकादशैव तु। द्वादशन्तु सुरामद्यं सर्व्वेषामधमं स्मृतम्"। अनेनैकादशानां सुरात्वं निषेधयति मद्यशब्दस्तु मदहेतुद्रव्यमात्रवचनः तस्मादेव वचनात् तु मद्यपानं सुराशब्दार्थः। तथा च वृहस्पतिः "गौडीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत्। तप्तकृच्छ्रं पराकञ्च चान्द्रायणमनुक्रमात्"। तथाच सुरात्वे क्रमेण प्रायश्चित्तं न स्यात्। तथा मनुः "सुरा तु पैष्टी मुख्योक्ता न तयास्तितरे स्मृते"। पैष्टीति तण्डुलविकारमात्रोपलक्षणम्। इतरे गौडीमाध्व्यौ अतोऽन्नविकार एव सुराशब्दस्य मुख्यत्वात् त्रिविधा सुरेति गौडीमाध्व्योर्गौणसुरात्वज्ञापनार्थम्। तेनैतत्पानेऽपि महापातकत्वमतिदिशति "यथैवैका तथा सर्व्वेति" पैष्ट्यां पूर्व्वप्रसिद्धिं दर्शयति यथा पैष्टी सुरा तथा सर्व्वा गौडी माध्वी च पूर्व्ववचनोक्ता पैष्टीदृष्टान्तत्वेनात्र दर्शिता न पातव्या द्विजोत्तमैर्ब्राह्मणैरित्यर्थः। नैवर्णिकपरत्वे उत्तमपदानर्थक्यात्। न च बहुवचनानर्थक्यपरिहारार्थम् उत्तमप्रतिपदिकानर्थक्यं युक्तं बहुवचनस्य जात्यभिप्रायेण पदार्थकत्वात्। अतो ब्राह्मणस्य त्रिविधसुरापाने महापातक क्षत्रियवैश्ययोस्तु "सुरा वै मलमन्नानामिति" वचनेन पैष्ट्येवेति स्थितम्। गोविन्दराजविश्वरूपधारेश्वराणामनुमतोऽयमर्थः। अतएव "एव माध्वी च गौडी च पैष्टी च त्रिविधा सुरा। द्विजातिभिर्न पातव्या कदाचिदपि कर्हिचिदिति" वेदवचनेऽपि द्विजा०

तिपदं ब्राह्मणपरमेव। अतएव द्विविधसुरापाने क्षत्रियादीनां महापातकं दूरे तावदस्तु दोषाभावमेवाह स्म याज्ञवल्क्यः "कामादपि हि राजन्यो वैश्यश्चापि कथञ्चन। मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यते"। तदेवं पैष्टीनिषेधस्त्रैवर्णिकानां गौडीमाध्वीनिषेधस्तु ब्राह्मणानामेव। ननु ब्राह्मणराजन्याविति विशेषणात् पुंलिङ्गमत्र विवक्षितम्। अतः कथं ब्राह्मण्याः सुरापानं महापातकम्। उच्यते निषिध्यमानक्रियायां विधेयत्वेन तत्कर्त्तुरनुपादेयत्वात्तद्विशेषणं लिङ्गमविवक्षितं हविरुभयत्ववत् अतस्तज्जातीयस्त्रीणामपि पाननिषेधः। यथा भविष्ये "तस्मान्न पेयं विप्रेण सुरामद्यं कथञ्चन। ब्राह्मण्यापि न पेया वै सुरा पापभयावहा"। "या ब्राह्मणी सुरापी स्यात् न तां देवाः पतिलोकं नयन्ति" इति श्रुतेः। "पत्युरर्द्धशरीरेण भार्य्या यस्य सुरां पिबेत्। पतितार्द्धशरीरस्य निष्कृतिर्नोपपद्यते"। न चैव क्षत्रियवैश्यस्त्रीणामनिषेधः, ब्राह्मणीपदस्य निषिद्धसुरापानकर्त्तृभार्य्योपलक्षकत्वात् भार्य्या यस्य सुरां पिबेदिति सामान्यश्रवणात्। पानञ्च द्रवीभूतस्याभ्यवहारः स च कण्ठदेशादधोनयनं न तु वक्त्रमात्रप्रवेशः। निष्ठीवनाद्यर्थं कपोलधारणे पानशब्दाप्रयोगात् यथोक्तं "जिघ्रन्नपि सुरां कश्चित् पिबतीत्यभिधीयते। यावन्न क्रियते वक्त्रे गण्डूषस्य प्रवेशनम्"। तत्र गण्डूषपरिमाणमविवक्षितं गण्डूषार्द्धपानेऽपि लोके पानशब्दप्रयोगात् अतएव मुखप्रवेशनमात्रविवक्षितं किन्तु येन मुखप्रवेशेन कण्ठादधोनयनं भवति अतस्तदेवोपलक्षयति अतएवोष्ठमात्रलेपे न पाननिष्पत्तिः अतस्तत्रोत्तमाङ्गस्पर्शप्रायश्चित्तम्। एतेन केवलौष्ठसंयोगे तप्तकृच्छ्रसंस्काराविति वाचस्य व्याख्यानमसङ्गतं पानानिष्पत्तेरिति।"

मद्यभेदगुणादिकं भावप्र० उक्तं यथा

"उक्तन्तु सीधुमैरेयमिरा च मदिरा सुरा। कादम्बरी वारुणी च हालापि बलवल्लभा। पेयं यन्मादकं लोकैस्तन्मद्यमभिधीयते। यथारिष्टं सुरा सीधुरासवाद्यमनेकधा। मद्यं सर्वं भवेदुष्णं पित्तकृद्वातनाशनम्। भेदनं शीघ्रपाकञ्च रूक्षं कफहरं परम्। अम्लञ्च दीपनं रुच्यं पाचनं चाशुकारि च। तीक्ष्णं सूक्ष्मञ्च विशदं व्यवायि च विकाशि च"। अथारिष्टस्य लक्षणं गुणाश्च "पक्वौषधाम्बुसिद्धं यन्मद्यं तत् स्यादरिष्टकम्"। अरिष्टं मद्यमिति लोके। यथा द्राक्षारिष्टम्। दशमूलारिष्टम्। बब्बूलारिष्टमिति। "अरिष्टं लघुपाकेन सर्वतश्च गुणाधिकम्। अरिष्टस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः"। अथ सुराया लक्षणं गुणाश्च "शालिषष्टिकपिष्टादिकृतं मद्यं सुरा स्मृता। सुरा गुर्वी बलस्तन्यपुष्टिमेदःकफप्रदा। शोथहृत् ग्राहिणी गुल्माशोग्रहणीमूत्रकृच्छ्रनुत्"। अथ सुराभेदो वारुणी तस्या लक्षणं गुणाश्च "पुनर्नवाशिलापिष्टैर्विहिता वारुणी स्मृता। संहितैस्तालखर्ज्जूररसैर्या सापि वारुणी। सुरावद्वारुणी लघ्वी पीनसाध्मानशूलहृत्"। सुरातो भेदार्थं लघ्वीति। अथ सीधुद्वयस्य लक्षणं गुणाश्च "इक्षोः पक्वैः रसैः सिद्धः सीधुः पक्वरसश्च सः। आमैस्तैरेव यः सीधुः स च शीतरसः स्मृतः। सीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवर्णकृत्। वातपित्तकरं सद्यः स्नेहनो रोचनो हरेत्। विबन्धमेदःशोफार्शःशोषोदरकफामयान्। तस्मादल्पगुणः शीतरसः संलेखनः स्मृतः।" अथासवस्य लक्षणं गुणाश्च "यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः। यथा लोहासवादिः। "आसवस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः।" अथ नवपुराणमद्यगुणाः। "मद्यं नवमभिष्यन्दि त्रिदोषजनकं सरम्। अहृद्यं बृंहणं दाहि दुर्गन्धं विशदं गुरु। जीर्णं तदेव रोचिष्णु कृमिश्लेष्मानिलापहम्। हृद्यं सुगन्धिगुणवल्लघु स्रोतोविशोधनम्"। अथ सात्त्विकानां मद्यं पिबतां चेष्टाविशेषाः। "सात्त्विके गीतहास्यादि राजसे साहसादिकम्। तामसे निन्द्यकर्म्माणि निद्राञ्च मदिरा चरेत्"। आचरेत् कुर्य्यात् "विधिना मात्रया काले हितैरन्नैर्यथाबलम्। प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा। किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम्। अयुक्तियुक्तं रोगाय युक्तियुक्तं यथामृतम्"। अथ मद्यगन्धनाशनोपायः। "खदिरैलावनदजीरकधान्यकैला चर्वयन् यदपि वाचमभिव्यनक्ति। स्वाभाविकं सुवजसुज्झति पूतिगन्धं गन्धस्तु मद्यलशुनादिभवस्तु नूनम्।" औषधार्थमपि विप्रैर्मद्यं न पेयम् मदिराशब्दे राजनि० वाक्यं दर्शितम्।

पुराणादौ ब्राह्मणस्य मद्यनिषेधो यथा

"अदेयञ्चाप्यपेयञ्च तथैवास्पृश्यमेव च। द्विजातीनामनालोच्यं नित्यं मद्यमिति स्थितम्। तस्मात् सर्व-

प्रयत्नेन मद्यं नित्यं विवर्जयेत् । पीत्वा पतति कर्मभ्यस्त्वसम्भाष्यो द्विजोत्तम । भक्षयित्वाप्यभक्ष्याणि पीत्वापेयान्यपि द्विजः । नाधिकारी भवेत्तावद्यावत्तन्न जहात्यधः । तस्मात् परिहरेन्नित्यमभक्ष्याणि प्रयत्नतः । अपेयानि च विप्रो वै पीत्वा तद्याति रौरवम् । कूर्म्मपु० १६ अ० । "द्विजस्य पूजादौ मद्यदानविध्यन्तरस्य निषेधो यथा । "मदिरां शूद्रतो दद्यात् अन्यत् पानन्तु वा मतम् । अवश्यं विहितं यत्र मद्यं तत्र द्विजः पुनः । नारिकेलजलं कांस्ये ताम्रे वा विसृजेन्मधु । नापद्यपि द्विजो मद्यं कदाचित् विसृजेदपि । ऋते, पुष्पासवादुक्तात् व्यञ्जनाद्वा विशेषतः । राजन्यस्तथा मत्स्यं वापि च सौभिकादयः । दद्युर्नरपते भूप स्वसज्ञातिस्वभावाय च । नृपालानुमते मद्यं ददत् पापं न चाप्नुयात्" कालिका पु० ६६ अ० । अथ ब्राह्मणस्य मद्यपाननिषेधकशुक्रशापो यथा "वैशम्पायन उवाच । सुरापानाद्वञ्चनां प्राप्य विद्वान् संज्ञानाशं प्राप्य चैवातिघोरम् । दृष्ट्वा कचञ्चापि तथाभिरूपं पीतं तथा सुरया मोहितेन । समन्युरुत्थाय महानुभावस्तदोशना विप्रहितं चिकीर्षुः । काव्यः स्वयं वाक्यमिदं जगाद सुरापानं प्रति वै जातशङ्कः । यो ब्राह्मणोऽद्यप्रभृतीह कश्चित् मोहात् सुरां पास्यति मन्दबुद्धिः । अपेतधर्म्मा ब्रह्महा चैव स स्यादस्मिंल्लोके गर्हितः स्यात् परे च । मया चेमां विप्रधर्म्मोक्तिसीमां मर्य्यादां वै स्थापितां सर्व्वलोके । सन्तो विप्राः शुश्रुवांसो गुरूणां देवा लोकाश्चोपशृण्वन्तु सर्व्वे" भा० आ० ७६ अ० । "नारिकेलञ्च खार्ज्जूरं पानसञ्च तथैव च । ऐक्षवं मधूकं टाङ्कं तालश्चैव च माध्विकम् । द्राक्षन्तु दशमं ज्ञेयं गौडं चैकादशं स्मृतम् । पैष्टन्तु द्वादशं प्रोक्तं सर्व्वासामधमं स्मृतम् । मध्यमं मधुजं गौडं श्रेष्ठञ्चोत्तममिष्यते । एतत् द्वादशकं मद्यं न पातव्यं द्विजैः क्वचित् । क्षत्रियादिः पिबेत् सर्व्वं पैष्टीमेकन्तु वर्जयेत् । सुरां पीत्वा द्विजो मोहात् कामात् तक्रादिमिश्रिताम् । त्रैवार्षिकं व्रतं कुर्य्यादौषधमिश्रे तु वार्षिकम् । तक्रादिमिश्रितां किञ्चित् सुरां पीत्वा त्वकामतः । कृच्छ्राब्दपादमाचर्य्य पुनः संस्कारमर्हति । मुखप्रवेशमात्रे तु प्रायश्चित्तार्द्धमाचरेत् । अनुपनीतो देवेशि ! व्रतं त्रैवार्षिकं चरेत् । चतुर्थकालाहारी स्याद् ब्रह्मचर्य्यमथापि वा । आपत्सु दद्यं वा मासादर्द्धं विनिर्दिशेत् । शूद्रस्य च विशेषेण अतिकृच्छ्रद्वयं चरेत् । अज्ञानाभ्यासितं तस्मिन् तदर्द्धं व्रतमाचरेत् । पैष्टीपाने ब्राह्मणस्य मरणान्तिकमुच्यते । माध्वीगौडीसुरापाने द्वादशाब्दं विधीयते । इतरेषान्तु पानेन शुद्धिश्चान्द्रायणेन तु । राजन्यवैश्ययोश्चापि गौडी माध्वी न शस्यते । मोहात् क्षत्रियवैश्यश्च पीत्वा कृच्छ्रद्वयं चरेत् । शूद्रोऽपि गौडीं पैष्टीञ्च न पिबेद्धीनसत्तमाम् । कामात् पीत्वा सुरां विप्रा मरणान्तिकमाचरेत् । चरेच्चान्द्रायणं ज्ञानात् क्षत्रियो वैश्य एव च । पैष्टीपाने तु शूद्रस्य प्राजापत्यं विनिर्दिशेत् । ज्ञानादभ्यासयोगे तु चान्द्रायणमयं स्मृतम् । नारिकेलं तथा ज्ञानाद्विप्रश्चान्द्रायणेन तु । क्षत्रियश्चैव वैश्यश्च प्राणायामेन शुध्यति । अपक्वं पानसञ्चैव आम्रञ्च बदरं तथा । स्थापयित्वा घटे नित्यं दद्याटामपयःपलम् । त्रैलोक्यविजयाञ्चैव मातुलुङ्गं तथैव च । सप्तेऽहनि ततो दद्यात् सन्धानात् सप्तमीरितम् । दधि मधु घृतञ्चापि माञ्जिष्ठं तिक्तकं तथा । अनुपाने तु देवेशि । द्राक्षमद्यं सुनिश्चितम् । निडम्ब मालया मूलं समभागेन योजितम् । मधुना सह संस्थाप्य शेषपाकं समाचरेत् । पिप्पलीलवणं दत्त्वा मधुना मद्यमीरितम् । पानसं पक्वखर्ज्जूरमाद्रं सोमलतारसम् । एकीकृत्य तु सन्धानात् खार्ज्जूरं मद्यमीरितम् । पक्वतालं दान्तशाकं ककुभञ्च तथैव च । एतैरेव समन्धानात् तालमद्यं प्रकीर्त्तितम् । इक्षुदण्डं मरीचञ्च वटरञ्च तथा दधि । शेषे तु लवणं दत्त्वा इक्षुमद्यं प्रकीर्त्तितम् । नवं मधु तथा बिल्वं पक्वं शर्करया सह । सन्धानाज्जायते मद्यं माध्वीकं शरतो रसम् । शतावरी टङ्कमूलं वल्कलं पद्ममेव च । मधुना सह सन्धानात् टङ्कमाध्वीकमीरितम् । मातुरमूलं वटरी शर्करा च तथैव च । एषामेकत्र सन्धानात् मैरेयं मद्यमीरितम् । इन्द्रजिह्वा पक्वाग्नी नारिकेलजलन्तथा । कदलीफलसन्धानान्मद्यं तन्नारिकेलजम् । दधि त्रैलोक्यविजया तथैव च मरीचकम् । गुडेन सह सन्धानात् गौडं मद्यं प्रकीर्त्तितम् । यस्कञ्चोमर्द्दविल्वाश्च उत्पादकसमन्वितम् । वह्नौ सन्तापयेत् किञ्चित् स्थापयित्वा दिनद्वयम् । शेषेऽहनि तु पक्वाग्ने नीरेण तत्र निक्षिपेत् । शृङ्गवेरं मरीचञ्च मातुलुङ्गं तथैव च । एतषामेव सन्धानात् पैष्टीमद्यं प्रकीर्त्तितम्" मत्स्यसूक्ते २६ पटलः । "ब्रह्मन्वा मध्वीरो नदीरी मद्यपानतः । कलौ तु भारते वर्षे लोका

**मधु(बी)बीज** पु० मधु मधुरं बी(बी)जं यस्य । दाडिमे राजनि० ।

**मधु(बी)बीजपूर** पु० कर्म० । मधुकर्कटिकायाम् राजनि० ।

**मधुव्रत** पुंस्त्री० मधु तदषणार्थो व्रतं यतताऽनुमीक्षणं यस्य । भ्रमरे अमरः स्त्रियां ङीष् ।

**मधुशर्करा** स्त्री० मधुजाता शर्करा शा०त० । (मिताखण्ड) मधुजातशर्करायां राजनि० ।

**मधुशाख** पु० मधुर्मधुरा शाखाऽस्य (मौल) इति शब्दच० ।

**मधुशिग्रु** पु० मधुः मधुरः शिग्रुः । रक्तशोभाञ्जने अमरः

**मधुशेष** पु० न० मधुनः शेषः उच्छिष्टम् । सिक्थके (मोम) । राजनि० ।

**मधुश्रेणी** स्त्री मधुनः श्रेणीव । मूर्वायाम् अमरः ।

**मधुश्वासा** स्त्री मधुन इव श्वसितत्वात् श्वस-अपादाने घञ् । जीवन्तीवृक्षे राजनि० । [इति अमरः ।

**मधुष्ठील** पु० मधु अष्ठीले गर्भेऽस्य पृषो० । (मौल) गुडपुष्प-

**मधुसख** पु० मधोर्वसन्तस्य सखा सहचरः टच्समा० । काम देवे मधुसारथ्यादयोऽप्यत्र ।

**मधुसूदन** पु० मधु तन्नामासुरं सूदयति, मधु, जीवानां शुभाशुभकर्म, ज्ञानदानेन सूदयति वा सूद-ल्यु । १श्रीकृष्णे । "भक्तानां कर्मणाञ्चैव सूदनात् मधुसूदनः" तन्नामनिरुक्तेः । मधु माध्वीकं सूदयति भक्षयति । २भ्रमरे जटा० पुंस्त्री० स्त्रियां ङीष् । मधु इव सूद्यते भक्ष्यते ल्युट् ङीप् । ३पालङ्कीशाके स्त्री हेमच० ।

**मधुस्रव** पु० मधूनि मद्यानि स्रवन्त्यस्मात् स्रु अप् । (मौल) १वृक्षे २मोरटलतायां राजनि० । ३मधुयष्टि-कायां स्त्री जटा० ४जीवन्त्यां स्त्री शब्दच० । ५मूर्वायां स्त्री राजनि० । [जटाधरः ।

**मधुस्रवस्** पु० मधु स्रवति स्रु-असुन् । (मौल) वृक्षे

**मधुस्वर** पुंस्त्री० मधुर्मधुरः स्वरोऽस्य । १कोकिले शब्दर० स्त्रियां ङीष् । २मधुरस्वरवति त्रि० स्त्रियां टाप् ।

**मधुहन्** पु० मधुं तन्नामासुरं कर्मफलं वा ज्ञानद्वारा हन्ति हन् क्विप् । विष्णौ ।

**मधूक** न० मह-ऊक हस्य धः । १यष्टिमधौ अमरः । (मौल)२वृक्षे पु०राजनि० । [अमर० । मधूलकमप्यत्र ।

**मधूच्छिष्ट** न० मधुन उच्छिष्टमवशिष्टम् । (मोम) सिक्थके

**मधूपघ्न** पु० मधुदैत्यस्योपघ्न आश्रयः । मथुरानगरे जटा० ।

**मधूल** पु० मधु लाति ला-क पृषो० । जलजातिरिक्तम-धूकवृक्षयो जटा० । २मधुकर्कटिकायाम् ३आम्रे ४जीव-न्तके च स्त्री गौरा० ङीष् राजनि० । स्वार्थे क

अत इत्वम् टाप् । मधूलिका मूर्वायाम् अमरः ।

**मध्य** पुं०न० मन-यत् नस्य धः । १देहावयवभेदे । (माजा) "मध्येन सा वेदिविलग्नमध्या" कुमारः । अवकाशे-अन्तरालमात्रभिन्ने २व्यापारभेदे न० अमरः । ३पूर्वापरयो-मध्योरन्तराले ४परार्द्धसंख्यातोऽर्वाचीनायां ५संख्यायां, न०इतत्संख्याते च । "अन्त्यं मध्यं परार्द्धं" लीला० । ज्योतिषोक्ते मकरायां ७गतिभेदे स्त्री तद्वति न्याय्ये पु० । इत्यादौ १०अन्तर्वर्त्तिनि च त्रि० शब्दर० । ११लग्नचरणादके अस्त्रोमाने इ० ८० ।

**मध्यगन्ध** पु० मध्ये फलमध्ये गन्धो यस्य । आम्रवृक्षे शब्दच०

**मध्यतस्** अव्य० मध्य+तसिल् । प्रथमापञ्चमीसप्तम्यर्थवृत्ते-र्मध्यशब्दस्यार्थे ।

**मध्यदेश** पु० कर्म० । "हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशना-दपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः, मनूक्ते देशभेदे ।

**मध्यदिन** न० मध्यं दिनस्य एकदेशिस० । १मध्याह्ने । [illegible] । मध्यन्दिनमप्यत्र । तत्र भवे तत्र पुष्प्यति २वन्धूकवृक्षे राजनि० ।

**मध्यपञ्चमूलक** न० । "बलापुनर्नवैरण्डसूर्पपर्णीद्वयेन तु । एकत्र योजितनैव सामान्यं पञ्चमूलकम्" राजनि० उक्ते पदार्थपञ्चके ।

**मध्यपदलोपिन्** पु० मध्यपदस्य लोपोऽस्त्यस्य इनि । व्याक-रणप्रसिद्धे शाकपार्थिवादिके मध्यपदलोपयुते समासभेदे ।

**मध्यम** त्रि० मध्ये भव म । १मध्यभवे । २षड्जस्वरमध्ये क्रौञ्चस्वरतुल्ये ३पञ्चमे स्वरे पु० अमरः ।

**मध्यमपाण्डव** पु० कर्म० । अर्जुने तस्य पूर्वापरयोर्द्वयोर्द्वयो-र्मध्यवर्त्तित्वात् तथात्वम् । [मध्यमे दासे कर्मकरादौ ।

**मध्यमभृतक** पु० कर्म० । "मध्यमस्तु कृषीबल" इत्युक्ते

**मध्यमलोक** पु० कर्म० । पृथिव्याम् तस्याः पातालस्वर्ग-लोकयोर्मध्यवर्त्तित्वात् तथात्वम् । "मध्यमलोकपाल." इति रघु. मध्यलोकोऽप्यत्र ।

**मध्यमसंग्रह** पु० कर्म० । "प्रेषणं गन्धमाल्यानां धूपभूषण-वाससाम् । प्रलोभनञ्चान्नपानैर्मध्यमः संग्रहो मत." व्यासोक्ते मध्यमे स्त्रीसंग्रहरूपे विवादभेदे ।

**मध्यमसाहस** न० कर्म० । "वाक्पारुष्यपानानां स्त्र्यपकर-यस्य च । एतेनैव प्रकारेण मध्यमं साहसं स्मृतम्" इत्युक्ते परकीयवस्त्रादेर्भङ्गाक्षेपादिरूपे साहसभेदे "पणानां द्वे शते सार्द्धे प्रथम. साहसः स्मृतः । मध्यम०

६टङ्कणे न० राजनि० (सोहागा)। इति। मलीत्यप्यत्र

**मलिनमुख** पु० मलिनं मुखं यस्य। १वह्नौ तस्यादौ धूमायमानत्वेन कृष्णत्वात् २चित्रकवृक्षे च। ३वानरे पुंस्त्री० मेदि० स्त्रियां ङीष् ४क्रूरे ५खले च त्रि० मेदि० ६प्रेते हेम०।

**मलिम्लुच** पु० मली वैदिककर्मानर्हत्वेन दुष्टः सन् म्लोचति गच्छति म्लुच-क। १मलमासे २वायौ ३अग्नौ ४चौरे च मेदि०। ५चित्रकवृक्षे। [कासीसे च मेदि०।

**मलीमस** त्रि० मल-ईमसच्। १मलिने अमरः। २लौहे ३पुष्प-

**मल्ल** धृतौ भ्वा० आ० अक० सेट्। मल्लते अमल्लिष्ट ममल्ले।

**मल्ल** पु० मल्ल-अच्। १बाहुयुद्धकारके नियोद्धरि २पात्रे ३बलीयसि ४मत्स्यभेदे ५कपोले च मेदि० ६व्रात्यक्षत्रियात् सवर्णायां जाते जातिभेदे (माल) ७सङ्कीर्णजातिभेदे लेटात् तीवरकन्यायां जाते सङ्कीर्णवर्णे (माला) ब्रह्मवै० पु० ८तन्त्रवाय्यां कुन्दकाराज्जाते सङ्कीर्णे जातिभेदे च पुंस्त्री० स्त्रियां जातित्वात् ङीष्। ९देशभेदे स्वार्थे क मल्लक तत्रार्थे। संज्ञायां कन्। इति हेम०।

**मल्लक** पु० मल्ल्यते ध्रियतेऽत्र मल्ल-वुन्। १दीपाधारे पात्रे २नारिकेलफलजाते पात्रे च (माला) अमरः। ५प्रदीपे मधुरेश ६स्वनामपुष्पे स्त्री अमरः टाप् अत इत्वम्।

**मल्लज** न० मल्ले देशे जायते जन-ड। मरिचे जटा०।

**मल्लभू** स्त्री मल्लक्रीडनस्य बाहुयुद्धस्य योग्या भूः स्थानम्। देशभेदे। मल्लभूम्यादयोऽप्यत्र।

**मल्लयुद्ध** ६त०। बाहुयुद्धे तत्प्रकारः भा० वि० १२अ०।

**मल्लार** पु० मल्ल इव आर्छति ऋ-अच्। १रागभेदे २वसन्तरागस्य रागिणीभेदे स्त्री ङीप् सङ्गीतदामो०।

**मल्लि(ल्ली)** स्त्री मल्ल-इन् वा ङीप्। १मल्लिकायाम् शब्दमा० स्वार्थे कन्। मल्लिका कृष्णवर्णदेहे आलोहितचञ्चुचरणे २हंसभेदे पुंस्त्री० मल्लिकाक्षोऽप्यत्र।

**मल्लिकापुष्प** पु० मल्लिकाया इव पुष्पमस्य। १कुटजवृक्षे राजनि०। २कदम्बवृक्षे च हेमच०। ६त०। ३मल्लिकायाः कुसुमे।

**मल्लिपत्र** न० मल्लिरिव पत्रमस्य। छत्राके त्रिका०।

**मव** बन्धे भ्वा० पर० सक० सेट्। मवति अमवीत् अमावीत्।

**मव्य** बन्धे भ्वा० पर० सक० सेट्। मव्यति अमव्यीत्।

**मश** ध्वनौ अक० कोपे सक० भ्वा० पर० सेट्। मशति अमशीत्-अमाशीत् मेशतुः।

**मशक** पु० मश-वुन्। १कीटभेदे (मशा) राजनि०। २चर्ममयजलपात्रभेदे ३रोगभेदे शब्दर०। तद्रोगलक्षणं यथा "अवेदनं स्थिरं चैव यस्तु गात्रे प्रदृश्यते। माषवत् कृष्णमुत्पन्नं मशकं दिशेत्" गरु० पु० १७५अ०।

**मशकिन्** पु० मशकोऽस्त्यस्य इनि। उदुम्बरवृक्षे हेम०।

**मशहरी** स्त्री मशं मशकं हरति हृ-ट। मशकनिवारणार्थे वस्त्रनिर्मिते पदार्थे चतुष्क्याम् जटा०।

**मषि(षी)** स्त्री मष(स) इन् वा ङीप्। (काली) १पत्रलेखनद्रव्ये त्रिका०। २नीलशेफालिकावृक्षे च शब्दर०।

**मष** वधे भ्वा० पर० सक० सेट्। मषति अमषीत् अमाषीत्।

**मस** परिणामे अक० परिमाणे सक० दि० पर० सेट्। मस्यति इरित् अमसत् अमसीत् अमासीत्। पुषादिरयं तेन अमसदित्येवेति पाणिनीयाः।

**मसन** न० मस-ल्युट्। सोमराजीवृक्षे शब्दच०।

**मसरा** स्त्री मस-अरच्। मसूरे जटा०।

**मसिका** स्त्री मसीव इवार्थे कन्। नीलशेफालिकायाम् शब्दर०। [त्रिका०

**मसि(सी)जल** न० मसिमिश्रितं जलम्। (काली) लेखनद्रव्ये

**मसिधान** न० मसिर्धीयतेऽत्राधारे धा-ल्युट्। मस्याधारे (दोयात) स्त्रीत्वमपि तत्र ङीप्।

**मसिपण्य** पु० मसिकृतदुपलक्षिताक्षरमेव पण्यं विक्रेयं यस्य। लेखनोपजीविनि त्रिका०।

**मसिप्रसू** स्त्री मस्याः प्रसूरिव। १मस्याधारे। मसिः प्रसूरिव यस्याः। २लेखन्याम् हारा०।

**मसीना** स्त्री मस-ईनन्। अतस्याम् (तिसि) शब्दच०।

**मसु(सू)र** पुंस्त्री० मस-उरच् ऊरच् वा। १कलायभेदे त्रिका० स्त्रियां गौरा० ङीष्। २वेश्यायां, ३ब्रीहिभेदे च स्त्री टाप् मेदि०।

**मसूरविदला** स्त्री मसूरस्येव विदलं यस्याः। १कृष्णत्रिवृति (कालतेओटी) अमरः। २श्यामलतायां रत्नमा०।

**मसूरिका** स्त्री मसूरेव इवार्थे कन्। १वसन्तरोगे २कुट्टिन्यां च शब्दमा० "कट्वम्ललवणक्षारविरुद्धाध्यशनाशनैः। दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः। क्रूरग्रहेक्षणाच्चापि देशे दोषाः समुद्गताः। जनयन्ति शरीरेऽस्मिन् दुष्टरक्तेन सङ्गताः। मसूराकृतिसंस्थानाः पिडकाः स्युर्मसूरिकाः" भावप्र०।

**मसूरी** स्त्री मस-ऊरच् गौरा० ङीष्। १वसन्तरोगे मेदि० २त्रिवृति, ३रक्तत्रिवृति च राजनि०।

**मसृण** त्रि० मस क्वण, मसृ+अण-क पृषो० वा। १स्निग्धे २अकर्कशे च। ३अतस्यां स्त्री मेदि०।

हस्ते रत्नमा०। २इन्द्रवारुण्यां (राखालशशा) स्त्री जटा०।

महाबल पु० महत् बलं यस्य। १वायौ २दमनके बुद्धे च त्रिका०। ३महाबलयुते त्रि०। महत् बलं यस्मात् ५व०। ४सीसके न० हेमच०। ५पीतबलायाञ्च स्त्री रत्नमा०।

महाभारत पु० न० "चत्वारश्चैकतो वेदा भारतश्चैकमेकतः। पुरा किल सुरैः सर्वैः समस्य तुलया धृतम्। चतुर्भ्यः सरहस्येभ्यो वेदेभ्योऽप्यधिकं यदा। तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते। महत्त्वात् भारतत्वाच्च महाभारतमुच्यते" इत्युक्तलक्षणे व्यासप्रणीते लक्षश्लोकात्मके ग्रन्थभेदे भारतशब्दे दृश्यम्।

महाभीता स्त्री कर्म०। लज्जालुलतायाम् शब्दच०। स्पर्शमात्रेण हि सङ्कोचेन तस्या अतिभीतत्वम्। २अतिभीते त्रि०।

महाभूत न० कर्म०। सर्वेषां पञ्चात्मकतामात्रया व्यक्ततापन्नेषु स्थूलेषु पृथिव्यप्तेजोवाय्वाकाशेषु ५पञ्चसु भूतेषु। "न वेधा विदधे नूनं महाभूतसमाधिना" रघुः। २परमेश्वरे पु० "तस्यैतस्य महाभूतस्य निःश्वसितमेतत् यदृग्वेदः" इत्यादि श्रुतिः। [महत्प्रभु पु०।

महाभूतघट पु० षोडशमहादानान्तर्गते षोडशे महादाने

महाभृङ्ग पु० कर्म०। १नीलभृङ्गराजे राजनि०। [हेमच०।

महामनस् त्रि० महदुदारं मनस्तद्व्यापारोऽस्य। महाशये।

महामात्र पु० "मन्त्रे कर्मणि भूषायाम् वित्ते माने परिच्छदे मात्रा च महती येषां महामात्रास्तु ते स्मृताः" इत्युक्ते प्रधानामात्ये।

महामाया स्त्री कर्म०। अन्यस्मिन् अन्यधर्मावभासो हि माया सर्वजगन्मूलत्वात्तस्या महत्त्वम्। १जगत्कारणभूतायाम् अविद्यायां २तदधिष्ठात्र्यां दुर्गायाञ्च "महामाया हरेश्चैषा यया सम्मोह्यते जगत्" देवीमा०।

महामाष पु० कर्म०। राजमाषे (बरबटी) शब्दच० माषापेक्षया तस्य हि महत्त्वात्तथात्वम्।

महामूल पु० महत् वीर्यकारित्वात् श्रेष्ठं मूलमस्य। राजपलाण्डौ राजनि०।

महामृग पुंस्त्री०महान् मृगः पशुः। गजे हेमच०शरभे च राजनि० तयोर्हि पशुषु महत्त्वात् तथात्वम्। स्त्रियां ङीष्

महामेदा पु० स्त्री द्रव०। वैद्यकप्रसिद्धाष्टवर्गोक्ते ओषधिभेदे रत्नमाला। तत्रार्थे स्त्री राजनि०। "महामेदाभिधः कन्दो मोरङ्गादौ प्रजायते। शुक्लार्द्रकनिभः कन्दो लताजात सपाङ्कुरः। महामेदाभिधो यो वा" भावप्र०।

महामोह पु० महान् मोहः आत्मविवेको वस्तुतोऽनित्येष्वपि रागः। १संसारतद्विषयकारणभूतेऽज्ञानभेदे "तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः। महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा" इत्युक्ते २मैथुनादिसुखभोगेच्छारूपे अन्तःकरणवृत्तिभेदे च। वैषयिकसुखस्य वस्तुतोऽनित्यत्वात् तथात्वम्। "दशविधो महामोहः" सां० का०। शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधेषु विषयेषु रञ्जनीयेषु रागः आसक्तिः" त० कौ० उक्ते ३दशविधविषयरागे च। [३तद्युक्ते पु०।

महाम्ल न० कर्म०। १वृक्षाम्ले २तिन्तिडीफले च जटा०।

महायज्ञ पु० कर्म०। नित्यं गृहस्थकर्तव्ये वेदाध्ययनाग्निहोत्रपितृतर्पणभूतबलिकर्मातिथिपूजनरूपेषु पञ्चसु कर्मसु।

महारजत न० कर्म०। १काञ्चने २धुस्तूरे च अमरः। तस्य हि रञ्जकत्वात् महत्त्वम्, कर्म०। ३महद्रौप्ये च।

महारजन न० रजत्यनेन ल्युट् कर्म०। १कुसुम्भपुष्पे अमरः २स्वर्णे च मेदि०।

महारथ पु० "एकादश सहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथ" इत्युक्ते योधभेदे

महारस पु० द्रव०। १खर्जूरे २कशेरुणि ३कोषकारे मेदि० ४इक्षौ पु० काञ्जिके न० जटा०। कर्म० ५पारदे पु० राजनि०। "दरदः पारदः शस्तो वैक्रान्तं कान्तमभ्रकम्। माक्षिकं विमलश्चेति स्युरेतेऽष्टौ महारसाः" राजनि० उक्तेषु ६दरदादिषु पु०।

महाराज(जि)क पु० महान् सन् राजते वुन् पृषो० ह्रस्वो वा। विंशत्यधिकशतद्वयसंख्याते गणदेवभेदे।

महाराजद्रुम पु० कर्म०। आरग्वधे (सोन्दाल) राजनि०।

महारात्रि स्त्री "ब्रह्मणश्च निपाते च महाकल्पो भवेन्नृप। प्रकीर्त्तिता महारात्रिः" इत्युक्ते महाकल्पात्मके १महाप्रलये "अर्द्धरात्रात् परं यत्तु मुहूर्त्तद्वयमुच्यते। सा महारात्रिरुद्दिष्टा" तन्त्रोक्ते अर्द्धरात्रोपरि मुहूर्त्तद्वयात्मके २रात्रिकाले।

महाराष्ट्र पु० कर्म०। (महाराष्ट्रा) १देशभेदे। तद्देशः कारणत्वेन अस्त्यस्या अच् गौरा० ङीष्। २जलपिप्पल्याम् ३शाकभेदे च स्त्री राजनि०। [३भूमे न०।

महारिष्ट पु० कर्म०। १पिचुमन्दे निम्बभेदे राजनि० २अत्य-

महारोग पु० कर्म०। "उन्मादो राजयक्ष्मा च श्वासस्त्वग्दोष एव च। मधुमेहश्चाश्मरी च तथोदरभगन्दरौ। इत्येतेऽष्टौ महारोगा महापातकसम्भवाः" इत्युक्तेषु महापातकजन्येषु उन्मादादिषु रोगेषु। (चग्रावः चग्रावदन्न)

**महारौरव** पु॰ कर्म॰। "महारौरवसंज्ञस्तु ज्वालोधस्ताच्च संपुटे। धम्यते खदिराङ्गारैः पच्यते कालमव्ययम्" इत्युक्ते नरकभेदे वह्निपु॰।

**महार्घ** त्रि॰ महानर्घो मूल्यं यस्य। बहुमूल्ये विश्वः।

**महार्णव** पु॰ कर्म॰। महासमुद्रे।

**महार्द्रक** न॰ कर्म॰। वनार्द्रके राजनि॰।

**महालय** पु॰ महान् आत्यन्तिको लयो यत्र। १परमात्मनि २तीर्थस्थाने ३विहारे ४कन्यास्थरविकमासकृष्णपक्षे न॰। "तस्मा दद्यात् न चेद्दत्तं पितृणां वै महालये" इति भविष्यपु॰। कर्म॰। ५बृहदालये।

**महालक्ष्मी** स्त्री कर्म॰। चण्ड्याद्वितीयचरितदेवतारूपे "सेवे सैरिभमर्द्दिनीमिह महालक्ष्मीं सरोजस्थिताम्" इत्युक्तलक्षणे अष्टादशभुजान्विते १दुर्गाशक्तिभेदे तन्त्रोक्ते २लक्ष्मीभेदे च।

**महानीलसरस्वती** स्त्री तारिणीभेदे तन्त्रसा॰।

**महालोध्र** पु॰ कर्म॰। लोध्रभेदे (पाठिया लोध) रत्नमा॰।

**महावरा** पु॰ वृणोति विस्तृणाति वृ-अच् कर्म॰। दूर्वायाम् शब्दर॰। [तारभेदे।

**महावराह** पु॰ कर्म॰। बृहद्वराहरूपधारिणि भगवदव-

**महावरोह** पु॰ महान् अवरोहोऽस्य। वटवृक्षे राजनि॰।

**महावल्ली** स्त्री कर्म॰। माधवीलतायाम् शब्दच॰।

**महावाक्य** न॰ कर्म॰। परस्परसम्बद्धार्थके १वाक्यसमुदायरूपे एकवाक्ये "वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते" मीमांसकाः। वेदान्तोक्ते २ब्रह्मविद्याप्रतिपादके तत्त्वमस्याद्युपनिषद्वाक्ये ३दानादौ अभिलापवाक्ये च।

**महाविद्या** स्त्री कर्म॰। "काली तारा महाविद्या षोडशी भुवनेश्वरी। भैरवी छिन्नमस्ता च विद्या धूमावती तथा। बगला सिद्धविद्या च मातङ्गी कमलात्मिका। एताः दश-महाविद्याः" इत्युक्तासु काल्यादिषु दशसु देवीषु।

**महाविष** पु॰ ६ब॰। द्विमुखसर्पे जटा॰।

**महाविषुव** न॰। रवेर्मेषसंक्रमणे। तत्संक्रमणञ्च स्वरूपतः सङ्क्रमणं प्रभापुञ्जस्य सङ्क्रमणं वा। तत्र प्रभापुञ्जसङ्क्रमणस्ययनांशानुसारेण अष्टमासाधिकषट्पञ्चिशत्संवत्सरैरेकैकांशं परित्यज्य तत्र पश्चात्पश्चात्तरादौ स्थाने भवति इदानीं च पश्चादयनं पर्यायेण तु पूर्वपूर्वतरादौ स्थाने भविष्यति। इत्यतस्तत्सङ्क्रमनियतस्थानत्वात् स्वरूपसंक्रमस्तु स्थिरं मेषैकस्थाने जायमानत्वात्। अयनसङ्क्रान्तिशब्दे दृश्यम्।

**महावीचि** पु॰ नास्ति वीचिः सुखं यत्र स अवीचिः कर्म॰। १अवरवीचि, "यत्र कल्लोलेन नीयते" इत्युक्ते २नरकभेदे च।

**महा(वी)वीर** पु॰ कर्म॰। १गरुडे २हनुमति ३सिंहे ४यज्ञाग्नौ ५वज्रे ६श्वेततुरङ्गे ७वन्यासवगे च मेदि॰। ८जिने ९कोकिले हेम॰। १०धनुर्द्धरे ११एकवीरवृक्षे राजनि॰ १२महाशूरे पु॰ १३वीरकाकोलीवृक्षे स्त्री रत्नमा॰। १४यज्ञसाधने मृण्मये पात्रभेदे तन्निर्माणविधिः कात्या॰श्रौ॰२६।१ सूत्रादौ दृश्यः।

**महा(वी)वीर्य** पु॰ ६ब॰। १वाराहीकन्दे राजनि॰। २परमात्मनि च शब्दर॰। ३अतिबलयुते त्रि॰। ४वनकार्पास्यां स्त्री राजनि॰। ५सञ्ज्ञायां सूर्यपत्न्याम् स्त्री त्रिका॰।

**महाबृहती** स्त्री कर्म॰। वार्त्ताक्याम् त्रिका॰।

**महावृक्ष** पु॰ कर्म॰। १स्नुहीवृक्षे हला॰। २बृहत्तरौ च।

**महाव्याधि** पु॰ कर्म॰। महारोगे कुष्ठादौ रोगे।

**महाव्याहृति** स्त्री कर्म॰। वैदिके भूर्भुवः स्वरात्मके मन्त्रत्रये

**महाव्रण** न॰ कर्म॰। (नालिघा) दुष्टव्रणे।

**महाव्रत** न॰ कर्म॰। १अतिशयव्रते शारदीयदुर्गापूजादौ "महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम्" देवीपु॰। २द्वादशवार्षिके प्रायश्चित्तात्मके व्रतभेदे च।

**महाशङ्ख** पु॰ कर्म॰। तन्त्रे वीराचारप्रसिद्धे नृकपाला-स्थिजाते 'नृललाटास्थिखण्डेन रचिता जपमालिका। महाशङ्खमयी माला ताराविद्याजपे प्रिया' इत्युक्ते १मास्थभेदे २बृहच्छङ्खे च। "पौण्ड्रं दध्मौ महाशङ्खम्" गीता। [त्रि॰।

**महाशठ** पु॰ कर्म॰। १राजधत्तूरे राजनि॰। २अतिधूर्त्ते

**महाशणपुष्पी** स्त्री शणस्येव पुष्पमस्य ङीप् कर्म॰। बृहच्छणपुष्प्याम् राजनि॰। स्वार्थे क। तत्रैव।

**महाशता** स्त्री शत मूलानि सन्त्यस्य अच् कर्म॰। बृहच्छतावर्य्याम् राजनि॰।

**महाशतावरी** स्त्री कर्म॰। बृहच्छतावर्य्याम् राजनि॰।

**महाशय** त्रि॰ महान् उदार आशयो यस्य। महानुभावे अमरः। [राजनि॰।

**महाशाखा** स्त्री महती शाखाऽस्याः। नागबलायाम्

**महाशालि** पु॰ कर्म॰। स्थूलशालौ हेमच॰।

**महाशीता** स्त्री महती शीता शीतलवीर्य्या। १शतमूल्याम् शब्दच॰। २अतिशीतले त्रि॰।

**महाशक्ति** स्त्री महती छद्माकरत्वेन प्राधान्यात् शक्तिः।

महाहेतौ शुक्लौ राजनि० । [स्त्री ङीप् ।

महाशूद्र पु०कर्म०। १आभीरे (आहीर) जातिभेदे २तत्स्त्र्या

महाश्मशान न० कर्म० । काश्याम् प्रकृतकर्मसञ्चितसर्वजो

वाना पुनरनुत्पादनाय नाशाधारत्वात् महाश्मशानत्वम् ।

महाश्यामा स्त्री कर्म० । १श्यामालतायां रत्नमा० । २शिं-

शपाभेदे राजनि० ।

महाश्रावणिका स्त्री कर्म० । (गुलकुडी) क्षुपभेदे राजनि०

महाश्वेता स्त्री कर्म० । १सरस्वत्याम् त्रिका० २कृष्णभूमि-

कुष्माण्डे च अमर० ।

महाष्टमी स्त्री कर्म० । "आश्विने शुक्लपक्षस्य भवेद् या तिथि

रष्टमी । महाष्टमीति सा प्रोक्ता" इत्युक्तायामाश्विन-

शुक्लाष्टम्याम् । [राजनि० ।

महासर्ज पु० कर्म० । १असनवृक्षे २पनसवृक्षे च (कांठाल)

महासह पु० कर्म०।१पुष्पप्रधाने कुब्जकवृक्षे राजनि०।२माषप-

र्ण्याम् स्त्री ३अम्लानवृक्षे च स्त्री अमरः।४अतिबले त्रि०

महासान्तपन न०। कर्म०। प्रायश्चित्ताख्ये स्मृत्युक्ते व्रतभेदे।

महासार पु० महान् सारोऽस्य । दुर्ब्बदिरे राजनि० ।

महासिंह पु० नित्यक० । १शरभे राजनि० २वृहत्सिंहे च

महासुगन्धा स्त्री बहु० गन्धोऽस्त्रियां वा स्त्रियां कर्म० ।

१गन्धनाकुल्याम् राजनि० २अतिसुगन्धयुक्ते त्रि० ।

महासेन पु० महती सेनाऽस्य । १कार्त्तिकेये अमर । २बृ-

हत्सेनाधिपतौ च ।

महास्कन्धा स्त्री महान् स्कन्धोऽस्याः । जम्बूवृक्षे राजनि०।

महाहास पु० कर्म० । अट्टहासे उच्चैर्हासे शब्दर० ।

महाहिगन्धा पु० अहेर्गन्धो हिंसा यस्मात् अहिगन्धो

नकुलः सतत्वेनाप्यस्य अच् कर्म० । गन्धनाकुल्याम्

राजनि० । [२अतिसर्पे त्रि०

महाह्वा स्त्री कर्म० । १कपिकच्छाम् (आलकुशी) शब्दमा०

महि(ही) स्त्री मह-इन् वा ङीप् ।१पृथिव्याम् । ङीबन्तस्तु

मालवदेशस्थे २नदीभेदेऽपि ।

महिका स्त्री मह्यते मह-क्वुन् । हिमे अमर० ।

महिमन् पु० महतो भावः इमनिच् टिलोपः ।

१महत्त्वे २ऐश्वर्यैश्वर्य्यभेदे हेमच० । [२अर्कवृक्षे च ।

म(मि)हिर पु० मह-(मिह-)वा किरच् ।१सूर्य्ये त्रिका० ।

महिला स्त्री मह-इलच्।१योषिति अमर०।२प्रियङ्गुलतायां

३रेणुकागन्धद्रव्ये राजनि० ४मत्तायां स्त्रियाम् शब्दर०।

एलच् । महेलापि योषिति शब्दर० ।

महिष पुंस्त्री० मह-टिषच् । १स्वनामख्याते पशुभेदे,

स्त्रियां ङीप् । २महिषासुरे च ।३कृताभिषेकायां राज्ञः

स्त्रियां ४सैरिन्ध्र्याम् ५औषधिभेदे च स्त्री मेदि० ङीप् ।

६व्यभिचारिण्यां स्त्रियां माहिषिकशब्दे दृश्यम् ।

महिषध्वज पु० महिषो ध्वजः चिह्नं वाहनत्वेनास्य० ।

१यमे २जिनभेदे च हेमच० महिषवाहमात्रयोरप्यत्र ।

महिषमर्दिनी स्त्री महिषं महिषासुरं मर्द्दयति मर्द-

णिनि ङीप् ६त० । दुर्गाभेदे । [क तत्रैव ।

महिषाक्ष पु० महिषस्याक्षीव प्रकाशमा० । गुग्गुलुभेदे । स्वार्थे

महिषासुर पु० रम्भासुरेण महिष्यामुत्पादिते असुरभेदे ।

महिषासुरसम्भव पु० महिषासुरात्तनुमेदसः सम्भवति

सम्+भू-अच् । भूमिजगुग्गुलौ राजनि० । [स्थमे अमरः ।

महीक्षित् पु० महीं क्षयते ईष्टे क्षि-ऐश्वर्य्ये क्विप् तुक् च ।

महीज न०मह्यां जायते जन-ड । १आर्द्रके राजनि० । २म-

ङ्गलग्रहे ३नरकासुरे च पु०४सीतायां स्त्री । [धरोऽप्यत्र ।

महीध्र पु०महीं धारयति धृ-क।पर्वते अमर । अच् । महो-

महीप्राचीर न० मह्याः प्राचीरमिवावरकत्वात् । समुद्रे

त्रिका० । [क्विप् । १पर्वते २भूमिपाले च ।

महीभृत् पु० महीं बिभर्त्ति धारयति पालयति वा भृ-

महीयस् त्रि० अतिशयेन महान् महत्+ईयसुन् टिलोपः ।

अतिमहति "महतो महीयान्" श्रुतिः ।

महीयमान त्रि० महीयते मही+क्यङ्० यक-शानच् ।

१पूज्ये २वृद्धे च "महीयमाना भवताऽतिमात्रम्" भट्टिः।

महीरुह पु० मह्यां रोहति रुह-क ।१वृक्षे अमरः २शाकवृक्षे

राजनि० ।

महीलता स्त्री मह्या लतेव । (केंचो) किञ्चुलुके अमरः ।

महेच्छ त्रि० महती इच्छा यस्य । महाशये अमर० ।

महेन्द्र पु० महान् इन्द्रः इन्द्रस्यापि नियन्तृत्वात् । १परमे-

श्वरे ७महैश्वर्य्यवति इन्द्रे ३जम्बुद्वीपस्थपर्वतभेदे च मेदि०

महेन्द्रकदली स्त्री महेन्द्रप्रिया तद्वर्णा वा कदली ।

कदलीभेदे राजनि० । [दयोऽप्यत्र राजनि० ।

महेन्द्रपुरी स्त्री ६त० । अमरावत्याम् । महेन्द्रनगर्य्या-

महेन्द्रवारुणी स्त्री महेन्द्रश्च वरुणश्च तयोरियं प्रियत्वात्

अण् देवताद्वन्द्वे उभयपदवृद्धिः कर्म० । (बड़माकाल)

लताभेदे राजनि० । [अमरः ।

महेरणा स्त्री महं गजोत्सवमीरयति ल्यु । शल्लकीवृक्षे

महेश पु० कर्म० । शिवे । महेश्वरोऽप्यत्र "महेश्वरस्त्र्यम्बक

एव नापरः" इति रघुः ।

महेशबन्धु पु० ६त० । बिल्ववृक्षे शब्दच० ।

१माषे । २आमलक्यां स्त्री राजनि० ३नगरभेदे च स्त्री मेदि० गौरा० ङीप् । ४पीतचन्दने शब्दच० ।

**माकरी** स्त्री मकरस्य तत्स्थरविककालस्य इयम् अण् । मकरस्थितरविककाले तदारब्धमाघमासस्य शुक्लसप्तम्यां "तस्मै रोगञ्च शोकञ्च माकरी हन्तु सप्तमी" ति० त० ।

**माक्ष** स्पृहायां भ्वा० पर० सक० सेट् इदित् । माङ्क्षति अमाङ्क्षीत् ।

**माक्षि(क्षी)क** न० मक्षिकाभिः सम्भृत्य कृतम् अण् पृषो० वा दीर्घः । १मधुनि अमरः । तत्तुल्यगुणे उपधातुभेदे २स्वर्णमाक्षिके ३रौप्यमाक्षिके च राजनि० । [राजनि० ।

**माक्षिकज** न० माक्षिकाज्जायते जन-ड । सिक्थके (मोम)

**माक्षिकफल** पु० माक्षिकमिव मधुरं फलमस्य । मधुनारिकेले राजनि० ।

**माक्षि(क्षी)कशर्करा** स्त्री ६त० । मधुजाते खण्डभेदे राजनि०

**मागध** पु० मगधदेशे भवः अण् । १श्वेतजीरके मेदि० २स्तुतिपाठके अमरः क्षत्रियायां वैश्याज्जाते ३वर्णसङ्करभेदे (भाट) च । ४यूथिकायां ५पिप्पल्यां स्त्री मेदि० ङीप् । ६सूक्ष्मैलायां ७शर्करायां शब्दच० ८भाषाविशेषे च स्त्री हेमच० । ९मगधदेशजाते त्रि० ।

**मागधखारिका** स्त्री लीलावत्युक्ते खारिकाभेदे ।

**माघ** पु० मघानक्षत्रयुक्ता पौर्णमासी अण् ङीप् माघी सास्मिन् मासे पुनरण् । चैत्रावधिके १एकादशे चान्द्रे मासे । २तत्पौर्णमास्यां स्त्री ङीप् । ३शिशुपालवधकाव्ये ४तत्कर्त्तरि च पु० । "तावद्भा भारवेर्भाति यावन्माघस्य नोदयः" इत्युद्भटः ।

**माघ्य** न० माघे भवं यत् । कुन्दपुष्पे अमरः ।

**माङ्गल्य** न० मङ्गलमेव, मङ्गलाय हितं वा ष्यञ् । १मङ्गले २मङ्गलसाधने च । [त्रायमाणालतायाम् राजनि० ।

**माङ्गल्यार्हा** स्त्री माङ्गल्यमर्हति अर्ह-अच् । त्रायमाणा-

**माचिका** स्त्री मच-ण्वुल् । १अम्बष्ठायां राजनि० । २मक्षिकायाञ्च त्रिका० ।

**माञ्जिष्ठ** न० मञ्जिष्ठया रक्तमण् । १रक्तवर्णे २तद्वति त्रि०

**माठर** पु० मन-अरन् ठान्तादेशः तत स्वार्थे अण्, सूर्यस्य परिपार्श्वे मठति मठ-अरण् वा । सूर्यस्य १पारिपार्श्विकभेदे अमरः । २व्यासे मेदि० ३विप्रे हेमच० । ४शौण्डिके त्रि० कौ० ।

**माण(न)क** न० मा-आनच् पुट् तुट् वा । आनकजाते कन्दभेदे "इरिद्रा माण(न)क कचु" भवप्रकाशोक्तौ ।

**माणव** पु० मनोरपत्यं अण् अल्पार्थे अल्पम् । १अल्पवयस्के मनुष्ये शब्दच० । स्वार्थे क । तत्रार्थे हारभेदे च हेम० ।

**माणवीन** त्रि० माणवस्येदम् खञ् । बालकसम्बन्धिनि ।

**माणव्य** न० माणवानां समूहः यत् । बालकसमूहे ।

**माणिक्य** न० मणिरिव कायति कै-क स्वार्थे ष्यञ् । (माणिक) १रक्तवर्णे रत्नभेदे, २गृहगोधिकायां स्त्री हेमच० ।

**माणिबन्ध(मन्थ)** न० मणिबन्ध(मन्थ) पर्वते भवः अण् । सैन्धवलवणे अमरः ।

**मातङ्ग** पु स्त्री० मतङ्गस्य मुनेरयम् अण् । १गजे अमरः । २किरातजातिभेदे स्त्रियां ङीप् । ३जैनभेदे पु० हेमच० । ४दशमहाविद्याभेदे स्त्री ङीप् ।

**मातङ्गमकर** पु० मातङ्ग इव मकरो जलजन्तुः । महामत्स्यभेदे राजनि० ।

**मातरपितृ** स्त्री द्वि० व० माता च पिता च द्वन्द्वे मातरौ मातरादेशः । मातापित्रोः । पक्षे मातरानङ् । मातापितृ तयोरर्थयोः द्वि० व० ।

**मातरिश्वन्** पु० मातरि आकाशे श्वयति वर्द्धते श्वि-कनिन् डिच्च अलुक्स० । वायौ अमरः । [इन्द्रसारथौ अमरः ।

**मातलि** पु० मतं लाति ला-क मतलस्यापत्यम् इञ् ।

**माता** स्त्री मा-अतच् । जनन्याम् । "विश्वेश्वरीं विश्वमाताम्" इति दुर्गास्तवः । [२तद्वत्पत्न्यां स्त्री गौरा० ङीष् ।

**मातामह** पु० मातुः पिता मातृ+डामहच् । १मातुः पितरि

**मातुल** पु० मातुर्भ्राता मातृ-डुलच् । १मातुर्भ्रातरि अमरः २तत्पत्न्यां वा ङीष् वा आनुक् च । मातुलानी मातुली मातुला च । मद-पिष्-उलच् पृषो० दस्य तः । ३धुस्तूरे ४व्रीहिभेदे ५मदनवृक्षे च मेदि० । ६सर्पभेदे हेम० ।

**मातुलपुत्रक** न० मातुलस्य धुस्तूरस्य पुत्र इव कायति कै-क । १धुस्तूरे अमरः । ६त० स्वार्थे क । २मातुलसुते ।

**मातुलाहि** पु० मातुल इवाहिः । मातुधाने सर्पे अमरः ।

**मातुलुङ्ग** पु० मातुल गच्छति गम-खच् डिच्च पृषो० । १बीजपूरे भरतः । २मधुकर्कटयाम् स्त्री रत्नमा० । स्वार्थे क । ३बीजपूरे अमरः ।

**मातृ** त्रि० मा-तृच् । १प्रमाणकर्त्तरि २परिमाणकर्त्तरि ३जीवे ४आकाशे च मातरिश्वा । मातारौ मातारः । मा-तृ । "ब्राह्मी माहेश्वरी चण्डी वाराही वैष्णवी तथा । कौमारी चैव चामुण्डा चर्चिकेत्यष्ट मातरः" इत्युक्ते ५चिरसहचरीभेदे । ६जनन्याम् ७भूमौ ८विभूतौ शब्दर० । ९लक्ष्म्याम् हेमच० १०रेवत्याम् अमरः ११स्त्री

नव्यां मेदि० १२आखुकर्ण्याम् १३इन्द्रवारुण्याम् (राखालशशा) १४जटामांस्यां राजनि०। चण्डीप्रभृतिषु १५देवीशक्तिषु च। "मातः कोपमयावित" देवीमा०। आतिदेशिकमातरश्च ब्रह्मवै०पु०गण०ख०१५अ०उक्ता यथा "स्तन्यदात्री गर्भधात्री भक्ष्यदात्री गुरुप्रिया। अभीष्टदेवपत्नी च पितुः पत्नी च कन्यका। सगर्भजा या भगिनी पुत्रपत्नी प्रियाप्रसूः। मातुर्माता पितुर्माता सोदरस्य प्रिया तथा। मातुः पितुश्च भगिनी मातुलानी तथैव च। जनानां वेदविहिता मातरः षोडश स्मृताः"।

ब्रह्मवै० पु० जन्मख० ५८ अ० अन्यविधा उक्ता यथा "गुरुपत्नी राजपत्नी देवपत्नी तथा वधूः। पितुः स्वसा शिष्यपत्नी भृत्यपत्नी च मातुली। पितृपत्नी भ्रातृपत्नी श्वश्रूश्च भगिनीसुता। गर्भधात्रीष्टदेवी च पुंसः षोडश मातरः"। तत्रैव २५ अ० "गुरोःपत्नी राजपत्नी विप्रपत्नी च या सती। पत्नी च भ्रातृसुतयोर्मित्रपत्नी च तत्प्रसूः। मद्र पित्रोस्तयोर्भ्रातुःपत्नी श्वश्रूः स्वकन्यका। जननी तत्सपत्नी च भगिनी सुरभी तथा। आभीष्टसहपत्नी च धात्री कान्ता मदाविका। गर्भधात्री च नाम्नी च भयात्रातुश्च कामिनी। एता वेदप्रणीताश्च सर्वेषां मातरः स्मृताः"। अस्य रूपं मातरौ मातरः। इत्यादौ पूज्यासु गौर्य्यादिषु १६देवीशक्तिभेदेषु "गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः। शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह" मु०त०टह्मपु०।

मातृका स्त्री मातेव कायति कै-क। १उपमातरि २मह्म्याद्यादिषु चण्डीप्रभृतिदेवीमूर्त्तिषु ३सर्वमन्त्रोत्पादकेषु अकारादिक्षान्तपञ्चाशद्वर्णेषु ४मातरि च मेदि०। मातृ+स्वार्थे क। मातृशब्दार्थे।

मातृबन्धु पु० ६त०। "मातुः पितुःस्वसुः पुत्रा मातुर्मातुःस्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबन्धवः" इत्युक्तेषु मातृ. पितृष्वस्रीयादिषु। मातृबान्धवोऽप्यत्र।

मातृष्वसृ स्त्री ६त०। मातुर्भगिन्याम् षत्वकस्व० उभयत्र षत्वम्। मातुःष्वसाप्यत्र।

मातृष्वस्रेय पु० मातृष्वसुरपत्यम् ढक्। १मातुर्भगिनीपुत्रे २तत्कन्यायां स्त्री ङीप्। छण्। मातृष्वस्रीयोऽप्यत्र।

मातृसिंही स्त्री मातुः मनाक् सिंहीव। वासकवृक्षे शब्दर०

३परिच्छदे ४अल्पे ५परिमाणे स्त्री अमर। ६कर्णभूषायाम् ७वित्ते ८वर्णावयवभेदे च स्त्री मेदि०। "कालेन यावता पाणिः पर्य्येति जानुमण्डलम्। सा मात्रा कविभिः प्रोक्ता" इत्युक्ते ९ह्रस्ववर्णोच्चारणकाले च स्त्री। "एकमात्रो भवेद्ध्रस्वः"। मीयन्तेऽनया विषयाः मा-करणे त्रन्। १०इन्द्रियवृत्तौ। "मात्रास्पर्शास्तु कौन्तेय"। गीता।

मात्रापताका स्त्री छन्दोग्रन्थोक्ते मात्रावृत्तस्थलघुगुरुज्ञानाद्युपाये पताकाकारे चक्रे।

मात्रामर्कटी स्त्री छन्दोग्रन्थोक्ते मात्रावृत्तस्थलघुगुरुज्ञानाद्युपाये मर्कटीजालचक्रभेदे। [मेरुचक्रे।

मात्रामेरु पु० छन्दोग्रन्थोक्ते मात्रावृत्तस्थलघुगुरुज्ञानाद्युपाये

मात्रावृत्त न० मात्रया कृतं वृत्तम्। आर्य्यादौ छन्दोभेदे।

मात्सर्य्य न० मत्सरस्य भावः ष्यञ्। परगुणद्वेषे "मात्सर्य्यमुत्सार्य्य विचार्य्य कार्य्यम्" सा०द०। [अमात्सीत्।

मान वधे चुरा०-क्षेपे चुरा० भ्वा० प० सेट् इदित्। मान्थति

माथ पु० मथ-घञ्। १पथि त्रिका०। २मन्थने शब्दर०।

माथुर त्रि० मथुरायां भवो मथुराया. आगतो वा अण्। १मथुरानगरीभवे, २तत आगते च।

माद पु० मद घञ्। १दर्पे २हर्षे च भरत।

मादक त्रि० मदयति मद-णिच्-ण्वुल्। १मत्तताकारके द्रव्ये। माद्यति कर्त्तरि ण्वुल्। २दात्यूहे पुंस्त्री० शब्दमा० स्त्रियां ङीष्।

मादन न० मादयति मद-णिच्-ल्यु। १लवङ्गे शब्दच०। २कामदेवे ३मदनवृक्षे च पु०। ४विजयायां राजनि० ५मादकद्रव्ये च स्त्री भावप्र०गौरा०ङीष्। ६हर्षकारके त्रि०।

मादृ(क्ष)(श)श् त्रि० ममेव दर्शनमस्य दृश्-क्स ट क्विप् वा। मम तुल्यदर्शने मत्सदृशे। [२अतिविषायाश्च राजनि०।

माद्री स्त्री मद्रे भवा अण्। १पाण्डुराजस्य द्वितीयपत्न्याम्

माधव पु० मायाः धवः। १नारायणे। मधु+स्वार्थे अण्। २वसन्ते विष्णः "स माधवेनाभिमतेन सख्या" कुमार। मधुने पुष्परसाय मद्याय वा हितं अण्। ३वैशाखे मासि तस्य बहुपुष्पवत्त्वात् तद्धितत्वम्। ४मधूकवृक्षे तद्दुसेर्पि हि मद्यसम्भव.। ५कृष्णमुद्गे च राजनि०। मधु बाहुल्येनास्त्यस्या अण्। ६वासन्तीलतायाम् स्त्री ङीप्।

माधवीलता स्त्री कर्म०। स्वनामख्यातायां लतायाम् अमर०

माधवेष्टा स्त्री माधवे वैशाखे माधवस्य कृष्णस्य वा इष्टा। १वाराहीकन्दे राजनि०। [२माधवप्रिये त्रि०।

जपसंख्यार्थे रुद्राक्षादिबीजरचितात्मके २माल्यभेदे च ।

**मालाकण्ट** पु० मालाकारः कण्टः कण्टको यस्य । अपामार्गे राजनि० ।

**मालाकन्द** पु० मालाकारः कन्दो यस्य । कन्दभेदे राजनि० ।

**मालाकार** पुंस्त्री० मालां करोति कृ-अण् । (माली) १वर्णसङ्करभेदे स्त्रियां ङीप् । २माल्यकारके त्रि० ।

**मालाग्रन्थि** पु० मालया ग्रन्थिरस्य । मालादूर्वायाम् राजनि० ।

**मालातृण** न० मालाकारं तृणम् । भूस्तृणे अमरः । स्वार्थे क । तत्रैव ।

**मालादीपक** न० अर्थालङ्कारभेदे अलङ्कारशब्दे दृश्यम् ।

**मालादूर्वा** स्त्री मालाकारा दूर्वा । (गाठिदूर्वा) दूर्वाभेदे राजनि० ।

**मालारिष्टा** स्त्री मालाभूतमरिष्टं यस्याः ६ ब० । पाठायाम् [राजनि०

**मालाली** स्त्री मालामलति भूषयति अल-अण् ङीप् । पृक्कायां (पिडिङ्गशाक) राजनि० स्वार्थे क । तत्रैव ।

**मालिक** पुंस्त्री० माला तन्निर्माणं शिल्पमस्य ठन् । १मालाकारे जातिभेदे अमर० २पक्षिभेदे पुंस्त्री० मेदि० स्त्रियां ङीप् । ३रञ्जके शब्दर० । ४माल्यकारके त्रि० ।

**मालिका** स्त्री मालेव कन् अत इत्त्वम् । १नवमल्लिकायां २ग्रीवालङ्कारभेदे ३नदीभेदे ४पुष्पमाल्ये ५पुत्र्यां च मेदि० ६सुरायां धारा० । ७अतसाम् शब्दच० "रामाश्वमालिकाम्भोज" इति कल्पद्रुमव्याख्यानम् ।

**मालिन्** पु० माला शिल्पमस्त्यस्य इनि । १मालाकारे २माल्यवति त्रि० ३मालाकारपत्न्यां ४पञ्चदशाक्षरपादके, "ननमयययुतेयं मालिनी भोगिलोकैः" छ० र० उक्ते ५छन्दोभेदे । ६गौर्य्याम् ७चम्पानगर्यां ८मन्दाकिन्यां कण्वाश्रममालिकायां ९नदीभेदे १०मातृकाभेदे च स्त्री मेदि० ङीप् । ११अग्निशिखावृक्षे दुरालभायां स्त्री शब्दच० ङीप् ।

**मालु** स्त्री मल उण् । १पत्रलतायां (पानलता) २नार्य्यां मेदि० ।

**मालुधान** पु० मालुरिव पत्रलतेव धीयतेऽसौ धा-कर्मणि ल्युट् । (मालुयाधाप) १सर्पभेदे अमरः । २लताभेदे स्त्री ङीप् मेदि० । [२कपित्थे च राजनि० ।

**मालूर** पु० मा लक्ष्मीं परेषां लुनाति लू-रक् । १बिल्वे अमरः

**मालेय** त्रि० मालायां साधुः ढक् । १मालाकरणार्हपुष्पे २स्थूलैलायां स्त्री रत्नमा० ।

**माल्य** न० मालायै हितं यत् । १पुष्पे । स्वार्थे ष्यञ् । २पुष्पमालायाम् ।३मूर्द्धिस्थायां पुष्पमालायाम् अमरः ।

**माल्यपुष्प** पु० मालायै हितं माल्यं पुष्पमस्य । १शणवृक्षे २घण्टापुष्पायाम् स्त्री राजनि० ङीप् । कप् । माल्यपुष्पिका तत्रैवार्थे ।

**माल्यवत्** त्रि० माल्यमस्त्यस्य मतुप् मस्य वः । १माल्ययुक्ते २केतुमालेलावृतवर्षयोः सीमाभूते २पर्वतभेदे ३सुकेशराक्षसपुत्रे रावणमातामहे राक्षसभेदे च । [धर्मे त्रिका० ।

**मामर्द्धिक** त्रि० मेति शब्दं निषेधाय करोति ठक् । निषे-

**माष** पु०मष-संग्रामे कर्त्तरि घञ् । (माषकलाइ) व्रीहिभेदे "दधाद्यैश्च ददन्ति माषम्" इत्युक्ते "गुञ्जाभिर्दशभिर्माष इत्युक्ते च २परिमाणभेदे । स्वार्थे क । तत्रार्थे ।

**माषकलाय** पु० माषाख्यः कलायः । स्वनामख्याते व्रीहौ

**माषपर्णी** स्त्री माषस्येव पर्णान्यस्याः ङीप् । वनमाषे अमर०

**माषभक्तबलि** पु० माषमिश्रितं भक्तमेव बलिः पूजोपहारद्रव्यम् । माषमिश्रिते भक्तरूपे पूजोपहारे ।

**माषवर्द्धक** पु० माषं माषपरिमितं स्वर्णं वर्द्धयति आधिक्येन अपहरति छिद-छेदने ण्वुल् । स्वर्णकारे शब्दमा० ।

**माषीण** न० माषाणां भवनं क्षेत्रं खञ् । माषोत्पत्तियोग्ये क्षेत्रे । यत् । माष्यमप्यत्र ।

**मास्** पु० माति परिच्छिनत्ति अनया कालम् मा-असुन् । १चन्द्रे २त्रिंशद्दिनात्मककालरूपे मासे च ।

**मास** पु० मास्+अच् ।१चन्द्रे त्रिंशद्दिनात्मके २काले च । स च सौरसावनचान्द्रनाक्षत्रभेदाच्चतुर्विधः । मासचान्द्रायणम् अच् ।३चान्द्रे मासे तु अपर । मस्यते परिमीयतेऽनेन मस परिमाणे करणे घञ् । परिमाणमप्रयुक्तात्मके भरतः । स्वार्थे क । मासक तत्रैवार्थे ।

**मासज** न०मासं नयति नी-ड । सोमराजीलतायाम् शब्दच०।

**मासप्रमित** पु० मासं प्रमाप्रकारमस्य प्र+मा-क ।"मासाः परिमाणे" पा० सू० । प्रतिपच्चन्द्रे ।

**मासर** पु०मस-परिणामे घञ् मासं परिणामं राति रा-क । भक्तमण्डे अमरः । [मासान्तगामे संक्रान्त्यादौ ।

**मासान्त** पु० मासस्य सौरस्य चान्द्रस्य वाऽन्तः अवसानम् ।

**मासिक** त्रि० मासे भवः कालाट्ठञ् । १मासभवे प्रेतोद्देशेन मृतकालीयतिथौ, प्रतिमासम् अमावास्यायां च कर्त्तव्ये २श्राद्धे न० ।"मासि मासि सपिण्डे तु" स्मृतिः । "पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधा" स्मृतिः ।

**मास्म** अव्य० मा च स्म च द्व०-मा० मप् । निषेधे ।

**माह** माने भ्वा० उभ० सक० सेट् । माहति ते अमाहीत् अमाहिष्ट । आदित् अस्य न वृद्धिः ।

लि० । "आवृत्य वायुः सकफो धमनीः शब्दवाहिनीः । नरान् करोत्यक्रियकान् मूकमिन्मिनगद्गदान्" अथच नान् ईषदर्थे नञ् । तत्र वायोर्वाक्रुद्धे मूकत्वम् मध्यमत्वे वाक्तुमाविकमन्त्कारकता अल्पत्वे गद्गदत्वमिति भेदः ।

मिल श्लेषे तु० उभ० सक० सेट् । मिलति अमेलीत् अमेलिष्ट कुटादित्वमित्येके तेन अमिलीत् त्रुटि मिलनम् ।

मिव सेके भ्वा० पर० सक० सेट् इदित । मिन्वति अमिन्वीत् ।

मिश ध्वनौ अक० कोपे सक० भ्वा० पर० सेट् । मेशति अमेशीत् ।

मिशि(शी) स्त्री मिश इन् वा ङीप् । १मधुरिकायां (मौरी) २शतपुष्पायां, (शुलफा) भरतः ३जटामांस्यां शब्दर०। अत्र दन्त्योष्ठमिसि मिसी मिषि-मिषी इत्यादयः तत्तार्थेषु पाठान्तरम् । [ अति-ते अमिमिश्र(श)त् त ।

मिश्र (क) योजने अद० चु० उभ० सक० सेट् । मिश्र(क)

मिश्र त्रि० मिश्र अच् ।१संयुते उत्तरपदस्थः २श्रेष्ठार्थे । यथा आर्यमिश्राः । ३गजजातिभेदे पु० हेमच० । ४ज्योतिषोक्ते कृत्तिकाविशाखानक्षत्रद्वये च पु० । संज्ञायां कन् । ५इन्द्रवने जटा० ६मौनरकद्वये राजनि० ।

मिश्रकावण न० मिश्रकनामकं वनं पूर्वदीर्घौ णत्वञ्च । १इन्द्रोद्याने । [कायाम् राजनि० ।

मिश्रपुष्पा स्त्री मिश्रं पुष्पं यस्याः अजा० टाप् । मेथि-

मिश्रवर्ण न० मिश्रवितो वर्णो यस्य । १कृष्णागुरुणि राजनि० २मिश्रितवर्णमात्रे त्रि० । [वार्त्ताक्यां राजनि०

मिश्रवर्णफला स्त्री मिश्रवर्णं चित्ररूपान्वित फलं यस्याः ।

मिश्रव्यवहार पु० लीलावत्युक्ते गणनाभेदे ।

मिश्रिता स्त्री "मिश्रिता चैव विज्ञेया मिश्रितर्क्षैस्तु सक्रम" इत्युक्ते १कृत्तिकाविशाखानक्षत्रकाले रविसक्रमणे । २गौरवित्ते न० जटा० ३मिलिते त्रि० ।

मिश्रेया स्त्री मिश्र-अच् मिश्रा ईयते ई गतौ यत् एषा कर्म० स० । १मधुरिकायां (मौरी) अमरः । २शतपुष्पायाम् (शुलफा) राजनि० । [णा सेट् ।

मिष सेचने भ्वा० पर० सक० सेट् । मेषति अमेषीत् । षदित्

मिष पराभिभवेच्छायाम् तु० पर० सक० सेट् । मिषति अमेषीत् मिमेष ।

मिष न० मिष-क । १छले २स्पर्द्धने पु० मेदि० ।

मिषिका स्त्री० मिषी+स्वार्थे क । जटामांस्याम् शब्दमा० ।

मिष्ट त्रि० मिष क्त । १सिक्ते २स्वादिते च । ३मधुररसे पु० तद्वति त्रि० भावप्र० ।

मिह सेचने भ्वा० पर० सक० अनिट् । मेहति अमिक्षत् ।

मिहिका स्त्री मिह क्वुन् अत इत्वम् । नीहारे शब्दर० ।

मिहिर पु० मिह-किरच् । १सूर्ये २अर्कवृक्षे ३वृद्धे मेदि० ४मेघे हेमच० ५वायौ, ६चन्द्रे, विक्रमादित्यसभास्थे नवरत्नमध्यस्थे पण्डितभेदे च शब्दच० । तत्रिन्त्यम् । "धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य" ज्योतिर्विदाभरणवाक्ये वराहमिहिर इत्येव तत्र समासे वराहमिहिर इत्येकः "वराहमिहिरात्मजेन पृथुयशसा" तत्पुत्रकृतषट्पञ्चाशिकायामुक्तेः द्वित्वे वररुचिना सह दशसंख्यापत्तेश्च ।

मी बधे दि० आ० सक० अनिट् । मीयते अमेष्ट ।

मी बधे क्र्या० उ० सक० सेट् । मीनाति मीनीते अमासीत् अमास्त । ओदित् क्त मीनः ।

मी गतौ ज्ञाने च वा चु० उभ०पक्षे भ्वा०पर० सक० अनिट् । मायवति ते मयति-अमीमयत् त अमैषीत् ।

मीढ त्रि० मिह-क्त । मूत्रिते ।

मीढुष्टम पु० मीढुस्+अतिशये तमप् नि० । शिवे ।

मीढुस् पु० मिह-क्वसु नि० । शिवे ।

मीन पुस्त्री० मी-नक् ।१मत्स्ये अमरः स्त्रियां ङीष् मेषादितो द्वादशे २राशौ ३भगवदवतारभेदे च पु० ।

मीनकेतन पु० मीनः केतनं यस्य । कन्दर्पे अमरः । मीनध्वजादयोऽप्यत्र । [राजनि० मीनाक्षीत्यादयोऽप्यत्र ।

मीननेत्रा स्त्री मीनस्य नेत्रमिव अक्षिरस्याः । गण्डदूर्वायां

मीनाण्डा स्त्री मीनस्याण्डमिवाकारो रेणुकाऽस्त्यस्य अच् गौ० ङीष् । शर्करायाम् राजनि० ।

मीम शब्दे अक० गतौ सक० भ्वा० पर० सेट् । मीमति अमीमीत् । ऋदित् चङि न ह्रस्वः ।

मीमांसक पु० मीमांसां वेत्त्यधीते वा वुन् । १मीमांसाशास्त्रज्ञे २तदध्येतरि च । मान-विचारे स्वार्थे सन् ण्वुल् । ३सिद्धान्तकारके ।

मीमांसा स्त्री मान-विचारे स्वार्थे सन् अ । १विचारपूर्वकतत्त्वनिर्णये २तत्प्रतिपादकग्रन्थभेदे च स च ग्रन्थः कर्मब्रह्मविषयभेदेन द्विविधस्तत्र कर्मकाण्डविषयनयविचारको ग्रन्थो जैमिनिप्रणीतः स च पूर्वमीमांसात्वेन प्रसिद्धः ब्रह्मविषयसंशयविचारकग्रन्थः स वेदान्तत्वेन प्रसिद्ध ।

मील निमेषे भ्वा० पर० अक० सेट् । मीलति अमीलीत् ऋदित् चङि वा ह्रस्वः ।

मीलन न० मील ल्युट् । १सङ्कोचे २सङ्कोचने च ।

मीलित त्रि० मील-क्त । १अप्रफुल्ले २सङ्कुचिते च "मीलितं यदभिरामताधिके" इति काव्यप्रकाशः ।

मीव स्थौल्ये गतौ भ्वा० पर०सक०सेट् । मीवति अमीवीत् ।

मु पु० मोचयति जीवान् पाशेभ्यः मुच डु । १महेशे शब्दच० २बन्धने एका० । [पञ्चाग्नौ भरत' ।

मुकन्दक पु०मुदः मुदे कन्दो यस्य कप् पृषो० मुदो दलोपः ।

मुकु पु० मुच-कु पृषो' चस्य कः । १मोक्षे शब्दच०२बन्धने च

मुकुट पु० मकि उट पृषो०।१शिरोभूषणे अमरः । २चक्रुलीमोटने स्त्री शब्दर० ङीप् ।

मुकुन्द पु० मुकुं ददाति दा-क पृषो० मुम् । "मुकुमव्ययमाख्यातं निर्वाणमोक्षवाचकम् । तद्ददाति च यो देवः मुकुन्दस्तेन कीर्त्तितः" "मुकुम् भक्तिरसप्रेमवचनं वेदसम्मतम् । यस्तद् ददाति भक्तेभ्यो मुकुन्दस्तेन कीर्त्तितः" ब्रह्मवै० जन्मख०११०अ० इति वा निरुक्तो विष्णौ ।

मुकुम् अव्य०मकि उमुच् पृषो० । १निर्वाणमोक्षे २भक्तिप्रेमरसे च मुकुन्दशब्दे दृश्यम् ।

मुकुर पु०मकि-उरच् पृषो० । १दर्पणे, २बकुलवृक्षे ३कुलालदण्डे, मेदि० ४मल्लिकावृक्षे, विश्वः ५कोरकवृक्षे, शब्दर०। ६कोरके च हेमच० ।

मुकुल पु० न० मकि-उलच् पृषो० । १ईषद्विकाशितकलिकायाम् अमर' २देहे, ३आत्मनि च धरणिः ।

मुकुष्टक पु० मुकुर्मोक्षस्तं स्कृति स्कु-अप् पृ० सलम् । वनमुद्गे अमर पृषो० मुकुष्ठक तत्रार्थे ।

मुकूलक पु० मकि-ऊलच् संज्ञाया कन् । दन्तिवृक्षे । राजनिघ० [च शब्दर० ।

मुक्त त्रि० मुच क्त । १त्यक्ते, २प्राप्तमोक्षे मेदि० । ३आनन्दिते

मुक्तरसा स्त्री मुक्तो रसो यया' । रास्नायाम् रत्नमा० ।

मुक्तसङ्ग त्रि० मुक्तः सङ्गो विषयासक्तिर्येन । १त्यक्तसर्वविषयासक्ते २परिव्राजके पुं० [मुक्तो येन । दामयुगरे ।

मुक्तहस्त त्रि० मुक्तः दानाय प्रसारितः न बद्धः इति यावत्

मुक्ता स्त्री मुच-क्त । १रास्नायाम् रत्नमा० २शुक्तिजे (मति) रत्नभेदे च।

मुक्तापुष्प पु० मुक्तेव शुभ्रं पुष्पमस्य । कुन्दवृक्षे राजनि० ।

मुक्ताप्रसू स्त्री मुक्ता प्रसूते प्र+सू-क्विप् हृत० । शुक्तौ राजनि० । [मुक्ताहारे हेमच०।

मुक्तामास्फ्व पु० मुक्तया मुक्ताविभिन्नतया प्रासवते अच् ।

मुक्ताफल न० मुक्ता फलमिव । १मौक्तिके, २लवलीफले, (नोयाड) ३कर्पूरे च मेदि० । ४बोपदेवकृते भक्तिप्रधाने ग्रन्थभेदे च "चतुरेण चतुर्वर्गचिन्तामणिविधायिना । हेमाद्रिर्बोपदेवेन मुक्ताफलमचीकरत्" तद्ग्रन्थस्थ पद्यम् ।

मुक्तालता स्त्री मुक्तया लतेव । मुक्ताहारे हेमच० ।

मुक्तावली स्त्री मुक्तया आवली हारभेदः । १मुक्ताहारे अमरः । ६त० । २मुक्तानेणौ भाषापरिच्छेदग्रन्थटीकायां ३सिद्धान्तमुक्तावल्यां च । [मुक्तौ अमर' ।

मुक्तास्फोट पु० स्फुट्यते विदीर्यते स्फोट' मुक्तार्थं स्फोट' ।

मुक्ति स्त्री मुच क्तिन् । १मोचने २संसारबन्धनरहित्ये मतभेदेन ३आत्यन्तिकदुःखनिवृत्तौ, ४ब्रह्मस्वरूपावाप्तौ च देहेन्द्रियाद्यभावात्मनो ५ब्रह्मशून्यत्वे च ।

मुक्तिमण्डप पु० मुक्तिप्रदो मण्डपः शाक०त० । १काशीस्थे २जगन्नाथक्षेत्रस्थे च मण्डपभेदे तीर्थे । [रत्नमा०।

मुक्तिमुक्त पु० मुक्तिर्मोक्षस्तं तया मुक्तोऽस्थितः । सिह्लके

मुख न० खन अच् डित् धातोः पूर्वं मुट् च । "प्रजापतिर्जातः यतः खातं तस्मादाहुर्मुखं बुधाः" इत्युक्ते देहावयवभेदे । "ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च । गलो गलादि सकलं सप्ताङ्गं मुखमुच्यते" इत्युक्ते गलादिसप्ताङ्गावयवयवति २वदने भावप्र० । ३टङ्कस्य निःसरणमार्गे नि,अमरः । ४शब्दमाद्यपादे' प्रवेशनिर्गमे,५आरम्भे, ६उपाये, ७नाटकादौ सन्धिभेदे मेदि० ८नाटकादिशब्दभेदे, ९आद्ये, १०प्रधाने, ११शब्दे, १२वेदे, च शब्दर०। १३मुकुलवृक्षे पु०(खिचो) शब्दच०। [राजनि०

मुखगन्धक पु० मुखस्य गन्धो यस्य सेवनात् कप् । पलाण्डौ

मुखचपला स्त्री आर्याशान्तरभेदे मात्राभेदे छ०र० ।

मुखज पु० ब्रह्मणो मुखाज्जायते जन-ड । १विप्रे "ब्राह्मणोऽस्य मुखमासीदि"ति श्रुति २वदनजातमात्रे त्रि० ।

मुखदूषण पु० मुखं दूषयति सेवनात् दुर्गन्धेन दूष-णिच् ल्यु । पलाण्डौ राजनि० ।

मुखधौता स्त्री धौतं मुखं यदा धाव-क्त कठ् परनि० । मञ्जिष्ठायाम् (वामनहाटि) शब्दच० ।

मुखनिरीक्षक त्रि० मुखमितरस्य निरीक्षते निर्+ईक्ष ण्वुल् । १अलसे शब्दर० । स हि अन्योऽपि स्वकार्यं कुर्यात् तदानाह करोमीत्याशयेन इतरमुख निरीक्षमाण' स्वकार्ये न प्रवर्त्तते । इति तस्य तथात्वम् ।

मुखपूरण न० मुख पूरयति पूर-ल्यु । गण्डूषेऽसितजलादौ ।

मुखप्रिय न०मुखं प्रीणाति प्री-क-उप०स०। १कमले आयुः २मुखरोचकमात्रे त्रि० ।

**मुखभूषण** न॰ मुखं भूषयति भूष-ल्यु । १ताम्बूले । २मुखमण्डने च ।

**मुखमण्डनक** पु॰ मुखस्य मण्डनमिव इवार्थे कन् । १तिलकवृक्षे राजनि॰ । ६त॰ । स्वार्थे क । २मुखभूषणे न॰ । मण्डयति—ल्यु स्वार्थे क ६त॰ । ३मुखभूषके त्रि॰ ।

**मुखमोद** पु॰ मुखं मोदयति मुद-णिच्-अण् उप॰स॰ । शोभाञ्जने राजनि॰ ।

**मुखर** त्रि॰ मुखं मुखव्यापारं कथनं राति दत्ते करोतीति यावत् रा-क । १अप्रियवादिनि अमरः । २अपवादिनि च "मुखरस्तत्र हन्यते" इति हितोपदेशः । ३काके पु॰ स्त्री॰ स्त्रियां ङीष् । ४मुख्ये पु॰ राजनि॰ । [माने

**मुखरित** त्रि॰ मुखर इवाचरितः । मुखर+क्विप्-क्त । शब्द्य

**मुखरोग** पु॰ सप्ताङ्गस्य मुखस्य रोगः । सप्ताङ्गमुखस्य रोगभेदे तन्निदानादि यथा

"ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च । गलो गलादि सकलं सप्ताङ्गं मुखमुच्यते" । अथ मुखरोगाणां सङ्ख्यामाह "स्युरष्टावोष्ठयोर्दन्तमूले तु दश षट् तथा । दन्तेष्वष्टौ रसनायां पञ्च स्युर्नव तालुनि । कण्ठे त्वष्टादश प्रोक्तास्त्रय सर्वसराः स्मृताः । एवं मुखामयाः सर्वे सप्तषष्टिर्मता बुधैः" मुखरोगाणां निदानान्याह "आनूपपिशितक्षीरदधिमाषादिसेवनात् । मुखमध्ये गदान् कुर्युः क्रुद्धा दोषाः कफोत्तराः" भावप्र॰ ।

**मुखलाङ्गल** पु स्त्री॰ मुखं लाङ्गलमिव भूमिविदारकं यस्य । शूकरे जटा॰ स्त्रियां ङीष् ।

**मुखवल्लभ** पु॰ ६त॰ । १दाडिमवृक्षे शब्दमा॰ तत्फलस्य मुखप्रियत्वात् तस्य तथात्वम् । २मुखप्रिये त्रि॰ ।

**मुखवाचिका** स्त्री मुखं वाचयति स्फुटीकरोति सेवनात् वच-णिच्-ण्वुल् । अम्बष्ठायाम् राजनि॰ ।

**मुखवास** पु॰ मुखं वासयति सुरभीकरोति वासि-अण् उप॰स॰ । १गन्धतृणे राजनि॰ । २कर्पूरादौ च ।

**मुखवासन** पु॰ मुखं वासयति वासि ल्यु । १मुखसौरभकारके गन्धे । २तद्वति त्रि॰ अमर ।

**मुखविष्ठा** स्त्री॰ मुखं विष्ठेव दुर्गन्धं यस्याः । तैलपायिकायां हेमच॰ तस्याः स्पर्शमात्रे हि द्रव्यान्तरे दुर्गन्धो भवति ।

**मुखव्यादान** न॰ वि+आ+दा-ल्युट् ६त॰ । मुखप्रसारणे ।

**मुखशोधन** न॰ मुखं शोधयति शुध-णिच्-ल्यु । १त्वचे (दारचिनि) राजनि॰ । २कटुरसे पु॰ हेमच॰ । [राजनि॰ ।

**मुखशोधिन्** पु॰ मुखं शोधयति शुध-णिच् णिनि । जम्बीरे

**मुखस्राव** पु॰ स्रवति स्रु-ण ५त॰ । लालायां मुखस्निग्धत्वे राजनि॰ ।

**मुखाग्नि** पु॰ मुखमेवाग्निरस्य शापदानेन दाहकत्वात् यस्य । १विप्रे कर्म॰ । शवदाहकाले २दावानले च शब्दमा॰ ।

**मुखास्र** पु॰ मुखमेवास्रं यस्य । कर्कटे त्रिका॰ । [च ।

**मुख्य** त्रि॰ मुखे आदौ भवः यत् । १प्रथमकल्पे अमरः २श्रेष्ठे

**मुग्ध** त्रि॰ मुह-क्त । १मूढे । मोहयति अन्तर्भूतण्यर्थे कर्त्तरि क्त । २सुन्दरे विश्वः । ३नायिकाभेदे स्त्री सा॰द॰१प॰

**मुच** दम्भे शाठ्ये भ्वा॰ आत्म॰ सक॰ सेट् । मोचते कश्चिद् इदित्प्ययम् तन्मते । मुञ्चते ।

**मुच** त्यागे चुरा॰ उ॰ सक॰ सेट् । मोचयति ते अमूमुचत् त

**मुच** त्यागे तु॰ मुचादि॰ उभ॰ सक॰ अनिट् । मुञ्चति-ते अमुचत् अमुचत अमुक्त । कर्मकर्त्तरि अकर्मक "मुच्यते सर्वपापेभ्य" इति पुराणम् ।

**मुचकुन्द** पु॰ मुच-क मुचः कुन्द इव । १स्वनामख्याते पुष्पवृक्षे भावप्र॰ मान्धातृनृपपुत्रे २नृपभेदे च ।

**मुज** ध्वनौ भ्वा॰ मार्जने सक॰ वा चुरा॰ पक्षे भ्वा॰ पर॰ सेट् । माजयति ते मोजति अमूमुजत् त अमोजीत् । इदित्प्ययमार्गे । मुञ्जयति ते मुञ्जति अमुमुञ्जत् त अमुञ्जीत् ।

**मुञ्ज** पु॰ मुजि-अच् । (मुज) रज्जुसाधने तृणभेदे राजनि॰ ।

"मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा । दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित् । दोषत्रयहरं वृष्यं मेखलास्पूपयुज्यते" भावप्र॰ । [हेमच॰ ।

**मुञ्जकेशिन्** पु॰ मुञ्ज इव केशाः अस्यास्य इनि । विष्णौ

**मुञ्जर** न॰ मुजि-अरन् । शालूके शब्दमा॰ । [मुट्यते ।

**मुट** मर्दने भ्वा॰ पर॰ सक॰ सेट् इदित् । मुण्टति अमुण्टीत् ।

**मुट** क्षोदे वा चु॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट् । मोटयति ते मोटति अमूमुटत् त अमोटीत् ।

**मुट** क्षोदने आक्षेपे च तु॰ कु॰ पर॰ सक॰ सेट् । मुटति अमुटीत् मुमोट । [अमुण्ठिष्ट ।

**मुठ** पलायने भ्वा॰ आ॰ अक॰ सेट् इदित् । मुण्ठते

**मुड** केशादिच्छेदे मर्दने च भ्वा॰ पर॰ सक॰ सेट् इदित् । मुण्डति अमुण्डीत् । [मुण्डते ।

**मुड** मज्जने भ्वा॰ आ॰ अक॰ सेट् इदित् । मुण्डते अमु-

**मुण** प्रतिज्ञाने तु॰ पर॰ सक॰ सेट् । मुणति अमोणीत् ।

**मुण्ड** न॰ मुडि-कर्मणि अच् । १मस्तके अमरः । २लौहे ३मुण्डाख्ये च राजनि॰ ४दैत्यभेदे, ५राहुग्रहे ड॰ मेदि॰ ।

६नापिते जटा० ७स्वाणुदले च पु० । ८मुण्डिते त्रि० । ९मस्तकाग्रपिण्डिकायां १०मुण्डीरिकायाञ्च स्त्री टाप् मेदि० ११उपनिषद्भेदे "मुण्डमाण्डूक्यतित्तिरिः" ।

**मुण्डक** पु० मुण्डयति मुडि-णिच् ण्वुल् ।१नापिते हेमच० ।

**मुण्डचणक** पु० मुण्डश्चणकइव । कलाये राजनि० ।

**मुण्डन** न० मुडि-भावे ल्युट् । केशच्छेदे वपने हेमच० ।

**मुण्डफल** पु० मुण्डं शिर इव फलमस्य । नारिकेले शब्दच० ।

**मुण्डशालि** पु० मुण्डः शूकशून्य शालिः । निःशूके शालिभेदे राजनि० ।

**मुण्डायस** न० मुण्डमयः अच् समा० । लौहभेदे राजनि० ।

**मुण्डितिका** स्त्री मुडि-क्त स्वार्थे क अत इत्वम् टाप् । (मुण्डीरी) वृक्षभेदे रत्नमा० ।

**मुण्डिन्** पु० मुण्डयति मुडि णिच्-णिनि । नापिते अमरः ।

**मुण्डीरी** स्त्री मुडि-ईरच् गौरा० ङीष् । स्वनामख्याते वृक्षभेदे जटाधरः ।

**मुथशील** पु० ८२५ पृ० दर्शिते नी० ता० उक्ते इत्थशालयोगे

**मुद** संसर्जने चु०उ० सक० सेट् । मोदयति ते अमूमुदत् त

**मुद** हर्षे भ्वा० आ०अक० सेट् । मोदते अमोदिष्ट । मुमुदे ।

**मुद्(दा)** स्त्री मुद-सम्प०भावे क्विप् वा टाप् ।१हर्षे अमरः । २वृद्धिनामौषधौ राजनि० ।

**मुदिर** पु० मुद-किरच् । १मेघे अमरः २भेके च शब्दरत्ना० ३कामुके त्रि० मेदि० । [४जलकाके च हेमच० ।

**मुद्ग** पु० मुद-गक् नेट् ।१कलायभेदे(मुग) पु०मेदि० २पक्षिभेदे

**मुद्गपर्णी** स्त्री मुद्गस्येव पर्णमस्याः ।(मुगानी)वनमुद्गे अमरः ।

**मुद्गर** न० मुदं गिरति गॄ-अच् । १मल्लिकाभेदे २लोष्टभेदने (मुगुर) मेदि० । ३पुष्पप्रधानवृक्षभेदे ४कर्मारद्रुमे (कामराङ्गा) च पु० राजनि० । स्वार्थे क । तत्रैव ।

**मुद्गल** न० मुदं गिलति गल-अच् रस्य ल । १रोहिषतृणे राजनि० । २गोत्रप्रवरर्षौ मुनिभेदे, ३नृपभेदे पु० ।

**मुद्गष्ट** पु० मुद्गं अश्नाति प्रतिबध्नाति स्तम्भ इ पृषो० मत्वम् । वनमुद्गे अमरः । अच् मुद्गष्टकोऽप्यत्र ।

**मुद्रा** स्त्री मुद-रक् । १प्रत्ययकारिण्याम् (मोहर) त्रिका० २अङ्गुलिस्थे मुद्राङ्कनयुक्ताङ्गुलीयके शब्दर० ३स्वर्णरौप्यादिनिर्मितायाम् ४अप्रकाशे । "मुद्रालिपि शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकाघुणसम्भूता लिपयः पञ्चधा मताः" इत्युक्तलिपिमध्ये ५लिपिभेदे वाराहीतन्त्रम् । "लेखन्या लिखितं विप्रैस्तद्भिरङ्कितञ्च यत् । शिला-दिनिर्मितं यच्च पात्रं धार्य्यं च सर्वदा" मुण्डमालातन्त्र० । ६तन्त्रप्रसिद्धे वीराचारस्थे "पृथुकास्तण्डुला भृष्टा गोधूमचणकादयः । तस्य नाम भवेन्मुद्रा" इत्युक्ते पञ्चमकारान्तर्गतद्रव्यभेदे ७देवविशेषाराधनायाङ्गुल्यादिसन्निवेशविशेषे तन्त्रसा०र: "मोदनात् सर्वदेवानां द्रावणात् पापसंहतेः । तस्मात् मुद्रेति सा ख्याता सर्वकामार्थसाधनी "मुद्रामनुशृणमि"ति तन्त्रम् दशवक्षोपे च ।

**मुद्रालिपि** स्त्री मुद्रया लिपिः । पञ्चधाविभक्तलिपिमध्ये लिपिभेदे (छापार अक्षर)

**मुद्रिका** स्त्री मुद्रैव मुद्रा वा मुद्रा कन् । स्वर्णरौप्यादिनिर्मिते अङ्गुलिस्थे अङ्गुलसाधनयोग्ये पदार्थे ।

**मुद्रित** त्रि०मुद्रा जाताऽस्य इतच् । १अप्रकाशिते २अङ्कित च

**मुधा** अव्य० मुह-का पृषो० हस्य ध । मिथ्याशब्दार्थे अमरः

**मुनि** पु० मन-इन् पृषो० उत्वम् ।"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते" गीतोक्तलक्षणे स्थिरचित्ते वीतरागादौ जने । ते च मन्वत्रिविष्णुहारीतादयः । २सप्तसंख्यायाञ्च । ३वकसेनतरौ ४जिने मेदि० ।५पियालवृक्षे ६पलाशवृक्षे हेमच० ७दमनकवृक्षे राजनि० । "मननान्मुनिरुच्यते" इत्युक्ते ८मननयुते त्रि० । [राजनि० ।

**मुनिखर्ज्जूरी** स्त्री मुनिप्रिया खर्जूरी । खर्ज्जूरीभेदे

**मुनिच्छद** पु० मुनिसंख्याताः सप्तसंख्याताः छदाः प्रतिपर्णं यस्य । सप्तच्छदे ( छातिम ) राजनि० ।

**मुनितरु** पु० मुनिरगस्त्यनामकस्तरुः । वकवृक्षे रत्नमा० ।

**मुनिद्रुम** पु० मुनीनां प्रियो मुनिनामको वा द्रुमः । १श्योनाकवृक्षे रत्नमा० २वकवृक्षे च राजनि० ।

**मुनिपुत्रक** पु० मुनेः पुत्रः स्वार्थे कन् ।१दमनवृक्षे भावप्र० २खञ्जने च त्रिका० । ३त० । ३मुनिसुते । [वकपुष्पे ।

**मुनिपुष्प** न०मुनिद्रुमस्य पुष्पं भीमो भीमसेनवदुत्तरपदलोपः ।

**मुनिभेषज** न० मुनीनां भेषजमिव । १हरीतक्या २अगस्त्ये, मुनौ, ३भोजनाभावे च मेदि० । [पृ० ।

**मुनीन्द्र** पु० मुनिः इन्द्र इव ।१बुद्धे अमरः । ७त० । २ऋषिश्रेष्ठे ।

**मुन्य** गत्यां भ्वा० पर० सक० सेट् क्त्वा वेट् । मुन्यति अमुन्यीत्

**मुन्या** स्त्री नी०क०ताजकप्रसिद्धे इन्थिहाशब्दार्थे । इन्थिहाशब्दे ८२८पृ० दृश्यम् ।

**मुन्यन्न** न० मुनियोग्यमन्नम् । नीवारकन्दादौ ।

**मुमुक्षु** त्रि० मोक्तुमिच्छुः मुच-सन्-उ । मोक्षेच्छावति । १संसारबन्धनामावेच्छावति । २यतौ पु० ।

**मुमूषान** पु० सव काम पृषो० दीर्घः । १मेघे २मुग्धवति त्रि०

"हृ पदादिष मुमूर्षान" इति सभ्यामृपाठ्रमनन्त ।
मुमूर्षु त्रि० मर्त्तुमिच्छुः मृ-सन्-उ । आसन्नमरणे ।
मुर् वेष्टने तु० पर० सक० सेट् । मुरति अमोरीत् ।
मुर पु० मुर-क । १दैत्यभेदे "पार्थनाथ द्विषन् मुरम्" माघ० २वेष्टने । ३स्वनामख्याते गन्धद्रव्ये स्त्री अमर० टाप् ।
मुरज पु० मुरात् वेष्टनात् जायते जन ड । मृदङ्गे वाद्यभेदे अमर । स इव बन्धः । मुरजबन्धः । चित्रालङ्कारभेदे ।
मुरजफल पु० मुरज इव फलं यस्य । पनसवृक्षे त्रिका० । मृदङ्गफलादयोऽप्यत्र ।
मुररिपु पु० ६ त० । विष्णौ । मुरारिमुरमथनादयोऽप्यत्र ।
मुरला स्त्री मुरं लाति ला-क । १नर्मदायाम् । "मुरला मारुतोद्धूतम्" रघु० । २संगीताङ्गे वाद्ये गौरा० ङीष् ।
मुरलीधर पु० मुरलीं धरति धृ अच् । श्रीकृष्णे मुरलीवाद-नादयोऽप्यत्र ।
मुर्च्छ मोहे वृद्धौ च भ्वा० पर० सक० सेट् । मूर्च्छति अमूर्च्छीत् । आदित् भावे क्त । मूर्तम् मूर्च्छितम् ।
मुर्मुर पु० मुर-क पृषो० द्वित्वम् । १तुषाग्नौ २कन्दर्पे सूर्य्याश्वे च मेदि० । [यामभिट मूर्ष० ।
मुर्व बन्धे भ्वा० पर० सक० सेट् । मूर्वति अमूर्वीत् निष्ठा-
मुल रोपणे चु० उभ० सक० सेट् । मोलयति ते अमूमुलत् त ।
मुशटी स्त्री मुष-अटच् गौरा० ङीष् पृषो० । चित्रकण्ठौ हेमच० ।
मुश(स)ली स्त्री मुष मुस वा कलच् पृषो० सस्य शः गौरा० ङीष् । १तालमूल्याम् २गृहगोधिकायाम् राजनि० स्वार्थे कन् । वल्लाम् हला० ।
मुष वधे भ्वा० पर० सक० सेट् । मोषति अमोषीत् ।
मुष छेदने दिवा० पर० सक० सेट् । मुष्यति इरित् अमुषत् अमोषीत् पुषादिरयमित्यन्ये ।
मुष लुण्ठने क्र्या० पर० द्विक० सेट् । मुष्णाति अमोषीत् ।
मुष(स)(श)ल पु० मुष-कलच् पृषो० । अयोग्रे स्वनामख्याते धान्यादिकण्डनसाधने पदार्थे अमर । [रायमु०।
मुषा स्त्री० मुष क-टाप् । धातुद्रावणे पात्रभेदे (मुची)
मुषित त्रि० मुष क्त । अपहृतद्रव्ये जने अमर ।
मुष्क पु० मुष-कक् । १पुरुषचिह्नभेदे अण्डकोषे (अण्डा-धार) २मोक्षकवृक्षे ३समूहे च मेदि० ४तस्करे, ५मांसले च हेमच० । स्वार्थे क । तत्रैव । [हेमच०।
मुष्कशून्य पु० ३त० । इमश्रुरहिते राशामत्त पुररक्षके (खोजा
मुष्टि पुस्त्री० मुष-क्तिच । १बद्धपाणौ अमर० २पलपरिमाणे पु० हेमच० ३कुड्मलभागे च । क्तिन् । ४मोषणे स्त्री ।
मुष्टिक पु० मुष्टया कायति कै-क । १कंसराजमल्लभेदे । मुष्टि मौषण प्रयोजनमस्य कन् । २स्वर्णकारे हेमच० ।
मुष्टिकान्तक पु० ६ त० । बलदेवे मल्लर० तस्य मुष्टिकासुर-हननात्तथात्वम् ।
मुष्टिद्यूत न० । ३त० । कपर्दकमुष्ट्याक्रीडने (पुरमुट्) शब्दमा०
मुष्टिन्धय पु० मुष्टिं धयति धे खश् मुम् च । बालके त्रिका० ।
मुष्टिबन्ध पु० मुष्टेर्बन्धो यत्र । १मुष्टौ अमर । ६त० २मुष्टि-बन्धने । [अमोषीत् पुषादिरयमित्यन्ये ।
मुस खण्डने दि० पर० सक० सेट् । मुस्यति इरित् अमुसत्
मुस(ष)(श)लिन् मुस(ष)(श)ल+अस्त्यर्थे इनि । बलदेवे अमर० । [वेध्ये अमर० ।
मुस(ष)(श)ल्य त्रि० मुस(ष)(श)लेन वेध्यः यत् । मुसल-
मुसल्लह पु० नी० ता० उक्ते नवांशे "मुसल्लहे पञ्च नवा० पदिष्टा" नी० ता० ।
मुस्त संहतौ चु० उभ० सक० सेट् । मुस्तयति ते अमुमुस्तत् त ।
मुस्त पु० मुस्त अच् स्त्रीत्वे टाप् । मुस्तके (मुथा) हारा० तत्रार्थे स्त्री अमर० स्वार्थे क । अत्रैव अस्त्री० अमर० । व्याधव्याधिभेदे पु० हेमच० । [भेदे अमर० ।
मुस्ताभ न० मुस्तेव भाति भा-क । (नागरमुथा) मुस्तक
मुह मोहे वैचित्त्ये दि० उभ० सक० सेट् मुह्यति इरित् अमुहत् अमोहीत् मोहिता, मोग्धा, मोढा ओत् । मूढोऽसि ।
मुहिर पु० मुह किरच् । १कामे, २मूर्खे च मेदि० ।
मुहुस् अव्य० मुह-उसिक् । पौनः पुन्ये अमर० ।
मुहूर्त्त स्त्री० हुर्च्छ क्त धातोः पूर्वं मुट् च । १द्वादशक्षणमिते काले, पञ्चदशधाविभक्तस्य दिनस्य पञ्चदशभागे, किञ्चिन्-न्यूनाधिकघटिकाद्वयरूपे २काले च ।
मू बन्धे भ्वा० आ० सक० सेट् । मवते अमविष्ट मुमुवे ।
मूक पु० मू कक् । १मत्स्ये त्रिका० २दैत्यभेदे मेदि० ३दीने हेम० वाक्शक्तिरहिते च त्रि० अमर । [४जडे हेमच० ।
मूढ त्रि० मुह-क्त । १मूर्खे अमर० । २बाले ३तन्द्रिते मेदि०
मूत त्रि० मू+बन्धे क्त । १बद्धे २स्यूते च अमर० । [अमूमुत्रत् त
मूत्र स्रावे अद० चु० उभ० सक० सेट् । मूत्रयति ते अमु०
मूत्र न० मुत्र अच् । प्रस्रावे उपस्थात् क्षरितजले अमर० ।
मूत्रकृच्छ्र न० । रोगभेदे "व्यायामतीक्ष्णौषधरूक्षमद्य-प्रसङ्गनृत्यद्रुतपृष्ठयानात् । आनूपमत्स्याध्यशनादजीर्णात् स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ" भावप्र० ।

मूत्रदोष पु० मूत्रस्य दोषो यस्मात् दुष-घञ् ६त०। प्रमेहरोगे राजनि०।

मूत्रनिरोध पु० मूत्रं निरुणद्धि नि+रुध-अण्। मूत्रप्रतिबन्धकरोगे। [१कर्कोटाम् राजनि०।

मूत्रफला स्त्री० मूत्रमेव फलं यस्याः। १त्रपुष्याम् (शशा)

मूत्राघात पु० मूत्रमाहन्ति आ+हन-अण्। मूत्ररोधनकारिणि रोगभेदे। "प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः। जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश" भावप्र०।

मूत्राशय पु० ६त०। नाभेरधोदेशे वस्तिनामकस्थाने भावप्र०।

मूर्ख त्रि० मुह ख मुरादेशः। १मूढे २गायत्रीरहिते ३सार्थगायत्रीरहिते च। "क्रियाहीनस्य मूर्खस्ये"ति स्मृति व्याख्यायां तिषस्वशारैस्तथार्थकतया व्याख्यानात्।

मूर्च्छना स्त्री मुर्च्छ-युच्। "स्वरः सम्मूर्च्छितो यत्र रागतां प्रतिपद्यते। मूर्च्छनामिति तां प्राहुः कवयो ग्रामसम्भवाम्" इत्युक्ते गानाङ्गभेदे "स्फुटीभवद्ग्रामविशेषमूर्च्छनाम्" माघः।

मूर्च्छा स्त्री मुर्च्छ भावे अङ्। १मोहे अमरः। २अनिद्रायामपि बाह्येन्द्रिय व्यापारशून्यावस्थाया "क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः। वेगाघातादभिघातात् हीनसत्त्वस्य वा पुनः। करणायतनेष्वग्रा बाह्येष्वाभ्यन्तरेषु च। निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः" भावप्र०। ३वृद्धौ च।

मूर्च्छाल त्रि० मूर्च्छा+अस्त्यर्थे लच्। मूर्च्छाविशिष्टे अमरः।

मूर्च्छित त्रि० मूर्च्छा जातास्य तार० इतच्। १मूर्च्छायुक्ते २वृद्धे ३उच्छ्रिते च मेदि०

मूर्त्त त्रि० मुर्च्छ-क्त। १मूर्च्छान्विते अमरः। २मूढे ३कठिने च मेदि०। मूर्त्तिरस्त्यस्य अच्। ४मूर्त्तिमति न्यायोक्तेषु अपकृष्टपरिमाणवत्सु। क्षितिजलतेजःपवनमनःसु च।

मूर्त्ति स्त्री मुर्च्छ-क्तिन्। १देहे २काठिन्ये, अमरः। ३प्रतिमायाञ्च हेम०।

मूर्त्तिमत् पु० मूर्त्तिरस्त्यस्य मतुप्। १देहे। २आकारयुक्ते ३काठिन्यवति च त्रि० स्त्रियां ङीप्। [आतमात्रे त्रि०।

मूर्द्धज पु० मूर्द्धि जायते जन-ड। १केशे जटा०। २मस्तक-

मूर्द्धन्य त्रि० मूर्द्धि भवः यत्। मस्तकजाते। २शिक्षाग्रन्थोक्तेषु ऋकारटवर्गरषवर्णेषु पु०।

मूर्द्धन् पु० मुह्यत्यस्मिन्नाहते कनिन् धृट्, च। मस्तके अमरः।

मूर्द्धपुष्प पु० मूर्द्धि पञ्चशिरसि पुष्पं यस्य। शिरीषवृक्षे शब्दमा०।

मूर्वा स्त्री मुर्व अच्। स्वनामख्याते धनुर्गुणोपयुक्ते लताभेदे गौरा० ङीष्। मूर्वीत्यपत्र भरतः। [अमूमिति।

मूल प्रतिष्ठायां भ्वा० उभ० सक० सेट्। मूलति ते अमूलीत्

मूल रोपणे चुरा० उभ० सक० सेट्। मूलयति ते अमूमुलत् त।

मूल न० मूल क। १शिफायाम् (जड) (शिकड) अमरः २आद्ये ३निकुञ्जे ४नक्षत्रभेदे ५प्रान्तिके विप्रः ६वाणिज्याद्युपयोगिनि ७मूलधने, मेदि०। ८निजे अजयः। ९चरणे १०गूरणे शब्दमा० ११पिप्पलीमूले १२पुष्करमूले राजनि०। १३टीकादिना व्याख्येयग्रन्थे च वणिग्व्यवहारे जनविशे नक्षत्रे अस्त्री० ति०त० शब्दर० स्त्रीत्वमप्यम्।

मूलक न० मूल+संज्ञायां कन्। १कन्दभेदे (मूला) वर्ज्यनीयं सदा विप्रैर्मूलकं मदिरासमम्" इति मत्स्यपु०। २विषभेदे पु० हेमच०। [क्षने रत्नमा०।

मूलकपर्णी स्त्री मूलकपत्रस्येव पर्णान्यस्याः ङीप्। शोभा-

मूलकर्मन् न० मूलेन मन्त्रौषधादिना कर्मवशीकरणादि। औषधादिना वशीकरणकर्मणि।

मूलकृच्छ्र पु० मूलेन काथितहत्तमूलेन कृच्छ्रः। "मूलकृच्छ्रः स्मृतो मूलैरिति" इत्युक्ते १व्रतभेदे। तद् यस्य। २तद्वति त्रि०।

मूलज न० मूलाज्जायते जन ड। १आर्द्रके राजनि०। २उत्पलादौ पु० हेमच०। ३मूलनक्षत्रजातमात्रे त्रि०।

मूलत्रिकोण न० "सिंहो वृषश्च मेषश्च कन्या धन्वी घटो घटः। "अर्कादीनां त्रिकोणानि मूलानि राशयः क्रमात्" इत्यादीनां क्रमेण सिंहादिषु राशिषु। तद्भाव "रविभौमजीवभार्गवशनैश्चराणां त्रिकोणभागाः स्युः। नखरतिदिक्तिथिन्यराश्मो दिग्भागकाः स्वत्वात्" ज्यो०त०।

मूलद्रव्य न० कर्म०। मूलधने यदवलम्ब्य वाणिज्यादिकं क्रियते तस्मिन् (पुंजि) मूलधनादयोऽप्यत्र।

मूलपर्णी स्त्री मूलमारभ्य पर्णान्यस्याः ङीप्। मण्डूकपर्ण्याम् रत्नमा०। [राजनि०।

मूलपुष्कर न० पुष्करस्य मूलं राज० दर०। पुष्करमूले

मूलपोती स्त्री मू-तच् गौ० ङीष् मूल प्रधाना पोती। पूतिकायाम् राजनि०।

मूलप्रकृति स्त्री मूलीभूता सर्वाद्या प्रकृतिः। सांख्यमतोक्ते सर्वेषां कारणीभूते साम्यावस्थापन्ने सत्त्वरजस्तमोरूपे त्रिगुणात्मके १प्रधाने "मूलप्रकृतिरविकृतिः" सांख्यकारिका। २दुर्गायाञ्च ब्रह्मवै०पु०४०अ०। [राजनि।

मूलफलद पु० मूलेऽपि फलं ददाति प्रसूते दा क। पनसवृक्षे

**मूलरस** पु० मूले रसो यस्य । मोरटालतायाम् रत्नमाला ।
**मूलशाकट** न० मूलानां क्षेत्रं मूल+शाकट । मूलवपनयोग्ये क्षेत्रे शाश्वत । मूलशाकिनोऽप्यत्र पु० । [राजनि०
**मूला** स्त्री मूलानि बाहुल्येन सन्त्यस्याः अच् । शतमूल्याम्
**मूलाधार** पु० ६ त० । १नाभिलिङ्गयोर्मध्ये तस्य हि शरीरस्य सकलनाडीनां मूलस्थानत्वात्तथात्वम् "मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके । मध्ये स्वयम्भूलिङ्गन्तु कोटिसूर्य्यसमप्रभम्" इत्युक्तलक्षणे त्रिकोणाकारे तन्त्रोक्ते २सुषुम्णानाडीस्थे चक्रभेदे च । [कोऽप्यत्र ।
**मूलिन्** पु० मूलमस्त्यस्य इनि । वृक्षे शब्दच० । ठन् । मूलिक-
**मूल्य** न० मूलाय पटादिकारणतन्त्वाद्युपादानाय इदम् यत् । तन्त्वाद्युपादानाय दीयमाने १धने अमरः । मूल-यत् । वपनयोग्ये त्रि० ।
**मूष** लुण्ठने भ्वा० पर० सक० सेट् । मूषति अमूषीत् मुमूष
**मूष** पुस्त्री० मूष-क । १मूषिके रत्ना० स्त्रियां ङीष् । २तैजसद्रव्यद्रावणपात्रे (मुचि) अमर । ३गवाक्षे "एकद्वित्र्यादि मूषावहने"ति लीला० । ४देवताडव्यां च स्त्री शब्दच०
**मूषक** पुस्त्री० मूष ण्वुल् स्त्रीत्वे टाप् अत इत्त्वम् । उन्दुरौ शब्दच० ।
**मूषकपर्णी** स्त्री मूषकस्येव कर्णं इव पर्णान्यस्याः । (उन्दुरकानी) आखुकर्ण्याम् मूषिककर्ण्यादयोऽप्यत्र ।
**मूषरिफ** पु० नील० ता० उक्ते इशराफाख्ये योगभेदे "शीघ्रो यदा मन्दगतेरथैकमप्यंशमत्येति तदेशराफः । कार्य्यक्षयो मूषरिफे खलोत्थे सौम्ये न किञ्चिज्जमतेन चिन्त्यम्" ।
**मूषिक** पुंस्त्री० मूष-इन् । १उन्दुरौ अमर स्त्रीत्वे टाप् । २मूषिकपर्ण्यां स्त्री शब्दर० ३मूषायां भरतः । [शब्दर० ।
**मूषिकपर्णी** स्त्री मूषिककर्ण इव पर्णान्यस्याः जलजतृणभेदे
**मूषी** स्त्री मूष+इन् गौ० ङीष् । १स्वर्णादिद्रावणपात्रे (मुचि) २महाकृषिके राजनि० ।
**मृ** मृतौ तु सार्वधातुके लुङि आशीर्लिङि च आ० अन्यत्र पर० अक० अनिट् म्रियते । अमृत । ममार मर्त्तासि मृषीष्ट ।
**मृकण्ड(-ण्डु)** पु० मुनिभेदे शब्दच० ।
**मृक्ष** संघाते भ्वा० प० सक० सेट् । मृक्षति अमृक्षीत् ।
**मृग** अन्वेषणे याचने च अद० चु० आ० सक० सेट् मृगयते अममृगत ।
**मृग** अन्वेषणे दिवा० पर० सक० सेट् । मृग्यति अमृगीत् ।
**मृग** पु० मृग-क । १पशुमात्रे, २गजभेदे, ३अश्विन्यवधिके पञ्चमे नक्षत्रे पु० । अ० पु० मृग भावे अच् । ४अन्वेषणे पु० ५याचने च मेदि० ६यज्ञभेदे ७मार्गशीर्षे मासि अजय० अच् । ८मृगमदे, भरत० ९मकरराशौ च पु० ज्यो० त० । १०हरिणे अमर पुंस्त्व जातौ स्त्रियां ङीष् ११नरभेदे "मृगी तुष्टा च चित्रिणी" रतिमञ्जरी ।
**मृगगामिनी** स्त्री मृग इव गच्छति गम णिनि ङीप् । १विडङ्गायाम् राजनि० । २मृगतुल्यगमनवति त्रि० स्त्रियां ङीप् । [व्याधे शब्दच० ।
**मृगजीवन** पु० मृगैस्तन्मांसादिविक्रयाभिर्जीवति जीव-ल्यु ।
**मृगणा** स्त्री मृग युच् टाप् । नष्टद्रव्यस्यान्वेषणे अमर० ।
**मृगतृष्णा** स्त्री मृगाणां तृष्णेव तृष्णाहेतुत्वात् । सूर्य्यकिरणे जलभ्रान्तौ अमर । निर्जलदेशस्थं सूर्य्यकिरणं दूरतो वीक्ष्य मृगैर्जलभ्रान्त्या तृष्णार्त्तैः तत्र गम्यते न च लभ्यते इति ग्रीष्मे मरुदेशे सिकतादौ पतितरविकिरणेषु जलभ्रान्तिरिति च लोकप्रसिद्धम् । स्वार्थे क । तत्रैव ।
**मृगदंशक** पुस्त्री० मृग दशति दन्श ण्वुल् । कुक्कुरे अमर० स्त्रियां जातित्वात् ङीष् । [स्त्रियां ङीष् ।
**मृगधूर्त्तक** पुस्त्री० मृगेषु मध्ये धूर्त्तक । शृगाले अमर
**मृगनाभि** पु० मृगस्य नाभिः जन्महेतुर्यस्य । कस्तूर्य्याम् मृगमदे अमर ।
**मृगनेत्रा** स्त्री मृगो मृगशिरो नक्षत्रं नेता प्रापकः सर्वरात्रिप्रकाशकत्वात् यत्र अच्समा० । सौरमार्गस्य किञ्चिदधिकत्रयोविंशदिनावच्छिन्नपर्य्यन्तरात्रिषु ।
**मृगनाभिजा** स्त्री मृगस्य नाभौ जायते जन-ड । कस्तूर्य्याम् हेमच० । [हेमच० मृगेशादयोऽप्यत्र २सिंहराशौ च ।
**मृगपति** पु० ६ त० । मृगाणां पशूनां पतिः स्वामी । १सिंहे
**मृगप्रिय** न० ६ त० । पर्वततृणे राजनि० ।
**मृगवधाजीव** पु० मृगवधेनाजीवति आ+जीव अच् । व्याधे अमर मृगाजीवोऽप्यत्र ।
**मृगबन्धनी** स्त्री मृगो बध्यतेऽनया बन्ध-करणे ल्युट् ङीप् । मृगबन्धनार्थे जाले अमर । करणस्य कर्त्तृत्वविवक्षाया णिनि ङीप् । मृगबन्धिनीत्यप्यत्र अमरे पाठान्तरम् ।
**मृगभक्ष्या** स्त्री मृगैर्भक्ष्यते भक्ष-कर्मणि यत् । जटामांस्याम् राजनि० ।
**मृगमद** पु० मृगस्य मदो गर्वो यस्मात् । कस्तूर्य्याम् अमर ।
**मृगमदवासा** स्त्री मृगमदस्येव वास सौरभमस्याः । कस्तूरीमल्लिकायां राजनि० ।
**मृगया** स्त्री मृग यात्यनया या-घञर्थे क । (शीकार)

चञ्चुबधफलके व्यापारभेदे चाखेटके अमरकोषः ।

**मृगयु** पु॰ मृग-अस्त्यर्थे यु । १ब्रह्मणि २शृगाले ३व्याधे च मेदि॰ "मृगयुमिव मृगोऽथ दक्षिणेर्मा" भट्टिः ।

**मृगरसा** पु॰ मृगो मृगमांस तस्येव रसोऽस्याः । सहदेवी-लतायाम् राजनि॰ ।

**मृगराज** पु॰ मृगाणां पशूनां राजा टच्समा॰ । १सिंहे शब्दर॰ । मृगेण गजेन राजते अच् । २चन्द्रे । ३सिंह-राशौ च । उपचारात् ४मृगशिरानक्षत्रे च ।

**मृगराटिका** स्त्री मृग रटति जीव्यत्वेन रट-अण् गौ॰ ङीप् स्वार्थे क । जीवन्त्यामोषधौ राजनि॰ [राशौ च ।

**मृगरिपु** पु॰ ६त॰ । १सिंहे मृगगणभक्षतयोऽस्यत्व । २सिंह-

**मृगलाञ्छन** पु॰ मृगो लाञ्छनं यस्य । १चन्द्रे शब्दर॰ । मृगा-ङ्कादयोऽप्यत्र उपचारात् २मृगशिरानक्षत्रे च ।

**मृगवल्लभ** न॰ ६त॰ । कुन्दरतृणे राजनि॰ ।

**मृगवाहन** पु॰ मृगो वाहनं यस्य । १वायौ "धावन् हरिण-वाहनः" इति वायुध्यानम् । २स्वातिनक्षत्रे च ।

**मृगव्य** न॰ मृगान् व्यधतेऽत्र व्यध-ड । मृगयायाम् अमर॰ ।

**मृगशिरस्** न॰ पु॰ । मृगस्येव शिरोऽस्य । अश्विन्यवधिके पञ्चमे नक्षत्रे मृगशिराप्यत्र स्त्री टाप् शब्दर॰ । मृग-शीर्षम्, न॰ रायमु॰ मृगशीर्ष पु॰ एतावप्यत्र भरतः ।

**मृगा** स्त्री मृगो मृगमांसतुल्यरसोऽस्त्यस्य अच् । सहदेवी-लतायाम् राजनि॰ ।

**मृगाक्षी** स्त्री मृगस्येवाक्षि तत्तुल्यं पुष्पं वा यस्याः षच्समा॰ ङीष् । १विशालायां २मृगतुल्यनयनवत्यां स्त्रियां च मेदि॰ । [ जायते जन-ड । कस्तूर्याम् राजनि॰ ।

**मृगाण्डजा** स्त्री मृगस्याण्डाकारात् नाभिस्थितमांसपिण्डात्

**मृगादन** पुंस्त्री॰ मृगान् अत्ति अद-ल्यु । क्षुद्रव्याघ्रे अमरः । स्त्रियां ङीष् । मृगान्तकोऽप्यत्र ।

**मृगादनी** स्त्री मृग इवाद्यते अद-कर्मणि ल्युट् । १सह-देव्याम् २इन्द्रवारुण्याम् (राखालशशा) ३कर्कटीभेदे च राजनि॰ । [४सिंहराशौ च ।

**मृगाराति** पु॰ ६त॰ । १कुक्कुरे शब्दमा॰ । मृगशत्रौ २सिंहे च ।

**मृगारि** पु॰ ६त॰ । १कुक्कुरे २सिंहे ३व्याघ्रे ४रक्तशोभाञ्जने च राजनि॰ तत्सेवने हि तस्य नाशः । ५सिंहराशौ च ।

**मृगाविध** पु॰ मृगं विध्यति व्यध+क्विप् पूर्वदीर्घः । व्याधे जटाधर॰ ।

**मृगित** त्रि॰ मृग-क्त । १अन्वेषिते अमर॰ २याचिते च ।

**मृगेन्द्र** पुस्त्री॰ मृगः इन्द्र इव । सिंहे अमरः स्त्रियां ङीष् ।

**मृगेन्द्रचटक** पु॰ मृगेन्द्र इव हिंस्रचटक पक्षी । श्येन॰ पक्षिणि जटा॰ ।

**मृगेन्द्राशी** स्त्री मृगेन्द्रेण सिंहेनाश्यते भक्ष्यते अश-कर्मणि घञर्थे क गौरा॰ ङीष् । वासके राजनि॰ ।

**मृगेर्वारु** स्त्री मृगप्रिया इर्वारुः कर्कटी । श्वेतायामिन्द्र-वारुण्याम् (सादा राखालशशा) राजनि॰ ।

**मृगेष्ट** पु॰ ६त॰ । मुद्गरवृक्षे राजनि॰ ।

**मृगेक्षणा** स्त्री मृगस्य ईक्षणमिवेक्षणं पुष्पं वा यस्याः । १मृगेर्वारौ राजनि॰ २मृगतुल्यनेत्रायां स्त्रियां च ।

**मृज** शोधने भूषणे च वा चु॰ उभ॰ पक्षे अदा॰ सक॰ सेट् । मार्जयति-ते मार्ष्टि अमीमृजत्-त अममार्जत्-त अमा-र्क्षीत् अमाक्षीत् अमृक्षत् मित् मृजा । [यता" भट्टिः

**मृजा** स्त्री मृज-अङ् । मार्जने अमर "शिरसा च मृजा-

**मृड** तोषणे क्र्या॰ तु॰ च पर॰ सक॰ सेट् । मृड्णाति मृडति अमर्डीत् ममर्ड । [वाहुक् च मृडानी ।

**मृड** पु॰ मृड-क । १शिवे अमर॰ २तत्पत्न्याम् स्त्री ङीप्

**मृण** हिंसे तु॰ प॰ सक॰ सेट् । मृणति अमर्णीत् ।

**मृणाल** पुंन॰ मृण-कालन् । १पद्मादेर्नालस्थे तन्तौ अमरः २वीरणमूले न॰ मेदि॰ गौरा॰ ङीष् । मृणाल्यप्यत्र ३विषतन्तौ स्त्री राजनि॰ ।

**मृणालिन्** स्त्री मृणाल विद्यतेऽस्य अच् मृणाल पद्मं ततः समूहे तद्युक्तदेशे वा इनि । १पद्मसमूहे २पद्मयुक्तदेशे ३तद्युक्तलतायाञ्च जटा॰ ।

**मृत** न॰ मृ-भावे क्त । १मरणे । २तत्तुल्यदु खजनके याचि-तके वृत्तौ च अमर॰ । कर्त्तरि क्त । ३गतप्राणे त्रि॰ ।

**मृतक** न॰ मृतेन मरणेन कायति कै-क । मरणाशौचे "सूतके मृतकेऽथ वा" इति स्मृतिः ।

**मृतकल्प** त्रि॰ ईषदसमाप्तो मृत॰ मृत+कल्पप् । मृतप्राये ।

**मृतकान्तक** पुस्त्री॰ मृतः शवदेहः कान्तोऽभिमतो यस्य कप् । शृगाले हारा॰ स्त्रियां ङीष् ।

**मृतजीव** पु॰ मृतः नष्टः सन् पुनर्जीवति जीव अच् । तिल्वकवृक्षे राजनि॰ ।

**मृतवत्सा** स्त्री मृतो वत्सो यस्याः । मृतापत्यायां १स्त्रियां २स्त्रीगव्याञ्च "मृतवत्सा च या नारीति" तन्त्रम् ।

**मृतसञ्जीवनी** स्त्री मृतान् संजीवयति सम्+जीव-णिच् ल्यु गौरा॰ ङीष् । १गोरक्षदुग्धायामोषधौ राजनि॰ तन्त्रोक्ते २विद्याभेदे च । [मरणनिमित्तं कृतस्नाने अमरः

**मृतस्नात** त्रि॰ मृतं मरणं तन्निमित्तं स्नातः स्ना-क्त ।

मृतालक न० मृतमालयति भूषयति अल–णिच् ण्वुल्। आढक्याम् अमर। मृत् मृत्तिका तालः प्रतिष्ठा यस्य वा कप्। मृतालकमप्यत्र शब्दर०। सौराष्ट्रमृदि राजनि०

मृत्तिका स्त्री मृद्+तिकन् टाप्। १मृदि (माटि) सा जेयत्वेनाऽस्त्यस्य अच् टाप्। २आढक्याम् राजनि०।

मृत्फली स्त्री मृदि फलमस्याः ङीष्। कुष्ठौषधौ। (कुड़) हारा०।

मृत्यु पु० मृ–त्युक्। १यमे हेम० देहादिभ्यः २प्राणवियोगे विजातीयात्ममनःसंयोगनाशे वा ३मरणे च अमरः। "मृत्योः स मृत्युमाप्नोति" श्रुतिः भयात् मायायां जाते ४पुत्रभेदे पु० "भयाज्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम्। निकृतिश्च तथा कन्या मृत्योर्भार्याऽभवत्सुते।। अलक्ष्मीर्नाम तस्याश्च मृत्योः पुत्राश्चतुर्दश" मार्क०पु०।

मृत्युञ्जय पु० मृत्युं जयति जि–खच्। १महादेवे अमर "कतिधा मृत्युकन्यानां ब्रह्मणां कोटिशो जये। काले न लीनं सम्भूय सत्त्वरूपी च निर्गुणः। मृत्युकन्या जिता यस्मात् शिवेन गुरुणा मम। न मृत्युना जितः शम्भुः कल्पे कल्पे श्रुतौ श्रुतम्" ब्रह्मवै०प्र० ५१अ०।

मृत्युनाशक पु० मृत्युं नाशयति नाशि–ण्वुल्। १पारदे राजनि० तस्य हि रसायनक्रियादिना शोधयित्वा सेवने मृत्युनाशकत्वम्। २मृत्युनाशकमात्रे त्रि०।

मृत्युपुष्प पु० मृत्यवे स्वामिमरणाय पुष्पं यस्य। इक्षौ रत्नमा० तस्मिन् पुष्पिते हि तत्स्वामिनो नाशः।

मृत्युफला स्त्री मृत्यवे स्वनाशाय फलं यस्याः। कदल्यां मेदि० फलपाके हि तस्या नाशो लोकसिद्धः। [त्रिका०।

मृत्युबीज पु० मृत्युस्तद्धेतुर्दोह एव बीजं कारणमस्य। वंशे

मृत्युसूति स्त्री मृत्यवे सूतिः प्रसवोऽस्याः। कर्कटकयोषिति प्रसवेन हि तस्या नाशः "यथा कर्कटकी गर्भमादत्ते मृत्यवे निजम्" इति पुराणम्।

मृत्(त्स्न)स्ना स्त्री मृद्+प्रशस्तार्थे स्न वा। १प्रशस्तमृत्तिकायाम् अमर। अर्शआद्यच् स्नान्तः। २आढक्याम् अमरः।

मृद क्षोदे क्र्या० प० सक० सेट्। मृद्नाति अमर्दीत् ममर्द।

मृद्(दा) स्त्री मृद्यते मृद–कर्मणि क्विप्। मृत्तिकायाम् (माटी) अमरः हलन्तत्वात् वा टाप्। मृदाप्यत्र।

मृदङ्ग पु० मृद अङ्गच् किच्च। १वाद्यभेदे अमरः। २कोषातक्यां स्त्री रत्नमा० गौरा० ङीष्।

मृदङ्गफल पु० मृदङ्ग इव फलमस्य। पनसवृक्षे शब्दर०।

मृदङ्गफलिनी स्त्री मृदङ्ग इव फलमस्त्यस्याः इनि ङीप्। कोषातक्याम् राजनि०। मृदङ्गफल साम्य दस्त्रस्य अच्। मृदङ्गतुल्यफले पनसवृक्षे पु० शब्दर०।

मृदु त्रि० मृद–कु। १कोमले अमरः। स्त्रियां वा ङीप् मृद्वी मृदुः। सा च २मृदुकन्यायाम्। ३चित्रानुराधामृगरेवतीनक्षत्ररूपे नक्षत्रगणभेदे च त्रि०ज्यो०त०।

मृदुचर्मिन् पु० मृदु कोमलं चर्म त्वगस्त्यस्य ब्रीह्या० इनि। भूर्जवृक्षे राजनि०।

मृदुच्छद पु० छाद्यतेऽनेन छदः त्वक् इव०। १भूर्जवृक्षे २पर्वतजपीलुवृक्षे जटा० ३कुक्कुरवृक्षे ४शीतालवृक्षे च राजनि०।

मृदुताल स्त्री कर्म०। शीतालवृक्षे (तिकेत) राजनि०।

मृदुत्वच्(च) पु० मृदु त्वक् त्वचा वा यस्य। भूर्जवृक्षे अमरः।

मृदुपत्र पु० मृदूनि पत्राण्यस्य। १नले राजनि०। कर्म०। २कोमलपर्णे न० इव०। ३तद्वति त्रि०। ४चिल्लीशाके स्त्री राजनि० गौरा० ङीष्। [२मृदुपर्वयुक्ते त्रि०।

मृदुपर्वक पु० मृदूनि पर्वाण्यस्य कप्। १वेत्रे राजनि०।

मृदुपुष्प पु० मृदूनि पुष्पाण्यस्य। १शिरीषवृक्षे रत्नमा०। इव०। २मृदुकुसुमयुते त्रि०। कर्म० ३कोमलपुष्पे न०।

मृदुफल न० मृदूनि फलान्यस्य। १विकङ्कते (वइँचि) २मधुनारिकेले च राजनि०। ३कोमलफलयुते त्रि०। कर्म०। ४कोमलफले न०। [त्रि० अमरः।

मृदुल न० मृद–कुलच्। १जले शब्दच० २कोमलमात्रे

मृदुलोमक पु इव०। १शशके हेमच०। २कोमललोमयुक्ते त्रि०। कर्म०। ३कोमललोम्नि न०।

मृदूत्पल न० कर्म०। १नीलोत्पले शब्दर०। २नीलपद्मे च।

मृद्वीका स्त्री मृद्+ईकन्। १द्राक्षायाम् अमरः २कपिलद्राक्षायाश्च राजनि०।

मृध न० मृध्यतेऽत्र घञर्थे आधारे क। युद्धे अमरः।

मृध आर्द्रीभावे भ्वा० उभ० सक० सेट् उदित् क्त्वा वेट्। मर्धति–ते अमर्धीत् अमर्धिष्ट ममर्ध ममृधे।

मृश स्पर्शने प्रणिधाने च तु० पर० सक० अनिट्। मृशति अम्राक्षीत् अमार्क्षीत् अमृक्षत् ममर्श।

मृष क्षमायाम् अद०चु०उभ०सक०सेट्। मर्षयति ते अममर्षत त। [अमर्षिष्ट।

मृष क्षान्तौ अद०भ्वा०उभ० सक० सेट्। मर्षति ते अमर्षीत्

मृष सेचने भ्वा०पर०सक०सेट्। मर्षति अमर्षीत् उदित् क्त्वा वेट्।

मृष क्षमायां चु०उभ०सक०सेट् । मर्षयति ते अमीमृषत् त अममर्षत् त । [क्वचिदिट् उदित् क्त्वा वेट् ।

मृष क्षमायां भ्वा० उभ० सक० सेट् । मर्षति ते अमर्षीत्

मृष क्षमायां चु०पक्षे दिवा०च उभ०सक०सेट् । मृष्यति ते । मर्षयति ते । मर्षित' मर्षित्वा ।

मृषा अव्य०मृष-का । मिथ्यार्थे अमरः ।

मृषार्थक न० मृषा असत्यार्थम् तोऽर्थो यस्य । "कूर्मरोमतनुलाभ शशशृङ्गधनुर्द्धरः" इत्यादि मिथ्यार्थकवाक्ये ।

मृषालक पु० मृषालक इव मञ्जर्यामस्यास्य कच् । आम्रवृक्षे शब्दर० । [क्षुद्रो यः क्लिन्नमानित्यादिवाक्यम् ।

मृषावाद पु० मृषा+वद-घञ् । मिथ्यावाक्ये जटा० यथा

मृषोद्य न० मृषा+वद-भावे क्यप् । १मिथ्याकथने तद्विद्यतेऽस्य अच । २मिथ्यावादिनि त्रि०शब्दमा० । [त्रि०अमर'

मृष्ट न०मृज(प)-क्त । १मरिचे राजनि० २शुद्धे ३शोधिते च

मॄ मधे क्र्या० प० प० सक० सेट् । मृणाति अमारीत् ।

मे प्रतीदाने भ्वा० आत्म० सक० अनिट् । मयते अमास्त ।

मेक(च)ल पु० मि-कलच् खलच् वा नास्त्वम् । १अद्रिभेदे मे इति कलो यस्य क मध्य । २छागे पु'स्त्री० राजनि० स्त्रियां ङीष् ।

मेक(ख)लकन्यका स्त्री ६त० । नर्मदानद्याम् अमरः ।

मेक(ख)लाद्रिजा स्त्री मेक(ख)लाद्रेर्जायते जन ड । नर्मदानद्याम् हेमच० ।

मेक्षण न० "दध्नाजातीपिष्टाद्व प्रमाणं मेक्षणं भवेत् । वृत्तं वाच्यं च पृथ्वग्रमवदानक्रियाक्षमम्" छन्दोगप०उक्ते यज्ञपात्रभेदे । १अङ्गप्रमाण मात्रिद्वयम् ।

मेखला स्त्री मि-खलच् । "मेखला रशनयष्टिका" इत्युक्ते १स्त्रीकट्याभूषणभेदे अमर' । उपनयनकाले ब्रह्मचारिधार्ये मौञ्ज्यादौ २कटीसूत्रे "मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला । क्षत्रियस्य च मौर्वीया वैश्यस्य शणतान्तवी" मनु । ३खड्गादिमुष्टाधारवन्धे ४उपर्यधोभागेन मध्ये ५शैलनितम्बे मेदि० ६नर्मदायां शब्दर० ७एलावल्याम् राजनि० । होमकुण्डोपरिस्थे मृत्कृत दन्वेष्टनभेदे च ।

मेघ पु० मिह-घञ् कुत्वम् । धूमज्योतिःसलिलमरुतां सन्निपाते जाते १जलधरे २मुस्तके च अमर' । ३रागभेदे शब्दच० ४रागभेदे च सङ्गी० । [स्त्रियां ङीष् ।

मेघजीवन पु'स्त्री० मेघो जीवनं यस्य । चातकपक्षे राजनि०

मेघज्योतिस् न० मेघजन्यं ज्योतिः ष०त० । वज्राग्नौ अमर

मेघनाद पु० मेघस्येव नादोऽस्य । १वरुणे २रावणस्य पुत्रे इन्द्रजिति । ६त० । ३मेघगर्जने च मेदि० ।

मेघनादानुलासक पु'स्त्री० मेघस्य नादेनानुलसति अनु+लस ण्वुल् । मयूरे राजनि० स्त्रियां ङीष् । णिनि । मेघनादानुलासिन् मयूरे अमर' ।

मेघनामन् पु० मेघस्य नामेव नाम यस्य । मेघवाचकशब्दवाच्ये मुस्तके अमर' ।

मेघपुष्पक न० मेघस्य पुष्पमिव । जले अमरः ।

मेघयोनि स्त्री० ६त० । धूमे शब्दरत्ना० ।

मेघवर्त्मा स्त्री मेघस्येव वर्णोऽस्या' । नीलीवृक्षे शब्दच० ।

मेघवर्त्मन् न० ६त० । आकाशे त्रिका० । मेघवीथ्यादयोऽप्यत्र ।

मेघवह्नि पु० मेघजन्यो वह्निः मेघघर्षणजातोऽग्निः । वज्राग्नौ हेमच० । एवं मेघानलादयोऽप्यत्र ।

मेघवाहन पु० मेघो वाहनमिव यस्य, मेघान् वाहयति चालयति वह-णिच् ल्यु वा । इन्द्रे अमर' ।

मेघसार पु० मेघस्य कर्पूरस्य सारः । चीनकर्पूरे राजनि० ।

मेघस्तनितोद्भव पु० मेघस्तनिताद्भवति उद्+भू-अच् । विकङ्कतवृक्षे राजनि० ।

मेघागम पु० मेघानामागमो यत्र । वर्षाकाले वर्षर्तौ शब्दर०

मेघानन्दिन् पु० मेघेन तद्ध्वनिना आनन्दति आ+नन्द-णिनि । मयूरे अमर मेघानन्दा । वलाकायां राजनि० ।

मेघान्त पु० मेघानामन्तो यत्र । शरत्काले राजनि० मेघात्ययादयोऽप्यत्र । [त्रिका० ।

मेघास्थि न० मेघानामस्थीव संहतकठिनत्वात् । करकायाम्

मेचक न० मच-वुन् पृषो० । १अन्धकारे २स्रोतोऽञ्जने च मेदि० ३नीलाञ्जने राजनि० । ४मयूरचन्द्रके ५कृष्णवर्णे मेदि० । ६धूमे ७मेघे दयोभाञ्जने शब्दर० ८कृष्णवर्णयुते त्रि० अमर' ।

मेट (ड) उन्मादे भ्वा० पर० सक० सेट् इदित् घटि न ह्रस्व । मेट(ड)ति अमेटी(डी)त् ।

मेटुला स्त्री मेट-उलच् । आमलक्याम् शब्दच० ।

मेढ्र पुस्त्री० मिह-ष्ट्रन् । १मेषे स्त्रियां ङीष् २पु'सोऽसाधारणचिह्ने च पु० अमर । (शाङरशिला) रत्नमा० ।

मेढ्रशृङ्गी स्त्री मेढ्रस्येव शृङ्गं यस्याः ङीष् । मेषशृङ्ग्याम्

मेथ वध मेधायाञ्च सक० वधे सक० भ्वा० उभ० सेट् । मेथति ते अमेथीत् अमेथिष्ट । ऋदित् घटि न ह्रस्वः ।

मेथि(धि) पु० मेथ (ध)-इन् । धान्यमर्द्दनार्थे पशुबन्धनकाष्ठे (मेइकाठ) हेमच' ।

भेदे हेमच०। २अजशृङ्ग्यां (गाडरशिङ्गा) स्त्री गौरा० ङीष् रत्नमा०। [शब्दच०।

**मेषा** स्त्री मिष–कर्मणि घञ्। सूक्ष्मैलायाम् (गुजराटी)

**मेषाक्षिकुसुम** पु० मेषाक्षीव कुसुमं यस्य। चक्रमर्दे रत्नमा० मेषपुष्पादयोऽप्यत्र।

**मेषाण्ड** पु० मेषस्याण्ड एवाण्डोऽस्य। इन्द्रे तस्य हि दक्षयज्ञेऽण्डनाशे मेषाण्डेन तत्करणमिति पुराणप्रसिद्धम्।

**मेषालु** पु० मेषाणामालुरिव प्रियः। वर्वरीवृक्षे शब्दच०।

**मेषी** स्त्री मिष–अच् गौ० ङीष्। १जटामांस्यां २तिनिशवृक्षे च राजनि०। जातौ ङीष्। ३मेषजातिस्त्रियाम्।

**मेसूरण** न० लग्नावधिदशमस्थाने ज्यो० त०।

**मेह** पु मिह–घञ्। १प्रस्रावे हेमच० २प्रमेहरोगभेदे च अमरः। प्रमेहशब्दे दृश्यम्। अच्। ३मेषे शब्दच०।

**मेहघ्नी** स्त्री मेहं हन्ति हन-टक् ङीप्। हरिद्रायाम् रत्नमा० आर्द्रतन्त्रूत्तरमेवमादि मेहनाश इति वैद्यकप्रसिद्धिः।

**मेहन** न० मिह्यतेऽनेन मिह-करणे ल्युट्। १शिश्ने अमर.। कर्मणि ल्युट्। २मूत्रे मेदि०। भावे ल्युट्। ३मूत्रोत्सर्गे।

**मैत्र(त्र)** न० मित्रो देवतास्य अण् मैत्रं पायुस्तस्येदं पुनरण्। १विष्ठोत्सर्गे "मैत्रं कर्म समाचरेत्" इति स्मृतिः। मित्रो देवताऽस्य, मित्रात आगतं तस्येदं वा अण्। २अनुराधानक्षत्रे न०। तस्य हि मित्रो देवता। ३मित्रतः प्राप्ते "मैत्रमौदाहिकञ्चैव" स्मृतिः। ४सुहृत्सम्बन्धिनि च त्रि०। मित्रमेव स्वार्थे प्रज्ञाद्यण्। ५मित्रे ६ब्राह्मणे च पु० त्रिका०।

**मैत्रावरुण** पु० मित्रस्य वरुणस्य देवताद्वन्द्वे आनङ् मित्रावरुणयोरपत्यम् अण्। अगस्त्ये। इञ्। मैत्रावरुणिरप्यत्र वल्मीके हि तस्य तयोः पुत्रत्वं पुराणप्रसिद्धम्।

**मैत्री** न० मित्रस्य भावः अण् वा ष्यञ् पक्षे ङीप् यलोपः। सौहार्दे मैत्र्यमप्यत्र न०। [त्रिका०।

**मैत्रेय** पु० मित्राया अपत्यम् ढक्। १मुनिभेदे २बुद्धदेवे

**मैथिली** स्त्री मिथिलायां भवा अण् ङीप्। १सीतायाम्। मिथिलाया राजा-अण्। २मिथिलादेशाधिपे पु०।

**मैथुन** न० मिथुनेन स्त्रीपुंसाभ्यां निर्वृत्तम् अण्। १अग्न्याधानादौ, कर्मणि "या मयस्ता द्विजातीनां दारकर्मणि मैथुने" इति स्मृतिः। अग्न्याधाने हि सपत्नीकस्यैवाधिकार इति तस्य तत्साध्यत्वम्। २स्त्रीपुंसयोः सङ्गमरूपे ग्राम्यधर्मे च अमर। [जटा०।

**मैनाक** पु० मेनकायां भव अण्। हिमालयसुते पर्वतभेदे

**मैरेय** न० मिरायां देशभेदे ओषधिभेदे वा भवं ढक्। मिरादेशजाते १आसवे "मैरेयं धातकीपुष्पगुडधान्याम्लसंस्कृतम्" माधवोक्ते २मद्यभेदे च न०।

**मोक्ष** मोक्षे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। मोक्षयति ते मोक्षति अमुमोक्षत् न अमोक्षीत्।

**मोक्ष** पु० मोक्ष–घञ्। १अपवर्गे २मोचने "मौर्विमोक्षादिह मोक्ष" सा०द०। ३पाटलिवृक्षे मेदि०। ४मरणे हेमच०।

**मोघ** त्रि० मुह–घ अच् वा कुत्वम्। १निरर्थके अमरः २हीने ३पाटलावृक्षे मेदि० ४विडङ्गे च स्त्री हेम० ५प्राचीरे पु० शब्दमा०। [राजनि०।

**मोघपुष्पा** स्त्री मोघं पुष्पमार्त्तवं यस्याः। वन्ध्यायां स्त्रियाम्

**मोच** न० मुच–अच्। १कदलीफले २शोभाञ्जने पु० अमरः। ३कदल्यां ४शाल्मलिवृक्षे ५नीलीवृक्षे, च स्त्री मेदि० टाप्।

**मोचक** पु० मुच–ण्वुल्। १मोक्षे २कदल्यां ३शोभाञ्जने च ४वैराग्यवति त्रि० हेमच० ५मुष्कवृक्षे राजनि०।

**मोचन** न० मुच–णिच्–वा, भावे ल्युट्। १मुक्तौ २मोचने दम्भे ४शाल्मे च। मुच्यते रोगात् अनया मुच-करणे ल्युट्। ५कण्टकार्य्याम् स्त्री जटा० ङीप्। [राजनि०।

**मोचरस** पु० ६त०। शाल्मलिनिर्यासे स्वनामख्याते पदार्थे

**मोचाट** पु० मुच–णिच्–अच् मोचाय रोगमोचनाय अटति अट-अच्। १कृष्णजीरके २रम्भास्थि, ३मलयोद्भवे च मेदि०

**मोटक** न० मुट–ण्वुल्। श्राद्धे पितृदानार्थे १मूलकुशपत्रद्वये २रागिणीभेदे स्त्री ङबा० ङीप्।

**मोटा** स्त्री मुट–अच्। बलायाम् राजनि०।

**मोट्टायित** न० "कान्तस्मरणवार्त्तादौ हृदि तद्भावभावतः। प्राकट्यमभिलाषस्य मोट्टायितमुदीर्यते" उज्ज्वलमण्युक्ते स्त्रीणामभिलाषभेदे।

**मोद** पु० मुद–घञ्। हर्षे शब्दर०।

**मोदक** पु० मोदयति मुद-णिच्-ण्वुल्। १खाद्यभेदे (मोया) अमर। शूद्रायां क्षत्रियाज्जाते २वर्णसङ्करजातिभेदे (मयरा) स्मृतिः। [राजनि०।

**मोदमोदिनी** स्त्री मोद इव मोदयति मुद-णिनि। जम्ब्वाम्

**मोदयन्ती** स्त्री मुद–णिच्-शतृ ङीप्। वनमल्लिकायाम् (काठमल्लिका) शब्दर०। [राजनि०।

**मोदा** स्त्री मोदयति जनान् मुद-णिच् अच्। अजमोदायाम्

**मोदाढ्या** स्त्री मोदः अजमोदस्येवाढ्या। १अजमोदायाम् २हर्षयुक्ते त्रि० राजनि०।

**मोदिनी** स्त्री मोदयति मुद णिच्-णिनि । १अजमोदायाम् २मल्लिकायाम् ३यूथिकायां ४कस्तूर्य्यां ५मदिरायाञ्च राजनि० ।

**मोरट** न० मुर–अटन् । १इक्षुमूले, २अङ्कोटपुष्पे ३सप्तरात्रोषितक्षीरे च मेदि० । ४मूर्वालतायां स्त्री अमर । ५क्षीरमोरटायां पु० राजनि० ।

**मोषक** पु० मुष्णाति मुष–ण्वुल् । तस्करे चौरे अमरः ।

**मोषण** न० मुष–ल्युट् । १लुण्ठने २छेदने, ३वधे च ।

**मोह** पु० मुह–घञ् । १मूर्च्छायाम् भ्रान्तिसाधने २अज्ञाने मे द० ३वेदान्तोक्ते अविद्याशक्तिभेदे ३दुःखे शब्दर० ४देहादिष्वात्माभिमाने च ।

**मोहन** पु० मोहयति मुह–णिच् ल्यु । १धुस्तूरे राजनि० कन्दर्पस्य २शरभेदे च त्रिका० । ३मोहकारके त्रि० स्त्रियां टाप् । सा च ४त्रिपुरमालीपुष्पे रत्नमा० । ५मद-न्मायां शब्दमा० । ६जपोदक्यां स्त्री राजनि० । ७वटपत्र्यां भावप्र० उभयत्र गौरा० ङीष् ।

**मोहरात्रि** स्त्री ब्रह्मणो निजपरिमाणेन पञ्चाशद्वर्षे गते प्रलयभेदे "कालरात्रिर्महारात्रिर्मोहरात्रिश्च" चण्डी

**मोहिनी** स्त्री मुह–णिनि । १अप्सरोभेदे यस्या ब्राह्मणं ब्रह्मणोऽपूज्यत्व तत्कथा ब्रह्मवै० ज० ख० ३३अ० । अमृतमन्थनकाले दैत्यानां मोहनाय स्त्रीरूपिणि भगव-दवतारभेदे च ।

**मौक्तिक** न० मुक्तैव स्वार्थे ठक् । मुक्तायाम् अमर० ।

**मौक्तिकप्रसवा** स्त्री मौक्तिकं प्रसूते प्र+सू–अच् । मुक्ता-स्फोटे शुक्तौ राजनि० ।

**मौक्तिकशुक्ति** स्त्री ६त० । मुक्तास्फोटे शुक्तौ राजनि० ।

**मौञ्जी** स्त्री मुञ्जस्येयम् अण् । कटिसूत्रे त्रिरावृत्तमुञ्जलतायां मेखलायाम् मनु० । [राजनि० ।

**मौञ्जीपत्त्री** स्त्री मौञ्ज्या इव पत्त्रमस्याः । बल्वजायाम्

**मौञ्जीबन्ध** पु० मौञ्ज्या मेखलाया बन्धोयत्र । १उपनयन-संस्कारे "मौञ्जीबन्धः शुभः प्राक्चैत्रे मीनगते रवा-वि"ति ज्यो० । ल्युट् मौञ्जीबन्धन तत्रार्थे न० । "द्वितीयं मौञ्जीबन्धनम्" मनु । ६त० । २तद्बन्धने च ।

**मौढ्य** न० मूढस्य भाव ष्यञ् । १मोहे हेम० २मान्द्ये च ।

**मौद्गल्य** पु० मुद्गलस्य मुनेर्गोत्रापत्यं गर्गा० यञ् । तद्गोत्रापत्ये मुनिभेदे । [क्षेत्रे अमर ।

**मौद्गीन** न० मुद्गाना भवनं क्षेत्रं खञ् । मुद्गभवनयोग्ये

**मौन** न० मुनेर्भावः । वाग्व्यापाररहितत्वे "उच्चारे मैथुने चैव प्रस्रावे दन्तधावने । स्नाने भोजनकाले च षट्सु मौनं समाचरेत्" इति स्मृति ।

**मौनिन्** त्रि० मौनमस्त्यस्य इनि । १वाग्व्यापाररहिते । २मुनौ पु० जटा० । [राजनि० ।

**मौनेय** पु० मुने कश्यपपत्नीभेदस्यापत्यम् ढक् । गन्धर्वभेदे

**मौरजिक** त्रि० मुरजस्तद्वादनं शिल्पमस्य ठक् । मृदङ्ग-वादनशीले अमरः ।

**मौर्ख्य** न० मूर्खस्य भावः ष्यञ् । १जाड्ये हेमच० २मूर्खतायाञ्च

**मौर्वी** स्त्री मूर्वा लता तत्तन्तुना निर्वृत्ता अण् । १धनुर्गुणे अमर० । २ध्वजभङ्गप्राय रत्नमा० ।

**मौल** त्रि० मूल वेत्ति मूलादागतो वा अण् । भूम्यादेरागमादि-मूलज्ञे, "ये परम्परया मौलाः सामन्ताः स्वामिनस्त्विदु"रिति स्मृति २मूलादागते च ।

**मौलि** पु स्त्री० मूलस्यादूरभवः इञ् । १चूडायां २किरीटे ३संयतकेशेषु अमर ४मस्तके हेमच० । ५अशोकवृक्षे पु० । ६भूमौ स्त्री मेदि० वा ङीप् ।

**मौषल** न० मुषलमधिकृत्य कृतग्रन्थ वा अण् । १मुषलसम्बन्धिनि २मुषलतुल्यनिर्घोषे "गङ्गायां मौषलं स्नानं महापातक-नाशनम्" इति पुराणम् । मुषलमधिकृत्य कृतो ग्रन्थ अण् । महाभारतान्तर्गते "मुषलं कुलनाशनम्" इत्यादिप्रतिपादके मौषले पर्वणि ।

**मौहूर्त्त** पु० मुहूर्त्त तत्प्रतिपादकं शास्त्रं वेत्त्यधीते वा अण् । ज्योतिःशास्त्रज्ञे । ठञ् । मौहूर्त्तिक तत्रैव अमर० ।

**म्ना** अभ्यासे भ्वा०पर०सक० सेट् । मनति अम्नासीत् मम्नौ ।

**म्रक्ष** संयोजने म्लेच्छने च चु० उभ० सक०सेट् । म्रक्षयति ते अमम्रक्षत् त । [अम्रक्षीत् ।

**म्रक्ष** सङ्घाते अक० संयोजने सक० भ्वा० पर०सेट् । म्रक्षति

**म्रक्षण** न०म्रक्ष–भावे ल्युट् । १संयोजने २राशीकरणे, ३तैले हेमच० ।

**म्रद** मर्दे भ्वा० आ० सक० सेट् । म्रदते अम्रदिष्ट । घटा० म्रदयति । णिच् अङ् अम्रदत् । [मम्रदे ।

**म्रदिमन्** पु० म्रदोर्भाव म्रदु+इमनिच् ऋत ऋतोर० ।

**म्रदिष्ठ** त्रि० अतिशयेन म्रदु इष्ठन् ऋत ऋतोरः । अतिम्रदु-स्पर्शति । ईयसुन् । म्रदीयस् तत्रार्थे त्रि० स्त्रियां ङीप् ।

**म्रुच** गतौ भ्वा० पर० सक० सेट् । म्रोचति इरित् अम्रुचत् अम्रोचीत मुम्रोच । उदित् क्त्वा वेट ।

**म्रुन्च** गतौ सर्वं म्रुचवत् । म्रुञ्चति अम्रुचत् अम्रुञ्चीत् ।

म्लेट(ड़) उन्मादे भ्वा० पर० सक० सेट्। म्लेट(ड)ति अम्लेटी(डी)त्। ऋदित् चङि न ह्रस्वः।

म्लेच्छ चु० भृशवत् सर्व्वम्। म्लेच्छयति ते। अमम्लेच्छत् त।

म्लान त्रि० म्लै कान्तिक्षये–क्त तस्य नः। १मलिने हेमच० २म्लानियुक्ते च।

म्लानि स्त्री म्लै–क्तिन्। कान्तिक्षये। [१म्लाने च त्रि०मेदि०

म्लिष्ट न० म्लेच्छ–क्त नि०। १अविस्पष्टवाक्ये २तद्वाक्ययुक्ते

म्लुच गतौ भ्वा०पर०सक०सेट्। म्लोचति। इरित् अम्लुचत् अम्लोचीत्। उदित् क्त्वा वेट्।

म्लुञ्च गतौ म्लुचवत् सर्व्वम्। म्लुञ्चति अम्लुचत् अम्लुञ्चीत्

म्लेच्छ अपशब्दे वा चु० उभ० पक्षे भ्वा० पर० अक० सेट्। म्लेच्छयति ते म्लेच्छति अमम्लेच्छत् त अम्लेच्छीत्

म्लेच्छ पु० म्लेच्छ–घञ्। १अपशब्दे "म्लेच्छो ह वा नाम यदपशब्द" इति श्रुतिः। कर्त्तरि अच्। २पामरजातौ, ३नीचजातौ च पुंस्त्री० स्त्रियां ङीष् "गोमांसखादको यस्तु विरुद्धं बहु भाषते। सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते" बौधायनः। ४पापरते त्रि० मेदि०। ५हिङ्गुले न० राजनि०।

म्लेच्छकन्द पु० म्लेच्छप्रियः कन्दः शा०त०। लशुने राजनि०

म्लेच्छजाति स्त्री म्लेच्छाभिधा जातिः। भीलाङ्गादिभक्षके किरातादिजातिभेदे अमरः।

म्लेच्छदेश पु० म्लेच्छाधारो देशः। चातुर्व्वर्ण्याचाररहिते देशे अमरः। "चातुर्व्वर्ण्यव्यवस्थानं यस्मिन् देशे न वि-द्यते। म्लेच्छदेशः स विज्ञेय आर्य्यावर्त्तस्ततः परम्"।

म्लेच्छभोजन न० म्लेच्छैर्भुज्यते भुज–कर्म्मणि ल्युट्। १यावके अन्नभेदे शब्दर०। २गोधूमे पु० त्रिका०।

म्लेच्छमण्डल न० ६त०। म्लेच्छदेशे हेमच०।

म्लेच्छमुख न०म्लेच्छानां मुखमिव रक्तत्वात्। ताम्रे अमर०। म्लेच्छास्यमप्यत्र हारा०।

म्लेच्छित न० म्लेच्छ–क्त। अपशब्दे असंस्कृतशब्दे हारा०।

म्लेट(ड) उन्मादे भ्वा० पर० सक० सेट्। म्लेट(ड) ति अम्लेटी(डी)त्। ऋदित् चङि न ह्रस्व।

म्लेव सेवने भ्वा० आ० सक० सेट्। म्लेवते अम्लेविष्ट। ऋदित् चङि न ह्रस्वः। [मस्लो म्लान. म्लानि०।

म्लै कान्तिक्षये भ्वा० पर० अक० अनिट्। म्लायति म्लासीत्

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्ये मकारादिशब्दार्थसङ्कलनम्।

———

# य

यकारः व्यञ्जनवर्णभेदः स्पर्शवर्णोष्मवर्णयोर्मध्यस्थत्वात् अन्तःस्थवर्णभेदः तस्योच्चारणस्थानं तालु जिह्वामध्येन तालुन ईषत्स्पर्शेनोच्चारणात्तस्योच्चारणे ईषत्स्पर्शः आभ्य-न्तरप्रयत्नः "अचोऽस्पृष्टा यणस्त्वीषत्" शिक्षोक्तेः। बाह्य-प्रयत्नाः संवारनादघोषा अल्पप्राणश्च। वर्णाभिधानेऽस्य वाचकशब्दा उक्ता यथा "यो वायुर्वसुधा वायुर्विलसि पुरुषोत्तमः। युगान्तः श्वसनः शीघ्रो धूमार्च्चिः प्राणिसेवकः। सङ्घा भ्रमो जटी लोला वायुवेगी यशस्करी। सङ्कर्षण अपा बालो हृदयं कपिला प्रभा। आग्नेयो व्यापकस्त्यागी मोहो याता प्रभा सुखम्। चण्डः सर्व्वेश्वरी धूम्रा चामु-ण्डा सुमुखेश्वरी। त्वगात्मा मलयो माता ह्लादनी भृङ्गिनायकः। ॐ नमः शोषको मीनो धनिष्ठानङ्गवेदिनी। शिष्ट. सोम पङ्क्तिनामा पापहा मारुतस्तथा"।

अस्याधिष्ठातृदेवताध्यानं यथा "धूम्रवर्णां महारौद्रीं षड्-भुजां रक्तलोचनाम्। रक्ताम्बरपरीधानां नानालङ्कार-भूषिताम्। महामोक्षप्रदां नित्यामष्टसिद्धिप्रदायिनीम्। एवं ध्यात्वा यकारन्तु तन्मन्त्रं दशधा जपेत्"। अस्य ध्येयस्वरूपं यथा "यकारं शृणु चार्व्वङ्गि! चतुष्कोण-मयं सदा। पलालधूमसङ्काशं स्वयं परमकुण्डलीम्। पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा। त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं तथा। प्रणमामि सदा वर्णं मूर्त्तिमन्मोक्षमव्ययम्" कामधेनुतन्त्रम्। मातृकान्यासे अस्य हृदये न्यास्यता। काव्यादौ अस्य प्रथमप्रयोगे लक्ष्मीलाभः फलम् "यो लक्ष्मी रसु दाहम्" इ०र०टीका

य पु० या–ड। १वायौ २यशसि ३योगे, ४गतौ च ५यातरि त्रि० शब्दरत्ना०। यम ड। ६संयमे। ७आदितः गु-रोर्लघुद्वये जलदैवते लक्ष्मीफलके यगणे च।

यकार पु० य+स्वरूपे कार। यस्वरूपे वर्णे।

यकृत् न० यं संयमं करोति कृ-क्विप् तुक् च।१कुक्षौ दक्षिण-भागस्थे मांसपिण्डे अमर। २तद्वृद्धिके रोगभेदे च "अधो दक्षिणतश्चापि हृदयात् यकृतः स्थितिः। तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम्" भावप्र०। तद्रोगनिदानादि तत्रोक्तं यथा "प्लीहामयस्य हेत्वादि समस्तं यकृदामये। किन्तु स्थितिस्तयोर्ज्ञेया वामदक्षिण-पार्श्वयोः"। अस्य यमादौ मतं च यकृत्सादेशः।

**यक्षद्राविका** स्त्री यक्षतद्रवात्मा स्वरूपं यस्याः कप्। तैल-पायिकायाम् (तेलापोका) शब्दच०। [इति शब्दच०।

**यक्षवैरिन्** पु०यक्षतो रोगभेदस्य वैरी हन्तृत्वात्। रोहितक-

**यक्ष** पूजायां चु० आ० सक० सेट्। यक्षयते अययक्षत।

**यक्ष** पु० यक्ष्यते यक्ष–कर्मणि घञ्। १देवयोनिभेदे २तदीश्वरे कुवेरे मेदि०३इन्द्रगृहे सारसतः। भावे घञ् ४पूजने च।

**यक्षकर्द्दम** पु०यक्षप्रिय कर्दम इव। "कुङ्कुमागुरुकस्तूरी कर्पूरं चन्दनं तथा। महासुगन्धमित्युक्त नामतो यक्षकर्दम" इत्युक्ते समभागेन मिश्रिते कुङ्कुमादौ धन्व-न्तरि०।कुङ्कुमस्थाने कक्कोलरुक्तम् [यक्षकर्दमादयोऽप्यत्र।

**यक्षतरु** पु० यक्षाणां वासयोग्यस्तरु। वटवृक्षे राजनि०

**यक्षधूप** पु०यक्षे पूजने योग्यो धूपः।(धुना) सर्जरसे अमरः

**यक्षराज** पु० यक्षाणां राजा टच् समा०। कुबेरे। यक्षेषु राजते राज-क्विप्। यक्षराडप्यत्र पु०।

**यक्षरात्रि** स्त्री० यक्षप्रिया रात्रि शा०त०। कार्त्तिकपूर्णिमा रात्रौ त्रिका०। [शब्दमा०।

**यक्षामलक** न० यक्षाणामामलकमिव। पिण्डखर्जूरफले

**यक्षावास** पु० ६त०। यक्षाणामावास.। वटवृक्षे राजनि०।

**यक्षोडुम्बुरक** न० यक्षाणामुडुम्बरमिव इवार्थे कन्। अश्वत्थफले त्रिका०। [शब्दमा०।

**यक्ष्मघ्नी** स्त्री० यक्ष्माणं हन्ति हन–टक् ङीप्। द्राक्षायाम्

**यक्ष्मन्** पु०यक्ष–मनिन्। रोगभेदे अमर। तन्निदानादि यथा "वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात्। त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात्"। वेगोऽत्र वातमूत्र पुरीषाणां। "वातमूत्रपुरीषाणि निगृह्णाति यदा नर" इति चरकवचनात्। क्षयात् क्षीयतेऽनेनेति क्षय तेनातिव्यवायानशनेर्ष्यादयो धातुक्षयहेतवः क्षय शब्देनोच्यन्ते। साहसात् बलवता समं मल्लयुद्धादितः। विषमाशनात् "बहु स्तोकमकाले वा तज्ज्ञेयं विषमाशनम्" तस्मात्। त्रिदोषः सान्निपातिकः। हेतु-चतुष्टयात् अन्येऽपि हेतव हेतुचतुष्टय एवान्तर्भवन्ति। यक्ष्मणः पर्य्याया राजयक्ष्मक्षयशोषाः। यक्ष्मादीनां शब्दानां निरुक्तिमाह "वैद्यो व्याधिमता यस्मात् व्याधेर्यत्नेन यक्ष्यते। स यक्ष्मा प्रोच्यते लोके शब्द शास्त्रविशारदै"। यक्ष्यते पूज्यते। "राजचन्द्रमसो यस्मादभूदेष किलामयः। तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः। क्रियाक्षयकरत्वात्तु क्षय इत्युच्यते बुधैः। संशोषणाद्रसादीनां शोष इत्यभि-धीयते"। संप्राप्तिमाह "कफप्रधानैर्दोषैस्तु रुद्धेषु रस-वर्त्मसु। अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तरा। क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः"। कफ-प्रधानैर्दोषैः रसवर्त्मसु रुद्धेषु अनन्तराः सर्वे धातवः क्षीयन्ते ततो मानवः शुष्यति। कारणभूतस्य रसस्य क्षये कार्य्याणां रक्तादीनामनुक्रमेण क्षीयमाणत्वात्" भावप्र०।

**यज** देवपूजने, दाने, सङ्गतौ च भ्वा० उभ० सक० अनिट्। यजति ते अयाक्षीत् अयष्ट इयाज ईजतुः।

**यजति** पु० यज–अतिच्। यागभेदे। "यजतिषु ये यजामहे नानुयाजेषु" श्रुतिः। तल्लक्षणमुक्तं कात्या० श्रौ० १।२।६ "तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोऽनु-वाक्यावन्तो यजतय" सू०। "उच्यन्त इति शेषः। तिष्ठता होमो येषु ते तिष्ठद्धोमाः वषट्कारेण प्रदानं येषु ते वषट्कारप्रदाना. तथा याज्यावन्तः पुरोऽनुवाक्यावन्तश्च ये ते यजतय उच्यन्ते" कर्कः।

**यजत्र** न० यज–अत्रन्। १अग्निहोत्रे उणादि० २तद्वति त्रि०।

**यजन** न० यज-ल्युट् होत्रादिना पशुचोराज्यादिभि मन्त्र-पूर्वकं वह्नौ प्रक्षेपरूपे यागे।

यजनस्य च्छा० वि० देवलोक्तं यथा "पशुचीराज्यपुरो-डाशसोमौषधिचरुप्रभृतिर्हविर्भि खदिरपलाशाश्वत्थन्यग्रोधोडुम्बरप्रभृतिभिः समिद्भिः स्रुक्स्रुवोदूखल-मुसलशूर्पकुठारखनित्रयूपदारुदर्भचर्मप्रावपवित्रभाजनादिभि-र्द्रव्योपकरणैरुद्गातृहोत्रध्वर्युब्रह्मादिभिः ऋत्विग्भि-र्काम्यनैमित्तिकानां पशादिपूर्वकाणां यथोक्तदक्षिणानां समापन यजनम्"। ल्यु। उत्तरपदस्थः समभिव्या-हृतदेवादेर्यष्टरि त्रि०आधारे ल्युट्। १यागाधिकरणे न०। यथा देवयजनम्। [कर्मफलयुते।२महादेवमूर्त्तिभेदे च।

**यजमान** पु० यज-शानच्। होतृ.देर्नियो.क्तरि प्रधान-

**यजि** पु० यज–इन्। १यष्टरि उणा०।२यागे ३यजधातौ च।

**यजुर्वेद** पु० यजुषां ऋक्सामभिन्नानां मन्त्राणां प्रतिपादको वेद। वेदभेदे स च शुक्लकृष्णभेदेन द्विधा तद्विवरणं चरणव्यूहे भाग० १२।६ अध्याये च दृश्यम्।

**यजुस्** न० यज उसि। ऋकसामभिन्ने पदच्छेदरहिते मन्त्रभेदे अमरः। तल्लक्षणम् "इतगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि" सा० भा० उक्तम्।

**यज्ञ** पु० यज-भावे न। यागे अमर। स त्रिविध. अन्यत्रा काङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते। यष्टव्यमेवेति मनः समाधाय स सात्त्विकः। अभिसन्धाय तु फल दम्भार्थ-

र्पि चैव यत्। इज्यते भरतश्रेष्ठ! तं यज्ञं विद्धि राजसम्॥ विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्। श्रद्धाविरहितं यज्ञं तामसं परिचक्षते" गीता १७अ०। स च नानाविधः। "द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे। स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः" गीता ४अ०। पञ्चमहायज्ञरूपा यज्ञा यथा "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्" गारुडे ११५अ०। २विष्णौ च

**यज्ञपति** पु० ६त०। विष्णौ "यज्ञो यज्ञपतिर्यज्वा" विष्णुस०।

**यज्ञपशु** पु० इज्यते हविर्दीयतेऽत्र यागार्थकयज्ञभागे आधारे वा अ यज्ञः यज्ञार्थः पशुः। १अश्वे २छागादौ च।

**यज्ञपात्र** न० ६त०। यागसाधने पात्रे तच्छेदरूपादि कात्या०श्रौ०उक्तं पात्रशब्दे ४२०० पृ० दर्शितम्।

**यज्ञपुरुष** पु० यज्ञरूपः पुरुषः। वराहरूपे विष्णौ हेमच०। क्रतुपुरुषशब्दे २२८४पृ० दृश्यम्। [राजनि०।

**यज्ञभूषण** पु० यज्ञम् भूषयति भूष-णिच्-ल्यु। श्वेतदर्भे

**यज्ञयोग्य** पु० यज्ञे योग्यः। १उदुम्बरवृक्षे राजनि०। तत्समिदादिभिर्हि यज्ञः साध्यते। २यागार्हे विप्रादौ च।

**यज्ञवल्ली** स्त्री० यज्ञार्थां वल्ली। सोमवल्ल्याम् राजनि०।

**यज्ञवराह** पु० यज्ञरूपो वराहः। आदिवराहे भगवदवतारभेदे। क्रतुपुरुषशब्दे २२८४पृ० दृश्यम्। वराहदेहस्य शिवेन विदारणेन यज्ञभेदरूपत्वं यस्मादितं यथोक्तं कालिकापु० ३० अ० "विदारिते वराहस्य काये भर्गेण तत्क्षणात्। ब्रह्मविष्णुशिवा देवाः सर्वैश्च प्रमथैः सह। निन्युर्जलात् समुद्धृत्य तत् शरीरं नभः प्रति। तद्विभेजुः शरीरन्तु विष्णोश्चक्रेण खण्डशः। तदङ्गसन्धितो यज्ञा जातास्ते वै पृथक् पृथक्। यज्ञाद्यज्ञाश्च ये यज्ञास्तत् शृणुध्वं महर्षयः। भ्रूनासासन्धिना जातो ज्योतिष्टोमो महाध्वरः। हनुश्रवणसन्ध्योस्तु वह्निष्टोमो व्यजायत। चक्षुर्भ्रुवोः सन्धिना तु व्रात्यस्तोमो व्यजायत। आयुः पौनर्भवस्तोमस्य पोत्रोष्ठसन्धिना। वृद्धस्तोमबृहत्स्तोमौ जिह्वामूलादजायत। अतिरात्रं सवैराजमधोजिह्वान्तरादभूत्। अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्। स्नानं तर्पणपर्यन्तं नित्ययज्ञाश्च सांप्रः। कण्ठसन्धेः समुत्पन्ना, लिङ्गातो विश्वयस्तथा यथाजिमेधो महामेधो नरमेधस्तथैव च। प्राणिहिंसाकरा ह्यन्ये ते जाताः पादसन्धितः। राजसूयोऽथ कारीरी वाजपेयस्तथैव च। पृष्ठसन्धौ समुत्पन्ना महद्यज्ञास्तथैव च। प्रतिष्ठोत्सर्गयज्ञाश्च दानश्राद्धादयस्तथा। हृत्सन्धितः समुत्पन्ना सावित्रीयज्ञ एव च। सर्वेषां साधका यज्ञाः प्रायश्चित्तकराश्च ये। ते मेढ्रसन्धितो जाता यज्ञास्तस्य महात्मनः। रक्षःसत्रं सर्पसत्रं सर्वञ्चैवाभिचारिकम्। गोमेधो वृषजाश्च खुरेभ्यो ह्यभवन्निमे। मायेष्टिः परमेष्टिश्च गाव्यतिर्भौमसमाः। जानूरुसन्धौ समजाता अग्निष्टोमस्तथैव च। नैमित्तिकाश्च ये यज्ञाः सङ्क्रान्त्यादौ प्रकीर्तिताः। जानूरुसन्धौ ते जातास्तथा द्वादशवार्षिकम्। तीर्थप्रयोगसामौघः यजुः सङ्कर्षणस्तथा। आर्कमाथर्वणञ्चैव नाभिसन्धेः समुद्गताः। सप्तोत्कर्षः श्वेतयज्ञः पक्षमार्गोऽतियोजनः। लिङ्गसंस्थानरूपैस्त्वयज्ञा जाताश्च जानुनि। एवमष्टाधिकं जातं सहस्रं द्विजसत्तमाः॥ यज्ञानां सततं लोकार्थैर्भोग्यन्तेऽधुनापि च। स्रुवस्तु पोत्रात् संजाता नासिकायाः स्रुचोऽभवत्। अन्ये स्रुक्स्रुवभेदा ये ते जाताः पोत्रनासयोः। ग्रीवाभागेन तस्याभून् प्राग्वंशो मुनिसत्तमाः॥ इष्टापूर्तं यजुर्धर्मा जाताः श्रवणरन्ध्रतः। दंष्ट्राभ्योऽप्यभवन् यूपा कुशा रोमाणि चाभवन्। उद्गाता च तथाध्वर्युर्होता शमित्र एव च। अग्रदक्षिणपश्चाङ्घ्रिपश्चात्पादेषु सङ्गताः। पुरोडाशाः सचरवो जाता मस्तिष्कसञ्चयात्। कर्णैस्तत्युगाज्जाता यज्ञकेतवः तथा सुरात्। मध्यभागोऽभवद्वेदी मेढ्रात् कुण्डमजायत। रेतोधारास्तथैवाज्यं स्वधामन्त्राः समुद्गताः॥ यज्ञाश्रयः पृष्ठभागात् हृत्पद्मात् यज्ञ एव च। तदात्मा यज्ञपुरुषो मुख्याः कक्षात् समुद्गताः। एवं यावन्ति यज्ञानां साधनानि च कर्माणि च। तानि यज्ञवराहस्य शरीरादेव चाभवन्। एवं यज्ञवराहस्य शरीरं यज्ञतां गतम्। यज्ञरूपेण सकलमाप्यायितमिदं जगत्।"

**यज्ञवाट** पु० ६त०। यज्ञस्थाने हेमच०।

**यज्ञवृक्ष** पु० यज्ञार्थः वृक्षः। वटवृक्षे राजनि०। [राजनि०।

**यज्ञश्रेष्ठा** स्त्री यज्ञेषु तत्साधनेषु श्रेष्ठा। सोमवल्ल्याम्

**यज्ञसार** पु० यज्ञेषु यज्ञसाधनेषु सारः श्रेष्ठः। उदुम्बरवृक्षे राजनि०।

**यज्ञसूत्र** न० यज्ञार्थं योग्यं संस्कृतं वा सूत्रं शाक०त०। यज्ञोपवीते जटा०। तत्स्वरूपादि यथा "ऊर्ध्वं तु त्रिवृतं कार्यं वृषपाणिर्मितं शनैः। तन्तुत्रय-

यक्षदासिका स्त्री यक्षतद्रूपात्मा स्वरूपं यस्याः कप्। तैल-
पायिकायाम् (तेलापोका) शब्दच०। [हेमच० शब्दच०।

यक्षवैरिन् पु०यक्षतो रोगभेदस्य वैरी हन्तृत्वात्। रोहितक-

यक्ष पूजायां चु० आ० सक० सेट्। यक्षयते अययक्षत।

यक्ष पु० यक्ष्यते यक्ष-कर्मणि घञ्। १देवयोनिभेदे २तदीश्वरे
कुबेरे मेदि०३इन्द्रगृहे सारसुन्दः। भावे घञ् ४पूजने च।

यक्षकर्दम पु०यक्षप्रियः कर्दम इव। "कुङ्कुमागुरुकस्तूरी
कर्पूरं चन्दनं तथा। महासुगन्धमित्युक्तं नामतो
यक्षकर्दम" इत्युक्ते समभागेन मिश्रिते कुङ्कुमादौ अम
रादिः। कुङ्कुमस्थाने कक्कोलकम् [यक्षकर्द्दमादयोऽप्यत्र।

यक्षतरु पु० यक्षाणां वासयोग्यस्तरुः। वटवृक्षे राजनि०

यक्षधूप पु०यक्षे पूजने योग्यो धूपः।(धुना) सर्ज्जरसे अमरः

यक्षराज पु० यक्षाणां राजा टच् समा०। कुबेरे। यक्षेषु
राजते राज-क्विप्। यक्षराडप्यत्र पु०।

यक्षरात्रि स्त्री० यक्षप्रिया रात्रिः शा०त०। कार्त्तिकपूर्णिमा
रात्रौ त्रिका०। [शब्दमा०।

यक्षामलक न० यक्षाणामामलकमिव। पिण्डखर्ज्जूरफले

यक्षावास पु० ६त०। यक्षाणामावासः। वटवृक्षे राजनि०।

यक्षोडुम्बरक न० यक्षाणामुडुम्बरमिव स्वार्थे कन्।
अश्वत्थफले त्रिका०। [शब्दमा०।

यक्ष्मघ्नी स्त्री० यक्ष्माणं हन्ति हन-टक् ङीप्। द्राक्षायाम्

यक्ष्मन् पु०यक्ष-मनिन्। रोगभेदे अमरः। तन्निदानादि यथा
"वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात्। त्रिदोषो
जायते यक्ष्मा गदो हेतुचतुष्टयात्"। वेगोऽत्र वातमूत्र
पुरीषाणां। "वातमूत्रपुरीषाणि निरुणद्धि यदा
नर" इति चरकवचनात्। क्षयात् क्षीयतेऽनेनेति
क्षय तेनातिव्यवायामशनेर्ष्यादयो धातुक्षयहेतवः क्षय
शब्देनोच्यन्ते। साहसात् बलवता सम मल्लयुद्धा
दितः। विषमाशनात् "बहु स्तोकमकाले वा तज्ज्ञेयं
विषमाशनम्" तस्मात्। त्रिदोषः सान्निपातिक.। हेतु-
चतुष्टयात् अन्येऽपि हेतव हेतुचतुष्टय एवान्तर्भवन्ति।
यक्ष्मण पर्य्यायाः राजयक्ष्मक्षयशोषाः। यक्ष्मादीनां
शब्दानां निरुक्तिमाह "वैद्यो व्याधिमतां यस्मात्
व्याधेर्यत्नेन यक्ष्मते। स यक्ष्मा प्रोच्यते लोके शब्द
शास्त्रविशारदैः"। यक्ष्मते पूज्यते। "राजचन्द्रमसो
यस्मादभूदेष किलामय.। तस्मात्तं राजयक्ष्मेति
केचिदाहुर्मनीषिणः। क्रियाक्षयकरत्वात्तु क्षय
इत्युच्यते बुधै.। संशोषणाद्रसादीनां शोष इत्यभि-
धीयते"। संप्राप्तिमाह "कफप्रधानैर्दोषैस्तु रुद्धेषु रस-
वर्त्मसु। अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तरा।
क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः"। कफ
प्रधानैर्दोषैः रसवर्त्मसु रुद्धेषु अनन्तराः सर्वे धातवः
क्षीयन्ते ततो मानवः शुष्यति। कारणभूतस्य रसस्य क्षये
कार्य्याणां रक्तादीनामनुक्रमेण क्षीयमाणत्वात्" भावप्र०।

यज देवपूजने, दाने, सङ्गतौ च भ्वा० उभ० यजादि०
अनिट्। यजति ते अयाक्षीत् अयष्ट इयाज ईजतुः।

यजति पु० यज-अतिच्। यागभेदे। "यजतिषु ये यजा-
महे नानुयाजेषु" श्रुतिः। तल्लक्षणकं कात्या० श्रौ०
१।२।६ "तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोऽनु-
वाक्यावन्तो यजतय" सू०। "उच्यन्त इति शेषः। तिष्ठता
होमो येषु ते तिष्ठद्धोमाः वषट्कारेण प्रदानं येषु ते
वषट्कारप्रदानाः तथा याज्यावन्तः पुरोऽनुवाक्यावन्तश्च
ये ते यजतय उच्यन्ते" कर्कः।

यजत्र न० यज-अत्रन्। १अग्निहोत्रे उणादि० २तद्वति त्रि०।

यजन न० यज-ल्युट्। होत्रादिना पशुपुरोडाशादिभिः मन्त्र-
पूर्वकं वह्नौ सर्वपकृपे यागे।

यजनञ्च आ० वि० देवलोक्तं यथा "पशुपुरोडाशपुरो-
डाशसोमौषधिचरुप्रभृतिर्हविर्भिः खादिरपलाशाश्वत्थ-
न्यग्रोधोडुम्बरप्रभृतिभिः समिद्भिः स्रुक्स्रुवोद्गुखल-
मुसलशूर्पदारुदर्भचर्मपात्रपवित्रभाजनादिभि-
र्द्रव्योपकरणैरुद्गातृहोत्रध्वर्युब्रह्मादिभिः ऋत्विग्भिः
काम्यनैमित्तिकानां पञ्चादिपूर्वकाणां यथोक्तविधानां
समापन यजनम्"। ल्यु। उत्तरपदस्थः समभिव्या-
हृतदेवादेर्यष्टरि त्रि० आधारे ल्युट्। ३यागाधिकरणे न०।
यथा देवयजनम्। [कर्मफलयुते। ४महादेवमूर्त्तिभेदे च।

यजमान पु० यज-शानच्। होत्रादेर्मियोक्तरि प्रधान-

यजि पु० यज-इन्। १यष्टरि उणा०।२यागे ३यजधातौ च।

यजुर्वेद पु० यजुषां ऋक्सामभिन्नानां मन्त्राणां प्रतिपादको
वेद। वेदभेदे स च शुक्लकृष्णभेदेन द्विधा तद्विवरणं
चरणव्यूहे भाग० १२।६अध्याये च दृश्यम्।

यजुस् न० यज उसि। ऋक्सामभिन्ने पदच्छेदरहिते
मन्त्रभेदे अमरः। तल्लक्षणम् "छन्दोगीतिवर्जितत्वेन
प्रश्लिष्टपठिता मन्त्रा यजूंषि" सा० भा० उक्तम्।

यज्ञ पु० यज-भावे न। यागे अमरः। स त्रिविध अफला-
काङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते। यष्टव्यमेवेति मनः
समाधाय स सात्त्विकः। अभिसन्धाय तु फलं दम्भार्थ-

र्मपि चैव यत् । इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम् २। विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते” गीता १७अ० । स च नानाविधः । “द्रव्ययज्ञास्तपोयज्ञा योगयज्ञा स्तथापरे । स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः” गीता ४अ० । पञ्चमहायज्ञसंख्या यज्ञा यथा “अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्” गारुडे ११५अ० । २विष्णौ च

यज्ञपति पु० ६त० । विष्णौ “यज्ञो यज्ञपतिर्यज्वा” विष्णुस० ।

यज्ञपशु पु० इज्यते हविर्दीयतेऽत्र यागार्थकयजेर्भावे आधारे वा न यज्ञः यज्ञार्थः पशुः । १अश्वे २छागादौ च ।

यज्ञपात्र न० ६त० । यागसाधने पात्रे तच्च दर्व्यादि कात्या०श्रौ०उक्तं पात्रशब्दे ४१०० पृ० दर्शितम् ।

यज्ञपुरुष पु० यज्ञरूपः पुरुषः । वराहरूपे विष्णौ हेमच० । कालपुरुषशब्दे २१८४पृ० दृश्यम् । [राजनि० ।

यज्ञभूषण पु० यज्ञम् भूषयति भूष-णिच्-ल्यु । श्वेतदर्भे

यज्ञयोग्य पु० यज्ञे योग्यः । १उडुम्बरवृक्षे राजनि० । तत्समिदादिभिर्हि यज्ञः साध्यते । २यागार्हे विप्रादौ च ।

यज्ञवल्ली स्त्री० यज्ञार्था वल्ली । सोमवल्ल्याम् राजनि० ।

यज्ञवराह पु० यज्ञरूपो वराहः । आदिवराहे भगवदवतारभेदे । कालपुरुषशब्दे २२८४पृ० दृश्यम् । वराहदेहस्य शिवेन विदारणेन यज्ञभेदरूपत्वं सम्पादितं यथोक्तं कालिकापु० ३० अ० “विदारिते वराहस्य काये भर्गेण तत्क्षणात् । ब्रह्मविष्णुशिवा देवाः सर्वैश्च प्रमथैः सह । निन्युर्जलात् समुद्धृत्य तत् शरीरं नभः प्रति । तद्विभेजुः शरीरन्तु विष्णोश्चक्रेण खण्डशः । तदङ्गसन्धितो यज्ञा जातास्ते वै पृथक् पृथक् । यस्माद् यस्माच्च ये यज्ञास्तत् शृण्वन्तु महर्षयः । भ्रूनासासन्धिना जातो ज्योतिष्टोमो महाध्वरः । हनुश्रवणसन्ध्योस्तु वह्निष्टोमो व्यजायत । चक्षुर्भ्रुवोः सन्धिना तु व्रात्यस्तोमो व्यजायत । वायुः पौनर्भवस्तोमस्तस्य पोत्रोष्ठसन्धिना । वृहत्स्तोमं वृहत्स्तोमो जिह्वामूलादजायत । अतिरात्रं सवैराजमधोजिह्वान्तरादभूत् । अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् । स्थानं सर्पबलिर्मन्त्रं निष्कम्पश्च ध्रुवः । कण्ठसन्धेः समुत्पन्ना, जिह्वातो विश्वस्तथा यथाश्वमेधो महामेधो नरमेधस्तथैव च । प्राणिहिंसाकरा ह्यन्ये ते जाताः पादसन्धितः । राजसूयोऽथ कारीरी वाजपेयस्तथैव च । पृष्ठसन्धौ समुत्पन्ना ग्रहयज्ञास्तथैव च । प्रतिष्ठोत्सर्गयज्ञाश्च दानश्राद्धादयस्तथा । हृत्सन्धितः समुत्पन्ना सावित्रीयज्ञ एव च । सर्वेषां साधका यज्ञाः प्रायश्चित्तकराश्च ये । ते मेढ्रसन्धितो जाता यज्ञास्तस्य महात्मनः । रक्षोघ्नं सर्पसत्रं सर्वञ्चैवाभिचारिकम् । गोमेधो हस्तपादञ्च खुरेभ्यो ह्यभवन्निमे । मायेष्टिः परमेष्टिश्च गोष्पतिर्भोगसम्भवः । लाङ्गूलसन्धौ सञ्जाता अग्निष्टोमस्तथैव च । नैमित्तिकाश्च ये यज्ञाः संक्रान्त्यादौ प्रकीर्त्तिताः । लाङ्गूलसन्धौ ते जातास्तथा द्वादशवार्षिकम् । तीर्थप्रयोगसामीप्यः यस्तु सङ्कल्पकस्तथा । स्वार्कमाथर्वणञ्चैव नाभिसन्धौ समुद्गताः । वसोत्कर्षः क्षेत्रयज्ञः पञ्चमार्गोऽतियोजनः । लिङ्गसंस्थानचैत्रस्य यज्ञा जाताश्च जानुनि । षट्षष्टाधिकं जातं सहस्रं द्विजसत्तमाः ! । यज्ञानां सततं लोकार्थैर्भाव्यन्तेऽधुनापि च । स्रुव्यस्य पोत्रात् संजाता नासिकायाः स्रुवोऽभवत् । अन्ये स्रुक्स्रुवभेदा ये ते जाताः पोत्रनासयोः । ग्रीवाभागेन तस्याभूत् प्राग्वंशो मुनिसत्तमाः ! । इष्टापूर्तं यज्ञधर्मा जाताः श्रवणरन्ध्रतः । दंष्ट्राभ्योऽभवन् यूपाः कुशा रोमाणि चाभवन् । उद्गाता च तथाध्वर्युर्होता शमित्र एव च । अग्रदक्षिणपादाङ्गपश्चात्पादेषु सङ्गताः । पुरोडाशाः समस्तो जाता मस्तिष्कसञ्चयात् । कर्णैर्नत्युगाज्जाता यज्ञकेतुस्तथा खुरात् । मध्यमागोऽभवद्वेदी मेढ्रात् कुण्डमजायत । रेतोधाराश्चैवाज्यं स्वराश्मन्त्राः समुद्गताः ॥ यज्ञाशयः पृष्ठभागात् हृत्पद्मात् यज्ञ एव च । तदात्मा यज्ञपुरुषो ब्रह्मा कथात् समुद्गताः । एवं यावन्ति यज्ञानां भाण्डानि च कर्माणि च । तानि यज्ञवराहस्य शरीरादेव चाभवन् । एवं यज्ञवराहस्य शरीरं यज्ञतामगात् । यज्ञरूपेण सकलमाप्यायितमिदं जगत् ।”

यज्ञवाट पु० ६त० । यज्ञस्थाने हेमच० ।

यज्ञवृक्ष पु० यज्ञार्थः वृक्षः । वटवृक्षे राजनि० । [राजनि० ।

यज्ञश्रेष्ठा स्त्री यज्ञेषु तत्साधनेषु श्रेष्ठा । सोमवल्ल्याम्

यज्ञसार पु० यज्ञेषु यज्ञसाधनेषु सारः श्रेष्ठः । यज्ञोडुम्बरवृक्षे राजनि० ।

यज्ञसूत्र न० यज्ञार्थं योग्यं संस्कृतं वा सूत्रं शाक०त० । यज्ञोपवीते जटा० । तत्स्वरूपादि यथा “अर्द्धं तु विहितं सूत्रं ब्रह्मणा निर्मितं पुरा । तन्तुत्रय-

नवोद्धृतं यज्ञसूत्रं विदुर्बुधाः । त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरसम्मितम् । शिरोधरान्नाभिमध्यात् पृष्ठार्द्धपरिमाणकम् । यजुर्विदां नाभिमितं सामगानामयं विधिः । वामस्कन्धेन विधृतं यज्ञसूत्रं बलप्रदम्" कालिकापु० ४अ० । "उपवीतमाह गोभिलः "यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा अपि वा कुशरज्जुमेव" । यज्ञोपवीतं विशिष्टविन्यासधारणकर्मतया कुरुते । किं तत् सूत्रं विशेषयति छन्दोगपरिशिष्टम् "ऊर्द्ध्वं तु त्रिवृतं कार्यं तन्तुत्रयमधोवृतम् । त्रिवृतञ्चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते" । वामावर्त्तवलितं तन्तुत्रयं त्रिगुणं कृत्वा दक्षिणावर्त्तवलितं कार्य्यम् एवं त्रिवृत् त्रिवृतम् उपवीतं स्यात् एकोग्रन्थिरिति नानात्वनिषेधार्थम् । तथा च बौधायनः "क्षौमं सूत्रं त्रिस्त्रिवृतं यज्ञोपवीतमानाभेः" । क्षौमं तसिकापोद्भवं पट्टसूत्रादिमयमित्यर्थः । क्षौमं कार्पासोद्भवम् । तथाच मनुः "कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतं त्रिवृत् । शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्" । त्रिस्त्रिवृतमित्युक्तत्वात् मनुवचनेऽपि त्रिवृन्मात्रं त्रिरावृत्तत्वेन विशेष्यम् । यत्तु पैठीनसिवचनम् "कार्पासमुपवीतं षट्तन्तु त्रिवृतं ब्राह्मणस्य । क्षौमं राजन्यस्य आविकं वैश्यस्य" । तद्यतन्त्वभावे षट्तन्तुविधायकम् । नवतन्तुत्वं व्यक्तमाह देवलः "यज्ञोपवीतं कुर्वीत सूत्राणि नवतन्तुभिः । एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथवा" । एकेन ग्रन्थिना युक्तं इति शेषः । द्विगुणस्त्रिगुणोऽथ वेति मन्त्रवचनेन द्विवृतो त्रिवृतो वा कर्त्तव्यः । त्रिवृत्त्वं त्रिवृत्त्वाभावे । कौशिके वा बल्ली विकल्पार्थः । अपिशब्दो वल्कलकुशरज्ज्वोः कालातुकल्पत्वप्रदर्शनार्थः । एवकारोऽन्त्रिवृत्त्वव्यवच्छेदार्थः । द्वितीयो वाशब्दोऽनुक्तगोबालादिसमुच्चयार्थः । तथा च मिश्रपरिशिष्टम् "वाससा यज्ञोपवीतानि कुरुते तदभावे त्रिवृता सूत्रेण कुशमुञ्जवालप्रतिनव रज्जुभिर्वा । वाकोऽन बौधायनः यथाह देवल "कार्पासक्षौमगोवालशणवल्कतृणोद्भवम् । सदा सम्भवतो धार्य्यमुपवीतं द्विजातिभिः" । तदभाव इतिकरणात्तस्याभावे कुशरज्जुभिरिति बोद्धव्यम्" । आ०त० ।

**यज्ञाङ्ग** पु० यज्ञस्याङ्गं साधनत्वेनास्त्यस्य अच् । १यज्ञोडुम्बरे अमरः । २खदिरे राजनि० । ३मङ्गल्यमृत्तिकायाम् स्त्री । तत्र अन्ततः साकमेधादिना यत्र सम्पादयन्ति । ४सोमवल्ल्यां स्त्री राजनि० टाप् । ६त० । ५यागाङ्गमात्रे न० ।

**यज्ञान्त** पु० ६त० । १अवभृथे यज्ञसमाप्तौ स्नानादिक्रियाभेदे २यज्ञशेषे च हेम० ।

**यज्ञायज्ञीय** न० "यज्ञायज्ञा" इत्यनेन शब्देन युक्तायामृचि गेयम् छ । १अग्निष्टोमे गेये सामभेदे ताण्ड्य० ब्रा० ४।१।२० ज्योतिष्टोमे गेये २सामभेदे च सा०स०भा०उपोद्घाते ।

**यज्ञिक** पु० यज्ञः यज्ञाङ्गं साध्यत्वेनास्त्यस्य ठन् । पलाशे जटा० । तत्समिदादिभिर्हि यज्ञोनिष्पाद्यते ।

**यज्ञिय** त्रि० यज्ञाय हितः घ । १यज्ञकर्मयोग्ये अमरः । २द्वापरयुगे पु० त्रिका० ।

**यज्ञियदेश** पु० कर्म० । यज्ञकर्मयोग्यदेशे "कृष्णसारस्तु चरति मृगो यत्र स्वभावतः । स ज्ञेयो यज्ञियो देश" मनूक्ते देशे । [राजनि० । २यागसम्बन्धिनि त्रि० ।

**यज्ञीय** पु० यज्ञाय हितः तस्येदं वा छ । १यज्ञोडुम्बरे

**यज्ञीयब्रह्मपादप** पु० कर्म० । विकङ्कतवृक्षे (वैँचि) राजनि० "वैकङ्कतीं स्रुवमादत्ते" इति श्रुतौ तदीयस्रुवविधानात् तस्य तथात्वम् ।

**यज्ञेश्वर** पु० यज्ञस्य प्रवर्त्तयिता ईश्वरः । विष्णौ । [यज्ञके त्रि०

**यज्ञेष्ट** न० ७त० । १दीर्घरोहिततृणे राजनि० । ६त० । २स्ट

**यज्ञोडुम्बर** पु० यज्ञार्थं उडुम्बरः । स्वनामख्याते वृक्षे यज्ञाङ्ग०

**यज्ञोपवीत** न० यज्ञेन संस्कृतमुपवीतम् । यज्ञसूत्रे उपनयनसंस्कारेण पवित्रीकृते त्रिवृति ऊर्द्ध्ववृते वामस्कन्धात् दक्षिणकुक्षितो लम्बमानतया धृते सूत्रभेदे । यज्ञसूत्रशब्दे दृश्यम् । [२विष्णौ च यज्ञपतिशब्दे दृश्यम् ।

**यज्वन्** पु० यज-भूते क्वनिप् । विधानेन १कृतयागे अमरः ।

**यत** ताडने उपस्कारे च चु० उ० सेट् । यातयति । अयीयतत् त । निर्+प्रतीकारे प्रतिकृपप्रोधने च ।

**यत** यत्ने भ्वा० आत्म० अक० सेट् । यतते अयतिष्ट ईदित् निष्ठायामनिट् यत्तः ।

**यतम** त्रि० एषां मध्ये यः यद्+डतमच् । एषां मध्ये यदर्थे । [यदर्थे ।

**यतर** त्रि० । अनयोर्मध्ये यः यद्+डतरच् । अनयोर्मध्ये

**यतस्** अव्य० यद्+तसिल् । पञ्चम्याद्यर्थे ।

**यति** पु० यतते मोक्षाय यत-इन् । १परिव्राजके सन्यासिनि अमरः । यम्यते निवृत्ता यत यम-क्तिन् । २छन्दोग्रन्थविख्याते जिह्वाया २विश्रामस्थाने उच्चारणकालविच्छेदे स्त्री । सा च "क्वचित् छन्दस्यास्ते यतिरभिहिता पूर्वकृतिभिः पदान्ते सा शोभां व्रजति पदमध्ये त्यजति च" इत्याद्युक्तः सुप्तिङन्तपदान्त एव छन्दोग्रन्थानुसारेण जिह्वाया

विन्नामरूपोच्चारणाभावरूपा। ३विधवायां ४रात्रौ ५पञ्चौ च शब्दच० ६पाठविच्छेदे मेदि०। ७निकारे ८विष्णौ हेमच०। ९वाद्याङ्गप्रबन्धभेदे सङ्गीतदा०। यद्+परिभावे-क्तिन्। १०यतपरिभाषे त्रि० श०च०।

**यतिचान्द्रायण** न० यतिनेव कर्त्तव्यं चान्द्रायणं व्रतभेदः। "अष्टावष्टौ समश्नीयात् पिण्डान् मध्यंदिने गते। नियतात्मा हविष्याशी यतिचान्द्रायणं चरन्" मनूक्ते व्रतभेदे।

**यतिन्** पु० यम-भावे क्त यतं यमनं यतमनेन इनि। १संन्यासिनि परिव्राजके अमरः। २विधवायां स्त्री ङीप् यन्द्ररत्ना०। [यन्द्रर०।

**यतु(तू)का** स्त्री यत-उक ऊक वा। जिनपत्रिकावृक्षे

**यत्न** पु० यत-भावे नङ्।१आयासे २उद्योगे वैशेषिकोक्ते महत्तिनिर्हस्तिजीवनयोनिरूपत्वैविध्यापन्ने ३गुणभेदे च। स च आत्मगुणः इति नैयायिकादयः चित्तगुण इति सांख्यवेदान्तिकाः।

**यत्र** अव्य० यद्+त्रल। यस्मिन्नित्यर्थे।

**यत्र** सङ्कोचने वा चु०उभ०पक्षे भ्वा०पर०सक० सेट् इदित्। यन्त्रयति ते यन्त्रात अययन्त्रत् त अयन्त्रीत्।

**यथा** अव्य०यद्+प्रकारे थाल्। १येन प्रकारेणेत्यर्थे २सादृश्ये ३योग्यतायाम्४आनुरूप्ये ५पदार्थानतिवृत्तौ च सि०कौ०।

**यथाकाम** अव्य० काममनतिक्रम्य अव्ययी०। १स्वाच्छन्द्ये २यथेष्टतायाञ्च। [स्वेच्छाचारिणि जने स्त्रियां ङीप्।

**यथाकामिन्** त्रि० यथाकाम स्वाच्छन्द्यमस्त्यस्य इनि।

**यथाक्रम** अव्य० क्रमस्य आनुरूप्यं तस्यानतिक्रमो वा अव्ययी०। १क्रमानुरूप्ये २क्रमानतिक्रमे च।

**यथाजात** त्रि० जात समयविशेषमनतिक्रम्य यथाजातं तदस्त्यस्य अच्। १मूर्खे अमरः। २नीचे जटा०।

**यथातथ** अव्य० तथामतिक्रम्य अनतिवृत्तौ अव्ययी०। यथार्थं यस्य वस्तुनो यद्रूपं भवितुमुचितं तथारूपभावे हारा० यथावदर्थार्थे।

**यथार्थ** अव्य० अर्थमनतिक्रम्य अव्ययी०। १सत्यतायाम् अर्थाव्यभिचारे वस्तुरूपे। अर्श आद्यच्। २सत्ये त्रि०।

**यथार्ह** अव्य० अर्हं योग्यतामनतिक्रम्य अव्ययी०। १यथायोग्यत्वे ततः अर्श आद्यच्। २यथोचिते पदार्थे त्रि०।

**यथार्हवर्ण** पु० यथार्हं यथायोग्यं वर्णयति वर्ण-अण्। चरे अमरः। [२भक्त्यनुसारे।

**यथाशक्ति** अव्य० शक्तेरानुरूप्यम् अव्ययी०। १शक्तेरानुरूप्ये

**यथाशास्त्र** अव्य० शास्त्रस्यानुरूप्यम् अनतिक्रमो वा अव्ययी०। १शास्त्रानुसारे २शास्त्रानतिक्रमे च।

**यथास्थित** अव्य०यथा येन रूपेण स्थातुं योग्यं तथास्थितम् योग्यतायाम् अव्ययी०।१सत्यतायाम् हेमच०अर्श आद्यच्। २सत्ये त्रि०। [आद्यच्। २यथार्थे त्रि०अमरः।

**यथास्व** अव्य० स्वस्यानतिक्रमः अव्ययी०।१याथार्थ्ये। अर्श

**यथेप्सित** अव्य० ईप्सितस्यानतिक्रमः अव्ययी०। १स्वाच्छन्द्ये अमरः। अर्श आद्यच्। २यथाभीष्टे त्रि० यथेष्टमप्यत्र।

**यथोचित** अव्य० उचितस्यानतिक्रमः अव्ययी०। १औचित्ये अमरः। अर्श आद्यच्। २उचिते त्रि०।

**यद्** त्रि०यज्-अदि डिच्च। (ये)।१इत्येवं बुद्धिविशेषविषये। अस्य उक्तार्थे सर्वनामता। अयञ्च शब्दः तच्छब्दार्थनित्यापेक्षी उत्तरवाक्यस्थस्तु न तदपेक्षी इति काव्यप्र०, यत्तच्छब्दयोरभावे च न समासविभक्त्यन्तत्वाकारे स्थितम्। २यस्मादित्यर्थे अव्य०। ३शङ्कायाम् ४अवधृतौ च मेदि०।

**यदा** अव्य० यद्+काले दाच्। यस्मिन् काले इत्यर्थे।

**यदि** अव्य० यद्+णिच्-इन् णिलोपः। १पक्षान्तरे अमरः। २सम्भावनायाम् ३शङ्कायां ४विकल्पे च मेदि०।

**यदु** पु० ययातिरूपते० १ज्येष्ठपुत्रे यस्य वंशे श्रीकृष्णावतारः। तस्य गोत्रापत्यमण् बहुषु तस्य लुक्। २यदुवंश्ये ३देशभेदे च श०च० हेमच०। [यदुपत्याटयोऽप्यत्र।

**यदुनाथ** पु० यदूनां नाथो रक्षकत्वात्। श्रीकृष्णे हेमच०।

**यदृच्छा** स्त्री यद्+ऋच्छ-अ-टाप्। १स्वातन्त्र्ये, २स्वैरतायाम् अमरः। "यदृच्छालाभसन्तुष्टः" इति गीता।

**यदृच्छाशब्द** पु० आलापाद्यवाचके डित्थादिसंज्ञाशब्दे "असन्मादयत कश्चिदर्थं जातिक्रियागुणैः। यदृच्छाशब्दवत् पुंसः संज्ञायै जन्म केवलम्" माघः।

**यद्युवा** अव्य० यदि च उ च वा च द्व०। यदर्थे पक्षान्तरद्योतने "यद्युवात्स्तरमस्मारस्तर्हि पद्युमेव" इति "यद्युवाऽभयं चिकीर्षेदिति" च गोभिलः।

**यद्वा** अव्य० यद् वा च द्व०। १पक्षान्तरे "यद्वाभ्युदययोग्यता" भर्तृहरिः २युक्तौ संभवाथा०। [३संयमयुक्ते त्रि०हेमच०

**यन्तृ** पु० यम-तृच्। १सारथौ २हस्तिपके च अमरः।

**यन्त्र** न० यन्त्रि-अच्। १संयमने तन्त्रोक्ते देवाद्यधिष्ठाने २अस्त्रभेदे ३औषधपाकार्थपात्रभेदे, ज्योतिषशास्त्रादौ ग्रहवेधसाधने ४पदार्थभेदे, ५जलधारादेर्वेधकादौ (ढरविन्) (मकर) पदार्थे।६अन्यादेः क्षेपणसाधने पदार्थे अग्नियन्त्रम् (कामान बन्दुक)।

शुल्वं शिल्पनैपुण्यम्। तैलजलानि तैलयुक्तजलस्य प्रयोगः। चकारात् तयोः पृथक् प्रयोगोऽपि। तथाच सिद्धान्तशिरोमणौ "लघुकीर्यनेमिमथ वा परितो यदनेन सजलम। तदुपरि ताम्रटलाद्यं कृत्वा छिद्रे रसं क्षिपेत् तावत्। यावद्रसैकपार्श्वे क्षिप्तजलं नान्यतो याति। पिहितच्छिद्रं तदतश्चक्रं भ्रमति स्वयं जलाकृष्टम्। ताम्रादिमयस्याङ्कुशरूपनलस्याम्बुपूर्णस्य। एकं कुण्डजलान्तर्द्वितीयमस्य त्वधोमुखं च बहिः। युगपन्मुक्तं चेत् कं नलेन कुण्डाद्बहिः पतति। नेम्या बद्धा घटिकाचक्रं जलयन्त्रवत् तथा धार्यम्। नलकप्रच्युतसलिलं पतितं यथा तद्घटीमध्ये भ्रमति। ततस्तत् सततं पूर्णघटीभिः समाकृष्टम्। चक्रच्युतं स्वयमुदकं कुण्डे याति प्रणालिकया"। इति। बीजानि केवलं तद्बीजप्रयोगः। पौरुषो युक्तिप्रयोगास्तैर्युक्ताः प्रयोगाः। अपिशब्दात् प्रयोगेषु सुगमतरा इत्यर्थः। दुर्लभाः अस्माधारणत्वेन मनुष्यैः कर्तुमशक्या इत्यर्थः। अन्यथा प्रतिगृहं स्वयंवहानां प्राचुर्यापत्तेः। इयं स्वयंवहविद्या समुद्रान्तर्निवासिजनैः फिरङ्गाख्यैः सम्यगभ्यस्तेति। कुशकृपिद्यात्वादत्र विस्तारात्प्रयोग इति संक्षेपः" रङ्ग०।

अथ कपालाख्यं जलयन्त्रम्

"ताम्रपात्रमधश्छिद्रं न्यस्तं कुण्डेऽमलाम्भसि। षष्टिर्मज्जत्यहोरात्रे स्फुटं यन्त्रं कपालकम्" सू० "यत् ताम्रघटितं पात्रमधश्छिद्रमधोभागे छिद्रं यस्य तत्। अमलाम्भसि निर्मलं जलं विद्यते यस्मिन् तादृशे कुण्डे हस्तद्वयात्मके न्यस्तं धारितं यदहोरात्रे नाक्षत्राहोरात्रे षष्टिः षष्टिवारमेव न न्यूनाधिकं मज्जति। अधश्छिद्रमार्गेण जलागमनेन जलपूर्णतया निमग्नं भवति। तत् कपालकं घटखण्डानां कपालपटवाच्यत्वात् घटाधस्तनाधोकारं यन्त्रं घटीयन्त्रं स्फुटं सूक्ष्मम् तद्घटनं तु "शुल्वस्य दिग्भिर्विहितं पलैर्यत् षडङ्गुलोच्चं द्विगुणायतास्यम्। तदम्भसा षष्टिपलैः प्रपूर्णं पात्रं घटार्धप्रतिमं घटी स्यात्। सत्र्यंशमाषत्रयनिर्मिता या हेम्नः शलाका चतुरङ्गुला स्यात्। विद्धं तया प्राक्तनमत्र पात्रं प्रपूर्यते नाडिकयाम्बुभिस्तत्" सू०। इति व्यक्तम्। भगवता तु सूक्ष्मत्वोक्तम्। अथ शङ्कुयन्त्रं द्विनैव कालज्ञानार्थं नाम्न्युपदेशात् रङ्ग०। "शरयन्त्रं तथा चापि द्वियां च पिमले दत्तौ। छायासंसाधनैः प्रोक्तं कालसाधनमुत्तमम्" सू०।

देवताभेदे पूजाधारयन्त्राणि धारणयन्त्राणि च तन्त्रशास्त्रोक्तानि दृष्ट्राणि। तल्लेखनद्रव्याणि तन्त्रोक्तानि यथा "काश्मीररोचनालाक्षामृगेभमदचन्दनैः। विलिखेन्मध्येलन्या यन्त्राण्येतानि देशिकः। सौवर्णे राजते पत्रे भूर्जे वा सम्यगालिखेत्। अथ वा ताम्रपत्रे वा गुटिकीकृत्य धारयेत्। यावज्जीवं सुवर्णं स्यात् रौप्यं विंशतिवार्षिकम्। भूर्जे द्वादशवर्षाणि तदर्द्धं ताम्रपत्रके"। द्रव्यभेदस्पर्शे तत्र तन्त्राधायोक्ता यथा "भूमिस्पृष्टं शवस्पृष्टं यन्त्रं निर्माल्यदूषितम्। विदीर्णं लङ्घितं मन्त्री यन्त्रं नैव च धारयेत्"।

**यन्त्रक** न० यन्त्रमिव इवार्थे कन् (कुट) दारुमयकर्मभेदे

**यन्त्रगृह** न० ६त०। तैलिकयन्त्रालये (घानिघर) हेमच०।

**यन्त्रगोल** पु० यन्त्रमिव ज्योतिश्चक्राकृतिगोलयन्त्रमिव गोलःवर्तुलः। कलायभेदे (मटर) शब्दच०।

**यन्त्रण** न० यन्त्रि-ल्युट्। १नियमने २रक्षणे ३बन्धने च मेदि०। युच्। ४पीडायाम् स्त्री टाप्।

**यन्त्रपेषणी** स्त्री यन्त्रेणेव पिष्यतेऽनया पिष-करणे ल्युट् ङीप्। (याँता) पेषणयन्त्रे जटा०।

**यभ** मैथुने भ्वा०पर०सक० अनिट्। यभति अयाप्सीत्।

**यम** उपरतौ भ्वा० पर० सक० अनिट् यच्छति अयंसीत् उदित् क्त्वा वेट्। यमित्वा यत्वा यत्त।
आ+दीर्घीकरणे आत्म०। उप+विवाहे आत्म०।

**यम** परिवेषणे चु० उ० सक० सेट् वा घटा०। यमयति यामयति अयीयमत् त अययामत् त।

**यम** पु० यम-घञ्। "अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता। अस्तेयमिति पञ्चैते यमाख्यानि व्रतानि च" इत्युक्ते १अहिंसादौ तत्र देहमात्रसाध्यम् आवश्यकत्वप्रकार्यं नित्यं कार्यमिति अमरः इन्द्रियादीनां २संयमने च। यमयति अच्। प्राणिनां शुभाशुभकर्मानुसारेण दण्डविधायके ईश्वरनियुक्ते दक्षिणपाले ३देवभेदे पु० अमरः। तद्स्वामिकत्वात् ४काके च। धातृत्वेन यमलत्वमिति ५यमौ ६एककालजाते यमजे त्रि० मेदि०। ७द्वित्वसंख्यायां दशमदेवताके भरणीनक्षत्रे ज्यो०।
दिक्पालयमभेदाः चतुर्दश भविष्य० उक्ता यथा "यमाय धर्मराजाय मृत्यवे चान्तकाय च। वैवस्वताय कालाय सर्वभूतक्षयाय च। औदुम्बराय दध्नाय नीलाय परमेष्ठिने। वृकोदराय चित्राय चित्रगुप्ताय वै नमः"। सोमाङ्कयमाय पात० ब्र० भा० उक्ता यथा

नियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" सू०। "यथाक्रमं एतेषाम् अनुष्ठानं स्वरूपञ्च वक्ष्यामः" भा०। तत्र "अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः" सू०। "तत्राहिंसा सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः। उत्तरे च यमनियमास्तन्मूलास्तत्सिद्धिपरतया तत्प्रतिपदानाय प्रतिपाद्यन्ते तदवदातरूपकरणायैवोपादीयन्ते। तथाचोक्तं "स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सते तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो निवर्त्तमानस्तामेवावदातरूपामहिंसां करोति"। सत्यं यथार्थे वाङ्मनसे यथादृष्टं यथानुमितं यथाश्रुतं तथा वाङ्मनश्चेति परत्र स्वबोधसंक्रान्तये वागुक्ता सा यदि न वञ्चिता भ्रान्ता वा प्रतिपत्तिवन्ध्या वा भवेत् इत्येषा सर्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यान्न सत्यं भवेत् पापमेव भवेत् तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टं तमः प्राप्नुयात् तस्मात् परीक्ष्य सर्वभूतहितं सत्यं ब्रूयात्। स्तेयमशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणं तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयमिति। ब्रह्मचर्य्यं गुप्तेन्द्रियस्योपस्थस्य संयमः। विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणमपरिग्रह इत्येते यमाः" भा०।

गरुडे तु तस्य दशविधत्वमुक्तं यथा "ब्रह्मचर्य्यं दयाक्षान्तिर्ध्यानं सत्यमकल्कता। अहिंसाऽस्तेयमाधुर्य्ये दमश्चेते यमाः स्मृताः" १०५ अ०।

**यमक** न० शब्दालङ्कारभेदे अलङ्कारशब्दे ३८८ पृ० दृश्यम्।

**यमकोटि** पु स्त्री० भूगोलस्य चतुर्थपादान्तरिते लङ्कातः पूर्वस्यां स्थितायां देवनिर्म्मितायां पुर्य्याम् "लङ्का कुमध्ये यमकोटिरस्याः प्रागि"ति सिद्धान्तशिरोमणि।

**यमघण्ट** पु० योगविशेषे। "द्वे मघापूर्वफल्गुन्यौ पुष्या-श्लेषार्कचन्द्रयोः। ज्येष्ठानुराधा भरणी चाश्विनी कुजवासरे। हस्तार्द्रा चन्द्रजे मूला पूर्वाषाढ़ा च रेवती। जीवे च उत्तरभाद्रञ्च शुक्रार्थे स्वातिरोहिणी। शनिवारे शतभिषा श्रवणा यमघण्टकः" ज्योतिःसारसंग्रहः।

**यमदग्नि** पु० जमदग्नौ ऋषिभेदे।

**यमज** त्रि० द्वि० व०। यमौ एकदा एकत्र गर्भे सहचरौ सन्तौ जायेते जन-ड। एकदा एकगर्भजातयोः मेदि०।

**यमदंष्ट्र** पु० ब०व०। यमस्य दंष्ट्रा इव सर्वप्राणध्वंसनेन हिंसकत्वात्। "कार्त्तिकस्य दिनान्यष्टौ चाष्टावग्रहायणस्य च। यमस्य दंष्ट्रा एते स्वल्पाहारी च जीवति" वैद्यकोक्ते शीतर्तुदिनवर्गे। यमदंष्ट्राऽप्युक्ते अर्थे।

**यमदूतिका** स्त्री यमस्य दूतीव स्वार्थे कन्। १तिन्तिडीवृक्षे अमरः। यमस्य दूत इव कायति कै—क। यमदूतक २काके पुंस्त्री० शब्दरत्ना० स्त्रियां ङीष्।

**यमद्रुम** पु० यमस्य द्रुम इव। यमद्वारस्थद्रुमतुल्ये शाल्मलिवृक्षे तत्तुल्यलोहमयकीलाकीर्णवृक्षेण हि नारकिपीडनात्तस्य यमद्रुमत्वम्।

**यमद्वितीया** स्त्री ६त०। कार्त्तिकशुक्लद्वितीयायाम् "तथा यमद्वितीयायां यात्रायां मरणम्" ति०त०।

**यमधार** पु० यमवत् समा धाराऽस्य। उभयपार्श्वे धारायुक्ते अस्त्रे (किरीच)। [यति ल्युट्। १यमे पु० मेदि०।

**यमन** न० यम-ल्युट्। १बन्धने २उपरमे च मेदि०। यम-

**यमप्रिय** पु० ६त०। वटवृक्षे शब्दर०।

**यमराज** पु० यमानां चतुर्दशानां राजा यमनियामको राजा वा टच्समा०। प्रेतानां राजनि धर्मराजे हेमच०।

यमेषु राजते राज-क्विप्। यमराडप्यत्र अमरः।

**यमल** न० यमं योगं लाति ला—क। १युग्मे अमर० द्वन्द्वात्मकस्य २छन्दोभेदे च। "तच्च लक्ष्म पदा यमलं" हरिवं०।

**यमलपत्त्र** पु० यमलानि युग्मानि पत्त्राणि यस्य। १अश्मन्तकवृक्षे २कोविदारवृक्षे राजनि०।

**यमवाहन** पु० यमं वाहयति स्थानात् स्थानान्तरं नयति वह-स्वार्थे णिच्-ल्यु। महिषे हेमच०।

**यमानी** स्त्री यच्छति अग्निमान्द्यमनया यम-करणे ल्युट् पृषो० आत्वम्। १अजमोदायाम् शब्दमा० स्वार्थे क। यमानिका तत्रैव स्त्री।

**यमुना** स्त्री यम-उनन्। १कालिन्द्यां नद्यां २यमभगिन्याम् सूर्य्यसुतायाम् अमरः। ३दुर्गायाञ्च देवीपु०।

**यमुनाभ्राट्** पु० ६त०। यमे अमरः।

**ययाति** पु० यस्य वायोरिव यातिः गतिः रथगतिरस्य। नहुषात्मजे राजभेदे। [मेदि०।

**ययु** पु० या—कु द्वित्वञ्च। १अश्वमेधीयेऽश्वे २अश्वमात्रे च

**यव** पु० यु अच्। १स्वनामख्याते शूकधान्यभेदे अमरः। "यवन्ते सर्वशस्यानां जायते पत्त्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः" इति मीमांसा। अङ्गुलिस्थे यवाकारे २रेखाभेदे सामुद्रकम् तत्फलवत्त्वं तत्रैव "तर्जनीमूलसंस्थौ यवौ सुतार्थदौ क्रमात्। मध्यमायाः स्तवस्त्वाङ्गुष्ठेऽपूर्वधनप्रदः। मध्यमायां यदि यवो दृश्यते च सुशोभनः। तदान्यसञ्चित द्रव्यं प्राप्नोत्यङ्गुष्ठके

यवे। यस्यापि चक्रमङ्गुष्ठे यवपूर्णस्य दृश्यते। तदा पितामहादीनामर्जितं लभते धनम्" इति सामुद्रकम्। ३षट्सर्षपात्मके परिमाणभेदे शब्दच०। [क्षेत्रे अमर०।

**यवक्य** न० यवानां भवनं क्षेत्रं यत् लुक् च। यवभवने

**यवक्षार** पु० यवजातः क्षारः। यवजातक्षारे क्षारभेदे शब्दर०

**यवज** पु० यवात् जायते जन–ड। १यवक्षारे रत्नमा० २यवान्यां च राजनि०। [राजनि०।

**यवतिक्ता** स्त्री यवाकारं तिक्तं फलं यस्याः। शङ्खिन्यां

**यवन** पु० यु–युच्। १देशभेदे सोऽभिजनोऽस्य तस्य राजा वा अण् बहुषु तस्य लुक्। २तद्देशस्थेषु जनेषु ३तच्छृपेषु ब०व०। ४वेगे ५अधिवेगयुताश्वे मेदि० ६गोधूमे ७गर्जर तृणे ८तुरष्कजातौ राजनि० ययातिशप्तस्य तत्पुत्रस्य तुर्वसोर्वंशज्ये जातिभेदे च पुंस्त्री० स्त्रियां ङीप्। १०वेगवति त्रि०।

**यवनद्विष्ट** पु० यवनैर्द्विष्टः द्विष–क्त। गुग्गुलौ राजनि०

**यवनप्रिय** न० ६त०। मरिचे हेमच०।

**यवनाचार्य्य** पु० ताजकादिज्योतिःशास्त्रकारके पण्डितभेदे

**यवनानी** स्त्री यवनानां लिपिः ङीप् आनुक् च। यवनानां लिप्याम् सि० कौ०।

**यवनारि** स्त्री यवनस्यारिः। श्रीकृष्णे त्रिका०।

**यवनाल** पु० यवस्येव नाला (नाडा) यस्य। (देधान) धान्यभेदे हेमच०। [यवक्षारे हेमच०।

**यवनालज** पु० यवस्य नालात् काण्डात् जायते जन–ड।

**यवनिका** स्त्री युवन्त्यस्यां यु–ल्युट् ङीप् स्वार्थे क अत इत्वम्। (कानात्) जवनिकायाम् अमरः।

**यवनी** स्त्री यु–ल्युट् ङीप्। १यवानीनामकौषधौ मेदि०। ङीष्। २यवनभार्य्यायाम्। "यवनीमुखपद्मानाम्" रघुः।

**यवनेष्ट** न० ६त०। १सीसके हेमच०। २मरिचे ३रसुने ४पलाण्डौ ५राजपलाण्डौ ६निम्बे च पु०। खर्जूर्य्यां स्त्री राजनि० टाप्।

**यवफल** पु० यव इव फलमस्य। १वंशे अमरः २कुटजे यस्य फलमिन्द्रयवः। ३जटामांस्याम् मेदि० ४प्लक्षवृक्षे शब्दर०।

**यवमध्य** न० यव इव मध्यं यस्य। चान्द्रायणभेदे प्रथम द्विमादापञ्चदशदिनमेकैकग्रासवृद्ध्या, तदुत्तरं च आपञ्चदशदिनं क्रमेणैकैकग्रासह्रासाभ्यां माससाध्ये व्रते तस्य मध्यदिवसानां हि बहुग्रासवत्त्वेन यवमध्यतुल्यत्वम्।

**यवशास** पु० यवेन बहुले धंसायां कर्त्तरि घञ्। यवक्षारे शब्दच०।

**यवशूक** पु० यवानां शूकः कारणत्वेनास्त्यस्य अच्। यवक्षारे त्रिका० यवशूकजादयोऽप्यत्र राजनि०।

**यवस** न० यु–असच्। १घासे २तृणे च अमरः।

**यवागू** स्त्री यूयते मिश्र्यते यु–आगू। षड्गुणजलपक्वे द्रवभेदे (याउ) अमरः। "सिक्थकचतुर्दशगुणे यवागूः षड्गुणेऽम्भसि" वैद्यकपरिभाषा।

**यवाग्रज** पु० यवस्याग्रात् शूकात् जायते जन–ड। १यवक्षारे अमरः। २यवान्यां च राजनि०।

**यवानी** स्त्री दुष्टो यवः ङीप् आनुक् च। (जोयानि) पदार्थे राजनि०। "यवानी पाचनी रुच्या तीक्ष्णोष्णा कटुका लघु। दीपनी च तथा तिक्ता पित्तला शुक्रशूलहृत्। वातश्लेष्मोदरानाहगुल्मप्लीहकृमिप्रणुत्" भावप्र०।

**यवापत्य** न० यवस्यापत्यमिव तज्जातत्वात्। यवक्षारे राजनि०

**यवाम्लज** न० यवजातादम्लाज्जायते जन–ड। सौवीरके काञ्जिकभेदे राजनि०।

**यवास** पु० यु–आस। १दुरालभायाम् अमरः। २खदिरभेदे च शब्दमा० ३शुक्लासिनी तृणे स्त्री राजनि० टाप्। स्वार्थे क। यवासक तत्रैव। [तरुणे।

**यविष्ठ** त्रि० अतिशयेन युवा युवन्–इष्ठन् यवादेशः। अति-

**यवीयस्** त्रि० अतिशयेन युवा युवन्+ईयसुन् यवादेश। १अतितरुणे २कनिष्ठे च "ज्यायांसं यवीयान्" स्मृतिः। स्त्रियां ङीप्।

**यवोत्थ** न० यवादुत्तिष्ठति उद्+स्था–क। सौवीरके राजनि०।

**यव्य** न० यवानां भवनं क्षेत्रं यत्। यवभवनयोग्ये क्षेत्रे अमरः। युतचन्द्राकीवत् यत्। २चान्द्रे मासि पु०। "यव्यद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः" मा०त०।

**यशःपटह** पु० यशःख्यापकः पटहः शा० त०। ढक्कायाम् वाद्यभेदे अमर०। [शेषादयोऽप्यत्र।

**यशःशेष** त्रि० यश एव शेषोऽस्य। मृते हेमच०। कीर्त्ति-

**यशद** न० येन वायुना शीयते शद–अच्। (दस्ता) ख्याते धातुभेदे "यशदं रङ्गसदृशं रीतिहेतुश्च तन्मतम्, यशदं तुवरं तिक्तं शीतलं कफपित्तहृत्। चक्षुष्यं परमं मेहान् पाण्डुं श्वासञ्च नाशयेत्" भावप्र०।

**यशस्** न० अश–असुन् धातोः सुट् च। शौर्य्यादिभूते ख्यातिपरपर्य्याये पदार्थे अमरः।

**यशस्या** स्त्री यशसे हिता यशस्+यत्। १जीवन्त्याम् २ऋद्धि-नामौषधौ च राजनि०। ३यशःसाधने त्रि०। "धन्यं यशस्यमायुष्यम्"।

यायजूक पु० यज-यङ्-ऊक। पुनः पुनः यागशीले अमर०।

यायावर पु० देशाद्देशान्तरं याति या यङ् वरच्। १अश्वमेधीयाश्वे जटा० तस्य नामादिगमनत्वात्तथात्वम् २जरत्कारुमुनौ च त्रिका०। ३अयायकनमनशीले त्रि०।

याव पु० यु-अण् स्वार्थे अण्। १अलक्ते अमर० स्वार्थे क। यावक तत्र। याव इव कन् (कुलत्थकलाइ) २ब्रीहि-धान्यभेदे अमरः।

यावत् त्रि० यत् परिमाणमस्य मतुप्। १यत्परिमाणे स्त्रियां ङीप्। या-वती। २साकल्ये ३अवधौ ४व्याप्तौ ५माने ६अवधारणे च अव्य० अमरः। एतद्योगे द्वितीया।

यावत्तावत् अव्य० यावच्च तावच्च द०। लीलावत्युक्ते अव्यक्तमानानयनाय कल्प्ये प्रथमे राशौ।

यावतिथ त्रि० यावतां पूरणः यावत्+डट् इथुक् च। यावत् परिमाणपूरणे।

यावन पु० यु णिच्-ल्यु। सिह्लाख्यगन्धद्रव्ये अमरः।

यावनाल पु० यवनाल एव स्वार्थे अण्। धान्यभेदे (जोयार) राजनि०।

यावनालशर पु० यावनाल इव शरः। शरभेदे राजनि०।

यावनाली स्त्री यवनालस्य विकारः अण् ङीप्। यव-नालभवायां शर्करायाम् राजनि०।

यावशूक पु० यवशूकस्य विकारः अण्। यवक्षारे रत्नमा०।

याष्टीक पु० यष्टिः प्रहरणमस्य ईकक्। यष्ट्या योद्धरि अमर०।

[भावे घञ्। २प्रयासे।

यास पु० यस कर्त्तरि प्रयासे घञ्। १दुरालभायाम् अमर०

यु मिश्रणे अमिश्रणे च अदा०पर०सक०सेट्। यौति अयावीत्।

यु बन्धे क्र्या०उभ०सक०अनिट्। युनाति युनीते अयौषीत् अयोष्ट।

यु निन्दने चु० आत्म० सक० सेट्। यावयते अयीयवत्।

युक्त त्रि० युज-क्त। १मिलिते मेदि०। २अभ्यासवशात् सदा सर्वविषयकज्ञानयुते योगिनि पु० भाषा०। ३उचिते ४न्या-यागतद्रव्यादौ च न० अमर० ५(एलानी) वृक्षभेदे स्त्री रत्नमा०।

[रुची) अमर०।

युक्तरसा स्त्री युक्तो रसो यस्याः। रास्नायां (रास्ना अम-

युक्ति स्त्री युज क्तिन्। १न्याये मेदि०। २व्यवहारे ३अनुमाने ४तत्साधकलिङ्गज्ञानादौ स्वपक्षसाधकविपक्षबाधकप्रमा-णाद्यन्यासे तर्कशा० व्यवहारे कानि चित् वेशाङ्क्षि-ष्ठानि नारदेनोक्तानि यथा "उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः। केशाकेशिगृहीतश्च युगपत् पारदारिकः। कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः। तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्त्तितः। प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः। असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम्"। "युक्तिरर्थावधारणम्" सा०द० उक्ते ६नाटकाङ्गविशेषे च। तत्र न्याये "युक्तो विरोधे न्यायस्तु बलवानर्थनिर्णये। युक्तिहीनविचारे तु धर्महानिः प्रजायते" मीमांसकाः।

युग वर्जने भ्वा०पर०सक०सेट् इदित्। युङ्गति अयुङ्गीत्।

युग न० युजि अच् पृषो० नलोपः। १युग्मे द्वित्वसंख्यान्विते सत्यत्रेताद्वापरकलिरूपे २कालविशेषे ३वृद्धिनामौषधे ४हस्तचतुष्कपरिमाणे ५रथादेरङ्गभेदे पु० (जो-याल) मेदि०।

[धान्यवृक्षभेदे अमरः।

युगकीलक पु० ६त०। रथाद्यङ्गयुगधारणार्थे कीलकाकारे

युगन्धर पु० युगं रथस्य युगकाष्ठं धरति धृ अच्। रथस्य युगकाष्ठबन्धने कूबराख्ये १काष्ठभेदे अमरः। २पर्वतभेदे च प्रन्दर०।

[अमर।

युगपद् अव्य० युगमिव पद्यते पद क्विप्। एककाले इत्यर्थे

युगपत्त्र पु० युगमिव द्वन्द्वं पत्त्रमस्य। कोविदारवृक्षे हेमच० वा कप्। तत्रैव। शिंशपावृक्षे स्त्री त्रिका० टाप् अत इत्वम्।

युगपार्श्वग पु० युगपार्श्वे गच्छति गम-ड। अश्वादौ वा कुलपार्श्वे गच्छे वृषे अमर०।

[मिते अमर०।

युगल न० युगं द्वित्वं लाति ला-क। युग्मे द्वित्वसंख्या-

युगलाख्य पु० युगलेन वराटकेन व्यञ्जनवर्णद्वयेनाख्यायते आ+ख्या-क। १बर्वरवृक्षे राजनि०। २युगलनामके त्रि०।

युगान्त पु० युगान्तः सत्यादीनामन्तस्तदुपलक्षितो वा कालः। १प्रलये २तत्काले च हला०।

युग्म न० युज-मक् पृषो० जस्य गः। १द्वित्वसंख्यान्विते (जोडा) युगले। "युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः। रुद्रेण द्वादशी युक्ता चतुर्दश्याथ पूर्णिमा। प्रतिपदाप्यमावास्या तिथ्योर्युग्मं महाफलम्" इत्युक्ते २तिथिविशेषयोगे ३समराशिषु च ४मिथुनराशौ च ज्यो०।

युग्मपत्त्र पु० युग्मानि पत्त्राण्यस्य। १रक्तकाञ्चनवृक्षे रत्नमा० युग्मपर्णादयोऽप्यत्र। संज्ञायां कन्। २शिंशपावृक्षे स्त्री शब्दर० टाप् अत इत्वम्। [२वृश्चिकाल्यां च राजनि०।

युग्मफला स्त्री युग्मानि फलानि यस्याः। १इन्द्रचिर्भिटायां

युग्य न० युगमर्हति युग+यत्। १वाहने याने। युगं वहति यत्। २युगवाहकेऽश्वादौ त्रि० अमरः।

युच्छ प्रमादे भ्वा० पर० अक० सेट् । युच्छति अयुच्छीत् ।

युज युतौ रु० उ० सक० अनिट् । युनक्ति युङ्क्ते इरित् अयुजत् अयौक्षीत् अयुक्त युयोज युयुजे ।

अजन्तोपसर्गात् उदश्च परस्मात् आत्म० ।

अनु+प्रश्ने सक० आ० । अनुयुङ्क्ते अनुयोगः ।

अभि+व्यवहारेणाक्रन्दने (नालिशकरा) सक० आत्म०अभियुङ्क्ते अभियोग ।

उद्+आयोजने सक० उद्यमे अक० उद्युङ्क्ते उद्योगः ।

उप+भोजने सक० सम्बन्धभेदे अक० आत्म० उपयुङ्क्ते उपयोगः ।

नि+प्रेरणे सक०आत्म०नियुङ्क्ते । नियोग' । [पर्य्यनुयोगः ।

परि+अनु+दूषणाय प्रश्ने आत्म० सक० । पर्य्यनुयुङ्क्ते

प्र+उच्चारणे व्यवहारभेदे च सक० आत्म० प्रयुङ्क्ते प्रयोग

प्रति+प्रतिरूपे योगे सक० आ० प्रतियुङ्क्ते प्रतियोगः ।

सम्+संयोगे सक० प० संयुनक्ति संयोग' ।

युज निन्दायां चु० आ० सक० सेट् । योजयते अयूयुजत ।

युज समाधौ दि० आत्म० अनिट् । युज्यते । युयुजे ।

युज बन्धने युतौ च वा चु० उभ० पक्षे भ्वा० पर०सक०सेट् । योजयति ते योजति । अयूयुजत् त । अयोजीत् ।

युज् त्रि० दि०युज क्विप् ।१समाधिमति । युक् युजौ । रु० युज क्विप् ।२अयोगवति त्रि०युङ् युञ्जौ युञ्जः इति भेद' चु० युज-निन्दे भावे क्विप् । ३निन्दायाम् अव्य० ।

युञ्जान पु० युज-शानच् ।१योगविशेषवति भावनासहकारेण सर्वपदार्थज्ञातरि मायाः। २रथसारथौ ३विप्रे च मेदि०।

युत दीप्तौ भ्वा०आ०अक०सेट् । योतते । अयोतिष्ट । ऋदित् चङि न ह्रस्व' । [४पृथग्भूते स्वाभिमाने न०मेदि०।

युत त्रि० यु-क्त । १संयुक्ते २मिलिते ३अमिलिते च ।

युतक न० यु-क्त युत-क वा तत' स्वार्थे क । १संशये २युगे ३स्त्रीवसनाञ्चले ४चरणार्ध्ये ५यौतुके धने मेदि० । ६मैत्रीकरणे शब्दर०।७संश्रये दन्द्वर्पणे च नानार्थमा०। ८स्त्रीवस्त्रभेदे हेम० । १०संयुक्ते त्रि० ।

युतवेध पु० विवाहादौ वर्ज्ये चन्द्रेण सह पापग्रहयोगे उपयमशब्दे १२६७५पृ० वक्ष्यवाक्ये दृश्यम् ।

युद्ध न० युध-भावादौ क्त । १परस्पराभिघातार्थं शस्त्रादिक्षेपणव्यापारे योधने २तदाधारे संग्रामे अमर । ज्योतिषोक्ते ग्रहाणां मतिभेदकृते योधनरूपे ३परस्परमिलनविशेषे च । ग्रहयुद्धशब्दे २७६६ पृ० दृश्यम् ।

युध युद्धे दिवा० आ० सक० अनिट् । युध्यते अयुद्ध युयुधे ।

युध(धा) स्त्री युध-सम्प० क्विप् वा टाप् । १युद्धे योधने २संग्रामे च अमर' । [३५अ०।

युधाजित् पु० क्रोष्टुन्द्रपपुत्रे माद्रीगर्भजाते नृपभेदे हरिवं०

युधान पु० युध-उणा०कानच् । १क्षत्रिये उणादिको० ।

युधिष्ठिर पु० युधि युद्धे स्थिरः "गवियुधिभ्यां स्थिरः' पा० षत्वम् । पाण्डुवंश्ये छे । [अयोपीत् ।

युप विमोहे दिवा०पर०अक० सेट् । युप्यति इरित् अयुपत्

युयुधान पु० युध-कानच् द्वित्वम् । १इन्द्रे सात्यकिनामनि यादवे क्षत्रियभेदे त्रिका० ।२क्षत्रियमात्रे च संक्षिप्तसा०।

युवखलति स्त्री युवतिरेव खलतिः पुंवत् । (टाक) रोगवत्याम् युवत्याम् । [शब्दर० ।

युवगण्ड पु० ६त० । यूनो गण्डस्थव्रणभेदे । (ब्रयस्फोडा)

युव(ति)ती स्त्री युवन्+ति ङीप् वा । १यौवनवत्यां स्त्रियाम् शब्दर० । युवन्–ङीप् । यूनीत्यप्यत । २स्त्रीमात्रे भागुरिः ३हरिद्रायां शब्दच० ।

युवतीष्टा स्त्री युवतीनामिष्टा । स्वर्णयूथिकायाम् राजनि० ।

युवन् त्रि० यु-कनिन् । १श्रेष्ठे २निसर्गबलवति मेदि० । "आषोड़शाद्भवेद् बालस्तरुणस्तत उच्यते" इत्युक्तवयस्के ३तरुणे च । "जीवति तु वंश्ये युवा" पा० सूत्रोक्ते पौत्रादेरपत्ये ४पतुर्थादौ बालादिस्वरेषु ५स्वरभेदे ।

युवनाश्व पु० सूर्य्यवंश्ये मान्धातृपितरि नृपभेदे ।

युवराज पु० युवैव राजा टच्समा० । राजयोग्यक्रियत्कार्य्यकरे १राजपुत्रे अमरः ।२वृक्षभेदे त्रिका० [युष्मद्

युष भजने सौ०पर०सक०सेट् । योषयति अयोषीत् । योषा

युष्मद् त्रि० सौ० युष-मदिक् । संबोध्यचेतने मवच्छब्दार्थे । तच्छार्थैऽस्य सर्वनामता लिङ्गु त्रिष्वपि समरूपता च ।

यूक पु स्त्री० यू-क्विप् क । मत्कुणे (उकुण) स्त्रीत्वे टाप् ।

यूति स्त्री यु-क्तिन् नि० दीर्घ । मिश्रीकरणे ।

यूथ न० यु-थक् पृषो० दीर्घः । सजातीयसमुदाये अमर' ।

यूथनाथ पु० ६त० । वन्यगजादीनां प्रधाने अमरः । यूथपादयोऽप्यत ।

यूथिका स्त्री यु-थक् पृषो० दीर्घ' स्वार्थे क अत इत्त्वम् टाप् । १अम्बष्ठके मेदि० २पाठायां राजनि० । ३यूथ्याश्च (युइ) अमर' । [अमरः ।

यूथी स्त्री यु-थक् पृषो० दीर्घ' ङीप् । (युइ) पुष्पप्रधाने क्षुपे

यूप पुं न० यु-पक् पृषो० दीर्घ' । १यज्ञीयपशुबन्धनकाष्ठभेदे तल्लक्षणं यज्ञपार्श्वे दृश्यम् । आगमार्यम्ब्रिकाद्यार्थे २स्तम्भे च अमरः ३जयस्तम्भे पु० उणादिको० ।

**यूपकटक** पु० ६त०। यज्ञसमाप्तिसूचककाष्ठस्य शिरःस्थे वलयाकारे काष्ठमये पदार्थे चषाले अमरः।

**यूपद्रु** पु० यूपाय द्रुः प्रकृतिविकृतिभावात् ४त०। खदिरवृक्षे यूपद्रुमादयोऽप्यत्र त्रिका०।

**यूष** वधे भ्वा० पर० सक० सेट्। यूषति अयूषीत् युयूष।

**यूष** पुंन० यूष क। मुद्गादिक्वाथे अमरः। "अष्टादशगुणे नीरे शमीधान्यस्ततोरसः। सिद्धःस्रावे घनः स्विन्नः पेयातो यूष उच्यते। अस्नः स एव निर्यूहो रुचितश्च विशेषतः"। यूषस्य प्रकारान्तरमाह "कणाहृत्यप्यस्तं शुण्ठीं पिप्पलीञ्चार्द्धकार्षिकीम्। पारिमस्थेन विपचेत्तद्वयो यूष उच्यते"।
"यूषो वल्यो लघुः पाके रुच्यः कण्ठ्यः कफापहः"। अथ मुद्गयूषविधिः "मुद्गाना द्विपल तोये स्तनमष्टगुणेऽन्विते। पादस्थं मर्दितं पूतं दाडिमस्य पलेन तत्। युक्तं सैन्धवविश्वाङ्गधान्यकैः पादकार्षिकैः। कषायो रकयोश्च पाण्ड्यावैकेमावचूर्णितम्। संस्कृतो मुद्गयूषोऽयं पित्तश्लेष्महरो मतः"। अथ तस्य गुणाः "मुद्गाना लक्तनो यूषो दीपनः शीतलो लघुः। व्रणोर्ध्वजत्रूरुगदाहकफपित्तज्वरास्रहृत्"। अथ मुद्गामलकयूषगुणाः "मुद्गामलकयूषस्तु भेदी पित्तानिलापहः। तृड्दाहश्रमनः शीतो मूर्च्छाभ्रममदापहः" भावप्र०। २मद्यादावव्ये पु० शब्दर०। [पठित न क्षुद्र०।

**येष** यत्ने भ्वा० आ० अक० सेट्। येषते अयेषिष्ट। ऋदित्

**योक्त्र** न० युज्यतेऽनेन युज–ष्ट्रन्। ईषादण्डादौ युगवन्धनार्थे दामनि (योत) अमरः।

**योग** पु० युज–भावादौ घञ्। संयोगे १मेलने २उपाये ३वर्मादिधारणे ४ध्याने ५युक्तौ च अमरः। "योगश्चित्तवृत्तिनिरोधः" इति पातञ्जलोक्ते ६सर्वविषयेभ्योऽन्तःकरणवृत्तेर्निरोधे "संयोगं योगमित्याहुर्जीवात्मपरमात्मनोः" इत्युक्ते ७जीवात्मपरमात्मनोरैक्ये। ८अलब्धस्य लाभचिन्तायाम् ९देहस्थैर्ये १०सन्नाहादीनां प्रयोगे ११भेषजे १२विश्वासघातके १३द्रव्ये कार्मणे च मेदि०। १४समुदायशब्दस्यावयवार्थसम्बन्धे "योगबलं समाख्या" इति मीमांसकाः। "योगः कर्मसु कौशलम्" इत्युक्ते १५यथास्थितवस्तुनोऽन्यथारूपप्रतिपादने यथा बन्धहेतोरपि कर्मणोऽबन्धमोक्षहेतुत्वम्। १६ज्योतिषोक्तेषु रविचन्द्रयोगाधीनेषु विष्कुम्भादिषु सप्तविंशतौ पदार्थेषु। तिथिवारनक्षत्राणाम् अन्यतरान्यतमानां १७सम्बन्धविशेषेषु सिद्धियोगः अमृतयोगः अर्द्धोदययोग इत्यादि। १८लाभे च "योगाधमनविक्रीतमिति" स्मृतिः। १९नैयायिके २०धने क्षेमच० २१चारे २२सूत्रे त्रिका०। चित्तवृत्तिनिरोधरूपयोगश्च द्विविधः। राजयोगो हठयोगश्च। तत्र राजयोगः पतञ्जलिनोक्तः। हठयोगस्तु तन्त्रशास्त्रोक्तः। तस्य प्रकारान्तरेण त्रैविध्यम् भाग० ११।२० अ० उक्तं यथा "श्रीभगवानुवाच "योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया। ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित्। निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु। तेष्वनिर्विण्णचित्तानां कर्मयोगश्च कामिनाम्। यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्। न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः। तावत् कर्माणि कुर्वीत न निर्विद्येत यावता। मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते। स्वधर्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव। न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत्। अस्मिँल्लोके वर्त्तमानः स्वधर्मस्थोऽनघः शुचिः। ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया"। २३ज्योतिषोक्ते लग्नादिस्थग्रहविशेषे पञ्चभेदयोगे यथा राजयोगः नाभसयोग इत्यादि। यात्रायां यात्रालग्नात् केन्द्रत्रिकोणस्थिते बुधजीवशुक्राणामेकस्मिन् यथोक्तं मु० चि० "एकोऽपि ज्ञार्यसितेषु पञ्चमतपःकेन्द्रेषु योगस्तथा द्वौ चेत्तेष्वधियोग एषु सकला योगाधियोगः स्मृतः"। योगे क्षेमपथाधियोगगमने "क्षेमं रिपूणां वधं"

**योगक्षेम** न० योगश्च क्षेमश्च समाहारः द्व०। अलब्धलाभचिन्तायां लब्धपरिरक्षणे "योगक्षेमं वहाम्यहम्"

**योगज** न० योगात् जायते जन–ड। १अगुरुचन्दने भावप्र०। २योगजातमात्रे त्रि०। ३न्यायाद्युक्ते ज्ञानसाधने अलौकिकसन्निकर्षभेदे पु०।

**योगदान** न० योगेन छलेन उपधिना वा दानम्। "योगदानप्रतिग्रहम्" इति स्मृत्युक्ते सोपधिके दाने।

**योगनिद्रा** स्त्री योगरूपा निद्रा। प्रलये परमेश्वरस्य सर्वजीवसंहारेच्छया योगरूपे १व्यापारे "योगनिद्रामुपेयुषः" देवीमा० २तदधिष्ठात्र्यां दुर्गायाञ्च।

**योगपट्ट** न० योगाभ्यासार्थं पट्टम्। योगिधार्ये पट्टवस्त्रभेदे योगपट्टकमप्यत्र। "त्रिविधं योगपट्टकमाद्यं व्याघ्राजिनोद्भवम्। द्वितीयं मृगचर्मोत्थं तृतीयं तन्तुनिर्मितम्। चतुर्मात्रप्रविस्तारं दैर्घ्यं च यज्ञसूत्रवत् शिखान्तशेखरः। चतुर्मात्रं चतुरङ्गुलात्मकम् वीरमि०।

**योगपीठ** पुंन० योगयोग्यं पीठमासनम् । देवादीमासनभेदे

**योगमाया** स्त्री योग एव माया । भगवतो जगत्सर्जना-र्थायां शक्तौ "योगमायासमाश्रितः" इति भाग०१०स्क० रासारम्भे तदधिष्ठात्र्यां २दुर्गायाञ्च ।

**योगरङ्ग** पु० योगेन रङ्गोऽस्य । (नारङ्ग) जम्बीरभेदे राजनि०

**योगरूढ** पु० योगोऽवयवशक्तिः रूढिः समुदायशक्तिः एते स्तोऽस्य अच् । अवयवशक्त्या समुदायशक्त्या च अर्थ-बोधके पङ्कजशब्दादौ । तत्र हि उभयशक्त्या पङ्कजन्म-कर्तृत्वरूपावयवार्थविशिष्टपद्मत्वविशिष्टस्य बोधः । उभ-यार्थबोधनाच्च पङ्कजाते कुमुदादौ स्थलजाते पद्मे च न तत्पदप्रयोगप्रसक्तिः ।

**योगरूढि** स्त्री योगेन सहिता रूढिः । शब्दस्य वृत्तिभेदे यथा पङ्कजनिकर्तृत्वविशिष्टपद्मस्य बोधः । [च हेमच०।

**योगवाहिन्** पु०योगेन वहति वह-णिनि ।१पारदे २क्षारभेदे

**योगाचार** पु० बौद्धभेदे तन्मतञ्च बुद्धशब्दे ४५८१ पृ०दृश्यम्

**योगाधमन** न० योगेन छलेनोपधिना वाऽऽधमनम् । बोप धिके छलेनाके च बन्धकदाने । "योगाधमनविक्रीतम्" इति स्मृतिः ।

**योगारूढ** पु० योगमारूढः आ+रुह-क्त । "यदा तु ने-न्द्रियार्थेषु न कर्मस्वनुषज्जते । सर्वसंकल्पसन्न्यासी यो-गारूढस्तदोच्यते" इत्युक्ते योगिभेदे "योगारूढस्य तस्यैव शमः कारणमुच्यते" इति गीता ।

**योगासन** न० योगार्थमासनम् । १योगशास्त्रोक्ते स्वस्तिकादौ आसनभेदे हेमच० । "अथ योगासनं वक्ष्ये यत् कृत्वा योगिवल्लभेत् । ऊर्वोः पादतलद्वन्द्वं स्थाप्य बद्धा करद्वयम्" इति रुद्रया० उक्ते २आसनभेदे च ।

**योगिन्** त्रि० युज-घिनुण् । "आत्मौपम्येन सर्वत्र समं प-श्यति योऽर्जुनः । सुखं वा यदि वा दुःखं स योगी परमो मतः" गीताद्युक्तयोगयुक्ते २सयोगवति च त्रि० स्त्रियां ङीप् । सा च तत्र ३दुर्गायां ४सप्तचर्यक्तिभेदेषु ब्राह्म्यादिषु चतुःषष्टिप्रकारेषु देवताप्रतिमाशब्दे ३८८५ पृ० दृश्यम् । "प्रतिपन्नवमी पूर्वे रामरुद्रौ च पावके । शरस्त्रयोदशी याम्ये वेदमासौ च नैर्ऋते । षष्ठी चतु-र्दशी पश्चात् वायव्यां मुनिपूर्णिमे । द्वितीया दशमी वह्नौ ऐशान्यां चाष्टमी कुहू" इत्युक्तेषु पूर्वादिदिग्-भेदाद् ५तिथिभेदेषु तत्फल वामे शुभकरी प्रोक्ता पृष्ठे सर्वार्थसाधिनी" ज्यो०त० । आवश्यकले यात्राई-भेदे तस्याः शुभत्वं समयामृते उक्तं यथा "यस्यां दिशि तु दृश्यं याति ततो यात्राद्भुक्तिका । अमलो तेन मार्गेण भवेत्तत्कालयोगिनी । तेन "प्राचीधनेश्वर-कृतान्तमरुत्पयेयवायव्यवारुणयमाधिपशङ्करेषु । एवं क्रमाश्रिश्वति प्रतिपन्नवम्यो पृष्ठे स्थिता शुभकरी गिरिराजपुत्री" । ६मकलापिङ्गलादिदशभेदे च दशाशब्दे ३४८४ पृ० दृश्यम् । [९दुर्गायां स्त्री ङीप् ।

**योगीश्वर** पु० ६त० ।१याज्ञवल्क्यमुनौ २योगिनां श्रेष्ठे च ।

**योगेश्वर** पु० ६त० । १श्रीकृष्णे "योगेश्वर ! ततो मे त्वं दर्शयात्मानमव्ययम्" गीता । २दुर्गायां च ३वन्ध्याकर्कोट्यां स्त्री भावप्र० ङीप् ।

**योगेष्ट** न० योगाय योजनार्थमिष्टम् । सीसके अमरः ।

**योग्य** त्रि० योगमर्हति यत् युज-ण्यत् वा । १योगार्हे २उचिते ३निपुणे ४शक्ते च । ५पुष्यनक्षत्रे पु० मेदि० । ६ऋद्धिनामौषधे न० अमरः ।

**योग्यता** स्त्री योग्यस्य भावः तल् । १सामर्थ्ये २शाब्द-बोधसाधने "पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिता" भाषा० उक्ते ३तत्पदार्थे तत्पदार्थवत्तारूपे ४परस्परान्वये बाधाभावरूपे साधे च ।

**योग्या** स्त्री योगमर्हति यत् युज-ण्यत् वा कृत्यम् ।१अभ्यासे सूर्यस्त्रियाञ्च मेदि० ३शस्त्राभ्यासे हेमच० ।

**योग्यानुपलब्धि** स्त्री योग्यस्य प्रत्यक्षादिना उपलब्धुमर्हस्या-नुपलब्धिरज्ञानम् । न्यायादयुक्ते अभावग्राहके साधन-भेदे । तथाहि घटादिसत्त्वे तत्र घटाभावो नानुप-लभ्यते तस्य प्रतियोगिनो घटादेः सत्त्वेन तत्प्रत्यक्ष-कारणसामग्रप्रसत्त्वेन तत्प्रत्यक्षस्याभावात् किन्तु घटा-द्यभावो गृह्यते पिशाचाद्यभावस्य तु न प्रत्यक्षता तत्-प्रतियोगिपिशाचादेर्दर्शनायोग्यत्वात् । वेदान्तिमते इयं प्रमाणान्तरम् वेदान्तप० दृ०।

**योजन** न० युज-भावादौ ल्युट् । १संयोगे णिच्-ल्युट् । २सयोगकरणे । ३चतुर्षु क्रोशेषु । "स्याद् योजनं क्रोश-चतुष्टयेन" "प्रथममगमदङ्गा योजनं योजनेशः" इति च लीला० । ४परमात्मनि च मेदि० । ५अङ्गुष्ठौ त्रिक० । युज-णिच्-युच् । यस्यार्थस्य यत्रान्ययः तद्वाचक-शब्दस्य तद्वाचकशब्देन ६व्यासत्तिसम्पादने स्त्री ।

**योजनगन्धा** स्त्री योजनं व्याप्य गन्धो यस्याः । १कस्तूर्याम् २सीतायां ३व्यासमातरि सत्यवत्याञ्च मेदि० स्वार्थे कन् अत इत्वम् तत्रैवार्थे । [त्वात् । मञ्जिष्ठायाम् रत्नमा० ।

**योजनपर्णी** स्त्री योजनं व्याप्य पर्णान्यस्याः विस्तीर्णपर्ण-

**योजनवल्ली** स्त्री योजनं व्याप्य वल्लीव । मञ्जिष्ठायाम् अमरः स्वार्थे क ह्रस्वः टाप् । तत्रैव राजनि० ।

**योटक** त्रि० युट–ण्वुल् । १मेलके विवाहमेलकस्य उपयमशब्दे १२४८ पृ० दृश्यः ।

**योत्र** न० यु-ष्ट्रन् । योक्त्रे (योत) अमरः ।

**योद्धृ** पु० युध–तृच् । युद्धकर्त्तरि अमरः । [२युद्धे ।

**योध** पु० युध–अच् । १युद्धकारके अमरः । भावे घञ् ।

**योधन** न० युध–भावे ल्युट् ।१युद्धे । करणे ल्युट् ।२अस्त्राद्यायुधे । कर्त्तरि ल्यु । ३युद्धकर्त्तरि पु० ।

**योधनसराव** पु० योधनस्य युद्धाय सरावः आह्वानम् ४अर्थे ६त०। योधानां युद्धार्थं परस्पराह्वाने अमरः ।

**योनल** पु० यवस्य नल इव काण्डोऽस्य पृषो० उत्वम् । (देधान) शस्यभेदे हेमच० ।

**योनि** पुस्त्री० यु–नि । १मण्यादीनामुत्पत्तिस्थाने आकरे मेदि०। २कारणे ३जले हेम०। ४स्त्रीणामसाधारणचिह्ने अमर । ५तद्देवताके पूर्वफल्गुनीनक्षत्रे ज्यो० । स्त्रीत्वे वा ङीप् । ६उत्पत्तिस्थानमात्रे त्रिका० ।

**योनिज** न० योनिस्थानात् जायते जन–ड । देहभेदे १जरायुजे २अण्डजे च देहे ।

**योनिमुद्रा** स्त्री योन्याकारा मुद्रा । तन्त्रोक्ते देवताविशेषपूजाङ्गे प्रदर्शनीये अङ्गुलीसन्निवेशविशेषे तल्लक्षणन्तु "मिथः कनिष्ठिके बद्ध्वा तर्जनीभ्यामनामिके । अनामिकोर्ध्वसंश्लिष्टे दीर्घमध्यमयोरध । अङ्गुष्ठाग्रद्वयं न्यस्य योनिमुद्रेयमीरिता" तन्त्रसा० । २मूलबन्धरूपे योगे मन्त्रभेदे तल्लक्षणं पदार्थादर्शे "पार्ष्णिभागेन सम्पीड्य योनिमार्गं तथा गुदम् । अपानमूर्ध्वमाकर्षेत् मूलबन्धो निगद्यते । गुदमेढ्रान्तरं योनिस्तामाकुञ्च्य प्रबन्धयेत् । युवा भवति वृद्धोऽपि सतत मूलबन्धनात्" । (योनिस्थानकुञ्चनात् योनिमुद्रात्वमस्याः) "इयं मयोक्ता भद्रे योनिमुद्रा बन्धरूपा देवैरपि दुर्लभोऽस्य । अनेन बन्धेन न साध्यते यन्नास्त्येव तत्साधकपुङ्गवस्य" ।

**योनिरोग** पु० ६त० । षोडशविधे भगरोगभेदे "उदावर्त्ता१तथा वन्ध्या२विप्लुता३च परिप्लुता४। वातला५ योनिजो रोगो वातदोषेण पञ्चधा । पञ्चधा पित्तदोषेण तत्रादौ लोहिताक्षरा१। प्रस्रंसिनी२ वामनी३च पुत्रघ्नी४ पित्तला५तथा । अत्यानन्दा१ कर्णिनी२ च चरणा३नन्द-पूर्विका४। अतिपूर्वाणि५श्च ज्ञेया श्लेष्मला५च कफादिमाः। षण्ढ्यण्डिनी२ च विवृता३ सूचीवक्त्रा४ त्रिदोषिणी५। पञ्चैता योनयः प्रोक्ताः सर्वदोषप्रकोपतः" । अथ तासां लक्षणान्याह "सफेनिलमुदावृत्ता१ रजः कृच्छ्रेण मुञ्चति। वन्ध्या२ निरार्त्तवा ज्ञेया विप्लुता३ नित्यवेदना । परिप्लुतायां४ भवति ग्राम्यधर्मे रुजा भृशम् । वातला५ कर्कशा स्तब्धा शूलनिस्तोदपीडिता । चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः" । अनिलवेदनास्तोदादयः वातलायां तु अति वातवेदना बोद्धव्या वातलेत्यन्वयात् । "सदाहं क्षरते रक्तं यस्याः सा लोहिताक्षरा१। प्रस्रंसिनी२ स्रवते च क्षोभिता दुष्प्रजायिनी" । क्षोभिता विमर्दिता स्रंसते स्वस्थानाच्च्यवते दुष्प्रजायिनी दुःप्रजननशीला । "सतत उद्गिरेद्वीर्यं वामनी३ रजसा युतम् । स्थितं स्थितं पातयेद्गर्भं पुत्रघ्नी४ रक्तसंस्रवात्" । पुत्रघ्न्योऽनपत्योपलक्षणा । "अत्यर्थं पित्तला५ योनिर्दाहपाकज्वरान्विता । चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत्" । अत्यानन्दा१ न सन्तोषं ग्राम्यधर्मेण विन्दति । कर्णिन्यां२ कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते" । कर्णिका मांसस्य कर्णिकाकारोपचयः । "मैथुने चरणा३ पूर्वं पुरुषादतिरिच्यते । अतिरिच्यते रजो मुञ्चतीत्यर्थः । बहुशश्चातिचरणा४ तयोर्बीजं न तिष्ठति" । बहुशः वारंवारमतिरिच्यते तयोः चरणातिचरणयोः । "श्लेष्मला५ पिच्छिला योनिः कण्डूयुक्तातिशीतला । चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् । अनार्त्तवाऽस्तनी षण्ढी१ खरस्पर्शा च मैथुने" । अस्तनी ईषत्स्तनी यस्याः सा अत्र अल्पस्तनी षण्ढी । "महामेढ्रगृहीताया बालाया अण्डिनी२ भवेत् । महामेढ्रपुरुषेण गृहीताया बालायाः सूक्ष्मयोनिच्छिद्रायाः । अण्डिनी२ अण्डवल्लम्बमाना योनिर्भवति" । विवृता सूचीवक्त्राख्याह "विवृता३ च महायोनिः सूचीवक्त्रातिसंवृता४ । त्रिदोषजामाह सर्वलिङ्गसमुत्थानं सर्वदोषप्रकोपजम् । चतसृष्वपि चाद्यासु सर्वलिङ्गनिदर्शनम्" । असाध्यां योनिमाह । "पञ्चासाध्या भवन्तीह योनयः सर्वदोषजाः । पञ्च षण्ढीप्रभृतयः" अथ योनिकन्दस्य निदानमाह । "दिवास्वप्नादतिक्रोधात् व्यायामादतिमैथुनात् । क्षताच्च नखदन्ताद्यैः वाताद्याः कुपिता यदा" । यथास्वनिदानं कुपिता वाताद्याः । रूपमाह "पूयशोणितसङ्काशं लकुचाकृतिसन्निभम् । जायन्ते यदा योनौ नाम्ना कन्दः स योनिजः" । लकुचाकृतिसन्निभं लकुचफलाकारपुष्कलम् विशेष्य बोध्यम्" । वातजादिभेदेन रूपमाह । "रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् । दाहराग-

स्त्वरयुतं विद्यात्त्रिपित्तात्मकं तु तम्। तिलपुष्पप्रतीकाश कण्डूमन्तं कफात्मकम्। सर्वलिङ्गसमायुक्तं सन्निपातात्मकं वदेत्"।

**योषा** स्त्री युष-अच् टाप्। स्त्रियाम् नार्य्याम् अमरः।

**योषित्** स्त्री युष-इति। नार्य्याम् अमरः। इकन्तत्वाद्वा टाप्। योषिताप्यत्र शब्दर०। [प्रियमाल्ये लि०।

**योषित्प्रिया** स्त्री ६त०। १हरिद्रायां भावप्र०। २नारी-

**यौक्तिक** त्रि० युक्तित आगत. ठक्। १युक्तिसिद्धे २योग्ये च। युक्तौ अधिकृतः ठक्। ३नर्मसचिवे पु० शब्दर०।

**यौगिक** त्रि० योगात् प्रकृतिप्रत्ययार्थसम्बन्धात् आगतः ठक्। प्रकृतिप्रत्ययलभ्यार्थवाचके शब्दे यथा पाचकादिशब्द पाककर्तृवाचकः। योगाय प्रभवति ठक्। २योगयोग्ये

**यौट** बन्धे भ्वा० पर० सक० सेट्। यौटति अयौटीत्। ऋदित् चङि न ह्रस्वः।

**यौड्** यौटवत् सर्वम्। यौडति अयौडीत् ऋदित्।

**यौतक** न० युते विवाहकालेऽधिगतम् वुण्। विवाहकाले लब्धे धने हेमा०। इति दायभागानुसारिणः। वीरमि० तु "यु मिश्रणे इति धात्वनुसारात् विवाहकाले एकासनोपविष्टयोर्वधूवरयोर्यद्धन्मभिदीयते तद्युतयोरिदं यौतकमिति व्युत्पत्त्या यौतकमित्युच्यते" इत्युक्तम् अत एव निघण्टौ युतयोर्यौतकमित्युक्तम्। अन्ये तु विवाहे स्त्रीपुंसावेकशरीरतया मिश्रितौ भवत इति "अस्थिभिरस्थीनि मांसैर्मांसानि" इत्यादिश्रुत्या तयोश्च विवाहेन युतयोरिदम्" इत्याहुः। वस्तुतः विवाहकालोत्तरमेकासनोपविष्टयोरेव दत्तं धन यौतक लोकप्रसिद्ध वीरमि०उक्तं साधीयः। "मातुस्तु यौतकं यत् स्यात् कुमारी भाग एव स" मनुः।

**यौतव** न० यु-तु योतुः तस्य भावः अण्। १परिमाणे अमरः।

**यौतुक** न० योतुर्यौगकालस्तत्र लब्धं कञ्। विवाहकाले लब्धे धने यौतकशब्दे दृश्यम्।

**यौधाजय** न० अहगाने १प्र० दर्शिते सामभेदे "रौरवयौधाजये वार्हते भवतः" श्रुतिः।

**यौधेय** पु० योध एव आयुधजीविसंघत्वात् स्वार्थे ठक्। १योद्धरि। २उत्तरस्थदेशभेदे पु० ह० स० १४ अ०। युधायाः अपत्यम् "द्व्यच" पा० ढक्। ३युधाया अपत्ये। ततःस्वार्थे अञ् शार्ङ्गर०। स्त्रियां ङीप्। यौधेयी।

**यौन** त्रि० योनितः योनिसम्बन्धात् आगतम् अण्। १योनितः प्राप्ते। योनेरयमण्। २वैवाहिकसम्बन्धे पु०।

प्रा० वि० बौधायनः "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद्यौनात् सद्यो हि शयनासनात्"। सुमन्तुः "श्वैतेयौनमौखस्रौवादीनां सम्बन्धानामन्यतमेन सह सम्पर्कमियात् तस्यापि तदेव प्रायश्चित्तं विदध्यादिति"।

**यौवत** न० युवतीनां समूहः अण्। युवतिसमुदाये अमरः।

**यौवन** न० यूनो भावः अण्। १तारुण्ये "आ षोडशाद्भवेद्बालस्तरुणस्तत उच्यते। वृद्धः स्यात् सप्तते-रूर्द्ध्वम्" इत्युक्ते २अवस्थाभेदे। [फोडा)व्रणभेदे शब्दमा०

**यौवनकण्टक** पु०न० यौवनस्य कण्टक इव चिह्नम्। (वयस्

**यौवनदशा** स्त्री कर्म०। तारुण्ये अवस्थाभेदे।

**यौवनलक्षण** न० ६त०। १स्तने २लावण्ये च मेदि०।

**यौष्माक** त्रि० युष्माकमिदम् युष्मद्+अण् युष्माकादेशः। युष्मत्सम्बन्धिनि। खञ्। यौष्माकीणोऽप्यत्र त्रि०।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्य सङ्कलिते वाचस्पत्ये यकारादि-शब्दार्थसङ्कलनम्।

---

## र

**रकार** व्यञ्जनवर्णभेदः सर्ववर्णोष्मवर्णयोर्मध्यस्थत्वात् अन्तःस्थवर्णः। अस्योच्चारणस्थान मूर्द्धा। जिह्वाग्रेण मूर्द्धस्थानस्पर्शवत्स्पर्शेनोच्चारणादस्य आभ्यन्तरप्रयत्न ईषत्स्पृष्टम्। बाह्यप्रयत्नाश्च संवारनादघोषा अल्पप्राणश्च। वर्णाभिधाने अस्य वाचकशब्दा उक्ता यथा "रो रक्तः क्रोधिनी रेफः पावकस्तैजसो मतः। प्रकाशो दर्शनो दीप्तो रतत्पृष्ठा परं भवी। भुजङ्गेशो मतिः सूर्य्यो धातु रक्तप्रकाशकः। व्यापको रेवती दान दक्षांसो वह्निमण्डलम्। उग्ररेखा स्वनदन्तो वेदकर्णोपधाम्बरा। प्रकृतिः रुचयो ब्रह्मा वह्निबीजं च गायको घनः। श्रीकण्ठ आद्या हृदयं तस्य त्रिपुरसुन्दरी। सबिन्दुयौनिजो ज्वाला श्रीशैलो विश्वतोमुखी"। अस्य ध्येयरूपं यथा "रेफञ्च चञ्चलापाङ्गि! कुण्डलीत्रयसंयुतम्। रक्तविद्युल्लताकारं पञ्चदेवात्मकं सदा। पञ्चप्राणमयं वर्णं

रक्ताम्लान पु० कर्म० । रक्तमहासहालतायाम् राजनि० ।

रक्तार्बुद पु० रोगविशेषे । तल्लक्षण भावप्र० उक्तं यथा "दोषप्रदुष्टा रुधिरं शिरास्तं सङ्कोच्य संपीड्य गतस्तपाकम् । सस्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशुवृद्धिम् । स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकन्तु । रक्तक्षयोपद्रवपीडितत्वात् पाण्डुर्भवेदर्बुदपीडितश्च" । दोषोऽत्र पित्तं, रुधिरं शिराश्च सङ्कोच्य संपीड्य संहतीकृत्य मांसाङ्कुरो' सर्वेष्वर्बुदेषु तुल्यत्वं, रक्तजे तु विशेषतो रक्तदुष्टिः एवं मांसार्बुदे विशेषतो मांसदुष्टिर्बोद्धव्या । ततो मांसपिण्डमुन्नह्यति उद्गतं करोति । अपाकं ईषत्पाकं यथा स्यादेवमिति क्रियाविशेषणम् । ईषत्पाकत्वैकदेशपाकेन । रक्तक्षयोपद्रवपीड़ितत्वात् रक्तक्षयोपद्रवा' उक्तुतेनोक्ताः । तै पीड़ितत्वात् अर्बुदपीड़ित" । शातातपीयकर्मविपाके "रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदा" इत्युक्तम् ।

रक्तार्शस् न० अर्शोरोगभेदे । तल्लक्षण भावप्र० उक्तं यथा "रक्तोल्वणा गुदे कीला' पित्ताकृतिसमन्विता' । वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभा । तेऽत्यर्थं दुष्टमुष्णञ्च गाढविड्भि' प्रपीड़िता । स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः । भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः । हीनवर्णबलोत्साहो हतौजा' कलुषेन्द्रियः । विट् श्यावं कठिनं रूक्षमधोवायुर्न वर्त्तते । तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसम् । कट्यूरुगुदशूलञ्च दौर्बल्य यदि वाऽधिकम् । तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् । शिथिलं श्वेतपीतञ्च विट् स्निग्धं गुरु शीतलम् । यद्यर्शसा घनञ्चासृक् तन्तुमत् पाण्डु पिच्छिलम् । गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च कारणम् । श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः । गुदे कीला अर्शांसि पित्ताकृतिसदृशा' । दुःखै रोगैः त्वक्पारुष्यास्यशीतप्रार्थनादिभि' । कलुषेन्द्रियः व्याकुलसर्वेन्द्रियः । रक्तजस्यापि वातोल्वणस्य लक्षणमाह । तत्र रक्तार्शसि अनुबन्ध' उल्वणत्वम् । रूक्षण रूक्षयतीति रूक्षणं रूक्ष द्रव्यम् । पित्तोल्वणस्य लक्षणम् "रक्तोल्वणा गुदे कीला पित्ताकृतिसमन्विता" इत्यादिनैवोक्तम् रक्तपित्तयो' समानलिङ्गत्वात् । कफोल्वणस्य लक्षणमाह । सपिच्छं पिच्छिलार्द्रं स्तिमितमार्द्रचर्मावगुण्ठितमिव" ।

रक्तालु पु० कर्म० । (शकरकन्द) आलुभेदे राजनि० ।

रक्तिका स्त्री रक्तैव स्वार्थे कन् अत इत्वम् । १गुञ्जायां २राजिकायां राजनि० ३परिमाणभेदे रत्तिकापरिमाणे च ।

रक्तेक्षु पु० कर्म० । (कालमा) इक्षुभेदे राजनि० ।

रक्तैरण्ड पु० कर्म० । (लालभेरण्डा) वृक्षभेदे राजनि० ।

रक्तोत्पल न० कर्म० । कोकनदे लोहितवर्णे पद्मे अमरः । रक्तोत्पलमिव पुष्पमस्यास्य अच् । २शाल्मलिवृक्षे (शिमुल) पु० राजनि० । रक्तमुत्पलमिव । ३गैरिके न० हारा०

रक्तोत्पलाभ पु० रक्तोत्पलस्य कोकनदस्येवाभा यस्य । १रक्तरूपे जटा० २तद्वति त्रि० ।

रक्ष पालने भ्वा० पर० सक० सेट् । रक्षति अरक्षीत् ररक्ष । [समूहे अमरः ।

जीव् रक्षितो वर्त्तते ।

रक्षःसभ न० रक्षसां राक्षसानां सभा क्लीवत्वम् । राक्षस-

रक्षक त्रि० रक्ष-ण्वुल् । रक्षाकर्त्तरि स्त्रियां टाप् अत इत्वम्

रक्षणि(णी) स्त्री रक्ष-अनि वा ङीप् । त्रायमाणालतायाम् राजनि० । [अमरः ।

रक्षस् न० रक्ष्यते हविरस्मात् रक्ष अपादानेऽसुन् । राक्षसे

रक्षा स्त्री रक्ष–भावे अ टाप् । १रक्षणे २तदर्थे रक्षासूत्रे च "रक्षेः । मा चल मा चल" रक्षामन्त्रमन्त्र' । रक्ष रक्ष अच् टाप् । ३जतुनि मेदि० । ४भस्मनि च स्त्री शब्दर० । ५रक्षके त्रि० ।

रक्षापत्त्र पु० रक्षार्थं पत्त्रमस्य । भूर्जपत्त्रवृक्षे राजनि० ।

रक्षित त्रि० रक्ष्यतेऽत्र रक्ष क्त । १भाण्डे । २वैद्यभेदे पु० ।

रक्षिवर्ग पु० रक्षिणां वर्ग' । रक्षकसैन्यादिगणे (तहरिगण)

रक्षोघ्न न० रक्षो हन्ति हन-टक् । १काञ्जिके हेमच० । २हिङ्गुनि राजनि० । तद्गन्धस्य घ्राणस्पर्शात्रात्र रक्षसामपसरणम् । ३भल्लातकवृक्षे पु० त्रिका० । ४श्वेतसर्षपे पु० रत्नमा० । ऋग्वेदप्रसिद्धे "कृणुष्व पाज" इत्यादिके सूक्ते ऋ० ४।४।१० । ५सूक्तभेदे न० । ६वचायां स्त्री । ७राक्षसघातकमात्रे त्रि० ङीप् ।

रक्षोहन् पु० रक्षो हन्ति हन+क्विप् । १गुग्गुलौ राजनि० तद्गन्धघ्राणाद्धि रक्षसामपसरणम् । २श्वेतसर्षपे पु० । ३राक्षसहन्तरि त्रि० । "रक्षोहणं वलगहनम्" यजु० ५, २३

रक्ष्णु पु० रक्ष–नङ् । त्राणे अमर' । [रङ्खते ।

रख सर्पणे भ्वा० पर० सक० सेट् इदित् । रङ्खति अरङ्खीत्

रख सर्पणे भ्वा० पर० सक० सेट् । रखति अरखीत् अराखीत् । [जटा० रगयति ।

रग शङ्कायाम् भ्वा० प० सक० सेट् । रगति इदित् अरगीत्

रग गतौ भ्वा० पर० सक० सेट् इदित् । रङ्गति अरङ्गीत् ।

रग आदे आप्तौ च चु० उभ० सक० सेट् । रागयति अरीरगत् त । [अररङ्गत् त ।
रघ दीप्तौ चु० उभ० सक० सेट् इदित् । रङ्घयति ते
रघ गतौ भ्वा० आ० सक० सेट् इदित् । रङ्घते अरङ्घिष्ट ।
रघु पु० लघ–उ लस्य रत्वम् । सूर्य्यवंश्ये दिलीपसूनौ १नृपतिभेदे रघोरपत्यमण् बहुषु लुक् । रघुवंश्येषु अज-प्रभृतिषु २क्षत्त्रियेषु ब०व०। तान् अधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां तस्य लुक् । कालिदासप्रणीते ऊनविंशतिसर्गात्मके महाकाव्यभेदे पु० ।
रघुनन्दन पु० रघून् नन्दयति नन्द-णिच् ल्यु । दशरथस्य ज्येष्ठपुत्रे १श्रीरामे त्रिका० २भरतादौ च ।
रघुनाथ पु० रघूणां नाथः रक्षकत्वात् श्रेष्ठत्वाद्वा । श्रीरामे शब्दर० । रघुपत्यादयोऽप्यत्र ।
रघुवंश पु० ६त० । रघुकुले । तमधिकृत्य कृतो ग्रन्थः आख्यायिकायां तस्य लुक् । कालिदासप्रणीते ऊन-विंशतिसर्गात्मके महाकाव्यभेदे पु० । [पुत्रे श्रीरामे ।
रघुवंशतिलक पु० रघुवंशे तिलक इव । दशरथनृपस्य ज्येष्ठ-
रघुवर पु० रघुषु वरः श्रेष्ठ । श्रीरामे ।
रघूद्वह पु० रघुषु उद्वहः रथादिभारधारकः उद्+वह-अच् । दशरथनृपस्य ज्येष्ठपुत्रे श्रीरामे शब्दर० ।
रङ्क त्रि० रकि–अच् । १कृपणे २मन्दे च मेदि० । [राजनि०
रङ्कु पु० रकि–उ । १मृगविशेषे अमरः । २शबलपृष्ठे मृगे
रङ्ग पु न०रगि–अच् ।१धातुभेदे (राङ) राजनि०। रञ्ज-भावे घञ् । २रागे । आधारे घञ् । ३रणभूमौ ४नाट्यस्थाने च अमरः । करणे घञ् । ५नृत्ये मेदि०। ६टङ्कणे (सो-हागा) ७खादिरसारे च राजनि० । रङ्गधातोः शो-धनप्रकारो भावप्र० उक्तो यथा "र(व)ङ्गनागौ प्रतप्तौ च गलितौ तौ निषेचयेत् । त्रिधा त्रिधा विशुद्धिः स्यादृवि दुग्धेऽपि च त्रिधा"। तैलतक्रकाञ्जिकगोमूत्रकुलत्थक्वाथेषु प्रत्येक त्रिधा त्रिधा । अथ रङ्गस्य मारणविधिः । "मृत्पात्रे द्राविते र(व)ङ्गे चिञ्चाश्वत्थत्वचोरजः । चित्वा र(व)ङ्गचतुर्थांशमयोदर्व्या प्रचालयेत्"। चिञ्चा(अमिली) त्वक्चूर्णम् । अयोदर्वी (करछुली)। "ततोद्वियाममात्रेण र(व)ङ्गं भस्म प्रजायते । अथ भस्मसमं तालं क्षिप्त्वाऽम्लेन विमर्दयेत् । ततो गजपुटे पक्त्वा पुनरम्लेन मर्दयेत् । तालेन दशमांशेन याममेकं ततः पुटेत् । एवं दशपुटैः पक्वं र(व)ङ्गं भवति मारितम्। एवं मारितस्य र(व)ङ्गस्य गुणाः । "रङ्गं लघु सरं रूक्षं कुष्ठमेहकफक्रिमीन् । निहन्ति पाण्डुं सश्वासं नेत्र्यमीषत्तु पित्तलम् । सिंहो गजौघन्तु यथा निहन्ति तथैव र(व)ङ्गोऽखिल-मेहवर्गम् । देहस्य सौख्यं प्रबलेन्द्रियत्वं नरस्य पुष्टिं विदधाति नूनम्" । तस्याशुद्धस्य दोषमाह "रङ्गो विधत्ते खलु शुद्धिहीनस्तथा ह्यपक्वश्च किलाशगुल्मौ । कुष्ठानि शूलं किल वातशोषं पाण्डुं प्रमेहञ्च भगन्दरञ्च । विशेषतो रक्तविकारवृन्दं श्लेष्मपित्तं कफज्वरञ्च । मेहाश्मरीविद्रधिमुख्यरोगानाप्नोति कुर्य्यात् कथितान् विकारान्" तद्भेदो यथा । "श्वेतं मृदु लघु स्वच्छ स्निग्धमुष्णसहं हिमम् । द्रुतद्रवकरं कान्तं खुर-श्रेष्ठमुदाहृतम् । खुरकं मिश्रकञ्चापि द्विविधं र(व)ङ्ग-मुच्यते । उत्तमं खुरकं तत्र मिश्रकं स्वहितं मतम्"। राजनि० ।
रङ्गज न० रङ्गात् रङ्गधातोर्जायते जन-ड । सिन्दूरे रत्नमा०
रङ्गजीवक पु० रङ्गेण रञ्जनेन जीवति जीव-ण्वुल् । (रङ्गरेज)१शिल्पिभेदे चित्रकरे शब्दर०।२नाट्यजीविनि च
रङ्गद पु० रङ्गं रञ्जनं रागं ददाति दा–क । १टङ्कणे २ख-दिरसारे च ३स्फटिक्यां स्त्री राजनि० ।
रङ्गदायक पु० रङ्गं ददाति दा–ण्वुल् । १कङ्कुष्ठे (काङ्कुनी) २धान्यभेदे राजनि० ।
रङ्गपत्री स्त्री रङ्गाय पत्त्रमस्याः ङीप् । नीलीवृक्षे राजनि० तत्पत्त्ररसादिना हि नीलरागसम्भव । [इत्यर्थे राजनि०
रङ्गपुष्पी स्त्री रङ्गं पुष्पमिति पुष्प अच् गौरा०ङीष् । नीली०
रङ्गभूमि स्त्री रज्यतेऽत्र रञ्ज-आधारे घञ् कर्म० । १नाट्यभूमौ शब्दर० । "रङ्गभूमिं बलाशाद्य" इति भा० ६प० । २मल्लभूमौ च ।
रङ्गमाता स्त्री रङ्गस्य रागस्य मातेवोत्पादिका । १लाक्षायाम् २कुट्टिन्याञ्च मेदि०। सा हि नायकनायिकयोरन्योऽन्यद्वारा राग वर्द्धयति ।
रङ्गलासिनी स्त्री रङ्गं रागं लासयत्युल्लासयति इत्यर्थेन लस–णिच्–णिनि । शेफालिकायाम् शब्दच० ।
रङ्ग(वो)वीज न० रङ्गं वी(वी)जमुत्पत्तिसाधनं यस्य । रजते शब्दर० । क्लिन्नरूप्यस्य पारदयोगात् रङ्गजन्य रजतयत्वे इत्यत्रम् ।
रङ्गशाला स्त्री ६त० । (नाचघर) नाट्यस्थाने शब्दर० ।
रङ्गाजीव पु० रङ्गं रञ्जनं नाट्यस्थानं वा आजीवति आ+जीव–अच् । (रङ्गरेज) १शिल्पिभेदे चित्रकरे अमरः । २नटे च हेमच० ।

**रजस्** न॰ रन्ज असुन् नलोपः । १कुसुमे अमरः । २पुष्परेणौ ३परागे ४धूलौ मेदि॰ साङ्ख्योक्ते चलनादियुते ५प्रकृति-गुणभेदे च "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः" सा॰ का॰ । "सत्त्वतमसी स्वयमक्रियतया स्वस्व-कार्य्यप्रवृत्तिं प्रत्यवसीदन्ती रजसोपष्टभ्येते अवसादात् प्रच्याव्य स्वकार्य्ये ते उत्साह प्रयत्नं कार्य्येते तदिद-मुक्तमुपष्टम्भकं रजः इति । कस्मादित्यत उक्तं चलमिति । तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम्" त॰ कौ॰ । ६पृथिव्यां स्त्री ङीप् निघण्टु ।

**रजस्वल** त्रि॰ रजोऽस्त्यस्य वलच् । १रजोयुक्ते २महिषे पु स्त्री॰ मेदि॰ स्त्रियां ङीप् । आर्त्तवमत्यां स्त्रियां स्त्री टाप् अमर ।

**रजोरस** न॰ रजस इव रसोऽनुभवोऽस्य । अन्धकारे त्रि॰ ।

**रजोवल** न॰ रज इव वलति । वल–अच् । अन्धकारे त्रिका॰

**रज्जु** स्त्री सृज-उ नि॰, १बन्धनसाधने दामनि अमरः (दड़ि) २वेणयाञ्च मेदि॰ ।

**रञ्जक** न॰ रञ्जयति रन्ज–णिच्–ण्वुल् । १हिङ्गुले राजनि॰ २प्रीतिकारके त्रि॰ । ३काम्पिल्लवृक्षे पु॰ (ढङ्करकमचा) राजनि॰ ।

**रञ्जन** न॰ रज्यतेऽनेन रन्ज–करणे ल्युट् । १रक्तचन्दने २हिङ्गुले ३मुञ्जतृणे राजनि॰ ४मञ्जिष्ठायां ५नील्यां ६गण्डरोचनिकायां (कमलागुड़ि) स्त्री मेदि॰ ङीप् । ६मेषाविकायां शब्दच॰ । ७हरिद्रायां दर्पणाद्याच् स्त्री राजनि॰ ङीप् । भावे ल्युट् । ८रागे । णिच् कर्त्तरि ल्यु । १०रागजनके त्रि॰ । सञ्ज्ञायां कन् । ११कटफले पु॰ राजनि॰

**रट** भाषणे भ्वा॰ पर॰ सक॰ सेट् । रटति अराटीत् अरटीत् रेटतुः "माघे मासि रटन्त्यापः" मल॰त॰ ।

**रटन्ती** स्त्री रट–शा॰ भाष॰ ङीप् । "माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्द्दशी । तस्यां प्रदोषसमये पूजयेत् सुप्त-मातृकीम्" इत्युक्तायां माघकृष्णचतुर्द्दश्याम् । [रेठतुः ।

**रठ** भाषणे भ्वा॰ पर॰ सक॰ सेट् । रठति अराठीत् अरठीत्

**रण** गतौ भ्वा॰ पर॰ सक॰ सेट् । रणति अराणीत् अरणीत् रेणतुः । घटादि॰ । रणयति । [रेणतुः ।

**रण** रवे भ्वा॰ पर॰ अक॰ सेट् । रणति अराणीत् अरणीत्

**रण** पु न॰ अर्द्धर्चा॰ रण–"बाहिरप्यो" वार्त्ति॰ अप् । १युद्धे अमरः । भावे अप् । २शब्दे ३कणे पु॰ मेदि॰ ४गतौ च पु॰ शब्दर॰ ।

**रणरणक** पु॰ रण इति शब्दवत्प्रकारः प्रकारे द्वित्वम् ततः सञ्ज्ञायां कन् । १उद्वेगे हेमच॰ २अतिशये च ।

**रणसङ्कुल** न॰ रणमेव सङ्कुलम् । तुमुलयुद्धे अमरः ।

**रण्ड** पु॰ रम–ड तस्य नेत्त्वम् । १धूर्त्ते २विफले अङ्गाङ्गवि-शिष्टतया ३छिन्नावयवे त्रि॰ सिद्धान्तसारः । ४मूषिकपर्ण्यां स्त्री अमरः । ५विधवायाञ्च स्त्री । स्वार्थे क । अमरट॰ भादौ शब्दच॰ ।

**रण्डाश्रमिन्** पु॰ रण्डः विफलः प्रजाहीनत्वात् आश्रमः अस्त्यस्य इनि । "चत्वारिंशद्वत्सराणां साष्टानाञ्च परे यदि । स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः" इत्युक्तवयसि स्त्रीवियुक्ते पुरुषे ।

**रत** न॰ रम भावे क्त । १रमणे स्त्रीपुंसयोः सङ्गमे मैथुने अमरः ।२गुह्ये च मेदि॰। कर्त्तरि क्त । ३अनुरक्ते त्रि॰।

**रतक्रिया** स्त्री रतये रतिरूपो वा क्रिया व्यापारः । स्त्री-पुंससङ्गमसाध्ये मैथुने ।

**रतगुरु** पु॰ ७त॰। पत्यौ त्रिका॰। [कामदेवपत्न्यां च मेदि॰।

**रति** स्त्री रम-क्तिन् । १रागे २गुह्ये ३रमणे ४तदधिष्ठात्र्यां

**रतिपति** पु॰ ६त॰ । कन्दर्पे अमरः । रतिकान्तादयोऽप्यत्र ।

**रतिप्रिय** पु॰६त॰। १कामदेवे शब्दर॰। ६ब॰।२रमणप्रिये त्रि॰

**रतिबन्ध** पु॰ रतौ बन्ध । रतिमञ्जर्य्युक्ते षोड़शप्रकारे रमणबन्धभेदे "न भवन्ति यदा नार्य्यस्तुष्टा वाह्यरतेन ताः । नानाविधैस्तदा बन्धै रन्तव्या कामिभिः स्त्रियः । पद्मासनो १ नागपाशो२ लतावेष्टो३ऽर्द्धसम्पुटम् ४ । कुलिशम् ५ सुन्दरं ६ चैव तथा केशर ७ एव च । हि-ल्लोलो८ नरसिंहो९ऽपि विपरीत १० स्तथाऽपरः । ११क्षुब्धो वै धेनुक १२श्चैवोत्कण्ठ १३स्तु ततः परम् । सिंहासनो १४ रतिनागो १५ विद्याधर १६स्तु षोड़श" रति-मञ्जरी । लक्षणमेषां तत्र द्रष्टव्यम् । [चिह्ने च जटा॰ ।

**रतिमन्दिर** न॰ ६त॰ । १रतिगृहे २स्त्रीणामसाधारण-

**रतिरमण** पु॰ रतिं रमयति रम–णिच्-ल्यु । कामदेवे ।

**रतिबन्ध** न॰ रतेर्बन्ध पदम् । मैथुने हारा॰ ।

**रतिसत्वरा** स्त्री रतिं सत्वरयति सत्वरा+करोत्यर्थे णिच्-अण् । (पिड़िङ्ग) शाके शब्दच॰ ।

**रत्न** न॰ रमतेऽत्र रम–न तान्तादेश । १माणिक्यादिप्रस्तरे अमरः । २स्वजातिश्रेष्ठे मेदि॰ ३माणिक्ये ४हीरके च राजनि॰ । तद्भेदादिकं हे॰ब॰दा॰ख॰ उक्तं यथा "रत्नेन शुभेन शुभं भवति नृपाणामनिष्टमशुभेन । यस्मादतः परीक्ष्यं दैवं रत्नाश्रितं तज्ज्ञैः । द्विपहय-वनितादीनां स्वगुणविशेषेण रत्नशब्दोऽस्ति । इह तु

पुष्परत्नानामधिकारो वज्रपूर्वोऽयम्। रत्नानि वलाद्दैत्याद् दधीचितोऽन्ये वदन्ति जातानि। केचिद्भुवः स्वभावाद् वैचित्र्यं प्राहुरुपलानाम्। वज्रेन्द्रनील मरकतकर्केतनपद्मरागरुधिराख्याः। वैदूर्य्यपुलकविमलकराजमणिस्फटिकशशिकान्ताः। सौगन्धिकगोमेदकशङ्खमहानीलपुष्परागाख्याः। ब्रह्ममणिज्योतीरसशस्यकमुक्ता प्रवालानि"। [शब्दर०।

**रत्नकन्दल** पु० रत्नेषु कन्दल इव रक्तत्वात्। प्रवाले

**रत्नकूट** पु० रत्नमयं कूटं शृङ्गमस्य। पर्वतभेदे शब्दर०।

**रत्नगर्भ** पु० रत्नयुक्तं गर्भं मध्यं यस्य ब० त०। १समुद्रे राजनि० २कुवेरे च त्रिका०। ३पृथिव्यां स्त्री हेमच० ४सत्पुत्रायां नार्य्याञ्च स्त्री।

**रत्नद्वीप** पु न०। रत्नमयो द्वीपः। तन्त्रोक्ते सुधासमुद्रमध्यस्थिततया ध्येये रत्नमयेऽन्तरीपे।

**रत्नधेनु** स्त्री रत्नकल्पिता धेनुः। महादानार्थं कल्पितायां रत्ननिर्मितायां धेन्वाम्। मत्स्यपु० २८७अ० दृश्यम्।

**रत्नपारायण** न० रत्नानां पारायणं साकल्येन स्थानम्। सर्वरत्नाधारे "रत्नपारायणं नाम्ना लङ्का" भट्टिः।

**रत्नमुख्य** न० रत्नेषु मुख्यम्। हीरके अमरः।

**रत्नवती** स्त्री रत्नानि सन्त्यस्याः मतुप् मस्य वः। १पृथिव्याम् शब्दर०। २रत्नयुक्ते त्रि०।

**रत्नसानु** पु० रत्नानि सानावस्य। सुमेरुपर्वते अमरः।

**रत्नसू** स्त्री रत्नानि सूते सू-क्विप्। पृथिव्याम् हेमच०।

**रत्नाकर** पु० ६त०। १समुद्रे अमरः। रत्नोत्पत्तिस्थाने २मणिखनौ च।

**रत्नाचल** पु० रत्ननिर्मितः अचलः। दानार्थं कल्पिते रत्ननिर्मिते पर्वते मात्स्ये दशमहादानप्रकरणे ९८ अ०पु० दृश्यम्। [भूषणभेदे।

**रत्नाभरण** न० रत्नघटितमाभरणम् शाक० त०। (जडाओ)

**रत्नावली** स्त्री ६त०। १रत्नसमूहे तद्घटितहारे २वत्सराजपत्नीभेदे च रत्नावलीमधिकृत्य कृत ग्रन्थोऽण् आख्यायिकायां तस्य लुक्। श्रीहर्षकृते चतुरङ्कात्मके ३नाटिकाभेदे। [स्त्रीत्वे वा ङीप्।

**रत्नि** पुंस्त्री० ऋ-क्निच्। बद्धमुष्टिकफलपरिमाणे अमरः।

**रथ** पु० रम्यतेऽनेन अत्र वा रम-कथन्। १स्वनामख्याते यानभेदे अमरः। २देहे च "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इति गीता। अत्र रूपकमित्यन्ये ३पादे ४वेतसवृक्षे विश्वः ५तिनिशवृक्षे राजनि। यानरूपरथभेदादिकं हेमच० उक्तं यथा

"युद्धार्थे चक्रवद्याने शताङ्गः स्यन्दनो रथः। क्रीडार्थः पुष्परथो देवार्थस्तु, मरुद्रथः। योग्यारथो वैनयिकोऽध्वरथः पारियानिकः। कर्णीरथः प्रवहणं डयनं रथगर्भकः। अनस्तु शकटोऽथ स्याद्गन्त्री कम्बलिवाह्यकम्। अथ काम्बलवास्त्राद्यास्तैस्तैः परिवृते रथे। स पाण्डुकम्बली यः स्यात् संवीतः पाण्डुकम्बलैः। स तु द्वैपो वैयाघ्रश्च वृतो यो द्वीपिचर्मणा।" ज्योतिर्विदाभरणे तत्करणकालादि उक्तं यथा "मौलमैत्रकरवृष्णिकभेषु स्यन्दनाखिलविधानमथाश्वः। वेनमद्वयुग वक्राम्बुतपस्ये साधुराशिमति साधुभिरङ्के। रथचक्रभागमाह "षष्ट्याः उदयाद्रकर्मयुगांशाद्ध्यक्षवलयवलयस्य। मध्यभागनिचितभ्रमणादादिमध्यमनसो नवभागतः। अथ भे भवति चक्रमिदं कुबेरोऽङ्गिनजयोऽथ रथाङ्गे। सन्धिभेऽर्द्धकृतिरन्तरसंज्ञो भीतिरिष्टमनसो मतु गर्भे। अथ रथकृत्यमुहूर्त्तं "पुष्ये पुनर्वसुमृगे शतताराश्विरेवतीदये। अथ पादत्रिभे हस्तत्रितये रोहिणीमृगे। शाके सौम्यदिने सौम्यविलग्ने रथकर्म सत्"। [अमरः

**रथकड्या** स्त्री रथानां समूहः रथ+कड्यच्। रथसमूहे

**रथक(का)र** पु० रथं करोति कृ-अच्-अण् वा। १रथनिर्माणकारके (छुतार) २वर्णसङ्करभेदे करण्यां माहिष्याज्जाते पुस्त्री०। [अमर।

**रथकुटुम्बिन्** पु० रथस्य कुटुम्बीव पालकत्वात्। सारथौ

**रथगर्भक** पु० रथस्य गर्भमिव इवार्थे कन्। १कर्णीरथे २स्कन्धवाह्ययाने (पालकी) हेमच०।

**रथगुप्ति** स्त्री रथस्य गुप्तिः शस्त्रवारणार्थं रक्षा उपचारात् तत्स्थानम्। रथस्य शस्त्रवारणार्थे गुप्तस्थाने अमरः।

**रथचरण** पु० रथस्य चरण इव गतिहेतुत्वात्। १रथचक्रे तत्समनामके २चक्रवाकपक्षिणि पुस्त्री० शब्दर० स्त्रियां ङीष्। रथपादादयोऽप्यत्र। [इत्रे अमरः।

**रथद्रु** पु० रथनिर्माणाय द्रुः रथनामको वा द्रुः। तिनिशरथन्तर त्रि० रथेन तरति तॄ-खच् सुम् च। १रथनेतरि। "अभित्वा शूर" इत्यस्यामृचि गीते २सामभेदे न०। "स्वरादिविशेषानुपूर्वीमात्रस्वरूपे ऋगक्षरव्यतिरिक्ते यत् गानम् तद्रथन्तरम्" सामार्चिकभाष्यम्। "वामदेव्यं दृढं साम ज्येष्ठसाम रथन्तरम्" इत्युपक्रमे "पश्चिमे द्वारपालौ तु पठेतां सामगाविति" वि० पा०।

**रथयात्रा** स्त्री रथेन यात्रा। आषाढशुक्लद्वितीयायां जग०

मेदि०। १२वाचाल्यहंसे च स्त्री शब्दचन्द्रिकाकोषः।

**रमणीय** त्रि० रम्यतेऽत्र रम—आधारे-अनीयर्। सुन्दरे। ततो भावे वुञ्। रामणीयक तद्भावे न०।

**रमति** पु० रम-अतिच्। १नायके २स्वर्गे मेदि०। ३कामे शब्दर० ४काले ५कामदेवे सि०कौ०।

**रमल** न० ज्योतिःशास्त्रभेदे यत्र पाशकक्षेपणेन लग्ननिर्णयद्वारा प्रश्नादिफलप्रतिपादनम्।

**रमा** स्त्री रमयति रम-अच्। १लक्ष्म्याम् मेदि० २कल्किभार्यायां कल्किपु०। ३शोभायां राजनि०।

**रमापति** पु० ६त०। नारायणे रमानाथतत्कान्तादयोऽप्यत्र

**रमाप्रिय** न० ६त०। १पद्मे शब्दच०। २विष्णौ पु०।

**रम्भ** पु० रभि अच् मुम्। १वेणौ २वानरभेदे च मेदि०। स च सङ्ग्रामसुरजनकः कालिकापु०।४कदल्याम् ५अप्सरोभेदे स्त्री मेदि० ६वेश्यायां धरणिः। ७गवां ध्वनौ हेमच०। ८गौर्य्याञ्च स्त्री शब्दर०। ९उत्तरस्य दिशि निघण्टुः।

**रम्भातृतीया** स्त्री रम्भा गौरी ६त०।मार्गशीर्षशुक्लतृतीयायाम् उपचारात् तत्र कर्त्तव्ये गौरीपूजाङ्गके २व्रतभेदे च।

**रम्य** त्रि० रम्यतेऽत्र यत्। १सुन्दरे मेदि०, २वसकरे जटा०। ३चम्पके पु० मेदि० ४वकवृक्षे पु० शब्दच०। ५पटोलमूले न० मेदि०। स्वार्थे कन्। ६प्रधानधातौ शुक्रे न० जटा०। जम्बुद्वीपस्थेषु नवसु वर्षेषु मध्ये “दक्षिणेन तु मेरोस्तु श्वेतस्य चोत्तरेण च वायव्यं रम्यकं नाम” इत्युक्ते ७वर्षभेदे।

**रम्यपुष्प** पु० रम्याणि पुष्पाण्यस्य। शाल्मलीवृक्षे राजनि०।

**रम्या** स्त्री रम्यतेऽत्र यत्। १स्थलपद्मिन्याम् राजनि०। २रात्रौ च मेदि०। [अरयिष्ठम्।

**रय** गतौ भ्वा०आ०सक०सेट्। रयते अरयिष्ट। अरयिद्रम्

**रय** पु० रय-अच्। १वेगे अमरः। २प्रवाहे च।

**रयि** म० रय-इन्। १जले २धने च निघण्टुः। [५।२१

**रराट** न० ललाट+पृषो०। ललाटे “विष्णोरराटमसि” यजु०

**रलक** पु० रम-क्विप् मलोपे तुक् ला क कर्म०। १मृगभेदे सङ्कुटः। २कम्बले अमरः ३नेत्रलोम्नि च भूभृतिः।

**रव** गतौ भ्वा० पा० सक०सेट् इदित्। रण्वति अरण्वीत्।

**रव** पु० रु-ध्वनौ अप्। शब्दे अमरः।

**रवण** पुं स्त्री० रु—युच्। १कोकिले सि०कौ० २उष्ट्रे च हेमच० स्त्रियां ङीप्। ३कांस्ये न० हेमच०। ४शब्दकारके ५तीक्ष्णे ६चञ्चले ७भण्डके च त्रि० शब्दर०।

**रवि** पु० अव-इन् रुट् च। १सूर्ये शब्दर०। २अर्कवृक्षे च “अचिरात् प्रकाशेन अवनात् स रविः स्मृतः” मत्स्यपु० तन्नामनिरुक्तिः। ३द्वादशसंख्यायाम्।

**रविज** पु० रवेर्जायते जन—ड। १शनौ २सावर्णिमनौ ३वैवस्वते मनौ ४सुग्रीवे वानरे ५यमे च ६यमुनायां स्त्री रवितनयादयोऽप्यत्र। [च शब्दच०।

**रविनाथ** न० रविर्नाथः प्रकाशकत्वात् यस्य। १पद्मे २अब्जके

**रविनेत्र** पु० रविर्नेत्रं यस्य। विष्णौ रविलोचनादयोऽप्यत्र। “चक्षुः सूर्यो अजायत” पुरुषसू० उक्तेस्तस्य तथात्वम्।

**रविप्रिय** न० ६त०। १रक्तकमले २ताम्रे च ३करवीरे पु० राजनि० ४आदित्यपत्रे ५लकुचे पु० शब्दच०।

**रविरत्न** न० रवेः प्रियं रत्नम् शा०त०। माणिक्ये राजनि०।

**रविलोह** न० रवेः प्रियं लोहं धातुः। ताम्रे राजनि०।

**रश** स्वने सौ० पर० अक० सेट्। रशति अराशीत् अरशीत्

**रशना** स्त्री अश—युच् रशादेशः। १काञ्च्याम् २जिह्वायाञ्च शब्दर०।३दामनि च “इमामगृभ्णन् रशनामृतस्य” श्रुतिः तत्रार्थे दन्त्यमध्य एवेत्यन्ये।

**रश्मि** पु० अश-मि धातोरुट् रश-मि वा। १किरणे २अश्वादिदामनि ३पक्ष्मे न०मेदि०।

रवेः रश्मिभेदादिकार्य्यं मत्स्यपु० १०२ अ० उक्तं यथा “तेजोभिः सर्वलोकेभ्य आदत्ते रश्मिभिर्जलम्। समुद्राद्वायुसंयोगाद् वहन्त्यापो गभस्तयः। ततस्तु पर्य्यये काले परिवर्त्तन् दिवाकरः। नियच्छत्यपो मेघेभ्यः शुक्लाशुक्लैस्तु रश्मिभिः”।

कूर्मपु० ४अ० विस्तरेणोक्तं यथा “एवमेव महादेवो देवदेवः पितामहः। करोति नियतं कालं कालात्मा ह्यैश्वरी तनुः। तस्य ये रश्मयो विप्राः सर्वलोकप्रदीपकाः। तेषां श्रेष्ठाः पुनः सप्त रश्मयो ग्रहयोनयः। सुषुम्णो हरिकेशश्च विश्वकर्मा तथैव च। विश्वव्यचाः पुनश्चान्यः सम्पद्वसुरतः परः। अर्वावसुरिति ख्यातः स्वराडन्यः प्रकीर्त्तितः। सुषुम्णः सूर्य्यरश्मिस्तु पुष्णाति शिशिरद्युतिम्। तिर्य्यगूर्द्ध्वप्रचारोऽसौ सुषुम्णः परिगीयते। हरिकेशस्तु यः प्रोक्तो रश्मिर्नक्षत्रपोषकः। विश्वकर्मा तथा रश्मिर्बुधं पुष्णाति सर्वदा। विश्वव्यचास्तु यो रश्मिः शुक्रं पुष्णाति नित्यदा। सम्पद्वसुरिति ख्यातः स पुष्णाति च लोहितम्। बृहस्पतिं प्रपुष्णाति रश्मिरर्वावसुः प्रभोः। शनैश्चरं प्रपुष्णाति सप्तमस्तु स्वराट् तथा। एवं सूर्य्यप्रभावेन सर्वा नक्षत्रतारकाः। वर्द्धन्ते वर्द्धिता

निम्नं निम्नगाश्चापयन्ति च। दिव्यानां पार्थिवानाञ्च नैशानाञ्चैव सर्वशः। आदानान्नित्यमादित्यस्तेजसां तमसां प्रभुः। आदत्ते स तु नाडीनां सहस्रेण समन्ततः। नादेयांश्चैव सामुद्रान् कूप्यांश्चैव सहस्रदृक्। स्थावरान् जङ्गमांश्चैव यच्च कुल्यादिकं पयः। तस्य रश्मिसहस्रन्तु शीतवर्षोष्णनिःस्रवम्। तासां चतुःशतं नाड्यो वर्षन्ते चित्रमूर्त्तयः। चन्दनाश्चैव माद्याश्च केतनाश्चामृतास्तथा। अमृता नामतः सर्वा रश्मयो वृष्टिसर्जनाः। हिमोद्वाश्च ताभ्यो रश्मयस्त्रिशतं पुनः। चन्द्रो मेध्यश्च पौष्यश्च ह्रादिन्यो हिमसर्जनाः। चन्द्रास्ता नामतः सर्वाः पीताभाः स्युर्गभस्तयः। शुक्लाश्च ककुभश्चैव गावो विश्वभृतस्तथा। शुक्लास्ता नामतः सर्वास्त्रिविधा घर्मसर्जनाः। समं बिभर्त्ति ताभिः स मनुष्यपितृदेवताः। मनुष्यानौषधेनेह स्वधया च पितॄनपि। अमृतेन सुरान् सर्वान् त्रिभिस्त्रींस्तर्पयत्यसौ। वसन्ते ग्रीष्मके चैव शतैः सन्तपति त्रिभिः। शरद्यपि च वर्षासु चतुर्भिः सम्प्रवर्षति। हेमन्ते शिशिरे चैव हिममुत्सृजति त्रिभिः। वरुणो१ माघमासे तु सूर्य्यः पूषा२ तु फाल्गुने। चैत्रे३ मासि भवेदंशो धाता४ वैशाखतापनः। ज्यैष्ठमासे भवेदिन्द्र५ आषाढे सविता६ रविः। विवस्वान्७ श्रावणे मासि प्रौष्ठपद्यां भगः८ स्मृतः। पर्जन्यो९ऽश्वयुजि त्वष्टा१० कार्त्तिके मासि भास्करः। मार्गशीर्षे भवेन्मित्रः पौषे विष्णुः सनातनः। पञ्चरश्मिसहस्राणि वरुणस्यार्ककर्मणि। षड्भिः सहस्रैः पूषा तु देवेशः सप्तभिस्तथा। धाता ष्टभिः सहस्रैस्तु नवभिस्तु शतक्रतुः। विवस्वान् दशभिः पाति पात्येकादशभिर्भगः। सप्तभिस्तपते मित्रस्त्वष्टा चैवाष्टभिस्तपेत्। अर्य्यमा दशभिः पाति पर्जन्यो नवभिस्तपेत्। षड्भीरश्मिसहस्रैस्तु विष्णुस्तपति विश्वसृक्। वसन्ते कपिलः सूर्य्यो ग्रीष्मे काञ्चनसप्रभः। श्वेतो वर्षासु वर्णेन पाण्डुरः शरदि प्रभुः। हेमन्ते ताम्रवर्णः स्यात् शिशिरे लोहितो रविः। ओषधीषु बलं धत्ते स्वधामपि पितृष्वथ। सूर्य्योऽमरत्वममृतत्त्रयं त्रिषु नियच्छति। अन्ये चाष्टौ ग्रहा ज्ञेयाः सूर्य्येणाधिष्ठिता द्विजाः। चन्द्रमाः सोमपुत्रश्च शुक्रश्चैव बृहस्पतिः। भौमो भानुसुतो राहुः केतुमानपि चाष्टमः। सर्वे ध्रुवे निबद्धा वै ग्रहास्ते वातरश्मिभिः। भ्राम्यमाणा यथायोगं भ्रमन्त्यनुदिवाकरम्"।

रस यत्ने भ्वा० प०अक०सेट्। रसति अरासीत् अरसीत्। ररास रेसतुः।

रस आस्वादे चु०उ०स०सक०सेट्। रसयति ते अररसत् त

रस पु० रस्यते रस–कर्म्मणि घञ्। आस्वादे रसनेन्द्रियग्राह्ये [1] मधुरादिगुणभेदे [2] देहस्थे भुक्तान्नादे प्रथमपरिणामे [3] सारे च "ओषधीनां रस" इति तापनीश्रु०। "रसः सार" भा०। [4] धातुभेदे पारदे [5] आस्वादे [6] रसवति गुडादौ त्रि० [7] पुष्पस्य मधुनि [8] अलङ्कारोक्ते विभावानुभावसञ्चारिकाभावव्यङ्ग्ये रत्यादिस्थायिभावके शृङ्गारादौ। [9] विषे वीर्य्ये [10] रागे [11] द्रवे अमर० [12] जले च [13] गन्धरसे पु० न० मेदि० [14] धर्मे च निघण्टुः।

पारदशब्दे ४१११ पृष्ठादौ रसशोधनादि दृश्यम्।

देहस्थधातुभेदरसस्वरूपादि भावप्र० उक्तं यथा "यत्तापो रसधातुर्य्यस्ततोऽभवदपां रसः। सकलं सततं देहे रसतीति रसः स्मृतः।" अथ रसस्य स्वरूपमाह "सम्यक् पक्वस्य भुक्तस्य सारो निगदितो रसः। स तु द्रवः सितः शीतः स्वादुः स्निग्धश्चलो भवेत्। सारो यथा गुडमधूकपुष्पद्राक्षाखर्जूरीमूलादिभव सारो मदिरा। अथ रसस्य स्थानमाह "सर्वदेहचरस्यापि रसस्य हृदयं स्थलम्। समानमरुता पूर्वं यदयं हृदये धृतः।" अथ रसस्य कर्म्माह "आरब्ध पवनेनीर्गत्वा धातून् सर्वानयं रसः। पुष्णाति तदनु स्वीयैश्चाप्नोति च ततं गुणैः।" गुणैः शीतस्निग्धपोषकत्वगुणैः शीतस्निग्धपोषकत्वे "मन्दवह्निविदग्धस्तु कटुरम्लो भवेद्रसः। स कुर्य्याद्विविधान् रोगान् विषत्वं करोत्यपि।" अलङ्कारशब्दे दृश्यम्।

अलङ्कारशास्त्रोक्तो रसो नवविधः। "शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। वीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः।" सा० द० तल्लक्षणं तत्रैव यथा "विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा। रसतामेति रत्यादिः स्थायी भावः सचेतसाम्"। "विभावादयो वक्ष्यन्ते। सात्त्विकानामनुभावरूपत्वात् न पृथगुक्तिः। व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतः व्यक्तीकृत एव रसो न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते। तदुक्तं लोचनकारैः "रसाः प्रतीयन्त इति त्वोदनं पचतीतिवद्व्यवहार इति"। अत्र च रत्यादिपदोपादानादेव प्राप्ते स्थायित्वे पुनः स्थायिपदोपादानं रत्यादीनामपि रसान्तरेष्वस्थायित्वप्रतिपादनार्थम्। ततश्च हासक्रोधादयः

शृङ्गारवीरादौ व्यभिचारिण एव । तदुक्तम् "रसावस्थः परं भावः स्थायितां प्रतिपद्यते" इति । अस्य स्वरूपकथनगर्भं आस्वादप्रकारं कथ्यते । "सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः । वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः । लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः । स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः । "रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते" इत्युक्तप्रकारो बाह्यमेयविमुखतापादकः कश्चनान्तरो धर्मः सत्त्वं तस्योद्रेकः रजस्तमसी अभिभूयाविर्भावः । अत्र च हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम् । अखण्ड इत्येक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः । अत्र हेतुं वक्ष्यामः । स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या । चिन्मय इति स्वरूपार्थे मयट् । चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः । तत्प्राणत्वञ्चास्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तं । तदाह धर्मदत्तः स्वग्रन्थे

"रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते । तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः । तस्मादद्भुतमेवाह कृती नारायणो रसमिति" । कैश्चिदिति प्राक्तनपुण्यशालिभिः यदुक्तं "पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिमिति" यद्यपि "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तदिशा रसस्यास्वादानतिरिक्तत्वमुक्तं तथापि "रसः स्वाद्यते" इति काल्पनिकं भेदमुररीकृत्य कर्मकर्त्तरि वा प्रयोगः । तदुक्तम् "रस्यमानतामात्रसारत्वात् प्रकाशशरीरादनन्य एव हि रसः" इति । एवमन्यत्राप्येवंविधस्थलेषूपचारेण प्रयोगा ज्ञेयाः । नन्वेतावता रसस्याज्ञेयत्वमुक्तं भवतीति व्यञ्जनायाश्च ज्ञानविशेषत्वाद् द्वयोरैक्यमापतितम् ततश्च "स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः । यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्" इत्युक्तदिशा घटप्रदीपवद् व्यङ्ग्यव्यञ्जकयोः पार्थक्यमेवेति कथं रसस्य व्यङ्ग्यतेति चेत् सत्यमुक्तम् अत एवाहुः "विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चिद्व्यापार । अत एव हि रसनास्वादनचमत्करणादयो विलक्षणा एव व्यपदेशा इति अभिधादिविलक्षणव्यापारतायाः प्रसाधनपण्डितैरस्माभी रसादीनां व्यङ्ग्यत्वमुक्तं भवतीति । ननु तर्हि करुणादीनां रसानां दुःखमयत्वाद्रसत्वं न स्यादित्युच्यते "करुणादावपि रसे जायते यत् परं सुखम् । सचेतसामनुभवः प्रमाणं तत्र केवलम्" । आदिशब्दाद् बीभत्सभयानकादयः । तथाप्यसहृदयानां मुखमुद्रणाय पक्षान्तरमुच्यते । "किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः" । न हि कश्चित् सचेता आत्मनो दुःखाय प्रवर्त्तते करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात् । अनुपपत्त्यन्तरमाह । "तथा रामायणादीनां भविता दुःखहेतुता" । करुणरसस्य दुःखहेतुत्वात् करुणरसप्रधानरामायणादिप्रबन्धानामपि दुःखहेतुत्वप्रसङ्गः स्यात् । ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिरित्याह "हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात् । शोकहर्षादयो लोके जायन्तां नाम लौकिकाः । अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात् । सुखं संजायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः" । ये खलु रामवनवासादयो लोके दुःखकारणानि इत्युच्यन्ते त एव हि काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्दवाच्यत्वं विहायालौकिकविभावशब्दवाच्यत्वं भजन्ते । तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेव जायते । अतश्च लौकिकशोकहर्षादिकारणेभ्यो लौकिकशोकहर्षादयो जायन्ते इति लोक एव प्रतिनियमः । काव्ये पुनः सर्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते इति नियमान्न कश्चिद्दोषः । कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शनश्रवणाभ्यामश्रुपातादयो जायन्त इत्युच्यते । "अश्रुपातादयस्तद्वद्द्रुतत्वाच्चेतसो मताः" । तर्हि कथं काव्यतः सर्वेषामीदृशी रसाभिव्यक्तिर्न जायत इत्याह "न जायते तदास्वादो विना रत्यादिवासनाम्" । वासना चेदानीन्तनी प्राक्तनी च रसास्वादहेतुः । तत्र यदि आद्या न स्याच्छ्रोत्रियजरन्मीमांसकादीनामपि सा स्यात् । यदि द्वितीया न स्याद् यद्रागिणामपि केषाञ्चिद्रसोद्बोधो न दृश्यते तन्न स्यात् । उक्तञ्च धर्मदत्तेन "सवासनानां सभ्यानां रसस्यास्वादनं भवेत् । निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः" इति । ननु कथं रामादिरत्याद्युद्बोधकारणैः सीतादिभिः सामाजिकरत्याद्युद्बोध इत्युच्यते "व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः । तत्प्रभावेन यस्यासन् पाथोधिप्लवनादयः । प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते" । ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोध इत्युच्यते "उत्साहादिसमुद्बोधः साधारण्याभिमानतः ।

इतःपरं ग्रन्थः पारदशब्दे ४११२ पृष्ठे प्रदर्शितः ।
“प्रकारान्तरेणापि जीवन्मुक्तौ नैव वाचोयुक्ति-र्युक्तिमतीति चेन्न षट्स्वपि दर्शनेषु ‘देहपातानन्तरं मुक्तेरुक्ततया तत्र विश्वासानुपपत्त्या निर्विचिकित्स-प्रवृत्तेरनुपपत्तेः । तदप्युक्तं तत्रैव “षड्दर्शनेऽपि मुक्तिस्तु दर्शिता पिण्डपातने । करामलकवत्सापि प्रत्यक्षा नोपलभ्यते । तस्मात्तं रक्षयेत् पिण्डं रसैश्चैव रसा-यनैरिति” । गोविन्दभगवत्पादाचार्य्यैरपि “इति धन-शरीरभोगान्मत्वाऽनित्यान् सदैव यतनीयम् । मुक्तौ सा च ज्ञानात् तच्चाभ्यासात् स च स्थिरे देहे” इत्युक्तम् । ननु विनश्वरतया दृश्यमानस्य देहस्य कथं नित्यत्वमवसीयते इति चेन्मैवं मंस्थाः,षाट्कौशिकस्य शरीरस्यानित्यत्वेऽपि रसाभ्रकपदाभिधेयहरगौरीसृष्टिजातस्य नित्यत्वोपपत्तेः तथाच रसहृदये “ये चात्यक्तशरीरा हरगौरीसृष्टि-जान्तरं प्राप्ताः । वन्द्यास्ते रससिद्धा मन्त्रगणः किङ्करो येषामिति” । तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमं दिव्यतनुर्विधेया । हरगौरीसृष्टिसंयोगजनितत्वञ्च रसस्य हरजत्वेनाभ्रकस्य गौरीसम्भवत्वेन तत्तदात्म-कत्वमुक्तम् “अभ्रकस्तव बीजन्तु मम बीजन्तु पारदः । अनयोर्मेलनं देवि । मृत्युदारिद्र्यनाशनमिति” । अत्यल्प-मिदमुच्यते देवदैत्यमुनिमानवादिषु बहवो रससामर्थ्याद्दिव्यं देहमाश्रित्य जीवन्मुक्तिमाश्रिताः श्रूयन्ते रसेश्वरसि-द्धान्ते “देवाः केचिन्महेशाद्या दैत्याः काव्यपुरःसराः । मुनयो वालखिल्याद्या नृपाः सोमेश्वरादयः । गोविन्द-भगवत्पादाचार्य्यो गोविन्दनायकः । चर्वटिः कपिलो व्याडिः कापालिः कन्दलायनः । एतेऽन्ये बहवः सिद्धा जीवन्मुक्ताश्चरन्ति हि । तनुं रसमयीमाप्य तदात्मक-कथाचणाः” इति । अयमेवास्यार्थः परमेश्वरेण परमेश्वरीं प्रति प्रपञ्चितः’ ।
इतःपरो ग्रन्थः पारदशब्दे ४११२ पृ० दर्शितः ।
तत्प्रपञ्चस्तु गोविन्दभगवत्पादाचार्य्यसर्वज्ञरामेश्वरभट्टा-रकप्रभृतिभिः प्राचीनैराचार्य्यैर्निरूपित इति ग्रन्थ-भूयस्त्वभयादुदास्यते । न च रसशास्त्रं धातुवादार्थ-मेवेति मन्तव्यं देहवेधद्वारा मुक्तेरेव परमप्रयोजनत्वात् तदुक्तं रसार्णवे “लोहवेधस्त्वया देव ! यद्दत्तं परमो-षितः । । त देहवेधमाचक्ष्व येन स्यात् खेचरी गतिः । यथा लोहे तथा देहे कर्त्तव्यः सूतकः सता । समानं कुरुते देवि ! प्रत्ययं देहलोहयोः । पूर्वं लोहे परी-क्षेत पश्चाद्देहे प्रयोजयेत्” इति । ननु सच्चिदानन्दात्मक-परतत्त्वस्फुरणादेव मुक्तिसिद्धौ किमनेन दिव्यदेहसम्पा-दनप्रयासेनेति चेत्तदेतदवार्त्तं वार्त्तशरीरालाभे तदा-नीया ज्ञानाभावात् । तदुक्तं रसहृदये “गलितानल्पवि-कल्पः सर्वाध्वविवर्जितश्चिदानन्दः । स्फुरितोऽप्यस्फुरित-तनोः करोति किं जन्तुवर्गस्येति । यं जरया जर्जरितं कासश्वासादिदुःखविशदञ्च । योग्यं तं न समाधौ प्रतिहतबुद्धीन्द्रियप्रसरम् । बालः षोडशवर्षो विषय-रसास्वादलम्पटः परतः । यातविवेको वृद्धो मर्त्यः कथमाप्नुयान्मुक्तिमिति” । ननु जीवत्वं नाम संसारित्वं तद्विपरीतत्वं मुक्तत्वं तथाच परस्परविरुद्धयोः कथ-मेकायतनत्वमुपपन्नं स्यादिति चेत्तदनुपपन्नं विकल्पानुप-पत्तेः मुक्तिस्तावत् सर्वतोऽर्थकरसज्ञता सा किं ज्ञेयपदे निविशते न वा चरमे शशविषाणकल्पा स्यात् प्रथमे न जीवनं वर्जनीयमजीवतो ज्ञातृत्वानुपपत्तेः । तदुक्तं रसेश्वरसिद्धान्ते “रसाङ्कमेवमार्गोक्तो जीवमोक्षोऽस्त्यघो-घमाः । प्रमाणान्तरवादेषु युक्तिभेदावलम्बिषु । ज्ञान-ज्ञेयमिदं विद्धि सर्वतन्त्रेषु सम्मतम् । नाजीवन् प्रा-प्स्यति ज्ञेयं यदतोऽस्त्येव जीवनम्” इति । न चेदमदृष्ट-चरमिति मन्तव्यं विष्णुस्वामिमतानुसारिभि र्नृपञ्चास्य-शरीरस्य नित्यत्वोपपादनात् । तदुक्तम् साकारसिद्धौ “सच्चिन्नित्यनिजाचिन्त्यपूर्णानन्दैकविग्रहम् । नृपञ्चास्य-महं वन्दे श्रीविष्णुस्वामिसम्मतम्” इति । नन्वेतत् सावयवं रूपवद्भासमानं नृकण्ठीरवाङ्गं सदिति न सङ्गच्छत इत्यादिनाक्षिप्य “सहस्रशीर्षा पुरुषः” इत्यादिश्रुत्या “तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम्” इत्यादिपुराणलक्षणेन प्र-माणत्रयेण सिद्धं नृपञ्चाननाङ्गं कथमसत् स्यादिति । यदादीनि विशेषणानि गर्भश्रीकान्तमिश्रैः विष्णुस्वामि-चरणपरिणतान्तःकरणैः प्रतिपादितानि । तस्माद्स्म-दिष्टदेहनित्यत्वमत्यन्तादृष्टं न भवतीति पुरुषार्थकाङ्क्षि-पुरुषैरेष्टव्यम् । अत एवोक्तम् “आयतनं विद्यानां मूलं धर्मार्थकाममोक्षाणाम् । श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकमिति” । अजरामरीकरण-समर्थश्च रसेन्द्र एव तदाह “एकोऽसौ रसराजः शरीर-मजरामरं कुरुते” इति । किं वर्ण्यते रसस्य माहात्म्यं यस्य दर्शनस्पर्शनादिनापि महत् फलं भवति । तदुक्तं रसा-र्णवे “दर्शनात् स्पर्शनात्तस्य भक्षणात् स्मरणादपि । पूजना-

रूपदानाञ्च दृश्यते षड्विधं फलम्। केदारादीनि लिङ्गानि पृथिव्यां यानि कानिचित्। तानि दृष्ट्वा तु यत् पुण्यं तत् पुण्यं रसदर्शनादित्यादिना"। अन्यत्रापि "काश्यादिसर्वलिङ्गेभ्यो रसलिङ्गार्चनं शिवम्। प्राप्यते येन तल्लिङ्गं भोगारोग्यामृतात्मकम्" इति। रसनिन्दायाः प्रत्यवायोऽपि दर्शितः "प्रमादाद्रसनिन्दायाः श्रुतायेन स्मरेत् सुधीः। द्राक् त्यजेन्निन्दकं नित्यं निन्दया पूरिताशुभम्" इति। तस्मादस्मदुक्तया रीत्या दिव्यं देहं सम्पाद्य योगाभ्यासवशात् परतत्त्वे दृष्टे पुरुषार्थप्राप्तिर्भवति। तदा "भ्रूयुगमध्यगतं यत् शिखिविद्युत्सूर्यवज्जगद्भासि। केषाञ्चित् पुण्यदृशामुन्मीलति चिन्मयं ज्योति। परमानन्दैकरसं परमं ज्योतिःस्वभावमविकल्पम्। विगलितसकलक्लेशं ज्ञेयं शान्तं स्वसंवेद्यम्। तस्मिन्नाधाय मनः स्फुरदखिलं चिन्मयं जगत् पश्यन्। उत्सन्नकर्मबन्धो ब्रह्मत्वमिहैव चाप्नोतीति"। श्रुतिश्च "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवतीति"। तदित्थं भवे भाम्योद्दुःखभरतरणोपायो रस एवेति सिद्धम्। तथाच रसस्य परब्रह्मणा साम्यमिति प्रतिपादकः श्लोकः "यः स्यात् प्रावरणाविमोचनधियां साध्यः प्रकृत्या पुनः सम्पन्नो वहते न दीव्यति परं वैश्वानरे जायति। जातो यद्यपरं न वेदयति च स्वस्मात् स्वयं द्योतते यो ब्रह्मैव स दैन्यसन्ततिभयात् पायाद्सौ पारदः" इति।

**रसोत्तम** पु० रस उत्तमो यस्य। मुद्गे राजनि०।

**रसोद्भव** न० रसः पारद उद्भवत्यस्मात् उद्+भू—अच् उद्भवो यस्य। १हिङ्गुले राजनि०। ५त०। २रसजाते त्रि०।

**रसोपल** न० रसः पारद इव उपचीयते शुभ्रत्वात् उप+ची—ड। मौक्तिके त्रिका०।

**रस्न** न० रस न। द्रव्ये उज्ज्वलद०।

**रस्य** न० रसात् भुक्तान्नपरिणामादागतः यत्। १रुधिरे शब्दच०। रस्यते आस्वाद्यते रस—यत्। २आस्वाद्ये त्रि०। रस्याः, "स्निग्धाः स्थिरा हृद्याः" गीता। ३पाठायां ४रास्नायाञ्च स्त्री राजनि०।

**रंह** गतौ भ्वा० पर० सक० सेट् इदित्। रंहति अरंहीत् "तदन्तरमतिपत्तौ रंहति संपरिष्वक्तः" शारीरकसूत्रम्

**रह** त्यागे भ्वा० प० सक० सेट्। रहति अरहीत्।

**रह** त्यागे अद० चु० उभ० सक० सेट्। रहयति ते अररहत्-त

**रहस्** न० रह—असुन्। १निर्जने अमरः। २गोप्ये ३याथार्थ्ये ४रमणे च मेदि०। ५निर्जने अव्य० अमरः। रमन्तेऽस्मिन् रम-असुन् मस्य रः। ६विश्वासयोग्यदेशे उज्ज्वलद०।

**रहस्य** त्रि० रहसि भव. यत्। १गोप्ये "रहस्यमध्याः स महर्दिति" नैषधम्। २निर्जनभवे च ३पाठायां ४रास्नायाञ्च स्त्री राजनि० टाप् ५नदीभेदे स्त्री मेदि०।

**रहित** त्रि० रह—त्यागे कर्मणि क्त। वर्जिते।

**रा** दाने ग्रहणे च अदा० पर० सक० अनिट्। राति अरासीत्।

**रा** स्त्री रा—सम्प० भावे क्विप्। १विभ्रमे २दाने एकाक्षरकोषः। कर्मणि क्विप्। ३काञ्चने शब्दर०।

**राका** स्त्री रा—क तस्य नेत्त्वम्। १प्रतिपद्युक्तायां पूर्णमास्यां सम्पूर्णेन्दुतिथौ २नदीभेदे ३नवजातरजस्कायां नार्य्यां ४कच्छुरोगे च मेदि०। ५आङ्गिरसः कन्याभेदे कुहूशब्दे २१६२ पृ० दृश्यम्।

**राक्षस** पु० रक्ष एव स्वार्थे अण्। "क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" इति भाष्योक्तेः पुंस्त्वम्। स्वनामख्याते निकषात्मजे १जातिभेदे अमर. जातौ ङीष्। २राक्षसजातिस्त्रियाम् स्त्री। रक्षस इदम् अण्। ३राक्षससम्बन्धिनि त्रि० स्त्रियां ङीप्। "राक्षसी राशिरन्यत" ति०त०। ४दंष्ट्रायां शब्दच० ५चण्डिकायां ६चोरनामगन्धद्रव्ये च स्त्री मेदि० ङीप्।

**राक्षसेन्द्र** पु० राक्षस इन्द्र इव श्रेष्ठत्वात्। विश्रवसः अपत्ये पुत्रे निकषात्मजे रावणे त्रिका०।

**राक्षा** स्त्री लक्ष्यतेऽनया रक्ष—कर्मणि—घञ् पृषो० हस्य रत्वं। लाक्षायाम् अमरः।

**राख** शोषणे भूषणे निवारणे च सक० सामर्थ्ये अक० भ्वा० पर० सेट्। राखति अराखीत्। ऋदित् चङि न ह्रस्वं।

**राग** पु० रन्ज—भावे घञ् नि० नलोपकुत्वे। १रञ्जने २रक्तादिवर्णे ३प्रीतौ ४अनुरागे ५क्लेशे ६मात्सर्यादिना अभि प्रसिद्धे निषादादिस्वरयोनिके स्वरभेदे मेदि० ७चन्द्रे ८सूर्ये च शब्दर०। करणे घञ्। ९लोहितवर्णे १०तद्विशिष्टवाच्ये च "तेन रक्तं रागात्" पा० अनुरागवाचकम् उज्ज्वलमणिनोक्तं यथा "दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते। यतस्तु प्रणयोत्कर्षात् स राग इति कथ्यते"। स्वरभेदनिरुक्तिर्यथा "यैस्तु चेतांसि रज्यन्ते जगत्त्रितयवर्त्तिनाम्। ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभि"। तेषां भेदाः सङ्गीतदा० मतभेदे भ्रमा तत्र प्रसिद्धा षड्भेदा यथा

**राजताल** पु० राजस्ताल इव प्रियः । १गुवाकवृक्षे शब्दर० । स्त्रीत्वमपि तत्र ङीप् । "राजतालीवनध्वनिः" रघुः ।

**राजदन्त** पु० दन्तानां राजा परनि० । अग्रपङ्क्तिस्थे मध्यवर्त्तिदन्तद्वये हेमच० । [वस्त्रे राजवस्त्रे ।

**राजदैशीय** पु० ईषदूनो राजा राजन्+देशीयर् । राज-

**राजधुस्तूरक** पु० धुस्तूराणां राजा राज० पर० स्वार्थे क । हृद्धस्तूरे राजधुस्तूरकोऽप्यत्र पु० राजनि० ।

**राजधर्म** पु० राज्ञो धर्मः । राज्ञामवश्यकर्त्तव्ये प्रजापालनादौ कर्मणि । तमधिकृत्य कृतो ग्रन्थः अण् । भारतशान्तिपर्वान्तर्गते व्यासप्रणीते ग्रन्थभेदे । राजधर्मास्तत्र मानवे ७ अ० च उक्ता द्रष्टव्याः ।

**राजधानी** स्त्री राजा धीयतेऽस्यां धा—आधारे ल्युट् ङीप् । राजाधारे महानगर्य्याम् शब्दर० । [धान्ये राजनि० ।

**राजधान्य** न०धान्येषु राजा राज०पर० । (श्यामा) श्यामाक

**राजन्** पु० राज—कनिन् रञ्जयति रन्ज—कनिन् नि० वा । १नृपे, "राजा प्रकृतिरञ्जनात्" रघुः । २चन्द्रे, ३प्रभौ, ४क्षत्रिये ५यक्षे ६इन्द्रे, च मेदि० । उत्तरस्थपदः पूर्वपदस्थस्य समभिव्याहृतपदार्थश्रेष्ठवाचकः । यथा राजमाष मुनिराज इत्यादि । ७पृथुनृपे च । "पिता न रञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः । अनुरागात्ततस्तस्य नाम राजेत्यभाषत" विष्णु पु० ।

**राजनीति** स्त्री राज्ञां नीतिः । १राजकर्त्तव्ये सामाद्युपाये, २तदाचारात् तत्प्रतिपादके शास्त्रे च । सा च कामन्दकीयनीतिशास्त्रादौ द्रष्टव्या ।

**राजन्य** पु० राज्ञोऽयम् यत्, जातौ नलोपः । राज—अन्य वा । १क्षत्रिये अमरः । २राजपुत्रे ३अग्नौ, उणादिको० ५क्षीरिकावृक्षे जटा० । [समूहे अमरः ।

**राजन्यक** न०राजन्यानां क्षत्रियाणां समूहः कन् । क्षत्रिय-

**राजन्वत्** त्रि० प्रशस्तो राजाऽस्त्यस्य प्राशस्त्ये मतुप् मस्य वः न नलोपः । सुन्दरराजयुते देशे अमरः अन्यत्र राजवत् इत्येव । [२मधुरपटोल्यां राजनि० ।

**राजपटोल** पु० राजप्रियः पटोलः । १पटोले रत्नमा० ।

**राजपट्ट** पु० राज्ञः पट्ट इव । मणिभेदे त्रिका० ।

**राजपथ** पु० पथां राजा राजगमनयोग्यो वा पन्थाः अच् समा० । "धनूंषि दश विस्तारो श्रीमान् राजपथः स्मृतः । नृवाजिरथनागानामसम्बाधः सुसञ्चरः" इत्युक्ते राजमार्गे देवीपु० । [वर्णपलाण्डौ राजनि० ।

**राजपलाण्डु** पु० पलाण्डूनां राजा श्रेष्ठत्वात् राजद०। रक्त-

**राजपीलु** पु० राजप्रियः पीलुः । महापीलुवृक्षे राजनि० ।

**राजपुत्र** पु०राज्ञश्चन्द्रस्य, नृपस्य वा पुत्रः । १बुधग्रहे शब्दर० २नृपकुमारे ३वर्णसङ्करभेदे (रजपुत) "वैश्यादम्बष्ठकन्यायां राजपुत्रस्य सम्भवः" इति पराशरः । ४महाराजचूतवृक्षे राजनि० ।

**राजपुत्री** स्त्री राज्ञश्चन्द्रस्य पुत्रीव । १कटुतुम्ब्याम् २रेणुकायां ३नृपरीतौ, ४जातौ ५कुकुन्दर्यां च । ५मालत्याञ्च राजनि० । ६त० । ६नृपकन्यायाम् । स्वार्थे कन् । ७हरीतिस्रगे जटा० ।

**राजपुष्प** पु० राजा चन्द्र इव शुभ्रत्वात् पुष्पमस्य । नागकेशरवृक्षे शब्दच० । २करुणीवृक्षे स्त्री राजनि० ङीप् ।

**राजफणिज्झक** पु०राज अच कर्म० । नागरङ्गवृक्षे शब्दमा०

**राजफल** न० राजप्रियं फलमस्य । १पटोले त्रिका० । २राजप्रियं फलमस्याः । २जम्ब्वाम् स्त्री राजनि० टाप् ।

**राजबदर** न० राज्ञो बदरमिव प्रियत्वात् । १रक्तामलके २लवणे च मेदि० बदराणां राजा राजद० प० । ३उत्तमकोले पु० राजनि० । [मादाल) लताभेदे अमरः ।

**राजबला** स्त्री राज—अच राज बलं यस्याः ५व० । (गन्ध-

**राजभद्रक** पु० राज्ञो भद्रं यस्मात् कप् । १कृष्णे (कृष्ण) २निम्बे च राजनि० ३पारिभद्रवृक्षे भावप्र० ।

**राजभूय** न० राज्ञो भावः राजन्+भू—क्यप् । राज्ञोऽसाधारणधर्मे राजत्वे ।

**राजभोग्य** न० राज्ञा भोक्तुं योग्यम् भुज—ण्यत् कुत्वम् । १जातीकोषे २पियालवृक्षे पु० शब्द२० । ३नृपतेर्भोग्यवस्तुमात्रे त्रि० ।

**राजमार्ग** पु० राजयोग्यः मार्गः । १राजपथे राजनि० ।

**राजमाष** पु० माषेषु कलायेषु राजा श्रेष्ठत्वात् राजद०पर० । १माषभेदे हेमच० । (बरबटी) २व्रीहिभेदे राजनि० ।

**राजमुद्ग** पु०मुद्गेषु राजा राज०प०नि० । (सगानि) मुद्गभेदे ।

**राजरङ्ग** न० राजयोग्यं रङ्गम् । रजते शब्दर० ।

**राजराज** पु० राज्ञामपि राजा प्रभूतधनत्वात् टच् समा० । १कुबेरे, अमरः । २सार्वभौमनृपे, ३चन्द्रे च मेदि० ।

**राजर्षि** पु० राजा ऋषिरिव श्रेष्ठत्वात् यतत्वाच्च । १राजश्रेष्ठे, २यतात्मनि नृपे च । [भेदे पुस्त्री० ।

**राजवंश्य** त्रि० राजवंशे भवः यत् । १राजवंशोद्भवे ।२जाति०

**राजवर्त्मन्** न० राजयोग्यं वर्त्म । १राजमार्गे अमरः राजपथे हेमच० । ६त० । राज्ञः २कर्त्तव्यकर्म्मणि च ।

**राजवल्लभ** पु० ६त० । १प्रियाले २राजबदरे ३राजाम्रे

राजनि॰ द्रव्यगुणप्रतिपादके तन्नामविहितकृते ४धन्वभेदे च। ५राघः प्रिये त्रि॰। [(उष्णा) लताभेदे रत्नमा॰।

**राजवल्ली** स्त्री राजते राज–अच् राजा वल्ली कर्म॰।

**राजवत्** त्रि॰ राजा राजमालं विद्यतेऽस्य मतुप् मस्य वः। राजमालवति देशे अमर॰।

**राजवीजिन्** त्रि॰ राजा वीजी कारणं यस्य। राजवंश्ये।

**राजवृक्ष** पु॰ वृक्षाणां राजा राजद॰ परनि॰। १आरग्वधे (सोन्दाल) अमरः। राजप्रियो वृक्षस्तत्फलवीजजातलकुचकस्य राजप्रियत्वात्। २प्रियाले मेदि॰। ३लङ्कास्थायिवृक्षे (लङ्काचिज) शब्दच॰। [शब्दमा॰।

**राजशण** पु॰ राज–अच् राजः शणः कर्म॰। पट्टे (पाट)

**राजशाक** पु॰ शाकानां राजा राज॰ परनि॰। वास्तूकशाके राजनि॰। [चल्ले त्रिका॰।

**राजशृङ्ग** न॰ राज्ञां शृङ्गमिव ऊर्ध्वस्थितत्वात्। राजच्छत्र-

**राजस** त्रि॰ रजसा निर्मितः अण्। रजोगुणात् जाते १कर्मेन्द्रियादौ "येनाक्षिन् कर्मणा लोके ख्यातिमाप्नोति पुष्कलाम्। न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु राजसम्" इत्युक्ते ख्याते क्रियमाणे २कर्मणि च। रजःप्रधानतयास्यस्य अण्। ३रजःप्रधाने। सर्वेषां वस्तूनां त्रिगुणात्मकत्वेऽपि "भूयस्त्वात्तद्व्यपदेशः" इत्युक्तेः क्वचित् तत्प्रधानत्वेन व्यपदेशः। ४दुर्गायां स्त्री ङीप् शब्दमा॰।

**राजसभ** न॰ राज्ञां सभा। सभयनाले अमर।

**राजसर्षप** पु॰ सर्षपाणां राजा श्रेष्ठत्वात् राजद॰। (राइ-सर्षा) १सर्षपभेदे हेमच॰। "तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते" उक्ते २परिमाणभेदे च विश्वः।

**राजसारस** पुस्त्री॰ राज सारस इव। मयूरे शब्दमा॰ स्त्रियां ङीप्।

**राजसूय** पु॰ राज्ञा सूयते सू–कर्मणि क्यप्। राजमात्रकर्त्तव्ये यज्ञभेदे शब्दच॰। "राजा राजसूयेन यजेत" श्रुतिः।

**राजस्व** न॰ राज्ञो देयं स्वं करद्रव्यम् धनम्। १राजदेये करे कृत॰। २राजधने च। [क्षिरदृष्टूष्टूरे राजनि॰।

**राजस्वर्ण** पु॰ स्वर्णानां धुस्तूरराजा राजा॰राजद॰ परनि॰।

**राजहंस** पुस्त्री॰ हंसानां राजा श्रेष्ठत्वात्राजद॰पर॰। रक्तवर्णचञ्चुचरणयुक्ते श्वेतपक्षके हंसभेदे अमरः। २कलहंसे च मेदि॰। उभयार्थे स्त्रियां ङीप्। राजा हंस इव सारपक्षपातात्। ३नृपश्रेष्ठे। [तगरपुष्पे राजनि॰।

**राजहर्षण** न॰ राज्ञः भृपान् हर्षयति हृष–णिच्–ल्यु।

**राजातन** पु॰ राजार्थमातनोति फलवीजम् आ+तन–अच्।

(चौरञ्जीति) ख्यातवीजहेतुफलके पियाले शब्दमा॰।

**राजादन** पु॰ राज्ञा अद्यते तत्फलवीजजातलकुचकः अद–कर्मणि ल्युट्।।पियालवृक्षे अमरः। तस्य फलवीजं (चिरञ्जि) तेन हि लकुचकं कृत्वा राज्ञा भुज्यते। २क्षीरिकायां (खोइद) ३किंशुके च मेदि॰। ४चोरिकायां स्त्री ङीप् भरत॰। [राजनि॰।५तृ॰। ६नृपप्रामिकार्थे च

**राजान्न** न॰ अन्नानां राजा राजद॰। १अन्ध्रदेशजधान्यभेदे

**राजाम्र** पु॰ आम्राणां राजा श्रेष्ठत्वात् राजद॰। १आम्रभेदे "राजाम्रं तुवरं स्वादु विसदं शीतलं गुरु। ग्राहि रुच्यं विवन्धाध्मानतक्षत् कफपित्तनुत्" भावप्र॰। [राजनि॰।

**राजाम्ल** पु॰ अम्लानां राजा श्रेष्ठत्वात् राजद॰। अम्लवेतसे

**राजार्क** पु॰ अर्काणां राजा श्रेष्ठत्वात् राजद॰। श्वेतार्कवृक्षे (सादा आकन्द) राजनि॰

**राजार्ह** न॰ राजानमर्हति अर्ह–अण्।।अगुरुचन्दने २राजयोग्ये त्रि॰ राजनि॰ ३जम्ब्वां स्त्री मेदि॰। [मटनवि॰।

**राजालावू** स्त्री राजते राजा अलावूः कर्म॰। मिष्टालावुनाम्

**राजावर्त्त** पु॰ राजानमावर्त्तयति अनुकूलयति आ–वृत–णिच्–अण्। १उपरत्नभेदे राजनि॰। २विराटदेशीयहीरके हेमच॰।

**राजाहि** पु॰ मिल्लक॰। द्विमुखसर्पे शब्दर॰।

**राजि(जी)** स्त्री राज–इन् वा ङीप्। १श्रेण्याम् पङ्क्तौ २रेखायां च मेदि॰। स्वार्थे क। रेखायाम्। राजते राज–ण्वुल्। राजिका राजसर्षपे स्त्री मेदि॰।

**राजिकाफल** पु॰ राजिकायां इव फलमस्य। श्वेतसर्षपे राजनि॰।

**राजि(जी)फला** स्त्री राजिभूतानि श्रेणिभूतानि फलानि यस्याः। १चीनाकर्कट्याम् राजनि॰ २पटोले पु॰राजनि॰

**राजिल** पुंस्त्री॰ राज–इलच्। डुण्डुभसर्पे (ढोंडासाप) अमर॰ स्त्रियां ङीप्।

**राजीव** न॰ राजी दलराजी अस्त्यस्य व।।पद्मे अमर॰। "राजीवराजीवशलोचिति" माघ॰। २हरिणभेदे ३मत्स्यभेदे च पुंस्त्री॰ मेदि॰ "राजीवविलोचनस्य" महा॰। ४गजे त्रिका॰ ५सारसपक्षिणि च पुंस्त्री॰ अमरः सर्वत्र जातौ स्त्रियां ङीप्।

**राजेन्द्र** पु॰ राजा इन्द्र इव श्रेष्ठत्वात्। "समुद्रेयोजनपर्य्यन्तमधिकारी नृपो भवेत्। यो राजा तच्छतगुण स एव मण्डलेश्वरः। तस्माद्दशगुणो राजा राजेन्द्र" इत्युक्ताभिधायवति भूपतिभेदे ब्रह्मवै॰ ज॰ख॰ ८६अ॰।

**राज्ञी** स्त्री राज्ञः पत्नी ङीप् स्वयं वा राजते राज–कनिन् ङीप् वा। (राणी) १राजपत्न्याम् २स्वयं राजकर्मकर्त्र्यां स्त्रियां ३सूर्यपत्न्यां मेदि० ४कांस्ये हेमच०।

**राज्य** न० राज्ञो भावः कर्म वा राजन्+यत् नलोपः। १राजकर्मणि २राजभावे च ३जनपदे शब्दर०। "लक्षाधिपत्यं राज्यं स्यात् साम्राज्यं दशलक्षके। शतलक्षे चक्रेशानि। महासाम्राज्यमुच्यते" परदातन्त्रोक्ते ४लक्षग्रामाधिपत्ये च।

**राज्यधुरा** स्त्री ६त० अच्समा०। राज्यभारे राजकर्त्तव्यप्रजापालनादौ।

**राज्याङ्ग** न० ६त०। स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलप्रकृतिरूपेषु सप्तसु राज्यस्योपायेषु। "परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते। स्वाम्यमात्यराष्ट्रं दुर्गाणि कोषो दण्डश्च पञ्चमः। एताः प्रकृतयस्त्वेतद् विजिगीषोरुदाहृताः। एताः पञ्च तथा मित्रं सप्तमं पृथिवीपतिः। सप्तप्रकृतिकं राज्यमित्युवाच बृहस्पतिः। पौरश्रेणी तदङ्गं च प्रोच्यते शब्दवेदिभिः" शब्दर०।

**राटि** पुं० रट–इण्। (लड़ाइ) १विग्रहे अमरः। २युद्धे स्त्री हेमच० वा ङीप्। पृषो० टस्य डत्वम्। राडिरप्यत्रार्थे

**राढ़** पु० रङ्ग–घञ् पृषो० ढत्वम्। देशभेदे (राढ) स्वार्थे क तत्रैव।

**राढ़ा** स्त्री रङ्ग–घञ् पृषो० ढत्वम्। पुरीभेदे "गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढा पुरीति" प्रबोधचन्द्रोदयः।

**राढीय** त्रि० राढो निवासोऽस्य "वृद्धाच्छः" पा० छ। राढदेशोद्भवे।

**रात्रि(त्री)** स्त्री रा–त्रिप् वा ङीप्। १रजन्यां जगदीशेच्छया सूर्यमण्डलस्य अदर्शनयोग्ये काले २हरिद्रायाञ्च अमरः। "मासेन तु मनुष्याणां पितॄणां तदहर्निशम्। कृष्णपक्षे दिनं प्रोक्तं शुक्ले रात्रिः प्रकीर्त्तिताः" उक्तेः पितॄणां ३शुक्लपक्षरूपे काले "उत्तरायणे दिनं प्रोक्तं रात्रिः स्यात् दक्षिणायने" इत्युक्तेः देवानां दक्षिणायनरूपे ४काले च।

**रात्रिकर** पु० रात्रिं करोति कृ–अच् रात्रौ करः किरणोऽस्य वा। १चन्द्रे हेमच० २कर्पूरे च।

**रात्रि(त्री)चर** पुंस्त्री० रात्रौ चरति चर–ट अच् छस् वा। राक्षसे अमरः। १जातित्वात् स्त्रियां स्त्री ङीप्। २निशाचारिणि त्रि० टान्तस्य स्त्रियां ङीप्।

**रात्रिजागर** पुंस्त्री० रात्रौ जागर्त्ति अच्। १कुक्कुरे हेमच० स्त्रियां ङीप् २निशाजागरणकर्त्तरि त्रि०। ७त०। ३रात्रौ जागरणे पु०।

**रात्रिजागरद** पु० रात्रौ जागरं ददाति दा-क। मशके कीटभेदे राजनि०।

**रात्रिपुष्प** न० रात्रौ पुष्प्यति पुष्प अच् ७त०। उत्पले राजनि०।

**रात्रिमणि** पु० रात्रौ मणिरिव दीप्तिमत्त्वात्। १चन्द्रे हारा०। २कर्पूरे च।

**रात्रिवासस्** न० रात्रेर्वास इवाच्छादकम्। १अन्धकारे शब्दचा० रात्रौ परिधेयं वासः शाक०। २रात्रौ परिधेये वस्त्रे च।

**रात्रिविगम** पु० ६त०। १रजन्यवसाने तदुपलक्षिते २प्रभातकाले च शब्दमाला।

**रात्रिविश्लेषगामिन्** पु० रात्रौ विश्लेषं विच्छेदं गच्छति गम–णिनि। चक्रवाके राजनि० तत् स्त्रियां स्त्री ङीप्।

**रात्रिवेद** पुंस्त्री० रात्रिं रात्रिशेषं वेदयति रवेण विद–णिच् अण्। कुक्कुटे शब्दच० स्त्रियां ङीप्।

**रात्रिसत्र** न० रात्रिषु त्रयोदशादिदिनेषु विहितं सत्रम्। त्रयोदशाहादिषु विहिते यागभेदे तत्र आर्थवादिकं फलं प्रतिष्ठादिकम् न विश्वजिन्न्यायात् स्वर्गफलमिति जै० ४।३।१७।८ सूत्रे समर्थितम्। "यद्यपि रात्रिशब्देन अथैव ज्योतिरथैव गौरित्यादिवाक्येन विहितानि सोमाभि कर्माण्युच्यन्ते द्वादशाहादूर्ध्वभाविनस्त्रयोदशरात्रप्रभृतयः शतरात्रान्ताः सत्रविशेषाः रात्रिसत्रपदवाच्याः त्रयोदशसंख्याका रात्रयो यस्मिन् सत्रविशेषे स त्रयोदशरात्र इति व्युत्पत्तेः तथापि बहुवचनात् रात्रिशब्देन रात्रिसत्रमुच्यते "एता विंशतिं रात्रीः इति श्रवणात्" त० वा०। "फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्" जै० सू०। निर्देशादर्थवादेन फलस्य निर्देशात् फलमर्थवादोक्तम् आत्रेय आह अश्रुतौ यत्रार्थवादादिषु फलाश्रुतिस्तत्रानुमानं स्वर्गफलकल्पनम्" सू० "निर्देशात्तु प्रतिष्ठैव फलत्वेन विधास्यते" तथा च प्रतिष्ठाकाम आयुषा यजेत प्रतिष्ठाकामो ज्योतिषा यजेत" इत्यादिश्रुतिपदघटिता एव विधयः कल्प्यन्ते लाघवात् न तु स्वर्गकामादिपदघटिताः" तन्त्रवा०। रात्रिसत्रन्यायोऽपि आर्थवादिकफलान्वयार्थः।

**रात्रिहास** पु० रात्रेर्हास इव शुभ्रत्वात्। श्वेतोत्पले शब्दच०।

**रात्रान्ध** त्रि० रात्रावन्धः दृष्टिक्षययुक्तः। १निशादृष्टिशून्ये काकादौ। २रात्रौ रोगकृतदृष्टिशून्ये (रातकाणा) च।

**राद्ध** त्रि० राध–कर्त्तरि कर्मणि वा क्त। १सिद्धे २पक्वे च हेम०

**राद्धान्त** पु० राद्धः सिद्धः अन्तो निर्णयो यस्मात् ५ब०। समयविषये वादिदर्शितपक्षनिराकरणपूर्वकयथार्थपक्षप्रतिपादके २वाक्ये अमरः।

राध सिद्धौ स्वा॰ निष्पादने याके च सक॰ स्वादि॰ दिवा॰ च पर॰ अनिट्। राघ्नोति राध्यति अरात्सीत् अराद्ध रेधतु॰ रराधतुः। शुभाशुभालोचने च। तद्योगे शुभाशुभस्वामिनः सम्प्रदानता। "गर्गाय राध्यति रामाय" वोपदेवः। अप+दोषकरणे "यत्नमस्मापराध्यति"म॰ भ॰।

राध पु॰ राधा विशाखा तद्युक्तपौर्णमासी अनुराधा च तद्युक्ता पौर्णमासी अण् ङीप् राधी सा यत्र मासे पुनरण्। १चान्द्रे वैशाखे मासि। ताद्गो २वक्ते ३शुक्लपक्षे च कार्त्तिकशुक्ले दशत्र्यम्। ४तत्पूर्णिमायां स्त्री ङीप्।

राधन न॰ राध-ल्युट्। १साधने २प्राप्तौ मेदि॰। ३तोषे च हेम॰। राध-णिच्-युच्। पूजने स्त्री टाप्।

राधस् न॰ राध-असुन्। धने निघण्टुः।

राधा स्त्री राध-अच्। १विशाखानक्षत्रे रिरंसया रमणीदेहस्थितेनाविर्भूते गोलोकस्थे परमेश्वराद्धाङ्गरूपे २शक्तिभेदे तत्रैव श्रीदामशापात् वृन्दावने जातायां वृषभानुसुतायां ३प्रधानगोपिकायाम् ४कर्णस्य पालयित्र्यां मातरि च।५वैशाखपौर्णमास्यां स्त्री ङीप्। [द्योऽस्य

राधाकान्त पु॰ राधायाः कान्तः। श्रीकृष्णे राधावल्लभा-

राधातनय पु॰ राधायास्तनय.। कर्णे स हि कन्यावस्थायां कुन्त्या जातगर्भजातस्या च त्यक्त राधया सूतपत्न्या पालित इति भारतप्रसिद्धम्। [पालितत्वात् ढक्। कर्णे

राधेय पु॰ राधाया अपत्यम् पुत्रत्वेन परिग्रहणेन तत्-

राम पु॰ रम-कर्त्तरि घञ् ण वा। १परशुरामे २दशरथज्येष्ठपुत्रे श्रीरामे ३बलरामे च "भार्गवो राघवो गोपश्च यो रामाः प्रकीर्त्तिताः" वह्निपु॰। .रामशब्दनिरुक्तिः "रायन्तो विश्ववचनो मश्चापीश्वरवाचकः। "विश्वानामीश्वरो यो हि तेन 'राम' प्रकीर्त्तित" ब्रह्मवै॰ जन्मख॰ ११०अ॰। ४मनोहरे ५सिते ६असिते च त्रि॰मेदि॰। ७वास्तूकशाके ८कुष्ठे (कुड) न॰ मेदि॰ ८तमालपत्रे न॰ राजनि॰।

रामकर्पूरक पु॰ राम मनोहरं कर्पूरमिव कन्। सौगन्धिके स्वनामख्याते तृणभेदे शब्दर॰।

रामगिरि पु॰ रामाश्रित. गिरिः। चित्रकूटपर्वते स हि रामेण वनवासगमनकाले प्रथममाश्रितः।

रामचन्द्र पु॰ रामचन्द्र इवाह्लादकत्वात्। दशरथज्येष्ठपुत्रे श्रीरामे शब्दर॰। [मदनहक्षे (मदनामाछ) भावप्र॰।

रामजयन्तक पु॰रामममिराम कर्द्दयति कूट-णिच्-ण्वुल्।

रामजननी स्त्री ६त॰। १वसुदेवपत्न्यां रोहिण्यां २जम-

दग्निपत्न्यां रेणुकायां ३दशरथपत्न्या कौशल्यायाञ्च।

रामठ न॰रमठ+स्वार्थे अण्।।हिङ्गुनि अमर। तत्तुल्यगन्धे २अङ्कोठवृक्षे रत्नमा॰।नाडीहिङ्गुनि स्त्री राजनि॰

रामण न॰ रमयति रम-णिच् ल्यु पृषो॰ वृद्धिः। निम्बे २तिन्दुके च (तँद) राजनि॰।

रामणीयक न॰ रमणीयस्य भाव॰ रमणीयमेव वा योपधत्वात् वुञ्। १रमणीयत्वे "सच्चिहारावलिरामणीयकम्"मेघ॰ २रमणीये च।

रामतरुणी स्त्री रामा अभिरामा तरुणीव। (सेवोती) १पुष्पवृक्षे राजनि॰ ६त॰। २सीतायां ३रेवत्याञ्च।

रामदूत पु॰ रामस्य दूतः वार्त्ताहर। हनूमति स हि रामवार्त्तां लङ्कात सीताया आजहार।

रामदूती स्त्री रामा अभिरामा दूतीव गन्धद्वारा प्रचारात्। तुलसीभेदे (रामतुलसी) शब्दच॰।

रामनवमी स्त्री रामस्य जन्माधारो नवमी। चैत्रशुक्लनवम्याम्। "चैत्रे मासि नवम्यान्तु जातो रामः स्वयं हरि" अगस्त्यसंहिता। "प्राप्ते श्रीरामनवमीदिने मर्त्त्यो विमूढधीः। उपोषणं न कुरुते कुम्भीपाकेषु पच्यते" ति॰ त॰।

रामपूग पु॰ राम अभिरामः पूगः। गुवाकभेदे त्रिका॰।

रामबाण पु॰ रसभेदे भावप्र॰।

"पारदाक्षतवत्सनाभकं भागयुक्तमरिचेन मिश्रितम्। तत्र जातिफलमर्द्धभागिकं तिन्तिडी.फलरसेन मर्द्दितम्। वह्निमान्द्यदवमन्दनाशनो रामबाण इति विश्रुतो रसः। संग्रहग्रहणिकुष्ठकर्णकमामवातखरदूषणं जयेत्। दीयते स च वल्लमात्रतः सद्य एव जठराग्निदीपन। रोचकः कफकुलान्तकारकः श्वासकासवमिजन्तुनाशन॰" भावप्र॰।

रामभद्र पु॰ राम एव भद्रः मङ्गलदायकत्वात्। श्रीरामे "रामेति रामचन्द्रेति रामभद्रेति वा स्मरन्निति"पद्मपु॰।

रामलवण न॰ कर्म॰। शाम्भरिलवणे रत्नमा॰।

रामवल्लभ न॰ रामस्य वल्लभं प्रियम्। १भूर्जपत्रे राजनि॰ तद्धि रामेण वनवासाश्रमे प्रियतया धृतम्। २तत्प्रिये त्रि॰। [बाणदैत्यत्वात् मनोहर॰।

रामशर पु॰ कर्म॰। शरवृक्षभेदे राजनि॰ स हि काण्डद्वारा

रामसख पु॰ ६त॰ टच्। सुग्रीवे वानरराजे शब्दच॰।

रामा स्त्री रमतेऽनया रम-करणे घञ्। १नीतादिकामिन्यां नार्य्यां २नारीमात्रे भावप्र॰३नद्याम् ४हिङ्गुनि मेदि॰ ५हिङ्गुले पु॰ ६श्वेतकण्टकार्य्यां ७गन्धकुन्यायां ८सुधोके

न्तकनरान्तकौ । महोदरमहापार्श्वातिकायं महाबलम् । कुम्भं निकुम्भं मत्तञ्च मकराक्षं ध्रुकम्पनम् । प्रहस्तं वीरमन्तं कुम्भकर्णं महाबलम् । रावणञ्च महा[illegible] काकुत्स्थो राघवो बली । निक्षिप्य वाह्नमग्नावपि रावणन्तु न्यपातयत् । सीता शुद्धा गृहीत्वाथ विमाने पुष्पके स्थितः । सवानरः समायातो ह्ययोध्यां प्रवरां पुरीम् । तत्र राज्यं चकाराथ पुत्रवत् पालयन् प्रजाः । दशाश्वमेधानाहृत्य गयाशिरसि पावनम् । पिण्डानां विधिवत् कृत्वा दत्त्वा दानानि राघवः । पुत्रौ कुशलवौ दृष्ट्वा तौ च राज्येऽभ्यषेचयत् । एकादशसहस्राणि रामो राज्यमकारयत् । शत्रुघ्नो लवणं हत्वा शैलूषं भरतः स्थितः । अगस्त्यादिमुनीनाञ्च [illegible] रक्षसाम् । स्वर्गं गतो जनैः सार्द्धमयोध्यस्थैः कृतार्थकः" । अस्य इदमपि व्यासप्रणीते पद्मपु० अध्यात्मरामायणं वाल्मीकिकृतमद्भुतरामायणं चास्ति ।

रामालिङ्गनकाम पु० रामाभ्याम् स्त्रीभ्यामालिङ्गनस्य कामोऽत्र । रक्ताम्लाने राजनि० ।

रामोपाख्यान न० ६त० । १रामस्योपाख्याने । तदधिकृत्य कृतो ग्रन्थः अण् । २भारतवनपर्वान्तर्गते तदुपाख्यानप्रतिपादकेऽवान्तरपर्वणि च । [वत्सभवे दण्डभेदे ।

राम्भ पु० रम्भो वेणुस्तस्य विकारोऽण् । मतभेदे धार्य्ये

राल पु० रा–कलच् । शालवृक्षनिर्य्यासे (धुना) भावप्र० । "रालो हिमो गुरुस्तिक्तः कषायो ग्राहको हरेत् । दोषास्रस्वेदवीसर्पज्वरव्रणविपादिकाः । ग्रहभग्नाग्निदग्धाच शूलातीसारनाशनः" भावप्र० ।

रालकार्य्य पु० रालः कार्य्यो यस्य । शालवृक्षे राजनि० ।

राव पु० रु–घञ् । शब्दे हारा० ।

रावण पु० रवणस्यापत्यम् विश्रा० अण् रावयति शत्रून् णिच्–ल्यु वा । लङ्काधिपतौ विश्रवसः पुत्रे राक्षसे ।

रावणगङ्गा स्त्री रावणनिर्म्मिता गङ्गा नदी । सिंहलदेशस्थे नदीभेदे गरुड़पु० ७ अ० ।

रावणारि पु० ६त० । श्रीरामे जटा० रावणान्तकादयोऽप्यत्र ।

रावणि पु० रावणस्यापत्यम् इञ् । मेघनादाख्ये रावणस्य ज्येष्ठपुत्रे हेमच० । [चक्रि न तुम्र० ।

राश शब्दे भ्वा० आ० अक० सेट् । राशते अराशिष्ट अदित्

राशि पु० अश्नुते व्याप्नोति अश–इन् धातोरुडागमश्च । धान्यादीनां १पुञ्जे अमरः । ज्योतिश्चक्रस्य द्वादशांशे २मेषादौ, "इमत्रे राशिप्रविष्टे" इति लीलावतीप्रसिद्धे ३अङ्कप्रयोगभेदे यथा त्रैराशिकपञ्चराशिकादिशब्दे ।

राशिचक्र न० राशिघटितं चक्रं इत्तम् । मेषादिद्वादशराशियुक्ते गोलाकारे वायुवशेन पूर्वतः पश्चात् भ्रमत्यमाने ज्योतिर्मये "सप्तविंशतिभिर्ज्योतिश्चक्रं स्तिमितवायुगम्" इत्युक्ते ज्योतिश्चक्रे खगोलशब्दे दृश्यम् मन्त्रशुद्धौ कूर्म्माशिचक्रं तच्च चक्रशब्दे २८०पृष्ठे दृश्यम् ।

राशिभोग पु० राशीनां स्वस्वभोगः भुज–घञ् कुत्वम् । रव्यादीनां स्वस्वगतिवशेन राशिषु गतिभेदे । खगोलशब्दे दृश्यम् ।

राशी(शि)कृत पु० अराशिः राशिः कृतः राशि+अभूततद्भावे च्वि तदर्थे समासो वा । (ढेरी) पुञ्जीकृते एकत्रीकृते ।

राष्ट्र न० राज–ष्ट्रन् । जनपदे 'गोष्ठ र ष्ट्रमृहसुतम्' इति प्रबोधचन्द्रोदयः । २उपद्रवे अमरः ।

राष्ट्रिका स्त्री राज–ष्ट्रन् स्वार्थे कन् । कण्टकारिकायाम् अमरः ।

राष्ट्रिय पु० राष्ट्रे भवः घ । नाट्योक्तौ १राजश्यालो । स राष्ट्रीय तत्रार्थे । उभावपि २राष्ट्रभवे त्रि० ।

रास शब्दे भ्वा० आ० अक० सेट् । रासते अरासिष्ट ऋदित् चङि न ह्रस्वः । रासभः । अयं तालव्यान्त इत्यन्ये ।

रास पु० रस–घञ् रास–घञ् वा । १शब्दे, २ध्वनौ शृङ्खलावन्धवत् द्वयोर्द्वयोर्मध्यस्थित्या ३क्रीडाभेदे, ४कोलाहले च मेदि० ।

रासक न० दृश्यकाव्यभेदे "नाट्ये रासकमेकाङ्कं बहुताल-लयस्थिति । उदात्तनायकं तद्वत् पीठमर्द्दोपनायकम् । हास्योऽङ्गत्र सशृङ्गारो नारी वासकसज्जिका । मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च । केचित् प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम्" सा०द० ।

रासभ पुंस्त्री० रास–अभच् । गर्द्दभे अमरः स्त्रियां ङीष् ।

रासभवन्दिनी स्त्री रासभस्य वन्दिनीव । मल्लिकायाम् शब्दच० ।

रासमण्डल न० रासार्थं शृङ्खलावन्धवत् द्वयोर्द्वयोर्मध्यस्थित्या क्रीडाभेदार्थं मण्डलं मण्डलाकारेण भ्रमणं यत्र । १गोलोकस्थे रासक्रीडाधारस्थाने । तत्त्वञ्च ब्रह्मवै० जन्मख० ८४ अ० । श्रीकृष्णस्य तदुत्सवाङ्गे २मण्डलभेदे च ।

रासयात्रा स्त्री ६त० । कार्त्तिकपौर्णमास्यां भगवदुत्सवभेदे ब्रह्मवै० प्र० २५ अ० । भागवतस्य भा० १०स्क० २८अ० आदौ दृश्यः ।

**रिष** वधे भ्वा॰पर॰सक॰सेट् । रेषति अरेषीत् । रिरेष ।

**रिष्ट** न॰ रिष-क्त । १मङ्गले २अशुभे ३पापे च अमरः । भावे क्त । ४नाशे, ५अशुभादिमति त्रि॰ । उपचारात् । ६खड्गे, ७रक्ताशिग्रौ च पु॰ मेदि॰ । स्वार्थे क । तेषु ।

**रिष्टि** स्त्री॰ रिष रिश-वा क्तिन् । १अशुभे, २शस्त्रभेदे खड्गे पु॰मेदि॰ । क्तिच् । ३रन्ध्रे पु॰ । वा च ह॰जा॰दम्याः

**रिह** वधे भ्वा॰ पर॰ सक॰ सेट् । रेहति अरेहीत् ।

**री** क्षरणे दि॰ आ॰ अक॰ अनिट् । रीयते अरेष्ट ओदित् निष्ठातस्य नः । रीणः । [ णाति अरैषीत् ।

**री** गतौ वधे च सक॰ रवे अक॰ क्र्या॰ प॰ अनिट् । रि-

**रीठा** स्त्री री-ठक् ठस्य नेत्त्वम् । रीठाकरञ्जे "रीठाकरञ्जस्तिक्तोष्णः कटुगन्धश्च वातहृत् । कण्डूतिकुष्ठविषहृत् कफविस्फोटनाशनः" राजनि॰ ।

**रीठाकरञ्ज** पु॰ कर्म॰ । स्वनामख्याते वृक्षे राजनि॰ ।

**रीढा** स्त्री रिह-क्त नि॰ ढत्वम् । अवज्ञायाम् अमरः ।

**रीण** त्रि॰ री क्त । क्षरिते च्युते अमरः ।

**रीति** स्त्री री क्तिच् । पित्तले । क्तिन् । २प्रभावे, ३क्षरणे अमरः ४लौहकिट्टे, मेदि॰ । ५दग्धस्वर्णादिमले रमा॰ । ६सीमायां, ७गतौ, ८स्वभावे, हेमच॰ । अलङ्कारोक्ते ९गौड्यादिरचनाभेदे च "गौडीपाञ्चालवैदर्भ्यो रीतयः परिकीर्त्तिताः" सा॰ द॰ । [तत्रार्थे स्त्री शब्दर॰

**रीतिक** न॰ रीत्या पित्तलेन कायति कै-क । पुष्पाञ्जने राजनि॰

**रीतिपुष्प** न॰ रीतेः पुष्पमिव । कुसुमाञ्जने अमर ।

**रीव** ग्रहणे, संवरणे च भ्वा॰उभ॰ सक॰ सेट् । रीवति ते अरीवीत् अरीविष्ट । ऋदित् चङि न ह्रस्वः ।

**रु** ध्वनौ अदा॰प॰अक॰सेट् । रौति-रवीति अरावीत्-अरावीत् । चिटि नित्सेट् रुराविथ । [रुरविथ ।

**रु** वधे गतौ च भ्वा॰ आ॰ सक॰ अनिट् । रवते अरोष्ट ।

**रुक्प्रतिक्रिया** स्त्री रुजः प्रतिक्रिया प्रतिकारः प्रति+कृ भावे श ६त॰ । चिकित्सायाम् अमरः ।

**रुक्म** न॰ रुच-मन् नि॰ कुत्वम् । १काञ्चने, २धत्तूरे, अमर ३लौहे, मे॰द॰ ४नागकेशरे च राजनि॰ ।

**रुक्मकारक** न॰ रुक्मं तन्निमित्तभूषणं करोति कृ॰ ण्वुल् । स्वर्णकारे अमर ।

**रुक्मिन्** त्रि॰ रुक्मं विद्यतेऽस्य इनि । १स्वर्णयुक्ते २भीष्मकराजस्य ज्येष्ठपुत्रे पु॰ राजभेदे भाग॰१०।५२ । ३रुक्मिराजकन्यायां कृष्णपत्न्यां स्त्री ङीप् ।

**रुक्ष** त्रि॰रुह-क्स । १अचिक्कणे २नि.स्नेहे ३कठोरे च अमर॰

**रुग्ण** त्रि॰रुज क्त । १रोगान्विते राजनि॰ २भग्ने च अमरः

**रुच** दीप्तौ प्रकाशे च भ्वा॰ आ॰ अक॰ सेट् । रोचते लुङि उ॰ अरुचत् अरोचिष्ट । एतद्योगे प्रीयमाणस्य सम्प्रदानता "नारदाय रोचते कलहः" सि॰कौ॰ ।

**रुचक** न॰ रुच-क्वुन् । १सर्जिकाक्षारे, माङ्गल्ये २द्रव्ये, ३कण्ठभूषणे, ४माल्ये ५सौवर्चले, ६उत्कटे त्रि॰ मेदि॰ ७आस्वादकरे, शब्दच॰ ८रोचनायाम्, ९विडङ्गे न॰ हेमच॰ १०लवणे न॰ हारा॰ । ११बीजपूरे, १२दन्ते, १३निष्के पु॰ १४कपोते च पु स्त्री॰मेदि॰ स्त्रियां ङीप् । १५स्वर्णपालभेदे च ।

**रुच्(चा)** स्त्री रुच सम्प॰ क्विप् वा टाप् । १दीप्तौ, २शोभायां, ३प्रकाशे, ४शारिकाखगवाचि च शब्दर॰ ।

**रुचि(ची)** स्त्री रुच-कि वा ङीप् । १अनुरागे २आसक्तौ ३स्पृहायाम् ४अभिलाषे ५किरणे अमर । ६शोभायां मेदि॰ ७बुभुक्षायां हेमच॰ ८गोरोचनायां च राजनि॰ । ९प्रजापतिभेदे पु॰मार्क॰पु॰ । १०आभिमुख्यभेदे कामशास्त्रम् ।

**रुचिर** त्रि॰ रुचिं राति ददाति रा-क । १मनोहरे सुन्दरे १मधुरे च अमर । २मूलके ३कुङ्कुमे ४लवङ्गे च न॰ ५गोरोचनायां स्त्री राजनि॰ ।

**रुचिराञ्जन** पु॰ अज्यतेऽनेन अन्ज-करणे ल्युट् रुचिरः शोभायुक्तोऽञ्जनः । शोभाञ्जने (सजिना) राजनि॰ ।

**रुच्य** त्रि॰रुचये हितः यत् । १सुन्दरे २रुचिकरे च अमरः । ३सौवर्चले न॰ राजनि॰ । ३पत्यौ पु॰हेमच॰ । ४कतकवृक्षे ५शालिधान्ये च पु॰ राजनि॰ ।

**रुच्यकन्द** पु॰ रुच्यः रुचिकरः कन्दो मूलमस्य । शूरणे (ओल) राजनि॰ । [निष्ठातस्य नः । रुग्णः ।

**रुज** भञ्जने तु॰प॰सक॰अनिट् । रुजति अरौक्षीत् ओदित्

**रुज** हिंसायां चु॰ उभ॰सक॰सेट् । रोजयति ते अरूरुजत् त रोगकर्तृकस्यास्य योगे कर्मणि षष्ठी । रुजयति चौरस्य रोगः

**रुज्(जा)** स्त्री रुज-सम्प॰ क्विप् वा टाप् रुज-अङ् वा । १रोगे २भङ्गे मेदि॰ रुजा-च । ३मेष्यां हेमच॰ । ४कुष्ठे च (कुड) राजनि॰ । एतद्योगे कर्मषष्ठ्या न समासः ।

**रुजाकर** न॰ रुजां रोगं करोति कृ-ट । १कर्मरङ्गफले (कामराङ्गा) शब्दच॰ २रोगकारके त्रि॰ । ३व्याधौ पु॰ हेमच॰ ।

**रुट** चौर्ये भ्वा॰ पर॰सक॰सेट् इदित् । रुण्टति अरुण्टीत् ।

**रुट** रोषे अक॰ दीप्तौ सक॰ चु॰ उभ॰ सेट् । रोटयति ते अरूरुटत् त ।

रुट दीप्तौ अक० प्रतिघाते सक० च भ्वा० आ० सेट् । रोटते लृदित् लुङि उभ० अरुटत् अरोटिष्ट रुरुटे ।

रुठ उपघाते भ्वा०पर०सक०सेट् । रोठति अरोठीत् ।

रुठ प्रतीघाते भ्वा० आ० सक० सेट् । रोठते लृदित् लुङि उभ० अरुठत् अरोठिष्ट रुरुठे ।

रुठ गतौ चौर्य्ये सक० मन्दीभावे खञ्जीभावे च अक० भ्वा० पर०सेट् इदित् । रुण्ठति अरुण्ठीत् ।

रुण्ड पु० रुटि-अच् पृषो० ठस्य डः । १मूर्द्धशून्यदेहे कबन्धे शब्दा० ।

रुत न० रु-क्त । रवे पशुपक्षिप्रभृतीनां शब्दे अमरः ।

रुद रोदने अश्रुविमोचने अदा० पर० अक० सेट् रुदा०सार्व-धातुके इडादौ इट् रोदिति इरित् अरुदत् अरोदीत् ।

रुदादि पु० सार्वधातुके इडादौ इड्निमित्ते शब्दगणे स च गणः "रोदिति स्वपितिश्चैव श्वसिति प्राणितिस्तथा । जक्षितिश्चैव विज्ञेयो रुदादिः पञ्चको गणः" ।

रुदन्ति(न्ती)का स्त्री रुद-शतृ गौरा०ङीष् । संज्ञायां कन् वा । क्षुद्रक्षुपभेदे राजनि० "चणपत्रसमपत्रा क्षुपकैव तथाकृतिः । शैशिरे जलबिन्दूनां स्रवन्तीति रुदन्तिका । रुदन्ती वह्निकटूष्णा तिक्ता च रसायनी" राजनि० ।

रुदित न० रुद-भावे क्त । १क्रन्दने अमरः । कर्त्तरि क्त । २कृतरोदने त्रि० ।

रुद्ध त्रि० रुध-क्त । १आवरणादिना वेष्टिते अमरः २कृतगति-रोधे च ।

रुद्र पु० रोदिति रुद-रक् । १शिवमूर्त्तिभेदे "सोऽरोदीत् यद-रोदीत् तद् रुद्रस्य रुद्रत्वम्" श्रुतेः २अग्नौ च । "अजैक-पादहिर्बुध्नो विरूपाक्षः सुरेश्वरः । जयन्तो बहुरूपश्च त्र्यम्बकोऽप्यपराजितः । वैवस्वतश्च सावित्रो हरो रुद्रा इति स्मृताः" ३रुद्रसूक्तेषु एकादशसु शिवमूर्त्तिभेदेषु वा०य० यजु०१६अ०उक्तेषु "नमस्ते रुद्र मन्यवे" इत्यादिषु ४रुद्र-गणेषु च । ५एकादशसंख्यायाम् ६आर्द्रानक्षत्रे च ।

रुद्रचण्डी स्त्री रुद्रयामलोक्ते देवीमाहात्म्यप्रतिपादकग्रन्थे

रुद्रज पु० रुद्रात् जायते जन-ड । १शिववीर्य्यजाते पारदे राजनि० २कार्त्तिकादौ च ।

रुद्रजटा स्त्री रुद्रस्य जटेव पिङ्गत्वात् जटिलत्वाच्च । १स्व-नामख्याते लताभेदे राजनि० "कटू रुद्रजटा श्वासकास हृद्रोगनाशिनी । भूतरक्षोनाशिनी च" रुद्रलताप्यत्र ।

रुद्रपत्नी स्त्री ६त० । १दुर्गायाम् २अतस्याञ्च (मसिना) रत्नमा० ।

रुद्रप्रिया स्त्री ६त० १हरीतक्याम् २दुर्गायाञ्च शब्दर० ।

रुद्रविंशति स्त्री रुद्रस्याधिका विंशतिः । प्रभवादिषु षष्टिसं-वत्सरेषु अन्तिमेषु विंशतिवर्षेषु । प्रभवादिशब्दे ४३७१ पृ० दृश्यम् ।

रुद्रसावर्णि पु० चतुर्दशसु मनुषु द्वादशे मनौ मार्क० पु० ।

रुद्राक्रीड न० रुद्रस्याक्रीडा यत्र । श्मशाने त्रिका० ।

रुद्राक्ष पु० रुद्रस्याक्षि कारणत्वेनास्त्यस्य अच् । स्वनामख्याते वृक्षे तन्माहात्म्यादि नि०सि० उक्तं यथा

लैङ्गे "विना भस्मत्रिपुण्ड्रेण विना रुद्राक्ष-मालया । पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः । तस्मान्मृदापि कर्त्तव्यं ललाटे वै त्रिपुण्ड्रकम्" रुद्राक्ष-विशेषाः शिवरहस्ये "एकवक्त्रः, शिवः साक्षाद् ब्रह्म-हत्यां व्यपोहति । अवध्यत्वं प्रतिरोतो वह्निस्तम्भं करोति च । द्विवक्त्रो२ हरगौरी स्याद् गोवधाद्यघनाश-कृत् । त्रिवक्त्रो३ऽग्निजन्माद्य पापराशिं प्रणाशयेत् । चतुर्वक्त्रः४ स्वयं ब्रह्मा नरहत्यां व्यपोहति । पञ्चवक्त्रस्तु कालाग्निरगम्याभक्ष्यपापनुत् । षड्वक्त्र६स्तु गुहो ज्ञेयो भ्रूणहत्यादि नाशयेत् । सप्तवक्त्रो७ऽनन्तः स्यात् स्वर्ण-स्तेयादिपापहृत् । विनायकोऽष्टवक्त्रः८ स्यात् सर्वानृत-विनाशकृत् । भैरवो नववक्त्र९स्तु शिवसायुज्यकारकः । दशवक्त्रो १० स्मृतो विष्णुर्भूतप्रेतभयापहः । एकादशमुखो ११रुद्रो नानायज्ञफलप्रदः । द्वादशास्य१२स्त्वादित्यः सर्वरोगनिबर्हणः । त्रयोदशमुखः१३ कामः सर्वकाम-फलप्रदः । चतुर्दशास्यः१४ श्रीकण्ठो वंशोद्धारकरः परः" इति । तथा "विना मन्त्रेण यो धत्ते रुद्राक्षं भुवि मानवः । स याति नरकान् घोरान् यावदिन्द्राश्चतु-र्द्दश । पञ्चाननं पञ्चमन्त्रं स्नानकाले प्रयोजयेत् । रु-द्राक्षस्य प्रतिष्ठायां मन्त्रं पञ्चाक्षरं तथा । त्र्यम्ब-कादिमन्त्रं च तथा तत्र प्रयोजयेत्" तथा "अष्टोत्तरशतं धार्य्यं चतुःपञ्चाशदेव वा । सप्तविंशतिमाला वा ततो हीनाधमा स्मृता" । प्रजापतिः "मोक्षार्थी पञ्चविंशत्या धनार्थी त्रिंशता जपेत् । पुष्ट्यर्थी पञ्चत्रिंशता सप्त-दशाभिचारके । सप्तविंशतिरुद्राक्षमालया देवक-स्थया । यत् करोति नरः पुण्यं सर्वं कोटिगुणं भवेत् । यो ददाति द्विजेन्द्राय रुद्राक्षं भुवि मानवः । तस्य प्रीतो भवेद्रुद्रः स्वपदं च प्रयच्छति" । पदार्थादर्शे गोपटीका "रुद्राक्षान् कण्ठदेशे दशन३२परिमितान् मस्तके विंशती द्वे ४० षट् षट् कर्णप्रदेशे करयुगलकृते द्वादश द्वादशैव । बाह्वोरिन्दोः १६कलाभिर्नयनयुगकृते त्वेकमेकं शिखायां वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः" ।

**रोपण** न० रुह-णिच्-हस्य पः ल्युट् । १जनने २वृक्षादेः स्थानान्तरे रूप-ल्युट् । ३विमोहने ४अन्यथाभूतस्य वस्तुनोऽन्यथा ज्ञाने । ५अञ्जनभेदप्रकारादि भावप्र० उक्तं यथा "शिलाया रक्तं पिष्टा सम्यक् संशोध्य वारिणा । तत्क्षालनं सर्वं त्यक्त्वा पूर्वमधोगतम् । सम्यक् तज्जलं सर्वं पर्पटीवर्त्तिभं भवेत् । विचूर्ण्य भावयेत् सम्यक् त्रिवेलं त्रिफलारसैः । कर्पूरस्य रस तत्र दशमांशेन निक्षिपेत् । अञ्जयेन्नयने तेन नेत्राक्षिवगदच्छिदः" ।

**रोपणीवर्त्ति** स्त्री नेत्राञ्जनवर्टीभेदे भावप्र० तत्प्रकार उक्तो यथा "कमीतिक्तिकपुष्पाणि वटि पिष्पलितण्डुलाः । जातीपुष्पाणि पत्राणि नागदलानि च लोध्रम । समं पिष्ट्वाम्बुना वर्त्तिः कृता कुसुमिकाभिधा । तिमिरार्जुनशुक्राणां नाशिनी मांसवर्द्धितत् । एतस्या अञ्जने प्रोक्ता मात्रा वक्ष्यते"। (कुसुमिका वटी) ।

**रोपित** त्रि० रुह-णिच्-हस्य पः क्त । १उत्थापितमनाय लताङ्कुरारोपणे अन्यथास्थिते अन्यरूपेण निर्दिष्टे यथा सुखं चन्द्र इत्यादौ सुखस्य चन्द्ररूपेण निर्देशः ।

**रोमक** न० रोमेव निबिडं कायति कै-क । (रुम) १लवणे शब्द० ।२पांशुलवणे ३अयस्कान्ते च राजनि० ।

**रोमकन्द** पु० रोमभिर्युक्तः कन्दो मूलमस्य । पिण्डालौ राजनि० ।

**रोमकपत्तन** न० कर्म० । (रुम) नगरभेदे सू०सि० ।

**रोमकूप** पु० रोम्णां कूप इव । रोमाधारे विवरे "न रोमकूपौघमिषाज्जगत्कृता" नैषधम् ।

**रोमकेसर** न० रोमभिः केसरः सिंहघटेव । चामरे त्रिका० ।

**रोमगुच्छ** न० रोमभिर्गुच्छं स्तवकमिव । रोमसमुदायात्मके चामरे शब्दार्थ० । अत्रैवार्थे हेमच० ।

**रोमन्** न० रु-मनिन् । देहजाते अङ्कुराकारे केशतुल्ये पदार्थे (रोंया) अमरः ।

**रोमन्थ** पु० रोमं बध्नाति मन्थ-अण् पृषो० नलोपः । भुक्तस्य चाचादेः पशुभिरुद्गीर्य चर्वणे । रोमन्थमभ्यस्यति क्यङ् । रोमन्थायते ।

**रोमभूमि** स्त्री ६त० । चर्मणि राजनि० ।

**रोमलता** स्त्री रोमाणि लतेव । रोमराजौ हेमच० ।

**रोमविकार** पु० ६त० । रोमोद्गमे रोमाञ्चे शब्दा० ।

**रोमश** त्रि० रोमाणि सन्त्यस्य श । १प्रचुररोमयुक्ते २मेषे पुंस्त्री० हेमच० स्त्रियां ङीष् । ३पिण्डालौ ४शूकरे पुंस्त्री स्त्रियां ङीष् । ५कुम्भयाम्बु पु०(पाषा) राजनि० ।

**रोमहर्ष** पु० रोम्णः हर्ष इव तदुत्पत्त्यकत्वात् । रोमाञ्चे हर्षभीतृष्णाद्यादिभिः रोमकूपे जायमाने कण्टकाकारे पदार्थे हारा० । ल्युट् । रोमहर्षणमप्यत्र अमरः ।

**रोमहर्षण** पु० रोमाणि हर्षयति हृष-णिच्-ल्यु । १बिभीतकवृक्षे मेदि० २लोमहर्षणे मुनिभेदे च । [अमरः ।

**रोमाञ्च** पु० रोम्णामञ्चः उद्गमः अन्च-अच् । रोमहर्षे

**रोमाञ्चित** त्रि० रोमाञ्चः जातोऽस्य तार० इतच् । जातपुलके त्रिका० । [ वल्ल्यायाञ्च भद्रना० ।

**रोमाली** स्त्री ६त० । १रोमावलौ तदुपलक्षणे तारुण्ये च

**रोमालु** पु० रोमयुक्त आलुः शाक० । १पिण्डालौ राजनि० रोम+आलुच् । २रोमवति त्रि० । [वृक्षे राजनि० ।

**रोमालुविटपिन्** स्त्री रोमालुः रोमयुक्तः विटपी । कुम्भी-

**रोमावलि(ली)** स्त्री ६त० ।१रोमश्रेण्यां २नाभेरूर्ध्वस्थरोमपङ्क्तौ तदुपलक्षिते ३ताःरुण्यावस्थायाञ्च हेमच० ।

**रोमोद्गम** पु० रोम्णामुद्गमः उद्-गम घञ् । रोमहर्षे शब्दा० । रोमोद्भेदादयोऽप्यत्र ।

**रोरुदा** स्त्री रुद-यङ्-भावे अ टाप् । अतिशयरोदने ।

**रोल** पु० रु-लच् । पानीयामलके शब्दच० ।

**रोलम्ब** पुंस्त्री रौति रु विच् रोः सन् लम्बते गच्छति लम्ब-अच् कर्म०,रोल लम्बच् उक्त वो वा । भ्रमरे त्रिका० स्त्रियां ङीष् ।

**रोष** पु० रुष-घञ् । क्रोधे अमरः ।

**रोषण** पु०रुष-युच् । १पारदे, २निकषप्रस्तरे, मेदि० । ३ऊषरभूमौ ४क्रोधशीले त्रि० हेमच० ।

**रोह** पु० रुह अच् । १अङ्कुरे हेमच० २रोहणकर्त्तरि त्रि० ।

**रोहण** पु० रुह्यतेऽसौ रुह-ल्युट् । १पर्वतभेदे जटा० । भावे ल्युट् । २प्रादुर्भावे न० । करणे ल्युट् ।३शुक्रे राजनि०

**रोहन्त** पु० रुह-झच् । १वृक्षभेदे, २वृक्षमात्रे च । ३लताभेदे, ४लतायाञ्च स्त्री उणादि० गौरा० ङीष् ।

**रोहि** पु० रुह इन् । १बीजे, २वृक्षे च उणादि० । ३धार्मिके त्रि० सि० कौ० ।

**रोहिण** न० रुह-इनन् । पञ्चदशधा विभक्तदिनस्य नवमे भागे "कुर्यादारोहिणं बुधः" इति स्मृतिः । रोहिणी देवताऽस्य अण् । रौहिणमप्यत्र । २वटवृक्षे, ३रोहितकवृक्षे ४भूतृणे च पु० राजनि० ।

**रोहिणी** स्त्री रुह-इनन् गौरा०ङीष् । १स्त्रीगव्याम् अमरः अश्विन्यवधिके चतुर्थे २नक्षत्रे ज्यो० ३वसुदेवपत्न्यां बलभद्रमातरि, ४विद्युति, ५कटुकम्भ्यां, ६सोमवल्के

रेणुकासुत पु० ६त० । परशुरामे रेणुकातनयादयोऽप्यत्र ।

रेणुरूषित स्त्री रेणुभिः रूषितः । १गर्दभे त्रिका० स्त्रियां ङीष् । २धूलिधूसरे त्रि० ।

रेणुसार पु० रेणुरिव सारोऽस्य । १कर्पूरे त्रिका० । स्वप् । तत्स्वार्थे । [भावप्र० ।

रेतजा स्त्री रेत इव जायते जन–ड पृषो० । वालुकायां

रेतस् न० री–असुन् तुट् च । पुंसो रक्तादिपरिपाकजन्ये देहस्थे मज्जहेतुके चरमधातौ १शुक्रे शिववीर्ये २पारदे च मेदि० । [मेदि० ।

रेत्र न० री–त्र । १रेतसि २पीयूषे ३पटवासे ४सूतके च

रेप शब्दे अक० गतौ सक० भ्वा० आत्म० सेट् । रेपते अरेपिष्ट ऋदित् चङि न ह्रस्वः ।

रेप त्रि० रेप–अच् । १निन्दिते २क्रूरे ३कृपणे च मेदि० ।

रेफ पु० र+इफ । १रकारात्मके वर्णे । रिफ–अच् । २कुत्सिते त्रि० अमर० । [४कृपणे च शब्दर० ।

रेफस् त्रि० रेप–असुन् पस्य फः । १क्रूरे २अधमे, ३दुष्टे

रेव(व) गतौ सक० प्लुतौ अक० भ्वा० आ० सेट् । रेव(व)ते अरेवि(वि)ष्ट । ऋदित् चङि न ह्रस्वः ।

रेभ शब्दे भ्वा०आत्म०अक०सेट् । रेभते अरेभिष्ट । ऋदित् चङि न ह्रस्वः । [१बलरामश्वशुरे राजभेदे हरिवं० ।

रेवत पु० रेव–अतच् । १जम्बीरे जटा० २आरग्वधे शब्दचि०

रेवती स्त्री रेवतस्यापत्यम् रेवत्यादीति निर्देशात् न वृद्धिः । १रेवतराजकन्यायां बलदेवपत्न्याम् । रेव–अतच् गौ० ङीष् । अश्विन्यवधिक सप्तविंशतिसंख्याते २नक्षत्रे, ३तत्संख्यायां, ४मातृकाभेदे मेदि० । ५स्त्रीगव्याम् वलयणा० ६नदीभेदे, ७दुर्गायाञ्च देवीपु० । दरेवतीपदघटिताया ऋचि च "एतस्यैव रेवतीषु वारवन्तीयम्" श्रुतिः । ८पशुममनुपत्न्याम् । [१६१पृ० दृश्यम् ।

रेवतीभव पु० ७त० । शनैश्चरे हेमच० । भगदैवतशब्दे

रेवतीरमण पु० रेवतीं रमयति रम–णिच् ल्यु । बलरामे । ६त० । रेवतीशादयोऽप्यत्र । [एतत् दृश्यम् ।

रेवत्यादि पु० अपत्यार्थे ठक्प्रत्ययनिमित्ते शब्दगणे । पा०ग०

रेवन्त पु०रेव भच् ।।गुह्यकाधिपतौ २सूर्यपुत्रभेदे च वह्निपु० ।

रेवा स्त्री रेव–अच् ।।नर्मदाख्यनद्याम् अमर । २कामपत्न्यां २नीलीवृक्षे च मेदि० ४दुर्गायां देवीपु० ।

रेष कूजने(चोटकशब्दे) भ्वा० आत्म० अक० सेट् । रेषते अरेषिष्ट । ऋदित् चङि न ह्रस्वः ।

रै शब्दे भ्वा० पर० अक० अनिट् । रायति अरासीत् ।

रै पु० रा–डै । १धने २स्वर्णे अमरः । इगन्ते शब्दर० अस्य इकारादौ सुपि याकृतम् राभ्यामित्यादि । [पानादौ० ।

रैत्य त्रि० रीतेः पित्तलस्य विकारः रीति+ष्यञ् । पित्तलमये

रैवत पु० रेवत्या नद्या अदूरो देशः अण् । द्वारिकासमीपस्थे १पर्वतभेदे २स्वर्णालुकन्दे, ३शिवे मेदि० । ४दैत्यभेदे भरतधि० । रेवत्यां भवः अण् । ५चाक्षुषस्य मनुषु पञ्चमे मनुभेदे । ६शनैश्चरे च । [रेवतवृक्षे न० राजनि० ।

रैवतक पु० रैवतएव स्वार्थे क । १रैवतपर्वते हेमच० २पा-

रोक न० रु–कन् तस्य नेत्वम् । १छिद्रे अमरः "तस्मै रोक च योकं चेति" सि०त० । २नौकायाम् ३चले त्रि० मेदि० रुच–घञ् नि० कुत्वम् । क्रयकाले मूल्यदानेन क्रयात्मके ४क्रयभेदे ५दीप्तौ च पु० मेदि० ।

रोग पु० रुज–घञ् । १धातुवैषम्यजाते व्याधौ राजनि० २कुष्ठौषधे च (कुड़) मेदि० । [च ३रोगनाशके त्रि० ।

रोगघ्न न० रोगं हन्ति हन–टक् । १औषधे, २वैद्यकशास्त्रे

रोगराज पु० ६त० टच् समा० । राजयक्ष्मव्याधौ राजनि० ।

रोगलक्षण न०रोगो लक्ष्यते ज्ञायतेऽनेन लक्ष–करणे ल्युट् । रोगानुमापके धातुवैषम्यहेतुके चिह्नभेदे निदाने राजनि० "रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता । रोगा दुःखस्य दातारो ज्वरप्रभृतयो हि ते । ते च स्वाभाविका केचित् केचिदागन्तवः स्मृता । मानसाः केचिदाख्याताः कथिताः केऽपि कायिकाः" । तत्र स्वाभाविकाः शरीरस्वभावादेव जाताः क्षुत्पिपासाक्षुत्पुप्रादिजरामृत्युप्रभृतयः अथ वा स्वस्वभावादुत्पन्नजौता स्वाभाविकाः सहजा इति यावत् । ते च जन्मान्धत्वादयः । आगन्तवोऽभिघातादिजनिताः । अथ वा जन्मोत्तरभाविनः कामक्रोधलोभमोहभयाभिमानदैन्यपैशुन्यशोकविषादेर्ष्याऽसूयामात्सर्यप्रभृतयः । अथ वा उन्मादापस्मारमूर्च्छाभ्रममोहतमःसंन्यासप्रभृतयः । कायिकाः पाण्डुरोगप्रभृतयः "कर्मजाः कथिताः केचिद्दोषजाः सन्ति चापरे । कर्मदोषोद्भवाश्चान्ये व्याधयस्त्रिविधाः स्मृताः" । तत्र कर्मजा व्याधयः यत्प्राक्तनदुष्कर्मप्रबलदुःखभोगनाश्यम् प्रायश्चित्तनाश्यं वा ततो जाताः नतु दुष्टवातादिदोषेण जनितास्तथा । "यथाशास्त्रन्तु निर्णीतो यथाव्याधि चिकित्सितः । न शमं याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः" । दोषजाः । मिथ्याहारविहारप्रकुपितवातपित्तकफजाः । ननु मिथ्याहारविहारादिकमपि प्राक्तनदुष्कृतेन नैरुज्य इत्युत

विष्टरे। "ऊर्ध्वकेशो भवेत् ब्रह्मा लम्बकेशस्तु विष्टरः। दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः" म० त०। "केशोऽलायम्" रघु०। २दीर्घकेशयुक्ते त्रि०। कर्म०। ३दीर्घे केशे च पु०।

लम्बदन्ता स्त्री लम्बोदीर्घः दन्त इव बीजकण्टको यस्य। १सिंहलद्वीपभवपिप्पल्याम् राजनि०। २दीर्घदन्तयुक्ते त्रि० कर्म०। ३दीर्घे दन्ते पु०।

लम्बन न० लबि–ल्यु। नाभिदेशपर्य्यन्तं १लम्बमाने मा ल्यादौ अमरः। भावे ल्युट्। २आश्रयणे न०।

लम्बवीजा स्त्री लम्ब दीर्घं वीजं यस्याः। सिंहलदेशजात-पिप्पल्याम् राजनि०।

लम्बा स्त्री लम्बते लबि–अच्। १तिक्तालाबुम्याम् (तितलाउ) २लक्ष्म्याम् ३गौर्य्याञ्च मेदि० ४दक्षकन्याभेदे ५हिमालय-कन्याभेदे च हरिवं०।

लम्बोदर पु० लम्बं दीर्घमुदरं यस्य। १गणेशे अमरः। २तारा-नाम्न्या देव्या स्त्री तन्त्रम् ङीष्। ३दीर्घोदराद्ये त्रि०।

लम्बो(म्बौ,ष्ठ पुंस्त्री० लम्बौ ओष्ठौ यस्य। उष्ट्रे त्रिका० स्त्रियां ङीष्। [अलयिष्ट अलयिध्वम्।

लय गतौ भ्वा० आत्म० सक० सेट्। लयते अलयिष्ट।

लय पु० ली–अच्। १संश्लेषे २विनाशे ३नृत्यगीतवाद्यानाम् एकतानतारूपे साम्ये च मेदि०। लीयतेऽत्र। सर्वभूत-कारके ४प्रलयकाले शब्दर० ५ईश्वरे च। अस्य लयभेदाश्च "द्विपदी स्यादुत्कलितिका भंगिका छिन्नखण्डिका। वाम भ्रमस्ततोऽप्युक्ता खण्डधारा फडूत्कृतः। जम्भोट्टिका-कलितकः सण्डकः खुरिकस्तथा। कथितस्तुरगोऽथ चतु-रगोऽथ मर्त्तकः। लास्यं मधुन्दावनावलम्बनन्दघटी-त्यपि। कादम्बचर्चरी चक्रा भिन्नोऽथ वलितस्ततः। अतिचित्रः समश्च वलितोऽर्द्धवस्तथा। आविद्धस्तु टङ्कककस्ततश्चित्रविचित्रकौ। आन्ती विकतधारा च सुगमोऽथ विलोलकः। रमणीयस्ततश्चैव करकण्टक संज्ञकः। चत्वारिंशदिमे प्रोक्ता लया लयविशारदैः। ययैव वन्द्यो भगवान् लये लीनो जनार्दनः" सङ्गीतदा०।

लर्व गतौ भ्वा० पर० सक० सेट्। लर्वति अलर्वीत्।

लल ईप्सायाम् चु०उभ०सक०सेट्। लालयति-ते अलीललत् त

लल ईप्सायाम् अद० चु०उभ०सक०सेट्। ललयति ते अल ललत् त।

ललज्जिह्व पु० ललन्ती आस्वादायास्वादनाय चलन्ती जिह्वा यस्य डस्य लः। १उष्ट्रे, २कुक्कुरे, ३हिंस्रप्राणिनि त्रि०मेदि० स्त्रियां जातित्वात् ङीष्। ४चलज्जिह्वायुक्ते त्रि०। स्त्रियां टाप्।

ललन न० लड–ल्युट्, डस्य लः। १चालने। २केलौ हेमच० ३वाले ४सालवृक्षे ५पियालवृक्षे च पु० राजनि०। पु० लल-ल्यु। ६जिह्वायां ७नार्य्याञ्च स्त्री मेदि०।

ललनाप्रिय पु० कर्म०। १कदम्बे। २ह्रीवेरे न० राजनि०। ३जिह्वाप्रिये, ४रमणीवल्लभे च त्रि०।

ललन्तिका स्त्री लड–झच् स्वार्थे कः अत इत्वम् डस्य लः। नाभिदेशपर्य्यन्त लम्बमाने १माल्यादौ अमरः। २गोधायां शब्दच०।

ललाट न० लड–अच् डस्य लः ललमटति अट-अण्। भाल-काध-स्थेऽङ्गभेदे (कपाल) अमरः।

ललाटन्तप पु० ललाट तापयति तप–णिच् खश्–मुम्। १सूर्य्ये सि०कौ०। २ललाटतापके त्रि० "स्वपितललाट-न्तपनिष्ठुराष्टरा" नैषधम्।

ललाटपट्ट पु० ललाट पट्टमिव विस्तीर्णत्वात्। प्रशस्त-ललाटे ललाटफलकादयोऽप्यत्र।

ललाटिका स्त्री ललाटे आबध्यते ठन्। १ललाटभूषणे (टीका) अमरः २ललाटस्थे चिह्ने च।

ललाम न० लल–अच् तममति अम–अण्। १प्रधाने, २ध्वजे ३शृङ्गे ४वालधौ ५चिह्ने ६भूषायां ७रम्ये ८तिलके ९घोटके १०प्रभावे च मेदि०। नान्तत्वमप्यस्य क्वचित्।

ललामक न० ललामं तिलकमिव इवार्थे कन्। ललाट-पर्य्यन्तं लम्बमाने माल्यभेदे अमरः।

ललित न० लल-क्त। १शृङ्गारजगुणे चेष्टाभेदे "सुकुमार-तयाऽङ्गानां विन्यासो ललितं भवेत्" सा०द०। २सुन्दरे, ३ईप्सिते च त्रि० अमरः ४स्वरभेदे पु० सङ्गी०। लड क्त डस्य लः। ५चालने न०। ६कस्तूर्य्यां ७नार्य्यां च स्त्री राजनि०। ८नदीभेदे सा च नदी कालिकापु० ८१ अ० उक्ता। ९दुर्गायाम् "या दुर्गा सैव ललिता" पद्मपु० पाता०। १०राधासखीभेदे च।

ललितासप्तमी स्त्री ललिताप्रिया सप्तमी। ललितापूजाङ्गे १भाद्रशुक्लसप्तम्याम्, तद्दिनकर्त्तव्ये २व्रतभेदे च।

लव पु० लू–अप्। १लेशे २विनाशे ३छेदने ४श्रीरामपुत्रे मेदि० ५कालपरिमाणभेदे काष्ठाद्वये हेमच० ६गोलाङ्गूल-लोम्नि, ७वाले केशे च ८जातीफले न० शब्दच०। ९लवङ्गे १०कामञ्जके ११ईषदर्थे राजनि०। १२लावकपक्षिणि पुंस्त्री० राजनि०।

तद्गुणेनारनालेन दाहशीतज्वरापहम्"। वृहत् यथा "लाक्षारसाढके प्रस्थं तैलस्य विपचेत् भिषक्। मस्तु-षड्गुणसंयुक्तं पिष्ट्वा चात्र समावपेत्। शतपुष्पां हरिद्रां च मूर्वां कुष्ठं हरेणुकाम्। कटुकां मधुकां रास्नामश्वगन्धां च दारु च। मुस्तकं चन्दनं चैव पृथगक्षसमानकैः। तैलमेतैस्तु संसिद्धमभ्यङ्गात् मारुतापहम्। विषमाख्यान् ज्वरान् सर्वानाश्वेव प्रशमं नयेत्। कासं श्वासं प्रतिश्यायं कण्डूं दौर्गन्ध्यगौरवम्। त्रिकपृष्ठग्रहं शूलं गात्राणां स्फुटनं तथा। पापालक्ष्मीप्रशमनं सर्वदाहनिवारणम्। अश्विभ्यां निर्मितं सम्यक् तैलं लाक्षादिकं महत्" सखबोधः। [राजनि०

**लाक्षाप्रसाद** पु० लाक्षाया प्रसादो यस्य। पट्टिकालोध्रे

**लाक्षाप्रसाधन** न० प्रसाध्यते भूष्यतेऽनेन ल्युट् लाक्षा तद्रूप एव प्रसाधनमस्य। १रक्तलोध्रे अमरः।

**लाक्षारस** पु० लाक्षानिःसृतो रस इव। अलक्तकरसे।

**लाख** शोषे भूषणे दाने वारणे च सक० सामर्थ्ये अक० भ्वा० पर० सेट्। लाखति अलाखीत् ऋदित् चङि न ह्रस्वः।

**लाघ** सामर्थ्ये भ्वा० आ० अक० सेट्। लाघते अलाघिष्ट। ऋदित् चङि न ह्रस्वः।

**लाघव** न० लघोर्भावः अण्। १लघुत्वे २आरोग्ये च राजनि०

**लाङ्गल** न० लगि-कलच् पृषो० वृद्धिः। स्वनामख्याते १भूमिकर्षके पदार्थे अमरः। २लिङ्गे त्रिका० ३पुष्पभेदे ४तालवृक्षे ५गृहदारुणि च मेदि०। ((हल) अमर०।

**लाङ्गलदण्ड** पु० ६त०। लाङ्गलमध्यस्थे काष्ठमये दण्डे

**लाङ्गलपद्धति** स्त्री लाङ्गलजाता पद्धतिः रेखा। सीतायाम् लाङ्गलजातक्षेत्रस्थभूमिरेखायाम् अमरः।

**लाङ्गलिकी** स्त्री लाङ्गलमिवाकारोऽस्त्यस्याः ठन् गौ० ङीष्। (विषलाङ्गला) १वृक्षभेदे अमरः। तत्र भव अण्। २विषभेदे पु० हेमच०।

**लाङ्गलिन्** पु० लाङ्गलं प्रहरणसाधनत्वेनास्त्यस्य इनि। १बलरामे शब्दर०। लाङ्गलदण्ड इव दीर्घः आकारोऽस्त्यस्य इनि। २नारिकेलवृक्षे अमर०।

**लाङ्गली** स्त्री लाङ्गलाकारः पुष्पमस्त्यस्याः अच् गौरा० ङीष् (काँचड़ा) शाकभेदे अमरः।

**लाङ्गूल** न० लगि-ऊलच् पृषो०। पशूनां पायूपरिस्थिते रोमपुच्छे शब्दरत्ना० २शेफे मेदि० ३कुसुमे त्रिका०।

**लाङ्गूलिका** स्त्री लाङ्गूलाकारोऽस्त्यस्याः ठन्। १पृश्निपर्ण्याम् राजनि० [तदाकारपुष्पयुते २माषपर्ण्यां च राजनि०।

**लाङ्गूलिन्** पु० लाङ्गूलमस्त्यस्य इनि। १वानरे शब्दच०

**लाछ** लक्षणे भ्वा० पर० सक० सेट् इदित्। लाञ्छति अलाञ्छीत्। [दयप्ययम्। लाछति अलाछीत्।

**लाज** भर्त्सने भ्वा० पर० सक० सेट्। लाजति अलाजीत्। इदित्।

**लाज** न० लज-अच्। १उशीरे २आर्द्रतण्डुले पु० मेदि०। ३भृष्टधान्ये (खइ) पु० ब० व० अमर। स्त्रीत्वमप्यत्र मेदि०।

**लाञ्छन** न० लाञ्छ्यते लाछि-कर्मणि ल्युट्। १चिह्ने २नामनि च मेदि० भावे ल्युट्। ३अङ्कने।

**लाट** पु० लट-संज्ञायां घञ्। १देशभेदे २वस्त्रे अमरः ३जीर्णालङ्कारे शब्दर०। ४विदग्धपुरुषे च शब्दच०।

**लाटानुप्रास** पु० अलङ्कारोक्ते शब्दालङ्कारभेदे अनुप्रासशब्दे १७६पृ० अलङ्कारशब्दे च ३८६ पृ० दृश्यम्।

**लाड** क्षेपे चुरा० उभ० सक० सेट्। लाडयति ते।

**लाभ** पु० लभ्यते लभ-कर्मणि घञ्। १मूलधनादितोऽधिके लभ्यमाने धने अमरः। भावे घञ्। २प्राप्तौ।

**लामज्जक** न० लायते ला-क्विप् लाः आदीयमानः मज्जा सारो यस्य कप्। वीरणमूले अमर।

**लालन** न० चु० लल-ल्युट्। स्नेहपूर्वकपालने।

**लालसा** स्त्री लस-लस् इच्छायां यङ् लुक् भावे अ। १अतिशयेच्छायाम् अमरः। २गर्भिणीदोहदे हेमच०। ३याच्ञायां ४औत्सुक्ये च मेदि०। कर्त्तरि अच्। ५लोले त्रि० हेमच०।

**लाला** स्त्री पु० लल-णिच् अच्-टाप्। मुखजलस्रवे अमर०।

**लालाटिक** त्रि० ललाटं प्रभोर्भाग्यं पश्यति ठञ्। १प्रभुभाग्यापजीविनि कार्य्याक्षमे अमरः। ललाटात् ललाटस्थभाग्यात् आगतः सम्बद्धो वा ठञ्। २भाग्याधीने त्रि० "प्राप्तिस्तु लालाटिकी" इत्युद्भटः। ३ललाटसम्बन्धिनि त्रि०।

**लालाविष** पु० लालाया विषमस्य। १लूतादौ कीटे हेमच० कीटशब्दे २०५६ पृ० दृश्यम्। [हेमच०।

**लालास्राव** लालां स्रावयति स्रु णिच् अण्। लूताकीटे

**लालित्य** न० ललितस्य भावः ष्यञ्। १सौन्दर्य्ये २मनोहरत्वे "नैषधे पदलालित्यम्" इत्युद्भट।

**लाव** पुंस्त्री० लू-कर्त्तरि संज्ञायां घञ्। १पक्षिभेदे अमर। स्त्रियां ङीष्। स्वार्थे क। तत्रैव भावे घञ्। २छेदने।

**लावण** न० लवणेन संस्कृतम् अण्। लवणसंस्कृते ओदनादौ

**लावणिक** न० लवणेन संस्कृतम् ठण्। १लवणेन संस्कृते ओदनादौ हेमच०। लवणं पण्यमस्य ठण्। २लवणविक्रयोपजीविनि वणिग्भेदे च।

**लावण्य** न० लवणस्य भावः ष्यञ्। लवणत्वे "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते" उज्ज्वलमणुक्ते देहसौन्दर्य्यभेदे च।

**लासिका** स्त्री लस-ण्वुल्। नर्त्तक्याम् अमरः। पृषो० लासकीत्यप्यत्र तट्टीका।

**लास्य** न० लस-ण्यत्। १नृत्ये अमरः। २वाद्यनृत्यगीतित्रिके मेदि०। "स्त्रीनृत्यं लास्यमुच्यते" इत्युक्ते ३स्त्रीनृत्ये च। स्वार्थे क। तत्रैव।

**लिकुच** पु० लकुच-पृषो० इत्वम्। (माँदार) वृक्षे अमरः।

**लिक्षा(क्षा)** स्त्री लिश-गतौ क्स पक्षकण्ठादि पृषो० वा काप। १यूकाण्डे शब्दर०। "जालान्तरगते भानौ यच्चाणु दृश्यते रजः। तैश्चतुर्भिर्भवेल्लिक्षा" इत्युक्ते २परिमाणभेदे च।

**लिख** लेखने तुदा०पर०सक०सेट्। लिखति अलेखीत्। कुटादिरप्ययम् तेन लिखनमिति सिद्धम्।

**लिख** गतौ भ्वा०पर०सक०सेट् इदित्। लिङ्खति अलिङ्खीत्

**लिखन** न० कु० लिख-भावादौ ल्युट्। १लेखने २लिपौ च

**लिखित** न० लिख-भावे क्त। १लेखने। आधारे क्त। २लिपौ अमर। विवादे अर्थसाधके ३पत्रे च "प्रमाणं लिखितं भुक्तिः" स्मृतिः। लेख्यशब्दे दृश्यम्। ४स्मृतिकारके शङ्खमुनिभ्रातरि, मुनिभेदे पु०।

**लिग** गतौ भ्वा०पर०सक०सेट् इदित्। लिङ्गति अलिङ्गीत्।

**लिग** चित्रीकरणे चुरा०उभ०सक०सेट इदित्। लिङ्गयति ते अलिलिङ्गत् त।

**लिङ्ग** पु० लिगि-अच्। १चिह्ने २पुंसोऽसाधारणचिह्ने उपस्थेन्द्रिये अमरः। ३अनुमानसाधने हेतौ ४सांख्योक्ते प्रधाने तस्याव्यक्तविवेकहेतुत्वात् तथात्वम् ५शिवमूर्त्तिभेदे मेदि० ६स्थाप्ये ७व्यक्ते शब्दनिष्ठे पदसाधुताप्रयोजके ८धर्मभेदे त्रिका० ९अर्थप्रकाशनसामर्थ्ये च। "अमता च लिङ्गमिति" मीमांसकाः।

शब्दधर्मलिङ्गं चास्माभिः शब्दार्थरत्ने निरूपितं यथा "लिङ्गत्वञ्च प्राकृतगुणगतावस्थात्मको धर्म एव तद्विशेषश्च पुंस्त्वनपुंसकत्वादिः। तथा हि सर्वेषां त्रिगुणप्रकृतिकार्य्यतया शब्दानामपि तथात्वेन गुणगतविशेषावस्थादेषु लिङ्गविशेष इति कल्प्यते स च विशेषः शास्त्रे इत्यमभ्यधायि। "विकृतसत्त्वादीनां तुल्यरूपेणावस्थानात् नपुंसकत्वं सत्त्वाधिक्ये पुंस्त्वम् अल्पत्वे (रजआधिक्ये) स्त्रीत्वमिति"। एवञ्च लिङ्गस्य शब्दधर्मत्वेऽपि शब्देन सहार्थाभेदारोपात् असति बाधके अर्थेऽपि साक्षात् तत्पारतन्त्र्येण वा सर्वत्र तस्य विशेषणत्वम् शाब्दबोधे शब्दभानस्येष्टत्वाच्च शब्दस्य नामार्थतावत् तद्गतलिङ्गस्यापि नामार्थतौचित्यात् "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति हर्य्युक्ते "शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा। नो चेत् श्रोत्रादिभिः सिद्धोऽप्यसावर्थेऽवभासते" हर्य्युक्तेश्च शब्दानां नामार्थतावगतेः। तथा प्रातिपदिकार्थाभेदविवक्षाया तु श्रोत्रादिभिरेव सिद्धं ज्ञानं सत् अर्थे प्रकारतया भासते इति तदर्थः। युक्तञ्चैतत् पुंलिङ्ग शब्द इति व्यवहारात् "स्वमोर्नपुंसकादिति" पा०सूत्रे शब्दस्यैव नपुंसकत्वव्यपदेशात् दारानित्यादौ पुंस्त्वान्वयबाधाच्च लिङ्गस्य शब्दधर्मत्वमन्यथैतेषु लिङ्गाद्यनन्वयापत्तेर्व्यवहारस्वरूपनिर्देशासङ्गत्यापत्तेश्च। तथा अर्थभेदाच्छब्दभेदवत् लिङ्गभेदादपि शब्दभेद इति कल्प्यते प्रागुक्तधर्मविशेषरूपभेदकसद्भावात्। उक्तञ्च भाष्ये "एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्वमिति"। एवञ्च तटादिशब्दानामनेकलिङ्गत्वव्यवहारः समानानुपूर्वीकत्वेन वस्तुतो भिन्नानामेव भिन्नलिङ्गत्वमिति दिक्"।

अर्थप्रकाशनसामर्थ्यरूपलिङ्गन्तु द्वितीयादिश्रवणे तत्तन्मन्त्रप्रकाश्यार्थे विनियोगसाधकं यथा "बर्हिर्देवसदनं दामीति" अत्र दामीति पदस्य दा लवने इत्यस्माद्धातोः सिद्धस्य छेदनप्रकाशनसामर्थ्यात् बर्हिरित्यस्य चास्तरदर्भप्रकाशनसामर्थ्यात् दर्भच्छेदने समुदायमन्त्रस्य विनियोगोऽवगम्यते" तत्त्वबोध०। प्रत्यक्षद्वितीयाश्रवणे तु क्वचिद्वर्हिविनियोगस्त्वच्यते "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" जै० सू०। यथा "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" श्रुतिः ऐन्द्री च ऋक् "कदाचन स्तरीरसि नेन्द्र ! दाशुषे" अस्य मन्त्रस्य इन्द्रप्रकाशनसामर्थ्यम् तदेतत् निरूपितं तत्त्वबोधन्याम् "तथा हि गार्हपत्यमिति द्वितीयारूपप्रत्यक्षश्रुत्या गार्हपत्याग्निगतं क्रियाजन्यप्रीतिफलाश्रयत्वरूपं कर्मत्वं साक्षाद्बोधितं तथा च तस्य देवतात्वं श्रुतिमात्रं क्रियाजन्यप्रीतिभागित्वेनोद्देश्यत्वस्यैव देवतात्वादिति गार्हपत्याग्नेरुपास्यमानस्य शेषितावगम्यते ऐन्द्र्येति तृतीयाश्रुत्या करणत्वबोधनादुपस्थानशेषत्वमवगम्यते मन्त्रस्य नैन्द्र्या अपि शेषत्वमित्युभयोरुपस्थाने देवतात्वश्चावगम्यते तथा च विरोधः न ह्यन्यप्रकाशकमन्त्रेणान्योपस्थ

गमनाधिकायाः, सख्याःपुरोऽत्र निजचित्तविनोदवुद्ध्या, आलापवेशगतिहास्यविलोकनाद्यैः प्राणेश्वरानुकृतिमाकलयन्ति लीलाम्" उज्ज्वलमणयुक्ते ४प्रियानुकरणे च ।

लीलावती स्त्री लीला+अस्त्यर्थे मतुप् मस्य वः ।१विलासवत्यां स्त्रियां, भास्कराचार्यस्य २पुत्र्यां, तत्कृते ३अङ्कग्रन्थभेदे मथुरानाथाचार्य्यस्य ४भार्य्यायां तन्नामके न्यायशास्त्रप्रसिद्धे "नाथः सृजतीत्यादिके" न्यायमतसिद्धपदार्थप्रतिपादके ५ग्रन्थभेदे, पुराणप्रसिद्धे ६वेश्याभेदे च त्रि० न० मतृत्सूपु० । [२देववने च त्रिका०।

लीलोद्यान न० लीलार्थमुद्यानम् । १क्रीडनार्थे आरामे,

लुक्कायित त्रि० लुच्यते लुञ्च अपनयने क्विप् लुक् काको यस्य तादृश इवाचरति लुक्काय+क्विप्-क्त । अन्तर्हितदेहे

लुज कथने अद्भधातोरर्थे च चुरा० उभ०सक० सेट् इदित् । लुञ्जयति ते अलुलुञ्जत् त ।

लुञ्चित त्रि० लुञ्च-णिच्-क्त । अपसारिते दूरीकृते ।

लुट दीप्तौ अक० प्रतिघाते सक० भ्वा० आत्म० सेट् । लोटते लृदित् लुङि उभ० अलुटत् अलोटिष्ट ।

लुट हरणे भ्वा०पर०सक०सेट् इदित् । लुण्टति अलुण्टीत् ।

लुट दीप्तौ चु०उभ०सक०सेट् । लोटयति ते अलूलुटत् त ।

लुट विलोडने, हरणे च दिवा० सक० पर०सेट् । लुट्यति अलुटत् । ऌदित् चङि वा ह्रस्वः ।

लुट विलोडने सम्बन्धे च दिवा० सक०पर०सेट् । लुट्यति अलोटीत् । अत्रार्थे भ्वादिरपि । लोटति ।

लुट गतौ चौर्य्ये च सक० स्वङ्गाभावे आलस्ये च अक० भ्वा० पर० सेट् इदित् । लुण्टति अलुण्टीत् ।

लुठ प्रतिघाते भ्वा० आ० लुङि उभ० सक० सेट् । लोठते । अलुठत् अलोठिष्ट । ऌदित् चङि न ह्रस्वः ।

लुठ उपघाते भ्वा० पर० सक० सेट् । लोठति अलोठीत् ।

लुठ लोठे तु० कु० प० अक सेट् । लुठति अलुठीत् ।

लुठ चौर्य्ये चु० उभ०सक०सेट । लोठयति ते अलूलुठत् त ।

लुठन न० कु० लुठ-ल्युट् । अश्वादेर्भूम्यादौ श्रमापनयनार्थं पुनः पुनरङ्गचालने (चोटा) त्रिका० ।

लुठित त्रि० लुठ क्त । भूमौ कृतभूरिदेहपरावर्त्तने ।

लुड मन्थने भ्वा०पर०सक०सेट् । लोडति अलोडीत् ।

लुड संहतौ सक० क्षेपे अक० तु० कु० पर० सेट् । लुडति अलुडीत् । लुडनम् ।

लुण्ट प्रस्ताय चौर्य्ये च वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । लुण्टयति ते लुण्टति अलुलुण्टत् त अलुण्टीत् । कर्मणि लुण्ट्यते ।

लुण्टक पु० लुण्ट-ण्वुल् । (नटिया) शाकभेदे शब्दच० ।

लुण्टाक त्रि० लुण्टि षाकन् । चौरे स्त्रियां ङीप् ।

लुण्ठक त्रि० लुठि-ण्वुल् । चौरे ।

लुण्ड चौर्य्ये चु०उ०सक०सेट् । लुण्डयति ते अलुलुण्डत् त

लुथ वधे सक० क्षोभे अक० भ्वा० पर० सेट् इदित् । लुन्थति अलुन्थीत् ।

लुन्च अपनयने भ्वा०पर०सक०सेट् । लुञ्चति अलुञ्चीत् ।

लुप छेदने विनाशने च तु०मुचा०उभ०सक० अनिट् । लुम्पति ते अलुपत् अलुप्त । ऌदित् चङि वा ह्रस्व । अलूलुपत् त अलुलोपत् त । [अलोपीत् नित्यमङ् इत्येके ।

लुप आकुलीभावे दिवा० पर० अक० सेट् । लुप्यति अलुपत्

लुप्त न० लुप-क्त । १अपहृतधने । २छिन्ने ३नष्टे त्रि० ।

लुब अर्द्दने वा चु० उभ० पक्षे भ्वा० पर० सक०सेट् इदित् । लुम्बयति ते लुम्बति । अलुलुम्बत् त अलुम्बीत् ।

लुब्ध पु० लुभ-क्त । १व्याधे । २लम्पटे शब्दर० ३लोलुभे च मेदि० । स्वार्थे क । तत्रैव । लुब्ध इव कायति कै-क । लुब्धक व्याधाकारताराभेदे खगोलशब्दे २४२२पृ० दृश्यम् ।

लुभ विमोहने तु० पर० सक० सेट् । लुभति अलोभीत् ।

लुभ आकाङ्क्षायां दि० पर० सक० सेट् । लुभ्यति । इरित् अलुभत्-अलोभीत् ।

लुल विमर्द्दने भ्वा० पर० सक० सेट् । लोलति । अलोलीत् ।

लुलाप पुंस्त्री० लुल मन्थं क तमाप्नोति आप् । महिषे अमर० स्त्रियां ङीप् । [लुलितपतत्त्रिमालम्" भट्टिः ।

लुलित त्रि० लुल क्त । १आन्दोलिते, २चालिते च "अथ

लुष चौर्य्ये भ्वा० पर० सक० सेट् । लोषति अलोषीत् ।

लुष हिंसायां सौ० पर० सक० सेट् । लोषति अलोषीत् ।

लुह आकाङ्क्षायां भ्वा० पर० सक० अनिट् । लोहति अलुक्षत् । [लावीत् ।

लू छेदने क्र्या०प्वा० उभ० सक० सेट् । लुनाति लुनीते अ-

लूता स्त्री लू तक् । कीटभेदे (माकडसा) अमर० । स्वार्थे क अत इत्त्वम् । तत्रैव । २पिपीलिकायां ३रोगभेदे (मर्म्मव्रणे) मेदि० ।

लून त्रि० लू-क्त निष्टातस्य न । छिन्ने अमरः ।

लूम न० लू-मक् । लाङ्गूले अमर । [लुषत् ।

लूष वधे स्तेये च चु० उभ० सक० सेट् । लूषयति ते अलू-

लेख पु० लिख्यते पूज्य त्वेन चित्रादिपटेऽसौ लिख-कर्मणि घञ् । १देवे अमर० । भावे घञ् । २लेखने । कर्मणि घञ्

षर्ष्टसहस्राणि दानाच्छेदफलं लिखेत्। घातं नयेति लि खितं सन्धिविग्रहलेखकैः। सत्कृष्टं वर्षमासादिधनाध्यक्षा- क्षरान्वितम्। एवं विध राजकृतं शासनं समुदाहृतम्। देशादिकं यस्य राजा लिखितेन प्रयच्छति। सेवा- शौर्य्यादिना तुष्टः प्रसादलिखितं हि तत्। पूर्वोत्तरक्रिया- वादनिर्णयान्ते यदा नृप। प्रदद्याज्जयिने लेख्य जयपत्रं तदुच्यते"। षष्णुपारिषो अमुकशाखा ध्यायिने। सर्वभागविवर्जितम् अकुराजपुरुषादि देशप्रवेशरहितम्। योगीश्वरः शासनपत्रमाह "भूमिं दत्त्वा निबन्धं वा कृत्वा लेख्यन्तु कारयेत्। आगामि भद्रनृपतिपरिज्ञानाय पार्थिवः। पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम्। अभिलेख्यात्मनोऽवम्यानात्मानञ्च महीपतिः। प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम्। स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरमिति"। इयन्ति वर्षाण्यमुकभारादावियन्ति पर्णान्यमुकादीन्यस्मै देयानीति राज्ञो नियतदातव्यानिबन्धं कारयेत् सन्धिविग्रहाद्यधि कारिद्वारेणार्थात्। तथा च व्यासः "राज्ञा तु स्वयं सन्दिष्टः सन्धिविग्रहलेखकः। ताम्रपट्टे पटे वापि प्रविलिखेद्राजशासनमिति"। प्रतिगृह्यत इति प्रतिग्रहो भूम्यादिस्तत्परीमाणं प्रतिग्रहपरीमाणं उपवर्णस्य दीर्घो नाऽक्षरकः। दीयत इति दानम् भूम्यादि तस्य च्छेद क्षेत्रादेर्मर्य्यादा तदुपवर्णनं तत्रिर्देशम्। आत्मकत्र्यादीन् अभिलिखेत्यन्वयः। इदञ्च साधुशब्दैरेव लेखनीयं न लौकिकशब्दनियमः। तथा च संग्रहकारः "राजा स्वहस्तचिह्नेन राजादेशेन संयुतम्। युक्तं राजाभि धानेन मण्डितं राजमुद्रया। अविप्लुतपदश्लोकसम्पू- र्णावयवाक्षरम्। शासनं राजदत्तं स्यात् सन्धिविग्रह लेखके"। अन्तिमपादोऽसद् लिखितमिति शेषः। तस्मि न्निव लौकिके देशभाषादिप्रतिषेधो नेत्याह नारदः "देशाचाराविरुद्धं यद्व्यक्ताधिविधिलक्षणम्। तत्प्रमाण स्मृतं लेख्यमविलुप्तक्रमाक्षरमिति"। शासने राज्ञा स्वहस्तेनैव स्वमतं लेख्यमित्याह व्यासः "सन्निवेश्य प्रमाणञ्च स्वहस्तेन लिखेत्स्वयम्। मतं मेऽमुकपुत्रस्य अमुकस्य महीपतेः"। सन्निवेश प्रमाणञ्चेत्यस्य पूर्ववाक्ये प्रविलिखेदित्यनेनान्वयः तयोरात्मस्वहस्तलिखनानियमात्। इदञ्च राज्ञा प्रतिग्रहीत्रे समर्पणीयमित्याह विष्णुः "पटे वा ताम्रपट्टे वा लिखितं स्वमुद्राङ्कितमागामि नृपतिपरिज्ञानार्थं दद्यादिति"। अतएव दत्तापहार-

दोषप्रतिपादनमपि आगामिनृपप्रत्यायनार्थं तत्रावश्यक- मित्यप्याह व्यासः "षष्टिवर्षसहस्राणि दानच्छेद- फलन्तथा। आगामिनृपसामन्तबोधनायाभिलेखयेत्" इति। षष्टिवर्षसहस्राणीत्यादि पुराणवचनप्रसिद्धन्दा नाच्छेदयोः दानापहारयोः स्वर्गादिनरकादिफलं लेखयेद्राजेत्यर्थः।"

लेख्यपत्त्र पु० लिख्यतेऽत्र ण्यत् लेख्यं पत्त्रं यस्य। १ताल- वृक्षे भरतः। कर्म०। २लेख्ये पत्रे न०। [लेपते अलेपिष्ट।

लेप गमने भ्वा० आत्म० सक० सेट् ऋदित्। अङि न ह्रस्वः।

लेप पु० लिप लेप-वा घञ्। १भोजने, २लेपने च मेदि०। कर्मणि घञ्। ३सुधायाम् (कलिचुन) विश्व। ४पिण्ड- दत्तपिण्डशेषे "लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्ड- भागिनः" स्मृतिः। [प्रलगण्डे पु० अमरः।

लेपक त्रि० लिम्पति लिप ण्वुल्। १लेपनकर्त्तरि २जातिभेदे

लेपन न० लिप-ल्युट्। (लेपा) इति ख्याते १व्यापारे। कर्मणि ल्युट्। २तुरुष्कनामगन्धद्रव्ये राजनि०।

लेय पु० सिंहराशौ ज्यो० त०।

लेलिहा स्त्री सर्वदेवजीवन्यासाङ्गे मुद्राभेदे तल्लक्षणं यथा "तर्ज्जनीमध्यमाऽनामा समं कुर्य्यादधोमुखीः। अना- मायां क्षिपेद्वृद्धामृज्वीं कृत्वा कनिष्ठिकाम्। लेलिहा नाम मुद्रेयं जीवन्यासे प्रकीर्त्तिता" तन्त्रसा०।

लेलिहान पु० लिह यङ् लुक् ताच्छील्ये चानश्। १शिवे शब्दर० २सर्पे पुंस्त्री० हेमच०। ३पुनःपुनर्लेहनकर्त्तरि त्रि० तारादेवतापूजाङ्गे अङ्गुल्यादिसन्निवेशविशेषरूपे ४मुद्रा- भेदे स्त्री। तल्लक्षणं यथा "वक्त्रं विस्तारितं कृत्वाऽधो जिह्वां च चालयेत्। पार्श्वस्थं मुष्टियुगलं लेलिहा- नेति कीर्त्तिता" तन्त्रसा०। [२स्वल्पे च।

लेश पु० लिश अल्पीभावे घञ्। १सूक्ष्मे २लवे अमरः।

लेष्टु पु० लिश-तुन्। लोष्टे अमरः। [लोष्टुभेदनोऽप्यत्र।

लेष्टुघ्न पु० लेष्टुं हन्ति हन-क्र। लेष्टभेदके मुद्गरे शब्दच०।

लेह पु० लिह-घञ्। १आहारे २आस्वादे जिह्वया रसा- स्वादनव्यापारभेदे (चाटा) च हेमच०। भावे ल्युट्। लेहन- मप्यत्र न०।

लेहिन पु० लिह-इनन्। टङ्कणे (सोहागा) हेमच०।

लेह्य त्रि० लिह ण्यत्। जिह्वया १आस्वाद्ये। २अमृते न० शब्दच०।

लैङ्ग न० लिङ्गमधिकृत्य कृतो ग्रन्थः अण्। अष्टादशसु महा- पुराणेषु एकादशे १महापुराणे। लिङ्गं तदाकारः

अस्त्यस्याः फलेषु अच् ङीप्। २लिङ्गिनीवृक्षे स्त्री राजनि॰ तस्येदमण्। ३लिङ्गसम्बन्धे त्रि॰ स्त्रियां ङीप्।

**लैङ्गिक** त्रि॰ लिङ्गेनानुमापकेन धूमादिना आपादितस्तत आगतो वा ठण्। लिङ्गादिभिः १कल्पिते २अनुमिते साध्ये लिङ्गोपहितलैङ्गिकभानमित्याचार्य्याः। अर्थप्रकाशसामर्थ्यलिङ्गेन कल्पिते ३मन्त्रादीनां तत्तत्कर्मादिविनियोगे च।

**लोक** दीप्तौ चु॰ उभ॰ सक॰ सेट्। लोकयति ते अलुलोकत् त।

**लोक** दर्शने भ्वा॰ आ॰ सक॰ सेट्। लोकते अलोकिष्ट लुलोके। ऋदित् चङि न ह्रस्वः। अलुलोकत् त।

**लोक** पु॰ लोक्यतेऽसौ लोक–घञ्। १भुवने भुवनशब्दे दृश्यम्। २जने च अमरः। भावे घञ्। ३दर्शने।

**लोककान्ता** स्त्री ६त॰। १ऋद्धभौषधे राजनि॰ २लोकस्वामिनि ३लोकप्रिये च त्रि॰। [अमरः।

**लोकजित्** पु॰ लोकं लोकाचारं जितवान् जि–क्विप्। बुद्धे

**लोकपाल** पु॰ लोकान् पालयति पा–णिच् अण्। १लोकपालके नृपे, २इन्द्रादिदिक्पाले, ३विनायकादिषु पञ्चसु। ४लोकरक्षकमात्रे त्रि॰। लोकनाथादयोऽप्यत्र।

**लोकबान्धव** पु॰ लोकानां बान्धवः सर्वकर्मप्रवर्त्तकत्वात्। सूर्य्ये जटा॰। [लोकबहिर्भूते।

**लोकबाह्य** त्रि॰ बहिश्चरति बहिस्+ष्यञ् टिलोपश्च ५त॰।

**लोकमातृ** स्त्री लोकानां मातेव रक्षित्री। १लक्ष्म्याम् अमर॰ ६त॰। लोकानां मातरि त्रि॰।

**लोकलोचन** पु॰ लोकैर्लोच्यतेऽनेन लुच ल्युट्। १सूर्य्ये शब्दर॰ लोकस्य लोचनमिव। सूर्य्ये न॰। लोकनेत्रादयोऽप्यत्र न॰

**लोकायत** न॰ लोकेषु आयतम् विस्तीर्णम् अनायाससाध्यत्वात्। चार्वाकमतसिद्धधर्म्मे शब्दच॰।

**लोकायतिक** पु॰ लोकायतं तन्मतम् अस्त्यस्य ठन्। चार्वाके।

**लोकालोक** पु॰ लोक्यतेऽसौ लोकः न लोक्यतेऽसौ कर्म्म॰। स्वनामख्याते सूर्यकिरणसम्पर्कसीमापर्वते। तस्य च पार्श्वयोरातपानातपसम्बन्धात्तथात्वम्।

**लोकेश** पु॰ ६त॰। १ब्रह्मणि अमरः। २नृपतौ ३पारदे च राजनि॰ ४बुद्धभेदे त्रिका॰। [न ह्रस्वः। अलुलोचत् त।

**लोच** दीप्तौ चु॰ उभ॰ सक॰ सेट्। लोचयति ते ऋदित् चङि

**लोच** दर्शने भ्वा॰ आत्म॰ सक॰ सेट्। लोचते अलोचिष्ट। ऋदित् चङि न ह्रस्वः।

**लोचक** न॰ लोच–ण्वुल्। १मांसपिण्डे, २अविज्ञातरवे ३कज्जले ४स्त्रीणां ललाटाभरणे, ५नीलवस्त्रे, ६कर्णपूरे, ७कदल्यां, ८मूर्वायां ९निर्बुद्धौ भ्रू१०धनुर्ज्यायां च मेदि॰ ११सर्पकञ्चुके शब्दर॰।

**लोचन** न॰ लोच्यतेऽनेन लोच–करणे ल्युट्। १नेत्रे अमरः। भावे ल्युट्। २दर्शनक्रियायाम्। युच्। ३दर्शने ४आलोचने च स्त्री टाप् अमरः। ५मङ्गाण्डिकीटे स्त्री राजनि॰ ङीप्।

**लोचनहिता** स्त्री ६त॰। (वस्त्राञ्जने तुँते) राजनि॰।

**लोचमस्तक** पु॰ लोच्यते लोचं मस्तकं यस्य। मयूरशिखायाम् अमरः।

**लोट(ड)** उन्मादे भ्वा॰ पर॰ सक॰ सेट्। लोट(ड)ति। अलोटी(डी)त्। ऋदित् चङि न ह्रस्वः।

**लोणा** स्त्री लवणमस्त्यस्याः भक्षणसमये अपेक्ष्यत्वेन अच्। १चुक्रायाम् राजनि॰। लोणाम्लाप्यत्र स्त्री राजनि॰

**लोणार** न॰ लवणमृच्छति कारणत्वेन ऋ–अण् उप॰ स॰। पृषो॰ लवणजे क्षारभेदे राजनि॰।

**लोत** न॰ लू–तन्। १चोरितधने, लोप्त्र (चमाल) जटाधरः ३चिह्ने सि॰ कौ॰। ४नेत्राम्बुनि त्रिका॰ ५लवणे च

**लोत्र** न॰ लू–ष्ट्रन्। १अश्रुजले, २चोरितधने च शब्दरत्ना॰।

**लोध** पु॰ रुध–अच् रस्य लः। स्वनामख्याते वृक्षे रत्नमा॰।

**लोध्र** पु॰ रुध–रन् रस्य लः। (लोध) ख्याते वृक्षे अमर॰। "लोध्रो ग्राही लघुः शीतश्चक्षुष्यः कफपित्तनुत्। कषायो रक्तपित्तासृग्ज्वरातीसारशोथहृत्" भावप्र॰।

**लोप** पु॰ लुप–भावे घञ्। १विनाशे २छेदने, ३आकुलीभावे, ४व्याकरणोक्ते अदर्शनरूपे नाशे च। लोपयति लोपं कृपणगर्वम् अच्। २अगस्त्यमुनिपत्न्यां स्त्री जटा॰।

**लोपापक** पुं स्त्री॰ लोपमदर्शनमाप्नोति द्रुतम् आप–ण्वुल्। शृगाले शब्दमा॰ स्त्रियाम् अजा॰ टाप् अत इत्वम्।

**लोपामुद्रा** स्त्री मुदं राति रा–क कर्म॰। अगस्त्यमुनिपत्न्याम् अमर॰।

**लोप्त्र** न॰ लुप–ष्ट्रन्। चौर्य्यधने लोत्रमप्यत्र तत्रार्थे लोप्त्र।

**लोभ** पु॰ लुभ–आकाङ्क्षायां भावे घञ्। परद्रव्येषु अतिशयिताभिलाषे "परवित्तादिकं दृष्ट्वा नेतुं यो हृदि जायते। अभिलाषो द्विजश्रेष्ठ! स लोभः परिकीर्त्तितः" पद्मपु॰।

**लोभिन्** त्रि॰ लुभ–णिनि। परद्रव्येषु अतितृष्णावति जटा॰।

**लोभ्य** पु॰ लुभ-कर्मणि यत्। १मुद्गे हेमच॰। २लोभनीयपदार्थे त्रि॰। [अमरः। तत्प्रधाने २वाक्ये न॰ जटा॰।

**लोम** न॰ लू–मन्। देहजाते केशाकारे १रोमाख्ये द्रव्ये

**लोमकर्ण** पुंस्त्री॰ लोमयुक्तः कर्णो यस्य बाह॰। शशके

छिद्रितो छिद्रवर्जितान् । एवं ज्ञात्वा वकारं तु तन्मन्त्रं द्विधा जपेत्” वर्णोद्धारतन्त्रम् ।

व पु० वा—ड । १वायौ २वरुणे ३सान्त्वने ४मन्थने मेदि० ५राहौ ६वस्त्राके ७वसति ८वसतौ ९वसुदे च शब्द च० १०व्याघ्रे ११वपने १२भालूके १३वन्दने च एकाक्षरको० । १४साहस्ये अव्य० मेदि० “मातवं व यम पदुः” रघु० । १५वरुणे न० मेदि० । १६वरुणबीजे मान्त्रमय्यम् ।

वंश पु० वमति उद्गिरति वम-श तस्य नेत्त्वम् । १कुलपौत्रापुत्रवर्गे २तृणजातिभेदे (वाँश) अमरः ।

“वंशः सरो हिमः स्वादुः कषायो वस्तिशोधनः । छेदनः कफपित्तघ्नः कुष्ठास्रव्रणशोथजित् । तत्करीरः कटुः पाकरसे रूक्षो गुरुः सरः । कषायः कफकृत् स्वादुर्विदाही वातपित्तलः । तद्यवास्तु सरा रूक्षाः कषायाः कटुपाकिनः । वातपित्तकरा उष्णा बद्धमूत्राः कफापहाः” भावप्र० । ३पृष्ठावयवे ४वर्गे च मेदि० ५रवौ ६शालवृक्षे च राजनि० । ७वाद्यभेदे पुंस्त्री० धरणिः स्त्रीत्वे गौरा० ङीष् “वंशीवादेन वंशिकेन” इति हलायुधः । तद्विशेषकथा

“तालेन राजते गीतं तालो वादित्रसम्भवः । गरीयस्तेन वादित्रं तच्चतुर्विधमुच्यते । ततं शुषिरमानद्धं घनमित्थं चतुर्विधम् । ततं तन्त्रीगतं वाद्यं वंशाद्यं शुषिरं तथा । चर्मावनद्धमानद्धं घनं तालादिकं मतम्” । तत्र शुषिरं यथा “वंशोऽथ पावी मधुरी तित्तिरी शङ्खकाहला । तोडही मुरली बुक्का श्रृङ्गिका स्वरनाभवः । श्रृङ्गं कापालिकं वंशधर्मवंशस्तथा परः । एते शुषिरभेदास्तु कथिताः पूर्वसूरिभिः । वर्त्तुलः सरलश्चैव सर्वदोषविवर्जितः । वेणवः खादिरो वापि रक्तचन्दनजोऽथ वा । श्रीखण्डजोऽथ सौवर्णो दन्तिदन्तमयोऽपि वा । राजतस्ताम्रजो वापि लौहजः स्फाटिकोऽथ वा । कनिष्ठाङ्गुलिविस्तारेण गर्भरन्ध्रेण शोभितः । शिल्पविद्याप्रवीणेन वंशः कार्यो मनोहरः । वंशेनैव जनःप्रीतिं गतश्चेत्तन्निगोदितम् । ततोऽन्येऽपि तदाकारा वंशा यत्र प्रकीर्त्तिताः । तत्र त्यक्त्वा शिरोदेशादधोऽङ्गुलिमितमङ्गुलम् । फुत्काररन्ध्रं कुर्वीत मितमङ्गुलिपर्वणा । पञ्चाङ्गुलानि सन्त्यज्य ताररन्ध्राणि कारयेत् । कुर्यात्तथान्यरन्ध्राणि यमयस्तानि कोमलात् । पटरीबीजतस्तानि वंशस्याङ्गुलमङ्गुलम् । प्रान्तयोर्मुखं कार्यं सारावैर्नादहेतवे । शिक्षकेन कला देया तेन सुस्वरता भवेत् । पञ्चाङ्गुलोऽयं वंशः स्यादेकैकाङ्गुलिवर्द्धितः । षडङ्गुलानि मात्रा स्यात् यावदष्टादशाङ्गुलम् । फुत्कारताररन्ध्रस्य यावदङ्गुलिमन्तरम् । तदेव नाम वंशस्य वांशिकैः परिकीर्त्यते । एकाङ्गुलोद्व्यङ्गुलश्च त्र्यङ्गुलश्चतुरङ्गुलः । अतितारतरत्वेन वांशिकैः समुपेक्षितः । त्रयोदशाङ्गुलो वंशोऽपरः पञ्चदशाङ्गुलः । निन्दितो वंशतत्त्वज्ञैस्तथा सप्तदशाङ्गुलः । महानन्दस्तथानन्दो विजयोऽथ जयस्तथा । चत्वार उत्तमा वंशा मतङ्गमुनिसम्मताः । दशाङ्गुलो महानन्दोऽनन्द एकादशाङ्गुलः । द्वादशाङ्गुलमानस्तु विजयः परिकीर्त्तितः । चतुर्दशाङ्गुलमितो जय इत्यभिधीयते । ब्रह्मा रुद्रो रविर्विष्णुः क्रमादत्र व्यवस्थिताः । नैविध्यं गीतनाथापि सुस्वरत्वञ्च शीघ्रता । माधुर्य्यमिति पञ्चामी फुत्कारेषु गुणाः स्मृताः । सीत्कारबहुलः स्तब्धो विस्वरः स्फुटितो लघुः । अमधुरश्च विज्ञेयाः षड्दोषाः फुत्कृते क्रमात् । तथा प्रयोगबाहुल्यमस्तता गीतवादने । एभिर्दोषैर्युतोऽतीव निन्दितो वांशिको मतः । स्थानकाठिन्यवाभिज्ञोऽगमकाश्च स्फुटाक्षरः । शीघ्रहस्तः कलाभिज्ञो वांशिको रक्त उच्यते । प्रस्तुतिर्निर्व्यूढिश्च शुद्धिर्व्यस्तकृते गुणाः । स्वस्थानत्व उच्चारत्वमङ्गुलोच्चारत्वक्रिया । समस्तागमतत्त्वज्ञं रागरागाङ्गवेदिता । क्रियाभाषाविभाषाभिः दक्षता गीतवादने । स्वस्थाने चापि दुःस्थाने नादनिर्वाहकौशलम् । गातृणां स्थानदातृत्वं तद्दोषाच्छादनं तथा । वांशिकस्य गुणा एते मया संक्षिप्य दर्शिताः” सङ्गीतदा० ।

वंशक पु० वंश इव कायति कै—क । (सोमराज) १इक्षुभेदे रत्नमा० २मत्स्यभेदे (राउत) शब्दमा० । ३अगुरुचन्दने न० हारा० । [वंशरोचनायाम् राजनि० ।

वंशकर्पूररोचना स्त्री कर्पूरमिव रोचते रुच–ल्यु ६त० ।

वंशक्षीरी स्त्री वंशस्य क्षीरमिवास्त्यस्याः अच् गौरा० ङीष् । वंशरोचनायाम् राजनि० ।

वंशज पु० वंशात् जायते जन—ड । १वंशसञ्जाते यवाकारे वेणुयवे राजनि० २सत्कुलजाते त्रि० । ३वंशरोचनायां स्त्री टाप् शब्दर० । [राजनि० ।

वंशतण्डुल पु० ६त० । वेणुजाते तण्डुलाकारे वेणुयवे

वंशधर त्रि० वंशं धरति । कुलाविच्छेदकारके सन्ताने । धृ—खिच् मुम् । वंशंवदोऽप्यत्र ।

वंशनेत्र न० वंशस्येव नेत्रमस्य । इक्षुमूले राजनि० ।

**वंशपत्र** पु० वंशस्य पत्रमिव पत्रमस्य । १नलनामके तृणे राजनि० । कृत० । २वंशदले न० । कप् तत्रैव । ३नाडी हिङ्गौ स्त्री राजनि० गौरा० ङीष् ।

**वंशपत्रपतित** न० सप्तदशाक्षरपादके छन्दोभेदे । "दिङ्मुनि वंशपत्रपतित भरनभनलगैः" छन्दो० ।

**वंशपीत** पु० वंशस्य पत्रमिव पीतः । कणगुग्गुलौ राजनि० ।

**वंशपुष्पा** स्त्री वंशस्य पुष्पमिव पुष्पमस्याः । सहदेवीलतायाम् राजनि० ।

**वंशपूरक** न० वंशस्येव पूरकं यस्य । इक्षुमूले राजनि० ।

**वंशरो(लो)चना** स्त्री वंशेषु रोचते रुच–ल्यु वा रस्य लः । वंशपर्वस्थिते श्वेतवर्णे कर्पूराकारे द्रव्ये । (वंशलोचन) । "वंशजा बृंहणी वृष्या बल्या स्वाद्वी च शीतला । तृष्णाकासज्वरश्वासक्षयपित्तास्रकामला । हरेत् कुष्ठं व्रणं पाण्डुं कषायवातकृच्छ्रजित्" भावप्र० ।

**वंशशर्करा** स्त्री वंशस्य शर्करेव । (वंशलोचन) पदार्थे राजनि० । [हेमच० ।

**वंशशलाका** स्त्री० वंशस्य शलाकेव कठिनत्वात् । वीरणमूले

**वंशस्तनित** न० । द्वादशाक्षरपादके वंशस्थविलापरपर्याये छन्दोभेदे शब्द० । [वंशस्थविलं जतौ जरौ" छन्दो०

**वंशस्थविल** न० । द्वादशाक्षरपादके छन्दोभेदे । "वदन्ति

**वंशाग्र** न० वंशस्य अग्रं मूलम् । वंशाङ्कुरे (कोंड़) राजनि०

**वंशाङ्कुर** पु० कृत० । (कोंड) इति ख्याते पदार्थे राजनि०

**वंशिक** न० वंशोऽस्त्यस्य ठन् वंश इव वा कन् । १अगुरुचन्दने अमरः २वंश्यां स्त्री शब्दच० टाप् ।

**वंशीधर** पु० वंशीं वंशजवाद्यभेदं धरति धृ–अच् । श्रीकृष्णे

**वंश्य** त्रि० वंशे सत्कुले जातः यत् । सत्कुलजाते ।

**वक** कौटिल्ये भ्वा० गतौ भ्वा०आ०सेट् इदित् । वङ्कते अवङ्किष्ट ।

**वक** पुस्त्री० वकि–अच् पृषो० नलोपः । स्वनामख्याते विहगे अमरः स्त्रियां ङीष् । २स्वनामख्याते पुष्पवृक्षे "अगस्तिकुसुमं शीतं चातुर्थकनिवारकम् । नक्तान्ध्यनाशनं तिक्तं कषायं कटुपाकि च । पीनसश्लेष्मपित्तघ्नं वातघ्नं मुनिभिर्मतम्" भावप्र० । ३औषधादिपाचनयन्त्रभेदे "जलकच्छपवातालदोलाभूधरवालुकाः । वकाद्या यन्त्रभेदाः सुवर्णाद्याश्च मूषिकाः" शब्दच० । तस्य लक्षणं यथा "दीर्घवक्त्रकाचकुप्या निक्षिपेत् बकभावकम् । तिर्यक् कृत्वा पचेत् चुल्ल्यां वकयन्त्रमिति स्मृतम् ।" वैद्यकम् । ४कुबेरे ५राक्षसभेदे मेदि० यो भीमेन हतः भा०व० १४

अ० । श्रीकृष्णेन हते दैत्यभेदे च भाग० १०।११ अ० ।

**वकजित्** पु० वकं जितवान् जि–क्विप् कृत० । १श्रीकृष्णे २भीमसेने च वकान्तकादयोऽप्यत्र ।

**वकधूप** पु० वक इव शुभ्रो धूपः । इकधूपे अमरः ।

**वकपञ्चक** न० । कार्त्तिकशुक्लपक्षस्यैकादश्यादितिथिपञ्चके । तत्र मत्स्यादकैरपि मत्स्यत्यागेन व्रताचरणात् तथात्वम्

**वकपुष्प** पु० वक इव कुटिलं पुष्पमस्य । स्वनामख्याते पुष्पवृक्षे शब्दच० ।

**वकवृत्ति** पु० वकस्येव स्वार्थपरा वृत्तिश्चेष्टा यस्य । "अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च वकव्रतचरो द्विजः" इत्युक्तलक्षणे परवञ्चके जने ।

**वकव्रतधर** पु० वक इव व्रतं धारयति धृ–अच् । "अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च वकव्रतधरो द्विजः" इत्युक्ते स्वार्थसाधनतत्परे वञ्चके विप्रादौ । [व्रतधर ।

**वकव्रतिन्(क)** पु० वकव्रत+अस्त्यर्थे इनि ठन् वा । वक

**वकुल** पु० वकि–कुलच् नलोपः । १स्वनामख्याते पुष्पवृक्षे अमरः । २कटुकायां स्त्री राजनि० टाप् । काकोल्यां ङीप् पृषो० । वकुलोऽपि वकुले पु० । "वकुलो मधुरश्च शिशिरोऽकरकसाधा । वकुलस्तुवरोऽनुष्णः कटुः पाके रसे गुरुः । कफपित्तविषश्वित्रकृमिदन्तगदापहः" भावप्र० । अस्य बोध्यादित्वमित्यन्ये ।

**वक्क** गतौ भ्वा०आत्म०सक०सेट् । वक्कते अवक्किष्ट ।

**वक्तव्य** त्रि० वच–तव्य । १कुत्सिते २हीने ३दुष्टे च मेदि० "दिवा वक्तव्यता पात्रे" स्मृतिः । ४कथनीये च । भावे क्त । ५कथने ६दूषणे च न० ।

**वक्तृ** त्रि० उचितं वक्ति वच–तृच् । १उचितवक्तृवादिनि अमरः स्त्रियां ङीप् । २पण्डिते पु० मेदि० ।

**वक्त्र** न० वक्त्यनेन वच-करणे ष्ट्रन् । १मुखे अमरः । २तगरमूले शब्दर० । ३वसनभेदे मेदि० । वक्त्रं "नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्" इ० र० उक्ते ४छन्दोभेदे च ।

**वक्त्रभेदिन्** पु० वक्त्रं भिनत्ति भिद्–णिनि । १तिक्तरसे हेमच० । २मुखविदारके त्रि० स्त्रियां ङीप् ।

**वक्त्रवास** पु० वक्त्रं वासयति सुरभीकरोति वासि–अण् उप० स० । १नागरङ्गे हेमच० । कृत० २मुखगन्धे पु० ।

**वक्त्रशोधिन्** पु० वक्त्रं शोधयति शुध–णिच्–णिनि । १जम्बीरे २मुखशोधके ३ताम्बूलादौ त्रि० स्त्रियां ङीप् ।

वक्त्रासव पु० वक्त्रस्यासव इव । अधररसे त्रिका० ।

वक्र न० वकि–रन् पृषो० नलोपः । १नदीवङ्के अमरः २शनैश्चरे पु०मेदि० ३मङ्गलग्रहे पु०हेम० ४रुद्रे ५त्रिपुरासुरे पु० धरणि० ६पर्पटे कुटिलगतौ च स्त्री । ७तद्वति त्रि० । पश्चाद्गत्या वक्रगतिकारणं अगगतिशब्दे उक्तम् । सामान्यतः ज्यो० त० उक्तं यथा "वक्राः स्युः पञ्च षष्ठेऽर्के अतिवक्रा नगाष्टगे । नवमे दशमे चैव जायते वक्रता गतिः । द्वादशैकादशे स्थाने भजन्ते शीघ्रतां पुनः । रविस्थित्यंशकलिं शावधेः संख्यात कल्प्यते । न तु राश्यन्तरस्पर्शात् पञ्चमादिनिरूपणम् । राहुकेतू सदा वक्रौ" ।

वक्रकण्टक पु० वक्रः कुटिलः कण्टः कण्टकोऽस्य । बदरवृक्षे राजनि० । ततः स्वार्थे कन् । खदिरवृक्षे राजनि० ।

वक्रखड्ग पु० कर्म० । करवाले राजनि० ।

वक्रग्रीव पुंस्त्री० वक्रा ग्रीवा यस्य । १उष्ट्रे त्रिका० स्त्रियां ङीप् । २कुटिलग्रीवायुते त्रि० स्त्रियां टाप् ।

वक्रपुच्छ पुंस्त्री० वक्रं पुच्छं यस्य । १कुक्कुरे त्रिका० स्त्रियां ङीष् । वक्रलाङ्गूलादयोऽप्यत्र ।

वक्रपुष्प न० वक्राणि पुष्पाण्यस्य । १बकवृक्षे शब्दर० २पलाशवृक्षे च राजनि० । [वृक्षे राजनि० ।

वक्रशल्या स्त्री वक्रं शल्यमिव पक्षादि यस्याः । कुटुम्बिनी-

वक्राङ्ग पुंस्त्री० वक्राण्यङ्गान्यस्य । १हंसे स्त्रियां ङीष् । २कुटिलावयवयुते त्रि० स्त्रियां वा ङीप् । कर्म० ३कुटिले देहे न० ।

वक्रिमन् पु० वक्रस्य भावः इमनिच् । कौटिल्ये "वचितवक्रिमपेचितम्" मालतीमाधवम् । पृषो० । अदन्तोऽप्यत्र ।

वक्रोक्ति स्त्री कर्म० । १कुटिलोक्तौ "अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्यदि । अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा" सा० द० उक्ते २अर्थालङ्कारभेदे ३काकुवचने च ।

वक्ष रोषे भ्वा० पर० सक० सेट् । वक्षति अवक्षीत् ।

वक्षस् न० वह–असुन् सुट् च । १हृदये २उरसि च अमरः ।

वक्षः(क्ष)स्थल न० वक्ष स्थलमिव वा विसर्गलोपः । प्रशस्तवक्षसि । [सा०द० ।

वक्षोज पु० वक्षसि जायते जन–ड । १स्तने "वक्षोजयोर्मन्दता"

वक्षोरुह पु० वक्षसि रोहति रुह–क । स्तने त्रिका० ।

वख गतौ भ्वा० पर० सक० सेट् इदित् । वङ्खति अवङ्खीत् अनिदन्तत्वम्, वखति अवखीत् अवाखीत् ।

वग खञ्जे भ्वा० पर० अक० सेट् इदित् । वङ्गति अवङ्गीत् ।

वगाह पु० अव+गाह–घञ् अवातो लोपः । अवगाहने ।

वङ्क गतौ निन्दायाम् आरम्भे च सक० गत्ये अक० भ्वा० आत्म० सेट् इदित् । वङ्कते अवङ्किष्ट ।

वङ्क पु० वकि–घञ् । १नदीवक्रे भरतः । २पर्याणे (पालान) स्त्री त्रिका० टाप् ।

वङ्क्रि स्त्री वकि–रि । १पार्श्वास्थि हेमच० । २वाद्यभेदे पु न० उणादिको० । ३छदिर्दारुणि पुंन० सि०कौ० ।

वङ्ग न० वगि–अच् । धातुभेदे (राङ्) रङ्गशब्दे दृश्यम् । "रत्नाकारं समारभ्य ब्रह्मपुत्रान्तगं प्रिये! । वङ्गदेश इति प्रोक्तः" उक्ते देशभेदे पु० भू०व० । २वन्ताकयां ३पत्रभेदे पु० गरु० । ४वार्त्ताकौ ५कार्पासे च पु० मेदि० ।

वङ्गज न० वङ्गात् धातोः जायते जन–ड । १सिन्दूरे रत्नमा० २वङ्गदेशजाते त्रि० ।

वङ्गन पु० वगि–ल्यु । वार्त्ताकौ शब्दर० ।

वङ्गशुल्वज न० वङ्गशुल्वाभ्यां रङ्गताम्राभ्यां जायते जन–ड । रङ्गताम्रमिश्रितजाते कांस्ये धातौ हेमच० ।

वङ्गसेन पु० वङ्गमिव शुभ्रा सेना पुष्पमस्य । बकवृक्षे त्रिका० ।

वङ्गारि पु० ६त० । हरिताले हेमच० तस्य वङ्गधातुजारणात् तथात्वम् ।

वङ्क्षण पु० वच–ल्युट् पृषो० सुम् । अरुसन्धौ (कुचकी) अमरः

वच सन्देशे सक० कथने द्विक० चुरा० उभ० सेट् । वाचयति ते

वच कथने अदा० द्विक० पर० अनिट् । वक्ति । "न हि वचिरन्तिपरः प्रयुज्यते" अभियुक्तोक्तेरस्यान्ति" अवोचत् त । उवाच ऊचतुः वक्ता उक्तः ।

अनु+उक्तस्य पुनःकथने अनुवादे ।

निर्+अवयार्थकथने निरुक्तिः निर्वचनम् ।

प्र+प्रकर्षेण कथने शास्त्रार्थस्योक्तस्य कथने प्रवचनम् ।

वचन न० वच–ल्युट् । १कथने २वाक्ये अमरः ३शुण्ठ्याम् शब्दच० कर्त्तरि ल्यु । व्याकरणोक्ते संख्यार्थके सुप्तिङ्स्वरूपे प्रत्यये च । "सदृशं त्रिषु लिङ्गेषु विभक्तिवचनेषु च" । [श्रिति । वचने स्थिते वशीभूते अमरः ।

वचनग्राहिन् त्रि० वचनं गृह्णाति तदनुसारेणाचरति ग्रह–

वचनीय त्रि० वच–अनीयर् । १कथनीये २निन्दनीये लोकापवादे न० "वचनीयमिदं व्यवस्थितम्" कुमारः ।

वचनेस्थित त्रि० वचने वाक्ये तदुपदिष्टाचारे तिष्ठति स्था–क अलुक् स० । वाक्यप्रतिपालके वशीभूते अमरः । [मेदि०

वचर पुंस्त्री० वच–अरन् । १कुक्कुटे स्त्रियां ङीष् । २शठे त्रि०

पद्मरागसदृक्स्फटिकावदातः स्यात् क्षत्रियस्य शशबभ्रु-विलोचनाभः । वैश्यस्य कान्तकदलीदलसन्निकाशः स्निग्धस्य धौतकरवालसमानदीप्तिः । द्वौ वज्रवर्णौ पृथिवीपतीनां सद्भिः प्रदिष्टौ न तु सार्वजन्यौ । यः स्याज्जवाविद्रुमभङ्गशोणो यो वा हरिद्रारससन्निकाशः । ईदृग्विधं सर्ववर्णानां गुणवत् सार्ववर्णिकम् । कामतो धारयेद्राजा नत्वन्योऽन्यत् कथञ्चन । अधरोत्तरदत्ता हि यादृक् स्याद्वर्णसङ्करः । ततः कष्टतरो वज्रो वर्णानां सङ्करो मतः । न च मार्गविभागमात्रतृष्णा विदुषा वज्रपरिग्रहो विधेयः । गुणवद्गुणसम्पदा विभूतिर्विपरीतो व्यसनोदयस्य हेतुः । एकमपि यस्य शृङ्गं विदलितमवलोक्यते विशीर्णं वा । गुणवदपि तस्य धार्यं वज्रं श्रेयोऽर्थिभिर्भवने । स्फुटिताग्निविशीर्णशृङ्गदेशं मलवर्णैः पृषतैरुपेतमध्यम् । न हि वज्रभृतोऽपि वज्रमाशु श्रियमस्याश्रयतावशा न कुर्यात् । यस्यैकदेशः क्षतजावभासो यदा भवेल्लोहितवर्णचित्रम् । न तत् कुर्याद्धि यमाशुमाशु स्वच्छन्दमृत्योरपि जीवितान्तम् । कोटयः पार्श्वानि धाराश्च षडष्टौ द्वादशेति च । उत्तुङ्गसमतीक्ष्णाग्रा वज्रस्याकरजा गुणाः । षट्कोटिशुद्धममलं स्फुटतीक्ष्णधारं वर्णान्वितं लघु सुपार्श्वमपेतदोषम् । इन्द्रायुधांशुविसृतिस्फुरितान्तरीक्षमेवंविधं भुवि भवेत् सुलभं न वज्रम् । तीक्ष्णाग्रं विमलमपेतसर्वदोषं धत्ते यः प्रयततनुः सदैव वज्रम् । वृद्धिं प्रतिदिनमेति यावदायुः श्रीसम्पत्सुतधनधान्यगोपशूनाम् । व्यालवह्निविषव्याधितस्कराम्बुभयानि च । दूराद्वज्रस्य निवर्त्तन्ते कर्माण्याथर्वणानि च । यदि वज्रमपेतसर्वदोषं बिभृयात्तण्डुलविंशतिं गुरुत्वे । मणिशास्त्रविदो वदन्ति तस्य द्विगुणं रूपकलक्षमग्र्यमूल्यम् । त्रिभागहीनार्द्धतदर्द्धशेषं त्रयोदशं त्रिंशदशीतिभागाः । अशीतिभागोऽथ शतांशभागः सहस्रभागोऽल्पसमानयोग । यत्तण्डुलैर्द्वादशभिः कृतस्य वज्रस्य मूल्यं प्रथमं प्रदिष्टम् । ताभ्यां क्रमाद्वाभिहतानतस्य त्वेकावमानस्य विनिश्चयोऽयम् । न चापि तण्डुलैरेव वज्राणां धारणक्रमः । षड्भिः सर्षपैर्गौरैस्तण्डुलं परिकल्पयेत् । यत्तु सर्वगुणैर्युक्तं वज्रं तरति वारिणि । रत्नवर्गेसमस्तेऽपि तस्य धारणमिष्यते । अनेनापि हि दोषेण वज्राणामेव दूषितम् । अमूल्यात् दशमं भागं लघु लभति सामयः । प्रकटानेकदोषस्य स्वल्पस्य वहतोऽपि वा । अमूल्यान्नतमोभागो वज्रस्य न विधीयते । सपृष्टदोषमलङ्कारे वज्रं यद्यपि दृश्यते । रत्नानां प्रतिकर्मार्थं मूल्यं तस्य भवेल्लघु । प्रथम गुणसम्पदाभ्युपेत प्रतिबद्ध समुपैति तच्च दोषम् । अकृताभरणेन तस्य राज्ञो गुणहीनोऽपि मणिर्न भूषणाय । नार्य्या वज्रमधार्य्यं गुणवदपि सुतप्रसूतिमिच्छन्त्या । अन्यत्र दीर्घचिपिटत्र्यस्राद्गुणैर्विहीनात् । अथवा पुष्परागेण तथा गोमेदकेन च । वैदूर्य्यस्फटिकाभ्यां च काचैश्चापि पृथग्विधैः । प्रतिरूपाणि कुर्वन्ति वज्रस्य कुशला जनाः । परीक्षा तेषु कर्त्तव्या विद्वद्भिः सुपरीक्षकैः । क्षारोल्लेखनशाणाभिस्तेषां कार्यं परीक्षणम् । पृथिव्यां यानि रत्नानि ये चान्ये लोहधातवः । सर्वाणि विलिखेद्वज्रं तच्च तैर्न विलिख्यते । गुरुता सर्वरत्नानां गौरवाधारकारणम् । वज्रे तद्वैपरीत्येन सूरयः परिचक्षते । जातिभिरजाति विलिखन्ति वज्रकुरुविन्दाः । वज्रैर्वज्रं विलिखति नान्येन विलिख्यते वज्रम् । वज्राणि मुक्तामणयो यावन्तः केचन जातयः । न तेषां प्रतिबद्धानां भा भवत्यूर्द्ध्वगामिनी । तिर्य्यक्क्षततात् केषाञ्चित् कथञ्चिद्यदि दृश्यते । तिर्य्यङ्माणिक्यसमानानां वा पार्श्वेष्वपि लक्ष्यते । यद्यपि विशीर्णकोटिः सबिन्दुरेखान्वितो विवर्णो वा । तदपि धनधान्यपुत्रान् करोति सेन्द्रायुधो वज्रः । सौदामिनीविस्फुरिताभिरामं राजा यथोक्तं कुलिशं दधानः । पराक्रमाक्रान्तपरप्रताप समस्तसामन्तभुवं भुनक्ति" । ४विद्युदग्नौ तन्निवारणहेतुर्यथा "अथवज्रपवनाघाते मेघेषु स्तनितेषु च । निःपठेज्जैमिनीयोऽस्मि माकृतस्थो नाम्युदन्तरः । तस्य मा भूद्भयं घोरं विद्युतोऽशनीटति आ०त० धृतब्रह्मपुराणम् । "मुनेः कल्याणमित्रस्य जैमिनेश्चापिकीर्त्तनात् । विद्युदग्निभयं नास्ति पठिते च गृहोदरे" । "लिखिते च गृहोदरे" इति वा पाठः । जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च । पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवारकाः" पुराणम् ।

तत्पर्य्यायादि भावप्र० उक्तं यथा

"हीरकः पुंसि वज्रोऽस्त्री चन्द्रो मणिवरश्च सः । स तु श्वेतः स्मृतो विप्रो लोहितः क्षत्रियः स्मृतः । पीतो वैश्योऽसितः शूद्रश्चतुर्वर्णात्मकश्च सः । रसायने मतो विप्रः सर्वसिद्धिप्रदायकः । क्षत्रियो व्याधिविध्वंसी जरामृत्युहरः स्मृतः । वैश्यो धनप्रदः प्रोक्त

वज्राकृति पु० वज्रस्येवाकृतिरस्य । जिह्वामूलीयसूचके वर्णभेदे ।

वज्राङ्गी स्त्री वज्रमिवाङ्गं यस्याः । गवेधुकाधान्यभेदे (गड-गडे) शब्दच० २लताभेदे (हाडजोडा) भावप्र० ।

वज्राखिमृङ्खला स्त्री वज्रमिवास्थि शृङ्खला बन्धन यस्याः । कोकिलाक्षवृक्षे राजनि० । [श्वृक्षे मेदि० ।

वज्रिन् पु० वज्रमस्त्यस्य इनि । १इन्द्रे अमरः २मेचके च ।

वञ्चक पु स्त्री०वञ्च–णिच्–ण्वुल् । १शृगाले अमरः स्त्रियां ङीष् २गृहबभ्रौ च । ३खले ४प्रतारके च त्रि० मेदि० ।

वञ्चन न० वञ्च–ल्युट् । प्रतारणे अन्यथास्थितस्य वस्तुनोऽन्यथात्वमेव कथनादिनाऽन्यमोहोत्पादने । युच् । वञ्चनाप्यत्र स्त्री ।

वञ्चुक त्रि० वञ्च–उकञ् । वञ्चनाशीले शब्दर० ।

वञ्जुल पु० वञ्च–उलच् पृषो० चस्य जः । १तिनिशवृक्षे २अशोकवृक्षे अमरः । ३वेतसवृक्षे मेदि० ४स्थलपद्मवृक्षे शब्दच० । ५पक्षिभेदे च हेमा० । ६बहुदुग्धायां गवि स्त्री हेमच० । ७वक्रे त्रि० वञ्जुलप्रिय ।

वञ्जुलद्रुम पु० वञ्जुलाख्यः द्रुमः । अशोकवृक्षे राजनि० ।

वञ्जुलप्रिय पु०वञ्जुल वक्रं प्रीणाति प्री–क । वेतसे रत्नमा०

वट वेष्टने भागे च अद०चुरा०उभ०सक०सेट् । वटयति ते । अववटत् त । [ववटतुः ।

वट वेष्टने भ्वा० पर० सक०सेट् । वटति । अवटीत् अवाटीत्

वट विभाजने वा चुरा०उभ०पक्षे भ्वा०पर०सक०सेट् इदित् । वण्टयति ते वण्टति । अववण्टत् त अवण्टीत् ।

वट कथने भ्वा० पर० द्विक० सेट् घटा० । वटयति अवाटीत् अवटीत् । ववटतुः ।

वट स्तेये सौ०पर०सक०सेट् इदित् । वण्टति अवण्टीत् ।

वट पु० वट–अच् । १स्वनामख्याते द्रुमे अमरः २शण-निर्मिततन्तौ च त्रि० । (वेंटे) मेदि०-।
वटवृक्षस्य वदूहृपत्वमश्वत्थशब्दे ५१७ पृ० उक्तम् ।
"वट शीतो गुरुर्ग्राही कफपित्तव्रणापहः । वर्ण्यो विसर्पदाहघ्नः कषायो योनिदोषहृत्" भावप्र० । ३साम्ये हेमच० । ४कपर्दे ५गोले ६भक्ष्यभेदे (वड़ा) मेदि० ।

वटक पु० वट–क्वुन् । पिष्टकभेदे (वड़ा) भावप्र० कृतान्नशब्दे २१८२पृ० दृश्यम् ।

वटपत्र पु० वटस्येव पत्रमस्य । १सितार्जकवृक्षे राजनि० । २पाषाणभेदीलतायां स्त्री ङीप् भावप्र० । "वटपत्री कषायोष्णा योनिमूत्रगदापहा" इतिगुणाश्चोक्ता

रत्नमा० टाप् । [त्रि० शब्दर० ।

वटर पु स्त्री० १कुक्कुटे स्त्रियां ङीष् । २शठे ३चञ्चले ४चौरे

वटी स्त्री वट–अच् गौरा०ङीष् । १रज्जौ अमरः गोलाकारे (वड़ी) पदार्थे भावप्र० स्वार्थे क ह्रस्व । वटिकाप्यत्र "वटिका अथ कथ्यन्ते तन्नाम गुटिका वटी । मोदको वटिका पिण्डो गुडो वर्त्तिस्तथोच्यते । लेहवत् साध्यते वह्नौ गुडो वा शर्करा च वा । गुग्गुलुर्वा क्षिपेत्तत्र चूर्णं तन्निर्मिता वटी ।" तत्र वह्निसिद्धे गुडादौ । "कुर्यादवह्निसिद्धेन क्वचिद्गुग्गुलुना वटी" । द्रवेन मधुना वापि गुटिकां कारयेद्बुधः । सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः । चूर्णे चूर्णसमः कार्यो गुग्गुलुर्मधु तत्समम् ।" तत्समम् चूर्णसमम् "द्रवं तु द्विगुणं देयं मोदकेषु भिषग्वरैः" । द्रव द्रवरूपद्रव्यम् । "कर्षप्रमाणं तन्मात्रां बलं दृष्ट्वा प्रयुज्यते" । बलमिति कालादेरप्युपलक्षणम्" । नदीवटाख्ये २वृक्षभेदे राजनि० ।

वटु पु० वट–उ । १माणवके २ब्रह्मचारिणि च हेमच० ।

वटुक पु० वट–उक । १बालके शब्दर० २भैरवभेदे च तन्त्रम्

वठ असहायकरणे भ्वा० आत्म० सक० सेट् इदित् । वण्ठते अवण्ठिष्ट । [ववण्ठतुः ।

वठ सामर्थ्ये भ्वा०पर०अक०सेट् । वठति । अवाठीत् अवठीत्

वठर पु० वठ–अरन् । १मूर्खे उणादि० २अम्बष्ठे हेमच० ३शठे ४मन्दे च त्रिका० ।

वड विभजने चुरा० उभ० सक० सेट् इदित् । वण्डयति ते अववण्डत् त । [अवण्डिष्ट ।

वड वेष्टने विभागे च भ्वा० आ० सक० सेट् इदित् । वण्डते

वड आरोहणे सौ० पर० सक० सेट् । वडति. अवाडीत् अवडीत् । ववडतुः ।

वडभि(भी) स्त्री वड्यते आरुह्यतेऽत्र वड–अभि वा ङीप् । १गृहचूडायाम् (छाउनि) अमरः २प्रासादाग्रस्थगृहे च (चिलेघर) रत्नमा० ।

वडा स्त्री वड–अच् । स्वनामख्याते पिष्टकभेदे शब्दच० ।

वडिश न० वड–इन् वडिं श्यति शो–क । मत्स्यधारणार्थे यन्त्रलौहकण्टकयुक्ते पदार्थे अमरः । "बडिशेन भवारिवाशान्" शब्दावनकम्पन्न ।

वड्र त्रि० वल–रक् लस्य डः । इहनि (वड़) अमरः ।

वण शब्दे भ्वा० पर० सक० सेट् । वणति अवाणीत् अवणीत् । ऋदित् चङि वा ह्रस्वः ।

वण्ट विभाजने अद० चुरा० उभ० सक० सेट् । वण्टयति

ते अवगण्टन् त। [२असतोद्वाहे च। (बेङ्को) मल्लमा०

वण्ट पु० वण्ट–अच्। १भागे २दात्रादेः धारणस्थाने(बांठ)

वण्टक पु० वण्ट–घञ् स्वार्थे क। १भागे अमरः ण्वुल्। २विभाजके त्रि०। [२असतोद्वाहे च मेदि०।

वण्ठ त्रि० वण–ठ तस्य नेत्त्वम्। १खर्वे (बेंटे)। २कुन्तायुधे

वण्ठर पु० वठि–अरन्। १खनिकारज्ज्वौ २कुक्कुरलाङ्गूले ३करीरकोषे ४तालस्य पल्लवे ५पयोधरे च मेदि०। अत औणादिरपि तत्रार्थे।

वण्ड त्रि०वडि–अच्। १असतोद्वाहे २हस्तपादादिविकले (वेँड़े) ३अनावृतमेढ्रे हेमच० ४पांशुलायां स्त्रियां स्त्री मेदि०।

वण्डाल पु० वडि–आलच्। १भूरयुद्धे २नौकायां खनित्रे च मेदि०। [तुल्यार्थे अव्य०राजवत् शूद्रवत् इत्यादि।

वत् अव्य० वा–डति। सादृश्ये अमरः वतिप्रत्ययान्तोऽव्य-

वत अव्य० वन–क्त। १खेदे २अनुकम्पायाम् ३हर्षे ४विस्मये ५आमन्त्रणे च अमरः।

वतंस पु० अव+तनुस–घञ् अवालोपः। १कर्णभूषणभेदे २शेखरे ३शिरोभूषणे मेदि० ४भूषणमात्रे च।

वतण्ड पु० अव+तडि–अच् अवालोप०। मुनिभेदे उणादि०।

वतोका स्त्री अवगतं तोकं यस्याः प्रा०ब०अवालोप०। अपत्यहीनायां स्त्रियाम् अमरः।

वत्स न० वद–स। १वक्षःस्थले अमर। २गवादिशिशौ त्रिष०। ३वत्सरे पु० अमर। ४अन्त्रवंशे राजभेदे च पु०।

वत्सक न० वत्स इव इवार्थे कन्। १पुष्पकासीसे राजनि० २कुटजे अमर। ३इन्द्रयवे च राजनि०।

वत्सकवीज न०वत्सकस्य कुटजस्य बीजम्। इन्द्रयवे राजनि०

वत्सतर पु स्त्री० अत्र वत्स अल्पत्वे तरप्। १क्षुद्रवत्से अप्राप्तदमनकाले गवादौ अमर० स्त्रियां ङीप्। वत्सतरी

वत्सनाभ पु० वत्सान् पशुशिशून् नभ्यति हिनस्ति नभ-अच् वत्सस्य नाभिराकारेऽस्त्यस्य अच् वा। स्थावरे विषभेदे अमरः। तल्लक्षणादि भावप्र० उक्तं यथा

"सिन्धुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा। यत्पार्श्वे न तरोर्वृद्धिर्वत्सनाभः स भाषितः"। तस्य सामान्यगुणा यथा। "विषं प्राणहरं प्रोक्तं व्यवायि च विकाशि च। आग्नेयं वातकफहृद्योगवाहि मदावहम्"। व्यवायि सकलकायव्यापनपूर्वकपाकगमनशीलम्। विकाशि ओजसः शोषणपूर्वकं सन्धिबन्धशिथिलीकरणशीलम्। आग्नेयम् अधिकाग्निजम् योगवाहि संसर्गगुणग्राहकम् मदावहं तमोगुणाधिक्येन बुद्धिविध्वंसकम्। "तदेव युक्तियुक्तं तु प्राणदायि रसायनम्। योगवाहि त्रिदोषघ्नं बृंहणं वीर्यवर्द्धनम्। ये दुर्गुणा विषेऽशुद्धे ते स्युर्हीना विशोधनात्। तस्माद्विषं प्रयोगेषु शोधयित्वा प्रयोजयेत्" भावप्र०।

वत्सपत्तन न० वत्सस्य वत्सराजस्य पत्तनम्। वत्सदेशस्थायां कौशाम्ब्यां नगर्याम् हेमच०।

वत्सपाल पु० वत्सान् पालयति पालि–अण्। १श्रीकृष्णे २बलदेवे च। [द्वयम्।

वत्सर पु० वस–सरन्। द्वादशमासात्मके काले अब्दभेदे

वत्सराज पु० चन्द्रवंश्ये नृपभेदे। "वत्सराजचरितम्" रत्ना०

वत्सरान्तक पु० वत्सरस्यान्तं करोति अन्त+णिच्–ण्वुल्। फाल्गुनमासे राजनि० वत्सरस्य चैत्रादिकत्वात् फाल्गुनस्य तदन्तकालत्वात्तथात्वम्।

वत्सल त्रि० वत्सं लाति ला–क। १स्नेहयुक्ते २वात्सल्ये रसे पु० ३दहति त्रि० ४विष्णौ पु० विष्णु स०।

वत्साक्षी स्त्री वत्सस्याक्षीवाक्षि अस्य षच् समा०। गोडुम्बायाम् (गोमक) शब्दच०।

वत्सादनी स्त्री वत्सैरद्यते प्रियत्वेन अद–ल्युट् ङीप्। १गुडूच्याम् अमरः। वत्स अदनमस्य। २वृके पु स्त्री० राजनि० स्त्रियां ङीप्। [अवन्दिष्ट।

वद् स्तुतौ अभिवादने सक० भ्वा० आ० सेट् इदित्। वन्दते

वद् वाक्ये सन्देशे च भ्वा० उभ० सक० सेट्। वदति ते अवादीत् अवदिष्ट। ज्ञानयत्नादावात्मनेपदीत्यन्ये।

वद् वाचि भ्वा० पर० सक० सेट् यजा०। वदति अवादीत् उवाद ऊदतुः उदितः।

भासने उपसान्त्वने आत्म० शास्त्रे वदते भासमानो वदतीत्यर्थः भृत्यानुपवदते सान्त्वयतीत्यर्थः। ज्ञानादुपाधौ च आत्म०। तत्र ज्ञाने शास्त्रे वदते। यत्ने क्षेत्रे वदते। विमतौ क्षेत्रे विवदन्ते। उपच्छन्दने उपवदते प्रार्थयते इत्यर्थः सि०कौ०। व्यक्तवाचां समुच्चारणे आत्म० प्रवदन्ते विप्राः। अति+मर्य्यादातिक्रमे सोक्तौ प० अतिवदति। अनु+उक्तस्य पर्यायान्तरेण कथने अनुवादः अकर्मकात् व्यक्तवाचामनुवादे तु आत्म० अनुवदते कठप्रकापस्य" सि०कौ० अव्यक्तवाचि तु प० अनुवदति वीणा सकर्मकात्तु पर० उक्तमनुवदति। विरुद्धोक्तौ व्यक्तायां वाचि वा आत्म० विप्रवदन्ते ते वैद्याः। [विशेषविधिः

अप+निन्दायाम्। अपवादः। विशेषविधाने च अपवादः

परि+निन्दायां मिथ्यादूषणे च पर०। परिवदति परिवादः।

प्रति+विरुद्धवचोक्तौ पर० प्रतिवदति प्रतिवादः प्रतिवादी प्रत्युत्तरोक्तौ च ।

वि+विरुद्धोक्तौ पक्षप्रतिपक्षरूपेणोक्तौ आत्म० विवदन्ते पण्डिताः वादिप्रतिवादिनश्च ।

**वद्** वाचि सन्देशे च सक० चुरा० उभ० सेट् । वादयति ते अवीवदत् । अभि+प्रणामे ।

**वद** त्रि० वदति वद–अच् । वक्तरि अमरः ।

**वदन** न० उद्यतेऽनेन वद–करणे ल्युट् । १मुखे अमरः । २वचनेन्द्रिये भावे ल्युट् । ३कथने न० । [अमर० ।

**वदा(दा)न्य** पु० वद–अन्य पृषो० वा दीर्घः । भूरिदानशीले

**वदाम** न० वद–आमन् । (बादाम) वाताटे फलभेदे भावप्र० । "वाताटो वातवैरी स्यान्नेत्रोपमफलस्तथा । वाताट उष्णः सुस्निग्धो वातघ्नः शुक्रकृद्गुरुः । वाताटमज्जा मधुरो वृष्यः पित्तानिलापहः । स्निग्धोष्णः कफकृद् नेष्टो रक्तपित्तविकारिणाम्" भावप्र० ।

**वदाल** पुंस्त्री० वद–आल । पाठीनमत्स्ये (बोयाल) त्रिका० स्त्रियां ङीष् । स्वार्थे क तत्रार्थे । [अमर ।

**वदावद** पु० अत्यन्तं वदति वद–अच् नि० । बहुवक्तरि

**वधू** स्त्री उह्यते पितृगेहात् पतिगृहं वह–ऊ धुकच् । १भार्य्यायाम् २नवोढायां ३पुत्रभार्य्यायाम् अमरः । ४शठ्याञ्च मेदि० । अस्य स्त्रीत्वाटित्वमित्यन्ये

**वधूजन** पु० कर्म० । नारीजने त्रिका० ।

**वधूटी** स्त्री अल्पा वधूः टी । अल्पवयस्कायाम् नार्य्याम् "गोपवधूटीदुकूलेति" भाषापरि० । [नीत् अवनीत् अवनद० ।

**वन** सेवने सक० शब्दे अक० भ्वा० पर० सेट् । वनति अवा-

**वन** व्यापारे भ्वा० पर० सक० सेट् । वनति अवानीत् अवनीत् । ज्वला० वनः वानः । घटा० वनयति । [निष्ट ।

**वन** याचने द्विक० तना० आ० सेट् क्त्वा वेट् । वनुते अव-

**वन** उपकारे उपतापे च सक० शब्दे अक० वा चु० उभ० पक्षे भ्वा० पर० सेट् । वानयति ते वनति । अवीवनत् त । अवनीत् अवानीत् ।

**वन** न० स्त्री वन–अच् । १बहुवृक्षादियुक्ते अरण्ये अमर स्त्रीत्वे ङीप् । "सुवनी समग्रवटवृपिकापि का" नैष० । २जले ३निवासे ४आलये च मेदि० । ५प्रस्रवणे हेमच० ।

**वनकदली** स्त्री ७त० । काष्ठकदल्याम् राजनि० ।

**वनकन्द** पु० वनजातः कन्दः । अरण्यजाते सूरणे राजनि०

**वनकार्पासी** स्त्री वनोद्भवा कार्पासी । (वनकापास) क्षुपभेदे रत्नमा० ।

**वनकोलि** पु० वनोद्भव कोलिः । (वनकुल) वृक्षे ।

**वनचन्दन** न० वनजातं चन्दनम् शा०त० । १अगुरुचन्दने २देवदारुणि च विश्व० ।

**वनचन्द्रिका** स्त्री वने चन्द्रिकेव । मल्लिकायाम् राजनि०

**वनचम्पक** पु० ७त० । (वनचाँपा) चम्पकभेदे राजनि० ।

**वनच्छाग** पु० वने जातश्छागः । (वनछागल) १छागभेदे राजनि० । वने छाग इव । २शूकरे पुंस्त्री० शब्दमा० स्त्रियां ङीष् ।

**वनज** न० वने जलेऽरण्ये वा जायते जन–ड । १पद्मे २मुस्तकभेदे ३वनशूरणे पु० राजनि० ४गजे विश्व० । ५अश्वगन्धायां ६गन्धपत्रायां ७वनकार्पास्यां ८वनोपोदक्याम् ९मिश्रेयायां १०ऐन्द्र्यां स्त्री राजनि० । ११मुद्गपर्ण्यां च स्त्री मेदि० । १२वनजातमात्रे त्रि० ।

**वनतिक्त** पु० वनेषु वनजातेषु मध्ये तिक्तः । १हरीतक्याम् शब्दमा० । २पाठायां (आकनादि) च स्त्री रत्नमा० । स्वार्थे क तत्रैव अमरः ।

**वनदीप** पु० वनस्य दीप इव । वनचम्पके राजनि० ।

**वनपल्लव** पु० वनमिव निबिडं पल्लवोऽस्य । शोभाञ्जने जटा० ।

**वनपुष्पा** स्त्री वनमिव बहुलं पुष्पं यस्याः । शतपुष्पायाम् राजनि० । [पूरकः । वनबीजपूरके राजनि० ।

**वनपूरक** पु० पूरकः बीजपूरकः पूर्वपदलोपः वनोद्भवः

**वनप्रिय** पुंस्त्री० वनं वनस्थं प्रीणाति प्री–क । १कोकिले स्त्री मेदि० स्त्रियां योपधत्वात् टाप् २अरण्यप्रियमात्रे त्रि० । ३त्वचे न० राजनि० ।

**वनभुज्** पु० वनं भुङ्क्ते भुज–क्विप् । १वृषभे २तन्नामौषधे शब्दच० । [अमर० ।

**वनमक्षिका** स्त्री वनोद्भवा मक्षिका । दंशे कीटभेदे (डाँश)

**वनमल्ली** स्त्री वनोद्भवा मल्ली । अरण्यमल्लिकायाम् शब्दर० ।

**वनमाला** स्त्री "आजानुलम्बिनी माला सर्वर्त्तुकुसुमोज्ज्वला । मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्त्तिता" इत्युक्तायां मालायाम् ।

**वनमालिन्** पु० वनमालाऽस्त्यस्य इनि । १श्रीकृष्णे अमरः २वाराहीकन्दायाम् स्त्री मेदि० ङीप् ३द्वारकापुर्य्यां स्त्री त्रिका० । [४मुद्गपर्ण्यां स्त्री राजनि० गौरा० ङीष् ।

**वनमुद्ग** पु० वनोद्भवः मुद्गः । १मुद्गभेदे (मुगानि) अमरः ।

**वनमूर्द्धजा** स्त्री वनस्य मूर्द्धजं शृङ्गमिवास्त्यस्याः अच् । (काकडाशिङ्गा) कर्कटशृङ्ग्याम् राजनि० ।

**वनमोचा** स्त्री वनोद्भवा मोचा । काष्ठकदल्याम् राजनि० ।

**वनलक्ष्मी** स्त्री वनस्य लक्ष्मीरिव तदधिष्ठानत्वात्। कद- लीवृक्षे राजनि०। [राजनि०।

**वनवर्वर** पु० वनोद्भवः वर्वरः। कृष्णार्जके। (वनवावुइ) ख्याते

**वनवासिन्** पु० वन वासयति सुरभीकरोति वासि–णिनि। १मुष्ककवृक्षे २वाराहीकन्दे ३शाल्मलीकन्दे ४मीक- मञ्जिष्ठकन्दे ५ऋषभनामौषधे च राजनि०। वने वसति वस-णिनि। ६वनवासकर्त्तरि त्रि० स्त्रियां ङीप्।

**वनवीज** पु० वीजो वीजपूरकः उत्तरपदलोप. ७त०। वन- वीजपूरे राजनि०। [राजनि०।

**वनवृन्ताकी** स्त्री वनस्य वृन्ताकी वार्त्ताकी। वृहत्याम्

**वनव्रीहि** पु० वनस्य व्रीहिः। नीवारे (उड़िधान) हेमच०।

**वनशूकरी** स्त्री वनस्य शूकरीव रोमशत्वात्। १कपिकच्छ्वाम् राजनि०।७त०। २वनवराहे पु०।३वनशूकरयोषिति स्त्री।

**वनशृङ्गाट** पु० वनस्य शृङ्गाट इव कण्टकावृतत्वात्। गोक्षुरे अमरः। स्वार्थे क। तत्रैवार्थे। [शब्दच०।

**वनशोभन** न० वन जलं शोभयति शुभ–णिच् ल्यु। पद्मे

**वनसङ्कट** पु० सम्+कट-अच् ६त०। मसूरे शब्दच०।

**वनसरोजिनी** स्त्री वनस्य सरोजिनी पद्मिनीव शोभाकर- त्वात्। वनकार्पास्याम् शब्दर०।

**वनस्पति** पु० वनस्य पति नि० सुट्। पुष्पं विना जाय- मानफले १अश्वत्थादौ वृक्षे अमरः। २वृक्षमात्रे मेदि०।

**वनहास** पु० वनस्य हास इव प्रकाशकत्वात्। काशतृणे राजनि०।

**वनाखु** पु० वने आखुरिव। शशके त्रिका०।

**वनाखुक** पु० वन+अख-उकञ् अकारलोपः। मुद्गे त्रिका०।

**वनाट** पु० वनमटति अट-उन्। १वर्षकायां नीलमक्षिका- याम् शब्दच०। २अपानदेशे उज्ज्व०।

**वनामल** पु० वनस्यामल आमलक इव ७ करमर्दे शब्दमा०।

**वनाम्र** पु० वनस्य आम्र इव। कोषाम्रे राजनि०।

**वनायु** पु० वन-आयुच्। प्रसिद्धघोटकोद्भवदेशभेदे (आरब) राजनि०। [(आरवि) शब्दर०।

**वनायुज** पु० वनायुदेशे जायते जन-ड। प्रशस्तघोटके

**वनारिष्टा** स्त्री वनस्य न रिष्टं यस्याः। वनहरिद्रायाम् राजनि०। [पृक्कीलतायाम् शब्दा०।

**वनालिका** स्त्री वनमलति भूषयति अल ण्वुल्। हस्ति-

**वनि** पु० वन-इन्। १वह्नौ त्रिका०। २रश्मौ उज्ज्वल०। ३याचने पु०। ४याचके त्रि०। [रक्षायां त्रिकाण्ड मेदि०।

**वनिता** स्त्री वन–याचने कर्मणि वा०क्त।१योषिति २अनु-

**वनिन्** पु०वनम् आश्रयत्वेनास्त्यस्य इनि। वानप्रस्थाश्रमयुक्ते

**वनिष्णु** त्रि० वन–इष्णुच्। याचके।

**वनीपक** वनीयक+पृषो० यस्य पः। याचके उज्ज्वल०। "कृपण इव वनीपकोपसेवितपर्वतः श्लोकात्" वचनाद्यता च

**वनीयक** स्त्री वन–इन् आत्मनो वनिं याचनमिच्छति क्यच् ण्वुल्। याचके अमरः पृषो० यलोपः। वनीकोऽप्यत्र सारसुन्दरी।

**वनेक्षुद्रा** स्त्री ७त० अलुक्स०। करञ्जे रत्नमा०।

**वनेचर** त्रि० वने चरति चर–ट अलुक्स०। चरस्थ- चारिणि व्याधादौ स्त्रियां ङीप्।

**वनेसर्ज** पु० सृजति–सृज–अच् ७त० अलुक्स०। असनवृक्षे रत्नमा०। [कार्पास्याम् रत्नमा० २वनजाते त्रि०।

**वनोद्भवा** स्त्री वन एव उद्भवति उद्+भू–अच् ७त०। १वन-

**वनौकस्** पु० वनमेव ओकः स्थानं यस्य। १वानरे अमरः। २वनवासिनि त्रि०।

**वनूष** प्रतारणे भ्वा०पर०सक०सेट् क्त्वा वेट्। वनूषति अवनूषीत्

**वन्दन** न० वदि–ल्युट्। १स्तवने २प्रणामे च। युच्। वन्दनाप्यत्र स्त्री। ३वदने न० शब्दच०।

**वन्दनीय** त्रि० वदि-अनीयर्। १नमनीये २स्तवनीये च ३पीतभृङ्गराजे पु०राजनि०।४गोरोचनायां स्त्री त्रिका०।

**वन्दा** स्त्री वदि कर्मणि घञ्। (परगाछा) लताभेदे अमरः २भिक्षुक्यां ३लताभेदे च मेदि०।

**वन्दाका** स्त्री वदि-आकन्। वन्दायाम् शब्दच०। गौरा० ङीष् तत्रार्थे स्त्री शब्दर०। तत्रार्थे पु० भावप्र० "वन्दाकः शीतलस्तिक्तः कषायो मधुरो रसे। मङ्गल्यः कफवातास्ररक्षोव्रणविषापहः"।

**वन्दारु** त्रि० वदि–आरु। वन्दनशीले शब्दर०।

**वन्दि(न्दी)** स्त्री वदि–इन् वा ङीप्। १कारावद्धजनादौ (कएदी) शब्दर० २वन्दने ३स्तुतौ च।४सोपानके त्रिका०।

**वन्दिग्राह** पु० वन्दिमिव–गृह्णाति ग्रह–अ। बलात्कारेण घातके (डाकाइत) मिता०। "वन्दिग्राहांस्तथा वाजि- कुञ्जराणां च हारिणः" मनुः।

**वन्दिपाठ** पु० ६त०। स्तुतिपाठे त्रिका०।

**वन्दिन्** पु० वन्दते स्तौति वदि–णिनि। राजादेः १स्तुति- पाठके अमरः। [भावप्र० २वन्द्यायां शब्दच०।

**वन्द्य** त्रि० वदि यत्। १वन्दनीये। २गोरोचनायाम् स्त्री

**वन्द्र** न० वन्द्–रन्। पद्मकाष्ठे त्रिका०।२पूजके त्रि०उज्ज्वलादि०

**वन्य** त्रि० वने भवः यत्। १वने (दारचिनि) राजनि०।

३वनशूरणे ४वाराहीकन्दे ४देवमणौ पु॰ राजनि॰। ५वन-जातमात्रे त्रि॰। ६मुद्गपर्ण्यां ७गोपालकर्कट्यां ८गु-ञ्जायां ९मिश्रेयायां १०भद्रमुस्तायां ११गन्धपत्रायां स्त्री राजनि॰। वनानामरण्यानां जलानां वा समूहः यत्। १३जलसमूहे १४वनसमूहे च स्त्री मेदि॰।

**वप** बीजवपने तन्तुवयने मुण्डने च सक॰ भ्वा॰ उभ॰ अनिट् यजा॰। वपति ते अवाप्सीत् अवप्त उवाप ऊपतुः। ञित् उप्त्रिमः। पित्रादिपिण्डदाने "पिण्डनिर्वपनं चरेत्" स्मृतिः।

**वपन** न॰ वप-ल्युट्। १केशमुण्डने २बीजाधाने ३तन्त्वा-धाने च मेदि॰। "प्रयागे भास्करक्षेत्रे पितृमातृ-वियोगतः। आधाने सोमपाने च वपनं पञ्चसु स्मृतम्" प्रा॰ त॰।

**वपनी** स्त्री उप्यतेऽनया अत्र वा वप ल्युट् ङीप्। १नापि-तास्त्रे २तन्तुशालायां (तान्तघर) हेमच॰ ३तन्तुवयन-यन्त्रभेदे (माकु) च।

**वपा** स्त्री वप-अच्। १मेदसि (चरवि) "वपाया हविषः" इति श्रुतिः। २छिद्रे च अमरः।

**वपुन** पु॰ वप उनन्। देवतायां शब्दर॰।

**वपुषा** स्त्री वप-वा उषन्। हिङ्गुपत्र्याम् भावप्र॰।

**वपुष्टमा** स्त्री अतिशयेन वपुः प्रशस्ताकृतिः तमप् अत्वम्। १पद्मचारिण्याम् लतायाम् जटा॰। २काशीपतिकन्याया ३जनमेजयपत्न्या च।

**वपुस्** न॰ उप्यन्ते देहान्तरभोगसाधनबीजीभूतानि कर्माण्यत्र वप-उसि। १शरीरे अमरः। २प्रशस्ताकारे च मेदि॰।

**वप्तृ** पु॰ वप-तृच्। १जनके २कवीवरे च मेदि॰ ३बीजादि-वापके त्रि॰।

**वप्र** पु न॰ उप्यतेऽत्र रन्। १दुर्गनगरादौ परिखाया उद्धृत-मृत्तिकास्तूपे अमरः। २क्षेत्रे ३रेणौ ४तटे मेदि॰। ५सीसके न॰ हेमच॰। ६जनके ७प्राचीरे पु॰ विश्वः। ८प्रजापतौ च पु॰ संक्षिप्तसा॰। ९मञ्जिष्ठायां स्त्री राजनि॰। [१०वसुदेवे च संक्षिप्तसा॰।

**वप्रि** पु॰ वप रि। १क्षेत्रे केदारे सि॰ कौ॰। २दुर्गतौ

**वभ्र** गतौ भ्वा॰ पर॰ सक॰ सेट्। वभ्रति अवभ्रीत्।

**वम** उद्गारे भ्वा॰ पर॰ सक॰ सेट्। वमति अवमीत्। ट्वित् वमथुः। ज्वला॰ वमः वामः। वमयति वामयति उप-सर्गस्य नित्यं मुक्तः। कथा॰ वेमतुः ववमतुः। उदित् वमित्वा वान्त्वा वान्तः।

**वमथु** पु॰ वम-अथुच्। वमने उद्गिरणे अमरटीका।

**वमन** न॰ वम ल्युट्। १मर्दने २छर्दने मेदि॰ ३आहुतौ विश्वः ४निःसारणे च "स्वर्गाभिष्यन्दवमनम्" कुमारः। ५शणे पु॰। ६जलौकायां स्त्री राजनि॰ गौरा॰ ङीष्।

**वमि** स्त्री वम इन्। १छर्दौ छर्दिशब्दे २९८० पृ॰ दृश्यम्। २अग्नौ पु॰ मेदि॰ ३धूर्त्ते त्रि॰ शब्दर॰।

**वमित** पु॰ वम णिच् क्त। कृतोद्गारे। [वि(द्व)ध्वम्।

**वय** गतौ भ्वा॰ आ॰ सक॰ सेट्। वयते अवयिष्ट। अव॰

**वयस्** न॰ अज-असुन् वीभावः। १विहगे २बाल्याद्यवस्था-याम् अमरः "वयोऽतिपातोद्गतवातेति" नैष॰। ३यौवने च विश्वः।

**वय(यः)स्थ** पुंस्त्री॰ वयसि यौवने तिष्ठति स्था-क खर्परे शरि वा विसर्गलोपः। १तरुणे २विभीतक्यां स्त्री अमरः। "वयस्था नागराद्भ्रात्" वैद्यकम्। ३आमलक्यां ४हरी-तक्यां ५सोमवल्ल्यां स्त्री अमरः। ६गुडूच्यां ७सूक्ष्मैलायां ८काकोल्याम् ९ब्राह्म्यां स्त्री मेदि॰। १०शाल्मल्यां स्त्री हेमच॰। ११क्षीरकाकोल्याम् भावप्र॰ १२अत्यम्लपर्ण्यां १३महाश्रावण्यां १४युवतौ च स्त्री राजनि॰।

**वयस्य** पु॰ वयसा तुल्यः यत्। १समानवयस्के अमरः। २सख्यां स्त्री अमरः।

**वयुन** न॰ वय-उनन्। १ज्ञाने भाग॰ १०।८० श्रीधरः। २देवागारे त्रिका॰। देवागारे पु॰ उणादि॰।

**वयोधस्** पु॰ वयो यौवनं धत्ते धा-असुन्। तरुणे उणा॰।

**वयोरङ्ग** न॰ वयसा रङ्गमिव। सीसके राजनि॰।

**वर** ईप्से अद॰ चु॰ उभ॰ सक॰ सेट्। वरयति ते अववरत् त।

**वर** न॰ व्रियते वृ-कर्मणि अप्, वरि-अच् वा। १कुङ्कुमे २मना-गभीष्टे अमरः "वरं प्राणान् परित्यक्ष्ये" इति तन्त्रम्। भावे अप् अच् वा। ३इच्छायाम् ४याचने ५आवरणे ६वेष्टने च। वृ-कर्मणि अप्। ७अभीष्टे ८श्रेष्ठे च त्रि॰ अमरः। ९जारे १०जामातरि शब्दर॰ ११गुग्गुलौ शब्दच॰ १२पत्यौ च पु॰ हेमच॰। "तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः" इत्युक्ते १३पदार्थे।

**वरक** पु॰ वृ-वुन्। १वनमुद्गे हेमच॰ २पर्पटे ३क्षुद्र-धान्यभेदे (चीना) च राजनि॰। ४पोताच्छादनवस्त्रे न॰ कारा॰।

**वरचन्दन** न॰ कर्म॰। १कालीये २देवदारुणि च मेदि॰।

**वरट** न॰ वृ-अटन्। १कुन्दपुष्पे शब्दर॰। २कीटभेदे (बोलता) ३हंसे पुस्त्री॰ मेदि॰। स्त्रियाम् अजादि॰ टाप् अमरः।

**वरासन** न० वराय वरणीयायास्यते क्षिप्यते अस–ल्युट् । १जवापुष्पे शब्दमा० । कर्म० । २उत्तमे आसने न० । वरं पतिमस्यति अस–ल्यु । ३विदूगे जारे पु० । परान् अन्येषामपि अस्यति दूरीकरोति ल्यु । ४द्वारपाले च पु० विश्वः । [२खड्गधरे च धरणिः ।

**वरासि** पु० वरायाशरण्यायास्यते अस–इन् । १स्थूलवस्त्रे

**वराह** पुंस्त्री० वराय अभीष्टाय मुस्तादिलाभाय आहन्ति खनति भूमिम् आ+हन–ड । १शूकरे अमरः स्त्रियां ङीप् । २यज्ञवराहाख्ये भगवतोऽवतारभेदे पु० ३पर्वतभेदे ४मुस्तके ५मानभेदे मेदि०। ६शिशुमारे ७वाराही-कन्दे पु० राजनि० ८अष्टादशद्वीपमध्ये द्वीपभेदे च ।

"गन्धर्वो वरुण द्वीपो वराहः कङ्क एव च । कुमुद च कशेरुश्च नागो भल्लातकस्तथा । चन्द्रेन्द्र मलया गङ्गा प्रवालश्च सभस्तिमान् । ताम्राह्वश्च कुमारी च तत्र द्वीपा दशाष्टभिः" शब्दमा० ।

**वराहकन्द** पु० वराहप्रियः कन्दः शा०त० । अनामख्याते कन्दभेदे राजनि० । [शब्दर०।

**वराहकान्ता** स्त्री वराहस्यापि कान्ताऽभीष्टा । वराहकन्दे

**वराहक्रान्ता** स्त्री वराहेण क्रान्तेव । १लज्जालुलतायाम् शब्दच० २वाराह्यां (चामराल) प्रभृतिः ।

**वराहिका** स्त्री वराहो भक्ष्यत्वेनास्त्यस्याः ठन् । कपिकच्छ्वाम् राजनि० ।

**वराही** स्त्री वराहो भक्ष्यत्वेनास्त्यस्या अच् गौरा० ङीप् । १भद्रमुस्तायाम् २वराहकन्दे च राजनि० ।

**वरिवस्** न० उरु+वसुन् वट् च । १पूजने २धने च निघण्टुः ।

**वरिवसि(स्थि)त** त्रि० वरिवः पूजनं करोति क्यच्–क्त वा यलोपः । पूजिते अमरः । [१शुश्रूषायाम् अमरः ।

**वरिवस्या** स्त्री वरिवस्+क्यच्+भावे अ । १पूजने

**वरिष्ठ** त्रि० अतिशयेन उरुः इष्ठन् वरादेशः । १उरुतमे २तित्तिरिविहगे पुंस्त्री० स्त्रियां ङीप् ३नागरङ्गवृक्षे पु० राजनि० । ४ताम्रे न० अमरः । ५मरिचे न० मेदि० ६उरुदे अजयः । ७आदित्यभक्तायां स्त्री राजनि० ।

**वरी** स्त्री वरी शतावरी पूर्वपदलोपः । १शतावर्याम् अमरः २सूर्यपत्न्याञ्च त्रिका० ।

**वरीयस्** त्रि० अतिशयेन उरुः श्रेष्ठः ईयसुन् वरादेशः । १उरुतमे विष्कम्भादिषु मध्ये २सप्तदशे योगभेदे पु० ज्यो०त० । [३वृषभे अमरः ।

**वरी(ली)वर्द** पु० वृध–वल–वृङ् अच् पृषो० रस्य वा लः ।

**वरुट** पुंस्त्री० म्लेच्छजातिविशेषे स्त्रियां ङीप् । "पुलिन्दा नाहला निष्ठ्याः शबरा वरुटा भटाः । माला भिल्लाः किरातास्च सर्वेऽपि म्लेच्छजातयः" हेमच० ।

**वरुड** पु० वृ–उडन् । अन्त्यजजातिभेदे स्त्रियां ङीष् । "रजकश्चर्मकारश्च नटो वरुड एव च" मनुः ।

**वरुण** पु० वृ–उनन् । पश्चिमाशापतौ १जलेशे अनामख्याते देवभेदे अमरः । २जले मेदि० ३सूर्ये च विश्वः । ४द्वीपभेदे वराहशब्दे दृश्यम् । ५काशीस्थे नदीभेदे स्त्री । काशीस्थनदीभेदस्योत्पत्त्यादिकं वामनपु० ३अ० उक्तं यथा "प्रयागे वसते नित्यं योगशायी तु विश्रुतः । चरणाद् दक्षिणात्तस्य विनिर्याता सरिद्वरा । विश्रुता वरणेत्येवं सर्वपापहरा शुभा । सव्यात् पादात् द्वितीया च असिरित्येव विश्रुता । ते उभे च सरिच्छ्रेष्ठे लोकपूज्ये बभूवतुः । तयोर्मध्ये तु यो देशस्तत्क्षेत्रं योगशायिनः । त्रैलोक्यप्रवरं तीर्थं सर्वपापप्रमोचनम् । न तादृशोऽस्ति गगने न भूम्यां न रसातले । तत्रास्ति नगरी पुण्या ख्याता वाराणसी शुभा" ।
७अनामख्यातवृक्षभेदे पु०अमरः "वरुणः पित्तलो भेदी श्लेष्मकृच्छ्राश्ममारुतान् । निहन्ति गुल्मवाताश्र क्रिमींश्चोष्णोऽग्निदीपनः । कषायो मधुरस्तिक्तः कटुको रूक्षको लघुः" भावप्र० ।

**वरुणात्मजा** स्त्री वरुणस्य जलस्यात्मजेव जन्मत्वात् । जलभवे मद्ये अमरः । [पद्मायाम् जटा० ।

**वरुणानी** स्त्री वरुणस्य पत्नी ङीप् आनुक् च । वरुण-

**वरुत्र** न० वृ–उत्र । उत्तरीयवस्त्रे सि० कौ०

**वरूथ** न० वृ–ऊथन् । तनुत्राणे हेमच० २वर्मणि मेदि० । ३रथगुप्तिस्थाने परप्रहाररक्षार्थमाहृते स्थाने पु०अमरः ।

**वरूथिनी** स्त्री वरूथोऽस्त्यस्याः इनि । सेनायाम् अमरः ।

**वरेण्य** न० वृ–एण्य । १कुङ्कुमे राजनि० २प्रधाने ३मार्गणीये च त्रि० अमरः । [वारेन्द्र विप्रभेदे ।

**वरेन्द्री** स्त्री गौडदेशे त्रिका० । तत्राभिजनोऽस्य अण् ।

**वरोट** न० वराद्युत्कृष्टानि दृढान्यस्य । मरुवकपुष्पे अमरः ।

**वरोल** पुंस्त्री० वृ–ओल । वरटे कीटभेदे त्रिका० । स्त्रियां ङीष्

**वर्कर** पु० वृक–अरन् । १तरुणपशौ अमरः २मेषशावके भरतः । ३छागमात्रे पुंस्त्री० स्त्रियां ङीप् ४परिहासे मेदि०

**वर्ग** पु० वृज–घञ् । १सजातीयसमूहे अमरः । यथा मनुष्यवर्गः पशुवर्गः । समानधर्मिभिः प्राप्यत्वाभिमतः । २एकस्य तु यथा कवर्गः चवर्गः । अत्र तत्तत्कादिना

शब्दाकाशस्थायिता नित्यमित्यभिधानात् यावत्प्रलयपर्य्यन्तस्थायिता प्राणापानादेरपि तथैव नित्यत्वाभ्युपगमात्। न तु क्षणिकता मध्ये उत्पत्तिविनाशकल्पने गौरवात् शब्दार्थयोर्नित्यसम्बन्धस्वीकारादनित्येन शब्देन नित्यार्थसम्बन्धस्वीकारेऽयुक्तत्वापत्तेश्च। नित्यत्वेऽपि तेषां व्यञ्जकसद्भावाभावाभ्यां प्रत्ययाप्रत्ययावित्यन्यत्र विस्तरः। स्थानेषु कण्ठताल्वाद्यष्टस्थानेषु वायौ मूलाधारस्थे विकृते विवक्षाप्रेरितमनोनियुक्ताग्निसंक्षोभाच्चलिते इत्यर्थः। कृतवर्णपरिग्रहा वर्णभावापन्ना, तत्र स्थानेष्विति व्यवहितेनान्वितम्। प्राणवृत्तिनिबन्धिनीत्यनेन प्राणवृत्तेर्वायोरूर्द्ध्वपर्य्यन्तगमनमभिहितम्, केवलमित्यनेन कण्ठताल्वादिस्थानानपेक्षाभिहिता। बुद्ध्युपादानेत्यनेन हृदयस्थानगमनमुक्तं बुद्धेर्हृदयस्थत्वात्। उद्गतः वक्तृतक्रमेत्यनेन हृदयस्थानगमनानपेक्षाभिहिता। अविभागेत्यनेन मध्यमाया विभागरूपविशेषस्य कर्णविधानेनाप्रवगमात् पश्यन्त्यास्तु तद्व्युदासः। अनपायिनी स्वस्थानादचलिता प्राणापानान्तरे मूलाधारस्थितेति यावत्। अतो यथाप्रदर्शितपरादीनां विभागं प्रतिपादयतीदं महाभारतीयमतं विस्तरेण।"

"अभिघातस्थानानि चाष्टविधानि सामान्यतो वेदितव्यानि "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु चेति" शिक्षोक्तेः। वर्णाश्च मतभेदेन त्रिषष्टिश्चतुःषष्टिर्वा शिक्षायामभिहिता वेदितव्याः। यथा "त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः। स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः। यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः। अनुस्वारो विसर्गश्च +क +पौ चापि पराश्रितौ। दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव चेति"। अस्यार्थः अ इ उ ऋ इत्येषां ह्रस्वदीर्घप्लुतात्मकता द्वादश भेदाः लृकारस्यैको भेदोऽस्य दीर्घाभावात् प्लुतस्तूक्तं प्रतिपादितं। एचां चतुर्णां ह्रस्वाभावात् दीर्घप्लुतभेदेनाष्टौ भेदाः इत्येकविंशतिः स्वराः। स्पर्शाः कादयो मावसाना पञ्चविंशतिः। यादयो हान्ता अष्टौ। यमाः वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये पूर्वसदृशाः प्रातिशाख्ये प्रसिद्धाश्चत्वारो वर्णाः। यथा पलिक्क्नी। चख्ख्नतुः। अग्ग्निः। पतिघ्घ्नीत्यादौ। अनुस्वारादयश्चत्वारः स्पष्टाः। +क +पौ अपि पराश्रितावित्युक्तिस्तु कपयोः परयोरेवंविध-पफयोः परयोरप्यविध कण्ठ्योष्ठ्यभेदादिति भावमाय। दुःस्पृष्टः ईषत्स्पृष्टः लृकारः। "अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलस्तथा" इत्यनेन प्रतिपादितस्य वर्णपदाभिधेयवर्णधर्मस्य ईषत्स्पृष्टत्वस्य लृकारे कथनात् लृकारस्य स्वरत्वयणत्वोभयधर्मसमावेशात् द्विविधता इति शिक्षाविद्भिर्भेदः। लृकारस्य प्लुतत्वे चतुःषष्टिर्भेदाः। एवं वर्णानां सामान्यतो भेदे बोधिते एतेषामुत्पत्तिस्थानानि बाह्याभ्यन्तरप्रयत्नभेदाश्च प्रदर्श्यन्ते। तत्र स्थानानि "हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्। औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम्। कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू। स्युर्मूर्द्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः। जिह्वामूले तु कुः प्रोक्तः दन्त्योष्ठ्यो वः स्मृतो बुधैः। एऐ तु कण्ठ्यतालव्यावोऔ कण्ठ्योष्ठजौ स्मृतौ। अर्द्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत्। ओकारौकारयोस्तद्वदिति"। अनुस्वारयमानाञ्च नासिका स्थानमुच्यते। अयोगवाहा विज्ञेया आश्रयस्थानभागिन इति शिक्षोक्तानि वेदितव्यानि। यद्यपि सर्वेषां वर्णानामुच्चारणे कण्ठव्यापार आवश्यकस्तथापि चकाराद्युच्चारणे ताल्वादिव्यापारोऽप्यपेक्षित इति तन्मात्रापेक्षकत्वेन वर्णानां वैलक्षण्यम्। "जिह्वामूले तु कुः प्रोक्तः" इति पाणिनिशिक्षाभिधानात् कवर्गस्य कण्ठ्यत्वव्यवहारस्तु कण्ठशब्दस्य कण्ठमूलपरतया भाक्त एव तवर्गस्य दन्तमूलीयत्वेन दन्त्यत्ववत् अन्यथा भग्नदन्तस्य तदनुच्चारापत्तेः। जिह्वामूलीयस्य आश्रयस्थानभागित्वेन तदाश्रयस्य कोरपि जिह्वामूलस्थानत्वौचित्यात्। दन्त्योष्ठ्योव इत्यादावुभयोरेव प्रत्येकं वकारस्थानत्वं न तु सङ्घटितयोः तथा सति दन्तोष्ठ्य इत्येव परिशिष्येत। अतस्तस्य दन्त्योष्ठोभयकार्य्यनिमित्तता एवमग्रेऽपि द्रष्टव्यम्। यमानां प्रातिशाख्यप्रसिद्धानां कादिचतुष्टयानां पूर्वोदितानां यमशब्दबोधितानाञ्च नासिकापि स्थानमधिकमुपदिश्यते। तत्र च यमेत्युपलक्षणम्। "अमोऽनुनासिका न ह्रौ" इत्युक्त्या हकाररकारभिन्नानामपि नासिकास्थानत्वाभिधानात् नासामनुगतः स्थानत्वेनेत्यनुनासिकशब्दव्युत्पत्त्या नासिकास्थानत्वप्राप्तेश्च। तत्र चतुर्ष्वपि पुनः हकाररकारयोः पर्य्युदासः। "मुखनासिकावचनोऽनुनासिक" इति पा० सूत्रे मुखपदस्य कण्ठ इत्यादिस्थानपरतया

यमानामनुभयस्थानत्वम्। अयोगवाहा विसर्गो जिह्वामूलीयोपध्मानीययोरपि विसर्गविशेषरूपत्वेनाश्रयस्थानभागित्वम्। आश्रयस्थानभागित्वञ्च यमाश्रित्यैते उच्चार्य्यन्ते तत्स्थानभागित्वमत्र विसर्गश्च कखयोः परयोर्जिह्वामूलोच्चार्य्यमाणयोराश्रयत्वेन तत्स्थानभागित्वात् जिह्वामूलीयरूपान्वितनामता मन्तव्या। पफयोः परयोरोष्ठोच्चार्य्यमाणयोराश्रयत्वेनोपध्मानीयता। उप पश्च आध्मायेते अनेन स्थानेनेति व्युत्पत्तेः उपाध्मानशब्दः ओष्ठवचनः। तत्स्थानयोगत्वादन्वितनामता चावधेया। अतएव "कौमुद्यां जिह्वामूलीयस्य जिह्वामूलमुपध्मानीयस्योष्ठावित्युक्तम्। यद्यपि सर्वेषां वर्णानामाकाशस्थानत्वं करणत्वञ्च कण्ठादीनां तदुत्पत्तौ युक्तं तथापि तेषां स्थानत्वव्यवहारो वर्णाभिव्यञ्जकताल्वादौ वर्णजनकवायुसंयोगाधारे वर्णाधारत्वारोपेण भाक्त एव। तत्तत्स्थानेषु जिह्वाग्रादिसम्बन्धेन वर्णोत्पत्त्या जिह्वाग्रादिस्थिते तत्सम्बन्धजनकप्रयत्नविशेषे आभ्यन्तरप्रयत्नशब्दो स्पृष्टतादावेव करणत्वव्यवहार प्रसुचित। वर्णाभिव्यक्त्यनन्तरभाविनस्तु आन्तरतम्यपरीक्षोपयुक्ताः कण्ठविवरविकाशादेरास्यबहिर्देशावच्छिन्नकार्य्यस्य जनका बाह्या यत्ना गुणशब्देनोच्यन्ते इत्यादिकं शेखरादौ स्पष्टम्। आभ्यन्तरप्रयत्नास्तु वर्णोत्पत्तेः प्राग्भाविनो बाह्यास्तु तदुत्पत्तेः पश्चाद्भाविन इति विवेकः। तथाहि नाभिदेशात् प्रयत्नप्रेरितः प्राणवायुरूर्द्ध्वमागच्छन् उरःप्रभृतीनि स्थानान्याहन्ति उत्पादयति च ततो वर्णान् तदभिव्यञ्जकध्वनींश्च तत्र वर्णोत्पत्तेः प्राक् जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादिकं यदा सम्यक् स्पृशन्ति तदा स्पृष्टता प्रयत्नो यदा ईषत् स्पृशन्ति तथा ईषत्स्पृष्टता समीपावस्थाने संवृतता दूरावस्थाने विवृतता इत्येवमाभ्यन्तरप्रयत्नभेदात् वर्णानां भेदाः। अतएव इवर्णयशानां तालुस्थानत्वाविशेषेऽपि चवर्गोच्चारणे कर्त्तव्ये तालुस्थानेन सह जिह्वाग्रादीनां सम्यक् स्पर्शः, यकारोच्चारणे तु ईषत् स्पर्शः शकारेकारोच्चारणे दूरसमीपावस्थानमिति। एतेषां आभ्यन्तरत्वं ओष्ठप्रभृतिकाकलीजनककाकलकस्थानपर्य्यन्तरूपास्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां स्पर्शादिघटनरूपाभ्यन्तरकार्य्यकारित्वात् वर्णोत्पत्त्यव्यवहितप्राग्भावित्वाच्च बोध्यम्। विवारसंवारौ तु गलबिलस्य विकाशाविकाशसङ्कोचौ बाह्यौ प्रयत्नौ विवृतसंवृताभ्यां भिन्नावेव तयोः समीपदूरावस्थानात्मकत्वादिति विवेक्तव्यम्। ते च आभ्यन्तराः प्रयत्नाः तेषां वर्णानाञ्च इत्येतत्प्रायदर्श्यते। कादिमावसानानां स्पृष्टता अतएव तेषां सम्यक्स्पर्शत्वेन स्पर्शपदवाच्यता। यणः ईषत् स्पृष्टता। तेषाञ्च स्पृष्टविवृतयोर्मध्यस्थितत्वेन लौकिकव्यवहारेष्वपि शषादीनां वर्णानाञ्च मध्यस्थितत्वेन चान्तःस्थवर्णत्वम् अन्तःस्थाभिध संयुतमित्युक्तेरन्तःस्थाशब्द आदन्तः। शषसहानां अचाञ्च विवृतता। शसहानाञ्च उष्मशब्दाभिधेयत्वात् प्रधानत्वात् ऊष्मशब्दवाच्यता। अचाञ्च स्वयं राजमानत्वात् उदात्तादिस्वरवत्त्वाच्च स्वराभिधेयता। "अचः स्वयं विराजन्ते" इत्युक्तेः "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः। ह्रस्वो दीर्घः प्लुतश्चेति कालतो नियमा अचि" इत्युक्तेश्च। तत्र ह्रस्वस्य संवृतता। "संवृतं त्वेकमात्रं स्यात् विवृतन्तु द्विमात्रकम्" इत्युक्तेः ह्रस्वस्यैकमात्रतया प्रयोगे संवृतता प्रक्रियायान्तु विवृततैव। तत्र मूलं "अचोऽस्पृष्टा यणस्त्वीषत् नेमस्पृष्टाः शलस्तथा। शेषाः स्पृष्टा हलः प्रोक्ताः" इति शिक्षावाक्यमेव बोध्यम्। अत्राचः स्पर्शाभावरूपविवृतत्ववन्तः यणः यवरलाः ईषत् स्पृष्टा इत्यर्थः नेमदत्यर्द्धवाची। शलः शषसहा नेमस्पृष्टाः अर्द्धस्पृष्टाः अर्थादर्द्धविवृताः। "स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्" इत्येकवाक्यत्वात्। एते च स्थानप्रयत्नाः सवर्णसंज्ञायामुपयुक्ताः बाह्यप्रयत्नास्तु आन्तरतम्यपरीक्षायामेवोपयोगिन इति "तुल्यास्यप्रयत्नं सवर्णमिति" पा०सूत्रभाष्यादौ स्पष्टम्। तेन तकारस्थाने विवारश्वासघोषाल्पप्राणरूपबाह्यप्रयत्नसाम्येन चकारटकारादेश "स्थानेऽन्तरतम" इति पा०सूत्रभाष्ययोः स्पष्टम्। बहुसमानधर्मत्वमेवान्तरतम्ये हेतुरिति बोध्यम्। "बाह्याः प्रयत्नास्त्वष्टविधाः काकलकाधःस्थगलबिलसङ्कोचविकाशश्वासोत्पत्तिध्वनिविशेषघोषाल्पघोषप्राणाल्पत्वमहत्त्वरूपकार्य्यकराः यथाक्रम विवारसंवारश्वासनादघोषाल्पघोषाल्पप्राणमहाप्राणनामानो मन्तव्याः। प्रयत्नप्रेरितो वायुर्वर्णानभिव्यञ्जन् यत्नविशेषेण गलबिलविकाशादीनपि सम्पादयति अतो गलबिलविकाशादिकरत्वादास्यबहिर्देशकार्य्यकरत्वात् चैते बाह्या इति। ते च "खरो यमाः खयः +क+पौ विसर्गः शर एव च। एते श्वासानुप्रदाना अघोषाश्च विवृण्वते। कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः। अयुग्मा वर्गयमगा यणश्चा-

राज्ञामन्तःपुरचरक्षके पण्डे (खोजा) अमरः। "नष्टं वर्षवरैरिति" रत्नावली।

**वर्षवृद्धि** पु॰ वर्षस्य वृद्धिरधिकता यस्मिन्। १जन्मतिथौ २तद्दिनकर्त्तव्ये पूजादौ च। "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता" ति॰त॰। "तत्कृत्यं च मलमासे न कर्त्तव्यं चान्द्रमासीयत्वेन आवश्यकत्वात् न च सौरमासीय त्वात्ते तत्तिथेः कदाचिदप्राप्तौ तदर्थं तत्कृत्यलोपापत्ते न चेष्टापत्तिः "प्रतिसंवत्सरं चैव कर्त्तव्यश्च महोत्सवः" ब्रह्मपु॰ प्रतिसंवत्सरं तद्विधानात् ति॰ त॰ रघु॰। अधिक जन्मतिथिशब्दे दृश्यम्।

**वर्षा** स्त्री ब॰व॰। वर्षन्ति मेघा अत्र। श्रावणभाद्रात्मके मासद्वये ऋतौ "नभश्च नभस्यश्च वार्षिकावृतू" यजु॰श्रुति "वर्षासु च मघासु च" मनु॰।

**वर्षाङ्गी** स्त्री वर्षासु अङ्गमस्याः। पुनर्नवायाम् शब्दर॰।

**वर्षापगम** पु॰ वर्षाणामपगमो यत्र। १शरत्काले हेम॰। २वर्षासमाप्तौ।

**वर्षाभव** पु॰वर्षासु भवति भू-अच्। रक्तपुनर्नवायाम् राजनि॰

**वर्षाभू** पु॰ वर्षासु भवति भू-क्विप्। १भेके अमर २इन्द्रगोपे राजनि॰ ३महौषधायाम् मेदि॰ ४पुनर्नवायाम् ५भेक्याञ्च स्त्री मेदि॰ अमरे भेक्याम् गौरा॰ ङीष् वर्षाभ्वीत्यपि ६वर्षाभवमात्रे त्रि॰। [ङीष्।

**वर्षामद** पुस्त्री॰ वर्षासु माद्यति मद-अच्। मयूरे स्त्रियां

**वर्षिष्ठ** त्रि॰ अतिशयेन वृद्धः इष्ठन् वर्षादेशः। अतिशयवृद्धे

**वर्षीयस्** त्रि॰ अतिशयेन वृद्धः वृद्ध+ईयसुन् वर्षादेश। अतिवृद्धे अमरः स्त्रियां ङीप्।

**वर्षुक** त्रि॰ वृष-उकञ्। वर्षणशीले। [अमर॰।

**वर्षोपल** पु॰ वर्षस्य वृष्टेरुपल प्रस्तर इव। करकासु (शिल)

**वर्ष्मन्** न॰ वृष-मनिन्। १देहे २प्रमाणे च अमर॰। ३अतिसुन्दरे त्रि॰। [अववर्हित त।

**वर्ह** वधे भ्वा॰ दीप्तौ आत्म॰ चु॰ उभ॰ सेट्। वर्हयति-ते

**वर्ह** उत्कर्षे भ्वा॰ आ॰ सक॰ सेट्। वर्हते अवर्हिष्ट।

**वर्ह** न॰ वर्ह-अच्। मयूरपिच्छे अमरः अस्य पुंस्त्वमपि "कं करेदेव वर्हं" विक्रमो॰प्रयोगात्। २ग्रन्थिपर्णे वृक्षे भरत। ३पत्रे शब्दर॰।

**वर्हि(र्हिः)कुसुम** न॰ वर्हिःवह्निरिव कुसुममस्य ष्णो॰ वा सलोप॰। ग्रन्थिपर्णे शब्दमा॰।

**वर्हिःपुष्प** न॰ वर्हिः वह्निरिव पुष्पमस्य। ग्रन्थिपर्णे भरतः

**वर्हिःशुष्मन्** पु॰ वर्हिः कुशः शुष्म बलमस्य। १वह्नौ अमरः कुशेन हि वह्निरुद्दीप्यते।

**वर्हि(र्हि)ष्ठ** न॰ वर्हिरिव तिष्ठति स्था-क वा विसर्गलोप पत्वम्। ह्रीवेरे अमरः। [र्दान। वर्हीत्यप्यत्र।

**वर्हिण** पुस्त्री॰ वर्हमस्त्यस्य इन। १मयूरे अमर स्त्रियां ङीष्

**वर्हिर्ज्योतिस्** पु॰ वर्हिषा कुशेन ज्योतिरस्य। वह्नौ हेम॰

**वर्हिर्मुख** पु॰ वह्निर्वह्निर्मुखं यस्य। देवे अमर॰। तद्द्वारैव हि देवा हविरश्नन्ति।

**वर्हिषद्** पु॰ ब॰व॰ वर्हिषि विप्रपाणिरूपेऽग्नौ सीदन्ति वर्हिष् सद-क्विप् ष्णो॰। पितृगणभेदे "अग्निष्वात्ता वर्हिषद ऊष्मपा आज्यपास्तथा" मनु॰। [वह्नौ।

**वर्हिष्केश** पु॰ वर्ह-दीप्तौ इसुन् वर्हिः दीप्तिमान् केशो यस्य

**वर्हिस्** स्त्री वृहि-इसुन् नि॰ नलोपश्च। १वह्नौ मेदि॰ "वार्हिषि रजतं न देयम्" श्रुति। २ग्रन्थिपर्णे ३चित्रके च (चित) अमरः। ३कुशे पु॰न॰ "वर्हिर्दं यमटनम्" श्रुति॰ वर्ह-दीप्तौ इसुन्। ४दीप्तियुक्ते त्रि॰। [वा घटा॰।

**वल** संवरणे भ्वा॰आत्म॰सक॰सेट्। वलते अवलिष्ट। ववलतः

**वल** न॰वल्यतेऽनेन वल-क। सैन्ये रायमु॰ वलशब्दार्थे च।

**वलक्ष** पु॰ वल-क्विप् अक्ष-अच् कर्म॰। १धवले वर्णे २तद्वति त्रि॰ अमर।

**वलन** न॰ वल-भावे ल्युट्। १संवरणे सि॰शि॰ उक्ते ग्रहमार्गादिसञ्चाराङ्के २क्रान्त्ययाम्योत्तरयोरन्तरे तत्स्वरूपादिकं तत्रोक्तं प्रदर्श्यते

"तुलाजाद्योर्हि संपाते विषुवत्क्रान्तिवृत्तयोः। स्यातां याम्योत्तरे भिन्ने परक्रान्त्यन्तरे च ते। आयनं वलनं तत्र जिनांशज्यासमं ततः। एकैवायनसंधौ तु तयोः स्याद्दक्षिणोत्तरा। एकैव तद्वशात् प्राची तत्र नो वलनं ततः। तदन्तरेऽनुपातेन खेटकोटिक्रमज्यका। जिनज्याघ्नी द्युज्याप्तायनदिग्वलनं भवेत्। अयमेव हि संपाते विषुवत्सममण्डलयोः। उन्नाधकेन भवेत् तत्र विषुवद्दक्षिणोत्तरा। क्षितिज समवृत्तस्य प्राच्या च तदन्तरम्। क्षितिजेऽक्षज्यया तुल्यमक्षजं वलनं ततः। तयोरेकैव याम्योदङ्न मध्ये वलनं तत। नतक्रमज्यया साध्यमन्तरे त्वनुपाततः। नत याम्ङ्गाहत भक्तं द्युदलेनाप्तभागकैः। कर्णज्याक्षज्यया पुष्टा द्युज्याभक्ताक्षज भवेत्। प्राक् सौम्य पश्चिमे याम्यं तच्चापैक्यान्तरात् स्फुटम्। एवमेव च संपातो यः क्रान्तिसमवृत्तयोः। परमं तत्र तत्कालवलनैक्यान्तरं स्फुटम्।

तदुत्क्रमज्या तु बाणरूपा भवति। कदम्बवृत्ते या ज्या सा क्रान्तिज्या। अतस्तेषामयनांशानां क्रमक्रान्तिज्या वलनम्। अथ मेषराशेः क्रमक्रान्तिज्या त्रिज्यागुणा द्युज्या-हृता तथापि सैव भवति। अथ वान्यप्रकारेणोत्क्रमज्या-निराकरणं द्युज्यानुपातश्च प्रतिपाद्यते। क्रान्तिवृत्तेऽ-र्कस्थानेऽर्कबिम्बं मुद्रिकाकारं विन्यस्य बिम्बपरिधौ यत्र स्वाहोरात्रवृत्तं लग्नं यत्र च क्रान्तिवृत्तं तयोरन्तरं यद्धनुरुत्तरं तत् तत्र बिम्बे प्राच्यपरयोर्वलनम्। तस्यार्कक्रान्तिबिम्बार्धकलायुतस्यार्कस्य क्रान्त्योरन्तरम्। अतस्तस्यानयनम्। रविदोर्ज्यायाः क्रियमाणाया यद्भो-ग्यखण्डं तेन मानार्धकला गुण्याः शरद्विदस्रैः २२५ भाज्याः। फलं दोर्ज्ययोरन्तरं स्यात्। तत्र तावत् स्फुटभोग्यखण्डस्यानयनायानुपातः। यदि त्रिज्यातुल्यायां कोटौ प्रथमज्यार्धं शरद्विदस्रा भोग्यखण्डं तदाभिम-तायामस्यां किमिति फलं स्फुटं भोग्यखण्डम्। तेन गुणितं बिम्बार्धं शरद्विदस्रैर्भाज्यम्। एवं स्थिते शर-द्विदस्रमितयोर्गुणहारयोर्नाशे कृते बिम्बार्धस्य कोटिज्या गुणस्त्रिज्या हरः। फलं दोर्ज्ययोरन्तरम्। तत्र क्रान्त्यर्थमनुपातः। यदि त्रिज्यया जिनज्या लभ्यते तदानेन दोर्ज्यान्तरेण किमिति। फलं क्रान्त्यन्तरम्। तद्द्युमण्डलस्यार्धवृत्ते वलनम्। अथान्योऽनुपातः। यदि बिम्बस्यार्धवृत्ते एतावद्वलनं तदा त्रिज्याव्यासार्धवृत्ते किमिति। अत्र त्रिज्यातुल्ययोर्गुणहरयोस्तथा बिम्बा-र्धमितयोश्च तुल्यत्वान्नाशे कृते कोटिज्याया जिनांशज्या गुणस्त्रिज्या हरः। फलं कोटिक्रमक्रान्तिज्या। तत् त्रिज्यावृत्ते वलनम्। एवं विषुवद्वृत्तस्थित एव ग्रहे। यतो भूमध्यात् खस्वस्तिकस्थबिम्बमध्यं प्रति यत् सूत्रं नीयते तत् त्रिज्यासूत्रं दृग्वदेव। तदुपरिस्थं बिम्बं स्ववत् समन्तात् सममेव। यत् तत्परितस्त्रिज्यावृत्तं तत्र च वलनज्या देया तदपि भूसममेव स्थितम्। अत-स्तत्र यथागतमेव वलनम्। यदा किल मेषान्ते ग्रह-स्तदा तत्क्रान्त्या खस्वस्तिकादुत्तरे गतं बिम्बं स्यात्। त्रिज्यासूत्रं तदा कर्णरूपम्। बिम्बमध्याद्यल्लम्बसूत्रं भूगर्भाल्लग्नं द्युज्या। सा तत्र कोटिः। क्रान्तिज्या भुजः। यथा किञ्चित् कर्णस्थित्या धृते दर्पणे रूपमपि तत्स्पर्शिन्या दिशि कर्णरूपं भवति। तत्र वलनज्यापि कर्णरूपिण्या भवितव्यम्। यत् पूर्वमानीत क्रान्त्यन्तरं कम्बलस्य न तिर्यक्स्पर्शि तत् कोटिरूपं जातम्। तस्य कर्ण-

करणायानुपातः। यदि द्युज्याकोट्या त्रिज्या कर्णस्तदा-ऽनया किमिति। पूर्वं कोटिज्याया जिनज्या गुण-स्त्रिज्या हरः। इदानीं त्रिज्या गुणो द्युज्या हरः। अत्रापि त्रिज्यातुल्ययोर्गुणहरयोर्नाशे कृते कोटिज्या जिनज्यागुणा द्युज्यया भक्ता वलनं स्यादित्युपपन्नम्। युक्त्यानयैव विक्षेपसम्भवं च क्रमज्यवेति। यथायनवल-नज्ञानार्थं ध्रुवात् परितो जिनभागैः कदम्बभ्रमवृत्तं निबद्धं तथा याम्योत्तरक्षितिजयोः सम्पातः स सम-मण्डलः। तस्मादक्षभागैः परितोऽक्षवलनज्ञानार्थं वृत्तं बध्नीयात्। तत् किलाक्षवलयसंज्ञम्। तदपि भ्रमि-रहितम्। तत्राक्षवलनोपपत्तिर्दर्शनीया। तद्यथा मध्याह्नेऽर्कात् समचिह्नं प्रति नीयमानं सूत्रम् सूत्रं ध्रुवचिह्नलग्नं याति। अतस्तत्र विषुवद्वृत्तमण्डल-योरैक्येन याम्योत्तरा वलनाभाव इत्यर्थः। अथ यदि दिनार्धस्थितं सूर्यं कृत्वा समचिह्नात् सूर्यं प्रति नीयमानं सूत्रं यत्र समण्डले लगति तत्सम्पातिका-योर्मध्ये यावन्तोंऽशास्तावन्त एवाक्षवृत्ते समसूत्रध्रुवयो-र्मध्ये भवन्ति। यतस्तत्समवृत्तानुकारं वृत्तम्। तेषां भागानामक्षवलये यावती क्रमज्या तावदेव समसूत्रध्रुव-योरन्तरम्। अथ क्षितिजस्थेऽर्के क्षितिजमेव सम-सूत्रम्। तत्राक्षवृत्ते च नवतिर्नतांशाः। तेषां ज्याऽक्ष-वलयेऽक्षज्यातुल्या स्यात्। अतः समण्डलगतैर्नतांशै-र्वलनं साधयितुं युज्यते। ते तु महायासेन ज्ञायन्ते। न तु सुखेन। अतस्तज्ज्ञानार्थं स्थूलोऽनुपातः सुखार्थं कृतः। यदि दिनार्धतुल्येन स्वाहोरात्रनतेन नवतिः सममण्डलनतांशा लभ्यन्ते तदेष्टेन किमिति। लब्ध-नतांशानां या क्रमज्या साऽक्षज्यावृत्ते परिणाम्यते। यदि त्रिज्यावृत्ते एतावती ज्या तदाक्षज्यावृत्ते किय-तीति। लब्धं किल वलनज्या स्यात्। परं सा द्युज्या-ग्रे, न त्रिज्याग्रे। यतः समसूत्रध्रुवयोरन्तरं तत्। ग्रहध्रुवयोर्मध्ये द्युज्याचापांशा एव वर्तन्ते। यदि द्युज्यावृत्ते एतावती तदा त्रिज्यावृत्ते कियतीति। एवं सति पूर्वत्रैराशिके त्रिज्या हरः। इदानीं गुणः। तुल्यत्वात् तयोर्नाशे कृते नतांशज्या या अक्षज्या गुणो द्युज्या हरः। फलं स्थूला वलनज्या स्यात्। अथ सूक्ष्माप्युच्यते। पलप्रभावोऽर्कस्य शङ्कुः शङ्कु-तलमपि च साध्या। अथ शङ्कुतलयोः समदिशोरैक्य-मन्यथान्तरं स किल बाहुः पूर्वं प्रतिपादित एव।

वल्कल न० वल-कलच् कस्य नेत्वम्। १त्वचि (छालचिनि) वृक्षे राजनि० २त्वचि (छाल) पुंन० अमरः। ३मिना-वल्कायां स्त्री राजनि०।

वल्कलोध्र पु० वल्कप्रधानो लोध्रः। पट्टिकालोध्रे राजनि०।

वल्ग गतौ प्लुतगतौ च भ्वा० पर० सक० सेट्। वल्गति अवल्गीत्।

वल्गा स्त्री वल्ग-अच्। (लागाम) अश्वमुखस्थे रज्जुभेदे [हेमच०

वल्गित न० वल्ग-भावे क्त। १अश्वस्य गतिभेदे प्लुतगतौ अमर०। २गमने ३वल्गभाषणे च।

वल्गु पु० वल्ग-संवरणे उ-गुक् च। १छागे २मनोहरे त्रि० मेदि०। स्वार्थे कन्। वल्गुक चन्दने वने पण्ये च न०। चार्वणि सुन्दरे च त्रि० अजयः। वल्गो-ष्ट्रादित्वमित्यन्ये।

वल्गुपत्त्र पु० वल्गूनि पत्त्राणि यस्य। वनमुद्गे शब्दर०।

वल्गुला स्त्री वल्ग-उल। १वाकुच्यां सोमराज्यां २खगभेदे राजनि०संज्ञायां कन्। वल्गुलिका तैलपायिकायां हेमच०

वल्भ भक्षणे भ्वा० आत्म० सक० सेट्। वल्भते अवल्भिष्ट।

वल्मिकि पु० वल-इकि मुट् च। कीटविशेषकृते मृत्तिका-स्तूपे (उयेर ढिपि) शब्दर०। वल इक मुट् च। वल्मिक तत्रार्थे भरतः।

वल्मीक पुंन० वल-ईक मुट् च। क्षुद्रकीटकृतमृत्स्तूपे अमरः तन्मृदा शौचनिषेधो विष्णुपु० उक्तो यथा "वल्मीकमृत्तिकोत्खातां मृदमन्तर्जलां तथा। शौचाव-शिष्टा गेहाच्च नादद्यात् लेपसम्भवाम्"। देवप्रतिमायाः शिल्पिदोषशान्तये तन्मृदा प्रतिमाक्षालनं विहितं यथा "वल्मीकमृत्तिकाभिश्च गोमयेन शुभात्मना। क्षालयेत् शिल्पिसंस्पर्शदोषाणामुपशान्तये" देवप्र० त०।

तेन देवमूर्त्तेः स्नापनमपि देवप्र० त० विहितं यथा "स्नापयेत् प्रथमं देवं तोयैः पञ्चविधैरपि। पश्चान्मृतैः पञ्चगव्यैः पञ्चमृत्तिकाक्षतैरपि। मृत्तिका करिदन्तस्य पर्वताग्रस्थलस्य च। कुशवल्मीकसम्भूता मृत्प्रपञ्च-मुदीरितम्" देवप्र० त०। तत्राविर्भूते प्राचेतसे ख्यातनाम-ख्याते रामायणकर्त्तरि २मुनिभेदे ३रोगभेदे च विश्व०। तद्रोगनिदानादि भावप्र० उक्तं यथा "ग्रीवांसकक्षाकरपाददेशे सन्धौ गले वा त्रिभिरेव दोषैः। ग्रन्थिः स वल्मीकवदक्रियाणां जातः क्रमे-णैव गतप्रवृद्धिः। मुखैरनेकैः स्रुतितोदवद्भिः विसर्पवत् सर्पति चोन्नताग्रैः। वल्मीकमाहुर्भिषजो विकारम् निष्प्रत्यनीकं चिरजं विशेषात्"। वल्मीकवद्दिछन्नेन म-धुराश्वरतसुप्तममाढमूलस्य स्थच्यते निष्प्रत्यनीक-मुपचारायोग्यम्"। ततः भवार्थे इञ्। वाल्मीकि वल्मीकभवे प्राचेतसे मुनौ शब्दरत्ना०।

वल्मीकशीर्ष न० वल्मीकस्य शीर्षमिव। स्रोतोऽञ्जने राजनि०

वल्मीकूट न० वल्मीकं कूटमिव पृषो०। वल्मीके हेमच०

वल्य(ल्यू)ल छेदने पवित्रताकरणे च अद० चुरा० उभ० सक० सेट्। वल्यु(ल्यू)लयति ते अववल्यु(ल्यू)लत् त।

वल्ल संवरणे भ्वा० आत्म० सक० सेट्। वल्लते अवल्लिष्ट।

वल्ल पु० वल्ल-घञ्। १गुञ्जात्रयपरिमाणे "वल्लस्त्रिगुञ्जः" लीला०। २गुञ्जाद्वये वैद्यकम्। ३सार्द्धगुञ्जामाने "गोधूमद्वितयोन्मिता तु कथिता गुञ्जा तया सार्द्धया वल्लः" राजनि०।

वल्लकी स्त्री वल्ल-क्वुन् गौरा० ङीष्। १वीणायाम् अमरः। २शल्लकीवृक्षे च राजनि०।

वल्लभ पु० वल्ल-अभच्। १दयिते २अध्यक्षे अमरः। ३उत्त-माश्वे च मेदि०। ४दयितायां स्त्री हेमच०।

वल्लभपाल पु० वल्लभं पालयति पालि-अण्। अश्वपाले

वल्लर न० वल्ल अरन्। १कृष्णागुरुणि मेदि० २गहने ३कुञ्जे च राजनि०। ४मञ्जर्यां शब्दर०।

वल्लरि(री) स्त्री वल्ल-अरि वा ङीप्। १मञ्जर्याम् अमरः। २मेथिकायां ३चिल्लमूले च राजनि०।

वल्लव पुस्त्री० वल्ल-घञ् तं वाति वा-क। १गोपे अमरः स्त्रियां ङीष्। २पाचके अमरः ३भीमसेने मेदि०।

वल्लि(ल्ली) स्त्री वल्ल-इन् वा ङीप्। १लतायाम् अमरः। २पृथिव्यां शब्दच० दीर्घान्तस्तु ३अजमोदायां मेदि० ४कैवर्त्तिकायाम् ५चव्ये च राजनि०।

वल्लीज न० वल्ल्यां जायते जन-ड। मरिचे राजनि०।

वल्लीदूर्वा स्त्री वल्लीरूपा दूर्वा। मालादूर्वायाम् राजनि०।

वल्लीबदरी स्त्री वल्लीरूपा बदरी। भूमिबदर्याम् राजनि०।

वल्लीमुद्ग पु० वल्लीप्रधानः मुद्गः। वनमुद्गे (मुगानि) राजनि०

वल्लीवृक्ष न० वल्लीव दीर्घो वृक्षः। सालवृक्षे राजनि०।

वल्लुर न० वल्ल-उरच्। १कुञ्जे २मञ्जर्यां ३क्षेत्रे ४निर्जल-स्थाने ५शाड्वले हेमच०। ६गहने च मेदि० वल्ल-उरन्। वल्लुर समार्थे न० शब्दर०।

वल्लूर त्रि० वल्ल-ऊरन्। आतपादिना १शुष्कमांसे अमर २शूकरमांसे मेदि० ३मरुदेशे ४वाहने ५ऊषरभूमौ च हेमच०।

वल्या स्त्री वल्ल-यत्। भालीवृक्षे राजनि०।

**वहति** पु० वह–अति । १वायौ उणा० । २गवि ३सचिवे च मेदि० । [४गमने च ।

**वहन** न० वह-भावे ल्युट् । १पुरभेदे त्रिका० २प्रापणे ।

**वहन्त** पु० वह–झच् । वायौ त्रिका० २बाले उणा० ।

**वहल** पु० वह–अलच् । १पोते हारा० २दृढे त्रि० हेम० ।

**वहलगन्ध** न० वहलो दृढो गन्धो यस्य । शम्बरचन्दने राजनि० ।

**वहलचक्षुस्** पु०वहलानि चक्षूंषीव पुष्पाण्यस्य । मेषशृङ्ग्यां (गाडरसिङ्गा) रत्नमा० । [राजनि० ।

**वहलत्वच** पु० वहला दृढा त्वचा यस्य । श्वेतलोध्रे

**वहला** स्त्री वहलानि पुष्पादीनि सन्त्यस्य अर्श आद्यच् । १शतपुष्पायां राजनि० । २स्थूलैलायां भावप्र०।

**वहित्र** न० वह–इत्र । १पोते जलयाने त्रिका० । स्वार्थे क । अत्रैवार्थे ।

**वहिरङ्ग** न० वहिः प्रकृतेर्वाह्यमङ्गं यस्य । व्याकरणोक्ते प्रत्ययादिनिमित्तके प्रकृत्यवयवादिकार्ये । "असिद्धं वहिरङ्गमन्तरङ्गे" व्या० परिभाषा ।

**वहिरिन्द्रिय** न० वहिर्देहाद्बाह्यस्य पदार्थस्य ग्राहकमिन्द्रियम् । शब्दादिबाह्यविषयग्राहकेषु श्रोत्रादिषु ।

**वहिर्द्वार** न० वहिःस्थं द्वारम् । तोरणे अमरः ।

**वहिर्मुख** त्रि० वहिः बाह्यविषये मुखं प्रवणता यस्य । बाह्यविषयासक्तमनस्के विषयासक्ते १जने २विमुखे च ।

**वहिस्** अव्य० वह–इसुन् । बाह्ये अमरः ।

**वहेडक** पु०वह–अच् वहः एडक इव ईहते काङ्क्षो यस्य । विभीतकवृक्षे (वहेडा) राजनि० ।

**वह्नि** पु० वह–नि । १अग्नौ २चित्रकवृक्षे अमरः ३भल्लातके ४निम्बूके राजनि० । तन्त्रोक्ते ५रकारे च । "रगोऽयं वह्निसंस्थम्" इति श्यामारहस्यम् । वह्निभेदादिकं यथा

"जृम्भको दीपकश्चैव विभ्रमश्चम्भशोभना । आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च । अन्वाहार्यो गार्हपत्य इत्येते दश वह्नयः" । अन्यैरन्यथोक्तानि यथा "प्राशको रञ्जकश्चैव क्लेदकः स्नेहकस्तथा । धारको बन्धकश्चैव द्रावकाख्यश्च सप्तम । व्यापकः पावकश्चैव श्लेष्मको दशमः स्मृतः" । शरीरस्थवह्नेः नामानि यथा "वह्नयो दोषदुष्येषु संक्षीणा दश देहिनः" । दोषदुष्यायुर्यथा "वातपित्तकफा दोषाः दुष्याः स्युः सप्तधातवः" भा० ति० । "गुह्यागन्योः यथा "गार्हपत्यो दक्षिणाग्निस्तथैवाहवनीयकः । एतेऽग्नयस्त्रयो मुख्याः शेषाश्चोपसदस्त्रयः" वह्निपु० । तत्र निषिद्धकर्माणि यथा "नाशुद्धोऽग्निं परिचरेत् न देवान् कीर्त्तयेद्वृषीन् । न चाग्निं लङ्घयेद्धीमान् नोपदध्यादधः क्वचित् । न चैनं पादतः कुर्य्यात् मुखेन न धमेद्बुध । अग्नौ न निक्षिपेदग्निं नाद्भिः प्रशमयेत्तथा । न वह्निं मुखनिश्वासैर्ज्वालयेन्नाशुचिर्बुधः । स्वमग्निं नैव हस्तेन स्पृष्ट्वा नाप्सु चिरं वसेत् । नाग्निमिर्मेद्ध्योपयसेव न सर्पेण च पाणिना । मुखेनाग्निं समन्धीत मुखादग्निरजायत" कूर्मपु०१५अ० । अग्निवैकृत्यं तस्य शान्तिश्च यथा "अनग्निर्दीप्यते यत्र राष्ट्रे यस्य निरिन्धनः । न दीप्यते चेन्धनवान् स राष्ट्रः पीड्यते नृपः । प्रज्वलेदप्सु मांसं वा तथार्द्रमपि किञ्चन । प्रासाद् तोरणद्वारं नृपवेश्म सुरालयम् । एतानि यत्र दह्यन्ते तत्र राजभयं भवेत् । विद्युता वा प्रदह्यन्ते तत्रापि नृपतेर्भयम् । धूमशानग्निजो यत्र तत्र विद्यान्महद्भयम् । विनाग्निं विस्फुलिङ्गाश्च दृश्यन्ते यत्र कुत्रचित् । त्रिरात्रोपोषितस्तत्र पुरोधाः सुसमाहितः । समिद्भिः क्षीरवृक्षाणां सर्षपैश्च घृतेन च । दद्यात् सुवर्णञ्च तथा द्विजेभ्यो गाश्चैव वस्त्राणि तथा भुवञ्च । एवं कृते पापमुपैति नाशं यदग्निवैकृत्यमिदं द्विजेन्द्र" । वह्निपु०१०५अ०। ६तद्देवताके कृत्तिकानक्षत्रे ज्योतिषम् ।

**वह्निकरी** स्त्री वह्निं देहस्थवह्निं करोति उद्दीपयति कृ–ट ङीप् । १धातकीवृक्षे (धाइफुल) शब्द० । २वह्नेर्दीपके त्रि० । [दाहागुरुणि राजनि० ।

**वह्निकाष्ठ** न० वह्नेर्दीप्ताद्दाहायानुकूलं काष्ठम् शा० त० ।

**वह्निगन्ध** पु० वह्नौ दाहकाले गन्धो यस्य । यक्षधूपे शब्दच०

**वह्निगर्भ** पु० वह्निर्गर्भे यस्य । १वंशे २शमीवृक्षे स्त्री शब्दर०

**वह्निज्वाला** स्त्री वह्नेर्ज्वालेव पीडाकारकत्वात् । १धातकीवृक्षे राजनि० ६त० । २वह्निशिखायाम् ।

**वह्निदीपक** पु० वह्निं देहस्थवह्निं सेवनाद्दीपयति दीप–णिच्–ण्वुल् वह्निरिव दीप्यति दीप–ण्वुल् वा । १कुसुम्भे शब्दर० । २अग्न्युद्दीपके त्रि० । ३अजमोदायाम् स्त्री राजनि० । [ङीप् । जटामांस्याम् रत्नमा० ।

**वह्निनी** स्त्री वह्निः तत्कान्तिं नयति नी–ड गौरा० ।

**वह्निपुष्पी** स्त्री वह्निरिव तापकं पुष्पं यस्याः ङीप् । धातकीवृक्षे राजनि० ।

**वह्निबीज** न० ६त० । इति शब्दच० ।

वह्निमन्थ पु० वह्निर्वह्निजननाय मथ्यतेऽसौ मन्थ–कर्मणि घञ्। १गणिकारीवृक्षे जटा०। शब्दच०। २वह्नेर्मन्थने राजनि०। (तत्रैव न०।

वह्निमित्र पु० वह्नेर्मित्रं यस्य। १वायौ शब्दच० शब्दच०।

वह्निरेतस् पु० वह्नौ निषिक्तं रेतो येन। १शिवे वह्नौ हि निषिक्तात् शिववीर्यात् गङ्गादिसंक्रमेण कार्त्तिकेयोत्पत्तिः पुराणप्रसिद्धम्। शब्दच०।२काञ्चने च। [राजनि०।

वह्निलोहक न० वह्नेः प्रियं लोहं धातुः स्वार्थे क। कांस्ये

वह्निवधू स्त्री शब्दच०। १अग्निभार्यायां स्वाहायाम् २स्वाहान्तके मन्त्रे च। वह्निजायादयोऽप्यत्र।

वह्निवर्ण न०वह्नेरिव वर्णोऽस्य। रक्तोत्पले शब्दच०। [त्रिका०

वह्निवल्लभ पु० वह्नेर्वल्लभ उद्दीपकत्वात्। सर्जरसे (धुना)

वह्निवीज न० वह्नेर्देहस्थवह्नेर्वीजमिव उद्दीपकत्वात्। १जीरके शब्दच०। वह्निदेवताके तन्त्रोक्ते २रकारे च। ३निम्बुके राजनि० ४ हेमच०।

वह्निशिख न० वह्नेरिव रक्तत्वात् शिखाऽस्य। १कुसुम्भे अमर। २कलिकायां ३अग्निकारीवृक्षे ४धातक्याञ्च स्त्री राजनि० शब्दच०। ५अग्निशिखायां स्त्री। [राजनि०।

वह्निसख पु० शब्दच०। १वायौ। देहस्थवह्नेरुद्दीपके २जीरके

वह्य न० वह–यत्। १शकटे २वाहनमात्रे च हेमच०। ३मुनिपत्न्यां स्त्री उणा०।

वा उभयार्थे अक० गतौ सेवने च सक० चुरा० उभ० सेट्। वापयति ते अवीवपत् त। [वाति अवासीत्।

वा गमने हिंसने (सूचने) च अदा० पर० सक० अनिट्।

वा अव्य० वा–क्वा। १विकल्पे २सादृश्ये ३अवधारणे ४समुच्चये अमरः। एष्वर्थेषु यथाक्रमं उदाहृत यथा (विकल्पे) यवैर्वा व्रीहिभिर्वा यजेत। (उपमाने) सिन्धौ वाधो मधुरं गौर्वा रसः" इत्ये (अवधारणे) "वा वा ममो-पादेया वा मूर्त्तिर्जलमयी मम न इतीयेत्यर्थः। (समुच्चये) वायुर्वा दहनो वा। ५वितर्के ६पादपूरणे च मेदि० [जटा०

वाग्मिक पु० वग्मी तदादत्त शिल्पमस्य ठक्। वग्मीवादनशीले

वाग्मी स्त्री वंशे भवः अण् ङीप्। वंशरोचनायाम् राजनि०

वाक पु० वच–घञ्। १वचने "ममोवाक मयाश्रुतं" उत्तररामचरितम्। पृषो० कान्तत्वम्। ग्रन्थभेदे "वाकोवाक्येति-हासेत्यादि" छान्दोग्यम्। "वाकोवाक्यम् उक्तिप्रत्यु-क्तिरूपम्" भा०। वकस्येदम् तेषां समूहो वा अण्। ३वकसम्बन्धिनि त्रि०। ४वकसंघे न० अमरः'

वाकुची स्त्री वाति क्विप् वाः कुच–सङ्कोचे क गौरा० ङीष्

कर्म०। (हाकुच) १सोमराजीभेदे २सोमराज्यां राजनि०।

वाक्कीर पु० वाचा कौतुकवाचा कीर इव प्रियत्वात्। श्यालके शब्दर०।

वाक्छल न० गौत० सूत्रोक्ते छलभेदे "अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पनम् वाक्छलम्" गौ० सू०। वक्त्रा एकार्थमात्रबोधतात्पर्येण प्रयुक्तस्य शब्दस्यार्था-न्तरबोधतात्पर्यकल्पना वाक्छलम्" वृत्तिः। यथा नेपालादागतोऽयं नवकम्बलवत्त्वात् इत्युक्ते कुतोऽस्य नवसंख्यकाः कम्बला इत्युक्तिः।

वाक्पति पु० ६त०। १वृहस्पतौ अमरः २सुवक्तरि च वाचः पतिरिव। ३निर्दोषोक्तवचनयुक्ते रायमुकुट'।

वाक्पथ पु० वाच' पन्था' विषयः अच्समा०। वाक्यविषये

वाक्पारुष्य न० वाचा कृतं पारुष्यम्। १वाक्यकृते पारुष्ये तद्विषयके २विवादभेदे च। तद्विवृतिः वीरमि०उक्ता यथा "तस्य च स्वरूपमाह नारदः "देशजातिकुलादीनामाक्रोशं न्यङ्गसंयुतम्। यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते" इति। आक्रोश आक्षेपः भर्त्सनमिति यावत् कलहप्रिया' गौड़ा इति देशाक्रोश। अत्यन्तलोलुपा ब्राह्मणा इति जात्याक्रोशः। "क्रूरचरिता वैश्वामित्रा इति कुलाक्षेपः। न्यङ्ग शिरःपाणिपादादिवैकल्यं तद्युक्तं यदुद्वेगजननार्थं वाक्यं तद्वाक्पारुष्यमित्यर्थः। तच्च त्रैविध्यमाह स एव "निष्ठुराश्लीलतीव्रत्वादपि तत् त्रिविधं स्मृतम्। गौरवानुक्रमात्तस्य दण्डोऽपि स्यात् क्रमाद्गुरु-रिति" निष्ठुरादीनां स्वरूपमाह स एव "साक्षेपनिष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम्। पतनीयैरुपाक्रोशैस्तीव्रमाहु-र्मनीषिणः" इति। धिङ्मूर्ख! जाल्म! इत्यादि साक्षेपमामन्त्र्य निष्ठुरम्। न्यङ्गसंयुत अवद्यभगिन्या-दिगमनसंयुतम् अश्लीलम्। पतनीयैः सुरापानादिभि-रुपाक्रोशैस्तीव्र वाक्पारुष्यमित्यर्थः। कात्यायनोऽपि "यस्त्वसत्यं शिरोरुक्कैः परमाक्षिपति क्वचित्। अभूतैर्वाथ भूतैर्वा निष्ठुरा वाक् स्मृता तु सा। न्यग्भावकरणं वाचा क्रोधात्तु कुरुते यदा। वृत्तदेशकुलानान्तु अश्लीला सा बुधैः स्मृता। महापातकयोक्त्री च राज-द्वेषकरी च या। जातिभ्रंशकरी वाच तीव्रा सा प्रथिता तु वागिति।" कल्पतरौ न्यङ्गावमूरणमिति पठित्वा निकृष्टाङ्गप्रकाशनेन तिरस्करणमिति व्याख्या-तम्। न्यग्भावकरणमिति तु माधवादिसम्मत' पाठः। प्रथममध्यमोत्तमभेदेन त्रैविध्यमाह वृहस्पतिः "देश

ग्रामकुञ्जादीनां क्षेपः पापेन योजनम्। द्रव्यं विना तु प्रथम वाक्पारुष्यं तदुच्यते। भगिनीमातृसम्बन्ध-मुपपातकशंसनम्। पारुष्यं मध्यमं प्रोक्तं वाचिक शास्त्रवेदिभिः। अभक्ष्यापेयकथनं महापातकदूषणम्। पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनमिति।" द्रव्यं विनेत्यत्र द्रव्यशब्दोऽभिधेयपर। तेनोच्यमानार्थव्यतिरेकेणैव विधमभिधानं वाक्पारुष्यमित्यर्थः इति कल्पतरौ। द्रव्यं विना द्रव्यविशेषं विनेति मदनरत्ने। अभिघट्टनं उत्पाटनम्। निष्ठुराक्रोशे दण्डमाह याज्ञवल्क्यः "सत्यासत्यान्यथास्तोत्रैन्यूनाङ्गेन्द्रिय रोगिणाम्। क्षेपं करोति चेद्दण्ड्यः पणानर्द्धत्रयोदशा निति। अन्यथास्तोत्रैर्निन्दास्तुति। न्यूनाङ्गाः करादिरहिताः। न्यूनेन्द्रियाः नेत्रादिरहिताः। रोगिणः कुष्ठ्यादय अर्द्धत्रयोदशान् अर्द्धाधिकद्वादशपणानित्यर्थः। एतत् सवर्णविषयम्। अतएव वृहस्पति "समजातिगुणानान्तु वाक्पारुष्ये परस्परम्। विनयो विहित शास्त्रे पणा अर्द्धत्रयोदशाः" इति। विष्णुरपि "समवर्णाक्रोशे द्वादश पणान्दण्ड्य इति"। परस्परामति शेषः। मनुनारदावपि "समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे। वादेष्ववचनीयेषु तदेव द्विगुण भवेदिति"। शङ्खलिखितावपि "समवर्णव्यतिक्रमे द्वादशपणा यथाक्रम-विशिष्टाक्षेपेषु विशिष्टस्य चतुर्विंशतिरविशिष्टस्यातिक्रमे च विशिष्टस्य ततोऽर्द्धमिति। अत्र द्वादशपार्द्धद्वादशयोरुत्कृष्टापकृष्टत्वेन व्यवस्था। कात्यायनोऽपि "यो गुणान् कीर्त्तयेत् क्रोधान्निर्गुणे वा गुणस्तताम्। अन्यसंज्ञानियोजी च वाग्दुष्टं तच्चरं विदुरिति" "नारदोऽपि "दुष्टस्यैव तु यो दोषान् कीर्त्तयेत् क्रोधकारणात्। अन्यायदेशवादो च वाग्दुष्टं तच्चर विदुरिति" "अत्र क्रोधकारणादित्यनेन दुष्टपरित्यागार्थं दोषकीर्त्तने न दोष इति सूचितम्। अतएवोक्तं कात्यायनेन "यत्र त्वात्मरिहारार्थं पतितस्तेन कीर्त्तितः। वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेदिति" "वचनात् दोषकीर्त्तनात्। यत्राभियोगादौ पातित्यादिकं साधयेत्तत्रापि वचनाद्दोषो न स्यादिति यत्र विभावयेदित्यस्यार्थ उक्तः स्मृतिचन्द्रिकायाम्। अत्रापि दण्डपारुष्यन्यायेन युगपत्प्रवृत्तयोर्दण्डतुल्यत्वं अयुगपत्प्रवृत्तयोः पूर्वप्रवृत्तस्य दण्डाधिक्यमिति द्रष्टव्यम्। जातिगुणकृते विशेषे दण्डवैषम्यमाह वृहस्पतिः "समानयो समो दण्डोन्यूनस्य द्विगुणोत्तमस्याधिकः प्रोक्तो वाक्पारुष्ये परस्परमिति"। हीनस्योत्तमाक्षेपे द्विगुणः उत्तमस्य हीनाक्षेपेऽर्द्धपरिमितो दण्ड इत्यर्थः। याज्ञवल्क्योऽपि "अर्द्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च। दण्डप्रणयनं कार्य वर्णजात्युत्तराधरैरिति" "अर्द्धः सार्द्धद्वादशपणात्मक इत्यर्थः पूर्ववाक्ये "पञ्चविंशतिको दम" इति पञ्चविंशतेः प्रकृतत्वात्। वर्णा ब्राह्मणादयः। जातयो मूर्द्धावसिक्तादयः। ते च ते उत्तराधराश्च वर्णजात्युत्तराधरास्तैरन्योन्याक्षेपे क्रियमाणे दण्डस्य प्रणयनमूहनीयं ज्ञातव्यम्। उत्तराधरभावमालोच्य दण्डः कल्पनीय इत्यर्थः। तमेव कल्पनीयं दण्ड प्रदर्शयति मनुः "शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति। वैश्योऽध्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हति। विप्र पञ्चाशत दण्ड्यः क्षत्रियस्याभिशंसने। वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दम इति।" वृहस्पतिरपि क्षिपन् विप्रादिक दद्यात् पञ्चाशत्पणिक दममिति"। शङ्खलिखितावपि "आक्रोशे ब्राह्मणस्य क्षत्रिय पणशतं दण्ड्यः, शतार्द्धं वैश्यस्य पञ्चविंशति शूद्रस्येति"। वृहस्पतिरपि। "विप्रः शतार्द्धं दण्ड्यस्तु क्षत्रियस्याभिशंसने। विट्स्तथार्द्धं पञ्चाशच्छूद्रस्यार्द्धत्रयोदश। सच्छूद्रस्यामुदितो विनयोऽनपराधिनः। गुणहीनस्य पारुष्ये ब्राह्मणो नापराप्नुयात्। वैश्यस्तु क्षत्रियाक्रोशे दण्डनीयः शतम्भवेत्। तदर्द्धं क्षत्रियो वैश्यं क्षिपन् विनयमर्हति। शूद्राक्रोशे क्षत्रियस्य पञ्चविंशतिको दमः। वैश्यस्य चैतद्द्विगुणः शास्त्रविद्भिरुदाहृतः। वैश्यमाक्षारयन् शूद्रोदाप्यः स्यात् प्रथमं दमम्। क्षत्रियं मध्यमञ्चैव विप्रमुत्तमसाहसमिति।" जिह्वाच्छेदनरूपोऽप्युत्तमसाहसो द्रष्टव्यः। तथा च स एव "धर्मोपदेशकर्त्ता च वेदोदाहरणान्वितः। आक्रोशकस्तु विप्राणां जिह्वाच्छेदेन दण्ड्यते" इति। शूद्र इत्यनुषङ्गः। आपस्तम्बोऽपि "जिह्वाच्छेदनं शूद्रस्यार्यं धार्मिकमाक्रोशत" इति। गौतमोऽपि "शूद्रो द्विजातीनभिसन्धायाभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गमोच्यो येनोपहन्यादिति"। अभिसन्धाय बुद्धिपूर्वं वाचातिक्रम्य अभिहत्य उग्रेण दण्डेन ताडयित्वा अङ्गमोच्यो येनाङ्गेनाभिहन्यते तेन वियोजनीय इत्यर्थः। गुर्वाद्याक्रोशे त्वाह शङ्खलिखितौ "तथाऽधिक्षतान् विमान् गुरूंश्च निपातनम्पुरुषं ताड़नं वा गोमयानुलेपनं

खरारोहणं दर्पहरणं वा दण्डो वेति । दण्डः कार्षापणशतद्वय' । अतएव विष्णुः "गुरुमाक्षारयन् कार्षापणशतमिति" । पुत्रादिभिर्मात्रादीनामाक्रोशे दण्डमाह मनुः "मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् । आक्षारयन् शतन्दाप्यः पन्थानञ्चाददद्गुरोरिति" । भ्रातरं जग्रेष्ठभ्रातरम् । एतच्च सापराधेषु मात्रादिषु निरपराधायां जायायामिति मिताक्षरायामभाणि । श्वश्रूाद्यधिक्षेपे दण्डमाह बृहस्पति "क्षिपन् श्वश्रूादिकं दद्यात् पञ्चाशत्पणिकं दममिति ।" बाह्वादिच्छेदन निष्ठुरभाषाभिभाषणे दण्डमाह याज्ञवल्क्य' बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दम' । शत्यस्तदर्द्धिकः पादनासाकर्णकरादिष्विति ।" बाह्वादिविनाशे वाचिके करिष्यामीति वाचा प्रतिपादित शत्य' शतपरिमितो दण्डः । पादादिभङ्गं करिष्यामीत्याक्षेपे पञ्चाशत्परिमितो दण्ड इत्यर्थ' । एवंवादिनोऽशक्तस्य दमपणा दण्डनीया इत्याह स एव "अशक्तस्तु वदन्नेव दण्डनीयः पणान्दशेति ।" यः पुनः शक्तोऽशक्तस्य बाह्वादिभङ्गाक्षेपं करोति न केवलं स दण्ड्यः किन्तु तत्क्षेमार्थं प्रतिभुवमपि दापनीय इत्याह स एव "तथा शक्तः प्रतिभुवन्दाप्यः क्षेमाय तस्य त्विति"। अश्लीलभाषणे दण्डमाह स एव "अभिगन्तास्मि भगिनीं मातरं वा तवेति ह । शपन्तन्दापयेद्राजा पञ्चविंशतिकं दममिति ।" तीव्राक्रोशे दण्डमाह स एव "पतनीय कृते क्षेपे दण्डमध्यमसाहसम् । उपपातकयुक्ते तु दाप्यः प्रथमसाहसमिति ।" पतनीयैः पातित्यहेतुभिर्ब्रह्महत्यादिभि' । उपपातकानि गोवधादीनि । मनुरपि "ब्राह्मणक्षत्रियाभ्यान्तु दण्डः कार्य्यो विजानता । ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यम । विट्शूद्रयोस्त्वेवमेव स्वजातिं प्रति तत्त्वत । छेदवर्ज्जं प्रणयनं दण्डस्येति विनिश्चयः। पापोपपातकक्षारो महापातकसंश्रवाः । आद्यमध्योत्तमान्दण्डान्दद्युस्ते यथाक्रममिति ।" विष्णुरपि "परस्परपतनीये क्षेपे कृते तूत्तमसाहसं उपपातकयुक्तन्तु मध्यमम् त्रैविद्यवृद्धानाक्षेपे जातिपूगानाञ्च ग्रामदेशयोः प्रथममिति" । देशाद्याक्रोशे दण्डमाह बृहस्पतिः "देशादिकं क्षिपन्दाप्य' पञ्चार्द्धमयोदय । पापेन योजयन् दर्पाद्दाप्यः प्रथमसाहसम् । एष दण्डः समाख्यातः पुरुषाणेच्छया मया । वर्णस्त्राधिकत्वेन कल्पनीयो मनीषिभिरिति ।" याज्ञवल्क्योऽपि "मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोरिति ।" राज्ञ आक्रोशे दण्डमाह नारदः "अप्रकृष्य च राजानं वर्त्मनि स्वे व्यवस्थितम् । जिह्वाच्छेदाच्छ्रेयस्व्हिः सर्वस्वहरणेन वेति ।" याज्ञवल्क्योऽपि "राज्ञोऽनिष्टप्रवक्तारन्तस्यैवाक्रोशकन्तथा । तन्मन्त्रस्य च भेत्तारं छित्त्वा जिह्वाम्प्रवासयेदिति ।" सत्यदोषाभिधानेऽपि वाक्पारुष्यदण्डोऽस्त्येव तथा च नारदः "पतितं पतितेत्युक्त्वा तथा चौरेति वा पुनः । वचनात्तुल्यदोषः स्यान्मिथ्याद्विर्दोषतां व्रजेदिति ।" मनुनारदावपि "काणं वाप्यथ वा खञ्जमन्यं वापि तथाविधम् । तथ्येनापि ब्रुवन्दाप्यो दण्डङ्कार्षापणावरमिति ।" विष्णुरपि "काणखञ्जादीनान्तथ्यवाद्यपि कार्षापणद्वयमिति ।" एतच्च दुष्टत्वविषयमिति माधवीये विद्यारण्यश्रीपादैरभ्यधायि । मिथ्यावदनशीलाना दण्डमाह कात्यायन "अन्नताख्यानशीलानाञ्जिह्वाच्छेदो विधीयमिति ।" हारीतोऽपि "मिथ्याभाषिणा सेवकानाञ्च राजा जिह्वाच्छिन्द्यादुदण्डयेद्वेति" सेवको भृत्यः । कश्चिद्वाक्पारुष्यकृतोऽर्द्धदण्डमाहोशनाः "मोहात् प्रमादात्सङ्घर्षात् प्रीत्या चोक्तं मयेति यः । नाहमेवं पुनर्वक्ष्ये दण्डार्द्धन्तस्य कल्पयेदिति ।"

**वाक्य** न० वच–ण्यत् चस्य कः । "वाक्यं स्याद् योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" इत्युक्ते १पदसंघे सा०द०। २स्वार्थबोधसमाप्ते पदसमुदाये वैयाकरणाः । [यथाक्लेद ।

**वाक्ष** सु हायां भ्वा० पर० सक० सेट् इदित् । वाङ्क्षति

**वागीश** पु० वाचामीशः । १बृहस्पतौ "वागीशाद्याः सुमनस" इति न्यायमाला । २सरस्वत्या स्त्री "वागीशा हृदये यस्य" इति भाग०टीकोपक्रमे श्रीधर' । ३पुम्बये च

**वागीश्वर** पु० ६त० । १बृहस्पतौ २गुरौ च ३तत्पत्न्यां स्त्री ङीप् "वागीश्वरीमहंध्यातां फुल्लेन्दीवरलोचनाम् । वागीश्वरेण संयुक्ताम्" इति तन्त्रम् । ४सरस्वत्यां स्त्री ङीप् ५मञ्जुघोषे पु० त्रिका० । [सोमराजग्राम् अमरः ।

**वागुजी** स्त्री वाचा गुज्यते ध्वन्यते गुज–क गौरा० ङीप् ।

**वागुरा** स्त्री वा–ऊ्वने उरच् गत् च । मृगयार्थं मृगबन्धनपाशादौ अमरः । [यस्य । आर्षे ।

**वागुरावृत्ति** पु० वागुरा मृगबन्धनपाशादिरेव वृत्तिर्जीविका

**वागुरिक** पु० वागुरा प्रहरण यस्य वागुरयाचरति वा ठक् । व्याधे अमर ।

**वाग्गुद** पु स्त्री० पक्षिभेदे त्रिका० गुरुहरवे तच्चातिमात्रि

भेतुनोक्ता "गोधा गा वागगुदो गुडम्" इत्यादि शेषः

**वागलि** पु० राजा ताम्बूलदातरि रत्नमाला।

**वागडम्बर** पु० ६त०। १वाक्यश्लोमे २वज्जृम्भवाक्ये च।

**वाग्दण्ड** पु० वाचो वागिन्द्रियस्य दण्डः संयमनम्। १मित-२भाषणे २वाक्यसंयमे च।

**वाग्दत्ता** स्त्री वाचा दत्ता। विधिना वाक्यमात्रेण दान-कृतसङ्कल्पायां कन्यायाम् "वाचा दत्ता मनोदत्तेति" उद्वा०त०

**वाग्दरिद्र** त्रि० ६त०। मितभाषिणि शब्दमा०।

**वाग्दान** न० ६त०। कन्याया वाङ्मात्रेण दाने "ततो वाग्दानपर्य्यन्तं यावदेकाहमेव च" शु०त०।

**वाग्दुष्ट** त्रि० वाचा दुर्वचनेन दुष्टः। शुद्धेऽपि वस्तुन्य-शुद्धरूपतया कथनेन दूषिते। "वाग्दुष्टं भावदुष्टं च वर्जयेदिति" स्मृति।

**वाग्देवता** स्त्री वाचा देवता। सरस्वत्या "वाग्देवता चरितचित्रितचित्तसद्मा" जयदेवः। वाग्देव्यादयोऽप्यत्र।

**वाग्मिन्** त्रि० वाच्+प्रशस्त्यर्थे ग्मिनि चस्य कः तस्य लोपः। १प्रशस्तवाक्यवक्तरि अमरः। २बृहस्पतौ पु० मेदि०। ४विष्णौ पु० विष्णुस०। [२निर्वेदे १कल्ये अजयः।

**वाग्य** त्रि० वाचं यच्छति यम-ड। १वाग्दरिद्रे शब्दमा०

**वाग्यत** त्रि० वाक् वागिन्द्रियव्यापारो यता येन। मौन-धारिणि मुनौ अमरः "वाग्यतस्त्रिषवणं चरेत्" स्मृतिः।

**वाग्यम** त्रि० वाचं तद्व्यापारं यच्छति यम-अच्। मुनौ अमरः।

**वाग्मती** स्त्री "हिमाद्रेस्तुङ्गशिखरात् प्रोद्भूता वाग्मती नदी" इत्युक्ते नदीभेदे। सा च मिथिलादेशसन्नि-कृष्टतया वहति।

**वाङ्मय** त्रि० वाक्स्वरूपम् मयट् चस्य कः तस्य ङः। १वाक्य-स्वरूपे शास्त्रे। २वाक्यजनिते पापभेदे च। "पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतु-र्विधम्" मनु। तथा "परुषवचनमपवादः पैशुन्यमनृतं वृथालापो निष्ठुरवचनम् वाङ्मयानि षट्। परेषां देश-जातिकुलविद्याशिल्परूपवृत्ताचारपरिच्छदशरीरकर्मजी-विना मत्सराद्दोषवचनं परुषम्। "यच्चान्यत् क्रोधस-न्तापत्रासजननं वचः। परुषं तच्च विज्ञेय यच्चान्यच्च तथाविधम्। चक्षुष्मानिति लुप्ताक्षं चाण्डालं ब्राह्म-णेति च। प्रशंसानिन्दनं द्वेषात् परुषाख्यं विशिष्यते"। तेषामेव परुषवचनानामपरोक्षमुदाहरणम् अपवादः। सुहृत्पतितबन्धुभ्रातृमित्रसकाशे अर्थोपघातार्थं दोषो-ख्यानं पैशुन्यम्। अनृतं द्विविधं असत्यमसंवाद-श्चेति "देशराष्ट्रप्रसङ्गाच्च परार्थपरिजल्पनात्। नर्महास-प्रसङ्गाच्च भाषणं व्यर्थभाषणम्। गुह्याङ्गाभिध्यरुक्षाणां भाषणं निष्ठुरं विदुः। यदन्यद्वा वचो नीचस्त्रीषु यो-षित्सुमात्रयम्। इत्येवं षड्विकल्पस्य दुष्टवाक्यस्य भाष-णात्। इह चासत्य च क्रूरमनर्थं प्रतिपद्यते"। प्रशं-सानिन्दनं प्रशंसानिन्दनम्। अत्र चतुर्विधषड्विधयो-रविरोधः। समयाचारसत्त्वभेदानादरेण पारुष्याप-वादयोरैक्यात् निष्ठुरस्य परुषान्तर्भावाच्च। असम्बद्ध-प्रलापव्यर्थभाषणयोः पर्य्यायत्वान्नार्थान्तरम्" ति०त०।

**वाङ्मुख** न० ६त० उपन्यासे प्रथमवाक्योपक्रमे अमरः।

**वाचंयम** त्रि० वाचं यच्छति वाचा+यम-ख मुम् हस्वश्च। १मितभाषिणि। २मौनावलम्बिनि मुनौ पु० अमर।

**वाच** पुंस्त्री० वच-णिच्-अच्। (वाचा) इति ख्याते मत्स्य-भेदे राजवल्लभ स्त्रियां ङीप्।

**वाचक** त्रि० वक्ति अभिधावृत्त्या बोधयति वच-ण्वुल्। "साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः" इत्युक्ते १शब्दभेदे २कथके त्रि०। वाचयति वच-णिच्-ण्वुल्। ३पुराणादिपाठके पु० "वाचकः पूजितो येनेति" पुरा० "ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात्। श्रुत्वान्य-वर्णजाद्राजन्! वाचकान्नरकं व्रजेत्"। तथा "देवाग्नि-मथतः कृत्वा ब्राह्मणानां विशेषतः। यन्त्रिष्व शिथिलं कुर्य्याद्वाचकः कुरुनन्दन!। पुनर्बध्नीत तत्सूत्रं न मुक्तां धारयेत् क्वचित्। हिरण्यं रजतं गाश्च तथा कांस्योपदो-हनाः। दत्त्वा तु वाचकायेह श्रुतस्याप्नोति तत् फलम्"। कांस्योपदोहनाः कांस्यक्रोडाः "वाचक पूजितो येन प्रसन्नास्तस्य देवता"। तथा "शास्त्रा पर्वसमाप्तिषु पूजये-द्वाचकं बुधः। आत्मानमपि विक्रीय य इच्छेत् सफलं क्रतुम्"। तथा "विस्पष्टमद्रुत शान्तं स्पष्टाक्षरपदं तथा। कलस्वरसमायुक्तं रसभावसमन्वितम्। बुध्यमानः सदार्थं ग्रन्थार्थं कृत्स्नशो नृप!। ब्राह्मणादिषु सर्वेषु ग्रन्थार्थं चार्पयेन्नृप!। य एवं वाचयेद् ब्रह्मन् स विप्रो व्यास उच्यते"। तथा "सप्तस्वरसमायुक्तं काले-काले विशाम्पते!। प्रदर्शयन् रसान् सर्वान् वाचयेद् वाचको नृप" ति०त०।

वाचकलक्षणादि हेमा० दा० नन्दिपु० उक्तं यथा

"वाचको ब्राह्मणः प्राज्ञः श्रुतशास्त्रो महामनाः। अभ्यस्ताक्षरविन्यासो ह्रस्वादिविशारदः। शब्दार्थवित्

प्रगल्भश्च विनीतो मेधया युतः। नीतिज्ञो वाक्पटुः श्राव्य स्वरेणाखिलभावकः'' इत्युपक्रमे एवंविधाऽनतो वाच्यं वाचकेन विपश्चिता। तपःप्रभावात्मकं मन्त्रं स्वर्गादिफलसाधकम्। यत्नैर्विनोद्य वै वाच्यमध्यायादि च यद् भवेत्। क्रुद्धोक्तियुक्तसंक्षोभं पारायत्तेन (वेगेन) वाचयेत्। पराणां ललितैर्वाक्यैर्वाचयेत् हृदयङ्गमैः। नाम'इत्तानुक्रमेण सान्नित्येन च वाचयेत्। सर्गाध्याये समाप्ते च कथापर्य्यन्त एव वा। सगन्धगन्धसंयोगे कुर्य्यादिति विरामणम्। समासो वाचको धीमान् ब्रूयाद्दिव विचक्षण। अवधार्य्य जगच्छान्तिमन्ते शान्त्युदकं क्षिपेत्। सुस्रुत सुस्रुत ब्रूयादस्तु व्याख्यातमित्यदः। लोकं प्रवर्त्तता धर्मे राजा चास्तु सदा सती। धर्मवान् धनसम्पन्नो गुरुवाक् निरामय। इति ब्रोयत् यथाऽऽस्थान गन्तव्यं च विभावसु।

**वाचन** न० वच-णिच् स्वार्थे वा णिच् ल्युट्। १पठने २कथने च युच्। पठने स्त्री। [णापाटौ।

**वाचनिक** त्रि० वचनेन निर्वृत्तम् ठक्। वाक्यनिष्पादिते

**वाचस्पति** पु० ६त०अलुक्समा०। १वृहस्पतौ २पुष्यनक्षत्रे च

**वाच्(चा)** स्त्री उच्यतेऽसौ अनया वा वच-क्विप नि० वा टाप्। १वाक्ये अमरः २वागिन्द्रिये च।

**वाचाट** त्रि० वाक्+कुत्सायां वाङ्क्त्योऽस्त्यर्थे आटच् भत्वात् न कः। कुत्सितबहुभाषिणि अमर। आलच्। वाचालोऽप्यत्र।

**वाचिक** त्रि० वाचा कृतम् वाच्+ठक् भत्वात् न कः। १वाक्यनिष्पादिते पापादौ वाङ्मयशब्दे दृश्यम्। २वाक्यारम्भभेदे। ''आलापश्च विलापश्च संलापश्च प्रलापक। अनुलापोऽपलापश्च सन्देशश्चातिदेशिक। अपदेशोपदेशौ च निर्देशो व्यपदेशकः। कीर्त्तिता वचमारम्भा द्वादशामी मनीषिभिः'' उज्ज्वलमणिः। [नैर्मल्ये च।

**वाचोयुक्ति** स्त्री ६त० अलुक्स०। १वाचादर्शितयुक्तौ २व्य-

**वाच्य** न० वच—भावे ण्यत् न कः। १दूषणे २प्रतिपादने धरणिः। ३कथने च। कर्मणि ण्यत्। ४दूष्ये ५प्रतिपाद्ये अभिधया बोध्यार्थे च सा० द०।

"प्रत्यासत्त्यवस्तुसाध्या प्रयोगाणां विधीयते। वाच्यवाचकभावोऽयमपपादादिशब्दवत्। विभीतकेऽप्यक्षशब्दो यद्यप्यक्षे प्रयुज्यते। तथापि वाचकस्तस्य ज्ञायते प्रघटाक्षवत्'' स०त०भट्टमा०। [भावे—अ। वाञ्छा।

**वाञ्छ्** कामे भ्वा०पर०स०सेट् इदित्। वाञ्छति अवाञ्छीत्।

**वाज** न० वज—घञ्। १पक्षे २घृते ३अन्ने ४यज्ञे च मेदि०। ५शरपक्षे अमरः ६वेगे पु० ७निस्वने ८पक्षे पु० मेदि० १०मुनौ पु०विश्वः। [कात्या०श्रौ०सूत्रप्रकारादि दृश्यम्।

**वाजपेय** पुंन० वाजमन्नं पेयं वा पेयमत्र। यागभेदे

**वाजपेयिन्** पु० वाजपेय+अस्त्यर्थे इनि। १वाजपेययाग-कर्त्तरि उपचारात् २तदङ्गत्वे च।

**वाजसन** पु० वाजमन्नं सनोति ददाति सन-अच्। १विष्णौ विष्णुस०। २शिवे भा० अनु० १७अ०।

**वाजसनि** पु० राजस्य अन्नस्य सनिर्दानं येन। सूर्य्ये "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" इत्युक्तेस्तस्य वृष्टिद्वारा अन्नदातृत्वात् तथात्वम्।

**वाजसनेय** पु० वाजसने सूर्य्यस्य अपत्यं ढक्। अस्य वक्तव्ये "आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते" इत्युदारण्यक श्रुतिः। अस्यार्थः। आदित्यादधीतान्यादित्यानि शुक्लानि शुद्धानि। इयमत्र आख्यायिका। व्यासशिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत्। तत्र दैवात् केनापि हेतुना क्रुद्धो वैशम्पायनो याज्ञवल्क्यं प्रत्युवाच मदधीतं त्यजेति। स योगसामर्थ्यात् मूर्त्तां विद्यां विधायोद्गाव। तानि यजूंषि गृह्णीतेति गुरुणा अन्ये वैशम्पायनशिष्यास्तित्तिरयो भूत्वा यजूंष्यभक्षन्। तानि यजूंषि बुद्धिमालिन्यात् कृष्णानि जातानि। ततो दुःखितो याज्ञवल्क्यः सूर्य्यमाराध्यान्यानि शुक्लानि यजूंषि प्राप्तवान्। तानि च जाबालगौधेयकाण्वमाध्यन्दिनादिभ्यः पञ्चदशशिष्येभ्यः पाठितवान्" वेददी०। "एवं स्तुतः स भगवान् वाजिरूपधरो रविः। यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः। यजुर्भिरकरोच्छाखा दशपञ्च शतैर्विभुः। जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः" भाग० १२।६।६७ श्लो०

**वाजसनेयिन्** पु० ब०व०। वाजसनेयेन प्रोक्तमधीयते इनि। यजुर्वेदशाखाभेदाध्यायिषु विप्रादिषु। २तदुक्तरीत्या कर्मकर्त्तृषु शूद्रेषु च "शूद्रा वाजसनेयिनः" प्र०मा०त०।

**वाजिदन्त** पु०वाजिनो दन्त इव पुष्पमस्य। १वासके २तरुभेदे कप्। वाजिदन्तक तत्रैव।

**वाजिन्** पु० वाज वेग पक्षो वा अस्त्यस्य इनि। १घोटके २पक्षिणि ३वासके च शब्दर०। ४वेगवति त्रि० स्त्रियां ङीप्। सा च ५अश्वगन्धायाम् ६पाटल्याम् स्त्री

राजनि० । ७दैत्यभेदे पु० । वाजिनशब्दे दृश्यम् ।

**वाजिन** पु० वाजिभ्यो देयम् अण् । आमिक्षानिःसृतजले "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति श्रुतिः ।

**वाजिपृष्ठ** पु० वाजिन इव पृष्ठमस्य । अम्लानवृक्षे शब्दच० ।

**वाजिभक्ष** पु० भक्ष्यते भक्ष-कर्मणि घञ् ६त० । चणके राजनि० । [क्षुद्रे राजनि० ।

**वाजिभोजन** पु० वाजिभिर्भुज्यते भुज-कर्मणि ल्युट् ।

**वाजीकरण** न० अवाजी वाजीव क्रियतेऽनेन वाजिन्+च्वि कृ-ल्युट् । "यद्द्रव्यं पुरुषं कुर्य्यात् वाजिवत् सुरतक्षमम् । तद्वाजीकरणं ख्यातम्" इत्युक्ते वीर्य्यवृद्धिकरणे औषधभेदे । सुश्रुते दृश्यम् ।

**वाञ्छा** स्त्री वाछि-अ । इच्छायाम् इष्टसाधनताधीजन्येऽभीष्टविषये चित्तवृत्तिभेदे अमर० ।

**वाट** पु० वट-घञ् । १पथि २वृतिस्थाने च मेदि० गौरा० ङीष् ४वास्तुभूमौ ५कुटज्ञा स्त्री मेदि० । ६वाटज्ञाणके शब्दर० ।

**वाटिका** स्त्री वट-ण्वुल् । १वास्तुभूमौ (बेड़ियाला) २क्षुपे ३हिङ्गुपत्र्याञ्च शब्दच० । [क्षुपभेदे रत्नमा० ।

**वाट्या** स्त्री वाट्यै हिता तत्र साधुर्वा यत् । (बेड़ियाला)

**वाट्याल** पु० वाटीमलति भूषयति अल-अण् । (बेड़ियाला) क्षुपभेदे शब्दर० गौरा० ङीष् तत्रैव स्त्री । ण्वुल् । वाट्यालक तत्रैवार्थे पु० शब्दर० । [अमाषिष्ट ।

**वाड** आप्लावे भ्वा० आ० अक० सेट् चङि न ह्रस्वः । वाडते

**वाढ़** न० वह-क्त नि० । १अतिशये २तद्युक्ते त्रि० अमर० । दृढे० हम् । वाढम् ३प्रतिज्ञायां ४स्वीकारे च अव्य० अमर० ।

**वाण** पु० वण-घञ् । १शरे अमरः २गवां स्तने ३दैत्यभेदे ४केवले मेदि० ५वह्नौ त्रिका० ६काण्डावयवे विश्व० ७भद्रमुञ्जे राजनि० कादम्बरीग्रन्थकारके द्कविभेदे च "पञ्चवाणस्तु वाण" इति प्रसन्नराघवम् ।८नीलझिण्ट्या पु स्त्री० अमर० । अस्योष्ट्रादित्वमित्यन्ये । [शब्दर० ।

**वाणपुर** न० ६त० । शोणितपुरे (कोट्टरी) पुराख्ये पुरभेदे

**वाणवार** पु० वाणं परसम्बन्धिशरं वारयति मु० वृ-अण् । योधादेर्वारवाणाकारे सन्नाहे कवचे शब्दच० ।

**वाणहन्** पु० वाण नामासुरं हतवान् हन-ताड़ने भूते क्विप् । श्रीकृष्णे वाणजिदादयोऽप्यत्र ।

**वाणि** स्त्री वण-इण् वा ङीप् । १वयने अमरः २वयनदण्डे वेमनि हेमच० । ५वाक्ये ६तद्देवतायाञ्च अमरः ङीप् ।

**वाणिनी** स्त्री वण-णिनि ङीप् । १नर्त्तक्यां २छेके ३मत्तस्त्रियाञ्च हेमच० । वाण+अस्त्यर्थे इनि । ४शरयुते त्रि० ।

**वात** गतौ सेवायां सुखीकरणे च सक० अद० चु० उभ० सेट् । वातयति ते अववातत् त ।

**वात** पु० वा-क्त । स्पर्शमात्रविशेषगुणके भूतभेदे १पवने अमर० । अनिलशब्दे १६४पृ० दृश्यम् । २देहस्थे धातुभेदे च । ३गन्तरि त्रि० । लारे ५कुटनायके च "प्रभातवाता हतीति" भट्टि० । ६वातजन्ये रोगभेदे माधव० यथा "कषायकटुतिक्तकप्रमितरूक्षलघ्वन्नतः पुरःपवनजागरप्रतरणाभिघातश्रमैः । हिमाद्रनशनात् तथा निधुवनाच्च धातुक्षयात् मलादिरयधारणात् मदनशोकचिन्ताभयैः । अतिक्षतजमोक्षणात् गदशतातिमांसक्षयादतीव वमनान्न्यूनमतिविरेचनादामतः । पयोदसमये दिनक्षपयोस्तृतीयांशयोर्जरामतिगतेऽशिते शिशिरसंज्ञकालेऽपि च । देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो वली । करोति विविधान् रोगान् सर्वाङ्गैकाङ्गसंश्रयान्" । प्रमितस्त्वात्र वैपरीत्ये प्रायशर्त्तेन अपरिमितमित्यर्थः । प्रकर्षेण मितमल्पं वा साध्यसम् अतिपुराणं शाल्यादि । कतिचिदन्नानि मधान्यपि वातलानि । यत आह गुणरत्नमालायाम् "नीवारत्रिपुटः सतीनचणक श्यामाकमुद्गाढ़कीनिष्पावाश्च मकुष्ठकश्च वरटामकुष्ठक कोद्रवः" । एते वातकरा इति शेषः । नीवारः प्रसाधिका (चीना) इति लोके । त्रिपुटः (खसारी) । सतीनः कलायः । निष्पावो राजमाषः । (बरबटी) इति लोके । मकुष्ठकः (माढा) इति लोके । वरटा वरटिका (वरै) इति लोके । मकुष्ठकः (मसरी) इति लोके । पुरःपवनः प्राग्वातः, आमतः आमेन मार्गावरणात् । यत उक्तम् वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन चेति" । पयोदसमये वर्षासु । जरामतिगतेऽशिते भुक्तेऽजीर्णताङ्गते । देहे स्रोतांसीत्यादिना संप्राप्तिरुक्ता । कषायादिभिर्हेतुभिर्वर्षादौ समये हेतुमते वली अनिलः प्रवृद्धो वायुः करोति विविधान् रोगान् । ते रोगाः कथ्यन्ते "शिरोग्रहोऽल्पकेशत्वं जृम्भात्यर्थं हतपङ्गः । जिह्वास्तम्भो गद्गदत्वं मिन्मिनत्वञ्च मूकता । वाचालता प्रलापश्च रसानामनभिज्ञता । बाधिर्य्यं "कर्णनादश्च सर्वाङ्गत्व तथार्दितम् । मन्यास्तम्भोऽप्य मणितो बाहुशोषोपबाहुकः । चर्विता चैव दिगाची ऊर्द्ध्ववात उदीरितः ।

**वातरक्तघ्न** पु॰ वातरक्तं रोगभेदं हन्ति हन–टक्। कुक्कुरद्रुमे (कुकुरसोङा) शब्दच॰। [शब्दच॰।

**वातरक्तारि** पु॰ ६त॰। (गुडुच) ख्यातायां लतायाम्

**वातरङ्ग** पु॰ वातस्येव सततं रङ्गश्चलनमस्य। चलदले अश्वत्थवृक्षे अमरः।

**वातरायण** पु॰ वा-क्विप् ततश्चरण् वातरमयनं यस्य अत्वम्। १उन्मत्ते २प्रयोजनशून्ये पुरुषे ३काण्डे ४करपात्रे ५कूटे ६परशक्रमे मेदि॰। ७सरलद्रुमे च शब्दर॰।

**वातरूष** पु॰ वातेन रूष्यते रूष-घञ्। १वातुले २उत्कोचे ३इन्द्रचापे च मेदि॰।

**वातर्द्धि** पु॰ वातस्य ऋद्धिर्यतः। १काष्ठलोहनिर्मितमात्रे त्रिका॰ ६त॰। २वायुवृद्धौ स्त्री।

**वातल** पु॰ वात रोगभेदं लाति ला-क। १चणके शब्दच॰। २वायुकारके द्रव्ये त्रि॰।

**वातव्याधि** पु॰ वातेन देहस्थधातुभेदेन जनितो व्याधिः शाक॰। वातरोगे वातशब्दे दृश्यम्।

**वातशीर्ष** न॰ वातस्य शीर्षमिव। वस्तौ राजनि॰।

**वाताटः** पु॰ वात इवाटति अट-अच्। १सूर्याश्वे त्रिका॰ २वातमृगे शब्दर॰।

**वाताण्ड** पु॰ मुष्करोगविशेषे तस्य लक्षणं यथा "कुपितो दूषयेद्वायुः श्लेष्मणा यस्य सहत। तस्य मुष्कश्चलत्येको रोगो वाताण्डसंज्ञकः" माधवकरः।

**वाताद** पु॰ वाताय वातनिवृत्तयेऽद्यतेऽसौ अद-घञ्। (बादाम) फलप्रधानवृक्षे भावप्र॰।

**वातापि** पु॰ अगस्त्यनाशिते इल्वलभ्रातरि असुरभेदे। "आतापिर्भक्षितो येन वातापिश्च महाबलः। समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु" इति भोजनान्ते पाठ्यमन्त्रः।

**वातापिसूदन** पु॰ वातापिं सूदयति छिनत्ति सूद-ल्यु। अगस्त्ये मुनौ त्रिका॰ भा॰ व॰ १८८० अ॰ तत्कथा दृश्या।

**वातामोदा** स्त्री वातेनामोदो यस्याः। कस्तूर्याम् शब्दमा॰

**वातायन** न॰ वातस्यायनं गतिर्येन। १गवाक्षे अमरः। वातस्येव शीघ्रमयनं गतिरस्य। २अश्वे पुंस्त्री॰ त्रिका॰ स्त्रियां ङीष्।

**वातायु** पु॰ वातमयते अय-उण्। हरिणे अमरः

**वातारि** पु॰ वातस्य रोगभेदस्यारिः। १एरण्डवृक्षे २शतमूल्यां ३शेफालिकायां ४यवान्यां ५भार्ग्यां ६स्नुह्यां ७विडङ्गे ८सूरणे ९भल्लातके १०नलिकायां ११पुत्रदात्रीवृक्षे च राजनि॰।

**वाताश्व** पु॰ वात इव शीघ्रगोऽश्वः। आजानेये अश्वभेदे हये त्रिका॰।

**वाति** पु॰ वा-क्तिच्। १वायौ २सूर्ये ३चन्द्रे च उज्ज्व॰।

**वातिक** पु॰ वातादागतः ठक्। देहस्थवातजन्ये रोगभेदे राजनि॰।

**वातिग** पु॰ वातिं वायुं गच्छति गम-ड। १वार्त्ताके २भाटुवादिनि त्रि॰ मेदि॰। गम-खच्। वातिङ्गमोऽप्यत्र शब्दर॰

**वातिङ्गण** पु॰ वातिं देहस्थवातं सेवनात् गमयति गम-खच् मुम् च। वार्त्ताके त्रिका॰।

**वातीय** न॰ वाताय वातनिवृत्तये हितं छ। काञ्जिके शब्दमा॰

**वातुल** पु॰ वातानां समूहः उलच्। वातसमूहे भरत।

**वातूलि** पुंस्त्री॰ वा-उलि तुट् च। (बादुड) ख्याते खगे हारा॰।

**वातूल** त्रि॰ वात+मत्वर्थे ऊलच्। १वातरोगयुक्ते वातुले अमरः। समूहार्थे ऊलच्। २वातसमूहे न॰ भरत।

**वातोना** स्त्री वातमूनयति ऊन-अण्। १गोजिह्वाक्षुपे राजनि॰ वातेनोन। २वायुहीने त्रि॰।

**वात्या** स्त्री वातानां समूहः यत्। १वातसमूहे अमर "वितत्य वात्यामयचक्रचङ्क्रमान्" नैष॰।

**वात्सक** न॰ वत्सानां समूहः वुञ्। वत्ससंघे अमरः।

**वात्सल्य** न॰ वत्सलस्य भावः ष्यञ्। पुत्रादिस्नेहातिशये, रसभेदे उज्ज्वलमणि "यशोदा वत्सले स्मृता"।

**वात्स्य** पु॰ वत्सस्यापत्यं यञ्। गोत्रप्रवर्त्तके ऋषिभेदे।

**वात्स्यायन** पु॰ वत्सस्य गोत्रापत्यं युवा वत्स+यञ् ततो यूनि फक्। १यूनि वत्सगोत्रापत्ये। २न्यायसूत्रभाष्यकारे पक्षिलाख्ये मुनौ पुं त्रिका॰।

**वाद** पुं स्त्री वद-घञ्। १तत्त्वबुभुत्सया कथने "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" इति २गौतमोक्ते विचारात्मके वाक्यभेदे। "वादः प्रवदतामहम्" गीता।

**वादन** न॰ वद-णिच्-कर्मणि ल्युट्। १मृदङ्गादिवाद्ये भावे ल्युट्। मृदङ्गादिताडनरूपे २व्यापारे।

**वादर** न॰ बदराया कार्पास्या विकारः अण्। कार्पासतन्तुनिर्मिते वस्त्रादौ। बदरशब्दस्य श्रोत्रादित्वमिमम्।

**वादरङ्ग** पु॰ वादरं बदराकारफलादिसादृश्यं गच्छति गम-खच् डिच्च। अश्वत्थवृक्षे त्रिका॰।

**वादरत** त्रि॰ वादे विवादे रतः रम-क्त। बहुदिनविवादशीले।

भूतानुकम्पी स्यात् प्रतिग्रहविवर्जितः । दर्शेन पौर्णमासेन यजेत नियतं द्विजः ॥ पक्षेष्वाग्रयणे चैव चातुर्मास्यानि चाहरेत् । उत्तरायणञ्च क्रमशो दक्षस्यायनमेव च । वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः । पुरोडाशं चरूं चैव विधिवन्निर्वपेत् पृथक् । देवताभ्यश्च तद्धुत्वा वन्यं मेध्यतरं हविः । शेषं च समुपभुञ्जीत लवणञ्च स्वयंकृतम् । वर्जयेन्मधुमांसादि भौमानि कवकानि च । भूस्तृणं शिग्रुकञ्चैव श्लेष्मातकफलानि च । न फालकृष्टमश्नीयात् उत्सृष्टमपि केनचित् । न ग्रामजातान्यार्त्तो वा पुष्पाणि च फलानि च । श्रावणेनैव विधिना वह्निं परिचरेत् सदा । न द्रुह्येत् सर्वभूतानि निर्द्वन्द्वो निर्भयो भवेत् । न नक्तं किञ्चिदश्नीयात् रात्रौ ध्यानपरो भवेत् । जितेन्द्रियो जितक्रोधस्तत्त्वज्ञानविचिन्तकः । ब्रह्मचारी भवेन्नित्यं न पत्नीमपि संश्रयेत् । यस्तु पत्न्या वनं गत्वा मैथुनं कामतश्चरेत् । तद्व्रतं तस्य लुप्येत प्रायश्चित्ती भवेत् द्विजः । तत्र यो जायते गर्भो न संस्पृश्यो द्विजातिभिः । न हि वेदाधिकारोऽस्य तद्वंश्येऽप्येवमेव हि । अधः शयीत सततं सावित्रीजपतत्परः । शरण्यः सर्वभूतानां संविभागपरो भवेत् । परीवादं मृषावादं निद्रालस्ये च वर्जयेत् । एकाग्निरनिकेतः स्यात् प्रोक्षितां भूमिमाश्रयेत् । मृगैः सह चरेद्वासं तैः सहैव च संवसेत् । शिलायां शर्करायां वा शयीत सुसमाहितः । सद्यःप्रक्षालको वा स्यात् माससञ्चयिकोऽपि वा । षण्मासनिचयो वा स्यात् समानिचय एव वा । नक्तञ्चान्नं समश्नीयात् दिवा वाहृत्य शक्तितः । चतुर्थकालिको वा स्यात् स्याद्वा चाष्टमकालिकः । चान्द्रायणविधानैर्वा शुक्ले कृष्णे च वर्त्तयेत् । पक्षे पक्षे समश्नीयात् यवागूं क्वथितां तथा । पुष्पमूलफलैर्वापि केवलैर्वर्त्तयेत् सदा । स्वाभाविकैः स्वयं शीर्णैर्वैखानसमते स्थितः । भूमौ वा परिवर्त्तेत तिष्ठेद्वा प्रपदैर्दिनम् । स्थानासनाभ्यां विहरेत् न क्वचिद्धैर्य्यमुत्सृजेत् । ग्रीष्मे पञ्चतपाश्च स्याद्वर्षास्वभ्रावकाशिकः । आर्द्रवासास्तु हेमन्ते क्रमशो वर्द्धयंस्तपः । उपस्पृश्य त्रिषवणं पितॄन् देवांश्च तर्पयेत् । एकपादेन तिष्ठेत मरीचीन्वा पिबेत् सदा । पञ्चाग्निर्धूमपो वा स्यादुष्मपः सोमपोऽथ वा । पयः पिबेत् शुक्लपक्षे कृष्णपक्षे तु गोमयम् । शीर्णपर्णाशनो वा स्यात् कृच्छ्रैर्वा वर्त्तयेत् सदा । योगाभ्यासरतो वा स्याद्रुद्राध्यायी भवेत् सदा । अथर्वशिरसोऽध्येता वेदान्ताभ्यासतत्परः । यमान् सेवेत सततं नियमांश्चाप्यतन्द्रितः । कृष्णाजिनी सोत्तरीयः शुक्लयज्ञोपवीतवान् । अथ वाग्नीन् समारोप्य स्वात्मनि ध्यानतत्परः । अनग्निरनिकेतः स्यान्मोक्षपरो भवेत् । तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाहरेत् । गृहमेधिषु चान्येषु द्विजेषु वनवासिषु । ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन् । प्रतिगृह्य पुटेनैव पाणिना शकलेन वा । विविधाश्चोपनिषद आत्मसंसिद्धये जपेत् । विद्याविशेषान् सावित्रीं रुद्राध्यायं तथैव च । महाप्रस्थानिकञ्चासौ कुर्य्यादनशनन्तथा । अग्निप्रवेशमन्यद्वा ब्रह्मार्पणविधौ स्थितः । ये तु सम्यगिममाश्रमं शिवमाश्रयन्त्यशुभपुञ्जनाशनम् । ते विशन्ति परमैश्वरं परं यान्ति चैव जगतोऽस्य संस्थितिम्” कूर्मपु० २६ अ०

**वानर** पुस्त्री० वानं वनसम्बन्धिफलादिकं राति गृह्णाति रा–क । स्वनामख्याते पशुभेदे अमरः स्त्रियां ङीप् ।

**वानरप्रिय** पु० ६त० । क्षीरिवृक्षे रत्नमा० ।

**वानराघात** पु० वानराणामाघातो यत्र । लोध्रवृक्षे शब्दच० ।

**वानरी** स्त्री वानरस्य प्रियम् भक्ष्यत्वात् अण् ङीप् । १शूकशिम्ब्याम् शब्दर० । वानर+स्त्रियां ङीष् । २वानरयोषिति । [२वानराधीशे वानरनाथादयोऽप्यत्र ।

**वानरेन्द्र** पु० वानर इन्द्र इव । १सुग्रीवे शब्दर० ६त० ।

**वानल** पु० वानं वनभावं निविडतां लाति ला–क । (बाबुइ) तुलभेदे शब्दच० ।

**वानस्पत्य** पु० वनस्पतेरयम् प्रतिरूपः पुष्पाज्जातफलत्वात् । पुष्पजातफलके आम्रादौ वृक्षे अमरः ।

**वानायु** पु० वनायु+पृषो० । देशभेदे (आरब) शब्दर० ।

**वानायुज** पुंस्त्री० वानायुदेशे जायते जन–ड । घोटकभेदे च (आरबी) अमरः स्त्रियां ङीष् । [अमर० ।

**वानीर** पु० वन–ईरन् स्वार्थेऽण् । १वेतसे २वञ्जुलवृक्षे

**वानीरक** पु० वानीर इव इवार्थे कन् । मुञ्जतृणे राजनि० ।

**वानेय** न० वने जले भवं ढक् । कैवर्त्तीमुस्तके अमर० ।

**वान्त** त्रि० वम–क्त । उद्गीर्णे “वान्ताशीत्युच्यते बुधैः” उद्भट० ।

**वान्तिहृत्** पु० वान्तिं वमनरोगं हरति हृ–क्विप् । (मयना) ख्याते वृक्षे शब्दच० । [राजनि०

**वान्तिदा** स्त्री वान्तिं छर्दिं ददाति दा–क । काकोदुम्बरिकावृक्षे

**वाप** पु० वप–घञ् । १तन्त्वादेर्वानादेश्च २वपने ३मुण्डने च ।

**वाराहाङ्गी** स्त्री वाराहमिवाङ्गमस्याः ङीप्। दन्तीवृक्षे भावप्र०।

**वाराही** स्त्री वराहस्येयमण् ङीप्। अष्टमातृकामध्ये १वराहशक्तौ "यज्ञवराहमतुलं रूपं या बिभ्रती हरेः। शक्तिः साप्याययौ तत्र वाराही बिभ्रती तनुम्" देवीमा० "वाराही नारसिंही च" मन्त्रमालाप०। २योगिनीभेदे छहचन्दिकेश्वरपु०। ३वराहक्रान्तायाम् अमरः ४वराहयोषिति च ५गृष्टिनामकन्दे राजनि०।

**वाराहीकन्द** पु०(चामराव) ख्याते कन्दभेदे "वाराहीकन्द एवान्यैश्चर्मकारालुको मतः। अनूपे स भवेद्देशे वराहइव लोमवान्" भावप्र०।

**वारि** न० वृ–इञ्। १जले अमरः २ह्रीवेरे च हेमच०। वार्यतेऽनया वृ-णिच्–इन् वा ङीप्। ३गजबन्धन्याम् अमर। "अर्गलाभङ्ग इव प्रवृत्त" रघुः। ४वाचि ५सरस्वत्याम् च स्त्री ङीबन्त० ६कलस्याम् "रधिः ७वन्दौ च मेदि०।

**वारिकण्टक** पु न० वारिणि कण्टक इव। शृङ्गाटके जटा०

**वारिकर्णी** स्त्री वारिणि कर्ण इव पत्रमस्याः ङीप्। १कुम्भिकायाम् (पाना) शब्दर० स्वार्थे क। तत्रैव।

**वारिकर्पूर** पुंस्त्री वारिणि कर्पूर इव। इल्लिशमत्स्ये त्रिका० स्त्रियां ङीष्।

**वारिकुब्ज** पु० वारिणि कुब्ज इव वक्राकृतित्वात्। शृङ्गाटके शब्दर०। स्वार्थे क। तत्रैव त्रिका०।

**वारिकृमि** पु०६त०। जलौकादौ त्रिका०। [कायाम् त्रिका०।

**वारिचत्वर** पु० वार्य्येव चत्वररूपमस्याधारत्वात्। कुम्भि-

**वारिचर** पुंस्त्री० वारिषु चरति चर-अच्। १मत्स्ये २जलचरजन्तुमात्रे त्रि० स्त्रियां ङीप्। [शैवाले त्रिका०

**वारिचामर** न० वारिणश्चामरमिव शोभाहेतुपुच्छाकृतित्वात्।

**वारिज** न० वारिणि जायते जन-ड। १पद्मे २लवङ्गे ३गौरसुवर्णे ४लवणभेदे च राजनि०। ५शङ्खे हेमच० ६शम्बूके पु० शब्दच०। ७जलजातमात्रे त्रि०।

**वारितस्कर** पु० वारिणः तस्कर इव अपहारकत्वात्। १सूर्य्ये २मेघे शब्दमा०। ३सुसके च।

**वारित्रा** स्त्री वारिणस्त्रायते त्रै-क। छत्त्रे त्रिका०।

**वारिद** न० वारि ददाति दा-क। १मेघे २मुस्तके च अमर०। ३जलदातरि त्रि० ४वाट्यायां स्त्री शब्दच०।

**वारिधि** पु० वारीणि धीयन्तेऽस्मिन् धा–आधारे कि। १समुद्रे शब्दर० वारिनिध्यादयोऽप्यत्र जलाधारे २घटादौ च

**वारिपर्णी** स्त्री वारिणि पर्णान्यस्याः ङीप्। कुम्भिकायाम् (पाना) अमर।

**वारिपालिका** स्त्री वारीणि पालयति आस्तरणेन पाल-ण्वुल्। कुम्भिकायाम (पाना) शब्दमा०।

**वारिपृश्नी** स्त्री वारिणि पृश्नि० पर्णमस्याः ङीप्। कुम्भिकायाम् (पाना) शब्दमा०। [त्रिका०।

**वारिबदरा** स्त्री वारिसमीपभवा बदरेव। प्राचीनामलके

**वारिबालक** न० वारिणो बालक इव। ह्रीवेरे जटा०।

**वारिभव** न० वारिणो नेत्रजलाय वारिणि वा भवति प्रभवति वा भू–अच्। १स्रोतोऽञ्जने राजनि०। २जलभवमात्रे त्रि०

**वारिमसि** पु० वारि जलं मसिरिव नीलतापादकं यस्य। १मेघे त्रिका० २मुस्तके च। [(पाना) त्रिका०।

**वारिमूली** स्त्री वारिणि मूलमस्याः ङीप्। कुम्भिकायाम्

**वारिरथ** पु० वारिणि रथ इव गमनसाधनत्वात्। भेलके त्रिका०

**वारिराशि** पु० वारीणां राशयोऽत्र। १समुद्रे त्रिका० ६त०। २जलसमूहे च। [२जलजातमात्रे त्रि०।

**वारिरुह** न० वारिणि रोहति रुह–क। १पद्मे राजनि०

**वारिवदन** न० वारियुक्तं वदनं यस्मात्। प्राचीनामलके तद्भक्षणे हि मुखस्य वारिनिस्रावः।

**वारिवर** न० वारि वृणोति वृ–अच्। करमर्दके जटा०।

**वारिवल्लभा** स्त्री वारि वल्लभमस्याः जनकत्वात्। विदार्य्याम् राजनि०। [च अमर०। जिह्वा। वारिवाहोऽप्यत्र भेघे वार्मुक्:।

**वारिवाह** पु० वारीणि वहति वह–अण्। १मेघे २मुस्तके

**वारिश** पु० वारिणि समुद्रजले शेते शी–ड। विष्णौ त्रिका०।

**वारीश** पु० ६त०। १समुद्रे २वरुणे च। वारिनाथादयोऽप्यत्र।

**वारु** पु० वारयति रिपून् वारि-उण्। विजयकुञ्जरे श० रा०।

**वारुण** न० वरुणस्येदमण्। १जले २वरुणसम्बन्धिनि त्रि०। स देवताऽस्य अण्। ३वरुणदेवताके त्रि०। ४शततारके न०।

**वारुणि** पु० वरुणस्यापत्यम् इञ्। अगस्त्यमुनौ त्रिका०।

**वारुणी** स्त्री वरुणो देवताऽस्य वरुणस्येदं वा अण् ङीप्। १पश्चिमदिशि २मदिरायाम हेमच०। ३शतभिषातारायां। ४गण्डदूर्व्वायाम् ५दूर्वायां मेदि०। ६इन्द्रवारुण्यां राजनि० ७वरुणस्त्रियां ८शतभिषानक्षत्रयुक्तचैत्रकृष्णत्रयोदश्यां च स्कान्दपुराणे। "वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी। गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा" वारुण शतभिषा। "शनिवारसमायुक्ता सा महावारुणी स्मृता। गङ्गायां यदि लभ्येत कोटि

क्रिया ङीप् सा च दशम्या दिमाधवीलतायां धरणिः। १०पाटलायां विश्वः ११नवमल्लिकायां भावप्र०। "वासन्ती शीतला लघ्वी तिक्ता दोषत्रयापहा" भावप्र०। १२वसन्तकाले कर्त्तव्यदुर्गापूजायाम्। भविष्यपु० "मीनराशिस्थिते सूर्य्ये शुक्लपक्षे नराधिप!। सप्तमीं दशमीं यावत् पूजयेदम्बिकां सदा" भविष्योत्तरे "चैत्रे मासि सिते पक्षे सप्तम्यादिदिनत्रये। पूजयेद्विधिवद् दुर्गां दशम्यान्तु विसर्जयेत्" कालकौमुद्यां च ब्राह्मे: "चैत्रे मासि सिते पक्षे सप्तम्यादिदिनत्रये। पूजयेद्विविधैर्द्रव्यैर्गन्धपुष्पैस्तथा। नानाविधैश्च बलिभिर्मेघाटैर्दीपवर्जितैः। विचित्राभरणैः पाद्यं। पट्टवस्त्रादिभिस्तथा। एवं यः कुरुते पूजां वर्षे वर्षे विधानतः। ईप्सितान् लभते कामान् पुत्रपौत्रादिकांश्च सः" इति। अत्र निरूपपदमासपदबलात् भविष्यपुराणवचने मीनराशिस्थित इति मीनस्थरव्यारब्धचान्द्रमासीयतिथिपरम्। सौररव्यारब्धत्वे कदाचित् सप्तम्यादितिथित्रयालाभात् तद्वर्षे तत्कृत्यलोपः स्यात् न चेष्टापत्तिः भविष्यपुराणे सदापदोपादानात् ब्राह्मिवचने वर्षे वर्षे इत्युपदानाच्च नित्यत्वम्। एतद्विहितं कालविवेके। एवं ब्राह्मवचनपराद्वैः पुत्रादिरूपफलश्रवणात् काम्यत्वञ्च। ततश्च काम्यतया पूजने कृते प्रसङ्गान्नित्यसिद्धिः। "चिताष्टम्यान्तु चैत्रस्य पुष्पैस्तत्कालसम्भवैः। अशोकैरपि यः कुर्य्यात् मन्त्रेणानेन पूजनम्। न तस्य जायते शोको रोगो वाप्यथ दुर्गति" इति कालिकापुराणवचनात् केवलाष्टमीकल्प उक्तः। चैत्रमासमधिकृत्य "नवम्यां पूजयेद्देवीं महिषासुरमर्दिनीम्। कुङ्कुमागुरुकस्तूरीधूपान्नध्वजतर्पणैः। दमनैर्धूपपुष्पैश्च विजयाख्यपदं लभेत्" इत्यनेन केवलनवमीकल्प उक्तः। अस्यास्तु शारदीयपूजाप्रकरणोक्ता ग्राह्या। विशेषतस्तु बोधनप्रक्रिया नास्ति अबोधितायां बोधनाभावात् इति प्रागुक्तम्। सोमादिकस्य पूर्ववत्प्रयोगमिति दिक्" दुर्गोत्सवविवेक। तत्काल पूज्यत्वात् दुर्गापि वासन्तीत्युच्यते।

**वासयोग** पु० वासित अङ्गेन योगो यस्य (आबिर) चूर्णभेदे अमरः। [पु०मेदि०।

**वासर** पुंन०न० वस-अरच्। १दिवसे अमरः। २नागभेदे

**वासव** पु० वसुरेव स्वार्थेऽण् वसूनि सन्त्यस्य अण् वा। १इन्द्रे वसोरपत्यम् स्त्री अण् ङीप्। २व्यासमातरि मत्स्यगन्धायाम् स्त्री हेमच०। ३धनिष्ठानक्षत्रे न० ज्यो०

**वासवदत्ता** स्त्री वासवदत्तामधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां तस्य लुक्। १वासवदत्ताचरिताख्यापके ग्रन्थभेदे श०। २इन्द्रदत्ते त्रि०। [भेदे राजनि०।

**वासस्** न०वस-आच्छादने असि णिच्च। १वस्त्रे अमर २पत्र-

**वासाखण्ड** न० चक्रदत्तोक्ते औषधभेदे "तुलामादाय वासायाः पचेदष्टगुणे जले। तेन पादावशेषेण पाचयेदाढक भिषक्। चूर्णानामभयानाञ्च खण्डाच्छतं तथा घृतम्। द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्। कुडव पलमात्रन्तु चातुर्जात सुचूर्णितम्। क्षिप्त्वा विलोडितं खादेद्रक्तपित्ती क्षतक्षयी। कासश्वासपरीतश्च यक्ष्मणा च प्रपीडितः"

**वासाखण्डकुष्माण्डक** न० चक्रदत्तोक्ते औषधभेदे "पञ्चाशच्च पलं स्विन्नं कुष्माण्डात् प्रस्थमानतः। वासा पलशतं क्वाथ्यं वासाक्वाथाढके पचेत्। सखापाली शुभाभागी त्रिसुगन्धैश्च कार्षिकैः। ऐलेयविश्वधन्याकमरिचैश्च पलांशिकैः। पिप्पलीकुडवञ्चैव मधुमानी प्रदापयेत्। कास श्वासं क्षयं हिक्कां रक्तपित्त हलीमकम्। हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति"

**वासागार** न० वासयं स्यमगारम् शाक०। वासयोग्ये गृहे गृहमध्ये त्रिका०।

**वासाघृत** न० चक्रदत्तोक्ते घृतभेदे "वासां सशाखां सपलाशमूलां कृत्वा कषायं कुसुमानि चास्याः। प्रदाय कल्कं विपचेद् घृतं तत् सक्षौद्रमाशेव निहन्ति रक्तम्"।

**वासाद्यघृत** न० चक्रदत्तोक्ते घृतभेदे वासा गुडूची त्रिफला त्रायमाणा यवासकम्। पक्वा तेन कषायेण पयसा द्विगुणेन च। पिप्पलीमूलकद्धीका चन्दनोत्पलनागरैः। कल्कीकृतैश्च विपचेत् घृतं जीर्णज्वरापहम्" [चक्रादि०।

**वासि(सी)** स्त्री वस-इञ् वा ङीप्। १कुठारभेदे (बाइस)

**वासित** त्रि० वास-क्त। १सुरभीकृते अमरः। वास-क्त प्रयो०। २कृते न०मेदि०। ३ज्ञानमात्रे हेमच०। ४खगशब्दे विश्व पुंकरिण्यां ५स्त्रीमात्रे स्त्री अमरे पाठान्तरम् वा गौरा० ङीष्। ७ख्याते दवस्त्रवेष्टिते च त्रिन्दर्शयः।

**वासिनी** स्त्री वासोऽस्त्यस्याः इनि। शुक्लझिण्टाम् शब्दच०। [निघण्टौ च उणादिको०।

**वासु** पु० वस-उण्। १विष्णौ त्रिका०। २विश्वरूपे ३पुनर्वसु-

धरणिकोष. ७मायादेव्यां स्त्री त्रिकाण्डशेषः।

**विकण्टक** पु॰ विगतः कण्टकोऽस्य। १यवासे जटा॰। २शत्रुहीने त्रि॰। [कर्त्तरि युच् तत्कर्त्तरि त्रि॰]

**विकत्थन** न॰ वि+कत्थ ल्युट्। आत्मश्लाघायाम् हेमच॰।

**विकर्त्तन** पु॰ वि+कृत ल्यु। १सूर्य्ये २अर्कवृक्षे च अमरः।

**विकर** पु॰ वि+कृ-अच्। १रोगे शब्दच॰। २खाराख्यतद्देशे हेमच॰

**विकर्म्मस्थ** पु॰ त्रि॰ विकर्मे च निन्दिताचारे तिष्ठति स्था क। कुत्सिताचाररते विष्णुपु॰।

**विकर्ष** पु॰ वि+कृष कर्मणि घञ्। शरे वाणे त्रिका॰।

**विकल** त्रि॰ विरुद्धा कला यस्य। १विह्वले, २स्वभावहीने त्रिका॰। ३कलाहीने च। ४अनृतुमत्यां स्त्रियां स्त्री रत्नमा॰ वा ङीप्। विभक्ता कला यया प्रा॰ब॰व॰। ५कलायष्टिभागे स्त्री "विकलानां कला षष्ट्या" ज्यो॰त॰। [विकाङ्ग अमर।

**विकलाङ्ग** त्रि॰ स्वभावहीनमङ्गमस्य। स्वभावतो न्यूना

**विकल्प** पु॰ विभिन्न कल्प। १भ्रान्तिज्ञाने २कल्पने मेदि॰ ३विविधकल्पने ४संशयारोपणे, ५पञ्चतः प्राप्तौ च। विकल्पश्च द्विविधः व्यवस्थितः ऐच्छिकश्च। सोऽप्याकाङ्क्षाविरहे युक्तः तथा च भविष्ये "स्मृतिशास्त्रे विकल्पस्तु आकाङ्क्षापूरणे सति"। इच्छाविकल्पेऽष्टदोषः यथा "प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पना। प्रत्युज्जीवनहानिभ्यां प्रत्येकमष्टदोषता"। व्रीहिभिर्यजेत यवैर्यजेत" इति श्रूयते। तत्र व्रीहिप्रयोगे प्रतीत यवप्रामाण्यपरित्यागः। अप्रतीतयवाप्रामाण्यपरिकल्पनम्। इदन्तु पूर्वस्मात् पृथक् वाक्यम् अन्यथा श्रुतेऽपि यागसिद्धिः स्यात्। अतएव विकल्पे न उभयम् शास्त्रार्थ इत्युक्तम्। प्रयोगान्तरे यवे उपादीयमाने परित्यक्तयवप्रामाण्योज्जीवन स्वीकृतयवाप्रामाण्यहानिरिति चत्वारो दोषाः। एवं व्रीहावपि चत्वारः इत्यष्टौ दोषा इच्छाविकल्पे। तथा चोक्तम्। "एवमेवाष्टदोषाश्च यद् व्रीहियववाक्ययोः। विकल्प आश्रितस्तत्र गतिरन्या न विद्यते" इति। विविधं कल्प्यते इति विकल्पः। तस्मादष्टदोषभिया उपोद्य्रहे तिथौ इत्यत्र न इच्छाविकल्पः किन्तु व्यवस्थितविकल्पः" एता॰ त॰ रघु॰। पातञ्जलोक्ते ६चित्तवृत्तिभेदे यथा "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' सू॰। "स न प्रमाणोपारोही न विपर्य्ययोपारोही वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यते। तद् यथा चैतन्यं पुरुषस्य स्वरूपमिति यदा चितिरेव पुरुषः तदा किमत्र केन व्यपदिश्यते भवति च व्यपदेशे वृत्तिः यथा चैत्रस्य गौरिति। तथा प्रतिषिद्धवस्तुधर्मो निष्क्रियः पुरुषः। तिष्ठति वाणः स्थास्यति स्थित इति गतिनिवृत्तौ धात्वर्थमात्रं गम्यते। तथानुत्पत्तिधर्मा पुरुष इति उत्पत्तिधर्मस्याभावमात्रमवगम्यते न पुरुषान्वयी धर्मः तस्माद्विकल्पितः स धर्मस्तेन चास्ति व्यवहार इति। भा॰ "ननु शब्दज्ञानानुपाती चेदागमप्रमाणान्तर्गतो विकल्पः प्रसज्येत निर्वस्तुकत्वे वा विपर्य्यय स्यादित्यत" आह। स नेति। न प्रमाणविपर्य्ययान्तर्गतः कस्माद् यतो वस्तुशून्यत्वेऽपीति प्रमाणान्तर्गतिं निषेधयति। शब्दज्ञानमाहात्म्यनिबन्धन इति विपर्य्ययान्तर्गतिम्'। तदुक्तं भवति क्वचिदभेदे भेदमारोपयति क्वचित् पुनर्भिन्नानामभेदं ततो भेदस्याभेदस्य च वस्तुतोऽभावात् तदाभासो विकल्पो न प्रमाणं नापि विपर्य्ययो व्यवहाराविसंवादादिति। शास्त्रप्रसिद्धमुदाहरणमाह तद् यथेति। किं विशेष्यं केन व्यपदिश्यते विशेष्यते, नाभेदे विशेष्यविशेषणभावो न हि सैव सौर्विशेष्यते। किन्तु भिन्नेन चैत्रेण तदिदमाह। भवति च व्यपदेशे वृत्तिः। व्यापदेश्यव्यापदेशकयोर्भावो व्यपदेशो विशेषणविशेष्यभाव इति यावत् तस्मिन् वृत्तिर्वाक्यस्य, यथा चैत्रस्य गौरिति। शास्त्रीयमेवोदाहरणान्तरं समुच्चिनोति तथेति प्रतिषिद्धवस्तुन पृथिव्यादेः धर्मः परिस्पन्दो यस्य स तथोक्तः कोऽसौ निष्क्रियः पुरुषः। न खलु साङ्ख्यीये राद्धान्तेऽभावो नाम कश्चिदस्ति वस्तुधर्मो येन पुरुषो विशेष्येतेत्यर्थः। क्वचित् पाठ प्रतिषिद्धवस्तुधर्मो इति तस्यार्थः प्रतिषेधव्याप्त्या प्रतिषिद्धाभावो न वस्तुधर्मोऽपि तद्भाव्यता भावाभावयोरसम्बन्धात् च तथा प्रतीतिरिति। लौकिकमुदाहरणमाह तिष्ठति वाण इति। पश्यति भिन्नचीत्याम पूर्वापरीभूतया चाकादिक्रियये स्थानक्रियया वाणाद्भिन्नया वाणस्य व्यपदेश इति गतिनिवृत्तौ धात्वर्थमात्रं गम्यते। गतिनिवृत्तिरेव तावत् कल्पिता तस्या अभावरूपत्वम्। तत्रापि पूर्वापरीभाव इत्यहो कष्टमाडम्बरस्येत्यर्थः। अभाव कल्पितो भाव इव चानुगत इव च सर्वपुरुषेषु गम्यते न पुरुषाद् व्यतिरिक्तो धर्मः कश्चिदित्युदाहरणान्तरमाह। तथानुत्पत्तिधर्मेति। प्रमाणविपर्य्ययाभ्यामन्या न विकल्पवृत्तिरित्येवादिनो बहवः प्रतिपेदिरे तत्प्रतिबोधनायोदाहरणप्रपञ्च" विव॰।

क्रोध विघ्नानात्। इत्यङ्ग राम कृतं दर्शितं चमत्कार-कृतमेव इत्थं कर्तुं यदिक्ष्वाकुवंश्यैः कृतमित्यर्थः”।

विक्रेय त्रि० वि+क्री-यत्। विक्रयार्हे पदार्थे। [२व्याकुले च

विक्लव त्रि० वि+क्लु-अच्। १व्याकुलीभूते अमरः। भावे अप्

विक्लित्ति स्त्री वि+क्लिद-क्तिन्। जलतेजःसंयोग प्रागव-यवसंयोगत्यागे पूर्वोत्पन्नकद्वयोर्नाशात् तदारब्धसंयोगा-पत्तौ।

विक्लिन्न त्रि० वि+क्लिद क्त। १आर्द्रे २जीर्णे ३शीर्णे च मेदि०। ४विक्लेदयुक्ते। [शब्दे च वैद्यकम्।

विक्षाव पु० वि+क्षु घञ्। १शब्दे अमर। २कासादिरोगकृत-

विक्षिप्त त्रि० वि+क्षिप-क्त। १विशेषेण क्षिप्ते २योगशास्त्रोक्ते चित्तस्य भूमिभेदे न०। यथोक्तं पातञ्जलभाष्यविव-रणयोः “क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तभूमयः। तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनी-भूतः समाधिर्न योगपक्षे वर्त्तते” भा०। “क्षिप्तं सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणम् अत्यन्तमस्थिरं, मूढन्तु तमसमुद्रेकान्निद्रावृत्तिमत्। विक्षिप्तं क्षिप्ता-द्विशिष्टं विक्षिप्तं विशेषोऽत्र स्थैर्यबहुलस्य कादाचित्कः स्थैर्या सा चास्य स्थैर्यबहुलता स्वाभाविकी वा साम-माणव्याधिस्त्यानाद्यन्तरायजनिता वा” विव०।

विक्षीर पु० विशिष्टं विगतं वा क्षीरमस्य। १अर्कवृक्षे राजनि० २विगतक्षीरे त्रि०।

विक्षेप पु० वि+क्षिप-घञ्। १त्यागे २प्रेरणे ३दूरीकरणे च।

“चित्तस्य विक्षेपा नवविधाः पात० सूत्रभाष्ययोर्दर्शितास्ते च चित्तविक्षेपशब्दे २८४१पृ० अन्तरायशब्दे च दृश्याः। वेदान्तसिद्धचित्तविक्षेपाः २०० पृ० उक्ताः।

विमर्शके यत् पदस्थान तस्य क्रान्तिवृत्तात् यत् तिर्य-गन्तरं स विक्षेपः” सि०शि० उक्ते ४शरे च।

“भूभागस्य च रचना हठा विच्छिन्नवेष्टनम्। रसस्याश्रा-न्तसौख्य विक्षेपो दयितान्तिके” सा० द० उक्ते स्त्रीणां ५सत्त्वजालङ्कारभेदे।

६कथाविच्छेदरूपे निग्रहस्थानभेदे “कार्यव्यासङ्गात् कथाविच्छेदो विक्षेप” गौ०सू० “यत्र कर्त्तव्यं व्यासज्य कथां व्यवच्छिनत्ति। इदं मे करणीयं विद्यते तस्मिन्नवसिते कथयिष्यामि इति विक्षेपो नाम निग्रहस्थानम्। एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रति-पद्यते इति” वा०भा०। “असम्भवत्कालान्तरकलेनारोपितं कार्यव्यासङ्गमुद्भाव्य कथाविच्छेदनाय” इति।

विक्षेपशक्ति स्त्री विक्षेपस्य जनिका शक्तिः। वेदान्तोक्ते अविद्याशक्तिभेदे।

“विक्षेपशक्तिस्तु यथा रज्ज्वज्ञानं स्वावृतरज्ज्वौ स्व-शक्त्या सर्पादिकमुद्भावयति एवमज्ञानमपि स्वावृतात्मनि स्वशक्त्या आकाशादिप्रपञ्चमुद्भावयति तादृशं सामर्थ्यम्। तदुक्तम् “विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत्सृजे-दिति”। वेदान्तसा०।

विख्य त्रि० विगता नासिका यस्य खादेशः। गतनासिके। अमरः। ख्यादेश। विख्योऽप्यत्र सि०कौ०।

विखुर पु स्त्री० १राक्षसे त्रिका० स्त्रियां ङीष्। २चौरे शब्दर०

विख्यात विशेषेण ख्यातः प्रसिद्धः वि+ख्या-क्त। प्रसिद्धे

विगणन न० विशेषेण गणनम् गण ल्युट्। ऋणशोधनार्थे सङ्ख्यागणने।

विगत त्रि० वि+गम-क्त। १प्रभारहिते अमरः। २विशेषगते शब्द० ३अपगते च हेमच०। ६त०। ४अगगतौ न०। “विगतं विगतम्” भट्टिः। [स्त्रायां स्त्रियाम् शब्दरत्ना०।

विगतार्त्तवा स्त्री विगतमार्त्तवं रजो यस्याः। गतरज-

विगन्धक पु० विरुद्धः गन्धोऽस्य कप्। १इङ्गुदीवृक्षे राजनि०। २हपुषायां स्त्री० टापि अत इत्वम्।

विगम पु० वि+गम अच्। १नाशे, २अपाये च।

विगर्हण न० वि+गर्ह-ल्युट्। निन्दने।

विगर्हित त्रि० वि+गर्ह-क्त। १निन्दिते २निषिद्धे च। भावे-क्त। ३निन्दायाम् न०।

विगाढ त्रि० वि+गाह-क्त। १स्नाते, २कृतावगाहने च।

विगान न० वि+गै-ल्युट्। निन्दायाम् हेमच०।

विगीत त्रि० वि+गै-क्त। निन्दिते।

विगीति स्त्री वि+गै-क्तिन्। निन्दायाम्।

विगुण त्रि० विरुद्धो गुणोऽस्य। गुणरहिते।

विगूढ त्रि० वि+गुह क्त। १गर्हिते, २गुप्ते च मेदि०।

विगृहीत त्रि० वि+ग्रह-क्त। १गृहीते, व्याकरणोक्ते वि-ग्रहवाक्यस्थे ३पदे च।

विग्र त्रि० विगता नासिकाऽस्य ग्रादेशः। विगतनासिके अमरः

विग्रह पु० वि+ग्रह-अप्। १देहे, २विस्तारे, ३युद्धे पुंन० अमरः। ४समासादिवृत्तिसमानार्थकवाक्यभेदे, ५विभाग-स्थाने च “अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः” हरि०।

विघटिका स्त्री विभक्ता घटिका यया प्रा०स०। घटिकाषष्टिभागे पलात्मके काले राजनि०। वि+घट-ण्वुल्। २वियोजके त्रि०

**विघटित** त्रि॰ वि+घट-क्त । १वियोजिते २विशेषेण रचिते च

**विघट्टित** त्रि॰ वि+घट्ट क्त । १चालिते २वियोजिते च ।

**विघस** पु॰ वि+घस् घञ् । भोजनशेषे मेदि॰ २आहारे च शब्दच॰ । ३सिक्थके न॰ राजनि॰ । ४देवपैत्रादृशेषे

**विघसाशिन्** त्रि॰ विघसं देवतादिदत्तावशेषमश्नाति अश-णिनि । देवपैत्रकार्य्यानन्तरं तदवशिष्टभोजिनि ।

**विघात** पु॰ वि+हन-क्त । १व्याघाते २आघाते च ।

**विघातिन्** त्रि॰ वि+हन-णिनि । १निवारके २नाशके, ३नाशप्रतियोगिनि च "नित्यस्याय यत्नुनिमित्तो विघाती" इति व्याकरणधा॰ । ण्वुल् । विघातकोऽप्यत्र ।

**विघ्न** पु॰ वि+हन-क । १व्याघातके अन्तराये अमरः । २क-ल्यापाकफलायां शब्दच॰ । [गणेशे शब्दर॰ ।

**विघ्ननायक** पु॰ विघ्नानामुत्पत्त्यनुत्पत्त्योः नायक । विघ्नेशे

**विघ्नकारिन्** त्रि॰ विघ्नं करोति कृ-णिनि । १घोरदर्शने २विघातके च मेदि॰ । स्त्रियां ङीप् । [अप्यत्र ।

**विघ्ननाशक** पु॰ ६त॰ गणेशे शब्दच॰ ण्वुल् । विघ्ननाशनादयो-

**विघ्नराज** पु॰ विघ्ने राजते राज-अच् । गणेशे अमरः । ६त॰ । विघ्नेशादयोऽप्यत्र ।

**विघ्नहारिन्** पु॰ विघ्नं हरति हृ-णिनि । गणेशे त्रिका॰ ।

**विघ्नित** त्रि॰ विघ्नो जातोऽस्य इतच् । जातविघ्ने ।

**विघ्नेशानकान्ता** स्त्री ६त॰ । श्वेतदूर्वायाम् राजनि॰ ।

**विच** पृथक्करणे रु॰ जु॰ वा उ॰ सक॰ अनिट् । विनक्ति वि-वेक्ति विङ्क्ते विविक्ते । इरित् अविचत् अवैक्षीत् ।

**विचकिल** पु॰ विच+क किल-क कर्म॰ । १मदनवृक्षे । २मल्लीभेदे मेदि॰ । [२नागदन्त्यां स्त्री राजनि॰ टाप् ।

**विचक्षण** पु॰ वि+चक्ष-ल्यु न ख्यादेशः । १पण्डिते अमरः

**विचक्षुस्** त्रि॰ वि+चक्ष-उसि न ख्यादेशः । १विमनस्के त्रिका॰ । विगतं चक्षुर्यस्य । २नेत्रशून्ये त्रि॰ । [चयने च ।

**विचयन** न॰ वि+चि-ल्युट् । १अन्वेषणे शब्दच॰ । २पुष्पादि

**विचर्चिका** स्त्री वि+चर्च ण्वुल् । पामनि रोगभेदे अमरः । सा च क्षुद्रकुष्ठविशेषः । "एक कुष्ठं स्मृतं पूर्वं गजचर्म ततः स्मृतम् । ततश्चर्मदलं प्रोक्तं ततश्चापि विचर्चिका । विपादिकाभिधा चैव पामा कच्छुस्ततः परा । ततो दद्रुश्च विस्फोटः किटिभश्च ततः परम् । ततश्चालसकं प्रोक्तं शताररु ततः परम् । क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरैः । सकण्डूः पिडका श्यावा बहुस्रावा विचर्चिका पिडका क्षुद्रपिडका । "दाल्यते स्राव वरा क्षता-स्तास्तोदैर्या विचर्चिका । सारे विपादिका चैवमन्यत्र स्तोभेदाहिवचर्चिका" । "केचिद्विचर्चिकामेव विपादिकां प्रचक्षते भिषा-माहुः" भावप्र॰ । कुष्ठशब्दे २१५४पृ॰ दृश्यम् ।

**विचार** पु॰ वि+चर घञ् । १तत्त्वनिर्णये सन्दिग्धे वस्तुनि प्रमाणेन तत्त्वपरीक्षायां २तदनुगुणे वाक्यसमूहे च । "विपरीतोद्भावकपरविजिगीषया न्यायप्रयोग इति" केचित् प्राहुः । यथा पदार्थानुमानस्थले पर्वतो वह्नि-मान् धूमवत्त्वादित्यादि । अत्र च पर्वते वह्नौ साधनीये प्रतिवादिना च पर्वतो न वह्निमानित्यादि विपरीतवाक्ये प्रयुक्ते मध्यस्थस्य संशयो जन्यते । तन्निरासार्थं वादिना पर्वतो वह्निमानित्यादिप्रतिज्ञादिघटितवाक्यप्रयोगरूप विचारः क्रियते इति । ४विगतश्चारो यस्मात् प्रा॰ ब॰ । चार-शून्ये च "विचारदृक्चारदृगप्यवर्त्तत" ।

**विचारण** न॰ वि+चर-णिच्-ल्युट् । १विचारे शब्दर॰ । युच् । तत्रैव स्त्री अमरः । २मीमांसायाञ्च हेमच॰

**विचारित** त्रि॰ विचारो जातोऽस्य इतच् । कृतविचारे ।

**विचाल** त्रि॰ वि+चल-कर्त्तरि ण । १अभ्यन्तरे २अन्त-राले हेमच॰ । वि+चल-णिच् भावे अच् । १एकत्र स्थितस्य वस्तुनो विशेषरूपतापादने "अधिकरणविचाले च" पा॰ "द्रव्यस्य संख्यान्तरापादने संख्याया धा स्यात् । एक राशिं पञ्चधा कुरु" सि॰कौ॰ । [ङीप् ।

**विचि(ची)** पुं स्त्री विच-इन् । तरङ्गे भरतः । स्त्रीत्वपक्षे वा

**विचिकित्सा** स्त्री वि+कित स्वार्थे सन् अ । सन्देहे अमरः ।

**विचित्र** न॰ विशेषेण चित्रम् । १कर्बुरवर्णे । २तद्वति त्रि॰ शब्दच॰ ३आश्चर्य्ये त्रि॰ । ४मृगेर्वारौ स्त्री राजनि॰ । ५अर्थालङ्कारभेदे न॰ अलङ्कारशब्दे ४०१ पृ॰ दृश्यम् । संज्ञायां कन् । भुर्जपत्रवृक्षे पु॰ राजनि॰ ।

**विचित्रवीर्य्य** पु॰ शान्तनुनृपात्मजे नृपभेदे भा॰ आ॰ १०१ अ॰

**विचित्राङ्ग** पुस्त्री॰ विचित्रमङ्गं यस्य । (चितं) १व्याघ्रभेदे शब्दच॰ २मयूरे पुंस्त्री॰ शब्दर॰ उभयत्र स्त्रियां ङीप् । ३आश्चर्य्यदेहे त्रि॰ ।

**विचेतस्** त्रि॰ विरुद्धं दुष्टं विशिष्टं वा चेतो यस्य । १दुष्ट-चित्ते २विशिष्टचित्ते च । ३दुर्मनस्के हेमच॰ ।

**विचेष्टित** त्रि॰ विगतं चेष्टितमस्य । १चेष्टाशून्ये, वि+चेष्ट-भावे क्त । २विशेषेण चेष्टायाम् न॰ ।

**विच्छ** दीप्तौ चु॰उभ॰सक॰सेट् । विच्छयति ते अविविच्छत् त

**विच्छ** गतौ तु॰ पर॰ स्वार्थे आय, आयपक्षे च॰सक॰ सेट् । विच्छायति विच्छायते विच्छति । अविच्छायीत् अविच्छा-यिष्ट अविच्छीत् ।

स्यादिज्ञाने अमरः। ४वेदान्तोक्ते अविद्यावृत्तिभेदे च। ५बौद्धमतसिद्धे आलयरूपे ज्ञाने च। "चतुर्दशानां विद्यानां धारणं हि यथार्थतः। विज्ञानमितरद् विद्याद् येन धर्मो विवर्द्धते" कूर्मपु० १४अ० उक्ते ६चतुर्दशविद्याज्ञाने च।

**विज्ञानमयकोष** पु० विज्ञानात्मकः कोष इवावरकत्वात्। ज्ञानेन्द्रियसहिते बुद्धिपदार्थे।

**विज्ञानस्कन्ध** पु० बौद्धमतसिद्धेषु रूपविज्ञानवेदनासंज्ञासंस्काररूपेषु स्कन्धेषु आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहे।

**विज्ञानिक** त्रि० विज्ञानमस्त्यस्य ठन्। विज्ञानयुक्ते भरतः।

**विज्झोली** स्त्री विज-उल-पृषो०। पङ्क्तौ त्रिका०।

**विट** आक्रोशे सक० स्वने अक० भ्वा० पर० सेट्। वेटति अवेटीत्।

**विट** पु० विट क। १विङ्गे जारे अमरः। २शृङ्गाररसनायकानुचरे "सम्भोगहीनसम्पद् विटस्तु धूर्त्तः कलैकदेशज्ञः। वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्" सा०द०। ३धूर्त्ते, "विट। विटपमसु टदस्तस्मै" माघ ४पर्वतभेदे ५खदिरभेदे ६खदिरभेदे ७मूषिके च मेदि०। ८नारङ्गवृक्षे शब्दमाला।

**विटङ्क** न० वि+टकि-घञ्। कपोतपालिकायां प्रासादाद्यग्रस्थे काष्ठनिर्मिते कपोतावासस्थाने। (पायराखोप) अमरः।

**विटप** पु न०। विट विस्तारं वा पाति पिबति वा पा-क। १शाखाया, २पल्लवविस्तारे अमर। ३स्तम्बे ४पल्लवे च शब्दर० ५विटपालके ६तरुपार्श्वगे च मेदि० "पिबति च पाति च यासकौ रहस्त्वाद् विट। विटपमसुन्दरस्तस्मै" माघ। ७आदित्यपत्रे पु० राजनि०। ८इक्षुकाण्डभूषणस्थाने हेमच० ९विटाधिपे मेदि०। [वृक्षे राजनि०।

**विटपिन्** पु० विटप+अस्त्यर्थे इनि। १वृक्षे अमरः। २वट-

**विटप्रिय** पु० ६त०। मुद्गरवृक्षे राजनि०।

**विटमाक्षिक** पु० विटप्रियं माक्षिकं। धातुभेदे हेमच०।

**विटि(टी)** स्त्री विट-कि वा ङीप्। पीतचन्दने शब्दमाला।

**विट्खदिर** पु० विडिव दुर्गन्धः खदिरः। (गुयेबावला) वृक्षे अमरः। [अमरः स्त्रियां ङीष्।

**विट्चर** पुंस्त्री विषि-विष्ठां चरति चर-अच्। ग्राम्यशूकरे

**विट्पति** पु० विश्यते विश क्विप् विशः कन्यायाः पतिः। जामातरि जटाधर। [पक्षिभेदे जटा०।

**विट्सारिका** स्त्री विडिव दुर्गन्धः सारिका। (गुयेशालिक)

**विड** आक्रोशे भ्वा० पर० सक० सेट्। वेडति अवेडीत्।

**विड** न० विड-क। लवणभेदे अमरः। "विडं सक्षारमूर्ध्वाधः कफवातानुलोमनम्" ऊर्ध्वं कफमधोवातं सञ्चारयतीत्यर्थः। "दीपनं लघु तीक्ष्णोष्णं रूक्षं रुच्यं व्यवायि च। विबन्धानाहविष्टम्भशूलगौरवशूलहृत्" भावप्र०।

**विडङ्ग** पु०न० विड-अङ्गच्। १स्वनामख्याते औषधभेदे अमर। "विडङ्गं कटु तीक्ष्णोष्णं रूक्षं वह्निकरं लघु। शूलाध्मानोदरश्लेष्मक्रिमिवातविबन्धनुत्" भावप्र०। २अभिज्ञे त्रि० मेदि०।

**विडम्बन** न० वि-डबि+ल्युट्। १तिरस्करणे २अनुकरणे च। युच्। विडम्बनाप्यत्र स्त्री। "इयञ्च तेऽन्या पुरतो विडम्बनेति" कुमार०।

**विडाल** पुंस्त्री विड-कालन्। स्वनामख्याते १पशुभेदे अमरः स्त्रियां ङीष्। २नेत्रपिण्डे मेदि० ३नयनौषधभेदे च भावप्र० ४विदार्य्यां स्त्री राजनि० ङीप्। सञ्ज्ञायां कन्। ५हरिताले न०। स्वार्थे क। विडालके पशौ पु० स्त्री०। सञ्ज्ञायां कन्। नेत्रौषधभेदे तद्विधिः भावप्र० उक्तो यथा "विडालको बहिर्लेपो नेत्रे पक्ष्मविवर्जिते। तस्य मात्रा परिज्ञेया मुखालेपविधानवत्"। मुखालेपस्तु "अङ्गुलस्य चतुर्थांशो मुखालेपः कनिष्ठकः। मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्द्धाङ्गुलो भवेत्"। स्थितिकालोऽपि तस्योक्तो यावत् कल्को न शुष्यति। तेनापि गुणहीनः स्यात्तथा दूषयति त्वचम्"। स च "यष्टीगैरिकसिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः। जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः"। तार्क्ष्यं रसाञ्जनम्। "रसाञ्जनेन वा लेपः पथ्याबिल्वदलैरपि। वचाहरिद्राविश्वैर्वा तथा नागरगैरिकैः"।

**विडालपदक** न० कर्षपरिमाणे भावप्र० कर्षशब्दे १७७४ पृ० दृश्यम्। [शब्दे २४१४ पृ० दृश्यम्।

**विडीन** न० वि+डी-क्त। पक्षिणां गतिभेदे जटा० खगगति-

**विडुल** पु० विड कुलन्। वेतसवृक्षे हेमच०।

**वि(डो)डौजस्** पु० विष-क्विप् विट् व्यापकमोजो यस्य पृषो० वा औत्। इन्द्रे अमर।

**विड्गन्ध** न० विष इव गन्धोऽस्य। विड्लवणे रत्नमाला।

**विड्लवण** न० विडिव दुर्गन्धं लवणम्। स्वनामख्याते लवणभेदे रत्नमाला।

**विड्वराह** पुंस्त्री० विट्प्रियो वराहः शाक०। १ग्राम्यशूकरे जटा० स्त्रियां ङीष्। "इत्येव विड्वराह इति श्रुतिः"।

च त्रि० ४मिथिलाया स्त्री हेमच० । ५देहशून्ये देवे पात० सूत्रभाष्यादौ देवस्य विदेहत्वं समर्थितं यथा "भवप्रत्ययो विदेहप्रकृतिलयानाम्" सू० ।
"स खल्वयं द्विविध उपायप्रत्ययो भवप्रत्ययश्च तत्रोपाय प्रत्ययो योगिनां भवति" भवप्रत्ययो विदेहप्रकृतिलयानाम्" विदेहानां देवानां भवप्रत्ययः ते हि स्वसंस्कारमात्रोपयो(भो)गेन चित्तेन कैवल्यपदमनुभवन्तः स्वसंस्कार विपाकं तथाजातीयकमतिवाहयन्ति" भाष्यम् ।-"भवन्ति जायन्तेऽस्यां जन्तव इति भवोऽविद्या स खल्वयं भव प्रत्ययः कारणं यस्य निरोधसमाधेः स भवप्रत्ययः । तत्र तयोर्मध्ये उपायप्रत्ययो योगिनां मोक्षमाणानां भवति विशेषविधानेन शेषस्य मुमुक्षुसम्बन्धं निषेधति । केषां तर्हि भवप्रत्ययः । इत्यत्र सूत्रेणोत्तरम् । विदेहाश्च प्रकृतिलयाश्च तेषामित्यर्थः । तद् व्याचष्टे विदेहानां देवानां भवप्रत्ययः भूतेन्द्रियाणामन्यतममात्मत्वेन प्रतिपन्नानामुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमिन्द्रियेषु भूतेषु वा लीनाः संस्कारमात्रावशेषतया षाट्कौशिकशरीररहिताः विदेहाः ते हि संस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः प्राप्नुवन्तः विदेहाः । असंस्कृतत्वञ्च कैवल्येन साम्यम् । साधिकारसंस्कारशेषता च वैरूप्यम् । संस्कारमात्रोपभोगेणेति क्वचित् पाठः तस्यार्थः संस्कारमात्रमेवोपभोगो यस्य न तु चित्तवृत्तिरित्यर्थः । प्राप्तावधयः संस्कारविपाकं तथाजातीयकमतिवाहयन्ति अतिक्रामन्ति पुनरपि संसारे विशन्ति तथा च वायु प्रोक्तं "दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तका । भौतिकास्तु शतं पूर्णम्" विवरणम् । तेषां देवानां मध्ये यस्य विवेकसाक्षात्कारस्तस्य कैवल्यप्राप्तिः "योयो देवानां प्रत्यबुध्यत स विमुच्यते" इति श्रुतेः । मीमांसासिद्धे देहशून्ये ५अचेतने मन्त्रात्मके देवे च । अधिपशब्दे ४५१ पृ० दृश्यम् ।

विदेहकैवल्य न० कर्म० । "न तस्य प्राणा उत्क्रामन्ति इहैव समवनीयन्ते" श्रुत्युक्ते जीवन्मुक्तस्य देहपतनान्तर निर्वाणमोक्षे ।
विदेहकैवल्यनिष्पत्तिप्रकारादि शा० सू० भाष्ययोरुक्तं यथा 'भोगेन त्वितरे क्षपयित्वा सम्पद्यते" सू० । अनारब्धकार्ये पुण्यपापयोर्विद्यासामर्थ्यात् क्षय उक्तः इतरे त्वारब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म सम्पद्यते "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति । "ब्रह्मैव सन् ब्रह्माप्येति" इति चैवमादिश्रुतिभ्यः । ननु सत्यपि सम्यग्दर्शने यथा प्राग् देहपाताद् भेददर्शनं द्विचन्द्रदर्शनन्यायेनानुवृत्तमेवं पश्चादप्यनुवर्त्तेत न, निमित्ताभावात् उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तं न च तादृशमस्ति किञ्चित् कारणम् । नन्वपरः कर्माशयोऽभिनवमुपभोगमारप्स्यते न, तस्य दग्धबीजत्वात् । मिथ्याज्ञानावष्टम्भं हि कर्मान्तरं देहपात उपभोगान्तरमारभते तच्च मिथ्याज्ञानं सम्यग्दर्शनेन दग्धमिति साध्वेतत् आरब्धकार्यक्षये विदुषः कैवल्यम्" भा० । तत्रैव ४पादे च सू०भाष्ययोरुक्तं यथा "सम्पद्याविर्भावः स्वेनशब्दात्" सू० "एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" श्रुतिर्विषयवाक्यं तत्र पूर्वपक्षं दर्शयित्वा सिद्धान्तितं भाष्यकृता यथा "केवलेनैवात्मनाविर्भवति न धर्मान्तरेणेति कुतः ? स्वेन रूपेणाभिनिष्पद्यते इति स्वशब्दात्" भा० । "मुक्तः प्रतिज्ञानात्" सू० । "योऽत्राभिनिष्पद्यते इत्युक्तः स पूर्वबन्धविनिर्मुक्तः शुद्धेनैवात्मनावतिष्ठते" कुतः ? प्रतिज्ञानात् । "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति प्रतिज्ञातम् "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति चोपन्यस्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इति (श्रुत) भा० । "अविभागेन दृष्टत्वात्" सू० । "अविभक्त एव परेणात्मना मुक्तोऽभिनिष्पद्यते कुतः ? दृष्टत्वात्" "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति" एवं मुनेर्विजानत आत्मा भवति गौतम !" इत्येवमादीनि मुक्तस्वरूपनिरूपणपराणि वाक्यान्यविभागमेव दर्शयन्ति नदीसमुद्रादिनिदर्शनानि च" भा० । विवेकचू० अप्युक्तं यथा "पात्रपाणहस्तत्रणधान्यकटाम्बराद्या दग्धा भवन्ति हि मृदेव यथा तथैव । देहेन्द्रियासुमनआदिसमस्तदृश्यम् ज्ञानाग्निदग्धमुपयाति परात्मभावम् । विलक्षणं यथा ध्वान्तं लीयते भानुतेजसि । तथैव सकलं दृश्यं ब्रह्मणि प्रविलीयते । घटे नष्टे यथा व्योम व्योमैव भवति स्फुटम् । तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित् स्वयम् । क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले । संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः । एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम् । ब्रह्मभावं प्रपद्यैव यतिर्नावर्तते पुनः । सदात्मकत्वविज्ञानदग्धाऽविद्यादिवर्ष्मणः । अमुष्य ब्रह्मभूतत्वात् ब्रह्मणः कुत उद्भवः" ।

योग्यञ्च यद् यस्य तत्तस्य प्रतिपादयेत्"। ततः पुस्तकलेखनप्रकारस्तद्दानविधिश्च विस्तरेणोक्तस्तत्र दृश्यः। विद्योपयोगिद्रव्यादिदानेऽपि विद्यादानं भवति यथोक्तं हेमा० दा० देवीपु० "आत्मवित्तानुसारेण विद्यादानं करोति यः। स वाञ्छितं फलमाप्नोति यावत्तस्य न संशयः। स्त्री तथानेन विधिना विद्यादानफलं लभेत्। भर्त्रा चैवाभ्यनुज्ञाता विधवा च तदुद्दिशेत्"। विधानमाह "विद्यार्थिने सदा दद्याद् वस्त्राभ्यङ्गञ्च भोजनम्। कलिकासुटकं दीपं यस्मात्तैलं विना न सः। लेखनीघटितं तीक्ष्णं मसीपात्रन्तु लेखनीम्। दत्त्वा तु लभते वत्स! विद्यादानमनुत्तमम्। पुस्तकस्तरणं दत्त्वा सुप्रमाणं सुशोभनम्। विद्यादानमवाप्नोति कृतवन्तश्च बुद्धिमान्। यन्त्रकं त्वासनञ्चैव दण्डासनमथापि वा। विद्यावाचनशीलाय दत्तं भवति राज्यदम्। अञ्जनं नेत्रपादानां दत्तं विद्यापरायणे। भूमिर्गृहञ्च क्षेत्रञ्च स्वर्गराज्यफलप्रदम्। यस्य भूम्यां स्थितो नित्यं विद्यादानं प्रवर्त्तयेत्। तस्यापि भवति स्वर्गस्तत्प्रभावान्न संशयः"। "येऽपि पत्रं मसीपात्रं लेखनीं सम्पुटादिकम्। दद्युः शास्त्राभियुक्ताय तेऽपि विद्याप्रदायिनाम्। यान्ति लोकान् शुभान् मर्त्त्याः पुण्यभाजो नराधिप!"। नन्दिपु० "विद्यादानमवाप्नोति प्रदानात् पुस्तकस्य च। शिल्पानि शिक्षयेद् यस्तु पौण्डरीकफलं लभेत्। शिल्पभाण्डप्रदानेऽपि तद्विद्यादानजं फलम्। अहितेषु प्रवृत्तस्य तथा कृत्वा निवारणम्। विद्यादानफलं प्रोक्तं नात्र कार्य्या विचारणा। पापवृत्तस्य च तथा दत्त्वा चैव परां गतिम्। विद्यादानफलं प्राप्य स्वर्गलोके महीयते। येन जीवति भाण्डेन तस्मै तद्भाण्डदायकः। सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते" विष्णुधर्मो०। तत्रैव स्कन्दपु० विद्यादानोपक्रमे "पुस्तकस्तरणं दत्त्वा सहस्रं तत्प्रमाणतः। तदासनं वितानं वा शिवलोके महीयते। यः श्रीपर्णसमुद्भूतं निम्नखातं सुलक्षणम्। दद्यात् सम्पुटकं कृत्वा चर्मणा वापि निर्मितम्। शिवज्ञानाभियुक्ताय तदध्ययनहेतवे। सुकाष्ठं फलकं वापि विद्यादानफलं लभेत्। यः सौवर्णं सुसम्पूर्णं सर्वरत्नोपशोभितम्। सन्निधानं सुमहद् विद्याकोशसमाश्रयम्। कारयेद्वापि रौप्येण ताम्रेण चतुरस्रकम्। काश्मीरकूटं लौहं वा दारुशलादिनिर्मितम्। सुकषायातिरक्तेन चर्मणाभिनवेन च। अन्तर्बहिश्च मठयेत् विद्यादाने नवं गृहम्। सुदृढं कटकोपेतं दृढस्तम्भनिवेशनम्। कुड्योत्तालकसंयुक्तं विद्यावर्त्तिकरण्डकम्। एवं वित्तानुसारेण कारयित्वा गृहं नृप!। विद्यासिंहासनं तत्र सम्पूज्य विधिवद् बुधः। तस्मिन् पुण्याहशब्देन विद्याकोशगृहे न्यसेत्। एवं यः शिवविद्याया कुर्य्यादायतनं शुभम्। स मुक्तपातकैः सर्वैर्विद्यादानफलं लभेत्। विद्यामण्डलकं कृत्वा विद्याव्याख्यानमण्डपे। तत्राभ्यर्च्य शिवां विद्यां तद्व्याख्यां शृणुयात्ततः। सोऽपि याति शिवस्थानं कार्य्यकालसमन्वितम्। अनेन विधिना ज्ञानं यः शृणोति प्रवक्तृतः। स साम्राज्यश्रिय सौख्यं देहान्ते मुक्तिमाप्नुयात्"। तत्रैव देवीपु० "तस्मात् सर्वप्रयत्नेन विद्या देया सदा नरैः। इहैव कीर्त्तिमाप्नोति मृतो याति परां गतिम्। यस्तु देव्या गृहे नित्यं विद्यादानं प्रवर्त्तयेत्। स भवेत् सर्वलोकानां पूज्यः पूज्यपदं व्रजेत्"। वराहपु० "लेखापयित्वा तच्छास्त्रं देयं गुणवते सदा। तपस्विने, धर्मरते प्रतिपाल्यमतत्परे। वस्त्रयुग्मेन संवीतं पुस्तकं प्रतिपादयेत्। वाचकं पूजयेच्चापि वस्त्रालङ्कारभूषणैः। अनेनैव विधानेन विद्यादानफलं लभेत्"।

**विद्याधन** न० विद्यया लब्धं धनम्। विद्यया लब्धे "उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम्। विद्याधनन्तु तद्विद्यात्" इति, "शिष्यादार्त्विज्यतः प्राप्तं सन्दिग्धप्रश्ननिर्णयात्। स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत्। विद्याधनन्तु तत् प्राहुः" इति "शिल्पिष्वपि हि धर्मोऽयम्" इत्युपक्रम्य "परं निरस्य यादेन विद्यया द्यूतपूर्वकम्"। विद्याधनं तु तद्विद्यादित्युक्ते च धने।

विद्याधनविभागे विशेष "विद्याधनं तु यद् यस्य तत्तस्यैव धनं भवेत्। कुटुम्बं बिभृयाद् भ्रातुर्यो विद्यामधिगच्छतः। भागो यवीयसा तत्र यदि विद्यानुपालिनः" दायभा०। दायतत्त्वे तु "भागं विद्याधनात्तस्मात् स लभेताश्रुतो ऽपि सन्" इति पाठः। दायभा० नारदवाक्ये "देयं वैद्येन तद्धनम्" पाठः। "परभक्तोपयोगेन विद्या प्राप्ताऽन्यतस्तु या। तया लब्धं धनं यत्तु विद्यालब्धं तदुच्यते" दाय०त० कात्यायनः। "अन्यतः पितृमातृकुलव्यतिरिक्तात्" रघु०। "नाविद्यानां तु वैद्येन देयं विद्याधनात् क्वचित्। समविद्याधिकानां तु देयं वैद्येन तद्धनम्" "कुले विनीतविद्यानां भ्रातृणां

प्रवाकश्च विद्रधिः कफसम्भवः । तनुपीतासिताश्चैषामास्रावाः क्रमशो मताः"। अथ सान्निपातिकमाह । "नानावर्णरुजास्रावो घाटालो विषमो महान् । विषमं पच्यते चापि विद्रधिः सान्निपातिकः"। नाना अनेकविधाः वर्णाः कृष्णरक्तपाण्डुरूपाः । रुजा तोददाहकण्ड्वादिरूपाः स्रावा तनुपीतसिताः यस्य सः । घाटालः घाटा कोटिः सास्यास्तीति घाटालः अत्युच्छ्राय इत्यर्थः । विषमः निम्नोन्नत । विषमं पच्यते चिराचिरगम्भीरोत्तानोद्गीर्णभेदेन विषमं यथा स्यात्तथा पच्यते । अथाभिघातजस्यागन्तोः विद्रधेः सम्प्राप्तिपूर्वकं लक्षणमाह । "तैस्तैर्भावैरभिहते क्षते चाऽपथ्यकारिणाम् । क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् । ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः । आगन्तुर्विद्रधिर्ज्ञेयः पित्तविद्रधिलक्षणः"। तैस्तैर्भावैः काष्ठलोष्ट्रपाषाणादिभिः अभिहते यदा रक्तस्रावो भवति । तथाभिहते क्षते क्षते वा अथ वा खड्गशृङ्गादिभिः क्षते यथा रक्तस्रावो भवति तथा क्षते क्षते क्षतोष्मा । अत्र क्षतशब्देन हतमात्र उच्यते तेनाभिहतक्षतयोरुभयोरप्यूष्मा वायुना विसृतः अभिघातात् क्षते रक्तक्षयात् कुपितेन वायुना प्रसृतः । ईरयेत् कोपयेत् । अथ रक्तजमाह "कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः । पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते"। अधिष्ठानविशेषेण लिङ्गविशेषं बोधयितुमाभ्यन्तरान् विद्रधीनाह "आभ्यन्तरानतस्तूर्द्ध्वं विद्रधीन् परिचक्षते । गुर्वसात्म्यविरुद्धान्नशुष्कशाकाम्लभोजनाः । अतिव्यवायायामवेगाघातात्युष्णविदाहिभिः । पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपिणम् । वल्मीकवत्समुन्नद्धमन्तः कुर्वन्ति विद्रधिम् । गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा । वृक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि चाप्यथ । एषां लिङ्गानि जानीयाद्बाह्यविद्रधिलक्षणैः" सम्भूय वा मिलित्वा वा । समुन्नद्धं समन्तादुन्नतम् । स्थानविशेषेण रूपविशेषमाह "गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता । नाभ्यां हिक्का जृम्भणं च कुक्षौ मारुतकोपनम् । कटिपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ । वृक्कयोः पार्श्वसङ्कोचः प्लीह्न्युच्छ्वासावरोधनम् । सर्वाङ्गप्रग्रहस्तीव्रो हृदि कासश्च जायते । श्वासो यकृति हिक्का च क्लोम्नि पेपीयते पयः" आमपाकमाह "नाभेरुपरिजाः पक्वा यान्त्यूर्द्ध्वमितरे त्वधः" कण्ठादिमार्गात् यान्ति स्रवन्ति ऊर्द्ध्वजत्वात्, इतरे वस्त्यादिजाः अधः गुदात् । नाभिजस्तूभाभ्यां मार्गाभ्याम् । तथा च हारीतः "ऊर्द्ध्वं प्रभिन्नेषु मुखाद्धराणां प्रवर्त्ततेऽसृक् रुधिरं हि पूयः । अधः प्रभिन्नेषु तु पायुमार्गाद् द्वाभ्यां प्रवृत्तिस्त्विह नाभिजेषु" अथ साध्यत्वादिकमाह "अथ स्रुतेषु जीवेत्तु स्रुतेषूर्द्ध्वं न जीवति । हृन्नाभिवस्तिवर्ज्जेषु तेषु भिन्नेषु बाह्यतः । जीवेत्कदाचित् पुरुषो नेतरेषु कदाचन"। हृन्नाभिवस्तिवर्ज्जेषु क्लोमप्लीहादिजाः तेषु तथाभिन्नेषु न जीवेत् हृदादीनां मर्मत्वात् । अतएव भोजः "असाध्यो मर्म्मजो ज्ञेयः पक्वाऽपक्वश्च विद्रधिः । सन्निपातोत्थितोऽप्येष पक्व एव हि वस्तिजः । त्वग्जो नाभेरधोजश्च साध्यो यश्च समीपजः । अपक्वश्चैव पक्वश्च साध्यो नोपरि नाभितः । आध्मानं बद्धनिष्यन्दं छर्द्दिहिक्कातृषान्वितम् । रुजाश्वाससमायुक्तं विद्रधिर्नाशयेन्नरम्" अथ बाह्यविद्रधीनां साध्यासाध्यत्वमाह "साध्या विद्रधयः पञ्च विवर्ज्यः सान्निपातिकः । आमपक्वविदग्धत्वं तेषां ज्ञेयञ्च शोथवत्" शोथवत् वक्ष्यमाणव्रणशोथवत् ।

**विद्रधिनाशन** पु० विद्रधिं नाशयति नश-णिच्-ल्यु । शोभाञ्जने त्रिका० । [२वरणे च शब्दमा० ।

**विद्र(द्रा)व** पु० वि+द्रु-अप् घञ् वा । १पलायने अमरः

**विद्रुत** त्रि० वि+द्रु-क्त । १प्राप्तद्रवे २पलायिते च अमरः ।

**विद्रुम** पु० विशिष्टो द्रुमः । १प्रवालरत्ने २तरुभेदे मेदि० ।

**विद्रुमलता** स्त्री विद्रुमस्य लतेव । नलीनामगन्धद्रव्ये मेदि० स्वार्थे क अत इत्त्वम् । विद्रुमलतिका तत्रैव । [द्रुमे विद्रुमि

**विद्वत्कल्प** त्रि० ईषदसमाप्तो विद्वान् विद्वस्+कल्पप् । ईष-

**विद्वत्तम** पु० अतिशयेन विद्वान् विद्वस्+तमप् । अतिपण्डिते तरप् । विद्वत्तरोऽप्यत्र । [विद्वत्कल्पे

**विद्वद्देशीय** त्रि० ईषदसमाप्तो विद्वान् विद्वस्+देशीयर् ।

**विद्वस्** त्रि० विद-क्वसु । १प्राज्ञे स्त्रियां ङीप् सम्प्र० "विदुषी मूर्द्धनि या विभर्त्ति यान्" नैष० । २पण्डिते पु० ३आत्मज्ञानयुक्ते । [क । विद्विषोऽप्यत्र ।

**विद्विष्** पु० विशेषेण द्वेष्टि वि+द्विष-क्विप् । शत्रौ अमरः ।

**विद्वेष** पु० वि+द्विष-घञ् । वैरिभावे शत्रुतायाम् अमरः ।

**विद्वेषण** न० वि+द्विष-णिच्-ल्युट् । तन्त्रोक्ते अभिचारकर्मभेदे येन शत्रूणां परस्परविद्वेषो भवति तस्मिन् व्यापारे । वि+द्विष-ल्युट् । २विद्वेषे । [विधति । अवेधीत्

विधाने छिद्रकरणे छेदने च तु० पर० सक० सेट् ।

पुंसि विध क अच् वा । १विमाने २गजभक्ष्यान्ने ३प्रकारे

४वेधे पुंक्लीं रभसः ५वेतने मेदि० ७कर्म्मणि च स्त्री हेमच० । तन्नार्थे वेधने च स्त्री त्रिका० ।

**विधवा** स्त्री विगतो धवो यस्याः । मृतपतिकायां स्त्रियाम् अमरः ।

विधवाधर्म्मास्च शु०त० उक्ता यथा विष्णुसं० "मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा" । ब्रह्मचर्य्यं मैथुनवर्ज्जनं ताम्बूलादिवर्ज्जनञ्च यथाह प्रचेताः "ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् । यतिश्च ब्रह्मचारी च विधवा च विवर्ज्जयेत्" । अभ्यञ्जनमायुर्वेदोक्तम्" रघु० । काशीख० विस्तरेण ४अ० उक्ता यथा

"कलयाति न भर्त्तारं यदि दैवात् कदाचन । तथापि शील संरक्ष्यं शीलभङ्गात् पतत्यधः । तद्वैगुण्यादपि स्वर्गात् पतिः पतति नान्यथा । तस्याः पिता च माता च भ्रातृवर्गस्तथैव च । पत्यौ मृते च या योषिद्वैधव्यं पालयेत् क्वचित् । सा पुनः प्राप्य भर्त्तारं स्वर्गभोगान् समश्नुते । विधवाकवरीबन्धो भर्त्तृबन्धाय जायते । शिरसो वपनं तस्मात् कार्य्यं विधवया सदा । एकाहारः सदा कार्य्यो न द्वितीयः कदाचन । त्रिरात्रं पञ्चरात्रं वा पक्षव्रतमथापि वा । मासोपवासं कुर्य्याद्वा चान्द्रायणमथापि वा । कृच्छ्रं पराकं वा कुर्य्यात् तप्तकृच्छ्रमथापि वा । यवान्नैर्वा फलाहारैः शाकाहारैः पयोव्रतैः । प्राणयात्रां प्रकुर्व्वीत यावत् प्राणः स्वयं व्रजेत् । पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम् । तस्माद्भूशयनं कार्य्यं पतिसौख्यसमीहया । नैवाङ्गोद्वर्त्तनं कार्य्यं स्त्रिया विधवया क्वचित् । गन्धद्रव्यस्य सम्भोगो नैव कार्य्यस्तया पुनः । प्रत्यहं तर्पणं कार्य्यं भर्त्तुः कुशतिलोदकैः । तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्व्वकम् । विष्णोस्तु पूजनं कार्य्यं पतिबुद्ध्या न चान्यथा । पतिमेव सदा ध्यायेद्विष्णुरूपधरं परम् । यद्यदिष्टतमं लोके यच्च पत्युः समीहितम् । तत्तद्गुणवते देयं पतिप्रीणनकाम्यया । वैशाखे कार्त्तिके माघे विशेषनियमाचरेत् । स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः । वैशाखे जलकुम्भाश्च कार्त्तिके घृतदीपकाः । माघे तिलैश्च नोत्सर्गः स्वर्गलोके महीयते । प्रपा कार्य्या च वैशाखे देवे देया गलन्तिका । उपानद्व्यजनं चापि सूक्ष्मवासांसि चन्दनम् । सकर्पूरन्तु ताम्बूलं पुष्पदानं तथैव च । जलपात्राण्यनेकानि तथा पुष्पगृहाणि च । पानानि च विचित्राणि द्राक्षारम्भाफलानि च । देयानि द्विजमुख्येभ्यः पतिर्मे प्रीयतामिति । ऊर्जे यवान्नमश्नीयादेकान्नमथ वा पुनः । वृन्ताकं सूरणञ्चैव शूकशिम्बीञ्च वर्ज्जयेत् । कार्त्तिके वर्ज्जयेत्तैलं कार्त्तिके वर्ज्जयेन्मधु । कार्त्तिके वर्ज्जयेत् कांस्यं कार्त्तिके चापि सन्धितम् । कार्त्तिके मौननियमे घण्टां चारुं प्रदापयेत् । पत्रभोजी कांस्यपात्रं घृतं पूर्णं प्रयच्छति । भूमिशय्याव्रते देया शय्या श्लक्ष्णा सतूलिका । फलत्यागे फलं देयं रसत्यागे च तद्रसः । धान्यत्यागे च तद्धान्यमथ वा शालयः स्मृताः । धेनुं दद्यात् प्रयत्नेन सालङ्कारां सकाञ्चनाम् । एकतः सर्व्वदानानि दीपदानं तथैकतः । कार्त्तिके दीपदानस्य कलां नार्हन्ति षोडशीम् । किञ्चिदभ्युदिते सूर्य्ये माघस्नानं समाचरेत् । यथाशक्त्या च नियमान्माघे स्नानं समाचरेत् । पक्वान्नैर्भोजयेद्विप्रान् यतीनपि तपस्विनः । लड्डुकैः फाणितैश्चापि वटकैर्मण्डरिकादिभिः । घृतपक्वैः समरिचैः शुचिकर्पूरवासितैः । गर्भे शर्करया पूर्णैर्नेत्रानन्दैः सुगन्धिभिः । शुष्केन्धनानां भारांश्च दद्याच्छीतापनुत्तये । कञ्चुकं तूलगर्भञ्च तूलिकां सोपवीतिकाम् । मञ्जिष्ठारूपवासांसि तथा तूलवतीं पटीम् । ऊर्णामयानि वासांसि यतिभ्योऽपि प्रदापयेत् । जातीफललवङ्गैश्च ताम्बूलानि बहून्यपि । कम्बलानि च चित्राणि निवीतानि गृहाणि च । मृदुलाः पादरक्षाश्च सुगन्ध्युद्वर्त्तनानि च । घृतकम्बलपूजाभिर्महास्नानपुरःसरम् । स्नाप्य शाम्भवं लिङ्गं पूजयेद्दृढभक्तितः । कृष्णागुरुप्रभृतिभिर्गर्भागारे प्रधूपनैः । तूलवर्त्तिप्रदीपैश्च नैवेद्यैर्विविधैस्तथा । भर्त्तृस्वरूपो भगवान् प्रीयतामिति चोच्चरेत् । एवंविधैश्च विधवा विविधैर्नियमैर्व्रतैः । वैशाखान् कार्त्तिकान् माघानेवमेवातिवाहयेत् । नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि । कञ्चुकं न परीदध्याद्वासो न विकृतं वसेत् । अपृष्ट्वा सुतान् किञ्चिन्न कुर्य्याद्भर्त्तृतत्परा । एवं चर्य्यापरा नित्यं विधवापि शुभा मता । इति धर्म्मसमायुक्ता विधवापि पतिव्रता । पतिलोकानवाप्नोति न भवेत् क्वापि दुःखिता" । ब्रह्मवै० जन्मख० ८३अ० कश्चिद्विशेष उक्तो यथा

"ब्राह्मणी पतिहीना या भवेन्निष्कामणी सदा । एकभक्ता दिनान्ते सा हविष्यान्नरता सदा । न धत्ते दिव्यवस्त्रञ्च गन्धद्रव्यं सुतैलकम् । स्रजञ्च चन्दनं चैव शङ्खं सिन्दूरभूषणम् । त्यक्त्वा मलिनवस्त्रा स्यात् नित्यं नारा-

वर्षं चरेत्"। "पुत्रस्तस्य तु पुत्रं सदा पश्यति धर्मतः। निराशं न च भुङ्क्ते सा न कुर्य्याद्विभवे व्ययम्। एकादश्यां न भोक्तव्यं कृष्णपक्षाष्टमीदिने। श्रीरामस्य नवम्याञ्च शिवरात्रौ पवित्रया। अघोरायाञ्च प्रेतायां चन्द्रसूर्य्योपरागयोः। भ्रष्टद्रव्यं परित्यज्य भुज्यते परमेव च। ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम्। सन्यासिनां च गोमांससुरातुल्यं श्रुतौ श्रुतम्। रक्तशाकं मसूरञ्च जम्बीरं पर्णमेव च। अलावूर्वर्त्तुलाकारा वर्जनीया यतेरपि। पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम्। यानमारोहणं कृत्वा विधवा नरकं व्रजेत्। न कुर्य्यात् केशसंस्कारं गात्रसंस्कारमेव च। केशानाञ्च जटारूपा न क्षौरं तीर्थकं विना। तैलाभ्यङ्गं न कुर्वीत न हि पश्यति दर्पणम्। मुखञ्च परपुंसां च यात्रां नृत्यं महोत्सवम्। नर्त्तकं गायकञ्चैव सुवेशं पुरुषं शुभम्"।

**विधातृ** पु० वि+धा-तृच्। १प्रजापतौ ब्रह्मणि अमरः। २कामदेवे मेदि०। ३मदिरायां राजनि०। ४भृगुमुनिपुत्रभेदे भाग०। ५विधानकर्त्तरि त्रि० स्त्रियां ङीप् सा च ६पिप्पल्यां शब्दर०। ७स्वधर्मे पु० "द्वौ धाता च विधाता च पौराणौ जगतां पती। द्वौ शास्तारौ त्रिलोकेऽस्मिन् धर्माधर्मौ प्रकीर्त्तितौ" अग्निपु०। [२मरीच्यादौ च।

**विधातृभू** पु० विधातुर्भवति भू—क्विप्। १नारदमुनौ त्रिका०

**विधातायुस्** पु० विधातुरायुः प्रमाणं यस्मात्। सूर्य्ये शब्दच०। सूर्य्यक्रियां विना वत्सरादिमानाभावप्रसङ्गात् सूर्य्यस्य तथात्वम्। ६त०। तस्य वयःकाले २ब्रह्मकल्पे च। तदायुःकालश्च आयुःशब्दे ७८२ पृ० दृश्यः।

**विधान** न० वि+धा ल्युट्। १करणे २कर्मणि। ३विधौ, जटा० ४गजभक्ष्यासे च हारा०। संज्ञायां कन्। क्षपायां न० शब्दर०। [त्रि०।

**विधानज्ञ** पु० विधानं जानाति ज्ञा-क। १पण्डिते। २विधि०

**विधायक** त्रि० वि+धा-ण्वुल्। विधानकर्त्तरि।

**विधि** पु० वि+धा-कि। १जगत्स्रष्टरि ब्रह्मणि, २भाग्ये ३क्रमे अमर "चिकीर्षाकृतिसाध्यत्वप्रकारधीविषयो विधिः" शब्दश० उक्ते प्रवर्त्तनारूपे ४नियोगे तज्जनके ५वाक्ये हेमच०। ६विष्णौ कलायु० ७कर्मणि त्रिका०। ८गजभक्ष्यान्ने जटा०। ९वैद्ये राजनि०। १०अप्राप्तप्रापकरूपे वाक्यभेदे, व्याकरणोक्ते ११सूत्रभेदे। तत्र व्याकरणविधिर्निरूप्यते। "संज्ञा च परिभाषा च विधिर्नियम एव च। अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणमित्युक्तेः षड्विधभेदाः तत्र "तुल्यास्यप्रयत्नं सवर्णम्" पा० सवर्णसंज्ञा परिभाषा तच्छब्दे ४२४६पृ० उक्ता। अप्राप्तप्रापको विधि यथा "अकः सवर्णे दीर्घः" पा० इत्यादि। अत्र सवर्णे परे पूर्वस्य दीर्घस्याप्राप्तस्य तत्प्रापकत्वात् तथात्वम्। स च द्विविधः कार्य्योत्पादकोऽभावरूपश्च। तत्र कार्य्योत्पादक उक्तः अभावोऽपि द्विविधः लोपरूपो निषेधरूपश्च तत्र "लोपो व्योर्वलीति" पा० नाशरूपः। "नाभ्यस्ताच्छतुरित्यादौ" निषेधरूपः। सामान्यप्राप्तस्य विशेषावधारको नियमः यथा "रात्सस्यैव" पा० इत्यादि। अन्यधर्मस्यान्यत्रारोपणविधिरतिदेशविधि यथा पुंवद्भावादिः। पूर्वस्थलस्थपदादेरन्यत्रोपस्थितिरधिकारविधि। स च त्रिविधः "सिंहावलोकितञ्चैव मण्डूकप्लुतमेव वा। गङ्गाप्रवाहवच्चापि ह्यधिकारस्त्रिधा मतः"। अधिकारशब्दे १७पृ० दृश्यम्। विधिश्च विनियोगरूपतया शब्दश० प्र० निरूपितो यथा

"नेह कृत्यात्मक विधानम्। आख्यातमात्रस्य तद्बोधसमर्थत्वात् किन्तु प्रवर्त्तकचिकीर्षायां यत्प्रकारज्ञानस्य हेतुत्वं स तथा, तादृशञ्च कृतिसाध्यत्वमिष्टसाधनत्वम् बलवदनिष्टाननुबन्धित्वञ्च प्रत्येकमेव, ‧यागपाकादिधर्मिकतद्विषयादेव यागादिधर्मिकचिकीर्षोत्पत्त्या तत्र प्रवृत्तेः। एवञ्च यजेतेत्यादौ यागः कृतिसाध्यः इष्टसाधन बलवदनिष्टाननुबन्धी चेत्याकारको बोधः" अधिक तत्र दृश्यम्। मीमांसकमते विधिस्वरूपभेदादिकं लौगाक्षिभास्करेण दर्शितं यथा

"तत्राज्ञातार्थज्ञापको वेदभागो विधिः। स च तादृशप्रयोजनवदर्थविधानेनार्थवान् तादृशं चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते। यथाग्निहोत्रं जुहुयात् स्वर्गकाम इति विधिर्मानान्तरेणाप्राप्तस्वर्गप्रयोजनवद्धोमं विधत्ते। अग्निहोत्रहोमेन स्वर्गं भावयेदिति वाक्यार्थबोधः"। "यत्र कर्म मानान्तरेण प्राप्तं, तत्र तदुद्देशेन गुणमात्रं विधत्ते। यथा दध्ना जुहोतीत्यत्र होमस्याग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानं दध्ना होमं भावयेदिति। यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते। यथा सोमेन यजेतेत्यत्र सोमयागयोरप्राप्तत्वात् सोमविशिष्टविधानम्। सोमपदे मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेदिति वाक्यार्थबोधः। न चोभयविधाने वाक्यभेदः प्रत्ये-

कतुभयस्याविधानात्। न च ज्योतिष्टोमेन स्वर्गकामो यजेतेति विधिप्राप्तोद्देशेन सोमरूपगुणविधानमेवास्तु सोमेन यागं भावयेदिति, किं मत्वर्थलक्षणयेति वाच्यम्। तस्याधिकारविधित्वेनोत्पत्तिविधित्वासम्भवात्। ननूद्भिदा यजेत पशुकाम इत्यत्रेव ज्योतिष्टोमेनेत्यत्राप्युत्पत्त्यधिकारविधित्वमस्त्विति चेन्न, दृष्टान्ते उत्पत्तिवाक्यान्तराभावेनान्यथानुपपत्त्या तथात्वाश्रयणात्। किञ्च ज्योतिष्टोमेनेत्यस्योभयविधित्वे तेनैव यागस्य फलसम्बन्धोऽपि बोधनीय इति स्फुटो वाक्यभेदस्तदत्र सोमपदे मत्वर्थलक्षणया विशिष्टविधानम्। स च विधिश्चतुर्विधः उत्पत्तिविधिर्विनियोगविधिः, अधिकारविधिः, प्रयोगविधिश्चेति। तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। यथाग्निहोत्रं जुहोतीति। अत्र च विधौ कर्मणः करणत्वेनान्वयः अग्निहोत्रहोमेनेष्टं भावयेदिति। ननु यागस्य द्वे रूपे द्रव्यं देवता च। तथाच रूपाश्रवणे अग्निहोत्रं जुहोतीति कथमुत्पत्तिविधिः अग्निहोत्रपदस्य तु तत्प्रख्यन्यायेन नामधेयत्वादिति चेन्न, रूपाश्रवणेऽप्यस्योत्पत्तिविधित्वात्। अन्यथा रूपश्रवणात् दध्ना जुहोतीति अयमेवोत्पत्तिविधिः स्यात्। तथा चाग्निहोत्रं जुहोतीति वाक्यमनर्थकं स्यात्। अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिः। यथा दध्ना जुहोतीति। स हि तृतीयया प्रतिपन्नाङ्गभावं दध्नो होमसम्बन्धं विधत्ते दध्ना होमं भावयेदिति। गुणविधौ च धात्वर्थस्य साध्यत्वेनैवान्वय। क्वचिदाश्रयत्वेनापि यथा दध्नेन्द्रियकामस्य जुहुयादित्यत्र दधिकरणत्वेनेन्द्रियं भावयेत् तत्र किन्निष्ठमित्याकाङ्क्षायां सन्निधिप्राप्तहोमस्याश्रयत्वेनान्वयेति। एतस्य विधेः सहकारिभूतानि षट् प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि। एतत्सहकृतेनानेन विधिनाङ्गत्वं परोद्देशप्रवृत्तकृतिसाध्यत्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते" तत तत्सहकारीणि श्रुत्यादीनि निरूपितानि तत्र दृष्टव्यानि "तदेवं निरूपितानि सङ्क्षेपतः श्रुत्यादीनि षट् प्रमाणानि। एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृतस्य "दर्शपूर्णमासाभ्यां यजेत" इत्येवं रूपेणाङ्गानि विनियोज्यन्ते तान्यङ्गानि द्विविधानि सिद्धरूपाणि, क्रियारूपाणि चेति। तत्र सिद्धानि जातिद्रव्यसंख्यादीनि तानि च दृष्टार्थान्येव। क्रियारूपाणि च द्विविधानि। गुणकर्माणि प्रधानकर्माणि च। एतान्येव सन्निपत्योपकारकाणि आराडुपकारकाणीति चोच्यते। कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम्। यथाऽवघातप्रोक्षणादि। तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं चेति। दृष्टार्थमवघातादि अदृष्टार्थं प्रोक्षणादि। दृष्टादृष्टार्थं पशुपुरोडाशादि। तद्धि द्रव्यत्यागांशेनादृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति। द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म त्वाराडुपकारकम्। यथा प्रयाजादि। आराडुपकारकञ्च परमापूर्वोत्पत्तावेवोपयुज्यते। सन्निपत्योपकारकन्तु द्रव्यदेवतासंस्कारद्वारा यागस्वरूपेऽप्युपयुज्यते। इदमेव चाश्रयिकर्मेत्युच्यते। तदेवं निरूपितः सङ्क्षेपतो विनियोगविधिः। प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः। स चाङ्गवाक्यैकवाक्यतापन्नः प्रधानविधिरेव। स हि साङ्गं प्रधानमनुष्ठापयन्विलम्बे प्रमाणाभावादविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते। न च तदविलम्बेऽपि प्रमाणाभाव इति वाच्यं विलम्बे ह्यङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः विलम्बेन क्रियमाणयोः पदार्थयोः इदमनेन सहकृतमिति साहित्यव्यवहाराभावात्। स चाविलम्बो नियते क्रमे आश्रीयमाणे भवति। अन्यथा हि किमेतदनन्तरमेतत् कर्त्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः। अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते। अतएवाङ्गानां क्रमबोधको विधिः प्रयोगविधिरित्यपि लक्षणम्"।

"तदेवं संक्षेपतो निरूपितः षड्विधक्रमनिरूपणेन प्रयोगविधिः। कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः। कर्मजन्यफलस्वाम्यं च कर्मजन्यफलभोक्तृत्वम्। स च यजेत स्वर्गकाम इत्यादिरूपः, स्वर्गमुद्दिश्य यागं विदधतानेन स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते "यस्याहिताग्नेरग्निर्गृहान्दहेत्सोऽग्नये क्षामवतेऽष्टाकपालं पुरोडाशं निर्वपेत्" इत्यादिना दाहादौ निमित्ते कर्म विदधता निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते। एवम् "अहरहः सन्ध्यामुपासीत" इत्यादिना शुचिविहितकालजीविनः सन्ध्योपासनाजन्यप्रत्यवायपरिहाररूपफलस्वाम्यं बोध्यते। तच्च फलस्वाम्यं तस्यैव योऽधिकारविशिष्टः। अधिकारश्च स एव यद्विशिष्टस्य पुरुषविशेषणत्वेन श्रूयते। यथा काम्ये कर्मणि फलकामना। नैमित्तिके कर्मणि निमित्तनिश्चय।

नित्ये सन्ध्योपासनादौ श्रुतिविहितकालजीवित्वम् अत-एव "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यनेन विधिवाक्येन स्वाराज्यमुद्दिश्य राजसूयं विदधता न स्वाराज्यकाममात्रस्य फलभोक्तृत्वं प्रतिपाद्यते किन्तु राज्ञः सतः स्वाराज्यकामस्यैव राजसूयस्यापि अधिकारिविशेषणत्वेन श्रवणात् । किञ्चित् तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणं यथाध्ययनविधिसिद्धा विद्या क्रतुविधीनामर्थज्ञानापेक्षत्वेनाध्ययनविधिसिद्धार्थज्ञानवत्त्वस्यैव प्रवृत्तेः । एवमग्निसाध्यकर्मसु आधानविध्यग्निमता अग्निसाध्यकर्मस्वाग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमत्त्वस्यैव प्रवृत्तेः । एवं सामर्थ्यमपि आख्यातार्थं श्रुतं शक्तं सहकारित्वेति न्यायात् स अर्थं प्रत्येव विधिप्रवृत्तेः । तदेवं निरूपितो विधिः" । विधिरसायने च विधिभेदोऽन्यथा दर्शितो यथा "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते" तत्तच्छब्दे विशेषो दृश्यः । १२अर्थालङ्कारभेदे च । अलङ्कारशब्दे ४०१पृ० दृश्यम् ।

**विधिज्ञ** त्रि० विधिं क्रमं जानाति ज्ञा-क । विधानक्रमज्ञे ।

**विधित्सा** स्त्री विधातुमिच्छा वि+धा-सन् भावे अ । विधानेच्छायाम् ।

**विधिदेशक** पु० विधिं विधानं दिशति दिश+ण्वुल् । विधिदर्शिनि १सदस्ये अमरः २गुरौ च ।

**विधिवत्** अव्य० विधिमर्हति विधि+वति । विध्यनुसारे

**विधु** पु० व्यध कु । १चन्द्रे २कर्पूरे ३विष्णौ मेदि० । ४ब्रह्मणि शब्दर० । ५शङ्करे ६राक्षसे विश्व । ७वायौ ८युधि च संक्षिप्तसा० ।

**विधुत** त्रि० वि+धु क्त १कम्पिते । २त्यक्ते च अमरः ।

**विधुनन** न० वि+धु णिच्-ल्युट् । चालने जटा० ।

**विधुन्तुद** पु० विधुं तुदति तुद-खश् मुम् च । राहौ अमरः

**विधुपिञ्जर** पु० विधोः पिञ्जर इव । १खड्गे शब्दर० ।

**विधुर** त्रि० विगता धूर्यस्य अच्समा० । १विश्लिष्टे अमरः । २विकले च मेदि० । विगता धूः । ३वैकल्ये ४विश्लेषे च न० त्रिका० । ५रसालायां स्त्री मेदि० ।

**विधुवन** न० वि+धु-ल्युट् । कम्पने अमरः ।

**विधूत** त्रि० वि+धू क्त । १कम्पिते २त्यक्ते च हेमच० । "विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्" स्मृतिः ।

**विधेय** त्रि० वि+धा यत् । १विधातुं योग्ये २वचनस्थे आयत्ते अमरः । ३विधिना बोध्ये च । ४उद्देश्यप्रतिकारतया भासमाने विलक्षणविषयतायुते पदार्थे यथा पर्वतो वह्निमानित्यादौ वह्निर्विधेयः । पर्वतोऽयमित्यादौ पाककृतिः आख्यातार्थस्य विधेयवर्गेण बोधव्युत्पत्त्याकारात् । विधेयता तु विलक्षणविषयता अनुवाद्यभिन्ननिष्ठा "अनुवाद्यमनुक्त्वा च न विधेयमुदीरयेत्" इति शाब्दिकनियमः । प्रत्ययादिप्रमितविशेष्यतावच्छेदकताभिन्ना विशेष्यतानिरूपिता च सेत्यन्ये ।

**विधेयाविमर्श** पु० विधेयस्याविमर्शो यत्र । अविमृष्टविधेयांशरूपे काव्यदोषभेदे दोषशब्दे ३७६१ पृ० तस्य स्वरूपादिकं दृश्यम् । [४०१ पृ० दृश्यम् ।

**विध्याभास** पु० अर्थालङ्कारभेदे सा० द० अलङ्कारशब्दे

**विध्वंस** पु० वि+ध्वंस घञ् । नाशे ।

**विनत** त्रि० वि+नम-क्त । १प्रणते २भुग्ने ३शिक्षिते च मेदि० । गरुडमातरि ४कश्यपपत्नीभेदे ५पिटकाभेदे च स्त्री मेदि० । [नताभ्रजादयोऽप्यत्र ।

**विनतासुनु** पु० ६त० । १अरुणे २गरुडे च जटा० । वि-

**विनद** पु० विशेषेण नदति नद-अच् । (छातियान) वृक्षे शब्दच० । [राजनि० ।

**विनम्रक** न० विशेषेण नम्रमिव इवार्थे कन् । तगरपुष्पे

**विनय** पु० वि+नी-भावे अच् । १शिक्षायां २प्रणामे ३अनुनये च मेदि० । वि+नी-कर्त्तरि अच् । ४विनययुक्ते, जने, विनयश्च शास्त्रज्ञानजन्यसंस्कारभेदः इन्द्रियसंयमो वा । ५निभृते, ५क्षिप्ते, ६जितेन्द्रिये च । ७वणिग्जने पु० अमरः । ८दण्डे अव्य० त० । ९वाच्यान्तरे स्त्री मेदि० ।

**विनयग्राहिन्** त्रि० विनयं शिक्षां गृह्णाति ग्रह णिनि । वचनस्थिते आयत्ते अमरः । स्त्रियां ङीप् ।

**विनयस्थ** त्रि० विनये तिष्ठति स्था क । वचनग्राहिणि आयत्ते हेमच० ।

**विनशन** न० वि+नश-ल्युट् । १विनाशे । विनश्यति अदर्शनं गच्छति सरस्वत्यत्र वि-नश+आधारे ल्युट् । २कुरुक्षेत्रस्थे तीर्थभेदे त्रिका० । "हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि" मनुः । स च सरस्वत्यन्तर्धानदेश एव प्रभासतीर्थसन्निकृष्टनिषादपुरसमीपस्थः यथोक्तं भा० व० १३०अ० ।

"एषा सरस्वती रम्या दिव्या चौघवती नदी । एतद्विनशनं नाम सरस्वत्या विशाम्पते । द्वारं निषादराष्ट्रस्य येषां दोषात् सरस्वती । प्रविष्टा पृथिवीं वीर मा निषादा हि

र्त्तं विदुः”। “शुक्लपक्षसप्तम्यां दीक्षा सरस्वतीविनशने” कात्या०श्रौ० २४।५।१०। “सरस्वतीविनशने सरस्वती यत्रादर्शनं गता तत्र पारस्वतसत्रार्थं दीक्षा भवति” कर्कः “यत्र सरस्वत्यन्तर्भवति तद्विनशनमुच्यते” इत्यग्निस्वामिन । “सरस्वती नाम नदी प्रत्यक्स्रोता प्रवहति तस्याः प्राग् परभागौ सर्वलोकप्रत्यक्षौ मध्यमस्तु भागो भूम्यन्तर्निमग्नः प्रवहति नासौ केनचित् दृश्यते तद्विनशनमुच्यते” इति न्याय्या० १०।१५।१ माधवाचार्य्यः।

**विनष्ट** त्रि० वि+नश–क्त। १विनाशप्राप्ते, नष्टे २पतिते च “विनष्टे साध्यशरणे पितर्युपरते सुते” नारद । “विनष्टे पतिते” दायभा० ।

**विना** अव्य० वि+ना। १वर्ज्जने २अन्तरेणेत्यर्थे च। एतद्योगे २द्वितीया तृतीया पञ्चमी च। [३रहिते च त्रिका० ।

**विनाकृत** त्रि० विनेति कृतम् विना+कृ–क्त। १त्यक्ते

**विनाडिका** स्त्री विभक्ता नाडिका यया। “दश गुर्वक्षरः प्राणः षड्भिः प्राणैर्विनाडिका। तत्षष्ठ्या तु भवेन्नाडी” सू० सि० उक्ते दण्डषष्टिभागात्मके पलरूपे काले।

**विनायक** पु० वि+नी–ण्वुल्। १गणेशे, २बुद्धे अमरः ३विघ्ने ४गुरौ च। ५त०। ६गरुडे मेदि०। ७गरुडपत्न्यां स्त्री शब्दमा० टाप् कापि अत इत्त्वम्।

विनायकश्च कर्मविघ्नसिद्ध्यर्थमीश्वरेण नियुक्तः देवभेदः यथोक्तं याज्ञवल्क्येन “विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः। गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा” “कर्मणां पुरुषार्थसाधनानां विघ्नसिद्ध्यर्थं स्वरूपलाभसाधनत्वविघातसिद्ध्यर्थं नियोजितो नियुक्तः” मिता०। तेनोपसृष्टस्य लक्षणान्याह स एव “तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत। स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति। कषायवाससश्चैव क्रव्यादांश्चाधिरोहति। अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठति। व्रजन्नपि तथात्मानं मन्यतेऽनुगतं परैः” तस्य प्रत्यक्षलक्षणान्याह स एव “विमना विफलारम्भः संसीदत्यनिमित्ततः। तेनोपसृष्टो लभते न राज्यं राजनन्दनः। कुमारी न च भर्त्तारमपत्यं गर्भमङ्गना। आचार्य्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा। वणिग्लाभं न चाप्नोति कृषिं चापि कृषीवलः” तच्छान्तिविधिश्च तत्रोक्तो दृश्यः। ‘विनायका विघ्नकारा मध्यापि” रघुनन्दः।

**विनारुहा** स्त्री विना मूलं विना रोहति रुह–क। त्रिपर्णिकायां राजनि०।

**विनाश** पु० वि+नश घञ्। १ध्वंसे २अदर्शने च।

**विनाशोन्मुख** त्रि० विनाशाय उन्मुखः उद्यतः। १नष्टप्राये २पक्वे च अमरः। [पिधाने शब्दच०।

**वि(वी)नाह** पु० वि+नह–घञ् वा उपसर्गदीर्घः। कूपमुख

**विनिद्र** त्रि० विगता निद्रा यस्य।१प्रकाशित शब्दमा०।२निद्राहीने च। तस्य भावः। त्व। विनिद्रत्व प्रबोधे न० हेमच०।

**विनिपात** पु० वि+नि+पत–घञ्। १निपाते २दैवादिकृते व्यसने मेदि० ३अपमाने च हेमच०।

**विनिमय** पु० वि+नि+मि–अच्। परिवर्त्ते १स्वद्रव्यदानेन द्रव्यान्तरग्रहणे शब्दच०। २बन्धके च शब्दमा०।

**विनियोग** पु० वि+नि–युज–घञ्। क्रियासु प्रवर्त्तने “अनेनेदन्तु कर्त्तव्यं विनियोगः प्रकीर्त्तितः इत्युक्ते २फलदानक्रमविधाने च “ऋषिं छन्दश्च दैवत्यं विनियोगस्तथैव चेति” योगियाज्ञ०। [देवगणभेदे पु० संक्षिप०।

**विनिर्भय** त्रि० विनिर्गतं भयं यस्मात्। १भयशून्ये माध्य-

**विनीत** त्रि० वि+नी–क्त। १विनययुक्ते २कृतदण्डे ३क्षिप्ते अमर ४अपनीते ५निभृते च। ६जितेन्द्रिये ७हृत च मेदि०। ८सुशिक्षिताश्वे अमरः। ९मरुवके च पु० १०शिक्षितवृषादौ राजनि० ११वणिजि पु० मेदि०।

**विनीय** पु० वि+नी–क्यप्। १कल्के २पापे च। ल्यप् शिक्षयित्वेत्यर्थे अव्य०।

**विनेतृ** त्रि० वि+नी–तृच्। १शिक्षके २नृपे पु० मेदि०।

**विनेय** त्रि० वि+नी–यत्। १शिक्षणीये २प्राप्ये च।

**विनोक्ति** स्त्री अर्थालङ्कारभेदे अलङ्कारशब्दे ४०९८० दृश्यम्।

**विनोद** पु० वि+नुद–घञ्। १कौतुके त्रिका०। २क्रीडायां ३अपनोदने च। ४रतिबन्धभेदे “दीर्घं प्रयोदयङ्घ्री प्रान्तो द्वौ प्रथिनौ। विनोद एष द्वाराप्य लिङ्गतकोरुद्वयं भवेत्” युक्तिक०।

**विन्ध्य** पु० विध–यत् मुमो० नुम् च। १पर्वतभेदे अमरः। २व्याधे च। ३लवलीफले स्त्री मेदि०। ४कृष्णजायां हेमच०। ५व्यासवन्ये नृपभेदे पु० अनुविन्ध्यशब्दे १६१० पृ० दृश्यम्।

**विन्ध्यवासिनी** स्त्री विन्ध्येऽचले वसति वस–णिनि ङीप्। यशोदागर्भजातायां दुर्गायाम्। “भङ्क्त्वाथोऽपि तां (यशोदागर्भजकन्याम्) स्थिता विन्ध्ये नगाधिराजे च। तत्र गत्वा तयोश्चापि तिष्ठन्तीं मङ्गलं बबन्धे। पूज्यमाना सुरैर्नित्यं ख्याता त्वं विन्ध्यवासिनी” वामनपु० ५१अ०। “ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी” देवीमा०।

२आश्चिमनी पु० कर्मध०। विन्ध्यस्त्रोऽप्यत्र जटा०।
**विन्ध्याचल** पु० कर्म०। विन्ध्यपर्वते।
**विन्ध्याटवी** स्त्री विन्ध्यस्या अटवी। विन्ध्यपर्वतस्थे वनभेदे।
**विन्ध्यावली** स्त्री बाणासुरमातरि स्त्रिका०।
**विन्न** त्रि० विद्–कर्मणि क्त। १विचारिते २प्राप्ते अमर। ३ज्ञाते ४स्थिते च विन्नः। [ शब्दच०।
**विन्यास** पु० वि+नि+अस–घञ्। विन्यसे (छातियान)
**विन्यास** पु० वि+नि+अस–घञ्। १स्थापने २रचने तन्त्रोक्ते मन्त्राद्युच्चारणपूर्वकं हृदयादिषु अङ्गुल्यादीन अर्पणभेदे च।
**विप** क्षेपे चु० उभ० सक० सेट्। वेपयति–ते अवीविपत् त।
**विपक्तिम** त्रि० विपाकेन निर्वृत्तः वि+पच–क्त्रि मयप्। विपाकाधीनजाते "विपक्तिमज्ञानगतिर्मनस्वी" भट्टिः।
**विपक्ष** त्रि०विरुद्धः पक्षो यस्य। १शत्रौ अमरः। २प्रतिकूलपक्षावलम्बिनि, च। विरुद्धः पक्षः प्रा० स०। ३प्रतिकूले पक्षे विचारे अर्थिसम्बन्धिनिर्णीतपक्षस्य विरुद्धे ४पक्षे च।
**विपञ्ची** स्त्री वि+पचि–अच् गौरा० ङीष्। १वीणायाम् अमरः। २केलौ मेदि०। स्वार्थे क स्त्रुत्वः। विपञ्चिका तत्रैव।
**विपण** पु० वि+पण–भावे क। विक्रये अमरः।
**विपणि(णी)** पुंस्त्री० वि+पण–इन् स्त्रीत्वपक्षे वा ङीष्। १पण्यविक्रयशालायाम् (हाटचाला) २हट्टे च अमरः। ३क्रये मेदि०।
**विपणिन्** पु० वि+पण–बा०इनि। विक्रेतरि वणिजि जटा०
**विपत्ति** स्त्री वि+पद्–क्तिन्। आपदि अमरः। २नाशे ३यातनायाञ्च मेदि०। "यस्मिन् रात्रौ गते भानौ विपत्तिं यान्ति मानवाः" म० त०।
**विपथ** पु० विरुद्धः पन्थाः अच्समा०। निन्दितमार्गे अमर
**विपद्(दा)** स्त्री वि+पद्–सम्प० क्विप् वा टाप्। १विपत्तौ ज्यो० उक्ते जन्मताराततः तृतीयतारादशैकविंशतिसंख्याक नक्षत्रे च "विपत्तारे गुडं दद्यात्" ज्यो०त०।
**विपन्न** त्रि० वि+पद्–क्त। १विपद्युक्ते मेदि०। २नष्टे च शब्दच०। ३सर्पे पुंस्त्री० मेदि० स्त्रियां ङीष्।
**विपरीत** त्रि०वि+परि+इण–क्त। १प्रतिकूले जटा०। २व्यतिक्रमे च ३कामुक्यां स्त्री ४नारीणां पुरुषायितरबन्धे नं "सञ्चालकेन च यत्र विपरीतरतातुराम्"कर्पूरस्तवः। "पादमेकमुरौ कृत्वा द्वितीयं कटिपार्श्वगतम्। नारीषु रमते कामी विपरीतस्तु बन्धक" रतिम० उक्ते ५रतिबन्धभेदे।

संस्थायां च। "पादमेकमुरौ कृत्वा द्वितीयं स्कन्धसंस्थितम्। कामिनीं कामयेत् कामी बन्धः स्यात् विपरीतक" स्मरदीपिकोक्ते रतिबन्धभेदे।
**विपर्णक** पु० विगतानि पर्णान्यस्य कप्। १पुष्पप्रधाने पलाशवृक्षे शब्दच०। २अल्पपत्रके त्रि०।
**विपर्यय** पु० वि+परि+इण–अच्। व्यतिक्रमे। २अतद्रूपबुद्धौ च। पात० उक्ते ३चित्तवृत्तिभेदे "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" पात० सू०।
"स कस्मान्न प्रमाणम्? यतः प्रमाणेन बाध्यते। भूतार्थविषयत्वात् प्रमाणस्य, तत्र प्रमाणेन बाधनमप्रमाणस्य दृष्टम्। तद्यथा द्विचन्द्रदर्शनं सद्विषयेणैकचन्द्रदर्शनेन बाध्यते" भा०। "स च पञ्चविधः अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" पात० सू०। इति पञ्च विपर्ययाः। इत्यादि भा०। [वृत्ते च
"अयथार्थापि विपर्ययत्वमतद्रूपप्रतिष्ठानत्वात् तत्र तत्सम्भिकभावाभावगोचरतया एकांशे अतद्रूपप्रतिष्ठत्वात्" पाठात्
**विपर्यस्त** त्रि०वि+परि+अस–क्षेपे क्त। १व्यतिक्रान्ते २परा-
**विपर्यास** पु० वि+परि+अस–घञ्। १वैपरीत्ये २व्यतिक्रमे ३उत्क्षेपे च। ४विपर्यये भ्रान्तौ च।
**विपल** न०विगतं फलं येन प्रा०ब०। पलषष्टिभागे कालभेदे। "लम्नदण्डपलं द्विघ्नं तत्सङ्ख्यं क्रमतः पलम्। विपलं च रवेभोग्यमेवं कल्पनमुत्तमे" ज्यो०त०। [पण्डिते अमरः।
**विपश्चित्** पु० विप्रकृष्टं चेतति वि+प्र+चित–क्विप् पृषो०।
**विपाक** पु० वि+पच–भावे घञ्। १पाके २स्वेदे च। कर्मणि घञ्। २कर्मफलपरिणामे जात्यायुर्भोगरूपे पदार्थे। "सति मूले तद्विपाको जात्यायुर्भोगाः" पात०सू०। "सत्सु क्लेशेषु (अविद्यादिषु) कर्माशयो विपाकारम्भी भवति नोच्छिन्नक्लेशमूलोऽपि। यथैव तुषावनद्धाः शालितण्डुलाः अदग्धबीजभावाः प्ररोहसमर्था भवन्ति नापनीततुषा दग्धबीजभावा वा तथा क्लेशावनद्धः कर्माशयो विपाकप्ररोही भवति नापनीतक्लेशो न प्रसङ्ख्यानदग्धबीजभावो वेति। स च विपाकस्त्रिविधो जातिरायुर्भोग इति" भा०।
**विपाश(शा)** स्त्री विगतः पाशो वशिष्ठस्य यस्याः। अनार्यकाते नदीभेदे अमरः। विपाशयति विमुक्तपाशं वशिष्ठं करोति विपाश+णिच्–क्विप्। तन्नार्थे अमरः। तत्कथा-कथातकथा भा०आ०१७७अ०। "अथ पाशैस्तदात्मानं गाढं बद्ध्वा महामुनिः (वशिष्ठः) तस्या जले महानद्या निमज्ज्य सुदुःखितः। अथ छित्त्वा नदी पाशांस्तस्यारिबलसूदन!।

स्वबस्य तत्रापि कृत्वा विपाशं समवातरत् । उत्ततार ततः पाशैर्विमुक्तः स महामुनिः । विपाशेति च नामास्याश्चक्रे चापि महामुनिः” “शतद्रोर्विपाशायुजः सिन्धु नद्या तथैव च सु स्वादु सर्वामयघ्नम् । अत्र निर्मलं दीपनं पावनञ्च प्रदत्ते बलं बुद्धिमेधायुषञ्च” राजनि० ।

**विपिन** न० वप-इनन् पृषो०। वने अमरः ।

**विपुल** त्रि० वि+पुल–विस्तारे क । १विस्तीर्णे अमरः । २अगाधे ३मेरुपश्चिमस्थे भूधरभेदे पु० मेदि० ४मेरौ ५हिमालये च धरणि० । ६आर्य्याछन्दोभेदे स्त्री । “संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः । यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति” वृ०र०। विपुलाचलश्च मेरोर्विष्कम्भपर्वतभेदो यथोक्तम् विष्णु पु० “मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम् । इलावृतं महाभाग ! चत्वार उपपर्वताः । विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः । पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः । विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे” तत्र चिह्नवृक्षादिकं तत्रोक्तं यथा “कदम्बा१स्तेषु जम्बू२श्च पिप्पलो३ वट४ एव च । एकादशशतायामाः पादपा गिरिकेतवः । वन चैत्ररथ१ पूर्वे दक्षिणा गन्धमादनम्२ । वैभ्राज३ पश्चिमे तद्वदुत्तरे नन्दनं४ स्मृतम् । अरुणोदं१ महाभद्र२ शीतोदं३ च मानसम् । सरांस्येव च चत्वारि देवभोग्यानि सर्वदा” । चान्द्रशेखरशब्दे दर्शिते दानार्थं कल्पिते तिलमये ७तन्नामकपर्वते हेमा०दा० ।

**विपुलास्रवा** स्त्री विपुलं रसमास्रवति आ+स्रु–अच् । घृतकुमारीवृक्षे राजनि० ।

**विपूय** पु० वि+पू–करणे नि० क्यप् । मुञ्जे शब्दच० ।

**विप्र** पु० वप–रन् पृषो० अत इत्त्वम् वि+प्रा पूर्त्तौ–क वा । १ब्राह्मणे अमरः “जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते” प्रा-वि०धृतवाक्यम् २अश्वत्थे राजनि० ३विशेषेण पूरके त्रि० ।

**विप्रकार** पु० वि+प्र+कृ–घञ् । १अपकारे अमरः । २तिरस्कारे हेमच० । [यष्टि । त्वचश्च राजनि० ।

**विप्रकाष्ठ** न० विशेषेण प्राति प्रा–क विप्रं पूरक काष्ठ

**विप्रकर्ष** पु० वि+प्र+कृष-घञ् । दूरत्वे शब्दा० ।

**विप्रकृत** त्रि० वि+प्र+कृ-क्त । १अपकृते, २तिरस्कृते च “त स्मिन् विप्रकृताः काले” कुमार । [तत्रैवार्थे अमरः ।

**विप्रकृष्ट** त्रि०वि+प्र+कृष–क्त । दूरस्थे शब्दा० । स्वार्थे क ।

**विप्रचित्ति** पु० वि+प्र+चित-क्तिच् । दानवभेदे ।

**विप्रतिपत्ति** स्त्री वि+प्रति+पद–क्तिन् । १विरोधे “परस्पर महत्माना स्वार्थे विप्रतिपत्तिषु” स्मृतिः । २संशयजनके वाक्ये “व्याहतमेकार्थक विप्रतिपत्तिः” गौ० सू० व्याघातो विरोधोऽसहभाव इति । “कामाऽऽकोर्त्तेव दर्शन नास्त्यात्मेत्यपर” वा० भ० । ३विरुद्ध कोटिद्वयोपस्थापके शब्दे च वादिना पर्वतो वह्निमान् प्रतिवादिना च पर्वतो वह्न्यभाववान् इति प्रोक्ते मध्यस्थस्य पर्वतो वह्निमान् नवेति संशय उदेति अतस्तस्य संशयाधायकत्वात्तथात्वम् । स च विरुद्धार्थप्रतिपादकवाक्यद्वयात्मकः पर्वतो वह्निमान्नवेति संशयापादकः । “विपरीतायां निन्दितायां च ४प्रतिपत्तौ ५विप्रतायमूहे च “शब्देऽविप्रतिपात्तः” कात्या० श्रौ० “अप्रतिपत्तिरमूढः” प्रतिनिधिशब्दे ४४४२पृ० दृश्यम् । [विरोधे च ।

**विप्रतिपन्न** त्रि० वि+प्रति+पद–क्त । १सन्देहयुक्ते २कृत-

**विप्रति(ती)सार** पु०वि+प्रति+सृ–घञ् वा दीर्घ । १अनुतापे, अनुशये, २रोषे च मेदि० ।

**विप्रयुक्त** त्रि०विप्र+युज–क्त । १वियुक्ते, २विरहिणि च ।

**विप्रयोग** पु० वि+प्र+युज–घञ् । १विप्रलम्भे अमर. । २विरोधे ३विसंवादे ४वियोगे च । ५रागिणोर्विच्छेदे ।

**विप्रलब्ध** त्रि० वि+प्र+लभ–क्त । वञ्चिते, हेमच० “प्रियः कृत्वाऽपि सङ्केतं यस्या नायाति सन्निधिम् । विप्रलब्धेति सा ज्ञेया” सा० द० उक्तलक्षणे नायिकाभेदे स्त्री ।

**विप्रलम्भ** पु०वि+प्र+लभ–घञ् मुम् च । १विसंवादे, २वञ्चने, ३विरहे च अमर । “यूनोरयुक्तयोर्भावो युक्तयोर्वाथ वा मिथः । अभीष्टालिङ्गनादीनामनवाप्तौ प्रहृष्यते । स विप्रलम्भो विज्ञेय” उक्तलक्षणे ४शृङ्गाररसभेदे ।

**विप्रलाप** पु० वि+प्र+लप–घञ् । १विरोधोक्तौ परस्परविरुद्धार्थकथने अमर । २अनर्थकवाक्ये हेमच० ।

**विप्रलोभिन्** पु० विप्रलोभयति वि+प्र+लुभ+णिच्–णिनि । किंकिरातवृक्षे, अशोकवृक्षे । राजनि० ।

**विप्रश्निका** स्त्री विशेषेण प्रश्नोऽस्त्यस्या ठन्० कप् अत इत्त्वम् । दैवज्ञायां स्त्रियाम् अमरः । [धीनतायाम् ।

**विप्रसात्** अव्य०विप्रस्याधीनं करोति विप्र+साति । विप्राविप्रस्व न० ६त० । विप्रस्वामिके धने ।

**विप्रिय** पु० विरुद्धं प्रियं वि+प्री–क वा । १अपराधे हेमच० । २अप्रिये च “कृतवानसि विप्रियं न मे” कुमारः प्रादि० ६त० । विगतप्रिये त्रि० ।

प्रदेशान्तरसंयोगमपि न जनयेत्, न संयोगजननं प्रति कर्मणोऽनतीतकालत्वात् अन्यथा कर्म न नश्येदेव तस्योत्तरसंयोगमात्रनाश्यत्वात्। सोऽयं विभाग उत्तरसंयोगनाश्यः क्षणत्रयस्थायी। क्वचिदाश्रयनाशनाश्यः तद्यथा तन्त्वोरवयवेंऽशौ कर्म तदनन्तरमंशुद्वयविभागस्तदैव तन्त्वन्तरे कर्म ततोंऽशुद्वयविभागेन तन्त्वारम्भकसंयोगनाशस्तन्तुकर्मणा च विभागस्ततो द्रव्यारम्भकसंयोगनाशात्तन्तुकर्मणो नाशस्तस्याश्रयनाशात् तन्त्वन्तरकर्मजन्यविभागनाशः। न त्वेव तन्त्वन्तरोत्पन्नस्य कर्मणो न नाशः स्याद्विनाशकाभावात्, उत्तरसंयोगेन हि तन्नाश्यते विभागे च नष्टे नोत्तरसंयोग इति चेन्न तन्तौ यत् कर्मोत्पन्नं तेन यथा विनश्यदवस्थतन्त्वोर्विभागो जनितस्तथा तदंशोरपि विभागो जननीयः सोऽप्यारम्भकसंयोगविरोध्येव तेनांशुतन्तुविभागेन तन्त्वाकाशविभागस्तेन चोत्तरसंयोगस्तेन ततः कर्मनाशः। यद्वा यत्र तन्तौ यदा कर्म तदांशावपि तदैव कर्म तत्र कर्मविनश्यदवस्थतन्तुतदवयवाकाशादिदेशाद्युगपदेव विभागानारभते सर्वथा विभागानामारम्भकसंयोगविरोधित्वात् तथा च कारणाकारणाकाशादि तद्विभागात् कार्य्यस्य तन्त्वोरकार्य्येणाकाशादिना यो विभाग उत्पद्यते तदनन्तरोत्पत्तिकेन संयोगेन तन्तुसमवेतस्य कर्मणो विनाश इति। क्वचिद्द्वाभ्यां तद्यथा तन्तुवीरणयोः संयोगे सति तन्त्ववयवेंऽशौ कर्म वीरणे च कर्मैककालं अंशुकर्मणाऽंश्वन्तरविभागस्तेन च संयोगस्य तन्त्वारम्भकस्य विनाशः वीरणकर्मणा च तन्तुवीरणविभागस्तन्तुवीरणसंयोगनाशश्च तन्त्वारम्भकसंयोगनाशानन्तरं तन्तुनाशस्तन्तुवीरणसंयोगनाशानन्तरं वीरणस्य प्रदेशान्तरसंयोगस्ताभ्यामाश्रयनाशसंयोगाभ्यां विभागनाश" उप॰ वृत्ति॰। कर्मणि घञ्। ५अंशे भागे च।

**विभाज्य** त्रि॰ विभक्तुमर्हति वि+भज—अर्हार्थे ण्यत्। विभागयोग्ये विभजनीये धनादौ।

"कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि वा। शौर्य्यप्राप्तं तु यद्वित्तं विभाज्यं तद्बृहस्पतिः"।

**विभाण्डक** पु॰ ऋष्यशृङ्गमुनिपितरि मुनिभेदे रामा॰।

**विभाण्डी** स्त्री॰ विभाण्ड+गौरा॰ ङीष्। आवर्त्तकीलतायां राजनि॰।

**विभात** न॰ वि+भा—क्त। प्रभाते शब्दरत्ना॰।

**विभाव** पु॰ वि+भू—घञ्। १परिचये अलङ्कारोक्ते रसोद्दीपके २आलम्बनादौ "रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः। आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृताः"। ये हि लोके रामादिगतरतिहासादीनामुद्बोधकारणानि सीतादयस्त एव काव्ये नाट्ये च निवेशिताः सन्तः विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिरिति विभावा उच्यन्ते" सा॰ द॰ ३प॰।

"विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा" सा॰३प॰।

**विभावना** स्त्री अर्थालङ्कारभेदे अलङ्कारशब्दे ४०४पृ॰दृश्यम्।

**विभावरी** स्त्री वि+भा—क्वनिप् ङीप् वनो र च। १रात्रौ अमरः। २हरिद्रायां ३कुट्टिन्याम् ४वक्रयोषिति ५विवादवल्लसल्लज्जा मेदि॰।६मुखरस्त्रियाम् शब्दर॰। ७मेदावृक्षे च रत्नमा॰।

**विभावसु** विभायुक्ता वसवोऽस्य। १सूर्य्ये २अर्कवृक्षे ३वह्नौ चित्रकवृक्षे अमरः। ५चन्द्रे ६हारभेदे च हेमच॰।

**विभाषा** स्त्री विरुद्धा भाषा वि+भाष-अ वा। व्याकरणोक्ते प्राप्तिकप्राप्तिफलके "नवेति विभाषा" इत्युक्तलक्षणे विकल्पविधाने। [भक्ते च।

**विभिन्न** त्रि॰ वि+भिद्—क्त। १प्रकाशिते २विदलिते ३वि-

**विभीतक** पु॰ विशेषेण भीत इव इवार्थे कन्। (वयड़ा) वृक्षे अमर। "विभीतकं स्वादुपाकं कषायं कफपित्तनुत्। उष्णवीर्य्यं हिमस्पर्शं भेदनं कासनाशनम्। रूक्षं नेत्रहितं केश्यं कृमिवैस्वर्य्यनाशनम्। विभीतमज्जा तृट्छर्द्दिकफवातहरो लघुः। कषायो मदकृच्चाथ धात्रीमज्जापि तद्गुणः" भावप्र॰। कामाने विभीतोऽप्यत्र।

**विभीषण** पु॰ विशेषेण भीषयते शत्रून् भी—णिच्-षुक् च ल्यु। १रावणभ्रातरि राक्षसे रामा॰। २नलतृणे राजनि॰। ३भयकारके त्रि॰। [ण्वुल्। भयप्रदर्शने

**विभीषिका** स्त्री वि+भी—णिच्—षुक् च भावे

**विभु** पु॰ वि+भू—डु। सर्वमूर्त्तसंयुक्ते १काशादौ २प्रभ्वादेवे ३प्रभुणि च मेदि॰। ४भृत्ये त्रिका॰। ५विष्णौ शब्दमा॰ ६व्यापके ७नित्ये ८सर्वेश्वरे हेमच॰।९दृढे त्रि॰अजय॰। १०परममहत्त्वयुते त्रि॰उज्ज्वला॰।

**विभूति** स्त्री वि+भू—क्तिन्। १अणिमादि "अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशित्वं च वशित्वञ्च तथा कामावसायिता" इत्युक्ते २ऐश्वर्य्ये च। ऐश्वर्य्यशब्दे १५४८ पृ॰ दृश्यम्।

**विभूषा** स्त्री वि+भूष—अ। १शोभायां हेमच॰ २भूषणे च।

**विभ्रम** पु० वि+भ्रम–घञ्। १स्त्रीणां शृङ्गाराङ्गे चेष्टाभेदे "विभ्रमस्त्वरयाऽकाले भूषास्थानविपर्ययः" इत्युक्ते २त्वरया भूषास्थानवैपरीत्ये च "यत्राप्सरो विभ्रममण्डनानाम्" कुमार०। विशेषेण ३भ्रान्तौ मेदि० ४शोभायां ५सन्देहे हेमच०। ६भ्रमणे शब्दरत्ना०। "चित्तवृत्त्यनवस्थानं शृङ्गाराद् विभ्रमो भवेत्" उक्ते ७शृङ्गाराच्चित्तवृत्त्यनवस्थाने। "क्रोध स्मितस्य कुसुमाभरणादि वाञ्छा तद्वर्जनस्य सहसैव विभूषणस्य। चाक्षिप्य कान्तवचनं वपन सखीभिर्निष्कारणोत्थितगतं वद विभ्रम तत्" इत्युक्ते स्त्रीणां ८चेष्टाभेदे च। अस्त्यर्थे अच्। १वार्द्धक्यावस्थायां स्त्री शब्दरत्ना०।

**विभ्राज्** त्रि० वि+भ्राज–क्विप्। भूषणादिना दीप्ते अमरः

**विमत** त्रि० वि+मन–क्त। विरुद्धमतियुक्ते १विमते २शत्रौ च। [व्याकुलचित्ते अमरः।

**विमनस्(स्क)** त्रि० विक्षिप्तं मनो यस्य वा कप्। चिन्तादिना

**विमर्द** पु० विमृद्यतेऽसौ वि+मृद–घञ्। (कालकासुन्दिया) १वृक्षे रत्नमा०। तस्याः कन्। चक्रमर्दके राजनि०। भावे घञ्। २मर्दने ३कुङ्कुमादिमर्दने च।

**विमर्शन** न० वि+मृश–ल्युट्। १परामर्शे न्यायोक्ते साध्यव्याप्यहेतुमत्त्वेन पक्षनिश्चये २वितर्के च हेम०। घञ् विमर्श तत्रैवार्थे पु०।

**विमर्ष** पु० वि+मृष–घञ्। १विचारे जटा० २नाटकाङ्गसन्धिभेदे च। स च "अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति। मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः। इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते" इति विभज्य "यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः। शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः" इति सा० द० लक्षित। तदङ्गानि च तत्रोक्तानि यथा "अपवादोऽथ सम्फोटो व्यवसायो द्रवो द्युतिः। शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम्। प्ररोचना प्रहर्षः स्यादादानं छ दनं तथा"।

**विमल** त्रि० विगतो मलो यस्मात्। १स्वच्छे निर्मले अमरः। विगतो मलो यस्याः प्रा०ब०। (चामकषा) २सप्तलायाम् अमरः। जगन्नाथक्षेत्रस्थे ३देवीभेदे स्त्री तन्त्रसा०। ४दुर्गामूर्तिभेदे देवीपु०। ५उपरसभेदे न० राजनि०। ६जिनदेवे पु० ७चारुणि त्रि० शब्दर०। "चेतसा सम्प्रयुक्तेन दानं यद्द विमलं स्मृतम्" गरुडपु० उक्ते ८सात्त्विके दानभेदे न०।

**विमातृ** स्त्री विरुद्धा माता। मातृसपत्न्याम्। "मातृपितुः कनीयांसं न नमेद्वयसाधिकः। नमस्कुर्यात् गुरोः पत्नीं भ्रातृजाया विमातरम्" म० त० स्मृति। तत्रैव अन्त्यकर्मधारे "स्त्रियो नमस्या वयसा वयसा पत्युरेव ता"। "यतः पत्युर्वयसा ताः स्त्रियो दृष्टा यत्र कनिष्ठा अपि अपि नमस्याः" म०त०रघु०। [अमरः।

**विमातृज** पु० विमातुर्जायते जन–ड। सापत्ने भ्रातरि

**विमान** पु न० वि+मन–घञ् वि+मा–ल्युट् वा। १देवयाने रथे अमरः। २सार्वभौमगृहभेदे च ३यानमात्रे ४अश्वे पु० मेदि० ५परिमाणे च न०।

**विमार्ग** पु० विरुद्धो मार्गः। १कुपथे २निन्दिताचारे च।

**विमुख** त्रि०विरुद्धमननुकूलं मुखमस्य।१वहिर्मुखे २निवृत्ते च

**विमुद्र** त्रि० विगता मुद्रा मुकुलीभावो यस्य। १विकसिते हेमच०। २मुद्रारहिते च।

**विम्ब** पुं न०। वी+वन्–उन्प्रत्ययौ। १दर्पणादौ भासमानप्रतिविम्बाश्रये २कमण्डलौ च संक्षिप्तसा०। ३सूर्यादिमण्डले अमरः। ४कृकलासे पु स्त्री०मेदि०स्त्रियां ङीष्। विम्बायाः फलम् अण् तस्य लुप्। ५विम्बिकाफले न०।

**विम्बजा** स्त्री विम्बं फल जायतेऽस्याः जन–ड १विम्बिकालतायां (तेलाकुचा) शब्दच०।

**विम्बट** पु० विम्बमटति अट–अच् शक०। सर्षपे शब्दच०।

**विम्बा(म्बी)** स्त्री विम्बमस्त्यस्याः अच् वा गौरा० ङीष्। (तेलाकुचा) १लताभेदे शब्दर० "विम्बीफलं स्वादु शीतं गुरु पित्तास्रवातजित्। स्तम्भनं लेखनं रुच्यं विबन्धाध्मानकारकम्" भावप्र०। स्वार्थे क कापि अत इत्त्वम् तत्रार्थे। सूर्यादिमण्डले पु०न० नात इत्त्वम्।

**वियत्** न० वि+यम–क्विप् मलोपे तुक्। आकाशे अमरः।

**वियद्गङ्गा** स्त्री वियत्स्था गङ्गा शाक०। स्वर्गगङ्गायां मन्दाकिन्याम अमरः।

**वियद्भूति** स्त्री वियतो भूतिरिव। अन्धकारे त्रिका०।

**वियन्मणि** पु० वियतो मणिरिव प्रकाशकत्वात् भूषकत्वाद्वा। द्युमणौ सूर्ये हारा०।

**वियम** पु० वि+यम–घञ्। १संयमे अमरः। २दुःख क्षीरस्वामी। पक्षे वृद्धि। वियाम तत्रार्थे।

**वियात** त्रि० वि+या–क्त याति अच् वा। १धृष्टे २निर्लज्जे च अमरः। तस्य भाव ष्यञ्। वैयात्य निर्लज्जत्वे न० "वैयात्यमुररीकृत्यापि" माघ।

**वियोग** पु० वि+युज–घञ्। १विच्छेदे हेमच० ६त०

**विल** भृतौ तु० पर० सक० सेट्। विलति अवेलीत्।

**विलच्च** पु० वि+लक्ष-अच्। विस्मययुक्ते अमरः।

**विलक्षण** त्रि० विशिष्टं लक्षणमस्य प्रा०ब०। १विभिन्ने जटा० २विशेषणयुक्ते च। ३निष्प्रयोजनस्थितौ च न० भाग्ररि० ४दानार्थं कल्पितकाञ्चनपुरुषमूर्त्तियुतशय्याभेदे स्त्री। "अयोचान्नात् द्वितीयेऽह्नि शय्यां दद्यात् विलक्षणाम्। काञ्चनं पुरुषं तद्वत् फलपुष्पसमन्वितम्। सपूज्य द्विजदाम्पत्यं नानालङ्करणभूषणैः" शु०त० मत्स्यपु०।

**विलग्न** त्रि० विशेषेण लग्न लस्ज-क्त तस्य नः जस्य गः। १संलग्ने मेदि०। "मध्येन सा वेदिविलग्नमध्या" कुमा० २मध्यभागे हेमच०। ३कटौ अमरः। ४उदितमेषादि राशौ च न०"गोचरे वा विलग्ने वा" इति ज्योतिषम्।

**विलम्ब** पु० वि+लबि घञ्। विलम्बने अयोग्यत्वे प्रतीक्षणीय काले २प्रभवादिषु "तस्मिन् पार्थिवैश्चैव अभिभूतमिदं जगत्। अर्घो भवति सामान्यो विलम्बे तु भय महत्" ज्यो० त० उक्तलक्षणे वर्षभेदे।

**विलम्बित** त्रि० वि+लबि-क्त। १अशीघ्रे, २मन्दे च विलम्बन्ते कण्ठकरचरणाद्य प्रत्येक प्रदर्शनाय स्वरविशेषज्ञानाय वा यत्र आधारे क्त। मध्यकालेन परिच्छेद्ये ३नृत्ये ४गीते च।५विलम्बयुते त्रि०। तत्र वेदपाठे कालभेदे विलम्बवृत्तिः शाङ्गेनोक्ता यथा "द्रुतामभ्यसने वृत्तिं प्रयोगार्थे तु मध्यमाम्। शिष्याणामुपदेशार्थे विलम्बिता समाचरेत्"।

**विलम्भ** पु० वि+लभ-घञ् नुम्। अतिदाने अमरः।

**विलय** पु० वि+ली-अच्। १प्रलये शब्दर० २नाशे च।

**विलला** स्त्री० वि+लल-अच्। श्वेतवचायाम् रत्नमा०।

**विलाप** पु० वि+लप-घञ्। परिदेवनोक्तौ अमरः।

**विलास** पु० वि+लस घञ्। "तत्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु" इत्युक्ते १स्त्रीणां शृङ्गारचेष्टाविशेषे २दीप्तौ च। "गतिस्थानासनादीनां मुखनेत्रादिकर्मणाम्। विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना" उक्ते स्त्रीणां ३सात्त्विकभावभेदे सा०द०। "यद्रूप तदभेदेन स्वरूपेण विराजते। आकल्पादिभिरन्यादृक् स तदेकात्मरूपकः। स विलास स्वांश इति धत्ते भेदद्वयं पुनः। स्वरूपमन्याकारं यत्तस्य भाति विलासतः। प्रायेणात्मसमं शक्त्या स विलासो निगद्यते" ४भागवतामृतोक्ते पदार्थे

**विलासिका** स्त्री उपरूपकरूपे नाटिकाभेदे "शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता। विदूषकविटाभ्याञ्च पीठमर्देन भूषिता। हीना गर्भविमर्शाभ्यां सन्धिभ्यां हीननायका। स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका" सा० द० ६प०।

**विलासिनी** स्त्री० विलासोऽस्त्यस्याः भूम्ना इनि ङीप्। १नार्य्यां राजनि०। २वेश्यायां भरतः। ३भोगवति त्रि०।४सर्पे ५कृष्णे ६वह्नौ च पु० मेदि० ७चन्द्रे ८स्मरे, ९महादेवे पु० शब्दर०। [२विश्लिष्टे ३नष्टे च।

**विलीन** त्रि० वि ली-क्त। १प्राप्तद्रवीभावे घृतादौ, अमरः।

**विलेपन** न० विलिप्यतेऽनेन करणे ल्युट्। गात्रानुलेपनद्रव्ये १पिष्टे २घृष्टे वा चन्दनकुङ्कुमादौ। कर्मणि ल्युट् ङीप्। ३यवाग्वां ४सुवेशायां स्त्रियाञ्च स्त्री० मेदि०।

**विलेप्य** पु० वि+लिप-यत्। १यवाग्वाम् शब्दर०। २विलेपनीये त्रि०।

**विलोचन** न० वि+लुच-करणे ल्युट्। १नेत्रे जटा०। भावे ल्युट्। २दर्शने। [डिते त्रि०।

**विलोडित** न० वि+लोड-क्त। १तक्रे राजनि०। २आलो-

**विलोम** त्रि० विगतं लोम यत्र अच्समा०। १विपरीते हेमच० २अरघट्टके न० ३सर्पे ४कुक्कुरे पु स्त्री० स्त्रियां ङीष् ५वरुणे च पु० मेदि०। ६व्यस्तत्रैराशिकफलज्ञापके क्रियाभेदे "व्यस्तविधिर्विलोमे" लीला०। ७व्युत्क्रमान्विते यथा अकारादिहकारान्तवर्णानां व्युत्क्रमेण हकाराद्यकारान्ततया जपः। सप्तशतीप्रयोगभेदे मार्कण्डेय उवाचेत्यादिकस्य सावर्णिर्भविता मनुरित्यन्तस्य मालामन्त्रस्य व्युत्क्रमेण पाठः।

**विलोमकर्म्मन्** कर्म०। विपरीतकर्मणि "छेदं गुणं गुणं छेदं वर्गं मूलं पदं कृतिम्। ऋणं स्वं स्वमृणं कुर्य्याद् दृश्ये राशिप्रसिद्धये" लीला० उक्ते व्यक्तराशेर्ज्ञानार्थे क्रियाभेदे।

**विलोमजिह्व** पु स्त्री० विलोमा विपरीता जिह्वा यस्य। गजे त्रिका०स्त्रियां ङीष्। तस्य तथात्वकथा भा०आनु०८५अ० यथा"इत्युक्त्वा तास्ततो देवाः पुनरेव महीमिमाम्। परीयुर्ज्वलनस्यार्थे न चाविन्दन् हुताशनम्। अथ तान् द्विरदः कश्चित् सुरेन्द्रद्विरदोपमः। अश्वत्थस्थोऽग्निरित्येवमाह देवान् भृगूद्वह!। शशाप ज्वलनः सर्वान् द्विरदान् क्रोधमूर्च्छितः। प्रतीपा भवतां जिह्वा भवितेति भृगूद्वह!"।

**विलोमवर्ण** पु० विलोमजः अत्युत्कृष्टतया व्युत्क्रमजो वर्णः। प्रतिलोमजाते उत्तमस्त्रियामधमवर्णेन जनिते

सङ्कीर्णे वर्णे। [गौरा० ङीष्। आमलक्याम् मेदि०।

**विलोमी** स्त्री विशिष्टं लोम केशो यस्याः ५ब० अच्समा०

**विलोल** त्रि० वि+लुल–अच्। १चञ्चले २विशेषसतृष्णे च।

**विवर** न० वि+वृ–अप्। १छिद्रे अमर. २दोषे च मेदि०।

**विवरण** न० वि+वृ–ल्युट्। १व्याख्याने हेमा० व्याख्यान ग्रन्थव्याख्याने २ग्रन्थभेदे च। मा० भा० टीकापञ्च पादिकोपरि विवरणम्। पातञ्जलभाष्योपरि वाचस्पत्य विवरणम्। कैयटोपरि नागेशकृत विवरणमित्यादि।

**विवरनालिका** स्त्री विवरयुक्तं नालमस्त्यस्याः ठन्। वेणौ (बाँश) त्रिका०। [२मलिने च।

**विवर्ण** त्रि० विरुद्धो वर्णोऽस्य। १अधमे २नीचे च अमर

**विवर्त्त** पु० वि+वृत–घञ्। १नृत्ये २समुदाये ३अपवर्त्तने वेदान्तोक्ते कारणात् विषमसत्ताकतया उत्पद्यमाने ४कार्य्ये च। यथा रज्जुात् रजतम् ब्रह्मणो जगत्। वेदान्तिभिः विवर्त्तवाद एवाश्रित। न परिणामवादः।

**विवश** त्रि० विगता वश आयत्तता यस्य। १अस्वतन्त्रे २व्याकुले ३अरिष्टदुर्विदुते मेदि०।

**विवस्वत्** पु० वि+वस+क्विप् अस्त्यर्थे मतुप् मस्य वः। १सूर्य्ये २अर्कवृक्षे अमर०। ३अरुणे शब्दर०। ४देवे च मेदि०।

**विवाक** पु० वि+वच–संज्ञायां कर्त्तरि घञ्। विवेचके प्राड्विवाकशब्दे दृ० दृश्यम्।

**विवाद** पु० विरुद्धो वादः। "ऋणादिदानकलहे द्वयोर्बहुतरस्य वा। विवादो व्यवहारश्च" इत्युक्तलक्षणे व्यवहारे व्यवहारशब्दे दृश्यम्। २कलहे च।

**विवाह** पु० वि+वह–घञ्। दारपरिग्रहे तज्जनके व्यापारे च। उद्वाहशब्दे उपयमशब्दे च दृश्यम्। "भार्य्यात्वसम्पादकग्रहणं विवाह" इति उद्वा० रघु०। भार्य्यात्वस्योपलक्षणतया निवेशः। तेन नान्योन्याश्रयः "वरसंस्कारो विजातीयसंस्कारो वा विवाह" इत्यन्ये।

**विवाहित** पु० विवाहो जातोऽस्य तार० इतच्। जात-विवाहे। [वाह्ये च।

**विवाह्य** त्रि० वि+वह–ण्यत्। १विवाहयोग्ये २विशेषेण

**विविक्त** त्रि० वि+विच–क्त। १निर्जने २पवित्रे अमर० ३असंयुक्ते च। ४कर्त्तरि–क्त। ४विवेकिनि त्रि० मेदि० ५दुर्भगायां स्त्रियां स्त्री त्रिका०।

**विविध** त्रि० विभिन्ना विधा यस्य। नानाप्रकारे।

**विवीत** पु० विशिष्टं वीतं गवादिप्रचारस्थानं यत्र। प्रचुर तृणकाष्ठादियुक्ते देशे। "पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते" याज्ञवल्क्यस्मृतिव्याख्याने मिताक्षरायाम्।

**विवृत** त्रि० वि+वृ–क्त। १विस्तृते मेदि० २व्याख्याते च। ३क्षुद्ररोगभेदे स्त्री मेदि०।

**विवृताक्ष** पु स्त्री० विवृते अक्षिणी यस्य षच्समा०। कुक्कुटे हेमच०। स्त्रियां जातित्वात् स्त्रियाः ङीष्।

**विवृति** स्त्री वि+वृ–क्तिन्। १विस्तारे मेदि० २व्याख्याने च। "वाक्यस्य शेषाद्विवृतेर्वदन्ति" शक्तिग्राहकमानम्।

**विवृत्त** त्रि० वि+वृत क्त। १तिर्य्यक्चलिते २प्रकटिते ३क्षुद्ररोगभेदे स्त्री भावप्र०। "विवृत्तास्यां महादाहां पक्वोदुम्बरसन्निभाम्। विवृत्तामिति तां विद्यात् पित्तोत्थं परिमण्डलम्" परितः शोथवतामिति शेषः"।

**विवेक** पु० वि+विच–घञ्। १याथार्थ्येन वस्तुस्वरूपावधारणे २प्रकृतिपुरुषयोर्भेदज्ञाने च जटा०। ३अन्योन्यधर्मव्यावर्त्तनेन वस्तुस्वरूपावधारणे। विवेकचूडामणौ तत्प्रकारो दृश्य०। ४विचारे ५जलद्रोण्याम् मेदि०। संज्ञायां कर्त्तरि घञ्। ६विचारके च प्राड्विवेकः।

**विवेकिन्** त्रि० वि+विच–घिनुण्। विवेकशीले भैरवतन्त्रोक्ते देवसेनपुत्रभेदे पु० कालिपु० ८४अ०।

**विवोढृ** पु० वि+वह–तृच्। १जामातरि २पत्यौ च हेमच०

**विव्वोक** पु० वि+वा–कु तस्य ओकः स्थानम्। "गर्व्वाभिमानादिष्टेऽपि विव्वोकोऽनादरक्रिया" इत्युक्तलक्षणे स्त्रीणां शृङ्गारचेष्टाभेदे।

**विश** प्रवेशे तु० पर० सक० अनिट्। विशति अविक्षत्।

अधि+उपवेशने।

अभि+नि+मनसः स्थितिहेतुसंयोगभेदे आत्म० एतदर्थे आधारस्य कर्मता धर्ममभिनिविशते अन्यत्रार्थे न कर्मता। "या या संज्ञा यस्मिन् यस्मिन्नभिनिविशते" भाष्यम्। "क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते" व्या० परिभाषा।

उप+आसनादौ स्थितिभेदे।

नि+स्थितिभेदे आत्म० "निविशते यदि शूकशिखा पदे" नैष०।

निर्+उपभोगे "क्रीडारसं निर्विशतीव बाल्ये" कुमा० 'निर्वेशो भृतिभोगयोः' अमरः "निर्विष्टविषयस्नेहः" रघु०

प्र+अभ्यन्तरगमने।

**विश्** पु० विश–क्विप्। १मनुजे २वैश्ये च अमरः।

**विश** न० विश–क। १मृणाले राजनि०। २प्रवेशकर्त्तरि त्रि०।

**विश(ष)(स)कण्ठा** स्त्री विश(ष)(स) मृणालमिव कण्ठोऽस्याः। बलाकायां राजनि० समध्यः समध्योऽप्यत्र।

**विशङ्कट** त्रि० वि+सङ्कटच्। विशाले अमरः।

**विशद्** पु० वि+शद-अच्। १शुक्लवर्णे २तद्वति त्रि० अमरः। ३विमले हेम०। ४व्यक्ते च त्रि० मेदि०। [मीमांसा।

**विशय** पु० वि+शी-अच्। संशये "विशयो विषयश्चैवेति"

**विशर** पु० वि+शॄ-अच्। १वधे अमरः। प्रादि०स०। २विगतशरे त्रि०।

**विशल्यकृत्** पु० विशल्यं तत्प्रहारवेदनानिवृत्तिं करोति कृ-क्विप्। (छापरमाली) १वृक्षे रत्नमा०। २विशल्यकारके त्रि०।

**विशल्यकरणी** स्त्री विशल्यं क्रियतेऽनया कृ-ल्युट् ङीप्। ओषधिभेदे "पूर्वं तु कथिता याश्च वीर! जाम्बवता तव। दक्षिणे शिखरे जातां महौषधिमिहानय। विशल्यकरणीं नाम्ना सावर्ण्यकरणीं तथा। सञ्जीवकरणीं वीर! सन्धानीं च महौषधिम्" रामा० लङ्का० १०२स०।

**विशल्या** स्त्री विगतं शल्यं तत्प्रहारवेदना यस्याः ५ब०। १अग्निशिखावृक्षे २दन्तीवृक्षे ३गुडूच्याम् अमरः ४त्रिपुट्याम् ५अजमोदायाञ्च राजनि०।

**विशसन** न० वि+शस-हिंसने ल्युट्। १मारणे अमरः। करणे ल्युट्। २खड्गे पु० त्रिका० "असिर्विशसनः खड्गः" खड्गपूजामन्त्रः।

**विशस्त** त्रि० वि+शस-अयिनवे न इट् अन्यत्र इट्। इट्पक्षे सि० कौ०। इटि विशसित। मारिते त्रि०।

**विशस्तृ** पु० वि+शस-तृच् न इट्। चण्डाले शब्दर०।

**विशाकर** पु० विशाख विगतशाखः सन् राजते राज-बा० ड। भद्रकूटे (बहुविज) शब्दच०। तस्य शाखाशून्यत्वात् तथात्वम्।

**विशाख** पु० विशिष्टा शाखाऽस्य। १कार्त्तिकेये २धन्विनां वितस्त्यन्तरावपादावस्थाने अमरः। ३पुनर्नवायां राजनि० ४याचके च मेदि०। ५स्कन्दाज्जाते देवभेदे तत्कथा भा०व०२२६अ० उक्ता यथा "वज्रप्रहारात् स्कन्दस्य सञ्जातः पुरुषोऽपरः। युवा काञ्चनसन्नाहः शक्तिधृग् दिव्यकुण्डलः। यद्वज्रविशनाज्जातो विशाखस्तेन कीर्त्तितः"। ६स्कन्दानुजभ्रातरि "अग्नेः पुत्रः कुमारस्तु श्रीमान् शरवणालयः। तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः" भा० आ० ६६अ०। ७शिवे भा०आ० १७अ०।

**विशाखज** पु० विशिष्टा शाखा यस्य तथा सन् जायते जन-ड। नारङ्गे शब्दच० [शब्दमालोक्ते धन्विनामवस्थानभेदे।

**विशाखल** न० "विशाखान्तरविन्यस्ते पादद्वन्द्वे विशाखलम्"

**विशाखा** स्त्री विशिष्टा शाखा प्रकारो यस्याः। १नक्षत्रभमालकेऽश्विन्यवधिके षोडशे नक्षत्रे अमरः। "विशाखयोर्मध्यगतः सम्पूर्ण इव चन्द्रमा" रामा० मध्ये गात् तस्य द्विवचनान्ततेत्यन्ये। "नक्षत्रे विशिखाश्च" भा० आ० ९ उक्तेर्बहुत्व बहुतारत्वकत्वेनेति बोध्यम्। अस्य बास्यन्दे ४९७ पृ०दृश्यम्। २कठिल्लके मेदि०।

**विशाय** पु० वि+शी-पर्य्याये घञ्। प्रहरिकाः पर्य्यायेण शयने अमर।

**विशारण** न० वि+शॄ-स्वार्थे णिच्-ल्युट्। मारणे हेमच०।

**विशारद** पु० विशालं ददाति दा-क लस्य रः। १बकुलवृक्षे २क्षुद्रदुरालभायां स्त्री राजनि०। ३पण्डिते पु० ४प्रगल्भे त्रि० अमरः ५श्रेष्ठे च त्रि० अजय।

**विशाल** त्रि० वि+शालच्। १विस्तीर्णे २वृहति च अमरः। २मृगभेदे ३खगभेदे पुंस्त्री० मेदि० स्त्रियां ङीष्। ४नृपभेदे पु० ५वृक्षभेदे शब्दर०। ६इन्द्रवारुण्याम् स्त्री अमर०। ७माहेन्द्रवारुण्याम् ८उपोदक्यां च स्त्री राजनि०। ९उज्जयिनीनगर्य्यां स्त्री मेदि०। १०नदीभेदे च स्त्री "विशाला विरजा तथा" इत्युक्तोपवासपर्युदासः विरजाशब्दे दृश्य०। [११वृक्षभेदे शब्दर०

**विशालता** स्त्री विशालस्य भाव० तल्। १पार्श्वविस्तारे अमर०

**विशालतैलगर्भ** पु० विशालं विस्तीर्णं तैलं गर्भे फलमध्ये यस्य। अङ्कोटवृक्षे राजनि०। [अमर०।

**विशालत्वच्** पु० विशाला त्वक् यस्य। सप्तच्छदवृक्षे।

**विशालपत्र** पु० विशालं पत्रमस्य। १शालवृक्षे २श्रीतालवृक्षे च राजनि०।

**विशालाक्ष** पु० विशाले अक्षिणी यस्य षच्समा०। १महादेवे, २गरुडे, ३विष्णौ च ४वृहन्नेत्रे, त्रि० मेदि०। ५पार्वत्यां ६नागदन्त्यां च स्त्री राजनि० ङीप्। ७दीर्घनेत्रायां स्त्री त्रि। ८योगिनीभेदे स्त्री। [राजनि०।

**विशाली** स्त्री० वि+शालच् गौरा० ङीष्। अजमोदायाम्।

**विशिख** पु० विशिष्टा विगता वा शिखा यस्य प्रादि० ब०। १शरवृक्षे राजनि०। २वाणे अमर। ३तोमरे च मेदि०। ४शिखारहिते त्रि०। ५खनित्र्यां ६नालिकायाम् ७रथ्यायाञ्च स्त्री० मेदि०।

**विशिप** न० विश-इपक्। मन्दिरे उणादिको० [युक्ते च।

**विशिष्ट** त्रि० वि+शिष-क्त। १युक्ते २विलक्षणे ३विशेषण-

**विशिष्टबुद्धि** स्त्री ६त०। विशेषणवतो विशेष्यस्य ज्ञाने यथा घट इत्यादिकं ज्ञानम् अत्र घटत्वस्य विशेषणतया भाव

ज्ञानस्य घटे विशिष्टे भानम् एतत्प्रकारकञ्च विशेषण-ज्ञानं तदनुरोधेनैव अयं घट इत्यादिप्रत्यक्षमित्युक्तं तत्-कारणस्य घटत्वज्ञानस्य एवं सम्प्रदायं घटघटत्वे इति निर्विकल्पकज्ञानमप्ये भवतीत्यङ्गीकृतं नैयायिकैः ।

विशिष्टवैशिष्ट्यज्ञान न० ६त० । विशेषणविशिष्टे वैशिष्ट्यस्य संसर्गस्य ज्ञाने यथा रूपवान् घट इत्यादि ज्ञानं तत्र घटत्वविशिष्टे रूपादेः संसर्गस्य भानम् । तच्च द्विविधम् विशेषणोपलक्षितप्रतियोगिकवैशिष्ट्यावगाहि विशेषणविशिष्टप्रतियोगिकवैशिष्ट्यावगाहि च । आद्ये विशेषणज्ञानाभावेऽपि कारणता द्वितीये तु विशेषणतावच्छेदक-प्रकारकविशेषणज्ञानस्य कारणता । यथाकारणं च तयो बोधवैलक्षण्यम् । तत्र क्वचित् विशेष्ये यद्विशेषणं तत्रापि विशेषणान्तरमिति रीत्या ज्ञानं जायते यथा दण्डवान् पुरुष इति ज्ञानम् अत्र ज्ञाने पुरुषांशे दण्डो दण्डांशे दण्डत्वं विशेषणतया भासते । तत्र [illegible]प्रयोजिका । क्वचिदेकत्र द्वयमिति रीत्या बोधः । यथा दण्डवान् पुरुष इति ज्ञानम् अत्र च ज्ञाने एकस्यां व्यक्तौ पुरुषे पुरुषत्व दण्डयोरुभयं विशेषणतया भासते न तु विशेषणविशेष्यतावच्छेदकभावेन । क्वचित् विशिष्ट-वैशिष्ट्यावगाहि ज्ञानं भवति यथा दण्डवान् पुरुष इति ज्ञानमत्र च ज्ञाने विशेषणतावच्छेदकप्रकारकं विशेषणज्ञानं कारणम् । तत्र दण्डरूपविशेषणावच्छिन्नप्रतियोगिक-वैशिष्ट्यरूप संसर्ग पुरुषांशे संसर्गतया भासते । अतएव विशेषणविशिष्टसंसर्गावगाहि तदिति उपलक्षितज्ञानात् विशेषः । क्वचिच्च विशिष्टज्ञानं यथा अयं दण्डीति ज्ञानम् अत्र च ज्ञाने इदमर्थे विशेष्ये दण्डात्मक विशेषणप्रतियोगिक संसर्गः संसर्गतया भासते उपलक्षणे तु न तत्प्रतियोगिकतया संसर्गस्य भानमिति भेद । विशिष्टवैशिष्ट्यशाब्दबोधे त्वयं भेदः [illegible] उद्देश्यतावच्छेदकविधेयतावच्छेदकयो पारतन्त्र्येण परस्पर प्रयोज्यप्रयोजकभावेनान्वय । यथा धनवान् सुखीत्यत्र धनप्रयोज्यत्वस्य सुखे, सुराप पततीत्यत्र सुरापानस्य पतने प्रयोज्यत्वस्यान्वय ।

विशिष्टाद्वैत न० रामानुजाद्युक्ते प्रकृतिविशिष्टस्य ब्रह्मणो-ऽद्वयत्वे । रामानुजशब्दे दृश्यम् ।

विशिष्टाभाव पु० ६त० । विशेषणविशिष्टस्याभावे स च क्वचित् विशेषणाभावप्रयुक्त क्वचिच्च विशिष्याभावप्रयुक्त क्वचिदुभयाभावप्रयुक्त ।

विशीर्ण त्रि० वि+शॄ-क्त । १शुष्के, २जरावस्थापन्ने ।

विशीर्णपर्णी पु० विशीर्णं पर्णमस्य । निम्बवृक्षे रा-जनि० ।

विशुद्ध त्रि० वि+शुध-क्त । १दोषरहिते, २विशदे च । तन्त्रोक्ते कण्ठस्थे ३चक्रभेदे चक्रशब्दे २८०८पृ० दृश्यम् ।

विशुद्धाद्वैत न० ६त० । वल्लभाचार्यमतप्रसिद्धे दोषरहितस्य ब्रह्मणोऽद्वयत्वे ।

विशुद्धि स्त्री० वि+शुध-क्तिन् । १शोधने २दोषराहित्ये च ।

विशृङ्खल त्रि० विगता शृङ्खला पद्धतिर्यस्याः । परिपाटीशून्ये

विशेष पु० वि+शिष-घञ् । १प्रभेदे, २प्रकारे, अटा० ३व्यक्तौ हेम० । ४तिलके, त्रिका० । "अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तितः" इति भाषा०उक्ते ५पदार्थभेदे "अन्ते अवसाने तिष्ठतीति अन्त्य यदपेक्षया विशेषो नास्तीत्यर्थः । घटपटादीनां द्व्यणुकपर्य्यन्तानां तत्तदवयवभेदात् परस्परं भेदः । परमाणूनां भेदको विशेष एव स तु स्वत एव व्यावृत्तः तेन तत्र विशेषान्तरापेक्षा नास्तीति" सि०मुक्ता० । अयञ्च नित्यद्रव्ये समवायेन तिष्ठति "तेषु जातेश्च सम्बन्धः समवाय प्रकीर्त्तितः" भाषाप्रकारेण नित्यद्रव्येषु विशेषसम्बन्धस्य समवायतायाः प्रदर्शनात् । "द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" कणा० सू० उद्दिश्य वर्णितं यथा "अन्यत्रान्त्येभ्यो विशेषेभ्यः" सू० । 'अन्त्या विशेषा नित्यद्रव्यवृत्तयो येऽभिहितास्तान् वर्जयित्वा सामान्यविशेषाभिधानमित्यर्थः । अन्ते अवसाने भवन्तीत्यन्त्या यतो न व्यावर्त्तकान्तरमस्ति स्वाश्रयाः उत्पादविनाशयोरन्तेऽवसाने भवन्तीत्यन्त्यानि नित्यद्रव्याणि तेषु भवन्तीत्यन्त्या विशेषाः इति वृत्तिकृतः ते हि विशेषा एव व्यावृत्तबुद्धिहेतवः न तु सामान्यरूपा अपि" उप०वृ० । नित्यैकमात्रवृत्तय इति फलितार्थः । "अन्योन्याभावविरोधिसामान्यरहितः समवेतो विशेषः" सर्व०श्री०माधव० । ६व्याप्यधर्मे । यथा नीलघट इत्यादौ घटत्वव्याप्यधर्मः नीलत्वादिविशिष्टघटत्वादि । ७अर्थालङ्कारभेदे च अलङ्कारशब्दे ४०१ पृ० दृश्यम् ।

विशेषक पुन० विशेषयति वि+शिष-णिच्-ण्वुल् । १ललाट-कृते तिलके अमर । २विशेषकर्त्तरि त्रि० मेदि० "त्रिभि-श्लोकैः विशेषकम्" इत्युक्ते एकवाक्यतापन्ने ३श्लोकत्रये न० । ४तिलकवृक्षे राजनि० ।

विशेषगुण पु० कर्म० । 'बुद्ध्यादिषट्कं रूपादिचतुष्क

र्त्तितः। सोऽहिच्छत्रे शृङ्गवेरे कोङ्कणे मलये भवेत्" अथ हालाहलस्य स्वरूपम् "गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा। तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः। असौ हालाहलो ज्ञेयः किष्किन्धायां हिमालये। दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते"। अथ ब्रह्मपुत्रस्य स्वरूपम् "वर्णतः कपिलो यः स्यात्तथा भवति सारतः। ब्रह्मपुत्रः स विज्ञेयो जायते मलयाचले। ब्राह्मणः पाण्डुरस्तेषु क्षत्रियो लोहितप्रभः। वैश्यः पीतोऽसितः शूद्रो विषश्चतुर्विधः। रसायने विषं विप्रं क्षत्रियं देहपुष्टये। वैश्यं कुष्ठविनाशाय शूद्रं दद्यात् वधाय हि"। (एते च स्थावरविषाः) तेषां शोधनविधिः तत्रैव स्थानान्तरे "गोमूत्रे त्रिदिनं स्थाप्य विषं तेन विशुद्ध्यति। रक्तसर्षपतैलाक्ते तथा धार्य्यन्तु वाससि। ये गुणा गरले प्रोक्तास्ते स्युर्हीना विशोधनात्। तस्माद्विषं प्रयोगे तु शोधयित्वा प्रयोजयेत्"। अथ विषस्य गुणाः "विषं प्राणहरं प्रोक्तं व्यवायि च विकाशि च। आग्नेयं वातकफहृत् योगवाहि मदावहम्"। व्यवायि सकलकायगुणव्यापनपूर्वकपाकगमनशीलम्। विकाशि ओजःशोषणपूर्वकसन्धिबन्धशिथिलीकरणशीलम्। आग्नेयम् अग्निकार्य्यम्। योगवाहि सर्वगुणग्राहकम्। मदावहं तमोगुणप्राधान्येन बुद्धिविध्वंसकम्। "तदेव युक्तियुक्तन्तु प्राणदायि रसायनम्। योगवाहि परं वातश्लेष्मजित् सन्निपातहृत्"। अथोपविषाणां निरूपणम् "अर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकः। गुञ्जाहिफेनो धत्तूरः सप्तोपविषजातयः"। एतेषां शोधनं चिन्त्यं गुणास्तत्र तत्र द्रष्टव्याः"।

तत्र विषस्य द्वैविध्यमाह "स्थावरं जङ्गमञ्चैव द्विविधं विषमुच्यते। दशाधिष्ठानमाद्यं तु द्वितीयं षोडशाश्रयम्"। स्थावरविषस्य दशाश्रयानाह "मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सारमेव च। निर्य्यासो धातवः कन्दः स्थावरस्याश्रया दश"। तद्यथा मूलविषं करवीरादि। पत्रविषं विषपत्रिकादि, फलविषं कर्कोटकादि, पुष्पविषं वेत्रादि, त्वक्सारनिर्य्यासविषाणि करम्भादीनि क्षीरविषं स्नुह्यादि धातुविषं हरितालादि कन्दविषं वत्सनाभसक्तुकादि। जङ्गमविषस्य षोडशाश्रयानाह "दृष्टिनिःश्वासदंष्ट्रा च नखमूत्रमलानि च। शुक्रं लालानखस्पर्शः सदंश अवमर्दितम्। गुदास्थिपित्तशूकानि दश षट् जङ्गमाश्रयाः"। तद्यथा दृष्टिनिःश्वासविषाः दिव्याः सर्पाः, दंष्ट्राविषाः भौमसर्पाः दंष्ट्रानखविषा व्याघ्रादयः, मूत्रपुरीषविषाः कृकगोधिकादयः शुक्रविषा मूषिकादयः, लालाविषाः उच्चिटिकादयः, लालास्पर्शमूत्रपुरीषार्त्तवशुक्रमुखसन्दंशदंष्ट्रास्पर्शावमर्दितगुदपुरीषविषाश्चित्रशीर्षादयः, अस्थिविषाः सर्पादयः, पित्तविषाः शकुलमत्स्यादयः, शूकविषाः भ्रमरादयः। स्थावरविषाणां सामान्यानां कार्य्याण्याह। तत्र मूलविषस्य कार्य्यमाह "उद्वेष्टनं मूलविषैः प्रलापनं तथा"। पत्रविषस्य कार्य्यमाह "जृम्भणं वेपनं श्वासो ज्ञेयाः पत्रविषैर्भवेत्"। फलविषस्य कार्य्यमाह "शुष्कशोथः फलविषैर्दाहोद्वेगश्च भोजने"। पुष्पविषस्य कार्य्यमाह "भवेत् पुष्पविषैश्छर्द्दिराध्मानं मूर्च्छनं तथा"। त्वक्सारनिर्य्यासकार्य्याण्याह "त्वक्सारनिर्य्यासविषैरुपयुक्तैर्भवन्ति हि। आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः"। क्षीरविषकार्य्यमाह "फेनागमः क्षीरविषैर्विड्भेदो गुरुजिह्वता"। धातुविषकार्य्यमाह "हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि। प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत्"। एतानि मूलविषाणि नव कालघातीनि कालान्तरे मारकाणि। कन्दविषस्य कार्य्यमाह। "कन्दजान्युग्रवीर्य्याणि यान्युक्तानि त्रयोदश। सर्वाण्येतानि कुशलैर्ज्ञेयानि दशभिर्गुणैः। स्थावरं जङ्गमं वापि कृत्रिमं चापि यद्विषम्। सद्यो निहन्ति तत् सर्वं गुणैश्च दशभिर्युतम्"। तान् दशगुणानाह "रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशु व्यवायि च। विकाशि विशदञ्चैव लघ्वपाकि च ते दश" तेषु गुणैर्विषस्य कार्य्यमाह "तद्रौक्ष्यात् कोपयेद्वायुमौष्ण्यात् पित्तं सशोणितम्। तैक्ष्ण्यान्मतिं मोहयति मर्मबन्धान् छिनत्ति हि। शरीरावयवान् सौक्ष्म्यात् प्रविशेद्विकरोति च। आशुत्वादाशु तत् प्रोक्तं व्यवायात् प्रकृतिं हरेत्। विकाशित्वात् क्षपयति दोषान् धातून्मलानपि। अतिरिच्यते वैशद्यात् दुश्चिकित्स्यं च लाघवात्। दुर्जरं चाविपाकित्वात् तस्मात् क्लेशयते चिरम्"। विषदिग्धशस्त्रहतस्य लक्षणमाह "सद्यः पाकं याति यस्य क्षतं तत् क्षतेऽस्रं पच्यते चाप्यभीक्ष्णम्। कृष्णीभूतं क्लिन्नमत्यर्थपूतिक्षतान्मांसं शीर्य्यते यस्य चापि। तृष्णातापौ दाहमूर्च्छे च यस्य दिग्धविद्धं तं मनुष्यं व्यवस्येत्। लिङ्गान्येतान्येव कुर्य्यादमित्रैर्दत्तं स्नेहो वा क्षते यस्य चापि"। पच्यते चाप्यभीक्ष्णं पुनः पुनः

रोगी पक्वाशयस्थेऽनिलपित्तरोगी। भवेत् समुद्ध्वस्तशिरोऽङ्गरुहको विलूनपक्षश्च यथा विहङ्गः"। समुद्ध्वस्तशिरोऽङ्गरुहकः समुद्ध्वस्ता शिरोरुहाः केशाः अङ्गरुहः लोमानि यस्य सः एतदपि लिङ्गं पक्वाशयस्थे दूषीविषे बोद्धव्यम् "स्थितं रसादिष्वथ तद्यथोक्तान् करोति धातुप्रभवान् विकारान्"। तत् दूषीविषं यथोक्तान् सुश्रुते व्याधिसमुद्देशीयोक्तान्। दूषीविषस्य प्रकोपसमयमाह 'कोपं तु शीतानिलदुर्दिनेषु यात्याशु पूर्वं शृणु तस्य रूपम्'। कुपितस्य दूषीविषस्य पूर्वरूपमाह "निद्रा गुरुत्वञ्च विजृम्भणञ्च विश्लेषहर्षावथ वाङ्गमर्दः"। विश्लेषः गात्रशैथिल्यं हर्षः रोमाञ्चः। रूपमाह "ततः करोत्यन्नमदाविपाकावरोचकं मण्डलकोठजन्म। मांसक्षयं पाणिपदास्यशोथं मूर्च्छां तथा छर्दिमथातिसारम्। दूषीविषं श्वासतृषौ ज्वरांश्च कुर्यात् प्रवृद्धिं जठरस्य चापि"। अन्नमदः अन्ने भुक्ते पूगफलेनेव मदः। अविपाकः अन्नस्य। दूषीविषभेदेन विकारानाह "उन्मादमन्यज्जनयेत्तथान्यदानाहमन्यत् क्षपयेच्च शुक्रम्। गाद्गद्यमन्यज्जनयेच्च कुष्ठं तांस्तान्विकारांश्च बहुप्रकारान्"। अन्यत् दूषीविषं तांस्तान् विकारान् विसर्पविस्फोटादीन्। दूषीविषस्य निरुक्तिमाह "दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः। यस्मात् सन्दूषयेद्धातून् तस्माद्दूषीविषं स्मृतम्"। देशः अनूपादि कालः दुर्दिनादि अन्नं कुलत्थतिलमाषादि धातुदूषकत्वाद्दूषीविषम्। दूषीविषस्य साध्यत्वादिकमाह "साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम्। दूषीविषमसाध्यं स्यात् क्षीणस्याहितसेविनः"। कृत्रिमं विषं द्विविधम् एकं सविषं दूषीविषसंज्ञम् अपरमविषं तदेव गरसंज्ञं तथा च काश्यपसंहितायाम् "संयोगजञ्च द्विविधं द्वितीयं विषमुच्यते। दूषीविषं तु सविषमविषं गर उच्यते"। संयोगजं कृत्रिमं विषं द्वितीयं स्वाभाविकं तच्च द्विविधम्। तत्र दूषीविषमभिधाय गरं दर्शयितुमाह "सौभाग्यार्थं स्त्रियः स्वेदरजोनानाङ्गजान् मलान्। शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान्"। गरकार्य्यमाह "तैः स्यात् पाण्डुः कृशोऽल्पाग्निर्ज्वरश्चास्योपजायते। मर्म्मप्रधमनाध्मानं हस्तयोः शोथसम्भवः। जठरग्रहणीरोगा यक्ष्मागुल्मक्षयो ज्वरः"। तैः गरैः स्वेदरजःप्रभृतिभिः ज्वरश्चास्योपजायत इति अपाकात्। मर्म्मप्रधमनं मर्म्मव्यथा क्षयो धातुक्षयः। लूतानां जन्तुविशेषाणामुत्पत्तिं निरुक्तिं सङ्ख्यां-

श्चाह "यज्ञाङ्गं तृणमाप्ता मुनेः प्रस्वेदबिन्दवः। तेभ्यो जातास्तथा लूता इति ख्यातास्तु षोडश"। अत्र सुश्रुतः "विश्वामित्रो नृपवरः कदाचिद्वसिष्ठमाश्रमम्। वशिष्ठं कोपयामास गत्वाऽश्रमपदं किल। कुपितस्य मुनेस्तस्य ललाटात् स्वेदबिन्दवः। अपतद्दर्शनादेव छवस्तासोन्नरर्थय·। लूने तृणे महर्षेस्तु धेन्वर्थं सम्भृतेऽपि च। ततो जातास्त्विमे घोरा नानारूपा महाविषाः। तासामष्टौ कष्टसाध्या वर्ज्यास्तावत्य एव हि"। तत्र त्रिमण्डलप्रभृतयोऽष्टौ कष्टसाध्याः सौवर्णिकप्रभृतयोऽष्टावसाध्याः। तासां सामान्यतो दंशलक्षणमाह "ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च। ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः। पिडका विविधाकारा मण्डलानि महान्ति च। शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा। सामान्यं सर्वलूतानामेतद्दंशस्य लक्षणम्"। दंशकोथः दंशमध्ये पूतिभावः। "दंशमध्ये तु यत्कृष्णं श्यावं वा जालकावृतम्। दग्धाकृति भृशं पाकं क्लेदशोथज्वरान्वितम्। दूषीविषाभिर्लूताभिस्तद्दष्टमिति निर्दिशेत्"। सौवर्णिकाद्योऽष्टावसाध्याः प्राणहरास्तासां लक्षणमाह "शोथः श्वेता सिता रक्ता पीता च पिडका ज्वरः। प्राणान्तिको भवेद्दाहः श्वासहिक्काशिरोग्रहः"। आखुदूषीविषलक्षणमाह "आदंशाच्छोणितं पाण्डुमण्डलानि ज्वरोऽरुचिः। लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते"। प्राणहरमूषकविषकार्य्यमाह "मूर्च्छाङ्गशोथवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः। शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यमूषकात्। अङ्गशोथोऽत्र मूषिकाकारो बोद्धव्य इति। तन्त्रान्तरे कृकलासदष्टस्य लक्षणमाह "शोथस्य कार्ष्ण्यमथ वा नानावर्णत्वमेव च। मोहोऽथ वर्चसो भेदो दष्टस्य कृकलासकैः"। वृश्चिकदिष्टस्य लक्षणमाह "दहत्यग्निरिवादौ तु भिनत्तीवोर्ध्वमाशु च। वृश्चिकस्य विषं याति पश्चात् दंशेऽवतिष्ठते"। असाध्यस्य वृश्चिकदष्टस्य लक्षणमाह "दष्टोऽसाध्यैस्तु हृद्घ्राणरसनोपहतो नरः। मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसून्"। असाध्यैर्वृश्चिकैस्तेषामेवासाध्यत्वं हृद्घ्राणादिषु उपहतः हृदादिकार्य्यरहितो भवति अत्यर्थं वेदनार्त्त इत्यन्वयः। कणभदष्टस्य लक्षणमाह "विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि वा। लक्षणं कणभैर्दष्टे दंशश्चैवावशीर्य्यते"। कणभः कीटविशेषः। उच्चिटिङ्गदष्टस्य लक्षणमाह "हृष्टरोमोच्चिटिङ्गेन स्तब्धलिङ्गो-

भयार्त्तिमान् । दष्टः शीतोदकेनेव लिङ्गान्यङ्गानि मन्यते" । कृष्णरोमा अधिकतरकृष्णरोमा चञ्चटिका (चौटा) कीटविशेषः । सविषमण्डूकदष्टस्य लक्षणमाह "एकदंष्ट्रार्दितः शूनः सरुजः पीतकः सतृट् । छर्दिं निद्राञ्च मण्डूकैः सविषैर्दष्ट आप्नुयात्" इति । एकदंष्ट्रार्दितः स्वभावादेकयैव दंष्ट्रया दष्टो भवति । मत्स्यविषस्य कार्य्यमाह "मत्स्यास्तु सविषाः कुर्य्युर्दाहं शोथं रुजं तथा" । जलौकाविषकार्य्यमाह "कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः" । कुर्य्युरिति शेषः । गृहगोधिका विषकार्य्यमाह "विदाहं श्वयथुं तोदं प्रस्वेदं गृहगोधिकाः" । कुर्य्युरिति शेषः । शतपदीविषकार्य्यमाह "दंशे स्वेदं रुजं दाहं कुर्य्याच्छतपदीविषम्" शतपदी (गिजाई) इति लोके । मशकविषकार्य्यमाह "कण्डूमान् मशकैरीषच्छोथः स्यान्मन्दवेदनः" । असाध्यमशकलक्षणमाह "असाध्यकीटसदृशमसाध्यं मशकक्षतम्" । असाध्यकीटसदृशं असाध्यैः कीटैर्नखाटिभिः क्षतं यथा भवति तथा सदृशवेदनम् । मक्षिकादंशलक्षणमाह "सद्यः प्रस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता । पिडका मक्षिका दंशे तासान्तु स्थगिका असुहृत्" । तासामित्यादि तासां चतुर्णामासां मक्षिकाणां मध्ये स्थगिका नाम्नी मक्षिका प्राणहरेत्यर्थः । व्याघ्रादिविषाणां कार्य्यमाह "चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तैर्यत् क्षतम् । शूयते पच्यते तच्च स्रवति ज्वरयत्यपि" । चतुष्पाद्भिः व्याघ्रादिभिः द्विपाद्भिः वानरप्रभृतिभिः शूयते शूनो भवति । विषोपसृष्टस्य लक्षणमाह "प्रसन्नदोषं प्रकृतिस्थधातुमन्नाभिकाङ्क्षं सममूत्रविट्कम् । प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम्" । प्रसन्नदोषं प्रकृतिस्थदोषं शेषं सुगमम्" । [मन्थाकर्ण्याम् राजनि०

**विषकण्टकिनी** स्त्री विषयुक्तं कण्टकमस्त्यस्याः इनि । [शब्दच०

**विषकण्ठ** पु० विषं कण्ठे यस्य । शिवे ।

**विषघा** स्त्री विषं हन्ति हन–ड नि० णत्वम् । गुडूच्याम्

**विषघातिन्** पु० विषं हन्ति हन–णिनि । शिरीषवृक्षे शब्दमाला । २विषनाशके त्रि० ।

**विषघ्न** पु० विषं हन्ति हन–टक् । १शिरीषवृक्षे शब्दच० । २यवासे ३विभीतके राजनि० । ४चम्पकवृक्षे च जटा० । ५हिलमोचिकायां (हेलेचा) स्त्री ङीप् । ६इन्द्रवारुण्याम् ७वनबर्बराम् ८भूम्यामलक्याम् ९रक्तपुनर्नवायाम् १०हरिद्रायाम् ११वृश्चिकाल्याम् १२महाकरञ्जे च १३अ-

जमोदाकायां स्त्री राजनि० ङीप् । १४विषनाशके त्रि० ।

**विषजिह्व** पु० विषयुक्ता जिह्वेव पत्रमस्य । देवताडवृक्षे रत्नमा० । [शब्दर० । स्त्रियां ङीप् ।

**विषज्वर** पुंस्त्री० विषमिव प्राणहन्ता ज्वरो यस्य । १महिषे

**विषण्ड** न० विशेषेण षण्डम् । मृणाले शब्दर० ।

**विषतिन्दु** पु० विषयुक्तस्तिन्दुः । १कुपीलौ भावप्र० । २कारस्करवृक्षे राजनि० । [वर्षे पु० । ३तद्वति त्रि० अमरटीका ।

**विषद्** न० वि+सद–अच् । १पुष्पकासीसे राजनि० । २शुक्ल-

**विषदंष्ट्रा** स्त्री विषयुक्ता दंष्ट्रा । १सर्पदंष्ट्रायाम् । विषस्य दंष्ट्रेव नाशकत्वात् । २सर्पकङ्कालीलतायां रत्नमा० ।

**विषदन्तक** पुंस्त्री० विषं दन्ते यस्य कप् । १सर्पे शब्दच० स्त्रियां ङीप् । [चकोरखगे हेमच० स्त्रियां ङीष् ।

**विषदर्शनमृत्युक** पुंस्त्री० विषस्य दर्शनेन मृत्युरस्य कप् ।

**विषद्रुम** पु० विषयुक्तो द्रुमः । कारस्करवृक्षे राजनि० ।

**विषधर** पुंस्त्री० विषं धरति धृ–अच् । १सर्पे अमरः स्त्रियां ङीष् । "विषधरविषम वन भविता" उद्भटः ।

**विषधर्म्मन्** पु० विषस्येव धर्मोऽस्य अनिच्समा० । (आलकुशी) लतायाम् शब्दच० । [वृक्षे हारा० । २विषनाशके त्रि० ।

**विषनाशन** पु० विषं नाशयति नश–णिच्–ल्यु । १शिरीष-

**विषनाशिनी** स्त्री विषं नाशयति नाशि–णिनि ङीप् । सर्पकङ्कालीलतायां शब्दच० ।

**विषनुद्** पु० विषं नुदति नुद–क्विप् । श्योनाकवृक्षे शब्दच० ।

**विषपुष्प** न० विषमिव भीमं पुष्पमस्य । १नीलपद्मे शब्दमा० २मदनवृक्षे (मनफल) रत्नमा० कप् । मदनवृक्षे भावप्र० ।

**विषम** त्रि० विगतो विरुद्धो वा समः । १असमे २अयुग्मे (वियोड़) ३उन्नतानते ४दारुणे ५सङ्कटे च "भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम्" इत्युक्ते ६पद्यभेदे न० । "ओजोऽथ युग्मं विषमः समश्च" ज्यो०त० उक्ते ७मेषमिथुनाद्यासु राशौ पु० । ८तालभेदे पु० "चतुर्विधं परिज्ञेयस्तालः" सङ्गीतनामकः । पूर्वं १ खण्डं २ समश्चैव विषमश्चैव कथ्यते । नचतुष्कं गतौ पूर्वं १ खण्डे २ बिन्दुद्वयं गुरुः । सगणस्तु समे प्रोक्तस्तथा यट्गणो विषमे भवेत्" सङ्गीत० । विषमादागतः विषमय, रूप्य, विषमरूप्य क, विषमीय विषमादागते त्रि० सि०कौ० । [छदे (छातिम) अमर० ।

**विषमच्छद** पु० विषमाणि अयुग्मानि सप्त छदा यस्य । सप्त-

**विषमज्वर** पु० विषम रूपो ज्वरः । ज्वरभेदे । यथोक्तं भावप्र० "तत्र विषमज्वरस्य निदानकथनपूर्व्विकां सम्प्राप्तिमाह

"दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः। धातुमन्यतमं प्राप्य करोति विषमज्वरम्"। अयमर्थः ज्वरोत्सृष्टस्य ज्वरेण त्यक्तस्य। अहितकरहेतुमाह। दोषः अल्पः ज्वरोत्सृष्टस्य अल्पोऽपि। विषमहेतुमाह। अहित-माहारविहारादि तेन सम्भूतः सम्पूर्णजातः अन्यतमं धातुं रसरक्तादिकम् प्राप्य दूषयित्वा पुनर्विषमज्वरं करोति ज्वरोत्सृष्टस्य वेति वाशब्देनेति बोध्यते। प्रथमतो विषमज्वरो भवति यत उक्तम्। "आरम्भाद्विषमो यस्तु" इत्यादिकम् रसादिकस्थानं दूषयित्वा कं विषमज्वरं करोति इत्यपेक्षयामाह "सन्ततं रसरक्तस्थः सततं रक्तधातुगः। दोषः क्रुद्धो ज्वरं पुंसां सोऽन्येद्युः पिशिताश्रितः। मेदोगतस्तृतीयेऽह्नि अस्थिमज्जागतः पुनः। कुर्य्याच्चातुर्थिकं घोरमन्तकं रोगसङ्करम्"। अन्तकमिव मारकत्वात्। अथ विषमज्वरस्य सामान्यं लक्षणमाह "यः स्यादनियतात् कालात् शीतोष्णाभ्यां तथैव च। वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः"। यः स्यादनियतात् कालादित्यस्यायमर्थः। यथा वातिकोज्वरः सप्त दिनानि, पैत्तिको दश दिनानि, श्लैष्मिको द्वादशदिनानि, दोषाणां प्राबल्ये वातिकश्चतुर्दशदिनानि, पैत्तिको विंशतिदिनानि, श्लैष्मिकश्चतुर्विंशतिदिनानि स्यात्। तथा विषमज्वरो नियतं कालं प्राप्य न स्यादित्यर्थः। शीतोष्णाभ्यां तथाभ्यां स्यात्। "वेगतश्चापि विषमः कदाचिदतिवेगवान्"। कदाचिच्चाल्पवेगः। विषमज्वरस्य भेदानाह "सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ"। तत्र सन्ततस्य लक्षणमाह "सप्ताहं वा दशाहं वा द्वादशाहमथापि वा। सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते"। विकल्पो वातिकादिभेदात्। सन्तत्या नैरन्तर्य्येण अविसर्गी अपरित्यागी। ननु उक्तानुबन्धित्वं विषमत्वमिति विषमलक्षणम् तदत्र न घटत इति कथमयं विषमेषु पठ्यते"। घटत एवेति न दोषः। यत उक्तं चरकेण "विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणम्। दुर्लभोपशमः कालं दीर्घमेवानुवर्त्तते" इति। यत्तु खरनादेनोक्तम् "ज्वराः पञ्च तु ये प्रोक्ताः पूर्वं सन्ततकादयः। चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमज्वराः" इति तच्चिरेण त्यागाभिप्रायेण। सततलक्षणमाह "अहोरात्रे सततको द्वौ कालावनुवर्त्तते"। द्वौ कालौ अह्न्येककालं रात्रावेककालम्। यतो दोषाणामहोरात्रे प्रत्येकं द्वौ द्वौ प्रकोपकालौ।

अत उक्तं वाग्भटेन "वयोऽहोरात्रिभुक्तानामन्तमध्यादिकाः क्रमात्" इति। अन्येद्युष्कलक्षणमाह। "अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्तते"। एककालं दोषापेक्षया एककालमपि न द्वितीयं, प्रथमकाले हृदयेऽव दोषस्थितेः। तृतीयकचतुर्थकयोर्लक्षणमाह। "तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः"। तृतीयेऽह्नि इत्यागमनदिनं स्वीकृत्य यत उक्तम् "दिनमेकमतिक्रम्य यो भवेत् स तृतीयकः। दिनद्वयन्त्वतिक्रम्य यः स्यात् स हि चतुर्थकः" इति। अत्राह सुश्रुत "कफस्थानविभागेन यथासङ्ख्यं करोति हि। सततान्येद्युष्कत्र्याख्यचतुर्थकान् प्रलेपकान्। अहोरात्रादहोरात्रात् स्थानात् स्थानं प्रपद्यते। दोषः आमाशयं प्राप्य करोति विषमज्वरम्"। अयमर्थः आमाशयोरःकण्ठशिरःसन्धयः पञ्च कफस्थानानि एषु तिष्ठन् दोषो यथासङ्ख्यं सततादीन् करोति। तत्र आमाशये स्थितो दोषः सततं करोति द्वौ कालौ, अहोरात्रे कालद्वये दोषप्रकोपात्। हृदये स्थितो दोषः आमाशयमागत्य अन्येद्युष्कं करोति एककालं नैकस्यादेकस्मिन्नेवाहोरात्रे दोषः आमाशयमागत्य अन्येद्युष्कं करोति। तत्र द्वौ दोषप्रकोपकालौ एकस्मिन् काले हृदये तिष्ठत्यपरस्मिन्नामाशय इति। कण्ठे स्थितो दोषोऽहोरात्रात् हृदयमायाति। तृतीये दिने आमाशयमागत्य स्वप्रकोपकाले तृतीयकं ज्वरं करोति एककालं न तु द्वौ कालौ स्वभावात्। एवमेव शिरःस्थितो दोषः अहोरात्रात् कण्ठमायाति ततः पुनरहोरात्रात् हृदयमायाति चतुर्थे दिने आमाशयमागत्य स्वप्रकोपकाले चतुर्थकं ज्वरं करोति एककालमत्र द्वौ कालौ स्वभावादेव। ननु दोषस्यागमनक्रमेण निजस्थानगमनक्रमात् कथं तृतीयचतुर्थदिवसयोर्ज्वरागमनम्। उच्यते। दोषो हि प्रकोपसमये वेगवत्तया बलवत् स्वस्थानन्तु वेगदिन एव याति। यत आह "दोषः प्रकोपकाले हि वेगवत्त्वेन बलवान्। वेगवात्तर एवाय स्वस्थानमधिगच्छति"। सन्धिषु स्थितः प्रलेपकं करोति। उन्ययश्चामाशयेऽपि सन्ति तेषु स्थितः प्रलेपकं सर्वदा करोति "निवृत्तः पुनरायाति विषमो नियते दिने। स्वभावः कारणं तत्र मन्यन्ते सुनिपुणा"। स्वभावस्य कारणत्वे कफस्थानविभागनिरपेक्षाच्चतुर्थकादिविपर्य्ययाः अपि ज्वराः स्वस्वकाले प्रभवन्ति "अधिशेते यथा भूमिं बीजं काले

मरोहति। अधिशते तथा धातून् दोषः काले प्रकुप्यति"। सुश्रुतोऽप्याह "स चापि विषम देहं न कदाचित् प्रमुञ्चति। ग्लानिगौरवकार्श्येभ्यः स यस्माद्व प्रमुच्यते। वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते। धात्वन्तरेषु लीनत्वात् सौक्ष्म्याद्वोपलभ्यते"। द्विदोषोल्वणस्य तृतीयकस्य लक्षणमाह "कफपित्तात् त्रिकग्राही पृष्ठाद्वातकफात्मकः। वातपित्ताच्छिरोग्राही त्रिविधः स्यात् तृतीयकः" | त्रिकग्राही वेदनया त्रिकं गृह्णातीत्यर्थः। ननु-कफपित्तात् त्रिकग्राही वेदनया त्रिकव्यापी त्रिकं तु वातस्थानं तत्कथं तद्गृह्णीत पित्तकफौ अन्यस्थानगत्वेन दुर्बलत्वात् दुर्बलौ च कथं वेगं कुरुतः, दोषाणां स्थाननियमः न तु कुपितानां तथा च सुश्रुतः"कुपितानां हि दोषाणां शरीरे परिधावति। यत्र सङ्गः ख वैगुण्यात व्याधिस्तत्रोपजायते"। एवमन्यस्थानगत्वेन चतुर्थको वाच्यः। वातकफात्मकः पृष्ठात् व्यथया पृष्ठं व्याप्य भवतीत्यर्थः।"ल्यब्लोपे कर्मण्यधिकरणे च" पा॰सूत्रेण पञ्चमी। कफोल्वणस्य वातोल्वणस्य चतुर्थकस्य लक्षणमाह "चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः। जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरसोऽनिलसम्भवः। मध्यगायन्तु गृह्णाति पूर्वं यस्तु स पित्तजः। विषमज्वर एवान्यश्चतुर्थकविपर्ययः"। श्लैष्मिकः श्लेष्मोल्वणः। तथा अनिलसम्भवो वातोल्वणः सन्ततादीनां त्रिदोषजत्वम्। यत उक्तं चरके "प्रायशः सन्निपातेन दृष्टाः पञ्चविषमज्वराः" इति। प्रायशोग्रहणादेकदोषजा द्विदोषजा अपि भवन्तीति जेज्जटः। पूर्वं प्रथमं जङ्घाभ्याम् व्यथया जङ्घे व्याप्य पश्चात् सकलं शरीरं व्याप्नोति। एवमुल्वणवातजातः शिरसः पूर्वं व्यथया शिरोव्याप्य सकलं शरीरं व्याप्नोतीत्यर्थः। "विषमज्वर एवान्यश्चातुर्थकविपर्ययः। अस्थिमज्जगतो दोषश्चातुर्थकविपर्ययम्। जायते भिषजा ज्ञेयो विषमज्वर एव सः"। अन्यः सन्ततादिपञ्चकादपरः चातुर्थकविपर्ययाख्यो ज्वरः सोऽपि विषमज्वर एव वैद्येन ज्ञातव्यः। स किं धातुस्थ इत्यपेक्षायामाह अस्थीत्यादि। तस्य चातुर्थकविपर्ययस्य लक्षणमाह "स मध्ये ज्वरयत्यह्नी आद्यन्ते च विमुञ्चति"। चतुर्थकविपर्ययः इत्युपलक्षणम् सन्ततादिविपर्ययोऽपि बोद्धव्यः। यथा अहोरात्रे द्वौ कालौ मुञ्चति शेषं सर्वमहोरात्रं तिष्ठतीति सततविपर्ययः। अहोरात्रे एककालं मुञ्चति शेषं सर्वमहोरात्रं तिष्ठति अन्येद्युष्कविपर्ययः मध्ये एकं दिनं ज्वरयति आद्यावन्ते च मुञ्चतीति तृतीयकविपर्ययः। एते विषमज्वरोपलक्षकाः अन्ये रात्रिज्वरादयोऽपि विषमज्वरा बोद्धव्याः यथा "समौ वातकफौ यस्य क्षीणपित्तस्य देहिनः। रात्रौ प्रायो ज्वरस्तस्य दिवा क्षीणकफस्य तु"। प्रायः बाहुल्येन। सन्ततादीनां शीतपूर्वत्वे दाहपूर्वत्वे च हेतुमाह "त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरम्। तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च"। शीतं शीतसहितम्। प्रशान्तयोः प्रशान्तवेगयोः अन्तः अभ्यन्तरे। "करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च। तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः"। अन्ततः हस्तपादादितः। शीतादिदाहादिज्वरयोस्त्रिदोषजत्वमाह "द्वावेतौ दाहशीतादिज्वरौ संसर्गजौ स्मृतौ। दाहपूर्वस्तयोः कष्टः सुखसाध्यतमोऽपरः"। संसर्गजौ सान्निपातिकौ। कष्टः कष्टसाध्यः। विषमज्वरविशेषमाह "विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते। तेनार्द्धं शीतलं देहमर्द्धमुष्णं प्रजायते"। अन्नरसे विदग्धे आहारजे रसे दुष्टे, देहे श्लेष्मपित्ते व्यवस्थिते दुष्टे स्थिते। तेन हेतुना शीतलं कफेन उष्णं पित्तेन, अर्द्धत्वं चार्द्धनारीश्वराकारेण नरसिंहाकारेण वा। "काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः। तेनोष्णत्वं शरीरस्य शीतत्वं हस्तपादयोः"। अन्ते हस्तपादादौ "काये श्लेष्मा यदा दुष्टः पित्तं चान्ते व्यवस्थितम्। शीतत्वं तेन गात्रे स्यादुष्णत्वं हस्तपादयोः"। विषमज्वरविशेषस्य प्रलेपकस्य लक्षणमाह "प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण च। मन्दज्वरविलेपी च स शीतः स्यात् प्रलेपकः"। गौरवेण उपलक्षितः। मन्दज्वरविलेपी मन्दवेगस्य विलेपः सदा सम्बन्धोऽस्यास्तीति मन्दज्वरविलेपी। अयं विषमज्वरः। तथा च सुश्रुतः "प्रलेपकाख्यो विषमः प्रायशः क्षयशोषिणाम्। ज्वराश्च विषमाः सर्वे प्रायः क्षयशोषिणाम्"।

**विषमनयन** पु॰ विषमाणि अयुग्मानि त्रीणि नयनान्यस्य। त्रिनेत्रे शिवे। विषमनेत्रादयोऽप्यत्र।

**विषमर्दनी** स्त्री विषं मर्द्यतेऽनया मृद-ल्युट् ङीप्। गन्धनाकुल्याम्। स्वार्थे क। विषमर्दनिका तत्रैव राजनि॰।

**विषमस्थ** त्रि॰ विषमे उच्चतानते सङ्कटे वा तिष्ठति स्था-क। १अपदप्राप्ते २सङ्कटस्थे ३उच्चतानतदेशस्थे च।

**विषमशिष्ट** न॰ विषमं शिष्टं शासनम् । असमुचितशासने ।

**विषमायुध** पु॰ विषमाणि अयुग्मानि पञ्च आयुधानि बाणा यस्य । पञ्चशरे कामे हला॰ विषमेष्वादयोऽप्यत्र । [राजनि॰

**विषमुष्टि** पु॰ विषं मुष्णाति मुष-क्तिच् । क्षुपभेदे (विषडोडि)

**विषमृत्यु** पु॰ विषात् विषदर्शनात् मृत्युरस्य । चकोरखगे जटा॰

**विषय** पु॰ विषिण्वन्ति स्वात्मकतया विषयिणं निरूपयन्ति सबध्नन्ति वा वि+षि-अच् । इन्द्रियगोचरे १शब्दादौ २देशे च अमरः । ३भोगसाधने "विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्त उदाहृतः" । "सिन्धुहिमादिर्विषयो मतः" । "पाषाणादिस्तु महावायुपर्यन्तो विषयो मतः" भाषा॰ । "अत्र विषयः भोगसाधनं सर्वमेव हि कार्यमदृष्टाधीनं यत्र कार्यं यददृष्टाधीनं तत् तदुपभोगं साक्षात्परम्परया जनयत्येव न हि भोजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति एवं द्व्यणुकादिब्रह्माण्डान्तं सर्वमेव विषया भवतीत्यर्थः" सि॰ मुक्ता॰ । "विषिण्वन्ति विषयिणं बध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्तीति विषयाः पृथिव्यादयः सुखादयश्च अस्मदादीनामविषयाश्च तन्मात्रलक्षणाः योगिनामूर्ध्वस्रोतसां च विषयाः" साङ्ख्य॰त॰ कौ॰ । ४नित्यसेविते अमरः । ५अव्यक्ते ६शुक्रे च अजयपालः । ७कान्तादौ ८उपभोग्ये शब्दरत्ना॰ ९नियामके "विषयो हि निःशेषार्थं सिनोतिर्बन्धनार्थकः । विशेषेण सिनोतीति विषयोऽतो नियामकः" भट्टका॰ । १०आरोपाश्रये "आरोपान्या तु यत्रोक्ता विषयो विषयी तथा । विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका" काव्यप्र॰ । ११विचारार्हवाक्ये अधिकरणावयवभेदे "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति सिद्धान्तं शास्त्रेऽधिकरणं स्मृतम्" मीमांसा॰ । [मनि॰ ।

**विषयाज्ञान** न॰ विषयाणां न ज्ञानं यत्र । तन्द्रायाम् रा-

**विषयिन्** न॰ विषयोऽस्त्यस्य इनि । १ज्ञाने "विषयी यस्य तस्यैव" भाषा॰ २इन्द्रिये च । ३विषयासक्ते त्रि॰मेदि॰ । ४राज्ञि ५कामदेवे पु॰ मेदि॰ । विषयिणो भावः तल् । विषयिता ज्ञाननिष्ठे विषयनिरूपित पदार्थभेदे स्वरूपसम्बन्धभेदे च स्त्री । सा च त्रिविधा विशेष्यनिरूपिता विशेष्यिता, विशेषणनिरूपिता प्रकारिता, संसर्गनिरूपिता संसर्गिता इति गदाधरादय । गदाधरमते विषयितैव प्रतिबध्यकतावच्छेदिका । जगदीशमते विषयतैवेति भेदः ।

**विषरूपा** स्त्री विषं मूर्च्छकविषं रूपयति अतिक्रामति रूप-क । अतिविषायाम् (आतइच) राजनि॰ । [राजनि॰

**विषलता** स्त्री विष व्याप्तौ अच् कर्म॰ । इन्द्रवारुण्याम् ।

**विषविद्या** स्त्री विषाय तन्निवृत्तये विद्या । विषघ्नमन्त्रज्ञाने

**विषविधि** पु॰ दिव्यभेदे दिव्यशब्दे १५८६ पृ॰ दृश्यम् ।

**विषवैद्य** पु॰ विषे विषापहारे वैद्यश्चिकित्सकः । विषमन्त्रविद्यायुते अमरः । [राजनि॰ ।

**विषशालूक** पु॰ विषस्य मृणालस्य शालूक । पद्मकन्दे

**विषशृङ्गिन्** पु॰ विषं शृङ्गमिवास्त्यस्य इनि । अङ्कुरोत्थे हारा॰ । [हेमच॰ स्त्रियां ङीप् ।

**विषसूचक** पु स्त्री॰ विषं सूचकं हिंसकमस्य । चकोरखगे

**विषस्कन्ध** पु॰ विषं स्कन्धे यस्य । अङ्कुरोत्थे त्रिका॰ ।

**विषहन्त्री** स्त्री विषं हन्ति हन-तृच् ङीप् । १अपराजितायाम् राजनि॰ । २विषहारके त्रि॰ ।

**विषहरी** स्त्री विषं हरति हृ-अच् गौरा॰ ङीष् । १मनसादेव्याः शब्दच॰ । २विद्याभेदे तन्त्रसा॰ [जनि॰ ।

**विषहा** स्त्री विषं हन्ति हन-ड । देवदालीलतायाम् रा-

**विषा** स्त्री विषं मारकविषं नाशकत्वेनास्त्यस्याः अच् (आतइच) १अतिविषायाम् अमरः २बुद्धौ च उणादि॰

**विषाण** न॰ विष-वा॰ काणच् । १पशुशृङ्गे २हस्तिदन्ते ३कुष्ठौषधे मेदि॰ । ४वराहदन्ते हेमच॰ ५क्षीरकाकोल्याम् ६अजशृङ्ग्यां स्त्री मेदि॰ गौरा॰ ङीप् । सा च ७वृश्चिकाल्यां स्त्री राजनि॰ । ८तिन्तिड्यां स्त्री शब्दच॰ ।

**विषाणिका** स्त्री विषाणमस्त्यस्याः ठन् । १मेषशृङ्ग्याम् (माड़राशिङ्गा) रत्नमा॰ । २कर्कटशृङ्ग्याम् ३आवर्तक्याम् ४सातलायां राजनि॰ ।

**विषाणिन्** पु॰ विषाणमस्त्यस्य इनि । १शृङ्गिणि २हस्तिनि च अमरः । ३शृङ्गाटके ४ऋषभौषधे च पु॰ राजनि॰ ।

**विषाद** पु॰ वि+षद्-घञ् । १अवसादे हेमच॰ २जडतायाश्च ।

**विषादनी** स्त्री विषाय तन्निवृत्तये अद्यतेऽसौ अद-ल्युट् । पलाशीलतायाम् राजनि॰ । [२विषहरे त्रि॰ ।

**विषान्तक** पु॰ विषस्यान्तक इव । १शिवे हेमच॰ ६त॰ ।

**विषापहा** स्त्री विषमपहन्ति अप+हन-ड । १सर्पकङ्कालिकायाम् राजनि॰ । २इन्द्रवारुण्यां ३निर्विषायां राजनि॰ । ४नागदमन्यां भावप्र॰ । ५अर्कमूलायाम् (ईश्वरमूल) ६सर्पकङ्कालिकायां रत्नमा॰ । [ङीष् ।

**विषार** पुं स्त्री॰ विषमृच्छति ऋ-अण् । सर्पे शब्दच॰ स्त्रियां

**विषाराति** पु॰ ६त॰ । १कृष्णधुत्तूरे राजनि॰ । २विषनाशके च ।

१‘यस्माद् विश्वमिदं सर्वं तस्य शक्त्या महात्मनः । तस्मादेवोच्यते विष्णुर्विशधातोः प्रवेशनात्” इत्युक्तेः विश-प्रवेशे नु प्रत्य० इत्यपि बोध्यम् । २वह्नौ ३शुद्धे ४श्रवणदेवतायाम् शब्दच० । ५धर्मशास्त्रकारके मुनिभेदे च “मन्वत्रिविष्णुहारीते”ति याज्ञ० ६तद्दैवते श्रवणनक्षत्रे ज्यो०त० ।

**विष्णुकन्द** पु० विष्णुप्रियः कन्दः शा०त०। मूलभेदे राजनि० ।

**विष्णुक्रान्ता** स्त्री ३त० विष्णुस्तद्वर्णं क्रान्तो वा यया । अपराजितायाम् अमरः तस्याः विष्णुतुल्यवर्णत्वात् विष्णुपरित्यक्तत्वाच्च तथात्वम् ।

**विष्णुगुप्त** पु० १चाणक्ये मुनौ स्वयमेव शास्त्राध्यापनत्वेन पण्डितत्वेन प्रसिद्धः त्रिका०। ३त०। विष्णुना गुप्ते त्र्यादौ २देवादौ ३कन्दभेदे राजनि० ।

**विष्णुतैल** न० वैद्यकप्रसिद्धे तैलभेदे तच्च द्विविधं स्वल्पवृहद्भेदात् तत्तत्पाकप्रकारः भैषज्यरत्ना० उक्तो यथा तत्र स्वल्पविष्णुतैलम् “शालपर्णी पृश्निपर्णी बलागोरक्षतण्डुला । एरण्डस्य च मूलानि वृहत्योः पूतिकस्य च । शतावरी सहचरी पचेदेतैः पयोन्वितैः । तैलप्रस्थं पयोदत्त्वा गव्यं वाऽऽजं चतुर्गुणम् । अस्य तैलस्य पक्वस्य शृणु वीर्य्यमतः परम् । वातार्त्तो नरनागाश्च पीत्वा दृढतनुप्रभः । हृत्पार्श्वशूले वाताख्ये गलगण्डेऽर्दिते क्षये । शर्कराश्मरिपाण्डुत्वकामलाह्वांसभेदके । क्षीणेन्द्रियेऽन्त्रवृद्धौ च जराजर्ज्जरिते हितम् । स्त्रीणामप्रसवानाञ्च गर्भस्थितिकरं परम् । एतदष्टकरं तैलं विष्णुना परिकीर्त्तितम्” । तण्डुलः गोरक्षतण्डुलः । वृहत्यौ वृहतीकण्टकार्य्यौ । पूतिकं नाटाकरञ्जः । सहचरी झिण्टी । अत्र क्वाथान्तराभावात् क्षीरस्य चतुर्गुणं जलं कश्चिद्ददाति । “स्नेहक्षीरमाङ्गल्यैः पाको यत्रेरितः क्वचित् । जलं चतुर्गुणं तत्र वीर्य्याधानार्थमावपेत्” इति परिभाषावचनात् । क्वचिदिति पाठात् क्वाथान्तररहिते केवलक्षीरादिसहिततैलादिपाके ज्ञातव्यं न तु सर्वत्र । “एलाचन्दनकुङ्कुमागुरुतगरककोलमांसी शटी श्रीवासच्छदपर्णिपर्णमसृणत्वग्दलोशीरकम् । कस्तूरीनखपूतिगन्धजलमुस्तैणेयोत्पलाटिकम् । गन्धद्रव्यमिदं प्रदेयमखिलं श्रीविष्णुतैलादिषु” । अथ वृहद्विष्णुतैलम् “जलधरमश्वगन्धा जीवकर्षभकौ शटी । काकोली क्षीरकाकोली जीवन्ती मधुयष्टिका । मधूरिका देवदारु पद्मकाष्ठं सैन्धवम् । मांसी चैला त्वचं कुष्ठं रक्तचन्दनशैलजम् । मञ्जिष्ठा मृगनाभिश्च श्वेतचन्दनकुङ्कुमम् । पर्णी कुन्दुरु चोटिश्च ग्रन्थिकस्य नखी तथा । एतेषां पालिकैर्भागैस्तैलस्यापि तथाढकम् । शतावरी रसं तत्र दुग्धञ्चापि समं भवेत् । विष्णुतैलवरं श्रेष्ठं सर्व्ववातविकारनुत् । ऊर्द्ध्ववाते ह्यधोवाते कम्पविघ्न एव च । शिरोमध्यगता ये च मन्यास्तम्भे गलग्रहे । यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला । ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः । सर्व्वांस्तान्नाशयत्याशु सूर्य्यस्तम इवोदितः” ।

**विष्णुदैवत(त्य)** त्रि० विष्णुर्दैवत(त्य) यस्य । विष्णुदेवताके द्रव्यादौ “शृण्वन्तु सर्व्वदैवत्यं यदनुक्तं द्विजोत्तमाः ! । तज्ज्ञेयं विष्णुदैवत्यं सर्व्वं वा विष्णुदैवतम्” शु० त० विष्णु० । २श्रवणनक्षत्रे च ।

**विष्णुधर्म्म** पु० विष्णूपासनायोग्यो धर्म्मः शाक० । विष्णूपासनोचिते १नियमभेदे उपचारात् तत्प्रतिपादके २ग्रन्थे च

**विष्णुधर्मोत्तर** न० विष्णुधर्मं उत्तरः प्रधानः वर्ण्यत्वेन यस्य । संहिताभेदे ।

**विष्णुपद** न० विष्णोः पदमिव व्यापकत्वात् । १आकाशे अमर । ६त० । २क्षीरार्णवे मेदि० ३पद्मे च हेमच० ४विष्णोश्चरणे कर्म० । ५विष्णुरूपस्थाने च “तद्विष्णोः परमं पदम्” ऋ० विष्णुसूक्तम् ।

**विष्णुपदी** स्त्री० विष्णुपदं कारणत्वेनास्त्यस्याः अच् गौरा० ङीष् । १गङ्गायाम् “निर्गता विष्णुपादाब्जात् तेन विष्णुपदी स्मृता” ब्रह्मवै० प्र०८अ०। २वृषसिंहवृश्चिककुम्भराशौ रवेः संक्रान्तौ च । “वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता” “पुण्याख्या विष्णुपद्याश्च प्राक्पश्चादपि षोडश” ज्यो०त०। “अयने कोटिगुणितं लक्षं विष्णुपदीषु च” ति०त० “तदन्तरेषु संक्रान्तिद्वितयं द्वितयं पुनः । नैरन्तर्यात्तु संक्रान्तेर्ज्ञेयं विष्णुपदीद्वयम्” सू०सि० । “तदन्तरेषु विषुवायनान्तरालेषु । अन्तरालानां चतुःस्थाने सद्भावात् बहुवचनम् । संक्रान्तिद्वितयं द्वितयं पुनः राश्यादिभागे पञ्चाशामाक्रमणं वारद्वयं भवति तदन्तराले राश्यादिभागौ द्वौ भवत इत्यर्थः । तथा हि मेषाख्यविषुवकर्काख्यायनयोरन्तराले वृषमिथुनयोरादौ । कर्कतुलयोरन्तराले सिंहकन्ययोरादौ । तुलामकरयोरन्तराले वृश्चिकधनुषोरादौ । मकरमेषयोरन्तराले कुम्भमीनयोरादौ इति । एवं विषुवानन्तरं संक्रमणद्वयमनन्तरमयनं तदनन्तरं संक्रान्तिद्वयं तदनन्तरं विषुवमनन्तरं संक्रान्तिद्वयमनन्तरमयनमित्यादि” पौनःपुन्येन

क्षेपनिलयं” । संक्रान्तिद्वयमध्ये प्रथमसंक्रान्तौ विशेष-माह । नैरन्तर्यादिति । निरन्तरतया सम्भूतायाः संक्रान्तेः सकाशाद्विष्णुपदीद्वय तदन्तराल इत्यर्थः” रघु०

**विष्णुपुराण** न० व्यासप्रणीते महापुराणभेदे तत्प्रतिपाद्य-विषयाश्च वृहन्नारदीये ९४ अ० उक्ता यथा
“शृणु वत्स ! प्रवक्ष्यामि पुराणं वैष्णवं महत् । त्रयो-विंशतिसाहस्रं सर्वपातकनाशनम् । यत्रादिभागे नि-र्द्दिष्टाः षडंशाः शक्तृजेन ह । मैत्रेयायादिमे तत्र पुराणस्यावतारिका” । तत्र प्रथमभागस्य प्रथमांशे “आदिकारणसर्गश्च देवादीनाञ्च सम्भवः । समुद्रमथना-ख्यानं दक्षादीनां कथाचय । ध्रुवस्य चरितं चैव पृथोश्चरितमेव च । प्राचेतसं तथाख्यानं प्रह्लादस्य कथा-नकम् । पृथुराज्याधिकाराख्यः प्रथमोऽंश इतीरितः । पातालनरकाख्यानं सप्तसर्गनिरूपणम् । सूर्य्यादिचारकथनं पृथग्लक्षणसंगतम् । चरितं भरत-स्याथ मुक्तिमार्गनिदर्शनम् । निदाघऋतुसंवादो द्विती-योऽंश उदाहृतः” । प्रथमभागस्य तृतीयांशे “मन्वन्तरस-माख्यानं वेदव्यासावतारकम् । नरकोद्धारकं कर्म गदितञ्च ततः परम् । सगरस्यौर्वसंवादे सर्वधर्मनिरूपणम् । श्राद्ध-कल्पं तथोद्दिष्टं वर्णाश्रमनिबन्धने । सदाचारश्च कथितो मायामोहकथा ततः । तृतीयोऽशोऽयमुदितं सर्वपाप-प्रणाशनः” । प्रथमभागस्य चतुर्थांशे “सूर्य्यवंशकथा पुण्या सोमवंशानुकीर्त्तनम् । चतुर्थेऽंशे मुनिश्रेष्ठ ! नानाराजकथाचितम्” । प्रथमभागस्य पञ्चमांशे “कृ-ष्णावतारसम्प्रश्नो गोकुलीया कथा ततः । पूतनादिवधो बाल्ये कौमारेऽघादिहिंसनम् । कैशोरे कंसहननं माथुरं चरितं तथा । ततस्तु यौवने प्रोक्ता लीला द्वार-वतीभवा । सर्वदैत्यवधो यत्र विवाहाश्च पृथग्विधाः । यत्र स्थित्वा जगन्नाथः कृष्णो योगेश्वरेश्वर । भूभार-हरणं चक्रे परस्वहननादिभिः । अष्टावक्रीय-माख्यानं पञ्चमोऽंश इतीरितः” । प्रथमभागस्य षष्ठांशे “कलिजं चरितं प्रोक्तं चातुर्विध्यं लयस्य च । ब्रह्म-ज्ञानसमुद्देशः खाण्डिक्यस्य निरूपितं । केशिध्वजेन चेत्येष षष्ठोऽंशः परिकीर्त्तितः” । तस्य द्वितीयभागे “अतःपरन्तु सूतेन शौनकादिभिरादरात् । पृष्टेन चोदिताः शश्वद्विष्णुधर्मोत्तराह्वयाः । नानाधर्मकथाः पुण्या व्रतानि नियमा यमाः । धर्मशास्त्रं चार्थशास्त्रं वेदान्तं ज्योतिषं तथा । वंशाख्यानं प्रकरणात् स्तो-त्राणि मनवस्तथा । नानाविद्याश्रयाः प्रोक्ताः सर्वलोको-पकारकाः । एतद्विष्णुपुराणं वै सर्वशास्त्रार्थसंग्रह” तत्फलश्रुतिः “वाराहकल्पवृत्तान्तं व्यासेन कथितं त्विह । यो नरः पठते भक्त्या यः शृणोति च सा-दरम् । तावुभौ विष्णुलोकं हि व्रजेतां भुक्तभोगकौ । तल्लिखित्वा च यो दद्यादाषाढ्यां घृतधेनुना । सहितं विष्णुभक्ताय पुराणार्थविदे द्विज ! । स याति वैष्णवं धाम विमानेनार्कवर्चसा । यश्च विष्णुपुराणस्य समनु-क्रमणीं द्विज ! । कथयेच्छृणुयाद्वापि स पुराणफलं लभेत्” ।

**विष्णुमाया** स्त्री ६त० । विष्णोः परमेश्वरस्य माया । १अघ-टनघटनपटीयस्याम् ईश्वरस्याविद्याशक्तौ २तदधिष्ठात्र्यां दुर्गायाञ्च ।

**विष्णुयशस्** पु० कल्किपितरि कल्किपु० ।

**विष्णुरथ** पु० विष्णोः रथ इव गतिहेतुत्वात् । १गरुडे अमरः । ६त० । २विष्णोः रथे च ।

**विष्णुरात** पु० विष्णुना रातः विष्णुर्वा रायाञ्जीवनमस्मै रा–क्त त वा । परीक्षिदाख्ये नृपे स हि गर्भस्थ एव अश्वत्थामास्त्रेण दग्धो मृतः सन् प्रसवानन्तरञ्च वि-ष्णुना पुनर्जीवितः तत्कथा भा० आश्व० ७० अध्याये । तन्नामनिरुक्तिः भाग० १।१२ अ० यथा
“दैवेनाप्रतिघातेन शुक्ले (वंशे) संस्थामुपेयुषि । रातो-वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना । तस्मान्नाम्ना विष्णुरातो लोके ख्यातिं गमिष्यति” ।

**विष्णुवल्लभा** स्त्री ६त० । १तुलस्याम् राजनि० २अग्नि-शिखावृक्षे च शब्दच० । ३लक्ष्म्याम् ।

**विष्णुवाहन** पु० विष्णुं वाहयति स्थानान्तरं नयति वह-णिच्–ल्यु । गरुडे हेमच० ।

**विष्णुवाह्य** पु० विष्णुर्वाह्योऽस्य । गरुडे शब्दच० ।

**विष्फार** पु० वि+स्फुर–णिच्–अच् षत्व णात् षत्वम् । धनुर्ग्णाकर्षणशब्दे टङ्कारे अमरः ।

**विष्य** त्रि० विशेषेण वध्यः विष+यत् । विषेण वध्ये अमरः ।

**विष्वक्सेनप्रिया** स्त्री ६त० । १लक्ष्म्याम् (चामर आलु) २वाराहीकन्दे अमरः ।

**विष्वणन** न० वि+स्वन–ल्युट् षत्वणत्वे । भोजने जटा० ।

**विष्वाण** पु० वि+स्वन–घञ् षत्वणत्वे । भोजने हेमच० ।

**विस** न० वि+सो–क । मृणाले अमरः । वादिरमित्यन्ये

**विस** उत्सर्गे दि०पर०सक०सेट् । विस्यति अवेसीत् ।

**विसंवाद** पु० वि+सम्+वद–घञ्। १विप्रलम्भे अमरः। २वचने अन्यथा स्थितस्य वस्तुनोऽन्यथा कथनादौ च।

**विसकुसुम** न० विसयुक्तं कुसुमम्। पद्मे राजनि०।

**विसङ्कट** पु० विशिष्टः सङ्कटो यस्मात्। १सिंहे शब्दच० २इङ्गुदीवृक्षे च राजनि०। [समूहे च त्रिका०।

**विसनाभि** स्त्री विसं नाभिरिव यस्याः। १पद्मिन्याम् २पद्म०

**विसर** पु० वि+सृ–अप्। १समूहे अमरः। २विस्तारे च मेदि०

**विसर्ग** पु० वि+सृज–घञ्। १दाने २त्यागे ३मलत्यागे ४विसर्जनीयाख्ये ५वर्णभेदे ६सूर्यस्यायनभेदे ७मोक्षे हेमा०। ८प्रलये ९विशेषसृष्टौ शब्दरत्ना० "विसर्गबिन्दु-गौरिवधत्तचक्षुर्विचित्रमिति" श्रीधरः।

**विसर्जन** न० वि+सृज–ल्युट्। १दाने अमरः २त्यागे च। वि+सृज–णिच् ल्युट्। ३प्रेरणे मेदि०।

**वि(वी)सर्प** पु० वि+सृप–घञ् वा दीर्घः। रोगभेदे तल्लक्षणादि भावप्र० उक्तं यथा तत्र विसर्पविप्रकृष्टनिदानं सम्प्राप्तिश्चाह "लवणाम्लकटूष्णादिसेवनाद्दोषकोपतः। विसर्पः सप्तधा ज्ञेयः सर्वतः परिसर्पणात्" लवणादिशब्दाच्छुर-शोक्तहरितशाकमद्याकर्षणप्रभृतीनां ग्रहणम्। सप्तधात्वं विवृणोति "वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः। चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः। आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः। यस्तु कर्दमको घोरः स पित्तकफसम्भवः"। विसर्पदोषदूष्याणि संदर्शयन्नाह "रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः। विसर्पाणां समुत्पत्तौ हेतवः सप्त धातवः"। त्रयो मलाः वात-पित्तकफाः दोषा दूषका इत्यर्थः। अन्यथा दोषमला इत्यत्र पुनरुक्तिदोषो लगिष्यते। वातिकस्य लक्षणमाह "तत्र वातात्परीसर्पो वातज्वरसमव्यथः। शोफस्फुरण-निस्तोदभेदायामार्त्तिहर्षवान्"। परीसर्पो विसर्पः। वातज्वरसमव्यथः शिरोरुक्कम्पोदरशूलादियुक्तः। भेदः विदारणेनेव व्यथा। आयामः आकर्षणेन व्यथा। पैत्तिकमाह "पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽति-लोहितः"। द्रुतगतिः शीघ्रप्रसरणशीलः। अथ श्लै-ष्मिकमाह "कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक्"। सान्निपातिकमाह "सन्निपातसमुत्थश्च सर्वरूपसमन्वितः"। वातपैत्तिकमाह "वातपित्ताज्ज्वरच्छर्द्दिमूर्च्छातीसारतृड्-भ्रमैः। अस्थिभेदोऽग्निसदनतमकारोचकैर्युतः। करोति सर्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत्। यं यं देशं विसर्पश्च विसर्पति भवेत् स सः। शान्ताङ्गारासितो नीलो रक्तो

वा स्फुटयते। अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद् द्रु-तञ्च सः। मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः। व्यथेताङ्गं हरेत् संज्ञां निद्राञ्च श्वासमीरयेत्। हिक्काञ्च स गतोऽवस्थामीदृशीं लभते नरः। क्वचिच्छर्म्मारति-ग्रस्तो भूमिशय्यासनादिषु। चेष्टमानस्ततः क्लिष्टो मनो-देहश्रमक्लमाम्। दुःप्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते"। स्फोटैः स्फुटयत इत्यन्वयः। "मर्मानु-सारी उदरहृदयानुसारी हरेत् विसर्प इत्यन्वयः हिक्कां हिक्काम् ईरयेत् उपर्युपरि प्रेरयेत्। मनोदेहश्रमक्लमां निद्रां मरणरूपाम्। अश्नुते प्राप्नोति। वातश्लैष्मिकं ग्रन्थिविसर्पमाह "कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम्। रक्तं वा वृद्धरक्तस्य त्वक्शिरास्नायुमांसगम्। दूषयित्वा तु दीर्घाणुवृत्तस्थूलखरात्मनाम्। ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम्। श्वासकासाति-सारास्यशोषहिक्कावमिभ्रमैः। मोहवैवर्ण्यमूर्च्छाङ्ग-भङ्गाग्निसदनैर्युतः। इत्ययं ग्रन्थिवीसर्पो वातश्लेष्म-प्रकोपजः"। कफेन स्वहेतुदुष्टेन पवनोऽपि स्वहेतु-दुष्टः। तेनायं वातश्लैष्मिकः। तं कफं बहुधा भित्त्वा रक्तं वा दूषयित्वेत्यन्वयः। त्वगादिकमिति रक्तस्य विशेषणम्। अथ पित्तश्लैष्मिकं कर्दमाख्यं विसर्पमाह "कफपित्ताज्ज्वरस्तम्भनिद्रातन्द्राशिरोरुजाः। अङ्गा-वसादविक्षेपप्रलापारोचकभ्रमाः। मूर्च्छाग्निहानिर्भेदो-ऽस्थ्नां पिपासेन्द्रियगौरवम्। आमोपवेशनं लेपः स्रोत-साञ्च विसर्पति। प्रायेणामाशयं गृह्णन्नेकदेशं न चाति-रुक्। पिडकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः। स्नि-ग्धोऽसितो मेचकाभो मलिनः शोफवान् गुरुः। गम्भीर-पाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्य्यते। पङ्कवच्छीर्ण-मांसश्च स्पष्टस्नायुसिरागणः। शवगन्धी च वीसर्पः कर्दमाख्यमुशन्ति तम्"। स च सर्पति एकदेशमित्यन्वयः। पिडकैः पीडाकारिभिः। अवकीर्णः व्याप्तः। असितः कृष्णः। मेचकः कृष्णवर्णः। प्राज्योष्मा प्रचुरोष्मा। स्पृष्टः क्लिन्नोऽवदीर्य्यते। स्पृष्ट सन्नार्द्रो भवति विदी-र्य्यते। पङ्कवत् कर्दमवर्णवत् यत्र सः। शीर्णमांसः गलितमांसः। अत एव स्पष्टस्नायुसिरागणः। सान्नि-पातिकमाह "सान्निपातसमुत्थस्तु सर्वरूपसमन्वितः"। अथ क्षतजं विसर्पमाह "बाह्यहेतोः क्षतात् क्रुद्धः स-रक्तं पित्तमीरयन्। विसर्पं मारुतः कुर्य्यात् कुलत्थसदृशैः-श्चितम्। स्फोटैः शोथज्वररुजादाहाढ्यं श्यावशोणितम्।

नाम्। कफपैत्तिकमाह "कण्डूर्दाहो ज्वरश्छर्द्दिरेतैश्च कफपैत्तिकः"। अथ वातपित्तजमाह "वातपित्तकृतोयस्तु तत्र स्यात्तीव्रवेदना"। वातश्लैष्मिकमाह "कण्डूस्तैमित्यगुरुभिर्जानीयात् कफवातिकम्"। साम्निपातिकमाह "मध्ये निम्नोन्नतान्तश्च कठिनं स्वल्पपाकवान्। दाहरागतृषामोहच्छर्द्दिमूर्च्छारुजाज्वराः। प्रलापो वेपथुर्मूर्च्छा सोऽसाध्यश्च त्रिदोषजः"। मोहो विपरीतं ज्ञानम् मूर्च्छा सर्वथा ज्ञानशून्यता। रक्तजमाह "वेदितव्याश्च रक्तेन पैत्तिकेन च हेतुना। गुञ्जाफलसमा रक्ता रक्तस्रावा विदाहिनः। न ते सिद्धिं समायान्ति सिद्धैर्योगशतैरपि"। पैत्तिकेन हेतुना पित्तस्य हेतुना कट्वादिना रक्तपित्तस्य तुल्यत्वात् सिद्धैर्योगशतैरपि ते सिद्धिं न समायान्ति। विस्फोटकभेदानाह "एते चाष्टविधा बाह्या आन्तरोऽपि भवेदयम्। तस्मिन्नन्तर्व्यथा तीव्रा ज्वरयुक्ताभिजायते। यस्मिन् बहिर्गते स्वास्थ्यं न वातस्य बहिर्गतिः। तत्र वातिकविस्फोटक्रिया कार्या विजानता"। उपद्रवानाह "तृट्श्वासमांससङ्कोचदाहहिक्कामदज्वराः। विसर्पमर्मसंरोधास्तेषामुक्ता उपद्रवाः"। मांससङ्कोचं मांसस्य घटितम्। मर्मसरोधो मर्मव्यथा। तेषां विस्फोटानां केचिदुपद्रवाणां लक्षणान्तरं पठन्ति "हिक्काश्वासोऽरुचिस्तृष्णा चाङ्गमर्दो हृदिव्यथा। विसर्पज्वरहृल्लासाः विस्फोटानामुपद्रवाः"। साध्यत्वादिकमाह "एकदोषोत्थितं साध्यं कृच्छ्रसाध्यो द्विदोषजः। सर्वरूपान्वितो घोरो ह्यसाध्यो भूर्युपद्रवः"। २कुष्ठभेदे "स्फोटाः श्यावारुणाभासा विस्फोटास्तु तनुत्वचः" भावप्र०।

**विस्मय** पु० वि+स्मि—अच्। १आश्चर्ये अमरः। २अद्भुतस्थायिभावके रसभेदे सा०द०। "विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु। विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः" सा०द०। ३दर्पे मेदि०४सन्देहे शब्दर०। [अमरः।

**विस्मयान्वित** त्रि० ३त०। १विस्मययुक्ते २आश्चर्ययुक्ते च

**विस्मापन** पु० वि+स्मि-णिच् अच-आत् वा पुक् च ल्यु। १कुहके २कामदेवे च। ३गन्धर्वपुरे न० मेदि०। भावे विस्मापनमप्यत्र।

**विस्मित** पु० वि+स्मि—क्त। विस्मययुक्ते।

**विस्मृत** त्रि० वि+स्मृ—क्त। स्मरणाविषये अमरः।

**विस्मृति** स्त्री वि+स्मृ—क्तिन्। स्मरणाभावे।

**विस्र** न० विस—रक्। आमगन्धो १चिताधूमादौ २अपक्वमांसगन्धे भरतः। ३आमगन्धे च

**विस्रंस** पु० वि+स्रन्स—भावे—घञ्। १पतने २क्षरणे च।

**विस्रगन्धा** स्त्री विस्रो गन्धोऽस्याः। हपुषायाम् राजनि०।

**विस्रगन्धि** पु० विस्रस्येव गन्धोऽस्य इत्समा०। हरिताले हेमच०। [च अमरः।

**विस्रम्भ** पु० वि+स्रन्भ—घञ्। १विश्वासे २प्रणये ३परिचये

**विस्रम्भिन्** त्रि० वि+स्रन्भ—णिनि। १विश्वासयुक्ते २प्रणयिनि च।

**विस्रसा** स्त्री वि+स्रन्स—क। जरायाम् अमरः। [जनि०।

**विस्रा** स्त्री विस्रमामगन्धोऽस्त्यस्याः अच्। हपुषायाम् रा-

**विहग** पुंस्त्री० विहायसा गच्छति गम—ड नि०। १पक्षिणि अमरः स्त्रियां ङीष्। २वाणे ३सूर्य्ये ४चन्द्रे ५मेघे च पु० शब्दरत्ना०। ६सूर्य्यादिग्रहे पु० धरणिः।

**विहङ्गम** पुंस्त्री०विहायसा गच्छति गम—खच् नि०। पक्षिणि अमर स्त्रियां ङीष्। २भारयष्टौ स्त्री (बाँक) शब्दच०।

**विहङ्गराज** पु० ६त०अच् समा०। गरुडे हला० "विहङ्गराजाङ्करुहैरिवायतैः" माघः। [२हिंसायाञ्च मेदि०।

**विहनन** न०विहन्यते वि+हन—ल्युट्। १तूलपिञ्जने २विघ्ने

**विहर** पु०वि+हृ—अप्। विहारे ल्युट्। विहरण तत्रैव न०।

**विहसित** न० वि+हस—क्त। मध्यमहास्ये अमरः।

**विहस्त** त्रि० विगतो हस्तो हस्तावलम्बनं यस्य। १व्याकुले अमर। २पण्डिते मेदि० ३षण्डे च पु० शब्दच०। शा० ६ब०। ४हस्तशून्ये त्रि०।

**विहा** अव्य० वि+हा-आ। स्वर्गे त्रि०कौ०।

**विहापित** न० वि+हा—णिच् क्त। दाने अमरः।

**विहायस्** पु०न० वि+हय—असुन् नि० वृद्धिः। १आकाशे २पक्षिणि पु० अमरः। स्वार्थे अच्। विहायसमप्याकाशे न० खगे पु०। अदन्तोमव्ययम् आकाशे हेमच०।

**विहार** पु० वि+हृ-घञ्। क्रीडार्थं पादाभ्यां १गमने अमर २भ्रमणे ३स्कन्धे ४लीलायां ५बौद्धदेवालये मेदि० ६वैजन्ते च शब्दमा० ७विन्दुरेखकखगे पुंस्त्री०शब्दच०।

**विहित** त्रि० वि+धा—क्त। १कृते विधिना २बोधिते च।

**विहीन** त्रि० वि+हा—क्त। १त्यक्ते २वर्जिते च।

**विहृत** न० वि+हृ—भावे क्त। १विहारे २स्त्रीणां चेष्टाभेदे हेमचन्द्रे "लीलाविलासो विच्छित्तिर्विव्वोकः किलकिञ्चितम्। मोट्टायितं कुट्टमितं ललितं विहृतं तथा। विभ्रमश्चेत्यलङ्काराः स्त्रीणां स्वाभाविका दश" विहृतमित्येव पाठः" सा०द० स्त्रीणां सात्त्विकस्वाभाविकालङ्कारमध्ये विहृतमित्येव पठित्वा "वक्तव्यकालेऽप्य-

यथो—ग्नीडया विकतं मर्तामिति" चचितम् विकतयष्टे ४८८१पृ० दर्शितेन उज्ज्वलमणिमाकोन लक्षितविकतया तुल्यार्थत्वात् चतत्तत्र विकतमित्येव पाठो युक्तः।

विह्वेठन न०वि+हेठ-भावे ल्युट्। १हिंसायां २मर्दने ३निष्ठ्वने मेदि० ४विबाधाया त्रिका०। [२विश्लेषने च हेमच०।

विह्वल त्रि० वि+ह्वल–अच्। १भयादिना व्याकुले अमर०।

वी कान्तौ अनने च अक० गतौ व्याप्तौ क्षेपे भोजने च सक० अदा० पर० अनिट्। वेति अवेषीत्।

वीक पु० अज-कक् व्यादेशः। १वायौ २खगे च उज्ज्वल०। ३मनसि अभिप्रायः। [२प्रकाशे च अमर।

वी(वि)काश पु० वि+काश-घञ् वा दीर्घः। १रहसि

वीक्षण न० वि+ईक्ष-करणे ल्युट्। १नेत्रे। भावे ल्युट्। २दर्शने।

वीक्षा स्त्री वि+ईक्ष–अच्। १मूर्च्छाविश्रामः। भावे अ। २गतिभेदे ३ज्ञाने ४अश्वगतिभेदे ५दर्शने च शब्दच०।

वीचि(ची) पु स्त्री० वे-डीचि स्त्रीत्वे वा ङीप्। १तरङ्गे अमरः २अवकाशे ३सुखे मेदि०। ४अल्पे हेमच०। ५कि रणे च जटाध०।

वीचितरङ्ग पु० वीचेरिव तरङ्गो यत्र। वीचितो यथा उत्तरोत्तर तरङ्गजननमेवं स्वजन्यजन्यादिक्रमेण प्रथादिविषये न्यायभेदे न्यायशब्दे ४१६८पृ०दृश्यम्। [हेमच०।

वीचिमालिन् पु० वीचीनां मालाऽस्त्यस्य इनि। समुद्रे

वीज व्यजने अद० चुरा० उभय० सक० सेट्। वीजयति ते अविवीजत्-त। "वीज्यते स हि संसुप्त." इति कुमार।

वीज न०वी-क्विप् जन-ड कर्म०। १कारणे २शुक्रे अमर। ३अङ्कुरे ४तत्त्वावधाने मेदि०। ५मज्जनि राजनि०। ६अव्यक्तगणितभेदे "पूर्वं प्रोक्तं व्यक्तमव्यक्तवीजं प्रायः प्रश्नानो विना व्यक्तयुक्त्या। ज्ञातुं शक्या मन्दधीभिर्नितान्तं यस्मात्तस्माद् वच्मि वीजक्रियाञ्च। ७मन्त्रभेदे तन्त्रसा०। "वीजन्ते मातरेतत् त्रिपुरहरवधु। त्रिः कृत ये जपन्ति" कर्पूरस्तव०। ८धान्यादेः फलादौ च।

वीजक पु० वीजेन कायति कै–क। १मातुलुङ्गे शब्दा० २पीतसारे (विजयासार) भावप्र०।

वीजकृत् न० वीज शुक्रवृद्धिं करोति कृ–क्विप्। वाजी० करणे राजनि०। [वराटके अमर०।

वीजकोश पु० वीजानां कोश इवाधार। पद्मवीजाधारे

वीजगर्भ पु० वीजानि गर्भे यस्य। पटोले राजनि०।

वीजगुप्ति स्त्री वीजानां गुप्तिर्यत्रास्। शिम्बायाम् राजनि०।

वीजन न० वीज-भावे ल्युट्। १व्यजने। करणे ल्युट्। २चामरादौ ३वस्त्रसि पु०४चक्रवाके ५जीवञ्जीवपक्षिणि च पु स्त्री० सारस्वत। स्त्रियां ङीष्।

वीजपादप पु०वीजप्रधानः पादपः। १भल्लातकवृक्षे राजनि० वीजजातः पादपः शा०त०। २वीजजाते वीजप्ररोहिवृक्षे च। [मेदि०।

वीजपुष्प न० वीजात् पुष्पं यस्य। १मरुवके २मदनवृक्षे च

वीजपूर पु० पूर्यते पूर+घञ् ३त०। (टावा लेबु) जम्बीर भेदे मातुलुङ्गेऽप्यत्र।

"वीजपूरफलं स्वादु रसेऽम्लं दीपनं लघु। रक्तपित्तहरं कण्ठजिह्वाहृदयशोधकम्। श्वासकासारुचिहरं हृद्यं तृष्णाहरं स्मृतम्"। तद्भेदमधुकर्कटी गुणा यथा "वीजपूरोऽपरः प्रोक्तो मधुरा मधुकर्कटी। मधुकर्कटिका स्वाद्वी रोचनी शीतला गुरुः। रक्तपित्तक्षयश्वासकासहिक्काभ्रमापहा" भावप्र०।

वीजपेशिका स्त्री वीजस्य शुक्रस्य पेशिकेव। अण्डकोषे राजनि०। [राजनि०।

वीजफलक पु० वीजानि फले यस्य कप्। वीजपूरे जम्बीर

वीजमातृका स्त्री वीजानां मातेव इवार्थे कन्। पद्मवीजे शारा०।

वीजरत्न न० वीजं रत्नमिवास्य। माषकलाये हेमच०।

वीजरुह पु० वीजेन रोहति रुह–क। वीजमात्रजाते धान्यादौ "पुरस्कन्द्राद्या अग्रवीजा मूलजास्तूत्पलादय। पर्वयोनय इक्ष्वाद्या स्कन्दजाः शल्लकीमुखाः। शाल्यादयो वीजरुहाः सम्मूर्च्छजास्तृणादयः। स्युर्वनस्पतिकायस्य षडेते मूलजातयः" हेमच०।

वीजरेचन न० वीजं रेचयति रिच-णिच्-ल्यु। वीजेषु मध्ये रेचके जयपालवीजे राजनि०।

वीजवपन न० वीजानि उप्यन्तेऽत्र वप-आधारे ल्युट्। १क्षेत्रे। भावे ल्युट्। २वीजस्य उत्पादनाय क्षेत्रे वपने च। तद्विधानादि दीपिकायामुक्तं यथा "पूर्वोत्तरास्यफल्गुनिपित्र्यविशाख्याभेषु रिक्तादशीविगतचन्द्रतिथिं विहाय। द्वन्द्वाङ्गनाविगोवसुदये त्रिकूलार्किवारे यत्नेन्दुयोगकरणेषु फलप्रसादः। उप्यतां कृषकवीजवपनस्य विधिः सुतः। भिलायाश शुभे केन्द्रे स्थिरचन्द्रतनूदये। हेमवारि विनिष्षिप्य वीजकोषेयत शुचि.। इन्द्रं चित्ते निधाय सवं सुश्लिष्टं वपेत। तथा चाम्बोप्सगोपवार्णं सर्वतो कुम्भानवः। प्राक्सुखः कवषं मन्त्र इदं मन्त्र

उदीरयेत् । त्वं वै वसुन्धरे ! सीते ! बहुपुष्पफलप्रदे । नमस्ते मे शुभं नित्यं कृषिं मेधां शुभे कुरु ! ॥ रोहन्तु सर्वशस्यानि काले देवः प्रवर्षतु । कर्षकास्तु भवन्त्वग्र्या धान्येन च धनेन च"। "उप्ता बीजन्तु तत्रैव भोक्तव्यं चान्नकं सह"। पराशरः "वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणीरवौ । अत परन्तु अधम न चातु श्रावणे शुभम्"। कृषिशब्देऽधिकं द्रष्टव्यम्। ज्योतिषे "पूर्वभाद्रपदामूलं रोहिण्युत्तरफल्गुनी। विशाखा शतभिषा चाथ धान्यादिरोपणे वरा। षदोक्ता रजनी नीवी पुत्रवित्तैर्वियुज्यते । स्वयजाते पुनस्ते है पालयन् नैव दुष्यति । आरामे स्वगृहमध्ये वा मोहात् सर्षपमावपन् । पराभवं रिपुर्याति सधाधनधनक्षयम् । निशा नीवी पलाशश्च चिञ्चा श्वेतापराजिता । कोविदारश्च सप्तैते वर्ज्ये निघ्नन्ति मङ्गलम्"। निशा हरिद्रा कोविदारको रक्तकाञ्चनः । "हेमाम्भसा हलबीजं स्नातो मन्त्रेण रोपयेत् । वसुधेति धरणीति पुण्यदेति धरेति च । नमस्ते शुभगे ! नित्यं द्रुमोऽयं वर्द्धतामिति" ज्यो०त० "एतेषु श्रुतिवारुणादितिविशाखोडूनि भौम विना बीजोप्तिर्गदिता शुभा शुभमतोऽर्कास्येन्दुराशेन्दवः । रामेन्द्राग्नियुगाब्धयश्च भकराशस्तौ हलेऽर्कोज्झिताद्वाङ्गाम्लानवनाग्निभानि मुनिभिः मोक्तान्यसत् सन्ति च" मु०चि० । "एतेष्विति । श्रुतिः श्रवणः वारुणं शततारका अदितिः पुनर्वसुः विशाखा प्रसिद्धा एतेषु उडुभिर्नक्षत्रैर्विहितेषु पूर्वोक्तनक्षत्रेषु मूलमघाध्रुवस्वातीक्षिप्र धनिष्ठाख्यातीषु पञ्चदशनक्षत्रेषु बीजोप्तिर्बीजवपनं शुभम् । उक्तञ्च रत्नमालायाम् "हस्ताश्विपुष्योत्तररोहिणीषु चित्रानुराधामृगरेवतीषु । स्वातौ धनिष्ठासु मघासु मूले बीजोप्तिरत्युत्कटफलप्रदिष्टा"। वसिष्ठेनाप्येतान्येव नक्षत्राण्युक्तानि "धातृद्वये कौशपपैत्रपुष्ये हस्तत्रये मारुतरेवतीभेषु । पौष्णे धनिष्ठास्वथ वाशिभीभे बीजोप्तिरुत्कटफलप्रदा स्यादिति"। कौशपो मूलं नारदेनाप्युक्तानि "मृदुध्रुवक्षिप्रभेषु पितृवायुवसुष्वपि । समूलभेषु बीजोप्तिरत्युत्कटफलप्रदा"। कश्यपेनापि "वसुवायुभेष्वक्षिप्रध्रुवमृदूडुषु । सीता स्वात्याय बीजोप्तिरत्युत्कटफलप्रदा"। अत्र मघा नोक्ता। अथ भौमो सकुवारो निषिद्धः अर्थात् सूर्यचन्द्रबुधगुरुशुक्रशनीनां वारेषु बीजोप्तिः शुभा। अत्र विनायोगे द्वितीया दर्शेन्दुर्मतिथीर्वर्जेन कूजे बीजोप्तिर्वक्रारतस्य-

वेक्तत्वात् नेष्टा कृषिरित्यतो नकारोऽत्रानुवर्त्तते तेन बीजोप्तिर्नेष्टेत्यर्थः । अत्र कालविशेषनिषेधो राजमार्त्तण्डे "रवौ रौद्राद्यपादस्थे भूमेः सञ्जायते रजः । तस्माद्दिनत्रयं तत्र बीजवापं परित्यजेत्" इति । अथ बीजोप्तौ फणिचक्रमुच्यते । शुभतो न विद्यन्ते गावः किरणा यथा सावशु यस्य स्वरूपाभावः तस्य प्रतस्तरां किरणाः तादृशोऽगूराहुस्तस्य भं नक्षत्रं तस्मादित्यर्थः । राहुधिष्ठितनक्षत्रादष्टौ भानि अष्टदशभीयोनानि ततस्त्रीणि शुभानि तत एकमशुभं ततस्त्रीणि शुभानि ततोऽप्येकमशुभं ततस्त्रीणि शुभानि ततोऽप्येकमशुभं ततस्त्रीणि शुभानि ततश्चत्वार्यशुभानि । एवं बीजोप्तौ सप्तविंशतिनक्षत्राणां शुभाशुभलक्षणमुक्तञ्च नारदेन "भत्रेञ्च स्थितं मूर्ध्नि धान्यनाशाय राहुभात् । गले त्रय कज्जलाय षष्ठौ द्वादश चोदरे । निस्तण्डुलत्वं लाङ्गूले न चतुष्टयमीरितम् । नाभौ बहिःपञ्चके स्याद्बीजोप्ताविति चिन्तयेदिति । राहुर्यस्मिन् नक्षत्रेऽस्ति तस्मान्नक्षत्रत्रयं मूर्ध्नि मस्तके स्थाप्यं धान्यनाशकरं भवति । ततस्त्रयं गले स्थाप्यं कज्जलाय श्यामिकोत्पादकं स्यात् । ततो द्वादश भानि बहिर्मध्यवर्त्तीहितानि उदरे स्थाप्यानि तानि धान्यवृद्धये स्युः ततो नक्षत्रचतुष्टयं पुच्छे निस्तण्डुलत्वकरं स्यात् ततोऽवशिष्टं बहिर्नक्षत्रपञ्चकं धान्यनाशकरं स्यात् । रत्नमालायामपि "मूर्ध्नि त्रीणि गले त्रयं च जठरे धिष्ण्यानि च द्वादश स्यात् पुच्छे च चतुष्टयं बहिरतो भानां स्थितं पञ्चकम् । स्वेष्टं कज्जलमध्यवृद्धिरधिकानिस्तण्डुलत्वं क्रमात् स्यादीतभयं भयं च फणिभाद्बीजोप्तिकाले स्फुटम्" इति । अत्र केचित् फणिभात् सूर्यनक्षत्रादिति व्याचक्षते तत्र युक्तिः "सूर्यभादुरगं स्थाप्य" इति स्वरोदयवाक्यैकवाक्यभावात् । तच्च नारदवाक्ये साक्षाद्राहुभादित्युक्तत्वात् "राहुधिष्ण्यात् समारभ्य धिष्ण्यत्रयेष्टच निष्फलमिति" कश्यपोक्तेश्च । "सूर्यभादुरगः स्थाप्य" इति तु स्वरोदयवचनं देशभेदव्यवस्थितम् । बीजवापने लग्नशुद्धिमाह वसिष्ठः "भवरिपुधनजे पापैस्त्रिकोणकेन्द्रस्थितैश्च शुभैः । कथितेषु च धिष्ण्येष्वपि शुभलग्ने बीजवापनं कार्यमिति" पी०धा० ।

**बीजद्रुम** पु० बीजमात्राख्यातो द्रुमः । असनवृक्षे राजनि० ।

**बीजसञ्चय** पु० बीजानां वपनयोग्यधान्यादीनां सञ्चयः संचयः सम्+चि-अच् । वपनयोग्यधान्यादिसञ्चये ।

"हस्ताश्विमादितिस्वातिरेवत्यां श्रवणद्वये। स्थिरे लग्ने गुरौ शुक्रे वीजं धार्य्यं शुभावहे। माघे वा फाल्गुने वापि सर्व्ववीजानि संग्रहेत्। शोषयेत्तापयेद्रौद्रे रात्रौ चोपनिधापयेत्। ततश्च पुटिका बद्ध्वा शोषयेच्च पुनः पुनः। स्थापयेच्च प्रयत्नेन यथा भूमिञ्च न स्पृशेत्। दीपाग्निना च संस्पृष्टं वर्ज्ज्या चोपहतञ्च यत्। वर्ज्जनीयं तथा वीजं यत् स्यात् कीटसमन्वितम्" ज्यो॰ त॰।

**वीजसू** पु॰ वीजं सूते सू-क्विप्। पृथिव्याम् हेमच॰।

**वीजस्थापन** ६त॰। धान्यादिस्थापने तन्मुहूर्त्तादिकं ज्यो॰ त॰ उक्तम् "यास्याग्निरुद्राहिविशाखपूर्व्वमाहेन्द्रपित्र्येतरभैः शुभाह्ने। धान्यादिसंस्थापनमेव शस्तं चरागस्थिरद्व्यङ्गतनूदयेषु। सौम्यादितिमघाज्येष्ठास्त्रुत्तरेषु च कारयेत्। मीने लग्ने शुभे चन्द्रे निधने क्रूरवर्जिते। क्षेमव्यं कोष्ठके धान्यं गर्गो वदति सर्व्वदा"।

**वीजाकृत** त्रि॰ वीजेन सह कृतम् डाच्+कृ-क्त। वीजेन सह कृष्टे क्षेत्रे।

**वीजाम्ल** न॰ वीजेनाम्लमिव। वृक्षाम्ले राजनि॰।

**वीजिन्** पु॰ वीजमस्त्यस्य इनि। १उत्पादके पितरि हेमच॰ २वीजविशिष्टे त्रि॰ स्त्रियां ङीप्। [त्रिका॰।

**वीजोदक** न॰ वीजमिव कठिनत्वादुदकं यत्र। करकायां

**वीज्य** त्रि॰विशेषेण इज्यः वि+यज-क्यप् वा। कुलीने अमर

**वीटि(टी)** स्त्री वि+इट-इन् वा ङीप्। (पानेर वीडा) सज्जितताम्बूले। स्वार्थे क। वीटिका तत्रैव। "कञ्चुकिकायन्त्री च "तद्वीटिकावस्तु्षि" शा॰ द॰।

**वीणा** स्त्री अज-नक् वीभाव पृषो॰ णत्वम्। स्वनामख्याते १वाद्यभेदे अमर॰। वाद्यशब्दे दृश्यम्। २विद्युति मेदि॰

**वीणादण्ड** पु॰ ६त॰। वीणावाद्यस्थितालावूपरिस्थे काष्ठदण्डे अमर॰। [नाटके अमरः।

**वीणावाद** त्रि॰ वीणां वादयति वद-णिच्-अण्। वीणा

**वीत** न॰ वि-इण्-क्त। १युद्धासमर्थे हस्त्यश्वादिसैन्ये अमरः २अङ्कुशकर्मणि मेदि॰। ३न्यायाद्युक्ते अनुमानभेदे च। अवीतशब्दे ४६५ पृ॰ दृश्यम्। ४शान्ते ५गते च त्रि॰ हेमच॰।

**वीतंस** पु॰ वि+तनस-घञ् दीर्घः। १मृगपक्षिणां बन्धोपकरणे दामप्रभृतौ अमरः। २तेषां विश्वासहेतुमावरणे मेदि॰।

**वीतन** पु॰विशिष्टं तनोति तन-अच् पृषो॰दीर्घः। तकपार्श्वद्वये "तकस्य कन्धरा मध्ये तकपार्श्वौ तु वीतनौ" हेमच॰।

**वीतशोक** पु॰ पु॰ वीतः विगतः शोको यस्मात् यस्य वा। १अशोकवृक्षे शब्दच॰। २शोकहीने त्रि॰।

**वीति** स्त्री वी-क्तिन्। १गतौ २दीप्तौ ३भोजने ४प्रजनने ५धारणे च मेदि॰।

**वीतिहोत्र** पु॰ वीतये पुरोडाशादिभक्षणाय हूयन्ते देवा अत्र हु-आधारे त्रल्। १यज्ञे अमर २सूर्य्ये मेदि॰।

**वीथि(थी)** स्त्री विथ-इन् वा ङीप्। १पङ्क्तौ २श्रेणौ ३गृहाङ्गे ४वर्त्मनि ५दृश्यकाव्यभेदे च मेदि॰। तल्लक्षणादि सा॰द॰ ६प॰ उक्तं यथा "वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते। आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः। सूचयेद्भूरिशृङ्गारं किञ्चिदन्यान् रसानपि। मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः"। कश्चिदित्युत्तमो मध्यमोऽधमो वा। शृङ्गारबहुलत्वाच्चास्याः कैशिकीवृत्तिबहुलत्वम्। "अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः। उद्घात्यकावलगिते प्रपञ्चत्रिगतं छलम्। वाक्केल्यधिबले गण्डमवस्यन्दितनालिके। असत्प्रलापव्याहारमृदवानि च तानि तु"। तत्रोद्घात्यकावलगिते प्रस्तावनाप्रस्तावे प्रोदाहरण उक्तिते "मिथो वाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः"। यथा विक्रमोर्व्वश्याम्। वसन्तीविदूषकचेटयोरन्योन्यवचनम् "त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः"। यथा तत्रैव राजा "सर्व्वक्षितिभृतां नाथ! दृष्टा सर्व्वाङ्गसुन्दरी। रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया"। नेपथ्ये तत्रैव प्रतिशब्दः। राजा कथं दृष्टेत्याह। अत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितम् "प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलनाच्छलम्" यथा वेण्याम् "भीमार्जुनौ" "कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम्। कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः"। "अन्यैस्त्वाप्रस्तुतं किञ्चित् कार्य्यमुद्दिश्य कथ्यते। उदीर्य्यते यद्वचनं वञ्चना हास्यरोषकृत्"। "वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत्"। द्वितीयमुपलक्षणं यथा "भिक्षो! मांसनिषेवणं प्रकुरुषे किं तेन मद्यं विना मद्यञ्चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह। वेश्याप्यर्थरुचिः कुतस्तव धनं द्यूतेन चौर्य्येण वा चौर्य्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य

**वीरतर** न० वि+ईर–अच् तत०, वीर+वा तरप्। १वीरणे अमर। २शूरतरे च।

**वीरतरु** पु० वि+ईर–अच् कर्म०। १अर्जुनवृक्षे अमरः। २कोकिलाक्षे ३भल्लातके (भेला) ४बिल्वभेदे च राजनि० वीरवृक्षादयोऽप्यत्र।

**वीरपत्नी** स्त्री वीरः पतिर्यस्याः वा नुक् ङीप् च। वीरभार्य्यायाम् अमर। पक्षे वीरपति तत्रार्थे।

**वीरपत्रा** स्त्री वीरयति वीर–अच् तथाभूतं पत्रं यस्याः। विजयायाम् भङ्गे राजनि०।

**वीरपान(ण)** न० वीराणां पानं वा णत्वम्। युद्धाय युद्धखेदापनुत्तये वा सुरापानादौ अमरः।

**वीरभद्र** पु० वीरो भद्रोऽस्य। १अश्वमेधीयेऽश्वे २वीरेषु भद्रे ३वीरणे मेदि०। ४शिवगणभेदे तदुत्पत्तिकथा काशीख० ८९अ०। "महावीरोऽपि रे भद्र! मम सर्वगणेष्विह। वीरभद्राख्यया हि त्वं प्रार्थितं परमां मम। कुरु मे सत्वरं कर्म दक्षयज्ञक्षयं नय"। स्वार्थे क। वीरभद्रक वीरणे जटा०।

**वीरभार्य्या** स्त्री ६त०। वीरपत्न्याम् अमर०।

**वीरमातृ** स्त्री ६त०। वीरस्य जनन्याम् अमर०।

**वीररजस्** न० वीर इव रजः रक्तत्वात्। सिन्दूरे राजनि०।

**वीररेणु** पु० वीरयति वीरो रेणुर्भिमर्दनं यस्य। भीमसेने त्रिका०।

**वीरवत्** त्रि० वीरोऽस्त्यस्य मतुप् मस्य वः। १वीरयुते स्त्रियां ङीप्। "वीरवती न भूमि" भट्टिः। सा च २मांसरोहिण्यां भावप्र०।

**वीरवत्सा** स्त्री वीरो वत्सो यस्याः। वीरमातरि शब्दा०।

**वीरबाहु** पु० विष्णौ विष्णुस०।

**वीरविप्लावक** पु० "वीरविप्लायको यस्तु धनं शूद्रसमाहृतं" हेमच० उक्ते शूद्राद्गृहीतधनेन होमकर्त्तरि।

**वीरवृक्ष** पु० नित्यकर्म०। १भल्लातकवृक्षे अमरः। २अर्जुनवृक्षे हेमच० ३बिल्वभेदे। राजनि० (देधान) ४धान्यभेदे रत्नमाला।

**वीरसू** स्त्री वीरं सूते सू+क्विप्। वीरमातरि अमर०।

**वीरसेन** पु० वीरा सेना यस्य। १नलराजजनके नृपभेदे भा० व० ५२अ०। २आरुकवृक्षे न० राजनि०।

**वीरहन्** पु० वीरयति शौर्य्यान्वितं करोति वीर+णिच् क्विप्। वीरो यज्ञाग्निस्तं हतवान् हन–क्विप्। नष्टाग्नौ विप्रे अमरः। २विष्णौ विष्णुस०।

**वीरा** स्त्री वि+ईर–अच्, वीर–अच् वा वीर+अस्त्यर्थे अच् वा। १सुरामामगन्धद्रव्ये २क्षीरकाकोल्याम् ३आमलक्याम्। ४एलबालुकायां ५पतिपुत्रवत्यां स्त्रियां ६रम्भायां ७विदार्य्याम् ८दुग्धिकायाम् ९क्षीरविदार्य्याम् १०मदिरायां मेदि०। ११काकोल्यां १२महाशतावर्य्यां १३घृतकुमार्य्याम् १४ब्राह्म्याम् १५अतिविषायां १६मदिरायाञ्च राजनि०। १७शिंशपावृक्षे (शिशु) रत्नमा०।

**वीराणक** पु० वीरयति शौर्य्यान्वितं करोति वीर+णिच् अच् कर्म०। कल्पतरौ राजनि०। भयङ्करे युद्धक्षेत्रे अमर।

**वीराशंसन** न० वीरैराशस्यतेऽत्र आ+शन्स–आधारे ल्युट्।

**वीरासन** न० वीरस्येवासनम्। "एकपादमथैकस्मिन् विन्यस्योरुसंस्थितम्। इतरस्मिन् तथा पश्चात् वीरासनमिति स्मृतम्" इत्युक्ते आसनभेदे तन्त्रम्। २भित्त्याद्यनवलम्बनेन स्थितौ "रात्रौ वीरासनं वसेत्" मनुव्या० कुल्लू०।

**वीरुध्(धा)** स्त्री वि+रुध–क्विप् दीर्घः वा टाप्। विस्तृतायां लतायाम् अमरः।

**वीरेश्वर** त्रि० ६त०। १वीरपतौ काशीस्थे २शिवलिङ्गभेदे पु० तदाविर्भावकथा काशीख० ८२अ० दृश्या।

**वीरोज्झ** पु० वीरा यज्ञाग्निस्तमुज्झति यथाकालमनुष्ठानेन उज्झ–अण्। प्रातःसायं होमाकर्त्तरि हेमच०।

**वीरोपजीविक** पु० वीरः यज्ञाग्निस्तद्वाध्यमग्निहोत्रादि उपजीविका यस्य। दम्भार्थमग्निहोत्रानुष्ठायिनि हेमच०।

**वीर्य्य** न० वीर–यत्, वीरस्य भावो यत् वा। १देहस्थे चरमधातौ शुक्रे २पराक्रमे ३बले ४प्रभावे अमर। ५तेजसि मेदि० ६दीप्तौ ७द्रव्यनिष्ठे रसविपाकादि शक्तिरूपे प्रभावभेदे सुश्रुतः "वीर्य्यं प्रधानमिति कस्मात् इह औषधकर्म्मनिष्पत्तेः। इहौषधकर्म्माण्यूर्द्ध्वाधोभागोभयभागसंशोधनसंशमनसंग्राहकाग्निदीपनप्रपीडनलेखनबृंहणरसायनवाजीकरणश्वयथुकरविलयनदहनदारणमादनप्राणघ्नविषप्रशमनानि वीर्य्यप्राधान्याद्भवन्ति। तच्च वीर्य्यं द्विविधमुष्णं शीतञ्चाग्नीषोमीयत्वाज्जगतः। केचिदष्टविधमाहुः शीतं स्निग्धं रूक्षं विशदं पिच्छिलं मृदु तीक्ष्णं चेत्येतानि वीर्य्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म्म कुर्वन्ति यथा तावन्महत् पञ्चमूलं कषायं तिक्तानुरसं वातं शमयेदुष्णवीर्य्यत्वात् तथा कुलत्थः कषायकटुकत्वात्, पलाण्डुः स्नेहभावाच्च मधुरश्च इक्षुरसो वातं वर्द्धयति शीतवीर्य्यत्वात्। कटुका पिप्पली पित्तं शमयति मृदुशीतवीर्य्यत्वादम्लमाम-

वृक्षभवन न० ७त०। वृक्षस्य कोटरे शब्दरत्नावली।

वृक्षभक्षा स्त्री वृक्षो भक्ष्यो वेष्टकत्वात् भोजनीय इव यस्याः। वन्दाकायाम् (परगाछ) भावप्र०।

वृक्षभेदिन् पु० वृक्षं भिनत्ति भिद्–णिनि। वृक्षभेदके १अस्त्रभेदे अमरः। २टङ्के हेमच०। [शब्दच०।

वृक्षभू पु० वृक्षस्य स्थले भूमौ भवति भू–क्विप्। जलवेतसे

वृक्षरुहा स्त्री वृक्षे रोहति रुह–क। १वन्दायाम् अमरः २अमृतस्रवायाञ्च राजनि०।

वृक्षवाटिका स्त्री वृक्षैर्वाटीव संवृतत्वात् स्वार्थे कन्। अमात्यगणिकोपसेव्ये गृहसमीपस्थे उपवने अमरः।

वृक्षादन पु० वृक्षमत्ति भिनत्ति अद ल्यु। १कुठारास्त्रे (नेहाचि) अमरः। वृक्षान्तरमत्ति भिनत्ति। २अश्वत्थवृक्षे ३मधुच्छत्रे ४कुठारे च मेदि०। ५पियालवृक्षे धरणिः। ६वृक्षविदारके त्रि० ७वन्दाकायां स्त्री गौरा० ङीष्।

वृक्षाम्ल न० वृक्षमाश्रितमम्लम्। (तेतुल) १वृक्षशाखाऽम्लप्रधाने वृक्षे अमरः। २चुक्राम्ले च।

"वृक्षाम्लमामसस्नोष्णं वातघ्नं कफपित्तलम्। पक्वन्तु गुरु सङ्ग्राहि कटुकं तुवरं लघु। अम्लोष्णं रोचनं रूक्षं दीपनं कफवातहृत्। तृष्णार्शोग्रहणीगुल्मशूलहृद्रोगजन्तुजित्" भावप्र०।

वृक्षार्हा स्त्री० वृक्षेषु अर्हा पूज्या। महामेदायां राजनि०।

वृक्षाश्रयिन् पु० वृक्षमाश्रयति आ+श्रि–णिनि। १खगे २क्षुद्रोलूके राजनि०।

वृक्षोत्पल पु० वृक्षे उत्पलमिव। कर्णिकारवृक्षे रत्नमा०।

वृच वृतौ रु०पर०सक० सेट्। वृणक्ति। अवर्चीत्। ईदित् निष्ठा अनिट् वृक्त।

वृज त्यागे अदा०आ०सक०सेट् ईदित्। वृङ्क्ते अवर्जिष्ट नेदिष्टयवम्। वृक्ते अवर्जिष्ट ईदित् निष्ठा अनिट् वृक्त।

वृज त्यागे वा चु० उभ० पक्षे भ्वा०पर०सक० सेट्। वर्जयति ते वर्जति। अववर्जत्–अवीवृजत्। अवर्जीत् ईदित्। वर्जितः भ्वा० निष्ठा अनिट्। वृक्तः।

वृज वृतौ, त्यागे च रु०पर०सक०सेट्। वृणक्ति। अवर्जीत्। ईदित् निष्ठा अनिट्। वृक्तः।

वृजन न० वृज्यतेऽत्र वृज–ल्युट्। १पापे उणादि० २आकाशे सि०कौ०। ३केशे पु० ४कुटिले त्रि० उणादि०।

वृजिन न० वृज–इनच् किच्च। १पापे अमरः। २भुग्ने त्रि० हेमच०। ३केशे पु० ४कुटिले त्रि० मेदि०।

वृण भक्षणे तना०उभ०सक० सेट्। वर्णोति वर्णीति वृणुते अवर्णीत् अवर्णिष्ट। उदित् क्त्वा वेट्। [illegible]

वृत दीप्तौ चु० उभ० सक० सेट्। वर्त्तयति ते अवीवृतत् त

वृत वर्त्तने भ्वा० आत्म० लुङि लृटि लृङि च उभ० अक० सेट्। वर्त्तते। अवृतत् अवर्त्तिष्ट लृटि लृङि च पर० नेट् वर्त्स्यति वर्त्तिष्यते। सनि च तथा विवर्त्तिषते, विवृत्सति। उदित् क्त्वा वेट्।

वृत संभक्तौ, वरणे च दि० आत्म० सक० सेट्। वृत्यते अवर्त्तिष्ट। उदित् क्त्वा वेट्। [धातुपाठः।

वृत् त्रि० वृत+भूते–क्विप्। वृत्ते अतीते "वृत् वृत्तादि" पा०

वृत त्रि० वृ–क्त। १प्रार्थिते २वर्त्तुले ३कृतादरे प्रार्थनादिना कृतनियोगे ४आवृते च अमरः। [राजनि०।

वृतपत्रा स्त्री वृतम् आवृतं पत्रं यया। पुत्रदात्र्यां लतायां

वृति स्त्री वृ–क्तिन्। वेष्टने (बेड) "वृतिश्च तत्र कुर्वीत" याज्ञ०

वृतिङ्कर पु० वृतिं करोति कृ–खच्। विकङ्कते (वँइचि) शब्दच०

वृत्त न० वृत–भावे क्त। "गुरुपूजा दया शौचं सत्यमिन्द्रियनिग्रहः। प्रवर्त्तनं हितानाञ्च तत्सर्वं वृत्तमुच्यते" इत्युक्ते १चरित्रभेदे २पद्यभेदे "पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा। वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत्। समम् अर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा" छन्दो० ३वृत्तौ च। वृत–कर्त्तरि क्त। ४अतीते ५दृढे ६वर्त्तुले ७कृतावरणे च त्रि० भरतः। ८अधीते ९मृते मेदि० १०जाते च त्रि० ११कूर्मे पु० राजनि०। १२रेणुकायां १३प्रियङ्गौ १४रोहिण्यां १५झिञ्झिरिष्टलतायां स्त्री राजनि०। तत्र वर्त्तुलाकारवस्तु यथा "वृत्तानि बाकमारस्तु ऋक्षधर्म्मिस्रपोटका। रथकूचावकतुलकर्कुलकुम्भकुम्भाण्डकादय। कर्णपाशभुजाणगालकुषायघटामयम्। घट्टिकापरिघायोगपट्टहाराङ्गद दय" कविकल्प० १६गोलाकारे क्षेत्रभेदे न० लीला०क्षेत्रफलं ४००० दृश्यम्।

वृत्तगन्धि न० वृत्तस्य पद्यस्येव गन्धो लेशोऽत्र इत् समा०। "भवत्युत्कलिकाप्राय समाढ्य दढाक्षरम्। वृत्तैकदेशसम्बन्धात् वृत्तगन्धि पुनः स्मृतम्" इत्युक्ते गद्यभेदे

वृत्ततण्डुल पु० वृत्ताः वर्त्तुलाः तण्डुला अस्य। यावनाले राजनि०।

वृत्तनिष्पाविका स्त्री वृत्ता वर्त्तुला निष्पाविका। श्वेतनिष्पाव्याम् राजनि०।

वृत्तपर्णी स्त्री वृत्तानि पर्णान्यस्याः ङीप्। १महाशणपुष्पिकायाम् २पाठायाञ्च (आकनादि) राजनि०।

वृत्तपुष्प पु० वृत्तानि वर्त्तुलानि पुष्पाण्यस्य। १शिरीषवृक्षे २कदम्बे ३वानीरे ४कुब्जके ५मुद्गरे च राजनि०।

**वृत्तफल** न० वृत्तं फलमस्य । १मरीचे २दाडिमे ३बदरे च । ४वार्त्ताक्याम् ५आमलक्याञ्च स्त्री टाप् राजनि० ।

**वृत्तमल्लिका** स्त्री वृत्ता मल्लिकेव । १श्वेतार्के २मोदिन्यां लतायां च राजनि० । [स्त्री राजनि० ।

**वृत्तबीज** पु० वृत्तानि बीजान्यस्य । १शिम्बिकायाम् २आढक्याम्

**वृत्तस्थ** त्रि० वृत्ते गुरुपूजादौ चरित्रे तिष्ठति स्था–क । वृत्तपदोक्तगुरुपूजादिचारित्ररते ।

**वृत्तान्त** पु० वृत्तो जातोऽन्तोनिर्णयो यस्मात् । १संवादे २वाचिकसन्देशे च अमरः । ३प्रक्रियायां ४कार्त्स्न्ये ५प्रस्तावे च मेदि० । ६अवसरे ७भावे ८एकान्ते च विश्वः ।

**वृत्ति** स्त्री० वृत-क्तिन् । १वर्त्तने २स्थितौ ३विवरणे च मेदि० । करणे क्तिन् ४जीविकायाम् अमरः । ५कौशिकीसात्वतीभारत्यारभट्याख्ये नाटकरचनाभेदे "शृङ्गारे कौशिकी, वीरे सात्वत्यारभटी पुनः । रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती । चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः" सा० द० । ६वेदान्तोक्ते अन्तःकरणादे परिणामभेदे च । अन्तःकरणवृत्तिस्वरूपप्रयोजनादिकं वेदा० प० दर्शितं यथा तडागोदकं छिद्रान्निर्गत्य यथा कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसमप्यन्तःकरणं चक्षुरादि द्वारा घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते स एव परिणामो वृत्तिरित्युच्यते । अनुमित्यादिस्थले तु अन्तःकरणस्य न वह्न्यादिदेशगमनं वह्न्यादेश्चक्षुराद्यसन्निकर्षात् । प० । इन्द्रियजन्यवृत्तिश्च आवरणभङ्गार्था सम्बन्धार्था इति मतद्वयं यथोक्तं तत्रैव उप० । "सा चान्तःकरणवृत्तिरावरणाभिभवार्थेत्येकं मतम् तथा हि अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरणमयावं मूलाविद्यापरतन्त्रमवस्थापदवाच्यमभ्युपगन्तव्यम् । एवं सति न सर्वदा घटादेर्भानप्रसङ्गः । अनावृतचैतन्यस्यैव भानप्रयोजकत्वात् तस्य चावरणस्य यदा तदा तस्मिन् कदाचिदपि घटभानं न स्यादिति तद्भङ्गे वक्तव्ये तद्भङ्गजनकं न चैतन्यमात्रं तत्प्रकाशस्य तदनिवर्त्तकत्वात् नापि वृत्त्युपहितचैतन्यं, परोक्षस्थलेऽपि तद्वृत्त्यापत्तेरिति परोक्षव्यावृत्तवृत्तिविशेषस्य तदुपहितचैतन्यस्य वा आवरणभङ्गकत्वमित्यावरणाभिभवार्था वृत्तिरित्युच्यते । सम्बन्धार्था वृत्तिरित्यपरं मतम् । तत्राविद्योपाधिर्जीवोऽपरिच्छिन्नः स च घटादिप्रदेशे विद्यमानोऽपि घटाद्यपरोक्षवृत्तिविरहदशायां न घटादिकमवभासयति घटादिना सम तस्य सम्बन्धाभावात् तत्तदाकारवृत्तिदशायां तु भासयति तदा सम्बन्धसत्त्वात्" । अतएवोक्तं "बुद्धिवृत्तिश्चिदाभासो द्वावेतौ व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येद् आभासात्तु घटः स्फुरेत्" इदञ्च प्रथममताभिप्रायम् अन्तःकरणवृत्तीनां भेदादिकं पातञ्जलादिदर्शितमन्तःकरणशब्दे १८४ पृ० दृश्यम् । "ब्रह्मण्यध्यानमात्राय वृत्त्यास्मिरमेधिता" वे० भा० । विप्रस्य जीविका यूपवृत्तिहरणे दोषो यथा "स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः । स हतस्तु इति ज्ञेयः फलं तत् श्रृणु भूमिप । यावन्तोरेणवः सिक्ता विप्राणां नेत्रविन्दुभिः । तावद्वर्षसहस्राणि हतपाके स तिष्ठति । तप्ताङ्गारञ्च तद्भक्ष्यं पानञ्च तप्तमूत्रकम् । तप्ताङ्गारे च शयनं ताड्यते यमकिङ्करैः । तदन्ते च महापापी विष्ठायां जायते कृमिः । षष्टिवर्षसहस्राणि देवमानेन भारते । ततो भूमिविहीनश्च प्रजाहीनश्च मानवः । दरिद्रः कृपणो रोगी शूद्रो निन्द्यस्ततः शुचिः" ब्रह्मवै० प्र० ६६ अ० ।

**वृत्तिकर्षित** त्रि० वृत्त्या कर्षितः । १विपन्ने २अल्पजीविके च । [३वरटे पु० स्त्री राजनि० स्त्रियां ङीप् ।

**वृत्तिस्थ** त्रि० वृत्तौ तिष्ठति स्था–क । १सत्कर्मानुष्ठायिनि

**वृत्र** पु० वृत-रक् । १अन्धकारे २रिपौ ३शब्दे ४दानवभेदे ५मेघे ६पर्वतभेदे मेदि० । ७इन्द्रे विश्वः । ८ध्वान्ते शि० को० ।

**वृत्रद्विष्** पु० वृत्र० । इन्द्रे हेमच० । वृत्ररिपादयोऽप्यत्र ।

**वृत्रहन्** पु० वृत्रं हतवान् हन-क्विप् । इन्द्रे अमरः ।

**वृथा** अव्य० वृ-थाल् किञ्च । निरर्थके अमरः ।

**वृथादान** न० कर्म० । १निष्फलदाने शास्त्रनिन्दिते देवपित्राद्यर्थभिन्नेषु कार्येषु २दानभेदे च ।

"देवपितृविहीनं यद्दीयतेऽथ खादीयतः । वृथानुकीर्त्तनाश्चैव वेदाभ्यसनवर्जिते । अन्यायोपार्जितं दानं व्यर्थं ब्राह्मणे तथा । गुरवेऽनृतयुक्ताय लोभाय पतिताय च । कृतघ्नाय च यद्दत्तं सर्वदा मध्यविदिषे । चालकाय च सर्वस्य हस्तया पतये तथा । परिचारकाय शत्राय कर्ण्य पिशुनाय च । इत्येतानि तु राजेन्द्र । वृथादानानि जोकृष्ण" वह्निपु० । "न्यायेनापि यद्दत्तं तदप्रतिपर्यपि पुनरोपहर्त्तव्यं यत् न्यायेन दत्तं तदप्यपोहकारमपि प्रत्याहर्त्तव्यमेव इत्यादौ वृथा भवति । नारदेन च 'दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम्' इति प्रतिपाद्य दत्तादत्तयोः स्वरूप विस्तरं यथा

मैथुनं निद्रा सद्यः प्राणहराणि षट्" चाणक्यनीतिसारः

वृद्धि स्त्री वृध–क्तिन्। १सम्पत्तौ २अभ्युदये मेदि० ३समृद्धौ ४समूहे च। वृध–कर्त्तरि क्तिच्। ५ओषधिविशेषे ऋद्धिशब्दे १४४७ पृ० तद्गुणादि दृश्यम्। (कोरन्द) ६रोगविशेषे तन्निदानादि भावप्र० उक्तं यथा "तत्र वृद्धेर्निदानं संख्याञ्चाह 'दोषास्रमेदोमूत्रान्त्रैः वृद्धिः सप्तधा गदः। मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम्। वृद्धिं करोति कोषस्य फलकोषाभिवाहिनीम्। रुद्ध्वा सङ्गतिर्वायुर्धमनीः शुक्रगामिनीः"। तत्र वातिकमाह "वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक्"। अहेतुरुक् अकस्मादर्थे नञ्। तेन स्वल्पादपि विप्रकृष्टात् कारणात् रुक् पीडा यत्र सः। अथ पैत्तिकमाह "पक्वोदुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान्"। दाहः अभ्यन्तरः ऊष्मा बहिस्तप्तता। अथ श्लैष्मिकमाह "कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक्"। अथ रक्तजमाह "कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तज"। कृष्णस्फोटावृत इति पैत्तिकोद्भवः। मेदोजमाह "कफवन्मेदसो वृद्धिर्मृदुस्तालफलोपमः"। मीव-वर्त्तुलः। मूत्रजमाह "मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः। अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ्मृदुः। मूत्रकृच्छ्रमधः कुर्यात् चलयन् फलकोषयोः"। चलयन् फलकोषयोरधः मूत्रकृच्छ्रं मूत्रेण व्यथां कुर्यादित्यर्थः। अथान्त्रवृद्धिमाह "वातकोपिभिराहारैः शीततोयावगाहनैः। धारणेरणभाराध्वविषमाङ्गप्रवर्त्तनैः। क्षोभणैः क्षोभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा। पवनो विगुणीकृत्य स्वनिवेशादधो नयेत्। कुर्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा"। धारणम् उपस्थितस्य वेगस्य। ईरणम् अनुपस्थितस्य वेगस्य प्रेरणम्। विषमाङ्गप्रवर्त्तनं वक्रत्वेनाङ्गमोटनम्। अन्यानि क्षोभणानि मल्लद्विपहस्तादिवधुराधर्षणादीनि तैः क्षोभित सन्दुष्य सञ्चितः पवनः यदा क्षुद्रान्त्रावयवं विगुणीकृत्य स्वनिवेशादधो नयेत्। तदा वङ्क्षणसन्धिस्थः अन्त्रवृद्धिरोग। तस्यावस्थामाह "उपेक्ष्यमाणस्य मुष्कवृद्धिमाध्मानरुक् स्तम्भवतीं स कुर्यात्। प्रपीडितोऽन्तः स्वनवान् प्रयाति प्रध्मापयन्नेति पुनश्च मुक्तम्"। तत्राध्मानपदे रुग् मुष्कयोर्मुष्कयोः स्तम्भो गात्रे तद्युक्तां कुर्यादित्यर्थः। भोजोऽप्याह "अन्त्रं विगुणमादाय यातो नयति वङ्क्षणम्। वङ्क्षणात् तद्गुणायुक्त फलकोष प्रपद्यते" इति। स मुष्कवृद्धिरोगः अन्त्रं उदरे प्रध्मापयन् आगमनमार्गं निरुद्धं कुर्वन् एति आयाति। असाध्यमाह स कीदृक् आदित्याकाङ्क्षायामाह "यस्यान्त्रावयवास्त्वेषो मुष्कशोथतयस्थयात्। अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः"। वातवृद्धिसमाकृतिरिति योऽन्त्रवृद्धिरोगः सोऽसाध्या वातवृद्धिसमाकृति"। अन्त्रवृद्धिशब्दे २०८ पृ० अनुतोक्तं दृश्यम्। नीतिशास्त्रादिसिद्धान्तगते ७वर्गघटकपदार्थे "क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्" अमरः। "कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्। खन्याकरबलादानं सैन्यानाञ्च निवेशनम्"। एतेषामष्टानामन्यतमस्य क्षय स्थान वृद्धिश्चेत्यर्थः। ८कुसीदे (सुद) वृद्धिस्वरूपभेदादिकं वीरमि० उक्तं यथा नारदः "वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधाऽन्यैः प्रकीर्त्तिता। षड्विधाऽन्यैः समाख्याता तत्त्वतस्तां निबोधत" इति। षड्विधा मे इति क्वचित् पाठः तत्र मे मते। तान् प्रकारान् स एवाह "कायिका१ कालिका२ चैव चक्रवृद्धिरतोऽपरा३। कारिता४ शिखावृद्धि५ र्भोगलाभस्तथैव च६ इति"। एतेषां स्वरूपमाह "कायिका कर्मसंयुक्ता मासग्राह्या तु कालिका। वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता। प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा स्मृता। गृहात्क्षेत्राच्च यल्लाभं भोगलाभः प्रकीर्त्तितः" इति। कायिका कर्मसंयुक्ता यत्र बन्धकीकृतस्य गवाश्वादेर्दोहनवाहनादिकं कर्म वृद्धित्वेन परिकल्पितं तत्र सा कायिकेत्यर्थः। तथा च व्यासः "दोह्यवाह्यकर्मयुता कायिका समुदाहृतेति"। मदनरत्ने तु भोग्याधितया स्थापितस्य यो दोहनवाहनादिकर्मरूपो भोगस्तत्फलिका या वृद्धिः सा कायिकेत्युक्तम्। मासग्राह्या तु कालिका प्रतिमासं लभ्या या वृद्धिः सा कालिकेत्यर्थः। "प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मतेति" नारदवचनात्। वृद्धेर्वृद्धिश्चक्रवृद्धिः। वृद्धेरपि प्रतिमासं मूलभावेन पुनर्वृद्धिरित्यर्थः। "वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृतेति" नारदवचनात्। कारिता ऋणिना कृता। ऋणिनाऽधमर्णेन स्वेच्छया कृता वृद्धिः कारितेत्यर्थः। "वृद्धिः सा कारिता नाम यर्णिकेन स्वयं कृतेति" नारदवचनात्। अधमर्णकारितैव वृद्धिर्वा नोत्तमर्णकारिता तथा च वृहस्पतिः "ऋणिकेन तु या वृद्धिरधिका सम्प्रकल्पिता। आपद्कालकृता नित्यं दातव्या सा तु का-

इति । कुप्यं त्रपुसीसकादिकम् । मद्यं खेतफलम् । तथा गोवलीवर्दन्यायाद्धान्यव्यतिरिक्तं पुष्पमूलफलादिकम् । वाह्योऽश्वादिः । लवो मेषोष्ट्रचमरीकेशादि । अत्र चिरकालशब्देन प्रतिश्रुतायाः अशीतिभागायाः वृद्धेर्यस्मिन् समये द्वैगुण्यादिप्रापकत्वं सम्भवति । ततोऽधिकः कालो गृह्यते । यत्तु "धान्ये शदे लवे वाह्ये" इत्यादिमनुनोक्तं तत्प्रत्यर्पणसमये समृद्धाधमर्णविषयम् । पाञ्चगुण्याभिधानपरमिति मदनरत्ने । यत्तु वशिष्ठवचनम् "द्विगुणं हिरण्यं त्रिगुणं धान्यं धान्येनैव रसा व्याख्याताः । पुष्पमूलफलानि च तुलाधृतमष्टगुणमिति" तत्त्रिगुणमेव धान्यादिकं दातव्यमिति यत्र देशे स्थितिस्तद्विषयम् । दरिद्राधमर्णविषयं वा एवमन्यत्रापि न्यूनाधिकपरमवृद्धिप्रतिपादकानि वचनानि देशविशेषविषयतया दरिद्रादिविषयतया वा व्यवस्थापनीयानि । व्यासोऽपि "वदन्त्यष्टगुणान् काले मद्यस्नेहरसासवानिति" स्नेहस्तैलादिः । रस क्षीरादिः । कात्यायनोऽपि "तैलानाञ्चैव सर्वेषां मद्यानामथ सर्पिषाम् । वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य चेति" । विष्णुरपि "हिरण्यस्य द्विगुणा वृद्धिस्त्रिगुणा वस्त्रस्य धान्यस्य चतुर्गुणा रसस्याष्टगुणा सन्ततिः स्त्रीपशूनामिति" । व्यासोऽपि "शाकपाशयवोलेख्यौ षड्गुणा परिकीर्त्तिते"ति । वशिष्ठोऽपि "वज्रमुक्ताप्रवालानां हेम्नश्च रजतस्य च । द्विगुणा लिख्यते वृद्धिः कृतकालानुसारिणीति" । शुक्तिशब्देनात्र मुक्ताफलं लक्ष्यते वज्रसाहचर्य्यात् । अतएव कात्यायनः "मणिमुक्ताप्रवालानां सुवर्णरजतस्य च । तिष्ठतो द्विगुणा वृद्धिः फलकीटाविकस्य चेति" । कीटजं कीटोद्भवम् पट्टसूत्रादि । आविकं कम्बलादिकम् । वशिष्ठोऽपि "ताम्रायःकांस्यरीतीनां त्रपुणः सीसकस्य च । त्रिगुणा तिष्ठतो वृद्धिः कालाच्चिरकृतस्य तु" इति । रीतिरारकूटम् । देशभेदेन परां वृद्धिं दर्शयति नारदः "ऋणानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः । देशाचारस्थितिस्त्वन्या यत्रर्णमवतिष्ठते । द्विगुणं त्रिगुणञ्चैव तथान्यस्मिंश्चतुर्गुणम् । तथाष्टगुणमन्यस्मिन् तत् तु देशेऽवतिष्ठते" इति । यत्र वृद्धिविशेषो न श्रूयते तत्र द्विगुणैव ग्राह्येत्याह विष्णुः "अनुक्तानां द्विगुणेति" अयञ्च द्वैगुण्यादिरूपो वृद्ध्युपरमः सकृत्प्रयोगे सकृदाहरणे वेदितव्यः तथा च मनुः "कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहितेति" । उपचयार्थं प्रयुक्तं द्रव्यं

कुसीदं तस्य वृद्धिं कुसीदवृद्धिर्द्वैगुण्यं नात्येति नातिक्रामति । यदि सकृदाहिता सकृत् प्रयुक्ता पुरुषान्तरसङ्क्रमणादिना प्रयोगान्तरकरणेन तस्मिन्नेव वा पुरुषेरेकैकाभ्यां प्रयोगान्तरकरणे द्वैगुण्यमतिक्रम्य पूर्ववर्द्धत एवेत्यर्थः । द्वैगुण्यपदं त्रैगुण्यादीनामुपलक्षणम् । सकृदाहृतेति पाठे यदि प्रतिमासं प्रतिवत्सरं वा न गृह्यते किन्तु सकृद् गृह्यते तदा द्वैगुण्यमतिक्रामतीत्यर्थः । गौतमोऽपि "चिरस्थाने द्वैगुण्यं प्रयोगस्येति" । प्रयोगस्येत्येकवचननिर्देशात् प्रयोगान्तरकरणे द्वैगुण्यातिक्रमः. चिरस्थान इति निर्देशात् शनैः शनैर्वृद्धिग्रहणे द्वैगुण्यातिक्रमो भवतीति सूचितम् । उक्तस्य वृद्ध्युपरमस्य क्वचिद् द्रव्यविशेषेऽपवादमाह वृहस्पतिः "तृणकाष्ठेष्टकासूत्रकिण्वचर्म्मास्थिवर्म्मणाम् । हेतिपुष्पफलानाञ्च वृद्धिस्तु न निवर्त्तते" । किण्वं सुराद्रव्योपादानकारणभूतो मलविशेषः चर्म्म शरादिनिवारकफलकः वर्म्म कवचम् । हेतिरायुधम् । पुष्पफलयोर्वृद्धेरनिवृत्तिः प्रतिदानवेलायामसम्पन्नाधमर्णविषया देशविशेषविषया वा वेदितव्या । अन्यथा त्रिगुणवृद्धिप्रतिपादकव्यासवचनविरोधः स्यात् । विष्णुरपि "किण्वकार्पाससूत्रचर्म्मायुधेष्टकाङ्गाराणामक्षयेति" । कार्पासे तु षड्गुणवृद्धिविधायकव्यासवचनविरोधः पूर्ववत्परिहरणीयः । वशिष्ठोऽपि "दन्तचर्म्मास्थिशृङ्गाणां मृण्मयानान्तथैव च । अक्षया वृद्धिरेतेषां पुष्पमूलफलस्य च" इति । अक्षया मूलप्रतिपादनाभावे शतगुणापि वर्द्धत एवेत्यर्थः । विश्वासवृद्ध्यादीनामनुपरममाह वृहस्पतिः "विश्वासवृद्धिर्दायिकाश्च भोगलाभं तथैव च । धनी तावत् समादद्याद् यावन्न मूलं न शोधितम्" । न शोधितञ्च प्रतिदत्तमूल्येनेत्यर्थः । कश्चिदनङ्गीकृतापि वृद्धिर्भवतीत्याह विष्णुः "यो गृहीत्वा ऋणं पूर्वं श्वो दास्यामीति सामकम् । न दद्याल्लोभतः पश्चात्तदह्नाद् वृद्धिमाप्नुयात्" इति । श्व इति प्रतिश्रुतस्य प्रतिदानकालावधेरुपलक्षणम् । समकेन सामकम् अवृद्धिकमिति यावत् । योऽमुष्मिन् दिने समर्पयाह त्वदीयं धनं पूर्णं समर्प्य दास्यामीति प्रतिज्ञाय ऋणं गृहीत्वा पश्चाल्लोभाद्विलम्बं कुर्य्यात् सोऽवधिदिनमारभ्य वृद्धिं दद्यादित्यर्थः । कालावध्यनङ्गीकारेण गृहीतस्य धनस्य षण्मासादूर्द्ध्वं वृद्धिर्भवतीत्याह नारदः "न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् । अना-

कारितमप्यूर्द्ध्वं वत्सरार्द्धाद्विवर्द्धते” इति । अनाकारिता अनङ्गीकृता । प्रीतिदत्तानां प्रतियाचनप्रतिदानदिनादिसङ्केतशून्यानामिति शेषः । अनाकारितेत्यादेरयमर्थः । वृद्धिमकृत्वा स्वीकृतमपि षण्मासादूर्द्ध्वं प्रीतिदत्तं वृद्धिं प्राप्नोतीति । प्रतियाचितस्य प्रीतिदत्तस्यादाने वृद्धिविशेषमाह कात्यायनः “प्रीतिदत्तं न वर्द्धेत यावन्न प्रतियाचितम् । याच्यमानमदत्तञ्चेद्वर्द्धते पञ्चकं शतम्” इति । पञ्चकं पञ्चाधिकम् प्रतियाचनदिनमारभ्य प्रतिशतस्य पञ्च पञ्च प्रतिमासं वर्द्धन्ते इत्यर्थः । याचितकं स्वीकृत्य अप्रतिदत्त्वैव देशान्तरगमने विशेषमाह कात्यायनः “यो याचितकमादाय तमदत्त्वा दिशं व्रजेत् । ऊर्द्ध्वं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात्” इति । एतच्चाप्रतियाचितविषयम् । प्रतियाचिते याचितकमदत्त्वा यदि देशान्तरं व्रजति तदा विशेषमाह स एव “कृतोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् । ऊर्द्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात्” इति । कृतोद्धारं याचितकं स्वीकृत्य याचितोऽप्यदत्त्वेत्यन्वयः । देशान्तरगमनाभावे तु याचितकालमारभ्य याचितकस्य वृद्धिविशेषमाह स एव “स्वदेशेऽपि स्थितो यस्तु न दद्यात् याचितः क्वचित् । तं ततोऽकारितां वृद्धिमनिच्छन्तञ्च दापयेत्” इति । ततः प्रतियाचनकालादारभ्येत्यर्थः । एतद्वृद्धिरवधिपरिच्छेदात् याच्ञाप्राप्येयम् । अवधि स्वीकृत्य तदतिक्रमे तदतिक्रमदिनमारभ्य वर्द्धनस्य वृद्धिर्ज्ञेया । “तदूर्द्ध्वं वृद्धिमाप्नुयादिति” न्यायसाम्यात् । स्वीकृतपण्ये मूल्यमदत्त्वा देशान्तरगमने वृद्धिविशेषमाह स एव “पण्यं स्वीकृत्य यो मूल्यमदत्त्वैव दिशं व्रजेत् । ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात्” इति । एतच्चाप्रतियाचितविषयम् । प्रतियाचने स्वदेशे निक्षिप्तवृद्धिशेषयाच्ञा तद्दिनमारभ्य प्रतिमासं शते पञ्चकं वर्द्धते इत्याह स एव “निःक्षिप्तं वृद्धिशेषञ्च क्रयविक्रय एव च । याच्यमानमदत्तञ्चेद्वर्द्धते पञ्चकं शतम्” इति । नन्वकृतायां वृद्धौ परिमाणविशेषस्यानुक्तेः किं परिमाणं ग्राह्यमिति चेत् । अशीतिभागो वृद्धिः स्यादित्यादि याज्ञवल्क्याद्युक्तपरिमाणं ग्राह्यमिति ब्रूमः । अतएव विष्णुः “वृद्धिं दद्युर्वत्सरातिक्रमे यथाभिहितामिति” । वत्सरातिक्रम इति यत्र वत्सरातिक्रमे वृद्धिरुक्ता तत्रोपलक्षणम् । यथाभिहितां धर्मशास्त्रे इति शेषः । धर्मशास्त्रे यथोक्तां तथाविधामित्यर्थः । नतु यथाभिहितामित्यस्यार्थिप्रत्यर्थिनोरन्यतरेण मध्यस्थेन वाभिहिता इत्यादिरर्थः कथन्न भवति अतिप्रसङ्गापत्तेः । “कृतानुसारादधिका व्यतिरिक्ता न सिद्ध्यति । कुसीदपथमाहुस्तं पञ्चकं शतमर्हतीति मनूक्तेश्च । अस्यार्थः । शास्त्रविधिनियमितशास्त्रकृतवृद्ध्यनुसारी यो वृद्धिपक्षे लौकिकानां समाचारः तस्मादधिका वृद्धिरुत्तमर्णादिरकृतवृद्धौ न सिद्ध्यति यतः सा व्यतिरिक्ताधर्मशास्त्रबाह्या । अतएव कुसीदपथमाहुस्तत् अधर्मपथमिति । पञ्चकं शतमर्हतीति प्रतियाचितविषयमिति स्मृतिचन्द्रिकायाम् । पूर्वोक्तशास्त्रानुसारादधिकाऽधमर्णेनाकृता वृद्धिर्न सिध्यति । यतः कुसीदपथमाहुस्तम् । यदा तु व्यवहारादस्मादुत्तमर्णोऽधिकमधमर्णेनाकारितं लाभमिच्छति तदा त्वाह्रूपे पञ्चकं शतं गृह्णीत नर्हेति न ततोऽधिकमधमर्णाकारितमित्यर्थमाह रत्नाकरः । अकृतवृद्धेरपवादमाह नारदः “पण्यमूल्यं भृतिन्यासो दण्डो यच्च प्रकल्पितम् । वृथादानाक्षिकपणा वर्द्धन्ते नाविवक्षिताः” इति । पण्यञ्च वस्त्रादेर्मूल्यम् । भृतिर्वेतनम् । न्यासो निक्षेपः । वृथादानं वेश्यादिभ्यः प्रतिश्रुतम् । आक्षिकपणो द्यूतद्रव्यम् । अविवक्षिताः । अत्र पण्यमूल्यस्य वृद्धेरभावोक्तिः प्रत्याचनाभावे वेदितव्या अन्यथा पूर्वोक्तकात्यायनवचनेन विरोधः स्यात् । न्यासस्य च वृद्ध्यभाववचनं प्रतियाचनाभावे “न वृद्धिः स्त्रीधने लाभे निःक्षिप्ते च यथास्थिते । सन्दिग्धे प्रातिभाव्ये च यदि न स्यात् स्वयं कृतम्” इति संवर्त्तवाक्ये यथास्थितमिति विशेषणोपादानात् व्यक्तप्रत्यवहाराभावे च ज्ञातव्यम् । तथा च निक्षिप्तं वृद्धिशेषञ्चेत्यादि पूर्वोक्तकात्यायनवचनविरोधो न । कात्यायनोऽपि “वर्द्धयन्त्यावयुते पक्षमूले च सर्वदा । स्त्रीशुल्केषु न वृद्धिः स्यात् प्रातिभाव्यागतेषु च” इति । वर्त्तेष्वेव प्रतियाचनादेः परस्तादपि वृद्धिरकृता नाप्नोति । यद्यपि सर्वदेति सर्वशेषत्वात् पण्यमूल्येऽपि प्रतियाचनादेः परस्तादकृतवृद्ध्युपरमः प्रतिभाति । तथापि पूर्वोक्तकात्यायनवचनविरोधात् न तत्क्षेपता सर्वदेत्यस्य । अयन्तु पूर्वोक्त एव परिहारः । एवं वस्त्रोऽपि वृद्ध्यभावोक्तिः प्रतियाचनाभावे तदा च न तत्क्षेप्तापि । एवञ्च न पूर्वोक्तावृद्धिप्रतिपादकबृहस्पतिवचनविरोधः । अन्यत्रापि वृद्ध्यभावं व्यास आह “प्रातिभाव्यं ...

तस्य दिनद्वयं न वर्धते प्रयत्नस्य दत्त शुल्क प्रतिभु तम इति। भुक्तवस्त्वमित्यनेन स्थापितस्य गुप्राधेःस्त्रा लङ्कारादेरुपभोगे वृद्धिर्न भवतीत्युक्तम्। अतएव गौतम "भुक्ताधिर्न वर्द्धते वस्त्रालङ्कारादिरिति" अगृहीतस्य दिनद्वयं प्रतिदातुमिच्छोरधमर्णाद्दुत्तमर्णो वृद्धिलोभादिवशात् यदा न गृह्णाति तदा तस्य ततोऽपि दत्तदिनादारभ्य न वर्धेतेत्यर्थः। तथा च याज्ञवल्क्य "दीयमानं न गृह्णाति प्रयुक्तं यत् स्वकं धनम्। मध्यस्थस्थापितं तत्स्यात् वर्द्धते न ततःपरम्" इति। मध्यस्थस्थापितमिति विशेषणेनाधमर्णो यदि स्वनिकटे स्थापयति तदा भवत्येव वृद्धिरिति'। दायभागतत्त्वधृतव्यो पु०। १०धने च राजनि०।

**वृद्धिका** स्त्री वृद्धि+स्वार्थे क। वृद्धिनामकौषधे शब्दच०।

**वृद्धिजीविका** स्त्री वृद्धिरूपा जीविका। ऋणदानादिप्रयुक्तधनेभ्यो लब्धोपजीविकायाम्।

**वृद्धिश्राद्ध** न० वृद्धौ अभ्युदयाय श्राद्धम्। पुत्रादीनां संस्कारादौ पार्वणविधिके नान्दीश्राद्धे नान्दीश्राद्धशब्दे दृश्यम्

**वृद्धोक्ष** पु० कर्म० अच् समा०। जरद्गवे अमरः।

**वृद्ध्याजीव** त्रि० वृद्धिम् अधमर्णतः प्रयुक्तद्रव्याधिकलाभमाजीवति आ+जीव–अण्। वार्द्धुषिके अमरः।

**वृध** दीप्तौ चु० उभ० सक० सेट्। वर्द्धयति ते अवीवृधत् त अववर्द्धत् त।

**वृध** वृद्धौ भ्वा० आत्म० लुङि लृटि लृङि च उभ० अक० सेट् क्त्वा०। वर्द्धते अवर्दिष्ट अवृधत् अवर्द्धिष्ट वृतवत् वर्त्स्यति वर्द्धिष्यते। उदित् क्त्वा वेट्।

**वृधसान** पु स्त्री० वृध–आन असुक् च। मनुष्ये सि०कौ०। स्त्रियां ङीष्। [ उणादि०।

**वृधसानु** पु० वृध–आनु असुक् च। १पुरुषे २पत्रे ३क्रतौ च

**वृन्त** न० वृ–क्त नि०मुम् च। (बोंटा) फलपत्रादिबन्धने अमरः

**वृन्ताक** पु स्त्री० वृन्तमकति अक–अण्। वार्त्ताकौ शब्दच०। स्त्री राजनि०। स्त्रीत्वे गौरा० ङीष्।

**वृन्तिता** स्त्री वृन्त जातमस्याः तार०इतच्। कटुकायां शब्दच०

**वृन्द** न० वृणुते वृणाति वा–वृञ–वृञ वा दन् नि०। १समूहे अमरः। २दशार्बुदसङ्ख्यायां ज्योति० ३केदारकन्यायां ४तुलस्यां स्त्री शब्दच०। ५राधिकायां स्त्री वृन्दावनम्।

**वृन्दार** त्रि० वृन्दमृच्छति ऋ-अण्। मनोहरे शब्दच०।

**वृन्दारक** पु० वृन्देन कायति कै-क। १देवे अमरः। स्वार्थे क। २मुख्ये ३मनोहरे च त्रि० ४यूथपतौ पु० व्याडि।

**वृन्दावन** स्त्री वृन्दायाः तपस्यार्थं तत्क्रीडार्थं वा वनम् शा० त०। मथुरासन्निकृष्टे वैष्णवे १तीर्थभेदे गोलोकस्थे धामभेदे च "कमलांशा तस्य (केदारस्य) कन्या नाम्ना वृन्दा तपस्विनीत्युपक्रमे "वृन्दा यत्र तपस्तेपे तत्तु वृन्दावनं स्मृतम्। वृन्दया यत्र कृता क्रीडा तेन वा मुनिपुङ्गव!। राधाषोडशनाम्ना च वृन्दा नाम श्रुतौ श्रुतम्। तस्याः क्रीडा वनं रम्यं तेन वृन्दावनं स्मृतम्" ब्रह्मवै० जन्म० १७अ०। "नित्यं वृन्दावनं धाम ब्रह्माण्डोपरि संस्थितम्। पूर्णब्रह्मसुखैश्वर्यं नित्यमानन्दमव्ययम्। वैकुण्ठादि तदंशांशं स्वयं वृन्दावनं भुवि। गोलोकैश्वर्यं यत्किञ्चित् गोकुले तत् प्रकीर्त्तितम्। वैकुण्ठादिवैभवं यत् द्वारकायां प्रकाशयेत्। यद्ब्रह्म परमैश्वर्यं नित्यं वृन्दावनाश्रयम्। तस्मात् त्रैलोक्यमध्ये तु पृथ्वी धन्येति विश्रुता। यत्र श्रीमाथुरं धाम विष्णोरेकान्तवल्लभम्। स्वस्मादप्यधिकं नाम धेयं माथुरमण्डलम्। निगूढं परमं स्थानं पुर्य्यभ्यन्तरसंस्थितम्। सहस्रपत्रकमलाकारं माथुरमण्डलम्। विष्णुचक्रं परिभ्रामधाम वैष्णवमद्भुतम्। कर्णिकापत्रविस्तारं रहस्यक्रमसीरितम्। प्रधानं द्वादशारण्यं माहात्म्यं कथितं क्रमात्। भद्र१श्री२लौह३भाण्डीर४महा५ताल६खदीरकाः७। बकुल८कुमुद९ काम्य१०मधु११वृन्दावन१२तथा। द्वादशैता वने संख्याः कालिन्द्याः सप्त पश्चिमे। पूर्वे पञ्च वनं प्रोक्तं तत्रास्ति गुह्यमुत्तमम्। महावनं गोकुलाख्यं रम्यं मधुवनं तथा। पूर्वे तु पञ्च भद्राद्याः तालाद्याः सप्त पश्चिमे। अन्यच्चोपवनं प्रोक्तं कृष्णक्रीडारसस्थलम्। कदम्बखण्डिकं नन्दवनं नन्दीश्वरं तथा। नन्दनानन्दखण्डञ्च पाशाशाखोकवेतसम्। कुमुदिनाटनं कैलासस्मृतं भोजनस्थलम्। उपमसाधनं वत्सहरणं शेषशायनम्। श्यामपूर्व दधिग्रामं चक्रभानुपुरं तथा। सङ्केत विपटश्चैव बालक्रीडस्य भूषणम्। वेशकुसुम सरोवीरसत्तुकश्चापि नन्दनम्। इत्यमेव वने सस्मा[illegible]शोपवने कृता। पूर्वोक्तं द्वादशारण्यं प्रधानं वनमुत्तमम्। तत्रोत्तरे चतुर्थस्य वनस्य सहदाकृतम्। नाना विधरसक्रीडानानालीलामयस्थलम्। द्वविषट विस्ताररहस्यक्रमसीरितम्। सहस्रपत्रकमलं गोकुलाख्यं महत् पदम्। तत्रोपरि स्वर्णपीठे मणिमण्डपमण्डितम्। तत्र तत्र क्रमाद्दिक्षु विदिक्षु दलमीरितम्। यदक्ष दक्षिणे प्रोक्तं परं गुह्योत्तमोत्तमम्। तस्मिन्

दले महापीठं निगमागमदुर्गमम् । योगीन्द्रैरपि दुष्प्राप सर्वात्मा यत्र गोकुले । द्वितीयं दलमाग्नेयं तद्रहस्यं द्विधा तथा । निकुञ्जककुटीयोरकुटीरौ तद्दले स्थितौ । पूर्वदलं तृतीयं यत् प्रधानं स्थानमुच्यते । गङ्गादिसर्वतीर्थानां स्नानात्शतगुणं भवेत् । चतुर्थदलमैशान्यां सिद्धपीठं प्रसिद्धमदम् । कामयन्ती तत्र गोपी तत्र कृष्णपतिं लभेत् । वस्त्रालङ्कारहरणं तद्दले समुदाहृतम् । उत्तरं पञ्चमं प्रोक्तं दलं सर्वदलोत्तमम् । द्वादशादित्यमत्रैव दलस्य कर्णिकासमम् । वायव्यन्तु दलं षष्ठं तत्र कालीह्रदः स्मृतः । दलोत्तमोत्तमञ्चैव प्रधानं स्थानमुच्यते । सर्वोत्तमदलं श्रेष्ठं पश्चिमे सप्तमं दलम् । यज्ञपत्नीगणानाञ्च तदीप्सितवरप्रदम् । अघासुरस्य निर्वाणं यत्र त्रिदशदर्शितम् । ब्रह्ममोहनमत्रैव दलं ब्रह्महृदावहम् । नैरृत्यान्तु दलं प्रोक्तमष्टमं व्योमघातनम् । शङ्खचूडवधस्तत्र नानाकेलिरसस्थलम् । इत्यष्टदलं प्रोक्तं वृन्दारण्यान्तरस्थितम् । श्रीमद्वृन्दावनं धन्यं यमुनायाः प्रदक्षिणम् । शिवलिङ्गमधिष्ठाता इष्टो गोपीश्वराभिधः । तद्वाह्ये षोडशदलं श्रिया पूर्वं तदोरितम् । सर्वासु दिक्षु यत् प्रोक्तं मार्दवपद्माद्यं यथाक्रमम् । महत् पद महद्धाम प्रधानं षोडशं दलम् । प्रथमैकदलं श्रेष्ठं माहात्म्यं कर्णिकासमम् । तस्मिन् मधुवनं प्रोक्तं तत्र प्रादुरभूत् स्वयम् । चतुर्भुजो महाविष्णुः सर्वकारणकारणम् । तत्राधिष्ठितदेवः सुनिश्रेष्ठ । सनातनम् । दलं द्वितीयमाख्यातं किञ्चिल्लीलारसस्थलम् । खदिरारण्यमत्रैव दलस्य समुदाहृतम् । सर्वश्रेष्ठदलं प्रोक्तं माहात्म्यं कर्णिकासमम् । तत्र गोवर्द्धने रम्ये नित्यानन्दरसाश्रये । कर्णिकायां महालीला तल्लीलारससागरे । यत्र कृष्णो नित्यवृन्दाकाननस्य पतिर्भवेत् । कृष्णो गोविन्दतां प्राप्तः किमन्यैर्बहुभाषितैः । दलं तृतीयमाख्यातं सर्वश्रेष्ठोत्तमोत्तमम् । चतुर्थदलमाख्यातं महाद्भुतरसस्थलम् । हरिर्यस्य पतिः साक्षाच्चित्यं गोवर्द्धनं स्वयम् । कदम्बखण्डी तत्रैव पूर्णानन्दरसाश्रयम् । स्निग्धं हृद्यं प्रियं रम्यं दलस्य समुदाहृतम् । नन्दीश्वरदलं रम्यं तत्र नन्दालयं स्मृतम् । कर्णिकाष्टकमाहात्म्यं पञ्चमं दलमुच्यते । अधिष्ठातात्र गोपालो धेनुपालस्ततः परम् । दलं षष्ठं यदाख्यातं तत्र नन्दवनं स्मृतम् । सप्तमं वकुलारण्यं दलं रम्यं प्रकीर्त्तितम् । दशाष्टमं तालवनं तत्र धेनुवधः स्मृतः ।

नवमं कुमुदारण्यं दलं रम्यं प्रकीर्त्तितम् । काम्यारण्यं दलं हृद्यं दशमं सर्वकारणम् । ब्रह्मप्रसादनं तत्र विष्णुमन्दं प्रदर्शितम् । कृष्णक्रीडारसस्थानं प्रधानं दलमुच्यते । दलमेकादशं प्रोक्तं भक्तानुग्रहकारणम् । निर्वाणं सेतुबन्धस्य नानारसमयस्थलम् । भाण्डीरं द्वादशदलं वनं रम्यं मनोहरम् । कृष्णक्रीडारसस्तत्र श्रीदामादिभिरावृतः । त्रयोदशदलं श्रेष्ठं तत्र भद्रवनं स्मृतम् । चतुर्दशदलं प्रोक्तं सर्वसिद्धिप्रदं स्वयम् । श्रीवनं तत्र रुचिरं सर्वैश्वर्यस्य कारणम् । कृष्णलीलामयदलं श्रीकीर्त्तिकान्तिवर्द्धनम् । पञ्चदशं दलं श्रेष्ठं तत्र लोहवनं स्मृतम् । कथितं षोडशदलं माहात्म्यं कर्णिकासमम् । महावनं तत्र गीतं तत्रास्ति गुह्यगुह्यमम् । बालक्रीडारसस्तत्र वत्सपालैः समावृतः । पूतनादिवधस्तत्र यमलार्जुनभञ्जनम् । अधिष्ठाता तत्र बालगोपालं पञ्चमाब्दिकः । नाम्ना दामोदरः प्रोक्तं प्रेमानन्दरसार्णवम् । दलं प्रसिद्धमाख्यातं सर्वश्रेष्ठदलोत्तमम् । कृष्णक्रीडा च किञ्जल्के विहारस्थलमुच्यते । सिद्धिप्रधानं किञ्जल्कं दलस्य समुदाहृतम् । पद्मपु० पा०ख० ।

**वृन्दिष्ठ** त्रि० अतिशयेन वृन्दारको मुख्यः इष्ठन् वृन्दादेशः । अतिशयमुख्ये "वृन्दिष्ठमाश्नीत् वसुधाधिपानाम्" इति भट्टिः । ईयसुन् वृन्दीयानप्यत्र त्रि० स्त्रियां ङीप् ।

**वृश्च** वृतौ दिवा०पर०सक० सेट् । वृश्चति अवृश्चत् अवश्चीत् पुषादिरयमित्येके तेन अवृश्चदित्येव ।

**वृश्च** पु० वृश-क । १वासकवृक्षे भरतः । २वन्दूरे पुंस्त्री० शब्दच० स्त्रियां ङीप् । ३ओषधिभेदे स्त्री उणादि० ।

**वृश्चिक** पु० व्रश्च-किकन् । (विछा) १कीटभेदे राजनि० कीटशब्दे दृश्यम् । २शूककीटे ( शुयापोका ) अमरः । मेषादितः ३अष्टमे राशौ ज्यो० ४ओषधिभेदे मेदि० । ५मदनवृक्षे ६कर्कटे ७गोमयकीटे च भरतः । दशानिके संक्षिप्तसार ।

इषिकराशिच २१६०० कलात्मकस्य राशिचक्रस्य १२६० कलोपरि १८०० कलात्मक विशाखाशेषपादानुराधाज्येष्ठानक्षत्रात्मकः स च शीर्षोदय श्वेतवर्णं जलराशि उत्तरदिक्पति कफप्रकृति जलमयं बहुपुत्र बहुस्त्रीसङ्गं चिक्कणवर्णं विमदर्शः सौम्य अङ्गनाकपं समराशिः स्थिरः पुष्करसंज्ञः सरीसृपजाति ग्राम्यं इहज्जातके दृश्यम् ।

**वृश्चिकप्रिया** स्त्री वृश्चिकस्य शुककीटस्य प्रिया। पूतिका-याम् शब्दच०।

**वृश्चिककर्णी** स्त्री वृश्चिकस्य कर्ण इव पत्रं यस्याः। आ-खुकर्ण्याम् राजनि०। [भेदे राजनि०।

**वृश्चिका** स्त्री वृश्चिकः तद्विषमस्त्यस्याः अच्। (विछाती) क्षुप

**वृश्चिकाली** स्त्री वृश्चिक इवाचरति पर्य्याप्नोति स्पर्शने वेदनार्थं अच गौरा० ङीष्। (विछाती) क्षुपभेदे रत्नमा०।

**वृश्चिपत्री** स्त्री वृश्चिक इव पत्रं विषाक्तमस्य पृषो० कलोप ङीप्। वृश्चिकाल्याम् रत्नमा०।

**वृषीर** पु० प्रश-कीरच्। श्वेतपुनर्नवायाम् रत्नमा०।

**वृष** सेचने सक० भ्वा० पर० प्रजननसामर्थ्ये ऐश्वर्ये च अक० सेट्। वर्षति अवर्षीत्। ऋदित् क्त्वा वेट्।

**वृष** प्रजननसामर्थ्ये ऐश्वर्ये चुरा० आत्म० सक० सेट्। वर्ष-यते अवीवृषत-अववर्षत।

**वृष** पु० वृष-क। १वृषभे पुङ्गवे अमरः २मेषादितो द्वितीये राशौ ज्यो०त०। ३पुरुषभेदे ४एकादशमनुकालीने ५इन्द्रे ६धर्मे गरुडपु० ८१अ०। ७शृङ्ग्याम् ८मूषिके ९शुक्र युक्ते १०वास्तुस्थानभेदे ११वासकवृक्षे मेदि०। १२शत्रौ जटा०। १३कामे १४बलयुक्ते त्रि०विश्वः १५ऋषभनामौ-षधौ राजनि०। १६मयूरपिच्छे १७श्रीकृष्णे च त्रिका०। वृषराशिश्च २१६०० कलात्मकस्य राशिचक्रस्य १८००कलो-परि १८०० कलात्मकः। कृत्तिकाशेषत्रिपादरोहिणीमृ-गशिरोर्द्धात्मकः स च सौम्यः अङ्गना समः स्थिरः शुक्र स्वक्षः चतुष्पाद् निशाबलः याम्य दिगीश्वरः शुक्र दक्षिण दिगीश रात्रिबल पृष्ठोदयः शीतस्वभावः वातप्रकृतिः चन्द्रभूस्वामी श्वेतवर्णः वैश्यजाति मध्या-शब्दकरः मध्यसस्तोयकः मध्यमप्रजश्च बृहज्जा० मूलं दृश्यम्। पुरुषविशेषलक्षणञ्च "बहुगुणबहु-बल-भोगकामो नताङ्गः सकलकलाविद्भिः सर्वसाधो वृषा मा रतिम० उक्तम्। १८अरिष्टासुरे स हि वृषाकारेण वृन्दावने गोकुलने प्रहन् कृष्णेन हतः। तत् कथा हरिवं० ७८अ०। वृषस्य शुभाशुभलक्षणं गोपच्च-यलक्षे ७७१८ पृष्ठादौ दर्शितम्। वृषादि०श्चाद्युदात्तः।

**वृषकर्णी** स्त्री वृष इव सुदर्शनं कर्णोऽस्याः ङीप्। (सुदर्शन गुलञ्च) ख्यातायां लतायाम् रत्नमा०।

**वृषगन्धा** स्त्री वृषस्य गन्धो लेशो यत्र। वस्तान्त्र्यां राजनि०।

**वृषण** पु० वृष-क्यु। १अण्डकोषे अमरः। २वीर्य्यान्विते त्रि० "स्थूलाण्डौ दरिद्रः स्यात् द्रव्ये ह्रस्वपाशमवेत्। विषमे

स्त्रीचपलो वै न्टपः स्यात् वृषणे समे। प्रलम्बवृषणोऽ-ल्पायुर्निर्द्रव्यो सर्वथिभिर्भवेत्" गरुडपु० ६४अ०।

**वृषणश्व** पु० कर्म० शक०। सामर्थ्ययुक्ते इन्द्राश्वे त्रिका०।

**वृषण्वत्** त्रि० वृषन्+मतुप् मस्य वः न नलोपः णत्वम्। वर्षणयुते स्त्रियां ङीप्। [पकरणे रथादौ जटा०।

**वृषण्वसु** त्रि० वृषा वसु यस्य न नलोपः णत्वम्। इन्द्रयो-

**वृषदंशक** पु स्त्री० वृषान् मूषिकान् दशति दन्श-ण्वुल्। विडाले अमरः स्त्रियां ङीष्।

**वृषध्वज** पु०वृषो वृषभो मूषको धर्मो वा ध्वजो यस्य। १शिवे अमरः वृषकेतनादयोऽप्यत्र। २हेरम्बे ३पुण्यकर्मयुते च त्रि०। [गौरा० ङीष्। नागरमुस्तायाम्।

**वृषध्वाङ्क्षी** स्त्री वृषो वलवान् ध्वाङ्क्षः काको यस्याः ५त०।

**वृषन्** पु० वृष-कनिन्। १इन्द्रे २कर्णे ३अश्वे ४वेदनाशाने मेदि०। ५वृषे ६व्यश्वे च हेमच०।

**वृषनाशन** पु० वृषान् मूषिकान् नाशयति नश-णिच् ल्यु। १विडङ्गे शब्दमा०। २अरिष्टरूपवृषनाशके श्रीकृष्णे हरिवं० ७८अ०।

**वृषपर्णी** स्त्री वृषस्य मूषिकस्य कर्णं इव पर्णमस्याः। (इन्दू-रकाणी) १आखुकर्ण्याम् रत्नमा०। २सुदर्शनीवृक्षे राजनि०।

**वृषपर्वन्** पु० वृषे पर्व उत्सवो यस्य। १शिवे २दैत्यभेदे च। वृषं बलकरं पर्व यस्य। ३भृङ्गराजे ४केशरौ च विश्वः।

**वृषभ** पु० वृष-अभच् किच्च। १वृषे २श्रेष्ठे ३वैदर्भीरीतिभेदे मेदि०। ४जिनभेदे हेमच०। ५कर्णच्छिद्रे ६ऋषभनामौषधौ च शब्दादि०। [दयोऽप्यत्र।

**वृषभगति** पु० वृषभेण गतिरस्य। शिवे हारा० वृषभयाना-

**वृषभध्वज** पु० वृषभो ध्वजोऽस्य। शिवे वृषभकेतनादयोऽप्यत्र

**वृषभाक्षी** स्त्री वृषभस्य अक्षीव पुष्पमस्याः षच् समा०ङीप्। इन्द्रवारुण्याम् राजनि०।

**वृषभानु(न)** पु० राधिकायाः पितरि। ब्रह्मवै० ज० १७अ०।

**वृषभानु(न)सुता** स्त्री ६त०। राधिकायाम्। [त्रिका०।

**वृषभासा** स्त्री वृषा इन्द्रेण भासते भास-अच। अमरावत्यां

**वृषल** पु० वृष-कलच्। १शूद्रे २लशुने ३घोटके ४चन्द्रगुप्ते न्टपे च मेदि०। ५अधार्मिके जटा०।

**वृषली** स्त्री "पितुर्गेहे च या नारी रजः पश्यत्यसंस्कृता। भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता" इत्यु-क्तायां पितृगृहे दृष्टरजस्कायामनूढायां १कन्यायाम्। वृषल+भार्यायां जातौ वा ङीष्। २वृषलजातिस्त्रियां

जायते तोयं तोयात् शस्यानि शाखिनः । तेभ्योऽन्नानि फलान्येव तेभ्यो जीवन्ति जीविनः । सूर्यपक्तञ्च नीरञ्च काले तस्मात् समुद्भव । सूर्यो मेघादयः सर्वे विधात्रा ते नियोजिता । यत्राब्दे यो जलधरो गजश्च नागरोमवत् । शस्याधिपो नृपो मन्त्री विधात्रा ते निरूपिता । अष्टाटकाना शस्यानां तथानाञ्च निरूपितम् । अब्देऽब्देऽस्त्येव तत् सर्वं कल्पे कल्पे युगे युगे । ऊष्मा समुद्राटाटाव करैश्च जलमीप्सितम् । दत्त्वा पुनाव तद्वाद्वातेन प्रेरितो घन । स्थाने स्थाने पृथिव्याञ्च काले काले यथोचितम् । ईश्वरेच्छया विभूतं पूर्णं तत्प्रतिवत्सरम् । भूत भव्यं भविष्यञ्च भवत् क्षुद्रञ्च मध्यमम् । धात्रा निरूपित कर्म केन तात ! निवार्यते" ब्रह्मवै०जन्म०१अ०। "अग्नौ प्रास्ताहुति सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः" गीता । आसन्नवृष्टिसूचकानि यथा "मयूराः स्तनयित्नूनां शब्देन हृष्यता उच्चैः । केकायन्ति प्रतिःने सततं वृष्टिसूचका । मेघानुकाना मधुरवातकाना मनोहरः । श्रूयतः र्मिन्नाना वृष्टिसूचकाः सविधिसूचक । गगने शक्रचापेन क्रतं साम्प्रतमा स्पदम् । धारासारभरैस्तापं क्षेत्तुं प्रति यथोद्गत" कालिकापु० १५अ० ।

**वृष्टिघ्नी** स्त्री वृष्टिं हन्ति कारणत्वेन अद्याति हन—क ङीप् । सूक्ष्मैलायाम् शब्दच०।

**वृष्टिजीवन** त्रि० वृष्टिः वृष्टिजलमेव जीवनं पालनोपायो यस्य । १वृष्टिजलमात्रजीविनि चातके । २देवमातृके देशे हेमच० । [हारा०। २वृष्टिभवे त्रि० ।

**वृष्टिभू** पु० वृष्टौ तदुपलक्षिते काले भवति भू—क्विप् । १भेके

**वृष्टिवैकृत** न० ६त० । उपद्रवसूचके वृष्टिविकारे यथोक्तं वृ० स० ४६अ०

"दुर्भिक्षमनावृष्ट्यामतिवृष्ट्यां क्षुद्भयं सपरचक्रम् । रोगो ह्यऋतुभवायां नृपवधोऽनभ्रजातायाम् । शीतोष्णविपर्यासे नो सम्यक्तवश्च समुपतेषु । अन्यत्तौ सप्ताहं प्रवस्वर्षे प्रधानन्यपमरणम् । रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः । धान्यहिरण्यत्वक्फलकुसुमाद्यैवर्षितैर्भय विद्यात् । अङ्गारपांशुवर्षे विनाशमायाति तन्नगरम् । उपला विना जलधरैर्विकृता वा प्राणिनो यदा वृष्टाः । छिद्रं वाप्यतिवृष्टौ शस्यानामीतिसञ्जननम् । क्षीरघृतक्षौद्राणां दध्नो रुधिरोष्णयोर्षां वर्षे । देशविनाशो ज्ञेयोऽसृग्वर्षे चापि नृपयुद्धम् । यद्यमलेऽर्के छाया न दृश्यते दृश्यते प्रतीपा वा । देशस्य तदा सुमहद्भयमायातं विनिर्देश्यम् । व्यभ्रे नभसीन्द्रधनुर्दिवा यदा दृश्यतेऽथ वा रात्रौ । प्राच्यामपरस्यां वा तदा भवेत् क्षुद्भयं सुमहत् । सूर्येन्दुपर्जन्यसमीरणाना योगः स्मृतो वृष्टिविकारकाले । धान्यान्नगोकाञ्चनदक्षिणाश्च देयास्ततः शान्तिमुपैति पापम्" ।

**वृष्णि** पु० वृष—नि किच्च । १यादववंशेत्र नृपभेदे शब्दच० । २श्रीकृष्णे ३मेघे अमरः । ४चण्डे ५पाषण्डे च त्रि० शब्दर० ।

**वृष्णिगर्भ** पु० वृष्णि यादवकुलं गर्भो यस्य । श्रीकृष्णे हारा०

**वृष्य** पु० वृषाय हितो यत् वृष—क्यप् वा । १माषे हेमच० । २शुक्रवृद्धिकारके त्रि० भावप्र० । ३वाजीकरणे न० ४आमलक्यां ५शतावर्य्यां ५ऋषभनामौषधौ च स्त्री राजनि० । ७ऋद्धिनामौषधौ रत्नमा० । [राजनि०।

**वृष्यकन्दा** स्त्री वृष्यः शुक्रवर्द्धकः कन्दो यस्याः । विदार्य्याम्

**वृष्यगन्धिका** स्त्री वृष्यः शुक्रवर्द्धको गन्धो यस्याः कप् अत इत्त्वम् । अतिबलायाम् राजनि० । कमभावे वृष्यगन्धा वृद्धदारके स्त्री शब्दच० । [वृष्यवल्लिका तत्रैव स्त्री ।

**वृष्यवल्ली** स्त्री कर्म०। १विदार्य्याम् राजनि०। स्वार्थे क तत्रार्थः।

**वृह** दीप्तौ वा चु० उभ०सक० पक्षे भ्वा० पर० इदित् । वृंहयति ते अववृंहत् त । वृंहति अवृंहीत् ।

**वृह** वृद्धौ शब्दे च अक० भ्वा० पर० सक० सेट् । वर्हति इरित् अवृहत् अवर्हीत् । [इदित् । वृंहति अवृंहीत्

**वृह** ध्वनौ हस्तिध्वनौ वृद्धौ च भ्वा०पर० पर०अक० सेट् ।

**वृह** वृद्धौ भ्वा०पर०सक० सेट् । वर्हति अवर्हीत् ।

**वृह** उद्यमे तु०पर०सक०सेट् । वृहति । अवर्हीत्-अवृक्षत् ।

**वृह** वृद्धौ भ्वा०आत्म० सक० सेट् इदित् । वृंहते अवृंहिष्ट ।

**वृहच्चञ्चु** पु० वृहती चञ्चुरिव मञ्जरी यस्य । महाचञ्चुशाके राजनि० । [१फलपूरे शब्दचि०। २उदारचित्तयुते त्रि०।

**वृहच्चित्त** पु० वृहत् उदारं चित्त यस्मात् ५ब०। यद्वा ६त०।

**वृहच्छल्क** पु० वृहत् शल्कोऽस्य । चिङ्गटमत्स्ये जटा० ।

**वृहत्** त्रि०वृ०वृह—अति । महति अमर स्त्रियां गौरा०ङीष् ।

**वृहती** स्त्री वृहत्+गौरा० ङीष् । १महत्यां स्त्रियां २क्षुद्रवार्त्ताक्याम् राजनि०। ३वारिधान्यां ४वाचि ५कण्टकारिकायाम् मेदि०। ६नवाक्षरपादके छन्दोभेदे वृ०र० । ७वंशायां कम् तस्य । उत्तरीयवस्त्रे स्त्री अमरः ।

सक० सेट् । वेणति ते । अवेणीत् अवेणिष्ट । ऋदित्
चङि न ह्रस्वः ।

**वेणु** पु० वेण–अच् । १वर्णसङ्करजातिभेदे "वैदेहकेन त्व
म्बष्ठ्यामुत्पन्नो वेण उच्यते" मनुः । २पृथुराजपितरि
नृपभेदे "सत्पुत्रेण तु जातेन वेणोऽपि ३नदीभेदे स्त्री ।
त्रिदिवं ययौ" विष्णुपु० । दन्त्यान्तमप्येत्यन्ये ।

**वेणि(णी)** स्त्री वेण–इन् वा ङीप् । १केशरचनाभेदे अमरः
२जलप्रवाहे जटा० । ३ततमार्गे हेमच० । ४देवताडवृक्षे
अमरः । ५नदीभेदे तदुत्पत्तिकथा पद्मोत्तर० १५६अ० ।
६गङ्गायमुनासरस्वतीमिलनस्थाने च । प्रयागशब्दे
दृश्यम् ।

**वेणीर** पु० वेण–ईरन् । अरिष्टवृक्षे (निम) शब्दच० ।

**वेणु** पु० वेण–उण् । १वंशे अमरः । २तद्विकारे वंशीवाद्ये च
शब्दच० । "मा पूरय वेणुम्" इत्युद्भटः । ३नृपभेदे मेदि० ।

**वेणुक** न० वेणुरिव वेणोर्विकारो वा कन् । तोत्त्रे हेमच० ।
( पाचनवाडि ) ।

**वेणुकर्कर** पु० वेणुरिव कर्करः । करवीरवृक्षे त्रिका० ।

**वेणुज** पु० वेणुतो जायते जन–ड । १वेणुजाते यवाकारे त-
ण्डुले राजनि० । २वंशजाते दण्डादौ त्रि० ।

**वेणुध्म** पु० वेणुं वंशीं धमति ध्मा–क । वेणुवादके अमरः ।

**वेणुन** न० वेण–उनन् । मरिचे रत्नमा० ।

**वेणुपत्री** स्त्री वेणोरिव पत्त्राण्यस्याः । वंशपत्त्रीवृक्षे रत्नमा० ।

**वेणुयव** पु० वेणुजातो यव इव । १वंशजाते तण्डुलाकारे
पदार्थे राजनि० । [गृञ्जन । वेणुवादक तत्रैव त्रि० ।

**वेणुवाद** त्रि० वेणुं वादयति वद–णिच्–अण् । वेणुवादके

**वेणुबीज** न० ६त० । वेणुजाते यवाकारे पदार्थे राजनि० ।

**वेतन** न० अज–तनन् वीभावः । १कृतकर्मणोमूल्ये अमरः ।
भृतिशब्दे दृश्यम् । २जीवनोपाये हेमच० ।

**वेतनानपाकर्म्मन्** न० ६त० । व्यवहारभेदे
तत्स्वरूपादिक वीरमि० उक्तं यथा
नारद "भृतानां वेतनस्योक्तो दानादानविधिक्रमः । वेत-
नस्यानपाकर्म तद्विवादपदं स्मृतम्" । वेतनं कर्म्ममूल्य
तस्यानपाकर्म भृत्याय समर्पणं समर्पितस्य वा परावर्त-
नम् । तत्र समर्पणे विशेषमाह स एव "भृताय वेतनं
दद्यात् कर्म्मस्वामी यथाक्रमम् । आदौ मध्येऽवसाने
तु कर्मणो यद्विनिश्चितम्" । तुभ्यमेतावद्दास्यामीति
यद्वेतनं परिभाषितं निश्चितं तत्त्रिधा विभज्य कर्मण
आदिमध्यान्तेषु त्रिषु कालेष्वन्तमवसाने वा दद्यादित्यर्थः ।

एतस्मैतावद्वेतनं दास्यामीति भाषायाः अभावे । वस्यभ्ये
त्वाह स एव "भृतावनिश्चितायां तु दशभागमवाप्नुयुः ।
लाभं गोवीर्य्यसस्यानां वणिग्गोपकृषीवलाः" इति ।
दशभागं दशमभागं गोवीर्य्यं पाल्यमानगवादिभवक्षीरो-
दध्यादि । यदि कर्मस्वामी भृत्याय दशमभागन्न प्रय-
च्छति तदाऽसौ राज्ञा दाप्य इत्याह याज्ञवल्क्यः "दा-
प्यस्तु दशमभागं वाणिज्यपशुसस्यतः । अनिश्चित्य
भृतं यस्तु कारयेत् स महीक्षिता" इति । यस्तु स्वामी
वेतनपरिच्छेदमकृत्वैव भृत्यं कर्म कारयति स तस्माद्
वाणिज्यपशुसस्यलक्षणात् कर्म्मणः सकाशाद् यल्लब्धं तस्य
दशमं भागं भृत्याय महीक्षिता राज्ञा दापनीय इत्यर्थः ।
यत्तु "त्रिभागं पञ्चभागं वा गृह्णीयात् सीरवाहकः"
इति बृहस्पतिवचनं तद्भक्ताच्छादनाभ्यामद्दत्तवेतन-
विषयम् । व्यवस्थितविकल्पश्चायम् । कथमत्र व्यव-
स्थेत्याकाङ्क्षायामाह स एव "भक्ताच्छादभृत सीरी भागं
गृह्णीत पञ्चमम् । जातसस्यात्त्रिभागं तु प्रगृह्णीयादथ-
वाऽभृतः" इति । अशनाच्छादनाभ्यां भृतः कृषीवलो
लाङ्गलविकृष्टक्षेत्रजातसस्यात् पञ्चमभागं गृह्णीयात् ।
ताभ्यामभृतस्तु तृतीयं भागमित्यर्थः । अथ वा यत्रै-
तावद्दास्यामीति नास्ति परिभाषा तत्र इदमनुक्तं द्रष्ट-
व्यम् "वणिक्पथानकुशला देशकालार्थदर्शिनः । निश्च-
ल्युर्भृतिं यान्तु सा स्यात् प्रागकृता तदा" इति । एता-
वद्दास्यामीति परिभाषितेऽपि कचित्ततो न्यूनमपि स्वा-
मिनाऽपरिकल्पितं देयं कचित्ततोऽधिकमपि देयमि-
त्याह याज्ञवल्क्यः "देशं कालञ्च योऽतीयात्लाभं
कुर्य्याच्च योऽन्यथा । तत्र स्यात् स्वामिनश्छन्दोऽधिकं
देयं कृतेऽधिके" इति । यो भृत्यः स्वाम्यनुज्ञां विना
स्वातन्त्र्येण वाणिज्यादिकर्मणः फलसाधकत्वापादकं
देशं कालं चातिक्रामति लाभं वा बहुतरं व्ययेन न्यूनं
करोति तस्मै पूर्वपरिभाषितभृतिमध्ये स्वामी स्वेच्छा-
नुसारेण किञ्चिद् दद्यात् । यस्तु स्वातन्त्र्येण बहुलाभं
करोति तस्मै परिभाषितमूल्यादधिकं किञ्चिद्देयं स्वा-
मिना पारितोषिकमित्यर्थः । अनेकभृत्यसाध्यकर्मणि
वेतनार्पणप्रकारमाह स एव "यो यावत् कुरुते कर्म
तावत् तस्य तु वेतनम् । उभयोरप्यसाध्यं चेत् साध्ये
कुर्य्याद् यथाश्रुतम्" इति । उभयोरपि वा बहूनां
पण्यानां वाहकस्य दृष्टादौ कृते भवतामेतावद्दास्यामीति
परिभाषिते द्विवर्षादिरात्रं कर्म यदि व्याध्यादिव-

णाञ्च समर्पितं तदा तेषु यो यावत् कर्म करोति तस्मै तत्कर्मानुसारेण मध्यस्थपरिकल्पितं वेतनं देयम् । न तु साम्येन दानञ्च परिश्रमाप्रभावाददानम् । यदि तैः समर्पितं तदा यथा परिभाषितं देयञ्च तु प्रत्येक तदर्द्धं दातव्यं नापि कर्मानुसारेण परिकल्प्य दातव्य मित्यर्थः । यस्तु वेतनं गृहीत्वा समर्थोऽपि न कर्म करोति तं प्रत्याह वृहस्पतिः "गृहीतवेतनः कर्म न करोति यदा भृतः । समर्थश्चेद्दमन्दाप्यो द्विगुणं तच्च वेतनम्" इति । दमं मनुवचनानुसारेण राज्ञा दाप्यः । गृहीतञ्च वेतनं द्वैगुण्येन स्वामिने दद्यादित्यर्थः । नारदोऽपि "भृतिं गृहीत्वाऽकुर्वाणो द्विगुणां भृतिमावहेत्" इति । याज्ञवल्क्योऽपि "गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत्" इति । एतस्मिन्नेव विषये यावता वेतनेन भृत्यत्वमङ्गीकृतं तावदेव स्वामिने देयञ्च तु राज्ञे दण्डमित्यर्थः । यद्वाङ्गीकृतां भृतिं दत्त्वा बलात्कारयितव्य इत्याह नारदः "कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात्" इति । प्रतिश्रुत्येति प्रारम्भस्याप्युपलक्षणार्थम् अतएव कात्यायनः "कर्मारभ्य तु यः कश्चित् विसृजेत् तु कारयेत् । बलात्कारयितव्योऽसावकुर्वन् दण्डमर्हति" इति । कियद् द्रव्यं दण्ड्य इत्यपेक्षायामाष्टवर्षं मनुवृहस्पती "प्रतिश्रुत्य न कुर्याद् यः स कार्यः स्याद् बलादपि । स चेन्न कुर्यात् तत्कर्म प्राप्नुयाद् द्विशतं दमम्" इति । द्विशतं कार्षापणद्विशतमित्यर्थः । यत्तु मनुवचनम् "भृतोऽनार्त्तो न कुर्याद् यो दर्पात् कर्म यथोदितम् । स दण्ड्यः कृष्णलान्यष्टौ न देयं तस्य वेतनम्" इति । तदल्पदण्डस्वाल्पग्रामाधिकविषयमिति स्मृतिचन्द्रिकायाम् । अष्टौ स्वल्पकर्मकरणविषयमिति मदनरत्ने । किञ्चिन्न्यूनकर्मकरणे त्वाह स एव "यथोक्तमार्त्तः सुस्थो वा यस्तत्कर्म न कारयेत् । न तस्य वेतनं देयमल्पोनस्यापि कर्मणः" इति । सुस्थो वा कर्म कारयेदिति वदता सुस्थेऽपि स्वयं कर्त्तृत्वनियमो नास्तीति दर्शयति । आर्त्तो यदि स्वास्थ्यप्राप्त्यनन्तरं स्वाङ्गीकृतं कर्म करोति तदार्त्तें दीर्घकालतया कालक्षेपेऽपि भृत्यदोषाभावाद्वेतनमसौ लभेतैव इत्याह स एव "आर्त्तस्तु कुर्यात् स्वस्थः सन् यथाभाषितमादितः । सुदीर्घस्यापि कालस्य तल्लभेतैव वेतनम्" आदितः आदौ यथाभाषितं यथाप्रतिज्ञातं तथा कुर्य्यादित्यर्थः । सुदीर्घस्यापि कालस्य अल्पस्यापीति शेषः ।

यस्तु कालविशेषावधिकं कर्म प्रतिज्ञाय तत्कालापूर्त्तावेव कर्म त्यजति तं प्रत्याह नारदः "कालेऽपूर्णे त्यजन् कर्म भृतेर्नाशमवाप्नुयात्" । अत्र दण्डमप्याह विष्णुः "भृतकश्चापूर्णे काले त्यजन् सकलमेव मूल्यं स्वामिने दद्यात् राज्ञे च पणशतं दद्यादिति" । मूल्यं वेतनम् । स्वामिदोषात्त्यागे तु यावति काले कर्म कृतं तत्कालानुसारेण कल्पितं वेतनं लभत इत्याह नारदः "स्वामिदोषादपक्रामन् यावत् कृतमवाप्नुयात्" इति । स्वामिदोषो विनापराधं निष्ठुरभाषणादि । अत्र दण्डमप्याह विष्णुः "स्वामी चेद्भृतकमपूर्णे काले जह्यात् तस्य सर्वमेव मूल्यं दद्यात् पणशतञ्च राजन्यत्र भृतादोषादिति" । स्वामिद्रव्यस्य भृत्यदोषेण नाशे यत् कर्त्तव्यं तदाह स एव । "तद्दोषेण यद्विनश्येत्तत् स्वामिने देयमन्यत्र दैवोपघातादिति" । दैवोपघातो राजकृतस्याप्युपलक्षणम् । स्वामिने देयं मूल्यद्वारेणेति शेषः । अत्र दोषविशेषाद्विशेषमाह वृहन्मनुः "प्रमादान्नाशितं दाप्यः सम द्विद्रोहनाशितम्" इति । प्रमादान्नाशितमनवधानतानाशितं सममेव दद्यात् । द्रोहनाशितं तीक्ष्णप्रयत्नादिना द्रोहेण नाशितं द्विदाप्यो द्विगुणं दाप्य इत्यर्थः । भृत्यदोषाभावे यदन्यत्र पथि नष्टं तन्न देयमित्याह स एव "न तु दाप्यो हृतं चौरैर्दग्धमूढं जलेन वा" । ऊढं नीतम् । यस्तु वाहको वाह्यं द्रव्यं प्रमादेनत्यादिना स्वदोषेण नाशयति तं प्रत्याह नारदः "भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः । दाप्यो यत्तत्र नश्येत्तु दैवराजकृताद्दृते" इति । भाण्डं वहनीयं द्रव्यं घटादि व्यसनं नाशम् । अत्र भाण्डवाहकयोर्मध्ये वलीवर्दकर्मकयोरुपलक्षणमिति मदनरत्ने । अत्रापि "प्रमादान्नाशितं दाप्यः सम द्विद्रोहनाशितमिति" वृहन्मनूक्तो विशेषोऽवगन्तव्यः । यस्तु वाहकः स्वदोषेण प्रस्थानविघ्नं करोति स द्विगुणां भृतिं दाप्य इत्याह कात्यायनः "विघ्नं यो वाहको दाप्य प्रस्थाने द्विगुणां भृतिम्" इति । विघ्नं करोतीति शेषः । वाहकपदञ्च प्रदर्शनार्थं न तु विवक्षितन्तेनानुभोग्यादेर्दुरविघ्नकारिणोऽप्येतदिति मन्तव्यम् । अतएव नारदः "द्विगुणां तु भृतिं दाप्यः प्रस्थाने विघ्नमाचरन्" इति सामान्येनोक्तवान् । याज्ञवल्क्योऽपि "प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम्" इति । एतच्च भृत्यान्तरसम्पादनकालासम्भवविषयम् । अङ्गीकृतकर्मकरणस्यापि यदा वक्ता-

यानदाबाभेन प्रस्थानविघ्नापादकत्वं तदा त्वाह स एव "प्रक्रान्ते सप्तमम्भागश्चतुर्थं पथि सन्त्यजन्। भृतिमर्द्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च" इति। प्रक्रान्ते कर्मणि स्वाङ्गीकृतं कर्म त्यजन् भृत्यो भृतेः सप्तमम्भागं दाप्यः। गमने प्रारब्धे पथि त्यजन् भृतेश्चतुर्थं भागम्। अर्द्धपथे त्यजन् सर्वां भृतिमित्यर्थः। त्याजकोऽपि चेत्यस्यायमर्थः गमनारम्भानन्तरं स्वामी यदि त्याजयति तदा पूर्वोक्तक्रमेण भृत्याय सप्तमभागादिकं दापनीय इति। एतच्चाव्याधितादिविषयम् व्याधितस्यापराधाभावात्। यत्तु स्वामिनः त्याजने चतुर्थभागदापनमुक्तं तदविक्रीतभाण्डस्वामिविषयम्। विक्रीतभाण्डस्वामिना यत् कर्त्तव्यं तदाह बृहस्पतिः "पथि विक्रीय तद्भाण्डं वणिक् भृत्यं त्यजेद् यदि। अथ तस्यापि देयं स्याद् भृतेरर्द्धं क्रमेत सः" इति। पथि भाण्डस्य चौरादिभिः प्रतिरोधे राजादिभिरपहृते स्वामिनः कर्त्तव्यमाह कात्यायनः "यदा च पथि सद्भाण्डं चोर्य्येत ह्रियेत वा। यावानध्वा गतस्तेन प्राप्नुयात् तावतो धनम्" इति। तेन भारवाहकस्वीकृतेन यानादिना। भाण्डनेतारं प्रत्याह नारदः "अनयन् भाटयित्वा तु भाण्डयन् यानवाहनम्। दाप्यो भृतिचतुर्भागं सर्वामर्द्धपथे त्यजन्" इति। यानं शकटादि वाहनम् अश्वादि। अयमर्थः यो यानादिना भाण्डनयनं कर्त्तुं परकीयं यानादिकं भाटयित्वा प्रापणादिकार्य्योपाधिकं परिक्रयं कृत्वा तन्न नयति स यानस्वामिने परिकल्पितस्य भाटकस्य चतुर्थांशं दाप्यः। यस्तु तन्नीत्वाऽर्द्धमार्गे त्यजति स सर्वां भृतिं दाप्य इति। यस्तु शकटादिकं भाटयित्वा तमेवोपकारमूल्यमादाय देशान्तरं गच्छति भाटकं च न प्रयच्छति तं प्रत्याह बृहस्पतिः "यो भाटयित्वा शकटं नीत्वा वाऽन्यत्र गच्छति। भाटं न दद्याद् दाप्यः स्यादनूढस्यापि भाटकम्" इति। अनूढस्यापि अकृतोपकारस्यापीत्यर्थः। यस्तु कृते कार्य्ये समनन्तरं वाहनादेः समर्पणं न करोति तस्य समर्पणपर्य्यन्तभाटकदानमाह कात्यायनः "हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः। नार्पयेत् कृतकृत्यः सन् स दाप्यस्तु स भाटकम्। गृहभार्य्यापणादीनि गृहीत्वा भाटकेन यः। स्वामिने नार्पयेद् यावत्तावद्दाप्यः स भाटकम्" इति। पारिभाष्ट्येन तदाधारभूतं पात्रं बध्यते। नार्पयेत् कृतकृत्यः सन्निधितचक्रुः। परभूमौ गृहनिर्माणाय भाटकदातारं प्रत्याह नारदः "परभूमौ गृहं कृत्वा स्तोमं दत्त्वा वसेत्तु यः। स तद्गृहीत्वा निर्गच्छेत् तृणकाष्ठेष्टकादिकम्" इति। स्तोमम्भाटकं स्तोमाप्रदानेऽप्याह स एव "स्तोमाद्विना वसित्वा तु परभूमावनिश्चितम्। निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात् कथञ्चन। यान्येव तृणकाष्ठानि त्विष्टका विनिवेशिताः। विनिर्गच्छंस्तु तत् सर्वं भूमिस्वामिनि वेदयेत्" इति। स्वामिने निवेदयेदित्यर्थः। अनिश्चितमिति पदेन तृणकाष्ठादिग्रहणाग्रहणपरिभाषाविहीनविषयमेतदिति दर्शितम्। परिभाषाविषये तु यथा परिभाषितं कर्त्तव्यम्। भाटके गृहीतानां जलपात्रादीनां भङ्गे नाशे च विशेषमाह स एव "स्तोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत्। गृहीतुराहरेद्भग्नं नष्टमन्यत्र सम्प्लवात्" इति। स्तोमवाहीनि भाटकगृहीतानि पूर्वपरिभाषितभाटकानि तत्स्वामिनं प्रापयेदिति पूर्वार्द्धार्थः। भग्नमेकदेशेन विकृतं, नष्टम् कार्त्स्न्येन विकृतम्। सम्प्लवः परस्परसङ्घर्षः तद्भिन्नप्रकारेण यद्भग्नं नष्टं च तद्भाटकगृहीतुर्भवति। संप्लवेन तु यद्भग्नं नष्टं च तद्भाटकदात्रा पूर्ववत् कृत्वा मूल्यद्वारेण वा देयमित्यर्थः। व्याधितस्य भृत्यस्य स्वामिना पथि त्यागे दण्डमाह कात्यायनः "त्यजेत् पथि सहायं यः श्रान्तं रोगार्त्तमेव वा। प्राप्नुयात् साहसं पूर्वं ग्रामे त्र्यहमपालयन्" इति। स्वाम्यनुज्ञातेन भृत्येनापराधे कृते सोऽपराधः स्वामिन एवेत्याह बृहस्पतिः "प्रभुणा विनियुक्तः सन् भृतको विदधाति यत्। तदर्थमशुभं कर्म स्वामी तत्रापराप्नुयात्" इति। स्वामी कृतकर्मणे भृतकाय यदि न वेतनं ददाति तदाऽसौ राज्ञा दापनीयः इत्याह स एव "कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृते। राज्ञा दापयितव्यः स्याद् वेतनञ्चानुरूपतः" इति। वेश्यातदुपभोक्तृविषये नारद आह "शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत्। अनिच्छन् शुल्कदाताऽपि शुल्कहानिमवाप्नुयात्" इति। एतदव्याधितादिविषयम्। व्याधितादिविषये त्वाह बृहस्पतिः "व्याधिता सम्भ्रमव्यग्रा राजकार्यपरायणा। आमन्त्रिता च नागच्छेदवाच्या बडवा स्मृता" इति। आमन्त्रिता आहूता। बडवा दासी तद्ग्रहणमत्र पण्यस्त्रीप्रदर्शनार्थम्। उपभोक्तारं प्रत्याह नारदः "अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम्। अक्रमेण तु सङ्गच्छेद् घातदन्तनखादिभिः। अयोनौ यः समाक्रा-

षेद् मद्भिर्वापि नाशयेत्। शुल्कं षोडशगुणं दाप्यो विनय तावदेव तु" इति। वेश्यायास्त्वपराधे दण्डादिक मत्स्यपुराणे दर्शितम् "गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति। तां दमं दापयेद्द्व्यादितरस्यापि भाटकम्" इति। इतरस्य दत्तशुल्कस्य। तत्रैव विशेषान्तरमुक्तम् "अन्यमुद्दिश्य वेश्यां यो नयेदन्यस्य कारणात्। तस्य दण्डो भवेद्राज्ञः सुवर्णस्य च माषकम्। नीत्वा भोगम् यो दद्यात् दाप्यो द्विगुणवेतनम्। राज्ञश्च द्विगुणं दण्ड्यं तथा धर्मो न हीयते। बहूनां व्रजतामेकां सर्वे तद् द्विगुणं धनम्। तस्यै दद्युः पृथक् राज्ञे दण्डञ्च द्विगुणस्परम्" इति। अत्र निर्णेतृनाह नारदः "वेश्याः प्रधाना यास्तत्र कामुकास्तद्गृहाश्रिताः। तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः" इति।

**वेतस** पु० अज–असुन् तुक् च वीभावः। (बेत) वृक्षभेदे अमरः। स्त्रीत्वमपि शब्दच० तत्र गौरा० ङीष्।

**वेतसाम्ल** पु० वेतस एव अम्ल। अम्लवेतसे जटा०।

**वेतस्वत्** त्रि० वेतसाः सन्त्यत्र भूम्ना वेतस+ड्मतुप्। बहुवेतसयुक्ते देशे अमरः।

**वेताल** पु० अज–विच् वीभावः तल–घञ् कर्म०। १सङ्घविशेषे २भूताधिष्ठितशवभेदे अमरः। ३शिवानुचरे भैरवभेदे कालिकापु०। ४द्वारपाले च शब्दर०।

**वेतालभट्ट** पु० विक्रमादित्यसभास्थे नवरत्नान्तर्गते कविभेदे

**वेत्तृ** त्रि० विद–तृच्। १ज्ञातरि २बोद्धरि ३ऋत्विजि च राजनि०

**वेत्र** पु० अज–त्रल् वीभावः। (बेत) वेतसवृक्षे राजनि०।

**वैत्रकीय** त्रि० वेत्र+छ–कुक् च। १वेत्रसमूहे २तद्युक्तदेशादौ च सि० कौ०। [यष्टिधारणात् त्रि०।

**वेत्रधर** पु० वेत्रं धरति धृ–अच्। १द्वारपाले हला० २वेत्र-

**वेत्र(त्रा)वती** स्त्री वेत्राः बाहुल्येन सन्त्यस्याः मतुप् मस्य वः वा दीर्घः। १मालवदेशस्थे नदीभेदे "शरावती वेत्रवती चन्द्रभागा सरस्वती"। २हस्तासुरमातरि वराहपु०।

**वेत्रासन** न० वेत्रनिर्मितमासनम्। वेत्रनिर्मिते आसने (मोड़)

**वेत्रासुर** पु० सिन्धुद्वीपात्मजेऽसुरभेदे वराहपु०।

**वेथ** याचने भ्वा० आत्म० द्वि० सेट् ऋदित् चङि न ह्रस्वः। वेथते अवेथिष्ट।

**वेद** पु० विद–अच् घञ् वा। १विष्णौ विष्णुस०। २ज्ञाने ३आत्मज्ञाने तत्साधने धर्मब्रह्मप्रतिपादके मन्त्रब्राह्मणात्मके ग्रन्थभेदे ४वृत्ताङ्के चारके च मेदि०। ५यज्ञाङ्गे नामाग्रमा० ६कुशमुष्टिकृते पदार्थभेदे "वेदं कृत्वा वेदिं कुर्यात्" श्रुतिः वेदयति विद–अच् णिच्–अच् विद-अच् वा। ७ज्ञापके द्रष्टरि च त्रि० "वेदोऽसि येन त्वं देव। वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः" यजु० २।२१ "यतो वेद यस्माद्भूति वेदोऽसीति "हे कुशमुष्टिनिर्मितपदार्थ! त्वं वेदोऽसि ज्ञानात्मकोऽसि यद्वा वेत्तीति वेदः ज्ञातासि। देवेभ्यो देवानां वेदोऽभवः ज्ञापकोऽभूः" वेददी०। तल्लक्षणञ्च अपौरुषं वाक्यं वेद इति मीमांसकाः। पौरुषेयत्वे पूर्वपक्षं दूषयित्वाऽपौरुषेयत्वं माधवेनोपन्यस्य समर्थितं यथा "प्रमाणत्वेन सम्यक्परोक्षानुभवसाधनं वेद इति" वेदलक्षणस्य मन्वादिस्मृत्यादावतिव्याप्तिमाशङ्क्य "अपौरुषेयत्वे सतीति विशेषणाददोष इति चेत् वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात् शरीरधारिजीवनिर्मितत्वाभावादपौरुषेयत्वमिति चेत् "सहस्रशीर्षा पुरुषः" इत्यादिश्रुतिभिरीश्वरस्यापि शरीरित्वात्। कर्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेणापौरुषेयत्वं विवक्षितमिति चेत् न जीवविशेषैरग्निवाय्वादित्यैर्वेदानामुत्पादितत्वात्। "ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यादिति श्रुतेः" (ईश्वरस्याग्न्यादिप्रेरकत्वेन निर्मातृत्वं द्रष्टव्यम्)। तत्र मन्त्रब्राह्मणात्मकस्य वेदस्य लक्षणमुक्तम् 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इत्यापस्तम्बवचनं प्रमाणतयोपन्यस्तं तत्र मन्त्रलक्षणमुक्त्वा तदितरद् ब्राह्मणमित्युक्तम्। तत्रैवोत्तरत्र नन्वेवमपि वेदस्य पौरुषेयत्वेन विप्रलम्भकवाक्यवदप्रामाण्यं स्यात् पौरुषेयत्वं च १पादे पूर्वपक्षत्वेन जैमिनिरसूत्रयत् यथा "वेदांश्चैके सन्निकर्षं पुरुषाख्येति" सू० "एके वादिनो वेदान् प्रति सन्निकर्षं मन्यन्ते। यथा रघुवंशादयः कालिदासप्रणीता इदानीन्तनास्तथा वेदोऽपि न तु वेदा अनादयः अतएव वेदकर्तृत्वेन पुरुषा आख्यायन्ते वैयासिकं भारतं वाल्मीकीयं रामायणमित्यत्र यथा भारतादिकर्तृत्वेन व्यासादय आख्यायन्ते तथा काठकं कौथुमं तैत्तिरीयमित्येव तत्तद्वेदशाखाकर्तृत्वेन कठादीनामाख्यातत्वात् वेदाः पौरुषेयाः। ननु नित्यानामेव सतां वेदानामुपाध्यायसम्प्रदायप्रवर्त्तकत्वेन कठादिसमाख्या स्यादित्याशङ्क्य युक्त्यन्तरं सूत्रयति "अनित्यदर्शनाच्चेति" सू० "अनित्यानां जननमरणवन्तो बबरादयो वेदार्थाः श्रूयन्ते "बबरः प्रावाहणिरकामयत कुसुरुविन्दु

ओङ्कारकिरणामयतेति" तथा सति शवरादिभ्यः पूर्वमभावादनित्या वेदाः । विमतं वेदवाक्यं पौरुषेयं वाक्यत्वात् कालिदासादिवाक्यवत् इत्यनुमानञ्च चकार" इति पूर्वपक्षे सिद्धान्तयति । "उक्तं तु शब्दपूर्वत्वम्" सू० "तुशब्दो वेदानामनित्यत्वं वारयति । शब्दस्य वेदरूपस्य कठादिपुरुषेभ्यः पूर्वत्वमनादित्वम् प्राचीनैव सूत्रैरुक्तम् । "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध" इत्यत्र औत्पत्तिकशब्देन सर्वेषां शब्दानां वेदानां तदर्थानां तदुभयसम्बन्धानाञ्च नित्यत्वं प्रतिज्ञाय उत्तराभ्यां शब्दाधिकरणवाक्याधिकरणाभ्यामुपपादितम् । का तर्हि काठकाद्याख्याया गतिरित्याशङ्क्य सम्प्रदायप्रवर्त्तनात् सेयमुपपद्यते" इत्युत्तरसूत्रयति "आख्याः प्रवचनादिति" सू० "अस्त्वियमाख्यायिकाया गतिः (इयं प्रवचनरूपा सम्प्रदायप्रवर्त्तनेत्यर्थः") शबराद्यनित्यदर्शनेन यदुक्तं तस्य किमित्युत्तरमित्याशङ्कायामाह "परं तु श्रुतिसामान्यमात्रम्" सू० यत्परं शवरादिकं तत् तच्छब्दसामान्यमेव । न तु मनुष्यो बबरनामकोऽत्र विवक्षितः बबरध्वनियुक्तनवचलप्रभावस्य वायोरत्र वक्तुमशक्यत्वात् । पूर्वपक्षोक्तस्य वाक्यत्वहेतोः पराहतेः । तस्मान्नास्ति वेदस्य पौरुषेयत्वम् । अत्र सङ्ग्राहकश्लोकौ "पौरुषेयं न वा वेदवाक्यं स्यात् पौरुषेयता । काठकादिसमाख्यानात् वाक्यत्वाच्चान्यवाक्यवत् । समाख्यानं प्रवचनात् वाक्यत्वं तु पराहतम् । तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता" । ननु भगवता बादरायणेन वेदस्य ब्रह्मकार्य्यत्वं सूचितं "शास्त्रयोनित्वादिति" । ऋग्वेदादिशास्त्रकारणत्वात् ब्रह्म सर्वज्ञमिति सूत्रार्थः (तदेतस्य महाभूतस्य निःश्वसितं यदृग्वेदो यजुर्वेद इत्यादि" श्रुतिः "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" स्मृतिश्चात्र मूलम्) बाढं नैतावता पौरुषेयत्वं भवति मनुष्यनिर्मितत्वाभावात् । ईदृशमपौरुषेयत्वमभिप्रेत्य व्यवहारदशायामाकाशादिवन्नित्यत्वं बादरायणेनैव देवताधिकरणे सूचितम् "अतएव च नित्यत्वमिति" । वेदा०प० पौरुषेयत्वापौरुषेयत्वे अन्यथा निरुक्ते "यथा ननु क्षणिकत्वाभावेऽपि वियदादिवदादिमत्त्वेन परमेश्वरकर्तृकतया पौरुषेयत्वादपौरुषेयत्वं वेदानामिति तव सिद्धान्तो भज्येतेति चेन्न न तावत्पुरुषेणोच्चार्य्यमाणत्वं पौरुषेयत्वं गुरूच्चरितेऽपि पौरुषेयत्वापत्तेः (पाठ्यमानवेदानामिति शेषः) नापि पुरुषाधीनोत्पत्तिमत्त्वं पौरुषेयत्वं नैयायिकाभिमतपौरुषेयत्वानुमानेऽस्मदादीनां सिद्धसाधनापत्तेः किन्तु सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं तथा च सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदसमानुपूर्वीकं वेदं विरचितवान् न तु तद्विजातीयं वेदमिति न सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वं वेदस्य, भारतादीनान्तु सजातीयोच्चारणमनपेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम्" । शब्दचिन्तामणिकृता तु वेदलक्षणमन्यथा निरुच्य पौरुषेयत्वमीदृशमेव समर्थितं यथा "अथ वेदः पौरुषेयो वाक्यत्वात् भारतादिवत् इति चेत् कोऽयं वेदः अनुगतधर्माभावेन तस्य शाखाया नानार्थत्वात् तथा हि न मुख्यवेदप्रयोगविषयो वेदः मुख्यार्थाकथनात् नापि शाखासमुदायः तस्य भेदनिरूप्यत्वात् समुदायस्याप्रतिपादकत्वेन वाक्यत्वासिद्धेः । नापि स्वर्गकामो यजेतेत्यादिवाक्यं स्मृतिभारतादेरपि तथात्वात्" इत्यादिवेदलक्षणे पूर्वपक्षमुक्त्वा पौरुषेयत्वसाध्ये तमाह "पौरुषेयत्वं न तदर्थधीजन्यत्वं तदुच्चारणधीप्रभवत्वं वा अध्यापकाध्येतृधीजन्यत्वेन सिद्धसाधनात् स्वतन्त्रपुरुषप्रणीतजातीयत्वं यदि साध्यं तदाद्यभारते स्मृतौ च वाक्यत्वमनैकान्तिकम्" इत्यादिना । अत्रोत्तरमुक्तं यथा "शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमितिविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं वेदत्वम् । ईश्वरप्रमाया अजन्यत्वात् वेदार्थस्यानुमानविषयत्वेऽप्यनुमानादेर्वेदोपजीवकतया स्मृतीनां भारतादिभागस्य च वेदसमानार्थकत्वेऽपि शब्दजन्यधीजन्यत्वात् वेदादर्थं प्रतीत्यैव तत्प्रणयनात्" (अग्निर्हिमस्य भेषजमित्यादिवेदवाक्यसंग्रहाय सत्यन्तं लक्षणाप्रविष्टं सत्यन्तं तु अदृष्टार्थकतावाक्यस्याप्रमाणार्थमिति बोध्यम्) । मथुरानाथेनैतद्विवृतं तत्र दृश्यम् । साध्यं च पौरुषेयत्वं सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वमिति निर्णीतमधिकं तत्र दृश्यम् ।

वेदाश्च चत्वारः तेषां शाखाविभागश्चरणव्यूहे उक्तः तत्र ऋग्वेदशाखाविभाग ऋग्वेदशब्दे ११११ पृ० दर्शितः । "यजुर्वेदस्य षडशीतिर्भेदा भवन्ति । तत्र चरकाणां द्वादश भेदा भवन्ति । चरका १ आह्वरकाः २ कठाः ३ प्राच्यकठाः ४ कपिष्ठलकठाः ५ औपमन्यवाः ६ पाटकठाः ७ चारायणीयाः ८ वारायणीया ९ वार्त्तान्तवेयाः १० श्वेताश्वतराः ११ (श्वेताश्वतरा इति वा पाठः) । मैत्रायणीयाः १२ चेति । तत्र मैत्रायणीयानां सप्त भेदा भवन्ति । मानवाः १ दुन्दुभाः २ चैकेयाः ३ वाराहाः ४ हा-

रिद्रवेयाः५ श्यामाः६ श्यामायनीयाश्चेति। तेषामध्ययनम् अष्टौ यजुःसहस्राण्यधीत्य शाखापारो भवति। तान्येव द्विगुणान्यधीत्य पदपारो भवति। तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति। षडङ्गान्यधीत्य षडङ्गविद्भवति। शिक्षा१ कल्पो२ व्याकरणं३ निरुक्तं४ छन्दो५ ज्योतिषं६ इत्यङ्गानि। तत्र प्राच्योदीच्या नैर्ऋत्यां निवर्त्यः। तत्र वाजसनेयानां सप्तदश भेदा भवन्ति। जाबालाः१ बौधेयाः२ काण्वाः३ माध्यन्दिनाः४ शापेयीयाः५ तापायनीयाः६ कापालाः७ पौण्ड्रवत्साः८ आवटिकाः९ परमावटिकाः१० (परमावटिकापि पाठः)। पाराशरीयाः११ वैनेयाः१२ औधेयाः१४ गालवाः१५ बैजवापाः१६ कात्यायनीयाश्च१७। प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि। उपज्योतिषम्। शाङ्खलक्षणम्। प्रतिज्ञानवाक्यम्। परिसंख्याचरणम्। श्राद्धकल्पः। प्रवराध्यायश्च। शुल्वम्। ऋतुः। संस्थानः। आगमः। चरणार्थं होत्रकम्। (पारस्करहौत्रकमपि पाठः)। यागः। उक्थानि। कूर्मलक्षणमित्यष्टादश परिशिष्टानि। द्वे सहस्रे शते न्यूने मन्त्रे वाजसनेयके। इत्युक्तं परिसंख्यातमेतत् सकलं शुक्रियम्। यस्मात् परिसंख्याता ब्राह्मणस्य चतुर्गुणम्। आदावारभ्य वेदान्तं ब्रह्मव्याहृतिपूर्वकम्। वेदमध्याय एतेषां होमान्ते तु समारभेत्"। तत्र तैत्तिरीयकाणां द्विभेदा भवन्ति। औख्याः१ (आत्रेयोऽपि पाठः)। खाण्डिकेयाश्चेति२। तत्र खाण्डिकेयानां पञ्च भेदा भवन्ति। आपस्तम्बी१ बौधायनी२ सत्याषाढी३ हिरण्यकेशी४ औधेयाश्चेति५ (औधेयी च पाठः)। तत्र कठानान्तु उपगानविशेषाः। चतुश्चत्वारिंशदुपग्रन्थाः। मन्त्रब्राह्मणयोर्वेदस्त्रिगुणो यत्र पठ्यते। यजुर्वेदः स विज्ञेयः शेषाः शाखान्तराः स्मृताः"।

सामवेदस्य किल सहस्रभेद आसीत्। अनध्यायेष्वधीयानास्ते शतक्रतुवज्राभिहताः प्रणष्टाः। तेषां मध्ये अवशिष्टा आसुरायणीया वासुरायणीया वार्तान्तवेया प्राञ्जला ऋग्वर्णभेदाः प्राचीनयोग्या ज्ञानयोग्या राणायनीयाश्चेति तत्र राणायनीयानां नव भेदा भवन्ति। राणायनीयाः शाट्यायनीयाः पारायणीयाः वात्सलाः। (ब्रह्मद्रुण इति वा पाठः)। गौल्मलाः। (इति तु भाष्ये नास्ति)। चक्रकाः। महाचक्रकाः शाङ्खाः। कौथुमाः जैमिनीयाश्चेति। तेषामध्ययनम् अष्टौ सामसहस्राणि सामानि च चतुर्दश अष्टौ शतानि दशोत्तराणि दश सप्त च वालखिल्याः सशुपर्णं प्रैष्यम्। एतत् सामगणं स्मृतम्। अथर्ववेदस्य नव भेदा भवन्ति। पैप्पलाः१। दान्ताः२। प्रदान्ताः३। स्नाताः४। स्नौताः५। ब्रह्मदावलाः६। शौनकी७। देवदर्शती८। चरणविद्या९श्चेति। (दान्ता प्रदान्ता स्नौता ब्रह्मदो वस्सी वेदशी इति भाष्ये नामान्तरम्) तेषामध्ययनं पञ्च कल्पानि भवन्ति। नक्षत्रकल्पो विधानकल्पो विधिविधानकल्पः संहिता शान्तिकल्पश्चेति। सर्वेषामेव वेदानामुपवेदा भवन्ति। ऋग्वेदस्यायुर्वेदः। यजुर्वेदस्य धनुर्वेद उपवेदः। सामवेदस्य गान्धर्ववेद उपवेदः। अथर्ववेदस्य शस्त्रशास्त्राणि भवन्ति"। "यजुर्वेदतरोः शाखाः सप्तविंशन्महामतिः। वैशम्पायननामासौ व्यासशिष्यश्चकार वै। शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात्। याज्ञवल्क्यस्तु तस्याभूद् ब्रह्मरातसुतो द्विज। शिष्यः परमधर्मज्ञो गुरुवृत्तिपरः सदा। ऋषिर्योऽद्य महामेरोः समाजे नागमिष्यति। तस्य वै सप्तरात्रात्तु ब्रह्महत्या भविष्यति। पूर्वमेव मुनिगणैः समयोऽयं कृतो द्विज। वैशम्पायन एकस्तु तं व्यतिक्रान्तवांस्ततः। स्वस्रीयं बालकं सोऽथ पदा स्पृष्टमघातयत्। स शिष्यानाह भोः शिष्याः ब्रह्महत्यापहं व्रतम्। चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा। अथाह याज्ञवल्क्यस्तं किमेभिर्भगवन् द्विजैः। क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम्। ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामतिम्। मुच्यतां यत्त्वयाधीतं मत्तो विप्रावमन्य च। निस्तेजसो वदस्येतान् यस्त्वं ब्राह्मणपुङ्गवान्। तेन शिष्येण नार्थोऽस्ति ममाज्ञाभङ्गकारिणा। याज्ञवल्क्यस्ततः प्राह भक्त्यैतत्ते मयोदितम्। ममाप्यलं त्वयाधीतं यन्मया तदिदं द्विज।"। श्रीपराशर उवाच "इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंषि सः। छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः। यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज। जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः। ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु यैः। चरकाध्वर्यवस्ते तु चरणान्मुनिसत्तम। याज्ञवल्क्योऽपि मैत्रेय प्राणायामपरायणः। तुष्टाव प्रयतः सूर्यं यजूंष्यभिलषंस्ततः"। श्रीयाज्ञवल्क्य उवाच "नमः सवित्रे

दाराय सुक्षेरमिततेजसे। ऋग्यजुःसामभूताय त्रयीधामवते नमः"। श्रीपराशर उवाच "इत्येवमादिभिस्तेन स्तूयमानः स वै रविः। वाजिरूपधरः प्राह व्रियतामभिवाञ्छितम्। याज्ञवल्क्यस्तदा प्राह प्रणिपत्य दिवाकरम्। यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ" श्रीपराशर उवाच "एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः। अयातयामसंज्ञानि, यानि वेत्ति न तद्गुरुः। यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम। वाजिनस्ते समाख्याताः सूर्योऽश्वः सोऽभवद्यतः। शाखाभेदास्तु तैरेव दश पञ्च च वाजिनाम्। काण्वाद्यास्तु महाभाग! याज्ञवल्क्यप्रवर्त्तिताः" विष्णुपु० ३अंशे ५अ०। सामवेदस्य संहिता यथा "सामवेदतरोः शाखा व्यासशिष्यः स जैमिनिः। क्रमेण येन मैत्रेय! विभेद शृणु तन्मम। सुमन्तुस्तस्य पुत्रोऽभूत् सुकर्मास्यापि वै सुतः। अधीतवन्तावेकैकां संहितां तौ महामती। साहस्रं संहिताभेदं सुकर्मा तत्सुतस्ततः। चकार तञ्च तच्छिष्यौ जगृहाते महाव्रतौ। हिरण्यनाभः कौशल्यः पौष्यिञ्जिश्च द्विजोत्तम। उदीच्याः सामगाः शिष्यास्तस्य पञ्चशताः स्मृताः। हिरण्यनाभात्तावत्यः संहिता यैर्द्विजोत्तम। गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः। लोकाक्षि कुथमिश्चैव कुशीदिर्लाङ्गलिस्तथा। पौष्यिञ्जिशिष्यास्तद्भेदैः संहिता बहुलीकृताः। हिरण्यनाभशिष्यश्च चतुर्विंशतिसंहिताः। प्रोवाच कृतिनामासौ शिष्येभ्यश्च महामतिः। तैश्चापि सामवेदोऽसौ शाखाभिर्बहुलीकृतः"। अथर्ववेदस्य संहिता यथा। "अथर्वणामथोवक्ष्ये संहितानां समुच्चयम्। अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः। शिष्यमध्यापयामास कबन्धं सोऽपि तं द्विधा। कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्। वेददर्शस्य शिष्यास्तु मोदो ब्रह्मबलिस्तथा। शौल्कायनिः पिप्पलादस्तथान्यो द्विजसत्तमः। पथ्यस्यापि त्रयः शिष्याः कृता यैर्द्विज संहिता। जाजलिः कुमुदादिश्च तृतीयः शौनको द्विज। शौनकस्तु द्विधा कृत्वा ददावेकान्तु बभ्रवे। द्वितीयां संहितां प्रादात् सैन्धवायनसंज्ञिने। सैन्धवो मुञ्जिकेशाय भिन्दन् वेदं द्विधा पुनः। नक्षत्रकल्पो वेदानां संहितानां तथैव च। चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः। श्रेष्ठास्त्वाथर्वणास्तेते संहितानां विकल्पकाः"। विष्णुपु० ३अंशे ६अ०।

हेमाद्रि दा०ख० देवीपु० ७अ० वेदविभागोऽभिहितो यथा "किं वेदरूपं भगवन् उपाङ्गसंख्याभेदतः। अङ्गानि चैव वेदानां तन्मे ब्रूहि सनातन।" ब्रह्मोवाच "ओङ्कारप्रभवा वेदा गायत्री वेदसम्भवा। षडङ्गास्ते समाख्याताः चतुरुपाङ्गास्तथैव च। छन्दोलक्षणसंयुक्ता मातृकागर्भजाः स्मृताः। एक एव भवेद्वेदश्चतुर्वेदः पुरा कृतः। शाखार्थमल्पयुक्तानां सहस्राधिकविस्तरात्। सुविभक्ता मया वत्स! ऋग्यजुःसामाथर्वकाः। तत्र भेदास्तु ऋग्वेदे दश चैव प्रकीर्त्तिताः। आश्वलायनाः साङ्ख्यायनाश्चैव शाकला वाष्कलास्तथा। आरण्यीयाश्च क्रमाचाः शट्क्रमाः पञ्चक्रमाः। दशधा चेति समासेन पुनरेकैव पारणा। शाखाच त्रिविधा भूप! शाकला-वाष्कला-माण्डुकाः। तेषामध्ययनं प्रोक्तं मण्डलानि च सप्तति। पञ्चाशीति वरसंख्या तु चतुर्विंशच्छतानि च। ऋचां दश सहस्राणि ऋचां पञ्च शतानि च। ऋचामशीतिः पादश्च एतत् पारणमुच्यते। ऋग्वेदे तु भवेत्संख्या यजुर्वेदस्य श्रूयताम्। षडशीतिविभेदेन मया भिन्नाः शिवाशया। दशधा चरकास्तत्र करकाद्वारिद्रवीयाः, कठाः प्राच्यकठश्चैव कपिष्ठलकठास्तथा। नारायणीया श्वेताश्च श्वेताश्वतरमैत्रायणाः। पुनः सप्त विभेदेन मैत्रायणाः प्रकीर्त्तिताः। मानवा दुन्दुभा वाराहाः छागेया हारिद्रवीया, श्यामाः श्यामायनीयाश्च तेषामध्ययनमुच्यते। अष्टादश सहस्राणि पाठो वेदविदोऽविदन्। द्विगुणं पदपाठीयस्त्रिगुणं क्रमपारगाः। षडङ्गानि यदाधीते स षडङ्गविदुच्यते। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोज्योतिषम्। षडङ्गानि भवन्त्येतान् उपाङ्गानि शृणुष्व भोः। प्रतिपदमनुपदं छन्दो भाषाधर्मान्वितम्। मीमांसा-न्यायतर्कश्च उपाङ्गाः परिकीर्त्तिताः। परिशिष्टाश्च संख्याता अष्टादश शृणुष्व तान्"। यूपलक्षणं छागलक्षणं प्रतिष्ठानुवाकसंख्या चरणव्यूह-श्राद्ध-कल्प-शुल्कानि परिषदृग्यजुर्मिष्टकापूरणं प्रवराध्यायोक्थशास्त्र क्रतुसंख्या निगमा यज्ञपार्श्वहोतृकम्। प्रसवोत्थानकूर्मलक्षणसंयुतम्। कथिताः परिशिष्टास्तु ह्यूनविंशतिसंख्यया। कठानां पुनरन्यानि चत्वारिंशच्च तान्। प्राच्योदीच्या निरूढाश्च वाजसनेयास्तु पञ्च च। दशभेदविभिन्नाश्च दृष्टव्या सुनिपुङ्गव!। जाबाला-बौधेया काण्वामाध्यन्दिनाश्च शापेयाः। तपायिनः कपालाख्या पौण्ड्रवत्साः आवटिकाः। परमावटिकाः पाराशरा

ऋग्वा बौधायनीयाः । अथोध्या अथोधेयाश्च तेषामध्ययनानि च । द्विसहस्रे शतन्यूने वेदे वाजसनेयके । ऋग्गणाख्यं प्रसङ्ख्यातं ततोऽन्यानि यजूंषि च"। एतत्प्रमाणं यजुषां हि केवलम् "सखिलं सशुक्रियं परिसंख्यातं ब्राह्मणम् । चतुर्गुणन्तु जानीयात्तैत्तिरीया द्विधा पुनः । औखेयाः खाण्डिकेयाश्च खाण्डिकाः पञ्चधा पुनः । कालेया बौधायनीया हिरण्यकेशास्तथैव च । भारद्वाजापस्तम्बाश्च तेषां भेदाः प्रकीर्त्तिताः । अध्ययनं सौत्रिकञ्चैव प्रवचनीयं तथापरम् । सामवेदस्तु विस्तीर्णः सहस्रभेदश्च पुरा । अनध्यायेष्वधीयाना, तदा इन्द्रेण धीमता । वज्रेण निहताः शेषांस्तान्वक्ष्ये शृणु सत्तम ।। राणायनीयाः कौथुमास्तत्र भेदान् पुनः शृणु । राणायनीयाः सप्तैव उपाध्यायास्ततोऽपरे । कालवेया महाकालवेया-लाङ्गलवेदुताः । कौथुमानामपि सप्त अक्षराश्चापरा यथा । प्रजालावैनभृत्याश्च परियोग्याः परिकायणाः । अध्ययनमपि तेषान्तु यथावत् कथितं शृणु । अष्टौ सामसहस्राणि सामानि च चतुर्दश । अष्टौ शतानि नवतीं दश सवालखिल्यकाः । ससुपर्णाश्च सख्याश्च एतं सामगणं विदुः । अथो अथर्ववेदस्य नव भेदा भवन्ति हि । पिप्पलादा वत्सदाश्च भूतायना कातयस्तथा । जाजला ब्रह्मवेदाश्च शौनकी करणी तथा । वेदस्पर्शचौरविद्या तेषामध्ययनं शृणु" । पञ्चकल्पा भवन्ति "नक्षत्रकल्पो वैतानः संहिताविधिः आङ्गिरसम् । शान्तिकल्पश्च अथर्वणो भवन्ति ह । ऋग्वेदस्यात्रेयं गोत्रं वासुदेवं विदुर्बुधाः । काश्यपञ्च यजुर्वेदं रुद्रदेवन्तु तं विदुः । सामवेदोऽपि गोत्रेण भारद्वाजः पुरन्दरम् । अधिदेवं विजानीयात् वैतानन्तु अथर्वणः" ।

**वेदगर्भ** पु० वेदो गर्भे यस्य । सर्ववेदस्य प्रथमं कर्त्तरि १हिरण्यगर्भे २विप्रे च हेमच० । ३विष्णौ विष्णुस० ।

**वेदन** न० विद–ल्युट् । १ज्ञाने २सुखदुःखाद्यनुभवे ३विवाहे च "वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने" इति मनुः । युच् । वेदनापि उक्तार्थेषु स्त्री । सा च वौद्धमते स्कन्धपञ्चकान्तर्गतस्कन्धभेदे वौद्धशब्दे दृश्यम् ।

**वेदनिन्दक** पु० ६त० । १नास्तिके जटा० २वौद्धे च ।

**वेदपारग** पु० वेदानां पारमन्तं सीमां गच्छति गम–ड । समस्तवेदाध्यायिनि । [वेदरक्षकत्वात्तथात्वम् ।

**वेदमातृ** स्त्री ६त० । गायत्र्यां मन्त्रभेदे तस्याः स्वमातृपाठेन

**वेदवत्** पु० वेदोऽभ्यसनीयत्वेनास्त्यस्य मतुप् मस्य वः । १वेदाभ्यासरते द्विजे । २कुशध्वजराजकन्यायां सीतादिरूपेणाभिभूतायां स्त्री । "कृते युगे वेदवती कुशध्वजसुता शुभा । त्रेतायां रामपत्नी सा सीतेति जनकात्मजा । तच्छाया द्रौपदी देवी द्वापरे द्रुपदात्मजा । त्रिहायणीति सा प्रोक्ता विद्यमाना युगत्रये" ब्रह्मवै०प्र०१२अ० ।

**वेदवास** पु० ६त० । ब्राह्मणे तस्य तत्पाठनद्वाराश्रयत्वात् तथात्वम् वेदावासादयोऽप्यत्र । [दश्य त्रि० ।

**वेदविद्** पु० वेद वेत्ति विद–क्विप् । १विष्णौ विष्णुस० २वे

**वेदव्यास** पु० वेदान् व्यस्यति विभिन्नशाखत्वेन पृथक् करोति वि+अस–अण् । पराशरपुत्रे सत्यवतीगर्भजे १मुनिभेदे तथा भूतेषु अन्येषु २मुनिषु च ।

युगभेदे तद्भेदाश्च विष्णुपु० ३अं० ३अ० उक्ता यथा पराशर उवाच "यस्मिन् मन्वन्तरे व्यासा ये ये तांस्तान् निबोध मे । यथा च भेदः शाखानां व्यासेन क्रियते मुने ।। अष्टाविंशतिकृत्वो वै वेदा व्यस्ता महर्षिभिः । वैवस्वतेऽन्तरे तस्मिन् द्वापरेषु पुनः पुनः । वेदव्यासा व्यतीता ये अष्टाविंशतिसत्तमाः । चतुर्धा यैः कृतो वेदो द्वापरेषु पुनः पुनः । द्वापरे प्रथमे व्यस्ताः स्वयं वेदाः स्वयम्भुवा१ । द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः२ । तृतीये चोशना३व्यासश्चतुर्थे तु बृहस्पतिः४ । सविता५ पञ्चमे व्यासो मृत्युः६ षष्ठे स्मृतः प्रभुः । सप्तमे च तथैवेन्द्रो७ वसिष्ठ८श्चाष्टमे स्मृतः । सारस्वत९श्च नवमे त्रिधामा१० दशमे स्मृतः । एकादशे च त्रिवृषो११ भरद्वाज१२स्ततः परम् । त्रयोदशे चान्तरीक्षो१३ धर्मी१४ चापि चतुर्दशे । त्र्यारुणः१५ पञ्चदशे षोडशे तु धनञ्जयः१६ । कृतञ्जयः१७ सप्तदशे ऋणज्यो१८ऽष्टादशे स्मृतः । ततो व्यासो भरद्वाजो१९ भरद्वाजात्तु गौतमः२० । गौतमादुत्तरं व्यासो हर्यात्मा२१ योऽभिधीयते । अथ हर्यात्मनो वेण स्मृतो वाजश्रवास्तु२२ य । सोमो शुष्मायनस्तस्मात् तृणबिन्दु२३रिति स्मृतः । ऋक्षोऽभूद्भार्गवस्तस्मात् वाल्मीकि२४र्योऽभिधीयते । तस्मादस्मत् पिता शक्ति२५ व्यासस्तस्मादहं२६(पराशर) मुने । जातुकर्णो२७ऽभवन्मत्तः (पराशरादनन्तरम्) कृष्णद्वैपायनः२८ स्मृतः । (ततो जातुकर्णान्तरम् अष्टाविंशतितमे युगे)"अष्टाविंशतिरित्येते वेदव्यासाः पुरातनाः । एको वेदश्चतुर्द्धा तु तैः कृतो द्वापरादिषु । भविष्ये द्वापरे चैव द्रौणिर्व्यासो भविष्यति । व्यतीते मम पुत्रेऽस्मिन् कृष्णद्वैपायने मुने"।

**वेदस्** पु० विद–असुन् । वेत्तरि । जातवेदा विश्ववेदा ।

**वेदाङ्ग** न० वेदस्याङ्गमिव। "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः। ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु" इत्युक्तेषु शिक्षादिषु षट्सु शास्त्रेषु। तेषामङ्गविशेषरूपत्वं शिक्षायामुक्तं यथा
"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते"।

**वेदादि** पु० वेदस्यादिरिव तस्यादौ प्रथमोच्चार्य्यमाणत्वात्। प्रणवे

**वेदाधिप** पु० ६त०। "ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपो भृगुः। सामवेदाधिपो भौमः शशिजोऽथर्ववेदपः" इत्युक्तेषु जीवादिषु २विष्णौ च विष्णुस०।

**वेदान्त** पु० ६त०। वेदशिरोभागे ब्रह्मप्रतिपादके उपनिषद्रूपे १ग्रन्थभेदे तदुपकारके २शारीरकसूत्रभाष्यादौ च उत्तरमीमांसाशब्दे १०८७पृ० दृश्यम्। शारीरकसूत्रस्य बहुभिराचार्य्यैः स्वस्वमतानुसारेण व्याख्यात तत्र रामानुजपूर्णप्रज्ञशब्दयोस्तत्तन्मतं प्रदर्शितं शाङ्करमतानुसारिमतस्य सिद्धान्तावन्तुप्रदर्शितस्य सङ्क्षेपोऽत्र प्रदर्श्यते
"वेदान्तिमते सामान्यतः द्विविध एव पदार्थः दृग्दृश्यश्च तत्रैव सर्वपदार्थान्तर्भावात्। तत्र दृक्पदार्थ आत्मा। स च सर्वदैकरूपोऽप्यौपाधिकभेदात् त्रिविधः ईश्वरः जीवः साक्षी चेति। तत्र कारणीभूताज्ञानोपाधिरीश्वरः। अन्तःकरणतत्संस्काराविच्छिन्नाज्ञानोपहितो जीवः। जीवेश्वरानुगतसर्व्वानुसन्धातृ चैतन्यं साक्षी। तत्रेश्वरोऽपि त्रिविधः स्वाधीनभूताविद्यावृत्तिसत्त्वादिगुणत्रयभेदेन विष्णुब्रह्मरुद्रभेदात्। तत्र कारणीभूतसत्त्वगुणावच्छिन्नो विष्णुः पालयिता। तथा रजउपहितो ब्रह्मा स्रष्टा। हिरण्यगर्भस्तु महाभूतकारणस्याभावात्र ब्रह्मा। तथापि स्थूलभूतस्रष्टृत्वेन कश्चिद् ब्रह्मेत्युपचर्य्यते। तथा तम उपहितो रुद्रः संहर्त्ता। एतस्यैव तस्य चतुर्भुजचतुर्मुखाद्याः पुमाकाराः श्रीभारतीभवान्याद्याश्च स्त्र्याकाराः मनुष्यकुमीटयोऽप्यवताराः लीलयैवाविर्भवन्ति। तथा जीवोऽपि त्रिविधः सोपाधिजाग्रदाद्यवस्थात्रयभेदेन विश्वतैजसप्राज्ञभेदात्। तत्राविद्यान्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदभिमानी विश्वः। स एव स्थूलशरीराभिमानरहितः उपाधिद्वयोपहितः स्वप्नावस्थाभिमानी तैजसः। अयमेव शरीरद्वयान्तःकरणो, अविरहितोऽन्तःकरणसंस्काराविच्छिन्नोऽविद्यामात्रोपहितः सुषुप्त्यवस्थाभिमानी प्राज्ञः। साक्षी तु सर्वानुसन्धाता सर्वानुगतस्तुरीयाख्य एकविध एव।

अविद्यातत्कार्य्यात्मकप्रपञ्चो दृश्यपदार्थः तस्यापारमार्थिकत्वेऽपि व्यावहारिकत्वाभ्युपगमाच्च स्वप्नादिवत्तात्त्विकत्वम्। दृश्योऽपि त्रिविधः अव्याकृतमूर्त्तामूर्त्तभेदात्। तत्र चिदाभाससहिताऽविद्या मूर्त्तामूर्त्तप्रपञ्चस्य बीजशक्तिरनादिरव्याकृतमित्युच्यते। इयञ्चाव्याकृताख्याऽविद्येश्वरोपाधिः। सा च स्वयं जडाप्यजडेन चिदाभासेनोज्ज्वलिता पूर्वपूर्वसंस्कारजीवकर्म्मभ्यां प्रयुक्ता सती शब्दस्पर्शरूपरसगन्धाश्रयाण्याकाशवायुतेजोजलपृथिव्यात्मकानि पञ्च सूक्ष्ममहाभूतानि जनयति। तत्र पूर्वपूर्वभूतभावापन्नाया एवाविद्याया उत्तरोत्तरभूतं प्रति कारणत्वात् पूर्वपूर्वभूतगुणानामुत्तरोत्तरभूतेष्वनुप्रवेशात् भूतानामेकैकवृद्धीभूतगुणशालित्वं तथा आकाशस्य शब्दो गुणः, वायोः शब्दस्पर्शौ, तेजसः शब्दस्पर्शरूपाणि, जलस्य तानि रसश्च, पृथिव्यास्तानि गन्धश्चेति। आकाशस्यैव दिग्व्यवहारजनकत्वेन दिशो न पृथक्पदार्थता। कालस्य चिज्जडसम्बन्धरूपतया तदाधाराविद्यात्मकतया च न पार्थक्यम्। तानि च सूक्ष्माणि पञ्च भूतानि अमूर्त्ताख्यानि कारणभेदाच्च सत्त्वरजस्तमोगुणात्मकानि सत्त्वरजोंऽशप्राधान्येन ज्ञानक्रियाशक्त्यात्मकमेकं सूक्ष्मद्रव्यं चित्तरूपमिव मिलित्वा जनयन्ति। तच्च समस्तं द्रव्यं ज्ञानशक्तिप्राधान्येऽन्तःकरणं तदपि द्विविधं मनोबुद्धिभेदात् चतुर्विधं मनोबुद्ध्यहङ्कारचित्तभेदादित्यन्ये। तदेव क्रियाशक्तिप्राधान्ये प्राणः। स च पञ्चधा प्राणादिभेदात्। एवमेकैकभूतेभ्यो ज्ञानक्रियाशक्तिभेदात् प्रत्येकं ज्ञानकर्मेन्द्रियद्वयं जायते। यथाकाशात् श्रोत्रवाचौ, वायोस्त्वक्पाणी, तेजसश्चक्षुःपादौ, अद्भ्यो रसनापायू, पृथिव्या घ्राणोपस्थौ चोत्पद्येते। तत्र शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रत्वक्चक्षूरसनाघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि वचनादानगतिविसर्गानन्दजनकानि वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्म्मेन्द्रियाणि। एतच्च सर्वं मिलित्वा सप्तदशकं लिङ्गशरीरम्। तच्च ज्ञानशक्तिप्राधान्येन समष्टौ हिरण्यगर्भ इति क्रियाशक्तिप्राधान्येन समष्टौ सूत्रमिति चोच्यते। अथ मूर्त्तपदार्थे कार्य्यत्वात्। समष्टिव्यष्टिजीवोपाधिसूक्ष्मभूतानि तु भोगायतनं शरीरं भोग्यविषयजातञ्च विना भोगं जनयितुमसमर्थानीति जीवकर्म्मप्रयुक्तानि तानि भोगार्थं पञ्चीकृतानि स-

**वैकङ्कत** पु० विकङ्कत+स्वार्थेऽण् (बैँचि) १वृक्षभेदे। तस्येदम् अण्। २विकङ्कतसम्बन्धिनि त्रि०। [२पक्षभवे च।

**वैकल्पिक** त्रि० विकल्पेन प्राप्तं तत्र भवो वा ठक्। १पक्षप्राप्ते

**वैकल्य** न० विकलस्य भावः ष्यञ्। विकलत्वे।

**वैकुण्ठ** पु० विकुण्ठायां भव अण् विविधा कुण्ठा माया यस्य स्वार्थेऽण् वा। १विष्णौ २इन्द्रे मेदि०। ३श्वेतार्जके राजनि० "चाक्षुषस्यान्तरे देवो वैकुण्ठः पुरुषोत्तमः। विकुण्ठायामसौ जज्ञे देवतैः सह" विष्णुपु० "विविधा कुण्ठा गतेः प्रतिहतिस्तस्याः कर्त्ता इति वैकुण्ठः। जगदारम्भे विश्लिष्टानि भूतानि परस्परं संश्लेषयन् तेषां गतिं प्रत्यवस्थापयति वा वैकुण्ठः। "मया संश्लेषिता भूमिरद्भिर्व्योम्ना च वायुना। वायुश्च तेजसा सार्द्धं वैकुण्ठत्वं ततो मम" भा० शान्तिप०। विष्णुस० भा०। "कुण्ठं जडञ्च विशेष विशिष्टञ्च करोति या। विकुण्ठा प्रकृतिं वेदाश्चत्वारश्च वदन्ति ताम्। गुणान्वयेन भगवान् तस्याजातः स्वरूपये। परिपूर्णतमं तेन वैकुण्ठञ्च विदुर्बुधाः"। ४विष्णुधामभेदे "उपरिष्टात् स्थितस्तौ कोट्यः सत्यलोकमितम्। सत्यादुपरि वैकुण्ठो योजनानां प्रमाणतः। भूर्लोकात् परिसंख्यात कोटिरष्टादश प्रभो!। यत्रास्ते श्रीपतिः साक्षात् सर्वेषामभयप्रदः" पद्मपु० स्व० ६ अ०।

**वैकृत** न० विकृतस्य भावः अण्। १विकारे २बीभत्सरसे तदालम्बनमांसशोणितादौ विकृतित आगतः अण्। ३विकृतितो जाते त्रि० 'वैकृतास्तु तथा देवाः"।

**वैक्रान्त** न० स्वार्थे अण्। मणिभेदे विक्रान्तशब्दे दृश्यम्।

**वैखरी** स्त्री विशेषेण खं राति रा—क स्वार्थे अण्। अर्थबोधके कण्ठादिस्थानाख्यमाणे वर्णात्मके शब्दविशेषे। वर्णशब्दे ४८५० पृ० दृश्यम।

**वैखानस** पु० वि+खन—ड खन—अशुन् कर्म० स्वार्थे अण्। वानप्रस्थे तापसभेदे "वैखानसेभ्य श्रुतरामवार्त्ता" भट्टि

**वैगुण्य** न० विगतो विरुद्धो वा गुणोऽस्य तस्य भावः ष्यञ्। यत्र यदुचितं तस्य १रूपान्तरतापादने २अन्यादृत्वे ३असम्पन्नत्वे च। [गुणत्वे च।

**वैचित्र्य** न० विचित्रस्य भावः ष्यञ्। १नानारूपत्वे २विस्त

**वैजयन्त** पु० विजयते वि+जि—झ स्वार्थे अण्। १इन्द्रप्रासादे अमरः। २इन्द्रे मेदि०। ३गृहे शब्दच०। ४इन्द्रध्वजे मेदि०। ५अग्निमन्थवृक्षे राजनि० ६पताकायाम् स्त्री अमरः। ७वैजन्तीवृक्षे च स्त्री मेदि०।

**वैजिक** न० बीजेन निर्वृत्तं ठक्। १शिग्रुतैले मेदि०। बीजाय हितम् स्वार्थे ठक् वा। २कारणे। ३आत्मनि शब्दमा० तस्येदं बीजादागत वा ठञ्। ४सद्योजाताङ्कुरे मेदि० ५बीजसम्बन्धिनि त्रि०।

**वैज्ञानिक** पु० विज्ञानाय साधु ठक्। १निपुणे अमरः। विज्ञानमधिकृत्य कृतो ग्रन्थः ठक्। २योगागमे ३तदध्येतरि ४तत्सम्बन्धिनि च त्रि०।

**वैडालव्रत** न० विडालस्येदम् अण् तदिव व्रतम् "यस्य धर्मध्वजो नित्यं शक्रध्वज इवोच्छ्रितः। प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम्" इत्युक्ते प्रकाशेन धर्माचरणेन गुप्तपापाचारे।

**वैडालव्रतिक** पु० वैडालव्रतमस्त्यस्य ठन्। छद्मेन धर्मचारिणि छद्मतापसे त्रिका०। इनि। वैडालव्रतिन् तत्रार्थे "छद्मना चरित तच्च व्रतं रक्षांसि गच्छति। अलिङ्गी लिङ्गिवेशेन यो लिङ्गमुपजीवति। स लिङ्गिनां हरेत् पापं तिर्य्यग्योनौ च जायते"। वैडालव्रतिनः पापाः सर्वधर्मविनाशकाः। सद्यः पतन्ति पापेषु कर्मणस्तस्य तत् फलम्" कूर्मपु० ५अ०।

**वैणव** न० वेणुना फलम् अण्, तस्य न लुप् तस्येदं वा अण्। १वेणुफले वेणुयवे अमरः। २वेणुसम्बन्धिनि त्रि० स्त्रियां ङीप्।

**वैणविक** त्रि० वेणोर्विकार अण् वैणवं वेणुवाद्यं शिल्पमस्य ठक्। वंशीवादके अमरः। [अमर।

**वैणिक** त्रि० वीणा तद्वादनं शिल्पमस्य ठक्। वीणावादके

**वैणुक** न० वेणोर्विकार ठक्। १गजचालनार्थे लौहमुखे वंशदण्डे अमर। वेणुस्तद्वादनं शिल्पमस्य ठक्। २वेणुवादके त्रि० शब्दच०। [रूपभेदे जटा०।

**वैण्य** (न्य) पु० वेण(न)स्यापत्यम् यञ्। १वेणसुते पृथुनामके

**वैतंसिक** त्रि० वितंसेन मृगपक्ष्यादिबन्धनोपायेन चरति ठक्। मांसविक्रयोपजीवके व्याधे अमर.। [भृत्यादौ अमरः।

**वैतनिक** त्रि० वेतनेन जीवति ठक्॥ वेतनोपजीवके कर्मकरे

**वैतरणि(णी)** स्त्री वितरणेन दानेन लङ्घ्यते अण् ङीप् वा पृषो० ह्रस्व०। यमद्वारस्थे नदीभेदे "नदी वैतरणी नाम दुर्गन्धा रुधिरावहा। उष्णतोया महावेगा अस्थिकेशतरङ्गिणी" प्रा०वि० जमदग्निः। तस्या उत्पत्त्यादि कालिकापु० १८अ० उक्तं यथा "शर्वेश्वरोऽपि भूतेशमासाद्यान्तर्हितस्तदा। वाग्भृष्टिं दुराधर्षामवजग्राह मायया। यदा स मागधस्य वाक्यात् सम्भारयितुमर्कजः। तदा महागिरौ क्षिप्ता वाम्भासे

वैदूर्य्यं सत्वपन्नमनेकवर्णं शोभाभिरामं द्युतिवर्णबीजम् । अदिदूरे विदूरस्य गिरेरुत्तुङ्गरोधसः । कामभूतिकसीमानमनु तस्याकरोऽभवत् । तस्य नादसमुत्थत्वादाकरः सुमहागुणः । अभूदुत्तरितो लोके लोकत्रयविभूषणः । तस्यैव दानवपतेर्निनदानुरूपमादृष्ट् पयोदरवदर्शितचारुरूपा । वैदूर्य्यरत्नमणयो विविधावभासास्तस्मात् स्फुलिङ्गनिवहा इव संबभूवुः । पद्मरागमुपादाय मणिवर्णा हि ये स्थिताः । सर्व्वांस्तान् वर्णः शोभाभिर्वैदूर्य्यमनुगच्छति । तेषां प्रधानं शिखिकण्ठनीलं यद्वा भवेद्वेणुदलप्रकाशम् । चाषाग्रपत्रप्रतिमश्रियो ये न ते प्रशस्ता मणिशास्त्रविद्भिः । गुणवान् वैदूर्य्यमणिर्योजयति स्वामिनं परभाग्यैः । दोषैर्युक्तो दोषैस्तस्मात् यत्नात् परीक्षेत । गिरिकाचशिशुपालौ काचस्फटिकाश्च भूमिनिर्भिन्नाः । वैदूर्य्यमणेरेते विजातयः सन्निभाः सन्ति । लिखाभावात् काचं लघुभावाच्छिशुपालकं विद्यात् । गिरिकाममदीप्तित्वात् स्फटिकं वर्णोज्ज्वलत्वेन । यदिन्द्रनीलस्य महागुणस्य सुवर्णसंख्याकलितस्य मूल्यम् । तदेव वैदूर्य्यमणेः प्रदिष्टं पलद्वयोन्मापित गौरवस्य । जात्यस्य सर्व्वेऽपि मणेस्तु यादृक् विजातयः सन्ति समानवर्णाः । तथापि नानाकरणानुमेयभेदप्रकारः परमः प्रदिष्टः । सुखोपलक्ष्यश्च सदा विचार्य्यो ह्ययं प्रभेदो विदुषा नरेण । स्नेहप्रभेदो लघुता मृदुत्वं विजातिलिङ्गं खलु सार्व्वजन्यम् । क्रयेऽक्रयमे प्रयुज्यमानाः प्रतिबद्धाः प्रतिबद्धक्रिया प्रयोगे । गुणदोषसमुद्भवं लभन्ते मणयोऽर्थान्तरमूल्यमेव भिन्नाः । क्रमशः समतीतवर्त्तमाना प्रतिबद्धा मणिबन्धकेन यस्मात् । यदि नाम भवन्ति दोषहीना मणयः षड्गुणमाप्नुवन्ति मूल्यम् । आकरान् समतीतानामुदधेस्तीरसन्निधौ । मूल्यमेतत् मणीनान्तु न सर्व्वत्र महीतले । सुवर्णो मतुना यस्तु प्रोक्तः सोऽत्र समाषक । तस्य षष्ठतिमो भागः संज्ञारूप करिष्यति । शाणकतुलोन्मानो माषकः पञ्चकृष्णलः । पञ्चस्य दशमो भागो धरणः परिकीर्त्तितः । इति मानविधिः प्रोक्तो रत्नानां मूल्यनिर्णये" । गारुडे ७१ अ० । "सितश्च धूम्रवर्णाभो नीलकृष्णाख्यवर्णितं भवेत् । वैदूर्य्यनाम तद्रत्नं रत्नविद्भिरुदाहृतम् । ब्राह्मणक्षत्रियविट्शूद्रजातिभेदाच्चतुर्विधाः । सितशीतो भवेद्विप्रः सितरक्तस्तु बाहुजः । शीतपीतस्तु वैश्यः स्यात् नील एव हि शूद्रकः" । अस्य गुणाः "आश्चर्य्यरतप्रभस्य रत्नोत्तमं हि वा । कलितं निर्म्मलं स्वच्छं वैदूर्य्यं देवभूषणम् । सुतारं समलत्वञ्च कलितं स्वच्छमेव च । वैदूर्य्याणां समाख्याता एते पञ्च महागुणाः" । "उद्गिरन्निव दीप्तिं योऽसौ सुतार इतीर्य्यते । प्रमाणतोऽल्पं गुरु यत् घनमित्यभिधीयते । कलङ्कादिविहीनं तदच्छमिति कीर्त्तितम् । अम्लयस्तकलाकारसहजो यत्र दृश्यते । कलितं नाम तद्रत्नं सर्व्वसम्पत्तिकारकम् । विश्लिष्टाङ्गन्तु वैदूर्य्यं व्यङ्गमित्यभिधीयते । कर्क्करं कर्कशं त्रासं कलङ्का देह इत्यपि । एते पञ्च महादोषा वैदूर्य्याणामुदीरिताः । शर्क्करायुक्तमिव यत् प्रतिभाति च कर्क्करम् । स्पर्शेऽपि यच्चजत्वेय च कर्कशं बन्धुनाशनम् । भित्तिभ्रान्तिकरस्त्रासः स कुर्य्यात् कुलनक्षयम् । विरूपवर्णो यस्याङ्गे कलङ्कः क्षयकारकः । मलंदिग्ध इवाभाति देहो देहविनाशनः । अयात यदि सुवर्णत्यागहीनो यदा वा वस्त्रविधमणिहारी भूपति र्वा यति र्वा । दधदपि धृतदोष जात वैदूर्य्यरत्न मतिहतफलरूपं पातमेव ध्रुवम्" । युक्तिकल्पतरु ।

**वैदेह** पुं० विशेषेण देह उपचयो यस्य स्वार्थे प्रज्ञाद्यण् विदेहे भवः अण् वा । १वणिग्जने भरतः । शूद्रात् वैश्यजाते २जातिभेदे पुंस्त्री० मेदि० स्त्रियां ङीप् । ठक् । वैदेहिकोऽपि वणिजि । विदेहानां राजा अण् । ३विदेहराजे जनके नृपे ।

**वैदेही** स्त्री विदेहेषु मिथिलादेशेषु भवा अण् । १सीतायाम् जनकात्मजायाम् २हरिद्रायाम् ३पिप्पल्यां ४वणिक्स्त्रियाञ्च मेदि० ।

**वैद्य** पुं० विद्याऽस्त्यस्य अण् । १पण्डिते "नाविद्यानान्तु वैद्येन देयं विद्याधनात् क्वचित्" दायभा० । २भिषजि अमरः । तदुपकारके ३वासकवृक्षे च शब्दच० । वैद्योत्पत्तिश्च "वैद्योऽश्विनीकुमारेण जातश्च विप्रयोषिति । वैद्यवीर्य्येण शूद्रायां बभूवुर्बहवो जनाः । ते च ग्रामगुणज्ञाश्च मन्त्रौषधिपरायणाः । तेभ्यश्च जाताः शूद्रायां ते व्यालग्राहिणो भुवि" । शौनक उवाच "कथं ब्राह्मणपत्न्यान्तु सूर्य्यपुत्रोऽश्विनीसुतः । अहो केन विपाकेन वीर्य्याधानं चकार सः" । सौतिरुवाच "गच्छन्तीं तीर्थयात्रायां ब्राह्मणीं रविनन्दनः । ददर्श कामुकीं कान्तां पुष्पोद्याने मनोहरे । तया निवारितो यत्नात् बलेन बलवान् सुरः । अतीव सुन्दरीं दृष्ट्वा वीर्य्याधानं चकार सः । द्रुतं तत्याज गर्भं सा पुष्पोद्याने मनोरमे

**व्याघ्रपाद्(द)** पु॰ व्याघ्रस्य पाद इव मूलमस्य वा अन्त्यलोपः। १विकङ्कतवृक्षे अमरः। २मुनिभेदे च ३विकङ्कतवृक्षे राजनि॰। [अमरः। ६त॰। ४व्याघ्राङ्गुले च।

**व्याघ्रपुच्छ** पु॰ व्याघ्रस्य पुच्छमिव दलमस्य। १एरण्डवृक्षे

**व्याघ्राट** पुंस्त्री॰ व्याघ्र इवाटति अट-अच्। भरद्वाजखगे अमर स्त्रियां ङीष्। [याम् अमरः।

**व्याघ्रादनी** स्त्री व्याघ्रेणाद्यते अद-ल्युट् ङीप्। मिश्रता

**व्याघ्रास्य** पुंस्त्री॰ व्याघ्रस्येवास्यं यस्य। विडाले शब्दच॰। स्त्रियां टाप्।

**व्याघ्री** स्त्री व्याघ्रनखाकार कण्टकोऽस्त्यस्याः अच् गौरा॰ ङीष्। १कण्टकारिकायाम् अमर.। जातौ ङीष्। २व्याघ्रयोषिति।

**व्याज** पु॰ वि+अज+घञ् वीभावाभाव। १कपटे वञ्चनाफले २अपह्नुत्यलङ्कारे कारणान्तरेण ३प्रकृतस्य कारणान्तरत्वेनोद्भावनरूपे अपदेशे च अमरः।

**व्याजनिन्दा** स्त्री ६त॰। १कपटनिन्दायाम् २अर्थालङ्कारभेदे च अलङ्कारशब्दे ४०४ पृ॰ दृश्यम्।

**व्याजस्तुति** स्त्री॰ ६त॰। १कपटस्तुतौ २अर्थालङ्कारभेदे च अलङ्कारशब्दे दृश्यम्। [अलङ्कारशब्दे ४०४पृ॰दृश्यम्।

**व्याजोक्ति** स्त्री ६त॰। १छलेनोक्तौ २अर्थालङ्कारभेदे च।

**व्याड** पु॰ वि+आ+अड-अच्। १मांसभक्षके व्याघ्रादौ पशौ २सर्पे अमरः। ३इन्द्रे शब्दच॰। ४वञ्चके त्रि॰ रायमु॰।

**व्याडायुध** न॰ व्याडस्य व्याघ्रस्यायुध मिव इवार्थस्य अच्। व्याघ्रनखाख्ये गन्धद्रव्ये अमर। [च ३मुनिभेदे त्रिका॰।

**व्याडि** पु॰ व्याकरणस्य संग्रहाख्यग्रन्थकारके १कोषकारके

**व्यात्युक्षी** स्त्री वि+अति+उक्ष-भावे व्यतिहारे णच् स्वार्थे अण् ङीप्। परस्परसेचनरूपे जलक्रीड़ाभेदे।

**व्यादिश** पु॰ वि+आ+दिश-क। १विष्णौ विष्णुस॰ २विशेषेण आदेशके त्रि॰।

**व्याध** पुंस्त्री॰ व्यध-ण। मृगहिंसके चलितात् सर्वविषयस्यां जाते १सङ्कीर्णजातिभेदे पुंस्त्री॰ स्त्रियां ङीप्। "मा-पितात् गोपकन्यायां सर्वस्यां तस्य योषिति। अस्माद् बभूव व्याधश्च बलवान् मृगहिंसकः" ब्रह्मवै॰ब्र॰ १०अ॰। २दुष्टे त्रि॰ मेदि॰। भावे घञ्। ३वेधने ४पीड़ने च।

**व्याधभीत** पुंस्त्री॰ व्याधाद्भीतः भी-क्त। मृगे शब्दच॰। स्त्रियां ङीप्। [वल्ले हेमच॰।

**व्याधाम** पु॰ व्याधेन पीड़नेन अमति अम-णिच्-अच्।

**व्याधि** पु॰ वि+आ+धा-कि। १रोगे व्याधिश्च दोषान्तराद-भेदः चित्तविक्षेपशब्दे २६४१ पृ॰ दृश्यम्। २कुष्ठे अमरः। ३कामकृते नायकयोरवस्थाभेदे मा॰द॰।

**व्याधिघात** पु॰ व्याधिं हन्ति+हन-अण्। आरग्वधे (सोन्दाल) अमरः। [अमर

**व्याधित** त्रि॰ व्याधिर्जातोऽस्य तार॰ इतच्। व्याधियुक्ते

**व्याधिहन्तृ** पु॰ व्याधिं हन्ति हन-तृच्। १वाराहीकन्दे राजनि॰ २रोगनाशके त्रि॰ स्त्रियां ङीप्।

**व्याधु(धू)त** त्रि॰ वि+आ+धु-(धू)-क्त। कम्पिते शब्दर॰।

**व्यान** पु॰ वि+अन-घञ्। देहस्थे सर्वशरीरव्यापके मोक्षादिमध्ये ॥युभेदे "विष्वगननवान् वायुर्व्यान इत्यभिधीयते" वेदान्तमतम् "व्यानो व्यानयत्यस्य सर्वव्याधिप्रकोपनः। महारजतसप्रख्यो ह्यानोपादानकारणम्। रु चालिकर्णयोर्मध्ये कव्यां वै गुल्फयोरपि। प्राणे गले स्फिगुद्देशे तिष्ठत्यत्र निरन्तरम्। स्कन्धयस्थपरं चाङ्गं गात्रनेत्रे प्रकोपन" पदार्थादर्शः।

**व्यापक** त्रि॰ विशेषेणाप्नोति वि+आप-ण्वुल्। १अधिकदेशवृत्तौ "व्यापकत्वात् परापि स्यात्" भाषा॰। न्यायोक्ते स्वाधिकरणवृत्त्यभावाप्रतियोगिनि च २पदार्थे ३तन्त्रोक्ते सर्वाङ्गसम्बन्धिनि न्यासभेदे पु॰ "अङ्गुलिव्यापकन्यासौ" तन्त्रसा॰। ४व्याप्यादके त्रि॰ अमर। [च अमरः।

**व्यापन्न** त्रि॰ वि+आ+पद-क्त। १मृते हेमच॰ २विपद्युक्ते

**व्यापाद** पु॰ वि+आ+पद-घञ्। १द्रोहचिन्तने हेमच॰।

**व्यापादन** न॰ वि+आ+पद-णिच्-ल्युट्। १मारणे हेमच॰ २परानिष्टचिन्तने अमर।

**व्यापार** पु॰ वि+आ+पृ-घञ्। "व्यापारो भावना सैवोत्पादना सैव च क्रिया" हर्युक्तायां १भावयितृ॰ उत्पादनक्रियायाम्। स जातो २व्यवसाये च।

करणजन्ये करणजन्यक्रियाजनके ३पदार्थे यथा दात्ररूपकरणजन्यः तज्जन्यच्छेदजनकः छेद्यसंयोगादिः। चक्षुरिन्द्रियस्य व्यापारः विषयसंयोगः। "विषयेन्द्रियसंयोगो व्यापारः सोऽपि षड्विधः" भाषा॰। एवं यागादेः व्यापारः अदृष्टम्। व्यापारवत् कारणं करणमिति। "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्। विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्" हरिकारिका।

**व्यापारिन्** त्रि॰ व्यापारोऽस्त्यस्य इनि। १व्यापारवति कर्त्रादौ "न हि व्यापारेण आसादितोऽन्यथा सिद्धि"। २व्यवसायवति वणिग्जने पु॰। [२विष्णौ पु॰ विष्णुस॰।

**व्यापिन्** त्रि॰ वि+आप-णिनि। १व्यापके स्त्रियां ङीप्।

**व्यापृत** त्रि० वि+आ+पृ—क्त । १व्यापारयुक्ते २कर्मसचिवे हेमच० ।

**व्याप्त** त्रि० वि+आप+—क्त । १पूर्णे हेमच० । २समाक्रान्ते ३ख्याते च मेदि० । ४स्थापिते ५व्याप्तियुते च "समेन यदि नो व्याप्तः" उदयनाचार्य्य ।

**व्याप्ति** स्त्री वि+आप–क्तिन् । १ऐश्वर्य्यभेदे न्यायमते तदभाववति अविद्यमानत्वरूपे २पदार्थे यथा वह्नेरभाववति जलादौ धूमो नास्तीति धूमादौ वह्नेर्व्याप्तिः । "व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः । अथ वा हेतुमन्निष्ठविरहाप्रतियोगिना । साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते" भाषा० । प्रमेयत्वशङ्किता साध्यसिद्धे द्वितीयलक्षणमुक्तम् । प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति द्वितीयलक्षणार्थः । व्याप्तिश्च द्विविधा अन्वयव्याप्तिर्व्यतिरेकव्याप्तिश्च तत्रान्वयव्याप्तिः पूर्वोक्ता । "साध्याभावव्यापकत्वं हेत्वभावस्य यद् भवेत्" भाषा० उक्ता अपरा सा च साध्याभावव्यापकीभूताभावप्रतियोगितारूपा । तत्रान्वयव्याप्तिज्ञाने व्यभिचारज्ञानाभावः सहचारज्ञानञ्च कारणम् । व्यतिरेकव्याप्तिज्ञाने च साध्याभावे हेत्वभावस्य सहचारज्ञानं व्यभिचारज्ञानभावश्च कारणम् । "व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा । हेतुर्व्याप्तिग्रहे, तर्कः क्वचिच्छङ्कानिवर्त्तकः । द्वैविध्यन्तु भवेद् व्याप्तेरन्वयव्यतिरेकतः" भाषा० । धूमो यदि वह्निव्यभिचारी स्यात् तदा वह्निजन्यो न स्यादित्यादितर्केण व्यभिचारशङ्का निवर्त्त्यते तत्त्वाकरे दृश्यम् । उपाधिस्तु व्यभिचारोन्नायकतया व्याप्तिज्ञानविघटकतया अनुमितिविरोधी उपाधिशब्दे १२४८ पृ० दृश्यम् ।

**व्याप्य** त्रि० वि+आप–ण्यत् । १व्याप्ये २धूमादौ "व्याप्यस्यादपरोऽपि च" भाषा० । ३अनुमितिसाधने लिङ्गे न० ४साधनमात्रे ५कुष्ठौषधौ च अमर ।

**व्याम** पु० वि+अम–घञ् । तिर्य्यक्प्रसारितयोर्वाह्वोरन्तरालपरिमाणे हेमच० ।

**व्यायत** त्रि० वि+आ+यम–क्त । १दीर्घे २व्यापृते ३दृढे ४अतिशये च मेदि० । भावे–क्त । ५दैर्घ्ये ६आयामे च न० मेदि० ।

**व्यायाम** पु० वि+आ+यम–घञ् । १श्रमे २श्रमसाधने व्यापारे ३गौरवे ४दुर्गसञ्चारे ५विषमे मेदि० ६मल्लानां श्रमकारके व्यापारे (कुस्ति) ७व्यामपरिमाणे च हेमच० ।

**व्यायोग** पु० वि+आ+युज–घञ् । दृश्यकाव्यभेदे सा० द० तल्लक्षणमुक्तं यथा "ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः । हीनोगर्भविमर्षाभ्यां नरैर्बहुभिराश्रितः । एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः । कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः । राजर्षिरथ दिव्यो भवेद्धीरोद्धतश्च सः । हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः" यथा सौगन्धिकाहरणधनञ्जयविजयादि ।

**व्याल** पुंस्त्री० वि+आ+अड–घञ् डस्य लः । १सर्पे २हिंस्रपशौ अमरः । स्त्रियां ङीप् । ३दुष्टगजे च मेदि० ४चित्रके व्याघ्रे पुंस्त्री० राजनि० स्त्रियां ङीष् । ५नृपे पु० ५मधुरेश । ६शठे त्रि० अमरः ७क्रूरे त्रि० । [राजनि० ।

**व्यालगन्धा** स्त्री व्यालस्येव गन्धो लेशोऽस्याः । नाकुल्याम्

**व्यालग्राह** पु० व्यालान् सर्पान् गृह्णाति ग्रह–अण् । (सापुडे) सर्पधारिणि भरत । णिनि । अत्रैव शब्दर० । "व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्" शु० त० कौशीख० । [सिंहल्यायाम् राजनि० ।

**व्यालजिह्वा** स्त्री व्यालस्य सर्पस्य जिह्वेव पत्रमस्याः । महा-

**व्यालदंष्ट्र** पु० व्यालस्य व्याघ्रस्य दंष्ट्रेव कण्टकमस्य । गोक्षुरे राजनि० । [लदलोऽस्यम् ।

**व्यालनख** पु० व्यालस्य व्याघ्रस्य नखइव । गन्धद्रव्यभेदे व्या-

**व्यालपत्रा** स्त्री व्यालस्य पाद इव पत्रमस्याः । एर्वारौ कर्कटीभेदे राजनि० ।

**व्यालम्ब** पु० विशेषेण आलम्बते वि+आ+लवि–अच् । १रक्तैरण्डे वैद्यकम् । विशेषेण २लम्बमाने त्रि० ।

**व्यालायुध** न० व्यालस्य व्याघ्रस्य आयुधं नख इव । १नखीनामगन्धद्रव्ये मधुरेश । २व्याघ्रनखाख्ये गन्धद्रव्ये पु० राजनि०

**व्यावक्रोशी** स्त्री वि+अव+क्रुश–णच् स्वार्थे अण् ङीप् । परस्पराक्रोशे । [भिण्डके शब्दर० ।

**व्यावर्त्त** पु० विशेषेण आवर्त्तते वि+आ+वृत–अच् । न-

**व्यावहारी** स्त्री वि+अव+हृ–णच् स्वार्थे अण् ङीप् । परस्परहरणे । [परिहसने ।

**व्यावहासी** स्त्री वि+अव+हस–णच् स्वार्थेऽण् ङीप् । पर-

**व्यावृत्त** त्रि० वि+आ+वृत–क्त । १वृते हेमच० २निवृत्ते च "व्यावृत्तगतिरुद्याने" कुमार० ।

**व्यावृत्ति** स्त्री वि+आ+वृत–क्तिन् । निवारणे ।

**व्यास** पु० व्यस्यति वेदान् वि+अस–घञ् । १पराशरसुते मुनिभेदे व्यासश्च नारायणस्य पञ्चकलावतारभेदः यथोक्त

वितम्"। नातिच्छिन्नं नातिदीर्घघातम्। नातिभिन्नं नातिगम्भीरघातम्। उभयोश्छिन्नभिन्नयोः विषमं व्रणमङ्गे यत् यद्व्रणमङ्गवैषम्यकरम्। पिच्चितमाह "प्रहारपीडनाभ्यान्तु यदङ्गं पृथुतां गतम्। सास्थि तत् पिच्चितं विद्यान्मज्जरक्तपरिप्लुतम्"। प्रहारो मुद्गरादिना। पीडनं कपाटादिना। पृथुतां चिपिटताम्। घृष्टमाह "घर्षणादपि घाताद्वा यदङ्गं विगतत्वचम्। ऊष्मास्रावान्वितं तत्तु घृष्टमित्यभिधीयते। घर्षणात् कर्कशेष्टकापाषाणादिभिः। मर्म-सिरास्नायुसन्ध्यस्थिमर्मसु क्षतेषु सामान्यलक्षणमाह "भ्रमः प्रलापः पतनं प्रमोहो विचेष्टनं ग्लानिरथोष्णता च। स्रस्ताङ्गता मूर्च्छनमूर्ध्ववातस्तीव्रा रुजो वातकृताश्च तास्ताः। मांसोदकाभं रुधिरञ्च गच्छेत् सर्वेन्द्रियार्थोपरमस्तथैव। दशार्द्धसंख्येष्वथ विक्षतेषु सामान्यतो मर्मसु लिङ्गमुक्तम्"। पतनं भूमौ। विचेष्टनं विरुद्धचेष्टनं हस्तपादादिप्रक्षेपणादिकम्। मूर्च्छनं इन्द्रियमोहः। प्रमोहो मनोमात्रमोहः। तीव्रा रुजो वातकृताश्च तास्ता दण्डापतानकादयः। रुधिरञ्च गच्छेत् मेढ्रभगगुदास्यघ्राणेभ्यः स्रवेत्। सर्वेन्द्रियार्थोपरम इन्द्रियाणां कार्य्यनाशः। अथ मर्मसिरास्नायुसन्ध्यस्थ्नां विद्धानां पृथग्लक्षणमाह "इन्द्रगोपप्रतिमं प्रभूतं रक्तं स्रवेत्तत्क्षयजश्च वायुः। करोति रोगान् विविधान् यथोक्तान् सिरासु विद्धास्वथ वा क्षतासु"। इन्द्रगोपो वार्षिकोत्थितकीटविशेषः। (वीरबहुटी) इति लोके प्रसिद्धः। प्रभूतं बहु। रोगान् शिरोभितापान्धताक्षेपकादीन्। विद्धासु शरादिना। क्षतासु खड्गादिना। "कौब्ज्यं शरीरावयवावसादः क्रियास्वशक्तिस्तुमुला रुजा च। चिराद्व्रणो रोहति यस्य चापि तं स्नायुविद्धं पुरुषं वदन्ति"। कौब्ज्यं विद्धस्याङ्गस्य वक्रता। तुमुला महती। "शोथातिवृद्धिस्तुमुला रुजश्च बलक्षयः सर्वत एव शोथः। क्षतेषु सन्धिष्वचलाचलेषु स्यात् सन्धिकर्मोपरमश्च लिङ्गम्"। सर्वत एव शोथः सर्वसन्धीन् व्याप्य शोथः। उपरमः नाशः। "घोरा रुजो यस्य निशादिनेषु सर्वास्ववस्थासु न चैति शान्तिम्। भिषग्विपश्चिद्विदितार्थसूत्रस्तमस्थिविद्धं पुरुषं वदन्ति"। सर्वास्ववस्थासु शयनासनादिकासु। विदितार्थसूत्रः ज्ञातशल्यतन्त्रः। अथ मर्मसिरादिव्यवस्थितलिङ्गानि पृथगभिधाय मर्मसिरादीनां विद्धानां पृथक्लिङ्गान्यतिदेशेनाह "यथास्वमेतानि विभावयेच्च लिङ्गानि मर्मस्वपि ताडितेषु"। यथास्वं सिरादीनां विद्धानाम् एतानि लिङ्गानि पृथगुक्तानि लिङ्गानि चकारात् भ्रमप्रलापादीनि च। मर्मस्विव सिरादिषु ताडितेषु विद्धेषु विभावयेत् जानीयात्। सर्वत्र क्षतानामुपद्रवानाह "विसर्पः पक्षघातश्च सिरास्तम्भोऽपतानकः। मोहोन्मादौ व्रणे पीडा ज्वरस्तृष्णा हनुग्रहः। कासश्छर्दिरतीसारो हिक्का श्वासः सवेपथुः। षोडशोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः"। अथाग्निदग्धस्य निदानमाह "तत्राग्निर्द्विविधो ज्ञेयः स्नेहरूक्षप्रभेदतः। स्नेहस्तत्र तु तैलादि रूक्षं लोहादिकथ्यते"। अग्निदग्धं चतुर्विधमाह "अग्निदग्धं चतुर्धा स्यात् प्लुष्टं दुर्दग्धमेव च। सम्यग्दग्धं तथातिदग्धञ्च परिकीर्त्तितम्"। तेषां लक्षणमाह "यद्विवर्णमतिप्लुष्टं तत्प्लुष्टमभिधीयते। तीव्रदाहो व्यथायुक्तो यत्र स्फोटा भवन्ति हि। चिरेण ते प्रशाम्यन्ति तद्दुर्दग्धमुदाहृतम्। ताम्रवर्णमगम्भीरं दाहपीडासमन्वितम्। सुसंस्थितञ्च कथितं सम्यग्दग्धं भिषग्वरैः। लम्बमांसं यत्र दग्धं स्याद्विश्लेषो वपुषस्तथा। सिरास्नाय्वस्थिसन्धीनां तद्वदन्त्यतिदग्धकम्। अत्यर्थं वेदनादाहौ ज्वरस्तृण्मूर्च्छया सह। स्याद्व्रणस्तु चिराद्रोहेत् रूढो याति विवर्णताम्"। दुष्टव्रणनाडीव्रणशब्दयोस्तद्भेदौ दृश्यौ। व्रणशब्दनिरुक्तिः सुश्रुत उक्ता यथा "वृणोति यस्माद्रूढेऽपि व्रणवस्तु न नश्यति। आदेहधारणात्तस्मात् व्रण इत्युच्यते बुधैः"। सुश्रुतोक्ता विशेषा द्विव्रणशब्दे व्रणास्रावशब्दे च दृश्याः।

**व्रणकृत्** पु० व्रणं करोति कृ-क्विप्। १भल्लातके रत्नमा०। २व्रणकारके त्रि०। [२व्रणघातके त्रि०।

**व्रणद्विष्** पु० व्रणं द्वेष्टि द्विष-क्विप्। १माञ्जयष्टिकायाम्

**व्रणशोथ** पु० ६त०। व्रणस्य स्फीतताकारके रोगभेदे तल्लक्षणादि माधव० उक्तं यथा

"पृथक् समस्तदोषोत्था रक्तजागन्तुजौ तथा। व्रणशोथाः षडेते स्युः सयुक्ताः शोथलक्षणैः" शोथलक्षणैः पूर्वोक्तैः। विशिष्टं रूपमाह "विषमं पच्यते वातात् पित्तोत्थश्चाचिरश्चिरम्। कफजः पित्तवच्छोथो रक्तागन्तुसमुद्भवौ"। अपक्वस्य व्रणशोथस्य लक्षणमाह "मन्दोष्मताऽल्पशोथत्वं काठिन्यं त्वक्सवर्णता। मन्दवेदनया चापि शोथस्यामस्य लक्षणम्"। तस्य पच्यमानस्य लक्षणमाह "द

च्छिन्नत्वादस्थि निःसारं शुक्तिधौतमिवाभाति। स्रावश्चात्र मज्जमिश्रः सरक्तः स्निग्धश्च। सन्धिगतस्तु पीड्यमानो न प्रवर्त्तते आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनोत्कासनप्रवाहणैश्च स्रवति। स्रावश्चास्य पिच्छिलोऽवलम्बी सफेनपूयरुधिरोन्मथितश्च। कोष्ठगतोऽसृङ्मूत्रपुरीषपूयोदकानि स्रवति। मर्मगतस्त्वगादिष्ववरुद्धत्वान्नाख्यायते। तत्र त्वगादिगतानामास्रावाणां यथाक्रमं पारुष्यश्यावावश्यायदधिमस्तुक्षारोदकमांसधावनपुलाकोदकसन्निभत्वानि मारुताद्भवन्ति। पित्ताद्गोमेदगोमूत्रभस्मशङ्खकषायोदकमाध्वीकतैलसन्निभत्वानि। पित्तवद्रक्तादतिविस्रत्वञ्च। कफान्नवनीतकासीसमज्जपिष्टतिलनारिकेलोदकवराहवसासन्निभत्वानि। सन्निपातात्तिलनारिकेलोदकैर्वारुकरसकाञ्जिकवसादारुकोदकप्रियङ्गुफलयकृन्मुद्गयूषवर्णत्वानीति। "श्लोकौ चात्र भवतः। पक्वाशयादसाध्यस्तु पुलाकोदकसन्निभः। क्षारोदकनिभः स्रावो वर्ज्यो रक्ताशयादपि। आमाशयात्कलायाम्भोनिभश्च त्रिकसन्धिजः। स्रावानेतान् परीक्ष्यादौ ततः कर्माचरेद्भिषक्"। अत ऊर्द्धं सर्वव्रणवेदना वक्ष्यामः। तोदनभेदनताडनच्छेदनायमनमन्थनविक्षेपचुमुचुमायननिर्दहनावभञ्जनस्फोटनविदारणोत्पाटनकम्पनविविधशूलविश्लेषणविकिरणपूरणस्तम्भनस्वप्नाकुञ्चनाङ्कुशिकाः सम्भवन्ति। अनिमित्तविविधवेदनाप्रादुर्भावो वा मुहुर्मुहुर्यत्रागच्छन्ति वेदनाविशेषास्तं वातिकमिति विद्यात्। ओषचोषपरिदाहधूमायनानि यत्र गात्रमङ्गारावकीर्णमिव पच्यते यत्र चोष्माभिवृद्धिः क्षते क्षारावसिक्तस्य वेदनाविशेषास्तं पैत्तिकमिति विद्यात्। पित्तवद्रक्तसमुत्थं जानीयात्। कण्डूर्गुरुत्वमुपस्नेहोऽल्पवेदनत्वं स्तम्भः शैत्यञ्च यत्र तं श्लैष्मिकमिति विद्यात्। यत्र सर्वासां वेदनानां समुत्पत्तिस्तं सान्निपातिकमिति। अत ऊर्द्धं व्रणवर्णान् वक्ष्यामः। भस्मकपोतास्थिवर्णः परुषोऽरुणः कृष्ण इति मारुतजस्य। नीलः पीतो हरितः श्यावः कृष्णो रक्तः कपिल इति रक्तपित्तसमुत्थयोः। श्वेतः स्निग्धः पाण्डुरिति श्लेष्मजस्य। सर्ववर्णोपेतः सान्निपातिकश्च इति। भवति चात्र "न केवलं व्रणेषूक्तो वेदनावर्णसंग्रहः। सर्वशोफविकारेषु व्रणवल्लक्षयेद्भिषक्"।

**व्रणह** पु० व्रण हन्ति हन–ड। १एरण्डवृक्षे २गुडूच्याम् स्त्री शब्दच०।

**व्रणाश** पु० व्रणमश्नाति अश–अण्। १वोले गन्धरसे २छागलाद्ये च राजनि०।

**व्रत** न० व्रज–घ जस्य तः। १भक्षणभेदे उणादि० २पुण्यसाधने ३उपवासादिनियमभेदे च

व्रतञ्च सम्यक्सङ्कल्पजनितानुष्ठेयक्रियाविशेषरूपं तच्च प्रवृत्तिनिवृत्त्युभयरूप तत्र द्रव्यविशेषभोजनपूजादिकं प्रवृत्तिरूपम् उपवासादिकञ्च निवृत्तिरूप तच्च नित्य नैमित्तिकं काम्यञ्च। नित्यमेकादश्यादिव्रतम् नैमित्तिकं चान्द्रायणादिव्रतं काम्य तत्तत्तिथ्युपवासादिरूप "सम्यक् ससाधनं कर्म कर्त्तव्यमधिकारिणा। निष्कामेण महावीर! काम्यं कामान्वितेन च" भविष्यपु०। सम्यक् प्रथमकल्पादिना संसाधनं यथाविहितं साधनं यस्य। अधिकारिणा अर्थिना समर्थेन विदुषा चेत्यर्थः। तत्र व्रतारम्भकाल. हेमा०व्र० दर्शितो यथा

अथ व्रतारम्भकालः। तत्र सत्यव्रतः "उदयस्था तिथिर्या हि न भवेद्दिनमध्यभाक्। सा खण्डा न व्रतानां स्यादारम्भे च समापने" इति। एतद्व्यतिरिक्ताया अखण्डाया प्रारम्भमाह वृद्धवशिष्ठः "अखण्डव्यापिमार्त्तण्डा यद्यखण्डा भवेत्तिथिः। व्रतप्रारम्भणं तस्यामनष्टगुरुशुक्रयुगिति"। तिथिर्यद्यनष्टगुरुशुक्रयुक् अनस्तमितगुरुशुक्रयुक्ता तस्यां व्रतमारम्भणीयमित्यर्थः, दृष्टमुपलक्षणम्। गुरुशुक्रयोर्बाल्ये वार्द्धक्येऽपि व्रतमारम्भणीयमित्यर्थः। तथा च वृद्धबृहस्पतिः "अग्न्याधानं प्रतिष्ठाञ्च यज्ञदानव्रतानि च। वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः। माङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत्। बाले वा यदि वा वृद्धे शुक्रे वास्तङ्गते गुरौ। मलमास इवैतानि वर्जयेद्देवदर्शनम्" इति। गार्ग्योऽपि "नामाद्यप्राशनञ्चौडं विवाहं मौञ्जिबन्धनम्। निष्क्रम जातकर्मापि काम्यं वृषविसर्जनम्। अस्तगे च गुरौ शुक्रे बाले वृद्धे मलिम्लुचे। उद्यापनमुपारम्भं व्रतानां नैव कारयेत्" इति। लल्लः "नीचस्थे वक्रसंस्थे व्यतिचरणगते बालवृद्धास्तगे वा संन्यासो देवयात्रा व्रतचरणविधिः कर्णवेधस्तु दीक्षा। मौञ्जीबन्धोऽथ चूडा परिणयनविधिर्वास्तुदेवप्रतिष्ठा वर्ज्याः सद्भिः प्रयत्नात् त्रिदशपतिगुरौ सिंहराशिस्थिते च" इति। नीचलक्षणन्तु ज्योतिःशास्त्रे "सूर्यादितुङ्गमजगोमकराः क्रमात् स्युः। स्त्रीकर्किमीनवणिजोच्चगमञ्च नीचम्" इति। उच्चस्थानात् सप्तम नीचमित्यर्थः। तथा हे

यथावत् कर्म्मकारक । अवेदनिन्दको धीमानधिकारी व्रतादिषु" । महाभारते "आनृशंस्यं तपश्चैव सत्यमक्रोध एव च । स्वेषु दारेषु सन्तोषः शौचं नित्यानसूयता । आत्मज्ञानं तितिक्षा च धर्म्मः साधारणो नृप ।" देवलोऽपि "व्रतोपवासनियमैः शरीरोत्तापनैस्तथा । वर्णाः सर्व्वेऽपि मुच्यन्ते पातकेभ्यो न संशयः" इति । तदेव वचनसन्दर्भेणोक्तनियमवता चतुर्णामपि वर्णानां स्त्रीपुंसाधारण्येन व्रतेष्वधिकार इति प्रतिपाद्यते । तथा च भारते(गीता) "मामुपाश्रित्य कौन्तेय ! येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्" इति । तत्राय परो विशेषो यत् स्त्रीणां भर्त्तुराज्ञां विना न स्वातन्त्र्येण व्रतादिष्वधिकार इति । तथा च मार्कण्डेयपुराणे "नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषणम् । भर्त्तृशुश्रूषयैवैता लोकानिष्टान् व्रजन्ति हि । यद्देवेभ्यो यत् पित्रादिकेभ्यः कुर्य्याद्भर्त्ताभ्यर्च्चनं सत्क्रियाञ्च । तस्यार्द्धं वै सा फलं नान्यचित्ता नारी भुङ्क्ते भर्त्तृशुश्रूषयैव । धर्म्मार्थकामसंसिद्धौ भवेद्भर्त्तुः सहायिनी" । आदित्यपुराणे "नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते । पत्युरभ्यधिकं नारी नोपवासव्रतञ्चरेत् । अनायुष्यं द्विजश्रेष्ठ ! पत्युस्तस्यास्तदुच्यते । देवताराधनं कुर्य्यात् कामं वा ब्राह्मणोत्तमः । नारी पतिव्रता नाम प्राप्यानुज्ञान्तु भर्त्तृतः । नारी त्वननुज्ञाता पित्रा भर्त्रा सुतेन वा । विफलं तद्भवेत्तस्या यत्करोत्यौर्द्धदैहिकम्" । पित्रेति कन्यात्वे । भर्त्रेति सौभाग्यदशायाम् । सुतेनेति वैधव्यदशायाम् । और्द्धदैहिकं व्रतादि । "अथ वा सर्व्वस शुश्रूषा पतिपूजनतत्परा । केशवाराधनं कुर्य्यात् साध्वी स्त्री पुरुषर्षभ ! । तेनैव स्वर्गमाप्नोति यत् किञ्चिन्मनसेच्छति । अफलं सर्व्वमेव स्यात् भर्त्तुराज्ञां विना कृतम् । केशवाराधनं यच्च तथापि सफलं स्त्रियः" । हरिवंशे "सतीत्वधर्म्मचरणं यस्या नित्यमखण्डितम् । पुण्यकानां विधिस्तस्याः पुराणे परिकीर्त्तितः । दानोपवासपुण्यानि कृतान्यप्यरुन्धति ! । निष्फलान्यसतीनां हि पुण्यकानि तथा शुभे" । पुण्यकानि व्रतानि । "या नार्च्चयन्ति भर्त्तारं योनिदुष्टाश्च याः स्त्रियः । योनिदोषात् पुण्यफलं नाप्नुवन्ति निरयङ्गताः । साध्व्यो जगद्धारयन्ति सुशीलाः पतिदेवताः । अनन्यधर्म्मनिरताश्च सतां पन्थानमाश्रिताः । अपापदृष्टाः शौचयुक्ताः पतिभक्त्या शुचिव्रताः । सततं साधुवादिन्यो धारयन्ति जगत् खलु । व्याधितः पतितो वापि निर्द्धनो वा कथञ्चन । न वक्तव्यः स्त्रिया भर्त्ता धर्म्म एष सनातनः । अकार्य्यकारिणं चापि निर्गुणं स्त्री पतिं तथा । तारयत्येव साध्वी सा तथात्मानं शुभानने ! । योनिदुष्टस्त्रियो नास्ति प्रायश्चित्तं कृतैव सा । वाग्दुष्टे विहितं सद्भिः प्रायश्चित्तं पुरातनैः । भर्त्तुश्छन्देन कर्त्तव्यं व्रतकं सर्व्वदा स्त्रिया । उपवासोऽपि वा सत्ये ! काङ्क्षन्त्या तु शुभां गतिम् । कल्पान्तरसहस्रेषु न स्त्री सा लभते गतिम् । तिर्य्यग्योनिसहस्रेषु पच्यते योनिविभ्रमात् । यदि स्यान्नाम मानुष्यं स्त्री लभेदसती सती । चण्डालयोनौ दुर्मेधा जायते कुक्कुरानना । भर्त्ता देवः सदा स्त्रीणां स्त्रीभिर्दृष्टः सनातने ! । यस्या हि तुष्यते भर्त्ता सा सती धर्म्मचारिणी । कौतूहलहतानान्तु स्त्रीणां लोको न शोभनः । भर्त्तर्य्येव मनो यासां सद्भावेन व्यवस्थितम् । कर्म्मणा मनसा वाचा पतिं नातिचरन्ति याः । तासां पुण्यफलं सौम्ये ! पुण्यकैः समुदाहृतम् । पुण्यकानां विधिं कृत्स्नं स्वर्लोकं प्रति शोभने ! । निबोध च हि सर्व्वो हि दृष्टोऽयं तपसा मया । स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत् सती । उपवासार्थमथ वा व्रतकार्य्ये धृतव्रते ! । स्पृष्ट्वा कराभ्यां चरणौ सततं सत्तमस्य च । गृहीत्वोदुम्बरं पात्रं सकुशं साक्षतं तथा । गोशृङ्गं दक्षिणं सिक्त्वा प्रतिगृह्णीत तज्जलम् । ततो भर्त्तुः सती दद्यात् स्नातस्य प्रयतस्य च । आत्मनोऽथ निषेक्तव्यं ततः शिरसि तज्जलम् । त्रैलोक्ये सर्व्वतीर्थेषु स्नानमेतदुदाहृतम् । उपवासेषु कर्त्तव्यमेवं हि व्रतकेषु च । स्नानमेतद्धि सामान्यं स्त्रीणां पुंसाञ्च भामिनि ! । अरुन्धति ! मया दृष्टं तपसा हरतोषकम् । अभ्युक्ष्य विधिं शयनस्थापनञ्च तथाविधम् । स्नानं प्रक्षालनं चापि पादयोरनुशब्दितम्" । अनुशब्दितं व्रतोपयोगितया कथितम् । "अग्निप्रपातो रोषश्च कलहस्य कृतिः सति ! । उपवासात् व्रताद्वापि सद्योभ्रंशयति स्त्रियम् । शुक्लमेव सदा वासः प्रशस्तं चन्द्रसप्रभे ! । अन्तर्व्वासोऽपरञ्चैव उपवासव्रते तथा । पादुकार्थस्तु वै कार्य्यं सर्व्वदा व्रतके सति ! । उपवासेऽपि च विधिरेष एव प्रकीर्त्तितः । अञ्जनं रोचनञ्चापि गन्धान् सुमनसस्तथा । व्रतके चोपवासे च नित्यमेव विवर्ज्जयेत्" । "रोचनं कुङ्कुमादिना, मुखोज्ज्वलीकरणम् । "दन्तकाष्ठ

नादिपुरश्चरणम् । परीक्षारामयज्ञांश्च पुरश्चरणदीक्षणे । व्रतारम्भप्रतिष्ठे च गृहारम्भप्रवेशने । प्रतिष्ठारम्भणे देवकूपादेर्वर्जयन्ति च । ह्रासं यद्दिवसस्यास्तो जीवस्य भार्गवस्य च । ह्रासप्रतिर्महत्यस्ते पादास्ते द्वादश क्रमात् । अस्तात् प्राक् परतो पक्षं गुरोर्वार्द्धकबाल्यते । पक्षं वृद्धो भृग्वास्ते तु भृगुर्बालो दशाह्निक । पादास्ते तु दशाहानि वृद्धो बालो दिनत्रयम्" । सिंहस्थे गुरौ विशेषस्तु ज्योतिःकौमुद्याम् "गण्डक्या उत्तरे तीरे गिरिराजस्य दक्षिणे । सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत्" इति । अथ व्रतानुष्ठानं तत्र देवलः 'अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः । सूर्य्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत्" । अत्र प्रातर्व्रतमाचरेदित्यन्वयः ततश्चाहारमभुक्त्वा इति पूर्वदिने एकभक्तं कृत्वा इत्यर्थकम् दिवारात्रिभोजनद्वयस्यैकतरनिवृत्त्यैकतरस्यावशीयमानत्वात् । गृहीतव्रताकरणे छागलेयः "यो गृहीत्वा व्रतं मोहात् नाचरेत् काममोहितः । जीवन् भवति चाण्डालो मृतः श्वा चैव जायते" । अत्र प्रायश्चित्तमाह शाम्बपुराणम् "लोभान्मोहात् प्रमादाद्वा व्रतभङ्गो भवेद्यदि । उपवासत्रयं कुर्य्यात् कुर्य्याद्वा केशमुण्डनम् । प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत्" । वाशब्दः समुच्चये तेन मुण्डनञ्च कुर्य्यादित्यर्थः । प्रमादात् अकरणे प्रतिप्रसवमाह देवलः "सर्वभूतभयं व्याधिः प्रमादो गुर्वाशासनम् । अव्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रतः" । आरम्भानन्तरमशौचं न प्रतिबन्धकम् "व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे । आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्" विष्णूक्तेः । व्रतारम्भ सङ्कल्प एव तत्रैवोक्त । आरब्धव्रतस्य समापनं विना मरणे तत्फलप्राप्तिरपीत्याहाङ्गिराः "योयदर्थं चरेद्धर्ममसमाप्य मृतो यदि । स तत्पुण्यफलं प्रेत्य प्राप्नोति मनुरब्रवीत्" । प्रेत्य परलोके । अशक्तौ जलादिपाने दोषाभावमाह बौधायनः "अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्" । गर्भिण्यादौ विशेषमाह शाम्बपुराणम् "गर्भिणी सूतिका नक्तं कुमारी च रजस्वला । यदा शुद्धा तदान्येन कारयेत् क्रियते सदा" । अशुद्धा पूजादिकं कारयेत् कायिकमुपवासादिकं सदा अशुद्धाशुद्धा वा स्वयं कुर्य्यात् । उपवासाशक्तौ नक्तं कुर्वीत । "उपवासेष्वशक्तानां नक्तं भोजनमिष्यते" इति वचनात् ! व्रतदिने वर्ज्यान्याह हारीतः "पतितपाषण्डनास्तिकसम्भाषणानृताभिधानादिकमुपवासदिने वर्जयेत्" । तथा कूर्मपुराणम् "वर्ज्जयेत्मान्त्यजं स्पृशति पतितञ्च रजस्वलाम् । न स्पृशेन्नाभिभाषेत नेक्षेत हरिवासरे" । व्रतानुष्ठानकालश्च तत्तत्तिथिविहितपूजाप्रधानकालपूर्वाह्णे प्राप्ततिथ्योर्द्धा यथा नरसिंहपुराणम् "दैवकृत्यन्तु पूर्वाह्णे मनुष्याणाञ्च मध्यमे । अपराह्णे पितृणाञ्च कार्य्याण्येतानि यत्नतः" इति तथा श्रुतिरपि पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणामिति" । उभयदिने पूर्वाह्णलाभे विशेषवचनं विना युग्मादिवचनाद्व्यवस्था" । संक्रान्तिनिमित्तं तत्तत्संक्रान्तिपुण्यकाल एव कार्य्यम् । "त्रुटेः सहस्रभागो यः स कालो रविसंक्रम" इत्युक्तेः संक्रान्तिकालस्यातिसूक्ष्मत्वेन कर्मानर्हतया संक्रान्तिपदस्य लक्षणया तत्परत्वात् । अत्र तु "वृश्चिकस्य तु सक्रान्त्यां पुत्रकामा व्रतं चरेत्" इति भविष्यपुराणीयेन कार्त्तिकेयव्रतस्य संक्रान्तिविहितत्वेऽपि "सायंकाले समारोप्य प्रातःकाले विसर्जयेत्" इति भविष्यपुराणीयेन पूजाया रात्रिमात्रकर्त्तव्यत्वाभिधानात् तदङ्गोपवासस्य चाहोरात्रसाध्यतया पुण्यकाले तदसम्भवात् तद्युक्ताहोरात्र एव कर्त्तव्यत्वम् । ततश्च संपूर्णाहोरात्रात् परं वृश्चिकसंक्रान्तौ परदिने पूर्वयामद्वयस्य पुण्यकालत्वेन तद्युक्ताहोरात्र एव कार्त्तिकेयव्रत कर्त्तव्यम् दिवा तदङ्गस्नानादेः व्रतत्वेन प्रातरारम्भार्हत्वात् तदङ्गोपवासस्य प्रातरारम्भार्हत्वाच्च । उक्तान्यव्रतेषु युग्मवचनेन शुक्लकृष्णपक्षादिभेदेन वा तिथिविवेकोक्ता व्यवस्थाऽनुसरणीया ।

व्रतप्रतिष्ठाकालश्च पूर्वोक्तेन "गुरोर्भृगोरस्तमाल्ये वार्द्धक्ये सिंहगे गुरौ" इत्यादिवचनोक्तगुरुशुक्रास्तमयादिभिन्नः शुद्धसमय एव कालः । तत्र "सर्वेषूक्तेषु कर्त्तव्या प्रतिष्ठा विधिना बुधैः । फलार्थिभिस्त्वप्रतिष्ठं यस्मान्निष्फलमुच्यते" इति हयशीर्षपञ्चरात्रीयवचनेऽकरणे निष्फलस्मृतेः प्रतिष्ठा भिन्ना सा च न व्रताङ्गं किन्तु कर्मान्तरम् । "समाप्ते तु व्रते तत्र प्रतिष्ठा तदनन्तरम्" ब्रह्मपुराणात् । इत्यञ्च तद्भिन्नेऽशौचादौ यथा न कालोऽनुष्ठानं तथा समयाशुद्धावपि नानुष्ठानम् । यत्तु "समाप्ते तु व्रते तत्र प्रतिष्ठा तदनन्तरम् । न कालनियमस्तत्र विप्रे परार्द्धिके" इति तद्वचनं दिवसे समयाशुद्धावपि प्रतिष्ठाविधायकं वचनं तत् कामधेनुकल्पतरुकारादिभिरलिखितत्वादनाकरम् । यदेव व्रतं

पायसाद्यादिभिराज्यपक्वैर्लवणवर्जितैस्तथा। विप्राय दक्षिणां दत्त्वा नक्तं भुञ्जीत वाग्यतः। तिष्ठन् श्रृण्वन् प्रस्वपंश्च स्मृतप्रस्खलितादिषु। आदित्यनामस्मरणं कुर्य्याद्धुत्कारणं तथा। अनेनैव विधानेन मासान् द्वादश वै क्रमात्। उपोष्य पारणे पूर्णे समभ्यर्च्य जगद्गुरुम्। पुण्येन श्रवणेनेह प्रथमेत् पुष्टिमाप्नुयात्। एवं यः पुरुषः कुर्य्यादादित्याराधनं शुचिः। नारी वा स्वर्गमभ्येत्य चानन्त्यं फलमश्नुते"। शुक्लपक्षे समभ्यर्च्य पुष्पधूपादिभिः शुचिः। श्रावणे मासि सप्तम्यां देवाय सप्तवाहनम्। प्राप्येह विपुलं देव धर्मानन्तरमव्ययम्। अमुत्र लोकमायाति दिव्यं खगपते शुभम्"। इत्यादि

अशून्यशयनद्वितीयाव्रत भविष्यपु० "चातुर्मास्ये भवेद्राजन्! वर्षाया व्रतमुत्तमम्। श्रावणस्य द्वितीयायां कृष्णपक्षे नराधिप!। श्रावणादिकार्त्तिकान्तं कुर्य्यात् तद्व्रतमुत्तमम्। पुष्पं धूपश्च नैवेद्यं दीपमालां विशेषतः"। "ततो भाद्रपदे मासे यवदानं ददाति च। ततश्चाश्विद्वितीयायां शय्यादानं विशेषतः। न तस्य शून्यं शयनमपुत्रो न भवेन्नरः। ततश्च कार्त्तिके मासि द्वितीयायां नराधिप!। शर्करालड्डुकाद्यानि दधिक्षीरघृतानि च। उपहारं भगवते दद्यात् सर्वं प्रयत्नतः" इत्यादि।

अशोकत्रिरात्रव्रतं भविष्योत्तरोक्तम्। "तच्छृणु त्वमशोकाख्यं त्रिरात्रव्रतमुत्तमम्। मासि मार्गशिरे चैव ज्यैष्ठे भाद्रपदे तथा। शुक्लपक्षे पञ्चदश्यामेकभक्तन्तु कारयेत्। ततः प्रातः समुत्थाय स्नानं कुर्य्यात् ततो व्रती"।

अशोकपूर्णिमाव्रतं विष्णुधर्मोत्तरोक्तम्। "अशोकपूर्णिमामेतां शृणुष्व गदतो मम। उपास्याशां नरः शोकं नाप्नोति स्त्री तथापि वा। फाल्गुनामलपक्षस्य पौर्णमास्यां नृपोत्तम!। मृज्जलेन नरः स्नात्वा दत्त्वा शिरसि वै नृप। मृत्प्राशनं ततः कृत्वा कृत्वा च स्थण्डिलं मृदा। पुष्पैर्गन्धैः समभ्यर्च्य भूधरं नाम नामतः। धरणीञ्च तथा देवीमशोकेति च कीर्त्तयेत्। यथा विशोका धरणिः कृतकृत्या जनार्दनात्। तथा मां सर्वशोकेभ्यो मोचयाशेषधारिणि!"।

अशोकप्रतिपद्व्रतं भविष्योत्तरोक्तम् "आश्वयुक्शुक्लपक्षस्य प्रथमेऽह्नि दिनोदये। अशोकं पूजयेत् वृक्षं प्ररूढशुभपल्लवम्। प्ररूढैः सप्तधान्यैश्च गुग्गुलैर्मोदकैः शुभैः। फलैः नारिकेलैर्दिव्यैर्नारिकेलैः सदाडिमैः। धूपदीपादिना तत्र पूजयेत्तरुसत्तमम्। अशोकं मन्त्रेण! शोकं नाप्नोति कुत्रचित्। पितृभ्रातृपतिश्वश्रूसुतजामातृणां तथा"।

अशोकाष्टमीव्रतं लिङ्गपुराणोक्तम् "अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ। चैत्रे मासि तथाष्टम्यां न ते शोकमवाप्नुयुः"। अत्र पुनर्वसुयोगः प्राशस्त्यार्थः। कूर्मपुराणेऽपि "अशोकस्याष्टकलिका मन्त्रेणोक्तेन भक्षयेत्। शोकं नैवाप्नुयान्मर्त्यो रूपवानपि जायते"। "शुक्लाष्टम्यां तु सम्प्राप्ते मासि भाद्रपदे तथा। दूर्वाप्रतानं सुश्वेतमुत्तराशाभिगामिनम्। पूजयेद्दुरुक्तानीय गन्धमाल्यानुलेपनैः। फलमूलैस्तथा चैव दीपं धूपैर्विसर्जयेत्। अग्निपक्वं तथा सर्वं निवेद्य च कथञ्चन। भोक्तव्यञ्च तथा ब्रह्मन्! वह्निपक्वविवर्जितम्। दूर्वाङ्कुरस्था सम्पूज्य विधिना यौवने प्रियम्। यौवनं स्थिरमाप्नोति यत्र यत्राभिजायते। अष्टमीषु च सर्वासु पूजनीयाप्यशोकिका। गन्धमाल्यनमस्कारदीपधूपाद्युपस्कृता। तस्मिन्नहनि या भुङ्क्ते नक्तमिन्दुविवर्जिते। भवत्यशोका सा यत्र यत्राभिजायते। अष्टमीषु च सर्वासु नश्यन्तीति न संशये। शोमपद्यामतीतायां या स्यात् कृष्णाष्टमी द्विज!। तस्यामवश्यं कर्त्तव्यं देवीं पूज्य यथाविधि"। इद व्रतान्तरम्।

अहिंसाव्रतं पद्मपु० "वर्जयित्वा पुमान्मांसमब्दान्ते गोप्रदो भवेत्। तद्वद्धेमकृगं दत्त्वा सोऽश्वमेधफलं लभेत्। अहिंसाव्रतमित्युक्तं कल्पान्ते भूपतिर्भवेत्"।

आग्नेयव्रतं भविष्योत्तरोक्तम्। "सप्तम्यां भक्त्या पूजयेद्विन्ध्यवासिनीम्। पुष्पैर्धूपैस्तथा दीपैर्नैवेद्यैर्विविधैरपि। पूजयित्वा ततो विद्यात् पङ्करं सुकसंयुतम्। हेमं विप्राय दद्याद्यः स वाग्मी जायते नरः। सकलङ्केन नक्तेन अग्निलोकप्रदायकम्"।

आशासंक्रान्तिव्रतं स्कान्दपु० "सङ्क्रान्तिदिवसे पुण्ये प्रारभेन्नियतो व्रते। पद्ममष्टदलं कृत्वा कुङ्कुमेन तु भास्करम्। पूजयेन्मन्त्रतश्चार्घ्यं विधिवद् गुरुसन्निधौ। आशा तेजस्करी यत्ते प्रसादीप्रियस्करी। आशा सर्वगा देव! मम देहि नमोऽस्तु ते। पूज्यैवं कुङ्कुमेनाथ दद्याद्विप्राय भोजनम्। उद्यापने तु चक्राशु सौवर्णं सरथं तथा। एकचक्रञ्च सप्ताश्वमरुणेन समन्वितम्। यः कुर्य्याद्विधिमानेन आशासंक्रान्तिमुत्तमाम्। अथाशाऽस्खलिता लोके रूपं तस्य जायते"।

आदित्यव्रतं भविष्यपुराणोक्तम् "योऽब्दमेकं प्रकुर्वीत नक्तं

नियम्य मन्त्रयेत्ताञ्च शाण्डिलेयस्य सुव्रत !" । तद्व्रतविधिवर्णसाध्यम् । व्रतान्तरं विष्णुधर्म्मोत्तरोक्तम् "अनेनैव विधानेन प्रतिमाचन्तु यो नरः । सप्तमीष्वितयं कुर्य्याद्यावत् सम्वत्सरं रवेः । सोऽश्वमेधमवाप्नोति सूर्य्यलोकञ्च गच्छति । कुर्वन्तुदरते राजन् ! सर्व्वान् कामानुपाश्नुते" ।

उमामाहेश्वरतृतीयाव्रतं भविष्योत्तरोक्तम् । "लोके हि तार्थं पार्व्वत्या उमामाहेश्वरव्रतम् । समाख्यातं पुरा पार्थ ! नाद्यापि प्रथितं भुवि । मार्गशीर्षे सिते पक्षे तृतीयायां समाहिता । कृतोपवासा राजेन्द्र ! सर्व्वभोगविवर्ज्जिता । सर्व्वेशं श्वेतवस्त्रेण शिवं रक्तेन चाम्बिकाम् । पश्चाच्च दक्षिणारी भक्तिभावेन भाविता । भोजयेच्छिवभक्तांश्च ब्राह्मणान् वेदपारगान् । भक्तेभ्यो दक्षिणां दद्याद्भक्त्या शाठ्यविनाकृताम्" । कृतोपवासा सङ्कल्पितोपवासा "हैमीसुमा रजतपिष्टमयं महेशम् रौप्ये सुरूपकमले सदुपस्थितौ तौ । सम्पूज्य रक्तसितवस्त्रयुगोपगूढौ नारी भवत्यविधवा सुतसौख्ययुक्ता । पौर्णमास्याममावास्यां चतुर्द्दश्यष्टमीषु च । नक्तमद्यन्तु कुर्व्वीत हविष्यैर्ब्रह्मचारिणी । उमामहेशप्रतिमां हैमीं कृत्वा सुशोभनाम् । राजतीं वापि वर्षान्ते स्नापयित्वा घृतादिभिः । गन्धपुष्पैरलङ्कृत्य वस्त्रयुग्मैश्च शोभनैः । भक्ष्यभोज्यैरशेषैश्च वितानध्वजचामरैः । भोजयेच्छिवभक्तांश्च दीनानाथान् प्रतर्पयेत्" । व्रतान्तरं शिवधर्म्मोत्तरोक्तम् । "अष्टम्याञ्च चतुर्द्दश्यां नियतब्रह्मचारिणी । वर्षमेकं न भुञ्जीत महीभागजिगीषया । वर्षान्ते प्रतिमां कृत्वा पूर्व्ववद्विधिमाचरेत् । स्नानाद्यैः सद्व्रतं प्राप्य पूर्व्वोक्तांस्तु गुणान् लभेत्" । अत्राप्युमामहेश्वरप्रतिमा कर्त्तव्या । पूर्व्ववदिति पूर्व्वव्रतोक्तवदित्यर्थः । देवीपु० व्रतान्तरं "यदीच्छसि शुभसौरमिह जन्मन्यथापरे । कन्या कुर्य्यान्नृपश्रेष्ठ ! विष्णुना कथितं व्रतम् । सर्व्वपापहरं पुण्यं सर्व्वकामफलप्रदम् । उमामहेश्वरं नाम कर्त्तव्यं विधिना यथा । प्रोष्ठाश्विने तथा माघे न्दगे भाग्ये १२ऽथ वा सुने । मैत्रे १७ शाक्रे १८ऽथ वा कार्य्यमष्टम्याञ्चाथ शाङ्करे ६ ।

व्रतान्तरं भृगुसंहितोक्तम् । "उमामाहेश्वरं नाम या च स्त्री कुरुते व्रतम्" इत्युपक्रमे "उमामाहेश्वरी कार्य्या प्रतिमा काञ्चनोद्भवा । निष्कस्य तदर्द्धस्य कर्षस्यापि मितस्य च । वित्तशाठ्यं न कर्त्तव्यं सर्व्वथा फलकाम्यया । स्थापयेत् श्वेतवस्त्राढ्ये राजते वृषभे शुभे । स्नानाजिने कुशिकीर्णे तस्याप्याभ्यर्च्य यत्नतः । सोपवासा च कुर्व्वीत चतुर्द्दश्यां समाहिता । शैवं षाडक्षरं होमं गौरहोमञ्च यत्नतः । प्रातः प्रभातसमये स्नात्वा सम्पूज्य पूर्व्ववत् । आहूय वेदविदांश्च ब्राह्मणं पूज्य भक्तितः ।। अर्पयेत् प्रतिमां शम्भो कर्मदोषापशान्तये । वाक्येन ब्राह्मणं तोष्य ततः पारणमाचरेत्" ।

उल्कानवमीव्रतं भविष्योत्तरोक्तम् । "उल्काख्या नवमीं राजन् ! कथयामि निबोध ताम् । या कामरूपेण कथिता तारकस्यार्त्तिनाशिनी । आश्वयुक्शुक्लपक्षे या नवमी लोकविश्रुता । नद्यां स्नात्वा समभ्यर्च्य पितॄन्देवान् यथाविधि । पश्चात् सम्पूजयेद्देवीं चामुण्डां भैरवप्रियाम् । पुष्पैर्धूपैः सनैवेद्यैः मांसमत्स्यसुरासवैः । पूजयित्वा स्तवं कुर्य्यान्मन्त्रेणानेन मानवः" । सौरपु० "व्रतं येन देवेन्द्र ! प्रसीदत्याशु पार्व्वती । तच्चोल्कानवमीसंज्ञं शृणु ! सर्व्वफलप्रदम् । तस्यां नवम्यां शर्व्वाणी महिषादीन् महासुरान् । जघान समरे शत्रून् तेन सा नवमी प्रिया । आश्वयुक्शुक्लस्य नवम्यां प्रयतात्मवान् । स्नात्वाभ्यर्च्य पितॄन् देवान् मनुष्यांश्च यथाक्रमम् । अर्च्चयेत् पश्चान्महादेवीं महिषासुरघातिनीम् । पुष्पैर्धूपैः सनैवेद्यैः पयोदधिफलादिभिः । भक्त्या सम्पूजयित्वैवं देवीं सम्प्रार्थयेत्ततः" ।

ऋतुव्रतं विष्णुधर्म्मोत्तरोक्तम् । "अथातः संप्रवक्ष्यामि चतुर्मूर्त्तेरर्च्चनं परम् । वसन्ते पूजयेन्नित्यं द्वौ मासौ द्विजपुङ्गव ।। फलैः पुष्पैः कषायैस्तु ग्रीष्मे यत्नेन पूजयेत् । मधुरैश्च महाराज ! प्रावृट्काले ऋतु यजेत् । अनेन पूजयेन्नित्यं शरद् लवणेन च । कटुकेन च हेमन्तं तिक्तेन शिशिरं तथा । नक्ताशनस्तथा तिष्ठेत् पञ्चक वर्जयेद्बुधः । ब्राह्मणान् भोजयेच्चापि प्रभूतवसनादिभिः । संवत्सरमिदं कृत्वा व्रतं परमपावनम् । अश्वमेधमवाप्नोति राजसूयञ्च विन्दति । चैत्रे समारभ्य सिते तु षष्ठीं संपूजयेद्वस्त्ररूपमेवम् । कृतोपवासश्च नरो यथोक्तं लभेत् फलं शाश्वतमेव शीघ्रम्" ।

ऋषिपञ्चमीव्रतं ब्रह्माण्डपु० "शृणु राजन् ! प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । ऋषिपञ्चमीति विख्यातं सर्व्वपापहरं परम् । नभस्ये शुक्लपक्षे तु यदा भवति पञ्चमी । नद्यादिषु तदा स्नानं कृत्वा नियममेव च । विधाय नित्यकर्म्मादि गत्वा दारवतीक्षणीम् । लेपयेद्विधिवद्भक्त्या पञ्चामृतरसैः शुभैः" । दारवतीं अग्निहोत्रशाला धूमनिर्गमद्वारैर्मङ्क्षिप्रुतत्वात्" । अन्वयोऽस्य चर्च्चकः ।

सर्वकर्णिकम् । सर्वेष्वपि दलेष्वीशं विन्यसेत् पूर्वतः क्रमात्” इत्यादि ।

काञ्चनपुरीव्रतं गरुडपु० “काञ्चनाख्या पुरी नाम व्रतं मे चोक्ष्यपापघ्नम् । शुक्लतृतीया कृष्णा च एकादश्यथ पूर्णिमा । संक्रान्तिर्वा महाभागे कुहूर्वा चाष्टमी तिथिः । पर्वस्वेतेषु दातव्या काञ्चनाख्या पुरी शुभा” ।

कामव्रत भविष्यपु० “पुष्यादितस्त्रयोदश्यां कृत्वा नक्तं मधौ मधौ । अशोककाञ्चन दद्यादिक्षुयुक्तं दशाङ्गुलम् । विप्राय वस्त्रसंयुक्तं प्रद्युम्नः प्रीयतामिति । कल्पं विष्णुपुरे स्थित्वा विशोकः स्यात् पुमान् नृप ! । एतत् कामव्रतं नाम सदा शोकविनाशनम्” ।

कामदासप्तमीव्रतं भविष्योत्तरोक्तम् । “फाल्गुनामलपक्षस्य सप्तम्यां च घनाघन ! । उपोषितो नरो नारी समभ्यर्च्य तमोपहम् । सूर्यनाम जपन् भक्त्या भावयुक्तो जितेन्द्रियः । तिष्ठन् प्रविशंश्चैव सूर्यमेवानुकीर्त्तयेत् । ततोऽन्यदिवसे प्राप्ते अष्टम्यां नियतो रविम् । स्नात्वा सम्यक् समभ्यर्च्य दद्याद्विप्राय दक्षिणाम्” ।

कामदेवव्रत विष्णुधर्मोत्तरम् । “शुक्लपक्षे महाराज ! त्रयोदश्यामुपोषितः । पूजयेत् कामदेवन्तु वैशाखात् प्रभृति प्रभो ! । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । दद्याद् व्रतान्ते विप्राय गन्धवस्त्रयुगं तथा” । “कृत्वा व्रतं वत्सरमेतदिष्टमासाद्य नाकं सुचिरं मनुष्यः । मानुष्यमासाद्य भवत्यरोगः सुखान्वितो रूपसमन्वितश्च” ।

कामधेनुव्रतं वह्निपु० “कार्त्तिकः खलु मासो वै सर्वदेवमयो महान् । कृष्णपक्षे विशेषेण तत्र पञ्च दिनानि तु । पुण्यानि तेषु यद्दत्तमक्षयं सर्वकामिकम्” इत्युपक्रमे अमावस्यादिषु तत्र विशेषस्तूक्ता “नन्दा सुनन्दा सुरभी सुशीला सुमनास्तथा । निर्गता मथ्यमानाब्धौ अत्र स्नानं शुभप्रदम्” । कामधेनोराविर्भावभावितस्वदेहात् अत्र प्रयत्नमित्यर्थः “तत्र स्नात्वा समभ्यर्च्य धेनुं पूज्य प्रयत्नतः । गोदानफलमाप्नोति नरो विगतकल्मषः । एकादश्यामुपोष्याथ नरो दिनचतुष्टयम् । व्रतेन सोपवासेन नक्तेन पयसापि वा । सन्नारीनीराजनैश्चैः पूजयेन्मधुसूदनम् । गन्धपुष्पैः सुनैवेद्यैरलङ्कारैर्बहुकैः । तथान्यमन्त्रैश्च कामधेनू दद्याः वसुविधाय तु केशवन्तु । विप्राय वै सर्वगुणाय तत्र कृत्वा व्रतं तद्भवतो हरेस्तु” ।

काम्यव्रतं मत्स्यपु० “काम पूज्य त्रयोदश्यां सद्भगो जायते ध्रुवम् । इष्टां रूपवतीं भार्य्यां लभेत् कामांश्च पुष्कलान् । मूलमन्त्रास्त्वष्टाभिरङ्गमन्त्राश्च कीर्त्तिताः” ।

कामषष्ठीव्रत वराहपु० “कामव्रतं महाराज ! शृणु मे गदतोऽधुना । येन कामाः समृध्यन्ते मनसा चिन्तिता अपि । षष्ठ्यां फलाशनो यस्तु वर्षमेकं व्रतं चरेत् । माघमासे सिते पक्षे पञ्चम्यां नक्तभोजनः । षष्ठ्यान्तु प्राशयेद्धीमान् । फलमेकन्तु पार्थिव ! । ततो भुञ्जीत यत्नेन वाग्यतः शुद्धमोदनम् । ब्राह्मणैः सह राजेन्द्र ! अथ वा केवलं फलम् । तमेकं दिवसं स्थित्वा सप्तम्यां पारणं नृप ! । अग्निकार्य्यं च कुर्वीत गुहरूपेण केशवम् । पूजयित्वा विधानेन वर्षमेकं व्रतं चरेत्” ।

कामावाप्तिव्रत विष्णुधर्मोत्तरोक्तम् । “कृष्णपक्षे चतुर्दश्यां महाकालमथार्च्चयेत् । तस्मात्काममवाप्नोति यथेष्टं नात्र संशयः” ।

कार्त्तिकमासव्रत नारदोक्तम् । “माहात्म्यमभिधास्यामि मासस्यास्य वरानने ! । येन ते जायते भक्तिर्भक्त्या येनार्च्यते हरिः । कार्त्तिके कृच्छ्रसेवी च प्राजापत्यरतोऽपि वा । एकद्वादशाहं पक्षं वा मासं वा वरवर्णिनि ! । क्षपयित्वा नरो याति तद्विष्णोः परमं पदम् । एकभक्तोऽथ वा नक्ते तथा सुभ्रु । अयाचिते । कृते नरेन्द्रराज्याप्तिर्भवेद् वै दीपमालया । तस्मिन् हरिदिनं पुण्यं तथा वै भीष्मपञ्चकम् । प्रबोधन्यां नरः कृत्वा जागरेण समन्विताम् । न मातुर्जठरे याति अपि पापान्वितो नरः” ।

कार्त्तिकेयषष्ठीव्रतं भविष्योत्तरम् “मार्गशीर्षे सिते पक्षे षष्ठी भरतसत्तम ! । पुण्या पापहरा प्रोक्ता शिवगीता गुहप्रिया । निहत्य तारकं षष्ठ्यां गुहस्तारकराजवत् । रराज तेन दयिता कार्त्तिकेयस्य सा तिथिः । स्नानदानादिकं कर्म तस्यामक्षयमुच्यते । येऽस्यां पश्यन्ति मार्त्तण्डं दक्षिणाशां समाश्रितम् । ब्रह्महत्यादिपापैस्ते मुच्यन्ते नात्र संशयः । तस्मादस्यां सोपवासः कुमारपर्वसम्भवम् । राजतं महाराज काञ्चनं वाथ दारुजम् । कारयित्वार्थसारेण कामाकर्षविवर्जितः । अपराह्णे ततः स्नात्वा सम्यगाचम्य बुद्धिमान् । पद्मासनस्थमाद्यं ध्यायच्छिवेन पश्चितः” ।

कालरात्रिव्रत कालिकापु० “शृणु भक्तोऽसि धर्मज्ञ ! कालरात्रिव्रतं मम । कृष्णे ! पक्षमासेऽस्य कर्त्तव्यं विधिवत्तथा । नाति चाष्टमीऽष्टम्यां शुक्लपक्षे जितेन्द्रियः । प्रयताक् निरपिपासा निराहारा

स्नानम् । स्नानं करिष्ये नियता ब्रह्मचर्ये स्थिता सती । भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयाम् । इति सङ्कल्प्य पुरुषो नारी वा माङ्गल्यान्तिके । प्राप्यारम्भान्ततः प्राह्णे सर्वेषामपि संयुत" इत्यादि ।

कोटीश्वरीतृतीयाव्रत स्कन्दपु० "शृणु भद्रे ! परं गुह्यं सर्वकामफलप्रदम् । दुर्भगायाश्च नार्य्या सौभाग्यकरणं परम् । कोटेश्वरीति विख्यातं व्रतं कोटीश्वरीव्रतम् । तृतीया शुक्लपक्षे तु मासि भाद्रपदे भवेत् । तस्यां व्रतं तु सम्प्राप्य यावद्वर्षचतुष्टयम् । उपवासेन कर्त्तव्यं वर्षे वर्षे तु सुन्दरि ! । अक्षतानां तथा कृत्वा यवानां तिलानां वा सुलोचने ! । लक्षमेकं निरन्तराय स्थितेषु पर्वसि शोभने । धीरखर्णमित्रैः कार्य्या देव्याश्च मूर्त्ति सुलोचना । कृत्वा तु पुष्पाकारं पुष्पमालाभिमण्डितम् । संस्थाप्य पार्वतीं देवीं पूजयेद्भक्तिसंयुता" इत्यादि ।

कौमुदीव्रतं विष्णुरहस्योक्तम् । "मासि चाश्वयुजे शुक्ल एकादश्यामुपोषितः । चतुर्थ्यां तु व्रतं ह्येतत् कौमुदाख्यं महाफलम् । अहिंसकः शुचिर्भूत्वा धौतवासा जितेन्द्रियः । द्वादश्यामर्च्चयेत् स्नात्वा वासुदेवं जगद्गुरुम्" ।

क्षेमव्रत विष्णुधर्मोत्तरोक्तम् । "प्रथमायां राक्षसानाञ्च चतुर्दश्यास्तु पूजनम् । कृत्वा क्षेममवाप्नोति क्रियाफलमसेव च" ।

गणपतिचतुर्थीव्रतं भविष्यपु० "चतुर्थ्यान्तु महाराज ! निराहारो व्रतान्वित । दत्त्वा तिलांश्च भुङ्क्ते यः स्वयं भुङ्क्ते तिलोदकम्" । दिवा निराहारो रात्रौ भुङ्क्ते इति विरोधपरिहार । वर्षद्वये समाप्तिश्चिन्तस्य तु यदा भवेत् । विनायकस्तस्य तुष्टो ददाति फलमीप्सितम्" ।

गन्धव्रत शिवधर्मोक्तम् "पौर्णमास्यामुपवसेदष्टमेकं सुयन्त्रित । वर्षान्ते सर्वगन्धाढ्यां प्रतिमां विनिवेदयेत् । सुविचित्रैर्महापानैर्दिव्यगन्धविभूषितैः । युगकोटिशतं साग्रं शिवलोके महीयते" ।

गलन्तिकाव्रतं शिवरहस्योक्तम् "पवित्रतोयपूर्णैर्यः कुम्भैः पौषे शिवोपरि गालयेद् यः पयोधारां स अक्षयपदमश्नुते" ।

गायत्रीव्रतं गरुडपु० "अथोत्तमं परं ब्रह्मव्रतं शृणु ! भद्रदम् । चतुर्दश्यां महाभाग ! सर्वरोगार्त्तिशान्तये । ज्वरशूलगलगण्डकुष्ठातिसारसंयुत । कार्य्यं नित्यमिदं कार्य्यं तदार्त्तिक्षयहेतवे । स्नात्वा तु धृतशङ्कुलः सर्वकामविवर्जितः । आदित्यमुपतिष्ठेत गायत्रीञ्च जपन्मुहुः । उदयात् पूर्वमारभ्य यावदस्तं गतो रविः । निराहारो जितक्रोधो तावत्तिष्ठेत् समाहितः । रात्रावस्तङ्गते देवमर्च्चयेत् पुरुषोत्तमम् । उपोष्य विधिवत् स्नात्वा तथा पर्वणि सुव्रत" । पर्वणि, पौर्णमास्याम् । एतच्च शुक्लचतुर्दशीव्रत, पुराणे शुक्लपक्ष व्रतप्रकरणे पठितत्वात् ।

गुडतृतीयाव्रत भविष्यपु० "गुडपूपास्तु दातव्या मासि भाद्रपदे तु या । तृतीया पायसेनापि वासुदेवस्य प्रीतये" ।

गुणावाप्तिव्रत विष्णुपु० "अतःपरं प्रवक्ष्यामि चतुर्मूर्त्तिव्रतं तव । द्विधा तु देवदेवस्य मूर्त्तिर्भवति यादव । घोरा सौम्या शिवा चान्या घोरा भवति पावका । शिवा चाग्निपतिर्यस्माद्ग्नीषोमात्मकं जगत् । द्विधा घोरा विनिर्दिष्टा द्विधा सौम्या ततः पुनः । घोरा वह्निश्च सूर्य्यश्च सौम्या सोमजलाधिपौ । तेषां च पूजनं कार्य्यं प्रतिपत्प्रभृति क्रमात् । शुक्लपक्षात् तथारभ्य फाल्गुनस्य द्विजोत्तम ! । आदित्यं पूजयेद्राजन् ! प्रथमेऽह्नि परः शुचिः । द्वितीयेऽह्नि तथा वह्निं तृतीयेऽह्नि जलाधिपम् । चतुर्थेऽह्नि शशाङ्कञ्च यथावन्मानवोत्तम" ।

गुरुव्रत भविष्योक्तम् "अनुराधासु चाचार्य्यं देवानां पूज्य भक्तितः । पूर्वोक्तक्रमयोगेन सप्त नक्ताण्यथाचरेत् । हैमं हेममये पात्रे स्थापयेत् बृहस्पतिम् । पीताम्बरयुगच्छन्नं पीतयज्ञोपवीतकम् । पादुकाच्छत्रसहितं सदण्डं सकमण्डलुम् । सम्पूज्य पुष्पनिकरैर्धूपैर्दीपाक्षतादिभिः । सदक्षिणाद्योपहारञ्च द्विजाय प्रतिपादयेत्" ।

गुर्वष्टमीव्रत भविष्यपु० "मासि भाद्रपदे राजन् ! शुक्लपक्षे यदाष्टमी । गुरुवारेण संयुक्ता सा तिथिर्भववर्द्धिनी । सम्पूर्णा सर्वपापघ्नी प्रेतयोनिविनाशनी । अष्टम्यां नियमं सम्यक् दन्तधावनपूर्वकम् । एकभक्तेन राजेन्द्र ! तस्यां देवी तुष्यति । स्नानं नद्यां तडागे वा गृहे वा नियतात्मना । सौवर्णं कारयेज्जीवं राजतं वा नरोत्तम ! तदभावे यथाशक्त्या मौञ्जेनापि कारयेत्" ।

गुह्यकद्वादशीव्रतं भविष्योत्तरे "द्वादश्यां गुह्यकानर्च्य पञ्चकालतमस्युतैः । हैमं विमाय वै दद्यादुपवासपरायणः । एतद्वै गुह्यकं मोक्ष व्रतं पापहरं शुभम्" ।

घटपञ्चमीव्रतं भविष्योत्तरे "सर्वौषध्युदयात्ततः पञ्चम्यां पूज्य पन्नगम् । सर्वोपस्करदानञ्च यः करोति घटान्तमे । घटाटोदूखलं शूर्पं शिला शालीञ्च पञ्चमीम्" ।

चैत्रशुक्लस्य दिने पूज्य कृत युगम्। श्वेतेन वस्त्रयुग्मेन गन्धमाल्यादिना तथा। चैत्रशुक्लप्रमारभ्य चतुर्थेऽहनि पूजयेत्। कृतं शुक्लेन सर्वेण गन्धमाल्यादिना द्विज!। द्वितीयेऽहनि रक्तेन तथा त्रेतान्तु पूजयेत्। तृतीयेऽहनि पीतेन द्वापरं पूजयेद् बुधः। चतुर्थेऽहनि कृष्णेन तिष्यं सम्पूजयेद् युगम्। सिद्धार्थकैः कुङ्कुमेन तदेव च हरिद्रया। तथैवामलकैः स्नानमत्र सौर्द्दिवक्रमात्। क्षीरेण प्राशयात्तान्तु कुर्य्यात् प्रत्यहमेव च। कृत्वा व्रत वत्सरमेतदेक चतुर्युगं मोदति नाकपृष्ठे। सम्पूज्य देवं युगमूर्त्तिसंघ चतुर्युग प्राप्ति मर्त्यो समग्राम्"।

चन्द्रव्रत वराहपु० "चन्द्रव्रतं पञ्चदश्यां शुक्लायां नक्तभोजनम्। दश पञ्च च वर्षाणि व्रतमेतत् समाचरेत्। अश्वमेधसहस्राणि राजसूयशतानि च। दत्तानि तेन राजेन्द्र! एतद्व्रत समाचरेत्"। पद्मपु० "चान्द्रायणस्य च कृत्वा हैमञ्चन्द्रं निवेदयेत्। चन्द्रव्रतमिदं प्रोक्तं चन्द्रलोकप्रदायकम्"।

चन्द्ररोहिणीशयनव्रतं पद्मपु० "रोहिणीचन्द्रशयनं सोम व्रतमिहोत्तमम्। तस्मिन्नारायणस्यार्च्चामर्च्चयेदिन्दुनामभिः। यदा सोमदिने शुक्ला भवेत्पञ्चदशी क्वचित्। अथ वा ब्रह्मनक्षत्र पौर्णमास्या प्रजायते। तदा स्नानं नरः कुर्य्यात् पञ्चगव्येन सर्षपैः"।

चन्द्रार्कव्रतं विष्णुधर्म्मोत्तरोक्तम् "अमावास्यान्तवेलायां सोपवासो नरोत्तम!। जलाह्रदे पूजयन्ति चन्द्रार्कवरासिनौ। आदित्यमण्डलके प्रथमं षोडशारके। आदित्यं सर्वं रक्तेन चन्द्रं शुक्लेन यादव!। माल्यगन्धेन महाभाग! होमयेत् तिलतण्डुलान्। घृतक्षीरयुतान् राजन्! तथार्च्चयेद्यथाविधि। व्रतान्ते ब्राह्मणेन्द्राय कनकं प्रतिपादयेत्। रजतं वा महाभाग! यथाशक्तिविभाजनं। कृत्वा व्रतं वत्सरमेतदिष्टं दद्याच्च दीपान् विधिवत् प्रभूतान्। चान्द्रं पदं प्राप्य विवर्द्धते सदा धनान्वित स्यात् त्रिदिवे इहैव"।

कल्याणिनीव्रत स्कन्दपु० "यदि कल्येत जीवेऽद्भि दैवेन भूपसत्तम!। षष्ठी भाद्रपदे शुक्ला रोहिणेन समन्विता। चित्राख्या भौमयोगेन सा कल्याणीह विश्रुता। देवासुरमनुष्याणां दुर्लभा पापहारिणी। कृते त्रेताया पञ्चाशद्वारम्भो द्वापरे पुनः। चत्वारिंशत् कलौ नियमदायिनी दुर्लभा व्रत"।

चान्द्रायणव्रत कूर्म्मपु० "अथ शुक्लचतुर्दश्यां पौषमासे समाहित। चान्द्रायणव्रत माघ आरभेत सर्वपापजित्। पूर्णेन्दुपौर्णमास्यान्तु पूजयेत् प्रत्यह हरे"।

चित्रभानुसप्तमीव्रत भविष्यपु० "सप्तम्यां पूज्य यत्नेन चित्रभानुं दिवाकरम्। रक्तैश्च गन्धकुसुमैर्महदारोग्यमाप्नुयात्"।

चैत्रमासतृतीयाव्रतं भविष्योत्तरे "चैत्रे मासि तृतीयायां दन्तधावनपूर्वकम्। उपवासस्य नियमान् स्त्रीयाद्भक्तिभावतः। अञ्जनं च कृतास्नुह सिन्दूर रक्तवाससी। दिव्यवास सोपवासापि सर्वकामकरं परम्। विधवा गतिमार्गेण कुमारी च सहकन्या। कुर्य्यादाद्यर्च्चनविधिं च यतात्मन् च क्रमः। विधिभाद्रपदे होम सर्वसौख्यप्रदायक। सप्तधान्यविधानेन सूर्प्पस्था पूजयेदुमाम्"

चैत्रशुक्लप्रतिपदादिकृतं तिलकव्रतम् भविष्यपु० "वसन्ते किंशुकाशोकशोभिते प्रतिपत्तिथि। शुक्ला तस्यां प्रकुर्वीत स्नानं नियममास्थित। नारी नरो वा राजेन्द्र! संतर्प्य पितृदेवताः। नद्यास्तीरे तडागे वा गृहे वा तद्दयामत। पिष्टातकेन विलिखेत्तद्वत् पुरुषाकृतिम्। तत प्रभृत्यनुदिनं तिलकालङ्कृत ह्यम्। सार्द्धं संवत्सरं यावच्छशिनेव नभस्तलम्। एवं नरो वा नारी वा व्रतमेतत् समाचरेत्। सदैव दुःस्मात्! भोगान् भुवि भुनक्त्यसौ"।

जयन्तीसप्तमीव्रत भविष्यपु० "माघस्य शुक्लपक्षे तु सप्तमी या त्रिलोचन!। जयन्ती नाम सा प्रोक्ता पुण्या पापहरा तथा। उपोष्या येन विधिना श्रृणु त पार्थतीर्थप्रिय! पारणानि तु चत्वारि कथितानि च पण्डितैः। परस्यामेकभक्तन्तु षष्ठ्यां नक्तं प्रकीर्त्तितम्। उपवासस्तु सप्तम्यामष्टम्यां पारणं भवेत्" इत्यादि इद वर्षसाध्यम्।

जयपौर्णमासीव्रतं भविष्यपु० "पौर्णमासी महाराज! सोमस्य दयिता तिथि पूर्णमासो भवेद् यस्यां पूर्णमासी ततः स्मृता। तस्यां तु प्रातरेव स्नात्वा संतर्प्य पितृदेवताः। आश्विन्यां मण्डले सोमं नक्षत्रैः परिवृतं विभुम्। पूजयेत् कुसुमैर्धूपैर्नैवेद्यैर्घृतपाचितैः। शुक्लवस्त्रैर्द्विजांश्चापि पूजयित्वा क्षमापयेत्। शाकाहारेण अन्यसैकं भुञ्जीत भारत" इत्यादि।

जयाथसप्तमीव्रतं भविष्यपु० "माहात्म्यमपि वक्ष्यामि सप्तम्यास्तव भारत!। जयेति या च विख्याता प्रतिमा सर्वदा-

यिनी। यस्माज्जया जयायन्तं कुर्वन्ति व्रतिनो बुधाः। परिपूर्णं व्रत यस्या सा ज्ञेया जयपञ्चमी॥ जया च विजया चैव जयन्ती पापनाशिनी" तथा, कार्त्तिक शुक्लपञ्चमी"।

जयावाप्तिव्रत विष्णुधर्मोत्तरोक्तम् "आश्वयुज्यामतीतायां प्रतिपत्प्रभृतिक्रमात्। पूर्ववत् पूजयेद्देव लोकनाथं त्रिविक्रमम्"। पूर्ववदिति रूपावाप्तिव्रतवत् "त्रिरात्रान्ते तु कार्त्तिक्यां यथावद् भक्ष्यमुत्तमम्। सर्वशस्य धरं कृत्वा भक्त्या रत्नैरलङ्कृतम्। कृत्वा व्रतं मासमिदं यथोक्तं प्राप्नोति लोकं सुचिरं नवीर। तत्रोष्य कालं सुचिरं मनुष्यः प्राप्नोति सर्वत्र जयं त्रिलोक्याम्"।

जयासप्तमीव्रत भविष्यपु० "जया च विजया चैव जयन्ती चापराजिता। महाजया च नन्दा च भद्रा चापि प्रकीर्त्तिता। शुक्लपक्षस्य सप्तम्यां नक्षत्रं पञ्चतारकम्। यदा भवेत् तदा ज्ञेया जयानामेति सप्तमी"। पञ्चतारकमिति रोहिण्यर्क्षोपलक्षणाच्च। तस्यां दत्तं हुतं जप्तं तर्पणं देवपूजनम्। सर्वं शतगुणं प्रोक्तं पूजायाश्चापि दिवाकर। हंसे हस्तसमारूढे शुक्ला या सप्तमी परा"। हंसः सूर्यः "वर्षमेकन्तु कर्त्तव्यं विधिनानेन भास्करम्। सौवर्णं कारयेद्भक्त्या द्विभुजं पद्मधारिणम्। पारणत्रितयं तस्याः क्रियते गोपते पुरः"।

जातित्रिरात्रव्रतं भविष्योत्तरे "ज्यैष्ठे मासि च कर्त्तव्यं त्रयोदश्यान्तु पाण्डव!। नियमश्च गृहीतव्य आचार्य्यो तु तया ततः। कृत्वैकभक्तं द्वादश्यामुपवासत्रयञ्चरेत्। मण्डपं कारयेत् तत्र सपताकं मनोहरम्। तत्र जाति प्रकर्त्तव्या स्वर्णादिभवसारतः। रौप्यपुष्पाणि कार्य्याणि वंशपात्रे निधापयेत्। तत्र देवास्त्रयः पूज्या ब्रह्मविष्णुमहेश्वराः। सपत्नीकाः शुभैः पुष्पैः फलैश्च विविधैस्तथा"।

जामदग्न्यद्वादशीव्रत धरणीव्रतोक्तम् "वैशाखस्यैवमेवन्तु शुक्लपक्षविधिना नरः। तद्वत् स्नानं मृदा कृत्वा ततो देवालयं व्रजेत्। तत्राराध्य हरिं भक्त्या एभिर्मन्त्रैर्विचक्षणः। जामदग्न्याय पादौ तु उदरं सर्वधारिणे" इत्यादि।

ज्ञानावाप्तिव्रतं विष्णुधर्मोक्तम् "भगवन्! कर्म्मणा केन बुद्धियुक्तो भवेन्नरः। एतदेव मनुष्याणां मनुष्यत्वमुदाहृतम्"। मार्कण्डेय उवाच। "चैत्रान्तु समतीतायां यावन्मासं दिने दिने। पूर्ववत् पूजयेद्देवं नरसिंहमपराजितम्"। पूर्ववदिति चैत्रमासोक्तरूपावाप्तिव्रतवद्देवभक्तवह्निस्नानभूषणादिकं कर्त्तव्यमित्यर्थः। "होमश्च प्रत्यहं कुर्य्यात् तथा सिद्धार्थकैर्नृप!। ब्राह्मणान् भोजयेच्चात्र तथा त्रिमधुरं नृप!"। त्रिमधुरं मधुघृतशर्करा "वैशाख्यां कनकं दद्यात् त्रिरात्रोपोषितो नरः। ज्ञानावाप्तिप्रदन्त्वेतद्व्रतं बुद्धिविवर्द्धनम्। कृत्वा व्रतं मासमिदं यथोक्तमासाद्य नाकं सुचिरं मनुष्यः। मानुष्यमासाद्य तु बुद्धियुक्तो ज्ञानेन युक्तश्च तथा भवेच्च"।

ज्येष्ठाव्रत भविष्योत्तरे "मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठा यदा भवेत्। रात्रौ जागरणं कृत्वा गीतवादित्रनिःस्वनैः। एवंविधविधानेन एभिर्मन्त्रैः सुपूजयेत्। ज्येष्ठे हि त्वं महाभागे! सुरासुरनमस्कृते!। ज्येष्ठे त्वं सर्वदेवानां मत्समीपे सदा भव"।

ज्यैष्ठव्रतानि महाभारते "ज्यैष्ठामूलन्तु यो मासमेकभक्तस्तु यः क्षिपेत्। ऐश्वर्य्यमतुलं श्रेष्ठं पुमान् स्त्री वाभिजायते"। विष्णुधर्मे "कृष्णार्पितमना ज्यैष्ठमेकभक्तेन यः क्षिपेत्। अहिंस्रः सर्वभूतेषु वासुदेवपरायणः"।

तपश्चरणसप्तमीव्रतं भविष्योत्तरे "इच्छयावाहितो भूत्वा युधिष्ठिर! तपोव्रतम्। मार्गशीर्षादिमासेषु कर्त्तव्यं भूतिमिच्छता। तस्मिन् स्थितो व्रते विप्रो बह्वृचो वेदपारगः। ब्रह्मवित् कृष्णसप्तम्यां दद्यादर्घ्यं महीतले। ऋग्वेदवर्गत्रितयं पठित्वा सूर्य्यमुत्तमम्" इत्यादि।

तपोव्रतं पद्मपु० "माघे निशार्द्रवासाः स्यात् सप्तम्यां गोप्रदो भवेत्। स्वर्गलोकमवाप्नोति तपोव्रतमिहोच्यते"।

ताम्बूलसंक्रान्तिव्रतं स्कान्दपु० "अथान्यां सम्प्रवक्ष्यामि ताम्बूलाख्यामनुत्तमाम्। विधानं पूर्ववत् कुर्य्याद्ध्यन्यसंक्रान्तिवच्च तत्। ताम्बूलं चन्दनाद्यञ्च प्रदद्यात् द्विजोत्तमात्। यावत् संवत्सरं पूर्णं रात्रौ रात्रौ ततः परम्। ताम्बूलं भक्षयेद्विप्रान् कारयेन्नैव नान्तरम्। वत्सरान्ते तु कमलं कृत्वा चैव तु काञ्चनम्। पत्रकोषञ्च कुर्व्वीत तथा पूगीफलाचयम्" इत्यादि।

तारकद्वादशीव्रतं भविष्योत्तरे "कथं तत् कृष्ण! कर्त्तव्यं तारकद्वादशीव्रतम्। पापोऽपि यद्गति प्राप्तो यत्प्रभावात् खगध्वज!"। कृष्ण उवाच "मार्गशीर्षे सिते पक्षे गृहीत्वा द्वादशीव्रतम्। जलान्तिके जले स्नानमपराह्णे समाचरेत्। प्रपश्य भास्करं भक्त्या कृत्वा देवार्च्चनं तथा"।

तिथिनक्षत्रवारव्रतानि कालोत्तरे "नक्षत्रतिथियोगेन तिथीनां वारयोगतः। पुनरेव प्रवक्ष्यामि व्रतानि तु यथाक्रमम्। रोहिण्याञ्चाष्टमीयोगो यदा भवति सौम्ये विशेषपूजा कर्त्तव्या पुत्रकामैश्च यत्नतः। पुनर्

कृतोपवासस्तन्मध्ये भास्करं पूजयेन्नरः। व्रते समाप्ते दातव्यास्तुरगा ब्राह्मणाय तु। प्राप्याश्वमेधस्य फलं यथावल्लोकानवाप्याथ पुरन्दरस्य। तपोवत्र राजन्! सुचिरञ्च कालं सायुज्यमायाति दिवाकरस्य"।

तुष्टिप्राप्तितृतीयाव्रत विष्णुधर्मोत्तरे "तृतीया श्रावणे कृष्णा या च श्रवणसंयुता"। श्रावणोऽत्र पौर्णमास्यन्तो मासो ग्राह्यः अत श्रवणकृष्णतृतीयाया श्रवणयुक्तत्वं न दुर्घटम्। "तस्यां सम्पूज्य गोविन्दं तुष्टिमग्र्यामवाप्नुयात्"।

तेजःसंक्रान्तिव्रत स्कान्दपु० "अथान्यां सम्प्रवक्ष्यामि तेजःसंक्रान्तिमुत्तमाम्। संक्रान्तिवासरं प्राप्य स्नानं कृत्वा विचक्षणः। शालितण्डुलसंयुक्तं कारयं कारयेच्छुभम्। तन्मध्ये दीपकं स्थाप्य प्रज्वलन्तं स्वतेजसा। तन्मध्ये सादकं स्थाप्य ब्राह्मणाय निवेदयेत्। यद्यं सुपूर्ववत् कार्य्यमेवमन्तु पूर्ववत्। संवत्सरे तु सम्पूर्णे कुर्यादुद्यापनं नृप" इत्यादि।

त्रयोदशवर्ज्यसप्तमीव्रत भविष्योत्तरे "भानोर्दिने सिते पक्षे अतीते चोत्तरायणे। सप्तोषितस्तिलयवान् सह माषमुद्गैर्गोधूमनामसमधुमैथुनकांस्यपात्रैः। अभ्यञ्जनाञ्जनशिलातलचूर्णितानि पक्वोदनी परगृहे दृष्टनीडविद्धम्। देवान् पितॄन् मुनिगणान् सजलाञ्जलीभिः सन्तर्प्य पूज्य गगनाङ्गणभूषणदीपम्। स्नात्वा नखे तिलयवान् वहणादिकांस्तान् भूमौ क्षिपेत् हृदि निधाय दिनेशबिम्बम्। यानि त्रयोदशदिनैरिह वर्जितानि द्रव्याणि तानि परिहृत्य दिने च षष्ठ्याम्। संप्राप्य शुद्धचरणानिह वर्षमेकं प्राप्नोति भारत! पुमान् मनसेप्सितानि"।

त्रिगतिसप्तमीव्रतं भविष्यपु० "सप्तम्यां शुक्लपक्षे तु फाल्गुन्यां यो यजेन्नरः। जपेद्वृषणीति नाम भक्त्या पुनः पुनः। देवार्चनं वाष्टशतं कृत्वैवं तु जपेच्छुचिः। स्नातः प्रस्थानकाले तु उत्थाने स्खलिते क्षुते। पाषण्डान् पतितांश्चैव तथैवान्त्यावसायिनः। नालापयेत् तथा भानुमर्चयेच्छ्रद्धयान्वितः। इदञ्चोच्चारयेद्भानोर्मन्त्रं ध्यानतत्परः। कृप कृप कृपालो! त्वं जगतीनां गतिर्भव। संसारार्णवमग्नानां त्राता भव दिवाकर। एवं प्रसाद्योपवासं कृत्वा नियतमानसः। पूर्वाह्णे एव वल्येषु सक्तून् प्राश्यार्जुनीयकम् आर्जुनीयक, गोमयक्षेत्रयम्।

त्रिविक्रमतृतीयाव्रत विष्णुधर्मोत्तरे "शुक्लपक्षे तृतीयायां सोपवासो जितेन्द्रियः। मण्डलत्रितयं कुर्यात् वर्णकेन पृथक् पृथक्। मण्डलं दक्षिणे भागे श्वेतं कुर्यात् तथा नरः। रक्तं मध्ये रवेः कुर्यात् तादृक्श्वेतं ध्रुवस्य तु। विष्णोः पदत्रयं तेषु पूज्यं स्यात् मण्डलेन तु। भूमौ तु प्रथमं पादं द्वितीयं सूर्यमण्डले। तृतीये तु ध्रुवे देवे पूजयेत् प्रयतः शुचिः"।

व्रतान्तरं विष्णुधर्मोत्तरे "द्वितीयस्य प्रवक्ष्यामि शृणु! त्रैविक्रमं व्रतम्। भूमिस्तु प्रथमः पादः अन्तरिक्षं तथा परः। तृतीयो दिवि विज्ञेयो देवदेवस्य चक्रिणः। भुवः पतिः स्मृता वह्निरन्तरिक्षस्य मारुतः। दिवापतिस्तथा सूर्यस्तस्य विष्णोः पदत्रयम्। ज्यैष्ठशुक्लतृतीयायां सोपवासो जितेन्द्रियः। कल्ये कृतजपः स्नातो वह्निं सम्पूजयेन्नरः। एतत् संवत्सरं कृत्वा नरस्त्रैविक्रमं व्रतम्। सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते"।

व्रतान्तरं विष्णुधर्मोत्तरे "वक्ष्यामि ते महाभाग! तव त्रैविक्रमव्रतम्। तृतीयं यदुनन्दन! तन्मे निगदतः शृणु॥ ज्यैष्ठे शुक्लतृतीयायां नरः सम्यगुपोषितः। भूः सम्पूजनं कुर्याद् गन्धमाल्यानुलेपनैः। दीपै रत्नैश्च विविधैर्दद्याद्विप्रेषु दक्षिणाम्। बीजपूर्णानि पात्राणि चन्दनरत्नानि भक्तितः। पूर्वैश्चान्तरिक्षस्य मासाषाढे विधीयते। दक्षिणा तत्र दातव्या तथा वासोयुगं द्विजे। दिवः पूजा च कर्त्तव्या श्रावणे मासि एव तु। छत्रञ्चोपानहौ युग्मं दक्षिणां तत्र दापयेत्। एवं मासत्रयेणेह पारणं प्रथमं भवेत्। मासत्रयेण चान्येन ततो मासत्रये पुनः। तथा मासत्रये चान्यत्तथान्यच्च तथान्यथा। विद्धि मित्र धर्मस्य पारणानां चतुष्टयम्" इत्यादि।

त्रिविक्रमत्रिरात्रगतव्रत विष्णुरहस्ये "अथ त्रिरात्रव्रतं कुर्यात् समुद्दिश्य जनार्दनम्। कुर्वाणा व्रतमादाय च याति भवनं हरेः। नवम्यादिषु सिते पक्षे मार्गशीर्षस्य च। आरभेत त्रिरात्राख्यं व्रतं तु विधिवद् व्रती। ब्रह्मचारी जितक्रोधो नित्यस्नायी क्षमान्वितः। अभ्यर्चयेत् सदा विष्णुं कर्मणा मनसा गिरा। अष्टोत्तरसहस्रन्तु मन्त्रं यावद्दिनं जपेत्। अष्टम्यामेकभक्ताशी दिनत्रयमुपावसेत्। एकादश्यां शुचिः स्नातो वासुदेवार्चने रतः। द्वादश्यां पूजयेद्देवं गन्धमाल्यविलेपनैः। नैवेद्यधूपदीपाद्यैर्गीतनृत्यैश्च केशवम्। अनेन विधिना कृत्वा त्रिरात्राख्यं व्रतं नरः। निवेदयेत् ततो भक्त्या विष्णवे-

धिना व्रतम्। इमामे कार्त्तिके मासि व्रतमेतदनुत्तमम्”। प्रतिमास, त्रिरात्रद्वयमिति पञ्चाशता मासैः व्रत तत्राधिमासद्वतयोगात् चतुर्भिर्वर्षैरिति कार्त्तिके समाप्तिः।

त्रिविक्रमव्रत विष्णुधर्मोत्तरे “करोति केशवप्रीत्यै कार्त्तिक मासमाप्नुयात्। पूर्वे वयसि यत्तेन ज्ञानताऽज्ञानतापि वा। पापमाचरित तस्मात् मुच्यते नात्र संशय। अनेनैव विधानेन मार्गशीर्षेऽपि माधवम्। समभ्यर्च्यैकभक्तं यै य र्थिभ्यो यः प्रयच्छति दृश्युपक्रमे। त्रैमासिक व्रतमिद य करोति नरेश्वर!। स विष्णुप्रीणनात् पापैर्मुक्तिं परि मुच्यते। द्वितीये वत्सरे राजन्! मुच्यते चोपपातकैः। तद्वत् तृतीयेऽपि कृत महापातकनाशनम्। व्रतमेतत्त्वरे त्रीभिस्त्रिभिर्मासैरनुष्ठितम्। त्रिभि संवत्सरैश्चैव प्रददाति फलं नृपाम्। त्रिभिर्मासैस्त्र्यवस्थाभिस्त्रिविधात् पातकान्नृप!। त्रीणि नामानि देवस्य मोचयन्ति त्रिवार्षिके। यतस्ततो व्रतमिद त्रिविक्रमसदाहृतम्। सर्वपापप्रशमनं केशवाराधन परम्”।

सौरत्रिविक्रमव्रतं भविष्योत्तरे “समभ्यर्च्य जगन्नाथ देवमर्कमथापि वा। एककृन्नाति यो भक्तं द्वितीय ब्राह्मणायैषम्। करोति भास्करप्रीत्यै कार्त्तिक मासमाप्नुयात्। पूर्वे वयसि यत्तेन ज्ञानताऽज्ञानताऽपि वा। पापमाचरित तस्मात् मुच्यते नात्र संशयः। व्रतमेतत्त्वरैस्त्रीभिस्त्रिभिर्मासैरनुष्ठितम्। त्रिभि संवत्सरैश्चैव प्रददाति फलं नृपाम्। त्रिभिर्मासैस्त्र्यवस्थाभिस्त्रिविधात् पातकान्नृप!। त्रीणि नामानि देवस्य मोचयन्ति त्रिवार्षिकात्। यतस्ततो व्रतमिद त्रिविक्रमसदाहृतम्। सर्वभूतप्रशमनं भास्करारांधन परम्”।

त्र्यम्बकव्रत पद्मपु० “चतुर्दश्यान्तु नक्ताशी समान्ते गोयुग प्रद। स शैव पदमाप्नोति यजन्त्र्यम्बकं व्रतम्”।

दशादित्यव्रतं ब्रह्माण्डपुरा० “वक्ष्ये सौरव्रत पुण्यं दुर्दशान्तकर पर। दशाकर हि भूतानां मनोरथकरं पर। भानुवारे सिते पक्षे दशम्या चैव नारद!। प्रात काले ऽथ मध्याह्ने स्नान कुर्य्याद्यथाविधि” इत्यादि।

दशावतारव्रत विष्णुपु० “एकादश्यां निराहारो द्वादश्यां पुरुषोत्तमम्। अर्चयेद् ब्राह्मणमुखे स गच्छेत्परमं पदम्। एषा तिथिर्वैष्णवी स्याद्द्वादशी शुक्लपक्षगा। तस्यामाराधयेद्देवं प्रयत्नेन जनार्दनम्”।

द्वाम्पत्याष्टमीव्रत भविष्यपु० “कार्त्तिके मासि विप्रेन्द्र! पुत्रकामो नरोत्तमे!। अष्टम्या कृष्णपक्षस्य पूजयेद्दम्पतीद्विज!। समाप्तु ता सती देवीं विधिवद्ब्राह्मणोत्तम!। य एतत् कुरुते भक्त्या उमामहेश्वर व्रतम्। सम्यैकमेव विप्रेन्द्र। स याति परमा गतिम्”। समैमेकं संवत्सरम् “चतुर्भिः पारणैरेवं समैकमेक कीर्त्तितं बुधैः। प्रथमन्तु त्रिभिर्मासैः पारण कार्त्तिकादिभिः। कार्त्तिके मार्गशीर्षे तु पौषे मासि तथा परे। चन्द्रातकस्य पुष्पैस्तु फलैर्भक्ष्यैरनेकशः”।

दिवाकरव्रत भविष्यपु० “आदित्यवारं हस्तेन युक्त सङ्गृह्य पाण्डव!। ततः प्रत्यादित्यदिन सप्त वारान् प्रपूजयेत्। एकभक्तेन नक्ताशी ब्राह्मणान् पूजयेत् दिवा। दक्षिणा तु यथा शक्त्या दद्यात् विप्राय भक्तित”

दीप्तिव्रत पद्मपु० “सन्ध्यादीपप्रदो यस्तु समा तैलञ्च वर्जयेत्। समान्ते दीपकान् दद्याच्छुक्र स्पृष्टञ्च काञ्चनम्। वस्त्रयुग्मञ्च विप्राय स तेजस्वी भवेदिह। रुद्रलोकमवाप्नोति दीप्तिव्रतमिदं कृतम्”।

दुर्गन्धदौर्भाग्यनाशनत्रयोदशीव्रत भविष्योत्तरे “ज्यैष्ठे मासि सिते पक्षे त्रयोदश्या युधिष्ठिर!। स्नात्वा पुण्यनदीतोये पूजयेच्छुभदैवतम्” इत्यादि।

दुर्गानवमीव्रत भविष्यपु० “नवम्या तु सिते पक्षे नियतः संयतेन्द्रियः। मासि चाश्वयुजे वीर! कार्त्तिके कार्त्तिकोत्तरे। पुत्रे च पूजयेद् दुर्गां जातिपुष्पैर्विधानतः। धूपार्थं गुग्गुल दद्यान्नैवेद्यं गुडपूपकान्। दुर्गेति नाम सम्प्रष्ट प्रयतोऽष्टशत नृप!। माघे च फाल्गुने मासि चैत्रे चैत्रोत्तरे नृप!। शुक्लपक्षे तु अष्टम्यामुपवासपरायणः” इत्यादि वर्षसाध्यम।

दुर्गाव्रत देवीपु० “देवीव्रत प्रवक्ष्यामि सर्वकामप्रसाधनम्। श्रावणे शुक्लपक्षे तु अष्टम्या वायुभोजन। स्नात्वा साञ्जपुटीभूत्वा जितक्रोधः क्रियान्वितः। देवीं संस्नाप्य तोयेन पुन क्षीरेण वारिणा। ततो गुग्गुलधूपञ्च वस्त्रकन्तु दापयेत्” इत्यादि तदवधिवर्षसाध्यम्।

दूर्वागणपतिचतुर्थीव्रत सौरपु० “चीर्णमेतद् व्रत सर्वैं पुराकल्पे षडानन!। चतुर्थी या भवेच्छुक्ला नभोमासस्य पुण्यदा। तस्यां व्रतमिद कुर्य्यात् कार्त्तिक्यां वा षडानन!। गजानन चतुर्बाहुमेकदन्तं विपाटिनम्। तथा हैमीमयो दूर्वां तदाधारे व्यवस्थिताम्”। तदाधारे, विघ्नेशासने “संस्थाप्य विघ्नहन्तार कलशे ताम्रभाजने। वेष्टितं रक्तवस्त्रेण सर्वतो भद्रमण्डले। पूजयेच्च कुसुमैः पत्रिकाभिश्च पञ्चभिः। बिल्वपत्रमपामार्गं शमी दूर्वा हरिप्रिया। सोपोभ्या तु हरन्तेव!

ततो राज्यं भविष्यति। सर्वोपहारसम्पन्नं सर्वोपस्करमाहरेत्। कन्दमूलं फलं शाकं लवणं गुडशर्करा। वस्त्रं कुसुम्भरी क्षीरं धान्यानि विविधानि च। दारव्याणि च कुम्भेश! वन्यकाले तु भक्तितः"।

दूर्वात्रिरात्रव्रतं पद्मपु० "शृणु! दूर्वात्रिरात्रस्य विधिं कात्यायनेन सुव्रत!। मासि भाद्रपदे चैव शुक्लपक्षे त्रयोदशीम्। त्रिरात्रं समुपोष्यन्तु यावत् पूर्णा तिथिर्भवेत्। उमामहेश्वरं देवं सावित्रीं धर्ममेव च। दूर्वामूले तु संस्थाप्य स्थण्डिले कारयेत्ततः" इत्यादि।

दूर्वाष्टमीव्रतं भविष्यपु० "राजन्! भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः। पूजयेच्छङ्करं भक्त्या यो नरः श्रद्धयान्वितः। स याति परमं स्थानं यत्र देवस्त्रिलोचनः। गणेशं पूजयेद्यस्तु दूर्वया यो हि सन्मुने!। कृत्वोपवासं कृष्णस्याष्टम्यां पूजयेच्छिवम्। दूर्वासमेतं विप्रेन्द्र! दध्यक्षतफलैः शुभैः"। व्रतान्तरं दूर्वाष्टमीशब्दे दृश्यम्।

देवमूर्त्तिव्रतं विष्णुधर्मोत्तरे स्मृतम् "ईशानश्च तथा वह्निः विरूपाक्षः समीरणम्। जानीहि दक्षिणादूर्ध्वं देवमूर्त्तिचतुष्टयम्। तेषान्तु रूपनिर्माणं कृत्वा तान्पूजयेद् बुधः। गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा। चैत्रके महाभाग! प्रतिपद्यथ क्रमात्। कौपमादेयताडाग- काचारैः स्नानमाचरेत्। दध्ना तिलैर्यवैर्होमो घृतेन च तथा भवेत्। कर्पूरं कुङ्कुमञ्चैव तथैव हरिचन्दनम्। ब्राह्मणेषु प्रदातव्यं तथा राजन्! दिनक्रमात्। दिनत्रयं तथाऽश्नीयात् सायं प्रातरयाचितम्। दिनमेकन्तु नाश्नीयात् व्रतचारी नरोत्तमः। एवं संवत्सरं कृत्वा व्रतं पुरुषसत्तम!। सर्वकामसमृद्धस्य स्थानस्य फलमश्नुते"।

देवव्रतं वह्निपु० "नमस्यऽष्टम्यां कृत्वा तु गवा सार्द्धं कुटुम्बिने। हैमशृङ्गं त्रिशूलञ्च दद्यात् विप्राय वाससी। प्रणम्य भक्त्या मन्त्रेण प्रीयतां शिवकेशवौ। एतद्देवव्रतं नाम महापातकनाशनम्। यस्तु संवत्सरं पूर्णमेकभक्तो भवेन्नरः। अहिंसः सर्वभूतेषु वासुदेवपरायणः। नमोऽस्तु वासुदेवायेत्यष्टाक्षरं जपेत्। पौण्डरीकस्य यज्ञस्य ततः फलमवाप्नुयात्। दशवर्षसहस्राणि स्वर्गलोके महीयते। तत्क्षयादिह चागत्य माहात्म्यं प्रतिपद्यते"। कालोत्तरे व्रतान्तरं "बृहस्पतिश्च यो दर्शे चतुर्दश्यां यदा भवेत्। उपोष्य पूजयेत्तस्यां देवदेवं महेश्वरम्। महास्नानप्रकारेण महावर्त्तिपुरःसरम्। कुङ्कुमागरुचन्दनेन शुक्लपुष्पैः प्रपूजयेत्। धूपस्तु गुग्गुलो देयः मधुना चन्द्रसंयुतः। घृतवर्त्त्यापि वस्त्रञ्च ब्राह्मणाय प्रदापयेत्। जातीफलैः प्राशनञ्च रात्रौ जागरणं हितम्। एतद्देवव्रतं नाम आयुःश्रीकीर्त्तिवर्द्धनम्"।

देवीव्रतं पद्मपु० "पयोव्रतं पञ्चदश्यां व्रतान्ते गोयुगप्रदः। लक्ष्मीलोकमवाप्नोति देवीव्रतमुदाहृतम्" देवीपु० व्रतान्तरं "क्षीराशी कार्त्तिके यस्तु देव्या भक्तिरतो नरः। शाकपायसकन्दाशी प्रातःस्नायी शिवारतः। पूजयेत्तिलहोमस्तु मधुक्षीरघृतादिभिः। कार्य्यस्तु देवीमन्त्रेण शृणु पुण्यफलं हरे" इत्यादि।

द्वादशसप्तमीव्रतं भविष्योत्तरे "माघमासात् समारभ्य शुक्लपक्षे युधिष्ठिर!। सप्तम्यां कृतसङ्कल्पो वर्षमेकं व्रती भवेत्" मासभेदे नियमभेदास्तत्रोक्ता दृश्याः।

द्वादशसाध्यतृतीयाव्रतं विष्णुधर्मोत्तरे "मनोऽनुमन्ता प्राणश्च नरयानश्च वीर्य्यवान्। चित्तिर्हयो नयश्चैव हंसो नारायणस्तथा। प्रभवो विष्णुर्विभुश्च साध्या द्वादश जज्ञिरे। तृतीयायां महाभाग! पूजयेत्तानुपोषितः"। प्रत्येकतृतीयायां यावद्वर्षं सोपवास इति शेषः।

द्वादशादित्यव्रतं विष्णुधर्मोत्तरे "धाता मित्रोऽर्यमा पूषा शक्रोंऽशो वरुणो भगः। त्वष्टा विवस्वान् सविता विष्णुर्द्वादशकस्तथा। पूजयेद् द्वादशादित्यान् शुक्लपक्षे उपोषितः। मार्गशीर्षादथारभ्य द्वादश्यां नियतव्रतः"।

द्वादशीव्रतं कूर्मपु० "एकादश्यां निराहारो द्वादश्यां पुरुषोत्तमम्। अर्च्चयेद् ब्राह्मणमुखे स गच्छेत्परमं पदम्। एषा तिथिर्वैष्णवी स्याद् द्वादशी शुक्लपक्षगा। तस्यामाराधयेद्देवं प्रयत्नेन जनार्दनम्"।

द्वीपव्रतं विष्णुधर्मोत्तरे "अथातः संप्रवक्ष्यामि द्वीपव्रतमनुत्तमम्। चैत्रशुक्लात्तथारभ्य प्रत्यहं दिनसप्तकम्। जम्बूशाककुशक्रौञ्चशाल्मलिद्वीपसंज्ञितम्। गोमेदं पुष्करञ्चैव प्रत्यहं पूजयेत् क्रमात्। नित्यमेव सदा स्नानं बहिरेव समाचरेत्। अधःशायी भवेन्नित्यं तद्वेव दिनसप्तकम्" इत्यादि।

धनसंक्रान्तिव्रतं स्कन्दपु० "धनसङ्क्रान्तिमाहात्म्यं शृणु षण्मुख! विधानतः। यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः। सङ्क्रान्तिवासरं प्राप्य शुचिर्भूत्वा समाहितः। कलशं निर्व्रणं स्थाप्य वारिपूर्णं निधापयेत्। सुवर्णयुक्तं कृत्वा प्रतिमासन्तु दापयेत्। विधिनानेन वर्षान्ते प्रीयतां मे दिवाकरः"।

धनावाप्तिव्रतं धर्मोत्तरे क्रमम् "भगवन्! कर्मणा केन धनवान्

पुत्रवान् भवेत्। पुत्रवान् देवलोकेषु पूज्यो भवति मानवः"। इति मन्त्रे "श्रावण्यां समतीतायां प्रतिपत्प्रभृति क्रमात्। पूर्ववत् पूजयेद्विष्णुं देवं सद्धर्म्यं विभुम्" इत्यादि।

धन्यव्रतं वराहपु॰ "अथातः सम्प्रवक्ष्यामि धन्यव्रतमनुत्तमम्। येन सद्यो भवेद्धन्योऽधन्योऽपि हि यो भवेत्। मार्गशीर्षेऽमले पक्षे प्रतिपद् या तिथिर्भवेत्। तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुञ्च पूजयेत्" इत्यादि।

धराव्रतं पद्मपु॰ "यो विंशतिपलादूर्द्ध्वं धरीं कृत्वा तु काञ्चनीम्। दिनं पयोव्रत दद्याद्रुद्रलोके महीयते। धराव्रतमिदं प्रोक्तं सप्तकल्पशतानुगम्"। दिनं देवानामुत्तरायणम्। पयोव्रतमित्यनन्तरं कृत्वेत्यनुषङ्गः। रुद्रो देवता धरादान पारणम्" इत्यादि।

धर्म्मव्रतं विष्णुधर्म्मोत्तरे "शुक्लपक्षे दशम्यां तु सोपवासस्तु मानवः। धर्म्मं सम्पूजयेद्देवं सर्वलोकसुखावहम्"।

धान्यव्रतं स्कन्दपु॰ "अथातः संप्रवक्ष्यामि धान्यव्रतमनुत्तमम्। यत् कृत्वा हि नरो राजन्! सर्वकामानवाप्नुयात्। अयने विषुवे चैव स्नानं कृत्वा विचक्षणः। व्रतस्य नियमं कुर्य्याद्ध्यात्वा देवं दिवाकरम्। रविध्याता ततो दद्याद्धान्यप्रस्थं द्विजातये। प्रतिमासं तु यस्तद्वत् पूज्यो देव सङ्क्रमात्। एवं सदा प्रदातव्यं धान्यप्रस्थं द्विजन्मने। एवं संवत्सरे पूर्णे कुर्य्यादुद्यापनक्रियाम्"।

धान्यसप्तमीव्रत भविष्यपु॰ "संपूज्य सितसप्तम्यां भास्करं धान्यानि सप्त च। ददाति नक्तभुक् गार्ह्यं वस्त्रेण समन्वितम्"। गार्ह्यं गृहस्थोपकरणम् "स तारयति सप्तान्यान् कुल्यानात्मानमेव च। सूत! धान्यव्रतं नाम व्रतं धान्यसम्प्रदम्"।

धामत्रिरात्रव्रत पद्मपु॰ "त्रिरात्रोपोषितो दद्यात् फाल्गुन्यां भवनं शुभम्। आदित्यलोकमाप्नोति धामव्रतमिदं स्मृतम्"।

धाराव्रत भविष्योत्तरोक्तम् "चैत्रारम्भात् शिवं तोयसूक्ष्मधारा प्रपातयेत्। वर्षान्ते घृतसम्पूर्णान्दद्याद्वर्मिका नवाम्। एतद्धाराव्रतं नाम सर्वोद्वेगहरं परम्। कान्तिसौभाग्यजननं सपत्नीदर्पनाशनम्"।

ध्वजनवमीव्रत भविष्योत्तरे "पौषस्य शुक्लपक्षे तु नवमी या शुभा श्रुता। तस्यां स्नात्वा शुभैः पुष्पैरर्च्चनीया करैः सदा। कुमारी भगवान् देवी सिंहस्यन्दनगामिनी। ध्वजान् नानाविधान् कृत्वा पुरतश्च पूजयेत्। मालतीकुसुमैर्दीपैर्गन्धधूपविलेपनैः। बलिभि. पशुभिर्मेध्यैः सुरामांससुगन्धिभिः। दधिचन्दनचूर्णैश्च फलैश्चामग्निपाचितैः। देवीं स्वर्णमयीं कृत्वा सिंहारूढां चतुर्भुजाम्। खड्गचक्रत्रिशूलधरां शूलधरां नेत्रत्रयान्विताम्"। (पूजयेत्)

ध्वजव्रत विष्णुधर्म्मोत्तरोक्तम् "चैत्रे तु प्रत्यहं मासि गरुडं पूजयेन्नरः। पीतेन गन्धनैवेद्यमाल्यवस्त्रादिना द्विज!। वैशाखे च तथा मासि तालं सम्पूजयेत्सदा। नीलेन गन्धनैवेद्यमाल्यवस्त्रादिना द्विज!। ज्यैष्ठे च प्रत्यहं मासि मकरं पूजयेत् सदा। श्वेतेन गन्धनैवेद्यमाल्यवस्त्रादिभिर्द्विज!। ध्वजं संपूजयेद्देवं मास्याषाढे यथाविधि। रक्तेन गन्धनैवेद्यमाल्यवस्त्रादिना द्विज!। बहिः स्नानं तथा कुर्य्याद्वह्निसपूजनं तथा। नित्यञ्च कुर्य्याद्धर्म्मज्ञ! तथा ब्राह्मणभोजनम्। पारणायां तथा कुर्य्यात्तच्च तैलविवर्जितम्। अधःशायी तथा च स्याद् ब्रह्मचारी सदा भवेत्। व्रतमेतन्नर कुर्य्यात् सम्यङ्मासचतुष्टयम्। ब्राह्मणान् पूजयेत्पश्चात् प्रासादे परमेऽह्नि। वस्त्राण्युष्णानि धर्म्मज्ञ! दद्याद्विप्रेषु दक्षिणाम्। कृत्वैकं पारणं राजन्! स्वर्गलोके महीयते। द्वितीयं पारणं कृत्वा यक्षलोके महीयते। तृतीयं पारणं कृत्वा ब्रह्मलोके महीयते। कृत्वा तुर्य्यं पारणन्तु रुद्रलोके महीयते। विष्णुलोकमवाप्नोति कृत्वा द्वादशपारणम्। ध्वजव्रतं द्वादश वत्सराणि कृत्वा नरो मार्गवसत्तम!। सायुज्यमायाति जनार्द्दनस्य देवस्य विष्णोः परमेश्वरस्य"।

नक्षत्रचतुर्थीव्रतं स्कन्दपु॰ "विनायकचतुर्थ्यास्तु व्रतं वक्ष्यामि तेऽनघ!। धन्यं यशस्यमायुष्यं सर्वाभीप्सितफलप्रदम्। विघ्नापशमनायाश्च सर्वसिद्धिप्रदायकम्। श्रियं गणपतेर्नित्यवर्द्धिविभिश्चाप्युपार्जितम्। मार्गशुक्लचतुर्थ्यान्तु ग्राह्यं व्रतमिदं महत्। नक्ताहारेण विप्रेन्द्र! तिलाश्च पारणं स्मृतम्। तदेव वस्त्रौ होतव्य ब्राह्मणाय ददेत् सदा। नद्यां नदे वा नैवेद्य विघ्नराजाय संयमी। पूजयेत् गणपतिं रात्रौ गन्धैः पुष्पैर्यथाक्रमम्"

नक्षत्रपुरुषव्रतं मत्स्यपु॰ "नक्षत्रपुरुषं नाम व्रतं नारायणार्च्चनम्। पादौ हि कुर्य्याद्विधिवद्विष्णुर्नामानि कीर्त्तयेत्। प्रतिमां वासुदेवस्य मूलर्क्षाद्यभिपूजयेत्। चैत्रमासे समासाद्य कृत्वा ब्राह्मणवाचनम्। मूले नमो विश्वधराय पादावनन्तदेवाय च रोहिणीषु। जङ्घे च पूज्ये वरदाय चैव द्वे जानुनी चाश्विकुमारकर्क्षे। पूर्व्वोत्तराषाढयुगे च पादौ नमः शिवायेत्यभिपूजनीयौ" कृत्य. त.।

नक्षत्रार्थव्रतं देवीपु० "अतःपरं प्रवक्ष्यामि रूपसौभाग्यकारकम्। नक्षत्रविधिना यत्र यथा तुष्यति शङ्करो। मृगादारभ्य मूलेन पादौ जानिवजा पुरा। पूजयेदुपोषणास्तु नक्षत्रान्ते तु पारणम्। यथार्द्रं हविषा सिद्धं ब्राह्मणे जङ्घे प्रपूजयेत्" इत्यादि।

नदीव्रत विष्णुधर्मोत्तरे "चैत्रशुक्लाद्यथारभ्य प्रत्यह दिनसप्तकम्। स्तुदिनीं ह्लादिनीश्चैव पावनीं चैव पूजयेत्। सीतां चक्षुं तथा सिन्धुं तथा भागीरथीं क्रमात्। बहिःस्नान तथा कुर्यान्नित्यं नक्ताशनो भवेत्। अग्नौ च जुहुयात् क्षीरं शान्तात्मा च दिने दिने। क्षीरपूर्णाश्च दातव्या वारिधान्यो द्विजातिषु। क्षीराशनश्च तिष्ठेत तत्तथा दिनसप्तकम्। एव संवत्सरं कृत्वा पूर्णे संवत्सरे नर। द्विजातिषु ततो दद्याद्वस्त्रयुग्मं शुभम्। फाल्गुनश्चाश्विते पक्षे सप्तम्या दिवसे क्रमात्। स लोकमवाप्नोति नरो यत्र पायसकर्दमा." इत्यादि।

नन्दव्रत विष्णुधर्मोत्तरे "शुक्लपक्षे महाराज त्रयोदश्यामुपोषितः। फाल्गुनात्तु समारभ्य नित्यं सम्पूजयेन्नरः"। महाराजन्तु धनदम्। "गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा। सुवर्णं ब्राह्मणेन्द्राय व्रतान्ते प्रतिपादयेत्। कृत्वा व्रतं वत्सरमेतदिष्टं पक्षेषु राजन्! सुचिरं सुपोष्य। मानुषप्रसादाद्य धनान्वितः स्यात् सौभाग्ययुक्तश्च तथा विरोग"।

नन्दादिव्रतं भविष्योत्तरे "यस्यादित्यपक्षेयस्य वारो देवस्य सुव्रतः। पूजयेत् स प्रियो नित्यं स्नातो गोमूत्र-भूषण(प्रिय)। यस्तु संपूजयेन्नित्यं पतङ्गं पन्नगाधिपम्। गन्धपुष्पादिधूपैस्तु स्तोत्रैर्वा विविधैस्तथा। सोपवासो गणश्रेष्ठ आदित्यपहृषे शुचि। जपमानो महाश्वेता-स्थाप्योक्तपहाधिपम्। ब्राह्मणान् भोजयित्वा तु ततो भुञ्जीत वाग्यत। आदित्यपहयुक्तेऽस्मिन् वारे त्रिपुर-सूदन। तत्र कर्म कृत पुण्यं तत्सर्वं शुभदं भवेत्"।

नन्दाव्रत देवीपु० "मासे नभसि सम्प्राप्ते नक्ताहारो जितेन्द्रिय। प्रातःस्नायी सदाध्यायी अग्निकार्यपरायण.। देवीं सम्पूजयेद्वत्स विल्वपुन्नागचम्पकैः। धूपन्तु गुग्गुलं दद्यान्नैवेद्यं घृतपाचितम्। क्षीरान्न दधिभक्तञ्च अथवा शाकयावकम्। जपञ्च कुर्यान्मन्त्रस्य सहस्रमथवा शतम्। देव्यास्तत्र समर्प्यैतत् यावत् पूर्णं व्रतमाप्नुयात्"।

नन्दसप्तमीव्रत भविष्योत्तरे "या तु मार्गशिरे मासि शुक्लपक्षे तु सप्तमी। नन्दा सा कथिता वीर! सर्वानन्दकरी शुभा। पञ्चम्यामेकभक्तं तु षष्ठ्यां नक्तं प्रकीर्त्तितम्। सप्तम्यामुपवासश्च कीर्त्तयन्ति मनीषिण। मालतीकुसुमानीह सुगन्धं चन्दनं तथा। कर्पूरागुरुसमिश्रं धूपञ्चात्र विनिर्दिशेत्। दध्योदनं सघृतञ्च नैवेद्यं भास्करप्रियम्। तदेव दद्याद्विप्रेभ्यो प्राशनीयाञ्च यथा"।

नयनप्रदसप्तमीव्रत भविष्यपु० "यो मार्गशीर्षे सितसप्तमेऽह्नि हस्तर्क्षयोगे जगतः प्रसूतिम्। संपूज्य भानुं विधिनोपवासी स्रग्गन्धधूपान्नवनोपहारैः। गृहीतगव्यं प्रतियत्नपूजादानादियुक्त व्रतमब्दमेकम्" इत्यादि।

नरकपूर्णिमाव्रत विष्णुधर्मोत्तरोक्तम् "प्रतिमासन्तु नामानि पञ्चदश्यां जगत्पते। कृतोपवासः सुस्नातः पूजयित्वा जगद्गुरुम्। संसारसागरोयाति सुखेनैव गच्छति। यद्वा मासगत नाम प्रीयतामिति कीर्त्तयेत्। केशवं मार्गशीर्षे तु पौषे नारायणं तथा। माधवं माघमासे तु गोविन्दमपि फाल्गुने। चैत्रे विष्णुश्च वैशाखे कीर्त्तयेन्मधुसूदनम्। ज्यैष्ठे त्रिविक्रम देवं तथाषाढे च वामनम्। श्रीधर श्रावणे मासि हृषीकेश ततःपरम्। नाम भाद्रपदे तद्वत् ध्यायते पुण्यकाङ्क्षिभि। तद्वदश्वयुजे मासि पद्मनाभेति कीर्त्तयेत्। दामोदरं कार्त्तिके च सर्वान्तरति दुर्गतिम्। एवं मासक्रमेणैव यदि दातु न शक्यते। तदा संवत्सरस्यान्ते दद्याच्चैव समागतम्"।

नरसिंहचतुर्दशीव्रत नरसिंहपु० "वैशाखशुक्लपक्षे तु चतुर्दश्यां समाचरेत्। मज्जन्मसम्भवं पुण्यं व्रत पापप्रणाशनम्। वर्षे वर्षे तु कर्त्तव्य मम सन्तुष्टिकारकम्। महागुह्यमिदं श्रेष्ठमातुर्भवभीरुभि। तेनैव क्रियमाणेन सहस्रद्वादशीफलम्। जायते मत्प्रसादात् वचसि सानुगाणां महात्मनाम्। स्वातीनक्षत्रयोगेन शनिवारेण संयुते। सिद्धियोगस्य संयोगे वाणिजे करणे तथा। पुण्यसौभाग्ययोगेन लभ्यते दैवयोगतः। सर्वैरेतैस्तु संयुक्तं हत्याकोटिविनाशनम्। एतदन्यतरे योगे तद्दिन पापनाशनम्। केवले तत् प्रकर्त्तव्यं मद्दिने व्रतमुत्तमम्। अन्यथा नरकं याति यावच्चन्द्रदिवाकरौ। यथा यथा प्रवृत्ति स्यात्पातकस्य कलौ युगे। तथा तथा प्रपश्यन्ति तद्व्रतस्य प्रभावत। मद्व्रतस्य प्रभावेन मतिर्न स्याद् दुरात्मनाम्। विचार्य्यैत्य प्रकर्त्तव्य माधवे मासि मद्व्रतम्"।

नरसिंहत्रयोदशीव्रतं नरसिंहपु० "गुरुवारे त्रयोदश्यामपराह्णे जलप्लुतः । तर्पयित्वा देवपितॄन् ऋषींश्च तिलतण्डुलैः । नरसिंहं समभ्यर्च्य यः करोत्युपवासकम् । सर्व्वपापविनिर्म्मुक्तो विष्णुलोके महीयते" ।

नरसिंहव्रतं गरुडपु० "चयाष्टमीव्रतं ब्रह्मन् ! प्रोच्यमानमिदं शृणु ।। भववित्तघ्नं नृणां सर्व्वाभीष्टप्रदं परम् । राजा वा राजपुत्रो वा यदि चेद्रिपुनाशनम् । अष्टम्यान्तु सुस्नातो यथाशक्ति प्रकारयेत् । कुर्य्यादष्टदलं पद्मं तण्डुलैर्वा प्रसूनकैः । कर्णिकायामथैतासां नरसिंहार्च्चितं चरेत्" इत्यादि ।

नवम्याद्युपवासव्रतं मत्स्यपु० "नवमी चाष्टमी चैव पौर्णमासी चतुर्द्दशी । यो भुङ्क्ते द्विज ! नैतासु उपवसन् नरः स माम् । गाणपत्यं स लभते नि षण्मासमनिन्दितम्" ।

नवरात्रिव्रतं देवीपु० "सौभाग्यार्थं स्त्रिया कार्य्यमार्य्यैश्च धनकाङ्क्षिभिः । महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् । कर्त्तव्यं देवराजेन्द्र ! देवीभक्तिसमन्वितैः । कन्यासंस्थे रवौ शक्र ! शुक्लादारभ्य नन्दिकाम्" । नन्दिकां प्रतिपदम् "अयाचितैकभक्तेन नक्ताशीत्यथवा पुनः । प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः । जपहोमसमायुक्तः कन्यकां भोजयेत् सदा । अष्टम्यां नवगेहानि दारुजानि शुभानि च । एकं वा द्वित्रिभागेन कारयेत् सुरसत्तम ! । तस्मिन् देवी प्रकर्त्तव्या हैमी वा राजती च वा । शूलकामलकायेनखड्गाम्बुदेन पूजयेत् । सर्व्वोपहारसम्पन्नवस्त्ररत्नफलादिभिः । कारयेद्रथदोलादिपूजाश्च बलिदीपकौ" इत्यादि ।

नागदष्टोद्धरणपञ्चमीव्रतं भविष्योत्तरे "उपोष्य पञ्चमीं सम्यक् नागानां वरवर्द्धनम् । चैकैकमेकं यावच्च विधानं शृणु भारत ! । समैकं संवत्सरम् "मासि भाद्रपदे राजन् ! शुक्लपक्षे तु पञ्चमी । सापि पुण्यतमा प्रोक्ता याज्ञावसौ गतिकाम्यया । चतुर्थ्यामेकभक्तञ्च तस्यां नक्तं प्रकीर्त्तितम्" । तस्यां पञ्चम्यामुपोष्येति दिवा भोजनवर्ज्जनात् "कृत्वा चान्द्रमसं नागमथ वा कलधौतजम् । अथ दारुमयं भव्य मृण्मयं वाप्यशक्तितः । चान्द्रमसं सौवर्णं कलधौतजं रूप्यमयम् । पञ्चम्यामर्च्चयेद्भक्त्या नागं पञ्चफणं तथा । करवीरैस्तथा पद्मैर्जातीपुष्पैः सुगन्धिभिः । गन्धैर्धूपैः सनैवेद्यैः स्नाप्य क्षीरादिभिर्नृप ! । ब्राह्मणान् भोजयेत्पश्चात् घृतपायसमोदकैः । अनन्तं वासुकिं शङ्खं पद्मं कम्बलमेव च । तथा कर्कोटकं नागं नागमश्वतरं नृप ! । धृतराष्ट्रं शङ्खपालं कालियं तक्षकं तथा । पिङ्गलञ्च महानागं मासि मासि क्रमाद् यजेत्" ।

नागपञ्चमीव्रतं भविष्यपु० "नागाविद्धा तु पञ्चम्या न विषैरभिभूयते । स्त्रियश्च लभते पुत्रं परमां श्रियमाप्नुयात् । मनुमन्त्राः षड्नागाभिरन्नमन्त्राश्च कीर्त्तिताः । पूर्व्ववत् पञ्चपनस्य कर्त्तव्यश्च तिथीश्वरः" । तिथीश्वरोऽत्र नागः "गन्धपुष्पोपहारैश्च यथाशक्ति निवेदयेत् । पूजाऽशाठ्येन शाठ्येन कृतापि तु फलप्रदा । आज्यधाराभिश्चैव दधिक्षीरादमाक्षिकैः । पूर्व्वोक्तफलदो होमो यतः शान्तेन चेतसा । एतद्व्रतं वैश्वानरप्रतिपद्वद्व्याख्येयम्" ।

नागव्रतं कूर्म्मपु० कार्त्तिकशुक्लपक्षोपक्रम्य "तिथौ युगाद्यायान्तु समुपोष्य यथाविधि । अनन्ताद्यानागानां शेषस्य च महात्मनः । पूजा कार्य्या पुष्पगन्धक्षीराद्यान्नपूर्व्वकामिति" । युगाद्यायां नवम्यां प्रातर्मध्याह्नव्यापिन्याञ्च कर्त्तव्यम्" तथा च स्कन्दपुराणे "प्रातर्मध्यन्दिने तत्र तत्रोपोष्य फणीश्वरान् । क्षीरेणाप्याय्य पञ्चम्यां पारयेत् प्रयतो नरः । विषाणि तस्य नश्यन्ति न तं हिंसन्ति पन्नगाः" ।

नानाफलपूर्णिमाव्रतं विष्णुधर्म्मोत्तरे "प्राप्य पञ्चदशीं राम ! तथा शुक्लाञ्च कार्त्तिकीम् । आरामस्तम्भभित्तिषु वै सूमेशोभं समालिखेत् । तस्य द्वारि स्तम्भे चारु नानावर्णैस्तु वर्णकम् । स्तम्भोपकरणं भक्त्या तयोश्चाभितो लिखेत् । पीत वद्वासवाच्छाद्य सकटीसदनादिकम् । ततस्तौ पूजयेन्नारी स्नात्वा भर्तृपरा शुचिः" ।

नामतृतीयाव्रतं भविष्योत्तरे "उपवासस्य नियमं गृह्णीयाद् भक्तिभाविता । देवीं संवत्सरं यावत् तृतीयायामुपोषिता । प्रतिमासं करिष्यामि पारणञ्चापरेऽहनि । तदविघ्नेन मे यातु समाप्तिं व्रतसत्तमम् । शरणं त्वां प्रपन्नास्मि दौर्भाग्याद्रक्ष माम् । एवं सङ्कल्प्य विधिवत् कौन्तेय ! कृतनिश्चया । भक्त्या नारी ध्यानपरा स्नानं कृत्वा जितेन्द्रिया । नद्यां तडागे वाप्यां वा स्तम्भे वा नियतेन्द्रिया । पूजयेत् पार्व्वतीं नाम्ना रात्रौ प्राश्य कुशोदकम् । प्रभाते भोजयेद्विप्रान् शिवभक्तान् विशेषतः । पौषे मासि [illegible] वा गिरिजां नाम पूजयेत् । गोमूत्रं प्राश्य तस्यां प्रभाते भोजयेद्द्विजान्" इत्यादि । भविष्यपु० मतान्तरम् "गौरी?

कान्ती२ उमा३ भद्रा४ दुर्गा५ कान्तिः६ सरस्वती७ । म- ङ्गला८ वैष्णवी९ लक्ष्मी १० शिवा११ नारायणी१२ क्रमात् । मार्गतृतीयामारभ्य पूजयेत् स्वर्गभाक् भवेत्” । मार्गशीर्ष- तृतीयामारभ्य प्रतिमासमेकैकेन नाम्ना पूजयेदित्यर्थः “अर्द्धनारीश्वरं रुद्रमथ वा उमाशङ्करम् । पूजयेद्विधि- वन्नारी ह्यवियोगमवाप्नुयात्” ।

नामद्वादशीव्रत विष्णुरहस्ये “मार्गशीर्षे शुभे मासि शुक्- पक्षे यतव्रत । प्रथमस्यैव उद्धाद्यात् द्वादश्यां विधि- वन्नरः । कारयेच्च हरेर्यस्मात्पाण्याद्यैर्विधानतः । अर्च- यित्वा हरिं तत्र लब्धानुज्ञा द्विजन्मनः” इत्यादि ।

नामनवमीव्रत भविष्यपु० “नवम्या शुक्लपक्षे तु कृते नक्ते विशेषतः । मासि चाश्वयुजे वीर । दुर्गादेवीति पूजयेत् । विल्वपत्रैस्तथाञ्च श्रेष्ठपुष्पैस्तु सर्वशः । गुग्गुलेनाथ दुग्धेन भक्ष्यभोज्यैरनेकशः । परमान्नेन रत्नेन मण्डि- माल्यैर्विधानितैः । सर्वोषध तथा कुर्याद्देव्या वै भक्ति- मान्नरः । भोजयित्वा नवस्या तु ब्राह्मणाना तु क- न्यका. । ब्राह्मणाना स्त्रियस्च यथा भवति शक्तितः । पञ्चगव्यं ततः प्राश्य नक्तं भुञ्जीत वाग्यतः । य एव पूजयेदेव दुर्गां भक्त्या समन्वितः । सोऽश्वमेधसह- स्रस्य फलं प्राप्य दिवं व्रजेत् । कार्यमाश्विनवत् सर्वं कार्त्तिकेऽपि हि सत्तम ! । कृत्वोपवाससप्तम्यां मासि मार्गशिरे नृप ! । नवम्यां पूजयेद्देवस्तु भक्त्या भगवतीं बुधः” इत्यादि । वर्षसाध्यमिदम् ।

नामसप्तमीव्रतं भविष्योत्तरे “चैत्रात् प्रभृति कर्त्तव्या सर्वदा नामसप्तमी । धातेति मधुमासे तु पूजनीयो दिवाकरः । अर्य्यमेति च वैशाखे ज्यैष्ठे मित्रः प्रकी- र्त्तितः । आषाढे वरुणो ज्ञेय इन्द्रो नभसि कथ्यते । विवस्वांश्च नभस्ये तु पर्जन्योऽश्वयुजि स्मृतः । पूषा कार्त्तिकमासे च मार्गशीर्षे तु कथ्यते । भगः, पौषे विवस्वांश्च त्वष्टा माघे तु कथ्यते । विष्णुस्तु, फाल्गुने मासि पूज्यो वन्द्यश्च भास्करः । सप्तम्यां चैव सप्तम्या भोजयेद्भोजकान् बुधः” ।

निक्षुभार्कसप्तमीव्रतं प्रथमं भविष्यपु० “सूर्य्यभक्ता तु या नारी ध्रुवं या पुरुषो भवेत् । स्त्री चैवाप्युत्तमं नाथ व्रत कृत्वा लभते शृणु । निक्षुभार्कव्रतं भानोः सदा प्रीतिविवर्द्धनम् । अवियोगकरं वीर ! धर्मका- मार्थसाधनम् । सप्तम्यामथ षष्ठ्यां वा संक्रान्तौ भानवे दिने । हविषा हविषा होमं सोपवासः समाचरेत् । निक्षुभार्कस्य वैशाखीं कृत्वा स्वर्णमयीं शुभाम् । रा- जतीं वाथ वार्क्षीं वा स्नापयेच्च घृतादिभिः । निक्षुभ- सूर्य्यपत्नी तया सहितोऽर्कः । द्वितीयम् “या नार्य्यु- पवसेदेव कृष्णामेकान्तु सप्तमीम् । सा गच्छेत् परम स्थानं भानोरमिततेजस । वर्षान्ते प्रतिमा कृत्वा शा- ल्मिपिष्टमयीं शुभाम् । पीतानुलेपनैर्माल्यैः पीतवस्त्रैः प्रपूजयेत् । पूर्वोक्तं निखिलं कृत्वा भास्कराय निवेदयेत् । सर्वभूमौ मद्दीपालो चातुचामीकरप्रभः । वर्षकोटिसह- स्राणि सूर्य्यलोके महीयते” । तृतीयम् “सप्तम्यां या निराहारा भवेदब्दमियन्त्रिता । गजं पिष्टमयं कृत्वा वर्षान्ते विनिवेदयेत् । विधाय राजतं पद्मं सुवर्णकृत- कर्णिकम् । भक्त्या विन्यस्य तत्पृष्ठे सर्वं पूर्ववदाचरेत् । कामतोऽपि कृतं पापं भ्रूणहत्यादि यद्भवेत् । तत् सर्वं गजदानेन क्षीयते नात्र संशयः” । चतुर्थम् “कृष्णपक्षे तु माघस्य सप्तम्या या दृढव्रता । वर्षैकमुपवासेन सर्व- भोगविवर्जिता । वर्षान्ते सर्वगन्धोत्थ निक्षुभार्कं नि- वेदयेत्” ।

निर्जलैकादशीव्रतं भविष्योक्तम् “वृषस्थे मिथुनस्थेऽर्के शुक्ला ह्येकादशी भवेत् । ज्यैष्ठे मासि प्रयत्नेन सोपोष्या जलवर्जितैः । स्नाने चाचमने चैव वर्जयित्वोदकं बुधः । उपभुञ्जीत दैवाद्दृव्रतभङ्गोऽन्यथा भवेत् । उदयादु- दयं यावद्वर्जयित्वा जलं बुधः । अप्रयत्नादवाप्नोति द्वा- दश्या द्वादशीफलः । तत प्रभाते विमले द्वादश्यां स्ना- नमाचरेत् । जलं सुवर्णं दत्त्वा तु द्विजातिभ्यो यथा- विधि । भुञ्जीत कृतकृत्यस्तु ब्राह्मणैः सहितो वशी । एवं कृते तु यत् पुण्यं भीमसेन । शृणुष्व तत् । संवत्स- रस्य या मध्ये एकादश्यो भवन्त्युत । तासां फलमवा- प्नोति अत्र मे नास्ति संशयः” ।

नीराजनद्वादशीव्रतं भविष्योत्तरे “कार्त्तिके शुक्लपक्षस्य द्वा- दश्यां रजनीमुखे । समुत्थिते विनिद्रे तु देवे दामो- दरे तथा । दोषान्ते नरपालाभिरस्ये स्त्री वा नर- स्त्रिके । जनयित्वा नवं विष्णुं कृत्वा मन्त्रैर्हि जो- त्तमैः । सार्वभौमनतपुष्पाभिर्दीपिकाभिरलङ्कृताननम् । कृत्वा भक्त्याजनाः सर्वे हरिं नीराजयेच्छनैः । पुष्पैरभ्यर्चितं देवं समालभ्य च चन्दनैः । वस्त्रैः कर्पूरैश्चैव लघुभैः- रिर्मुभिस्तथा । गन्धैः पुष्पैरलङ्कारैर्वस्त्रै रत्नैश्च पूजिते । तस्यैवानुगतां लक्ष्मीं ब्रह्माणं चण्डिकां तथा । आ- दित्यं शङ्करं गौरीं यक्षं गणपतिं ग्रहान् । मातर.

पितरो गावः सर्वा नीराजयेत् क्रमात् । गवां नीराजनं कुर्य्यात् महिषादेश मण्डलम् । भ्रामयेत्तावयेष्वन्द्वैर्घण्टावादनपञ्चमे" ।

नृसिंहद्वादशीव्रतं वराहपुराणोक्तम् "तद्वत् फाल्गुने मासि कृष्णपक्षे तु द्वादशी । उपोष्या प्रोक्तविधिना हरिमाराधयेद्बुधः । नरसिंहाय पादौ तु गोविन्दायोदरं तथा । कटिं विश्वभुजे तद्वदनिरुद्धाय चोदरम् । कण्ठन्तु शितिकण्ठाय पिङ्गकेशाय वै शिरः । असुरध्वंसनायेति चक्रतोयात्मने तथा । शङ्खमित्येव सम्पूज्य गन्धपुष्पफलैस्तथा । रत्नगर्भं घटे स्थाप्य तं सम्पूज्य विधानतः । द्वादश्यां वेदविदुषे ब्राह्मणाय निवेदयेत् । एवं कृते फलं प्राप्तं यत् पुरा पार्थिवेन च" इत्यादि ।

पञ्चसन्धिव्रतं पद्मपु० "प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः । वैश्वानरपुरं याति व्रतं वैश्वानरान्तिदम् । पृथिवीं भाजनं कृत्वा यो भुङ्क्ते पञ्चसन्धिषु । अश्वोत्तरेण चैकेनातिरात्रफलमश्नुते" ।

पञ्चघटपूर्णिमाव्रतं भविष्योत्तरे "पञ्च पञ्चदशीः स्थित्वा एकभक्तेन मानवः । संपूज्य पूर्णिमां देवीं लिखितां चन्दनादिना" । पूर्णिमाप्रतिमा तु परिभाषाया द्रष्टव्या । "ततः पञ्च घटान् पूर्णान् पयोदधिघृतेन च । मधुना सितखण्डेन ब्राह्मणायोपपादयेत् । मनोरथान् पूरयस्व यथा त्वं पूर्णिमा ह्यसि । पञ्चकुम्भप्रदानेन भूतानां तुष्टिरस्तु मे । इत्यनेनैवं नमस्कृत्य सर्वान् कामानवाप्नुयात् । एतत् पञ्चघटं नाम व्रतं तुष्टिप्रदायकम्" ।

पञ्चपिण्डिकागौरीव्रतं स्कान्दपु० नागरख० "नभस्ये च सिते पक्षे तृतीयादिवसे स्थिते । प्रातरुत्थाय चाचाम्य भक्षयेत् दन्तधावनम् । ततश्च नियमं कुर्य्यादुपवाससमुद्भवम् । गौरीनाम समुच्चार्य्य श्रद्धापूतेन चेतसा । ततो निशागमे प्राप्ते कृत्वा गौरीचतुष्टयम् । मृण्मयं याद्‌शश्चैव तदिहैकमनाः शृणु । एका गौरी प्रकर्त्तव्या पञ्चपिण्डा यथोचिता ॥ प्रहरे प्रहरे प्राप्ते तासु पूजां रेत्" ।समाच

पञ्चमहापापनाशनद्वादशीव्रतं भविष्यपु० "यत् कृत्वा मुच्यते जन्तुर्महतः पञ्चपातकात् । पञ्चपातकिनः प्रेतान् पितॄंस्तारयते तथा । निशाकरदाप्यायनश्च पूर्णिमादेवता इमाः । जगन्नाथो महीधारी देवेन्द्रो देवकीसुतः । चतुर्भुजो गदापाणिः सुरभीमः सुलोचनः । सर्व्वगतश्चक्रपाणिः सुरचाप्यसुरान्तकः । श्रीधरः द्वादश इमा देवताः परिकीर्त्तिताः । स्वाहाकारान्वितैरेतैश्चतुर्थ्यन्तैश्च नामभिः । श्रावणादौ देवतानां पूजां च कुरुते व्रती । श्रावणादेव कुर्वीत द्वादश्यां परिकीर्त्तिता । पूर्णिमायान्तु देवेभ्यः पायसञ्चुद्याचतः । अमावास्यां देवतानां तिलशुक्लगुडोदकम् । पञ्च रत्नानि देयानि पञ्चपातकशान्तये । पञ्चमूर्त्तिं स्वर्णमयीं पञ्चामृतसमन्विताम् । भोजयेद् ब्राह्मणान् राजन् पञ्चद्वादशसंख्यया" ।

पञ्चमहाभूतपञ्चमीव्रतं विष्णुधर्मोक्तम् "अतःपरं प्रवक्ष्यामि पञ्चमूर्त्त्यर्चनम् । पृथिव्यापस्तथा तेजो वायुराकाशमेव च । एता वै देवदेवस्य कथिताः पञ्च मूर्त्तयः । चैत्रे तु पञ्चमीं शुक्लां समासाद्य विचक्षणः । सोपवासो हरिं देवं पञ्चात्मानं समर्चयेत् । पञ्चमण्डलकाः कार्य्याः पञ्चभिर्वर्णकैः पृथक् । पार्थिवं मण्डलं कार्य्यं सौवर्णं महीपते ! । वारुणञ्च तथा श्वेतं रक्तमाग्नेयमिष्यते । पीतं भवति वायव्यं कृष्णमाकाशदैवतम् । समानवर्णगन्धैश्च पुष्पैस्तानर्चयेत् पृथक् । शक्त्या च धूपदीपाद्यैर्यथाकाममरिन्दम ! । यवैर्मासैस्तिलैश्चैव उपायसेन च" ।तेन

पञ्चमूर्त्तिव्रतं विष्णुधर्मोत्तरे "अथापरं प्रवक्ष्यामि पञ्चमूर्त्तिव्रतं तव । शङ्खचक्रगदापद्म पृथिवीश्च महाभुज ! । गन्धैर्मण्डलिकां कृत्वा पञ्च पञ्चसु पूजयेत् । चैत्रशुक्लादिनं प्राप्य पञ्चमीप्रभृति नरः । सोपवासो बहिः स्नातस्तथा शुक्लाम्बरः शुचिः । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । सर्वेषां पूजनं कृत्वा जुहुयाज्जातवेदसि । सर्वेषामेव देवानां नामभिस्तु तथा व्यहान् । ब्राह्मणान् भोजयेच्चात्र तदा च हरभोजनम् । संवत्सरमिदं कृत्वा व्रतान्ते वस्त्रपञ्चकम् । पञ्च वेदविदां दद्यात् पञ्चवर्णं नराधिप ! । व्रतेनानेन चीर्णेन राजसूयफलं लभेत्" ।

पञ्चाग्निसाधनरम्भातृतीयाव्रतं भविष्योत्तरे "भद्रे कुरुष्व यत्नेन रम्भाव्रतमनुत्तमम् । मनोऽभिलषितं कामं येन प्राप्नोति शङ्करम् । ज्यैष्ठशुक्लतृतीयायां स्नाता नियमतत्परा । कुरु ! पार्श्वेषु पञ्चाग्नीन् ज्वालामालाकुलाकृतीन् । गार्हपत्यं दक्षिणाग्निं सभ्यकाहवनीयकम् । पञ्चमं भास्करं तेज इत्येते पञ्च वह्नयः । इत्येषां मध्यमा भूत्वा तिष्ठ पूर्वमुखी सती । चतुर्भुजं ध्यायमाना पङ्कजोपरिसंस्थितम् । मृगाजिनच्छन्नकुचां जटावल्कलधारिणीम् । सर्वाभरणसम्पन्नां देवीमभिमुख कुरु !" ।

च भटीयेन ये कोपयन्ति नराः प्रभो ॥ लोकद्वयेऽपि ते कामान् प्राप्नुवन्ति मम प्रियान् । कुमारश्च तथा स्कन्दो विशाखश्च गुहस्तथा । चतुरात्मा विनिर्दिष्टो भगवान् क्रौञ्चसूदन । तमभ्यर्च्य नरः षष्ठ्यां पुत्रान् प्राप्नोत्यभीप्सितान्" ।

पुत्रप्राप्तिव्रत देवीपु० "ब्रह्मणा यो विधिः शक्र कथितो विजयावहः । जयेति पूर्णिमा तात ! श्रावणस्य शुभावहा"। शक्र उवाच "विजया या समाख्याता सर्वकामप्रसिद्धये । तामहं श्रोतुमिच्छामि तत्त्वतः सुरसत्तम ।" । ब्रह्मोवाच "पुत्रार्थं राज्यसिद्ध्यर्थं यशःसौभाग्यतोऽपि वा । विजयार्थं ग्रामकामो जयां कुर्वीत पूर्णिमाम् । हैमं वा राजतं वापि खड्गं वा अथ पादुके । प्रतिमां वापि कुर्वीत सर्वलक्षणसंयुताम्"। प्राङ्गण्यां इति शेषः "तामादाय शुभे कक्षे शुक्लवस्त्रविभूषिताम् । यवशाल्यङ्कुरोपेतां पानपात्रविभूषिताम् । दीर्घां सुशोभनां वस्त्रैः कल्पयेत्तत्र विन्यसेत्" ।

पुत्रसप्तमीव्रत वराहपु० "मासि भाद्रपदे प्राप्ते शुक्लपक्षे हरेश्वरः ॥ सप्तम्यामुपवासेन पुत्रप्राप्तिप्रदं व्रतम् । षष्ठ्यां चैव सुसंकल्प्य सप्तम्यां पूजयेद्धरिम्" ।

पुत्रीयव्रत विष्णुधर्मोत्तरे "प्रौष्ठपद्यामतीतायां कृष्णपक्षाष्टमी तु या । सोपवासोऽनरोऽष्टम्यां योषिद्वा तनयार्थिनी । स्नाता सरसि धर्मज्ञा तोयेऽथवाप्यथ सारसे । पूजनं वासुदेवस्य यथा कुर्यात्तथा शृणु ।"।

पुत्रीयसप्तमीव्रतं विष्णुधर्मोत्तरे "मार्गशीर्षे शुभे मासि शुक्लपक्षे द्विजोत्तम ॥ पुत्रीया सप्तमी राम ! स्मृतीयात् प्रयतः शुचिः । अथ वा पुत्रकामस्य विधिना येन तत् शृणु"। पुत्रीया पुत्रदाम् । "हविष्याशी निरःस्नानं कृत्वा भास्करपूजनम् । अधःशायी द्वितीयेऽह्नि मोदकाशोदकेन तु । स्नात्वा संलिप्य च तथा शुभे देशे तु मण्डलम् । तत्राष्टपत्रकमलं विन्यसेत् वर्णकैः शुभैः। तस्यैव कर्णिकामध्ये भास्करं चन्दनेन तु । रक्तेन पूजयेद्देव गन्धमाल्यानुलेपनैः" ।

पुत्रोत्पत्तिव्रतं आदित्यपु० "कुरु संवत्सरं स्नानं श्रवणे श्रवणे मुने ! सोऽपि पुत्रानवाप्याशौ चकार श्रद्धयान्वितः । पाराशर्यं सुतं लेभे व्रतस्यास्य प्रभावतः । एवमन्योऽपि राजेन्द्रस्तावत् सिद्धिमवाप्नुयात् । पुत्रान् पौत्रांश्च लभते सुखञ्चात्यन्तमश्नुते" ।

पुरश्चरणसप्तमीव्रतं स्कन्दपु० नागरखण्डे "माघमासे वरे पक्षे मकरस्थे दिवाकरे । सप्तम्यां सूर्यवारेण व्रतमेतत् समाचरेत् । षाण्मासे पतिते प्राप्ते तस्मिन्नहनि वर्जयेत् । षष्ठ्यां चैकभक्तेन । प्रभाते दन्तधावनम् । मन्त्रेणानेन पाणौ च कर्त्तव्यो नियमो नृप ॥ पुरश्चरणकृत् पापात् सप्तम्यां दिवसाधिप ॥ उपवासं करिष्यामि अद्य त्वं शरणं मम । ततोऽपराह्णसमये स्नात्वा धौताम्बरः शुचिः । प्रतिमां पूजयेद्भक्त्या दिनाधिपसमुद्भवाम् । रक्तैः पुष्पैर्मन्दारवीरणाद्यैः सम्पूजयेत्ततः" ।

पुष्पद्वितीयाव्रतं भविष्यपु० "कार्त्तिके शुक्लपक्षे तु द्वितीयायां नराधिप । पुष्पाहारो वर्षमेकं वसेत् सुनियतात्मवान्" । कार्त्तिकशुक्लपक्षद्वितीयायां व्रतमारभ्यान्यास्वपि शुक्लपक्षद्वितीयास्वेव वर्षपर्यन्तं पुष्पाहारव्रतं कुर्यादित्यर्थः । "कालप्राप्तानि यानि स्युः सुविस्रकुसुमानि तु । भुञ्जीत तानि दत्त्वा तु ब्राह्मणेभ्यो नराधिप !" । सुविस्रकुसुमानि पूजार्हाणि भक्ष्ये चाविसृष्टानि अश्विनौ चात्र नाममन्त्रेण पूजनीयौ तद्दोषमवदातत्त्वेन अवधार्य । "सुवर्णेन च पुष्पाणि [illegible] यश्च ददाति यः । व्रतान्ते तस्य सन्तुष्टौ देवौ त्रिभुवनेश्वरौ । दत्तः कामांस्तथा दिव्यान्विमानमपि तैजसम् । सुचिरं देवनारीभिर्लोकं रमतोऽश्विनौ" ।

पूर्णिमाव्रतं विष्णुधर्मोत्तरे "या प्रेरयति कर्माणि लोकेषु द्विजसत्तम ॥ तस्याः सपूजनं कार्यं शुक्लपक्षदर्शी सदा । माल्यानुलेपनैः शुक्लैर्धूपेन च सुगन्धिना । रक्तवस्त्रप्रदानेन दीपदानेन चाथ वा । नैवेद्यैश्च तथा भक्ष्यैरपूपैश्च तथैव च । पूजयित्वा च तां देवीं भोक्तव्यं निशि भार्यया । यदि पञ्चदशीं सर्वां न शक्नोति कथञ्चन । देव्याः सपूजनं कार्यं स्वयमपि कार्त्तिके । उमाख्यं पूजयेद्या तु सा तु नारी पतिव्रता । सदा धर्मरता नारी लोके भवति भार्गव !" । वह्निपु० वृत्तान्तरम् "श्रावण्यां पौर्णमास्यां च सोपवासो जितेन्द्रियः । प्राणायामशतं कृत्वा मुच्यते सर्वकिल्बिषैः" ।

पृथिवीपञ्चमीव्रत विष्णुधर्मोत्तरे "पञ्चम्यां पृथिवीं शुक्ले देवीं संपूजयेन्नरः । तामवाप्नोति यत्नेन नात्र कार्या विचारणा" ।

पौरन्दरपञ्चमीव्रतं भविष्योत्तरे "तिलपिष्टमयं कृत्वा गजं हेमविभूषितम् । कलाङ्कुशयुतं तद्वद्दारोहकसमन्वितम्" । तद्दर्शित अनन्तव्रतोक्तमन्त्र गजस्वरूपं दृश्यते । "मत्तमानाकारष्टितं चामरापीडधारिणम् । दयनाम-

पञ्चमी शुक्लपक्षे वै षष्ठी सोपानके शुभे । अशोकवर्त्तिभिः शुभ्रे सप्तमी चार्चितार्चयेत् । अष्टमी फणिनाथस्त्वं खगवेन्द्रे युधिष्ठिर ! । एवं क्रमेण कर्त्तव्या चतुर्मुखजनक स्वयं । सर्व्वेषाम् स्थितैर्भोज्यं भोक्तव्यं प्रीतिपूर्व्वकम् । उपाख्यानान्तमासाद्य भोजनं सहसा त्यजेत् । तावदेव हि भोक्तव्यं यावत् सा कथ्यते कथा । ततो भूत्वा बुधश्चापि श्रावस्त्य च समाहितः । विप्राय वेदविदुषे वाचकाय प्रदापयेत् । सात्वतं संहितायं च जातरूपमयं शुभम् । अर्च्चितं चर्च्चितं गन्धैः पुष्पैर्धूपैः सुगन्धिभिः । पीतवस्त्रैः समाच्छन्नं घटं सोमात्मकं तथा । माषकेण सुवर्णस्य तदर्द्धार्द्धेन वा कृतम्" इत्यादि ।

ब्रह्मव्रतं भविष्यपु° "ब्रह्म यस्तु द्वितीयायां समभ्यर्च्य ब्रह्मचारिणम् । भोजयित्वा तु विधिना सर्व्वेषां पारगो भवेत् । मूलमन्त्रा स्वशाखाभिरङ्गमन्त्राश्च कीर्त्तिताः । पूर्व्ववत्पद्मपत्रस्थः कर्त्तव्यस्तु तिथीश्वर" । तिथीश्वरो ब्रह्मा ।

ब्रह्मकूर्च्चव्रतं ब्रह्मपु° "उपोषितश्चतुर्द्दश्यां पञ्चदश्यामनन्तरम् । पञ्चगव्यं समश्नीयाद्धविष्याशी त्वनन्तरम् । ब्रह्मकूर्च्चमिदं कुर्य्यादुक्तमघमनाय वै । पक्षान्ते त्वथ वा कार्य्यं मासमध्येऽथ वा पुनः । ब्रह्मकूर्च्चं नरः कुर्य्यात् पौर्णमासीषु यः सदा । तस्य पापं क्षयं याति दुर्म्मुक्ताद्यैर्न संशयः । मासेन द्विर्व्वरं कृत्वा ब्रह्मकूर्च्चं समाहितः । सर्व्वपापविनिर्म्मुक्तो यथेष्टाङ्गतिमाप्नुयात् । ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च । योगभूतं परिचरन् केशवं सहसाप्नुयात्" ।

ब्रह्मगणप्राप्तिव्रतं विष्णुधर्म्मोत्तरे "इदमन्यत् प्रवक्ष्यामि चतुर्म्मूर्त्तिव्रतं तव । ब्रह्मलोकगतस्य प्रसाध्यता यदुत्तम ! । चतुरात्मा विनिर्द्दिष्टो वासुदेवो जगत्पतिः । तेषान्तु रूपनिर्म्माणं कृत्वा तानर्च्चयेद्बुधः । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । आद्येऽह्नि चैत्रशुक्लस्य यजेत त्रिदशेश्वरम् । द्वितीयेऽह्नि यमं देवं तृतीये सलिलाधिपम् । चतुर्थेऽह्नि धनाध्यक्षं प्रत्यहं स्नानमाचरेत् । नदीप्रदेशमासाद्य देवदिक्प्रवहक्रमात् । यवैस्तिलैस्तथाज्येन होमः स्यात् तिलतण्डुलैः । रक्तं पीतं तथा कृष्णं श्वेतं वस्त्रं दिनक्रमात् । शुभमेतद्व्रतं कृत्वा पूर्णकवत्सरं नरः । नाकलोकमवाप्नोति यावदाभूतसम्प्लवम्" ।

ब्रह्मव्रतं पद्मपु° "ब्रह्माण्डं काञ्चनं कृत्वा तिलराशिसमन्वितम् । त्र्यहं तिलप्रदो भूत्वा वह्निं सन्तर्प्य च द्विजान् । सम्पूज्य विप्रदाम्पत्यं माल्यवस्त्रविभूषितम् । शक्तितः स्वपलादूर्द्ध्वं विश्वात्मा प्रीयतामिति । पुण्येऽह्नि दद्यात् स परं ब्रह्म यात्यपुनर्भवम् । एतद् ब्रह्मव्रतं नाम निर्व्वाणफलदं नृणाम्" ।

ब्रह्मसावित्रीव्रतं भविष्योत्तरे "श्रूयतां पाण्डवश्रेष्ठ । सावित्रीव्रतमादरात् । कथयामि यथा चीर्णं तया सत्या युधिष्ठिर ! । इत्युपक्रमे "त्रयोदश्यां भाद्रपदे दन्तधावनपूर्व्वकम् । त्रिरात्रं नियमं कुर्य्यादुपवासस्य भक्तितः । अशक्ता च त्रयोदश्यां नक्तं कुर्य्याज्जितेन्द्रिया । अयाचितं चतुर्द्दश्यां पौर्णमास्यामुपोषणम् । नित्यं स्नात्वा महानद्यां तडागे निर्झरेऽपि वा । विशेषतः पूर्णमास्यां स्नानं सर्षपमृज्जलैः । गृहीत्वा वालुकां पात्रे प्रस्थमात्रां युधिष्ठिर ! । अथवा धान्यमादाय यवशालितिलादिकम् । ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टिते । सावित्रीप्रतिमां कृत्वा ब्रह्मणश्चैव शोभनम् । सौवर्णीं मृण्मयीं वापि स्वशक्त्या रौप्यनिर्म्मिताम् । रक्तवस्त्रयुगं दद्यात् सावित्र्यां, ब्रह्मणः सितम् । सावित्रीं ब्रह्मणा सार्द्धमेवं भक्त्या प्रपूजयेत्" इत्यादि ।

ब्रह्मगयावाप्तिव्रतं प्रभासख° "ज्यैष्ठ्यां पौर्णमास्यान्तु दम्पती यस्तु भोजयेत् । परिधाय यथाशक्त्या सौभाग्यैर्युज्यते नरः । गन्धपुष्पोपहारैश्च पौर्णमास्यान्तु योऽर्च्चयेत् । ब्राह्मण्यं जायते तस्य सप्तजन्मनि सुन्दरि !" ।

मद्रशायिव्रतं भविष्यपु° "वसन्ते शुक्लपक्षस्य द्वादशी या महाशुभा । तस्यामुपोष्य विधिवत् सश्रीकं हरिमर्च्चयेत् । पर्य्यङ्कास्तरणं कृत्वा नानास्तरणसंयुतम् । तत्र लक्ष्म्या युतं देवं रौप्यं कृत्वा निवेशयेत् । तस्योपरि ततः पुष्पैर्मण्डपं कारयेद्बुधः । नृत्यवादित्रगीतैश्च जागरं तत्र कारयेत् । एवं कृत्वा प्रभाते तु दापयेद् ब्राह्मणाय तम् । वेदवेदाङ्गयुक्ताय सम्पूर्णाङ्गाय धीमते । ब्राह्मणांश्च तथा भोज्य व्रतमेतत् समाप्यते । व्रतस्यान्ते ततो विष्णुर्भक्तो वै भवति ध्रुवम्" ।

भद्रकालीव्रतं विष्णुधर्म्मोत्तरे "नवम्यां सोपवासस्तु भद्रकालीं प्रपूजयेत् । शुक्लपक्षे महाराज ! कार्त्तिकात् प्रभृति क्रमात् । गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा । भवत् वर्षान्ते संपूज्य व्रतान्ते ब्राह्मणाय तु । वस्त्रयुग्मं नरो दत्त्वा यथेष्टं काममाप्नुयात् । विधिना पूजयेत् कन्यां भद्रकालीं नराधिप ! । नवम्यामाश्विने मासि शुक्लपक्षे

नरोत्तम !" । पुष्कर उवाच "पूर्व्वोत्तरे तु दिग्भागे विलेत् वास्तुमनोहरे । भद्रकाली महापटे चित्रवस्त्रैरलङ्कृतम् । भद्रकालीं पटे कृत्वा तत्र सम्पूजयेद् द्विज !" ।

भद्रचतुष्टयव्रतं भविष्यपु० "शृणु राजन्नवहितो भद्राख्यां विस्तरं परम् । कथयिष्ये च कथित यथाया ब्रह्मणा पुरा । शुक्ला मार्गशिरस्यादौ चतस्रस्तिथयो नराः । द्वितीया च तृतीया च चतुर्थी पञ्चमी तथा । एकभक्ताशनस्तिष्ठेत् प्रतिपदि जितेन्द्रियः । प्रभाते तु द्वितीयायां कृत्वा यत् करणीयकम् । प्रहरे वै समधिके गते स्नानं समाचरेत् । सर्व्वौषध तु संस्था मन्त्रैरेभिर्विचक्षण" । "स्नात्वा चैव ततो नाम द्वितीयादौ चतुर्दिने । नम कृष्णाच्युतानन्तहृषीकेशेति च क्रमात् । चतुर्दिने द्वितीयादिदेवमभ्यर्च्चयेद् व्रती । प्रथमेऽह्नि कृता पूजा पादयोश्चक्रपाणिनः । नाभिपूजा द्वितीयेऽह्नि कर्त्तव्या विधिवन्नरैः । पुरहिंसस्तृतीयेऽह्नि पूजां वक्षसि विन्यसेत् । चतुर्थेऽह्नि जगन्नाथः पूजा शिरसि विन्यसेत्" इत्यादि ।

भद्रातृतीयाव्रत पद्मपु० "कार्त्तिकादि तृतीयायां प्राश्य गोमूत्रयावकम् । नक्तञ्चरेदब्दमेकं तदन्ते गोप्रदो भवेत् । गौरीलोके वसेत् कल्पं ततो राजा भवेदिह । एतद् भद्राव्रत नाम सर्व्वकल्याणकारकम्" ।

भद्रासप्तमीव्रत भविष्यपु० "शुक्लपक्षे तु सप्तम्यां नक्षत्रं सवितुर्भवेत् । यदा प्राजापत्यं चेत् सदा ता भद्रां व्रजेत् । सवितृनक्षत्रं हस्ता । "चतुर्थ्यामेकभक्तन्तु पञ्चम्यां नक्तमाचरेत् । षष्ठ्यामयाचितं प्रोक्तं उपवासस्ततः परम्" । "अनेन विधिना यस्तु कुर्य्याद्वै भद्रसप्तमीम् । भद्रा ददाति सप्तम्यां भद्रं तस्य व्रत भवेत् । तस्य भद्राः सर्व्व एव गच्छन्ति सततं सदा । तदशक्तः फलं तस्यां विधिना केन दीयते । व्योमभद्रमिति प्रोक्तं देवविप्र मनोरमम् । शालिपिष्टमयं प्रोक्तं चतुःकोणं मनोरमम् । गव्येन सर्पिषा युक्तं खण्डशर्करयान्वितम् । चतुर्जातकचूर्णेन द्राक्षाभिश्च विशेषतः" ।

भवानीतृतीयाव्रत स्कन्दपु० "स्नानमेतत्तु यः कुर्य्यात् तृतीयायां शिवालये । समान्ते धेनुदो याति भवानीव्रतमित्युत" ।

भवानीव्रत लिङ्गपु० "पौर्णमास्याममावस्यां वर्षमेकमतन्द्रिता । उपवासरता नारी नरो वा द्विजसत्तमाः ! । वर्षान्ते सर्व्वगन्धाढ्यां प्रतिमाञ्च निवेदयेत् । स भवान्यास्तु सायुज्यं सारूप्यं चाप्यनुत्तमा । लभते नात्र सन्देह सत्यं सत्यं मुनीश्वराः !" ।

भाद्रपदव्रतं महाभारते "प्रौष्ठपादन्तु यो मासमेकाहारो भवेन्नरः । धनाढ्यस्फीतमतुलमैश्वर्यं प्रतिपद्यते । राजसूयस्य यज्ञस्य फलं दशगुणं लभेत्" ।

भानुव्रतं मत्स्यपु० "सप्तम्यां नक्तभुक् दद्यात् समान्ते गां सकाञ्चनाम् । सूर्य्यलोकमवाप्नोति भानुव्रतमिदं स्मृतम्" ।

भास्करव्रतं कालिकापु० "शतोपचारैः षष्ठ्यान्तु सप्तम्यां यस्तु मानवः । करोति विधितः श्राद्धं भास्करः प्रीयतामिति । सर्व्वरोगविनिर्मुक्तः स्वर्गलोकमवाप्नुयात्" ।

भीमद्वादशीव्रत पद्मपु० "यद्यष्टम्यां चतुर्दश्यां द्वादश्यामथ भारत ! । अन्येष्वपि दिनर्क्षेषु न शक्तस्तमुपोषितुम् । ततः पुण्यामिमां भैमीं सर्व्वपापप्रणाशनीम् । उपोष्य विधिमानेन गच्छ विष्णोः परं पदम् । माघमासस्य दशमी यदा शुक्ला भवेत्तदा । घृतेनाभ्यञ्जनं कृत्वा तिलैः स्नानं समाचरेत् । तथैव विष्णुमभ्यर्च्च्य नमो नारायणेति च" इत्यादि । "शृणु राजन् ! प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । यामुपोष्य न दुःखानां भाजनं भजते जनः । माघमासे सिते पक्षे द्वादशी पावनी स्मृता । तस्यां जलार्द्रवसन उपोष्य सुखभाग् भवेत्" । "भीमाख्या द्वादशी चेति कृतकृत्या नरा यतः । इमां पुलस्त्यमुनिना कथितां कुरुनन्दन ! । यश्चैनां कथितां यत्नात् कुर्य्याद्वा भक्तिभावतः । सर्व्वपापविनिर्मुक्तो विष्णुलोके महीयते । दरिद्रेणापि या पार्थ ! वित्तशाठ्यं विवर्ज्जयेत् । विष्णुभक्तेन कर्त्तव्या संसारभयभीरुणा । भीमेन या किल पुरा समुपोषितत्वाद्भीमी गवत्स्थिरसुशीतलवारिधारा । ता द्वादशीं त्रिदशवेद्यसखा चरेद् य सम्यक् समाचरति याति स विष्णुलोकम्" ।

भीमव्रत पद्मपु० "मासोपवासी यो दद्याद्धेनुं विप्राय शोभनाम् । सईश्वरपद याति भीमव्रतमिद स्मृतम्" ।

भीष्मपञ्चकव्रतं नारदपु० "प्रवक्ष्यामि महापुण्यं व्रतं व्रतवतां वर ! । भीष्मेणैतद्यतः प्राप्तं व्रतं पञ्चदिनात्मकम् । सकाशाद्वासुदेवस्य तेनोक्तं भीष्मपञ्चकम् । व्रतस्यास्य गुणान्वक्तुं कः शक्तः केशवादृते । व्रतञ्चैतन्महापुण्यं महापातकनाशनम् । अतो नरैः प्रयत्नेन कर्त्तव्यं भीष्मपञ्चकम् । कार्त्तिकस्यामले पक्षे स्नात्वा सम्यग्यतव्रतः । एकादश्यान्तु गृह्णीयाद् व्रतं पञ्चदिनात्मकम् । प्रातः स्नात्वा विधानेन मध्याह्ने च तथा व्रती । नद्यां निर्झरगर्त्ते वा समादाय तु गोमयम् । यवव्रीहितिलैः सम्यक्

नामसमर्थ्यते यथा· "अपवेताश्विने पक्ष ! यावत् कृष्णा तु अष्टमी । पूजयेत् कृष्णा तत्र मण्डले विधिवत्कृते । सर्वसम्भारसम्पन्ने सर्वसिद्धिविधायके । सर्वकामानवाप्नुयात्" इत्यादि ।

मङ्गल्यसप्तमीव्रतं गुरुडपु॰ "मङ्गल्यं परमिच्छन्ती मङ्गलायतनं हरिम् । अर्चयेद्विनता देव सप्तम्यां समुपोषिता । माङ्गल्य परमिच्छन्ती व्रतेनानेन चाप्नुयात् । पुमानपि यश कीर्त्तिं सत्पमायुश्च विन्दति" ।

मत्स्यद्वादशीव्रत धर्म्मोत्तरे "मार्गस्य शुक्लपक्षे तु दशम्या नियतात्मवान् । स्नात्वा देवार्च्चनं कृत्वा अग्निकार्य्यं यथाविधि । शुचिवासाः प्रयतात्मा हव्यं चान्नं सुसंस्कृतम् । भुक्त्वा पञ्चपद गत्वा पुन· शौचं तु पादयो । कृत्वाऽष्टाङ्गुलमानन्तु क्षीरवृक्षसमुद्भवम् । भक्षयेद्दन्तकाष्ठं तु तत आचम्य यत्नतः । स्पृष्ट्वा खानि तथाद्भिश्च चिर ध्यात्वा जनार्द्दनम्" । खानीन्द्रियाणि "शङ्खचक्रगदापाणिं पीतवस्त्रं किरीटिनम् । प्रसन्नवदनं देव सर्वलक्षणलक्षितम् । ध्यात्वा जलं गृहीत्वा तु भानुरूपं जनार्द्दनम् । दद्यार्घ्यं दापयेत् पश्चात् करतोयेन मानव· । एवमुच्चारयेद्वाक्यं तस्मिन् काले महामुने ।। एकादश्यां निराहारो भूत्वाहमपरेऽहनि । भोक्ष्यामि पुण्डरीकाक्ष ! शरणं मे भवाच्युत ! । तेषां मध्ये शुभं पीठं स्थापयेद्वस्त्रसंयुतम् । तस्मिंश्च रौप्यं सौवर्णं ताम्रं वा दारवं तथा । अलाभतश्चोदपूर्णं कृत्वा पात्रं ततो न्यसेत्" । अलाभतः सौवर्णादीनामलाभे दारवमपि कुर्य्यादित्यर्थः "सौवर्णं मत्स्यरूपेण कृत्वा देवं जनार्द्दनम् । वेदवेदाङ्गसंयुक्तं श्रुतिस्मृतिविभूषणम्" । तोयपूर्णं पात्रं कृत्वा तत्र मत्स्यरूपं जनार्द्दनं न्यसेदित्यन्वयः "तत्रानेकविधैर्भक्ष्यैः फलैः पुष्पैश्च शोभितम् । गन्धैरक्षैश्च धूपैश्च अर्च्चयित्वा यथाविधि । रसातलगता वेदा यथा देव त्वयाऽऽहृता । मत्स्यरूपेण तद्वन्मां भवाद्धुद्धर केशव ! । एवमुच्चार्य्य तस्याग्रे जागरं तत्र कारयेत् । यथाविभवसारेण प्रभाते विमले तथा । चतुर्णां ब्राह्मणानाञ्च चतुरो दापयेत् घटान्" ।

मदनद्वादशीव्रतं मत्स्यपु॰ "चैत्रे मासि सिते पक्षे द्वादश्यां नियतव्रत । स्थापयेदव्रणं कुम्भं सिततण्डुलपूरितम् । नानाफलयुतं तद्वदिक्षुदण्डसमन्वितम् । सितवस्त्रयुगच्छन्नं सितचन्दनचर्च्चितम् । नानाभक्ष्यरसोपेत सहिरण्यं स्वशक्तित । ताम्रपात्रं गुडोपेतं तस्योपरि निवेशयेत् । तदभावे कृष्णां कुर्य्यात् कामकेशवयोर्नरः । कामनाम्ना हरेरर्च्चां स्नापयेद् गन्धवारिणा । शुक्लपुष्पाक्षततिलैरर्च्चयेदिति केशवम् । अनेन विधिना सर्वं मासि मासि समाचरेत् । उपवासी त्रयोदश्यामर्च्चयेद् विष्णुमव्ययम् । फलमेकञ्च सम्प्राश्य द्वादश्यां भूतले स्वपेत् । ततस्त्रयोदशे मासि घृतधेनुसमन्विताम् । शय्यां दद्याद् द्विजेन्द्राय सर्वोपस्करसंयुताम् । काञ्चनं कामदेवं च शुक्लां गाञ्च पयस्विनीम् । वासोभिर्द्विजदाम्पत्यं पूज्य शक्त्या विभूषणैः । शय्यागन्धादिकं दद्यात् प्रीयतामित्युदीरयेत्" ।

मधूकतृतीयाव्रत भविष्योत्तरे "फाल्गुनस्य सिते पक्षे तृतीयायामुपोषिता । स्नाता स्थिता ब्रह्मचर्य्ये ततोऽन्यस्मिन् दिने पुन । व्रजेन्मधुवन, गौरीं पूजयेत् मधुमाधवा । मन्त्रेणानेन ध्यायन्ती पार्व्वतीप्रतिमा शुभाम् । मृगाजिनावृतकुचां जटामुकुटशोभिताम् । शोधारणगतां देवीं रुद्रध्यानपरायणाम् । पूजयेत् गन्धकुसुमैर्दीपाक्षतचन्दनै· । पर्य्युक्षुम्ससुपरासिक्तवोपगीत दत्त्वा फलाक्षतयुतं मधुपादपस्य । गौरीव कामवरदा भवतीह नारी" इत्यादि ।

मनोरथद्वादशीव्रत पद्मपु॰ "फाल्गुनामलपक्षस्य एकादश्यामुपोषित· । नरो वा यदि वा नारी समभ्यर्च्च्य जगत्पतिम् । हरेर्नाम जपन् भक्त्या सप्त वारान् जनेश्वर ! उत्तिष्ठन् प्रस्खलंश्चैव हरिमेवाशु कीर्त्तयेत् । अत· प्रभाते विमले द्वादश्यां नियतो हरिम् । स्नात्वा सम्यक् समभ्यर्च्य दत्त्वा विप्राय दक्षिणाम् । हरिमुद्दिश्य चैवाग्नौ घृतहोम समाचरेत् । फाल्गुनश्चैत्रवैशाखौ ज्यैष्ठमासश्च पार्थिव ! । चतुर्भिः पारणं मासैरेभिर्निष्पादितं भवेत् । रक्तपुष्पैश्च चतुरो मासान् कुर्व्वीत चार्च्चनम् । जातीपुष्पाणि धूपश्च भवतः सर्जरसेन तु । प्राश्य दर्भोदकं चात्र शाल्यन्नं च निवेदयेत् । स्वयमेव तदन्नीयाच्चैव पूर्ववदाचरेत् । कार्त्तिकादिषु मासेषु गोमूत्र कायशोधनम् । सुगन्ध स्वेच्छया धूपं पूजां भृङ्गारकेण च" । भृङ्गारको माकन्द· "मधुरं चात्र नैवेद्य भुञ्जीयात्तच्च वै स्वयम् । प्रतिमासञ्च विप्राय दातव्या दक्षिणा तथा । प्रीयतां देवदेवस्य पारणे पारणे गत" वर्षसाध्यमिदम् ।

मनोरथपूर्णिमाव्रत विष्णुधर्म्मोत्तरे "कार्त्तिक्यान्तु तथारभ्य सम्पूर्णं शशलाञ्छनम् । पूजयेदुदये राजन् ! सदा नक्ता-

इत्युपक्रमे मातृनामान्यभिधाय उक्तम् "नवम्यां पूजयेद् यस्तु मासि चाश्वयुजे सदा । स चिन्तितमवाप्नोति भवने नात्र संशयः" ।

मातृव्रतं वराहपु० "मातृणामष्टमी दत्ता ब्रह्मणा तिथिरुत्तमा । एताः सम्पूजयेद्भक्त्या निराहारो नरः सदा । तस्य ताः परितुष्टास्तु क्षेमारोग्यं ददत्यपि" ।

मार्गशीर्षव्रतं महाभारते "मार्गशीर्षन्तु यो मासमेकभक्तेन संक्षिपेत् । भोजयेच्च द्विजान् भक्त्या स मुच्येद्व्याधिकिल्विषैः । सर्वकल्याणसम्पूर्णः सर्वदुःखविवर्जितः । उपोष्य व्याधिरोहितो वीर्य्यवानभिजायते । कृषिभागी बहुधनो बहुधान्यश्च जायते" ।

मार्त्तण्डसप्तमीव्रतं भविष्यपु० "मार्त्तण्डसप्तमीं शृणु । यथाह्या वच्मि तेऽनघ ।। पौषमासे सिते पक्षे सप्तम्यां समुपोषितः । सम्यक् सम्पूज्य मार्त्तण्डं मार्त्तण्ड इति वै जपन् । पूजयेत् प्रयतं भक्त्या श्रद्धया परयान्वितः" । कृतप सर्व्वः "पुष्पधूपोपहाराद्यैरुपवासे समाहितः । मार्त्तण्डेति जपन्नाम पुनस्तद्गतमानसः । विप्राय दक्षिणां दद्यात् यथाशक्त्या स्वगव्यजम् । द्वितीयेऽह्नि पुनः स्नात । तत्रैवाभ्यर्च्चनं रवेः । तेनैव नाम्ना सम्बोध्य दत्त्वा विप्राय दक्षिणाम् । ततो भुञ्जीत गोदोहसमृक्तसमन्वितम् । एवमेवाखिलान् मासान् उपोष्य प्रयतः शुचिः । दद्याद्वार्षिकं विद्वान् प्रतिमासञ्च शक्तितः । पारिते च पुनर्वर्षे यथापूर्वं गवाह्निकम् । दत्त्वा परगते भूयः शृणु यत् फलमश्नुते । स्वर्णशृङ्ग्यः पञ्चगाव सवत्सा वृषभस्वराः । प्रतिमासं द्विजातिभ्यो दत्त्वा यत् फलमश्नुते । तदाप्नोत्यखिलं सम्यग्व्रतमेतदुपोषितः । स च लोकमवाप्नोति मार्त्तण्डो यत्र तिष्ठति" ।

मासव्रतं देवीपु० "मार्गे रत्नोत्तम दद्याद् घृतं पौषे महाफलम्" । रत्नोत्तम लवणम् "तिलान्माघे मुनिश्रेष्ठ । सप्त धान्यानि फाल्गुने । विचित्राणि च वस्त्राणि चैत्रे दद्याद् द्विजातये । वैशाखे द्विज ! गोधूमान् ज्यैष्ठे तोयभृतं घटम् । आषाढे चन्दनं देयं सकर्पूरं महाफलम् । नवनीतं नभोमासि छत्रं प्रोष्ठपदे मतम् । गुडशर्करयाक्तान् मोदकानाश्विने मुने ! । दीपदानं महापुण्यं कार्त्तिके यः प्रयच्छति । सर्वकामानवाप्नोति क्रमेण तु उदाहृतम्" ।

मासोपवासव्रतं विष्णुधर्मोत्तरे "आश्विनस्यामले पक्षे एकादश्यामुपोषितः । व्रतमेतत्तु गृह्णीयाद् यावत् त्रिंशद्दिनानि तु । वासुदेवं समुद्दिश्य कार्त्तिकं सकलं नरः । मासमेकोपवसेद्यस्तु स मुक्तिफलभाग्भवेत् । अच्युतस्यालये भक्त्या त्रिकालं कुसुमैः शुभैः । मालतीन्दीवरैः पद्मैः कमलैः सुगन्धिभिः । कुङ्कुमोशीरकर्पूरैर्विलिप्य वरचन्दनैः । नैवेद्यधूपदीपाद्यैरर्च्चयेत जनार्द्दनम्" इत्यादि ।

मुक्तिद्वारसप्तमीव्रतं मत्स्यपु० "अश्वमेधादियज्ञानां शतकोटिशतैरपि । तत् फलं लभ्यते पुंसा मुक्तिद्वारव्रतेन यत् । योगमार्गमनभ्यस्य यथेष्टाचारवानपि । अथ युक्तो व्रतश्चापि व्रतेनानेन मुच्यते । सप्तमीं प्राप्य शुक्लेन दन्तधावनमाचरेत् । नमोक्तायेत्युदीर्य्याथ चार्ककाष्ठेन मन्त्रवान् । अथ वा पुष्पलक्षेण जलेनाप्लावनं तथा । कृत्वा पवित्रं देवानां मन्त्रेणार्कसमित् स्थितम् । रक्तचन्दनपद्मन्तु लिखेद्गोमयधारिणा । प्राक्कृते षोडशदलं सगर्भदलकर्णिकम्" इत्यादि ।

सुखव्रतं पद्मपु० "सुखपान परित्यज्य समान्ते गोप्रदो भवेत् । यक्षाधिपत्यमाप्नोति सुखव्रतमिहोच्यते" ।

मुनिव्रतं विष्णुधर्मोत्तरे "सप्तम्यां मुनिशार्दूल ! दृष्टानभ्यर्च्चयेन्मुनीन् । स्वाध्यायफलमाप्नोति तद्धामफलमश्नुते" ।

मृगशीर्षव्रतं पद्मपु० "श्रावणे मासि कृष्णे च शङ्कर प्रथमेऽहनि । त्रिपर्वणा त्रिशल्येन त्रिमुखेन शरेण च । मुखानि त्रीणि विष्टेट यस्य मृगरूपिणः । तैः शिरोभिस्तपस्तप्तं वरः प्राप्तोऽथ शङ्करात्" । त्रिशल्येन त्रिमुखेन शल्यत्रयविमुखेनेत्यर्थः । मृगरूपिणस्त्रिमुखमृगरूपिण इत्यर्थः "त्रिभिः पूज्यानि तानीति न मनुष्यैः कदाचन । मृगशीर्षं ततः कृत्वा चिह्नाकारन्तु मृण्मयम् । सौरेण तपनीयं वै पूजनीयं यथाविधि । अर्घैः पुष्पैश्च धूपैश्च नैवेद्यैर्विविधैरपि । शाकैः सौपस्यनाभिश्च कृतैः पिष्टमयैः शुभैः" । सौवर्च्चलाभिः घृतसौमिश्रपिष्टविकृतिभिः । "कांस्यभाजनवाद्यैश्च पश्चात् कार्य्यञ्च भोजनम्" ।

मेघपालीतृतीयाव्रतं भविष्यपु० "अश्वयुक्शुक्लपक्षे च तृतीयायां युधिष्ठिर ! । मेघपाली प्रदातव्या भक्त्या स्त्रीभिर्व्वनिता । अर्च्चैः विरूढैर्गोधूमैः सप्तधान्यसमन्वितैः । तिलतण्डुलमिश्रैश्च दातव्या धर्म्मसत्तम" । युधिष्ठिर उवाच "कीदृशी सा भवेद्देव मेघपाली जनार्द्दन ! । स्वरूपं कीदृशं तस्याः को मन्त्र इति मे वद" । श्रीकृष्ण उवाच "ताम्बूलसदृशैः पत्रैरक्ता पत्री

सप्तमञ्जरी। वाटीषु या च मार्गेषु प्रेक्षिता पर्वतेषु वा। यत्र वा दृश्यते राजन्! शुचौ देशे समुत्थिता। सेयमाली समभ्यर्च्या फलैः पुष्पैस्तथाक्षतैः। खर्जूरैर्नारिकेलैश्च नारङ्गैर्दाडिमैस्तथा। बीजपूरैः कपित्थैश्च सप्तधान्यैर्दिरूढकैः”।

मौनव्रतं स्कन्दपु० “नभस्यत्र व्यतिक्रान्ते नभस्ये च प्रवर्त्तिते”। नभाः, श्रावण, नभस्यो भाद्रपदः तौ चान्द्र पूर्णिमान्तौ ग्राह्यौ। “एवं कालक्रमेणैव श्रावणी पूर्णिमा गता। तद्दिनं प्राप्य विप्रेन्द्रेत्यधोभाभिधानात्। ‘व्रतमेतत् तु कर्त्तव्यं षोडशैव दिनानि तु। एतच्छ्रुत्वा ततो देवी प्रहृष्टा वाक्यमब्रवीत्”। पार्वत्युवाच “किं विधानं पुरा प्रोक्तं व्रतं मौनव्रतात्मकम्। तत्सर्वं समाचक्ष्व प्रसादं कुरु मे प्रभो!”। ईश्वर उवाच “तद्दिनस्यैव सम्प्राप्य सभार्य्यः सह बान्धवैः। गत्वा प्रभातसमये स्नानार्थं जलसन्निधौ। तडागे वा नदीदेशे गत्वा प्रस्रवणेऽथ वा। स्नानं कार्य्यं तदा सर्वैः शिवध्यानपरायणैः। दूर्वाकाण्डं सुसंग्राह्य षोडशग्रन्थिसंयुतम्। तत्सूत्रञ्च करे न्यस्य स्त्रिया वामे न्दक्षिणे। एवंविधानं कर्त्तव्यं यावत् स्यात् प्रतिपद्दिनम्। तद्दिने चैव सम्प्राप्ते समाप्त्यर्थं व्रतस्य तु। मौनेनैवानयेत्तोयं मौनात् गोधूमपेषणम्। मौनेनैव च कर्त्तव्यं नैवेद्यं भोजनादिकम्। सर्वोपस्करमादाय गत्वा च जलसन्निधौ। स्नानं कार्य्यं तदा तत्र नित्यकर्म ततः परम्। देवर्षिमनुजानाञ्च पितॄणाञ्चैव तर्पणम्। पश्चाद्देवाधिदेवेशं मन्त्रैः सम्पूजयेत् तत”।

यमचतुर्थीव्रत कूर्मपु० “भरण्यान्तु चतुर्थ्यान्तु शनैश्चरदिने यमम्। पूजयन् सप्तजन्मोत्थैर्मुच्यते पातकैर्नरः”।

यमद्वितीयाव्रत भविष्योत्तरे “कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर!। यमो यमुनया पूर्वं भोजितः स्वगृहे सदा। द्वितीयायां महोत्सर्गे नारकीयाश्च तर्पिताः। पापेभ्योऽपि विमुक्तास्ते मुक्ताः सर्वनिबन्धनात्। भ्रमिताश्चातिसन्तुष्टाः स्थिताः सर्वे यदृच्छया। तेषां महोत्सवो वृत्तो यमराष्ट्रसुखावहः। अतो यमद्वितीया सा प्रोक्ता लोके युधिष्ठिर! अस्यां निजगृहे पार्थ, न भोक्तव्यमतो बुधैः। स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम्”।

यमव्रतं भविष्यपु० “दशम्यां यमराजेष्टः सर्वव्याधिहरो ध्रुवम्। मूलमन्त्राः सहस्राभिरङ्गमन्त्राश्च कीर्त्तिताः। पूर्ववत् पद्मपत्रस्थः कर्त्तव्यश्च तिथीश्वर”। इद व्रत दैश्वानरप्रतिपद्व्रतवद्व्याख्येयम्। कूर्मपु० “उपोषित चतुर्दश्यां कृष्णपक्षे समाहित। यमाय धर्मराजाय मृत्यवे चान्तकाय च। वैवस्वताय कालाय सर्वभूतक्षयाय च। प्रत्येकं तिलसंयुक्तान् दद्यात् सप्तोदकाञ्जलीन्। स्नात्वा नद्यान्तु पूर्वाह्णे मुच्यते सर्वपातकैः”। महाभारत “यजिष्णु पञ्चमीं षष्ठीं यमान् यो भोजयेद् द्विजान्। अष्टमीमथ कौन्तेय! शुक्लपक्षे चतुर्दशीम्। उपोष्य व्याधिरहितो रूपवानिति जायते”। विष्णुधर्मोत्तरे “यत्र क्वचन नद्यान्तु यत्र कृष्णा चतुर्दशी। अनकोऽभ्युदिते काले देव सम्पूजयेद् यमम्। धूमवर्णं चित्रगुप्तं कालपाशञ्च यादव!। मृत्युं स्वर्गञ्च धर्मञ्च गन्धमाल्यानुसम्पदा। यमोद्धार इत्युक्त्वा तिलांश्च जुहुयात् ततः। नमो यमायेति तथा स्त्रीशूद्रस्य विधीयते। ततश्च भोजयेद्विप्रान् यथाशक्ति नरोत्तम। दद्याद् व्रतान्ते विप्राय तथैव च पयस्विनीम्। कृत्वा व्रत वत्सरमेतदिष्ट न याति राजन्! नरकं मनुष्यः। पापक्षय प्राप्य स याति नाक मानुष्यमासाद्य स धर्मवान् स्यात्”।

यमादर्शनत्रयोदशीव्रतं भविष्योत्तरे “पूर्वाह्णे मार्गशीर्षादौ वर्षमेकं निरन्तरम्। त्रयोदश्यां सौम्यदिने सूर्य्याङ्गारकवर्जिते। मम नाम्ना द्विजानष्टौ पञ्च चैव समाहूयेत्। पुराणवेदतत्त्वज्ञान् स्वाचारान्नन्यदर्शनान्। सूर्य्यैकशरणान् साधून् सर्वभूतहिते रतान्। शुचौ देशे शुभे पङ्क्ते प्राङ्मुखानुपवेशयेत्। अन्तर्वासोयुतान् भक्त्या यत्नेनाभ्यञ्जयेत तान्। त्रयोदश्यां त्रयोदश्यां ये करिष्यन्ति भूतले। एकभक्तेन नक्तेन उपवासेन वा पुनः। यमादर्शननाम्ना वै व्रत सर्वव्रतोत्तमम्। ते सर्वपापनिर्मुक्ता विमानेनार्कवर्चसा। यास्यन्तीन्द्रपुरीं रम्यामप्सरोगणसंवृताम्”।

युगादिव्रतम् आदिपु० “वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुम्। नारायणं पूजयेथाः पुष्पधूपविलेपनैः। वस्त्रालङ्कारसम्भारैर्नैवेद्यैर्विविधैस्तथा। ततस्त्वाप्यतो धेनुर्लवणस्याढकेन तु। कार्य्या कुरुकुलश्रेष्ठ! चतुर्भागेण वत्सकम्। अविचलोपरि स्थाप्य कल्पयित्वा विधानतः। शास्त्रोक्तक्रमयोगेन ब्राह्मणायोपपादयेत्। श्रीधरः श्रीपतिः श्रीमान् श्रीशः संप्रीयतामिति। अनेन विधिना दत्त्वा धेनुं विप्राय भारत!। गोसहस्रप्रदानस्य फलं प्राप्नोत्यसंशयम्। तथैव कार्त्तिके मासि नवम्या

नक्तभुग् नरः। स्नात्वा नद्यां तडागे वा देवखातेऽथ वा पुनः। उमासहाय वरद नीलकण्ठमथार्चयेत्। पुष्पधूपादिनैवेद्यैर्दीपगन्धादिभिस्तथा। धेनुं तिलमयीं दद्यात् पुराणोक्तविधानतः। अष्टमूर्त्तिर्नीलकण्ठः प्रीयतामिति कीर्त्तयेत्। तदनु प्राप्यते पुण्यं पार्थ। न केन वर्ण्यते। दत्त्वा तिलमयीं धेनुं शिवलोकमवाप्नुयात्। त्रयोदशी नभस्ये या पितॄन् तत्र समर्चयेत्। पितॄन् पायसदानेन सुमनोभिर्हुतेन च। भोजयेद्ब्राह्मणान् भक्त्या वेदवेदाङ्गपारगान्। पितॄनुद्दिश्य दातव्या सवत्सा कांस्यदोहना। सत्यवत्ता गौर्महाभाग। तरुणी सुपयस्विनी। पिता पितामहश्चैव तथैव प्रपितामहः। मातामहस्तत्पिता च तत्पिता च त्रयो मम। प्रीयन्तां गोप्रदानेन इति दत्त्वा विसर्जयेत्। कृतेनानेन राजेन्द्र। यत् पुण्यं प्राप्यते पुनः। तदन्येन न शक्यन्तु वक्तुं वर्षशतैरपि। पुत्रांश्च पौत्रांश्च धन सर्वं समर्हदीर्पसितम्। इहैवाप्नोति पुरुष परत्र च पराङ्गतिम्। चतुर्दश्यान्तु मावस्य पूजयित्वा पितामहम्। गायत्र्या सहितं देवं वेदवेदाङ्गभूषितम्। नवनीतमयीं धेनुं फलैर्नानाविधैर्युताम्। सहिरण्या सवत्सान्तु ब्राह्मणाय निवेदयेत्। कीर्त्तयेत् प्रीयतां मेऽद्य पद्मयोनिः पितामहः। यत्स्वर्गे यच्च पाताले यन्मर्त्त्ये किञ्चिद्दुर्लभम्। तदवाप्नोत्यसन्दिग्धं पद्मयोनेः प्रसादतः। यानि चान्यानि दानानि दीयन्ते सुबहून्यपि। युगादिषु महाराज। अक्षयाणि भवन्ति हि। वित्तहीनः स्वशक्त्या यो ददाति स्वल्पकं वसु। तदप्यक्षयतां याति नात्र कार्य्या विचारणा"।

युगावतारव्रत भविष्यपु० "मासि प्रौष्ठपदे यत् तु कृष्णपक्षे त्रयोदशी। अवतीर्णं युगं तस्यां त्रेतायान्तु समाहितः।" त्रेताया विनिर्द्दिष्टायां एतस्यां तिथौ युगमवतीर्णमिति सम्बन्धः अर्थाद् द्वापरमिति लभ्यते "गोमूत्रं गोमयं दूर्वां समालभ्य च मृत्तिकाम्। स्नायात्तु रे तडागे वा तिथौ तस्यां समाहितः। कृतन्तेन भवेच्छ्राद्धं गयायान्तु न संशयः। युगादौ यस्तु लोकेश स्नापयेद्गरुडध्वजम्। घृतक्षीरजलैः पुण्यैः स गच्छेद्वैष्णवीं पुरीम्। स्नापितोऽथ विलिप्तोऽथ पूजितोऽथ नमस्कृतः। युगादौ युगकर्त्ता तु नृणां मुक्तिप्रदो हरिः। अतो वै सर्वयत्नेन युगादौ जगतीपतिः। पूजनीयो जनैर्भक्त्या सर्वदुःखहरो हरिः"।

योगव्रतं भविष्योत्तरोक्तम् "विष्कुम्भादिषु योगेषु भवेदेकाशनो नरः। यो ददाति क्रमात् पार्थ। घृतमैलपलेचवम्। यवगोधूमचणकं निष्पावांश्चालितण्डुलान्। लवणं दधि दुग्धञ्च वस्त्रं कनकमेव च। कम्बलं गोदर्क छत्रमुपानद्युगलं तथा। कर्पूरं कुङ्कुमञ्चैव चन्दनं कुसुमानि च। लौहं ताम्रञ्च कांस्यञ्च रौप्यञ्चेति युधिष्ठिर। स्नातः स्वशक्त्या विधिवत् सर्वपापैः प्रमुच्यते। न वियोगमवाप्नोति योगव्रतमिदं स्मृतम्"।

योगेश्वरद्वादशीव्रत धरणीव्रते "शृणुष्व भक्तितो राजन्। कार्त्तिकैकादशीं तथा। उपोष्य विधिना येन सर्वाभरं प्राप्नुयात् फलम्। प्राग्विधानेन सङ्कल्प्य तद्वत् स्नानं समाचरेत्। विलोमेनार्चयेद्देव नारायणमकल्मषम्"।

रक्षाबन्धनपौर्णमासीव्रत भविष्योत्तरे "घनाच्छतेऽम्बरे पार्थ। शाद्वले धरणीतले। सम्प्राप्ते श्रावणे मासि पौर्णमास्यां दिनोदये। स्नान कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः। ततो देवान् पितॄंश्चैव तर्पयेत् परमाम्भसा। उपाकर्मादि चैवोक्तमृषीणाञ्चैव तर्पणम्। कुर्वीत ब्राह्मणः श्राद्धं वेदानुद्दिश्य इत्यत।। शूद्राणां मन्त्ररहितं स्नानं दानञ्च शस्यते। ततोऽपराह्णसमये रक्षापोटलिकां शुभाम्। कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषिताम्। वस्त्रैर्विचित्रैः कार्पासैः क्षौमैर्वा मलवर्जितैः। दूर्वावर्णसहितैस्त्रित्वा दुरितोपशमनाय। उपलिप्ते गृहोद्देशे दत्तचतुष्के न्यसेत् कुम्भम्। पीठं दत्त्वोपरि विशेत् राजामात्यैर्युतश्च सुहृद्भिः। वेश्याजनेन सहितो मङ्गलशब्दैः समुच्छ्रितैश्चिह्नैः। रक्षाबन्धः कार्य्यः शान्तिध्वनिना नरेन्द्रस्य। देवद्विजातिशस्त्राण्यस्त्रे रक्षाभिरर्चयेत् प्रथमम्। तदनु पुरोधा नृपतेः रक्षां बध्नीत मन्त्रेण" इत्यादि।

रथनवमीव्रत भविष्यपु० "कृत्वैवाश्वयुजे मासि कृष्णपक्षे नराधिप।। नवम्यामुपवासन्तु दुर्गादेवीं प्रपूजयेत्। पुष्पधूपोपहारैस्तु ब्राह्मणानां च तर्पणैः। पूजयित्वा रथं कृत्वा नानावस्त्रोपशोभितम्। शोभितं ध्वजमालाभिः छत्रचामरदर्पणैः। नानापुष्पस्रजाभिश्च विहैर्युक्तं मनोरमम्। कृत्वा स्वर्णमयीं दुर्गां महिषासनशोभिताम्। विन्यस्य रथमध्ये तु पूजयेत् कृतलक्षणम्। तं रथं राजमार्गेण शङ्खभेर्यादिनिस्वनैः। नवम्यां भ्रामयित्वा तु नयेत् दुर्गालयं नृप।। तत्र जागरपूर्वन्तु प्रदीपाद्युपशोभितम्। नानाप्रक्षेपकैर्वीर।

दन्तै र्विशेषेण लिखितास्तथा। कार्य्याः सुत्तलिकास्तत्र तासां नामानि मे शृणु। कृष्णश्च रुक्मिणी चैव बलदेवश्च रेवती। प्रद्युम्नश्चैव तद्भार्य्या अनिरुद्ध उषा तथा। देवकी वसुदेवाटीन् सर्वांस्तत्र प्रकल्पयेत्। ततोऽनुपूजयेत् सर्वान् गन्धधूपाक्षतादिभिः। चन्द्रोदये तु सञ्जाते दद्यादर्घ्यं न्तादन्द्रवे। "अर्घ्यं दत्त्वा तु भुञ्जीत मित्रस्वजनबन्धुभिः। ततः प्रभातसमये कुमार्य्यै तद्गृहं शुभम्। दद्यात् प्रीतेन मनसा सर्व्ववस्तुप्रपूरितम्। ततो द्वितीयवर्षे तु कुर्य्याद् द्विगुणमन्दिरम्। पूर्ववत् पूरितं कृत्वा कुमार्य्यै विनिवेदयेत्। ततस्तृतीये वर्षे तु कृत्वा त्रिगुणमन्दिरम्। सम्पूर्णं पूर्ववत् कृत्वा कुमार्य्यै विनिवेदयेत्। ततश्चतुर्थे वर्षे तु कृत्वा गृहचतुष्टयम्। पञ्चमेऽब्दे पञ्चद्वारं षष्ठे षण्मुखसंयुतम्। कृत्वा दद्यात् प्रयत्नेन कुमार्य्यै तच्च मन्दिरम्। एतत्तु सप्तमे वर्षे कुर्य्यादुद्यापनं शुभम्। सप्तद्वारं गृहं कृत्वा सुधाधवलितं महत्। शय्या तूलीच यानं च छत्रोपानहमेव च। आदर्शं चामरञ्चैव ताम्बूलं च तथा। कांस्यभाजनपात्राणि ताम्राणि तु महान्ति च। नानाविधानि वस्त्राणि तथैवाभरणानि च। गृहोपकरणं सर्वं गृहे निक्षिप्य सर्व्वतः। कृष्णञ्च रुक्मिणीञ्चैव प्रद्युम्नञ्च मनोहरम्। कृत्वा स्वर्णमयान् भक्त्या पीतवस्त्रावगुण्ठितान्। पूजयित्वोपवासेन रात्रिजागरणेन च। ततः प्रभातसमये तद्गृहे समुपागताम्। सपत्नीकं द्विजं पूज्य वस्त्रालङ्कारभूषणैः। तस्मादेतद्गृहं दद्याद्गावश्चैवाथ षोडशीम्"।

रुद्रव्रत पद्मपु० "यस्त्वेकभक्तेन समां क्षिपेत्तु दृशान्वितां। धेनुं तिलमयीं दद्यात् स पदं याति शाङ्करम्। एतद्रुद्रव्रतं नाम पापशोकविनाशनम्"। ज्यैष्ठे पञ्चतपाः सायं हेमधेनुप्रदो दिवम्। यात्यष्टमीचतुर्दश्यो रुद्रव्रतमिदं स्मृतम्"। अष्टमीचतुर्दश्याविति च चत्वारि दिनानि पञ्चाग्निसाधनं तच्चतुर्थे दिने सायं सुवर्णधेनुं दद्यात्"।

रूपनवमीव्रतं भविष्यपु० "पौषे मासि महाबाहो। चतुर्दन्तं गजं शुभम्। कृत्वा रूप्यमयं भक्त्या न्यस्य पात्रे हिरण्मये। इन्द्राणीं विविधैर्द्रव्यैर्नानामणिविभूषिताम्। एवं पूजयते भक्त्या इन्द्राणीं विधिवत्ततः। स ऐरावतमारूढः सोमलोके महीयते"।

रूपसत्रव्रत विष्णुधर्मोत्तरोक्तम् "फाल्गुन्यां समतीतायां कृष्णपक्षाष्टमी तु या। सम्पूज्य तां तु सम्प्राप्य व्रतं गृह्णीत मानवः। उपोषितव्यं नक्षत्रं नक्षत्रस्य च दैवतम्। वरुणञ्च तथा चन्द्रं पूजयेद् विधिना नरः। पूजयेद्देवदेवञ्च भगवन्तं जनार्दनम्। उपोष्याङ्गानि देवस्य प्रयत्नेन च पूजयेत्। ततोऽग्निहवनं कृत्वा पूजयित्वा तथा गुरुम्। उपवासस्तु कर्त्तव्यो द्वितीयेऽहनि पार्थिव। उपोष्य ऋक्षे विगते स्नात्वा सम्पूज्य केशवम्। कृत्वाग्निहवनं भक्त्या पूजयित्वा द्विजोत्तमान्। हविष्यान्नञ्च भोक्तव्यं शृणु चाङ्गक्रमं मम। पादयोः कथितं मूलं प्राजापत्यन्तु जङ्घयोः। अश्विनौ जानुयुगलं ऊरुयुग्मे च पार्थिव। संहिते द्वे तथाषाढे गुह्यञ्च संहिते स्मृते। पूर्वोत्तरे च फाल्गुन्यौ कृत्तिका च कटिर्भवेत्। पार्श्वयोः कुक्षियुतयोर्नक्षत्रितय मम। उभे प्रोष्ठपदे राजन्। रेवती च तथा भवेत्। उरोऽनुराधासु पृष्ठं धनिष्ठासु प्रकीर्त्तितम्। भुजौ ज्ञेयौ विशाखासु हस्ते प्रोक्तौ तथा करौ। अङ्गुल्यश्च तथा प्रोक्ता राजसिंह पुनर्वसौ। अश्लेषायां नखाः प्रोक्ता ज्येष्ठायां नृप कन्धरः। श्रवणे श्रवणौ ज्ञेयौ मुखं पुष्ये प्रकीर्त्तितम्। दन्ताः स्वातौ शतभिषा हनु प्रोक्ता तथा नृप। मघायां नासिके प्रोक्ते मृगशीर्षं च लोचने। चित्रा ललाटे विज्ञेया भरण्याञ्च तथा शिरः। शिरोरुहास्तथार्द्रा व्रतस्यान्ते नराधिप। चैत्रशुक्लावसाने तु सत्रं परिसमाप्यते"।

रूपसङ्क्रान्तिव्रत स्कन्दपु० "अथान्यदपि ते वच्मि रूपसङ्क्रान्तिसत्तमाम्। सङ्क्रान्तिवासरे स्नानं तैलं कृत्वा विचक्षणः। हैमपात्रे घृतं कृत्वा हिरण्येन समन्वितम्। स्वरूपं वीक्ष्य तत्पात्रं ब्राह्मणाय निवेदयेत्। एकभक्तं ततः कृत्वा भक्त्या चैव समन्वितम्। व्रतान्ते काञ्चनं दद्याद्घृतधेनुसमन्वितम्। अश्वमेधसहस्रस्य फलमाप्नोति मानवः"।

रूपावाप्तिव्रत विष्णुधर्मोत्तरे "फाल्गुन्यां समतीतायां प्रतिपत्प्रभृति क्रमात्। यावच्चैत्री महाराज! तावत् स्नातो दिने दिने। वह्निः सम्पूजयेद्देवं केशवं भोगशायिनम्। एकभक्ताशनो नित्यमधःशायी तथा भवेत्। त्रिरात्रोपोषितः पश्चाद्भक्त्या कुर्य्यात्तथैव च। स्वशक्त्या रजतं दद्याद्वस्त्रयुग्मं तथैव च। रूपार्थिनो मासमिदं मयोक्तं व्रतोत्तमं नित्यमदीनसत्त्वम्। कृत्वा तु नाकं मनुजस्त्ववाप्य मानुष्यमासाद्य च रूपवान् स्यात्"।

रोहिणीद्वादशीव्रत भविष्योत्तरे "प्रवृत्ते श्रावणे मासि

यथा । कृत्वा चैवोपवासन्तु गृहीत्वा च जलाञ्जलिम् । नमो नारायणायेति व्याहृत्य चावलोकयेत् । यावन्तो बिन्दवः केचित् पतन्त्यञ्जलितो जलात् । तावद्वर्षसहस्राणि स्वर्गलोके महीयते । तथैव तस्या द्वादश्यां कृत्वा कर्म यथाविधि । पञ्चभिश्चैव पुष्पैस्तु सुरैर्गन्धैश्च धूपनैः । य एवं कारयेद्भूमे । तस्यापि शृणु या गतिः" इत्यादि ।

विष्णुव्रतं भविष्यपु० "द्वादश्यां विष्णुमिष्ट्वेह सर्वदा विजयी भवेत् । पूज्यश्च सर्वलोकानां यथा गोपतिगोकरः" । गोपतिः सूर्य्यो गोकरो नेत्ररश्मिर्यस्य स गोपतिगोकरो विष्णुः "मूलकन्दाः स्वरूपाभिरङ्कुरन्तास्च कीर्त्तिताः । पूर्ववत् पञ्चपत्रस्यः कर्त्तव्यश्च तिथीश्वरः । गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते । पलाशशाखेन शाखेन कृतापि तु फलप्रदा । आज्यधारसमिद्भिश्च दधिक्षीराद्यमाद्यकैः पूर्वोक्तफलदो होमः कृतः शान्तेन चेतसा" । एतत्तु व्रतं वैश्वानरप्रतिपद्व्रतवद्व्याख्येयम् । पद्मपु० "द्वादश द्वादशीर्यस्तु समाप्योपवसेन्नरः । गोयुतं काञ्चनं विप्रानर्चयेद्भक्तितः । पर पदमवाप्नोति विष्णुव्रतमिदं स्मृतम्" । विष्णुधर्म्मोत्तरे "विष्णुव्रतमिति ख्यातं दर्शितं विष्णुना स्वयम् । पौषशुक्लद्वितीयादि कृत्वा मासचतुष्टयम् । षण्माषपारणप्राय गृह्णीयात् परमं व्रतम् । पूर्वं सिद्धार्थकैः स्नानं ततः कृष्णतिलैः स्मृतम् । वचयाथ तृतीयेऽह्नि सर्वौषध्या ततः परम् । नाम्ना कृष्णाच्युतानन्तेन सदा तु तेन पूजयेत् । तथैव च चतुर्थेऽह्नि हृषीकेश च केशवम् । देवमभ्यर्च्च्य पुष्पैश्च पत्रैर्धूपानुलेपनैः । चन्द्रस्योदितस्य बालेन्दोर्दद्यादर्घ्यं समाहितः । पुष्पैः पत्रैः फलैश्चैव सर्वधान्यैश्च भक्तितः । दिनक्रमेण चैतानि चन्द्रनामानि कीर्त्तयेत् । शशी चन्द्रः शशाङ्कश्च निशापतिरिति क्रमात् । नक्तं भुञ्जीत सततं यावत्तिष्ठति चन्द्रमाः । अस्तङ्गते न भुञ्जीत व्रतभङ्गभयाच्छुभे ।। एवं सर्वेषु मासेषु ज्यैष्ठान्तेषु यशस्विनि ।। कर्त्तव्यं वै व्रतश्रेष्ठं द्वितीयादिचतुर्दिनम् । विप्राय दक्षिणा दद्यात् पञ्चम्यां च यशस्विनि ।। एवं समापयेन्मासैः षड्भिः प्रथमपारणम् । पारणान्ते च देवस्य प्रीणनं भक्तितः शुभे । यथाशक्त्या तु कर्त्तव्यं वित्तशाठ्यं विवर्जयेत् । आषाढादिद्वितीयासु षण्मासेन तदीधन ।। पारणं वै दमाख्यात व्रतस्यास्य शुभप्रदम्" ।

वृषव्रतं पद्मपु० "कार्त्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत् । शैवाद्य पदमवाप्नोति वृषव्रतमिदं स्मृतम्" ।

वेदव्रतं विष्णुधर्म्मोत्तरे "इदमन्यत् प्रवक्ष्यामि चतुर्मूर्त्तिव्रतं तव । विद्याकामेन यत्कार्य्यं नरेण सुविपश्चिता । वह्निस्नानं नरः कृत्वा कृतऋग्वेदपूजनः । ऋग्वेदं शृणुयान्नित्यं मासद्वयमतन्द्रितः । चैत्रादारभ्य धर्मज्ञ । नित्यं नक्ताशनो भवेत् । ततो न्टपवर ! प्राप्ते ज्यैष्ठस्य चरमेऽहनि । वासोयुगं हिरण्यञ्च तथा धेनुं पयस्विनीम् । घृतपूर्णं कांस्यपात्रं ऋत्विग्भ्यस्तु दक्षिणाम् । आषाढादिषु मासेषु यजुर्वेदव्रतं चरेत् । आश्विनादिषु मासेषु सामवेदव्रतं चरेत् । तथाथर्वव्रतं नाम पौषादिषु विधीयते । सर्वेषु मासेषु कर्त्तव्यमृग्वेदव्रतकीर्त्तितम् । वेदात्मनो वासुदेवस्य पूजां कृत्वा नरो द्वादशवत्सराणि । विष्णोर्लोकं याति लोकैर्विशिष्टं यस्मिन् प्राप्ते सर्वदुःखं जहाति" । वटपञ्चकार्थं वेदव्रतविधानपा० द्रष्टव्यम् ।

वेश्याव्रतं पद्मपु० "अथाप्यन्यत् व्रतं सम्यक् उपदेक्ष्यामि तत्त्वतः । अविचारेण सर्वाभिरनुष्ठेयञ्च तत् पुनः । ससारोत्तारणायालमेतद्वेदविदो विदुः । यदा सूर्य्यदिने हस्तः पुष्यो वाथ पुनर्वसुः । भवेत् सर्वौषधीस्नानं सम्यङ्नारी समाचरेत् । तदा पञ्चशरस्यापि सन्निधानादनन्तरे । अर्च्चयेत् पुण्डरीकाक्षमनङ्गस्यापि कीर्त्तनम् । तस्माद्विप्राय दातव्यं प्रस्थं च प्रीयतामिति । यथेच्छाहारभुग्नक्तं तमेव द्विजसत्तमम् । रत्यर्थं कामदेवोऽयमिति चित्तेन धारयेत् । यद्यदिच्छति विप्रेन्द्रस्तत्तत् कुर्य्यात् विलासिनी । सर्वभावेन चात्मानमर्पयेत् स्मितभाषिणी । एवमादित्यवारेण सदा तद्व्रतमाचरेत् । तण्डुलप्रस्थदानादि यावन्मासास्त्रयोदश । ततस्त्रयोदशे मासि सम्प्राप्ते तस्य कामिनी । विप्रस्योपस्करैर्युक्तां शय्यां दद्याद्विलक्षणाम् । सोपधानकविश्राम स्वास्तरावरणां शुभाम् । दीपकोपानच्छत्रपादुकासनसंयुताम् । सपत्नीकमलङ्कृत्य हेमसूत्राङ्गुलीयकैः । सूक्ष्मवस्त्रैः सकटकैर्धूपमाल्यानुलेपनैः । कामदेवं सपत्नीकं गुडकुम्भोपरिस्थितम्" । कामदेवरूपन्तु मदनत्रयोदशीव्रतोक्तं विज्ञेयम् । "ताम्रपात्रासनगतं हैमन्तूलपटावृतम् । मुक्ताफलभाजनोपेतमिक्षुदण्डसमन्वितम् । दद्यादुभयोर्ज्ञाविवेचना तथैकां गां पयस्विनीम्" ।

वैतरणीव्रतं भविष्योत्तरे "एकादशी तिथिः कृष्णा मार्गशीर्षगता न्टप । तामासाद्य नरः सम्यक् गृह्णी-

सच्छेर्भौज्यैः फलैश्चित्रैर्मासि मार्गशिरेऽर्चयेत्। नमस्तेऽस्तु व्यतीपात! सूर्यसोमसुत! प्रभो!। यद्दानादि कृतं किञ्चित् तदनन्तमिहास्तु मे। इत्युक्त्वा पञ्चरत्नाद्यं सपुष्पं सतमर्घ्यकम्। प्रक्षिप्य तत्क्षणादेव सर्वपापक्षयो भवेत्॥ यदि द्वितीयेऽपि दिने व्यतीपातो भवेन्नहि॥ तदा पूर्णोपवासस्तु दद्यात्तत् सकलं गुरोः। पारणं व्यतिपातान्ते कुर्य्यात् सप्राश्य गोमयम्। अथैकस्मिन्नेव दिने व्यतीपातो भवेद्यदि। तत्रैवाह्नि तदा दत्त्वा उपवासं समाचरेत्। कुर्य्यादेवं मासि मासि व्यतीपातस्त्रयोदश। व्यतीपाते तु सम्प्राप्ते कुर्य्यादुद्यापनं बुध। व्यतीपाताय स्वाहेति क्षीरदृक्षसमन्वितम्। आज्यक्षीरतिलानाञ्च होतव्यं वै शतं शतम्"। नारदीयपु० "व्यतीपातव्रतस्यास्य विधानं शृणु तत्पत। माघे वा फाल्गुने वापि अन्यस्मिन्मासि वा भवेत्। व्यतीपातो दिने यस्मिन् प्रारभेद्व्रतमुत्तमम्। तिलैः पूर्णं शरावञ्च सगुडं गुरवेऽर्पयेत्। एवं द्वितीये दातव्यं तृतीये तु समापयेत्। सघृतं पायसञ्चैव दातव्यं चोत्तरोत्तरम्। एवं संवत्सरस्यान्ते देवस्यार्चान्तु कारयेत्। शङ्खचक्रगदापाणिं पद्महस्तं हिरण्मयम्। वस्त्रयुग्मेन संवेष्ट्य पूजयेद्गरुडध्वजम्। गोक्षीरेण च सम्पूर्णं कांस्यभाजनमुत्तमम्। स्थापयेद्देवदेवस्य स्थानन्तत्रैव कल्पयेत्। शय्यां च सविधौ तस्य स्थाप्या देवमनुस्मरन्। अनन्तशायिनं देवमनन्तफलदं शुभम्। श्रद्धया सहान्वितं विष्णुं भक्त्या सम्पूजयेद्गुरुम्। वैदिकेनैव मन्त्रेण जातीपुष्पैः समर्चयेत्। पायसेनैव नैवेद्यं शर्करासंयुतेन च। दत्त्वा निवेद्यं देवस्य प्रार्थयेत् प्रार्थयेद्व्रती"।

व्योमव्रत भविष्यपु० अगस्त्यार्घ्यदानानन्तरम् "सितचन्दनतोयेन व्योम स्थाप्य विलिप्य च। कर्णिकाकल्पितैः पद्मैः सम्पूज्य प्रणिपत्य च"। कर्णिकाकल्पितैः कर्णिकामण्डिते 'बकुले विमले सौम्ये निश्छिद्रे पुष्पिते सति"। पुष्पिते विकसिते। "मध्ये केसरजालस्य व्योम स्थाप्यं सुशोभनम्। अङ्कुरपर्णपात्रन्तु सर्वगन्धसमन्वितम्। अपि संस्थापयित्वा च भास्करस्य सुरोत्तम!। पूजयेत् करवीरैस्तु तथा रक्तैश्च चन्दनैः। धूपञ्च गुग्गुलं दद्यात् प्रणम्य शिरसा रविम्। कुङ्कुमं पूर्वपार्श्वे तु दद्याद्व्योम्नः समाहितः। दक्षिणे चागुरुं दत्त्वा पश्चिमे चन्दनं सितम्। चतुः समस्तोत्तरे तु दद्याद्व्योमविचक्षणः। दद्यान्मध्ये शुभं पुण्यं रक्तचन्दनमादरात्। पूजयेद्विविधैः पुष्पैस्तथा साऽगुरुचन्दनैः। धूपं कृष्णागुरुं दद्यात् सघृतं वापि गुग्गुलुम्। वासांसि च सूक्ष्माणि विकीर्णानि निवेदयेत्। पायसं घृतसंयुक्तं घृतदीपांश्च दापयेत्। सर्वं निवेद्य मन्त्रेण ततो गच्छेत् प्रदक्षिणम्। प्रणम्य शिरसा भानुमुत्थायैव क्षमापयेत्। सर्वोपहारसंयुक्तं वलिं देवाय चाहरेत्। खखोल्काायेति मन्त्रेण सूर्यायामिततेजसे। अनेन विधिनाद्देवं सम्पूजयित्वा पुरा रविम्। अहं प्राप्तवानाद्य प्रसादाद्भास्करस्य तु"।

व्योमषष्ठीव्रत भविष्यपु० "भाजनं तत्र सम्पूर्णं मधुना च समन्वितम्। दद्यात् कृष्णतिलानां तु प्रस्थमेकन्तु मागधम्। त्रिगुणं तण्डुलानां च पृथक् प्रस्थं च कारयेत्"। भाजनं प्रस्थचतुष्टयपूरणीयं पात्रं त्रिगुणं प्रस्थत्रयम् पृथगिति घृतमधुतिलतण्डुलानाम्भाजनानि पृथक् कुर्य्यात्। "गन्धपुष्पैस्तथा धूपैर्नानावाद्यैर्विशेषतः। तत सम्पूजयेत् सूर्यं नानावाद्यसमन्वितम्। सूर्यं गगनस्थम्। "पूजयेच्च ततो व्योम वलिं दिक्षु प्रपूजयेत्। व्योमदेवगृहे चैव सर्वभूतानि याजयेत्। व्योमदेव गृहे तत्र यत्र व्योम प्रतिष्ठितम्"। व्योमनिर्माणं विष्णुधर्मोत्तरात् "चतुरस्रं भवेन्मूले तत्र वृत्तं महाभुजम्। ततोऽन्यत् चतुरस्रञ्च पद्मे संस्थितं शुभम्। भद्रपीठमये प्रोक्तो व्योमभागस्तुरीयकः। स्तम्भो वैश्वानरोऽथास्य मध्यभागः प्रकीर्त्तितः। भद्रपीठप्रदेशञ्च तत्र पद्मं निवेशयेत्। शुभाष्टपत्रं तन्मध्ये कर्णिकायां दिवाकरः। पत्राष्टके न्यसेत्तस्य दिक्पालान् कर्णतो दिशम्"। "य एवं कुरुते षष्ठ्यां सन्ध्याकाले वलिं रवेः। स सूर्यलोकमासाद्य मोदते शाश्वतीः समाः"।

व्रतराजतृतीयाव्रत देवीपु० "तृतीयायान्तु शुक्लायां सिन्दूरवस्त्रयुगे शुभे। रोचनामितकर्पूरैः शिवोमां पूजयेत्ततः। हेमरत्नफलैर्वस्त्रैः मन्त्रयुग्ममुदीरयेत्। समस्तकामफलदं यत्तत् पूर्वमुदाहृतम्। ततो जपार्चने होमं कर्त्तव्यं द्विजसत्तम!। अवियोगाय नारीणां व्रतराजं सदा हितम्। सहेमपुष्परत्नाद्यं सवस्त्रं दापयेत्तु तत्। महापुण्यं महाभाग्यं सर्वकामप्रदायकम्। सुतभ्रातृवियोगस्तु न भवेत्तेन भो द्विज!। न व्याधिर्नोपसर्गश्च यावज्जन्तुर्जो भवेत्। तावत्कालमुमालोके राजते मोदते चिरम्"।

तदुक्तं । तत्र चार्च्चयेद्देवं नरसिंहाकृतिं विभुम् । प्रसन्नमधरादारवीक्षणार्पितार्णिकम् । अशेषभयविध्वंस चतुरं पुरुषं हरिम् । अभयं भयतप्तानां ददतं दत्तवरम्” इत्यादि । “होमाच्च द्विगुणं प्रोक्तं तर्पणं मन्त्रनिश्चय । तस्य तद्द्विगुणं प्रोक्तो जप एव विधिक्रम । नियोगारम्भसमये नियमान् प्रतिपालयेत् । अथ चाहरहः कुर्व्वन् नक्तकालं समापयेत्” । नियमान् मौनादीन् । अथवाहरहः एवं नक्तकालं समापयेत् । अथ होमतर्पणजपान् अहरहः प्रतिदिनं संख्या च सङ्कल्पितहोमसंख्यापेक्षया । “हविष्याशी जितक्रोधो यतवाक्कायमानसः । नित्यं त्रिषवणं स्नायात् सदाचाररतो शुचिः । न चान्तकथोऽनग्निर्ब्रह्मचारी जितश्रम” । य एवं तत् कुरुते मर्त्त्यः श्रद्धाभक्तिसमन्वितः । स सर्व्वार्त्तिविनिर्मुक्तो शान्तिमाप्नोति नैष्ठिकीम्” ।

शान्तिपञ्चमीव्रतं भविष्यपु० “तद्वाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः । यत्रालिख्य नरो नागान् कृष्णवर्णादिवर्णकैः । पूजयेद्गन्धपुष्पैस्तु सर्पिर्गुग्गुलुपायसैः । तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः । आसप्तमात् कुलात्तस्य न भयं नागतो भवेत् । तस्मात् सर्व्वप्रयत्नेन नागान् संपूजयेद्बुधः । तथैवाश्वयुजे मासि पञ्चम्यां कुरुनन्दन ! । कृत्वा कुशमयान्नागानिन्द्राण्या सह पूजयेत् । वस्त्रैर्वा विधिवन्नागान् शुचिर्भक्त्या समन्वितः । पूजयेत् कुरुशार्दूल ! तस्य शेषादयो नृप ! । नागाः प्रीता भवन्तीह शान्तिमाप्नोति वा विभो ! । प्रशान्तिलोकमासाद्य मोदते शाश्वतीः समाः” ।

शान्तिव्रतं वराहपु० “शान्तिव्रतं प्रवक्ष्यामि शृणुष्वैकमना नृप ! । येन चीर्णेन शान्तिः स्यात् सर्व्वदा गृहमेधिनः । पञ्चम्यां शुक्लपक्षस्य कार्त्तिके मासि पार्थिव ! । आरभ्य वर्षमेकन्तु भुञ्जीयादम्लवर्जितम् । नक्तन्तु पूजयेद्देवं हरिं शेषोपरि स्थितम् । एवं यः कुरुते भक्त्या व्रतमेतन्नराधिप ! । तस्य शान्तिर्भवेन्नित्यं नागेभ्यश्चाभयं तथा । शेषाहिभोगशयनस्थमपारमूर्त्तिं सम्पूज्य यज्ञपुरुषं पतगेन्द्रकेतुम् । येऽनन्तमन्तमधुरं सितपञ्चमीषु तेषां न नागजनितं भयमस्ति किञ्चित्” ।

शाम्भरायणीव्रतं भविष्योत्तरे “तस्मात् पार्थ ! प्रयत्नेन प्रतिमासं समाहित । मासि मास्यच्युतं पूज्य भवेथा[illegible]नास्तथा । ये शाम्भरायणिकथाचारितव्रतेन वर्त्तन्ति सम्यग्विधिना सुधियो नयन्ति । ते स्वर्गलोकमधिरुह्य कृताधिवासाः कल्पायुतं शतशतैरपि न च्यवन्ति” ।

शिवाचतुर्थीव्रतं भविष्योत्तरे “लवणैर्धान्यकैर्युक्तं जीरकं मरिचानि च । हिङ्गु शुण्ठीं हरिद्रां च सर्व्वं परिकरं तथा । चतुर्थ्यामेकभक्ताशी सकृद्दत्त्वा कुटुम्बिने । गृहेषु चरुं तथा शिवायुक्तानि भारत ! । एतच्छिवाव्रतं नाम लक्ष्मीलोकप्रदायकम्” ।

शिवचतुर्द्दशीव्रतं मत्स्यपु० “शृणुष्वावहितो ब्रह्मन् वक्ष्ये माहेश्वरं व्रतम् । त्रिषु लोकेषु विख्यातं नाम्ना शिवचतुर्द्दशी । मार्गशीर्षे त्रयोदश्यां सितायामेकभोजनः । प्रार्थयेद्देवदेवेश त्वामहं शरणं गतः । चतुर्द्दश्यां निराहारः समभ्यर्च्य च शङ्करम् । सुवर्णवृषभं कृत्वा भोजयेच्चापरेऽहनि । एवं नियमकृत् सुप्त्वा प्रातरुत्थाय मानव । कृतस्नानजपः पश्चादुमया सह शङ्करम् । पूजयेत् कमलैः शुक्लैः गन्धधूपानुलेपनैः” । “पञ्चदश्यां तत पूज्य विप्रान् भुञ्जीत वाग्यतः । तद्वत्कृष्णचतुर्द्दश्यामेतत् सर्व्वं समाचरेत् । चतुर्द्दशीषु सर्व्वासु कुर्य्यात् पूर्व्ववदर्च्चनम् । ये तु मासविशेषास्तु तान्निबोध क्रमादिह । मार्गशीर्षादिमासेषु क्रमादेतदुदीरयेत्” । आश्विनान्तेष्विति शेषः इत्यादि ।

शिवनक्तव्रतं भविष्यपु० “कृष्णाष्टमीं तु नक्तेन कृत्वा कृष्णचतुर्द्दशीम् । इह भोगानवाप्नोति परत्र शिवमृच्छति” ।

शिवरथव्रतं विष्णुधर्म्मोत्तरे “कृत्वैकभक्तं हेमन्ते माघमासे तु यन्त्रितः । माघान्ते च रथं कुर्य्याच्छिवस्तोत्रोपशोभितम् । श्वेतैश्चतुर्भिः संयुक्तं वृषभैः समलङ्कृतम् । शोभितं ध्वजमालाभिश्चित्रचामरदर्पणैः । तण्डुलाढकपिष्टेन लिङ्गं कृत्वा सवेदिकम् । विन्यस्य रथमध्ये तु पूजयेत् कृतलक्षणम् । तद्रात्रौ राजमार्गे च शङ्खभेर्य्यादिभिः स्वनैः । भ्रामयित्वा ततः पश्चाच्छिवायतनमानयेत् । तत्र जागरपूजाभिः प्रदीपाद्युपशोभितैः । प्रेक्षणीयप्रदानैश्च क्षपयेत शनैर्निशाम् । प्रभाते स्नापनं कृत्वा तद्भक्तानाञ्च भोजनम् । दीनान्धकृपणानाञ्च यथाशक्त्या च दक्षिणाम् । रथं शोभासमायुक्तं शिवाय विनिवेदयेत् । भुक्त्वा च बान्धवैः सार्द्धं प्रणम्येशं गृहं व्रजेत्” ।

शिवरात्रिव्रतं स्कन्दपु० नागरखण्डे “माघस्य कृष्णपक्षीय तिथिर्या च चतुर्द्दशी । तस्या रात्रिः समाख्याता शिव-

रात्रिरिति हिता ॥ तस्यां सर्वेषु लिङ्गेषु सदा संक्रमते हरः। विशेषादपरे सर्वे ख्याता चैव कथेश्वरे। माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वर ॥ अहं यास्यामि भूपृष्ठे रात्रौ नैव दिवा कलौ। लिङ्गेषु च समस्तेषु चलेषु स्थावरेषु च। प्रपूजयेत् सम्यग्दक्ष सर्वपापविशुद्धये। तस्यां रात्रौ हि मे पूजां यः करिष्यति मानव। मन्त्रैरेतैः सुरश्रेष्ठ। विपाप्मा स भविष्यति"। स्कन्दपु० "माघमासे तु या कृष्णा फाल्गुनादौ चतुर्दशी। सा तु पुण्या तिथिर्ज्ञेया सर्वपापविनाशिनी। शान्तात्मा क्रोधहीनस्तु तपस्वी ज्ञानसंयुतः। तस्मै देयमिदं देवि! गुरुपादानुगे सदा। अन्यथा यो ददातीदं स दाता नरकं व्रजेत्। वर्षं वर्षं महादेवि! नरोनारी पतिव्रता। घोषयामि जगत् सर्वे कोमा भक्त्या प्रपूजयेत्। शिवमन्त्रैर्जपं कृत्वा होममर्चनदीपनम्। जागरं शिवरात्र्यान्तु शिवं पश्येत् समाहितः। मम भक्तो नरो देवि! शिवरात्र्युपोषकः। गणत्वमक्षयं दिव्यमक्षयं शिवशासनम्। सर्वं कृत्वा तु भजते भोगानस्तसमाशान्। एवं द्वादशवर्षाणि शिवरात्र्युपोषकः। योऽसौ जागरते रात्रिं मनुजः स्वर्गमाप्नुयात्। अकृत्वा मां न जानाति व्रतमेतद्दृढाक्षतम्। शिवञ्च पूजयित्वा यो जागर्त्ति च चतुर्दशीम्। मातुः पयोधररसं न पिबेत् स कदाचन। यदीच्छेच्चाक्षयान् भोगान् दिवि देवसमः पुमान्। आगमोक्तविधिं कृत्वा प्राप्नोति सकलं फलम्"।

शिवलिङ्गव्रत शिवधर्मोत्तरे "सितचन्दनतोयेन स्नाप्य लिङ्गं विलेप्य च। श्वेतैर्विकसितैः पद्मैः सम्पूज्य प्रणिपत्य च। पङ्कजे विमले सौम्ये निश्छिद्रे पुष्पिते घने। सौम्ये रम्ये मध्ये केशरजालस्य स्थाप्य लिङ्गं कनीयसम्। अङ्गुष्ठमात्रं विधिवत् सर्वगन्धमयं शुभम्। स्थाप्य दक्षिणमूर्त्तौ तु बिल्वपत्रैः समर्चयेत्। एवं योऽर्चयते लिङ्गं पद्मे गन्धमयं शुभम्। सर्वपापविनिर्मुक्तः शिवमेवाभिगच्छति। एतद्व्रतोत्तमं गुह्यं शिवलिङ्गं महाव्रतम्। भक्तस्य ते मयाख्यातं न देयं यस्य कस्यचित्"।

शिवव्रत कालोत्तरे "अतः परं प्रवक्ष्यामि व्रतानान्तु यथाक्रमम्। अष्टम्यान्तु चतुर्दश्यां पक्षयोरुभयोस्तथा। उपोष्य संयतो भूत्वा त्रिविधेनान्तरात्मना। ततोऽपराह्णे शुचिना विशेषात् पूजयेच्छिवम्। पूर्वोक्तेन विधानेन जपहोमादिमाचरेत्। पूजयेत् परया भक्त्या गुरुमाक् साधनादिकैः। ततस्तु पञ्चगव्येन प्राशयेत् सुव्रतः स्वयम्। अमक्त्वा? पमस्य ह्यर्घ्य हविष्यान्नेन वर्त्तनम्। अनेन विधिना यस्मात् यावज्जीवं व्रतं चरेत्। पिता पितामहश्चैव तथैव प्रपितामहः। वसन्ति शिवलोकेषु शिवव्रतप्रभावतः। एतच्छिवव्रतं नाम व्रतानामुत्तमोत्तमम्"। तत्रैवान्यत्र "पौषमासे तु सम्प्राप्ते पक्षयोरुभयोः स्मृतः। चतुर्दश्यामथाष्टम्यां पौर्णमास्यामथापि वा। नक्तं निशायां विधिवत् ततः काम्यं समाचरेत्। विशेषपूजा तत्रैव कर्त्तव्या शुद्धचेतसा। नैवेद्यं पायसं प्रस्थं सगुडं क्षीराज्यसंस्कृतम्। रुद्रसंख्यांस्तु वै विप्रान् भोजयेच्चैव दक्षयेत्। त्रिंशत्पलमात्रां प्रशस्तं यावपिष्टेन निर्मिताम्। सशृङ्गखुरशाङ्गूलकृतभूषान्तु कारयेत्। शिवाय तु प्रदातव्या कपिला गुरवे ततः। स्वयाष्टमसमायुक्ता व्रतपुण्यमतः शृणु। धर्मसाध्यम् "अनेन विधिना माघे खड्गं पिष्टमयं शिवे। समर्प्य च विधानेन चक्रवर्त्तिपदं लभेत्। फाल्गुने तु तथा चक्रं निवेद्य तत्पदं लभेत्। चैत्रे शिवं पिष्टमयं निवेद्य च शिवाय वा। स संस्तुतिं ब्रह्महत्यां शिवलोकमवाप्नुयात्। वैशाखे मासि दण्डाय शिवस्याग्रे निवेदयेत्। हस्तार्द्धं पिष्टकं कार्यं पूजान्ते तु निवेदयेत्। मुच्यते सर्वपापेभ्यो रुद्रलोके महीयते। ज्यैष्ठे पिष्टमयं खड्गं शिवाय विनिवेदयेत्। मुच्यते तु कृतघ्नत्वाद्रुद्रलोके तु गच्छति। आषाढे पिष्टजं पात्रं शिवाय विनिवेदयेत्। मुच्यते दुष्कृतैः सर्वैरिह जन्मनि सञ्चितैः। ध्वजं पिष्टमयं यस्तु शिवस्याग्रे निवेदयेत्। श्रावणे तु विधानेन सोऽक्षयं मोक्षमाप्नुयात्। मासि भाद्रपदे यस्तु गदां पिष्टमयीं ददेत्। निधीशस्य स सम्प्राप्य शिवलोके महीयते। मासि चाश्वयुजे शूलं दत्त्वार्द्धं पिष्टसम्भवम्। शिवाय पुरतो देयं भ्रूणहत्यां व्यपोहति। कार्त्तिके तु गदाचक्रं शिवस्याग्रे निवेदयेत्। सप्तजन्मकृतं पापं दहत्यग्निरिवेन्धनम्। मासे वै मार्गशीर्षे तु कमलं पिष्टसम्भवम्। शिवाय विधिना देयं सर्वैश्वर्य्यमवाप्नुयात्। सर्वेषाञ्चैव नक्तन्तु व्रतानां कीर्त्तितं मया। नित्यपूजान्तु निर्वर्त्य काम्यपूजान्तु कारयेत्"। तत्रैवान्यत्र "अथ वै मार्गशीर्षे तु यस्तु पिष्टमयं ददेत्। शिवं सम्पूज्य विधिवत् सूर्य्यलोके महीयते। दिव्यं वर्षसहस्रन्तु तदन्ते स्यान्महीपतिः। पौषे पिष्टमयी दत्तो शिवस्याग्रे निवेद्यते। त्रि-सप्तकुलसंयुक्तः शिवलोके महीयते।

दिव्यं वर्षसहस्रन्तु तदन्ते स्यान्महीपतिः । चक्रवर्त्ती महावीरः सर्व्वैश्वर्य्यसमन्वितः । माघे चाम्बरं यस्तु शिवाय विनिवेदयेत् । उद्धरेत्सोऽपि नरकात् स्वपितॄन् रौरवादितः । शिवलोके तु वसति दिव्यवर्षायुतत्रयम् । तदन्ते तु महीं लब्ध्वा न च खण्डां भुनक्ति सः । फाल्गुने वृषयूथन्तु पिष्टोत्थं रुद्रसंख्यया । निवेद्य तु शिवस्याग्रे त्रैलोक्याधिपतिर्भवेत् । दिव्यं वर्षसहस्रन्तु तदन्ते स्यान्महीपतिः । चक्रवर्त्ती महावीरः सर्व्वैश्वर्य्यसमन्वितः । चैत्रे स्फटिकबिन्दुमयं दासदासीसमन्वितम् । गृहोपकरणैर्युक्तं विचित्राङ्गणचर्च्चितम् । पूजान्ते परया भक्त्या शिवाय विनिवेदयेत् । दिव्यवर्षशतान्यष्टौ रुद्रलोके महीयते । जातिस्मरस्तदन्ते तु चक्रवर्त्तित्वमाप्नुयात् । मासि वैशाखसंज्ञे तु सप्तव्रीहिशरावकान् । शिवाय पुरतो दद्यात् पूजान्ते प्रीतचेतसा । स याति शिवसायुज्यं बन्धुभिः सहितो नरः । पलानां द्वे शते यस्तु गुग्गुलन्तु दहेत् सुधीः । ज्यैष्ठे मासि शिवस्याग्रे पूजान्ते भक्तिसंयुतः । त्रिसप्तकुलसंयुक्तः शिवलोके महीयते । तदन्ते पृथिवीं भुङ्क्ते न च खण्डां ससागराम् । बलिमण्डलकं कार्य्यं आषाढे शूलपाणिनः । नानाभक्ष्यैर्विरचितं नानाभक्ष्यसमन्वितम् । नानाचित्रसमाकीर्णं कर्त्तव्यं बलिमण्डलकम् । सपूज्य परमेशानं ततस्तस्य निवेदयेत् । पितॄन् पितामहांश्चैव उद्धृत्य प्रपितामहान् । पुत्रपौत्रसमायुक्तः शिवलोके महीयते । दिव्यवर्षसहस्राणि तदन्ते पृथिवीपतिः । श्रावणे मासि देवस्य विमानं पुष्पसम्भवम् । पूजावसाने दातव्यं विचित्ररचनाकुलम् । वर्षायुतप्रमाणन्तु रुद्रलोके महीयते । योगीशो जायते शान्तो येन मोक्षं व्रजेत् सः । मासि भाद्रपदे यस्तु रुद्रपूजां चरेत् तदा । गुग्गुलं प्रथमं धूपं सरदारु ततो दहेत् । बिल्वबीजं घृतं तद्वत् तथा नानाघृताश्रितम् । पश्चात् सागुरु दद्याद्वै धूपं सर्व्वात्मना विभोः । मासमेकं दहेद्यस्तु नैरन्तर्य्येण भक्तितः । याति सायुज्यतां शम्भोः सपुत्रः सहबान्धवः । यस्त्वर्कपत्रपुटकं पूरयेत् क्षीरसर्पिषा । मासमश्वयुजं शम्भोर्नैरन्तर्य्येण भक्तितः । तस्य पुण्यफलं वक्तुं न शक्तोऽस्मि षडानन ! । तत्कुले पतिता ये तु हिमाहिमाहता पुनः । ते प्रयान्ति महाभागा रुद्रलोके यथासुखम् । वर्षायुतायुतं साग्रं तदन्ते तु नरेश्वराः । जायन्ते शिवभक्ताश्च ज्ञानिनो वीतकल्मषाः । शिवदीक्षां समासाद्य ते यान्ति परमाङ्गतिम् । वस्त्राहृतमिक्षुरसं पुटकन्तु शिवाग्रतः । पूजान्ते दापयेद्यस्तु मासि मार्गे च कार्त्तिके । देहान्ते रुद्रलोके तु मोदते सह बान्धवैः । व्रतान्ते चैव सपूज्य शिवभक्तान् यथाविधि । हैमवस्त्रान्नपानैश्च वित्तशाठ्यं विना द्विज !" । पद्मपु० "आषाढादिचतुर्मास्यां वर्जयेन्नखकृन्तनम् । वृन्ताकभक्षणञ्चैव मधुसर्पिर्घटान्वितम् । कार्त्तिक्यान्तु पुनर्हैमं ब्राह्मणाय निवेदयेत् । रुद्रलोकमवाप्नोति शिवव्रतमनुत्तमम्" ।

शिवाचतुर्थीव्रतं भविष्यपु० "शिवा शान्ता सुखा राजन् ! चतुर्थी त्रिविधा स्मृता । मासि भाद्रपदे शुक्ला शिवा लोकेषु पूजिता । तस्यां स्नानं तथा दानमुपवासो जपस्तथा । क्रियमाणं शतगुणं प्रसादाद्दन्तिनो नृप ! । गुडलवणघृतानां दानं शुभकरं स्मृतम् । गुडपूपास्तथा वीर ! पुण्यं ब्राह्मणभोजनम् । चतुर्थ्यां नरशार्दूल ! पूजयेन्न सदा स्त्रियः । गुडलवणपूपाभिः श्वश्रूश्वशुरमातरः । ताः सर्वाः सुभगाः स्युर्वै विघ्नेशस्यानुमोदनात् । कन्यकाश्च विशेषेण विधिमानेन पूजयेत्" ।

शिवोपवीतव्रतं शिवधर्म्मोत्तरे "पौर्णमास्यां तथाषाढ्यां शिवं सपूज्य यत्नतः । उपवीतं शिवे दद्याच्छिवभक्तांश्च भोजयेत् । पुनरेव च कार्त्तिक्यां पूज्य शम्भुं समापयेत् । यतीनां दक्षिणां दत्त्वा छत्रवस्त्रादिपूर्व्विकाम् । य कुर्य्यात् सकृदप्येवं चातुर्मास्यं पवित्रकम् । कल्पकोटिसहस्राणि रुद्रलोके महीयते" ।

शीलतृतीयाव्रतं पद्मपु० "अनग्निपक्वमश्नाति तृतीयायान्तु यो नरः । गां दत्त्वा शिवमभ्येति पुनरावृत्तिदुर्लभम् । इहदानन्दकृत् पुरा शीलव्रतमिदं स्मृतम्" ।

शीलावाप्तिव्रतं विष्णुधर्म्मोत्तरे "भगवन् ! कर्म्मणा केन शीलवान् पुरुषो भवेत् । कुलजातिश्रुतेभ्यस्तु शीलमेव विशिष्यते" मार्कण्डेय उवाच "आषाढायणतीते तु मासमेकं दिने दिने । पूर्व्ववत् पूजयेद्देवं वराहमपराजितम् । घृतेन स्नापयेद्देवं घृतेन जुहुयाद्धरिम् । घृतं द्विजेभ्यो दद्याच्च घृतमेव निवेदयेत् । त्रिरात्रोपोषितः पौष्यां घृतपात्रेण च द्विजम् । पूजयेच्च सुवर्णेन यथाशक्ति नराधिप ! । कृत्वा व्रतं मासमिदं यथोक्तमासाद्य नाकं रुचिरं मनुष्यः । मानुष्यमासाद्य च शीलवान् स्यात् प्राप्नोति वृद्धिं चिरजीवितञ्च" ।

शुक्रव्रतं भविष्योत्तरोक्तम् "शुक्र ज्येष्ठादौ संप्राप्य पूजये-

नक्तभोजन । पूर्वोक्तक्रमयोगेन द्विजसन्तर्पणेन च । कृच्छ्रे त्वथ संप्राप्ते सौवर्णं कारयेत्ततम् (शुक्रम्) । रौप्ये वा ताम्रपात्रे वा स्थापयित्वा भृगो द्रुतम् । संपूज्य परया भक्त्या श्वेतवस्त्रानुलेपनैः । कृष्णे तस्य प्रदातव्यं पायसं घृतसंयुतम्" ।

शुचिव्रत वह्निपु० "एवं वा द्वादश मासानुपोष्यैकादशीं नृप । य इदं करोति शुद्धात्मा कृतकृत्यः सुखी भवेत् । सुनामद्वादशी पूज्या नाम्ना द्वादशभिस्तथा । द्वादश धेनवो देया हरिः कामान् प्रयच्छति । दिवि देवाः स देवेन्द्राः कृत्वा कर्माण्यनेकशः । पश्चादाराधयन्तीह हरिं शुचिव्रतेन हि" ।

शुभद्वादशीव्रतं वराहपु० "शृणु राजन् ! महाभाग । शुभ व्रतमनुत्तमम् । येन सम्प्राप्यते विष्णुः शुभेनैव न संशयः । मासि मार्गशिरे पुण्ये प्रथमाद्दात् समाचरेत् । एकभक्तं सिते पक्षे यावत् स्याद्दशमी तिथिः । ततो दशम्यां मध्याह्ने स्नात्वा केशवमर्चयेत् । भुक्त्वा चतुष्पथ मागच्छेद् द्वादश्यां शुद्धमानसः । केशवेति हरिं पूज्य दद्यात्तत्प्रीतये तिलान् । सहिरण्यं तथा कृष्णद्वादश्यां प्रयतो नृप ! । तामप्येवमुषित्वा च यवान् दद्याद् द्विजातये । कृष्णायेति हरिर्वाच्यो दाने होमे तथार्चने । चातुर्मास्यामथैवन्तु उषित्वा राजसत्तम ! । चैत्रादिषु पुनस्तद्वदुपोष्य प्रयतः शुचिः । सक्तुपात्राणि विप्राणां सहिरण्यानि दापयेत् । श्रावणादिषु मासेषु तद्वद्गोविन्दमर्चयेत् । त्रिषु मासेषु यावत् कार्त्तिक स्यादिहागतः । तस्यां च चपयित्वा दशम्यां प्रयतः शुचिः । अर्चयित्वा हरिं भक्त्या भावनाम्ना त्रिविक्रमम्" ।

शुभसप्तमीव्रत पद्मपु० "अन्यामपि प्रवक्ष्यामि शोभनां शुभसप्तमीम् । यामुपोष्य नरो रोगात् शोकदुःखात् प्रमुच्यते । शुक्ले चाश्वयुजे मासि कृतस्नानजपः शुचिः । वाचयित्वा द्विजश्रेष्ठानारभेच्छुभसप्तमीम् । कपिलां पूजयेद् भक्त्या गन्धमाल्यानुलेपनैः । नमामि सूर्यसम्भूतामशेषभुवनालयाम् । त्वामहं शुभकल्याणशरीरां सर्वसिद्धये । अथाहृत्य तिलप्रस्थं ताम्रपात्रे कृतं नवम् । काञ्चनं वृषभं तद्वद्वस्त्रमाल्यगुडान्वितम् । फलैर्नानाविधैर्भक्ष्यैः सर्वोपस्करसंयुतैः । दद्याद्द्विकालवेलायामर्यमा प्रीयतामिति । पञ्चगव्यं च सम्प्राश्य स्वपेद्भूमौ विमत्सरः । ततः प्रभाते सुस्नातो भक्त्या सन्तर्पयेद् द्विजान् । अनेन विधिना दद्यात् मासि मासि सदा नरः । वाससी वृषभं हैमं तद्वद्धेन्वोऽश्वपञ्चकम् । वत्सरान्ते च शयनं सुदृढं सद्गुणान्वितम् । सोपधानकविश्रामभाजनासनसंयुतम् । ताम्रपात्रे तिलप्रस्थं सौवर्णवृषभैर्युतम् । दद्याद्वेदविदे सर्वं विश्वात्मा प्रीयतामिति" ।

शूलदानव्रत शिवधर्मोत्तरे "अमावस्यां निराहारः अब्दमेकं निरन्तरम् । शूलं पिष्टमयं कृत्वा वर्षान्ते विनिवेदयेत् । शिवाय राजतं पद्मं सौवर्णकृतकर्णिकम् । भक्त्या च चिन्तयेत् मूर्ध्नि शेषं पूर्ववदाचरेत् । कामतोऽपि कृतं पापं भ्रूणहत्यादिकञ्च यत् । तत् सर्वं शूलदानेन नश्यत्येव न संशयः । महाशृङ्गविमानेन नरो नारीसमन्वितः । युगकोटिशतं साग्रं शिवलोके महीयते" ।

शैलव्रतं विष्णुधर्मोत्तरे "अथातः सम्प्रवक्ष्यामि तव शैलव्रतं शुभम् । महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः । चैत्रशुक्लमारभ्यात् प्रत्यहं दिनसप्तकम् । तेषां सम्पूजनं कृत्वा बहिः स्नानं समाचरेत् । गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा । यथैव होमं तथा कुर्याद् दद्याद्धेमं यथानघ । नित्यं यथाक्रमश्रेयात् कुर्यात् संवत्सरं व्रतम् । तस्यावसाने दद्यात्तु यवप्रस्थांश्च विंशतिम् । वाचकाय द्विजेन्द्राय सुवर्णं काञ्चनं तु" ।

शैवनक्षत्रपुरुषव्रत विष्णुधर्मोत्तरे "उपवासेष्वशक्तानां नक्तं भोजनमिष्यते । यस्मिन् व्रते तदप्यत्र श्रूयताम् महत । शिवनक्षत्रपुरुषं शिवभक्तिमतां नृणाम् । तस्मिन्नक्षत्रयोगे च पुराणज्ञाः प्रचक्षते । फाल्गुनस्यामले पक्षे यदा हस्तः प्रजायते । तदा प्राह्य व्रतं चैतस्तेनाभ्यर्च्य शूलिनम् । शिवायेति च हस्तेन पादौ सम्पूजयेद्विभोः" ।

शैवमहाव्रतं विष्णुधर्मोत्तरे "प्रतिमासं प्रवक्ष्यामि शैवव्रतमनुत्तमम् । धर्मकामार्थमोक्षार्थं नरनार्यादिदेहिनाम् । पौषे मासि तु सम्प्राप्ते य कुर्यान्नक्तभोजनम् । सत्यवादी जितक्रोधः शालिगोधूमगोरसैः । पक्षयोरष्टम्यौ यत्नादुपवासेन वर्त्तयेत् । त्रिसन्ध्यमर्चयेदीशमग्निकार्यञ्च भक्तितः" । वर्षावध्यम् "त्रिस्नानञ्चाग्निहवनं भूशय्या नक्तभोजनम् । पक्षयोरुपवासेन चतुर्दश्यष्टम्यौ क्षिपेत् । इत्येवमादिनियमैराचरेत शिवव्रतम् । शिवभक्ता तु या नारी ध्रुवं सा पुरुषो भवेत् । स्त्रीत्वमत्युत्तमं सा चेत् काङ्क्षते शृणुयाद् व्रतम्" ।

शैलोपवासव्रत भविष्यपु० "चतुर्दश्यां तथाष्टम्यां पक्षयो: शुक्लकृष्णयोः। योऽब्दमेकं न भुञ्जीत शिवार्चनरतो नरः। यत् पुण्यमश्वमेधोक्तं शतं सत्रयाजिनाम्। तत् पुण्यं सकलं तस्य शिवलोकञ्च गच्छति"।

शौर्यव्रत वराहपु० "अत परं प्रवक्ष्यामि शौर्यव्रतमनुत्तमम्। येन भीरोरपि महत् शौर्यं भवति तत्क्षणात्। मासि चाश्वयुजे शुद्धा नवमी समुपोषिता। सप्तम्यां कृतसङ्कल्पं स्थित्वाष्टम्यां निराहार। नवम्यां प्राशयेत् पिष्टं प्रथमं भक्तितो नृप। ब्राह्मणान् भोजयेद्भक्त्या देवीञ्चैव तु पूजयेत्। दुर्गां देवीं महाभागां महामायां महाप्रभाम्। एवं संवत्सरं यावदुपोष्य विधिवन्नृप!। व्रतान्ते भोजयेद्दीनान् यथाशक्त्या कुमारकान्। हेमवस्त्रादिभिः स्नानान् पूजयित्वा तु शक्तितः। पश्चात् क्षमापयेत्तांस्तु देवी मे प्रीयतामिति। एवं कृत्वा भ्रष्टराज्योऽलभेद्राज्यं न संशय। अविद्यो लभते विद्यां भीरुः शौर्यञ्च विन्दति"।

श्रद्धाव्रत पद्मपु० "कृत्वोपलेपनं शम्भोरग्रतं केशवस्य च। स सर्वपापनिर्मुक्तः शिवलोके महीयते। राजा भवति सम्भूतः सार्वभौमो महेश्वर। एतत् श्रद्धाव्रतं नाम बहुकल्याणकारकम्"।

श्रवणद्वादशीव्रत भविष्योत्तरे "एकादशी यदा शुक्ला श्रवणेन समन्विता। विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा। एकादश्यां सोपवासो रात्रौ सम्पूजयेद्धरिम्। सौवर्णसौवर्णपात्रे वा दारुवंशमयेऽपि वा। आच्छाद्य पात्रं वासोभिश्छत्रैः पल्लवमितैः। मार्गचर्मोपानहौ च भक्त्या वा शक्तयपेक्षया। तिलाढकेन वित्ताढ्य प्रस्थेन कुडवेन वा। अन्नाभे यवगोधूमैः फलैः गुडतिलैर्भवेत्। पुष्पैर्गन्धैः फलैर्धूपैः कालोत्थैरर्चयेद्धरिम्। नानाविधैश्च नैवेद्यैर्भक्ष्यभोज्यैर्गुडादनैः। स्ववित्तस्यानुसारेण बहिरग्रञ्च कारयेत्। मन्त्रेण तु शतगुणं भक्त्या लक्ष गुणोत्तरम्। भक्तिमन्त्रगुणोपेतं कोटिकोटिगुणोत्तरम्। एभिर्मन्त्रपदैस्तत्र पूजयेद्गरुडध्वजम्। उपहारैर्नरश्रेष्ठ! शुचिर्भूत्वा समाहित"। "एषा व्युष्टिः समाख्याता एकादश्यां मया तव। पूर्वमेव समाख्याता द्वादशी श्रवणान्विता। उपोष्यैकादशीं पश्चाद् द्वादशीमप्युपोषयेत्। न चात्र विधिलोपः स्यादुभयोर्देवता हरिः"। एकादश्यां द्वादश्यां चान्यतरस्यां वा श्रवणयुक्तायां श्रवणयुक्तोपवासेनैव व्रतद्वयसिद्धिः एकस्मिन् मतं पूर्वस्यां तिथिमुपोष्य पश्चाद्पारयित्वा नान्योपोष्या इति यो विधिलोपः स एकदेवताकत्वेन न भवतीत्यर्थः। "बुधश्रवणसंयुक्ता द्वादशी सङ्गमोदकम्। स्नानं दध्योदनं सम्यगुपवासः परो विधिः। सगरेण ककुत्स्थेन धुन्धुमारेण गाधिना। एतैश्चान्यैश्च राजेन्द्र! कामाप्त्यै द्वादशीव्रतम्। सा द्वादशी बुधयुता श्रवणेन सार्द्धं सा चौ जयेति कथिता ऋषिभिर्नभस्ये। तामादरेण समुपोष्य नरोऽमरत्वमाप्नोति पार्थ! अणिमादिगुणोपपन्नम्"।

विष्णुधर्मोत्तरे "उपवासासमर्थानां किं स्यादेकमुपोषितम्। महाफलं महादेव! तन्ममाचक्ष्व पृच्छतः"। हंस उवाच "या राम! श्रवणोपेता द्वादशी महती तु सा। तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम्। प्राप्नोत्ययत्नात् धर्मज्ञ! द्वादशद्वादशीफलम्। दध्योदनयुतं तत्र जलपूर्णं घटं द्विजे। वस्त्रवेष्टितं दत्त्वा छत्रोपानहमेव च। न दुर्गतिमवाप्नोति जातिमप्राप्य विन्दति। अक्षय्यं स्थानमाप्नोति नात्र कार्या विचारणा। श्रवणद्वादशीयोगे बुधवारो भवेद् यदि। अत्यन्तं महती नाम द्वादशी सा प्रकीर्त्तिता। स्नानं जप्यं तथा दानं होमः श्राद्धं सुरार्चनम्। सर्वमक्षयमाप्नोति तस्यां भृगुकुलोद्वह!। तस्मिन् दिने तथा स्नातो यत्र क्वचन सङ्गमे। स्वर्गङ्गास्नानजं राम! फलं प्राप्नोत्यसंशयम्। श्रवणे सङ्गमाः सर्वे परपुष्टिप्रदाः सदा। विशेषात् द्वादशीयुक्ते बुधयुक्ते विशेषतः। तथैव द्वादशी प्रोक्ता बुधश्रवणसंयुता। तृतीया च तथा प्रोक्ता सर्वकामफलप्रदा। तथा तृतीया धर्मज्ञ! तथा पञ्चदशी शुभा"।

श्रीपञ्चमीव्रत गरुडपु० "यदिन्द्रेण पुरा चीर्णं श्रीवियुक्तेन पार्थिव!। श्रीसमृद्धिकरं तद्धि शृणु श्रीपञ्चमीव्रतम्। मार्गशीर्षे सिते पक्षे पञ्चम्यां पन्नगोत्सवे। उपवासस्य नियमं कुर्य्यात् पद्मां स्मरेद्धृदि। स्वर्णरौप्यां यथा शक्त्या ताम्रां मृत्काष्ठजामथ। चित्रपटगतां देवीं लक्ष्मीं क्षमापाल! कारयेत्। पद्मासनां पद्महस्तां पद्मां पद्मदलेक्षणाम्। दिग्गजेन्द्रैः स्नाप्यमानां काञ्चने कलशौघैः"। लक्ष्मीरूपनिर्माणन्तु विष्णुधर्मोत्तरोक्तं वेदितव्यम्। तद्यथा "सुस्थिता श्रीः कर्त्तव्या शङ्खाम्बुजकरा शुभा। सुखस्थिता महाभाग! पद्मे पद्मकरा शुभा। द्विभुजा चारुसर्वाङ्गी सर्वाभरणभूषणा। द्वौ च मूलकरौ मूर्ध्नि कार्यौ विद्याधरौ शुभाविति। ततो

यामद्वये याते निम्नगाया ह्रदाय वा । स्नानं कुर्य्यादसम्भ्रान्तः शक्तिमद्रुपचारतः । देवान् पितॄंश्च सन्तर्प्य ततो देवगृहं व्रजेत् । तत्रस्थां पूजयेद्देवीं पुष्पैस्तत्कालसम्भवैः । फलानि च यथालाभं विरूढं धान्यसञ्चयम् । ततः सुवासिनीं पूज्यां कुङ्कुमैः कुसुमैन च । भोजयेन्मधुरान्नेन प्रणिपत्य विसर्जयेत् । ततस्तु तण्डुलप्रस्थं घृतपात्रेण संयुतम् । ब्राह्मणाय प्रदातव्यं श्रीः प्रीयतामिति । निर्वर्त्त्यैतदशेषेण ततो भुञ्जीत वाग्यतः । मासानुमासं कर्त्तव्यं विधिनानेन भारत ! । श्रीर्लक्ष्मी कमला सम्पत् पद्मा नारायणी तथा । पद्मस्थितिः स्थितिः पुष्टिस्तुष्टिः सिद्धिः क्षमा क्रमात् । मासानुमासं राजेन्द्र ! प्रीयतामिति कीर्त्तयेत् । वस्त्रमण्डपिकां कृत्वा पुष्पगन्धादिवासिताम् । शय्यायां स्थापयेल्लक्ष्मीं सर्वोपस्कारसंयुताम् । सौभाग्याष्टकसंयुक्तां नेत्रपट्टावृतस्तनीम् । सप्तधान्यसमोपेतां रसधातुसमन्विताम् । पादुकोपानहच्छत्रभाजनासनसंस्कृताम् । देवीं सम्पूज्य विधिवद् ब्राह्मणाय कुटुम्बिने । व्यासाय वेदविदुषे यस्मै वा रोचते स्वयम् । सोपस्करां सवत्साञ्च धेनुं दत्त्वा क्षमापयेत् । यः पञ्चमीव्रतमिदं दयितं मुरारेर्भक्त्या समाचरति पूज्य सुगोत्रजाम् । राज्यश्रियं स भुवि भव्यजनोपभोग्यं भुक्त्वा प्रयाति भवनं मधुसूदनस्य । जयामपि वक्ष्यामि पञ्चम्यास्तव भारत ! । जयेति या च विख्याता व्रतिनां जयदायिनी । यथाज्जया जयाशब्दं करोति व्रतिनो बुधा ! । परिपूर्णं व्रतं यस्या सा ज्ञेया जयपञ्चमी । जया च विजया चैव जयन्ती पापनाशिनी"। जया, कार्त्तिकशुक्लपञ्चमी "श्रवणेन यदा युक्ता शुक्लपक्षे तु पञ्चमी । उत्तराफाल्गुनी यस्यामिन्दुशारसमागमः । आरभेत नरस्तस्यां व्रतं पूर्व्वमुपोषितः । चतुर्थ्यामेकभक्ताशी ब्रह्मचारी जितेन्द्रियः । धृतिमान् कृतसङ्कल्पो भवेन्नियमवाञ्चरः । ततः कल्यं समुत्थाय स्नात्वा नियतमानसः । धृतसङ्कल्पया पत्न्या कुर्व्वीत बिल्वस्य चार्च्चनम् । बिल्वमूले ततः कुर्य्याद्वेदिं पुष्पाक्षतैर्युताम् । स्थापयेत् कलसानष्टौ तस्यामष्टसु दिक्षु वा । तन्मध्ये बिल्वमूले तु स्थापयेच्च महाघटम् । सौवर्णं राजतं ताम्रं मार्त्तिकं वा शुभान्वितम्" इत्यादि ।

श्रीप्राप्तिव्रतं विष्णुधर्म्मोत्तरोक्तं "श्रीविहीनस्य लोकेऽस्मिन् जीवितस्यापि किं फलम् । तस्माद्व्रतं समाचक्ष्व येन स्यात् श्रीयुतो नरः"। मार्कण्डेय उवाच "नैपाल्या समतीतायां प्रतिपत्प्रभृति क्रमात् । पूर्व्ववत् पूजयेद्देवीं श्रीसंज्ञां दिने दिने"। पूर्व्ववदिति चैत्रादिरूपायाश्रिव्रतवत् । "पुष्पमूलैः फलैश्चैव जुहुयादक्षतानि च । बिल्वाश्च वह्नौ सततं गोरसैर्भोजयेद् द्विजान् । त्रिरात्रोपोषितो ज्यैष्ठ्यां कनकं प्रतिपादयेत् । वस्त्रयुग्मञ्च राजेन्द्र ! तेन साफल्यमश्नुते । कृत्वा व्रतं नामभिदं यथोक्तमासाद्य नाकं सुचिरं मनुष्य । मनुष्यमासाद्य विवृद्धतेजाः श्रिया युतः स्याज्जगति प्रधानम्"।

श्रीवृक्षनवमीव्रतं भविष्योत्तरे "तस्माद्भाद्रपदे चैव शुक्लपक्षे कुरूत्तम ! । नवम्यामर्च्चयेद्भक्त्या ईषदभ्युदयेऽनघ ! । श्रीवृक्षं विविधैरन्नैरनग्निपतितैः फलैः । तिलपिष्टान्नगोधूमैर्धूपगन्धानुलेपनैः । ईषद्भानुकराक्रान्त ! श्रीतरो ! वै नमस्तुते । मन्त्रेणानेन राजेन्द्र ! पूजयेद्भक्तिसंयुतः । सप्रकृत्वस्ततोऽभ्यर्च्य श्रीवृक्षं प्रणिपत्य च । ब्राह्मणान् भोजयेद्भक्त्या श्रीदेवी प्रीयतां मम । ततो भुञ्जीत मौनेन तैलाहारविवर्जितम् । अनग्निपक्वं मृत्पात्रे दधिधान्यफलं शुभम् । एवं यः कुरुते पार्थ ! श्रीवृक्षाभ्यर्च्चनं नरः । नारी वा दुःखशोकाभ्यां मुच्यते नात्र संशयः"।

श्रीव्रतं विष्णुधर्म्मोत्तरे "चैत्रशुक्लस्य पञ्चम्यां पूजयित्वा तथा श्रियम् । सकृदेवाप्नुयादेतत् फलं वत्सरादितम्"। "अथातः सम्प्रवक्ष्यामि श्रीव्रतं नाम ते व्रतम् । चैत्रशुक्लतृतीयायां स्नानमभ्यङ्गपूर्व्वकम् । कृत्वा शुक्लाम्बरो राजन् शुक्लमाल्यानुलेपनः । तिष्ठेद् घृतोदनाहारो भूमौ सुप्यान्निशायां च ताम् । चतुर्थ्याञ्च तथा स्नानं बहिरेव समाचरेत् । पञ्चम्याञ्च विशेषेण शुक्लाम्बरधरः शुचिः । लक्ष्मीं सम्पूजयेत् पद्मे कृतकेऽकृतकेऽपि वा । शुक्लेन गन्धमाल्येन घृतदीपेन वाप्यथ" इत्यादि ।

षष्ठीव्रतं ब्रह्मपु० "कृतोपवासः पञ्चम्यां षष्ठ्यां योऽर्च्चयते रविम् । नियमव्रतचारी च रवेर्भक्तिसमन्वितः । सप्तम्यां वा महाभाग ! सोऽश्वमेधफलं लभेत्"। विष्णुधर्म्मोत्तरे "षष्ठ्याञ्च शुक्लपक्षस्य ये नरा भौमवासरे । व्रतश्चरन्ति यत्नेन तथा तासां पृथक् पृथक् । न तेषां दुर्लभं किञ्चिद् भविष्यति सुरोत्तम ! । वियोगे हि गुणं तेषां फलं स्कन्द ! भविष्यति । वियोगे पूजनं कृत्वा मासेषु सुरसत्तम ! । अक्षयं जायते पुण्यं नात्र कार्य्या विचारणा"।

संवत्सरव्रतं विष्णुधर्म्मोत्तरे "इदमन्यत् प्रवक्ष्यामि षष्ठ-

मूर्त्तिमत तव । संवत्सरः स्मृतो वह्निस्तथार्कः परिवत्सरः । इदापूर्वस्तथा सोमो ह्यनुपूर्वः प्रजापतिः । उदपूर्वश्च तथा प्रोक्तो देवदेवो महेश्वरः । तेषां मण्डलविन्यासः प्राग्वदेव विधीयते” । प्राग्वदिति नीलश्वेतरक्तपीतकृष्णैः मण्डलविन्यासाः कर्त्तव्याः “प्राग्वत् प्रपूजनं कार्य्यं होमं कार्य्यो यथाविधि । तिलैर्व्रीहियवैश्चैव घृतेन सितसर्षपैः । तल्लिङ्गैरथ वा मन्त्रैर्नामभिः प्रत्यहं क्रमात् । नक्ताशनस्तथा तिष्ठेत् प्राग्वद्दिवसपञ्चकम् । चैत्रशुक्लं समारभ्य पञ्चमीप्रभृतिक्रमात् । संवत्सराख्ये वर्षे तु व्रतमेतत् समाचरेत् । पूजावसाने दातव्याः सुवर्णाः पञ्च यादव ॥ चतुर्वेदविदे देयं शाखाभेदेन यादव ॥ एकैकं पञ्चकं देयं यथाकालमिदं भवेत् । यद्देव लोकमाप्नोति कामचारी विहङ्गम” ।

सङ्कटकव्रत वराहपु० “शृणुष्वैकमना भद्रे । सङ्कटकमिदं व्रतम् । कथयामि महापूर्वं ब्रह्मणा कथितं मम । मासस्य कार्त्तिकस्यापि शुक्लप्रतिपदि व्रतम् । ग्रहीयाद्देकभक्तन्तु कृत्वा दन्तादिशोधनम् । साय सङ्कल्पमाधाय द्वितीयायामुपक्रमेत् । तृतीयायामपि तथा चतुर्थ्यां पारणं भवेत् । शिवं सपूजयेद्भक्त्या उपवासदिनेऽपि च । यत्र शिवोपचारेण रात्रौ दद्यात्ततो भुवि । स्वपेत् प्रातः समुत्थाय स्नात्वा देवं समर्चयेत्” ।

सन्तानदव्रत भविष्योत्तरोक्तम् “कार्त्तिक्यामुपवासी यः कन्यां दद्यात् स्वलङ्कृताम् । स्वकीयां परकीयां वा नदीसङ्गमके शुभे । एतत् सन्तानदं नाम व्रतं सुगतिदायकम्” ।

सन्तानाष्टमीव्रतं विष्णुधर्मोत्तरे “कृष्णाष्टम्यां चैत्रमासे स्नातो नियतमानसः । कृष्णमभ्यर्च्य पूजाञ्च देवक्याः कुरुते च यः । निराहारो नरः पश्चात् कृष्णस्य जगतः पते । उपोषितो जपन्मन्त्रं रात्रौ प्रयतमानसः । पूजायाञ्चापि कृष्णस्य सप्त वारान् प्रकीर्त्तयेत् । पापविलमोक्षकर्मस्थान् वेदाख्यान् वकनाशिकान् । प्रभाते च ततः स्नातो दत्त्वा विप्राय दक्षिणाम् । भुञ्जीत कृत पूजस्तु कृष्णस्यैव जगत्पते । वैशाखज्यैष्ठयोश्चैव पारणं हि त्रिमासिकम् । उपोष्य देवदेवेश घृतेन स्नापयेद्धरिम् । आषाढे श्रावणे चैव मासि भाद्रपदे तथा । उपोषितो द्वितीयं वै पारणं पूर्ववद्भवेत् । आश्विने कार्त्तिके सौम्ये तृतीयं पारणं तथा । पौषे माघे फाल्गुने च चतुर्थं द्विजसत्तम ॥ पारणे पारणे पूर्णे घृतेन स्नापयेद्धरिम् । ब्राह्मणेभ्यो घृतं दद्यात्तथैव प्रतिपारणम् । कृत्वा व्रतं नाकमनुप्रयाति मानुष्यमासाद्य च निष्ठितं स्यात् । सन्तानवृद्धिश्च तथाप्रुतेऽसौ याव-न्महीं सागरमेखलान्ताम् ।

सप्तर्षिव्रतं विष्णुधर्मोत्तरे “चैत्रशुक्लादथारभ्य प्रत्यहं दिनसप्तकम् । मरीचिमत्र्यङ्गिरस पुलस्त्यं पुलहं क्रतुम् । वशिष्ठञ्च महाभाग पूजयेत् दिवसक्रमात् । कालोद्भवैः फलैः पुष्पैः गोरसैश्च फलान्वितैः । आचरेत् प्रत्यहं स्नानं वह्निर्नक्ताशनो भवेत् । महाव्याहृतिभिर्होमं तिलैर्नित्यं समाचरेत् । तर्पयेद्ब्राह्मणाश्चात्र फलमूलैश्च गोरसैः । वारिधान्यश्च दातव्याः क्षीरपूर्णा द्विजातिषु । एवं संवत्सरं कृत्वा व्रतान्ते चाऽऽहिताग्नये । दद्यात् कृष्णाजिनं राजन् । यथापूर्वं मनेरितम् । व्रतमेतन्नरः कृत्वा मोक्षोपायञ्च विन्दति” ।

सप्तसारस्वतव्रत विष्णुधर्मोत्तरोक्तम् “चैत्रशुक्लादथारभ्य प्रत्यहं दिनसप्तकम् । सुप्रभा काञ्चनाक्षीञ्च विशाला मानसोद्भवाम् । मेघनादा सुवेणुञ्च तथैव विमलोदकाम् । नित्यं संपूजयेद्भक्त्या बहिःस्नानं समाचरेत् । तासाञ्च प्रत्यहं नाम्ना दध्ना होमं समाचरेत् । ब्राह्मणान् भोजयेच्चात्र दध्ना युक्तं सुभोजनम् । घृतौदनं तथा-श्नीयात्सकृदेव तथा निशि । एवं संवत्सरं कृत्वा व्रतं सारस्वतं नरः । तल्लोकं सुचिरं कालं मानुष्ये जायते यदा” इत्यादि ।

सप्तसुन्दरकव्रतं भविष्योत्तरोक्तम् “एकभक्ता च सप्ताहं गौरिणीरत्र भोजयेत् । सपूज्य पार्वतीं भक्त्या गन्धपुष्पविलेपनैः । ताम्बूलसिन्दूरवरैर्नारिकेलफलेन च । प्रीयतां कुमुदा देवी प्रणिपत्य विसर्जयेत् । एकैकां पूजयेद्देवीं सप्ताहं यावदेव तु । पुनश्च सप्तमे प्राप्ते ताः सहैव निमन्त्रयेत् । षड्भ्यः सम्भोजयित्वान्नं यथाशक्त्या विभूषणैः । भूषयित्वा माल्यवस्त्रैः कर्णवेष्टाङ्गुलीयकैः । कुमुदा माधवी गौरी भवानी पार्वती उमा । अम्बिका चेति संपूज्या दर्पणं दापयेत् पृथक् । ब्राह्मणं पूजयेच्चैक वाच्यं कल्पव्रतमस्तु मे । सप्तसुन्दरकं नाम व्रतं पापहरं शुभम् । कृत्वा प्राप्नोति सौन्दर्य्यं सौभाग्यमतुलं तथा” ।

समुद्रव्रत विष्णुधर्मोत्तरे “अथातः संप्रवक्ष्यामि समुद्रव्रतमेव ते । चैत्रशुक्लादथारभ्य प्रत्यहं दिनसप्तकम् । लवणं क्षीरं सघृतं दधिमण्डं सुरोदकम् । तथैवेक्षुरसोदञ्च

स्नादुदकेनैव पूजयेत् । आचरेत् प्रत्यहं स्नानं शुचिर्भूत्वा तथा वहिः । घृतेन होमं कुर्वीत सप्तम्याञ्च प्रदापयेत् हविष्याशी भवेन्नक्तं कुर्य्यात् संवत्सरं व्रतम् । संवत्सरान्ते दद्याच्च तथा धेनुं पयस्विनीम् । व्रतेनानेन चीर्णेन सप्तसागरमेखलाम् । भुनक्ति वसुधां राजा । सप्तजन्मान्तराणि तु" ।

सम्पूर्णव्रत भविष्योत्तरे "सम्पूर्णं नाम तत्रापि व्रतं सम्यक् फलप्रदम् । यच्चीर्णं नरनारीभिर्य्यावत् सम्पूर्णकारकम् । अवश्यन्तच्च कर्त्तव्यं संपूर्णफलकाङ्क्षिभिः । किञ्चिद्भग्नं प्रमादेन यद्व्रतं व्रतिनां भवेत् । तत् सम्पूर्णं भवेत् सर्वं व्रतेनानेन पाण्डव ।। उपद्रवैर्वहुविधैर्महामोहाच्च पार्थिव ।। यद्भग्नं किञ्चिदेव स्यात् व्रतं विघ्नविनायकैः । तत् सम्पूर्णं भवेत् सर्वं सत्यं सत्यं न संशयः । काञ्चनं रौप्यकं रूपं शिल्पिना तु घटापयेत् । भग्नव्रतस्य योदेवस्तत् स्वरूपं सुनिर्मितम् । रूपं स्त्रीपुंसयोर्वापि प्रारब्धं तद्व्रतं किल । न च निष्पादितं किञ्चिद्दैवात् सर्वं तथा स्थितम् । द्विभुजं पङ्कजारूढं सौम्यं प्रहसिताननम्" । द्विभुजादीनि स्त्रीपुंसयोरूपस्य विशेषणम् तच्च रूपमप्रातेषु व्रतेषु, जन्मान्तरकृतानां विस्मृतानाञ्च प्राप्तत्वे तेष्वपीदं प्रायश्चित्तमिति । "निष्पादितं शिल्पिना च तस्मिन्नेव दिने पुनः । तस्मान्मासे पुनः प्राप्ते ब्राह्मणो विधिना गृहे । स्नापयेत् पयसा दध्ना घृतक्षीररसाम्बुभिः । गन्धचन्दनपुष्पैस्तु पूजयेत् कुसुमादिना । तोयपूर्णस्य कुम्भस्य मुखे विन्यस्य चन्दनैः । धूपदीपाक्षतैर्वस्त्रैर्नानावल्युपहारकैः । अर्घ्यं दद्याच्च तन्नाम्ना मन्त्रेणानेन पाण्डव ।। उपवासेन हीनस्य प्रायश्चित्तं कृताञ्जले । शरणञ्च प्रपन्नस्य कुरुष्वाद्य दयां पुनः । परत्र भयभीतस्य भग्नव्रतस्य च । कुरु प्रसादं सम्पूर्णमस्तु मे त्वत्प्रसादतः" ।

सम्भोगव्रत भविष्यपु॰ "द्वे पञ्चम्यौ हि मासस्य द्वे च प्रतिपदौ नरः । सोपवासः सुगन्धाढ्यः शयीत प्रियया सह । युगनिश्चलचित्तस्तु रतिप्रीतिविवर्जितः" । युगनिश्चलचित्तः सूर्य्यध्यानपरः "समाः कृतिशीलस्य तस्य पुण्यफलं शृणु । दिव्यं वर्षसहस्रन्तु दिव्यं वर्षशतं तथा । ततस्तु भावयत्येनं महादेव न संशयः" ।

सर्पपञ्चमीव्रत भविष्यपु॰ "पयोव्रतन्तु पञ्चम्यां दत्त्वा नागद्विजातये । सौवर्णं सर्पजनितं भयं तस्य न जायते । एतत् सर्पव्रतं प्रोक्तं सर्पभीतिहरं परम्" ।

सर्पविषापहपञ्चमीव्रत स्कन्दे॰ प्रभासख॰ "श्रावणे मासि पञ्चम्यां शुक्लपक्षे वरानने ।। आरभ्य भयतो वेश्म गोमयेन विलेपयेत् । कृत्वा च कौसुमान्नागांश्चित्रितान् च प्रपूजयेत् । घृतोदकाभ्यां पयसा स्नापयित्वा वरानने ।। गोधूमैः पयसा पूज्य लाजाद्यैर्विविधैस्तथा । पूजयेत् विधिवद्देवि ! दधिदूर्वाङ्कुरैः क्रमात् । गन्धपुष्पोपहारैश्च ब्राह्मणानाञ्च तर्पणम् । अथ वा श्रावणे मासि पञ्चम्यां श्रद्धयान्वितः । यथालेख्य नरो नागान् कृष्णवर्णादिवर्णकैः । गुरुकल्पान् तथा सौम्यान् स्वगृहे विलिखेत् बुधः । पूजयेद्गन्धधूपैश्च पयसा पायसेन च । तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः । आसप्तमात् कुलं तस्य न भयं नागतो भवेत् । प्रजप्यते तत्र मन्त्रो विषस्य प्रतिषेधकः । तस्य प्रजपमात्रे तु न विषं क्रमते सदा" ।

सर्वकामव्रत विष्णुधर्मोत्तरोक्तम् "अङ्गारकं तथा सूर्य्यं निर्ऋतिं वा खगेश्वरम् । हवनं वेश्वरं मृत्युं कपालं कण्ठकिङ्किणीम् । तत्र दैकादशान् यस्तु देवान् त्रिभुवनेश्वरान् । एकादश्यां सोपवासः सोमं सम्पूजयेत्तथा । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । मार्गशीर्षादिमारभ्य यावत् संवत्सरं भवेत् । संवत्सरान्ते दद्याच्च ब्राह्मणाय पयस्विनीम् । कृत्वा व्रतं वत्सरमेतदिष्टं रुद्रत्वमाप्नोति नरस्तु राजन् ।। रुद्रेण सार्द्धं सुचिरं वसित्वा कामानवाप्नोति मनोऽभिरामान् । तथा सर्वगतान् रुद्रान् सदा सर्वत्र पूजयेत् । सर्वकामानवाप्नोति सर्वगानपराजितान्" । विष्णुधर्मोत्तरे "माघमासे चतुर्दश्यां कृष्णपक्षे विशेषतः । तथा पितृगणान् राजन् ! क्षीणचन्द्रे च पूजयेत् । सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते । श्राद्धं कृत्वा तथा राजन् ! सर्वकामानवाप्नुयात्" ।

सर्वकामाप्तिव्रत विष्णुधर्मोत्तरे "कृत्तिकास्वथवैव कार्त्तिकी प्रभृतिक्रमात् । यावत् प्राप्य कार्त्तिकी भूत्वा नरसिंहमुपोषितः । अनुलेपनपुष्पाद्यैर्दद्यात् सदैव तु । व्रतावसाने दद्यात् गां तथा श्वेतां द्विजातये । श्वेतवस्त्रयुताञ्चैव रजतञ्च तथा नृप ।। उपोषितः सदा कुर्यात् व्रतं व्याधिविवर्जितः" ।

सर्वव्रत सौरपु॰ "मन्दवारयुता पुण्या शुक्लपक्षे त्रयोदशी । तस्यामुपोष्य विधिवत् सम्पूज्य गिरिजापतिम् । ब्रह्महत्यादिभिः पापैर्मुक्तो भवति मानवः" ।

सर्वाप्तिसप्तमीव्रत भविष्यपु॰ "कृष्णपक्षे तु माघस्य सर्वाप्ति

कुलं दद्याच्छिवलोके महीयते । साम गायतश्चैतत् सामव्रतमिहोच्यते” ।

सारस्वतपञ्चमीव्रत पद्मपु० “सम्यक् पृष्टं त्वया राजन् ! शृणु सारस्वत व्रतम् । यस्य सङ्कीर्त्तनादेव तुष्यतीह सरस्वती । यो यद्भक्तः पुमान् कुर्य्यादेतद्व्रतमनुत्तमम् । तद्वासरादौ सम्पूज्य विप्रानेतत् समारभेत् । अथवादित्यवारेण ग्रहताराबलेन च । पायसम्भोजयित्वा तु कुर्य्याद् ब्राह्मणवाचनम् । शुक्लवस्त्राणि दद्याच्च सहिरण्यानि शक्तितः । गायत्रीं पूजयेद्भक्त्या शुक्लमाल्यानुलेपनैः । एभिर्मन्त्रपदैः पश्चात् सर्वं कुर्य्यात् कृताञ्जलिः । एवं सम्पूज्य गायत्रीं वीणाक्षमणिधारिणीम् । शुक्लपक्षेऽक्षतैर्भक्त्या सकमण्डलुपुस्तकाम् । मौनव्रतेन भुञ्जीत सायं प्रातश्च धर्म्मवित् । पञ्चम्यां प्रतिपक्षे च पूजयित्वा सुवासिनी । तस्यास्तु तण्डुलप्रस्थं घृतपात्रेण संयुतम् । क्षीरं दद्यात् हिरण्यञ्च गायत्री प्रीयतामिति । सन्ध्ययोश्च तथा मौनमेतत् कुर्व्वन् समारभेत् । नान्तरा भोजनं कुर्य्याद् यावन्मासास्त्रयोदश । समाप्ते तु व्रते दद्यात् भोजनं शुभतण्डुलैः । पूर्णं सवस्त्रयुग्मन्तु गां सवत्सां सुशोभनाम् । विप्राय वेदविदुषे । वाचकायाथ पार्थिव ! अनेन विधिना यस्तु कुर्य्यात् सारस्वतं व्रतम् । विद्यावान् धनयुक्तश्च रक्तकण्ठश्च जायते । सरस्वत्याः प्रसादेन व्यासवत् स कविर्भवेत् । नारी वा कुरुते या तु सापि तत्फलभागिनी” ।

सारस्वतव्रत पद्मपु० “सन्ध्यामौनं नरः कृत्वा समान्ते घृतकुम्भकम् । वस्त्रयुग्मं तिलान् घण्टां ब्राह्मणाय निवेदयेत् । लोकं सारस्वतं याति पुनरत्रैव जायते । एतत् सारस्वतं नाम रूपविद्याप्रदायकम्” ।

सार्वभौमव्रतं वराहपु० “सार्वभौमव्रतं चान्यत् कथयामि समासतः । येन सम्यक्कृतेनाशु सार्वभौमो भवेन्नरः । कार्त्तिकस्य तु मासस्य दशमी शुक्लपक्षगा । तस्यां नक्तायमोमत्र्योऽदिक्षु शुद्धबलिं हरेत्” । शुद्धबलिः पवित्रद्रव्यैः पूजोपहारः । “विचित्रैर्बुसुमैर्भक्ष्यैः पूजयेच्च द्विजास्तथा । सर्वा भवत्यः सिध्यन्तु मम जन्मनि जन्मनि । एवमुक्त्वा बलिं तासु दत्त्वा शुद्धेन चेतसा । ततोऽह्निपक्षे भुञ्जीत दध्यन्नञ्च सुसंस्कृतम् । सर्वं पश्चाद्यथेष्टञ्च एवं संवत्सरं नृपः । यः करोति नृपोनित्यं तस्य दिग्विजयो भवेत्” ।

सितसप्तमीव्रतं विष्णुधर्म्मोत्तरे “मार्गशीर्षस्य मासस्य शुक्लपक्षे नराधिप ! । सोपवासस्तु सप्तम्यां कमलैः पूजयेद्रविम् । अर्च्चायां वा स्थले वापि शुक्लैः पुष्पैर्यथाविधि । चन्दनेन तु शुक्लेन वटकैः पूरकैण च” ।

सिद्धार्थकादिसप्तमीव्रत भविष्यपु० “वैनतेय ! शृणुष्व त्वं विधानं सप्तमीव्रतम् । एतद्धि परमं गुह्यं रवेराराधनं परम् । सिद्धार्थकैस्तु प्रथमा द्वितीया चार्कसम्पुटे । तृतीया मरिचैः कार्य्या चतुर्थी निम्बसप्तमी । षड्युता पञ्चमी कार्य्या षष्ठी च फलसप्तमी । सप्तम्यनोदना वीर ! सप्तमी परिकीर्त्तिता” । षड्युता इति सिद्धार्थकादिभिः षड्भिः प्रकारैर्युता” । इत्येताः सप्तसप्तम्यः कर्त्तव्या भूतिमिच्छता । तथा चानुक्रमेणाशाद्भूरण कथयाम्यहम् । माघे वा मार्गशीर्षे वा कार्य्या शुक्ला तु सप्तमी । न च स्यान्नियमभ्रंश पक्षमासकृतो भवेत्” । आर्त्तवशादन्यस्मिन् मासे पक्षे च कार्य्येत्यर्थः” इत्यादि ।

सिद्धिविनायकचतुर्थीव्रत स्कन्दपु० “नभस्यन्तु शुक्लायां चतुर्थ्यां पूजयेन्नृप ! । यदा पौत्पद्यते भक्तिर्मासि पूज्यो गणाधिप । प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप ! । स्वशक्त्या गणनाथस्य स्वर्णरौप्या तथाकृतिम् । कृत्वा पूजां प्रयत्नेन स्थाप्य पश्चाद्गते पृथक्” इत्यादि ।

सुकलत्रप्राप्तिव्रतं विष्णुधर्म्मोत्तरे “यस्य परिसमाप्य नारीह सुखमेधते । दुःशीलेऽपि हि कामार्थी नारी प्राप्नोति भर्त्तरि । अनाहारा जगन्नाथं सर्वलोकेश्वरं हरिम् । कथमाप्नोति चेन्नारी सर्वलोकगुणान्वितम् । सुकलत्रयुतत्वस्माद्व्रतमच्युततुष्टिदम् । कर्त्तव्यं लक्षणं तस्य श्रूयतां वरवर्णिनि ! । यच्छीत्वा सर्वनारीणां श्रेयः प्राप्नोत्यसंशयम् । ऐहिकञ्च सुखं प्राप्य स्मृता स्वर्गसुखान्यपि । अनुज्ञाप्य स्वपितरौ मातरञ्च कुमारिका । पूजयेत्तु जगन्नाथं भक्त्या पापहरं हरिम् । त्रिषूत्तरेष्वृक्षेषु पतिकामा कुमारिका । माधवायेति वै नाम जपेन्नित्यमतन्द्रिता । प्रियङ्गुणा रक्तपुष्पैर्मधुकैः कुसुमैस्तथा । समभ्यर्च्याच्युते दद्यात् कुङ्कुमेनानुलेपनम् । सर्वौषधिभिः सुस्नाता तमाराध्य जगत्पतिम् । नमोऽस्तु माधवायेति होमयेन्मधुसर्पिषा । षट्वैष्णुत्तरायोगे समभ्यर्च्य जनार्दनम् । शोभनं पतिमाप्नोति प्रेत्य स्वर्गञ्च गच्छति । अतिबाल्ये च यत्किञ्चित् तया पापमनुष्ठितम् । तस्माद्विमुच्यते पापात् सुखिनी चैव जायते । अब्देनैकेन तन्वङ्गि ! व्रतं प्राप्य यदिच्छति । तदेव प्रा-

स्नुयाद्वद्रे । नारायणपरायणा । षण्मासप्रीणनं कार्य्यं यथाशक्त्या च वै हरेः । पारणान्ते महाभागे ! भोजयेद् ब्राह्मणोत्तमान्" ।

सुकृतत्रिरात्रव्रतं विष्णुधर्मोत्तरे "अग्रहस्य शुद्दिवसं प्राप्य त्रिरात्रोपोषितो नरः । मार्गशीर्षात्तथारभ्य पूजयेत् तु त्रिविक्रमम् । त्रिवर्णैः कुसुमैर्देवं त्रिभिः प्रयतमानसः" । त्रिवर्णैः श्वेतपीतरक्तैः "श्वेतोऽनुलेपना देयास्त्रिसारं धूपमेव च" । त्रिसारं गुग्गुलकट्फलश्रीवेष्टकाः "वर्त्तिं त्रिमधुरं दद्यात् तथैव दीपान् दशोत्तम ! । यवैस्तिलैस्तथा होमः कर्त्तव्यः सर्पिषान्वितैः । दद्यात्त्रिलौहञ्च तथा द्विजेभ्यः ताम्रं सुवर्णं रजतञ्च राजन् ! । न केवलं सुकृतदं व्रतन्तु यथेष्टकामाप्तिकरं प्रदिष्टम्" ।

सुकृतद्वादशीव्रतं विष्णुधर्मोत्तरे "तथैव द्वादशी शस्ता नृणां सुकृतकर्मणाम् । यामुपोष्य द्विजश्रेष्ठ ! न याति नरकं नरः । फाल्गुनामलपक्षस्य एकादश्यामुपोषितः द्वादश्यां च द्विजश्रेष्ठ ! पूजयेन्मधुसूदनम् । एकादश्यां प्रसुप्तेऽस्मिन् विष्णोर्नामानुकीर्त्तनम् । पूजायां वासुदेवस्य कुर्वीत सुसमाहितः" ।

सुखव्रतं भविष्यपु० "कृष्णाष्टमीं तु नक्तेन यस्तु कृष्णां च सप्तमीम्" । उपवसेदिति शेषः "इहैव सुखमाप्नोति परत्र च शुभां गतिम्" । विष्णुधर्मोत्तरे "देवानां दानवानां वा तत्पक्षाये तथा परे । तेषां संपूजनं कृत्वा चतुर्दश्यां सुखी भवेत्" । भविष्यपु० चतुर्थी तु चतुर्थी तु यदाङ्गारकसंयुता । उपोष्य तत्र तत्रैव प्रदेयो विधिवत् कुजः । उपोष्य नक्तेन विभो ! चतस्रः कुजसंयुताः । चतुर्थ्यान्तु चतुर्थ्यान्तु विधानं शृणु यादृशम्" । एकचतुर्थीशब्दः तिथिविशेषवचनः, अपरस्तत्संख्यापर इति "दशसौवर्णिके मुख्य दशार्द्धे चापि वा । सौवर्णपात्रे रौप्ये वा भक्त्या ताम्रमयेऽपि वा । विंशत्यधिकानि पात्राणि विंशत्यर्द्धपलानि च । विंशत् कर्षाणि वा वीर ! अतोहीनं न कारयेत् । शक्त्या वित्तस्य भक्त्या च पात्रे ताम्रमयेऽपि वा । प्रतिष्ठाप्य कुजपात्रे रक्तवस्त्रेण वेष्टयेत् । पुष्पमण्डपिकां कृत्वा दिव्यधूपैस्तु धूपिताम् । तत्रस्थमर्चयेद्देवं पूर्वमन्त्रैः क्रमेण तु" ।

सुखपत्नीव्रतं(?) विष्णुधर्मोत्तरे "इन्द्राण्याः पूजनं कृत्वा षष्ठ्यां सुखमवाप्नुयात्" ।

सुखसुप्तिव्रतं आदित्यपु० "अमावास्यान्तु देवाय कार्त्तिके मासि केशवम् । अभयं प्राप्य सुप्तास्तु सुखात् क्षीरोदसानुषु । लक्ष्मीर्दैत्यभयान्मुक्ता सुखं सुप्ताम्बुजोदरे । चतुर्भुजस्य हस्तान्ते ब्रह्मा सुप्तस्तु पङ्कजे । अतोऽर्थं विधिवत् कार्य्या मनुष्यैः सुखसुप्तिका । दिवा तत्र न भोक्तव्यमृते बालातुरान् जनान् । प्रदोषसमये लक्ष्मीं पूजयित्वा ततः क्रमात् । दीपवृक्षाश्च दातव्याः शक्त्या देवगृहेषु च । चतुष्पथे श्मशानेषु नदीपर्वतवेश्मसु । वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च । वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः । दीपमालापरिक्षिप्ते प्रदेशे तदनन्तरम् । ब्राह्मणान् भोजयित्वादौ विभज्य च बुभुक्षितान् । अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना । स्निग्धैर्मुग्धैर्विदग्धैश्च बान्धवैर्भृत्यैः सह । शङ्करस्तु पुरा द्यूतं ससर्ज सुमनोहरम् । कार्त्तिके शुक्लपक्षे तु प्रथमेऽहनि सुव्रत ! । जितश्च शङ्करस्तत्र जयं लेभे च पार्वती । अतोऽर्थं शङ्करो दुःखी उमा नित्यं सुखोषिता । तस्माद् द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः । तस्मिन् भवेज्जयो यस्य तस्य संवत्सरं शुभम् । पराजये विरुद्धन्तु लब्धनाशस्ततो भवेत् । श्रोतव्यं गीतवाद्यादि स्वनुलिप्तैः स्वलङ्कृतैः । विशेषवस्त्रं भोक्तव्यं प्रशस्तैर्बान्धवैः सह । तस्यां निशायां कर्त्तव्यं शय्यास्थानं सुशोभनम् । गन्धपुष्पैस्तथा वस्त्रै रत्नैर्माल्यैरलङ्कृतम् । दीपमालापरिक्षिप्तं तथा धूपेन धूपितम् । दयिताभिश्च सहितैर्नेया सा च भवेन्निशा । नवैर्वस्त्रैश्च संपूज्य द्विजसम्बन्धिबान्धवान्" इत्यादि ।

सुगतिव्रतं पद्मपु० "नक्ताशी त्वष्टमीषु स्यात् वत्सरान्ते तु गोप्रदः । पौरन्दरपदं याति सुगतिव्रतमुच्यते" ।

सुगतिद्वादशीव्रतं विष्णुधर्मोत्तरे "एकादश्यां शुक्लपक्षे फाल्गुने मासि यो नरः । जपन् कृष्णेति देवस्य नाम भक्त्या पुनः पुनः । देवार्च्चनं शतं कृत्वैतत्तु जपेच्छुचिः । स्नाने प्रस्थानकाले च उत्थाने स्खलिते क्षुते । पाषण्डान् ! पतितांश्चैव तथैवान्त्यावसायिनः । नालपेत् तथा देवमर्च्चयेच्छ्रद्धयान्वितः । इदञ्चोदाहरेत् मन्त्रं मनस्याधाय तत्परः । चैत्रवैशाखयोश्चैवं तद्वज्ज्यैष्ठे च पूजयेत् । मर्त्त्यलोके गतिं श्रेष्ठां दाल्भ्य ! प्राप्नोति वै नरः । उत्क्रान्तिकाले कृष्णस्य स्मरणञ्च तथाप्नुयात् । आषाढे श्रावणे चैव मासि भाद्रपदे तथा । तथैवाश्वयुजे देवमनेन विधिना नरः । उपोष्य संपूज्य तथा

केशवेति च कीर्त्तयेत्। गोमूत्रप्राशनात् पूतः स्वर्गलोके महीयते। आराधितस्य जगतामीश्वरस्य महात्मनः। उत्क्रान्तिकाले स्मरणं केशवस्य तथाप्नुयात्। चीरस्य प्राशनं श्रेष्ठं विधिनेदं यथोदितम्। कार्त्तिकादि यथान्यायं कुर्य्यान्मासचतुष्टयम्। तेनैव विधिना प्रस्नात्। तत्र विष्णुं प्रकीर्त्तयेत्। स याति विष्णुसालोक्यं विष्णुं स्मरति तत्क्षये। प्रतिमासं द्विजातिभ्यो दद्याद्दानं यथेच्छया। सुगतिद्वादशीमेतां श्रद्दधानश्च यो नरः। उपोष्येति तथा नारी प्राप्नोति त्रिविधां गतिम्"।

सुजन्मद्वादशीव्रतं विष्णुधर्म्मोत्तरे "पौषे मासि सिते पक्षे द्वादश्यां शक्रदैवते। नक्षत्रयोगगे विष्णुं प्रथमं तु समर्च्चयेत्। ततः प्रभृति विप्रेन्द्र! मासि मासि जनार्द्दनम्। उपोषितः पूजयेत यावत् संवत्सरं गतम्। मासे च मासे विधिनोद्दिष्टेन तस्यां तिथौ दानमिति ब्रवीमि। प्राश्य यथावद्विधिवत् क्रमेण तदुच्यमानं निखिलं निबोध। घृतं तथा व्रीहियवं हिरण्यं यवाश्चमश्वचणकाचणानम्। क्षत्र पयोऽन्नं गुडफाणिताद्यं सुचन्दनं वस्त्रमनुक्रमेण। एकैकमासोक्तमथैकदानं गोमूत्रमम्भो घृतमामशाकम्। दूर्वादधिव्रीहियवं तिलाश्च सर्व्वाशुतप्तं जलमम्बु दार्भम्"।

सुजन्मावाप्तिव्रतं विष्णुधर्म्मोत्तरे "मेषसंक्रमणे भानोः सोपवासो नरोत्तम!। पूजयेन्नागवं देवं रामं शक्त्या यथाविधि। वृषसंक्रमणे प्राप्ते तथा कृष्णञ्च पूजयेत्। तथा मिथुनसंक्रान्तौ पूजयेन्नागशायिनम्। तथा कुलीरसंक्रान्तौ वराहमपराजितम्। नरसिंहं तथा देवं सिंहसंक्रमणे विभुम्। कन्यासंक्रमणे देवं तथार्व्वाम्भरणं यजेत्। तुलासंक्रमणे कूर्म्मं पूजयेत् भक्तिभावतः। अलिसंक्रमणे कल्किं देवं सम्पूजयेत् नरः। धनुःसंक्रमणे बुद्धं देवमभ्यर्च्चयेत् बुधः। तथा मकरसंक्रान्तौ रामं दशरथात्मजम्। कुम्भसंक्रमणे राजन्! रामं यादवनन्दनम्। मीनसंक्रमणे मत्स्यं वासुदेवन्तु पूजयेत्। पटे वा यदि वार्च्चायां गन्धमाल्यान्नसम्पदा। प्रादुर्भावस्य नाम्ना च होमं कुर्व्वीत पार्थिव!। व्रतान्ते जलधेनुन्तु रुक्मोपानत्समन्विताम्। वस्त्रयुग्मयुतां दद्यात् प्रतिमासं सकाञ्चनाम्। रात्रौ तु दीपमालाभिर्देवदेवं प्रपूजयेत्। कृत्वा व्रतं वत्सरमेतदिष्टं म्लेच्छेषु तिर्य्यक्षु न चापि जन्म। प्राप्नोत्यथाप्नोति चिरञ्च नाकं कामन्तथाप्नोति मनोऽभिरामम्"।

सुदर्शनषष्ठीव्रतं गरुडपु° "अथ षष्ठ्यान्तु राजन्य समुपोष्य यथाविधि। चक्राब्जमथञ्च कृत्वा कर्णिकायां सुदर्शनम्। दलेषु लोकपालानामायुधानि समर्च्चयेत्"। चक्राब्जं चक्रनाभिघटिताब्जम्। "स्वान्यायुधानि पुरतः प्रतिष्ठाप्य प्रपूजकः। रक्तचन्दनसिद्धार्थरक्तपद्माङ्कुरैरपि। रक्तवस्त्रैः सुगन्धाद्यैर्धूपपाद्यादिभिरर्च्चयेत्" इत्यादि।

सुनामद्वादशीव्रतं वह्निपु° "शृणुष्वैकमना भूप। सुनामद्वादशी शुभा। सर्व्वपापहरा स्वर्ग्या भुक्तिमुक्तिप्रदायिका। मनसा च चिकीर्षन्ति द्वादशीं ये नरोत्तमाः। तेऽपि घोरं न पश्यन्ति पुनः संसारसागरम्। आद्यं सर्व्वव्रतानां तु वैष्णवानां नृपोत्तम!। नरैस्त्विदञ्च कर्त्तव्यं विष्णोस्तुष्टिकरं परम्। मार्गशीर्षे शुभे मासि शुक्लपक्षे यतव्रतः। प्रथमञ्चैव गृह्णीयात् द्वादशीं विधिवन्नरः। मनोवाक्कायचेष्टाभिः सुविशुद्धो जितेन्द्रियः। दशम्यां नियतः स्नात्वा प्रणिपत्य जनार्द्दनम्। हविष्यान्नकृताहारः शुचिर्भूत्वा भवेद्व्रती। उपलिप्ते शुचौ देशे भक्षयेद्दन्तधावनम्। उपोष्यैकादशीं सम्यक् पूजयित्वा जनार्द्दनम्। सुनामद्वादशीं देव! अहं भोक्ष्ये परेऽहनि। एवं सङ्कल्प्य नियमं प्रणम्य गरुडध्वजम्। दशम्यामेकभक्ताशी संयतः सर्व्वसिद्धिदाम्। एकादश्यां ततः प्रातरेकचित्तः समाहितः। पूर्व्वं सम्पूजयेत् सूर्य्यं ततो देवं प्रपूजयेत्" वर्षसाध्यमिदम्।

सुरूपद्वादशीव्रतम् उमामहेश्वरसंवादे "पौषमासं तु संप्राप्य पुष्यर्क्षे तु सुशोभयेत्। तस्यां रात्रौ संयतात्मा ध्यात्वा विष्णुं सनातनम्। श्वेता गौरेकवर्णा च तस्या ग्राह्यञ्च गोमयम्। अन्तरिक्षात् प्रपतितं शुचिभिर्न्नभसि स्थितम्। तस्य कृत्वाऽञ्जलीनाञ्च शतमष्टोत्तरं तिलैः। प्रतीच्यैकादशीं कृष्णामुपवासपरायणैः। भाव्यं नियमसंयुक्तैर्विशेषात् संयतात्मभिः। स्नात्वा नद्यां तडागे वा विष्णुमेवाथ चिन्तयेत्। सौवर्णकं हरिं कृत्वा रौप्यं वासः स्वशक्तितः। तिलपात्रोपरिस्थे च न्यसेत् कुम्भे सदृव्यके" इत्यादि। "एवं यः कुरुते देवि! सुरूपद्वादशीव्रतम्। नरो वा यदि वा नारी तस्य पुण्यं शृणुष्व मे। दौर्भाग्यं नश्यते तस्य अपि जन्मान्तरार्जितम्। अपि भुक्तस्य सम्पर्को जायते कारणान्तरात्। तथापि न भवेद्दुःखं वैरूप्यं तस्य जन्मनि"।

सूर्य्यव्रतं विष्णुधर्म्मोत्तरे "शिरसोवपनं कृत्वा योऽर्च्चयेत्

दिवाकरम् । तपनस्तोषमायाति वह्निष्टोमस्य विन्दति । अपूपैः सगुडैर्भक्त्या तथा लवणपाचितैः । षष्टिरथ्यं समभ्यर्च्य अग्निष्टोमफलं लभेत् । सूर्य्याह्नि यस्तु नक्ताशी संपूजयति भास्करम् । इष्टान् कामानवाप्नोति सूर्य्यलोकञ्च गच्छति" । कल्पान्तरे "आश्विन्यां रविवारे तु यदि शुक्ला चतुर्दशी । स्नानं विशेषतः कार्य्यं शिवस्य परमात्मनः । कुङ्कुमरोचनया रक्तपुष्पैः प्रपूजयेत् । कापिलाज्यं तथा क्षीरं नैवेद्यं परिकल्पयेत्" । पद्मपु० "माघमास्युषसि स्नानं कृत्वा दत्त्वा समर्चयेत । भोजयित्वा यथाशक्त्या माल्यवस्त्रविभूषणैः । सौभाग्यमवाप्नोति शरीरारोग्यमुत्तमम् । सूर्य्यलोकप्रदं नूनं सूर्य्यव्रतमिदं स्मृतम्" । भविष्यपु० "कृष्णैकभक्तं हेमन्ते माघमासमतन्द्रितः । मासान्ते च रथं कुर्य्यात् चित्रवस्त्रोपशोभितम् । श्वेतैश्चतुर्भिर्युक्तन्तु तुरगैः समलङ्कृतम् । श्वेतध्वजपताकाभिः छत्रचामरदर्पणम् । सपुष्पाटकापिष्टेन कृत्वा भानु नराधिप ।। विन्यस्य तं रथमध्ये संध्याया सह भूपते । तं रात्रौ राजमार्गेण शङ्खभेर्य्यादिभिः स्वनैः । भ्रामयित्वा शनैः पश्चात् सूर्य्यायतनमानयेत् । तत्र चागुरुधूपेन प्रदीपाद्युपशोभितम् । प्रेक्षणीयप्रदानैश्च क्षपयित्वा शनैः शनैः । प्रभाते स्नपनं कृत्वा पयसा वा घृतेन वा । दीनान्धकृपणानाञ्च यथाशक्त्या च दक्षिणाम् । रथं सचाश्वमेतं भास्कराय निवेदयेत् । भुक्त्वा च ब्राह्मणैः सार्द्धं प्रयस्यार्कं त्वं ह व्रजेत्" । सौरधर्म्मोत्तरे "शृणु राजन् ! प्रवक्ष्यामि यत्कृत्वा व्रतमुत्तमम् । सर्वकामप्रदं पुण्यं कुष्ठादिव्याधिनाशनम् । भानोस्तुष्टिकरं राजन् ! भुक्तिमुक्तिप्रदायकम् । तस्य देवस्य वक्ष्यामि व्रतं राजन् ! सविस्तरम् । पूजार्घ्यमासनं दानं नैवेद्यं शृणु तत्त्वतः । सर्वतीर्थेषु यत् पुण्यं सर्वयज्ञेषु यत्फलम् । सर्वदानेन तपसा यत् पुण्यं समवाप्यते । प्रातःस्नानेन यत् पुण्यं यत् पुण्यं रविवासरे । मार्गशीर्षादिमासेषु द्वादशस्वपि भूपते ! ।। सूर्य्यव्रतं करिष्यामि यावद्वर्षं दिवाकर ।। व्रतं सम्पूर्णतां यातु त्वत्प्रसादात् प्रभाकर !" इत्यादि ।

सूर्य्यनक्तव्रतं भविष्यपु० "नक्तादादित्यवारेण सदा नक्ताशनो भवेत् । यदा हस्तेन संयुक्तमादित्यस्य च वासरम् । उत्पद्यते यदा भक्तिर्भानावुपरि शाश्वती । तदादित्यदिने कुर्य्यादेकभक्तं विमत्सरः । तदारभ्य सदा कार्य्यं नक्तमादित्यवासरे । नक्तमादित्यवारेण भोजयित्वा द्विजोत्तमान् । ततोऽस्तसमये भानो रक्तचन्दनपङ्कजम् । विलिख्य द्वादशदलं पूज्य सूर्य्येति पूर्वतः" । "इत्यनेन विधानेन वर्षमेकन्तु यो नरः । नक्तमादित्यवारेण कुर्य्यात् स नीरुजो भवेत् । धनधान्यसमायुक्तः पुत्रपौत्रसमन्वितः । मर्त्ये स्थित्वा चिरं कालं सूर्य्यलोकमवाप्नुयात्" ।

सूर्य्यषष्ठीव्रतं भविष्योत्तरे "मासि भाद्रपदे शुक्ले एकभक्ताशनो भवेत् । दन्तधावनपूर्वन्तु षष्ठ्यामुपवसेन्नर । गोरसर्द्दकलशेन स्नायात् कायविशुद्धये । रोचनाक्षतगोमूत्रमुस्ताचन्दनगोमयम् । दधिकालागुरुञ्चैव ललाटे तिलकं न्यसेत् । शिलारूपटलैश्चैव सौभाग्यारोग्यवर्द्धयत । स्रज कुङ्कुमताम्बूलं सिन्दूरं रक्तवाससी । वितरेत् सोपवासा हि नारी मङ्गल्यवर्द्धनम् । विधवा तु विरक्तापि कुमारी शुक्लवाससी । ततः स्वभवने भानुं पूजयेत् शीतलोदकैः । अपराह्णे ततः स्नात्वा सुमौनी नियतव्रतः । प्रतिमां स्नपयेद्भानोः पञ्चगव्येन वारिणा । रक्तचन्दनपङ्केन कुङ्कुमेन समालभेत् । अगस्त्यकुसुमै रक्तैः करवीरैः प्रपूजयेत्" ।

सूर्य्यसप्तमीव्रतं विष्णुधर्म्मोत्तरे "चैत्रे शुक्लस्य पक्षे तु सम्यक् षष्ठ्यामुपोषितः । सप्तम्यामर्चनं कुर्य्याद्देवदेवस्य भूपते ! । यच्चिह्नानं नरः कृत्वा गोमयेनोपलेपितः । लेपयेत्स्थण्डिलकं सम्यक् ततो गौरसदा नृप ।। तस्मादष्टदलकमलं वर्णकैस्तु तत्र लिखेत्" इत्यादि ।

सोमद्वितीयाव्रतं पद्मपु० "दद्यात्सितद्वितीयायां शिष्योर्वस्त्रभोजनम् । समाप्ते गोप्रदो याति विमाय शिवमन्दिरम्" विप्राय शिष्योर्वस्त्रभोजनं दद्यादित्यन्वयः । सोमश्चात्र देवता सोमव्रतमिदं स्मृतमिति सोमस्य देवतात्वं गम्यते । "कल्पान्ते राजराजस्य सोमव्रतमिदं स्मृतम्" ।

सोमव्रतं कालोत्तरे "चन्द्राष्टम्यां रोहिण्यां द्वादश्यां चन्द्रव्रतञ्चरेत् । शिवं सम्पूज्य विधिवत् स्नानैः पञ्चामृतादिभिः । विलेपनन्तु चन्द्रेण चन्दनेन तु सम्मितम् । शुक्लवस्त्रैस्तथा पुष्पैः पूजयेत् परमेश्वरम् । नैवेद्यं क्षीरकुम्भान्तु सितशर्करया युतम् । प्राशनं चन्दनेनैव रात्रौ जागरणं हितम् । आयुष्कामैः सदा कार्य्यं कीर्त्तिश्रीसाधने हितम् । इति चन्द्रव्रतं शाम्भोद्धारदानेन जायते" । कालिकापु० "वारे सोमस्य चाष्टम्यां पक्षयोः सोममर्चयेत् । विधिना चन्द्रचूडाङ्कं प्राज्यान्नेन सचन्दनम्" । पक्षयोः उभयत्र पक्षे नियमोऽष्टमीसोमवारयोः । अष्टौ-

सौभाग्यसंक्रान्तिसत्तमाम् ।' शृणु नारद ! यत्नेन धनैश्वर्य्यप्रदायिनीम् । अयने विषुवे युक्ते व्यतीपातेन भास्वता । संक्रान्तिदिवसे कुर्य्यादेकभक्तं विमत्सरः । पूर्व्वंश्रद्धानुमभ्यर्च्य तथा चैव द्वाहिने । सौभाग्याष्टकसंयुक्तं वस्त्रयुग्मं सयोषिते । विप्राय वेदविदुषे भक्त्या तत् प्रतिपादयेत् । एवं संवत्सरे पूर्णे कृत्वा ब्राह्मणभोजनम् । पर्व्वतं लवणं कृत्वा यथाविभवसारतः । काञ्चनं कमलं कृत्वा भास्करञ्चैव कारयेत् । गन्धपुष्पादिना पूज्य विप्राय प्रतिपादयेत्" ।

सौभाग्यावाप्तिव्रतं विष्णुधर्म्मोत्तरे "माघ्यान्तु समतीतायां प्रतिपत्प्रभृतिक्रमात् । पटे वा यदि वाश्चीयां लक्ष्मीं सम्पूजयेत् नरः । पूर्व्वोक्तं सकलं कुर्य्याद् विधिं चात्र नराधिप !" । पूर्व्वोक्तमिति चैत्रमासमारभ्यान्विरूपावाप्तिव्रतोक्तमित्यर्थः । "नित्यं समाचरेत् स्नानं तथा गन्धप्रियङ्गुणा । चरुं प्रियङ्गुणा कुर्य्याद्धोमं कुर्य्याच्च प्रियङ्गुणा" । प्रियङ्गु ककुभवद्गन्धद्रव्यम् "फाल्गुन्यान्तु ततो दद्यात् त्रिरात्रोपोषितो नरः । वस्त्रे च देवे नृप ! कुङ्कुमाक्ते लोहस्य पात्रस्थं तथैव कांस्यम् । सौभाग्यदं ह्येतदव समन्ते व्रतं कीर्त्तितमुक्तचित्त धीर ।" ।

सौरनक्तव्रतं नृसिंहपु० "हस्तयुक्ते चार्कदिने सौरनक्तव्रतं चरेत् । स्नात्वाभ्यर्च्य तु विप्रान् वै निरोगो जायते नरः" ।

सौरधर्म्मीव्रतं पद्मपु० "यवोपवासी सप्तम्यां समाप्ते हेमपङ्कजम् । गावश्च शक्तितो दद्याद्धोमान्ते घटसंयुताः । एतत् सौरव्रतं नाम सर्व्वलोकप्रदायकम्" ।

स्त्रीपुत्रकामावाप्तिव्रतं भविष्यपु० "एकभक्तेन या नारी कार्त्तिकन्तु क्षपेन्नृप ! । अहिंसादिनियमैः सुस्नाता ब्रह्मचारिणी । गुडान्नमिश्रं शाल्यन्नं भास्कराय निवेदयेत् । पुष्पाणि करवीराणि गुग्गुलं साज्यमादरात् । अमावास्यां षष्ठ्यां वा उपवासरतिर्भवेत् । पक्षयोरुभयोरेव श्रद्धया परयान्वितः । इन्द्रनीलप्रतीकाशैर्विमानैः सार्व्वकामिकैः । नारी कुलव्रतं प्राप्य सूर्य्यलोके महीयते" वर्षसाध्यमिदम् ।

स्वेष्टव्रतं पद्मपु० "आषाढादिचतुर्मासानभ्यङ्गं वर्जयेन्नरः । पारणे च पुनर्दद्यात्तिलतैलयुतं घटम् । भोजनं पायसाच्चैव स याति भवनं विभोः । लोकप्रीतिकरं ह्येतद् स्वेष्टवर्त्तनमुच्यते" ।

हयपञ्चमीव्रतं वाह्निकोते "बलराजसुताख्याता भ्रातरं हि मनोजवः । उच्चैःश्रवाः पूजनीयश्चैत्रशुक्लस्य पञ्चमी । तत्रैव पूज्या गन्धर्व्वास्तुरङ्गाख्यान्तु बान्धवाः । चन्द्रभागप्रमुखाः केचित् केचिद् पत्नैव संयुताः । भीमश्चित्ररथश्चैव विख्यातः सर्व्वविद्यम् । तथा शालिशिराः श्रीमान् प्रद्युम्नश्च महायशाः । नारदश्च कलिन्दश्च गन्धर्व्वश्च हाहा हूहूः । सुवाहुस्तुम्बुरुश्चैव तथा चित्ररथः प्रभुः । चित्राङ्गदश्च विख्यातश्चित्रसेनश्च वीर्य्यवान् । सिद्धपूर्व्वश्च नदरी पर्णीयश्च महायशाः । ब्रह्मचारी रतिगुणः सुपर्णोऽतिबलस्तथा । विश्वावसुः सुरेन्द्रश्च गन्धर्व्वोऽतिपराक्रमः । इत्येते पूजनीयाः स्युर्गीतैर्नृत्यैश्च वै शुभे । मोदकैः पोलिकाभिश्च परमान्नेन चाप्यतः । दध्ना गुडेन पयसा शालिपिष्टेन भूरिशः । धूपैर्माल्यैस्तथा दीपैर्द्विजानां स्वस्तिवाचनैः । एवं हि पूजिता सम्यक् तुरगाश्च हि बान्धवाः । ददत्यायुः प्रयच्छन्ति सदामित्रपराजयम् । आरोग्यं परमां पुष्टिं तथैव च विधीयते" ।

हरतृतीयाव्रतं स्कन्दपु० "माघे शुक्लतृतीयायामुपवासन्तु कारयेत् । रात्रौ समारभ्याकृत्य गौरीयागस्य मण्डपे । अष्टपत्रं लिखेत् पद्मं मण्डपे मुनिपुङ्गव ! । उमामहेश्वरं तत्र पूजयेत् सुसमाहितः । पूर्व्वपत्रे न्यसेद्गौरीमाग्नेय्यां ललितां न्यसेत् । दक्षिणे तु उमां नाम नैर्ऋत्यां च सतीं तथा । पश्चिमे वामदेवीन्तु वायव्यां मूलगौरिकाम् । उत्तरे तु सुभगान्तु ऐशान्यां गिरिजां तथा । उमामहेश्वरं मध्ये गन्धपुष्पैः प्रपूजयेत् । अलङ्कारञ्चैव संस्थाप्य तण्डुलैः परिपूरयेत् । एवं कृत्वा विधानेन सुमे ! वर्षचतुष्टयम् । आराधनन्तु देव्याश्च सौभाग्यजननं परम् । उद्यापनं तत कुर्य्यात् तस्मिन्नेव ततो दिने । उमामहेश्वरं हैमं स्वशक्त्या मण्डपे स्थितम् । वस्त्रैर्गन्धैश्च धूपैश्च दीपमाल्यादिभिस्तथा । भक्ष्यैर्नानाविधैः सम्यक् पूज्य भक्त्या ततो शुभे ! । तद्वद्द्वं समाभ्यर्च्य पूजयेद् द्विजसत्तमम् । नानैव पुरतो तस्य वस्त्रालङ्कारसंयुताम् । मिथुनानीह चत्वारि भोजयेत् सुसमाहितः । उमामहेश्वरं हैमं दत्त्वा भक्त्या क्षमापयेत्" ।

हरव्रतं भविष्यपु० "अष्टम्यां पूजितो देवी गोश्रुताभरणो हरः । धाम ददाति विपुलां कान्तिं शान्तिं यशस्तथा" । गोश्रुताभरणः चक्षुःश्रवोभूषः शिव इत्यर्थः । "वस्तुप. स्थानदत्तैव पापहाः च प्रपूजितः । मूलमन्त्रः सकलानि-

रक्तमन्त्राश्च कीर्त्तिताः । पूर्ववत् पद्मपत्रस्थः कर्त्तव्यश्च-तियोऽहर । गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते” ।

हरिव्रत वराहपु॰ “त्रैलोक्यगामिनी देवी लक्ष्मीस्तेऽस्तु सदा प्रिया । द्वादशी च तिथिस्तेऽस्तु कामरूपी च जायते” । हरि प्रतीदं वचनम् “कृतागतो भवेद् यस्तु द्वादश्यां तत्परायणः । स स्वर्गवासी भवति पुमान् स्त्री ना विशेषतः” ।

हरिकालीव्रत भविष्योत्तरे “शुक्ले भाद्रपदस्यैवं तृतीयायां समाचरेत् । रत्नधान्यैः सर्वरूढै कृत्वा विहितशाद्वले । खर्ज्जूरैर्नारिकेलैश्च फलैश्च मधुरैस्तथा । मातुलाङ्गकुल-मैर्धान्यकैर्जम्बुकैस्तथा । गन्धैः पुष्पैः फलैर्धूपैर्नैवे-द्यैर्मोदकादिभिः । प्रोषयित्वा समासाद्य पद्मरागैर्या-भाविता । घण्टावाद्यादिभिर्गीतैः शुभैर्दिव्यैः कथानकैः । पूजनीया महाराज । मन्त्रेणानेन भक्तितः । हरेर्नाम्न समुत्पन्ने ! हरिकालि ! हरिप्रिये ।। सर्वदा शक्तिमूर्त्तिस्थे । प्रणतार्त्तिहरे । नमः । इत्य सम्पूज्य तां देवीं दत्त्वाहि-प्राय दक्षिणाम् । कृत्वा जागरणं रात्रौ प्रभाते किञ्चि-दुद्गते । रात्रौ सुवासिनीभिश्च सा नेया तु जलाशये । ततो जलाशये रम्ये मन्त्रेणैव विसर्जयेत् । अर्च्चिता च मया भक्त्या गच्छ देवि । सुरालयम् । मम सौभाग्य-नाशाय पुनरागमनाय च । एवं यः पाण्डवश्रेष्ठ । हरिकालीव्रत चरेत् । प्रतिवर्षं विधानेन नारी वा भक्तितत्परा । कीत्वा यत् फलमाप्नोति तदन्येन न लभ्यते” ।

## परिशिष्टम् ।

आमलकैकादशीव्रत स्कन्दपु॰ प्रभासख॰ “फाल्गुनस्य सिते पक्षे एकादश्यामुपोषित । स्नात्वा नद्यां तडागे वा वाप्यां कूपे गृहेऽपि वा । गत्वा गिरौ वने वापि यत्र वा प्राप्यते शिवा । क्षीरोदे मथ्यमाने तु यदा वृक्षः समुत्थितः । आमर्दन्देवदैत्यानां तेन आमलकी स्मृता । तस्मिन् वृक्षे स्थिता लक्ष्मीः सदा पितृगृहे नृप ।। त्रिधालक्ष्मीस्थितो वृक्षः सेव्यते सुरसत्तमैः । देवैर्ब्रह्मा-दिभिः सर्वैर्द्दष्टोऽसौ देवपूज्य कृत । तत्र गत्वा हरिः पूज्यो वृक्षमूलेऽथ वा शिवा । पूज्या पुष्पैः शुभैरात्रौ कार्य्यं जागरणं नरैः । कदाचिकशते काय्यौ फलै-स्तस्याः प्रदक्षिणा । प्रदक्षिणीकृत्य ततो भोक्तव्यं तु फल नरैः । करकं जलपूर्णं तु कर्त्तव्यं पात्रसंयुतम् । हविष्यान्नन्तु कर्त्तव्यं कथाश्रवणतत्परैः । मुच्यन्ते दे-हिन पापैः कलिजैः कायसम्भवैः । देहान्ते ये नरा पूर्वं पृच्छन्ते हरिमन्दिरम्” ।

एतानि व्रतानि प्रायेण हेमाद्रिव्रतखण्डोक्तानि प्रसङ्गा-गतान्यपि कानिचिदुक्तानि । अन्यान्यपि व्रताकांदानु-क्तानि द्रष्टव्यानि नैमित्तिकानि माङ्गल्यादीनि व्रतानि तु तत्तच्छब्दे उक्तानि द्रष्टव्यानि । [२विस्तारे च अमर ।

**व्रतति** स्त्री प्रत—अति पृषो॰ वा ङीप् । १लतायाम् ।

**व्रतभिक्षा** स्त्री व्रताङ्गं भिक्षा । उपनयनकालविहित-भिक्षायां तद्विधि संस्कारतत्त्वे दर्शितो यथा “अथ भैक्ष्यश्चरति” । अथ गन्धत्तूष्णीमादित्योपस्थानम-ग्निप्रदक्षिणञ्च शस्तिं । “प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् । प्रदक्षिणं परीत्याग्निं चरेद्भैक्ष्यं यथा-विधि” इति मनुवचनात् । “भिक्षासमूहं भैक्ष्यं तच्चरति आहरति इत्यर्थः । “मातरमेवाग्रे ये चान्ये सुहृदो या-वन्तो वा सन्निहिताः स्युः” । याचते इत्यध्याहार्य्यम् । सुहृद स्निग्धहृदय स्वसादयः तथाच मनु “मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् । भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत्” । सन्निहिताश्चेद्गृहस्थ न तु प्रतिगृह्य गत्वा । (भवति ! भिक्षां देहीति) ब्राह्मण-भिक्षा प्रयोगः । तथा च मनुः “भवत्पूर्वं चरेद् भैक्ष्यमुप-नीतो द्विजोत्तमः । भवन्मध्यन्तु राजन्यो वैश्यस्तु भव-दुत्तरम्” । “आदिमध्यावसानेषु भवच्छब्दोपलक्षिता । ब्राह्म-णक्षत्रियविशां भैक्ष्यचर्य्या यथाक्रमम्” इति याज्ञ-वल्क्यवचनाच्च । आचार्य्याय भैक्ष्यं प्रणिपत्य वेदयति (समर्पयति) भोरिति” । “आचार्य्याय निवेद्य प्रतिगृह्णीया-दिति” गृह्यान्तरवचनात् । भैक्ष्य भोरिति निवेदनमन्त्र । भैक्ष्यस्य संस्कारार्थत्वात् आचार्य्याय निवेद्य स्वयं तदेव भुञ्जीत । तथा च मनुः “समाहृत्याथ तद्भैक्ष्यं यावदन्न-ममायया । निवेद्य गुरवेऽश्नीयात् आचाम्य प्राङ्मुखः शुचि” । आचार्य्यश्च माणवकाय भैक्ष्यं प्रदाय कर्म्मशेष समापयेत्” ।

**व्रतसंग्रह** पु॰ ६त॰ । व्रतपरणार्थं कृतदीक्षायाम् । हेमच॰

**व्रतादेश** पु॰ व्रतमादिश्यतेऽत्र आ+दिश आधारे ल्युट् । उपनयने तत्र हि आचार्येण माणवकस्य व्रतमादिश्यते ।

**व्रतिन्** पु॰ व्रतमस्यास्ति इनि । १व्रतधारके २यजमाने च । अमरः ।

**व्रश्च** छेदे तु॰पर॰सक॰ऊदित् वेट्। वृश्चति अव्रश्चीत् अव्राक्षीत्।

**व्रश्चन** पु॰ वृश्च्यतेऽनेन व्रश्च-ल्युट्। (छेनि) १स्वर्णादिच्छेदनार्थे अस्त्रभेदे अमरः। भावे ल्युट्। २छेदने न॰ अमरः।

**व्रात** पु॰ वृ-अतच् पृषो॰। समूहे अमरः।

**व्रातीन** त्रि॰ व्रातेन चरति ख। सङ्घजीविनि। "व्रातीनव्यालदीप्तास्त्रैः" भट्टिः।

**व्रात्य** पु॰ व्रातात् समूहात् च्यवति यत्। अध्ययनार्थे, संस्कारहीने, जातिमात्रोपजीविनि, "अत ऊर्द्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः। सावित्रीपतिता व्रात्या भवन्त्यार्य्यविगर्हिताः" मनुः। तत्र प्रायश्चित्तं मिता॰ उक्तं यथा तत्र व्रात्यतायां मनुनेदमुक्तम् "येषां द्विजानां सावित्री नानूच्येत यथाविधि। तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेदिति"। यत्तु यमेनोक्तम् "सावित्रीपतिता यस्य दश वर्षाणि पञ्च च। सशिखं वपनं कृत्वा व्रतं कुर्य्यात् समाहितः। एकविंशतिरात्रञ्च पिबेत् प्रसृतियावकम्। हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च वा। ततो यावकशुद्धस्य तस्योपनयनं स्मृतम्" इति। तदुभयमपि याज्ञवल्कीयमासपयोव्रतविषयम्। यत्तु वशिष्ठेनोक्तम् "पतितसावित्रीक उद्दालकव्रतञ्चरेत्। द्वौ मासौ यावकेन वर्त्तयेन्मासं पयसा पक्षमामिक्षयाऽष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेदश्वमेधावभृथङ्गच्छेद्व्रात्यस्तोमेन वा यजेतेति"। तत्रेयं व्यवस्था यस्योपनयने आपद्भावेन तत्कालातिक्रमस्तस्य याज्ञवल्कीयव्रतानामन्यतमत् शक्त्यपेक्षया भवति अनापद्यतिक्रमे तु मानवं त्रैमासिकम्। तत्रैव पञ्चदशवर्षादूर्द्धमपि कियत्कालातिक्रमे तूद्दालकव्रतम् व्रात्यस्तोमो वेति। येषान्तु पित्रादयोऽप्यनुपनीतास्तेषामापस्तम्बोक्तम् "यस्य पिता पितामहश्चानुपनीतौ स्यातान्तस्य संवत्सरं त्रैविद्यकं ब्रह्मचर्य्यम्। यस्य प्रपितामहादेर्नानुस्मर्यते उपनयनन्तस्य द्वादश वर्षाणि त्रैविद्यकं ब्रह्मचर्य्यमिति"।

**व्रात्यस्तोम** पु॰ व्रात्ययोग्यः स्तोमः। यज्ञभेदे "स च यज्ञचतुर्विधः" कात्या॰ श्रौ॰ २२।४।१ सूत्रादौ दर्शितो यथा

"व्रात्यस्तोमाश्चत्वारः" सू॰ "व्रात्यस्तोमसंज्ञकाश्चत्वारः क्रतवो भवन्ति व्रात्याः प्रसिद्धा एव त्रिपुरुषं पतितसावित्रीकाः। प्रायश्चित्तार्थत्वाच्च यौगिकोऽस्तौ भवन्ति न ज्योतिष्टोमधर्मं प्रयुञ्जते अतदङ्गत्वात् तद्गुणाभावाच्च स्वपतौ हिंसं प्रकल्प्य लौकिक इति। "द्वितीय उक्थ्यः" सू॰ "व्रात्यगणस्य ये सम्पादयेयुस्ते प्रथमेन यजेरन्" सू॰ सम्पादनं च गायननर्तकादीनाम् तेषां प्रथमेऽधिकारः। ये व्रात्या नृत्यगीतवाद्यशस्त्रधारणादौ स्वयं प्रवीणाः सन्त उपदेष्टारो भूत्वा तां विद्यां व्रात्यसमूहस्य सम्पादयेयुः शिक्षयेयुः पाठयेयुः ते प्रथमेन यजेरन्। "द्वितीयेन निन्दिता नृशंसाः" सू॰। नृशंसत्वेन ये निन्दितास्तेषां द्वितीयेऽधिकारः" सं॰। ये नृशंसा निन्दितान्ताभिर्मनुष्यैरभिशंसनेन पापाध्यारोपणेन निन्दिताः गर्हिताः ज्ञातिभिर्बहिष्कृताः ते द्वितीयेन यजेरन्" कर्कः "तृतीयेन कनिष्ठाः" सू॰ कनिष्ठाः लघवः। "ज्येष्ठाश्चतुर्थेन" सू॰ अधिक्रियन्ते। ज्येष्ठशब्दार्थमाह "अपेतप्रजननाः स्थविरास्तदाख्यास्तेषां ये नृशंसतमाः स्युर्दुर्व्यवहृतमो वानूचानतमो वा तस्य गार्हपत्ये दीक्षेरन्" सू॰। "स गृहपतिः कर्त्तव्यः" क॰। अपगतप्रजननेन्द्रियसामर्थ्या यौवनापगमे। निर्वीर्य्यप्रजनाः स्थविरा वृद्धास्तदाख्याः। नृशंसतमः अत्यन्तं क्रूरकर्मा" भा॰।

**व्री** वृतौ क्र्या॰ प्वा॰ पर॰ सक॰ अनिट्। व्रि(व्री)णाति [अव्रैषीत्।

**व्री** गतौ दिवा॰ आ॰सक॰ अनिट्। व्रीयते अव्रेष्ट। ओदित् व्रीणः। [अव्रीडिष्ट

**व्रीड़** क्षेपे दिवा॰ पर॰ सक॰ लज्जायां अक॰ सेट्। व्रीड्यते

**व्रीड़** पु॰ व्रीड-घञ्। लज्जायाम्। अ। तत्रैव स्त्री अमरः।

**व्रीस** वधे वा चु॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट्। व्रीसयति ते व्रीसति।

**व्रीहि** पु॰ व्री-हि किच्च। १धान्यभेदे २आशुधान्ये च अमरः। तद्भेदादिकं भावप्र॰ उक्तं यथा

"वार्षिकाः कण्डिताः शुक्ला व्रीहयश्चिरपाकिणः। कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि। शालामुखो जतुमुख इत्याद्याः व्रीहयः स्मृताः। कृष्णव्रीहिः स विज्ञेयो यः कृष्णतुषतण्डुलः। पाटलः पाटलापुष्पवर्णको व्रीहिरुच्यते। कुक्कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्डक उच्यते। शालामुखः कृष्णशूकः कृष्णतण्डुल उच्यते। लाक्षावर्णं मुखं यस्य ज्ञेयो जतुमुखस्तु सः। व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः। अल्पाभिष्यन्दिनो बद्धवर्चस्काः षष्टिकैः समाः। कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे"। तत अस्त्यर्थे व्रीह्या॰ इनिठनौ। व्रीहिन् व्रीहिक तद्विशिष्टे त्रि॰ त्रिस्रा॰ दुराड यन्ति अवयवार्थे अण्। व्रैह तदवयवे।

**व्रीहिकाञ्चन** पु० व्रीहिषु काञ्चनं तद्रूपमस्त्यस्य अच्। मसूरे त्रिका०। [पानि) क्षुपभेदे राजनि०।
**व्रीहिपर्णी** स्त्री व्रीहीणामिव पर्णान्यस्याः ङीप्। (शाल-
**व्रीहिभेद** पु० ६त०। १धान्यभेदे (चिना) अमरः। २धान्यविशेषे च। [पुरोडाशे। अन्यत्र त्रिला० ङीप्।
**व्रीहिमय** पु० व्रीहेर्विकारः पुरोडाशः मयट्। व्रीहिविकारे
**व्रीहिराजिका** पु० व्रीहिषु राजिकाकारे अस्त्यस्याः अच्। कङ्गुधान्ये (काङ्नी) मेदि०।
**व्रीहिश्रेष्ठ** पु० व्रीहिषु श्रेष्ठः। शालिधान्ये राजनि०।
**व्रीह्यगार** न० ६त०। धान्यस्थापनस्थाने कुसूले त्रिका०।
**व्रीह्यादि** पु० विकाराद्यर्थे इनिठन्प्रत्ययनिमित्ते पा०ग०सू० उक्ते शब्दगणे स च "व्रीहि माया शाला शिखा माला मेखला केका अष्टका पताका चर्मन् कर्मन् वर्मन् दंष्ट्रा संज्ञा वडवा कुमारी नौ वीणा बलाका यवखद नौकुमारी (शीर्षान्नञः)" "नौकुमार्य्यौ रिकार्थौ गणे द्विधा पाठ" सि०कौ०। "अत इनिठनौ" "व्रीह्यादिभ्यश्च" पा० व्रीही व्रीहिक। "न च सर्वेभ्यो व्रीह्यादिभ्य इनिठनाविष्येते किं तर्हि शिखामालासंज्ञादिभ्य इनिः यवखदादिभ्यः ठन्। अन्येभ्य उभयम्" सि०कौ०।
**व्रुड** संवरणे सक० सघाते मज्जने च अक० तु० कुटा० पर० सेट्। व्रुडति अव्रुडीत्।
**व्रूस** वधे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। व्रूसयति ते व्रूसति। [चेलाटौ।
**व्रैहेय** त्रि० व्रीहीणां भवनं क्षेत्रम् ढक्। व्रीहिभवनयोग्ये
**व्ली** गतौ वृतौ च क्र्यादि० प्वा० प० सक० अनिट्। (वि)व्लीनाति अव्लैषीत्।

## परिशिष्टम्।

**वञ्ज** पु० सामवेदप्रसिद्धे यज्ञभेदे सि०कौ०।
**विजया** स्त्री शच्यादिषु मातृषु मातृभेदे
**विजयाभिनन्दन** पु० कलियुगीयशककर्त्तृनृपभेदे शकशब्दे दृश्यम्।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्य सङ्कलिते वाचस्पत्याभिधाने वकारादिशब्दार्थसङ्कलनम्।

# श

**शकारः** ऊष्मवर्णभेदः। अस्योच्चारणस्थानं तालु। तस्योच्चारणे आभ्यन्तरप्रयत्नः विवृतम्। बाह्यप्रयत्नाः विवारश्वासाघोषा महाप्राणश्च। अस्य ध्येयस्वरूपम् "शकारं परमेशानि! शृणु वर्णं शुचिस्मिते!। रक्तवर्णप्रभाकारं स्वयं परमकुण्डली। चतुर्वर्गप्रदं देवि! शकारं ब्रह्मविग्रहम्। पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये!। रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा। त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम्" कामधेनुतन्त्रम्। अस्य वाचकशब्दा योगिनीतन्त्रोक्ता यथा "शः सव्यच कामरूपी कामरूपो महामतिः। सौख्यमाला कुमारोऽस्मि श्रीकण्ठो वृषकेतन। वृषघ्नं शयनं शान्ता सुभगा विस्फुलिङ्गिनी। कलुर्देवो महालक्ष्मीर्महेन्द्रः कुलकौलिनी। वाड्हंसो वियद्वक्त्रं हृदनङ्गोऽङ्कुशः खम०। वामोरुः पुण्डरीकाक्षः कान्तिः कल्याणवाचकः"। मातृकान्यासेऽस्य हृदादिदक्षकरे न्यास्यता। काव्यादौ प्रथमप्रयोगे सुखं फलम्। "शं सुखं प्रसुखेदम्" वृ० र० टी०। [शङ्कर०।
**श** न० शी-ड। १मङ्गले त्रिका०। २महादेवे, ३शस्त्रे च पु०
**शंयु** त्रि० शमस्त्यस्य शम्+युस्। शुभान्विते त्रिका०।
**शंव** त्रि० शमस्त्यस्य शम्+व। १शुभयुक्ते त्रिका०। २मूसलाग्रलोहे ३वज्रे च पु० धरणि।
**शंवर** न० शं वृणोति शम्+वृ-अच्। जले अमरः।
**शंसा** स्त्री शन्स-अ। १वाक्ये। २वाञ्छायां मेदि०। ३प्रशंसायाञ्च शब्दर०। [२कथिते ४स्तुते च।
**शंसित** त्रि० शन्स-क्त। १निश्चिते हला०। २हिंसिते।
**शंस्य** त्रि० शन्स-ण्यत्। १हिंस्ये २स्तुत्ये ३वाच्ये च।
**शक** त्रासे अक० सशये सक० भ्वा० आ० सेट् इदित्। शङ्कते अशङ्किष्ट।
**शक** क्षमायां सक० दि० उभ० सेट्। शक्यति ते अशकीत्-अशकीत् अशकिष्ट "शक्योऽस्य मन्युर्भवता विनेतुम्" रघुः।
**शक** सामर्थ्ये स्वा० प० अक० इरित् वेट्। शक्नोति अशकत्-अशाक्षीत्। पुषादिरित्येके तेन अशकदित्येव।
**शक** पु० शक-अच्। १जातिभेदे स च क्षत्त्रियः १९०७पृ० दृश्यम्। २देशभेदे स्वराज्याधिपतिवराङ्कप्रवर्त्तके ३नृपभेदे ४तदीये वत्सरे च। कलियुगे शककर्त्तारः युधिष्ठिरः विक्रमादित्यः शालिवाहनश्चेति त्रयो गताः

विजयाभिनन्दनादयस्त्रयो भविष्यन्ति । तथा हि कलौ षट् शककर्त्तार तत्रत्यादि ज्योतिर्वि० १०अ० उक्तं यथा "कलौ भविष्यन्त्यथ भारतावनौ महीभुजो वाञ्छन्ततोऽप्यनेकश । शकास्तथैषामभिषेचनादिवं हितं यदोदीरितकालबाधितम् । धराधिभूमिप्रशकादिनर्गतजस्तादाधनस्थोऽभिजनैर्नमस्कृतः । स्तुतः स रामाधिजनैः प्रतिष्ठितो न मन्त्रभेदाद्यभिषेचनोचित । निहन्ति यो भूतलमण्डले शकान् सपञ्चकोट्यञ्जदकमयान् कलौ । स राजपुत्र शककारको भवेत् नृपाधिराज्ये शतमाककर्त्तृ हा" । (तत्र शककारकस्य विक्रमादित्यस्य हननात् शालिवाहनस्य शककर्त्तृत्वम्) "युधिष्ठिरो विक्रमशालिवाहनौ नराधिनाथौ विजयाभिनन्दन । इमेऽतु नागार्जुनमेदिनीविभुर्बलि क्रमात् षट् शककारकाः कलौ"। तत्प्रवृत्तिकालास्तत्राह "युधिष्ठिरात् वेदयुगाम्बरान्नयः (३०४४) कलस्वविश्वे (१३५) ऽम्बरखाष्टभूमय. १८००० । ततोऽयुतं १०००० लक्षचतुष्टयं क्रमात् धरादृगष्टाविति (८२१) शाकवत्सराः । युधिष्ठिरोऽभूत् हि हस्तिनापुरे तथोज्जयिन्याः पुरे विक्रमाह्वयः । शालेयभूमीवृत शालिवाहन चित्रकूटे विजयाभिनन्दनः । नागार्जुनो रोहितके क्षितौ बलिर्भविष्यतीन्द्रो भृगुकच्छपत्तने । शकप्रवृत्तेरटनन्तरं भवन्त्यं भविष्यन्त्यवनीभृतोऽकृत" । अत्र युधिष्ठिरात् प्राक् कलौ शककर्त्रन्तराभावात् कलियुगारम्भकालादेव तस्य शककाल उक्त वराहसंहितायां १३ अ० तु तद्राज्यावधित एव तच्छककाल इत्यभिप्रायेण "आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ । षड्द्विकपञ्चद्वियुत (२५२६) शककालस्तस्य राज्यस्य" तेन कले (५१८) वर्षेषु गतेषु युधिष्ठिरस्य राज्यप्रवृत्ति । षट्कर्त्तृतत्सरसमष्टि

| | | |
|---|---|---|
| युधि० | ३०४४ । | इति न कलिमानसंख्याविरोधः |
| विक्र० | १३५ | अतएव ज्योतिर्विदाभरणग्रन्थे यन्म- |
| शालि० | १८००० | कृतेन "वर्षैः सिन्धुरदर्शनाम्बरगुणै- |
| विजया० | १०००० | र्याते कलौ सम्मिते" इति कलि- |
| नागा० | ४००००० | युगस्यैव ३०६८ वर्षेषु गतेषु यन्त्र |
| बलि० | ८२१ | करणक्रम । |

४२२०००

**शकट** पु० न० शक-अटन् । १यानभेदे (गाडि) अमर० । २असुराधिष्ठिते नन्दालयस्थे शकटविशेषे शकटभञ्जनशब्दः । ३दिव्यचयपरिमाणे हेमच० । स्वार्थे ङीप् । स्वार्थे क । शकटिका तत्रैव स्त्री ।"

**शकटहन्** पु० शकटमसुराधिष्ठितशकटभेदं हतवान् हन-भूत क्विप् । श्रीकृष्णे तत्कथा हरिवं० ६२अ० ।

**शकटाह्वा** स्त्री शकटाकारत्वात् तदाह्वा यस्याः । रोहिणीनक्षत्रे तस्या शकटाकारपञ्चतारात्मकत्वेन तथात्वम् ।

**शकन्धु** पु० ६त० शकन्धुः । पररनिपात शकाना कूपे ।

**शकल** पु० न० शक-कलच् । १खण्डे २एकभागे । ३त्वचि ४वल्कले मेदि० ५शल्के (आंस) च न० ।

**शकलिन** पु० शकलं शल्कमस्यास्ति इनि । मत्स्ये अमर० ।

**शकाब्द** पु० शककर्त्तृनृपसम्बन्धी अब्द । १शकप्रवर्त्तकनृपराज्यावधिवत्सरे २तत्संख्यायाञ्च ।

**शकार** पु० "मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्त । सोऽयमनूढाभ्राता राज्ञ श्यालश्च शकार इतीष्टः" सा०द० उक्तलक्षणे १राज्ञोऽनूढभार्याभ्रातरि । श+स्वरूपे-कार । शस्वरूपे ३वर्णे च ।

**शकारि** पु० शकाना म्लेच्छजातिभेदानामरिः । विक्रमादित्ये

**शकुन** न० शक-उनन् । १शुभाशुभसूचकनिमित्ते-शाकुसन्तनकाशादिदर्शनादौ । तु शकुनशब्दे ३६१४० दृश्यम् २पक्षिमात्रे ३पक्षिभेदे गृध्रे च पुस्त्री० मेदि० ।

**शकुनज्ञ** त्रि० शकुन जानाति ज्ञा-क । १निमित्ताभिज्ञे २ज्योत्स्ना स्त्री त्रिका० ।

**शकुनि** पु० शक-उनि । १पक्षिमात्रे अमर० । २चिल्लपक्षिणि हेमच० । ३सुबलराजपुत्रे दुर्योधनमातुले च । ४श्यामापक्षिणि स्त्री ङीप् राजनि० । ५ववादिषु करणभेदे पु० ६दुःसहस्यपुत्रे पु० मार्कण्डेयपु० । विकृतिनृपपुत्रभेदे पु० वह्निपु० ।

**शकुनिप्रपा** स्त्री० ६त० । पक्षिणां पानीयशालायाम् हारा० ।

**शकुन्त** पु० शक-उन्त । १पक्षिमात्रे । २भासपक्षिणि ३कीटभेदे च मेदि० ।

**शकुन्तला** स्त्री० शकुन्तैः लायते ला-घञर्थे-क । मेनकागर्भजातायां विश्वामित्रसुतायाम् सा च जातमात्रा मात्रोपसृष्टा शकुन्तपालिता पश्चात् कण्वमुनिना प्रतिपालिता दुष्मन्तनृपेण गान्धर्वविधिना व्यूढेति "निर्जने तु वने यस्मात् शकुन्तैः परिपालिता । शकुन्तलेति नामास्याः कृतं चापि ततो मया" भा० आ० ७२अ० । शकुन्तलामधिकृत्य कृतो ग्रन्थ । अण् आख्यायिकायां तस्य वा लुक् । कालिदासप्रणीते शकुन्तलाधिकारेण कृते २नाटकभेदे च अपोऽस्त्रि तु शाकुन्तल तत्रार्थे न० ।

**शकुन्तलात्मज** पु० ६त० । शकुन्तलासुते भरतनृपे हेमचन्द्र० ।

**शकुन्ति** पु० शक–उन्ति । १पक्षिमात्रे अमर० । २भासपक्षिणि उणादिकोष ।

**शकुल** पुस्त्री० शक–उलच् । मत्स्यभेदे (शउल) अमर० । स्त्रियां ङीष् । [याम् राजनि० ।

**शकुलाची** पु० शकुलस्याचीव अच् समा० टीच् । गडदूर्वौ०

**शकुलादनी** स्त्री० शकुलैरद्यते अद–ल्युट् । कट्की ) शाकभेदे अमर । २जटामांस्यां, ३जलपिप्पल्यां, कट्फले च विश्व । [(गडुइ) मत्स्ये । अमर ।

**शकुलार्भक** पु० शकुलस्यार्भक इव क्षुद्रत्वात्तदाकारत्वाद्वा ।

**शक्तन्** न० शक–क्तनु । विष्ठायाम् अमर ।

**शकृत्कारि** पु० शकृत् किरति कृ–इन् । १गवादीनां २वत्से २वत्सायां स्त्री ङीप् ।

**शकृद्द्वार** न० ६त० । मलद्वारे अपानस्थाने हेमच० ।

**श(क्क)र** पु० शक–क्विप् क–अच् कर्म० शक–करप् वा । १वृषे मेदि०। चतुर्दशाक्षरपादके २छन्दोभेदे । ३नदीभेदे ४मेखलायाञ्च स्त्री ङीप् । ५अङ्गुलौ सि०कौ०। वृषो० शर्करीत्यपि चतुर्दशाक्षरपादके छन्दसि ।

**शक्त** त्रि० शक–क्त । समर्थे हेमच० ।

**शक्ति** स्त्री शक-क्तिन् । १सामर्थ्ये २स्त्रीदेवतायां देवीमूर्त्तौ । न्यायादिमते कारणनिष्ठे कार्य्योत्पादनयोग्ये ३धर्मभेदे । २शब्दनिष्ठे अर्थबोधकताख्ये बोध्यत्वप्रकारकेच्छाविषयत्वरूपे वृत्तिभेदे शक्त्याख्ये ४अस्त्रभेदे च अमर । मीमांसकमते शक्तिः पदार्थान्तरम् यथोक्तम् अनुमा०चि०। "अथ दाहादेरीश्वरवत् कार्य्येणैव शक्तिरप्यनुमीयते तथा हि यादृशादेव करानलसंयोगाद्दाहो जायते तादृशादेव सति प्रतिबन्धके न जायते अतो यदभावात् कार्य्याभावस्तदङ्गादावभ्युपेय तेन विना तदभावात् यत्तद्भावानुपपत्तेर्व्यतिरेकतस्त्वेन शक्तिसिद्धिः" । न्यायमते तन्निरासस्तत्रैव ईश्वरवादप्यन्ते दर्शितो यथा

"तृणारणिमणिफुत्कारादिव्यक्तीनामानन्त्येन प्रतिव्यक्ति भावहेतुजानन्तशक्तिस्वीकारे गौरवं तावदनन्तव्यक्तिजन्यावान्तरवह्निव्यक्तिषु जातित्रयकल्पने लाघवमिति तदेव कल्प्यते । न च जातौ योग्यानुपलब्धिबाधः गोमयप्रभववृश्चिकयोर्वा पाटवत्वकपिलत्वव्यङ्ग्यवैजात्यस्य प्रत्यक्षसिद्धत्वात् तृणजन्यनानावह्निषु तृणजन्यत्वज्ञानानन्तरं तृणजन्यव्यापकज्ञात्यनुगतबुद्धिरस्ति जातिविषया । तृणजन्यत्वेनोपाधिनाऽपि सेति चेन्न बाधकं विनानुगतबुद्धेरखण्डोपाधिजातिविषयत्वनियमात् । न च गोमयवृश्चिकप्रभववृश्चिकजातिपरम्परायामनुगतजात्यापत्तिः गोमयजन्यवृश्चिकप्रभवत्वजाते सत्त्वात् वह्निमात्रे च दाहस्पर्शमात्रवयवः तत्संयोगः सैवमादिव कारणानि न तु तृणादिकं विनापि, तदुत्पत्तिप्रसङ्गः विशेषसामग्रीमादायैव साध्यसामग्रीजनकत्वात्" ।

एवमाधेयशक्तिरपि मीमांसकमतेन पूर्वपक्षीकृत्य तत्र निरस्ता यथा तत्र मोक्षपप्रतिज्ञाशब्दयोर्दर्शितम् अधिकं किञ्चिदत्र प्रदर्श्यते यथा

"कामिनीचरणाभिघातदोहदादिभिरशोकपुष्पोत्कर्षदर्शनादपि नाधेयशक्तिः समयविशेषावच्छिन्नचरणदोहादिसंयोगध्वंसस्यैव कारणत्वात् चरणाभिघाताकटभागान्तजनितवृक्षादेव वा तदुपपत्तिः कालान्तरे पुष्पाद्युत्कर्षात् । तु स्वावयवोपचयावयवसमायेन द्रव्यभेदावश्यकत्वात् । नापि ताम्रकांस्यादावम्लभस्मसंयोगादिजन्यशुद्धिरूपा आधेयशक्तिः तत्संयोगध्वंसस्य स्वयोगसमानकालीनास्पृश्यस्पर्शादिप्रतियोगिकयावदभावादिसंसर्गाभावसहितस्य शुद्धिपदार्थत्वात् । भस्मादिसंयोगजनित कांस्याद्युपभोक्तृनिष्ठ संस्कार एव शुद्धिरित्यन्ये । अभिमन्त्रितपयपक्वशरादावपि समयविशेषावच्छिन्नाभिमन्त्रणध्वंस एव व्यथाद्यपनायकः तत्तन्मन्त्रदेवतासन्निधिरेव वा । कलमबीजादीनामापरमाण्वन्तभङ्गे तत्र बीजान्तरजात्यभावे नियतकलमजातीयादिसिद्धिरपि । परमाणुपाकजविशेषादेव कार्य्यवृत्तिरूपादि सजातीयस्य पूर्वरूपादिविजातीयस्य परमाणौ पाकजरूपादेरभवासिद्धत्वात् यथा हि कमलबीजं यवादिजात्या व्यावर्त्यते तथा तत्परमाणवोऽपि पाकजैरेव । एवं माषकर्षणजनितात् परमाणुपाकपरम्पराविशेषादेव हैमन्तिकशस्योत्पत्तिः । एतेन क्षाराक्षारसावसेकादयो व्याख्याताः । निमित्तविशेषजनितपाकजात्तत्फलविशेषः यथा हारीतमांस हरिद्रानलसाधितस्तुपयोगात् सद्योऽप्यापादयति नान्यथा साधितमित्यादि । यत्र च तोयतेजोवायुषु न पाकजोविशेषस्तत्रोद्भवानुद्भवद्रवकठिनत्वादयोविशेषास्तत्तदुपनायकादृष्टविशेषादेव । दत्तादौ चाधिवासपूर्वकदत्ताचेदृशसामग्री तुल्यस्य सत्यासत्यप्रतिग्रहत्वसहिता प्राचीनाधर्माधर्मफले तज्जन्यमदृष्टं जनयति । यद्वा अय निष्पापः पावनाञ्चेति तुलारूढाभिशस्तज्ञानविशेषसहिता सा तथा, तदाहुः, "तास्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः" इति

अथ वा प्रतिज्ञायुक्तयुक्ती अपेक्ष्य तया समाधर्मौ जन्येते ताभ्याञ्च जयपराजयौ सत्यासत्यप्रत्यभिज्ञाभियुक्तस्तुलारोहणस्येष्टानिष्टफलत्वे नार्थतो विधिनिषेधात्। अभियुक्तः सत्यप्रतिज्ञो विजयकामस्तुलामारोहेदित्यसत्यप्रतिज्ञो न तुलामारोहेदिति श्रुतेरुन्नयनात्। यद्वा तया देवतासन्निधिः क्रियते ताश्च कर्मानुरूपफलमभिव्यञ्जयन्ति"। तत्र च शक्तिपदार्थस्वरूपादिकमुक्तं यथा

"कश्चित्तु शक्तिपदार्थं कारणत्वं तच्च स्वस्वव्याप्येतरसकलसमवधाने कार्याभावव्यापकाभावप्रतियोगित्वम्। अथ वा यत्र कार्याभावव्याप्यता इतराभावावच्छिन्ना तत्कारणबीजे अङ्कुराभावव्याप्यता न बीजत्वेनावच्छिद्यते इतरसमवधाने सति बीजादङ्कुरसत्त्वात्, किन्त्वितराभावेनावच्छिद्यते इतराभावावच्छिन्ना तत्कारणबीजे अङ्कुराभावव्याप्यता न बीजत्वेनावच्छिद्यते इतराभावे बीजत्वादङ्कुराभावनियमात्। शिलाशकलेष्वङ्कुराभावव्याप्यता शिलात्वेनैवावच्छिद्यते। यद्वा अन्यासमवधानावच्छिन्नकार्यानुत्पत्तिव्याप्यत्वं कारणत्वं, रासभादेः कार्याभावव्याप्यता अन्यासमवधानस्य वैयर्थ्येनानवच्छेदकत्वात्। अनन्यथासिद्धनियतपूर्ववर्त्तिजातीयत्वं वा तत्त्वम्। अन्यथासिद्धञ्च त्रिधा येन सहैव यस्य यं प्रति पूर्ववर्त्तित्वमवगम्यते, यथा घटं प्रति दण्डरूपस्य,(१) अन्यं प्रति पूर्ववर्त्तित्वे ज्ञाते एव यं प्रति यस्य पूर्ववर्त्तित्वमवगम्यते यथा शब्दं प्रति पूर्ववर्त्तित्वे ज्ञात एव ज्ञानं प्रत्याकाशस्य(२)। अन्यत्र क्लृप्तनियतपूर्ववर्त्तिन एव कार्यसम्भवे तत्सहभूतत्वम्(३) यथा गन्धवति गन्धान्तरोत्पादाद्गन्धं प्रति तत्प्रागभावस्य नियतपूर्ववर्त्तित्वकल्पनात् पाकजस्थले गन्धं प्रति रूपादिप्रागभावादीनामप्यन्यथासिद्धत्वम् एतच्चितयव्यतिरेके नियतपूर्ववर्त्तित्वं कारणत्वम्। यागापूर्वयोस्तु यागपूर्ववर्त्तित्वेऽवगते न त्वगम्यमाने यत्र जन्यस्य पूर्ववर्त्तित्वेऽवगते जनकस्य पूर्वभावोऽवगम्यते तत्र जन्येन जनकस्यान्यथासिद्धिः। यत्र च जनकस्य तथात्वेऽवगते जन्यस्य पूर्वभावावगतिस्तत्र तद्द्वारा तस्य जनकत्वमेव। दण्डचक्रभ्रमयोस्तु तुल्यवदेव पूर्वभावितत्वम्। अथान्तरोत्पत्तिकदम्बकसमवधाने सत्यपि यदभावात् कार्यं न जायते सति च जायते तज्जातीयं प्रति तदनन्यथासिद्धम्। अनन्यथासिद्धनियतपूर्ववर्त्तित्वं कारणत्वमित्यन्ये एव ईश्वरतद्बुद्ध्यादीनामसंग्रहात् तद्व्यतिरेकस्य तत्समवधानव्यतिरेकस्य वाऽभावात्। कार्यस्यान्यथानुपपद्यमानताव्यवस्थाप्यत्वं वाऽनन्यथासिद्धम्। नन्वेवमतिरिक्तशक्तौ साधकबाधकप्रमाणाभावान्नित्यं संशयः न च साधकाभावस्य बाधकत्वं बाधकाभावस्य साधकत्वादिति चेन्न साधकाभावेन सत्त्वावन्यत्र सिध्यतीन्द्रियधर्माभावसाधने लाघव बाधकाभावेनातीन्द्रियधर्मसाधने गौरवमिति साधकाभावात्तदभाव एव सिध्यतीति"।

"इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी। त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति" गोरक्षस०। सत्त्वरजस्तमोगुणत्रयाधीने ईश्वरस्य क्रमेण ज्ञानेच्छाक्रियारूपे ७शक्तित्रये। "एषा त्रिशक्तिरुद्दिष्टा नरसिद्धान्तगामिनी। एषा श्वेता परा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता। एषैव रक्ता रजसि वैष्णवी परिकीर्त्तिता। एषैव कृष्णा तमसि रौद्री देवी प्रकीर्त्तिता। परमात्मा यथा देव एक एव त्रिधा स्थितः। प्रयोजनवशाच्छक्तिरेकैव त्रिविधाऽभवत्" वराहपु०। प्रकृतिशक्तिश्च ईश्वरस्य सृष्टिकर्तृत्वप्रवर्त्तिता "शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्" आनन्दल०। तन्त्रोक्ते ५पीठाधिष्ठातृदेवताभेदे देवभेदे पीठशक्तयो भिन्नास्तन्त्रसारादौ उक्ताः। राज्ञः प्रभावोत्साहमन्त्रजाते ६सामर्थ्ये च अमरः। ८गौर्यां मेदि० ९लक्ष्म्यां शब्दमा०।

१०वृत्तिभेदे शक्तिश्च अर्थबोधानुकूलः पदपदार्थसम्बन्धः स च इदं पदममुमर्थं बोधयतु, अस्मात् शब्दादयमर्थो बोद्धव्य इत्येवंरूपः इच्छात्मकः सङ्केतः, घटादिपदार्थविशेष्यक घटादिपदजन्यबोधविषयताप्रकारकेच्छाविषयो वा। मीमांसकास्तु अभिधा नाम पदार्थान्तरं सङ्केतग्राह्यं शक्तिरित्याहुः। पदपदार्थयोः सम्बन्धान्तरं शक्तिरिति शाब्दिकाः। सा च शक्तिस्त्रिविधा रूढिर्योगः योगरूढिश्चेति तत्राद्या घटादिपदेषु, द्वितीया पाचकादिपदेषु, तृतीया पङ्कजादिपदेषु। प्राभाकरमते शक्तिर्द्विविधा अनुभाविका स्मारिका च तत्राद्या कार्यान्विते, द्वितीया तु जातौ। तत्र गवादिपदानां जात्याकृतिविशिष्टव्यक्तौ शक्तिरिति नैयायिकाः। व्यक्तावेव शक्तिरिति नव्याः। जात्याकृतिव्यक्तिषु त्रिष्वपि शक्तिरिति वैयाकरणाः। जातावेव शक्तिर्व्यक्तेराक्षेपादिति भाट्टादयः। जातौ शक्तौ बोधयति शक्तिः किन्तु [illegible] इति। कार्यान्वितव्यक्तौ शक्तिरिति प्राभाकराः। धातोस्तु फलावच्छिन्नव्यापारे शक्तिरिति

नैयायिकाः। फल एव शक्तिरिति मण्डनादयः। व्यापारे शक्तिरिति रत्नकोषकृत्। व्याख्यातस्य कर्तौ शक्तिरिति नैयायिकाः। कर्त्तरि शक्तिरिति शाब्दिकाः। व्यापारवत्त्वे शक्तिरिति मीमांसकाः। चतुर्विधविषयत्वात् तस्याश्चातुर्विध्यं शब्दश०प्र० धर्मकीर्त्तिमते दर्शितं यथा

"जातिद्रव्यगुणस्पन्दैर्धर्मैः सङ्केतमत्तया। जातिशब्दादिभेदेन चातुर्विध्यं परे जगुः"। गोगवयादीनां गोत्वादिजात्या, दण्डादीनां लाङ्गूलधरादिद्रव्येण, धन्यधिशुनादीनां पुण्यदे शादिगुणेन चलचपलादीनाञ्च शब्दानां कर्मण्यावच्छिन्नशक्तिमत्त्वाच्चातुर्विध्यमेव छन्दानामिति तदुक्तं दण्ड्याचार्य्यैः "शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः। चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विधः" इति।

तदेतन्निराकृतं तत्रैव "तदेतज्जडमूकमूर्खादीनामन्यशून्यादीनाञ्च शब्दानामपरिग्रहापत्त्या परित्यक्तमस्माभिः"।

**शक्तिग्रह** पु० ६त०। शक्तेः अर्थबोधकताग्रहणे ज्ञाने।

**शक्तिग्राहक** पु० शक्तिं गृह्णाति ग्रह–ण्वुल्। १कार्त्तिकेये शक्तिं ग्राहयति बोधयति ग्रह-णिच्-ण्वुल्। "शक्तिग्रहं व्याकरणोपमानात् कोषाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इत्युक्ते शक्तिबोधके २हेतौ। शक्तिग्रहप्रकारश्च शब्दशक्तिप्रकाशिकायां दर्शितो यथा

"सङ्केतस्य ग्रहः पूर्वं वृद्धस्य व्यवहारतः। पश्चादेषोपमानाद्यैः शक्तिधीपूर्वकैरसौ"। प्रथमं पदेषु सङ्केतग्रहोऽव्युत्पन्नस्य शब्दाधीनव्यवहारादेव बालानां तथा हि गामानयेति केनचिन्निपुणेन नियुक्तः कश्चन व्युत्पन्नस्तद्वाक्यतोऽर्थं प्रतीत्य गवानयनं करोति तच्चोपलभमानो बाल इदं गवानयनं स्वगोचरप्रवृत्तिजन्यं चेष्टात्वादस्मदीयस्तनपानादिवदित्यनुमाय या गवानयनप्रवृत्तिः स्वविषयधर्मिककार्य्यताज्ञानजन्या प्रवृत्तित्वात् स्तनपानप्रवृत्तिवदिति प्रवृत्तेर्गवानयनधर्मिककार्य्यताज्ञानजन्यत्वं प्रसाध्य गवानयनगोचरतज्ज्ञानमसाधारणहेतुकं कार्य्यत्वाद्घटवदित्येवमनुमिन्वानः स्वोपस्थितस्य श्राववाणं स्वतं वृद्धवाक्यमेव तदसाधारणकारणत्वेनावधारयति तदनन्तरञ्च गवादिपदानां प्रत्येकमावापोद्वापेन गवादिवृत्तौ समवस्थनपगत्यामनिप्रवृत्तये गवादिसङ्केतस्य तदनुकूलत्वं कल्पयति। पश्चात् कश्चिदुपमानाच्छक्तिग्रहो यथा गवादिपदशक्तिधीशालिना गोसादृश्यातिदेशवाक्यात् गवयपदवाच्यत्वमोधोत्तरं गवयत्वजात्यवच्छिन्ने गोसादृश्यग्रहात् गवयो गवयपदवाच्य इत्याकारः। क्वचिच्च व्याकरणात् यथा कर्मणि द्वितीया कर्त्तरि परस्मैपदमित्यनुशासनात् कर्मत्वादौ द्वितीयादेः। क्वचित् कोषादपि यथा "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति"। "द्रुणीम शिगरो लक्षः। चर्णे कोट वत्तलिङ्गपिङ्गलौ भ्रमनाकुले" इत्यादि कोषेभ्यः श्वैत्यादौ शुक्लादिशब्दस्य। क्वचिद्विवरणादपि यथा पचति पाकं करोतीति व्याख्यार्थकवाक्यात् कृत्यादौ तिङादेः। क्वचित् प्रसिद्धार्थशब्दसामानाधिकरण्यादपि यथा नीलपर्स्य्यां वायुर्निसर्गमूर्त्तिमन्नम इत्यादौ रूपशून्यस्पर्शवदादिषु वाय्वादिपदस्य। वायुत्वादिजातेरतीन्द्रियत्वेन स्वरूपतस्तदवच्छिन्नस्यानुपस्थित्या तत्र शक्तिग्रहायोगात् यथा वा "सुखग्रस्तया वाचं वृत्ता कन्या टटान कुक्कुटः स्तुत" इत्याद्युक्तरीत्या कन्यादानादिषु कुक्कुटादिपदस्य। सहकारतरौ मधुरं रौति पिक इत्यादिकन्तु न युक्तमुक्तमेव शक्तिग्रहस्योदाहरणं तिङर्थे धर्मिण्यभेदेन नामार्थान्वयस्याव्युत्पन्नत्वात् प्रत्यक्षसिद्धकोकिलत्वजात्यवच्छिन्न एव लाघवेन पिकशब्दस्य शक्त्यवच्छेदाच्च। क्वचिद्वाक्यशेषादपि यथा यवपदस्य कङ्गुप्रभृतौ म्लेच्छानां दीर्घशूके च शिष्टानां व्यवहारादेकमात्रशक्तेः परिच्छेत्तुमशक्यत्वात् नानार्थत्वस्य चान्याय्यत्वात् यवमयश्चरुर्भवतीतिश्रुतौ यवपदस्यार्थसन्देहे "वसन्ते सर्वशस्यानां जायते पत्रशातनम्। मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः" इति विध्यर्थवादगतया प्रवर्त्तमानवाक्यशेषाद्दीर्घशूक एव यवपदस्य शक्तिग्रहः। यथा वा स्वाराज्यकामोऽग्निष्टोमेन यजेतेत्यादिविधिशेषीभूतेभ्यः "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" इत्यादिवाक्येभ्यः स्वरादिपदस्य"।

**शक्तिधर** पु० शक्तिं धरति धृ–अच्। १कार्त्तिकेये २सामर्थ्यधरे त्रि० "शक्तिधरः कुमारः" इति रघुः। भृ–क्विप् ६त०। शक्तिभृदादयोऽप्यत्र।

**शक्तिपर्णी** पु० शक्तिरिव पर्णं यस्य। सप्तपर्णे शब्दा०।

**शक्तिपाणि** पु० शक्तिः पाणौ यस्य। कार्त्तिकेये हला० शक्तिहस्तादयोऽप्यत्र। [शक्त्या योद्धरि।

**शक्तिहेतिक** पु० शक्तिर्हेतिः प्रहरणास्त्रं यस्य कप्।

**श(स)क्तु** पु० सञ्च० श(स)च–तुन्। (छातु) भर्ज्जनादिचूर्णे

अमरः। शतापथशब्दे २१८५ पृ० तद्भेदादि दृश्यम्।

**शक्तुफला(ली)** स्त्री शक्तव इव सूक्ष्माणि फलान्यस्याः वा ङीप्। शमीवृक्षे शब्दच०। [मेदे

**शक्त्रि(क्त्रिय)** पु० वशिष्ठमुनेः पुत्रे पराशरस्य पितरि मुनि-

**शक्नु** त्रि० शक–नु। प्रियभाषिणि अमरः।

**शक्य** त्रि० शक–यत्। १शक्तियुक्ते २शक्त्या बोध्येऽर्थे। ३समर्थनीये। ४साधयितुं योग्ये च।

**शक्यतावच्छेदक** त्रि० ६त०। शक्यपदार्थस्यासाधारणधर्मे येन धर्मेण अर्थस्य शब्दसङ्केतविषयता तस्मिन् धर्मे। यथा घटशब्दः घटत्ववन्तं पदार्थं बोधयति अतस्तदसाधारणधर्मो घटत्वं घटशब्दस्य शक्यतावच्छेदकम्।

**शक्र** पु० शक–रक्। १इन्द्रे अमरः। २कुटजवृक्षे ३अर्जुनवृक्षे मेदि०। ४ज्येष्ठानक्षत्रे ५पेचके च। इन्द्रस्य चतुर्दशविधत्वम् मन्वन्तरभेदेन इन्द्रशब्दे दर्शितमतः तत्संख्यासाम्यात् ६चतुर्दशसंख्यायाम्।

**शक्रगोप** पु० शक्रं शक्रधनुर्गोपायति समवर्णत्वात् गुप–अण्। इन्द्रगोपे कीटे जटा०।

**शक्रज** पु० शक्रात् जायते जन–ड। १काके त्रिका०। २इन्द्रजन्ये त्रि०। शक्रजातादयोऽप्यत्र।

**शक्रजित्** पु० शक्रं जितवान् जि–क्विप् तुक् च। १रावणात्मजे मेघनादे राक्षसे। २इन्द्रजेतरि त्रि०।

**शक्रधनुस्** न० ६त०। मेघाच्छन्ने धनुराकारे सूर्य्यकिरणसम्पर्कजे पदार्थभेदे (रामधनुक) अमरः।

**शक्रध्वज** पु० ६त०। भाद्रशुक्लद्वादश्यां पूज्ये इन्द्रदैवते ध्वजाकारे पदार्थे। इन्द्रध्वजशब्दे ९४६ पृ० दृश्यम्।

**शक्रनन्दन** पु० ६त०। अर्जुने जटा०। २इन्द्रनन्दके त्रि०।

**शक्रपर्य्याय** पु० शक्रस्य पर्य्यायो नाम नाम यस्य मध्यपदलोपः। १कुटजवृक्षे रत्नमाला ६त०। इन्द्रस्य २वाचकशब्दे च।

**शक्रपादप** पु० ६त०। १देवदारुवृक्षे अमरः। २कुटजवृक्षे राजनि०। [अमरः। स्वार्थे क। तत्रैव रत्नमा०।

**शक्रपुष्पी** स्त्री शक्रस्येव पुष्पमस्याः ङीप्। अग्निशिखावृक्षे

**शक्रभवन** न० ६त०। स्वर्गे त्रिका०। शक्रावासादयोऽप्यत्र।

**शक्रभूभवा** स्त्री शक्ररूपभुवि भवति भू–अच्। इन्द्रवारुण्याम् शब्दच०। [२इन्द्रजनन्याम् अदित्याम्।

**शक्रमातृ** स्त्री शक्रस्य मातेव। १भार्ग्याम् राजनि०। ६त०।

**शक्रमूर्द्धन्** पु० शक्रस्येव शिखावान् मूर्द्धा यस्य। १वल्मीके त्रिका०। ६त०। २इन्द्रमस्तके। शक्रशीर्षादयोऽप्यत्र।

**शक्रवल्ली** स्त्री शक्रप्रिया वल्ली। इन्द्रवारुण्याम् राजनि०।

**शक्रवाहन** पु० शक्रं वाहयति वह–णिच्–ल्यु। मेघे शब्दच० इन्द्रवाहनादयोऽप्यत्र।

**शक्रवीज** न० शक्रस्य कुटजस्य वीजम्। इन्द्रयवे राजनि०।

**शक्रशाखिन्** पु० शक्रनामकः शाखी। कुटजवृक्षे भावप्र०।

**शक्रसारथि** पु० ६त०। इन्द्रसारथौ मातलौ।

**शक्रसुत** पु० शक्रस्य सुतः। १वालिनामके वानरराजे उणादि०। २इन्द्रपुत्रे अर्जुने च।

**शक्रसुधा** स्त्री शक्रस्य सुधेव। पालङ्क्याम् शब्दच०।

**शक्रसृष्टा** स्त्री ६त०। हरीतक्याम् त्रिका०।

**शक्राख्य** पु० शक्रस्येवाख्या यस्य। १पेचके त्रिका०।

**शक्राणी** स्त्री शक्रस्य पत्नी ङीष् आनुक् च। पुलोमजायामिन्द्रपत्न्याम् शब्दमा०।

**शक्राशन** न० शक्रेणाश्यते अश–कर्मणि ल्युट्। भङ्गायाम् "शक्राशनन्तु तीक्ष्णोष्णं मोहकृत् कुष्ठनाशनम्। बलमेधाग्निदं श्लेष्मदोषहारि रसायनम्" राजव०।

**शक्राशन** पु० शक्रं तस्यासनमश्नुते व्याप्नोति अश–ल्यु। कुटजवृक्षे शब्दच०। [संक्षिप्तसार०।

**शक्रि** पु० शक–क्रिन्। १मेघे २वज्रे ३गजे ४पर्वते च

**शक्रोत्थान** न० शक्रस्य तद्ध्वजस्य उत्थानम्। भाद्रशुक्लद्वादश्यां कर्त्तव्ये १शक्रध्वजस्योत्थाने, तदुपलक्षिते २उत्सवे च। इन्द्रध्वजशब्दे ९४६पृ० दृश्यम्।

**शक्व** पु० शक–वन्। गजे सि० कौ०।

**शङ्क** पु० शक–अच् वा+मुम्। शकटादिवाहकवृषे हारा०।

**शङ्कर** पु० शं करोति कृ–अच्। १महादेवे २कल्याणकरे त्रि० ३शिवपत्न्यां स्त्री ङीप्। ४सा च मञ्जिष्ठायां शब्दच०। ५शम्यां राजनि०। [शुभ्रत्वात्। २कर्पूरे राजनि०।

**शङ्करावास** पु० ६त०। १कैलासाचले। शङ्करस्यावास इव

**शङ्का** स्त्री शकि–अ। १त्रासे २वितर्के मेदि० ३संशये च।

**शङ्कित** त्रि० शङ्का जातास्य तार० इतच्। १भीते त्रिका० २सन्दिग्धे ३वितर्किते च।

**शङ्कु** पु० शकि–उण्। १स्थाणौ। २मत्स्यभेदे। ३शस्त्रास्त्रे अमरः। ४कीलके। ५दशकोटिसंख्यायाम ६तत्संख्याते। ७महादेवे। ८ककुभे मेदि०। ९पञ्चशिराशाखे १०मेढ्रे हेमच०। ११मखीनामद्रव्ये जटा०। १२छायापरिमाणार्थे काष्ठादिनिर्मिते, "अर्कांगुला तु छायापा काष्ठी द्व्यङ्गुलमूलिका। शङ्कु संज्ञा भवेत्सैव तच्छायां परिकल्पयेत्" इत्युक्ते १३कीलभेदे च ज्यो०त०। १४जनमेजयपुत्रभेदे भा० आ० ९५ अ०। १५नवरत्नान्त-

शूद्राश्चास्य विशेषतः । भीता दृष्ट्वा याति लक्ष्मीः स्थल मन्यत् स्थलान्ततः" १०मुद्राभेदे तन्त्रसा० ।
११प्रस्तरभेदे । युक्तिकल्पतरौ तल्लक्षणादि यथा "क्षीरोदकूलेऽपि सुराष्ट्रदेशे तदन्यतोऽपि प्रभवन्ति शङ्खाः । अच्छश्वर्णाः शशिशुभ्रभासः सुलक्षणाङ्गा गुरवो मप्लान्तः । ते वामदक्षिणावर्त्तभेदेन द्विविधा मताः । दक्षिणावर्त्तशङ्खस्तु कुर्य्यादायुर्यशोधनम् । तेनैव शिरसा यस्तु श्रद्दधानः प्रतीच्छति । वारि क्षिप्त्वा स पापानि मुक्तश्चाप्नोति मानवः । इत्यत्वं स्निग्धताच्छत्वं शङ्खस्येति गुणत्रयम् । आवर्त्तभङ्गदोषो हि हेमयागादिनश्यति । ब्रह्मादिजातिभेदेन स पुनश्चतुर्विधः" ।
"ये स्निग्धमसृणाकारा मृदवो लघवस्तथा । ब्राह्मणाः प्रस्तरास्ते याः सर्वकर्मसु शोभनाः । ये दृढाङ्गाः सुगुरवस्तथा चांशविभागिनः । अश्मानः क्षत्रियास्ते या कर्कशाङ्गास्तथैव च । मृदवो गुरवो ये तु ये च्छेदेनैव रञ्जिताः । ते वैश्या अविभक्तांशा युजन्ते सर्वकर्मसु । ये कर्कराहताङ्गाश्च कर्कशा ये प्रतिष्ठिताः । येऽत्यन्तगुरवः स्निग्धास्ते शूद्राः प्रस्तराधमाः । इति प्रोक्तमशेषेण सम्यक् पाषाणलक्षणम् । विचार्य्य मतिमान् कार्य्ये नियोक्तव्यं विचक्षणैः" ।

**शङ्खक** न० शङ्खस्य विकारः वुन् । १शङ्खजाते वलयाकारे पदार्थे मेदिनि० २शिरोरोगे पु० तस्य लक्षणादि यथा "पित्तरक्तानिलादुष्टाः शङ्खदेशे विमूर्च्छिताः । तीव्र रुग्दाहरोगं हि शोथं कुर्वन्ति दारुणम् । सशिरो विषवद्वेगान्निरुध्याशु गलं तथा । त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः । त्र्यहाज्जीवितमैषज्य प्रत्याख्येयस्य कारयेत्" । पित्तरक्तानिला इत्यत्र कफोऽपि योज्यः "क्षतानुतापः कफपित्तरक्तै-रिति" सुश्रुतवचनात् । विमूर्च्छिताः प्रवृद्धाः त्रिरात्रात् त्रिरात्रमध्ये मारयति" भावप्र० ।

**शङ्खकार** पु० शङ्ख तद्विकारं वलयाकारं पदार्थं करोति क-अण् । वर्णसङ्करजातिभेदे (शाँखारी) । स तु शूद्रागर्भे विश्वकर्मतो जातः ब्रह्मवै० । [काया लिङ्गा० ।

**शङ्खचरी** स्त्री शङ्खे ललाटास्थ्नि चरति चर-ट । ललाटि-

**शङ्खचर्चा** स्त्री शङ्खस्य चर्चा भूषा यत्र । ललाटिकायां शब्दर० । [सुध्य कृमिहर परम्" राजव० ।

**शङ्खचूर्ण** न० ६त० । शङ्खजाते चूर्णे । "शङ्खचूर्णं कटु क्षार

**शङ्खद्रावक** पु० औषधविशेषे । तत्पाकादि यथा "अर्कक्षुही तथा चिञ्चा तिलारग्वधचित्रकम् । अपामार्गो भवसमं वस्त्रपूतं जलं हरेत् । मृद्वग्निना पचेत्तत्तु यावच्चलवणताकृतम् । लवणेन समौ भागौ द्वौ क्षारौ टङ्कणं तथा । समुद्रफेनगोदन्तकासीसं सोरका तथा । द्विगुणं पञ्चलवणं मातुलुङ्गरसेन च । काचकूप्यान्तु सप्ताहं वासयेदम्लयोगतः । शङ्खचूर्णपलं दत्त्वा वारुणी यन्त्रमुद्धरेत् । सर्वधातून् हरेच्चैव वराटीशङ्खकादिकान् । उदरादिकरोगाणां सद्यो हि नाशकः परः" भैषज्यर० "योगिनीभैरवाभ्याञ्च भक्तिमादौ प्रदापयेत् । पश्चाद् यन्त्रस्य कर्त्तव्यमेवाह परमेश्वरी । रसः शङ्खद्रवो नाम ब्रह्मदेवेन भाषितः । गुह्याद् गुह्यतमं गुह्यमिदानीं कथ्यते मया । शङ्खचूर्णं यवक्षारं सर्जिकाक्षारटङ्कणम् । समञ्च पञ्चलवणं स्फटिकारी नृसादरः । काचकूप्या ततः क्षिप्त्वा वारुणी यन्त्रमुद्धरेत् । यामार्द्धं द्रावयत्येव शङ्खशुक्तिवराटकान् । अर्शांसि नाशयेत् षट् च मूत्रकृच्छ्राश्मरीं तथा । उदराष्टविधं हन्ति गुल्मप्लीहोदराणि च । अजीर्णं नाशयेच्छीघ्रं पङ्क्तिशूलं विसूचिकाम् । भुक्तशेषे च भोक्तव्यो माषमात्रो रसोत्तमः । क्षणमात्राद्भवेत् भक्तं पुनर्भोजनमिच्छति । प्रत्यहं भोजनान्ते च सेव्योऽयं रसोत्तमः । न रुजायां भयं क्वापि सत्यं सत्यं वदाम्यहम् । न देयं यस्य कस्यापि सदा गोप्यञ्च कारयेत् । रस शङ्खद्रवो नाम वैद्यानामुपकारकः" ।

**शङ्खद्राविन्** पु० शङ्खं द्रावयति द्रु-णिच्-णिनि । अम्लवेतसे राजनि० ।

**शङ्खधरा** स्त्री धृ-अच् ६त० । हिलमोचिकायाम् रत्नमा० ।

**शङ्खध्म** पु० शङ्खं धमति ध्मा-क । शङ्खवादके । क्विप् । शङ्खध्मा इत्यप्यत्र ।

**शङ्खनख** पु० शङ्खस्य नख इव । १क्षुद्रशङ्खे (जोङ्कड़ा) अमरः । २नखीनामगन्धद्रव्ये शब्दर० स्त्रीत्वमपि तत्र ङीप् ।

**शङ्खपुष्पी** स्त्री शङ्ख इव पुष्पमस्याः ङीप् । (शङ्खाहुली) क्षुपे राजनि० । "शङ्खपुष्पी तु तीक्ष्णोष्णा मेध्या कृमिविषापहा" । राजवल्लभ० "शङ्खपुष्पी सरा मेध्या वृष्या मानसरोगनुत् । रसायनी कषायोष्णा स्मृतिकान्तिबलाग्निदा । दोषापस्मारभूताश्रकुष्ठकृमिविषप्रणुत्" भावप्र० । [हेमच० ।

**शङ्खभृत्** पु० शङ्ख बिभर्त्ति भृ-क्विप् तुक् च । विष्णौ

**शङ्खमुख** पुंस्त्री० शङ्खस्येव मुखमस्य । कुम्भीरे हेमच० । स्त्रियां ङीष् । [ चक्रा) क्षुपभेदे शब्दच० ।

**शङ्खिका** स्त्री शङ्खस्तदाकारं पुष्पमस्त्यस्याः ठन् । (चोरका-

**शङ्खिन्** पु० शङ्ख+अस्त्यर्थे इनि । १विष्णौ, २समुद्रे च मेदि० ।

**शङ्खिनी** स्त्री शङ्खस्तदाकारं पुष्पमस्त्यस्याः इनि । १चोर-पुष्प्याम्, अमरः । २श्वेतपुन्नागे शब्दच० । ३श्वेतबुह्नायां ४श्वेतचुक्रायां, ५यवतिक्तायां, राजनि० । ६स्त्री-भेदे, ७उपदेवताभेदे, (शाकचिन्नी) ८शङ्खवत्यां स्त्रियाञ्च । स्त्रीभेदलक्षणं रतिमञ्जर्यामुक्तं यथा

"दीर्घा सुदीर्घनयना वरसुन्दरी या कामोपभोगरसिका गुणशीलयुक्ता । रेखात्रयेण च विभूषितकण्ठदेशा सम्भो-गकेलिरसिका किल शङ्खिनी सा" । "शशके पद्मिनी तुष्टा चित्रिणी रमते मृगे । वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हये" । "पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी । शङ्खिनी क्षारगन्धा स्यात् मदगन्धा च हस्तिनी" । [राजनि० ।

**शङ्खिनीफल** पु० शङ्खिन्या इव फलमस्य । शिरीषवृक्षे

**शङ्खिनीवास** पु० ६त० । शाखोटवृक्षे शब्दच० ।

**शच** गतौ भ्वा० आत्म०सक० सेट् इदित् । शञ्चते, अशञ्चिष्ट ।

**शच** शक्ति भ्वा० आत्म० सक० सेट् । शचते अशचिष्ट ।

**शचि(ची)** स्त्री शच-इन् वा ङीप् । १इन्द्रपत्न्याम् अमरः । २कर्मान्तरे मेदि० ।

**शचीपति** पु० ६त० । इन्द्रे अमरः । शचीभर्त्रादयोऽप्यत्र ।

**शट(ठ)** श्लाघायां चु० आ० सक० सेट् । शाट(ठ)यते अशी-शट(ठ)त । [ शटति । अशाटीत् अशटीत् ।

**शट** शादे अक० रोगजनने गतौ भेदे च सक० पर० भ्वा०

**शट** पु० शटति रुजति इत्त शट-अच् । १अम्ले त्रिं० शौ० । २बिडङ्गे वैद्यके ३जटायाञ्च स्त्री अमरः टाप् ।

**शटि(टी)** स्त्री शट-इन् वा ङीप् । (शर आदा) ख्यात ओषधिभेदे

"शटी पलाशी षड्ग्रन्था सुव्रता गन्धमूलिका । गन्धारिका गन्धवधूर्वधूः पृथुपलाशिका । भवेद्गन्धपलाशी तु कषाया ग्राहिणी लघुः । तिक्ता तीक्ष्णा च कटु काऽनुष्णास्यमलनाशिनी । शोथकासव्रणश्वासशूलाध्मान-वहापहा" भावप्र० ।

**शट्टक** न० शट-क्विप् टक-अच् कर्मधा० । घृतजलमिश्रित-शालिचूर्णे । "शालिचूर्णं घृतं तोयं मिश्रितं शट्टकं वदेत्" भावप्र० ।

**शठ** बधे सक० कैतवे क्लेशे च अक० भ्वा० पर० सेट् । शठति अशाठीत् अशठीत् ।

**शठ** श्लाघे चु० पर० सक० सेट् । शाठयति ते अशीशठत् त ।

**शठ** दुष्टवचने अद० चु० उभ० सक० सेट् । शठयति ते अशशठत् त

**शठ** न० शठ-अच् । १तगरे २कुङ्कुमे ३चौरे च राजनि० । ४धुस्तूरे ५मध्यस्थपुरुषे च पु० । "प्रियं वक्ति पुरो-ऽन्यत्र विप्रियं कुरुते भृशम् । व्यक्तापराधचेष्टश्च शठो-ऽयं कथितो बुधैः" विष्णुपु० उक्ते ६धूर्त्ते त्रि० मेदि० ७नायकभेदे पु० तल्लक्षणं यथा

"शठोऽयमेकत्र बद्धभावो यः । दर्शितबहिरनुरागो विप्रि-यमन्यत्र गूढमाचरति" सा० द० ।

**शठता** स्त्री शठस्य भावः तल् । शाठ्ये वञ्चनायाञ्च । [राजनि०

**शठम्बा** स्त्री शठ-अच् अम्बि-अच् कर्म० शक० । अम्बष्ठायाम्

**शड** सघाते रोगे च अक० भ्वा० पर० सेट् इदित् । शण्डति अशण्डिष्ट । [शशाङ्के शेषत ।

**शण** दाने भ्वा० पर० सक० सेट् । शणति अशाणीत् अशणीत्

**शण** पु० शण-अच् । स्वनामख्याते क्षुपभेदे हेमच० ।

**शणघण्टिका** स्त्री शण इव घण्टेव तत्तुल्यरवफलकत्वात् इवार्थे कन् । घण्टारवतुल्यफलायाम् शणपुष्प्यां राजनि० ।

**शणपर्णी** स्त्री शणस्येव पर्णान्यस्याः ङीप् । अश्मपर्ण्याम् राजनि० । [शणे स्वार्थे क । तत्रैव ।

**शणपुष्पी** स्त्री शणस्येव पुष्पमस्याः ङीप् । (झनझने) वन

**शणसूत्र** न० शणाज्जातं सूत्रम् । शणजाते जाले अमरः ।

**शणालुक** पु० शण इवालुक । आरेवतवृक्षे (सोन्दालु) शब्दर०

**शणिका** स्त्री शणस्तद्वत्पुष्पमस्त्यस्याः ठन् । शणपुष्प्यां राज०नि०

**शण्ड** न० शडि-अच् । १पद्मादिसमूहे शब्दर० । २मनुष्यश्र-३ष्टे च त्रिकाण्ड० । [तस्यापत्यं गर्गा० यञ् शाण्डिल्य ।

**शण्डिल** पु० शडि-इलच् । शाण्डिल्यस्य पितरि मुनिभेदे

**शण्ढ** न० शम-ढ तस्य नेत्त्वम् । १अन्तःपुररक्षके क्लीवे २क्लीवमात्रे भरत । ३वृषे मेदि० ४वन्ध्यपुरुषे जटा० ५उन्मत्ते धनञ्जय ।

**शत** न० एक०व० शो-डतच् । १दशगुणितदशसंख्यायाम् २बहुसंख्यायां ३तद्युक्ते च । स्वार्थे क । तत्रैव न० शतयाचनयत्नार्थ भारतराष्ट्र'१ शतभिषा तारा२ पुरु-षायुषम्३ रावणाङ्गुलि ४ पञ्चदश५ इन्द्रयज्ञ ६ अश्वयो-जनम्७ कविकल्पलता । [शतवर्षे कन् । २शतसंख्यायां न० ।

**शतक** त्रि० शत परिमाणमस्य कन् । १शतसंख्यायुक्ते ।

**शतकुम्भ** पु० शत कुम्भा यत्र । सुवर्णनिर्वर्तकभेदे भरत ।

**शतकोटि** पु० शत कोटयोऽग्राणि यस्य । १वज्रे अमर । शतगुणिता कोटिः शाक० । २शतगुणितकोटिसं-ख्यायां स्त्री ।

**शतक्रतु** पु० शतं क्रतवोऽस्य । इन्द्रे अमरः ।

**शतग्रन्थि** स्त्री शतं ग्रन्थयोऽस्य । दूर्वायाम् राजनि० ।

**शतघ्नी** स्त्री शत हन्ति हन-टक् । १अस्त्रभेदे “अयःकण्टक-सञ्छन्ना शतघ्नी महती शिला” विजयरक्षितः । २वृश्चिकाल्यां ३करञ्जे च मेदि० ।

**शततम** त्रि० शतस्य पूरणं तमप् । शतसंख्यापूरणे ।

**शततारा** स्त्री शतगुणिता ताराः शाक० । शतभिषानक्षत्रे ।

**शतदन्तिका** स्त्री शत दन्ता इव सन्त्यस्य ठन् । नागद-न्त्याम् राजनि० ।

**शतद्रु** पु० शतधा द्रवति-द्रु-कु नि० । नदीभेदे तन्नामनिरु-क्तिर्यथा “शोके बुद्धिं तदा चक्रे मर्त्तुकाम इवात्मनः । सोऽगच्छत् पर्वतांश्चैव सरितश्च सरांसि च । दृष्ट्वा स(वशिष्ठः) पुनरेवर्षिर्नदीं हैमवतीं तदा । चण्डग्राहवतीं भीमां तस्याः स्रोतस्यपातयत् । सा तमग्निसम विप्रमनुचिन्त्य सरिद्वरा । शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता । ततः स्थलगत दृष्ट्वा तत्राप्यात्मानमात्मना । मर्त्तुं न शक्यमित्युक्त्वा पुनरेवाश्रमं ययौ” भा० आ० १७७ अ० ।

**शतधा** स्त्री शत मन्थीन् धत्ते धा-क । १दूर्वायाम् । शत+प्रकारे धाच् । २शतप्रकारे अव्य० ।

**शतधामन्** पु० शतं धामानि यस्य । विष्णौ जटा० ।

**शतधार** पु० शत धारा अग्राणि यस्य । १वज्रे त्रिका० । २शतधारायुक्ते त्रि० “वसोः पवित्रमसि शतधारम्” यजुर्वेदः १।३।४६ । [३खड्गे च विश्व० ।

**शतधृति** पु० शतं धृतयोऽस्य । १इन्द्रे २ब्रह्मणि मेदि०

**शतपत्त्र** न० शतं बहूनि पत्त्राणि सुमस्यदलान्यस्य । १पद्मे अमरः । २मयूरे ३सारसखगे ४दार्वाघाटखगे मेदि० ५राजकीरे हेमच० ।

**शतपत्त्री** स्त्री शत पत्त्राणि दलान्यस्याः ङीप् । (सेवोति) पुष्पवृक्षभेदे । स्वार्थे क । तत्रैव । [धातकग्रन्थभेदे ।

**शतपथ** पु० शत पन्थानो यत्र अच् समा० । यजुर्वेदीयब्राह्मण-

**शतपथिक** त्रि० शतपथ वेत्त्यधीते वा ठन् । शतपथब्राह्म-णात्मकग्रन्थाध्यायिनि ।

**शतपद** न० शत पदानि यत्र । ज्योतिषोक्ते नक्षत्रपादानु-सारेण नामाक्षरप्रायप्रयोगिप्रथमवर्णसूचके १चक्रभेदे चक्र-शब्दे २८१७ पृ० दृश्यम् । शत पादाः यस्याः पादभागः समा० ङीप् पद्भावः । शतपदी २कीटभेदे (कानकोटार) स्त्री अमरः । ३शतमूल्यां राजनि० । [रत्नमा० ।

**शतपद्म** न० शतदलयुक्त पद्मम् । १शतदलकमले २श्वेतपद्मे च

**शतपर्वन्** पु० शत पर्वाणि ग्रन्थयो यस्य । १वंशे अमरः २इक्षुभेदे च “शतपर्वा भवेत् किञ्चित् कोमलोऽरुणवा-न्वितः । विशेषात् किञ्चिदुष्णश्च सक्षारः पवनापहः” भावप्र० । ३कटुकायां राजनि० । ४वचायां ५दूर्वायां च स्त्री ६भार्य्यां मेदि० । ७कोजागरपूर्णिमायां शब्द-रत्ना० । कप् । तत्र मेदि० ८यवे शब्दर० ।

**शतपाद्** स्त्री शत पादा अस्याः पाद्भावः । कीटभेदे (का-नकोटार) जटा० । [जटा० । २जलौकायां च शब्दर० ।

**शतपादिका** स्त्री शतं पादा मूलान्यस्याः कप् । १काकोल्यां

**शतपुष्पा** स्त्री शत पुष्पाणि यस्याः । (सुलफा) १शाकभेदे (मौरी) २क्षुपभेदे च । कप् । तत्रैव । “शतपुष्पा कटुः स्निग्धा तिक्तोष्णा कफवातहृत् । रुच्या-वस्तिप्रिया नेत्र्या वह्निविट्कृमिशुक्रहृत् । मिश्रेयापि शीतला तिक्ता दाहनुत् वातला लघुः” भावप्र० । किरा-तार्जुनीयग्रन्थकारके भारविकवौ पु० त्रिका० । [राजनि० ।

**शतप्रसूना** स्त्री शतं प्रसूनानि यस्याः । (सुलफा) शाके

**शतप्रास** पु० शत प्रासा इव फलानि यस्य । करवीरवृक्षे अमर

**शतभिषज्** स्त्री शतं भिषज इव तारा यस्य । शततारा-त्मके अश्विन्यादिषु चतुर्विंशे नक्षत्रे । शतभिषाप्यत्र स्त्री

**शतभीरु** स्त्री शतं बहवो वियोगिनो भीरवो यस्याः ५त० । मल्लिकायाम् अमर तद्दर्शने हि बहुवियोगिनां कामोद्दीपनात् ततो भीरुत्वम् । [२मेचके च ।

**शतमख** पु० शत मखा यज्ञा यस्य । १इन्द्रे हलायुधः ।

**शतमन्यु** पु० शत मन्यवो यज्ञा यस्य शते दैत्येषु मन्युः क्रोधो वा यस्य । १इन्द्रे अमरः । २मेचके च ।

**शतमान** पु०न० शतेन मीयते मि-ल्युट् । १रूप्यपले २आ-ढके ३रत्नपरिमिते च अमरः । [चिकित्सके ।

**शतमारिन्** पु० शतं मारयति मृ-णिच्-णिनि । विशिष्ट-

**शतमुखी** पु० शतं मुखानि यस्याः ङीप् । १संमार्जन्यां २शतमुखयुक्ते त्रि० ।

**शतमूला** स्त्री शतं मूलान्यस्याः टाप् । १दूर्वायां २अगाम-ख्यातायां लतायाञ्च ङीबन्तः अमरः । [भेदे अमरः ।

**शतयष्टिक** पु० शत यष्टयो गुच्छा यस्य । शतगुच्छके हार-

**शतरुद्रीय** न० शत रुद्रानधिकृत्य कृतो ग्रन्थ छ । १६अ०य-जुर्वेदोक्ते “नमस्ते रुद्र ! मन्यव इत्यादिके रुद्राध्याये ।

**शतरूपा** स्त्री शत रूपाण्यस्याः। १ब्रह्मणः पत्न्यां २तत्कन्यायां सावित्र्यां च "ततः स्वदेहतो ब्रह्मा भित्त्वा देहमकल्पयत्। स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत्। शतरूपा च सा ख्याता सावित्री च निगद्यते। सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप। दृष्ट्वा तां व्यथितस्तावत् कामबाणार्दितो विभुः। उपयेमे स विश्वात्मा शतरूपामनिन्दिताम्। ततः कालेन महता ततः पुत्रोऽभवन्मनुः। स्वायम्भुव इति ख्यात. स विराडिति नः श्रुतम्" मात्स्ये ३अ०।

**शतवीर्य्या** स्त्री शत वीर्य्याणि यस्याः ५ब०। १श्वेतदूर्वायाम् २शतावर्य्यां ३कपिलद्राक्षायां च राजनि०।

**शतवेधिन्** पु० शत विध्यति विध–णिनि। अम्लवेतसे अमर

**शतसहस्र** न० शतगुणितं सहस्रम् शाक०। लक्षसंख्यायाम्।

**शतसाहस्र** त्रि० शतं सहस्राणि परिमाणमस्य अण् उत्तरपदवृद्धिः। लक्षसंख्याते।

**शतह्रदा** स्त्री शत ह्रादाः शब्दा यस्याः पृषो० ह्रस्वः। १विद्युति अमरः। २वज्रे मेदि० ३दक्षकन्याभेदे वह्निपु०

**शताक्षी** स्त्री शतमक्षीणीव पुष्पाण्यस्याः षच् समा० ङीप्। १रात्रौ २शतपुष्पायाम् शब्दच० ३दुर्गायां "भूयश्च शतवार्षिक्यामनावृष्ट्यामनम्भसि। मुनिभिः संस्तुता भूमौ सम्भविष्याम्ययोनिजा। ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन्। कीर्त्तयिष्यन्ति मनुजाः शताक्षीमिति मां ततः" देवीमाहात्म्ये। [तुम्बे च राजनि०।

**शताङ्ग** पु० शतमङ्गान्यवयवा यस्य। १रथे अमरः २तिनिश-

**शतानन्द** पु० शतमानन्दयति अण्। गौतमपुत्रे अहल्यागर्भजे १मुनिभेदे। स च जनकराजपुरोहितः। २देवकीनन्दने मेदि० ४ब्रह्मणि हेमच० ५विष्णुरथे त्रिका०। ६शतजनानन्दके त्रि०।

**शतानीक** पु० शतमनीकानि यस्य। १वार्द्धक्ये मुनिभेदे २चन्द्रवंश्ये नृपभेदे मेदि०। ३सहदेवराजपुत्रे भाग० ९।२२ अ०।

**शतार** न० शतमराण्यस्य। वज्रे त्रिका०।

**शतारुस्** न० शतं अरूंषि यत्र। कुष्ठभेदे "रक्तं श्यामं सदाहार्त्ति शतारुः स्याद् बहुव्रणम्" भावप्र०।

**शतायुस्** त्रि० शतमायुर्वर्षकालोऽस्य। शतवर्षमितवयस्के "शतायुर्वै पुरुषः" श्रुतिः।

**शतावरी** स्त्री शतमावृणोति आ+वृ–अच् गौरा० ङीष्। १शतमूल्याम् अमर। "शतावरी गुरुः शीता तिक्ता स्वाद्वी रसायनी। मेधाग्निपुष्टिदा स्निग्धा नेत्र्या गुल्मातिसारजित्। शुक्रस्तन्यकरी बल्या वातपित्तास्रशोथजित्" भावप्र०। २इन्द्रभार्य्यायां शब्दच०। ३शच्यां त्रिका०। [वर्त्तते त्रिणि। तत्रैव। शतावर्त्तिन्।

**शतावर्त्त** पु० शतमावर्त्ता यस्य। विष्णौ हेमच०। शतधा

**शताह्वा** स्त्री शतं शतमूली शतपुष्पा चेति आह्वा यस्याः मध्यपदलोपः। १शतमूल्यां राजनि० २शतपुष्पायाञ्च जटा०

**शतिक** त्रि० शतेन क्रीत, तस्य विकारः तस्येदं वा ठन्। १शतेन क्रीते पदार्थे। २तद्विकारे ३तत्सम्बन्धिनि च। शतमस्मै वृद्धिः आयः लाभः शुल्कम् उपदा वा दीयते ठन्। ४वृद्ध्यादिरूपेण शतदानसम्प्रदाने। पक्षे यत् शत्य तत्रार्थे। [ष्ठे च क्रीतादौ शतिकशब्दार्थे।

**शत्य** त्रि० शतेन क्रीत शतिकशब्दवत् यत्। शतसंख्यातद्र०

**शत्रु** पु० शद–त्रुन्। १रिपौ राज्ञां २विषयानन्तरस्थे नृपे अमरः ३ज्योतिषोक्ते लग्नावधिकषष्ठस्थाने ४कामादिषु च। ५शातके त्रि०। [लक्ष्मणानुजे २रिपुनाशके त्रि०।

**शत्रुघ्न** पु० शत्रून् हन्ति हन–क। दशरथात् सुमित्रागर्भजे

**शद** शातने शीर्णतायां भ्वा०पर०सक०अनिट् ऌदित्। शीयते अशदत्। शत्स्यति।

**शद** गतौ भ्वा०पर०सार्वधातुके आत्म० सक०अनिट्। शीयते

**शद** पु० शद–अच्। फलमूलादौ सिद्धान्तकौ०।

**शद्रि** पु० शद–क्रिन्। १मेघे २विद्युति मेदिनी० ३शक्के उणा०

**शद्रु** त्रि० शद–क्रु। १पतनकर्त्तरि २गन्तरि च।

**शनकावलि(ली)** स्त्री शनैः कायति कै–क पृषो० तेषामावलिर्यस्य वा ङीप्। मत्स्यपित्त्यां शब्दच०।

**शनपर्णी** स्त्री शणस्येव पर्णान्यस्याः पृषो० णस्य न। कटुकायाम् शब्दच०।

**शनि** पु० शो–अनि कित्। १सूर्य्यपुत्रे छायागर्भजाते ग्रहभेदे "शनिर्विहङ्गाऽनिलवर्णमध्या गूढाङ्गना धातुःस्मोस्विरस। क्रूरः प्रतीचीतनयोऽतिदीर्घोऽकरः किरीट् दीर्घतनीलवीक्षम्"। नील० ताज०। "मन्दोऽलसः कपिलदृक्कृशदीर्घगात्रः स्थूलद्विजः परुषरोमकचोऽनिलात्मा" बृहज्जा०। २तद्युक्ताधिकदिने च "शनौ कथ्या विजानीयात्" ज्यो० त०। [वारे।

**शनिवार** पु० शनिनामिको वारः। रव्यादिवारमध्ये सप्तमे

**शनैश्चर** पु० शनैश्चरति चर–अच्। शनिग्रहे तस्य ग्रहाणां मध्ये सर्वोपरिकक्षस्थितत्वात् अल्पकालेनैकराशिभोगात् मन्दगतित्वम्। [अमरः

**शनैस्** अव्य० शण–डैसि पृषो० णस्य न। मन्दे २क्रमे

**शन्स** इच्छायां स्तुतौ कथने च भ्वा० पर० सक० सेट् क्त्वा वेट् । शंसति अशंसीत् । [शंसयति ते अशशंसत् ।

**शप** आक्रोशे वा भ्वा० पक्षे दिवा० उभ० सक० अनिट् । शपति ते

**शपथ** पु० शप–अथन् । सत्यताकरणाय दिव्यभेदकरणे यथा एतत् यदि मिथ्या स्यात् तदा मे एतदनिष्टं स्यादित्यादि

**शपन** पु० शप–ल्युट् । १शपथे अमरः । २शापे त्रिका० ।

**शप्त** त्रि० शप–क्त । १अभिशापग्रस्ते २उच्चारिते तृणभेदे पु० शब्दच० । [च मेदि० ।

**शफ** न० शम–अच् पृषो० मस्य फः । १गवादीनां खुरे २वृक्षमूले

**शफर** पुस्त्री० शफं राति रा–क । (पुँटी) मत्स्यभेदे अमरः स्त्रियां ङीप् ।

**शफराधिप** पु० ६त० । इल्लिशमत्स्ये त्रिका० । [शब्दत् त ।

**शब्द** शब्दकरणे अ० चु० उभ० सक० सेट् । शब्दयति ते अश-

**शब्द** पु० शब्द–घञ् । १ध्वन्यात्मके २वर्णात्मके च श्रोत्रे- न्द्रियग्राह्ये आकाशस्य गुणभेदे ।

**शब्दग्रह** पु० शब्दं गृह्णाति ग्रह–अच् । १श्रोत्रेन्द्रिये षष्ठ्यर्थे अण् ६त० । २शब्दज्ञाने ।

**शब्दतन्मात्र** न० कर्म० । सांख्यमतसिद्धे आकाशकारणे सूक्ष्मभूतभेदे तन्मात्रशब्दे ३२२८ पृ० दृश्यम् ।

**शब्दन** त्रि० शब्द–ल्यु । शब्दकारके अमरः ।

**शब्दब्रह्मन्** न० शब्दात्मकं ब्रह्म । १वेदात्मके २स्फोटात्मके च नित्ये शब्दरूपे ब्रह्मणि । [१बाणभेदे २अर्जुने त्रिका० ।

**शब्दभेदिन्** पु० शब्दानुसारेण भिनत्ति लक्ष्यम् भिद–णिनि ।

**शब्दवेधिन्** पु० शब्दानुसारेण विधति लक्ष्यं विध–णिनि । १बाणभेदे २अर्जुने च धनञ्जय० ।

**शब्दशक्ति** स्त्री ६त० । शब्दानामर्थावबोधकतारूपे अभि- धालक्षणादौ वृत्तिरूपे सामर्थ्ये ।

**शब्दाधिष्ठान** न० ६त० । कर्णे हेमच० ।

**शब्दानुशासन** न० अनुशिष्यतेऽनेन अनु+शास–ल्युट् ६त० । शब्दसाधुताज्ञापके व्याकरणे । "अथ शब्दानुशा- सनम्" महाभाष्यम् ।

**शब्दालङ्कार** पु० शब्दमात्रकृतोऽलङ्कारः । अलङ्कारशास्त्र- प्रसिद्धेऽनुप्रासादौ अलङ्कारे । अलङ्कारशब्दे तद्भेदा- दिकं दृश्यम् ।

**शब्दित** त्रि० शब्द–क्त । आहूते ।

**शम** शान्तौ अक० शान्तीकरणे सक० दि० शमा० पर० सेट् । शाम्यति इरित् अशमत्–अशमीत् । उदित् क्त्वा वेट् । शान्तः । शमयति शामयति ।

**शम** आलोचने चु० उभ० सक० सेट् । शामयति ते अश- शामत् त ।

**शम** पु० शम–घञ् । १शान्तौ अन्तरिन्द्रियदमने अमरः । २मोक्षे त्रिका० ३पाणौ रामाश्रमः । ४उपचारे राजनि० ।

**शमथ** पु० शम–अथच् । १शान्तौ अमर० । २मन्त्रिणि मेदि० ।

**शमन** पु० शमयति शम–णिच्–ल्यु । लोकानां पापपुण्य- फलदातृत्वेन दण्डकारके १यमे अमरः । शम–णिच्– भावे ल्युट् । २शान्तीकरणे न० । ३यज्ञार्थपशुघाते अमरः ४चर्वणे धरणि ५हिंसायां हेमच० ६मृगभेदे शब्दच० ।

**शमनस्वसृ** स्त्री ६त० । यमुनायाम् अमर० ।

**शमल** न० शम–कलच् । १विष्ठायाम् अमर० । २पापे शब्दर०

**शमि(मी)** स्त्री शम–इन् वा ङीप् । (शांइ) १वृक्षभेदे "शमी तिक्ता कटुः शीता कषाया रेचनी लघुः । कफ- कासभ्रमश्वासकुष्ठार्शःकृमिजित् स्मृता" भावप्र० । २शिम्बायाञ्च (शुँटि) हेमच० । ३त्रागुलौ मेदि० ।

**शमिन्** त्रि० शाम्यति शम–णिनि । शान्ते ।

**शमीक** पु० शम–बा० ईक । मुनिभेदे । [२विप्रे च शब्दच० ।

**शमीगर्भ** पु० शमीगर्भः आधारत्वेनास्त्यस्य अच् । १वह्नौ

**शमीधान्य** न० शमी शिम्बैव धान्यम् । शिम्बात्मके माष- मुद्गादौ धान्ये अमरः ।

"शमीजाः शिम्बिजाः शिम्बा तराः सूप्याश्च वैदलाः । वैदला मधुरा रूक्षाः कषायाः कटुपाकिनः । वातलाः कफपित्तघ्ना बद्धमूत्रमला हिमाः । ऋते मुद्गमसूराभ्या- मन्ये त्वाध्मानकारकाः" । मुद्गमसूरयोरनाध्मानकारि- त्वमन्यवैदलापेक्षया न तु सर्वथा एतयोरपि किञ्चिदा- ध्मानकारित्वदर्शनात्" भावप्र० "शूकधान्यं शमीधान्यं समातीतं प्रशस्यते । परतो वातकृद्रूक्षं प्रायेणाभिनवं गुरु । यवगोधूममाषाश्च तिलाश्चाभिनवा हिताः । पुराणा विरसा रूक्षा न तथार्थकरा मताः" राजवल्लभः ।

**शमीपत्री** स्त्री शम्या इव पत्त्रमस्याः ङीप् । लज्जालु- लतायां जटा० ।

**शमीर** पु० अल्पा शमी अल्पार्थे र "क्वचित् स्वार्थिका अपि प्रत्यया प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" इति भा- ष्योक्तेः पुंस्त्वम् । क्षुद्रायां शम्याम् अमर० ।

**शम्पा** स्त्री शं पाति पा–क । विद्युति अमर० ।

**शम्पाक** पु० शं शिघ्र पाकं फले वा यस्य । १आरग्वधे अमर० । २विपाके ३यावके च हेमच० ।

**शम्ब** गतौ भ्वा० पर० सक० सेट् । शम्बति अशम्बीत् ।

**शम्ब** पु० शम्ब–अच् । १वज्रे २मूलशापस्थितवीजे मेदि० । ३लौहकाषग्रे हेमच० । ४अनुलोमकर्षणे भरतः । ५दरिद्रे च संक्षिप्तसा० ६भाग्यवति त्रि० रायमुकुट ।

**शम्बर** न० शम्ब–अरन् । १जले २धने ३व्रते रत्नमा० । ४चित्ते च ५बौद्धव्रतभेदे हेमच० । ६मृगभेदे ७दैत्यभेदे पु० मेदि० ८मत्स्यभेदे ९पर्वतभेदे १०जिनभेदे पु० विश्व० । ११युद्धे पु० १२श्रेष्ठे त्रि० धरणि० १३चित्रकवृक्षे १४लोध्रे १५अर्जुनवृक्षे च पु० राजनि । [राजनि० ।

**शम्बरकन्द** पु० शम्बर० श्रेष्ठ० कन्दो यस्य । वाराहीकन्दे

**शम्बरचन्दन** न० ६त० । शम्बरपर्वतजाते चन्दनभेदे राजनि०

**शम्बरसूदन** पु० शम्बरमसुरं सूदयति हिनस्ति सु० सूद–ल्यु । कामदेवे हरिवं० तद्वधकथा हरिवं० १६३।१६४ अ० दृश्या ।

**शम्बरारि** पु० ६त० । कामदेवे अमर० । शम्बररिपादयोऽप्यत्र ।

**शम्बरी** स्त्री शम्बरं जलं बाहुल्येनास्त्यस्या अच् गौरा० ङीष् । १आखुपर्ण्यां मेदि० । २मायाया शब्दर० ।

**शम्बल** पु०न०शम्ब–कलच् । १कूले २पाथेये ३मत्सरे च मेदि०

**शम्बाकृत** त्रि० शम्ब कृष्टमप्यनुलोममाकृष्यते शम्ब+कर्मार्थे डाच्+कृ–क्त । अनुलोमेन द्विराकृष्टे कृष्टे क्षेत्रे अमरः ।

**शम्बु(म्बू)** पु स्त्री० शम्ब–उन् ऊ वा । १जलशुक्तौ (शामुक) हेमच० स्वार्थे क । तत्रार्थे । संज्ञायां कन् । गजकुम्भान्तभागे च । रामायणप्रसिद्धे शूद्रतापसे, शम्बूः हेमच० दैत्यभेदे च पु० ।

**शम्भ** त्रि० शमस्त्यस्य शम्+भ । कल्याणयुक्ते ।

**शम्भल** पु० शम्भं कल्याणदायकं तीर्थं लाति–ला क । १ग्रामभेदे यत्र कल्की भविष्यति तस्मिन् । २कुट्टिन्यां स्त्री अमर० गौरा० ङीष् ।

**शम्भु** पु० शम्+भू–डु । १महादेवे अमर० । २ब्रह्मणि ३अर्हति मेदि० ४विष्णौ हला० ५सिद्धे शब्दर० । ६श्वेतार्के शब्दर० । [म्भुसुतादयोऽप्यत्र ।

**शम्भुतनय** पु० ६त० । १गणेशे २कार्त्तिकेये च शब्दमा० श-

**शम्भुप्रिया** स्त्री ६त० । १आमलक्यां हेमच० २दुर्गायाञ्च ।

**शम्भुवल्लभ** न० ६त० । १श्वेतपद्मे राजनि० २महादेवप्रिये च

**शम्या** स्त्री शम–यत् टाप् । १युगकीलके अमर० । २दक्षहस्तहस्ततालभेदे संगीतदा० । [४निद्रायां ५पणे च विश्व ।

**शय** पु० शी–अच् । १हस्ते अमर० । २सर्पे ३शय्यायां मेदि०

**शयण्ड** पु० शी–अण्डच् । १अजगरसर्पे २मत्स्ये ३निद्राशीले त्रि० हेमच० । ४शराटे ५भवृक्षे च पुं स्त्री० संक्षिप्तसार ।

**शयन** न० शी–ल्युट् । १निद्रायां २शय्यायाम् अमर० ३मैथुने च मेदि० ।

देवभेदे शयनकालभेदादि वामनपु० १६अ० उक्तं यथा “मिथुनाभिगते सूर्ये शुक्लपक्षे तपोधन ! । एकादश्यां जगत्स्वामिशयनं परिकल्पयेत् । शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य केशवम् । कृत्वोपवीतकञ्चैव सम्यक् सपूज्य च द्विजान् । अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः । लब्ध्वा पीताम्बरधरं स्वस्ति निद्रां समानयेत् । त्रयोदश्यां ततः कामः स्वपते शयने शुभे । कदम्बानां सुगन्धानां कुसुमैः परिकल्पिते । चतुर्दश्यां ततो यक्षाः स्वपन्ति सुखशीतले । सुवर्णपङ्कजकृते सुखास्तीर्णोपधानके । पौर्णमास्यामुमानाथः स्वपते चर्मसंस्तरे । वैयाघ्रे च जटाभारं समुद्ग्रथ्यान्यचर्मणा । ततो दिवाकरे राशिं संप्रयाति च कर्कटम् । ततोऽमराणां रजनी भवते दक्षिणायनम् । ब्रह्मा प्रतिपदि तथा नीलोत्पलदलेऽनघ ! । तल्पे स्वपिति देवानां दर्शयन् मार्गमुत्तमम् । विश्वकर्मा द्वितीयायां तृतीयायां गिरेः सुता । विनायकश्चतुर्थ्यान्तु पञ्चम्यामपि धर्मराट् । षष्ठ्यां स्कन्दश्च स्वपिति सप्तम्यां भगवान् रविः । कात्यायनी तथाष्टम्यां नवम्यां कमलालया । दशम्यां भुजगेन्द्राश्च स्वपन्ति वायुभोजनाः । एकादश्यान्तु कृष्णायां साध्या ब्रह्मन् स्वपन्ति हि । एष क्रमस्ते गदितो निशायां शयने मुने ! । स्वपत्सु तेषु देवेषु प्रावृट्कालः समाययौ” ।

अथ लोकानां शयनप्रकारादि प्रदर्श्यते

“उपास्य पश्चिमां सन्ध्यां हुत्वाग्नीनातुपास्य च । भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ संविशेत् । शुचिं देशं विविक्तन्तु गोमयेन तु लेपयेत् । प्रागुदक्प्रवणे चैव संविशेत सदा बुधः । प्राक्शिराश्च स्वपेन्नित्यं तथा वै दक्षिणाशिराः । स्वपेदुदक्शिरा नैव तथा प्रत्यक्शिरा न च । न चान्तरीक्षहीने तु न तिर्य्यक् च कदाचन । शून्यालये श्मशाने तु एकवृक्षे चतुष्पथे । महादेवगृहे चापि मातृवेश्मनि न स्वपेत् । न यक्षनागायतने स्कन्दस्यायतने तथा । दर्भेषु च विना दीक्षां न स्वपेच्च कथञ्चन । धान्यगेहे च विप्राणां गुरूणाञ्च तथोपरि । नाशुचौ पर्णकीर्णे तु नाशुचिर्नोऽशुचिः । दिने सन्ध्यौ न नग्नश्च नोत्तरापरमस्तकः ।

मेदि०। ६ चातके शब्दच०। ७प्रसारण्यां स्त्री शब्दर०टाप्।

**शरणागत** त्रि० शरणमागतः आ+गम–क्त। शरणापन्ने।

**शरणापन्न** त्रि० शरणमापन्नः आ+पद क्त। शरणागते।

**शरणार्थिन्** त्रि० शरणमर्थयते अर्थ–णिनि। शरणकामे।

**श(स)रणि(णी)** स्त्री शृ(सृ)–अनि वा ङीप्। १पथि, ङीबन्तस्तु २प्रसारण्यां शब्दर०। ३जयन्त्याञ्च स्त्री शब्दर०। ४पङ्क्त्याम् अजयः।

**शरण्ड** पु० शृ–अण्डच्। १खगे २सरटे शब्दरत्ना०। ३धूर्त्ते ४भूषणभेदे मेदि०। ५चतुष्पदि संक्षिप्तसा०।

**शरण्य** त्रि० शरणाय साधुः यत्। १शरणागतत्राणकरणयोग्ये २दुर्गायां स्त्री।

"विपत्तिभयघोरेषु शरणं त्राणाद् यतः। शरण्या तेन सा देवी पुराणे परिपठ्यते" देवीपु०।

**शरण्यु** पु० शॄ–अन्यु। १मेघे २वाते च विश्वः। [शब्दर०

**शरत्कामिन्** पु० शरदि कामयते कम–णिनि। कुक्कुरे

**शरत्पद्म** न० शरदिव शुभ्रं पद्मम्। श्वेतपद्मे राजनि०।

**शरत्पर्वन्** न० ७त०। कोजागरपूर्णिमानिमित्तोत्सवे जटा०।

**शरद्** स्त्री शॄ–अदि। १वत्सरे, २आश्विनकार्त्तिकमासात्मके ऋतौ च अमरः। तद्वारिगुणा भावप्र० उक्ता यथा "वर्षासु नाभस वारि सेवेतौद्भिदमेव वा। सर्वं शरदि हेमन्ते तडागं सारसन्तु वा"। शारद नामभिन्नम्भि: बहु तत् परिकीर्त्तितम्। हेमन्तिकसमं स्निग्धं बल्यं हितं गुरु" राजव०। तत्रोत्तरवायुविधानं हिम यथा "वसन्ते दक्षिणो वातो भवेत् वर्षासु पश्चिम.। उत्तरः शारदे काले पूर्वो हेमन्तशैशिरे" राजनि०। शरद्यत्ते पु० दृश्यम्। "शरदृतु वैद्यकमते भाद्राश्विनभासा तक। तत्र वर्णनीयानि चन्द्रपटुता जलप्रसन्नता - ऋलस्थः श्रम दम०" कविकल्प०।

**शरधि** पु० शरा धीयन्तेऽत्र धा–आधारे कि। तूणे हेमच०

**शरपुङ्खा** स्त्री शरस्येव पुङ्खो यस्याः। नीलीवृक्षाकृतौ क्षुद्र-पुङ्खाख्ये "शरपुङ्खा यकृत्प्लीहगुल्मव्रणविषापहा। तिक्ता कषाया कासास्रश्वासज्वरहरी लघु" भावप्र०।

**शरभ** पु० शॄ–अभच्। "अष्टपादूर्द्ध्वनयन ऊर्द्ध्वपादचतुष्टय" इत्युक्तलक्षणे १मृगभेदे अमरः। २करभे, ३वानरभेदे अमरः। ४उष्ट्रे च जटा०। ५विष्णुपार्षदभेदे भा० आश्व० ८१ अ०। ६दानवभेदे भा० आ० ६५ अ०। "अष्टपादूर्द्ध्वनयनः शरभो वनगोचरः। स विंशं कन्तुमागच्छन्नेकाकं निवेशनम्। तं ऋषिः शरण्यं चक्रे बलोत्कटमरिन्दमम्। ततः स शरभो वन्यो मुने शरभमपतत्। दृष्ट्वा बलिनमत्युग्रं कृतं सद्यात्कृतद्भवात्। स एव शरभस्तस्मिन् वन्यस्तो मुनिना तदा। मुनेः पार्श्वगतो नित्यं शरभः सुखमाप्तवान्। ततः शरभसन्त्रस्ताः सर्वे भगमबाल्यदा। दिश० सद्याद्रवन् राजन्। भयाज्जीवितकाङ्क्षिणः। शरभोऽप्यतिसंहृष्टो नित्यं प्राणिवधे रतः। फलमूलाशनं कर्तुं नैच्छत् स पिशिताशनः। ततो रुधिरतर्षेण बलिना शरभोऽन्वितः। इयेष स मुनिं हन्तुमकृतज्ञः श्वयोनिजः। ततस्तेन तपःशक्त्या विदितो ज्ञानचक्षुषा। विज्ञाय च महाप्राज्ञो मुनिः श्वानं तमुक्तवान्। श्वा त्वं द्वीपित्वमापन्नो द्वीपी व्याघ्रत्वमागतः। व्याघ्राद् नागो मदपटुर्नागः सिंहत्वमागतः। सिंहस्त्वं बलमापन्नो भूयः शरभतां गतः। मया स्नेहपरीतेन विसृष्टो न कुलान्वयः। यस्मादेवमपापं मां पाप! हिंसितुमिच्छसि। तस्मात् स्वयोनिमापन्नः श्वैव त्वं हि भविष्यसि। ततो मुनिजनद्वेष्टा दुष्टात्मा प्राकृतोऽबुधः। ऋषिणा शरभः शप्तस्तद्रूपं पुनराप्तवान्" भा० शा० ११७अ०।

**शरभू** पु० शरे शरवणे भवति भू–क्विप्। कार्त्तिकेये हेमच०

**शरमय** त्रि० शरस्य विकारः मयट्। शरजाते पदार्थे।

**श(स)रयु(यू)** स्त्री शॄ–(सृ)–अयु वा ऊङ्। अयोध्यानगरीनिकटवाहिन्यां नद्याम्। तस्यां भवः अण् त्रि०। शा (सा)रव तत्र भवे त्रि० अमरः।

**श(स)रल** त्रि० शृ(सृ)–अलच्। १सुगमे, २अकुटिलचित्ते (सरल) ३वृक्षभेदे च। [त्रिकेने।

**शरवणोद्भव** पु० शरवणम् उद्भवः उत्पत्तिस्थानमस्य। कार-

**शरव्य** न० शरवे वाणविक्षेपाय हित शरु+यत्। लक्ष्ये, शरेण वेधनायोद्देश्ये अमरः।

**शराटि(टी)(टि)** स्त्री शरमनुमलं अटति अट–इन् पृषो० टस्य डो वा। (शराड) पक्षिभेदे अमरः।

**शराभ्यास** पु० ६त०। वाणमोचनविद्यायाम् अमरः।

**शरारु** त्रि० शॄ–आरु। हिंस्रे अमरः। [अप्। धनुषि जटा०

**शरारोप** पु० शराः आरोप्यन्तेऽत्र आ+रुह–णिच्।

**शराव** पु० शरं दध्यादिसारमवति अव–अच्। १मृण्मये भाजनभेदे, (सरा) अमरः। २कुडवद्वयपरिमाणे च वैद्यकम्।

**शरावती** स्त्री शराः सन्त्यस्याम् मतुप् मस्य वः पूर्वदीर्घः। नदीभेदे अमरः।

**शराश्रय** पु० ६त०। तूणे हेमच०।

**शरासन** पु॰ शरा अस्यन्तेऽनेन अस–ल्युट् । १धनुषि अमर॰ । शराणामासनम् । २तूणे च ।

**शरिमन्** पु॰ शॄ–उणा॰ इमनिच् । प्रसवे सि॰कौ॰ ।

**शरी** स्त्री शीर्य्यते शॄ–ई । एरकाख्ये भावप्र॰ ।

**शरीर** न॰ शॄ–ईरन् । प्रतिक्षणं शीयमाणे १देहे । तस्य अङ्गप्रत्यङ्गभेदा भावप्र॰ उक्ता यथा "गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकः । प्रकृतिः सविकारा च तत् सर्वं गर्भसंज्ञकम् । कालेन वर्द्धितो गर्भो यदाङ्गोपाङ्गसंयुतः । भवेत्तदा स मुनिभिः शरीरीति निगद्यते" । अङ्गोपाङ्गसंयुतः अङ्गाङ्गोपाङ्गः । "तस्य त्वङ्गान्युपाङ्गानि प्रोक्ता सुश्रुतशास्त्रतः । भवन्तादभिधीयन्ते शिष्याः ! शृणुत यत्नतः । आद्यमङ्गं शिरः प्रोक्तं तदुपाङ्गानि कुन्तलाः । तस्यान्तर्मस्तुलुङ्गं च ललाटं भ्रूयुगन्तथा । नेत्रद्वयं तयोरन्तर्वर्त्तेते द्वे कनीनिके । दृष्टिद्वयं कृष्णगोलौ श्वेतभागौ च वर्त्मनी । पक्ष्माण्यपाङ्गौ शङ्खौ च कर्णौ तच्छष्कुलीद्वयम् । घ्राणद्वयं कपोलौ च नासिका च प्रकीर्त्तिता । ओष्ठाधरौ च सृक्किण्यौ मुखं तालु हनुद्वयम् । दन्ताश्च दन्तवेष्टाश्च रसना चिबुकं गलः । द्वितीयमङ्गं ग्रीवा तु यया मूर्द्धा विधार्य्यते । तृतीयं बाहुयुगलं तदुपाङ्गान्यथ ब्रुवे । तन्मोपरिगतौ स्कन्धौ प्रगण्डौ भवतस्त्वधः । कफोणियुग्मं तदधः प्रकोष्ठयुगलन्तथा । मणिबन्धौ तले हस्तौ तयोश्चाङ्गुलयो दश । नखाश्च दश ते ख्याता दश कक्षेव्याः प्रकीर्त्तिताः । चतुर्थमङ्गं वक्षस्तु तदुपाङ्गान्यथ ब्रुवे । स्तनौ पुंसस्तथा नार्य्या विशेष उभयोरयम् । यौवनागमने नार्य्याः पीवरौ भवतः स्तनौ । गर्भवत्याः प्रसूतायास्तावेव क्षीरपूरितौ । हृदयं पुण्डरीकेण सदृशं स्यादधोमुखम् । जाग्रतस्तद्विकसति स्वपतस्तु निमीलति । आशयस्तत्तु जीवस्य चेतनास्थानमुत्तमम् । अतस्तस्मिंस्तमोव्याप्ते प्राणिनः प्रस्वपन्ति हि" । चेतनास्थानमुत्तममित्यस्याभिप्रायः "वैशेषिकमनस्काय च मनः, द्रव्यगुणैर्विना" इत्युक्तवता चरकेण सकलं शरीरं चेतनास्थानमुक्तम् तदपेक्षया हृदयं विशेषतश्चेतनास्थानमिति "कक्षयोर्वक्षसः सन्धौ जत्रुणी समुदाहृते । वक्ष उभे समाख्याते तयोः स्यातां च वङ्क्षणौ । उदरं पञ्चमञ्चाङ्गं षष्ठं पार्श्वद्वयं मतम् । सप्तमञ्च तु तथा समस्तं सप्तमं स्मृतम् । उपाङ्गानि च कथ्यन्ते तानि जानीहि यत्नतः । शोणितात्जायते प्लीहा वामतो हृदयादधः । रक्तवाहिसिराणां स मूलं ख्यातो महर्षिभिः । हृदयाद्वामतोऽधश्च फुप्फुसो रक्तफेनजः । अधो दक्षिणतश्चापि हृदयात् यकृतः स्थितिः । तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम् । अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति । जलवाहिसिरामूलं तृष्णाच्छादनकृन्मतम्" । क्लोम तिलकम् एतत्तु … तरक्तजम् । अत्र वृद्धवाग्भटः "रक्तादनिलसम्पक्तात्कालीयकपरञ्जकम्" इति "मेदःशोणितयोः साराद्वृक्कयोर्युगलं भवेत् । तौ तु पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः । उक्ताः सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः । अर्द्धव्यामेन हीनानि योषितोऽन्त्राणि निर्दिशेत् । उण्डुकश्च कटी चापि त्रिक वस्तिश्च वङ्क्षणौ । कण्डराणां प्ररोहः स्यात् स्थानं तद्वीर्य्यमूत्रयोः । स एव गर्भस्याधानं कुर्य्याद्गर्भाशये स्त्रियाः । शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता । वृषणौ भवतः साराःकफासृङ्मांसमेदसाम् । वीर्य्यवाहिसिराधारौ तौ मतौ पौरुषावहौ । गुदस्य मानं मर्त्यस्य सार्द्धं स्याच्चतुरङ्गुलम् । तत्र स्युर्वलयस्तिस्रः शङ्खावर्त्तनिभास्तु ताः । प्रवाहिणी भवेत् पूर्वा सार्द्धाङ्गुलमिता मता । उत्सर्जनी तु तदधः सा सार्द्धाङ्गुलसम्मिता । तस्याधः संवरणी स्यादेकाङ्गुलप्रमा मता । अर्द्धाङ्गुलप्रमाणं तु तथैर्गुदस्य मतम् । मलोत्सर्गस्य मार्गोऽयं पायुर्देहे विनिर्मितः । पुंसः प्रोथौ स्मृतौ यौ तु तौ नितम्बौ च योषितः । तयोःककुन्दरे स्यातां सक्थिनी स्यादष्टमम् । तदुपाङ्गानि च ऊरू जानुनी पिण्डिकाद्वयम् । जङ्घे द्वे घुटिके पार्ष्णितले च प्रपदे तथा । पादाङ्गुलयस्तत्र दश तासां नखा दश" ।

**शरीरक** पु॰ शरीर कायति आत्मत्वेनाभिमन्यते कै–क ; जीवे । स्वार्थे वुञ् । शारीरकोऽप्यत्र ।

**शरीरज** पु॰ शरीरात् जायते जन–ड । १रोगे २कामदेवे ३पुत्रे च धरणिः । ४देहजातमात्रे त्रि॰ ।

**शरीरावरण** न॰ शरीरमाद्रियतेऽनेन आ+वृ–युच् । देहव्यापिनि १चर्म्मणि राजनि॰ । २देहावरके त्रि॰ । ल्युट् । ३देहाच्छादने न॰ । [जटा॰ ।

**शरीरिन्** पु॰शरीरमाश्रयत्वेनास्त्यस्य इनि । जीवे

**शरु** पु॰ शॄ–उन् । १क्रोधे २वज्रे मेदि॰ । ३वाणे हेमच॰ । ४आयुधे च संक्षिप्तसा॰ ।

**शरेष्ट** पु० शृणाति कामिनं शॄ–अच् शरः कामः तस्य इष्ट इष–क्त । आम्रे जटा० ।

**शर्करक** पु० शर्करायाः रसः अच् इवाभाव शर्करः रस इव कायति मधुरत्वात् कै–क । मधुरजम्बीरे राजनि० ।

**शर्करजा** स्त्री शर्करात् जायते जन–ड । सिताखण्डे राजनि०

**शर्करा** स्त्री शॄ–करन् कस्य नेत्त्वम् । १खण्डविकारे (चिनि) अमरः । २उपलखण्डे ३कर्परखण्डे च (खापरा) मेदि० । शर्कराः सन्त्यस्य अण् तस्य लुक् । ४शर्करायुते देशे अमर । ५रोगभेदे अश्मरीशब्दे ४९५ पृ० दृश्यम् । ६शकले च मेदि० । शर्कराभेद गुणा राजनि० उक्ता यथा "स्निग्धा यवासशर्करा हितकरी शोषे क्षयेऽरोचके चक्षुष्या बलवर्द्धनी सुमधुरा हृद्या च वंशेक्षुजा । इष्टा तृप्तिबलप्रदा श्रमहरा ग्रामेक्षुजा शीतला स्निग्धा कान्तिकरीरसावहजनिता रक्तेक्षुजा पित्तजित्" "यावनाली हिमोत्पन्ना हिमाली हिमशर्करा । क्षुद्रशर्करिका क्षुद्रा गुडजा लवबिन्दुजा । हिमजा शर्करा प्रोक्ता शीता तिक्ताऽतिपिच्छला । वातघ्नी सारिका रुच्या दाहपिपासादाहिनी । "शीतलान्ताशर्करजा माध्वी च मधुशर्करा । माक्षिका शर्करा प्रोक्ता सिताखण्डस्य खण्डकः । सिताखण्डोऽतिमधुरश्चक्षुष्यश्चार्द्दिनाशनः । कुष्ठव्रणकफश्वासहिक्कापित्तास्रदोषनुत् । यवासशर्करा रम्या सुधामोदकमोदकः । तवराजः खण्डसारः खण्डजा खण्डमोदकः" । "मत्स्यण्डीका खण्डसिता गुणश्रेष्ठा यथोत्तरम् । निर्मला शीतला स्निग्धा गुर्व्यः स्वादुतराः सराः । रुच्याश्चाक्षुष्या शोषरक्तपित्तानिलापहाः । मत्स्यण्डी पाचिनी बल्या कषाया वातजित् गुरुः । खण्ड गुरु सर रुच्यं वातघ्न वृष्यपुष्टिदम् । सितोपला सरा गुर्वी वातघ्नी न कफप्रदा" । पथ्यापथ्यविवेक. "शर्करा ज्वरपित्तास्रहृन्मूर्च्छार्द्दितृषापहा । तृष्णास्रज्वरदाहस्तु ज्वरदाहास्रपित्तनुत् । वसिका फाणितगुडखण्डमत्स्यण्डिकासिता । निर्मला क्रमशो ज्ञेया शीतवीर्या यथोत्तरम् । यथा यथैषां वैमल्यं भवेच्छैत्यं तथा तथा" राजवल्लभः । "खण्डन्तु सिकताकारं सुश्वेतं शर्करा सिता । सिता सुमधुरा रुच्या वातपित्तास्रदाहजित् । मूर्च्छाच्छर्दिज्वरान् हन्ति सुशीता शुक्रकारिणी । भवेन्मधुसिता शीता रक्तपित्तहरी गुरुः । छर्द्यतीसारतृड्दाहरक्तजित्तुवरा हिमा । यथा यथैषां नैर्मल्यं मधुरत्वं तथा तथा । स्नेहशाचशैत्यानि रसत्वञ्च तथा तथा" भावप्र० गुणपन्थे ।

**शर्कराचल** पु० दानार्थं कल्पिते शर्कराकृते पर्वते । तद्विधिः हेमा० दा० पद्मपुराणे उक्तो यथा
"अथातः संप्रवक्ष्यामि शर्कराचलमुत्तमम् । यस्य प्रदानाद्विष्णुर्करुद्रास्तुष्यन्ति सर्वदा । अष्टभिः शर्कराभारैरुत्तमः स्यान्महाचलः । चतुर्भिर्मध्यमः प्रोक्तो भाराभ्यामधरः स्मृतः । भारेण भार्द्धभारेण कुर्याद् यः स्वल्पवित्तवान् । विष्कम्भपर्वतान् कुर्यात् तुरीयांशेन मानव । धान्यपर्वतवत् सर्वमासाद्यामरसंयुतम् । मेरोरुपरि तद्वच्च स्थाप्य हेमतरुत्रयम् । मन्दारः पारिजातश्च तृतीयः कल्पपादपः । एतद्वृक्षत्रयं मूर्ध्नि सर्वेष्वपि निवेशयेत् । हरिचन्दनसन्तानौ पूर्वपश्चिमभागयोः । निवेश्यौ सर्वशैलेषु विशेषाच्छर्कराचले । मन्दारे कामदेवश्च प्रत्यग्वक्त्रः सदा भवेत् । गन्धमादनशृङ्गे च धनदः स्यादुदङ्मुखः । प्राङ्मुखो वेदमूर्त्तिश्च हंसः स्याद्विपुलाचले । हैमी सुपार्श्वे सुरभी दक्षिणाभिमुखी भवेत् । धान्यपर्वतवत् सर्वमावाहनमखादिकम्" ।

**शर्कराधेनु** स्त्री दानार्थं कल्पिते शर्कराकृते धेन्वाकारे द्रव्यभेदे हेमा०दा० स्कन्दपुराणोक्तस्तद्विधिर्यथा
"तद्वच्च शर्कराधेनुं राजन् ! कुर्याद् यथार्थतः । चतुरस्रे महीपृष्ठे लिप्ताजिनकुशोत्तरे । धेनुः शर्करया राजन् ! कार्या भारचतुष्टयम् । उत्तमा कथ्यते वह्निचतुर्थांशेन वत्सकः । तदर्द्धं मध्यमा प्रोक्ता चतुर्थांशेन वत्सका । तदर्द्धं प्रकुर्वीत चतुर्थांशेन मानव । अथ वा धेनुतः कुर्याद्दशांशेन तु वत्सकम् । स्वशक्त्या कारयेद्धेनुं यथाज्ञानं न पीडयेत् । सर्वबीजानि संस्थाप्य चतुर्दिक्षु समन्ततः । सौवर्णशृङ्गाक्षिणी मौक्तिकैर्नयनानि च । गुडेन च मुखं कार्यं जिह्वा पिष्टमयी तथा । कम्बलं पट्टसूत्रेण घण्टाभरणभूषिता । इक्षुपादा रौप्यखुरा नवनीतमयस्तना । प्रशस्तपत्रश्रवणा सितचामरभूषिता । पञ्चरत्नसमायुक्ता दर्भरोमसमन्विता । कांस्योपदोहना सम्यक् गन्धपुष्पैः समन्विता । ईदृग्विधानसंयुक्तां वस्त्रैराच्छादिता तथा । गन्धपुष्पैरलङ्कृतां ब्राह्मणाय निवेदयेत्" ।

**शर्करार्बुद** पु० रोगभेदे तल्लक्षणं भावप्र० उक्तं यथा
"प्राप्य मांसं सिराः स्नायुं मेदः श्लेष्मा तथानिल । ग्रन्थिं करोत्यसौ भिन्नो मधुसर्पिर्वसानिभम् । स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः । मांसं विशोष्य

पचितां शर्करां समयन्ततः । दुर्गन्धक्लिन्नमलवर्णं नानावर्णं ततः स्थिरा० । भवन्ति सहसा रक्तं तं विद्याच्छर्करार्बुदम्" । शर्करा वालुकातुल्या" भावप्र० ।

**शर्करावत्** त्रि० शर्कराः सन्त्यस्मिन् मतुप् मस्य वः । बहुशर्करायुक्तदेशे ।

**शर्करासप्तमी** स्त्री वैशाखशुक्लपक्षसप्तम्याम् । तद्विधानं मत्स्यपु० ७२अ० उक्तं यथा "शर्करासप्तमीं वक्ष्ये तद्वत् कल्मषनाशिनीम् । आयुरारोग्यमैश्वर्यं ययानन्तं प्रजायते । माधवस्य सिते पक्षे सप्तम्यां श्रद्धयान्वितः । प्रातःस्नात्वा तिलैः शुक्लैः शुक्लमाल्यानुलेपनः । स्थण्डिले पद्ममालिख्य कुङ्कुमेन सकर्णिकम् । तस्मै नमः सवित्रे तु गन्धपुष्पं निवेदयेत्" इत्यादि ।

**शर्करोदक** न० शर्करामिश्रितमुदकम् । ( चिनिर पाना ) शर्करामिश्रिते जले तत्करणप्रकारगुणादिकं भावप्र० उक्तं यथा "जलेन शीतलेनैव लोलिता शुभ्रशर्करा । एलालवङ्गकर्पूरमरिचैश्च समन्विता । शर्करोदकनाम्नैतत् प्रसिद्धं विदुषा मतम् । शर्करोदकमाख्यातं शुक्रलं शिशिरं सरम् । बल्यं रुच्यं लघु स्वादु वातपित्तप्रणाशनम् । मूर्च्छाच्छर्दितृषादाहज्वरशान्तिकरं परम्" भावप्र०

**शार्करिक** त्रि० शर्कराः सन्त्यस्य ठन् । बहुशर्करायुक्तदेशे इत्यत् । शार्करिक-तत्रैव उभयत्रामरः ।

**शर्द्ध** पु० शृध-घञ् । अपानवायूत्सर्गे । ल्युट् । तत्रैव न० ।

**शर्द्धञ्जह** पु० शर्द्धमपानवायूत्सर्गं जहाति हा-खश् मुम् च । माषे । तद्भोजने हि अपानवायुर्निःसरतीति तस्य तथात्वम् ।

**शर्ब** हिंसायां गतौ च भ्वा०पर०सक०सेट् । शर्बति अशर्बीत् ।

**शर्मद** त्रि० शर्म ददाति दा-क । १सुखदायके २विष्णौ पु० विष्णुसं० ।

**शर्मन्** शॄ-मनिन् । १सुखे २गृहे न० ३ब्राह्मणोपाधौ पु० । "शर्मा देवश्च विप्रस्य वर्मा त्राता च भूभुजः । भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्" यम । "शर्मान्तं ब्राह्मणस्य स्यात् वर्मान्तं क्षत्रियस्य तु । धनान्तञ्चैव वैश्यस्य दासान्तं चान्त्यजन्मनः" शातातप ।

**शर्मरा** स्त्री शर्म-राति रा-क । १दारुहरिद्रायां २वस्त्रभेदे पु० भरतः ३सुखदायके त्रि० ।

**शर्य्या** स्त्री शॄ-यत् । रात्रौ वाचस्पति० ।

**शर्य्याति** पु० वैवस्वतमनोः पुत्रभेदे ।

**शर्व** हिंसे भ्वा० पर० सक० सेट । शर्वति अशर्वीत् ।

**शर्व** पु० शर्व-अच् । १महादेवे हेमच० । २विष्णौ विष्णुसं० ।

**शर्वर** पु० शर्व-अरन् । १कामदेवे २तमसि न० उणादि० ३सन्ध्याकाले संक्षिप्तसा० ४स्त्रियां मेदि० ।

**शर्वरी** स्त्री शॄ-वनिप् ङीप् वनो र च । १रात्रौ अमरः । शर्वरीचन्द्रः । २हरिद्रायां विश्वः । [हेमच० ।

**शर्वला** स्त्री शर्व-वञ् शर्वं लाति ला-क । तोमरास्त्रे

**शर्वाणी** स्त्री शर्वस्य पत्नी ङीप् आनुक् च । भवान्यां हेमच०

**शल** चलने भ्वा० आत्म० सक० सेट् । शलते अशलिष्ट । अशलिढ्(ध्व)म् शेषे [ज्वलादि० शलः शालः ।

**शल** गतौ भ्वा० पर० सक० सेट् । शलति अशालीत् ।

**शल** श्लाघायां चु० आत्म०सक०सेट् । शालयते अशीशलत ।

**शल** वेगे भ्वा० पर० सक० सेट् । शलति अशालीत् ।

**शल** न० शल-अच् । १शल्यकीलोम्नि (सजारुकाँटा) अमरः २भृङ्गिणि ३पोतभेदे ४ब्रह्मणि च पु० मेदि० ५कुन्ताख्ये त्रिका० ६उष्ट्रे पुंस्त्री० हेमच० स्त्रियां ङीष् ।

**शलक** पु० शल-वुन् । (माकड्सा) कीटभेदे त्रिका० ।

**शलङ्ग** पु० शल-अङ्गच् । १लोकपाले २लवणभेदे उणादि० ।

**शलभ** पु० शल-अभच् । कीटभेदे पतङ्गे अमरः ।

**शलल** न० स्त्री शल-कलच् । शल्यकीलोम्नि ( सजारुकाँटा ) अमरः । स्त्रीत्वे गौरा० ङीष् ।

**शलाका** स्त्री शल-आकन् । १शल्ये २मदनवृक्षे (मयना) ३सारिकायां ४शल्लक्यां ५शरे मेदि० ६आलेख्यतूलिकायां हेमच० ७अस्थ्नि च शब्दच० । सुश्रुतोक्ते शस्त्रादिकार्यार्थे यन्त्रभेदे शस्त्रशब्दे दृश्यम् ।

**शलाकापरि** अव्य० अव्ययी० । शलाकापातनक्रीडायां पराजये

**शलाकापुरुष** पु० हेमचन्द्रोक्ते जैनानां त्रिषष्टिदेवपुरुषभेदे

**शलाटु** त्रि० शल-आटु । १अपक्वफले अमरः । २मूलभेदे उणादि० ३विल्वे च पु० राजनि० ।

**शलालु** पु० शल-आलुच् । सुगन्धिद्रव्यभेदे सि०कौ० ।

**शलालुक** त्रि० शलालुना क्रीतं ठन् । शलालुद्रव्येण क्रीते पदार्थे स्त्रियां ङीप् ।

**शल्क** न० शल-क कस्य नेत्त्वम् । १खण्डे २वल्कले अमरः । ३मत्स्यत्वचि च (आँश) कोषान्तरम् । [त्वचि च सि०कौ०

**शल्कल** न० शल-कलन् कस्य नेत्त्वम् । १मत्स्यवल्कले २शल्क-

**शल्कलिन्** पु० शल्कलमस्त्यस्य इनि । मत्स्ये शब्दर० ।

**शल्किन्** पु० शल्कमस्त्यस्य इनि । मत्स्ये हेमच० ।

**शल्यदा** स्त्री शल-यक् तादृश शदं मूल यस्याः । मेदाख्योषधौ राजनि० ।

तिथौ रक्षोगणानामथ स्वरस्य तु" भाव०। श्राद्धे तन्मांस दाने फलभेदः श्रा० त० उक्तो यथा "ऐणरौरव वाराहशाशैर्मांसैर्यथाक्रमम्। मासवृद्ध्याभितृप्यन्ति दत्तेनेह पितामहाः" तन्मांसं विष्णवे देयं यथोक्तं "मार्गं मांसं तथा छागं शाश समतुपलक्षतं। एतानि मे प्रियाणि स्युः प्रपद्यामि वसुन्धरे।"। वराहपु०। २चन्द्राङ्करूपे मृगे धरणिः। ३बोले ४बोले ५नरभेदे मेदि०। तल्लक्षणं यथा "मृदुवचनसुशीलः कोमलाङ्गः सुवेशः सकलगुणनिधानं सत्यवादी शशोऽयम्" रतिम०।

**शशक** पुंस्त्री० शश--स्वार्थे क। (खरगोश) पञ्चनखेषु भक्ष्ये पशुभेदे "शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः। भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः" मनुः।

**शशधर** पु० शशं मृगभेदं धरति धृ-अच्। १चन्द्रे २कर्पूरे च अमरः। भृ--क्विप् शशभृदादयोऽप्यत्र।

**शशलाञ्छन** पु० शशः मृगभेदो लाञ्छनं यस्य। १चन्द्रे २कर्पूरे च शशाङ्कादयोऽप्यत्र।

**शशबिन्दु** पु० १राजभेदे २विष्णौ च मेदि०।

**शशशिम्बिका** स्त्री शश इव शिम्बी यस्याः कायति कै-क। जीवन्त्यां राजनि०। [यमुनयोर्मध्यस्थे देशभेदे त्रिका०।

**शशस्थली** स्त्री शशवाशयोर्मध्या स्थली। अन्तर्वेद्यां गङ्गा-

**शशाण्डुलि** स्त्री अण्ड--उलि ह्रस्व०वा ङीप्। कर्कटीभेदे राजनि०। "शशाण्डुली त्रिदोषघ्नी कोमला कटुतिक्ता मधुरा कफापहा। पाके तु साऽम्ला मधुरा विदाहकृत् कफे तु शुष्का रुचिकृत् दीपनी" राजनि०। [स्त्रु। तत्रैव।

**शशाद** पु० शशमत्ति अद- अण्। श्येनविहगे राजनि०।

**शशिकला** स्त्री ६त०। १चन्द्रस्य षोडशभागे "शुक्लनिशमनुकलाविह शशिकला" छन्दोम० उक्तलक्षणे २पञ्चदशाक्षरपादके छन्दोभेदे। [मणौ पु० राजनि०।

**शशिकान्त** न० शशी कान्तो यस्य। १कुमुदे २चन्द्रकान्त

**शशिन्** पु० शशोऽस्त्यस्य इनि। १चन्द्रे २कर्पूरे च शब्दमा०।

**शशिप्रभ** न०शशिना प्रभा स्वेव वा प्रभा यस्य। १कुमुदे। २मुक्तायां राजनि०। ६त० ३ज्योत्स्नायां जटा०। [दयोऽप्यत्र।

**शशिभूषण** पु० शशी भूषणं यस्य। १महादेवे शशिमौलिमा-

**शशिलेखा** स्त्री शशिनो रेखा ६त०। १चन्द्रकलायां शशिनो लेखेव कलतावत्त्वात्। २गुडूच्यां मेदि०। "मौ मो यौ चेत् भवेतां सप्ताष्टैश्चन्द्रलेखा" छन्दोम० उक्तलक्षणे ३पञ्चदशाक्षरपादके छन्दोभेदे। [राजनि०।

**शशिवाटिका** स्त्री शशिनो वाटीव इवार्थे कन्। पुनर्नवायां

**शशिशेखर** पु० शशी शेखरं यस्य। महादेवे त्रिका० शशिमौल्यादयोऽप्यत्र।

**शशोर्ण** न० ६त०। शशस्य लोम्नि अमरः। [अमरः।

**शश्वत्** अव्य० शश- वति। १नैरन्तर्ये २पुनःपुनरित्यर्थे च

**शष** वधे भ्वा० पर० सक० सेट्। शषति अशाषीत् अशषीत्।

**शष्कुल** पु० शष-कुलच् कस्य नेत्वम्। ( कहरकरभा ) १मत्स्ये २अपूपभेदे स्त्री शब्दच० गौरा० ङीष्। ३कर्णरन्ध्रे "अवलम्बितकर्णशष्कुली" नैष०। ४मत्स्यभेदे च भावप्र० दन्त्यमध्योऽप्ययमत्रार्थे। [मेदि०।

**शष्प** न० शष- पक्। १बालतृणे बाले अमरः २प्रतिभाक्षये पु०

**शस** वधे भ्वा० पर० सक० सेट् उदित् क्त्वा वेट्। शसति। अशासीत् अशसीत्।

**शस** आशिषि भ्वा० आत्म० सक० इदित् सेट्। प्रायेणाङ्पूर्वः। आशंसते आशंसिष्ट।

**शस** वधे अदा० पर० सक० सेट् इदित्। शंस्ति अशंसत्।

**शसन** न० शस -वधे ल्युट्। यज्ञार्थं पशुहनने।

**शस्त** न० शस्--क्त। १कल्याणे २तद्वति अमरः। ३स्तुते ४प्रशस्ते च त्रि० मेदि०। ५देहे न० त्रिका० संज्ञायां कन्। ६अङ्गुलित्राणे शब्दच०।

**शस्त्र** न० शस--ष्ट्रन्। १लौहे २खड्गादौ अस्त्रे च हेमच० स्वार्थे क। तत्रैव। तत्र सुश्रुतसम्मतशस्त्राणि भेदाः शंस- त्रन्। ३प्रगीते मन्त्रभेदे त्रिवृत्साङ्गस्ताम्नां च- तुर्थादि स्तुतौ यथा

"अथातः शस्त्रावचारणीयमध्यायं व्याख्यास्यामः विंशतिः शस्त्राणि। तद्यथा मण्डलाग्रकरपत्रवृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्धधारसूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्चककुठारिकाव्रीहिमुखारावेतसपत्रकवडिशदन्तशङ्क्वेषण्य इति। तत्र मण्डलाग्रकरपत्रे स्यातां छेदने लेखने च। वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्धधाराणि छेदने भेदने च। सूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्चकानि विस्रावणे। कुठारिकाव्रीहिमुखारावेतसपत्रकाणि व्यधने सूची च। वडिशो दन्तशङ्कुश्चाहरणे। एषण्येषणे आनुलोम्ये च। सूच्यः सीवने इत्यष्टविधे कर्मण्युपयोगः शस्त्राणां व्याख्यातः। तेषामथ यथायोगग्रहणसमासोपायः कर्मसु वक्ष्यते। तत्र वृद्धिपत्रं वृन्तफलसाधारणे भागे गृह्णीयाद्भेदनार्थं सर्वाणि। वृद्धिपत्रं मण्डलाग्रं किञ्चिदुत्तानपाणिना लेखने बहुशोऽवचार्यं" इत्याद्यो

विस्रावणानि विशेषेण बालवृद्धसुकुमारभीरुनारीणां राज्ञां राजपुत्राणाञ्च त्रिकूर्चकेन विस्रावयेत्। तत्र प्रच्छादितवृन्तमङ्गुष्ठप्रदेशिनीभ्यां व्रीहिमुखम्। कुठारीका वामहस्तन्यस्तामितरहस्तमध्यमाङ्गुष्ठविष्टब्धयाभिहन्यात्। आराकरपत्रैषण्यो मूले। शेषाणि तु यथायोगं गृह्णीयात्। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः। तत्र नखशस्त्रैषण्यावष्टाङ्गुले सूच्यो वक्ष्यन्ते। वडिशो दन्तशङ्कुश्चानताग्रे तीक्ष्णकण्टकप्रथमयवपत्रमुखे। एषणी गण्डूपदाकारमुखी। प्रदेशिन्यग्रपर्वप्रदेशप्रमाणा सुदृढा। दशाङ्गुला शरारीमुखी सा कर्त्तरीति कथ्यते। शेषाणि तु षडङ्गुलानि। तानि सुग्रहाणि सुलोहानि सुधाराणि सुरूपाणि सुसमाहितमुखाग्राण्यकरालानि चेति शस्त्रसम्पत्। तत्र वक्रं कुण्ठं खण्डं खरधारमतिस्थूलमत्यल्पमतिदीर्घमतिह्रस्वमित्यष्टौ शस्त्रदोषाः। अतो विपरीतगुणमाददीतान्यत्र करपत्रात्तद्धि खरधारमस्थिच्छेदनार्थम्। तत्र धारा भेदनानां मासूरी। लेखनानामर्द्धमासूरी। व्यधनानां विस्रावणानाञ्च कैशिकी। छेदनानामर्द्धकैशिकीति। तेषां पायना त्रिविधा क्षारोदकतैलेषु तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु। उदकपायितं मांसच्छेदनभेदनपाटनेषु तैलपायितं सिराव्यधनस्नायुच्छेदनेषु। तेषां निशानार्थं श्लक्ष्णशिला माषवर्णा। धारासंस्थापनार्थं शाल्मलीफलकमिति"। भवति चात्र "यदा सुनिशितं शस्त्रं रोमच्छेदि सुसंस्थितम्। सुगृहीतं प्रमाणेन तदा कर्मसु योजयेत्"। अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकाग्निक्षारनखगोजीशेफालिकाशाकपत्रकरीरबालाङ्गुलय इति। "शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत्। त्वक्सारादि चतुर्वर्गं छेद्ये भेद्ये च बुद्धिमान्। आहार्य्यच्छेद्यभेद्येषु नखं शक्येषु योजयेत्। विधिः प्रवक्ष्यते पश्चात् क्षारवह्निजलौकसाम्। ये स्युर्मुखगता रोगा नेत्रवर्त्मगताश्च ये। गोजीशेफालिकाशाकपत्रैर्विस्रावयेत्तु तान्। एषण्येषणालाभे तु बालाङ्गुल्यङ्कुरा हिताः। शस्त्राण्येतानि मतिमान् शुद्धशैक्यायसानि तु। कारयेत्करणे प्राप्तं कर्मारं कर्मकोविदम्। प्रयोगज्ञस्य वैद्यस्य सिद्धिर्भवति नित्यशः। तस्मात्परिचयः कार्य्यः शस्त्राणामादितः सदा"। [राजनि०।

**शस्त्रकोषतरु** पु० शस्त्रकोषस्य हितस्तरुः। महापिण्डीतरौ

**शस्त्रजीविन्** पु० शस्त्रेण जीवति जीव–णिनि। शस्त्रव्यापारेण युद्धादिना वृत्तिमति हेमच०।

**शस्त्रपाणि** पु० शस्त्रं पाणौ यस्य। १शस्त्रधारके २आततायिभेदे च "शस्त्रपाणिर्धनापहः" इति स्मृतिः।

**शस्त्रमार्ज्ज** पु० शस्त्रं मार्ष्टि मृज–अण् (शिकलकर) शस्त्रमार्ज्जनकरे शिल्पिभेदे अमरः।

**शस्त्रहत** त्रि० ३त०। १शस्त्रघातेन मृते "पक्षिपशुदंष्ट्रैर्मृता दंष्ट्रिशृङ्गिनखैर्हताः। पतनानशनप्रायैर्वज्राग्निविषबन्धनैः। मृता जलप्रवेशेन ते वै शस्त्रहता मताः" देवीपु० परिभाषिते २खड्गादिहते च। तच्चाशौचादि शुद्धित० उक्तं यथा "शस्त्रघाते त्र्यहादूर्द्ध्वं यदि कश्चित् प्रमीयते। अशौचं प्राकृतं तत्र सर्ववर्णेषु नित्यशः" व्याघ्रः "घातेन म्रियते यस्तु तस्याशौचं भवेद्द्विधा। आसप्ताहात् त्रिरात्रं स्यात् दशरात्रमतःपरम्"। अत्र शस्त्रघातपरं घातेतरशस्त्रघातपरं पारिभाषिकशस्त्रघातपरञ्च। न च शास्त्रीयव्यवहारेऽन्तरङ्गत्वेन पारिभाषिकस्यैव ग्रहणं युक्तमितिवाच्यम् आद्ये पारिभाषिकापारिभाषिकशस्त्रघातग्रहणवदत्रापि तथा युक्तत्वात् पारिभाषिकत्वादेव न प्रकरणनियमः" शु० त० रघु०।

**शस्त्रहतचतुर्दशी** स्त्री शस्त्रहतोद्देश्यकश्राद्धाङ्गं चतुर्दशी। गौणाश्विनकृष्णपक्षचतुर्दश्यां तत्र कर्त्तव्यं श्राद्धवि० दर्शितं यथा

"अथ शस्त्रहतचतुर्दशी। विष्णुः युद्धहतानां श्राद्धकर्मणि चतुर्दशी प्रशस्ता"।

शस्त्रयुद्धहतानामेवेति न नियमार्थम् ब्रह्मपुराणे "गवाऽनशनशस्त्राग्निविषोद्बन्धनिनां तथा। चतुर्दश्यां तु कर्त्तव्यं तृप्त्यर्थमिति निश्चयः" प्रायोमहापथगमनम्। वायुपुराणे "युवानस्तु गृहे यस्य मृतास्तेषान्तु दापयेत्। शस्त्रेण च हता ये वै तेषां दद्याच्चतुर्दशीम्"। युवान एव पुत्रादयो मृता इत्यर्थः। मरीचिः "विषशस्त्रश्वापदाहितिर्य्यग्ब्राह्मणघातिनाम्। चतुर्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता"। ब्राह्मणकर्तृघातोऽस्यास्तीति ब्राह्मणघाती तेषां, ये च ब्राह्मणैर्हताः" इति ब्रह्मपुराणवचनात् न तु कृतब्राह्मणघातस्य पतितत्वात्। अन्येषाम् अशस्त्रादिहतानाम् एतच्च शस्त्रहतानाञ्च विष्ण्वादिभिः सामान्यप्रकरणे लिखनात् सकलकृष्णपक्षसाधारणम् पित्रादीनामेव पार्वणविधिप्रकरणात् पार्वणविधिना कार्य्यं "यदि·

ण्डीकरणादूर्द्धं यत्र यत्र प्रदीयते। तत्र तत्र त्रयं कुर्य्याद्वर्जयित्वा मृताहनि” इति मनुवचनाच्च। ननु “अन्येषान्तु विगर्हिता” इति श्रवणात् कथं त्रैपुरुषिकपार्वणविधिः न यस्य पुरुषास्त्रय एव शस्त्रहतास्तस्य त्रैपुरुषिकविधिरुपपद्यते एवं यस्य द्वौ शस्त्रहतौ एको वा तेनापि द्वैपुरुषिकैकपुरुषिकमेव पार्वणं कर्त्तव्यं यथा मनुः “पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः। पितुः स नाम सङ्कीर्त्य कीर्त्तयेत् प्रपितामहम्” तथा हारीतः “पितामहोऽपि जीवेच्च पितर्य्येव समापयेत्”। नन्वेकोद्दिष्टमात्रं श्रूयते यथाह गार्ग्यः “सपिण्डीकरणादूर्द्धं मृते कृष्णचतुर्दशीम्। प्रतिसंवत्सरादन्यदेकोद्दिष्टं न कारयेत्” यमः “सपिण्डीकरणादूर्द्धं यत् पितृभ्यः प्रदीयते। एकोद्दिष्टविधानेन प्रदेयं शस्त्रघातिने” भविष्यपुराणे “समत्वमागतस्यापि पितुः शस्त्रहतस्य च। चतुर्दश्यां तु कर्त्तव्यमेकोद्दिष्टं न पार्वणम्। चतुर्दश्यां तु यत् श्राद्धं सपिण्डीकरणे कृते। एकोद्दिष्टविधानेन प्रदेयं शस्त्रघातिने” उच्यते। एषां वचनानाममूलत्वात् समूलत्वेऽपि पार्वणाशक्तविषयकत्वादेतानि विष्ण्वादिवचनेषु पार्वणावगतेः। भ्रात्रादीनान्तु शस्त्रहतानाम् एकोद्दिष्टविधिना कार्य्यम्। “अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये। तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्” इत्यापस्तम्बवचने पार्वणनिषेधात्। तच्च न सकलकृष्णपक्षसाधारणं विष्ण्वादिवचने श्राद्धशब्दस्य पार्वणपरत्वोक्तेः। किन्त्वाश्विनमासीयकृष्णपक्षविषयम्। ब्रह्मपुराणे “प्राया नगनेत्यादिना सकलकृष्णपक्षसाधारणं श्राद्धमभिधायाभिने “तर्पणीयाश्चतुर्दश्यां लुप्तपिण्डोदकक्रिया” इति पुनरभिधानं तच्छस्त्रहतभ्रात्रादिविषयम् अतएव तत्रैव “अमावास्यायां पितरः पूज्या नान्दीमुखा अपीति” वृद्धप्रपितामहादीनामपि श्राद्धं दर्शितम्। इयञ्च चतुर्दश्यामशस्त्रहतश्राद्धनिन्दा आश्विनमासीयकृष्णपक्षश्राद्धादिकृत्यव्यतिरिक्तसामान्यकृष्णपक्षविहितश्राद्धकाम्यश्राद्धविषया प्रकरणभेदेन श्राद्धकर्मभेदात् सामान्यविशेषन्यायाच्च इतरथा चतुर्दश्यां सङ्क्रान्तिमात्रेऽशस्त्रहतनिन्दा स्यात् अतएव “कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीमिति” मनुवचनेऽपि चतुर्दशीवर्जनं पक्षश्राद्धादिव्यतिरिक्तविषयम्। ननु शस्त्रादिहतानां श्राद्धनिषेधः श्रूयते यथा छागलेयः “शस्त्रविप्रहतानाञ्च शृङ्गिदंष्ट्रिसरीसृपैः। आत्मनस्त्यागिनाञ्चैव श्राद्धमेषां न कारयेत्”। सत्यं बुद्धिपूर्वकमृतानामेव। प्रमादमृतानाञ्च श्राद्धादिकमाह अङ्गिराः “अथ कश्चित् प्रमादेन म्रियतेऽग्न्युदकादिभिः। अशौचं तस्य कर्त्तव्यं कर्त्तव्या चोदकक्रिया”। अबुद्धिपूर्वकमपि शृङ्ग्यादिभिः क्रीडां कुर्वतां मृतानां न कर्त्तव्यम्। ब्रह्मपुराणे “शृङ्गिदंष्ट्रिनखिव्यालविषवह्निस्त्रिया जलैः। आदरात् परिहर्त्तव्यः कुर्वन् क्रीडां मृतस्तु यः”। परिहर्त्तव्यः श्राद्धादौ। शास्त्रानुमत्या बुद्धिपूर्वकमृतानामपि कर्त्तव्यम्। गार्ग्यः “नष्टशौचव्रतिर्लुप्तप्रत्याख्यातभिषक्क्रियः। आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनादिभिः। तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः। तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमिष्यते”। एवं क्रीडाव्यतिरेकेणाऽबुद्धिपूर्वमृताः शास्त्रानुमत्या च बुद्धिपूर्वकमृता अपि श्राद्धार्हाः। कथम् लुप्तपिण्डोदकत्वम् इति चेत्तेषामिति ब्रूम बुद्धिपूर्वकमृते पिण्डोदकक्रियालोपात्”।

**शस्त्राभ्यास** पु० ६त०। शस्त्रप्रयोगशिक्षायां त्रिका०। [जनि०।

**शस्त्रायस** शस्त्रयोग्यमयः अच्समा०। लौहभेदे (इस्पात) रा-

**शस्त्रिन्** त्रि० शस्त्रमस्त्यस्य इनि। शस्त्रविशिष्टे।

**शस्त्री** स्त्री स्वल्पं शस्त्रं ङीप्। क्षुरिकायाम् मेदि०।

**शस्प** न० शस–प। बालतृणे घासे अमरे पाठान्तरम्।

**शस्य** न० शस-यत्। वृक्षादीनां फले “शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते” इत्युक्ते क्षेत्रस्थे धान्यादौ च अस्य दन्त्यादित्वमपि नवशस्यसम्भोगनक्षत्राणि ज्यो० त० उक्तानि यथा “अनुराधा मृगशिरो रेवती चोत्तरात्रयम। हस्ता चित्रा यथा पुष्या श्रवणा च पुनर्वसुः। रोहिणी नवशस्यादिनवद्रव्याशनादिषु। प्रशस्तं नवपीठादिसम्भोगे चाहयिद्भवदेत्”।

**शस्यध्वंसिन्** पु० शस्यं ध्वंसयति ध्वन्स–णिच्–णिनि। १राजवृक्षे (हेंद) शब्दच० २शस्यनाशके त्रि०।

**शस्यमञ्जरी** स्त्री ६त०। अभिनवधान्यादिशीर्षे अमरः।

**शस्यशूक** न० धान्यादेः शीर्षे अमर.। [अमर।

**शस्यसम्बर** पु० शस्यं संवृणोति सम्+वृ–अच्। शालवृक्षे

**शस्यारु** पु० शस्यमृच्छति ऋ–उण्। क्षुद्रशमीवृक्षे शब्दच०।

**शाक** पु०न० शक–घञ्। १पत्रपुष्पादौ अमरः २वृक्षभेदे पु० (सेगुण) हस्वे च ३शक्तौ ४शिरीषवृक्षे पु० शब्दरत्ना०। ५खराज्यावधि वत्सरप्रवर्त्तके राजभेदे ६तदीये वत्सरे च पु० मेदि०। शक्नोति सामर्थ्यं शो–क तस्य नेत्त्वम्।

“मूलपत्रं करीराग्रे फलकाण्डाधिरूढकम् । त्वक्पुष्पं कवकञ्चैव शाकं दशविधं स्मृतम्” इत्युक्तेषु ७अस्थ्यादीनां पत्रादिषु न० । तत्र १मूलं मूलकादेः । २पत्रं वास्तूकादेः । ३करीरं वंशादेः । ४अग्रं वेत्रादेः । ५फलं कुष्माण्डादेः । ६काण्डं उत्पलादेः । ७अधिरूढं तालास्थिमज्जादेः । ८त्वक् मातुलुङ्गादेः । ९पुष्पं कोविदारादेः । १०कवकं छत्रिकादेः । भावप्र० तद्गुणोक्तं यथा “पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा । शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम्” । “प्रायः शाकानि सर्वाणि विष्टम्भीनि गुरूणि च । रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च । शाकं भिनत्ति वपुरस्थि निहन्ति नेत्रम् वर्णं विनाशयति रक्तमथापि शुक्रम् । प्रज्ञाक्षयञ्च कुरुते पलितञ्च नूनम् हन्ति स्मृतिं गतिमिति प्रवदन्ति तज्ज्ञाः” । द्वीपभेदे महाभा० ११ अ० तत्प्रमाणाद्युक्तं यथा

“शाकद्वीपञ्च वक्ष्यामि यथावदिह निश्चयम् । कथ्यमानं निबोधध्वं शाकं द्वीपं द्विजोत्तमाः ॥ जम्बूद्वीपस्य विस्ताराद्द्विगुणस्तस्य विस्तरः । विस्ताराद् द्विगुणश्चापि परीणाहः समन्ततः । तेनावृतः समुद्रोऽयं द्वितीयो लवणोदकः । तत्र पुण्या जनपदा न चात्र म्रियते जनः । कुत एव च दुर्भिक्षं क्षमातेजोयुतेष्विह । तथापि पर्वताः शुभ्राः सप्तैव मणिभूषिताः । शाकद्वीपादिषु त्वेषु सप्त सप्त नगास्त्रिषु । ऋज्वायताः प्रतिदिशं निविष्टाः पर्वतोत्तमाः । रत्नाकराद्रिनामानः सानुमन्तो महाचिताः । समोदिताः प्रतिदिशं द्वीपविस्तारमानतः । उभयत्रावगाढौ च लवणक्षीरसागरौ । शाकद्वीपे तु वक्ष्यामि सप्त दिव्यान् महाचलान् । देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते । प्रागायतः स सौवर्ण उदयो नाम पर्वतः । तत्र मेघास्तु वृष्ट्यर्थं प्रभवन्त्यपयान्ति च । तस्यापरेण सुमहान् जलधारो महागिरिः । स वै चन्द्रः समाख्यातः सर्वौषधिसमन्वितः । तस्मान्नित्यमुपादत्ते वासवः परमं जलम् । नारदो नाम चैवोक्तो दुर्गशैलो महाचितः । तत्राचलौ समुत्पन्नौ पूर्वं नारदपर्वतौ । तस्यापरेण सुमहान् श्यामो नाम महागिरिः । यत्र श्यामत्वमापन्नाः प्रजाः पूर्वमिमाः किल । स एव दुन्दुभिर्नाम श्यामपर्वतसन्निभः । शब्दमृत्युः पुरा यस्मिन् दुन्दुभिस्ताडितः सुरैः । रत्नमालान्तरमयः शाल्मलश्चान्तरालकृत् । तस्यापरेण रजतो महानस्तो-गिरिः स्मृतः । स वै सोमक इत्युक्तो देवैरभ्युदितः पुरा । अमृतञ्चाहृतञ्चैव मातुरर्थे गरुत्मता । तस्यापरे चाम्बिकेयः सुमनाश्चैव स स्मृतः । हिरण्याक्षो वराहेण तस्मिन् शैले निषूदितः । आम्बिकेयात् परो रम्यः सर्वौषधिनिषेवितः । विभ्राजस्तु समाख्यातः स्फाटिकस्तु महान् गिरिः । यस्माद्विभ्राजते वह्निर्विभ्राजस्तेन स स्मृतः । सैवेह केशवेत्युक्तो यतो वायुः प्रवाति च । तेषां वर्षाणि वक्ष्यामि पर्वतानां द्विजोत्तमाः । शृणुध्वं नामतस्तानि यथावदनुपूर्वशः । द्विनामान्येव वर्षाणि यथैव गिरयस्तथा । उदयस्योदयं वर्षं जलधारेति विश्रुतम् । नाम्ना गतभयं नाम वर्षं तत् प्रथमं स्मृतम् । द्वितीयं जलधारस्य सुकुमारमिति स्मृतम् । तदेव शैशिरं नाम वर्षं तत् परिकीर्त्तितम् । नारदस्य च कौमारं तदेव च सुखोदयम् । श्यामपर्वतवर्षं तदनीचकमिति स्मृतम् । आनन्दकमिति प्रोक्तं तदेव मुनिभिः शुभम् । सोमकस्य शुभं वर्षं विज्ञेयं कुसुमोत्करम् । तदेवासितमित्युक्तं वर्षं सोमकसंज्ञितम् । आम्बिकेयस्य मैनाकं क्षेमकञ्चैव तत् स्मृतम् । तदेव ध्रुवमित्युक्तं वर्षं विभ्राजसंज्ञितम् । द्वीपस्य परिणाहश्च ह्रस्वदीर्घत्वमेव च । जम्बूद्वीपेन संख्यातं तस्य मध्ये वनस्पतिः । शाको नाम महावृक्षः प्रजास्तस्य महानुगाः । एतेषु देवगन्धर्वाः सिद्धाश्च सह चारणैः । विहरन्ति रमन्ते च दृश्यमानाश्च तैः सह । तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः । तेषु नद्यश्च सप्तैव प्रतिवर्षं समुद्रगाः । द्विनाम्ना चैव ताः सर्वा गङ्गा सप्तविधा स्मृता । प्रथमा सुकुमारीति गङ्गा शिवजला शुभा । मुनितप्ता च नाम्नैषा नदी सम्परिकीर्त्तिता । सुकुमारी तपःसिद्धा द्वितीया नामतः सती । नन्दा च पावनी चैव तृतीया परिकीर्त्तिता । शिबिका च चतुर्थी स्यात् द्विविधा च पुनः स्मृता । इक्षुश्च पञ्चमी प्रोक्ता तथैव च पुनः कुहूः । वेणुका चामृता चैव षष्ठी सम्परिकीर्त्तिता । सुकृता च गभस्ती च सप्तमी परिकीर्त्तिता । एताः सप्त महाभागाः प्रतिवर्षं शिवोदकाः । भावयन्ति जनं सर्वं शाकद्वीपनिवासिनम् । अभिगच्छन्ति ताश्चान्या नद्यश्च सरांसि च । बहूदकपरीवाहा यतो वर्षति वासवः । तासान्तु नामधेयानि परिमाणं तथैव च । न शक्यं परिसंख्यातुं पुण्यास्ता हि सरिद्वराः । ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्

एते शान्तमया प्रोक्ता प्रमोदा ये च वै शिवाः। आनन्दाश्च सुखाश्चैव क्षेमकाश्च नरे सह। वर्णाश्रमा-चारयुता देशास्ते सप्त विश्रुताः। आरोग्या बलिनश्चैव सर्वे मरणवर्जिताः। अवसर्पिणी न तेष्वस्ति तथैवोत्सर्पिणी पुनः। न तत्रास्ति युगावस्था चतुर्युगकृता क्वचित्। त्रेतायुगसमः कालस्तथा तत्र प्रवर्त्तते। शाकद्वीपादिषु ज्ञेय पञ्चस्वेतेषु सर्वशः। देशस्य तु विचारेण कालः स्वाभाविकः स्मृतः। न तेषु सङ्कर कश्चित् वर्णाश्रमकृतः क्वचित्। धर्मस्य चाव्यभीचारादेकान्तसुखिनो जनाः। न तेषु माया लोभो वा ईर्ष्यासूया भयं कुतः। विपर्य्ययो न तेष्वस्ति तद्वै स्वाभाविकं स्मृतम्। कालो नैव च तेष्वस्ति न दण्डो न च दाण्डिकः। स्वधर्मेण च धर्मज्ञास्ते रक्षन्ति परस्परम्" ।

**शाकचुक्रिका** स्त्री शाकेषु मध्ये चुक्रिका। चिञ्चायाम् राजनि० ।

**शाकट** न० शकटाय हितम् अण्। १शकटसम्बन्धियुगादौ २शकटयोऽरि च मेदि०। ३श्लेष्मातके वृक्षे राजनि०। ४धवद्रुमे च पु० रत्नमा० ।

**शाकटायन** पु० व्याकरणकारके मुनिभेदे "इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः। पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः" कविकल्पद्रुम ।

**शाकटिक** पु० शकटेन चरति ठञ्। शकटेन गन्तरि।

**शाकटीन** पु० शकटं परिमाणमस्य खञ्। विंशतितुला-परिमाणे हेमच० । [शाकक्षाद्योऽप्यत्र।

**शाकतरु** पु० शाकाख्यः तरुः। (सेगुण) वृक्षे शब्दच० ।

**शाकपत्त्र** पु० शाकस्येव पत्त्रमस्य। शिग्रुवृक्षे राजनि० ।

**शाकबालेय** पु० बलये हितम् ढक् शाकप्रधानो बालेय। ब्रह्मयष्टिकायाम् शब्दच०। [क। तत्रैव त्रिका०।

**शाकबिल्व** पु०शाकोऽपि बिल्व इव। वार्त्ताकौ जटा०स्वार्थे

**शाकम्भरी** स्त्री शाकैर्बिभर्त्ति भृ-खच् मुम् च। "भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः। शाकम्भरीति विख्यातिं तदा यास्याम्यहं भुवि" देवीमा० मित्युक्तायाम् १दुर्गायाम् ।२रोमकान्तर्गतशाकम्भरनगर्यां न० तत्र भवं च। शाकम्भरीय लवणभेदे न० "शाकम्भरीय कथित महाखं रोमकं तथा। महाखं लघु वातघ्नमत्युष्णं भेदि पित्तलम्। तीक्ष्णं व्यवायि सूक्ष्मञ्चाभिष्यन्दि कटुपाकि च" भावप्र० ।

**शाकयोग्य** पु० शाके तद्भक्षणे योग्यः। धन्याके राजनि०।

**शाकराज** पु० शाकेषु राजते अच्, शाकानां वा राजा टच् समा०। वास्तूकशाके राजनि० ।

**शाकल** पु० ब०व० शकलेन ऋषिणा प्रोक्तमधीयते अण्। १शकलर्षिप्रोक्तकल्पादिग्रन्थाध्येतृषु। तेषां संघोऽङ्को घोषो वा पुनरण् वुन् वा। शाकल शाकलक वा। १तत्संघे २तदङ्के ३तद्घोषे च पु०। अङ्कः परस्परा सम्बन्ध." सि०कौ० ।

**शाकलिक** त्रि० शकलस्येदं ठक् कात्या० वार्त्ति०। शकलसम्बन्धिनि पक्षे अण् शाकल तत्रार्थे। [शाके त्रिका०।

**शाकवीर** पु० शाकेषु वीरः वीर्य्याधायकत्वात्। १वास्तूक-

**शाकशाकट** न० शाकस्य क्षेत्रं शाकटच्। शाकक्षेत्रे। शाकटिनच् शाकशाकटिन अत्रार्थे हेमच० ।

**शाकश्रेष्ठ** पु० शाकेषु श्रेष्ठ। १वास्तूकशाके शब्दर०। २जीवन्त्यां ३वार्त्ताकौ स्त्री हेमच०। [क्षुपे राजनि०।

**शाकाङ्ग** न० शाकस्य तद्भक्षणस्याङ्गमुपयोगि। १मरिचे २डोडी-

**शाकाम्ल** न० शाकमेवाम्लम्। वृक्षाम्ले राजनि० ।

**शाकाम्लभेदन** न० शाकरूपम् अम्लं भिनत्ति भिद्-ल्यु। १चुक्रे (चुकोपालङ्ग) राजनि०। [वृक्षे राजनि०।

**शाकालाबु** स्त्री शाकप्रधानालाबुः। अलाबुभेदे राजालाबु

**शाकाष्टका** स्त्री शाकेन कर्त्तव्या अष्टका। गौणफाल्गुनकृष्णाष्टम्याम् अष्टकाशब्दे ५१६ पृ० दृश्यम्।

**शाकिनी** स्त्री शाकमस्त्यस्याः उत्पद्यत्वेन इनि। १शाकभवनयोग्यायां भूमौ शाकवाटिकायाम् २देवीसहचरीभेदे च। "डाकिनी योगिनी चैव खेचरी शाकिनी तथा। दिक्षु पूज्या इमा देव्य सर्वसिद्धिफलप्रदायिकाः" काल्या०कल्प०। कण्ठदेशस्थे विशुद्धाख्ये चक्रे स्थितायां ३देवीशक्तौ च "विशुद्धाख्ये महाचक्रे षोडशस्वरसंयुते। सदाशिवं शाकिनीञ्च विन्यसेत् पूर्ववत्ततः" तन्त्रसा० ।

**शाकुण** पु० शक-बा० उणन्। परतापके शब्दमा०।

**शाकुन** पु० शकुनं शुभाशुभसूचकं निमित्तमधिकृत्य कृतो ग्रन्थ अण्। शकुनज्ञानसाधने ग्रन्थे (काकचरित)। "शुभाशुभज्ञानविनिर्णयार्थो हेतुर्नृणां यः शकुनः स उक्तः। गतिस्वरालोकनभावचेष्टा सकीर्त्तयामोऽद्विपदादिकानाम्। लोकोऽप्यमा शाकुनसञ्ज्ञकेन ज्ञानेन विज्ञातसमस्तकर्मा। नापायकूपे पतति प्रपश्यन् शास्त्रं हि दिव्या दृगतीन्द्रियेषु" वसन्तराज०।

**शाकुनिक** पु० शकुनेन पक्षिवधादिना जीवति ठञ्। पक्षिघातके अमरः।

**शाकुन्तलेय** पु० शकुन्तलाया अपत्यं ढक्। दुष्मन्तात्मजे शकुन्तलाभवे भरते नृपे जटा० ।

**शाक्त** त्रि० शक्तिर्देवताऽस्य अण्। तन्त्रोक्ते शक्तिदेवतोपासके तस्य प्रशंसा रुद्रयामलात० २पटले उक्ता "स्वर्गे मर्त्ये च पाताले नास्ति शाक्तात् परः प्रिय। सौराश्च गाणपत्याश्च वैष्णवाश्च तथैव च। शैवान्ते चैव शाक्ताश्च क्रमशः क्रमशः प्रिये।" "शाक्ता एव द्विजाः सर्वे न शैवा न च वैष्णवाः। उपासते यतो देवीं गायत्रीं परमाक्षराम्" निर्वाणत० २पटले। "स्वस्याचाराधनं त्यक्त्वा नान्यस्याराधनं चरेत्। अन्यस्य स्मरणाद्देवि! योगिनी शापमाप्नुयात्" गन्धर्वत०। "तर्जन्या रजतं धार्य्यं स्वर्णं धार्य्यमनामया। एष एव कुशः शाक्तो न दर्भो वनसम्भवः" श्यामार०। [अमर।

**शाक्तीक** पु० शक्तिः प्रहरणमस्य ईकक्। शक्त्या योद्धरि

**शाक्य** पु० शक-घञ् तत्र साधु यत्। बुद्धे।

शाक्यशब्दनिरुक्तिरन्यथोक्ता यथा

"शाकवृक्षप्रतिच्छन्नं वासं यस्मात् प्रचक्रिरे। तस्मादिक्ष्वाकुवंश्यास्ते भुवि शाक्या इति स्मृताः" भरतधृतवचनम्। इयमाख्यायिका पितृशप्ताः केचिदिक्ष्वाकुवंश्या गौतमवंशजकपिलमुनेराश्रमे योगाभ्यासाय शाकवृक्षे कृतवासा शाक्या इति ख्यातिमापन्नाः।

**शाक्यमुनि** पु० शाक्यो मुनिः। बुद्धभेदे अमरः।

**शाक्यसिंह** पु० शाक्यवंशे सिंह इव। बुद्धभेदे अमरः।

**शाक्र** त्रि० शक्रस्येदं स देवताऽस्य वा अण्। १इन्द्रसम्बन्धिनि २इन्द्रदेवताके हविरादौ। स्त्रियां ङीप्। शक्रस्येव तुल्यपराक्रमः अस्त्यस्याः अण्। ३शक्रतुल्यपराक्रमायां दुर्गायाञ्च "इन्द्राणी इन्द्रजननी शाक्री शक्रपराक्रमा" देवीपु०।

**शाक्वर** पु० शक-ष्वरप् स्वार्थे अण्। वृषे हेमच०।

**शाख** व्याप्तौ भ्वा० पर० सक० सेट् ऋदित् चङि न ह्रस्वः। शाखति अशाखीत्।

**शाख** पु० शाख-अच्। कृत्तिकापुत्रे स्कन्दानुजे १कुमारानुचरगणभेदे "अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत। तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजाः" मत्स्यपु० ५अ०। २ग्रन्थपरिच्छेदे सर्गस्थानीये ग्रन्थांशभेदे शब्दच०। वृक्षस्कन्धभेदे (डाल) स्त्री अमर। ३पक्षान्तरे ४बाहौ ५वेदैकदेशे च स्त्री मेदि०। ६अन्तिके विश्व। ७देहांशभेदे च।

**शाखाकण्ट** पु० शाखाव्यापी कण्टः कण्टको यस्य। स्नुही

वृक्षे राजनि०। [पुरे अमर। शाखापुरादयोऽप्यत्र

**शाखानगर** न० शाखेव नगरम्। मूलनगरसमीपस्थे क्षुद्र

**शाखापित्त** पु० शाखासु पित्तं यत्र। पाणिपादादिदेहशाखादाहे राजनि०। [स्त्रियां ङीष्।

**शाखामृग** पुस्त्री० शाखास्थो मृगः पशुः। वानरे अमरः।

**शाखाम्ला** स्त्री शाखास्वप्यम्ला। वृक्षाम्ले राजनि०।

**शाखारण्ड** पु० शाखायां वेदशाखायां रण्डः तद्विहितकर्मानाचरणात्। स्वशाखात्यागेनापरशाखोक्तकर्मकर्त्तरि हेमच०। [राजनि०।

**शाखाल** पु० शाखा बाहुल्येन सन्त्यस्य लच्। वानीरवृक्षे

**शाखाशिफा** स्त्री शाखाकृता शिफा मूलम् शाक०। वटादीनां शाखाजाते १मूले अमरः। २शिफामारभ्य शाखायुतायां गुडूच्यादिलतायाम् भरत।

**शाखिन्** पु० शाखाऽस्त्यस्य इनि। १वृक्षे अमरः। २वेदे ३वेदवति, ४नृपभेदे, ५स्कन्दभेदे च मेदि०।

**शाखोट** पु० शाख-व्याप्तौ ओटन् (शेओडा) वृक्षे त्रिका० स्वार्थे क। तत्रैव।

**शाङ्खिक** पुस्त्री० शङ्खस्तद्विकारवलयनिर्माणं शिल्पमस्य ठञ्। जातिभेदे (शाँखारी) अमरः स्त्रियां ङीष्। [रत्नमा०

**शाङ्कुष्ठा** स्त्री शङ्गति शो-क श० अङ्कुश इव यस्याः। गुञ्जायां

**शाट** पु० शट-घञ्। वस्त्रे अमर। स्त्रीत्वमपि गौरा० ङीष्।

**शाटक** पु०न० शट-ण्वुल्। वस्त्रे अमर स्त्रीत्वमपि टाप्।

**शाट्यायन** पु० १मुनिभेदे, तेन प्रोक्तम् अण्। २प्रकृतहोमकर्मणि वैगुण्यसमाधानार्थं विहिते होमभेदे न०भवदेव

**शाठ्य** न० शठस्य भावः ष्यञ्। शठतायाम्। [चङि न ह्रस्व

**शाड** श्लाघायां भ्वा० आ० सक० सेट्। शाडते अशाडिष्ट ऋदि

**शाण** न० शणेन निर्वृत्तम् अण्। शणसूत्रनिर्मिते १वस्त्रे। शण-दाने(तेजने) घञ्। (कष्टिपाथर) २कषपाषाणे ३अस्त्रादीनां निकषणे तीक्ष्णकरणयन्त्रभेदे मेदि० ४करपत्रे (करात) विश्वः। ५माषचतुष्कमाने भावप्र०।

**शाणाजीव** पु० शाणमाजीवति आ+जीव-अण्। अस्त्रतीक्ष्णताकारके शिल्पिनि हेमच०।

**शाणि** पु० शण-इण्। १पट्टवृक्षे शब्दच०। शणेन निर्वृत्ता इञ् वा ङीप्। २शणनिर्मिते पट्टिकावस्त्रे ३छिद्रवस्त्रे च हेमच० ४ह्स्वकटाञ्चादिदूषनायां शब्दर०। ५वस्त्रमण्डपे (ताँबु) मेदि०।

**शाणित** त्रि० शण-दाने (तेजने) णिच्-क्त। तीक्ष्णीकृते।

**शाणीर** न० शण-भा० ईरण्। शोणनदमध्यस्थतटे विश्व।

**शाण्डिल्य** त्रि० शण्डिलस्यापत्यम् यञ्। गोत्रप्रवर्त्तके भक्तिशास्त्रकारके १मुनिभेदे मेदि०। भक्तिशब्दे तन्मतं दिङ्मात्रं दर्शितम्। तद्गोत्रप्रियत्वात् २बिल्वे अमरः ३वह्निभेदे च मेदि०।

**शात** न० शो-क्त। १सुखे २तद्वति त्रि० अमरः। ३कृशे ४क्षये त्रि० विश्व०। ५दुर्बले ६निशिते च त्रि० मेदि०। ७धुस्तूरे पु० अमर०। [अमरः २धुस्तूरे ३करवीरे च पु० मेदि०।

**शातकुम्भ** न० शतकुम्भे गिरौ भवः अण्। १हिरण्ये

**शातकौम्भ** न० शतकुम्भे भवम् अण् द्विपदवृद्धिः। १हिरण्ये २धुस्तूरे च द्विरूपकोषः।

**शातन** न० शो-णिच्-तुक् च ल्युट्। १तनूकरणे २विनाशने च "वर्द्धनं सर्वशस्यानां जायते पत्रशातनम्" इति अधिकरणमाला। [चन्द्रप्रकाशे शब्दच०।

**शातपत्त्रक** पु० शतपत्त्रमिव कायति कै-क स्वार्थे अण्।

**शातभीरु** पु० शाता दुर्बलाः पान्था भीरवो यस्याः ब०। १मल्लिकाभेदे रत्नमाला। [त्रिका०।

**शातमान** त्रि० शतमानेन क्रीतम् अण्। शतमानेन क्रीते

**शातला** स्त्री शात कार्श्यं लाति ला-क। (चामकषा) इति भरतः।

**शातातप** पु० स्मृतिकारके मुनिभेदे। तेन प्रोक्तं छ। शातातपीय तत्प्रोक्ते कर्मविपाकग्रन्थे।

**शात्रव** पु० शत्रुरेव स्वार्थेऽण्। १रिपौ अमरः। तस्य भावः तेन सर्वो वा अण्। २वैरे ३रिपुसमूहे च न०।

**शाद** पु० शद-घञ्। १कर्द्दमे २हरिततृणे च अमरः।

**शादहरित** पु० शादेन हरितशष्पयुक्तः। शाद्वले देशे अमरः

**शाद्वल** पु० शादाः सन्त्यत्र ड्वलच्। नडवद्धरिततृणयुक्ते देशे अमरः। [शमीधान्यमिव शमीधान्यमिट।

**शान** तेजने भ्वा० उभ०सक०सेट् स्वार्थे सन्। शीशांसति ते

**शान** पु० शान-अच् शो निशाने इत्युक्तेरनित्यः सन्। अस्त्रादीनां तीक्ष्णताकारके यन्त्रभेदे भरत०।

**शानी** स्त्री शान-इन् ङीप्। इन्द्रवारुण्यां शब्दच०।

**शान्त** त्रि० शम-क्त। १शमयुक्ते २अभियुक्ते च शम-णिच्-क्त नि०। ३शान्तिं गमिते त्रि०। ४निर्वेदस्थायिभावके रसभेदे पु० मेदि०। ५लोमपादराजकन्यायाम्, ऋष्यशृङ्गपत्न्यां ६पत्नीभेदे च स्त्री राजनि०।

शान्तरसनिरूपणं सा०द० ३प० यथा

"शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः। कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः। अनित्यत्वादिनाऽशेषवस्तुनिःसारता तु या। परमात्मस्वरूपं वा तस्यालम्बनमिष्यते।। पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः। महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः। रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः। निर्वेदहर्षस्मरणमतिभूतदयादयः। निरहङ्काररूपत्वाद्दयावीरादिरेष नो। दयावीरादौ हि मौक्तिकवाहनादौ अन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्त्तित्वाद्यप्राप्तेर्दर्शनादहङ्कारोपशमो न दृश्यते। शान्तस्तु सर्वप्रकारेणाहङ्कारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति। अतश्च नागानन्दे शान्तरसप्रधानत्वमपास्तम्"। ननु "न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा। रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रमाणः" इत्येवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात् तत्र सञ्चार्य्यादीनामभावात् कथं रसत्वमित्युच्यते। "युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः। रसतामेति तदस्मिन् सञ्चार्य्यादेः स्थितिश्च न विरुद्धा"। यश्चास्मिन् सुखाभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः। उक्तं हि "यच्च कामसुखं लोके यच्च दिव्यं महासुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्। सर्वाकारमहङ्काररहितत्वं व्रजन्ति चेत्। अत्रान्तर्भावमर्हन्ति दयावीरादयस्तदा"। आदिशब्दात् धर्मवीरदानवीरदेवताविषयरतिप्रभृतयः"। [नव" इति तत्पर्यवसन्नः।

**शान्तनव** पु० शान्तनोरपत्यम् अण्। भीष्मे "भीष्मः शान्त-

**शान्तनु** पु० द्वापरयुगभवे चन्द्रवंश्ये प्रतीपराजपुत्रे नृपभेदे

**शान्तम्** अव्य० शान्ति+बा० डम्। निवारणे मेदि०।

**शान्ति** स्त्री शम-क्तिन्। १कामक्रोधादिजये २विषयेभ्यो मनसो निवारणे अमरः। ३उपद्रवनिवारणे ४निवारणे च "यत्किञ्चिद्वस्तु संप्राप्य स्वल्पं वा यदि वा बहु। या तुष्टिर्जायते चित्ते सा शान्तिः कथ्यते बुधैः" पद्मपु० क्रियायो० उक्ते ५सन्तोषभेदे ६दुर्गायाम् "सर्वेषां सर्वचेतस्यात् शान्तिस्त्वं शान्तिरुच्यते" देवीपु०। ७पूजाहोमजपदानादिद्वारा गोचरविरुद्धादिग्रहपीडादौ दुःस्वप्नादिसूचितैहिकानिष्टसूचकपापनिवृत्तौ च "यथा बाणप्रहाराणां कवचं विनिवारकम्। तथा दैवोपघातानां शान्तिर्भवति वारणम्" मलमासधृतवाक्यम्। सा च मलमासेऽपि कार्य्या नैमित्तिकत्वात् "नैमित्तिकानि काम्यानि निपतन्ति यथा यथा। तथा तथैव कार्य्याणि

च कारस्तु विधीयते" इति मल०त० वाक्यात्। अद्भु-तादिशान्तिश्च हेमाद्रिशान्तिकाण्डे शान्तिमयूखादौ दृश्या।

**शान्तिक** त्रि० शान्तये हितं ठक्। शान्तिसाधने होमादौ तत्करणशुद्धकालादिक मु०चि० उक्तं पी० धा० यथा "क्षिप्रध्रुवान्त्यचरमैत्रमघासु शस्तं स्याच्छान्तिकञ्च सह मङ्गलपौष्टिकाभ्याम्। खेऽर्के विधौ सुखगते तनुगे गुरौ, नोमौढ्यादिदुष्टसमये, शुभदं निमित्ते"। "अथ शान्तिक-पौष्टिकादिकर्मसु शुक्लं नक्षत्राद्याह। क्षिप्रेति क्षिप्रादीनि मघान्तानि प्रसिद्धानि तेषु पौष्टिकं मङ्गलं विनायकशान्त्यादि शान्तिकं दुष्टफलदग्रहनक्षत्राद्युत्पत्त्या न्त्यादि एतानि कर्माणि कार्य्याणि उक्तञ्च दीपि-कायाम्। "क्षिप्रादित्यमघोत्तराश्रवणभिषक्स्वातीविर-ञ्च्युत्तरागौरीश्वरपूष्णपौष्णरविषु स्फीते द्युवारेष्वपि। रिक्तां पर्व विहाय सौम्यदिवसे शस्ते तथा भूतये सर्वैः शान्तिकपौष्टिकं निगदितं गर्गादिभिर्मित्रतः" अथ लग्नशुद्धिः तत्रार्के खस्थे दशमे सति विधौ चन्द्रे सुखगते चतुर्थस्थे गुरौ तनुगे लग्नस्थे सति शान्त्यादिकं कर्म कार्य्यं उक्तञ्च रत्नमालायाम्। "पूर्णे चन्द्रे केन्द्र-गेऽर्केऽम्बरे(१०)स्थे लग्ने जीवे, वाक्पतौ वाम्बरे च। सौम्यास्त्रा-सुपुत्राणि कार्य्याणि कार्य्याणीति" नीतश्शान्तिकादि मौढ्ये गुरुशुक्रयोरस्तादिके बाल्यवार्द्धक्ये सिंहस्थगुर्वादिरूपे दुष्ट-समयेऽपि न शुभदम्। तथा निमित्ते केत्वाद्युत्पातदर्शने सति शुभदं उक्तञ्च दीपिकायाम्। शान्तिकर्माणि कुर्वीत-होमे नैमित्तिके तथा। गुरुभार्गवमौढ्येऽपि दोषस्तत्र न विद्यते"। उक्तञ्च तत् "यतोऽस्तीदं शान्तिकं नैमित्ति-कम् "अनिमित्तकृता शान्तिर्निमित्तायोपजायते इति च स्मरणात्। तत्र निमित्ते रागरूपे केत्वाद्युत्पातान्तरदर्शन-रूपे च भवति नैमित्तिकं तच्च सप्तदिनव्यापके गुरु-शुक्रास्तादिदोषेऽप्यवश्यं विधेयं यतो जन्मान्तरीयदुर-दृष्टसूचकमिदं निमित्तमुत्पन्नं तच्च शान्त्या निरासादशु-भादृष्टस्यापि निरासः। सप्तदिनमध्ये निर्दूषणे काले क्रियमाणं शान्तिकं किञ्चिद्दूरदृष्टनाशकं यद्यपि भवति तथापि तावद्भिर्दिनैर्दुरदृष्टस्य प्राबल्याद् दुःखप्राप्तिः यथाल्पोऽप्यग्निरल्पेनैव जलेन शान्तो भवति तथा सकलनगरदाहको महानग्निर्बहुभिर्घटैः स्फीतजल-पूर्णघटैरेकदेशनिर्वापितोऽपि सकलोऽग्निर्निर्वाप्यते इ-त्यर्थः सर्वथा मौढ्यादिदोषं विनैव यथा कथञ्चित्कथित-प्रकारेण दिनशुद्धिमङ्गीकृत्य शान्तिकाद्यवश्यं विधेयम्"।

**शाप** पु० शप–घञ्। (अनिष्ट भूयादित्येवम्) १आक्रोश-रूपे २शपथे च मेदि०।

**शापास्त्र** पु० शाप एवास्त्रं यस्य। मुनौ त्रिका०।

**शाब्दबोध** पु० शब्देन निर्वृत्त अण् कर्म०। अन्वयबोधे शब्द-ज्ञानजन्ये पदार्थस्मृतिद्वारके ज्ञानभेदे न्यायमतम्। शा-ब्दत्वं अनुभवत्वव्याप्यं जातिभेदः तद्बोधप्रकारादि भाषा० उक्तं यथा "पदज्ञानन्तु करणं द्वारं तत्र पदा-र्थधीः। शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी। लक्षणा शक्यसम्बन्धस्तात्पर्य्यानुपपत्तितः। आसत्तियो-ग्यताकाङ्क्षातात्पर्य्यज्ञानमिष्यते"। भाषा० सि०मु० विवृत-मेतद् यथा

"शाब्दबोधप्रकारं दर्शयति। पदज्ञानन्त्विति। न तु ज्ञायमानं पदं करणम् पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात्। पदार्थधीरिति। पदजन्यपदार्थस्मरणं व्यापारः। अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थो-पस्थितावपि शाब्दबोधापत्तेः। तत्रापि वृत्त्या पद-जन्यत्वं बोध्यम्। अन्यथा घटादिपदात् समवायसम्ब-न्धेन गगनाकाशस्य जायते तत्राकाशस्यापि शाब्द-बोधापत्तेः। वृत्तिः शक्तिलक्षणान्यतरः सम्बन्धः। अतएव शक्तिज्ञानस्योपयोगः। पूर्वं शक्तिग्रहाभावे पद-ज्ञानेऽपि तत्सम्बन्धेन स्मरणानुपपत्तेः। पदज्ञानस्य सम्बन्धिज्ञानविधयार्थस्मारकत्वम्। शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः। सा चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा। आधुनिके नाम्नि शक्तिरस्त्येव। "एकादशेऽहनि पिता नाम कुर्य्यात्" इतीश्वरेच्छायाः सत्त्वात्। आधुनिके तु सङ्केते न शक्तिरिति सम्प्रदायः। नव्यास्तु ईश्वरेच्छा न शक्तिः किन्त्विच्छैव। तेन आधु-निकसङ्केतेऽपि शक्तिरस्तीति वदन्ति"।

**शाब्दिक** पु० शब्दं शब्दसाधुतासाधकं शास्त्रं वेत्त्यधीते वा ठक्। व्याकरणशास्त्रभिज्ञे।

**शामित्र** न० शम–णिच् इत्र। १पशुबन्धने। शमितुः कर्म–अण्। यज्ञार्थपशुहननकर्तृभावे २तद्धनने च।

**शामीन** न० शम–ईनञ्। १मङ्गले २मुक्तौ च स्त्री ङीप् शि०को०।

**शाम्बरी** स्त्री शम्बरेण निर्वृत्ता अण् ङीप्। मायायाम् इन्द्रजालादौ अमरः। [जटा०।

**शाम्बविक** त्रि० शम्बूः पण्यमस्य ठक्। शाङ्खिके (शाँखारी)

**शाम्बु(म्बू)क** पु० श(म्बु)म्बूक+स्वार्थे अण्। शम्बुके (शामुक) भरतः।

**शाम्भव** पु० शम्भोरयम् अण् । १गुग्गुलौ २कर्पूरे ३शिव-मल्लिकायां राजनि०। ४विषभेदे शब्दच० ५शम्भुपुत्रे पु० ६देवदारुणि च न०राजनि० ७शिवसम्बन्धिनि तत्कुपासके च त्रि०। ८दुर्गायां स्त्री "शाम्भवी कुपिता तस्येति"तन्त्रम्।

**शा(सा)यक** पु० शो(षो) वा—ण्वुल् । १वाणे खड्गे च जटा०

**शार** दौर्बल्ये अद० चु० उभ० सक० सेट् । शारयति-ते अशशारत् त ।

**शार** न० शार-अच्, शॄ—घञ् वा । १कर्बूरवर्णे २तद्वति त्रि० अमरः ३वायौ पु० अमर० ४अक्षोपकरणे मेदि०।

**शारङ्ग** पुंस्त्री० शार कर्बुरमङ्गं यस्य शक०। १चातकपक्षिणि २हरिणे ३गजे ४भृङ्गे ५मयूरे च । रायमुकुटः जातित्वात् स्त्रियां ङीप् । ६हिमे ७वाद्ययन्त्रभेदे स्त्री ङीप् शब्दार्थचि० ।

**शारद** न०शरदि भवम्-ऋत्वण्। १श्वेतपद्मे राजनि०। २कासे ३बकुले ४हरिन्मुद्गे च पु० राजनि०। ५शरद्भवमात्रे त्रि० स्त्रियां ङीप्। शारदं श्वेतपद्ममस्त्यस्याः अच्। ५शरत्कालां स्त्री त्रिका० । ७नूतने ८अप्रतिभे त्रि० मेदि० । ९शालीने त्रि० विश्वः । १०दुर्गायां स्त्री टाप् "शरत्काले पुरा यस्मात् नवम्यां बोधिता सुरैः । शारदा सा समाख्याता पीठे लोके च नामतः" ति०त०। ११पामरभेदे शब्दर० । १२तोयपिप्पल्यां १३सप्तच्छदे स्त्री मेदि० ङीप् एव १४कोजागरपूर्णिमायां स्त्री शब्दरत्ना० शरत्कालीने पूजादौ त्रि०स्त्रियां ङीप् । "शारदी चण्डिकापूजा त्रिविधा परिकीर्त्तिता। सात्त्विकी राजसी चैव तामसी चेति तां शृणु" भविष्यपु०। [भवे १मासे २तत्कालजे रोगे पु०

**शारदिक** न० शरदि भवं श्राद्धं रोगो वा ठञ् । शरत्काले

**शारदीय** त्रि० शरदि भवः छण् । १शरत्काले वर्त्तमाने उत्सवादौ तथाभूतायां दुर्गापूजायां स्त्री "अङ्कुरे जगदम्बायाः शारदीयो महोत्सवः"। "शारदीया महापूजा चतुःकर्म्ममयी शुभा" ति०त० ।

**शारि(री)** स्त्री शॄ—इञ् वा ङीप् । १पाशकादिगुटिकायां २अक्षोपकरणे च मेदि०। ३पक्षिभेदे च "शारी चरन्ती सखि ! मारयेति" नैषधम् । ४युद्धार्थगजपर्य्याणे ५व्यवहारभेदे मेदि० । ६कपटे धरणिः । स्वार्थे क । पक्षिभेदे वीणावादने च हेमच० ।

**शारिफल** पु० न०शारे फलमिवाधारः । शारिफलके पाशकक्रीडासाधने २फलके (छक) अमरः स्वार्थे क । तत्रैव ।

**शारिवा** स्त्री शारिरिव वमति वम-ड । श्यामालतायाम् अमरः । "एकं वै शारिवामूलं सर्वग्रहविमोक्षणम्"वैद्य०।

**शारिशृङ्खला** स्त्री शारेः शृङ्खलेव । पाशकभेदे तद्भेदाश्च 'चतुरी तिन्तिडी द्यूतं पञ्चमी शारिशृङ्खला । नव पीठो चाष्टकाष्ठो नयः षाण्मयपुत्रकः । एते पाशकभेदाः स्युर्जयकोलाहलोऽपि च" शब्दर० ।

**शारीर** त्रि० शरीरस्येदम् अण् । १देहसम्बन्धे सुखदुःखादौ तस्येदमस्य पुनः अण् । २वृषे पु० मेदि० । शरीरमात्मत्वेनाभिमन्यते अण् । ३जीवे । स्वार्थे क । तत्रार्थे । शारीरं जीवं दुःखं वा अधिकृत्य कृतो ग्रन्थः अन् । व्यायकृते वेदान्तग्रन्थे चिकित्साङ्गे सुश्रुतग्रन्थाद्येकदेशे च शारीरञ्च दुःखं रोगादिकं यथोक्तं विष्णुपु० ६५अ० । "आध्यात्मिकोऽपि द्विविधः शारीरो मानसस्तथा । शारीरो बहुभिर्भेदैर्भिद्यते श्रूयताञ्च सः । शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः । गुल्मार्शःश्वयथुश्वासच्छर्द्यादिभिरनेकधा । तथाक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञकैः । भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि" सुश्रुतान्तर्गतशारीरकस्थानञ्च तत्र दृश्यम् ।

**शारीरिक** त्रि० शरीरे भवः ठक् । देहजाते दुःखादौ ।

**शारुक** त्रि० शॄ—उकञ् । हिंसके ।

**शार्कर** त्रि० शर्करा अस्त्यस्य अण् । १शर्करायुक्ते देशे शर्कराया विकारः अण् । २फाणिते ३दुग्धफेणे च पु० मेदि०। शर्करीकन्दोऽस्य अण् । शर्करीकन्दोयुक्ते ४पद्मादौ ।

**शार्ङ्ग** त्रि० शृङ्गस्य विकारः अण् । १शृङ्गजाते पदार्थे । २विष्णुधनुषि ३धनुर्मात्रे च पु० मेदि० ४आर्द्रके न० राजनि० ।

[निर्माणे त्रि०।

**शार्ङ्गिन्** पु० शार्ङ्गः अस्त्यस्य इनि । १विष्णौ अमर० । २ध-

**शार्दूल** पुंस्त्री० शॄ—ऊलञ् दुक् च । १व्याघ्रभेदे अमरः । २पशुभेदे ३शरभे ४राक्षसभेदे च मेदि० उत्तरपदस्थः । ५श्रेष्ठार्थे अमरः । ६पक्षिभेदे धरणिः ७चित्रके राजनि० । स्त्रियां सर्वत्र जातित्वे ङीष् ।

**शार्दूललसित** न० अष्टादशाक्षरपादके छन्दोभेदे तल्लक्षणं यथा "म स ज स तता दिनेशऋतुभिः शार्दूललसितम्" छन्दोम० ।

**शार्दूलविक्रीडित** न० ऊनविंशत्यक्षरपादके छन्दोभेदे तल्लक्षणं यथा "सूर्य्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" छन्दोम० ।

**शार्वर** न० शर्वर्या इदं वैदिकोऽण् । १अन्धकारेऽपि ।

**शिखिताश्व** पु० शिखिताश्वदर्शाचि येन । १काले २शिखादातरि सुरौ च त्रिका० ।

**शिख** गतौ भ्वा०पर०सक०सेट् इदित् । शिङ्खति अशिङ्खीत् ।

**शिखण्ड** पु० शिखामगति अम–ड तस्य नेत्त्वम्, ६त० । शक० वा । १मयूरपिच्छे अमरः । २चूड़ायाञ्च मेदि० ।

**शिखण्डक** पु० शिखण्ड इव कन् । १काकपक्षे अमर । (काकजुल्फी) स्त्रीत्वमपि तत्र । सा च २चूडायाञ्च हेमच० । [स्त्रियां ङीप् ।

**शिखण्डिक** पुस्त्री० शिखण्डोऽस्त्यस्य ठन् । कुक्कुटे हेमच०

**शिखण्डिन्** पु० शिखण्डोऽस्त्यस्य इनि । १मयूरे २द्रुपदराजस्य पुत्रभेदे मेदि०। ३मयूरपुच्छे ४कुक्कुटे ५वाणे च हेमच०। ६गुञ्जायां ७स्वर्णयूथिकायां राजनि०। ८विष्णौ विष्णुस० ९यूथिकायां स्त्री ङीप् मेदि० ।

**शिखर** न० शिखा अस्त्यस्य अरच् आलोपः । १पर्वताग्रे २अग्रमात्रे च । ३वृक्षाग्रे पु०न० अमरः । ४पुलके ५सु- क्काट्यादौ पक्वदाडिमबीजाभे ६रत्नभेदे ७कक्षाग्रे मेदि०। ८कोटौ त्रिका०। ९मूर्वायां स्त्री शब्दच० ।

**शिखरवासिन्** त्रि०शिखरे वसति वस–णिनि ७त०। पर्वताग्रवासिनि स्त्रियां ङीप्। "देवी शिखरवासिनी" कुट्टः सा च हिमाचलवासिन्यां २दुर्गायां त्रिका० ।

**शिखरिन्** पु० शिखाऽस्त्यस्य इनि । १पर्वते २वृक्षे ३अपामार्गे मेदि०। ४कोट्टे ५कोयष्टौ हेमच०। ६वन्दाके ७कुन्दुरुके ८शाकनाडे ९कर्कटश्रृङ्ग्यां राजनि०। १०रसालायां खाद्यभेदे स्त्री । ११सप्तदशाक्षरपादके छन्दोभेदे स्त्री "रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" वृ०र० १२मल्लिकायां १३रोमावल्यां १४नारीरत्ने च स्त्री मेदि० सर्वत्र ङीप् । [(कुक्कुरमुत्ता) क्षुपभेदे रत्नमा० ।

**शिखलोहित** पु०शिखाऽस्त्यस्य अच् तथाभूतः सन् लोहित ।

**शिखा** स्त्री शी–खक् तस्य नेत्त्वम् पृषो० । १अग्निज्वालायां २अस्तकमध्यकेशगुच्छे च अमरः । "सुगन्धेषु सर्वनामाग्नि कलोपस्यशिखां वह्निः" प्रा०त० । ३शाखायां ४बर्हिचूडायां ५लाङ्गलिक्याम् ६अग्रमात्रे ७चूडामात्रे ८प्रपदे च मेदि० । ९प्रधाने शिफायां १०ज्योतौ हेमच० । ११ज्वरभेदे शब्दच० ।

"शिखी शिखी कर्म कुर्यात्" श्रुत्या शिखावत एव कर्मण्यधिकारः तत्रापि बद्धशिखस्य कर्मण्यधिकारः न मुक्तशिखस्य यथोक्तं "गायत्र्या तु शिखां बद्धा नैर्ऋत्या ब्रह्मरन्ध्रतः । जूटिकाञ्च ततो बद्धा ततः कर्म समारभेत्" । "निबद्धशिख आसीनो द्विज आचमनं चरेत् । कृत्वोपवीतं सव्येऽसे वाङ्मनःकायसंयत" । मुक्तशिखस्याचमने दोषो यथा "शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा । अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्" आ०त० ।

**शिखाकन्द** न० शिखेव कन्दोऽस्य । गृञ्जने राजनि० ।

**शिखातरु** पु० शिखाया दीपशिखायास्तरुरिव । दीपवृक्षे (देलको) त्रिका० ।

**शिखाधर** पुंस्त्री० शिखां चूडां धरति धृ–अच् । १मयूरे रत्नमा० स्त्रियां ङीप् । २शिखाधारके त्रि० स्त्रियां टाप् । ३मञ्जुघोषे पु० त्रिका० ।

**शिखामूल** न०शिखेव मूलमस्य । गृञ्जने (गाजर) राजनि०

**शिखालु** पु०शिखाऽस्त्यस्य आलुच् । मयूरशिखावृक्षे राजनि०

**शिखावत्** पु० शिखा ज्वालाऽस्त्यस्य मतुप् मस्य वः । १वह्नौ २चित्रकवृक्षे च अमरः । ३केतुग्रहे शब्दच० । ४शिखायुते त्रि०स्त्रियां ङीप् । सा च ५मूर्वायां शब्दच०

**शिखावर** पु० शिखां वृणोति वृ–अच् । पनसवृक्षे शब्दच०

**शिखावल** पुस्त्री० शिखाऽस्त्यस्य वलच् । १मयूरे अमरः । स्त्रियां ङीप् । २मयूरशिखावृक्षे स्त्री राजनि० टाप् ।

**शिखावृद्धि** स्त्री प्रतिदिनमाप्यवृद्धौ वृद्धिभेदे हब्यसृ ।

**शिखिकण्ठ** न० शिखिनो मयूरस्य कण्ठस्य वर्णोऽस्त्यस्य अर्श आद्यच् । तुत्थे (तुँते) रत्नमा० ।

**शिखिग्रीव** पु० शिखिनो मयूरस्य ग्रीवा तद्वर्णोऽस्त्यस्य अच् । तुत्थे (तुँते) अमरः ।

**शिखिध्वज** शिखिनो वह्नेर्ध्वज इव । १धूमे त्रिका० । शिखी मयूरो ध्वजो यस्य । २कार्त्तिकेये शब्दच० ।

**शिखिन्** पु०शिखा अस्त्यस्य इनि । १मयूरे २वह्नौ ३चित्रकवृक्षे अमरः । ४केतुग्रहे ५कुक्कुटे ६वृषे ७वृक्षे ८शरे च मेदि० । ९अश्वे हेमच० १०अजलोम्नि रत्नमा० ११पर्वते १२ब्राह्मणे १३शितावरे १४मेथिकायां राजनि० १५शिखायुक्ते त्रि० १६मयूरशिखावृक्षे राजनि०स्त्री ङीप् ।

**शिखिप्रिय** पु०शिखिनं प्रीणयति प्री–क । लघुबदरे राजनि०।

**शिखिमण्डल** पु० शिखिनां मण्डलमिव यत्र । वरुणवृक्षे शब्दर० । [अजमोदायां राजनि०।

**शिखिमोदा** स्त्री शिखिनः अमलोम्न इव मोदो यस्याः ।

**शिखियूप** पु०शिखी शिखावान् यूप इव । श्वेतकारिणि मृगे राजनि० । [कृष्णाण्डे शब्दर०

**शिखिवर्द्धक** पु० शिखिनं वर्द्धयति वृध–णिच्–ण्वुल् ।

**शिखिवाहन** पु० शिखी मयूरो वाहनं यस्य। कार्त्तिकेये अमरः।

**शिखिव्रत** न० "प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः। वैश्वानरपदं याति शिखिव्रतमिदं स्मृतम्" गरुडपु० १२८ अ० उक्ते वह्निपददायके व्रतभेदे।

**शिग्रु** पु० शि–रक् गुक् च। (सजिना) १शाके २शाकमात्रे च अमरः। "शोभाञ्जनो शीघ्रशिग्रुस्तीक्ष्णगन्धोऽक्षमीव। मुखमोदः कृष्णशिग्रुस्तु बहुमूलो रुचिराञ्जनः। शोभाञ्जनस्तीक्ष्णकटुः स्वादूष्णः पिच्छिलस्तथा। जन्तुवातार्त्तिशूलघ्नश्चक्षुष्यो रोचनः परः। श्वेतशिग्रुः सुतीक्ष्णः स्यान्मधुशिग्रुः सिताञ्जनः। मधूकः श्वेतमरिचो रोचनो मधुशिग्रुकः। श्वेतशिग्रुः कटुस्तीक्ष्णः शोफानिलनिकृन्तनः। चक्षुर्व्यथाहरो रुच्यो दीपनो मुखजाड्यनुत्। रक्तको रक्तशिग्रुः स्यान्मधुरो बहुलच्छदः। सुगन्धि वैगरी चित्रो मृगारिश्च प्रकीर्त्तितः। रक्तशिग्रुर्मेदःशोषी मधुरश्च रसायनः। शोफाध्मानसमीरार्त्तिपित्तश्लेष्मापहारकः" राजनि०।

**शिग्रुज** न० शिग्रुतो जायते जन–ड। श्वेतमरिचे शोभाञ्जनबीजे अमरः कृत०। शिग्रुबीजमप्यत्र भरत०।

**शिघ** आघ्राणे भ्वा० पर० सक० सेट् इदित्। शिङ्घति अशिङ्घीत्।

**शिङ्घाण** न० शिघि–आनच् पृषो० साधुः। १काचपात्रे २लौहमले ३नासिकामले श्लेष्मणि च मेदि०। स्वार्थे क। नासिकामले न०।

**शिज** अस्फुटध्वनौ इदित् वा चु० उभ० पक्षे अदा० आत्म० अक० सेट्। शिञ्जयति ते शिञ्जते अशिशिञ्जत् त अशिञ्जिष्ट। भ्वादिरप्ययं पर० इत्येके तेन शिञ्जति अशिञ्जीत्

**शिञ्जा** स्त्री शिजि–भावे अ। १भूषणशब्दे भरत०। शिञ्जिधाच्। २धनुर्गुणे हेमच०।

**शिञ्जित** न० शिजि–भावे क्त। भूषणध्वनौ अमरः।

**शिञ्जिनी** स्त्री शिञ्जति शिजि–णिनि। धनुर्गुणे अमरः। २नूपुरे हेमच०।

**शिट** अनादरे भ्वा०पर०सक० सेट्। शेटति अशेटीत्।

**शिण्डाकी** स्त्री खाद्यद्रव्यभेदे यथा "शिण्डाकी राजिका युक्तैः शाकमूलकदम्बकैः। सर्षपस्वरसैर्वापि शालिपिष्टकसंयुतैः। शिण्डाकी रोचनी गुर्वी पित्तश्लेष्मकरी स्मृता" राजनि०।

**शित** त्रि० शो–क्त। १दुर्बले २शाणिते च मेदि० ३कृशे निशः

**शितद्रु** पु० शत द्रवति द्रु–कु–नि०। (शतलुज) नदीभेदे अमरः। [१गोधूमे त्रिका०।

**शितशूक** पु० शितस्तीक्ष्णः शूकोऽग्रं यस्य। १यव अमरः।

**शिति** पु० शो–क्तिच्। १भूर्जपत्रवृक्षे २शुक्लवर्णे ३कृष्णवर्णे च मेदि० ४तद्वर्णवति त्रि०। ५सारे पु स्त्री० शब्दर०।

**शितिकण्ठ** पु० शिति नीलः कण्ठो यस्य। १शिवे अमरः। २दात्यूहविहगे पु स्त्री० त्रिका० स्त्रियां ङीष्।

**शितिचार** पु० शिति श्वेतं यथा चरति चर–अण् उपचार वर्त्तिरि अच्। (सुषनि) शाकभेदे जटा०।

**शितिच्छद** पु० शिति शुभ्रं छदो यस्य। हंसे शब्दर०।

**शितिसारक** पु० शिति शुभ्रं सारो यस्य कप्। तिन्दुकवृक्षे राजनि०।

**शिथिल** त्रि० श्लथ–किलच् पृषो०। १श्लथे २अदृढे संयोगभेदे ३मन्दे च "शिथिलसंयोगश्च प्रचय। "प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते" भाषा० "भूयोऽवयवावच्छेदेनावयवान्तरसंयोगित्वरूपे वर्त्तमानः संयोगः प्रचय" इति दीपकरी यथा तूलकादौ।

**शिनि** पु० शि–निक्। यदुवंश्ये क्षत्रियभेदे यस्य सात्यकिर्नप्ता

**शिपि** पु० शी–क्विप् ता पाति पा–कि पृषो०ह्रस्व। १रश्मौ २जले न० "शैत्यात् पवनयोगाच्च शिपि वारि प्रचक्षते। तत् पानाद्रक्षणाच्चैव शिपयो रश्मयो मता। तेषु प्रवेशात् विश्वेश शिपिविष्ट इहोच्यते" व्यास।

**शिपिविष्ट** पु० ७त०। १खलतौ २दुश्चर्मणि च ३महेश्वरे अमरः। ४विष्णौ शिपियन्त्रे इष्यम्। "नैकरूपो वृहद्रूप शिपिविष्ट प्रकाशन" विष्णुस०। पृषो० शिपिविष्ट तत्रार्थे रमानाथ।

**शिप्र** पु० शि–रक् पुक् च। १सरोवरभेदे २नदीभेदे स्त्री। "एष विवाह्य विधिवत् गौरीं मानसाचले। चरणौ शिवयोस्तु मोदनाय तथा कृ। तत्र यत् पतितं तोयं मानसाचलकन्दरे। विवाहावसरतायां शान्त्यर्थं कलशातले। ब्रह्मविष्णुमहादेवपार्षिभिः समुदीरितम्। तत्ताय सप्तधा भूत्वा पतितं मानसाचलात्। हिमाद्रेः कन्दरे गावी सरस्तस्य पृथक् पृथक्। तत्तोयं पतितं शिप्रे देवभाव्ये सरोवरे। तेन शिप्रा नदी जाता विष्णुना प्रेरिता क्षितिम्" कालिका० २१अ०। "ततो हिमवतः प्रस्थे प्रतीच्यां तदुपस्थ च। शिप्रं नाम सरः पुण्यं दृष्टपूर्वं हि यादव। तत्रस्थास्वाननाशाद्या लक्ष्मयक्षादयः सुराः। उपविष्टा गुह्यन्तार्थं

पुरस्तात् महेश्वरम्। तं शिप्रसंज्ञाकारं मनोज्ञं सर्वदेहिनाम्। शीतामलजलं सर्वैर्गुणैर्मीनसमन्वितम्। दृष्ट्वा तत्र हरस्तस्मिन् सौहृद्यश्च्योऽभूद्वेदपे। शिप्रा नाम नदी तस्मात्सृता दक्षिणोदधिम्। गच्छन्तीषु हृद्याङ्गो पावयन्ती समन्ततः"। तत्रैव १९ अ०।

**शिफा** स्त्री शि–फक्। छायायां १जटाकारे मूले। (शिकड़) अमरः। २नद्यां ३मांसिकायां ४मातरि मेदि०। ५शतपुष्पायां ६हरिद्रायां राजनि०। ७पद्मकन्दे शब्दर०। जटाकारे मूले पु० विद्याविनोदः।

**शिफाक** पु० शिफेव स्वार्थे कन्। पद्ममूले शब्दच०।

**शिफाकन्द** पु० शिफेव कन्दः। पद्ममूले अमरः।

**शिफाधर** पु० शिफा अधरा यस्मात्। शाखायां शब्दच०।

**शिफारुह** पु० शिफायां रोहति रुह–क। वटवृक्षे राजनि०

**शिमुड़ी** स्त्री (चकुनि) ख्याते क्षुपभेदे राजनि०।

**शि(सि)म्बा** स्त्री शाम्यति श्यति वा शम–शम–बा बा० कन्। मूर्धो०। (छिमी) ख्याते १पदार्थे शब्दच०। २अङ्कर्दे पु० शब्दच०।

**शि(सि)म्बी** स्त्री शम–बि नि० वा ङीप्। १शिम्बायां (शिम्) लतायां हेमच० "मध्यायापकरी शिम्बी" ति०त० २एरण्डायास्य भावप्र०। स्वार्थे क। तत्रैव।

**शिम्बीधान्य** न० शिम्बीजात धान्यं शा०त०। मुद्गादौ धान्यभेदे भावप्र०। [शब्दर० कप् तत्रैव।

**शिम्बीपर्णी** स्त्री शिम्बीव पर्णमस्याः ङीप्। मुद्गपर्ण्यां

**शिर** न० शॄ–क। १मस्तके जटा० "पिण्डं दद्यात् गयाशिरे" वायुपु०। २पिप्पलीमूले मेदि०। ३शय्यायाम् ४अजगरे च सर्पमध्या०।

**शिरःफल** पु० शिर इव फलमस्य। नारिकेले त्रिका०। [गारुडे

**शिरःशूल** न० शिरसः शूलमिव तापकत्वात्। शूलरोगभेदे

**शिरज** पु० शिरे जायते जन–ड। केशे शब्दच०।

**शिरस्** न० शॄ–असुन् नि०। १मस्तके २शिखरे अमरः। ३प्रधाने ४सेनाग्रे मेदि०।

**शिरसिज** पु० शिरसि जायते जन ड वा अलुक् समासः। केशे जटाच० लुकि शिरोजोऽप्यत्र। [केशे शब्दच०।

**शिरसिरुह** पु० शिरसि रोहति रुह–क वा अलुक् समा०।

**शिरस्क** न० शिरसि कायति प्रकाशते कै–क। शिरस्त्राणे हेमच०

**शिरस्त्र** न० शिरस्त्रायते त्रै–क। शिरोरक्षके उष्णीषे अमर

**शिरस्त्राण** न० शिरस्त्रायते अनेन त्रै–करणे ल्युट्। शिरोरक्षणे उष्णीषे हेमच०।

**शिरस्य** पु० शिरसि भवः यत्। १निर्मलकेशे अमरः २शिरोभवमात्रे त्रि०। [अस्य दन्त्यादित्वमपीत्यन्ये।

**शिरा** स्त्री शॄ–क। नाड्याम् (शिर) मेदि०। ह्र–शिरच् डिच्च।

**शिरापत्त्र** पु० शिरेव पत्त्रं यस्य। हिन्तालवृक्षे राजनि०।

**शिराल** न० शिरोऽस्त्यस्य लच्। १कर्मरङ्गे शब्दच०। तत्फलस्य शिरायुक्तत्वात्तथात्वम्। २शिरायुक्ते त्रि०।

**शिरालक** पु० शिराभिरलति पर्य्याप्नोति अल–ण्वुल्। (फाड़योड़ा) वृक्षभेदे शब्दच०।

**शिरावृत्त** न० शिरेव वर्त्तते वृत–क्त। सीसके राजनि०।

**शिरि** पु० शॄ–कि। १खड्गे २शरे ३हिंस्रे त्रि० उणादि०। ४शलभे सि०कौ०।

**शिरीष** पु० शॄ–ईषन् किच्च। स्वनामख्याते वृक्षे अमरः। "शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुवरो लघुः। दोषशोथविसर्पघ्नः कासव्रणविषापहः" भावप्र०।

**शिरीषपत्त्रिका** स्त्री शिरीषस्येव पत्त्रमस्याः कप् कापि अत इत्त्वम्। श्वेतकिण्वीवृक्षे राजनि०।

**शिरोगृह** न० शिरःस्थगृहपरिस्थं गृहम्। (चिलेघर) चन्द्रशालायां हेमच०।

**शिरोग्रह** पु० "रक्तमाश्रित्य पवनः कुर्यात् मूर्धधराः शिराः। रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिरोग्रहः" भावप्र० उक्ते वातरोगभेदे "मूर्धधरा ग्रीवागताः स पवनः शिरोग्रहः स्यादित्यन्वयः" भावप्र०। [हेमच०।

**शिरोधरा** स्त्री शिरोऽन्यस्य धरति धृ–अच्। ग्रीवायां

**शिरोधि** स्त्री शिरो धीयतेऽत्र धा–कि। ग्रीवायाम् अमरः

**शिरोमणि** पुंस्त्री० शिरसि धार्य्यो मणिः शा०त०। शिरोधार्य्ये रत्ने चूड़ामणौ शब्दच०। स्त्रीत्वपक्षे वा ङीप्। शिरोरत्नादयोऽप्यत्र न०।

**शिरोमर्म्मन्** पु० शिरसि मर्म यस्य। शूकरे हेमच०।

**शिरोरुजा** स्त्री शिरो रुजति व्यथयति रुज–क। १सप्तच्छदवृक्षे त्रिका०। ६त०। २मस्तकरोगे च।

**शिरोरुह** पु० शिरसि रोहति रुह–क। केशे अमरः।

**शिरोरोग** पु० ६त० सुश्रुतोक्ते मस्तकरोगभेदे तल्लक्षणं यथा "अथातः शिरोरोगविज्ञानीयमध्यायं व्याख्यास्यामः। शिरो रुजति मर्त्यानां वातपित्तकफैस्त्रिभिः ३। सन्निपातेन४ रक्तेन५ क्षयेण६ क्रिमिभि७स्तथा। सूर्य्यावर्त्ताद८नन्तवात९ार्द्धावभेदक१०शङ्खकैः ११। एकादशप्रकारस्य लक्षणं सम्प्रवक्ष्यते। यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम्। बन्धोपतापैश्च भवेद्विशेषः शिरो-

ऽभितापः स समीरणेन। यस्योष्णमङ्गारचितं यथैव भवेच्छिरो धूमयती च नासा। शीतेन रात्रौ च भवेद्दिवेन शिरोऽभितापः स तु पित्तकोपात्२। शिरोगलं यस्य कफोपदिग्धं गुरु प्रतिष्टब्धमथो हिमञ्च। शूनाक्षिकूटं वदनं च यस्य शिरोऽभितापः स कफप्रकोपात्३। शिरोऽभितापे त्रितयप्रवृत्ते४ सर्वाणि चिह्नानि समुद्भवन्ति। रक्तात्मकः५ पित्तसमानलिङ्गः स्पर्शासहत्वं शिरसो भवेच्च। वसावलासक्षतसम्भवानां शिरोगतानामिह संक्षयेण। क्षयप्रवृत्तः६ शिरसोऽभितापः कष्टो भवेदुग्रकोऽतिमात्रम्। संस्वेदनच्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति। निस्तुद्यते यस्य शिरोऽतिमात्रं सम्भक्ष्यमाणं स्फुरतीव चान्तः। घ्राणाच्च गच्छेत् सलिलं सरक्तं शिरोऽभितापः कृमिभिः७ स घोरः। सूर्योदया प्रतिमन्दमन्दमक्षिभ्रुवं रुक् समुपैति गाढम्। विवर्द्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्त्तते च। शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाच्च। तं भास्करावर्त्तमुदाहरन्ति सर्वात्मकं कष्टतमं विकारम्। दोषास्तु दुष्टास्त्रय एव मन्यां सम्पीड्य घाटासु रुजां सुतीव्राम्। कुर्वन्ति साक्षिभ्रुवशङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु। गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजांश्च रोगान्। अनन्तवातं८ तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम्। यस्योत्तमाङ्गार्द्धमतीव जन्तोः सम्भेदतोदभ्रमशूलजुष्टम्। पक्षाद्दशाहादथवाप्यकस्मात्तस्यार्द्धभेदं९ त्रितयाद्व्यवस्येत्। शङ्खाश्रितो वायुरुदीर्णवेगः कृतानुयात्रः कफपित्तरक्तैः। रुजः सुतीव्राः प्रतनोति मूर्ध्नि विशेषतश्चापि हि शङ्खयोस्तु। सुकष्टमेनं खलु शङ्खकाख्यं महर्षयो वेदविदः पुराणाः। व्याधिं वदन्त्युद्धतमृत्युकल्पं भिषक्सहस्रैरपि दुर्निवारम्" ।

**शिरोवल्ली** स्त्री शिरसा वल्लीव। मयूरचूडायां शब्दच०।

**शिरोवृत्त** न० शिर इव वृत्तं वर्त्तुलम्। मरिचे राजनि०।

**शिरोवृत्तफल** पु० शिरोवृत्तं मरिचमिव फलमस्य। रक्तापामार्गे भावप्र०। [त्रिका० स्मृत। तत्रैव न०।

**शिरोवेष्ट** पु० वेष्ट–घञ् शिरसो वेष्टः। (पागडी) उष्णीषे

**शिल** उञ्छे कणश आदाने तुदा० पर० सक० सेट्। शिलति अशेलीत्।

**शिल** न० शिल–क। स्फीतशस्यात् क्षेत्रात् कणशो मञ्जर्यादानरूपायां १वृत्तौ उञ्छवृत्तौ १°३० पृ० दृश्यम्।

२पाषाणे ३द्वारादधःस्थितकाष्ठखण्डे च (गोवराट) स्त्री अमर०। ४स्तम्भशीर्षे ५मन शिलायां स्त्री मेदि० ६कर्पूरे राजनि०। [पाषाणभेदके स्त्री राजनि०।

**शिलगर्भज:** पु० शिलाया गर्भे जायते जन–ड। पाषाणभेदके। [स्त्री राजनि०।

**शिलाकर्णी** स्त्री शिलेव कर्णमस्य ङीप्। शल्लकीवृक्षे शब्दच०

**शिलाकुट्टक** पु० शिलां कुट्टयति कुट्ट–ण्वुल्। १पाषाणभेदके अस्त्रभेदे शब्दच०। शिलया कुट्टति चिर्णीकरोति। २अश्मकुट्टके वानप्रस्थभेदे।

**शिलाज** न० शिलातो जायते जन–ड। १शैलेये गन्धद्रव्ये शब्दच०। २लौहे राजनि०।

**शिलाजतु** न० शिलाजातं जतु। १पर्वतजाते उपधातुभेदे अमर०। तदुत्पत्त्यादिकं भावप्र० उक्तं यथा "निदाघे घर्मसन्तप्ता धातुसारं धराधराः। निर्यासवत् प्रमुञ्चन्ति तच्छिलाजतु कीर्त्तितम्। सौवर्णं राजतं ताम्रमायसन्तच्चतुर्विधम्। शिलाजत्विद्विजत्‌ च शैलनिर्यास इत्यपि। गैरेयमश्मजञ्चापि गिरिजं शैलधातुजम्। शिलाजं कटु तिक्तोष्णं कटुपाकं रसायनम्। छेदि योगवहं हन्ति कफमेदोऽश्मशर्कराः। मूत्रकृच्छ्रं क्षयं श्वासं वातार्शांसि च पाण्डुताम्। अपस्मारं तथोन्मादं शोथकुष्ठोदरक्रिमीन्। सौवर्णन्तु जवापुष्पवर्णं भवति तद्रसात्। मधुरं कटुतिक्तञ्च शीतलं कटुपाकि च। राजतं पाण्डुरं शीतं कटुकं स्वादुपाकि च। ताम्रं मयूरकण्ठाभं तीक्ष्णमुष्णञ्च जायते। लौहं जटायुपक्षाभं तत्तिक्तं लवणं भवेत्। विपाके कटुकं शीतं सर्वश्रेष्ठमुदाहृतम्" । [ङीप्। काकाङ्गीवृक्षे राजनि०।

**शिलाञ्जनी** स्त्री शिला अञ्जतेऽनया अनुज–करणे–ल्युट्

**शिलाटक** पु० शिलेव अटति शिलामटति वा अट–ण्वुल्। १अट्टे २बिले च मेदि०।

**शिलात्मज** न० शिलाया आत्मज इव। लौहे राजनि०।

**शिलात्मिका** स्त्री शिलेव आत्मा यस्य कप्। (मूचि) मूषायां शब्दच०।

**शिलाददु** पु० शिलाया ददुरिव। शैलेये गन्धद्रव्ये राजनि०

**शिलाधातु** पु० शिलाया धातुश्चरमधातुरिव शुक्लत्वात्। १श्वेतोपले (खडी) त्रिका०। २पीतवर्णे गैरिकभेदे च राजनि०। [प्रस्तरखण्डभेदे शब्दच०।

**शिलापुत्र** पु० शिलायाः पुत्र इव। (लोढा) पेषणार्थे

**शिलापुष्प** न० शिलाया पुष्पमिव। शैलेये गन्धद्रव्ये राजनि०

**शिलाभव** न० शिलाया भवति भू–अच् ७त०। शैलेये शब्दच०

काद्दयमिष्यते"। अर्द्धमनन्तरम्। वायुपुराणे "त्रयोदश्यस्तगे सूर्ये चतसृष्वपि नाडिषु। भूतविद्धा तु या तत्र शिवरात्रिव्रतञ्चरेत्"। ईशानसंहितायाम् "माघे कृष्णचतुर्दश्यामादिदेवो महानिशि। शिवलिङ्गतयोद्भूत कोटिसूर्य्यसमप्रभः। तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः। अर्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्दशी। व्याप्ता सा दृश्यते यस्या तस्यां कुर्य्यात् व्रतं नरः"। अत्र "महानिशा द्वे घटिके रात्रेर्मध्यमयामयोः" इति देवलोक्ता महानिशा ग्राह्या। घटिका एकदण्डः। एवञ्च यद्दिने प्रदोषनिशीथोभयव्यापिनी चतुर्दशी तद्दिने व्रतम् उभयव्याप्त्यनुरोधात्। कालमाधवीयोऽप्येवम्। एतेन परदिने उभयव्यापित्वेऽपि पूर्व्वदिनीयरात्रिद्वितीययामप्रभृतिचतुर्दशीसत्त्वे बहुप्रहरव्यापित्वेन पूर्व्वदिन एव व्रतमिति निरस्तम्। यदा तु पूर्व्वेद्युर्निशीथमात्रव्याप्तिः परेद्युः प्रदोषमात्रव्याप्तिस्तदा पूर्व्वेद्युरेव प्रधानकालव्याप्त्यनुरोधात्। "पूर्व्वेद्युरपरेद्युर्वा महानिशि चतुर्दशी। व्याप्ता सा दृश्यते यस्यां तस्यां कुर्य्यात् व्रतं नरः" इतीशानसंहितावचनाच्च। एतद्विषय एव भविष्ये "अर्द्धरात्रात् पुरस्तात्तु जयायोगो भवेद् यदि। पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः"। विष्णुधर्म्मोत्तरे "जयन्ती शिवरात्रिश्च कार्य्ये भद्राजयान्विते। कृत्वोपवासं तिथ्यन्ते तदा कुर्य्याच्च पारणम्"। तिथ्यन्ते पारणं जयन्तीमात्रपरं तत्र चतुर्दश्यामेव तत् "ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै। पूजितानि भवन्तीह भूताया पारणे कृते" इति स्कान्दात्। "दिनमानप्रमाणेन या तु रात्रौ चतुर्दशी। शिवरात्रिस्तु सा ज्ञेया चतुर्दश्यान्तु पारणम्" इति गौतमीयाच्च। यदा तु पूर्व्वदिने न निशीथव्याप्तिः परदिने प्रदोषमात्रव्यापिनी तदा परा ग्राह्या प्रदोषव्यापिनीति प्रागुक्तत्वात् तिथेस्त्रिसन्ध्यव्यापित्वाच्च। एतद्विषय एव लिङ्गपुराणम् "शिवरात्रिव्रतं भूता कामविद्धा विवर्ज्जयेत्। एकेनैवोपवासेन ब्रह्महत्या व्यपोहति"। अत्रामावस्यायामेव पारणम् "शिवाऽङ्गारा तथा प्रेता सावित्री च चतुर्दशी। कुहूयुक्तैव कर्त्तव्या कुह्वामेव हि पारणम्"। इति वचनात्। तदर्थः सङ्क्षेपः। यद्दिने प्रदोषनिशीथोभयव्यापिनी चतुर्दशी तद्दिने व्रतम्। यदा तु पूर्व्वेद्युर्निशीथव्यापिनी परेद्युः प्रदोषमात्रव्यापिनी तदा पूर्व्वेद्युः व्रतम्। यदा तु न पूर्व्वेद्युर्निशीथव्याप्तिः परदिने प्रदोषव्यापिनी तदा परदिने। पारणन्तु परदिने चतुर्दशीलाभे चतुर्दश्यां, तदलाभे अमावास्यायाम्" तिथितत्त्वम्॥

**शिवलिङ्ग** न, क्लीं। शिवस्य लिङ्गाकारे प्रस्तरादिमये पदार्थे तदाविर्भावपूज्यतादिकं यथा
"तत्रापि गत्वा मदनो ददर्श हरकेतनम्। दृष्ट्वा महत्तु कामोऽथ ततः स प्राद्रवद्धरः। ततो दारुवनं घोरं मदनाभिसृतो हरः। विवेश ऋषयो यत्र सपत्नीका व्यवस्थिताः। ते चापि ऋषयः सर्वे दृष्ट्वा मूर्द्ध्ना नताभवन्। ततस्तान् प्राह भगवान् भिक्षा मे प्रतिदीयताम्। ततस्ते मौनिनस्तस्थुः सर्व एव महर्षयः। तदाश्रमाणि पुण्यानि परिचक्राम नारद।। तं प्रविष्टं तदा दृष्ट्वा भार्गवात्रेययोषितः। प्रक्षोभमगमन् सर्व्वा हीनसत्त्वाः समन्ततः। ऋते त्वरुन्धतीमेकामनसूयाञ्च भाविनीम्। एताभ्यां भर्तृपूजासु कृतं वै सुस्थिरं मनः। ततः संक्षुभिताः सर्व्वा यत्र याति महेश्वरः। तत्र प्रयान्ति कामार्त्ता मदविह्वलितेन्द्रियाः। त्यक्त्वाश्रमाणि शून्यानि स्वानि ता मुनियोषितः। अनुजग्मुर्यथा मत्तं करिण्य इव कुञ्जरम्। ततस्तु ऋषयो दृष्ट्वा भार्गवाङ्गिरसो मुने।। क्रोधान्विताब्रुवन् सर्वे लिङ्गोऽस्य पततां भुवि। ततः पपात देवस्य लिङ्गं पृथ्वीं विदारयत्। अन्तर्द्धानं जगामाथ त्रिशूली नीललोहितः। ततः स पतितो लिङ्गो विभिद्य वसुधातलम्। रसातलं विवेशाशु ब्रह्माण्डं चोर्द्ध्वतोऽभिनत्। ततश्चचाल पृथिवी गिरयः सरितो नगाः। पातालभुवनाः सर्वे जङ्गमाऽजङ्गमाः स्थिताः। संक्षुब्धान् भुवनान् दृष्ट्वा भूर्लोकादीन् पितामहः। जगाम माधवं द्रष्टुं क्षीरोदं नाम सागरम्। तत्र दृष्ट्वा हृषीकेशं प्रणिपत्य च भक्तितः। उवाच देव। भुवनाः किमर्थं क्षुभिता विभो।। अथोवाच हरिर्ब्रह्मन् शार्वो लिङ्गो महर्षिभिः। पतितस्तस्य भारार्त्ता संचचाल वसुन्धरा। ततस्तदद्भुततमं श्रुत्वा देवः पितामहः। तत्र गच्छामि देवेश एवमाह पुनः पुनः। ततः पितामहो देव केशवश्च जगत्पतिः। आजगाम तमुद्देशं यत्र लिङ्गं भवस्य तत्। ततोऽनन्तं हरिर्लिङ्गं दृष्ट्वारुह्य खगेश्वरम्। पातालं प्रविवेशाथ विस्मयात् त्वरितो विभुः। ब्रह्मा पद्मविमानेन ऊर्द्ध्वमाक्रम्य सर्व्वतः। नैवान्तमलभद् ब्रह्मा विस्मितः पुनरागतः। विष्णुर्गत्वाथ पातालं सप्तलोकोदरादथ। चक्रपाणिर्विनिष्क्रान्तो लेभेऽन्तं न महामुने।" इत्युपक्रमे "हर उवाच

अद्यप्रभृति त्रिदशा मम लिङ्गं सुरोत्तमौ ।। नेतत् प्रतिगृह्णीयान्नान्यथेति कथञ्चन । ततः प्रोवाच भगवानेवमस्त्विति केशव । ब्रह्मा स्वयञ्च जग्राह लिङ्गं कनकपिङ्गलम् । ततश्चकार भगवांश्चातुर्वर्ण्यं हराचने । शास्त्राणि चैषां मुख्यानि नानोक्तिविदितानि च । आद्यं शैवं१ परिख्यातमन्यत् पाशुपतं२ मुने ।। तृतीयं कालवदनं३ चतुर्थञ्च कापालिकम्४ । शैवश्चासीत् स्वयं शक्तिर्वशिष्ठस्य प्रियः सुतः । तस्य शिष्यो बभूवाथ गोपायन इति श्रुतः । महापाशुपतश्चासीद्भारद्वाजस्तपोधनः । तस्य शिष्योऽप्यभूद्राजा ऋषभः सोमकेश्वरः । कालास्यो भगवानासीदापस्तम्बस्तपोधनः । तस्य शिष्यो बभौ वैश्यो नाम्ना क्राथेश्वरो मुने । महाव्रती च धनदस्तस्य शिष्यश्च वीर्य्यवान् । कुन्दोदर इति ख्यातो जात्या शूद्रो महातपाः । एवं स भगवान् ब्रह्मा पूजनाय शिवस्य च । कृत्वा तु चातुराश्रम्यं स्वमेव भवनं गतः । गते ब्रह्मणि शर्व्वोऽपि तत् संहृत्य तं तदा । लिङ्गं चित्रवने सूक्ष्मं प्रतिष्ठाप्य चचार ह"। वामनपु० ६ अ०। एकगृहे लिङ्गद्वयार्च्चननिषेधो यथा "गेहे लिङ्गद्वयं नार्च्च्यं शालग्रामद्वयं तथा । द्वे चक्रे द्वारकायास्तु नार्च्च्यं सूर्य्यद्वयं तथा"। तन्निर्म्माल्यभक्षणविधिनिषेधौ यथा "अभक्ष्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं जलम् । शालग्रामशिलायोगात् पावनं तद्भवेत् सदा"। "लिङ्गपूजां विना देवि ! अन्यपूजां करोति यः । विफला तस्य पूजा स्यादन्ते नरकमाप्नुयात् । तस्माल्लिङ्गं प्रयत्नेन प्रथमं परिपूजयेत्"। तत्पूजनप्रशंसा यथा "यद्गृहे लिङ्गपूजायां रहितं सततं प्रिये !। तद्गृहं पतितं मन्ये विष्ठाभूमिसमं स्मृतम्"। "ब्रह्मा विट् क्षत्रियो देवि । यदि लिङ्गं न पूजयेत् । तत्क्षणात् परमेशानि ! स्वयं चाण्डालतां व्रजेत् । शूद्रश्च परमेशानि ! सदा शूकरवत् प्रिये !। पूजयेत् परमेशानि ! चत्वारो ब्राह्मणादयः । शिवार्च्चनन्तु पूजासु यद्गृहे वर्जितं सदा । विष्ठागर्त्तसमं देवि ! तद्गृहं विद्धि पार्व्वति !। शाक्तो वा वैष्णवो वापि शैवो वा परमेश्वरि ।। आदौ लिङ्गं समभ्यर्च्च्य बिल्वपत्रैर्वरानने !। पश्चादन्यं महेशानि ! शिवं प्रार्थ्य प्रपूजयेत् । शिवपूजां विना देवि ! अन्यपूजां करोति यः । स एव रसनाहीनः कुम्भीरो जायते प्रिये ।। निर्म्माय पार्थिवं लिङ्गं रुद्रं संहाररूपिणम् । आशुतोषं महादेवं शङ्करं वृषभध्वजम् । निर्म्माय पार्थिवं लिङ्गं विधिवत् पूजयेत् शिवम् । शिवपूजा महेशानि ! यद्गृहे सततं प्रिये ।। काशीपुरं महेशानि ! तद्गृहं वरवर्णिनि ।। शिवलिङ्गं प्रपूज्याथ सर्व्वपूजाफलं लभेत्"। चतुर्व्विधलिङ्गं यथा "चतुर्द्धा पार्थिवं लिङ्गं वर्णानां भेदेन पार्व्वति ।। शुक्लं रक्तं तथा पीतं कृष्णञ्च परमेश्वरि ।। शुक्लन्तु ब्राह्मणे शस्तं क्षत्रिये रक्तमिष्यते । पीतञ्च वैश्यजातौ तु कृष्णं शूद्रे प्रकीर्त्तितम् । चान्द्रन्तु परमेशानि ! सर्व्वजातिषु शस्यते"। लिङ्गार्च्चनतन्त्रे १।२।३ प०। अथ पञ्च वक्त्राणि यथा "ततः सर्व्वं शृणु चार्व्वङ्गि पार्थिवस्य मुखं प्रिये ।। विभाव्य मुखान्यपि शिवस्य वरवर्णिनि ।। सद्योजातं वामदेवमघोरञ्च ततः परम् । तत्पुरुषं तथेशानं पञ्चवक्त्रं प्रकीर्त्तितम् । सद्योजातञ्च वै शुक्लं शुद्धस्फटिकसन्निभम् । पीतवर्णं तथा सौम्यं वामदेवं मनोहरम् । कृष्णवर्णमघोरञ्च सर्व्वं भीमविवर्द्धनम् । रक्तं तत्पुरुषं देवं दिव्यमूर्त्तिं मनोहरम् । श्यामलञ्च तथेशानं सर्व्वदेवशिवात्मकम् । चिन्तयेत् पश्चिमे चाद्यं द्वितीयन्तु तथोत्तरे । अघोरं दक्षिणे देवं पूर्व्वे तत्पुरुषं तथा । ईशानो मध्यतो ध्येयं चिन्तयेत् भक्तितत्परः"। तत्रैव ६ पटलः । अथ रौद्रलिङ्गलक्षणम्, वीरमित्रोदयधृते "नदीसङ्गमे रौद्रमन्योन्यस्य विघट्टनात् । नदीवेगात् समं स्निग्धं संजातं रौद्रमुच्यते"। संग्रहेऽपि "हरित्पर्णाहसंस्थानं वाणलिङ्गसमाकृति । तदन्यदपि बोद्धव्यं रौद्रलिङ्गं सुखावहम् । नदीसारनर्म्मदायां वाणलिङ्गसमाकृति । तदन्यदपि बोद्धव्यं लिङ्गं रौद्रं भविष्यति । रौद्रलिङ्गं तथाख्यातं वाणलिङ्गसमाकृति । श्वेतं रक्तं तथा पीतं कृष्णं विप्रादिपूजितम् । स्वभावात् कृष्णवर्णं वा सर्व्वजातिषु सिद्धिदम् । नर्म्मदासम्भवं रौद्रं वाणलिङ्गवदीरितम्"। दैवलिङ्गमधिकृत्य सिद्धान्तशेखरे "करसम्पुटसंसर्गं शूलटङ्केन्दुभूषितम् । रेखाकोटरसंयुक्तं निम्नोन्नतसमन्वितम् । दैवोत्तरञ्च यल्लिङ्गं ब्रह्मभागादिवर्जितम्"। अथ गोललिङ्गलक्षणम् "लिङ्गं गोलमिति प्रोक्तं गोलकं प्रोच्यतेऽधुना । कुष्माण्डस्य फलाकारं नागरङ्गफलोपमम् । काकडुम्बरफलाकारं गोललिङ्गमितीरितम्"। अथार्षलिङ्गलक्षणम् । तत्रैव "मातुलुङ्गफलाकारं नन्दिलिङ्गमिति स्मृतम् । मूले स्थूलञ्च यल्लिङ्गं कपित्थफलसन्निभम् । तालस्य वा फलाकारं मध्ये स्थूलञ्च यद्भवेत् । मध्ये स्थूलं परं चिह्न

तम्। प्रशस्तं कथितं कान्ते! निविडञ्च निशामय। अन्यद्दृष्ट्वा निविडस्य शिविरे नगरेऽपि च। अटौ निविडं शिविरे नित्यं चौरभयं ततः। नगरेषु प्रविष्टस्य दर्शनात् पुण्यदस्तथा। हे कान्ते! तिन्तिडीहस्तो यत्नात्तं परिवर्जय। शरेण धनहानिः स्यात् प्रजाहानिर्भवेद् ध्रुवम्। शिविरेऽतिनिविडस्य नगरे किञ्चिदेव च। न निविडं प्रविष्टस्य ग्रामेषु नगरेषु च। इक्षवश्चणकाटीनां धान्यञ्च मङ्गलप्रदम्। ग्रामेषु नगरे चापि शिविरे च तथैव। इक्षुश्च शुभदः पनस शुभदस्तथा। कश्मीरकस्य शिरीषस्य कदम्बस्य शुभप्रदाः॥ कदली हरिद्रा शुभदा शुभदश्चार्द्रकस्तथा। हरीतकी च शुभदा ग्रामेषु नगरेषु च। न शाल्मली भद्रदा नित्यं तथा चामलकी ध्रुवम्। गजानामस्थि शुभदमश्वानाञ्च तथैव च। कल्याणदञ्च अयसा वास्तौ स्थापनकारिणाम्। न शुभप्रदमन्येषामुच्छन्नकारणं परम्। वानराणां नराणाञ्च गर्दभानां गवामपि। कुक्कुराणां शृगालानां मार्जाराणाममङ्गलम्। भेटकानां शूकराणां सर्वेषाञ्चाशुभप्रदम्। ईशाने चापि पूर्वस्मिन् पश्चिमे च तथोत्तरे। शिविरस्य जलं भद्रमन्यत्राशुभमेव च। दीर्घे प्रस्थे समानञ्च न कुर्यान्मन्दिरं बुधः। चतुरस्रे गृहे कान्ते! गर्त्तहीना धननाशनम्। दीर्घप्रस्थं परिमितं नैवाङ्के नापि चाहृतः। शून्येन रहितं भद्रं शून्यं शून्यप्रदं नृणाम्। प्रस्थे हस्तद्वयात् पूर्वं दीर्घे हस्तत्रयं तथा। गर्त्तहीनं शुभदं द्वारं प्राकारस्य गृहस्य च। न मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिके शुभम्। चतुरस्रं चन्द्रवेधं शिविरं मङ्गलप्रदम्। अभद्रं सूर्यवेधञ्च प्राङ्गणञ्च तथैव च। शिविराभ्यन्तरे भद्रा स्थापिता तुलसी नृणाम्। धनपुत्रप्रदात्री च पुण्यदा हरिभक्तिदा। प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत्। मालती यूथिका कुन्दो माधवी केतकी तथा। नागेश्वरं मल्लिका च काञ्चनं वकुलं शुभम्। अपराजिता च शुभदा तेषामुद्यानमीप्सितम्। पूर्वे च दक्षिणे चैव शुभदं नात्र संशयः। ऊर्द्ध्वं षोडशहस्तेभ्यो नैव कुर्याद् गृहं गृही। ऊर्द्ध्वं विंशतिहस्तेभ्यः प्राकारं न शुभप्रदम्। सूत्रधारं तैलकारं स्वर्णकारञ्च चौरकम्। वाटीमूले ग्राममध्ये न कुर्यात् स्थायिनं बुधः। ब्राह्मणं क्षत्रियं वैश्यं सच्छूद्रं गणकं शुभम्। भट्टं वैद्यं पुष्पकारं स्थापयेत् शिविरान्तिके। प्रस्थे च परिखामानं शतहस्तं प्रशस्तकम्। परितः शिविराणाञ्च गम्भीरं दशहस्तकम्। सङ्केतपूर्वकञ्चैव परिखाद्वारमीप्सितम्। शत्रोरगम्यं मित्रस्य गम्यमेव सुखेन च। शाल्मलीनां तिन्तिडीनां छिन्नाश्वानां तथैव च। निम्बानां सिन्धुवाराणां उडुम्बराणामभद्रकम्। धुस्तूराणां वटानाञ्चाप्येरण्डानामवाञ्छितम्। एतेषामतिरिक्तानां शिविरे काष्ठमीप्सितम्। इक्षुञ्च वज्रहतकं दूरतो वर्जयेद् बुधः। पुत्रदारधन इत्यादित्याह कमलोद्भवः" ब्रह्मवै० ख० १०२अ०।

**शिविष्ट** पु० ६त०। १बकवृक्षे २दूर्वायां स्त्री राजनि०। ३महादेवप्रिये त्रि०। [याप्ययाने हारा०।

**शिवीरथ** शिवैर्भुजैरुह्यमानः शोभा यत्र तादृशो रथः।

**शिशिर** न० शश–किरच् नि०। १हिमे माघफाल्गुनमासद्वयात्मके २ऋतुभेदे अमरः। तत्र ऋतौ वर्ण्यादिकन्नि "करीषः धूम कुन्द पद्मदाहः शिशिरोत्कर्ष" कविक०ल०। ३शीतले स्पर्शे च न० ४तद्वति त्रि० अमरः। [च।

**शिशु** पु० शो–कु सन्वद्भाव द्वित्वम्। १बालके अमरः २स्कन्दे

**शिशुक** पु स्त्री० शिशुरिव इवार्थे कन्। १जलजन्तुभेदे (शुशुक) राजनि० स्त्रियां ङीप्। २बालके मेदि०। ३वृक्षभेदे हेमच० "जातमात्रः शिशुस्तावद् यावदष्टौ समा वयः। स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शकः। भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथाऽनृते। तस्मिन् काले न दोषः स्यात् स यावन्नोपनीयते" मनुः। [गन्धमा०।

**शिशुगन्धा** स्त्री शिशुः अल्पो गन्धो यस्याः। मल्लिकाभेदे

**शिशुचान्द्रायण** न० "चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः। चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम्" मनूक्ते व्रते। [ताऽप्यत्र स्त्री।

**शिशुत्व** न० ६त०। शिशोर्भावः त्व। बाल्ये तल्। शिशु-

**शिशुपाल** पु० चेदिदेशीयराजभेदे दमघोषात्मजे त्रिका०।

**शिशुपालहन्** पु० शिशुपालं हतवान् हन–भूते क्विप्। श्रीकृष्णे हेमच०।

**शिशुमार** पु स्त्री० शिशुं मारयति मृ–णिच्। १जलजन्तुभेदे अमरः स्त्रियां ङीप्। गगनस्थे २ताराचक्रभेदे च "शिशुमारस्तु यः प्रोक्तः स ध्रुवो यत्र तिष्ठति। सन्निवेशञ्च तस्यापि शृणुष्व मुनिसत्तम!। यदह्ना कुरुते पापं दृष्ट्वा तन्निशि मुच्यते। तावत्यश्चैव ताराश्च शिशुमाराश्रिता दिवि। तावन्त्येव तु वर्षाणि जीवत्यभ्यधिकानि च। उत्तानपादस्तस्याथ विज्ञेयो ह्युत्तरो हनुः। यज्ञो-

देशश्च विज्ञेयो धर्मो मूर्द्धानमाश्रितः । हृदि नारायणस्त्वास्ते अश्विनौ पूर्वपादयोः । वरुणश्चार्य्यमा चैव पश्चिमे तस्य सक्थिनी । शिश्नं संवत्सरस्तस्य मित्रोऽपानं समाश्रितः । पुच्छेऽग्निश्च महेन्द्रश्च कश्यपोऽथ ततो ध्रुवः । तारकाः शिशुमारस्य नास्तमेति चतुष्टयम्" विष्णुपु० २अ० १२अ० । भाग० ५स्क० अन्यथोक्तं यथा "केचिदेतत् ज्योतिरनीकं शिशुमारसंस्थानेन भगवतो वासुदेवस्य योगधारणायामनुवर्णयन्ति । यस्य पुच्छाग्रेऽवाक्शिरसः कुण्डलीभूतदेहस्य ध्रुव उपकल्पितः तस्य लाङ्गूले प्रजापतिरग्निरिन्द्रो धर्म इति । पुच्छमूले धाता विधाता च कट्यां सप्तर्षयः यस्य दक्षिणावर्त्तकुण्डलीभूतशरीरस्य यान्युदगयनानि दक्षिणपार्श्वे नक्षत्राण्युपकल्पयन्ति । दक्षिणानि तु सव्ये यथा शिशुमारस्य कुण्डलाभोगसन्निवेशस्य पार्श्वयोरुभयोरप्यवयवाः समसङ्ख्या भवन्ति । पृष्ठे त्वजवीथी आकाशगङ्गा चोदरतः । पुनर्वसुपुष्यौ दक्षिणवामयोः श्रोण्योरार्द्राश्लेषा च दक्षिणवामयोः पादयोरभिजिदुत्तराषाढे दक्षिणवामपार्श्ववङ्क्रिषु युञ्जीत । तथैव मृगशीर्षादीन्युदगयनानि दक्षिणपार्श्वे प्रातिलोम्येन प्रयुञ्जीत । शतभिषाज्येष्ठे स्कन्धयोर्दक्षिणवामयोर्न्यसेत् । उत्तराहनावगस्त्यः अधराहनौ यमः मुखे चाङ्गारकः शनैश्चर उपस्थे बृहस्पतिः ककुदि वक्षस्यादित्यो हृदये नारायणो मनसि चन्द्रो नाभ्यामुशना स्तनयोरश्विनौ बुधः प्राणापानयो राहुर्गले केतवः सर्वाङ्गेषु रोमसु सर्वे तारागणाः । एतदु हैव भगवतो विष्णोः सर्वदेवतामयं रूपमहरहः सन्ध्यायां प्रयतो वाग्यतो निरीक्षमाण उपतिष्ठेत" ।

**शिशुवाह** पु० स्त्री० शिशुं वहति वह–ण्वुल् । वनच्छागे हेमच० स्त्रियां ङीष् । शिशुवाह्योऽप्यत्र । शिशुवाह्य तत्रार्थे त्रिका०

**शिश्न** पु० शश–नक् नि० । मेढ्रे पुंश्चिह्नभेदे अमरः ।

**शिश्विदान** त्रि० श्विद–कानच् द्वित्वम् । पापकारके अमरः

**शिष** वधे भ्वा० पर० सक० सेट् । शेषति अशेषीत् ।

**शिष** परिशेषीकरणे वा चु० उभ० पक्षे भ्वा० पर०सक०सेट् । शेषयति ते शेषति अशिशिषत् त अशेषीत् । (शेष ।

**शिष** विशेषे रुधा०पर०सक०अनिट् । शिनष्टि अशिषत्

**शिष्ट** त्रि० शास–क्त शिष–क्त वा । १शान्ते २वेदवाक्ये विश्वासयुते ३सुबोधे ४धीरे च "न पाणिपादचपलो न नेत्रचपलो मुनिः । न च वागङ्गचपल इति शिष्टस्य लक्षणम्" भा०आश्व० "धर्मो नातिगतो यैस्तु वेदः स परिबृंहितः । ते शिष्टा ब्राह्मणाः प्रोक्ता नित्यमात्मगुणान्विताः" कूर्म० उप० २४अ० । "विशेषशब्दनिष्ठस्तु शेषः शिष्ट प्रकीर्त्त्यते । मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्म्मिकाः । मनुः सप्तर्षयश्चैव लोकसन्तानकारणात् । तिष्ठन्तीह च धर्मार्थं तान् शिष्टान् प्रचक्षते । तैः शिष्टैः स्थापितो धर्मः स्थाप्यते वै युगे युगे" मत्स्यपु० १२० अ० । ५कृतशासने ६अवशिष्टे च ।

**शिष्टाचार** पु० शिष्टानामाचारः । मत्स्यपुराणे "ततः स्मार्त्तः स्मृतो धर्मो वर्णाश्रमविभागशः । एवं वै द्विविधो धर्मः शिष्टाचारः स उच्यते । त्रयी वार्त्ता दण्डनीतिः प्रजा वर्णाश्रमेज्यया । शिष्टैराचर्य्यते यस्मात् शिष्टाचारः स शाश्वतः । दानं सत्यं तपोऽलोभो विद्येज्या पूजनं दमः । अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम् । शिष्टमस्माच्चरन्त्येते मनुः सप्तर्षयश्च ये । मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः । श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः । शिष्टाचारविरुद्धस्तु धर्मः स साधुसम्मतः" मत्स्यपु० १०५अ० । "आचारश्चैव साधूनामिति" मनुना तस्य धर्मे प्रामाण्यमुक्तं स च वेदाविरुद्ध एव प्रमाणम् श्रुतिस्मृत्योर्भिन्नविषयत्वे सदाचारेण तत्र धर्मनिर्णयः । श्रुतिविरोधे स्मृतेरप्रामाण्यवत् स्मृतिविरोधे सदाचारस्य न धर्मनिर्णायकत्वम् । तेन दाक्षिणात्यानां मातुलकन्याविवाहस्य शिष्टैराचर्य्यमाणत्वेऽपि न प्रमाणता । तदेतत् "विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्" जैमि० सूत्रेण निर्णीतम् । वशिष्ठेनापि "तदभावे शिष्टाचारः प्रमाणम्" इत्युक्तम् । ततश्च शिष्टाचारेण मूलस्मृतिरनुमीयते यथा होलकाद्याचारात् । ततः स्मृत्या मूलश्रुतिरनुमीयते इति अधिकरणमाला । अत एव अविगीतशिष्टाचारपरम्पराप्राप्तं ग्रन्थादौ मङ्गलाचरणं मङ्गलवादादौ व्यवस्थापितम् ।

**शिष्टि** स्त्री शास–क्तिन् । १आज्ञायां २शासने अमरः । ३ताडने च "शिष्ट्यशिष्टिरदण्डेन" स्मृतिः ।

**शिष्य** त्रि० शास–क्यप् । १शिक्षणीये २छात्रे अमरः ३उपदेश्ये च । शिष्यलक्षणादि तन्त्रसा० उक्तं यथा "शान्तो विनीतः शुद्धात्मा श्रद्धावान् धारणक्षमः । समर्थश्च कुलीनश्च प्राज्ञः सच्चरितो यती । एवमादिगुणैर्युक्तः शिष्यो भवति नान्यथा । गुरुता शिष्यता वापि तयोर्वत्सरवासतः" तथा चोक्तं सारसंग्रहे "सद्-

गुरु चाश्रित शिष्य वर्षमात्रं प्रतीक्षयेत् । वर्षैकेन भवेद्योग्यो विप्रोगुणसमन्वितः । वर्षद्वयेन राजन्यो वैश्यस्तु वत्सरैस्त्रिभिः । चतुर्भिर्वत्सरैः शूद्रः कथिता शिष्ययोग्यता" तत्रैव "राज्ञि चामात्यजो दोषः पत्नी पापं स्वभर्त्तरि । तथा शिष्यार्जितं पापं गुरुः प्राप्नोति निश्चितम्" देव्यागमे शिववाक्यं "गुरुशय्यासनं यानं पादुकोपानहं पीठम् । स्नानोदकं तथा छाया लङ्घयेन्न कदाचन । गुरोरग्रे पृथक् पूजामौद्धत्यञ्च विवर्जयेत् । दीक्षां व्याख्यां प्रभुत्वञ्च गुरोरग्रे परित्यजेत्" ।

अथ निषिद्धशिष्या अगस्त्यसंहितायामुक्ता यथा

"अलसा मलिना क्लिष्टा दाम्भिकाः कृपणास्तथा । दरिद्रा रोगिणो रुष्टा रागिणो भोगलालसाः । असूयामत्सरग्रस्ताः शठाः परुषवादिनः । अन्यायोपार्जितधनाः परदाररताश्च ये । अप्रज्ञाताश्च ये कष्टवृत्तय पिशुनाः खलाः । बह्वाशिनः क्रूरचेष्टा दुरात्मानश्च निन्दिताः । इत्येवमाद्योऽप्यन्ये पापिष्ठाः पुरुषाधमाः । एवंभूताः परित्याज्याः शिष्यत्वेनोपकल्पिताः । पापिने क्रूरचेष्टाय कृपणाय तथैव च । दीनायाचारशून्याय मन्त्रद्वेषकराय च । निन्दकाय च मूर्खाय तीर्थद्वेषपराय च । भक्तिहीनाय देवेशि ! न देया मन्त्रनस्य च" "आचारे स्थापयेद्यस्तु स आचार्य उदाहृतः । य आचार्यपराधीनस्तद्वाक्यं धार्य्यते हृदि । शासने स्थिरदृष्टिश्च शिष्यः सद्भिरुदाहृतः । एवं लक्षणसंयुक्तं शिष्यं सद्गुणान्वितम् । अध्यापयेद्विधानेन मन्त्ररत्नमनुत्तमम्" पद्मपु०उ० २५ अ० ।

**शि(सि)ह्लक** पु० सिह्ल–स्वक् नि० शस्य शो वा । (शिलारस) गन्धद्रव्यभेदे शब्दच० । स्वार्थे क । तत्रैव अमरः ।

**शी** शयने अदा०आत्म०अक० सेट् । शेते शेरते अशयिष्ट । शीङ् वर्त्तमाने क्त शयित । शयित्वा ।

**शी** स्त्री शी–भावे क्विप् । १शयने २शान्तौ च शब्दर० ।

**शीक** सेके सर्पणे च भ्वा०आत्म० सक० सेट् । शीकते अशीकिष्ट । ऋदित् चङि न ह्रस्वः ।

**शीक** आमर्षे सेके च वा चु०उभ०पक्षे भ्वा०पर०सक० सेट् । शीकयति ते शीकति अशीशिकत्–त अशीकीत् ।

**शीकर** न० शीक–अरन् । १सरलद्रुमे २वातास्ते पु० मेदि० । ३अम्बुकणे अमरः ।

**शीघ्र** न० शिघि–रक् पृषो० । १विलम्बाभावे २त्वरिते च ३तद्वति त्रि० अमर । ४दन्तीवृक्षे स्त्री राजनि० ।

**शीघ्रचेतन** पुंस्त्री० शीघ्रा चेतना यस्य । १कुक्कुरे शब्दमा० स्त्रियां ङीष् । २द्रुतचेतनायुते त्रि० ३व० । ४पर्वतभेदे पु० । ५अतिबलायां स्त्री राजनि० । [शब्दच० ।

**शीघ्रजन्मन्** पु० शीघ्रं जन्म यस्य । करञ्जभेदे (काँटाकरमचा)

**शीघ्रपुष्प** पु० शीघ्रं पुष्पं यस्य । वकवृक्षे राजनि० ।

**शीघ्रवेधिन्** पु० शीघ्रं विध्यति विध–णिनि । शीघ्रलक्ष्यवेधनकर्त्तरि हेमच० ।

**शीत** न० श्यै–क्त सम्प्र० । १शीतले स्पर्शे २जले शब्दमा० ३हिमे च अमरः ४त्वचे राजनि० ५बहुवारवृक्षे ६वेतसवृक्षे च पु० अमरः । ७असनपर्ण्यां शब्दर० । ८पर्पटे ९निम्बे १०कर्पूरे राजनि० । ११हिमर्त्तौ च पु० । १२शीतस्पर्शयुते त्रि० अमरः । १३अलसे त्रि० मेदि० । १४कथिते शब्दच० ।

**शीतक** पु० शीतमिव करोति कृ–ड । १दीर्घसूत्रिणि आलस्येन कार्याकरणाय शीतबाधामभिनीय २सुखिते मेदि० । शीत+स्वार्थे क । ३शीतपदार्थे ४शीतकाले मेदि० ५वृश्चिके शब्दमा० ६असनपर्ण्यां शब्दर० ।

**शीतकर** पु० शीतः शीतलः करो यस्य । १चन्द्रे २कर्पूरे च शीतकिरणादयोऽप्यत्र नि० । शीतं करोति कृ–अच् । ३शीतकारके ।

**शीतकाल** पु० ६त० । हिमर्त्तौ मार्गपौषमासद्वयात्मके काले

**शीतकुम्भ** पु० शीतं कुम्भाति कुम्भ–अच् नि० । १करवीरे रत्नमा० । २जलजवृक्षभेदे स्त्री राजनि० गौरा० ङीष् ।

**शीतकृच्छ्र** पु० "त्र्यहं शीतं पिबेत् तोयं त्र्यहं शीतं पयः पिबेत् । त्र्यहं शीतं घृतं पीत्वा वायुभक्षः परं त्र्यहम्" यमोक्ते व्रते ।

**शीतक्षार** न० कर्म० । श्वेतटङ्कणे राजनि० ।

**शीतगन्ध** न० शीतः शीतलः गन्धो यस्य । श्वेतचन्दने राजनि०

**शीतगु** पु० शीता गावः किरणा यस्य । १चन्द्रे २कर्पूरे च

**शीतचम्पक** पु० शीतः चम्पक इव । १दर्पणे २प्रदीपे च मेदि०

**शीतपर्णी** स्त्री शीतं पर्णं यस्याः ङीप् । अर्कपत्रिकायां रत्नमा० ।

**शीतपल्लवा** स्त्री शीतः पल्लवो यस्याः । भूमिजम्ब्वां रत्नमा०

**शीतपाकिनी** स्त्री शीते पाकोऽस्त्यस्याः इनि ङीप् । काकोल्यां शब्दच० ।

**शीतपाकी** स्त्री शीतेन पाको यस्याः ङीप् । १वाट्यालके शब्दच० । २काकोल्यां राजनि० ।

**शीतपुष्प** पु० शीतं शीतवीर्य्यकरं पुष्पं यस्याः । १शिरीषवृक्षे

राजनि० । २अतिबलायां स्त्री टाप् । शैलेये न० अर्क-वृक्षे पु० राजनि० ।

**शीतप्रभ** पु० शीतस्य हिमस्येव प्रभा यस्य । कर्पूरे राजनि०

**शीतप्रिय** पु० ६त० । पर्पटे राजनि० । [च राजनि० ।

**शीतफल** पु० शीतं शीतवीर्यकरं फलमस्य । १उदुम्बरे २शेलौ

**शीतबला** स्त्री शीतं बलं वीर्यं यस्याः ५ब० । महासम-ङ्गायां राजनि० । [च शब्दर० ।

**शीतभानु** पु० शीताः शीतलाभानवोऽस्य । १चन्द्रे २कर्पूरे

**शीतभीरु** स्त्री ७त० । १मल्लिकायाम् अमरः । २शीतभीते त्रि०

**शीतमञ्जरी** स्त्री शीतकाले मञ्जरी यस्याः स कप् । शेफा-लिकायां राजनि० ।

**शीतमयूख** पु० शीता मयूखा यस्य । १चन्द्रे २कर्पूरे च मेदि० । शीतमरीच्यादयोऽप्यत्र शब्दर० ।

**शीतमूलक** न० शीतं शीतवीर्यकर मूलमस्य कप् । १उशीरे (वेणारमूल) राजनि० । २शीतलमूलयुते त्रि० ।

**शीतरश्मि** पु० शीता रश्मयोऽस्य । १चन्द्रे २कर्पूरे च ज्यो०त

**शीतल** पु० शीत लाति ला–क शीतमस्त्यस्य लच् वा । १शी-तस्पर्शे २तद्वति त्रि० । ३मलयोद्भवे चन्दने न० ४शैलेये-५पुष्पकासीसे च मेदि० । ६पद्मके ७मौक्तिके राजनि० । ८वीरणमूले न० शब्दच० । ९असनपर्ण्याम् अमरः । १०अ-श्मपारवृक्षे ११चम्पके १२राले १३चन्द्रे १४कर्पूरे पु० राजनि० । [पु० राजनि० ।

**शीतलक** न० शीतलमिव इवार्थे कन् । १श्वेतोत्पले २मरुवके

**शीतलच्छद** पु० शीतलः शीतलस्पर्शवान् छदोऽस्य । १चम्पके-राजनि० । कर्म० । २शीतले पत्रे पु० ।

**शीतलजल** न० शीतलं जलं यस्मात् ५ब० । १उत्पले राजनि० । कर्म० । २शीतले वारिणि न० ।

**शीतलवातक** पु० शीतलो वातो धातुभेदो यस्मात् कप् । असनपर्ण्यां शब्दच० । तत्सेवने हि वायो. शीतलता ।

**शीतला** स्त्री १देवीभेदे "नमामि शीतलां देवीं रासभस्थां दिगम्बरीम् । मार्जनीकलशोपेतां शूर्पालङ्कृतमस्तकाम्" स्कन्दपु० । सा च विस्फोटकभेदनाशिनी । २जलजतृण-भेदे रत्नमा० तत्र ङीप् । ३कुट्टिनीवृक्षे ४आरा-मशीतलायां ५बालुकायां स्त्री राजनि० टाप् ।

**शीतवल्क** पु० शीतः शीतकरः वल्कोऽस्य । उदुम्बरे राजनि०

**शीतवीर्य्यक** पु० शीतं शीतलकरं वीर्यं यस्मात् ५ब० । कप् । १प्लक्षवृक्षे राजनि० । २शीतलवीर्यकरे त्रि० ।

**शीतशिव** न० शीतं शीतलमपि शिवम् । १सैन्धवलवणे २शैले

यनामगन्धद्रव्ये अमरः । ३मिश्रेयायां ४शमीवृक्षे च स्त्री राजनि० ५सक्तुफलवृक्षे मेदि० ६मधुरिकायां पु० अमरः ।

**शीतसह** पु० शीतं सहते सह–अच् । १पीलुवृक्षे शब्दच० । २नीलसिन्धुवारे ३वासन्त्यां स्त्री राजनि० टाप् ।

**शीता** स्त्री श्यै–क्त सम्प्र० । १लाङ्गलपद्धतौ भरतः २राम-पत्न्यां शब्दच० ३अतिबलायां ४कुट्टिन्यां ५दूर्वायां ६शिल्पिकाख्ये राजनि० ।

**शीतांशु** पु० शीताः अंशवो यस्य । १चन्द्रे २कर्पूरे च राजनि०

**शीताङ्गी** स्त्री शीतमङ्गमस्याः ङीप् । १हंसपदीवृक्षे रा-जनि० २शीतलदेहयुते त्रि० स्त्रियां ङीप् ।

**शीताद** पु० शीतमादत्ते आ+दा–क । दन्तमूलगते रोगभेदे दन्तरोगशब्दे ३४६६ पृ० दृश्यम् ।

**शीतार्त्त** त्रि० शीतेन आर्त्त । शीतालौ जटा० ।

**शीतालु** त्रि० शीत+अस्त्यर्थे आलुच् । शीतबाधायुक्ते जटा० ।

**शीतावला** स्त्री शीतमावलयति आ+वल–णिच्–अण् । महासमङ्गायां राजनि० ।

**शीताश्मन्** पु० कर्म० । चन्द्रकान्तमणौ राजनि० ।

**शीतीभाव** पु० शीत+अभूततद्भावे च्वि–भू–भावे घञ् । मोक्षे त्रिका० । तत्र तापत्रयशून्यत्वात्तथात्वम् ।

**शीतोत्तम** न० शीतमुत्तमं यत्र । जले शब्दच० ।

**शीत्कार** पु० शीदित्यस्य कारः शीत्+कृ–घञ् । स्त्रीणां रति काले अव्यक्ते ध्वनिभेदे जटा० । [अमर ।

**शी(सी)त्य** त्रि० शी(सी)ताम् अर्हति यत् । हलकृष्टे क्षेत्रादौ

**शीधु** पु०न० । शी–धुक् । इक्षुरसजाते मद्यभेदे अमर ।

**शीधुगन्ध** पु० शीधोरिव गन्धोऽस्य । वकुलवृक्षे त्रिका० ।

**शीन** त्रि० श्यै–क्त सम्प्र० तस्य नः । १घनीभूते घृतादौ २मूर्खे ३अजगरे च पु० मेदि० । [शीभते अशोभिष्ट ।

**शीभ** कथने भ्वा० आत्म०सक० सेट् ऋदित् चङि न ह्रस्वः ।

**शीर** पु स्त्री० शी–रक् । अजगरसर्पे शब्दच० स्त्रियां ङीष् ।

**शीरिन्** पु० शीरस्याकारोऽस्त्यस्य । हरिदर्भे राजनि० ।

**शीर्ण** त्रि० शॄ–क्त । १कृशे २शुष्कतामाप्ते च मेदि० ३स्थौ-णेयके भावप्र० ।

**शीर्णपत्र** पु० शीर्णं पत्रमस्य । १कर्णिकारवृक्षे शब्दच० । २निम्बे ३पट्टिकालोध्रे च राजनि० ४विशीर्णपत्रयुक्ते त्रि० । कर्म० । ५विशीर्णे पर्णे न० ।

**शीर्णपर्ण** पु० शीर्णं पर्णमस्य । १निम्बे राजनि० २विशी-र्णपत्रयुक्ते त्रि० कर्म० । ३विशीर्णे पत्रे न० ।

**शीर्णपाद** पु० शीर्णः पादोऽस्य नाट्ययापात् । शनैश्चरे

त्विका॰ तत्कथा छायाशब्दे २६८६ पृ॰ दृश्या । शीर्ण-
ङ्घ्रि प्रभृतयाऽप्यत्र ।

**शीर्णपुष्पी** स्त्री शीर्णं पुष्पमस्या ङीप् । अवाक्पुष्प्यां शब्दच॰ वा कप् । शीर्णपुष्पिका तत्रैव ।

**शीर्णमाला** स्त्री॰ शीर्णाना माला यत्र । १पृश्निपर्ण्यां शब्दच॰ । कप॰ । २विशीर्णे माल्ये ।

**शीर्णवृन्त** न॰ शीर्णं वृन्तमस्य । (तरमुज) फलवृक्षे शब्दच॰ ।

**शीर्वि** त्रि॰ शॄ-क्विन् न वत्नोपः । १अपकारके २हिंसके च सि॰कौ॰ ।

**शीर्ष** न॰ शिरस्+पृषो॰ शीर्षादेश॰ शॄ-क वुक्‌च वा । १मस्तके अमर । २कृष्णागुरुणि राजनि॰ । शसादौ शीर्ष्ण शीर्ष्णा इत्यादि ।

**शीर्षक** न॰ शीर्षं कायति कै-क । १शिरस्त्राणे ( टोपर ) २शिरोऽस्थ्नि राजनि॰ । ३जयपराजयपत्त्रस्थाप्यदण्डभेदे "शीर्षकस्योऽभियोक्तारि" याज्ञ॰ स्मृति । स्वार्थे क । ४मस्तके न॰ । तत्र कायति कै-क । ५राहुग्रहे शब्दर॰

**शीर्षच्छेद्य(दिक)** त्रि॰ शीर्षच्छेदमर्हति यत् ठञ् वा । वध्ये 'शीर्षच्छेद्यमतोऽहं त्वाम्' भट्टि ।

**शीर्षण्य** पु॰ शीर्षं बध्यते शीर्ष+यत् शीर्षन्नादेश । १शिरस्त्राणे अमर॰ । शीर्षे भव यत् । २विशदकचे पुं॰अमर ३विशदकचयुते त्रि॰ ।

**शीर्षरक्ष** न॰ शीर्षं रक्षति रक्ष-अण् । शिरस्त्राणे हारा॰ ।

**शील** समाधौ भ्वा॰ पर॰सक॰ सेट् । शीलति अशीशीलत् । "सरसीः परिशीलितु मया" नैषधम् । समाधिरत्र सेवा तत्र सक॰ प्रवृत्तिभेदो वा तत्र अक॰ ञ्चाद् वर्त्तमाने क्त । [शीलयति त अशिशीलत् त ।

**शील** अभ्यासे अतिशायने च चुरा॰ उभ॰ सक॰ सेट् ।

**शील** न॰ शील-अच् । १स्वभावे २सद्वृत्ते मेदि॰ ३चरित्रभेदे ४अजगरसर्पे पुंस्त्री॰शब्द॰र॰ स्त्रियां ङीप् । सद्वृत्तशीलस्य त्रयोदशविध हारीतोक्त यथा "ब्रह्मण्यता१ देवपितृभक्तता२ सौम्यता३ अपरोपतापिता४ अनसूयता५ मृदुता६ अपारुष्य७ मैत्रता८ प्रियवादिता९ कृतज्ञता१० शरण्यता११ कारुण्यता१२ प्रशान्तिश्चेति १३त्रयोदशविध शीलम् । ४रागद्वेषपरित्यागे मनुटी॰ गोविन्दराज॰ । ५कौशिकन्दसुनिपत्न्यां स्त्री ।

**शीलन** न॰ शील-ल्युट् । १अभ्यासे २अतिशायने ३प्रवर्त्तने च

**शीलित** त्रि॰ शील-क्त । १अभ्यस्ते २चीर्णे च त्रिका॰ ।

**शीवन्** पु॰ शी-क्वनिप् । अजगरसर्पे सि॰कौ॰ ।

**शुक** गतौ भ्वा॰ पर॰ सक॰ सेट् । शोकति अशोकीत् ।

**शुक** न॰ शुक-क । १ग्रन्थिपर्णे अमर । २वस्त्रे ३वस्त्राञ्चले ४शिरस्त्राणे हेमच॰ । ५व्यासपुत्रे "परागरकुलोत्पन्न शुकोनाम महायशा॰ । व्यासादरण्यां सम्भूतो विधूमोऽग्निरिव ज्वलन्" वह्निपु॰ । (सुवा) इति ख्याते ६खगभेदे पु॰ स्त्री स्त्रियां ङीप् । शुकदर्शनशुभादिकं वसन्तराजशाकुने उक्त यथा "वाम पठन् राजशुक प्रयाणे शुभ भवेद् दक्षिणत प्रवेशे । वनेचरा काष्ठशुका प्रयाहु॰ कुर्वन्ति हृदा वरदुःखमायतम्" । ७रावणमन्त्रिभेदे ८शिरीषवृक्षे (शेयालकाँटा) ९वृक्षे रत्नमा॰ १०कश्यपपत्न्यास्ताम्राया॰ कन्याभेदे स्त्री ङीप् । "काकीं श्येनीं तथा भासीं धृतराष्ट्रीं तथा शुकीम् । ताम्रा तु सुषुवे देवी पञ्चैता लोकविश्रुता" भा॰आ॰ ६६अ॰ ।

**शुकच्छद** न॰शुकस्य छदइव छदा दलमस्य । ग्रन्थिपर्णे जटा॰

**शुकजिह्वा** स्त्री शुकस्य जिह्वेव पर्णमस्याः । ( सुयाठोँटो ) वृक्षे रत्नमा॰ । [टयोऽप्यत्र ।

**शुकतरु** पु॰ शुकप्रियस्तरु । शिरीषवृक्षे रत्नमा॰ । शुकद्रुमा-

**शुकदेव** पु॰ व्यासपुत्रे मुनिभेदे । [शुकजिह्वावृक्षे रत्नमा॰ ।

**शुकनामन्** पु॰ शुक शुकजिह्वा नामास्य मध्यपदलोप ।

**शुकनाशन** पु॰ शुक नाशयति नश-णिच्-ल्यु । दद्रुघ्ने वृक्षे राजनि॰ ।

**शुकनास** पु॰ शुकस्य नासेव पत्त्रमस्य । शोणाकवृक्षे अमर । २शुकतुल्यनासायुक्ते त्रि॰ । ३कादम्बरीपक्ष प्रसिद्धे तारापीडस्य मन्त्रिभेदे पु॰ । [शब्दच॰ ।

**शुकपिण्डी** पु॰ शुकाना प्रिया पिण्डीव । शुकशिम्ब्या

**शुकपुच्छ** पु॰ शुकस्य पुच्छइव । १गन्धके हेमच॰ । वृत॰ । २शुकस्य पुच्छे पु॰ । [राजनि॰ ।

**शुकपुष्प** पु॰ शुकइव हरित् पुष्पमस्य । १शिरीषवृक्षे

**शुकप्रिय** पु॰ वृत॰ । १शिरीषवृक्षे भावप्र॰ । २जम्ब्वां स्त्री राजनि॰ ।

**शुकफल** पु॰शुकइव फलमस्य । अर्कवृक्षे राजनि॰ [शब्दच॰

**शुकबर्ह** न॰ शुकस्येव बर्होऽस्य । गन्धद्रव्यभेदे (गाँटियाला)

**शुकवल्लभ** पु॰ वृत॰ । १दाडिमवृक्षे राजनि॰ वृत॰ । तस्य २प्रिये त्रि॰ । [शब्दर॰ ।

**शुकशि(सि)म्बी** स्त्री शुकस्य शि(सि)म्बी॰ कपिकच्छ्वां

**शुकादन** पु॰ शुकैरद्यत अद-ल्युट् । दाडिमे शब्दच॰ ।

**शुकानना** स्त्री शुकस्याननमिव पत्त्रमस्याः । (सुयाठोँटा) वृक्षे रत्नमा॰ ।

कर्पूरा'। नारदः पारदः कुन्दस्फटिकास्फटिकादयः"।

**शुक्लकण्ठ** पुंस्त्री० शुक्लः कण्ठो यस्य। दात्यूहपक्षिणि शब्द-माला। स्त्रियां ङीष्।

**शुक्लकन्द** पु० शुक्लः कन्दो यस्य। १मण्डिपकन्दे २अतिवि-षायां स्त्री राजनि०। कर्म०। ३श्वेते कन्दे।

**शुक्लक्षीरा** स्त्री शुक्लं क्षीरं निर्यासो यस्याः। काकोल्यां राजनि०। [जटा०।

**शुक्लकर्म्मन्** त्रि० शुक्लं शुद्धं कर्म यस्य। पवित्रे शुभचरित्रे

**शुक्लकुष्ठ** न० कर्म०। श्वेतकुष्ठे (धवल)। [निर्यासयुते त्रि०।

**शुक्लदुग्ध** पु० शुक्लं दुग्धमस्य। १शृङ्गाटके शब्दच० २श्वेत-

**शुक्लधातु** पु० कर्म०। कठिन्यां (खडि) हेमच० २श्वेतधातौ च

**शुक्लपक्ष** पु० कर्म०। १उत्तरोत्तरचन्द्रकलाक्रियापक्षदयकात्मके चान्द्रमासार्द्धे ग्येतपक्षे २वके पुंस्त्री०। स्त्रियां ङीष्।

**शुक्लपुष्प** पु० शुक्लं पुष्पमस्य। १कुन्दाकवृक्षे २कुन्दवृक्षे ३मरु-वके च रत्नमा०। ४श्वेतपुष्पयुते त्रि०। ५नागदन्त्यां ६श्वे-तजुण्ड्यां स्त्री रत्नमा० ङीष्। कर्म०। ७शुभ्रे पुष्पे न०।

**शुक्लपृष्ठक** पु० शुक्लं पृष्ठमस्य कप्। विश्वदेववृक्षे शब्दच०।

**शुक्लयजुस्** न० कर्म०। इषेत्वेत्यादि चत्वारिंशदध्यायात्मके यजुर्वेदभेदे। [२तद्वति त्रि०। ३तथाभूतवृक्षे पु०राजनि०।

**शुक्लरोहित** पु० वर्णोवर्णेनेति कर्म०। १श्वेतरक्ते वर्णे

**शुक्लला** स्त्री शुक्लं लाति ला–क। उच्चटायां रत्नमा०।

**शुक्लवायस** पुंस्त्री० कर्म०। १वके त्रिका० २श्वेतकाके च। स्त्रियां ङीष्।

**शुक्लशाल** पु० कर्म०। १गिरिनिम्बे राजनि० २श्वेतवर्णवृक्षे च

**शुक्ला** स्त्री शुक्ल+अर्श आद्यच् टाप्। १सरस्वत्यां त्रिका०। २शर्करायां शब्दच०। ३काकोल्यां ४विदार्य्यां ५स्नुह्यां राजनि०। ६श्वेतवर्णवत्यां स्त्रियाञ्च।

**शुक्लाङ्गी** स्त्री शुक्लमङ्गमस्याः ङीष्। १शेफालिकायां रा-जनि०। २श्वेताङ्गयुक्ते त्रि०। [स्त्रियां ङीष्।

**शुक्लापाङ्ग** पुंस्त्री० शुक्लः अपाङ्गो यस्य। मयूरे हेमच०।

**शुक्लाम्ल** न० कर्म०। अम्लशाके राजनि०।

**शुक्लार्म्मन्** न० नेत्ररोगभेदे भावप्र० ४४२८९० द्रष्टव्यम्।

**शुक्लिमन्** पु० शुक्लस्य भावः इमनिच्। श्वेतवर्णे।

**शुक्लोपला** स्त्री कर्म० स उपलस्याः अच्। शर्करायां रत्नमा०

**शुङ्ग** पु० शम–ग नस्य नेत्त्वं नि० वात उत्त्वञ्च। १वटवृक्षे २आम्रातके ३शूके च मेदि०। ४पर्कटीवृक्षे ५धान्या-दिशूके च स्त्री राजनि०।

**शुङ्गाकर्म्मन्** न० शुङ्गैः वटशुङ्गैः सा सम्पद् कर्म० यत्र। गर्भसंस्कारभेदे "पुंसवने चन्द्रनामा शुङ्गाकर्म्मणि शोभनः" ति०त०। [१शुङ्गवति त्रि०।

**शुङ्गिन्** पु० शुङ्गोऽस्त्यस्य इनि। १वटवृक्षे २प्लक्षवृक्षे जटा०

**शुच** शोके क्लेदे च दिवा० उभ० अक० सेट्। शुच्यति ते इरित् अशुचत् अशोचीत् अशोचिष्ट ऋदित् शुक्तः। अनु+किञ्चिदुद्देशेन पश्चात्तापे सक०। अनुशोचति।

**शुच** शोके भ्वा० पर० सक० सेट्। शोचति अशोचीत्।

**शुच्** स्त्री शुच–क्विप्। शोके अमरः। वा टाप्। तत्रैव।

**शुचि** पु० शुच–कि। १वह्नौ २चित्रकवृक्षे ३आषाढमासे ४शृङ्गाररसे अमरः। ५ज्यैष्ठमासे मेदि० ६शुद्धाचरणे ७ग्रीष्मे ऋतौ ८शुक्लवर्णे अपि मेदि०। १०अग्निभेदे "पावकः पवमानश्च शुचिरग्निश्च ते त्रयः। निर्मथ्यः पवमानः स्यात् वैद्युतः पावकः स्मृतः। यश्चासौ तपते सूर्य्ये शुचिरग्निस्त्वसौ स्मृतः" कूर्मपु० १२अ०। ११श्वेत-वर्णे १२तद्वति त्रि० अमरः। शुचित्वञ्च शौच शुद्धता वैदिककर्म्माङ्गत्वप्रयोजकः संस्कारविशेषः। "शुचिस्सन् कालशौचौ कर्म कुर्य्यात्" श्रुतौ शौचस्य कर्माङ्गत्वं, स च स्नानादिजन्यः पुण्यभेदो वा। १३सूर्य्ये च "तपनस्तापन-श्चैव शुचिः सप्ताश्ववाहनः" सूर्य्यस्तवः। १४अर्कवृक्षे १५काश्यपपत्न्यास्ताम्रायाः कन्याभेदे स्त्री "षट्सुताश्च महा-सत्त्वास्ताम्रायाः परिकीर्त्तिताः। शुकी श्येनी च भासी च सुग्रीवी शुचिगृध्रिके" गरुडपु० ६अ०। १६शुद्धे १७उपहते त्रि० मेदि०।

**शुचिद्रुम** पु० कर्म०। अश्वत्थवृक्षे राजनि०।

**शुचिमल्लिका** स्त्री कर्म०। नवमल्लिकायां राजनि०।

**शुच्य** स्नाने अक० अभिषवे मन्थने पीड़ने सन्धाने च सक० भ्वा० पर० सेट् इदित् निष्ठा अनिट्। शुच्यति अशुच्यीत्।

**शुटीर** पु० शौटीर+पृषो०। वीरे त्रिका०।

**शुठ** गतिविघाते भ्वा०पर०अक० सेट्। शोठति अशोठीत्।

**शुठ** आलस्ये चु०उभ०अक०सेट्। शोठयति ते अशूशुठत् त।

**शुठ** शोषने वा चु० उभ० पक्षे भ्वा०पर० सक० सेट् इदित्। शुण्ठयति ते शुण्ठति अशुशुण्ठत् त अशुण्ठीत्।

**शुण्ठि(ण्ठी)** स्त्री शुठि–इन् वा ङीप्। (शुंट) शुष्कार्द्रके "शुण्ठी रुच्यामवातघ्नी पाचनी कटुका लघुः। स्नि-ग्धोष्णा मधुरा पाके कफवातविबन्धनुत्। हन्या त्सर्य्याँ च निःश्वासशूलकासहृदामयान्। हन्ति श्लीपदशोथार्श-श्चोरान् परिणामयेत्" भावप्र०।

**शुण्ठ्र** न० शुठि–रन्। शुण्ठ्यां शब्दच०।

कङ्करा॰। नारद॰ पारदः कुन्दस्फटिकास्फटिकादयः”।

**शुक्लकण्ठ** पुंस्त्री॰ शुक्लः कण्ठो यस्य। दात्यूहखगे शब्दमाला। स्त्रियां ङीष्।

**शुक्लकन्द** पु॰ शुक्लः कन्दो यस्य। १महिषकन्दे २अतिविषायां स्त्री राजनि॰। कर्म॰। ३श्वेते कन्दे।

**शुक्लक्षीरा** स्त्री शुक्लं क्षीरं निर्यासो यस्याः। काकोल्यां राजनि॰। [जटा॰।

**शुक्लकर्म्मन्** त्रि॰ शुक्लं शुद्धं कर्म यस्य। पवित्रे शुभचरित्रे

**शुक्लकुष्ठ** न॰ कर्म॰। श्वेतकुष्ठे (धवल)। [निर्यासयुते त्रि॰।

**शुक्लदुग्ध** पु॰ शुक्लं दुग्धमस्य। १शृङ्गाटके शब्दच॰ २श्वेत-

**शुक्लधातु** पु॰ कर्म॰। कठिन्या (खडि) हेमच॰ २श्वेतधातौ च

**शुक्लपक्ष** पु॰ कर्म॰। १उज्ज्वलगुणचन्द्रकलाक्रियापञ्चदशकात्मके चान्द्रमासार्द्धे श्येतच्छदे २बके पुंस्त्री॰। स्त्रियां ङीष्।

**शुक्लपुष्प** पु॰ शुक्लं पुष्पमस्य। १मरुबकवृक्षे २कुन्दवृक्षे ३मरुवके च रत्नमा॰। ४श्वेतपुष्पयुते त्रि॰। ५नागदन्त्यां ६शीतकुम्भ्यां स्त्री रत्नमा॰ ङीप्। कर्म॰। ७शुभ्रे पुष्पे न॰।

**शुक्लपृष्ठक** पु॰ शुक्लं पृष्ठमस्य कप्। बिम्बुकवृक्षे शब्दच॰।

**शुक्लयजुस्** न॰ कर्म॰। इषेत्वेत्यादि चत्वारिंशदध्यायात्मके यजुर्वेदभेदे। [२तद्वति त्रि॰। ३तथाभूतवृक्षे पु॰राजनि॰।

**शुक्लरोहित** पु॰ यथोक्तवर्णेनेति कर्म॰। १श्वेतरक्ते वर्णे

**शुक्लला** स्त्री शुक्लं लाति ला–क। चञ्चटायां रत्नमा॰।

**शुक्लवायस** पुंस्त्री॰ कर्म॰। १बके त्रिका॰ २श्वेतकाके च। स्त्रियां ङीप्।

**शुक्लशाल** पु॰ कर्म॰। १गिरिनिम्बे राजनि॰ २श्वेतवर्णवृक्षे च

**शुक्ला** स्त्री शुक्ल+अर्श आद्यच् टाप्। १सरस्वत्यां त्रिका॰। २शर्करायां शब्दच॰। ३काकोल्यां ४विदार्य्यां ५स्नुह्यां राजनि॰। ६श्वेतवर्णवत्यां स्त्रियाञ्च।

**शुक्लाङ्गी** स्त्री शुक्लमङ्गमस्याः ङीष्। १शेफालिकायां राजनि॰। २श्वेताङ्गयुक्ते त्रि॰। [स्त्रियां ङीप्।

**शुक्लापाङ्ग** पुंस्त्री॰ शुक्लः अपाङ्गो यस्य। मयूरे हेमच॰।

**शुक्लाम्ल** न॰ कर्म॰। चाङ्गेरीशाके राजनि॰।

**शुक्लार्म्मन्** न॰ नेत्ररोगभेदे भावप्र॰ ४४२८८॰ दृश्यम्।

**शुक्लिमन्** पु॰ शुक्लस्य भावः इमनिच्। श्वेतवर्णे।

**शुक्लोपला** स्त्री कर्म॰ स पल्लवस्याः अच्। शर्करायां रत्नमा॰

**शुङ्ग** पु॰ शम-ग नस्य नेत्त्वं नि॰ वत उकारश्च। १वटवृक्षे २आम्रातके ३प्लक्षे च मेदि॰। ४पर्कटीवृक्षे ५धान्यादिशूके च स्त्री राजनि॰।

**शुङ्गाकर्म्मन्** न॰ शुङ्गैः वटपल्लवैः या सम्यक् कर्म॰ यत्र। गर्भाधानसंस्कारभेदे “पुंसवने चन्द्रनाम्ना शुङ्गाकर्मणि शोभनः” ति॰त॰। [२शुङ्गवति त्रि॰।

**शुङ्गिन्** पु॰ शुङ्गोऽस्त्यस्य इनि। १वटवृक्षे २प्लक्षवृक्षे जटा॰

**शुच** शोके क्लेदे च दिवा॰ उभ॰ अक॰ सेट्। शुच्यति ते इरित् अशुचत् अशोचीत् अशोचिष्ट ईदित् शुक्तः। अनु+किञ्चिदुद्देशेन पश्चात्तापे सक॰। अनुशोचति।

**शुच** शोके भ्वा॰ पर॰ सक॰ सेट्। शोचति अशोचीत्।

**शुच्** स्त्री शुच–क्विप्। शोके अमरः। वा टाप्। तत्रैव।

**शुचि** पु॰ शुच–कि। १वह्नौ २चित्रकवृक्षे ३आषाढमासे ४शृङ्गाररसे अमरः। ५ज्यैष्ठमासे मेदि॰ ६शुद्धाचरणे ७ग्रीष्मे ऋतौ ८शुक्लमन्त्रिणि मेदि॰। १०अग्निभेदे “पावकः पवमानश्च शुचिरग्निश्च ते त्रय॰। निर्मथ्यः पवमानं स्यात् वैद्युतः पावकः स्मृतः। यश्चासौ तपते सूर्यं शुचिरग्निस्त्वसौ स्मृतः” कूर्मपु॰ १२अ॰। ११श्वेतवर्णे १२तद्वति त्रि॰ अमरः। शुचित्वञ्च शौच शुद्धता वैदिककर्माहत्वप्रयोजकः संस्कारविशेषः। “शुचिस्तत्कालजीवी कर्म कुर्य्यात्” श्रुतौ शौचस्य कर्माङ्गत्वं, स च स्नानादिजन्यः पुण्यभेदो वा। १३सूर्ये च “तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः” सूर्यस्तवः। १४अर्कवृक्षे १५काश्यपपत्न्यास्ताम्रायाः कन्याभेदे स्त्री “षट्सुतास्तु महासत्त्वास्ताम्रायाः परिकीर्त्तिताः। शुकी श्येनी च भासी च सुग्रीवी शुचिगृध्रिके” गरुडपु॰ ६अ॰। १६शुद्धे १७अनुपहते त्रि॰ मेदि॰।

**शुचिद्रुम** पु॰ कर्म॰। अश्वत्थवृक्षे राजनि॰।

**शुचिमल्लिका** स्त्री कर्म॰। नवमल्लिकायां राजनि॰।

**शुच्य** स्नाने अक॰ अभिषवे सन्धने पीडने सन्धाने च सक॰ भ्वा॰ पर॰ सेट् ईदित् निष्ठा अनिट्। शुच्यति अशुच्यीत्।

**शुटीर** पु॰ शौटीर+पृषो॰। वीरे त्रिका॰।

**शुठ** गतिविघाते भ्वा॰पर॰अक॰ सेट्। शोठति अशोठीत्।

**शुठ** आलस्ये चु॰उभ॰अक॰सेट्। शोठयति ते अशूशुठत् त।

**शुठ** शोषणे वा चु॰ उभ॰ पक्षे भ्वा॰पर॰ सक॰ सेट् इदित्। शुण्ठयति ते शुण्ठति अशुशुण्ठत् त अशुण्ठीत्।

**शुण्ठि(ण्ठी)** स्त्री शुठि–इन् वा ङीप्। (शुंट) शुष्कार्द्रके “शुण्ठी रुच्यामवातघ्नी पाचनी कटुका लघुः। स्निग्धोष्णा मधुरा पाके कफवातविबन्धनुत्। तथा स्मृता च निद्रावशूलकाससृद्दाभयान्। इति शादपोपाधि-कोदाम परिपालयेत्” भा॰प्र॰।

**शुण्ठ्र** न॰ शठि-रक्। शुण्ठ्राम् शब्दच॰।

शूकदोषे जाते पीडितं सद्यत् संरब्धम् सशोथं भवति तल्लिङ्गं स्फुटितमुच्यते। समूढपिडकामाह "पाणिभ्यां शूकसमूढे संमूढपिडका७ भवेत्"। शूकदोषे जाते पाणिभ्यां शूकसमूढे पिषिते लिङ्गे"। अत्रापि वातकोपत इत्यनुवर्त्तते। अथावमन्थमाह "दीर्घा बह्व्यश्च पिडका दीर्य्यन्ते मध्यतस्तु याः। सोऽवमन्थः८ कफासृग्भ्यां वेदना रोमहर्षकृत्"। दीर्घा दीर्घाङ्कुराः। पुष्करिकामाह "पिडका पिडकाव्याप्ता पित्तशोणितसम्भवा। पद्मकर्णिकसंस्थाना९ ज्ञेया पुष्करिकेति सा"। पिडकाव्याप्ता पार्श्वतः क्षुद्रपिडकाव्याप्ता। अतएव पद्मकर्णिकसंस्थाना। स्पर्शहानिमाह "स्पर्शहानिन्तु१० जनयेच्छोणितं शूकदूषितम्" अत्र स्पर्शासहत्वमेव लक्षणम्। उत्तमामाह "मुद्गमाषोपमा रक्ता रक्तपित्तोद्भवा च या। एषोत्तमेत्युक्ता पिडका११ शूकाजीर्णसमुद्भवा"। शतपोनकमाह "छिद्रैरणुमुखैर्लिङ्गं चितं यस्य समन्ततः। वातशोणितजो व्याधिं विद्येयः शतपोनकः१२"। शतपोनकश्चालनी तत्तुल्यत्वाच्छतपोनकः। त्वक्पाकमाह "वातपित्तकृतो ज्ञेयस्त्वक्पाको१३ ज्वरदाहकृत्"। शोणितार्बुदमाह "कृष्णैः स्फोटैः सरक्ताभैः पिडकाभिर्निपीडितम्। लिङ्गं यास्तु रुजाश्चोग्रा ज्ञेयं तच्छोणितार्बुदम्१४"। वास्तुरुजः स्फोटपिडकाधिष्ठानवेदनाः। अथ मांसार्बुदमाह "मांसदुष्टं विजानीयादर्बुदं मांससम्भवम्१५"। मांसपाकमाह "शीर्य्यन्ते यस्य मांसानि यस्य सर्वाश्च वेदनाः। विद्यात्तं मांसपाकन्तु१६ सर्वदोषकृतं भिषक्"। शीर्य्यन्ते गलन्ति। सर्वाश्च वेदनाः वातपित्तकफजाः। अथ विद्रधिमाह "विद्रधिः१७ सन्निपातेन यथोक्तमभिनिर्दिशेत्"। यथोक्तं सान्निपातिकं विद्रधिलक्ष्म कथयेत्। तिलकालकमाह "कृष्णानि चित्राण्यथ वा शुक्लानि सविषाणि तु। पतन्ति पातयन्त्याशु मेढ्रं निरवशेषतः। कालानि भूत्वा मांसानि शीर्य्यन्ते यस्य देहिनः। सन्निपातसमुत्थांश्च तान् विद्यात्तिलकालकान्१८"। चित्राणि नानावर्णानि। शुक्लानि शुक्लवर्णानि शङ्खाः क्रोशन्तीति वत्। सविषाणि सविषशूकाख्यजन्तुविशेषकृतत्वात्। शीर्य्यन्ते गलन्ति। कृष्णतिलतुल्यत्वात्तिलकालकाः। असाध्यमाह "तत्र मांसार्बुदं यच्च मांसपाकश्च यः स्मृतः। विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः"। [२रसे च मेदि०।

**शूकक** पु० शूके जलजन्तुभेदे कायति कै-क। १प्राट्काले

**शूककीट** पु० शूकाकाररोमयुक्तः कीटः शा०त० (शुया- पोका) कीटभेदे अमरः। स हि शूकाभरोमवान्।

**शूकधान्य** न० शूकयुक्तं धान्यम् शाक०। यवादौ धान्ये अमर। "व्रीह्यादिकं यदिह शूकसमन्वितं स्यात् तत् शूकधान्यमथ मुद्गमकुष्ठकादि। शिम्बीभिरुद्भवमिति तत् प्रवदन्ति शिम्बीधान्यं तृणोद्भवमथो तृणधान्यमन्यत्। तत्र त्रिदोषशमनं लघु शूकधान्यं तेजोबलातिशयवीर्य्यविवृद्धिदायि। देशे देशे शूकधान्येषु संख्या ज्ञातुं शक्या नो नरैर्दैवतैर्वा" राजनि०। "शूकधान्यं शमीधान्यं समातीतं प्रशस्यते। परतो वातकृद्रूक्षं प्रायेणाभिनवं गुरु" राजवल्लभः। [शब्दच०।

**शूकपिण्डी** स्त्री शूकस्य पिण्डीव। शूकशिम्बायां

**शूकर** पुंस्त्री० शू इत्यव्यक्तं शब्दं करोति कृ-अच् शूक+अस्त्यर्थे र वा। स्वनामख्याते पशौ अमर स्त्रियां ङीष्।

**शूकरकन्द** पु० शूकर इव रोमशः कन्दोऽस्य। वाराही-कन्दे राजनि०।

**शूकदंष्ट्रक** पु० गुदभ्रंशे क्षुद्ररोगभेदे "सदाहो रक्तपर्य्यन्तस्त्वक्पाकी तीव्रवेदनः। कण्डूमान् ज्वरकारी च स स्याच्छूकरदंष्ट्रकः" भावप्र० तल्लक्षणमुक्तम्।

**शूकरपादिका** स्त्री शूकरस्येव पादाः मूलान्यस्याः कप् अत इत्त्वम्। कोलशिम्ब्यां राजनि०।

**शूकराक्रान्ता** स्त्री शूकरेणाक्रम्यते स्म आ+क्रम-क्त ३त०। वराहक्रान्तायां शब्दच०।

**शूकरी** स्त्री शूकर आकारमस्त्येनास्त्यस्याः अच् गौरा० ङीष्। १वराहक्रान्ताया शब्दच०। शूकर+जातौ ङीष्। २तज्जातिस्त्रियाञ्च। [द्रव्य० त्रि०।

**शूकरेष्ट** पु० ६त०। १कसेरुनामकन्दे राजनि०। २वराहप्रिय-

**शूकवती** स्त्री शूकस्तीक्ष्णाग्रमस्त्यस्या मतुप् मस्य वः ङीप्। १कपिकच्छ्वां शब्दच०। २शूकयुते त्रि० स्त्रियां ङीप्।

**शूकशिम्बा** स्त्री शूकयुक्ता शिम्बा शाक०। कपिकच्छ्वां शब्दच०।

**शूकशिम्बि(म्बी)** पु० शूकयुक्ता शिम्बिः शाक० वा ङीप्। कपिकच्छ्वां शब्दच०।

**शूका** स्त्री शूकोऽस्त्यस्याः अच्। कपिकच्छ्वां शब्दच०।

**शूकापुट** पु० तृणमणिभेदे हारा०। [शब्दर०।

**शूतिपर्ण** पु० श्वि-क्तिच् शूति स्फीतं पर्णं यस्य। आरग्वधे

**शूद्र** पुंस्त्री० शुच-रक् पृषो० चस्य द दीर्घश्च। १चतुर्थे वर्णे स्त्रियां टाप्। शूद्रा शूद्रजातिस्त्रियाम्। पुंयोगे ङीष्। शूद्री शूद्रभार्य्यायाम्। शुचा द्रवति द्रु ड पृषो०। २शोकहेतुकगतियुक्ते शूद्रादिक्षरणशब्दे दृश्यम्।

अष्टादश पुराणानि चरितं राघवस्य च । रामस्य कुरुशार्दूल धर्मकामार्थसिद्धये । तथोक्तं भारतं वीर! पाराशर्य्येण धीमता । वेदार्थं सकलं योज्य धर्मशास्त्राणि च प्रभो !" इति भविष्यपुराणवचनाच्चैषां पौराणिकादिर्विधिः । योज्य योजयित्वा । अत्र च "श्राद्धं वेदमन्त्रवर्ज्जं शूद्रस्य इति वचने वेदेत्युपादानात् श्राद्धे पुराणमन्त्रः शूद्रैः पठनीय इति कैश्चिदुक्तं तन्न वराहपुराणे शूद्राणां मन्त्रवर्जित इत्यनेन मन्त्रमात्रनिषेधात् मत्स्यपुराणे नमस्कारेण मन्त्रेण इत्युपादानाच्च पौराणिकस्यापि श्राद्धे निषेधः प्रतीयते । एवं स्नानेऽपि "शूद्रस्याविद्यामेव मन्त्रवत् स्नानमिष्यते । तूष्णीमेव हि शूद्रस्य सनमस्कारकं मतम्" इत्यनेन नमस्कारविधानात् पञ्चयज्ञेऽपि । "शूद्रस्य द्विजशुश्रूषा तया जीवनवान् भवेत् । शिल्पैर्वा विविधैर्जीवेत् द्विजातिहितमाचरन् । भार्य्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियारतः । नमस्कारेण मन्त्रेण पञ्च यज्ञान् न हापयेत्" इति नमस्कारमात्रविधानात् श्राद्धादिषु पौराणिकमन्त्रनिषेध । तत्र स्नानश्राद्धतर्पणपञ्चयज्ञेतरत्र शूद्रस्य पौराणिकमन्त्रपाठ प्रतीयते । अत्र "षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले" इति मनुवचनात् "चूडा कार्य्या यथाकुलम्" इति याज्ञवल्क्यवचनाच्च संस्कारमात्रे कुलधर्मानुरोधेन कालान्तरस्य नामविशेषोच्चारणस्याभिधानाच्च शूद्रादीनां नामकरणे वह्निघोषादिकपद्धतियुक्तनामकरणस्य च प्रतीतेर्वैदिकमपि शूद्राणां पद्धतियुक्तनामाभिधानं क्रियते इति" । शूद्रस्याचमने देवलोक्तेन ओष्ठे जलं सकृत् क्षिपेत् न पिबेत् तथा च याज्ञवल्क्यः "हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः । शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः" । अन्ततो हृदयादिसमीपेन ओष्ठेन उपरासरमपक्षरीत् अतएव स्पृष्टाभिरित्युक्तं न तु भक्षिताभिरिति "स्त्रीशूद्रः शुध्यते नित्यं स्पर्शनाच्च करोष्ठयोः" इति ब्रह्मपुराणवचनाच्च । याज्ञवल्क्यः "प्राज्ञा प्राङ्मुख तीर्थेन द्विजो नित्यमुपस्पृशेत्" अत्र द्विजस्येवाचमने ब्राह्मतीर्थोपादानात् स्त्रीशूद्रयोर्न तेनाचमनम् इत्येव मिताक्षरायां व्यक्तम् मरीचिना "स्त्रियश्चैद्विधं तीर्थं शूद्रजातेस्तथैव च । सकृदाचमनाच्छुद्धिरेतयोरेव चोभयोः" इति । एतदनन्तरम् इन्द्रियादिस्पर्शनन्तु शाखान्तरीयप्रमाणान्तरत्र सामवेदिविप्राणामाङ्गिकतत्त्वयोरेवमेवम् आ० त० रघु० ।

**शूद्रकर्म्मन्** न० शूद्रस्य शास्त्रविहितं कर्म । शूद्रकर्त्तव्ये द्विजसेवादौ शूद्रकृत्यादयोऽप्यत्र ।

**शूद्रप्रिय** पु० ६त० । पलाण्डौ राजनि० ।

**शूद्राधिकरण** शूद्रस्य विद्यायामधिकारोऽस्ति नवेति सन्देहे नाधिकार इति निर्णायके शारीरकसूत्रोक्ते अधिकरणभेदे तच्चाधिकरणं तत्र दर्शितं यथा

"शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि" सू० "यथा मनुष्याधिकारनियममपोह्य देवादीनामपि विद्यास्वधिकार उक्तस्तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यादित्येतामाशङ्कां निवर्त्तयितुम् इदमधिकरणमारभ्यते । तत्र शूद्रस्याप्यधिकारः स्यादिति तावत् प्राप्तम्, अर्थित्वसामर्थ्ययोः सम्भवात्, "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इतिवत् शूद्रो विद्यायामनवक्लृप्त इति निषेधाश्रवणात् । यच्च कर्मस्वनधिकारकारणं शूद्रस्यानग्नित्वं न तद्विद्यास्वधिकारस्यापवादकम् । न ह्याहवनीयादिरहितेन विद्या वेदितुं न शक्यते । भवति च लिङ्गं शूद्राधिकारस्योपोद्बलकं, संवर्गविद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्देन परामृशति "अह हारेत्वा शूद्र ! तवैव सह गोभिरस्तु" इति । विदुरप्रभृतयश्च शूद्रयोनिप्रभवा अपि विशिष्टविज्ञानसम्पन्नाः स्मर्य्यन्ते, तस्मादधिक्रियते शूद्रो विद्यास्विति एवं प्राप्ते ब्रूमः । न शूद्रस्याधिकारो वेदाध्ययनाभावात् । अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते, न च शूद्रस्य वेदाध्ययनमस्ति, उपनयनपूर्वकत्वाद्वेदाध्ययनस्य उपनयनस्य च वर्णत्रयविषयत्वात् । यत्त्वर्थित्वं न तदसति सामर्थ्येऽधिकारकारणं भवति । सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात् शास्त्रीयस्य च सामर्थ्यस्याध्ययननिराकरणेन निराकृतत्वात् । यच्चेदं शूद्रो यज्ञेऽनवक्लृप्त इति तत् न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयति न्यायस्य साधारणत्वात् । यत् पुनः संवर्गविद्यायां शूद्रशब्दश्रवणं लिङ्गं मन्यसे न तल्लिङ्गम्, न्यायाभावात् । न्यायोक्ते हि लिङ्गदर्शनं द्योतकं भवति, न चात्र न्यायोऽस्ति कामञ्चायं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां शूद्रमधिकुर्यात् तद्विषयत्वात् न सर्वासु विद्यासु, अर्थवादस्थत्वात् न तु क्वचिदप्ययं शूद्रमधिकर्त्तुमुत्सहते । शक्यते चायं शूद्रशब्दोऽधिकृतविषये योजयितुम् । कथमित्युच्यते । "कं वर एनमेतत् सन्तं

ब्रुमुग्धानमिव रैक्वमात्थेति, अथाहं हंसवाक्यादात्मनोऽनादरश्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत्पेदे तामृषी रैक्वः शूद्रशब्देनानेन सूचयाञ्चभूवात्मनः परोक्षज्ञतां ख्यापनायेति गम्यते, जातिशूद्रस्यानधिकारात् । कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यते इति, उच्यते, तदा शुचमभिदुद्राव शुचा वाभिदुद्रुवे शुचा वा रैक्वमभिदुद्रावेति शूद्रावयवार्थसम्भवात् रूढार्थस्य चासम्भवात् । दृश्यते चायमर्थोऽस्यामाख्यायिकायाम्" ।

**शूद्रार्त्ता** स्त्री शूद्रेणार्त्ता पीडिता । प्रियङ्गौ शब्दच० ।

**शूद्रावेदिन्** त्रि० शूद्रां विन्दति विद–णिनि उप० । शूद्रजातिस्त्रिया विवाहकर्त्तरि । "शूद्रावेदी पतत्यत्रेः" मनुः "कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः । शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते । ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः" इति मनुना कामतयाऽसवर्णविवाहे विहितेऽपि शूद्रावेदीत्यस्याधिकदोषार्थता द्विजातिस्त्रीलाभे शूद्रस्त्रीविवाहनिषेधार्थता च । स च विवाहः युगान्तरविषयः कलौ असवर्णस्त्रीविवाहनिषेधात् कलिवर्ज्ये १८०२ पृ० दृश्यम् ।

**शूद्रान्न** न० ६त० । शूद्रस्वामिकान्ने तस्य द्विजैरभक्ष्यत्वं यथा हारीतः "शूद्रान्नेन तु भुक्तेन उदरस्थेन यो मृतः । स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चाधिगच्छति" आ०त० धृत वाक्यं शूद्रान्नं शूद्रस्वामिकान्नं रघु० । "आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते" इति तत्पक्वान्नस्य सर्वथा निषेधात् आममेव शूद्रस्वामिकान्नं गृह्यते । तद्दत्तमपि भोजनकाले तद्गृहावस्थितं तदपि शूद्रान्नं तदाहाङ्गिराः "शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि । निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम्" तेन शूद्रवेश्मस्थितक्षीरदध्यादिकमपि शूद्रान्नं पारिभाषिकमिति बोध्यम् । निवृत्तेन शूद्रान्नानिवृत्तेन । तदपीति अपिशब्दात् साक्षाद्दत्तघृतमध्वादि न तु तद्गृहपदेकाद्विना क्रीतमपि । स्वगृहागते शूद्रान्ने अङ्गिराः "यथा यतस्ततो ह्यापः शुचि यान्ति नदीं गताः । शूद्राद्विप्रगृहेष्वन्नं प्रविष्टन्तु सदा शुचि" प्रविष्टं स्वत्वापादकप्रतिग्रहादिनेति शेषः । अतएव पराशरः "तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः । द्विजातिकरसंस्पृष्टं सर्वं तद्धविरुच्यते" । स्पृशति प्रतिगृह्णातीति कल्पतरुः । तत्र संभोज्य पात्रमित्याह विष्णुपु० "संभोज्य प्रतिगृह्णीयाच्छूद्रान्नं गृहमागतम्" तत्र पात्रान्तरे पात्रमित्याहाङ्गिराः "स्वपात्रे यत्तु विन्यस्तं शूद्रो यच्छति नित्यशः । पात्रान्तरगतं ग्राह्यं दुग्धं स्वगृहमागतम्" । एतेन स्वगृहमागतस्यैव शुद्धत्वं प्रतीयते ततश्चैतादृशापसम्पूर्णा शूद्रान्नं सर्वथा न भोक्तव्यम् माधवहारीतवचने तन्निन्दाश्रवणात्" शु०त० "माद्यात् शूद्रस्य विप्रोऽन्नं मोहाद्वा यदि वाऽन्यतः । स शूद्रयोनिं व्रजति यस्तु भुङ्क्ते ह्यनापदि । षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम् । जीवन्नेव भवेत् शूद्रो मृतः श्वा चाभिजायते । ब्राह्मणक्षत्रियविशां शूद्रस्य च मनीषिणः । यस्यान्नेनोदरस्थेन मृतस्तद्योनिमाप्नुयात्" व्यासवाक्यम् "आर्द्धिकः कुलमित्रञ्च गोपालो दासनापितौ । एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् । कुशीलवः कुम्भकारः क्षेत्रकर्मक एव च । एते शूद्रेषु भोज्यान्ना दत्त्वा स्वल्पपणं बुधैः । पायसं स्नेहपक्वञ्च यावकञ्चैव सक्तवः । पिण्याकश्चैव तैलञ्च शूद्राद् ग्राह्यं द्विजातिभिः" कूर्मपु० उत्त० भागे १६ अ० । "कन्दुपक्वानि तैलेन पायसं दधिसक्तवः । द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि" । "कुलमित्रादीनां भोज्यान्नता तु कलौतरपरा । शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम् । भोज्यान्नता गृहस्थस्य तीर्थसेवाऽतिदूरतः" पराशरेण कलौ वर्ज्यत्वोक्तेः शूद्रोऽपि ब्राह्मणद्वारा पक्वान्नेन नैवेद्यं दातुमर्हति वृषोत्सर्गीयचरुपाकादिवत् तत्रापि तस्याधिकार इति ति०त० दुर्गोत्सवप्रकरणे रघुनन्दनेन व्यवस्थापितम् तत्र दृश्यम् ।

**शूद्रासुत** पु० शूद्रायाः द्विजातिभिः ऊढायाः सुतः । द्विजातिजाते शूद्रजातिस्त्रियाः सुते पुत्रभेदे ।

**शूना** स्त्री श्वि–अधिकरणे–क्त संप्र०दीर्घः । प्राणिवधस्थाने हला० "पञ्च शूना गृहस्थस्य चुल्ली पेषण्युपस्करः । कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्" मनुः । तद्दोषनिवृत्तये कार्या मनुना पञ्च यज्ञा विहिता यथा "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् । पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः । स गृहेऽपि वसन्नित्यं शूनादोषैर्न लिप्यते" । (आलजिह्व) २ उपजिह्वायां हारा० ।

**शून्य** त्रि० शूनायै प्राणिवधाय हितम् दुःखस्थानत्वात् यत् । १ निर्जनस्थाने मेदि० । २ आकाशे शब्दच० । ३ बिन्दुमात्रे हेमच० । ४ अभावे च अमरः । ५ असम्पूर्णे ६ ऊने ७ शून्ये च त्रि० अमरः । [२ शून्यमध्ययुक्ते त्रि० ।

शून्यमध्य पु० शून्यमाकाशो मध्ये यस्य । १नले राजनि० ।

शून्यवादिन् पु० शून्यमभावमात्रं सर्वकारणतया वदति वद–णिनि । बौद्धभेदे बुद्धशब्दे ४५८१ पृ० दृश्यम् ।

शून्या स्त्री शून्यमन्तरमस्याः अच् । १नल्यां विश्व० । २सक्षाकण्टकिन्याम् । (फणिमनसा) राजनि० । [ईदित् शूर्प०

शूर हिंसे स्तम्भे च दि०आ०सक०सेट् । शूर्यते अशूरिष्ट ।

शूर विक्रमे अद० चु० उभ० सक० सेट् । शूरयति ते अशुशूरत् त ।

शूर पु० शूर–अच् । १वीरे विक्रमवति अमरः । २वसुदेवजनके यादवे मेदि० ३सूर्य्ये त्रिका० ४अर्कवृक्षे ५सिंहे ६शूकरे पुंस्त्री० स्त्रियां ङीष् । ७चित्रकवृक्षे ८साले ९लिकुचे १०मसूरे च पु० राजनि० ।

शूरण पु० शूर–ल्यु । (ओल) १सूरणभेदे अमरः "शूरणो दीपनो रूक्षः कषायः कण्डुकृत् कटुः । विष्टम्भी विशदो रुच्यः कफार्शःकृन्तनो लघुः । विशेषादर्शसे पथ्यः प्लीहगुल्मविनाशनः । सर्वेषां कन्दशाकानां शूरणः श्रेष्ठ उच्यते । दद्रूणां रक्तपित्तानां कुष्ठानां न हितो हि सः । सन्धानयोगसम्प्राप्तः शूरणो गुणवत्तमः" भावप्र० । २श्योनाकवृक्षे च शब्दमाला । [च ।

शूरसेन पु० शूरा सेना यत्र, यस्य वा । १देशभेदे २नृपभेदे

शूर्प माने चु० उभ० सक० सेट् । शूर्पयति ते अशुशूर्पत् त ।

शूर्प पु० शूर्प्यते धान्यादिकमनेन शूर्प–घञ् । (कुला) धान्यादिस्फोटके १शस्यनयपात्रे २द्रोणद्वयपरिमाणे च शब्दच० ।

शूर्पकर्ण पुंस्त्री० शूर्पे इव कर्णौ यस्य । १गजे त्रिका० । स्त्रियां ङीष् । २शूर्पश्रुतिरप्यत्र हारा० ।

शूर्पणखा(खी) स्त्री शूर्पे इव नखा अस्याः णत्वम् वा ङीष् । रावणभगिन्यां शब्दमा० । [शब्दच० ।

शूर्पपर्णी स्त्री शूर्पमिव पर्णमस्याः ङीप् । शिम्बीभेदे

शूर्पवात पु० ६त० । शूर्पजवायौ फुक्कफाले त्रिका० ।

शू(सू)र्म्म पु०शॄ–उ ऊर्मिरन्तरमस्या० अच् वा पृषो०साधु म । लौहप्रतिमायाम् अमरः । [लौहादिप्रतिमायां शब्दच० ।

शू(सू)र्मि(र्मी) स्त्री शॄ–उ ऊर्मि यस्याः वा सत्वम् वा ङीप् ।

शूल रुजायां भ्वा०पर० अक० सेट् । शूलति अशूलीत् ।

शूल पुं०न० शूल–क । १रोगभेदे २त्रिशूले च अमरः । ३ध्वजे ४मृत्यौ ५सतीरुष्णे अय फाले धरणि । ६चिह्ने मेदि० । ७मुनिभेदे विष्कम्भादिषु दशमे योगे च पु० । ८विक्रेतव्ये "शूलशूला जनपदाः शिवशूलाश्चतुष्पथाः । केशशूलाः स्त्रियो राजन् ! भविष्यन्ति युगक्षये" भार०व० १८८ अ० । अष्टशब्दे ८५५पृ० दृश्यम् । शूलरोगभेदनिदानादिकं भावप्र० उक्तं यथा

"अथ शूलाधिकारः । तत्र शूलस्य सन्निकृष्टं निदानमाह "दोषैः पृथक्समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत् । सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः (कर्त्ता)" । अथ वातिकस्य विप्रकृष्टं निदानं सम्प्राप्तिपूर्वकं लक्षणञ्चाह "व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात् । कलायमुद्गाढककोरदूषादत्यर्थरूक्षाध्यशनाभिघातात् । कषायतिक्तातिविरूढजान्नविरुद्धवल्लूरकशुष्कशाकैः । विट्शुक्रमूत्रानिलवेगरोधाच्छोकोपवासादतिहास्यभाषात् । वायुः प्रवृद्धो जनयेद्धि शूलं हृत्पृष्ठपार्श्वत्रिकबस्तिदेशे । जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढम् । मुहुर्मुहुश्चोपशमप्रकोपौ विण्मूत्रसंस्तम्भनतोदभेदैः । संस्वेदनाभ्यञ्जनमर्दनाद्यैः स्निग्धोष्णभोज्यैश्च शमं प्रयाति" । व्यायामो मल्लयुद्धादिः यानं तुरगरथादि मैथुनं स्त्रीसेवा प्रजागरो रात्रौ, एषामतियोगात् शीतजलप्रभूतपानात् कलायस्त्रिपुट आढकः तुवरी कोरदूषः कोद्रवः । अतिरूक्षद्रव्यसेवा, अध्यशनं भुक्तस्योपरि भोजनम् अभिघातो लोष्टादिभिः, कषायतिक्तरससेवा विरूढजान्नम् विरूढमङ्कुरितमन्नम् कलायचणकादि तज्जमन्नं भक्ष्यम् । वल्लूरकं शुष्कमांसम् । तस्य शूलस्य देशमाह हृदादिषु तत्र हृच्छूलस्य पृथगपि लक्षणं पठन्ति "कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छितः । हृदिस्थः कुरुते शूलमुच्छ्वासायासरोधकम् । स हृच्छूल इति ख्यातो रसमारुतकोपजः" । अथ पार्श्वशूलस्यापि लक्षणमाह "कफनिरुद्धः पवनः सूचीभिरिव निस्तुदन् । पार्श्वस्थः पार्श्वयोः शूलं कुर्य्यादाध्मानसंयुतम् । तेनोच्छ्वसिति वक्त्रेण नरोऽस्वप्नं न चाप्नुति । निद्राञ्च नाप्नुयादेव पार्श्वशूलः प्रकीर्त्तितः" । बस्तिशूलस्यापि लक्षणमाह "वेगरोधात् कुपितो वायुर्बस्तिं स्वस्थित्य तिष्ठति । बस्तेरध्वनि नाभ्योषु तत्र शूलोऽस्य जायते । विण्मूत्रवातसंरोधी बस्तिशूलः स उच्यते" । प्रकृतमनुसरति जीर्णे भुक्ते प्रदोषे रात्र्यागमे रात्रिभवशीतेन वातप्रकोपात् । घनागमे वर्षासु मेघोदये च तथैव । पैत्तिकमाह "क्षारातितीक्ष्णोष्णविदाहितैलनिष्पावपिण्याककुलत्थयूषैः । कट्वम्लसौवीरसुराविकारैः क्रोधानलायासरविप्रतापैः । ग्राम्यातियोगादशनैर्विदग्धैः पित्तं प्रकुप्याशु करोति शूलम् । तृण्मोह-

दधिवृमरसं टप्रा सुप्तः क्रतो रसो यस्य तत्क्षीरं दधि युक्तं क्षीरमित्यर्थः । "व्यायाम मैथुन मद्यं लवणं कटुकं रसम् । वेगरोधं शुच क्रोध विदल शूलवान् त्यजेत्" ।
स च उपपातकचिह्नं यथोक्त शाता० कर्मवि०
"जलोदरयकृत्प्लीहशूलरोगव्रणानि च । श्वासा-जीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः । रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः" ।

**शूलक** पुस्त्री० शूल+स्वार्थे कन् । १दुर्विनीताश्वे हेमच० । स्त्रियां ङीप् । स्वार्थे क । २शूलशब्दार्थे ।

**शूलग्रन्थि** पु० शूलाकार ग्रन्थिरस्य । मालादूर्वायां राजनि०

**शूलघातन** न० शूलं रोगभेदं घातयति हन-णिच्-ल्यु । मण्डूरे शब्दच० ।

**शूलघ्न** पु० शूलं हन्ति हन-क । तुम्बुरुवृक्षे रत्नमा० ।

**शूलद्विष** पु० ६त० । हिङ्गौ रत्नमाला । [शब्दच० ।

**शूलधन्वन्** पु० शूलं धनुरायुधमस्य अनङ् समा० । शिवे

**शूलधर** पु०शूल धारयति धारि-अच् स्नसः । शिवे शब्दच०। धृ-क्विप् । शूलभृदप्यत्र । [स्त्री ङाप् शब्दच०।

**शूलधारिन्** पु० शूलं धरति धृ-णिनि । १शिवे १दुर्गायां

**शूलधृष्** पु० शूलेन धर्षति दैत्यान् धृष-क्विप् । १शिवे २दुर्गायां स्त्री । धृष-क्विन् । शूलधृष् तत्रार्थे ।

**शूलनाशन** न० शूलं नाशयति नश-णिच्-ल्यु । सौवर्च-लवणे हेमच० । [राजनि० ।

**शूलपर्णी** स्त्री शूलमिव पत्रं यस्याः ङीप् । शूलोदय्ये

**शूलपाणि** पु०शूलं पाणौ यस्य । शिवे शूलहस्तादयोऽप्यत्र ।

**शूलशत्रु** पु० शूलस्य रोगस्य शत्रुः । एरण्डवृक्षे शब्दच० ।

**शूलहन्त्री** स्त्री शूलं रोगं हन्ति हन-तृच् ङीप् । यवान्यां राजनि० ।

**शूलहृत्** पु० शूलं रोगं हरति हृ-क्विप् । हिङ्गुनि त्रिका०।

**शूला** स्त्री शूलं तदाकारोऽस्त्यस्य शूल स्वयौवनविक्रेय-तयाऽस्त्यस्या वा अच् । १दुष्टमध्यर्थकीलके २वेश्यायाञ्च त्रिका० ।

**शूलाकृत** त्रि० शूलेन विद्धा कृत पक्वम् शूल+डाच्+कृ-क्त । लौहादिकीलकेन विद्धा पक्वे मांसे (काबाब)अमर०

**शूलिक** त्रि० शूलं पाकसाधनत्वेनास्त्यस्य ठन् । १शूला-कृत शब्दच० २शशके हेमच० ३शूलयुते त्रि० ।

**शूलिन्** पु० शूलमस्त्यस्य इनि । १शूलरोगयुक्ते २शूलास्त्र धारके त्रि० ३शिवे पु० ४शशके भावप्र० । [हिङ्गु शब्दच०।

**शूलिम** पु० शूलं तदाकार फलमस्त्यस्य इनच् । भाष्कोर-

**शूली** स्त्री शूलं पत्राकारे अस्त्यस्य अच् गौरा० ङीप् । शूलाकारपत्रयुते सनामख्याते तृणभेदे राजनि० ।

**शूलोत्खा** स्त्री शूलं रोगभेदमुत्खनति उद्+खन-ड । सामराज्यां शब्दच० ।

**शूल्य** त्रि० शूले संस्कृतं यत् । शूलाकृते मांसे भावप्र० कृतान्नशब्दे तत्पाकादि ०१८१ पृ० दृश्यम् ।

**शूष** प्रसवे भ्वा० पर० सक० सेट् । शूषति अशूषीत् ।

**शृ(स्),गाल** पुंस्त्री० असृक् लाति ला-क पृषो० । (शेयाल) १पशौ अमर स्त्रियां ङीप् । २दैत्यभेदे मेदि० । ३वासु-देवे ४निष्ठुरे ५खले च पु० सारसुन्दरीधानम् । पृषो० । शृकाल तत्रार्थे शब्दच० । ६भीरौ अमरार्थकोष० । शृगालशब्दशाकुन शिवारुतशब्दे दृश्यम् ।

**शृगालकण्टक** पु० शृगालस्येव इव कण्टको यस्य । (शे-याकाँटा) क्षुपभेदे शब्दच० ।

**शृगालकोलि** पु० शृगाल इव कण्टकिता कोलिः । (शेया-कुल) क्षुपभेदे रत्नमाला । [जाम्बे क्षुपभेदे राजनि०।

**शृगालघण्टी** स्त्री शृगाल इव कण्टकिनी घण्टी । कोकि-

**शृगालजम्बू** स्त्री शृगालप्रिया जम्बूरिव । १गोडुम्बे (गोमुक) २घोण्टाफले मेदि० । [राजनि० ।

**शृगालविन्ना** स्त्री शृगालैर्विद्यते विद-क्त । पृश्निपर्ण्यां

**शृगालिका** स्त्री शृगालस्य भार्या ङीप् स्वार्थे क । १शृ-गालयोषिति शृगालीव इवार्थे कन् । २भयात् पलायने मेदि० ।

**शृगाली** स्त्री शृगालस्तत्पलायन सादृश्येनास्त्यस्य अच् ङीप् । १पलायने त्रिका० । २कोकिलाक्षे ३विदार्यां राजनि० ।

**शृङ्खल** पु० शृङ्गात् प्राधान्यात् खल्यतेऽनेन पृषो० । निगडे २लौहमये ३पादबन्धने च हेमच० । ४कट्याभरणे अमरः ५पुस्कटीवस्त्रबन्धने मेदि० । तत्रार्थे स्त्रीत्वमपि टाप् ।

**शृङ्खलक** पुस्त्री० शृङ्खल इव कायति कै-क । १उष्ट्रे राजनि० स्त्रियां जातित्वात् ङीप् स्वार्थे क । २शृङ्खलशब्दार्थे ।

**शृङ्खलित** त्रि०शृङ्खला जाताऽस्य इतच् । बद्धनिगडे धनञ्जयः

**शृङ्खली** स्त्री शृङ्खलः तदाकारोऽस्त्यस्या अच् गौरा०ङीप् । १कोकिलाक्षे क्षुपे २पुस्कटीवस्त्रबन्धने च राजनि० ।

**शृङ्ग** न० शृ-गन् पृषो० ह्रस्व उगम नुम च । १पर्वतोपरिभागे सानौ अमर० । २प्रभुत्वे ३चिह्ने ४जलक्रीडार्थयन्त्रभेदे (पिचकारी) ५पशादीनां विषाणे (शिङ्गा) ६उत्कर्षे च मेदि० ७अग्रे ८तीक्ष्णे ८पद्मे च शब्दर० १०शृङ्गिम-

शृङ्गनिर्मितवाद्यभेदे (शिङ्गा) ॥कामोद्रेके सा०द० शृङ्गा रमवन्दे, हयग्रम् । १२कूर्चशीर्षकदृक्षे पु० मेदि० १३मुनिभेदे पु० ।

**शृङ्गक** पु० शृङ्गमिव कायति कै–क । जीवकवृक्षे भट्टा० ।

**शृङ्गकन्द** पु० शृङ्गमिव कन्दोऽस्य । शृङ्गाटके (पानीफल) राजनि० ।

**शृङ्गज** न० शृङ्गे पर्वताग्रे जायते जन–ड । १अगुरुचन्दने रत्नमा० । २वाणे शरवृक्षे पु० शब्दचिन्ता० ३शृङ्गजातमात्रे त्रि० ।

**शृङ्गमूल** पु० शृङ्गमिव मूलमस्य । शृङ्गाटके राजनि० ।

**शृङ्गमोहिन्** पु० शृङ्गाय कामोद्रेकाय मोहयति मुह–णिच्–णिनि । चम्पके राजनि० ।

**शृङ्गला** स्त्री शृङ्गं तदाकारफलं लाति ला–क । अजशृङ्ग्यां (गाड़रशिङ्गा) शब्दच० ।

**शृङ्गवत्** पु० शृङ्गं प्राधान्येनास्त्यस्य मतुप् मस्य वः । १सीमापर्वतभेदे तन्नामादिमाग० ११।१६ अ० उक्तं यथा "उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवान् इति त्रयो रम्यकहिरण्मयकुरूणां मर्यादागिरयः प्रागायता उभयतः क्षारोदावधयः द्विसहस्रयोजनपृथव एकैकशः पूर्वस्मात् पूर्वस्मादुत्तरोत्तरं दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति" । २शृङ्गयुते त्रि० ।

**शृङ्गवेर** न० शृङ्गमिव वेरमवयवो यस्य । १आर्द्रके अमरः । २शुण्ठ्यां ३रामभिन्नगुहकचण्डालपुरे च । स्वार्थे क । आर्द्रके हेमच० । [एरकाद्ये भावप्र० ।

**शृङ्गवेराभमूलक** पु० शृङ्गवेरेण तुल्यं मूलमस्य कप् ।

**शृङ्गाट** पु० शृङ्गं प्राधान्यमटति अट–अण् । १उत्तरस्य पर्वतभेदे २चतुष्पथे ३जलकण्टकिवृक्षे च ४तत्फले न० । "शृङ्गाटकं हिमं स्वादु गुरु वृष्यं कषायकम् । ग्राहि शुक्रानिलश्लेष्मप्रदं पित्तास्रदाहनुत्" भावप्र० । स्वार्थे क । तत्र, चतुष्पथे जलकण्टकिवृक्षे शृङ्गाटके च । स च पर्वत कामाख्यादेशस्य यथोक्तं कालिकापु०८२अ० यथा "हीनवत्याः पूर्वतस्तु शृङ्गाटो नाम पर्वतः । तत्र मध्ये देवस्य लिङ्गमेकं प्रतिष्ठितम् । सरित्तु सिद्धा निःसोता दक्षिणोदधिगामिनी । शृङ्गाटकस्य सततं स्नानतो पापवर्जितः । दक्षिणं सागरं याति भर्गस्य प्रियकारिणी । चक्रमासमेदे तत्पाकविधिर्यथा "शुक्लमाषं तण्डुलकं कर्त्तितं क्लेदितं जले । ततस्तं हिङ्गुसहितं क्षपयाद्रकसंयुतम् । एलाजीरकधन्याकनिम्बूरससमन्वितम् । इति सगन्धं तद्भृष्टं पूरणं प्रोच्यते बुधैः । शृङ्गाटकं समितया कृतं पूरणपूरितम् । पुनः सर्पिषि सम्भृष्टं मांस शृङ्गाटकं वदेत् । मांस शृङ्गाटकं रुच्यं वृष्यं बलकृत् गुरु । वातपित्तहरं हृद्यं कफघ्नं वीर्यवर्द्धनम्" भावप्र० ।

**शृङ्गार** पु० शृङ्गं कामोद्रेकं प्राधान्येन ऋ–अण् । १रसभेदे अमरः । २लवङ्गे ३सिन्दूरे ४चूर्णे च मेदि० । शृङ्गं कारणत्वेन ऋच्छति अण् । ५कालागुरुणि राजनि० ६आर्द्रके शब्दच० । शृङ्गं प्राधान्यं प्राधान्येन अण् । ७भूषणे दगजभूषणे च । स्वार्थे क । सिन्दूरे "पुंस स्त्रियां स्त्रियः पुंसि संयोग प्रति या स्पृहा । स शृङ्गार इति ख्यातः रतिक्रीडादिकारणम्" इत्युक्ते स्त्रीपुंसयोरन्योन्यसंयोगं प्रतीच्छाभेदे च रसभेदलक्षणादिकं सा०द० उक्तं यथा

"शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः । उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते । परोढां वर्जयित्वात्र वेश्याञ्चाननुरागिणीम् । आलम्बनं नायिका स्युर्दक्षिणाद्याश्च नायकाः । चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम् । भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः । त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः । स्थायी भावो रतिः श्यामवर्णोऽयं विष्णुदैवतः" । "शून्यं वासगृहमित्यादि" । अत्र उक्तस्वरूपः पतिरुक्तस्वरूपा च बाला आलम्बनविभावौ । शून्यं वासगृहमुद्दीपनविभावः । चुम्बनमनुभावः । लज्जाहासौ व्यभिचारिणौ । एतैरभिव्यक्तः सहृदयरतिभावः शृङ्गाररूपतां भजते । तद्भेदावाह । विप्रलम्भोऽथ सम्भोग इत्येष द्विविधो मतः" । तत्र विप्रलम्भो विप्रलम्भशब्दे उक्तः सम्भोगस्तु "दर्शनस्पर्शनादीनि निषेवेते विलासिनौ । यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृतः" । आदिशब्दादन्योन्याधरपानचुम्बनादयः । यथा "शून्यं वासगृहमित्यादि" । "संख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात् । अयमेक एव धीरैः कथितः सम्भोगशृङ्गारः । तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथास्तमयः । जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृति" । अनुलेपनभूषाद्या वाच्यं शुचि मेध्यमन्यच्च" । तथा च भरतः "यत्किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तत्सर्वं शृङ्गारेणोपमीयते उपयुज्यते" । किञ्च "कथितश्चतुर्विधोऽसावानन्तर्यात्तु पूर्वरागादेः" । यदुक्तम् "न विना विप्र-

तथैव सम्भोगः पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान् रागो विवर्द्धते" ।

**शृङ्गारभूषण** न० शृङ्गारे तदर्थं भूषणम् । सिन्दूरे हेमच० ।

**शृङ्गारयोनि** स्त्री ६त० । कामदेवे हला० ।

**शृङ्गारिन्** पु० शृङ्गारः उद्दीप्यत्वेनास्त्यस्य इनि । १पूगे तत्फलभक्षणे हि कामोद्रेक इति तस्य तथात्वम् । २गजे मेदि० । ३सुवेशे त्रि० । ४माणिक्ये पु० राजनि० ।

**शृङ्गिक** न० शृङ्गं तदाकारोऽस्त्यस्य ठन् । १विषभेदे २अतिविषायां स्त्री शब्दर० । [स्त्रियां ङीप् ।

**शृङ्गिण** पु० शृङ्ग युद्धसाधनत्वेनास्त्यस्य इनन् । मेषे हेमच०

**शृङ्गिन्** पु० शृङ्गमस्त्यस्य इनि । १मेषे २कुलाचलभेदे शृङ्गवच्छब्दे दृश्यम् । ३पर्वतमात्रे ४मुनिभेदे ५वृक्षे च । ६शृङ्गयुक्ते त्रि० मेदि० । ७धेन्वां स्त्री ङीप् । ८ऋषभौषधे ९मल्लिकायां १०ज्योतिष्मत्यां च स्त्री मेदि० । मुनिभेदश्च शमीकर्षिपुत्रः स हि परिक्षितं प्रति तक्षकदंशनशापप्रदाता इति विष्णुपु० स्थितम् ।

**शृङ्गी** स्त्री शृङ्गमस्त्यस्याः अच् गौरा० ङीष् । १मद्गुरस्य प्रियायाम् अमरः । पृषो० ह्रस्वः । शृङ्गिरित्यपि तत्रार्थे शब्दर० । २अतिविषायां ३ऋषभौषधौ अमर । ४कर्कटशृङ्ग्याम् ५स्वर्णे ६विषे च राजनि० । ७भूषणस्वर्णे रत्नकोषः "मद्गुरस्यप्रिया शृङ्गी" इत्यमरे मद्गुरस्य प्रियेति नामद्वयम् । तेन (सिङ्गी) मत्स्यस्यैवेदं नाम इति भरतः ।

**शृङ्गीकनक** न० अगि-कि वा० ङीष् शृङ्गी अलङ्कारस्तदर्थं कनकम् । भूषणार्थस्वर्णे अमरः । [मर० ।

**शृ(स)णि** स्त्री शृ-सृ वा क्विन् तस्य निः पृषो० । अङ्कुशे अ-

**शृत** त्रि० शृ-क्त । १पक्वे अमरः २क्वथिते जलादौ च "द्रव्यादष्टगुणात्तोयात् वह्निना परितापितात् । निःसृतो यो रसः पूतः स शृतः समुदाहृतः" वैद्यकोक्ते ३द्रव्यक्वाथजे रसे पु० ।

**शृध** अपानशब्दे भ्वा० आ० द्युता० लुङि लृटि लृङि च उभ० अक० सेट् क्त्वा वेट् । शर्द्धते अशृधत् शर्त्स्यति शर्द्धिष्यते ।

**शृध** छेदने भ्वा० उभ० सक० सेट् क्त्वा वेट् । शर्द्धति ते अशर्द्धीत् अशर्द्धिष्ट ।

**शृध** प्रहसने चु० उभ० सक० सेट् । शर्द्धयति ते अशशर्द्धत् त ।

**शृधु** पु० शृध-कु । १बुद्धौ त्रिका० । २कुत्सिते ३अपाने सङ्क्षिप्तसा०

**शॄ** हिंसने क्र्या० प्वा० पर० सक० सेट् । शृणाति अशारीत् । शीर्णः ।

**शेखर** पु० शिखि-गतौ अरन् पृषो० । १शिखायां २मूर्द्धस्थितमाल्ये च अमरः । ३चन्द्रायां स्त्री शब्दर० ङीप् । ४गीताङ्गे ध्रुवभेदे पु० तल्लक्षणं यथा "द्वादशाक्षरपाद स्यात् स चाल्पशुभकृत् प्रभोः । हास्ये च रसे धीरे गीयते शेखरो ध्रुवः । लघुगुर्व्वर्भवेद्यत्र स भवेल्लघुशेखरः" संगीतदा० । [त्रि०

**शेप** पु० शी-पन् । १शेफे शिश्ने शब्दच० । २शयनकर्त्तरि

**शेपाल** पु० शेपः शयित इवालति अल-अच् । शैवाले शब्दर०

**शेफ** पु० न० । शी-फन् । १शिश्ने अमरः २शयनकर्त्तरि त्रि० । शुक्रपाते सति शेते शी-असि फुक् च शेफः अस् न० "गोलिङ्गं चिह्नशेफसी" अमरः । शेफसशेफसी शेफशेपौ शेपश्चेति पञ्चशब्दास्तत्रार्थे तत्र पृषो० साधुतेति भरतः । [ङीप् । शेफालिकायां शब्दमा० ।

**शेफालि(ली)** स्त्री शेफाः शयनशालिनः अलयो यत्र वा

**शेफालिका** स्त्री शेरते इति शेफाः अलयो यत्र वा कप् । (शिउलि) पुष्पवृक्षे अमरः "शेफालिका कटूष्णा च तिक्ता रूक्षा च वातहृत् । कफाङ्गसन्धिशातघ्नी शतता-तादिदाहहृत्" राजनि० । [अमर० ।

**शेमुषी** स्त्री शी-विच् शे मोहस्तं मुष्णाति मुष-क । बुद्धौ

**शेल** गतौ चालने च भ्वा० पर० सक० सेट् । शेलति अशेलीत् । ऋदित् चङि न ह्रस्वः ।

**शेलु** पु० शेल-उण् । बहुवारवृक्षे अमरः ।

**शेव** पु० शुक्रपाते सति शेते शी-वन् । १पुंचिह्ने २उन्नते ३सर्पे च उणादिकोषः ।

**शेवधि** पु० शेः धनादिमोहस्तस्य अवधिः । "पद्मोऽस्त्रियां महापद्मः शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च निधयो नव शेवधि" इत्युक्ते नवविधे निधौ अमरटीका ।

**शेवल** न० शी-विच् तथाभूतः सन् वलते वल-अच् । शैवाले (शेवाला) शब्दच० ।

**शेवाल** न० शेते विच् शे-सन् वलते वल-संज्ञायां कर्त्तरि घञ् । १शैवाले शब्दर० । २आकाशमांस्यां स्त्री राजनि० ।

**शेष** पु० शिष-अच् । १अनन्ते सर्पराजे सर्पभेदे २बलदेवे च मेदि० । ३अवशेषे अमरः । ४गजे ५उपयुक्तेतरवस्तुनि अत्ययपात्रे । ६भगवतो कालरुद्रमूर्त्तौ "एका भगवतो मूर्त्तिर्ज्ञानरूपा शिवामला । वासुदेवाभिधाना सा गुणातीता सुनिष्कला । द्वितीया कालरुद्राख्या च तामसी शेषसंज्ञिता । निहन्ति सकलाञ्चान्ते वैष्णवी परमा तनुः" कूर्मपु० ४८अ० । "शेषे षष्ठी" पा० सू० "उक्तादन्य,

शेष” भाष्यादय । पारोद्देश्येन प्रवर्त्तमाने ऽगुणीभूते अस्य लक्षणविषयादि मीमांसासूत्रभाष्यादौ दर्शितं यथा “शेषः परार्थत्वात्” सू० “इह सूत्रे शेषस्य लक्षणम्, येन च हेतुना शेष इत्युच्यते, तदुभयमाख्यायते । यः परस्योपकारे वर्त्तते, स शेषः इत्युच्यते, यथा, ये परार्थाः, ते वक्तारो भवन्ति, शेषभूता वयमिह इति । ननु योऽपि प्रधानभूतः सोऽपि कदाचित् परार्थे वर्त्तते, यथा उपाध्याय प्रधानभूतः शिष्याणां विद्याविनयाधाने वर्त्तते । सत्यं वर्त्तते, यस्तु अत्यन्तं परार्थः, तं वयं शेष इति ब्रूम, यथा, गर्भदासः कर्मार्थ एव स्वामिनोऽमङ्गाय क्रीयते, वर्त्तति इत्येव । ननु गर्भदासस्यापि स्वामी संविदधानो गुणभावमायात् । न इति ब्रूमः, आत्मन एवासौ संविदधानो गुणभावं गच्छति, नान्तरीयकत्वात् गर्भदासस्योपकरोति, अनडुहो वा, यस्त्वत्यन्त परार्थ, स वयं शेष इति ब्रूमः । अथ तत्र किं सूत्रम् ? । येस्तु द्रव्यं चिकीर्ष्यते गुणः तत्र प्रतीयेत इति, तत्र अपूर्वार्थता आवर्त्तिता, दृष्टप्रयोजनानामाख्यातानाम् । इह तु सर्वेषामेव शेषाणां लक्षणमुच्यते” शव०भा० । तस्य स्वरूपाणि तत्रैव “द्रव्यगुणसंस्कारेषु बादरि.” सू० “बादरिराचार्यः स्म द्रव्यगुणसंस्कारेष्वेव शेषशब्द इति मेने, न यागफलपुरुषेषु । द्रव्यं क्रियार्थं, यदि प्रयोजनवती क्रिया, अस्ति सा द्रव्येण निर्वर्त्तयितव्या, तस्या निर्वृत्तिर्द्रव्यादृते न भवति इति तन्निर्वृत्तये द्रव्यमेषितव्यं भवति, तस्मात् क्रियार्थं द्रव्यम् । गुण शक्नोति विशिष्टं द्रव्यं चोदितं लक्षयितुम्, लक्षितेन च तेन प्रयोजनम्, विशिष्टस्य क्रियासाधनत्वात्, तस्मात् सोऽपि द्रव्यद्वारेण क्रियाया उपकरोति इति क्रियार्थ एव । संस्कारो नाम स भवति, यस्मिन् जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य, तेनापि क्रियाया कर्त्तव्यायां प्रयोजनम् इति सोऽपि परार्थ । तस्मात् द्रव्यगुणसंस्कारा परार्थत्वात् शेषभूता । न तु यागफलपुरुषा । यागं तावत् कर्त्तव्यं पुरुषस्य, न हि, तस्मिन् निर्वर्त्तिते किञ्चित् अपरमस्ति कर्त्तव्यम् । स हि पुरुषार्थः, यदन्यत् द्रव्यादि, तत् तदर्थं तस्य शेषभूतम्, स तु न किञ्चिदभिनिर्वर्त्तयितुम् क्रियते । फलमपि न तेन क्रियते, तस्मिन् तु कृते स्वयमेव तत् भवति । तस्मिन् कृते फलमस्य भवति इत्येतावत् गम्यते, नास्ति शब्दो यागेन क्रियते फलमिति । तस्मात् यागो न शेषभूतं कस्यचित् अर्थस्य । फलमपि न पुरुषं प्रत्युपदिश्यते, यः स्वर्गं कामयते, स यागं कुर्य्यादित्येतावत् शब्देनोपदिश्यते, नात्मनः परस्य वा इति, स्वर्गं प्रतीच्छमानश्च स्वर्गकामः इति भवति, तस्मात् पुरुषं प्रति गुणभावेन न श्रूयते स्वर्गः, तस्मात् सोऽपि न शेषभूतः । न चेत् फलयागौ गुणभावेन चोद्येते, कस्य पुरुषः प्रधानभूतो भवति ? प्रत्यक्षस्य द्रव्यत्वात् कर्म प्रति गुणभावः । तस्मात् द्रव्यगुणसंस्कारेष्वेव शेषभाव बादरिर्मेने” शव०भा० । “कर्मण्यपि जैमिनिः, फलार्थत्वात्” सू० “जैमिनिस्तु आचार्यः कर्माण्यपि शेषभूतानि मन्यते स्म, न बादरिरिवावधारणामनुमेने, स हि ददर्श, न यागः कर्त्तव्यतया चोद्यते, फलकामस्य तु तत्साधनोपायत्वेन इति । एवं श्रुतोऽर्थः परिगृहीतो भविष्यति, अर्थवादोपदेशः । एतमेवार्थं षष्ठेऽध्याये सूत्रैरेव साधयिष्यति । इह तु तद्विधेनैव फलार्थत्वेन शेषभावं यागस्यापादयति स्म । तस्मात् अनवधारणा द्रव्यगुणसंस्कारा. शेषभूता यागोऽपि शेषभूत फलम्प्रति” भा० । “फलं च पुरुषार्थत्वात्” सू० । “फलमपि पुरुषं प्रत्युपदिश्यते, यः, स्वर्गो मे भवत् इत्येवं कामयते, तस्य यागं न च स्वर्गं, स आत्मानं लभेत इति । आत्मनेपदप्रयोगात्, कर्त्रभिप्राये एतत् भवति, क्रियाफलमनुभवेत् कथं पुरुषः ? इति यागं प्रयुज्यते । तस्मात् फलं पुरुषार्थं यागात् श्रूयते नात्मनिर्वृत्त्यर्थम् । तस्मात् शेषभूतम् इति भा० । “पुरुषश्च कर्मार्थत्वात्” सू० । “पुरुषोऽप्यौदुम्बरीसम्मानादिषु गुणभूत श्रूयते । तस्मात् अनवधारणा एषा, द्रव्यगुणसंस्कारेषु शेषत्व बादरिर्मेने इति” । “अथ इदानीन्तनास्तु नव्यास्तु इत्थंकारं परिनिष्ठिताः, द्रव्यगुणसंस्कारेष्वेव नियतो यज्ञम्प्रति शेषभाव, आपेक्षिक इतरेषाम् । यागस्य द्रव्यम्प्रति प्रधानभावः, फलम्प्रति गुणभाव, फलस्य यागम्प्रति प्राधान्यम्, पुरुषम्प्रति गुणता, पुरुषस्य फलम्प्रति प्रधानता, औदुम्बरीसम्मानादि प्रति गुणत्वम् तस्मात् सम्मता अवधारणा, द्रव्यगुणसंस्कारा यागम्प्रति नियमतो गुणभूता एव” भा०

कस्यचित् शेषरक्षणनिषेधो यथा “ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च । पुनः पुनः प्रवर्द्धन्ते तस्मात् शेषं न कारयेत्” गरुडपु० “प्रसादाभिलाषिणि निर्माल्यदाने शेषेति कीर्त्तिता” विश्वोक्तौ स्वामिना प्रसाददत्ते दमात्ये स्त्री “तथेति शेषामिव भर्त्तुराज्ञाम्” कुमार

**शेषरात्रि** स्त्री॰ शेषं रात्रेः एकदेशिस॰। रात्रिशेषे शब्दच॰

**शेषशयन** पु॰ शेष अनन्त शयनमस्य। नारायणे तच्छयन-प्रकारकाशादि कालिकापु॰ ५७अ॰ उक्तं यथा "अनन्तस्तत्र गत्वा तु यत्र क्षीरोदसागरः। तत्र स्वयं श्रिया युक्तं सुसुप्सन्तं जनार्दनम्। तस्योपधानमकरोद्‌नन्तो दक्षिणां फणाम्। उत्तरां पादयोश्चक्रे उपधानमहाबल.। तालवृन्तं तदा चक्रे स शेषः पश्चिमां फणाम्। स्वयन्तु वीजयामास शेषरूपी जनार्दनम्। शङ्खं चक्रं नन्दकादिमरूपी द्वे महाबल। ऐशान्या फणया चाथ स दध्रे गरुड तदा। गदां पद्मञ्च शार्ङ्गं च तथैव विविधायुधम्। यानि चान्यानि तस्यासन्नाग्न्येया फणया दधौ। एवं कृत्वा स्वकं काय शयनीयं तदा हरेः। भूतभव्यजगन्नाथ परापरगतिं हरिम्। दधार शिरसानन्तः स्वयमेव स्वका तनुम्। एव ब्रह्मदिनस्यैव प्रमाणेन निशा हरि.। सन्ध्यां च समधिप्राप्य शेते नारायणोऽव्ययः"। अतुना "शर्वरी तस्य तावती" इत्युक्तम्। "यदा स देवोजागर्त्ति तदेदं चेष्टते जगत। यदा स्वपिति शान्तात्मा तदा सर्वं प्रणश्यति" इत्युक्तं तेन प्रलयकाले एव तस्य शयनम्।

**शैक्ष** पु॰ शिक्षा तन्नामग्रन्थमधीते वेत्ति वा अण्। १शिक्षाग्रन्थाध्यायिनि २तद्वेत्तरि च। वुन्। शिक्षकोऽप्यत्र।

**शैखरिक** पु॰ शिखरे प्राचीरादाग्रे भवः ठक्। अपामार्गे अमर.।

**शैखरेय** पु॰ शिखरे भवः ढक्। अपामार्गे रत्नकोषः।

**शैत्य** न॰ शीतस्य भावः ष्यञ्। शीतस्पर्शे।

**शैथिल्य** न॰ शिथिलस्य भाव ष्यञ्। श्लथे सयोगभेदे।

**शैनेय** पु॰ शिनेर्गोत्रापत्यम् ढक्। सात्यकिनाम्नि यादवे।

**शैरीय** पु॰ शिरा+छण्। नीलझिण्टयां रत्नमा०। ढकञ् शैरेयक तत्रार्थे।

**शैल** न॰ शिलायां भवः अण्। १शैलेये गन्धद्रव्यभेदे। २ताक्ष्ये शैले मेदि॰। ३शिलाजतुनि च राजनि॰। शिलाः सन्त्यस्य प्रज्ञा॰ अण्। ४पर्वते पु॰ अमरः। [राजनि॰।

**शैलगन्ध** न॰ शैलस्य शैलजस्येव गन्धोऽस्य। शावरचन्दने

**शैलज** न॰ शैले पर्वते जायते जन–ड। १स्वनामख्याते गन्धद्रव्यभेदे रत्नमा०। २गजपिप्पल्यां ३सैंहल्यां ४दुर्गायाञ्च स्त्री राजनि॰। [दैवे त्रिका॰।

**शैलधन्वन्** पु॰ शैलं गिरिशृङ्गं धनुरस्य अनङ्स॰। महा

**शैलधर** पु॰शैलं गोवर्द्धन धरति धृ-अच्। श्रीकृष्णे वनञ्जय।

**शैलपत्र** पु॰शैलमिव सुगन्धि पत्रमस्य। बिल्ववृक्षे राजनि॰

**शैलभित्ति** पु॰ शैलं भिनत्ति भिद्–क्तिच्। टङ्के पाषाणदारणास्त्रे जटा०। [शैलाधिराजादयोऽप्यत्र।

**शैलराज** पु॰ शैलानां नगानां राजा टच् समा०। हिमालये

**शैलराजसुता** स्त्री ६त॰। हैमवत्यां पार्वत्यां "जाता शैलेन्द्रवृद्धे सा शैलराजसुता ततः" देवीपु॰ ४५अ॰।

**शैलवीज** पु॰ शिलां तत्पर्यन्त दूरं धावति अण् शैल बीज यस्य। भल्लातके राजनि॰।

**शैलशिविर** न॰शैलानां नगानां शिविरमिव। समुद्रे त्रिका॰।

**शैलसार** न॰ पु॰न॰शैलस्य सार इव। शिलाजतुनि राजनि॰

**शैलसुता** स्त्री ६त॰। १पार्वत्याम् २गङ्गायां च।

**शैलाग्र** न॰ शैलस्याग्रम्। पर्वतशृङ्गे त्रिका॰। [राजनि॰।

**शैलाज** न॰ शिलाया जायते जन–ड स्वार्थे अण्। शैलजे

**शैलाट** पु स्त्री॰ शैल पर्वतमटति अट–अण्। १सिंहे २किराते च स्त्रियां ङीप्। ३शुक्लवर्णकाचे ४देवले च पु॰ मेदि॰।

**शैलादि** पु॰ शिलादस्यापत्यम् इञ्। शिवपार्श्वचरे नन्दिनि

**शैलालिन्** पु॰ ब॰व॰ शिलालिना मुनिना प्रोक्तं नटसूत्रमधीयते णिनि। शैलूषेषु नटेषु अमर॰।

**शैलिक्य** पु॰गर्हित शीलमस्त्यस्य ठन् शीलिकः स्वार्थे ष्यञ्। सर्वलिङ्गिनि पाषण्डे जटा॰।

**शैली** स्त्री॰ शीलमेव स्वार्थे ष्यञ् ङीपि यलोपः। १चरित्रे २सङ्केतभेदे च त्रिका॰ "आचार्य्याणामियं शैली यत्-सामान्येनाभिधाय विशेषेण विवृणोतीति" प्राच॰।

**शैलूष** पु॰ शिलूषस्यापत्यम् अण्। १नटे २बिल्ववृक्षे अमरः ३धूर्त्ते ४तालधारके च शब्दर॰।

**शैलूषिक** पु॰ शैलूषं तद्‌वृत्तिमन्वेष्टा ठक्। "कृत्यन्वेषी नटानान्तु स तु शैलूषिकः स्मृत" ब्रह्मपु॰ उक्ते १नटकृत्यन्वेषिणि नटप्रधाने २तत्पत्न्यां स्त्री ङीप् "नर्त्तीं शैलूषिकीं चैव रजकीं वेणुजीविनीम्। गत्वा चान्द्रायण कुर्य्यात् तथा चर्मोपजीविनीम्" संवर्त्तः।

**शैलेन्द्र** पु॰ शैलः इन्द्र इव। हिमालये। ६त०। शैलेशादयोऽप्यत्र। [राजनि॰।

**शैलेन्द्रस्थ** पु॰ शैलेन्द्रे हिमालये तिष्ठति स्था–क। भूर्जवृक्षे

**शैलेय** न॰ शिलायां भवः ढक्। १शैलजाख्ये गन्धद्रव्यभेदे वैद्यक॰। "शैलेयं शीतलं हृद्यं कफपित्तहरं लघु। कण्डूकुष्ठाश्मरीदाहविषहृद्‌गुदरक्तहृत्" भावप्र॰। २पर्वतजातमात्रे त्रि०। स्त्रियां ङीप्। ३सिंहे ४भ्रमरे

च पुंस्त्री० शब्दर० स्त्रियां ङीष्। ५शिलाजतुनि शब्दच०। ६पार्वत्यां स्त्री ङीप्।

**शैलोद्भवा** स्त्री शैले पर्वतमुद्दिश्य भवति उद्+भू-अच्। १क्षुद्रपाषाणभेदिनि क्षुपे राजनि० २पार्वत्याञ्च।

**शैव** न० शिवमधिकृत्य कृतो ग्रन्थः अण्। वेदव्यासप्रणीते शिवप्रभाववर्णनात्मके १महापुराणभेदे। शिवो देवताऽस्य अण्। २शिवभक्ते त्रि०। तस्येदमण्। ३शिवसम्बन्धिनि त्रि० ४शैवधे न० शब्दच०।

शैवञ्च महापुराणं वायुना प्रोक्तत्वात् वायवीयनाम्ना-ख्यातम् अतएव "अष्टादश पुराणानि पुराणज्ञाः प्रच-क्षते। ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा" हेमा० व्र० विष्णु पु० "शैवं यद्वायुना प्रोक्तम्" तत्रैव कालिकापु० उक्तम्। हेमा०दा० मत्स्यपुराणे तु चतुर्थं वायवीयत्वेन पठित्वा "श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाब्रवीत्। तत्र यद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम्। चतुर्विंशति-साहस्रं पुराणं तदिहोच्यते। श्रावण्यां श्रावणे मासि गुडधेनुसमन्वितम्। यो दद्याद्वृषसंयुक्तं ब्राह्मणाय कुटुम्बिने। शिवलोके स पूतात्मा कल्पमेकं वसेन्नरः" तथा च शिवमाहात्म्यवेदकत्वाच्छैवमिति तस्य नामान्तरं विष्णु पु०उक्तम्। वायुना प्रोक्तत्वाच्च वायवीयमिति नामा-न्तरमिति बोध्यम्। तत्प्रतिपाद्यविषयाश्च नारदीयपु० उक्ता यथा "शृणु वत्स! प्रवक्ष्यामि पुराणं वायवीयकम्। यस्मिन् श्रुते लभेद्धाम रुद्रस्य परमात्मनः। चतुर्विंशति-साहस्रं तत्पुराणं प्रकीर्त्तितम्। श्वेतकल्पप्रसङ्गेन धर्मा-न्यत्राह मारुतः। तद्वायवीयमुदितं भागद्वयसमाचितम्" तत्र पूर्वभागे "सर्गादिलक्षणं यत्र प्रोक्तं विप्र! सवि-स्तरम्। मन्वन्तरेषु वंशाश्च राज्ञां ये तत्र कीर्त्तिताः। गयासुरस्य हननं विस्तराद् यत्र कीर्त्तितम्। मासानां चात्र माहात्म्यं माघस्योक्तं फलाधिकम्। दानधर्मा राज-धर्मा विस्तरेणोदितास्तथा। भूपातालककुब्व्योमचारिणां तत्र निर्णयः। व्रतादीनां च पूर्व्वोऽयं विभागः समुदा-हृतः"। उत्तरभागे "उत्तरे तस्य भागे तु नर्मदातीर्थव-र्णनम्। शिवस्य संहितास्त्रा वै विस्तरेण मुनीश्वर!। यो देवः सर्वदेवानां दुर्विज्ञेयः सनातनः। स तु सर्वात्मना यस्यास्तीरे तिष्ठति सन्ततम्। इदं ब्रह्मा हरिरिदं साक्षाच्चेदं परो हरः। इदं ब्रह्म निराकारं कैवल्यं नर्मदाजलम्। ध्रुवं लोकहितार्थाय शिवेन स्वशरीरतः। शक्तिः कापि सरिद्रूपा रेवेयमवतारिता। ये वसन्त्युत्तरे कूले रुद्रस्यानुचरा हि ते। वसन्ति याम्यतीरे ये लोकं ते यान्ति वैष्णवम्। ओङ्कारेश्वरमारभ्य यावत् पश्चिम-सागरम्। सङ्गमाः पञ्च च त्रिंशन्नदीनां पापनाशनाः। दशैकमुत्तरे तीरे त्रयोविंशतिर्दक्षिणे। पञ्चत्रिंशत्तमः प्रोक्तो रेवासागरसङ्गमः। सङ्गमैः सहितान्येवं रेवातीर-द्वयेऽपि च। चतुःशतानि तीर्थानि प्रसिद्धानि च सन्ति हि। षष्टितीर्थसहस्राणि षष्टिकोट्यो मुनीश्वर!। सन्ति चान्यानि रेवायास्तीरयुग्मे पदे पदे। संहितेयं महा-पुण्या शिवस्य परमात्मनः। नर्मदाचरितं यत्र वायुना परिकीर्त्तितम्। लिखित्वेदं पुराणन्तु गुडधेनुसम-न्वितम्। श्रावण्यां यो ददेद् भक्त्या ब्राह्मणाय कुटु-म्बिने। रुद्रलोके वसेत् सोऽपि यावदिन्द्राश्चतुर्दश। यः श्रावयेद्वा शृणुयाद् वायवीयमिदं नरः। नियमेन हवि-ष्याशी स रुद्रो नात्र संशयः"। ५बकुले ६धुस्तूरे पु० राजनि० ७आचारभेदे पु० "अष्टाङ्गयोगसंयुक्तो यजे-द्देवीं विधानतः। यावद्ध्यानं समाधिश्च तावच्छैवं प्रचक्षते" आचारभेदतन्त्रम्। तदुपासकभेदाश्च शिवचिह्न-शब्दे वामनपु० उक्ता दृश्याः।

**शैवल** न० शी-वलच्। १पद्मकाष्ठे २शैवाले च पु० मेदि०। "वहतो बहुशैवलक्ष्मताम्" नैषधम्।

**शैवलिनी** स्त्री शैवलानि सन्त्यस्याः इनि। नद्याम् अमरः

**शैवाल** न० शी-वालञ्। (शेओला) जलजाते पदार्थभेदे अमरः। अस्य शुभ्रो० दन्त्यादित्वमपि "सैवालकाङ्कु-रलतामधुना बिभर्त्ति" इति श्लेषात्।

**शैव्य** पु० शिवेर्गोत्रापत्यम् ञ्य। १शिबिगोत्रजे राजभेदे "शैव्यश्च नरपुङ्गवः" इति गीता। शिबिनोऽधिगतः ञ्य। २घोटकभेदे ३श्रीकृष्णस्य घोटके च त्रिका०।

**शैशव** न० शिशोर्भावः अण्। शिशुत्वे वयोऽवस्थाभेदे अमरः

**शैशिर** पु स्त्री० शिशिर शिशुत्वे [?] अण्। १चातक-टके राजनि० स्त्रियां ङीष्। शिशिरे भवः अण्। २शिशिरजाते त्रि०। स्वार्थे अण्। ३शिशिरे न०। "त-पस्तपस्यौ शैशिरावृतू" श्रुतिः। [श्यामनायां त्रिका०।

**शैष्योपायिका** स्त्री शिष्योपाध्याययोः कर्म वुञ्। शिक्षा-यां तीक्ष्णीकरणे दि०प०सक०अनिट्। श्यति अशात् अशासीत्।

**शोक** पु० शुच-घञ्। इष्टवियोगजाते दुःखात्मके चित्त-वृत्तिभेदे अमरः। ल्युट्। शोचनमप्यत्र न०।

**शोकनाश** पु०शोकं नाशयति नश-णिच्-अण्। १अशोकवृक्षे राजनि०। नश-भावे घञ् ६त०। २शोकध्वंसे।

**शोकहारी** स्त्री शोकं हरति हृ-अच् ङीप्। वनबर्बरिकायां राजनि०।

**शोकारि** पु० ६त०। कदम्बवृक्षे शब्दच०। [च अमरः।

**शोचिष्केश** पु० शोचिः केश इव यस्य। १वह्नौ २चित्रकवृक्षे

**शोचिस्** न० शुच-इसि। १प्रभायां २रोचिषि च अमरः।

**शोच्य** त्रि० शुच-ण्यत्। १क्षुद्रे २अधमे शब्दच० ३अनुकम्पनीये च। स्वार्थे क। तत्रैव। [इत्येव पाठः साधुः।

**शौटीर्य** न० शुटीरस्य भावः ष्यञ्। वीर्ये शब्दच०। शौटीर्य

**शोठ** त्रि० शुठ-आलस्ये स्फोटने वा अच्। १मूर्खे २अलसे मेदि०। ३धूर्त्ते ४नीचे ५पापवति पुंस्त्री० शब्दच०। स्त्रियां ङीप्। [अर्दिनृ चक्षि न सुखः।

**शोण** गतौ भ्वा०पर०सेट्। शोणति अशोणीत्

**शोण** न० शोण-अच्। १सिन्दूरे २रुधिरे च राजनि०। ३रक्तेक्षौ ४शोणाकभेदे राजनि०। ५पद्मवे पद्मे ६अग्नौ ७चित्रके ८नदभेदे स च अमरकण्टकदेशगतः पाटलिपुत्रपश्चिमे गङ्गायां मिलितः। ९रक्तवर्णे पु० १०तद्वति त्रि० मेदि०। ११समुद्रभेदे धरणिः।

**शोणक** पु० शोणत्वं कायति कै-क। शोणाकवृक्षे अमरः।

**शोणझिण्टिका** स्त्री कर्म०। १शोणझिण्ट्यां २रक्तकैरवे राजनि०। [न्याम् राजनि०।

**शोणझिण्टी** स्त्री शोणा झिण्टीव। १कुरुवके २कण्टकि

**शोणपत्र** पु० शोणं पत्रमस्य। १रक्तपुनर्नवायां राजनि०। २रक्तपत्रयुते त्रि०। [१रक्तकुसुमान्विते त्रि०।

**शोणपुष्पक** पु० शोणं पुष्पमस्य कप्। १कोविदारे राजनि०

**शोणपुष्पी** स्त्री शोणं पुष्पमस्याः ङीप्। सिन्दूरपुष्प्यां राजनि०

**शोणरत्न** न० कर्म०। पद्मरागमणौ अमर। [शब्दमा०।

**शोणाम** न० शोणं रक्तवर्णमवति अच्। (शोणा) क्षुपभेदे।

**शोणित** न० शोण-इतच्। १रुधिरे तद्वर्णे २रक्तवर्णे पु० ३तद्वति त्रि० अमर। ४कुङ्कुमे न० राजनि०।

**शोणितचन्दन** न० शोणितं रुधिरमिव चन्दनम्। रक्तचन्दने राजनि०। [त्रिका०।

**शोणितपुर** न० शोणितमिव रक्तं पुरम्। बाणासुरनगरे

**शोणोपल** पु० कर्म०। माणिक्ये मणौ राजनि०।

**शोथ** पु० शु-थन्। करपादादेः स्फीततापादके रोगभेदे तत्र कारणादिकं भावप्र० उक्तं यथा "अथ शोथाधिकारः। तत्र शोथस्य विप्रकृष्टं निदानमाह "शुद्ध्यामयाभक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवनात्। दध्याममृच्छाकविरोधिदुष्टगरोपसृष्टान्ननिषेवणाच्च। अर्शांस्यचेष्टा वपुषोऽप्यशुद्धिर्मर्माभिघातो विषमा प्रसूतिः। मिथ्योपचारः प्रतिकर्मणाञ्च निजस्य हेतुः श्वयथोः प्रदिष्टः"। शुद्धिर्वमनविरेकादिः। आमयाः पाण्डुरोगादयः। अभक्तम् अभोजनम्। आमः अपक्वो भुक्तस्य रसः। विषगरोपसृष्टान्नम् विषो यो गरः संयोगजं विषं तेन संसृष्टमन्नम्। वपुषोऽप्यशुद्धिः शोधनार्हस्य वपुषोऽशोधनम्। मर्मोपघातः दारुकत एव ज्ञेयः। बाह्यहेतुकतस्तु मर्मोपघाते आगन्तुजशोथहेतुरेव। विषमा प्रसूतिः आमगर्भपतनादिका। प्रतिकर्मणां वमनादिपञ्चकर्मणाम् मिथ्योपचारः असम्यक्करणम्। श्वयथोः शोथस्य निजस्य आत्मीयस्य स्वाभाविकस्य हेतुर्धातोरात्मकस्योक्तः। अथ शोथस्य सम्प्राप्तिपूर्वकं सामान्यं लक्षणमाह "रक्तपित्तकफान् वायुर्दुष्टो दुष्टान् बहिः शिराः। नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम्। उत्सेधं संहतं शोथं तमाहुर्निचयादतः। सगौरवं स्यादनवस्थितत्वं सोत्सेधमूष्माथ शिरातनुत्वम्। सलोमहर्षश्च विवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम्"। उत्सेधं उन्नतत्वम्। किञ्चिच्छिष्टमुत्सेधम् अतः पूर्वोक्तात् निचयात् रक्तपित्तकफवातानां सङ्घटनात् संहतम् घनम्। तदुत्सेधं शोथमाहुरित्यन्वयः। तत्र शोथस्य किं स्यादित्याकाङ्क्षायामाह। अनवस्थितत्वं स्यात् अनियता स्थितिः स्यादित्यर्थः चिकित्साव्यतिरेकेणापि निवृत्ते। तस्यानवस्थितत्वं सगौरवं स्यात् गौरवमप्यनवस्थितं स्यात्। अथ च सोत्सेधं स्यात्। उन्नतत्वमप्यनवस्थितं स्यादित्यर्थः। वातिकशोथमाह "चलस्तनुत्वक् परुषोऽरुणोऽसितः प्रसुप्तिहर्षार्त्तियुतो निमित्ततः। प्रशाम्यति प्रोन्नमति प्रपीडितो दिवा बली स्याच्छ्वयथुः समीरणात्"। चलः सञ्चारी। प्रसुप्तिः स्पर्शाज्ञता। हर्षोऽत्र (झिनि झिनी) रोमाञ्चो वा। आर्त्तिः पीडा एतद्युतः दिवा बली विकृतिविषमसमवायारब्धत्वात्। अतएवोक्तम् "स्नेहोष्णमर्दनाद्यैर्वा प्रशाम्येत स वातिकः। यथाप्यक्षपचयं स्याच्च वा नक्तं प्रशाम्यति"। अथ पैत्तिकमाह "मृदुः सगन्धोऽसितपीतरागवान् भ्रमज्वरस्वेदतृषामदान्वितः। य उष्यते स्पर्शरुगक्षिरागवान् स पित्तशोथो भृशदाहपाकवान्"। उष्यते दह्यते। भृशदाहपाकवान् अयं पाकमायुक्तः। श्लैष्मिकमाह "गुरुः स्थिरः पाण्डुररोचकान्वितः प्रसेकनिद्रावमिवह्निमान्द्यकृत्। सकृच्छ-

**शौनक** पु० शुनकस्यापत्यम् अण् । मुनिभेदे "नैमिषेऽनिमिष-क्षेत्रे ऋषयः शौनकादयः" इति भागवतम् १।१।

**शौनिक** पु० शूना प्राणिवधस्थानं प्रयोजनमस्य ठक् । १मांस-विक्रेतरि ( कसाइ ) हेमच० । २मृगयायां शब्दमा० । ३मृगयाशीले च ।

**शौभ** न० शोभायै हितम् अण् । १व्योमगामिनि पुरभेदे हरिश्चन्द्रपुरे २देवे पु० त्रिका० । ३गुवाके शब्दमा० ।

**शौभाञ्जन** पु० शोभाञ्जन एव स्वार्थे अण् । (सजना) वृक्ष-भेदे द्विरूपकोष । [शब्दमा० ।

**शौभिक** त्रि० शौभं व्योमपुरं शिल्पमस्य ठक् । इन्द्रजालिके

**शौरि** पु० शूरस्य यादवभेदस्य वसुदेवस्य सूर्य्यस्य वा अ-पत्यम् इञ् । १विष्णौ २शनैश्चरे च अमरः ।

**शौर्य्य** न० शूरस्य भावः ष्यञ् । १वीर्य्ये २शक्तौ ३आरभट्यां च मेदि० । [ठक् । शुल्कादानाधिकृते हेमच० ।

**शौल्किक** पु० शुल्के राजादेये करे तदादाने अधिकृतः

**शौल्किकेय** पु० शुल्किकः देशभेदः तत्र भवः ढक् । विष-भेदे अमरः ।

**शौल्विक** पु स्त्री० शुल्वं ताम्रं तन्मयपात्रादि पण्यमस्य ठक् । कांस्यकारे (कासारी) जातिभेदे अमरः स्त्रियां ङीष् ।

**शौव** न० शुनः सङ्घोऽ. श्वन्+अण् टिलोपः । शुनः सङ्घोऽ-न्यत्र न टिलोपः शौवन इत्येव शुनः सम्बन्धिनि सिद्धान्तकौ० । [भाविदिनस्थायिनि पदार्थे ।

**शौवस्तिक** त्रि० श्वः परदिने भवः श्वस्+ठक्-तुट् च ।

**शौवापद** त्रि० श्वापदस्येदम् अण् । श्वापदसम्बन्धिनि

**शौष्कल** पु० शुष्कल शुष्कमांसं पण्यमस्य अण् । १शुष्कमांस-विक्रेतरि मेदि० । तद्भक्ष्यमस्य अण् । २शुष्कमांसभक्षके त्रि० अमरः । [तत् अश्चोतीत् ।

**श्चुत** क्षरणे भ्वा० पर० अक० सेट । श्चोतति इरित् अश्चु-

**श्च्युत** क्षरणे भ्वा० पर० अक० आसेचने सक० सेट् । श्च्योतति इरित् अश्च्युतत् अश्च्योतीत् ।

**श्च्योत** पु० श्च्युत-घञ् । समन्तात् सेचने आधारे अमरः ।

**श्मन्** न० शेते शी-मनिन् डिच्च । १मुखे २शवे कालिकापु० अदन्तोऽप्यत्र "सर्वे मान्ताः अदन्ताः स्यु"रित्युक्तेः ।

**श्मशान** न० श्मानः शवाः शेरतेऽत्र शी-आनच् डिच्च । "श्मन् शब्देन शव प्रोक्तः शानं शयनमुच्यते । निर्वचन्ति श्मशानार्थं मुने ! शब्दार्थकोविदाः । महान्त्यपि च भू-तानि प्रलये समुपस्थिते । शेरतेऽत्र शवा भूत्वा श्मशानन्त-त्ततोऽभवत्" महाभूतलयस्थाने महाश्मशाने १काशीस्थे कालिकापुराणे ३० अ० । २शवदाहस्थाने अमरः ।

**श्मशानकाली** स्त्री श्मशानस्था काली । कालिकाभेदे ।

**श्मशानवासिन्** पु० श्मशाने वसति वस-णिनि । १महादेवे २वटुकभैरवे च । श्मशानवासकर्त्तरि चण्डालादौ त्रि० ।

**श्मश्रु** न० श्म मुखं श्रूयते लक्ष्यतेऽनेन श्रु-डु । पुरुषमु-खस्थे लोमसङ्घे अमरः । "केशश्मश्रु धारयतमग्रा भवति सन्ततिः" श्रुतिः ।

**श्मश्रुमुखी** स्त्री श्मश्रु मुखे यस्याः ङीप् । १पुरुषलक्षणयु-क्तायां २गोटाख्यायां स्त्रियां जटा० ।

**श्मश्रुल** पु० श्मश्रु विद्यतेऽस्य लच् । श्मश्रुयुक्ते [क्षुरकर्मकारके ।

**श्मश्रुवर्द्धक** पु० श्मश्रु वर्द्धयति छिनत्ति वृध-ण्वुल् । नापिते

**श्मील** निमेषणे भ्वा० पर० अक० सेट् । श्मीलति अश्मीलीत् ।

**श्यान** त्रि० श्यै-क्त । सङ्कोचविशेषप्राप्ते घनीभूते "पयसा-श्यानकर्दमान्" रघुः ।

**श्याम** पु० श्यै-मक् । १वृद्धदारकवृक्षे २प्रयागतीर्थस्थे वटे ३कोकिले ४मेघे ५कृष्णवर्णे ६हरिद्वर्णे च । ७तद्वति त्रि० मेदि० । ८धुस्तूरे ९पीलुवृक्षे १०श्यामाके राजनि० । ११मरिचे १२सिन्धुजलवणे च न० मेदि० । १३दमनकवृक्षे १४गन्धतृणे पु० विश्वः ।

ईषन्नीलेऽपि कृष्णश्यामनीलादीनाममरादौ पर्य्यायता तत्र कृष्णवस्तूनि कतिचित् कविसम्प्रदायतया दर्शितानि यथा "कृष्णानि केशवः सौरिचौरं चन्द्राङ्कराहवः । विन्ध्या-ञ्जनाद्रिवृक्षाहिवनभैरवराघवाः । शिवकण्ठघनद्वैपा-यनरामधनञ्जयाः । शनिः द्रुपदजा काली कलिकोन्तय-माऽसुराः । केशकज्जलकस्तूरीराजपट्टरिद्रुरञ्जनम् । विषपापकुहूयज्ञागुरुपापतमोनिशाः । मषीपङ्कमदा-म्भोधियमुनाधूमकोकिलाः । गोलाङ्गूलाश्मगुञ्जास्ये करटः खञ्जनकेकिनोः । यदत्तु तादृतापिञ्जतिलेन्दीवरवल्लयः । रसावद्भूतश्टङ्गारौ कटाक्षोऽलिः कनीनिका । नीली जम्बूफलं मुस्ता कारुण्याकीर्त्तयः । छिद्मच्छाया गजाङ्गारखगान्तःकरणादयः" ।

**श्यामक** न० श्याम+संज्ञायां कन् । १रोहिषतृणे राजनि० । २श्यामाके (शामा) धान्यभेदे पु० हेमच० ।

**श्यामकण्ठ** पु० श्यामः कण्ठोऽस्य । १मयूरे हेमच० । २शिवे ३नीलकण्ठपक्षिणे च ।

**श्यामकन्दा** स्त्री श्यामः कन्दोऽस्याः । अतिविषायां रा-जनि० । [राजनि० ।

**श्यामकाण्डा** स्त्री श्यामः काण्डोऽस्याः । गण्डदूर्वायां

जन्मप्रशमो निपीडितो नचोन्नमेद्रात्रिबली कफात्मकः"। द्वन्द्वजमाह "निदानाकृतिसंसर्गात् ज्ञेयः शोथो द्विदोषजः"। सान्निपातिकमाह "सर्वाकृतिः सन्निपाताच्छोथो व्यामिश्रलक्षणः"। व्यामिश्रलक्षण इत्युक्तेः सर्वाकृतिरिति उक्तवातजादिशोथसकललक्षणमिलनार्थम्। अथाभिघातजमाह "अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः। हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः। रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान्। भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः"। छेदः खड्गादिना भेदः पाषाणादिना। क्षत शरादिना भाडीक्ष चादि च। आदिशब्देन लगुडप्रहारादि गृह्यते। भल्लातजे रसे कपिकच्छुजे शूके विसर्पवान् प्रसरणशील- पित्तलक्षणः पैत्तिकशोथलक्षणः। अथ विषजमाह "विषजः सविषप्राणिपरिसर्पणमूत्रणात्। दंष्ट्रादन्तनखाघातादविषप्राणिनामपि। विण्मूत्रशुक्रोपहतमलवद्वस्त्रसंकरात्। विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात्। मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः"। परिसर्पणात् शरीरोपरि सञ्चरणात्। दंष्ट्रा हिंसपीकृता दन्तार्वाक्। (चोह) इति लोके। दन्ता आस्ये भवाः। अविषप्राणिनामपीत्यनेन दंष्ट्रादन्तनखानां स्वभावादेव अविषत्वं किन्तु सर्पादिविषं मारकं भवति अविषप्राणिनां दंष्ट्रादिविषं शोथव्यथादिकरं भवतीति विशेषः। विण्मूत्रेत्यादि। विडाद्युपहतं मलिनस्य यद्वस्त्रं तथा सङ्करं सम्मार्जनीभिः क्षिप्तो धूल्यादिस्तेन सम्पर्कात्। गरयोगावचूर्णनात् गरः संयोगजं विषं तस्य योगो यस्य तेन वस्तुनाऽवचूर्णनात्। अवलम्बी लम्बमानः। अयमप्यागन्तुजस्तथापि सामान्यागन्तुजशोथचिकित्सातोऽस्य विशिष्टचिकित्साभिधानाय पृथक् पठितः। यत्र स्थिता दोषा यत्र शोथं कुर्वन्ति तदाह "दोषाः श्वयथुमूर्द्ध्वं हि कुर्वन्त्यामाशये स्थिताः। पक्वाशयस्था मध्ये तु वर्च्चःस्थानगतास्त्वधः। कृत्स्नं देहमनुप्राप्य कुर्युः सर्वसरं तथा। ऊर्द्ध्वम् उरःप्रभृत्यूर्द्ध्वम्। मध्ये उरःपक्वाशयमध्ये। अधः पक्वाशयादध। उपद्रवानाह "छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरोऽतीसार एव च। सप्तक आमदौर्बल्यं शोथवते उपद्रवाः"। तत्र शोथासाध्यत्वमाह "श्वास पिपासा छर्दिश्च दौर्बल्यं ज्वर एव च। यस्य चान्ने रुचिर्नास्ति शोथिनस्तं विवर्जयेत्"। स्वार्थे क। तत्रार्थे शब्दच०।

**शोथघ्नी** स्त्री शोथं हन्ति हन-टक् ङीप्। १पुनर्नवायाम् अमर०। २शालपर्ण्याञ्च राजनि०। ३शोथनाशके औषधमात्रे त्रि०।

**शोथजि,द्ध,त्** पु० शोथं जयति हरति वा जि-हृ-वा क्विप्। भल्लातके रत्नमा०। [वार्या त्रिका०।

**शोथजिह्व** पु० शोथे जिह्व विपरीताचरणशाली। प्रमे-

**शोधन** न० शुध-णिच्-ल्युट्। १शोधे २विष्ठायां शब्दच०। ३कासीसे राजनि०। ४मलादिनिरेचने ५दोषनिवारणे ६ऋणादिनिर्यातने च। शुध-णिच्-ल्यु। ७निम्बूके पु० राजनि०। ८शुद्धिकारके त्रि०। शुध्यत्यनया करणे ल्युट् ङीप्। ९सम्मार्जन्याम् स्त्री अमरः। १०ताम्रमयख्रा ११नील्याञ्च स्त्री ङीप्। १२विहिताविहितमार्गादिविचारणे न० "सूर्यग्रहणकालेन समानो नास्ति कश्चन। तत्र यद्यत् कृतं सर्वमनन्तफलदं भवेत्। न मासतिथिवारादिशोधनं सूर्यपर्वणि" मल०त०। दोषनिवारणञ्च धातुविशेषस्य द्रव्यान्तरेण संयोजनम् "प्रलीकृतपत्त्राणि हेम्नो वह्नौ प्रतापयेत्। निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके। गोमूत्रे च कुलत्थानां कषाये तु त्रिधा त्रिधा। एवं हेम्नः परस्य च धातूनां शोधनं भवेत्" इत्यादिप्रकारेण धात्वादीनां दोषनिवारणम्। १३व्रणादेः क्लेदपूयाद्यपसारणे च "व्रणस्य सविषस्य क्वाथः शुद्धिकरः स्मृतः। पटोलनिम्बपत्रस्य सर्वत्रैव प्रयुज्यते। वातिके दशमूलानां क्षीरिणां पैत्तिके व्रणे। आरग्वधादि कफजे कषायः शोधनं मतम्"। १४पाण्डुलेख्यादेर्दोषनिवारणे भाषाशब्दे दृश्यम्। १५भाज्याङ्कात् भाजकस्य हरणे।

**शोधनीवीज** न० ६त०। जयपाले राजनि०।

**शोधित** त्रि० शुध-णिच्-क्त। मलाद्यपसारणेन १कृतसंस्कारे २मार्जिते अमरः।

**शोफ** पु० शु-फन्। शोथे अमरः। शोथशब्दे दृश्यम्।

**शोफघ्नी** स्त्री शोफं हन्ति हन-टक् ङीप्। १शालपर्ण्यां २रक्तपुनर्नवायाञ्च राजनि०। [राजनि०।

**शोफनाशन** पु० शोफं नाशयति नश-णिच्-ल्यु। नीलवृक्षे

**शोफहृत्** पु० शोफं हरति हृ-क्विप्। भल्लातके भावप्र०।

**शोभन** न० शोभते शुभ-ल्यु। १पद्मे शब्दमा०। विष्कम्भादिषु २पञ्चमे योगे पु० ज्यो०त०। ३शोभायुक्ते त्रि०। ४सुन्दर त्रि० ५ग्रहे पु० धरणि।

**शोभनक** पु० शोभनाय कायति कै-क। शोभाञ्जनवृक्षे शब्दच०

**शोभना** स्त्री शोभयति शोभनात् शुभ–णिच्–ल्यु । १हरिद्रायां २गोरोचनायाञ्च राजनि० ।

**शोभा** स्त्री शुभ–अ । १दीप्तौ "या शोभा रूपभोगाद्यैर्यत् स्यादङ्गविभूषणम् । शोभैव कान्तिराख्याता मन्मथाप्यायनोज्ज्वला" उज्ज्वलमणयुक्तार्थे च २गोपीभेदे ब्रह्मवै०पु० ८अ० । ४हरिद्रायां ५गोरोचनायां राजनि० ।

**शोभाञ्जन** पु० शोभायै अज्यते अन्ज–ल्युट् । (सजना) ख्याते अमरः "तद्बीजं श्वेतमरिचं मधुशिग्रुः स लोहितः । शिग्रुः कटुः कटुः पाके तीक्ष्णोष्णो मधुरो लघुः । दीपनो रोचनो रूक्षः क्षारस्तिक्तो विदाहकृत् । संग्राही शुक्रलो हृद्यः पित्तरक्तप्रकोपणः । चक्षुष्यः कफवातघ्नो विद्रधिश्वयथुक्रिमीन् । मेदोऽपचीविषप्लीहगुल्मगण्डव्रणान् हरेत् । श्वेतः प्रोक्तगुणो ज्ञेयो विशेषाद् दाहकृद् भवेत् । प्लीहानं विद्रधिं हन्ति व्रणघ्नः पित्तरक्तकृत् । रक्तशिग्रुः प्रोक्तगुणो विशेषाद्दीपनः सरः । शिग्रुवल्कलपत्राणां स्वरसं परमार्त्तिहृत् । चक्षुष्यं शिग्रुजं बीजं तीक्ष्णोष्णं विषनाशनम् । अवृष्यं कफवातघ्नं तन्नस्यं तु शिरोऽर्त्तिनुत् । शिग्रुशाकं हिमं स्वादु चक्षुष्यं वातपित्तहृत् । सं हृद्यं शुक्रकृत् स्निग्धं रुच्यं मदकृमिप्रणुत् । शिग्रोः पुष्पन्तु कटुकं तीक्ष्णोष्णं स्नायुशोथहृत् । क्रिमिघ्नं कफवातघ्नं विद्रधिप्लीहगुल्मजित् । शोभाञ्जनफलं स्वादु कषायं कफपित्तहृत् । शूलकुष्ठक्षयश्वासगुल्मघ्नं दीपनं परम्" भावप्र० । अधिकं शिग्रुशब्दे दृश्यम् ।

**शोली** स्त्री शूल–अच् पृषो० ङीप् । वनहरिद्रायां राजनि० ।

**शोष** पु० शुष–घञ् । १वातादिना रसाद्यपहारेण कठिनताकरणे । शोषयति शुष–णिच्–अच् । २यक्ष्मरोगे मेदि० ।

**शोषण** न० शुष–ल्युट् । १शोषणेन रसाकर्षणे हेमच० । २शोषणकर्त्तरि च शोषयति शुष–णिच्–ल्यु । "उन्मादनः शोषणश्च तापनः स्तम्भनस्तथा । मारणश्चेति विज्ञेया कामस्य पञ्च सायकाः" इत्युक्ते ३कन्दर्पशरभेदे जटा० । ४शोणाकवृक्षे भावप्र० । ५शुण्ठ्यां राजनि० ।

**शोषसम्भव** न० [illegible] सम्+भू–अण् ५त० । पिप्पलीमूले राजनि० । [राजनि०। २शोषनाशके त्रि० ।

**शोषापहा** स्त्री शोषमपहन्ति अप+हन–ड । १क्षीतनके

**शौक** न० शुकानां समूहः अण् । १शुकसमुदाये अमरः । शूकोऽस्त्यस्य च । स्त्रापा २करणभेदे राजनि० ।

**शौकर** न० शूकरस्य वराहस्येदम् अण् । १शौकरवे तीर्थभेदे वराहपुराणम् । २शूकरसम्बन्धिनि त्रि० । स्त्रियां ङीप् ।

**शौकरव** न० तीर्थभेदे "परं शौकरवं स्थानं सर्वसंसारमोक्षणम् । यत्र संस्था च मे देवि उद्धृतासि रसातलात् । यत्र भागीरथी गङ्गा मम शौकरवे स्थिता" वराहपु० ।

**शौक्तिकेय** न० शुक्तिकायां भवम् ढक् । मुक्तायां राजनि० ।

**शौक्तेय** न० शुक्तौ भवम् ढक् । मुक्तायां राजनि० ।

**शौक्ल्य** पु० शुक्लस्य भावः ष्यञ् । श्वेततायां श्वेतवर्णे ।

**शौच** न० शुचेर्भावः अण् । १शुद्धौ पवित्रतायाम् "अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः । स्वधर्मे च व्यवस्थानं शौचमित्यभिधीयते" इति बृहस्पत्युक्ते २धर्मविशेषे च "सर्वेषामेव शौचानामर्थशौचं विशिष्यते । योऽर्थैरशुचिः शौचान्न सदा वारिणा शुचिः । सत्यशौचं मनःशौचं शौचमिन्द्रियनिग्रहः । सर्वभूतदया शौचं जलशौचन्तु पञ्चमम् । यस्य सत्यञ्च शौचञ्च तस्य स्वर्गो न दुर्लभः" गारुडे ११० अ० ।

मृदादिशौचप्रकारस्तु आ०त० दर्शितो यथा

देवलः "सर्वविद्विषिणं हस्तमपं शौचे न योजयेत् । तथैव वामहस्तेन नाभेरूर्द्ध्वं न शोधयेत् । प्रकृतिस्थितिरेषा स्यात् कारणादुभयक्रिया" । कारणाद्रोगादेः । ब्रह्माण्डपु० "उद्धृतोदकमादाय मृत्तिकाञ्चैव वाग्यतः । उदङ्मुखो दिवा कुर्य्यात् रात्रौ चेद्दक्षिणामुखः । इस्थिलिङ्गे मृदं दद्यात् मृदन्ते त्रय एव च । दातव्यमुदकं तावद्यावत् स्यात् मृत्तिकाक्षयः" । कुर्य्यात् शौचमतिशेषः । उन्निर्म्मिते भरद्वाजोक्तलोष्ट्रादिसंस्पृष्टे गुदे । उदकपात्राभावे करेण जलाशयादुदकमपहृत्य आ- दित्यपु० "रत्निमात्रं जलं त्यक्त्वा कुर्य्यात् शौचमनुद्धृते । पश्चाच्च शोधयेत्तीर्थमन्यथा न शुचिर्भवेत्" । यस्मिन् प्रदेशे शौचं कर्त्तव्यं तस्मादरत्निमात्रव्यवहितं यत् तत् स्थानमेव तीर्थं जलसमीपस्थात् । विष्णुपु० "वल्मीकमूषिकोत्खाता मृदन्तर्जलां तथा । शौचावशिष्टां गेहाच्च नाद्यात् लेपसम्भवाम् । अन्तःप्राण्यवपन्नाञ्च हलोत्खातां सकर्दमाम्" । मनुदक्षौ "एका लिङ्गे गुदे तिस्रो दश वामकरे तथा । उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता" । उभयोः करयोः । विष्णुपु० "एकालिङ्गे गुदे तिस्रो दश वामकरे तथा । हस्तद्वये च सप्तान्या मृदः शौचोपपादिकाः" । यम "लिङ्गे त्वेका गुदे तिस्रो वामहस्ते चतुर्दश । ततः पुनरुभाभ्याञ्च दातव्याः सप्त मृत्तिकाः" । पैठीनसिः "मृत्तिकां संहृत्य एका

**श्रग** गतौ भ्वा० पर० सक० सेट् इदित् । श्रङ्गति अश्रङ्गीत् ।

**श्रण** दाने भ्वा०पर०सक०सेट् । श्रणति अश्राणीत् अश्रणीत् मित् घटादि० श्रणयति ।

**श्रण** दाने चु०उभ०सक० सेट् । श्राणयति ते अशिश्रणत् त ।

**श्रत्** अव्य० श्रो-डति । श्रद्धायाम् । [अशिश्रथत् त ।

**श्रथ** यत्ने अक० प्रतिहर्षे सक० चु०उभ० सेट् । श्राथयति ते

**श्रथ** दौर्बल्ये अ०चु०उ०अक०सेट् । श्रथयति ते अशश्रथत् त ।

**श्रथ** वधे भ्वा०पर०सक० सेट् । श्रथति अश्रथीत् अश्राथीत् ।

**श्रथ** बन्धमोक्षे बधे च वा चु० उ० पक्षे भ्वा०पर०सक०सेट् । श्राथयति ते श्रथति अशिश्रथत् त अश्रथीत्-अश्राथीत् ।

**श्रथ** शैथिल्ये अक० तत्करणे सक० भ्वा० आ०सेट् इदित् । श्रन्थते अश्रन्थिष्ट ।

**श्रथन** न० श्रथ-ल्युट् । १वधे २यत्ने ३प्रतिहर्षे च ।

**श्रद्धा** स्त्री श्रत्+धा-अङ् । १आदरे २शुद्धौ शब्दच० । ३गुरुवेदान्तवाक्यादिषु विश्वासे वेदान्तसा० ४स्पृहायां ५चित्तप्रसादे "प्रत्ययो धर्मकार्येषु सा श्रद्धेत्यभिधीयते" इति कात्यायनोक्ते धर्मकार्येषु ६प्रत्यये च अमरः । "प्रत्ययो धर्मकार्येषु तथा श्रद्धेत्युदाहृता । नास्ति ह्यश्रद्दधानस्य धर्मकृत्ये प्रयोजनम्" इति स्मृतिः । सा त्रिविधा यथोक्तं गीतायाम् १७अ० । "त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्त्विकी राजसी चैव तामसी चेति तां शृणु । सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ! । श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः । यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः । प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः" । "श्रद्धापूर्वा इमे धर्माः श्रद्धा मध्यान्तसंस्थिता । श्रद्धा नित्या प्रतिष्ठाश्च धर्माः श्रद्धैव कीर्त्तिताः । श्रुतिमात्ररसाः सूक्ष्माः प्रधानपुरुषेश्वराः । श्रद्धामात्रेण गृह्यन्ते न करेण न चक्षुषा । कायक्लेशैर्न बहुभिस्तथैवार्थस्य राशिभिः । धर्मः संप्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि । श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतं तपः । श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत् । सर्वस्वं जीवितं वापि दद्यादश्रद्धया यदि । नाप्नुयात्तत्फलं किञ्चित् श्रद्धादानं ततो भवेत् । एवं श्रद्धान्वयाः सर्वे सर्वधर्माः प्रकीर्त्तिताः । केवलं श्रद्धया गम्यो ध्येयः पूज्यश्च सर्वदा" वह्निपु० । देवलः "अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् । दानमित्यभिनिर्दिष्टं व्याख्यानमस्य वक्ष्यते । उदिते यास्कर्षिते । देवलेनाप्युक्ता यथा "अनुकृति- मानश्रद्धया च सदा श्रद्धेति कीर्त्तिता" । अतएव भगवद्गीतासु "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् । असदित्युच्यते पार्थ ! न च तत्प्रेत्य नो इह" । हरिव० "अश्रोत्रिय आद्धमधीतमव्रतं त्वदक्षिणं यज्ञमनृत्विजा हुतम् । अश्रद्धया दत्तमसंस्कृतं हविर्भागाः षडेते तव दैत्यपुङ्गव !" शु०त० । याज्ञवल्क्यः "श्राद्धविधिसमायुक्तं कर्म यत् क्रियते नृभिः । सुविशुद्धेन भावेन तदानन्त्याय कल्पते" योगियाज्ञवल्क्यः "विधिहीनं भवेद्दुष्टं कृतमश्रद्धया च यत् । तद्धरन्त्यसुरास्तस्य मूढस्य दुष्कृतात्मनः" ।

**श्रद्धालु** स्त्री श्रद्धा+आलुच् । १स्पृहावत्यां स्त्रियां २श्रद्धायुक्ते त्रि० ।

**श्रन्थ** मन्थने बधे च वा चु० उभ० पक्षे भ्वा०पर०सक० सेट् । श्रन्थयति ते श्रन्थति अशश्रन्थत् त अश्रन्थीत् । [न्थीत्

**श्रन्थ** मोचने प्रतिहर्षे च क्र्या०प०सक०सेट् । श्रथ्नाति अश्र-

**श्रन्थ** पु० श्रन्थ-भावे घञ् । १ग्रथने कर्त्तरि अच् । सर्वसीवनकर्त्तरि २विष्णौ त्रिका० ।

**श्रन्थन** न० श्रन्थ-ल्युट् । ग्रन्थने ।

**श्रपित** त्रि०श्रा-पाके-णिच्-पुक् क्त । घृतादिभिश्च पक्वे माषादौ जटा० ।

**श्रम** तपसि, आयासे खेदे च अक० भ्वा० शमादि० पर०सेट् उदित् क्त्वा वेट् । श्राम्यति इरित् अश्रमत् अश्रमीत् । श्रान्त्वा श्रमित्वा श्रान्तः । [स्त्राभ्यासे च हेमच० ।

**श्रम** पु० श्रम-घञ् न वृद्धिः । १तपसि २खेदे ३आयासे ४श-

**श्रमण** पु० श्रम-युच् । १यतिभेदे २भिक्षाजीविनि त्रि० । ३जटामांस्यां ४मुण्डीर्याम् ५शबरीभेदे ६कुत्सितवर्णनार्यां स्त्रियां च स्त्री मेदि० ।

**श्रमिन्** त्रि० श्रम-इनि । श्रमकर्त्तरि । [इत्येके ।

**श्रम्भ** प्रमादे भ्वा० आ०अक०सेट् । श्रम्भते अश्रम्भिष्ट । स्रम्भ

**श्रय** पु० श्रि-अच् । आश्रये । ल्युट् । तत्रैव न० अमरः ।

**श्रव** पु० शृणोत्यनेन श्रु-अप् । १कर्णे २ख्यातौ च भरतः ।

**श्रवण** न० श्रूयतेऽनेन श्रु-करणे ल्युट् । १कर्णे शब्दग्राहकेन्द्रियभेदे अमरः । भावे ल्युट् । २श्रुतौ च शब्दादिषु ज्ञाने ३नक्षत्रे पुंस्त्री० ज्यो०त० । क्लीवत्वमपि "अभाकर्पाते श्रवणे यदि स्याद्दिति" स्मृतिः । ४समचतुरिकाज्ञके स्त्री रत्नमा० ।

**श्रवणद्वादशी** स्त्री श्रवणेन युक्ता द्वादशी शाक० । "मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता" इत्युक्तायां भाद्रशुक्लद्वादश्याम् । व्रतभेदे व्रतम् ।

**श्रवणशीर्षिका** स्त्री श्रवणमिव शीर्षमस्याः कप् अत इत्वम् । श्रावणीवृक्षे राजनि० । [श्रवि । २कीर्त्तौ ।

**श्रवस्** न० श्रूयतेऽनेन श्रु-करणे असि ।१कर्णे अमर० । कर्मणि

**श्रवाय्य** पु० श्रु-आय्य । यज्ञियपशौ सि०कौ० । शब्दकल्पद्रुमे श्रवाय्य इति पाठकल्पनं प्रामादिकमेव ।

**श्रविष्ठा** स्त्री श्रूयते श्रु-अप् श्रव० प्रशस्तिरस्त्यस्या मतुप् ङीप् अतिशयेन श्रववती इष्ठन् मतुपो लुक् । १धनिष्ठानक्षत्रे अमर० २श्रवणनक्षत्रे च ।

**श्रविष्ठाज** पु० श्रविष्ठायां श्रवणनक्षत्रे जायते जन-ड । बुधग्रहे त्रिका० । भगदैवतशब्दे ४६११२० दृश्यम् ।

**श्रा** विक्लृत्तौ अदा०पर०अनिट् । श्राति अश्रासीत् ।

**श्रा** पाके अदा०पर०सक०अनिट् घटा० । श्राति अश्रासीत् श्रपयति । [२यवाग्वां स्त्री अमर० ।

**श्राण** त्रि० श्रा-क्त । १घृतादिमिश्रे पक्वे मांसादौ जटा० ।

**श्राद्ध** न० श्रद्धा-हेतुत्वेनास्त्यस्य अच् । "श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते" इत्युक्ते पित्रादिभ्यः श्रद्धया देये १द्रव्ये । श्रद्धार्थे अण् । २श्रद्धायुक्ते त्रि० ।

श्राद्धलक्षणं तत्प्रयोजनञ्च गयाश्राद्धादिफलञ्च हेमाद्रिश्राद्धकल्पानुसारेणास्माभिः प्रदर्शितं यथा "सम्बोधनपदोपनीतान् पित्रादीन् चतुर्थ्यन्तपदेनोद्दिश्य पुत्रादिभिर्मन्त्रद्वारा श्रद्धयाऽन्नादिदानं श्राद्धम्" "अथैतस्मात् श्राद्धशब्दः कर्म प्रोवाचेति" श्राद्धविवेकधृतापस्तम्बवचनेन श्राद्धशब्दस्य कर्मसामान्यवचनतावगमात् "संस्कृतं व्यञ्जनाद्यं च पयोदधिघृतान्वितम्। श्रद्धया दीयते यस्मात् तेन श्राद्धं निगद्यते" इति श्राद्धतत्त्वधृतपुलस्त्यवचनेन श्रद्धाहेतुकदानरूपकर्मविशेषस्य श्राद्धपदार्थतावगमात् । श्राद्धमिति शब्दो वाचको यस्य तत्कर्मेत्यर्थ इति श्राद्धविवेकः । तच्च कर्मापि यागादाविन्द्रादीनामिव पित्रादेर्देवतात्वं तदुद्देशेन मन्त्रद्वारा द्रव्यत्यागात् । तथा च यागादौ मन्त्राहूता इन्द्रादयः शक्तिमात्रेण तत्तत्स्थले आविर्भूता यजमानत्यक्तद्रव्यदर्शनेन तृप्यन्तस्तस्याभीष्टफलं यथा साधयन्ति तथा श्राद्धेऽपि मन्त्राहूताः पित्रादयः समागताः पुत्रादित्यक्तद्रव्यभोगेन तृप्यन्तो विशिष्टफलप्रदा इत्येव कल्पनीयम् । किन्तु सर्वो हि लोकः सफले कर्मण्येव प्रवर्त्तते नाफले। तत्र यागादौ यथा देवानां फलदातृत्वेनैव श्राद्धदेवानां पित्रादीनां फलदातृत्वे सम्भवत्येव श्राद्धस्य सफलत्वं भवेत्तदेव नोपपद्यते । तथा हि इन्द्रादयो हि देवाश्चेतना विशिष्टज्ञानक्रियाशक्तिमन्तो मन्त्रमात्राहूताः शक्तिविशेषेण यत्रदेशे आविर्भवितुं शक्नुवन्ति आविर्भूय च यजमानदत्तद्रव्यदर्शनमात्रेण तृप्यन्तो विशिष्टफलदानाय समर्थाः । नैवं पित्रादयो भवितुमर्हन्ति । ते हि स्वस्वकर्मानुसारेण नानायोनिगततया अतिविप्रकृष्टदेशस्थिताः विशिष्टशक्तिरहिताश्च कथं मन्त्रमात्राहूताः श्राद्धदेशे आगच्छेयुः । आगता वा कुतो न दृश्येयुः देवानामिव तेषामतीन्द्रियत्वाभावात् दर्शनमात्रेण तृप्तेरभावाच्च । भोजनेनैव तेषां तृप्तिसम्भवाच्च भोजनमन्तरेण कथं तृप्येयुः । अतृप्ताश्च कुतो वा फलं दद्युः । पश्वादिगता वा कुतो विशिष्टफलप्रदाः स्युः । अपरञ्च इह दत्तस्य चान्नादेरचेतनतया नेतृपुरुषाभावेनान्यत्र गमनासम्भवः । श्राद्धदत्तद्रव्यस्य यथापूर्वमवस्थानाच्च भोक्तृदेशगमनमित्यनुमीयते । एवमिह दत्तमात्रेनान्यत्र स्थितानां भोगस्तु नैव सम्भवी । प्रत्यक्षविरोधेन श्राद्धस्य भोजनाच्च पित्रादितृप्तिसम्भवः भोक्तृतृप्त्योः सामानाधिकरण्यनियमात् । किञ्च देवयोनिगतानाममृताशिनां मानुषयोग्येनान्नेन कथं तृप्तिः कथं वा पशुयोनिगतानां तृणाद्याहारयोग्यानां तेन तृप्तिः । तेषां पश्वादिशरीरमपेक्ष्य फलदातृत्वासम्भवस्तु विशिष्टशक्तेरभावात् सर्वानुभवसिद्धः । एतेन "यथा गोषु प्रनष्टो वै वत्सो विन्दति मातरम् । एवं श्राद्धेऽन्नमुद्दिष्टं मन्त्रः प्रापयते पितॄन् । नामगोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः । नाममन्त्रास्तथोद्देशो भवान्तरगतानपि । प्राणिनः प्रीणयन्त्येते तदाहारत्वमागतान् । देवो यदि पिता जातः शुभकर्मानुसारतः । श्राद्धान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति । दैत्यत्वे भोग्यरूपेण पशुत्वे च तृणं भवेत् । श्राद्धान्नं वायुरूपेण नागत्वेऽप्यनुगच्छति । पानं भवति यक्षत्वे राक्षसत्वे च तथामिषम् । दनुजत्वे तथा माषं प्रेतत्वे रुधिरोदकम् । मनुष्यत्वेऽन्नपानादि नानाभोगरसं तथेति च" हेमाद्रिश्राद्धकल्पादिधृतमार्कण्डेयवचनैरिष्टस्यान्नादेरेव मन्त्रशक्त्या विशिष्टदेशनयनं पितृप्राप्तयोनियोग्यामृतादिरूपेण परिणामश्च कल्प्यते इत्यपि न विचारचारु अचेतनानामपि मन्त्राणां चेतनधर्मकल्पनापि तदैव साधीयसी स्यात् यदि दत्तान्नादेरिह यथापूर्वमवस्थितिर्न स्यात् स्याच्च पूर्वरूपान्यथाभावः । तथा च एतादृशवचनानां स्तुतिमात्रपरतया अर्थे दृष्टविरुद्धमात्रत्वाद्बाधककल्पना । किञ्च पाप-

[illegible]णेन भोगादिना विनष्टस्य वस्तुनः कथं स्थानान्तर-नयनं कथं वा तत्तदाहारताक्रमेण परिणामः धर्मिणि सत्येव स्थानान्तरगमनादिसम्भवो न विनष्टस्येति श्राद्धस्य कथं प्रयोजनवत्त्वमित्येव स्थिते । उच्यते । ग्रामगवादिसम्प्रदानक्रियाया इव श्राद्धकर्मण एव स्वजन्य-पुण्यद्वारा विशिष्टफलजनकता तत्र च कालान्तरभावितत्-तत्फलदानाय तत्कर्माराधितः परमेश्वरस्यैव तत्साधनत्वम् । अतएव भगवद्गीतायाम् "यो यो यां यां तनुं भक्तः श्रद्धयार्च्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान्" इति भक्तानां तत्तदिष्टोत्पादनस्य स्वकर्त्तृकत्वं भगवतोक्तम् । युक्तञ्चैतत् श्रुतिस्मृत्योरीश्वराज्ञारूपतया तत्तदर्थानुष्ठानेन तदाज्ञाप्रतिपालने ईश्वरस्य प्रसादमात्ररूपा तृप्तिस्ततश्चाभीष्टलाभः । तथैवोक्तं गीतायां "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः । स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु । यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति । स्वकर्मणा स्ववर्णाश्रमविहितकर्मानुष्ठानेन, तम् परमेश्वरम् अभ्यर्च्य तदाज्ञाप्रतिपालनेन सम्मान्य तत्प्रसादेन च तत्कृतां सिद्धिम् तत्कृदभीष्टसिद्धिं लभते इति तदर्थः । अस्मिन् पक्षे च पित्रादीनां श्राद्धान्नादेर्वा न स्थानान्तरगमनकल्पना । अथ वा देवदत्तादिशब्दस्य यथा न केवलं देहमात्रं, न वा जीवमात्रमर्थः किन्तु तत्तद्देहाभिमानी जीव एवार्थः । तथा पित्रादिशब्दस्य तत्तादृक्देहाभिमानी केवलं जीवोऽपि नार्थः किन्तु वसुरुद्रादित्यदेवाधिष्ठिततादृशजीव एवार्थः, "वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः । प्रपितामहास्त्वादित्याः श्रुतिरेषा सनातनी । प्रेतानुद्दिश्य यत् कर्म क्रियते सा-[illegible]रिह । तुष्यन्ति देवतास्तेन न प्रेताः पितरः स्मृताः" । इति श्राद्धकल्पधृतदेवलवचने पित्रादिपदानां पारिभाषिकत्वोक्तेः । प्रेताः स्मृताः न पितरः न केवल पितृपदाभिधेयाः किन्तु तदधिष्ठितवसव एव पितृपदाभिधेयास्त एव तुष्यन्तीत्यर्थः । अतएव श्राद्धकाले पित्रादीनां तेन तेन रूपेण ध्येयताऽप्येतदभिधानसमानोपपद्यते । एवञ्च वस्वादिदेवानामिन्द्रादिवत् विशिष्टशक्तिप्रामाण्यसत्तया मन्त्रसामर्थ्यावाहने यागादाविन्द्रादिवदाग-

मनसम्भवाच्च त्यक्तद्रव्यदर्शनमात्रेण तृप्तिः, "न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्तीति" छान्दोग्यवाक्यात् । अतएव भगवद्गीतायाम् "सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् । देवान् भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथेति" प्रजाकृतयज्ञेन तृप्तानां देवानां यजमानफलदातृत्वम् प्रजाः प्रति प्रजापतिवचनत्वेनोक्तम् । अनेन यज्ञेन देवान् भावयत तर्पयत ते च यज्ञतर्पिता देवाः वः युष्मान् भावयन्तु तर्पयन्त्वित्यर्थः । यज्ञपदञ्च कर्ममात्रोपलक्षणम् । एवञ्च यथा काचित् गर्भिणी स्पृहया दत्तं दोहदं भुञ्जाना स्वयं तृप्यति स्वाश्रयं गर्भञ्च तर्पयन्ती दोहददातारमप्युपकरोति तथा वस्वादयोऽपि श्राद्धान्नदर्शनमात्रतृप्ताः स्वाधिष्ठितपित्रादिपुरुषान् तर्पयन्तः श्राद्धकर्त्तुरपीष्टदातारो भवन्ति । प्रागुक्तवचनजातेष्वपि मन्त्रशक्त्यान्नादेर्देशान्तरनयनकथनस्यापि स्वस्वकर्मानुसारेण पश्वादिभावापन्नपित्रादीनां तदुपभोगयोग्याहारादेरुत्पत्तिपरत्वादिकता तद्भिन्ने भवतीत्येतत्परत्वस्याप्रशंसापरत्वयोः कल्पने न वैयर्थ्यम् । यत्र च काम्यादिस्मरणेन पित्रादीनां मुक्तत्वम् तत्र वस्वादिमात्रस्यैव तृप्तिर्न विशिष्टस्य, विशेषणस्यासत्त्वे विशेष्यस्यैव विशिष्टकारित्वात् कुण्डलविशिष्टस्य नरस्य कुण्डलापगमेऽपि मनुष्यकर्मकारित्वाव्याहतिवत् । तथा च त एव तृप्ता विशिष्टफलं दद्युरिति सिद्धा श्राद्धसार्थवत्ता" ।

श्राद्धभेदाश्च विश्वामित्राद्युक्ताः प्रा० वि० दर्शिता यथा "नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् । पार्वणञ्चेति विज्ञेयं गोष्ठ्यं शुद्ध्यर्थमष्टमम् । कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् । यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम्" । एतद्भविष्यपुराणे विस्तृतम् । यथा "अहन्यहनि यत् श्राद्धं तन्नित्यमभिधीयते । वैश्वदेवविहीनं तदशक्तावुदकेन तु । एकोद्दिष्टन्तु यत् श्राद्धं तन्नैमित्तिकमुच्यते । तदप्यदैवं कर्त्तव्यमयुग्मानाशयेद्द्विजान् । कामाय तु हितं काम्यमभिप्रेतार्थसिद्धये । पार्वणेन विधानेन तदप्युक्तं खगाधिप ! । वृद्धौ यत् क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते । सर्वं प्रदक्षिणं कार्य्यं पूर्वाह्णे तूपवीतिना । गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयम् । अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् । ये समाना इति द्वाभ्यामेतज्ज्ञेयं

**श्रवणशीर्षिका** स्त्री श्रवणमिव शीर्षमस्याः कप् अत इत्त्वम्। श्रावणीवृक्षे राजनि०। [अपि। २कीर्त्तौ।

**श्रवस्** न० श्रूयतेऽनेन श्रु—करणे असुन्। १कर्णे अमरः। कर्मणि

**श्रवाय्य** पु० श्रु-आय्य। यज्ञियपशौ सि०कौ०। शब्दकल्पद्रुमे श्रवाप्य इति पाठः कल्पनं प्रामादिकमेव।

**श्रविष्ठा** स्त्री श्रूयते श्रु—अप् श्रवः प्रसिद्धिरस्त्यस्याः मतुप् ङीप् अतिशयेन श्रववती इष्ठन् मतुपो लुक्। १धनिष्ठानक्षत्रे अमरः २श्रवणनक्षत्रे च।

**श्रविष्ठाज** पु० श्रविष्ठायां श्रवणनक्षत्रे जायते जन—ड। बुधग्रहे त्रिका०। भगदत्तशब्दे ४६२१९० दृश्यम्।

**श्रा** विक्लृत्तौ अदा०पर०अनिट्। श्राति अश्रासीत्।

**श्रा** पाके अदा०पर०सक०अनिट् घटा०। श्राति अश्रासीत् श्रपयति। [२यवाग्वां स्त्री अमरः।

**श्राण** त्रि० श्रा—क्त। १घृतादिभिस्सह पक्वे मांसादौ जटा०।

**श्राद्ध** न० श्रद्धा-हेतुत्वेनास्त्यस्य अच्। "श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते" इत्युक्ते पित्रादिभ्यः श्रद्धया देये १द्रव्ये। अस्त्यर्थे अच्। २श्रद्धायुक्ते त्रि०।

श्राद्धलक्षणं तद्भेदयोग्यकालश्च गयाश्राद्धादिफलश्च हेमाद्रिश्राद्धकल्पानुसारेणास्माभिः प्रदर्श्यते यथा

"सम्बोधनपदोपनीतान् पित्रादीन् चतुर्थ्यन्तपदेनोद्दिश्य पुत्रादिभिर्मन्त्रद्वारा श्रद्धयान्नादेर्दानं श्राद्धम्" "अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाचेति" श्राद्धविवेकधृतापस्तम्बवचनेन श्राद्धशब्दस्य कर्मसामान्यवचनतावगमात् "संस्कृतं व्यञ्जनाद्यं च पयोदधिघृतान्वितम्। श्रद्धया दीयते यस्मात् तेन श्राद्धं निगद्यते" इति श्राद्धतत्त्वधृतपुलस्त्यवचनेन श्रद्धाहेतुकदानरूपकर्मविशेषस्य श्राद्धपदार्थतावगमाच्च। श्राद्धमिति शब्दो वाचको यस्य तत्कर्मेत्यर्थ इति श्राद्धविवेकः। तस्मिंश्च कर्मणि यागादाविन्द्रादीनामिव पित्रादेर्देवतात्वं तदुद्देशेन मन्त्रद्वारा द्रव्यत्यागात्। तथा च यागादौ मन्त्राहूता इन्द्रादयः शक्तिमात्रेण तत्तत्स्थले आविर्भूता यजमानत्यक्तद्रव्यदर्शनेन तृप्यन्तस्तेषामभीष्टफलं यथा साधयन्ति तथा श्राद्धेऽपि मन्त्राहूताः पित्रादयः समागताः पुत्रादित्यक्तद्रव्यभोगेन तृप्यन्तो विशिष्टफलप्रदा इत्येव कल्पनीयम्। किन्तु सर्वो हि लोकः सफले कर्मण्येव प्रवर्त्तते नाफले। तत्र यागादौ यथा देवानां फलदातृत्वमेव श्राद्धदेवानां पित्रादीनां फलदातृत्वे सम्भवत्येव श्राद्धस्य सफलत्वं भवेत्तदेव नोपपद्यते। तथा हि इन्द्रादयो हि देवाश्चेतना विशिष्टज्ञानक्रियाशक्तिमन्तो मन्त्रमात्राहूताः शक्तिविशेषेण यज्ञदेशे आविर्भवितुं शक्नुवन्ति आविर्भूय च यजमानदत्तद्रव्यदर्शनमात्रेण तृप्यन्तो विशिष्टफलदानाय समर्थाः। नैवं पित्रादयो भवितुमर्हन्ति। ते हि स्वस्वकर्मानुसारेण नानायोनिगततया अतिविप्रकृष्टदेशस्थिताः विशिष्टशक्तिरहिताश्च कथं मन्त्रमात्राहूताः श्राद्धदेशे आगच्छेयुः। आगता वा कुतो न दृश्येयुः देवानामिव तेषामतीन्द्रियत्वाभावात् दर्शनमात्रेण तृप्तेरभावाच्च। भोजनेनैव तेषां तृप्तिसम्भवाच्च भोजनमन्तरेण कथं तृप्येयुः। अतृप्ताश्च कुतो वा फलं दद्युः। पश्वादिगता वा कुतो विशिष्टफलप्रदाः स्युः। अपरञ्च इह दत्तस्य चान्नादेरचेतनतया नेतृपुरुषाभावेनान्यत्र गमनासम्भव। श्राद्धदत्तद्रव्यस्य यथापूर्वमवस्थानाच्च भोक्तृदेशगमनमित्यनुमीयते। एवमिह दत्तेनान्नेनान्यत्र स्थितानां भोजनस्तु नैव सम्भवी। पात्रीयब्राह्मणेन श्राद्धान्नस्य भोजनाच्च पित्रादितृप्तिसम्भवः भोक्तृतृप्तौ सामानाधिकरण्यनियमात्। किञ्च देवयोनिगतानाममृतान्नभुजां मानुषयोग्येनान्नेन कथं तृप्तिः कथं वा पशुयोनिगतानां तृणाद्याहारयोग्यानां तेन तृप्तिः। तेषां पश्वादिभावमापेदुषां फलदातृत्वासम्भवस्तु विशिष्टशक्त्यभावात् सर्वानुभवसिद्धः। एतेन "यथा गोषु प्रनष्टो वै वत्सो विन्दति मातरम्। एवं श्राद्धेऽत्र दत्तं च मन्त्रः प्रापयते पितॄन्। नाममोत्र पितॄणां तु प्रापकं हव्यकव्ययोः। नाममन्त्रास्तथोद्देशो भवान्तरगतानपि। प्राणिनः प्रीणयन्त्येते तदाहारत्वमागताः। देवो यदि पिता जातः शुभकर्मानुसारतः। श्राद्धान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति। दैत्यत्वे भोग्यरूपेण पशुत्वे च तृणं भवेत्। श्राद्धान्नं वायुरूपेण नागत्वेऽप्यनुगच्छति। पानं भवति यक्षत्वे राक्षसत्वे च तथामिषम्। दनुजत्वे तथा मांसं प्रेतत्वे रुधिरोदकम्। मानुषत्वेऽन्नपानादि नानाभोगरसं तथेति च" हेमाद्रिश्राद्धकल्पादिधृतमार्कण्डेयवचनैरिह दत्तान्नादेरेव मन्त्रशक्त्या विप्रकृष्टदेशनयनं पितृप्राप्तयोनियोग्यामृतादिरूपेण परिणामश्च कल्प्यते इत्यपि न विचारचारु अचेतनानामपि मन्त्राणां चेतनधर्मकल्पनापि तदैव साधीयसी स्यात् यदि दत्तान्नादेरिह यथापूर्वमवस्थितिर्न स्यात् तत्र पूर्वरूपान्यथाभावः। तथा च एवमादिवचनानां स्तुत्यर्थवादपरताया अपि दुर्निवारप्रमाणत्वान्नाधिककल्पना। किञ्च पात्र-

श्राद्धं कुर्य्यान्न च गच्छेत्तथा । चातुर्वर्ण्यं व्यवस्थानं यस्मिन् देशे न विद्यते । तं म्लेच्छदेशं जानीयादार्य्यावर्त्तमतःपरम्” । वायुपुराणे “त्रिशङ्कुं वर्जयेद्देशं सर्वं द्वादशयोजनम् । उत्तरेण महानद्या दक्षिणेन तु कीकटात् । देशस्त्रैशङ्कवो नाम श्राद्धकर्मणि गर्हितः । कारस्काराः कलिङ्गाश्च सिन्धोरुत्तरमेव च । प्रनष्टाश्रमधर्माश्च देशावर्ज्याः प्रयत्नतः” । कारस्कारादेशविशेषाः । कीकटो मगधः । सिन्धुर्नदीविशेषः । ब्रह्मपुराणे “परकीयप्रदेशे यस्तु स्थान् पितॄंस्तर्पयेज्जातु । तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् । अतस्तत्र भागन्तस्तेभ्यो दद्यान्मूल्यस्य जीवताम्” । प्रदेश इति भूभागमात्रोपलक्षणं “पारक्ये भूमिभागे च” इति यमवचनात् स्वभूम्यभावे कथं श्राद्धमित्याह अग्रभागमिति श्राद्धीयद्रव्यस्येति तेभ्यस्तद्भूमिस्वामिपितृभ्य उद्धृत्य देयं जीवतां स्वामिनां मूल्यं वा देयम् । यमः “अटव्यः पर्वताः पुण्या नद्यस्तीर्थानि यानि च । सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः” । स्वाम्यभावे हेतुमाह न हि तेष्विति । परिग्रहो दानविक्रयणादियथेष्टविनियोगलक्षणः । तथा “कृष्णं दक्षिणतः क्लिष्टं सकोणामिष्टगात्रकम् । देशस्य मध्यमञ्चैव वर्जयेत् श्राद्धकर्मणि” । कृष्णं धूलियुतं क्लिष्टं पङ्किलम् अनिष्टगन्धम् उत्कटाभिगन्धम् अनिष्टशब्दं प्रतिकूलशब्दम्” ।

**श्राद्धदेव** पु॰ श्राद्धाद्देवतानां पितॄणां देवः शाक॰ । १यमे अमरः । २वैवस्वतमनौ हरिवं॰ १५अ॰ ।

**श्राद्धदेवता** स्त्री श्राद्धे देवता त्यज्यमानद्रव्यस्योद्देश्या । “पितरः श्राद्धदेवताः” इति स्मृत्युक्तेषु पितृषु ।

**श्राद्धशाक** न॰ श्राद्धयोग्यं शाकम् । कालशाके भावप्र॰ ।

**श्राद्धिक** त्रि॰ श्राद्धे देयं, श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य वा ठन् । १श्राद्धदेये भक्ष्ये २श्राद्धदेयद्रव्यभोक्तरि च ।

**श्राद्धिन्** त्रि॰ श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य इनि । श्राद्धदेयान्नभोक्तरि सि॰कौ॰ । [हेमच॰ । भावे क्त । ४श्रमे न॰

**श्रान्त** त्रि॰ श्रम-क्त । १श्रमयुक्ते २शान्ते ३जितेन्द्रिये च

**श्रान्तसंवाह** न॰ श्रान्तस्य श्रमस्य संवाहः दूरीकरणम् । पादसंवाहनादिना श्रमनिवारणे । [यति त ।

**श्राम** मन्त्रणे अ॰चु॰ उभ॰सक॰ सेट् । श्रामयति ते अशश्रा

**श्राम** पु॰ श्रम-घञ् । १काले २मण्डपे ३मासे च मेदि॰ ।

**श्रावक** पु॰स्त्री॰ श्रु-ण्वुल् । १श्रवणकर्त्तरि २श्रावकनामकबौद्धे मुनिभेदे —श्राविका पुंस्त्री॰ त्रिका॰ ।

**श्रावण** पु॰ श्रवणेन युक्ता पौर्णमासी श्रावणी साऽस्मिन् मासे अण् । वैशाखादिषु चतुर्थे श्रावणीयुक्ते चान्द्रे १मासे २तथाभूते पक्षे श्रवणनक्षत्रेण पर्वान्तकाले उदयात्सम्बन्धात् वार्हस्पत्ये ३वर्षभेदे च । गुरुवर्षशब्दे २६१८ पृ॰ दृश्यम् उपचारात् कर्कटस्थरविके सौरे ४मासे ५पाषण्डे च मेदि॰ । श्रवणेन कर्णेन निर्वृत्तं अण् । ६कर्णसाध्ये प्रत्यक्षभेदे श्रवणनक्षत्रेण युक्ता पौर्णमासी अण् ङीप् । ७चान्द्रश्रावणमासीयपौर्णमास्यां स्त्री । सा च (मुण्डीरि) दक्षभेदे राजनि॰ । ९दक्षाचीरक्षे मेदि॰ टाप् । १०मुण्डितिकाख्ये भावप्र॰ ङीप् । “मुण्डितिका कटुः पाके वीर्य्योष्णा मधुरा लघुः । मेध्या गण्डापचीकृच्छ्रकृमियोन्यर्त्तिपाण्डुनुत् । श्लीपदारुच्यपस्मारप्लीहमेदोगुदार्त्तिहृत् । महाश्रावणी च तत्तुल्या गुणैरुक्ता महर्षिभिः” भावप्र॰ ।

**श्रावणिक** पु॰ श्रावणी श्रवणनक्षत्रयुक्ता पूर्णिमाऽस्त्यस्मिन् मासे ठन् । १चान्द्रश्रावणमासि अमरः । २तथाभूते पक्षे

**श्रावन्ती** स्त्री श्रु-भिच् प्रभो॰ ङीप् । धर्मपत्तनाख्ये नगरीभेदे त्रिका॰ ।

**श्रि** सेवने भ्वा॰उभ॰ सक॰ सेट् । श्रयति ते अशिश्रियत् त ।

**श्रित** त्रि॰ श्रि-क्त । १सेविते २आश्रिते च ।

**श्रिय** दाने भ्वा॰पर॰स॰ सेट् क्रा सेट् । श्रेयति अश्रेयीत् ।

**श्री** पाके क्र्या॰उ॰सक॰सेट् । श्रीणाति-ते अश्रायीत् अश्रायिष्ट

**श्री** स्त्री श्रि-क्विप् नि॰ । १लक्ष्म्याम् २लवङ्गे अमरः । ३शोभायां ४वाण्यां ५वेशरचनायां ६सरलद्रवे ७धर्मार्थकामेषु ८सम्पत्तौ ९प्रकारे १०उपकरणे ११बुद्धौ १२विभूतौ मेदि॰ । १३अधिकारे १४प्रभायां १५कीर्त्तौ धरणि । १६हरौ १७विद्धौ शब्दर॰ १८कमले १९बिल्ववृक्षे २०वङ्गिनामौषधौ राजनि॰ “देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् । सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत्” इत्युक्ते देवादीनां २१नामोच्चारणायोपाधिभेदे च “सिद्धाधिकारान् स्वर्गगामित्यादिना सिद्धोऽधिकारो येषां गणानां तान् सिद्धाधिकारान् । तेन जीवतां श्रीशब्दादित्वं न मृतानामिति” संस्कारत॰ रघु॰ । २२रागभेदे पु॰ । श्रीरागश्च सुन्दरपुरुषाकृतिः हेमन्ते अपराह्णे गेयः । तस्य पञ्च रागिण्य मालश्रीः मारवी धनाश्रीः वसन्तरागिणी आशावरी सङ्गीतदा॰

पञ्च श्रीशब्दन्यासस्थानभेदाः पञ्चशब्दे ४२२०पृ॰ दृश्याः

**श्रीकण्ठ** पु॰ श्रीः शोभा कण्ठेऽस्य । १शिवे अमरः सर्वतः श्वेतस्य

श्राद्धं कुर्य्यान्न च गच्छेत्तथा। चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते। तं म्लेच्छदेशं जानीयादार्य्यावर्त्तमतः परम्"। वायुपुराणे "त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनम्। उत्तरेण महानद्या दक्षिणेन तु कीकटात्। देशस्त्रैशङ्कवो नाम श्राद्धकर्मणि गर्हितः। कारस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च। प्रनष्टाश्रमधर्माश्च देशा वर्ज्या प्रयत्नतः"। कारस्करादेशविशेषाः। कीकटो मगध। सिन्धुर्नदीविशेषः। ब्रह्मपुराणे "परकीयप्रदेशे यस्तु श्राद्धं पितॄंस्तर्पयेत् स्वयम्। तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात्। तस्माद्भागं ततस्तेभ्यो दद्यान्मूल्यं च जीवताम्"। प्रदेश इति भूभागमात्रोपलक्षणं "परक्ये भूमिभागे च" इति यमवचनात् स्वभूम्यभावे कथं श्राद्धमित्याह तस्मात् भागमिति श्राद्धीयद्रव्यस्येति तेभ्यस्तद्भूमिस्वामिपितृभ्य उद्धृत्य देयं जीवतां स्वामिनां मूल्यं वा देयम्। यमः "अटव्यः पर्वताः पुण्याः नद्यस्तीर्थानि यानि च। सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः"। स्वाम्यभावे हेतुमाह न हि तेष्विति। परिग्रहो दानविक्रयादिविषयेच्छाविनियोगलक्षणः। तथा "कृष्णं तिलसंयुक्तं स्निग्धं सकोणांगिरिशृङ्गाम्बुम्। देशस्तु महदत्त्वं च वर्जयेत् श्राद्धकर्मणि"। ऊषं भूमियुतं स्निग्धं पङ्किलम् अनिष्टगन्धम् अतिशब्दं प्रतिकूलशब्दम्"।

**श्राद्धदेव** पु० श्राद्धादेर्यज्ञाना पितृणां देवः शाक०। १यमे अमरः। २वैवस्वतमनौ हरिवं० १५अ०।

**श्राद्धदेवता** स्त्री श्राद्धे देवता त्यक्तद्रव्यस्योद्देश्या। "पितरः श्राद्धदेवताः" इति स्मृत्युक्तेषु पितृषु।

**श्राद्धशाक** न० श्राद्धयोग्यं शाकम्। कालशाके भावप्र०।

**श्राद्धिक** त्रि० श्राद्धे देयं, श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य वा ठन्। १श्राद्धदेये भक्ष्ये २श्राद्धदेयद्रव्यभोक्तरि च।

**श्राद्धिन्** त्रि० श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य इनि। श्राद्धदेयान्नभोक्तरि सि०कौ०। [हेमच०। भावे क्त। ४श्रमे न०।

**श्रान्त** त्रि० श्रम-क्त। १श्रमयुक्ते २शान्ते ३जितेन्द्रिये च

**श्रान्तसंवाह** न० श्रान्तस्य श्रमस्य संवाह दूरीकरणम्। पाद्यासनादिना श्रमनिवारणे। [सेत् त।

**श्राम** मन्त्रणे अद०चुरा० उभ०सक० सेट्। श्रामयति ते अशश्रा

**श्राम** पु० श्रम-घञ्। १काले २मण्डपे ३मासे च मेदि०।

**श्रावक** पु०त्रि० श्रु-ण्वुल्। १श्रवणकर्त्तरि २बौद्धमुनिविशेषे बुद्धशिष्ये काके पुंस्त्री० त्रिका०।

**श्रावण** पु० श्रवणेन युक्ता पौर्णमासी श्रावणी साऽस्मिन् मासे अण्। वैशाखादिषु चतुर्थे श्रावणीयुक्ते चान्द्रे १मासे २तथाभूते पक्षे श्रवणनक्षत्रेण पर्यन्तकाले उदयास्तमनस्मात् वार्हस्पत्ये ३वर्षभेदे च। गुरुवर्षशब्दे २६१६ पृ० दृश्यम् उपचारात् कर्कटस्थरविके सौरे ४मासे ५पाषण्डे च मेदि०। श्रवणेन कर्णेन निर्वृत्तः अण्। ६कर्णसाध्ये प्रत्यक्षभेदे श्रवणनक्षत्रेण युक्ता पौर्णमासी अण् ङीप्। ७चान्द्रश्रावणमासीयपौर्णमास्यां स्त्री। सा च (मुण्डिरि) ८क्षुपभेदे राजनि०। ९दश्यालीक्षुपे मेदि० टाप्। १०मुण्डतिकाक्षुपे भावप्र० ङीप्। "मुण्डितिका कटुः पाके वीर्य्योष्णा मधुरा लघुः। मेध्या गलगण्डापचीकृच्छ्र कृमियोन्यर्त्तिपाण्डुनुत्। श्लीपदारुच्यापस्मारप्लीहमेदोगुदार्त्तिहृत्। महाश्रावणी च तत्तुल्या गुणैरुक्ता महर्षिभिः" भावप्र०।

**श्रावणिक** पु० श्रावणी श्रवणनक्षत्रयुक्ता पूर्णिमाऽस्त्यस्मिन् मासे ठन्। १चान्द्रश्रावणमासे अमरः। २तथाभूते पक्षे

**श्रावस्ती** स्त्री श्रु-क्विप् पृषो० ङीप्। धर्मपत्तनाख्ये नगरीभेदे त्रिका०।

**श्रि** सेवने भ्वा०उभ० सक० सेट्। श्रयति ते अशिश्रियत् त।

**श्रित** त्रि० श्रि-क्त। १सेविते २आश्रिते च।

**श्रिय** दाने भ्वा०पर०स० सेट् क्त्वा वेट्। श्रेयति अश्रेयीत्।

**श्री** पाके क्र्या०उ०सक०सेट्। श्रीणाति-ते अश्रायीत् अश्रावष्ट

**श्री** स्त्री श्रि-क्विप् नि०। १लक्ष्म्यां २लवङ्गे अमरः। ३शोभायां ४वाण्यां ५वेशरचनायां ६सरलद्रुमे ७धर्मार्थकामेषु ८सम्पत्तौ ९प्रकारे १०उपकरणे ११वृद्धौ १२विभूतौ मेदि०। १३अधिकारे १४प्रभायां १५कीर्त्तौ धरणि। १६वृद्धौ १७विद्धौ शब्दर० १८कमले १९बिल्ववृक्षे २०हिङ्गुविनाशौषधौ राजनि० "देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्। सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत्" इत्युक्ते देवादीनां २१नामोच्चारणीयोपाधिभेदे च "सिद्धाधिकारान् स्वर्गगामित्यादिना सिद्धोऽधिकारो येषां नराणां तान् सिद्धाधिकारान्। तेन जीवतां श्रीशब्दादित्वं न मृतानामिति" संस्कारत० रघु०। २२रागभेदे पु०। श्रीरागश्च सन्दर्पुरुषाकृतिः हेमन्ते अपराह्णे गेयः। तस्य षट् रागिण्य मालश्री० मारवी धनाश्रीः वसन्तरागिणी आशावरी सङ्गीतदा०

पञ्चे श्रीशब्दन्यासंख्याभेदाः पत्रशब्दे ४२२०पृ० दृश्याः

**श्रीकण्ठ** पु० श्रीः शोभा कण्ठेऽस्य। १शिवे अमरः सर्वतः श्वेतस्य

विधा प्रतिष्ठा श्रीशमन्दिरम् । उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने । अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद् द्वयम् । स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् । गोपालमन्त्राद्दिष्टत्वात् तच्छ्रीमूर्त्तिरपेक्षिता । तथापि वैष्णवानीत्वे लेख्याः श्रीमूर्त्तयोऽखिलाः" ।

**श्रीरङ्गपत्तन** न० श्रिया रङ्गस्य पत्तनमिव । दक्षिणस्थे देशभेदे

**श्रीरस** पु० श्रियै रसोऽस्य । श्रीवेष्टे गन्धद्रव्ये राजनि० ।

**श्रीराम** पु० श्रीशब्दयुक्तो रामः । दशरथात्मजे भगवदवतारभेदे शब्दच० । [च अमरः ।

**श्रील** त्रि० श्री+मत्वर्थे लच् । १शोभायुक्ते २सम्पदादियुक्ते

**श्रीलता** स्त्री श्रीयुक्ता लता । महाज्योतिष्मत्यां राजनि० ।

**श्रीवत्स** पु० वदति महत्त्वं वद–स श्रीयुक्तो वत्सः । १वक्षःस्थे महत्त्वलक्षणश्वेतरोमावर्त्तविशेषे । स अस्त्यस्य अच् । २विष्णौ हेमच० । ३हरङ्गाभेदे त्रिका० ।

**श्रीवत्सक** पु० श्रीवत्सः चिह्नभेदः तेन कायति कै–क । हृदयस्थश्वेतलोमयुक्ते अश्वभेदे ।

**श्रीवत्सभृत्** पु० श्रीवत्सं बिभर्त्ति भृ–क्विप् । विष्णौ हेमच०

**श्रीवत्सलाञ्छन** पु० श्रीवत्सो लाञ्छनं यस्य । विष्णौ अमरः श्रीवत्साङ्कादयोऽप्यत्र । [वराहावतारे त्रिका० ।

**श्रीवराह** पु० श्रिया युक्तो वराहः । विष्णोर्दशस्ववतारेषु

**श्रीवल्ली** स्त्री श्रीयुक्ता वल्ली । कण्टकप्रधानवृक्षभेदे राजनि० ।

**श्रीवाटी** स्त्री श्रिया वाटीव । नागरङ्गभेदे राजनि० ।

**श्रीवारक** पु० श्रियं वारयति कामयते ण्वुल् । शितावरशाके राजनि० ।

**श्रीवास** पु० श्रियै वासयति वस–णिच्–अच् । सरलद्रवरसे (टारपिन) । "श्रीवासः सरलः पूतिः कुन्दुरुश्च निवर्णकम् । त्रिकण्टकः परमानासो देवदारु हरा नखी । सर्वेऽप्येते परमा ज्वरमोक्षणाः ज्वरनाशनाः" राजव० । ५त० । २पद्मे ३विष्णौ मेदि० ४शिवे शब्दच० ।

**श्रीवासस्** न० श्रियै वासयति वस–णिच् असि । सरलद्रवरसे अमरः । [तन्त्रसा० ।

**श्रीविद्या** स्त्री श्रियै त्रिपुरायै विद्या । त्रिपुरासुन्दर्याः

**श्रीवृक्ष** पु० श्रियः शोभाया वृक्ष इव । १अश्वस्य हृदयस्थे श्वेतरोमावर्त्तभेदे २अश्वत्थवृक्षे हेमच० । श्रीनामकोऽस्त्यस्य शाक० । ३बिल्ववृक्षे "श्रीवृक्षे बोधयामि त्वाम्" ति० त० ।

**श्रीवेष्ट** पु० श्रियै वेष्ट्यतेऽसौ वेष्ट–कर्मणि घञ् । सरलद्रवनिर्यासे (टारपिन) राजनि० । [ऽप्यत्र ।

**श्रीश** पु० ६त० । १विष्णौ २श्रीरामे शब्दच० । श्रीवरादयो-

**श्रीसंज्ञ** न० श्रियः संज्ञा सञ्ज्ञाऽस्य । लवङ्गे अमरः । [च ।

**श्रीसहोदर** पु० ६त० । १चन्द्रे २उच्चैःश्रवसि अश्वे च ३कर्पूरे

**श्रीहस्तिनी** स्त्री श्रीयुक्ता हस्तिनीव । (हातिशुँड़ा) वृक्षभेदे अमर ।

**श्रु** गतौ भ्वा० पर० सक० अनिट् । श्रवति अश्रौषीत् ।

**श्रु** श्रवणे भ्वा० पर० सक० अनिट् । शृणोति अश्रौषीत् । णिचि श्रावि अशिश्रवत् । णिचि सनि शि(शु)श्रावयिषति ।

**श्रु(स्रु)घ्न** पु० देशभेदे । [ठन् । वर्त्तिकाधारे रत्नमा० ।

**श्रु(स्रु)घ्निका** स्त्री श्रु(स्रु)घ्नः देशभेद कारणत्वेनाऽस्त्यस्याः

**श्रुत** न० श्रूयते श्रु–क्त । १शास्त्रे अमरः २तज्ज्ञाने च "श्रुतान्वितः" इति भट्टिः । ३श्रवणेन गृहीते त्रि० मेदि० ४अवधृत च ।

**श्रुतकीर्त्ति** स्त्री १कुशध्वजकन्यायां शत्रुघ्नपत्न्याम् । श्रुता विख्याता कीर्त्तिरस्य । २विख्यातयशस्के त्रि० ।

**श्रुतदेवी** स्त्री श्रुतस्य शास्त्रस्य देवी । सरस्वत्यां हेमच० ।

**श्रुतबोध** पु० श्रुतमात्रे बोधयति बुध–णिच्–अण् । १कालिदासकृते छन्दोग्रन्थभेदे । २सुगमार्थके ग्रन्थे च ।

**श्रुतश्रवस्** पु० श्रुतं श्रवो यशोऽस्य । शिशुपालपितरि "निर्वर्त्यतेऽरिः क्रियया स श्रुतश्रवसः सुतः" इति मा० ।

**श्रुतश्रेणि** स्त्री श्रुता विख्याता श्रेणीव । द्रवन्त्यां भावप्र० ।

**श्रुतादान** न० ६त० । ब्रह्मवादे हारा० ।

**श्रुतायुस्** सूर्यवंश्ये नृपभेदे "नाभागस्याम्बरीषोऽभूत् सिन्धुद्वीपस्ततोऽभवत् । ततः श्रुतायुः पुत्रोऽभूत्" मत्स्यपु० ।

**श्रुति** स्त्री श्रु–कर्मादौ क्तिन् । १वेदे वेदस्य सर्वैः श्रूयमाणत्वात् श्रुतित्वम् । २कर्णे कर्णस्य श्रवणहेतुत्वात् तथात्वम् । ३श्रवणेन्द्रियजन्ये ज्ञाने च । आकाशस्योक्तिः त्रिभुजक्षेत्रादौ भुजकोट्योः वर्गयोगमूले ४रेखाभेदे च लीला० । कर्णस्य शुभाशुभत्वं यथा "रक्ताब्जपत्त्रसदृशकर्णाः स्युः पार्थिवाः । निर्मांसचिपिटैर्भोगाः कृपणाः शुष्ककर्णकाः । शङ्कुकर्णाश्च राजानो रोमकर्णाः श्रुतायुषः । हस्वकर्णाश्च राजानो भमिनः परिकीर्त्तिताः" गरुडपु० ६६ अ० । ५श्रवणक्रियायां ६वार्त्तायां मेदि० । ७श्रवणनक्षत्रे शब्दर० । ८षड्जरागाद्यारम्भकावयवे शब्दभेदे मल्लिना० "प्रथमं श्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणेति" । श्रुतिसंख्यानियमश्च तत्र दर्शितः "चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः । द्वे द्वे निषादगान्धारौ त्रिस्त्रिर्ऋषभधैवतौ" । तद्भेदास्तु "नान्दी चावनिका रक्ता च छन्दोवती चिता त्रिचिता मन्दा मातङ्गी

**श्रोण** पु० श्रोण–अच्। १पङ्गौ अमरः। २काञ्जिके स्त्री।

**श्रोणि(णी)** स्त्री श्रोण–इन् वा ङीप्। १कटप्राम् अमरः २पथि शब्दर०। [२कटिपार्श्वे।

**श्रोणिफलक** न० श्रोणि फलकमिव। १नितम्बकटौ हेम०।

**श्रोणिसूत्र** न० श्रोणौ स्थितं सूत्रम्। श्रोणिस्थे खड्गादि बन्धनसूत्रे।

**श्रोतस्** न० श्रु–असुन् तुट् च। १कर्णे २नदीवेगे अमरः। ३इन्द्रिये हेमच०। स्रवार्थे दन्त्यादित्वमित्यन्ये।

**श्रोत्र** न० श्रूयतेऽनेन श्रु–करणे ष्ट्रन्। १शब्दज्ञानसाधने इन्द्रियभेदे अमरः। २तदाधारे गोलके च कर्णशब्दे १७०६पृ० दृश्यम्।

**श्रोत्रिय** पु० छन्दो वेदमधीते वेत्ति वा छन्दस्+घ श्रोत्रादेशः। १वेदाध्ययनानुरते अमरः। "एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च। षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्" इत्युक्ते २विप्रभेदे "जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते। विद्याभ्यासी भवेद्विप्रः श्रोत्रियस्त्रिभिरुच्यते" मनूक्तलक्षणे ३ब्राह्मणभेदे च।

**श्रौत** त्रि० श्रुतौ विहितमण्। १वेदविहिते धर्मादौ "श्रौतं कर्म स्वयं कुर्यात्" कात्या० स्मृतिः। २गार्हपत्याहवनीयदक्षिणाग्निषु पु०।

**श्रौत्र** न० श्रोत्र–स्वार्थे अण्। १कर्णे। श्रोत्रियस्य भावः कर्म वा अण् यलोपः। वैदिकस्य भावे "श्रौत्राहन्तीषणैर्गुणाय" सिद्धान्तकौ०।

**श्रौषट्** अव्य० श्रु–डौषटि। यज्ञादौ हविर्दाने अमरः।

**श्लक** सर्पणे भ्वा० आ० सक० सेट् इदित्। श्लङ्कते अश्लङ्किष्ट।

**श्लक्ष्ण** त्रि० श्लिष–क्स्न नि०। १अल्पे अमरः २चिक्कणे। सज्ञावां कन्। ३मनोहरे उणा० ४पुंसि राजनि०।

**श्लक्ष्णत्वच्** पु० श्लक्ष्णा त्वगस्य। अश्मन्तकवृक्षे राजनि०।

**श्लग** गतौ भ्वा० पर० सक० सेट् इदित्। श्लङ्गति अश्लङ्गीत्।

**श्लथ** दौर्बल्ये अद० चु० उभ० अक० सेट्। श्लथयति ते अशश्लथत् त।

**श्लथ** पु० श्लथ–अच्। १शिथिलप्रयोगे शिथिले शब्दा० २दुर्बले च

**श्लाख** व्याप्तौ भ्वा० पर० सक० सेट् इदित्। श्लाङ्खति अश्लाङ्खीत्। [नि मुख। श्लाघते अश्लाघिष्ट।

**श्लाघ** आत्मगुणाविष्कारणे भ्वा० आ० अक० सेट् इदित्

**श्लाघा** स्त्री श्लाघ–अ। १प्रशंसायां २परिचर्यायाम् ३अभिलाषे च मेदि०। ४निजगुणाविष्करणे।

**श्लाघ्य** त्रि० श्लाघ–ण्यत्। प्रशस्ते "स श्लाघ्यस्तस्य राघवो रिति" दैवीमा०।

**श्लिकु** न० श्लिष–कु नेत्त्वम् पृषो०। ज्योतिःशास्त्रे उणा०।

**श्लिक्यु** पु० श्लिष–क्यु नेत्त्वम् पृषो०। १भृत्ये सि० कौ० २जारे उणादि०। [श्लेषीत्।

**श्लिष** दाहे भ्वा० पर० सक० सेट् इदित् क्त्वा वेट्। श्लेषति अ-

**श्लिष** आलिङ्गने संसर्गे च सक० दि० अनिट्। श्लिष्यति लृदित् अश्लिषत्। आलिङ्गने तु अश्लिक्षत्।

**श्लिष** श्लेषणे चु० उभ० सक० सेट्। श्लेषयति ते अशिश्लेषत् त।

**श्लिष्ट** त्रि० श्लिष–क्त। १आलिङ्गिते २संसृष्टे ३श्लेषरूपशब्दालङ्कारयुक्ते शब्दे च।

**श्लीपद** न० श्रीयुक्तं वृद्धियुक्तं पदमस्मात् पृषो०। (गोद) १रोगभेदे वैद्य०। २तद्रोगयुक्ते त्रि०। शिलीपदशब्दे ५१११ पृ० दृश्यम्।

**श्लीपदप्रभव** पु० श्लीपदाय रोगभेदाय प्रभवति प्र+भू–अच्। आम्रवृक्षे शब्दमा०। तत्फलसेवने रसबाहुल्यात् तद्वृद्धिः।

**श्लीपदापह** पु० श्लीपदं रोगभेदमपहन्ति अप+हन–ड। पुत्रजीववृक्षे त्रिका०। [तद्विपरीतो हि अश्लीलः।

**श्लील** त्रि० श्रीरस्त्यस्य लच् पृषो० रस्य लः। शोभायुक्ते

**श्लेष** पु० श्लिष–घञ्। १संसर्गे अमरः। २दाहे ३आलिङ्गने ४शब्दालङ्कारभेदे च अलङ्कारशब्दे ४०५पृ० दृश्यम्।

**श्लेषघ्ना** स्त्री श्लेष्माणं हन्ति हन–क टाप्। १मल्लिकायां २केतक्याञ्च विश्वः। ३ज्योतिष्मत्यां जटा० ङीप्। सा च ४मल्लिकायां मेदि० ५त्रिकटुनि शब्दच०।

**श्लेषण** पु० श्लेष्माऽस्त्यस्य न। कफविशिष्टे अमरः।

**श्लेष्मन्** पु० श्लिष–मनिन्। कफे अमरः। श्लेष्मस्वरूपादिकं भावप्रकाशाद्युक्तं कफशब्दे १६७६पृ० दृश्यम्। तत्प्रकृतिकलक्षणम् "गम्भीरबुद्धिः स्थूलाङ्गः स्निग्धकेशो महाबलः। स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नरः"। तत्कर्माणि यथा "श्लेष्मा वस्य स्थिरत्वञ्च गौरवं वृष्यता बलम्। क्षमाधृतिरलोभश्च कफकर्माविकारजम्"। श्लेष्मकरद्रव्याणि कफकरशब्दे १६७७पृ० दृश्यानि। अन्यानि यथा "भोजनानन्तरं स्नानं जलपानं विना तृषा। तिलतैलं स्निग्धतैलं स्निग्धमासनकौद्रवम्। पर्युषितान्नं तक्रञ्च पक्वरम्भाफलं दधि। माषाम्बुशर्करातोयं सुस्निग्धस्थलसेवनम्। नारिकेलोदकं रूक्षस्नानं पर्युषितं जलम्। तरुमुञ्जापक्वफलं सुपक्वकर्कटीफलम्। प्रातःस्नानञ्च वर्षासु मूलकं श्लेष्मकारणम्। तज्जलं मद्यरम्भे च महावीर्यविनाशनम्"। श्लेष्मनाशकद्रव्याणि कफघ्नशब्दे १६७७पृ० दृश्यानि। अन्यानि च यथा "वह्निस्वेदं

कटुभक्तं पक्वन्तु विशोषकम्। अमवत् शुष्कमच्छन्नु शुष्कपक्वहरीतकी। पिचुदारकमपक्वञ्च रम्भा फलमपक्वकम्। वंशयारविम्बुवारमनाहारसपानकम्। सहत रोचनाचूर्णं सहत शुष्कशर्करम्। मरीच पिप्पली शुष्कमार्द्रक जीरक मधु। द्रव्याण्येतानि शस्यन्ते। सदा श्लेष्मचराणि च" ब्रह्मवै० ब्रह्म० १६ अ०। [२हस्ते पु० शब्दच०।

**श्लेष्मल** त्रि० श्लेष्म+अस्त्यर्थे लच्। १कफयुक्ते (बहुयार)

**श्लेष्महन्** पु० श्लेष्माणं हन्ति हन-ड। १कट्फलवृक्षे शब्दच० २श्लेष्मनाशके त्रि०। कफघ्नीशब्दे १६७७पृ० दृश्यम्।

**श्लेष्मात** पु० श्लेष्मणा अतति अत-अच्। श्लेष्मातकवृक्षे शब्दर०

**श्लेष्मातक** पु० श्लेष्मणा स्वसेवनजनितकफेन अतति अत-ण्वुल् (बहुयार) बहुवारवृक्षे अमर० "बहुवारस्तु शीतः स्यादुद्दालो बहुवारकः। शेलुः श्लेष्मातकश्चापि पिच्छिलो भूतवृक्षकः। बहुवारो विषस्फोटव्रणवीसर्पकुष्ठनुत्। मधुरस्तुवरस्तिक्तः केश्यश्च कफपित्तहृत्। फलमामन्तु विष्टम्भि रूक्षं पित्तकफास्रजित्। तत् पक्वं मधुरं स्निग्धं श्लेष्मलं शीतलं गुरु" भावप्र०।

**श्लेष्मान्तक** पु० श्लेष्मणा स्वसेवनजकफेन अन्तक इव नाशकत्वात् (बहुयार) वृक्षभेदे राजनि०। [श्लोकते अश्लोकिष्ट।

**श्लोक** सङ्घाते च भ्वा० आ० स० सेट्। ऋदित् चङि न ह्रस्वः।

**श्लोक** पु० श्लोक-अच्। चतुष्पदात्मके कवितते १वाक्यभेदे २यशसि च अमर "क उत्तमश्लोकगुणानुवादात्" भाग० १।१

**श्लोण** सङ्घाते भ्वा० पर० सक० सेट्। ऋदित् चङि न ह्रस्वः। श्लोणति अश्लोणीत्।

**श्वःश्रेयस** न० श्वः परदिने भाविकाले श्रेयो यस्मात् अच् समा०। १मङ्गले अमर २सुखे ३परमात्मनि च मेदि०। ४कल्याणयुक्ते त्रि०।

**श्वक** सर्पणे भ्वा० आ० सक० सेट् इदित्। श्वङ्कते अश्वङ्किष्ट।

**श्वच** गतौ भ्वा० आ० सक० सेट्। श्वचते अश्वचिष्ट इदित्पाठम्

**श्वठ** गतौ संस्कारे च चु० उभ० सक० सेट्। श्वठयति-ते अशिश्वठत् त। इदित्पाठम् श्वण्ठयति। [ठस् न।

**श्वठ** दुर्वचने अद० चु० उभ० सक० सेट्। श्वठयति ते अशश्वठ-

**श्वदंष्ट्रक** पु० शुनो दंष्ट्रेव कण्टकोऽस्य कप्। गोक्षुरे क्षुपे राजनि०। [अमरः।

**श्वदंष्ट्रा** स्त्री शुनो दंष्ट्रेव कण्टकाकृतत्वात्। गोक्षुरे क्षुपे

**श्वधूर्त्त** पुंस्त्री० नित्यं शुनो वञ्चनार्थं धूर्त्तः। शृगाले शब्दच० स्त्रियां ङीष्। नी।

**श्वन्** पु० श्वि-कनिन् नि०। कुक्कुरे तज्जातिस्त्रियां ङीप्

**श्वनिश** न० स्त्री शुना कुक्कुराणां निशा वा ह्रस्वः। कुक्कुरनादकरात्रौ।

**श्वपच** पुंस्त्री० श्वानं पचति भोजनाय पच-अच्। श्वपाके जातिभेदे। स च अन्त्यावसायिवत्। "चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा। मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः। अन्त्यावसायिनामन्नमश्नीयाद्यस्तु कामतः। स तु चान्द्रायणं कुर्य्यात् तप्तकृच्छ्रमथापि वा" प्रा०त० अङ्गिराः।

**श्वपाक** पु० श्वानं पचति कर्त्तरि संज्ञायां घञ्। जातिभेदे "क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्त्यते" मनुः। तद्वंशश्च चण्डालशब्दे २८४८ पृ० उक्तो दृश्यः।

**श्वफल** पु० शुन इव फलमस्य। वीजपूरवृक्षे रत्नमा०।

**श्वफल्क** पु०। वृष्णिवंश्ये अक्रूरपितरि क्षत्रियभेदे विष्णुपुरा०

**श्वभीरु** पु० श्वभ्यो भीरुः। शृगाले शब्दमा०।

**श्वभ्र** गतौ छिद्रकरणे सक० दौ स्ये अक० चु० उभ० सेट्। श्वभ्रयति ते अशश्वभ्रत् त।

**श्वभ्र** न० श्वभ्र-अच्। छिद्रे अमरः।

**श्वयथु** पु० श्वि-वृद्धौ अथुच्। शोथे अमरः।

**श्वयीची** स्त्री श्वि-ईचि ङीप्। पीडायाम् सि० कौ०।

**श्वल** वेगे भ्वा० पर० अक० सेट्। श्वलति अश्वालीत्।

**श्वल्क** भाषणे चु० उ० स० सेट्। श्वल्कयति ते अशश्वल्कत् त।

**श्वल्ल** वेगे भ्वा० पर० अक० सेट्। श्वल्लति अश्वल्लीत्।

**श्ववृत्ति** स्त्री शुन इव पराधीना वृत्तिः। दास्ये "सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्" मनुः। "दीनदृष्टिमन्दगमनस्वामिचित्तानुवृत्तिक्रियादिसंयोगात् श्ववृत्तिरिति" कुल्लू० "न श्ववृत्त्या कदाचन" मनुः। [शटा०।

**श्वव्याघ्र** पु० शुनो व्याघ्रः। कुक्कुरघातके व्याघ्रभेदे (चिते)

**श्वशुर** पु० शु आशु अश्नुते आशु+अश-उरच् पृषो०। १पत्युः पितरि २भार्य्यायाः पितरि च अमर।

**श्वशुर्य्य** पु० श्वशुरस्यापत्यम् यत्। १देवरे २श्याले च अमरः।

**श्वश्रू** स्त्री श्वशुरस्य पत्नी ऊङ् उकाराकारलोपश्च। श्वशुरभार्य्यायाम् अमरः। श्वश्रूश्वशुरयोरपि तथात्वे वराहपु० उक्तं यथा "पाञ्चाली च सोमा च भार्य्या नारी सदा धने। या श्वश्रूपि यस भार्य्या निश्वासो भवेद्दर्पिता। सा च श्वश्रूः कदाचित् स्याद् वा श्वश्रू जीवेद्धर्मिमिति" ।[अमर।

**श्वस्** अव्य० आगामिनि अह्नि पृषो० नि०। आगामिनि दिवसे

**श्वस** जीवने अदा० अक० पर० सक० सेट्। श्वसिति अश्व-

चीत्। "न विश्वसेदविश्वस्ते इत्यादौ" तु गणव्यत्यासात् श्वादित्वम् निश्वा वेट्। श्वसित श्वस्तः।

**श्वस** अप्रे अदा॰प॰ अक॰ वैदिकोऽयम्। श्वसिति अश्वसीत्।

**श्वसन** पु॰ श्वसित्यनेन श्वस–ल्युट्। १वायौ २मदनवृक्षे च अमरः। भावे ल्युट्। ३निश्वासे न॰ मेदि॰। [स्त्रियां ङीप्

**श्वसनाशन** पुंस्त्री॰ श्वसनो वायुरशनमस्य। सर्पे हारा॰।

**श्वसनेश्वर** पु॰ श्वसनो वायुरीश्वरोऽस्य। अर्जुनवृक्षे शब्दच॰।

**श्वसनोत्सुक** पुंस्त्री॰ ७त॰। सर्पे शब्दर॰ स्त्रियां ङीप्।

**श्वसित** न॰ श्वस–क्त। निश्वासे मुखनासिकाभ्यां वहिर्गमनरूपे हृदयस्थप्राणवायुव्यापारे।

**श्वसुन** पु॰ श्वस–उनन्। (ककरमोक्का) वृक्षे शब्दमा॰।

**श्वस्तन** त्रि॰ श्वोभवः श्वस्–ट्यु तुट् च। भाविदिनस्थायिवस्तुनि स्त्रियां ङीप्।

**श्वस्त्य** त्रि॰ श्वोभवः श्वस्+त्यप्। भाविदिनस्थायिवस्तुनि।

**श्वागणिक** पु॰ श्वगणेन चरति ठञ्। कुक्कुरादिना मृगयाकर्त्तरि व्याधे सि॰कौ॰। [युते।

**श्वादंष्ट्र** त्रि॰ श्वेव दन्तोऽस्य नि॰ दीर्घः। कुक्कुरतुल्यदशन-

**श्वान** पुंस्त्री॰ श्वैव अण् न टिलोपः। कुक्कुरे शब्दमा॰। तस्य जातित्वात् स्त्रियां ङीष्। [राजनि॰।

**श्वानचिञ्चिका** स्त्री॰ श्वान इव चिञ्चिका। शुनकचिञ्चुर्याम्

**श्वापद** पु॰ शुन इवापदमस्य अमरटीका। १हिंस्रपशौ हेमच॰ २व्याघ्रे च शब्दर॰।

**श्वाविध्** पु॰ शुना आविध्यते आ–व्यध् क्विप् ६तत्। शल्यके (सजारु) अमरः। कन्। श्वाविधोऽप्यत्र पु॰।

**श्वास** पु॰ श्वस–घञ्। १वायुव्यापारे २रोगभेदे ३शिक्षोक्ते वर्णोच्चारणार्थे बाह्यप्रयत्नभेदे च।

श्वासरोगस्य निदानादि माधव॰ उक्तं यथा "श्वासनिदानमाह तैरेव कारणैर्हिक्का हेतुना समवर्त्तते। तैरेव लक्षणैः श्वासो व्याधिर्घोरः प्रजायते"। श्वासस्य भेदानाह "महोर्द्ध्वच्छिन्नतमकक्षुद्रभेदैस्तु पञ्चधा। भिद्यते स महाव्याधिः श्वास एको विशेषतः"। तस्य पूर्वरूपमाह "प्राग्रूपं तस्य हृत्पीडा शूलमाध्मानमेव च। आनाहो वक्त्रवैरस्यं शङ्खनिस्तोद एव च"। सम्प्राप्तिमाह "यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः। विष्वग् व्रजति संरुद्धस्तदा श्वासं करोति सः"। विष्वक् व्रजति सर्वतो विमार्गान् याति संरुद्धः कफानादिभिः रुद्धमार्गः। महाश्वासस्य लक्षणमाह "उद्धूयमानवातोयः शब्दवद् दुःखितो नरः। उच्चैः श्वसिति संरुद्धो मत्तर्षभ इवानिशम्। प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः। विकृताक्ष्याननो बद्धमूत्रवर्च्चा विशीर्णवाक्। दीनः श्वसितञ्चास्य दूराद्विज्ञायते भृशम्। महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते"१। उद्धूयमानवातः ऊर्द्ध्वं नीयमानो वातो यस्य सः शब्दवत् सशब्दं यथा स्यात्। कीदृक् स बद्धसद्गोपधितुदात् मत्तर्षभ इव। उच्चैः श्वसितोऽत्यर्थम्। संरुद्धः आनद्धः आनाहयुक्त इति यावत्। श्वासं तत्संदर्शविनिश्चय। विशीर्णवाक् स्खलितवचनः। दीनं म्लानं। मारकत्वाय महाश्वास ऊर्द्ध्वश्वासमाह "ऊर्द्ध्वं श्वसिति योऽत्यर्थं न च प्रत्याहरत्यधः। श्लेष्मावृतमुखस्रोतः क्रुद्धगन्धवहार्दितः। ऊर्द्ध्वदृष्टिर्विपश्यंस्तु विभ्रान्ताक्ष इतस्ततः। प्रमुह्यन् वेदनार्त्तश्च शुष्कास्यो रतिपीडितः। ऊर्द्ध्वश्वासे प्रकुपिते ह्यधःश्वासो निरुध्यते। मुह्यतस्ताम्यतश्चोर्द्ध्वश्वासस्तस्य निहन्त्यसून्"२। सर्वेषु श्वासेषु ऊर्द्ध्वश्वासोऽस्त्ययमिति विशेषः। न च प्रत्याहरत्यधः न श्वासमधः करोति श्लेष्मावृतेत्यादिश्लेष्मावृतं यस्य स स्रोतांसि च तं क्रुद्धो यो गन्धवहस्तेनार्दितः। विपश्यन् इतस्ततो विकृतं यथा स्यादेवं पश्यन् अधःश्वासो निरुध्यते श्वासो नाधः प्रवर्त्तत" इत्यर्थः। मुह्यतो मोहं प्राप्नुवतस्ताम्यतो ग्लानिं प्राप्नुवतश्च ऊर्द्ध्वश्वासः असून् प्राणान् हन्ति। छिन्नश्वासस्यारम्भलक्षणमाह "यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन पीडितः। न वा श्वसिति दुःखार्त्तो मर्म्मच्छेदरुजार्दितः। आनाहस्वेदमूर्च्छार्त्तो दह्यमानेन वस्तिना। विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः। विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः। छिन्नश्वासेन विच्छिन्नः स शीघ्रं विजहात्यसून्"३। विच्छिन्नं सविच्छेदं सर्वप्राणेन सर्वबलेन मर्म्मच्छेदरुजार्दितः हृदयशिरश्छेदवदनयेव पीडितः। दह्यमानेन वस्तिना उपलक्षितः। विप्लुताक्षः अश्रुपूर्णनेत्रः। विचेताः उद्विग्नचित्तः छिन्नश्वासेन विच्छिन्नः यस्तु श्वसिति विच्छिन्नमित्यादिलक्षणयुक्तो यः स नरः छिन्नश्वासेन विच्छिन्नः पीडितो बोद्धव्यः। मारकत्वाय छिन्नश्वासः। तमकश्वासमाह "प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते। ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य च। करोति पीनसं तेन रुद्धो घुर्घुरकं तथा। अतीव तीव्रवेगञ्च श्वासं प्राणप्रपीडकम्। प्रताम्यति स वेगेन तृष्यते सन्निरुध्यते। प्रमोहं कासमानश्च गच्छति मुहुर्मुहुः। श्लेष्मण्यमुच्यमाने

इत्यत आह निर्दिष्टमपरिस्रावीति श्वित्रमपरिस्रावि भवति कुष्ठन्तु स्रावि अत्र च त्रिधातूद्भवसंश्रयमिति श्वित्रम् त्रयोधातवो रक्तमांसमेदांसि संश्रयोऽधिष्ठानं यस्य तत् । कुष्ठन्तु सान्निपातिकं सर्वधातुगतं भवतीति भट० । दोषभेदेन लक्षणभेदान्याह "वाताद्रूक्षारुणं पित्तात् ताम्रं कमलपत्रवत् । सदाहं रोमविध्वंसि कफात् श्वेतं घनं गुरु । सकण्डूकं क्रमाद्रक्तमांसमेदःसु चादिशेत् । वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम्" । अरुणमीषल्लोहितम् । कमलपत्रशब्दित्यनेन मध्ये श्वेतमन्ते लोहितं बोधयति । घनं पुष्टम् । क्रमाद्रक्तमांसमेदःसु चादिशेत् । तथा च चरकः "अरुणं रक्तगे वाते ताम्रं पित्ते चलकृते । श्वेतं श्लेष्मणि मेदःस्थे श्वित्रं कृच्छ्रं परं परम्" इति । उभयं द्विविधमपि श्वित्रं वर्णेन ईदृगेव । अरुणं ताम्रं श्वेतञ्च दोषभेदात् । द्विविधं दोषजं व्रणजं च । तथा च भोजः "श्वित्रं तु द्विविधं विद्याद्दोषजं व्रणजं तथा" इति । श्वित्रं साध्यमसाध्यञ्चाह "अशुक्लरोमाबहलमसंसृष्टं मिथो नवम् । अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा" । अबहलं तनु । अन्यच्च "गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम् । वर्जनीयं विशेषेण श्वित्रं सिद्धिमिच्छता" । गुह्यं मेहनम् भगञ्च तत्रभवं यद्यत्र सम्भवेनान्ते जातमिति सामान्यतो निर्दिष्टत्वात् । अप्यचिरन्तनम् नवमपि" ।

**श्वित्रघ्नी** स्त्री श्वित्रं हन्ति हन–टक् ङीप् । पीतपर्ण्याम् (वकुली) शब्दच० ।

**श्वित्रिन्** त्रि० श्वित्रमस्त्यस्य इनि । श्वेतकुष्ठयुक्ते "श्वित्री वस्त्रं सारसं च चौरी लवणहारकः" याज्ञ० ।

**श्विद** शुक्लतापादने भ्वा० आत्म०सक० सेट् इदित् । श्विन्दते अश्विन्दिष्ट ।

**श्वेत** पु० श्वित–अच् घञ् वा । १द्वीपभेदे २पर्वतभेदे ३कपर्दके हेमच० । ४शुक्लपक्षे ५शुभ्राभ्रे शब्दच० । ६शङ्खे राजनि० । ७जीरके जटा० । ८शुक्लवर्णे ९तद्वति त्रि० अमरः स्त्रियां ङीप् तस्य नश्च श्वेनी । १०कलियुगीयशिवावतारविशेषे यथा "वेदव्यासावताराणि द्वापरे कथितानि तु । महादेवावताराणि कलौ शृणुत सुव्रताः ॥ आद्यो कलियुगे श्वेतो देवदेवो महाद्युतिः । नाम्ना हिताय विप्राणामभूद्वैवस्वतेऽन्तरे । हिमवच्छिखरे रम्ये छागले पर्वतोत्तमे । तस्य शिष्याः शिखायुक्ता बभूवुरमितप्रभाः । श्वेतः श्वेतशिखश्चैव श्वेताश्वः श्वेतलोहितः । चत्वारस्ते महात्मानो ब्राह्मणा वेदपारगाः । सुतारो दमनश्चाथ सुहोत्रः कङ्कणस्तथा । लोकाक्षिरथ योगीन्द्रो जैगीषव्यस्तु सप्तमे । अष्टमे दधिवाहः स्यान्नवमे ऋषभः प्रभुः । भृगुस्तु दशमे प्रोक्तस्तस्मादुग्रः परः स्मृतः । द्वादशेऽत्रिः समाख्यातो बाली चाथ त्रयोदशे । चतुर्दशे गौतमस्तु वेदशीर्षा ततः परम् । गोकर्णश्चाभवत्तस्माद् गुहावासः शिखण्ड्यथ । जटामाल्यट्टहासश्च दारुको लाङ्गली क्रमात् । श्वेतस्तथा परः शूली डिण्डी मुण्डी च वै क्रमात् । सहिष्णुः सोमशर्मा च नकुलीशोऽन्तिमे प्रभुः । वैवस्वतेऽन्तरे शम्भोरवतारास्त्रिशूलिनः । अष्टाविंशतिराख्याता ह्यन्ते कलियुगे प्रभो" कौर्म पु० अ० । श्वेतपर्वतस्य परिमाणादि यथा "उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवान् इति त्रयो रम्यकहिरण्मयकुरूणां मर्यादागिरयः प्रागायताः उभयतः क्षारोदावधयो द्विसहस्रयोजनपृथव एकैकशः पूर्वस्मात् पूर्वस्मादुत्तरोत्तरो दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति" भाग० ५।१६ । ११राजभेदे वह्निपु० । संज्ञायां कन् । रूप्ये न० राजनि० । कपर्दके पु० ।

**श्वेतकण्टकारी** स्त्री कर्म० । शुभ्रवर्णकण्टकारिकायाम् [राजनि० ।

**श्वेतकान्ता** स्त्री श्वेतः कान्तोऽस्याः । अतिविषायां राजनि० ।

**श्वेतकिणिही** स्त्री कर्म० । निर्विषिकाया क्षुपभेदे राजनि० ।

**श्वेतकुञ्जर** पु० कर्म० । १ऐरावतगजे शब्दर० २श्वेतवर्णमात्रे च श्वेतगजादयोऽप्यत्र ।

**श्वेतकुश** पु० कर्म० । शुक्लवर्णे कुशभेदे राजनि० ।

**श्वेतकेतु** पु० कर्म० । १भारते केतुग्रहभेदे २छान्दोग्यप्रसिद्धे वारुणौ ऋषिभेदे ३बुद्धे त्रिका० ।

"श्वेतश्चो ह्यत्र दृश्यन्ते वारुणास्तय एव ते । ऋक्षिकेतुः श्वेतकेतुर्धूमकेतुस्तथोग्रकः । श्वेतकेतुर्यदा दृश्यः श्वेतास्थिं कुरुते महीम् । तदा मानुषमांसानि भक्षयन्तीह मानवाः । क्षुद्भयार्त्तं जगत् कृत्स्नं चक्रवद्भ्रमते तदा" । अपि च "श्वेत स्वस्याकृतं कुर्यात् लोहितस्त्वग्निजं भयम् । धूम्रश्च पीतकं कुर्यात् कृष्णो रोगमथोल्बणम्" । अन्यच्च "अवन्ती पुष्करारण्य यावन्त्यास्तथापरान् देशान् कश्चित् कांश्चिद्रोगदुर्भिक्षैः परिपीडितान् । श्वेतास्यस्तु जटाकारी यत्रासौ सोऽत्र त्रिभागग । निवर्त्ततेऽपसव्येन त्रिभागी कुरुते प्रजाः" इति वसन्तराजधृतवाक्यम् ।

**श्वेतकेश** पु० श्वेतः केश इव यस्य । १रक्तशिग्रौ जटा० ।

**श्वेतशूरण** पु० कर्म० । वनशूरणे राजनि० ।

**श्वेतसर्प** पु० श्वेतः सन् सर्पति सृप–अच् । १वरुणवृक्षे जटा० कर्म० । २शुभ्रभुजगे पुस्त्री० । स्त्रियां ङीष् ।

**श्वेतसर्षप** पु० कर्म० । गौरसर्षपे ।

**श्वेतसार** पु० श्वेतः सारोऽस्य । शुभ्रखदिरे जटा० ।

**श्वेतसुरसा** स्त्री कर्म० । शुभ्रशेफालिकायाम् अमरः ।

**श्वेतस्पन्दा** स्त्री श्वेता सती स्पन्दते स्पन्द–अच् । सितापराजितायां राजनि० ।

**श्वेतहय** पु० श्वेतो हयः । १उच्चैःश्रवसि हये त्रिका० २सितवर्णयुक्ते ३हये च । ६ब०। ४अर्जुने हेमच०। ५इन्द्रे च

**श्वेता** स्त्री श्वित–अच् । १वराटिकायां २काष्ठपाटलायां ३शङ्खिन्यां मेदि०। ४अतिविषायां रत्नमा०। ५सितापराजितायां ६शुभ्रकण्टकार्य्यां ७पाषाणभेदिन्यां ८शुभ्रदूर्वायां ९वंशरोचनायां १०शर्करायां ११शिलावल्कलायां १२श्वेतवृहत्यां च राजनि० ।

**श्वेतार्क** पु० कर्म० । शुभ्रवर्णपुष्पके अर्कवृक्षे राजनि० ।

**श्वेतावर** पु० श्वेत श्वेतवर्णमावृणोति आ+वृ–अच् । सितावरशाके राजनि० ।

**श्वेताश्वतर** पु० वेदशाखाभेदे ।

**श्वेतेक्षु** पु० कर्म० । शुक्ले इक्षौ राजनि० ।

**श्वेतोदर** पु० श्वेतमुदरं यस्य । कुबेरे त्रिका०

**श्वेतौही** स्त्री श्वेतौहः पत्नी ङीष् । इन्द्राण्यां शच्याम् ।

**श्वैत्य** न० श्वेतस्य भाव ष्यञ् । शुभ्रवर्णे ।

**श्वोवसीयस** न० अतिशयेन वसुः प्रशस्तः श्वो वसीय नि० अच् समा०। १परदिने भाविकाले प्रशस्ते मङ्गले २तद्वति त्रि०

## इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्य-सङ्कलिते वाचस्पत्याभिधाने शकारादि शब्दार्थसङ्कलनम् ।

### अशुद्धशोधनम् ।

६००० पृष्ठावधि ६०२४ पृष्ठपर्य्यन्तपत्राङ्के ९०० नवशताङ्काधिकतया प्रमादात् मुद्रिताः तत्र तत्र पृष्ठेषु नवभिः शतैरूनिता अङ्कसंख्या बोध्याः ।

---

## ष

**षकारः** मूर्द्धन्यः ऊष्मवर्णभेदः । अस्योच्चारणस्थानं मूर्द्धा अस्योच्चारणे आभ्यन्तरप्रयत्न विवृतमर्द्धस्पृष्टता "नेमस्पृष्टाः शषसहाः" इत्याद्युक्तेः । बाह्यप्रयत्नाश्च विवाराश्वासाघोषा महाप्राणश्च । ऊष्मरूपवायुप्रधानत्वादस्य ऊष्मवर्णता । अस्य ध्येयस्वरूपं यथा "षकारं शृणु चार्वङ्गि अरुणोपमयं सदा । रक्तचन्द्रप्रतीकाशं स्वयं परमकुण्डली । चतुर्वर्गमयं वर्णं सुधानिर्मितविग्रहम् । पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा । रजःसत्त्वतमोयुक्तं त्रिशक्तिसहितं सदा । त्रिबिन्दुसहितं वर्णमात्मादितत्त्वसंयुतम् । सर्वदेवमयं वर्णं हृदि भावय पार्वति !" कामधेनुतन्त्रम् । एतदधिष्ठानदेवताध्यानं यथा "चतुर्भुजां चकोराक्षीं चारुचन्द्रनखार्चिताम् । शुक्लवर्णां त्रिनयनां वरदाञ्च शुचिस्मिताम् । रत्नालङ्कारभूषाढ्यां श्वेतमाल्योपशोभिताम् । देवगन्धर्वसंवन्द्यां सेवितां मोक्षकाङ्क्षिभिः । एवं ध्यात्वा षकारन्तु तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम् । अस्य वाचकशब्दा यथा "षः श्वेतो वासुदेवश्च पिता प्रभा विनायकः । परमेष्ठी वामबाहुः श्रेष्ठो गर्भविमोचनः । लम्बोदरो यमोऽजेशः कामधुक् कामसूचकः । उन्मोष्मा क्षमो लज्जा मरुद्भ्रूश्च प्रियः शिवः । सूर्यात्मा जठरः कोपो माता रक्षोविदारिणी । कलकण्ठो मध्यभिन्ना सुरात्मा महत्पूः शिवाः" वर्णाभिधानम् "षकारः श्वेत आख्यातो मूर्द्धन्यो ष्मसंज्ञकः । पित्तं शक्तिश्च माया च महायोनिः सबिन्दुमत्" मन्त्राभिधानम् । मातृकान्यासेऽस्य जठरे न्यास्यता । काव्यादौ प्रयोगेऽस्य फलम् खेदः "षः सुखं मखं खेदम्" वृ०र०टी० ।

अत्र धातुशब्देषु षादितया ये धातवः पठितास्तेषां प्रयोगकाले दन्त्यसादित्वं सति च निमित्ते पुनः षत्वम् यथा षिध–सेधति निषेधति "धात्वादेः षः सः" इत्युक्तेः अस्य प्रयोगकाले सत्वे तन्निमित्तटवर्गस्य तवर्गोऽपि भेदः यथा ष्टु स्तु स्तौति । ष्ठा स्था तस्थौ ष्णा स्ना स्नाति । निमित्ते सति षत्वे च टुत्वे च प्रतिष्टौति प्रतिष्ठा निष्ठा निष्णाति । तत्र ष्वष्कष्ठिवान्तु न सादिश्चतेन ष्वायति ष्वक्कति ष्ठीवतीत्येवेति भेदः । ष्ठिवपर्युदासे ष्ठीवधातोरपि पर्युदासः ।

**ष** पु० षो–क पृषो०सत्वम् । १केशे मेदि० २गर्भविमोचने ३मानवे च ३सर्वे ४श्रेष्ठे एकाक्षरकोषः । ५विज्ञे च त्रि० मेदि०।

**षकार** पु० ष+स्वरूपे कार । षस्वरूपवर्णे कामधेनुतन्त्रे उटा०

**षग** संवरणे भ्वा० पर० सक० सेट् एदित् चिचि न वृद्धिः । सगति असगीत् मित् घटादि सगयति । असीसगत् त ।

**षघ** हिंसायां स्वा० पर० सक० सेट् एदित् चिचि न वृद्धिः । सघ्नोति असघीत् असीसघत् त । [सिषघत् त ।

**षच** सेचने भ्वा० आत्म० सक० सेट् । सचते असचिष्ट अषो-

पश्चात् प्रोच्यते नेतिकर्मकम् । साधनान्नेतिकर्मणः खेचरीसिद्धिमाप्नुयात् । कफदोषा विनश्यन्ति दिव्यदृष्टिश्च जायते । आमन्दवेगे तुन्दञ्च भ्रमयेदुभपार्श्वयोः । सर्वरोगान्निहन्तीह देहानलविवर्द्धनम्" । इति नौलिकी । "निमेषोन्मेषकं त्यक्त्वा सूक्ष्मलक्ष्यं निरीक्षयेत् । यावदश्रु निपतति त्राटकं प्रोच्यते बुधैः । एवमभ्यासयोगेन शाम्भवी जायते ध्रुवम् । न जायते नेत्ररोगा दिव्यदृष्टिप्रदायकम् । सीत्कृत्य पीत्वा वक्त्रेण नासानालैर्विरेचयेत् । व्युत्क्रमेण व्युत्क्रमेण शीत्क्रमेण विशेषतः । भालभातिं त्रिधा कुर्य्यात् कफदोषं निवारयेत् । इडया पूरयेद्वायुं रेचयेत् पिङ्गलया पुनः । पिङ्गलया पूरयित्वा पुनश्चन्द्रेण रेचयेत् । पूरकं रेचकं कृत्वा वेगेन न तु धारयेत् । एवमभ्यासयोगेन कफदोषं निवारयेत् । नासाभ्यां जलमाकृष्य वक्त्रेण रेचयेत् पुनः । पायं पायं प्रकुर्वीत श्लेष्मदोषं निवारयेत् । न जायते वार्द्धकञ्च ज्वरो नैव प्रजायते" ।

**षठ्कूटा** स्त्री भैरवीभेदे तन्त्रसा० ।

**षट्कोण** न० षट् कोणा यस्य । १वज्रे राजनि० । तन्त्रोक्ते ऊर्द्धाधःस्थे त्रिकोणद्वयरूपे यन्त्रभेदे ३ज्योतिषोक्ते लग्नात् षष्ठस्थाने च ज्यो०त० ।

**षट्चक्र** न० षण्णां चक्राणां समाहारः पात्रादि० । तन्त्रोक्तेषु देहस्थेषु सुषुम्णानाडीमध्यवर्त्तिषु द्विदलचतुर्दलादिषु षट्सु पद्मेषु चक्रशब्दे २८०८ पृ० दृश्यम् । तद्विदत्य कर्त्तोपन्यः अण् तस्य लुक् । २षट्चक्रप्रतिपादके ग्रन्थभेदे । [१सङ्ख्याभेदे २तत्संख्यान्विते च ।

**षट्चत्वारिंशत्** स्त्री षडधिका चत्वारिंशत् । (छेयालिश)

**षट्चरण** पुस्त्री० षट् चरणा यस्य । १भ्रमरे स्त्री० स्त्रियां ङीष् । षट्पदादयोऽप्यत्र । २यूकायां राजनि० ।

**षट्ट** निवासे वधे च अक० हिंसायां दाने च सक० चुरा० उभ० सेट् । षट्टयति ते अषषट्ट् त । निषट्टयिषति ।

**षट्तिलिन्** पु० षट् तिला तिलोद्वर्त्तनादयः कर्मा यस्य । "तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः । तिलभुक् तिलपायी च षट्तिला नावसीदति" इत्युक्ते तिलोद्वर्त्तनादिकारिणि । [सङ्ख्याभेदे २तत्संख्यान्विते च ।

**षट्त्रिंशत्** स्त्री षडधिका त्रिंशत् शाक० । (छत्रिश) १सं-

**षट्त्रिंशदुपचार** (छत्रिश) देवपूजाङ्गे उपचारेषु "आसनाभ्यञ्जने तद्वदुद्वर्त्तननिरूक्षणे । स्नानानं सर्पिरादिस्नपनावाहने तथा । पाद्यार्घ्याचमनीयञ्च स्नानीयमधुपर्कको । पुनराचमनीयञ्च वस्त्रयज्ञोपवीतके । अलङ्कारो गन्धपुष्पे धूपदीपौ तथैव च । ताम्बूलादिकनैवेद्यं पुष्पमाला तथैव च । अनुलेपश्च शय्या च चामरव्यजनं तथा । आदर्शदर्शनञ्चैव नमस्कारोऽथ नर्त्तनम् । गीतवाद्ये च दानानि स्तुतिहोमप्रदक्षिणम् । दन्तकाष्ठप्रदानञ्च ततो देवविसर्जनम् । उपचारा इमे प्रोक्ताः षट्त्रिंशत् सुरपूजने" एका०त० ।

**षट्त्रिंशन्मत** न० "मनुर्विष्णुर्यमो दक्षो ह्यङ्गिरोऽत्रिबृहस्पती । आपस्तम्बश्च शङ्खश्च कात्यायनपराशरौ । वशिष्ठव्यासशङ्खौ हारीतगोतमावपि । प्रचेताः शङ्खलिखितौ याज्ञवल्क्यश्च काश्यपः । शातातपो लोमशश्च जमदग्निः प्रजापतिः । विश्वामित्रपैठीनसी बौधायनपितामहौ । छागलेयश्च जाबालो मरीचिश्च्यवनो भृगुः । ऋष्यशृङ्गो नारदश्च षट्त्रिंशत् स्मृतिकारकाः । एतेषान्तु मतं यत्तु षट्त्रिंशन्मतमुच्यते" इति शङ्खलिखितोक्तज्ञानभेदमते ।

**षट्पञ्चाशत्** स्त्री षडधिका पञ्चाशत् शाक० । ( छाप्पान्न ) १सङ्ख्याभेदे २तत्सङ्ख्यान्विते च ।

**षट्पञ्चाशिका** स्त्री षट्पञ्चाशत् परिमाणमस्य डिन् मत्वर्थे कन् । वराहमिहिरात्मजपृथुयशोविरचिते ग्रन्थभेदे ।

**षट्पदप्रिय** पु० ६त० । नागकेशरे शब्दमा० । तस्य हि मधुरमधुयुतत्वात् भ्रमरप्रियत्वम् । [त्रिका० ।

**षट्पदातिथि** पु० षट्पदः अतिथिरिव यस्य । आम्रवृक्षे

**षट्पदानन्दवर्द्धन** पु० षट्पदानन्दं वर्द्धयति वृध-णिच्-ल्यु उप० । अशोकवृक्षे राजनि० ।

**षट्पदी** स्त्री षट् पदा यस्याः पादस्य पाद्भावः ङीपि पद्भावः । १यूकायां भ्रमर्य्योर्द्वित च । स० द्विगु । ३षट्चरणयुक्ते छन्दोभेदे च । ४षट्श्लोकात्मकपद्यसङ्घाते ।

**षट्प्रश्न** पु० षट् सु प्रश्ना यस्य । "धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि । षट्सु प्रश्नास्तु यस्यासौ षट्प्रश्नः परिकीर्त्तितः" इत्युक्ते १धर्मार्थाभिज्ञे २बौद्धे ३श्रावके त्रिका० ।

**षडङ्ग** न० षण्णामङ्गानां समाहारः पात्रा० । "अङ्गं बाहू शिरो मध्यं षडङ्गमिदमुच्यते" इत्युक्ते १देहावयवषट्कभेदे शब्दच० तन्त्रोक्ते २हृदयाद्यवयवभेदे यत्र हृदयादिषु षट्सु अङ्गेषु मन्त्रविशेषो न्यस्यते तत्र । षट् अङ्गानीव यस्य । "शिक्षाकल्पो व्याकरणं निरुक्तं छन्दसां चितिः । ज्योतिषामयनञ्चैव षडङ्गो वेद उच्यते" इत्युक्ते ३वे

माघमहचपा च शीतला तपसि स्मृता । गोष्पदिनी फा-
ल्गुने च चैत्रेऽशोका प्रकीर्त्तिता" स्कन्दपु० । षष्ठी-
विहितकालव्यवस्था तिथिशब्दे दृश्या ।

**षस** स्वप्ने अदा०पर०अक०सेट् वैदिक । षस्ति अषासीत् अषसीत्

**षस्ज** गतौ भ्वा०पर०सक०सेट् । सज्जति असज्जीत् । अय-
मात्मनेपदीत्यन्ये "वचोऽपि परुषाक्षरं न च पदेषु संस-
ज्जते" इति शकुन्तला ।

**षस्त** स्वप्ने अदा० स्वपा० पर० अक० सेट् । वैदिकः इदित् ।
सस्ते असंस्तीत् । [नि सस्ताति असंस्तीत् असस्तीत् ।

**षह** क्षमायां वा चु०उभ०पक्षे दि०पर०सक० सेट् । साहयति

**षह** क्षमायां भ्वा० आ०सक०सेट् । सहते असहिष्ट ज्वला०
णष साह । "तीषसहेति" पा० तकारादावार्द्धधातुके वा
इट् । सोढा सहिता । सहितव्य सोढव्यः । क्त । सोढ
इत्येव । तत्र पक्षे भिभित्ते सति न षत्वम् परिषदा
इत्येव पक्षे परिषहितेत्यादौ षत्वम् ।

**षहसानु** पु० सह-सानु अस्क् च पृषो० षत्वम् । १यज्ञे
२मयूरे च संक्षिप्तसार० । [र्थकल्प०।

**षाट्** अव्य० सह-णिच्-डुषा० षत्वं टत्वञ्च । सम्बोधने शब्दा-

**षाडव** पु० षडृतेति अव-अण् स्वार्थे अण् । १गाने २रसे च
मेदि० तयोः तत्सम्बन्धस्वरादिमत्त्वात् तथात्वम् । ३षट्-
स्वरमिलितरागे च "औडवः पञ्चभिः प्रोक्तः षड्भिस्तु
षाडवः स्मृतः । सम्पूर्णः सप्तभिर्ज्ञेय एव रागास्त्रिधा-
मताः" संगीतदर्पणः ।

**षाड्गुण्य** न० षट् गुणा एव ष्यञ् । राज्ञां सन्धिविग्रहादिषु
षट्सु गुणेषु "षाड्गुण्यमुपयुञ्जते" इति माघः । "षाड्-
गुण्यमिति यत् प्रोक्तं तन्निबोध युधिष्ठिर ! । सन्धा-
नासनमित्येव यात्रासन्धानमेव च । विगृह्यासनमित्येव
यात्रां सम्परिगृह्य च । द्वैधीभावस्तथान्येषां संश्रयोऽथ
परस्य च" भा०शा०६९अ० "सन्धानासनः सन्धिं कृत्वाऽ
वस्थितिः यात्रासन्धानं यानम्२ । विगृह्य वैरं कृत्वाव
स्थानं विग्रहः३ यात्रां सम्परिगृह्यासनम् शत्रोर्भयप्रदर्श-
नार्थं यानं प्रदर्श्य स्वस्थानेऽवस्थानम्४ द्वैधीभाव उभ-
यत्र सन्धिकरणं५ परस्याऽन्यस्याश्रयो६ दुर्गादिसंहा-
राश्रयो वा" नी० क० ।

"सन्धिश्च विग्रहं यानमासनादि वदामि ते । बलवद्-
विगृहीतेन सन्धिं कुर्य्याच्छिवाय च । कपाल उप-
हारश्च सन्तानः सङ्गतस्तथा । उपन्यासः प्रतीकारः
संयोगः पुरुषान्तरः । अदृष्टनर आदिष्ट आत्मामिष उ-
पग्रहः । परिक्रयस्तथा छिन्नस्तथा च परदूषणम् ।
स्कन्धोपनेय सन्धिश्च सन्धयः षोडशेरिताः । परस्परो-
पकारश्च मैत्रः सम्बन्धकस्तथा । उपहारश्च चत्वारस्तेषु
मुख्याश्च सन्धयः । बालो वृद्धो दीर्घरोगस्तथा बन्धुबहि-
ष्कृतः । भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ।
विरक्तप्रकृतिश्चैव विषयेष्वतिशक्तिमान् । अनेकचित्तमन्त्रश्च
देवब्राह्मणनिन्दकः । दैवोपहतकश्चैव दैवनिन्दक एव च ।
दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुल । स्वदेशस्थो बहु-
रिपुर्युक्तः कालेन यश्च न । सत्यधर्मव्यपेतश्च विंशतिः
पुरुषा अमी । एतैः सन्धिं न कुर्वीत विगृह्णीयात् तु
केवलम् । परस्परापकारेण पुंसां भवति विग्रहः । आ-
त्मनोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा । देशकाल-
बलोपेतः प्रारभेतेह विग्रहम् । राज्यस्त्रीस्थानदेशानां
ज्ञानस्य च बलस्य च । अपहारो मदो मानः पीडा
वैषयिकी तथा । ज्ञानात्मशक्तिधर्माणां विघातो दैवमेव
च । मित्रार्थञ्चापमानश्च तथा बन्धुविनाशनम् । भूता-
नुग्रहविच्छेदस्तथा मण्डलदूषणम् । एकार्थाभिनिवेश-
त्वमिति विग्रहयोनय । सापत्न्यं वास्तुजं स्त्रीजं
वाग्जातमपराधजम् । वैरं पञ्चविधं प्रोक्तं साधनं प्रश-
मं नयेत् । किञ्चित्फलं निष्फलं वा सन्दिग्धफलमेव
च । तदात्वे दोषजननमायत्याञ्चैव निष्फलम् । आय-
त्याञ्च तदात्वे च दोषसञ्जननं तथा । अपरिज्ञातवीर्य्येण
परेण स्तोभितोऽपि वा । परार्थं स्त्रीनिमित्तञ्च दीर्घ-
कालं द्विजैः सह । अकालदैवयुक्तेन बलोद्धतसखेन च ।
तदात्वे फलसंयुक्तमायत्यां फलवर्जितम् । आयत्यां फल-
संयुक्तं तदात्वे निष्फलं तथा । इतीमं षोडशविधं न
कुर्य्यादेव विग्रहम् । तदात्वायतिसंशुद्धं कर्म राजा स-
दाचरेत् । हृष्टं पुष्टं बलं मत्वा गृह्णीयाद्विपरीत-
कम् । मित्रमाक्रन्द आसारो यदा स्युर्दृढभक्तयः । परस्य
विपरीतश्च तदा विग्रहमाचरेत् । विगृह्य सन्धाय तथा
सम्भूयाथ प्रसङ्गतः । उपेक्षया च निपुणैर्यानं पञ्चविधं
स्मृतम् । परस्परस्य सामर्थ्यविघातादासनं स्मृतम् ।
अरेश्च विजिगीषोश्च यानवत् पञ्चधा स्मृतम् । बलिनो-
र्द्विषतोर्मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन तिष्ठेत
काकाक्षिवदलक्षितः । उभयोरपि सम्पाते सेवेत बलवत्त-
रम् । यदा द्वावपि नेच्छेतां सन्धेयं जातसंविदौ । तदो-
पसर्पेत् तच्छत्रुमधिकं वा स्वयं व्रजेत् । उच्छिद्यमानो
बलिना निरुपायप्रतिक्रियः । कुलोद्भूतं सत्यमार्य्यमासे-

पु० ४शृङ्गोक्षुरक्षुपे च पु० राजनि० "गोमयं गोमय क्षीरं सर्पिर्दधि च रोचना । षडङ्गमेतन्माङ्गल्यं पठितं सर्वदा गवाम्" स्मृत्युक्ते रोचनासहिते ५पञ्चगव्ये न० ।

**षड़भिज्ञ** पु० "दिव्यं चक्षुःश्रोत्रं१ परचित्तज्ञानं२ पूर्वनिवासानुस्मृति ३ आत्मज्ञानम्४ वियद्गतः५ कायव्यूहसिद्धि६श्चेत्येतानि षट् अभिज्ञा अभिज्ञानसामानि यस्य । बौद्धभेदे अमरः । [।।१। कर्णपद्धतिः ।

**षडवृत्त** न० उभयत्र स्थातवर्तिं वाद्ये वन्दपालभेदे ब्रह्मा०

**षडशीति** स्त्री षडधिका अशीतिः शाक० । (छेयाशि) १ष ष्ट्रापेदे २तत्सङ्ख्यान्विते च । षडशीतिमुखसंज्ञेषु मिथु नकन्याधनुर्मीनेषु रवेः सङ्क्रान्तौ च "अयनविषुपटो षडशीतयो विषुवविष्णुपदीषडशीतय" इति ज्योतिषम् ।

**षडशीतिचक्र** न० मिथुनकन्याधनुर्मीनराशिस्थरवेः सङ्क्रमे शु भाशुभफलज्ञानार्थं नरनराकारे चक्रे । यथा "मुखे चैकं करे वेदा पादयुग्मे द्वयं द्वयम् । क्रोड़े वाचस्तथा वेदाः करे सव्येतरेऽपि च । द्वयं द्वयं तथा नेत्रे मस्तके त्रितयं तथा । द्वयञ्चैव तथा गुह्ये षडशीत्या क्रमे स्थिते । सुखे दु स करे वाम पादयोर्भ्रमण हृदि । कान्ता स्याद् बन्धनं वामे हस्ते स्यात् चौयमे रुजाम् । कन्यानो नेत्रयोश्चैव अपमानञ्च मस्तके । गुह्ये चैव भवे न्मृत्युः षडशीतिफलस्तुति" ज्यो० त० ।

**षडशीतिमुख** न० षडशीतेः तन्नामकसङ्क्रान्तेर्मुखम् । "तुलादिषडशीत्यङ्गा षडशीतिमुखं क्रमात् । तच्चतुष्टयमेव स्यात् द्विस्वभावेषु राशिषु" "षड्विंशे धनुषो भागे द्वाविंशेऽनिमिषस्य च । मिथुनेऽष्टादशे भागे कन्यायास्तु चतुर्दशे" इति सूर्यसिद्धान्तोक्ते तुलादितः षडशीतिदिनान्तरितकाले ।

**षड़ष्टक** न० ज्यो०त० उक्ते वरकन्ययोः स्वस्वराश्यपेक्षया परस्परषष्ठाष्टमराशिसम्बन्धे उपयमयत्नदे पृ० दृश्यम् ।

**षड़ानन** पु० षट् आननानि यस्य । कार्त्तिकेये अमरः । षड्वदनादयोऽप्यत्र ।

**षड़ाम्नाय** पु० षड्गुणित आम्नायः शाक० । शिवस्य पञ्चवक्त्र विनिर्गते षट्प्रकारतन्त्रभेदे "अथेदानीं प्रवक्ष्यामि आम्नायकथनं पृथक् । पूर्वाम्नायो यदा मन्त्रस्तदा प्राच्यां दिशि स्थितः । सदाशिवोऽत्र भगवानाचारः परिकीर्त्तितः । एवं वै दक्षिणाम्नायो दक्षिणस्यां दिशि स्थितः । एवं हि पश्चिमाम्नायः पश्चिमायां दिशि स्थितः । एवमेवोत्तराम्नाय उत्तरस्यां दिशि स्थितः । ऊर्ध्वाम्नायस्त देवि । तव मोक्ष तव सन्निधौ । अधोम्नायश्च कथितो देवानामपि दुर्लभः । यदा चाधोमुख देवि । तव मोक्ष गिरिजे । प्रिये ! । अथ आम्नाय इत्युक्त मन्त्र मन्त्र सुमध्यमे ! । षडाम्नायास्तु कथिताश्चोत्पत्तिक्रमनामतः । यस्मिन् यस्मिंश्च ये देवा कथिताश्च वरानने ।। तान्देवांश्च प्रवक्ष्यामि साधकानां हिताय वै । श्रीविद्या भेदसहिता तारा च त्रिपुरा तथा । भुवनेशी चान्नपूर्णा पूर्वाम्नाये प्रकीर्त्तिता । बगलामुखी च वशिनी त्वरिता धनदा तथा" । वशिनी वाक्भैरवीत्वर्थः "महिषघ्नी महालक्ष्मीर्दक्षिणाम्नायकीर्त्तिताः । महासरस्वती विद्या तथा वाग्वादिनी परा । प्रत्यङ्गिरा भवानी च पश्चिमाम्नायकीर्त्तिताः । कालिका भेदसहिता तारा भेदैश्च संयुता । मातङ्गी भैरवी छिन्ना तथा धूमावती परा । उत्तराम्नायकथिताः सर्वा मोक्षफलप्रदाः । समस्तभेदसहिता कालिका या प्रकीर्त्तिता । द्वात्रिंशत्सखरी तासां दक्षिणाम्नायकीर्त्तिता । एकजटा षडाम्नाये महामोक्षप्रदायिनी । तदपरा परमा विद्या न विद्यान्तरगोपिता । परप्रधानमन्त्राश्च ऊर्ध्वाम्नाये प्रकीर्त्तिता । ऊर्ध्वाम्नायो ह्यधश्चैव केवलं मोक्षदो भवेत् । धर्मार्थकाममोक्षार्थं आम्नायास्ते प्रकीर्त्तिताः । यथोक्तविधिना भद्रे । कृत्वा फलमवाप्नुयात् । पूर्वाम्नायादिसर्वेषां विधान शृणु सुन्दरि ! । कृत्वा येनाशु लभते फलं यदुत्तमोत्तमम् । षट्कर्मफलदा सर्वा षडाम्नाया प्रकीर्त्तिताः । उत्तराम्नायो देवेशि ! तेषामाशु फलप्रद" इति समयाचारतन्त्रे २पटले । आम्नायभेदेनाचारभेद उक्तो यथा "पूर्वाम्नायोदित कर्म पाशवं कथितं प्रिये । । यदुक्त दक्षिणाम्नाये तदेव पाशवं स्मृतम् । पश्चिमाम्नायजं कर्म पशुवीरसमाश्रितम् । उत्तराम्नायजं कर्म दिव्यवीराश्रित प्रिये ! । दिव्योऽपि वीरभावेन साधयेत् पितृकानने । वीरात्तु विना दिव्यः पूजयेत् पितृकानने । ऊर्ध्वाम्नायोदितं कर्म दिव्यभावाश्रितं प्रिये !" इति निरुत्तरतन्त्रे १पटले ।

**षडूर्मि** पु० षट् ऊर्मयः क्षुत्पिपासादयोऽत्र । स्रीवे ऊर्मिशब्दे ११८९ पृष्ठे दृश्यम् ।

**षडूषण** न० षट्सङ्ख्यम् ऊषणम् । षट्द्रव्यभेदे "पञ्चकोलं समरिचं षडूषणमुदाहृतम् । पञ्चकोलगुणं तत्तु रुक्षमुष्णं विषापहम्" भावप्र० ।

**षड्गया** स्त्री "गयागजो गयादित्यो गायत्री च गदाधरः ।

गया गयाशिरश्चैव षड्गया मुक्तिदायिकाः” वायु० पु० । उक्ते गयागजादि षट्के ।

**षड्गव** त्रि० षड्भिर्गोभिराकृष्टं शकट हलो वा शाक० अच् समा० । षड्भिर्गोभिराकृष्टे हलादौ “षड्गव धर्म्यं हलं षड्गवं जीविकार्थिनाम्” इति स्मृतिः । षण्णां गवां समाहारः षष्ठसमा० । २षट्सु गोषु न० ।

**षड्गुण** पु० षड्भिः गुणिता गुणाः शाक० । राज्ञां सन्ध्यादिषु षट्सु गुणेषु षाड्गुण्यशब्दे दृश्यम् ।

**षड्ग्रन्था** स्त्री षट् ग्रन्थयः सन्त्यस्या अच् । १वचायां भावप्र० २शट्यां ३महाकरञ्जे ४श्वेतवचायाञ्च राजनि० ।

**षड्ग्रन्थि** न० षट् ग्रन्थयोऽस्य । १पिप्पलीमूले वैद्यकम् । २षट्पर्वयुक्ते त्रि० । ३वचायां स्त्री वा ङीप् । स्वार्थे क न् टाप् अत इत्वम् । शट्यां स्त्री अमरः ।

**षड्ज** पु० षड्भ्यो नासादिस्थानेभ्यो जायते जन–ड । “नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संश्रितः । षड्भ्यः सञ्जायते यस्मात् तस्मात् षड्ज इति स्मृतः” इत्युक्ते स्वरभेदे “षड्जसंवादिनी केका” इति रघुः । “षड्जं रौति मयूरो हि गावो नर्दन्ति चार्षभम् । अजा विरौति गान्धारं क्रौञ्चो नदति मध्यमम्” भरतः ।

**षड्दर्शन** न० षड्गुणितं दर्शनम् । १आस्तिकमतसिद्धे पूर्वमीमांसावेदान्तसांख्यपातञ्जलन्यायवैशेषिकाख्ये दर्शने शास्त्रभेदे षट्सु २बौद्धदर्शनेषु च ।

**षड्दीर्घ** पु० षड्भिर्गुणिता दीर्घाः । तन्त्रोक्तेषु आ, ई, ऊ, ऐ, औ, अः इत्येव रूपेषु षट्सु दीर्घेषु ।

**षड्दुर्ग** न० षड्गुणितं दुर्गम् । “धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा । नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम्” मनूक्ते दुर्गषट्के ।

**षड्धा** अव्य० षष्+प्रकारे–धाच् । षट्प्रकारे । [त्रिका० ।

**षड्बिन्दु** पु० षड् बिन्दवो यत्र । १कीटभेदे मेदि० । २विष्णौ

**षड्भुजा** स्त्री षट् भुजा इव यस्याः । (खरमुज) फलवल्लीभेदे राजनि० । २षड्हस्तयुक्ते त्रि० । ३रौद्रे ज्वरे पु० “त्रीमांस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचन” भाग० ।

**षड्रस** न० षण्णां रसानां समाहारः पात्रा० । “मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा” इत्युक्तेषु “मधुरः क्षौद्रमिक्ष्वादौ स च लक्ष्यते । लवणस्तु पटुर्मोक्षः सैन्धवादौ स दृश्यते । तिक्तस्तु पिचुमर्दादौ व्यक्तमास्वाद्यते रसः । कषायस्तुवरस्तु स च पूगीफलादिषु । कटुस्तु तीक्ष्णसंज्ञः स्यात् मरीचादौ स चेष्यते” इत्युक्तस्थानेषु लब्धेषु षट्सु रसेषु । षड्गुणितोरसः । तस्यार्थे पु० । त्रिका० ।

**षड्लवण** न० षड्गुणितं लवणम् । रुच्याकृतयुतपञ्चलवणे

**षड्वर्ग** पु० ६त० । १कामक्रोधलोभमोहमदमात्सर्येषु “व्याजेष षड्वर्गमिति” भट्टिः । ‘क्षेत्रं होरा च द्रेक्काणो नवांशो द्वादशांशक’ । त्रिंशांशकश्च षड्वर्गस्त्वादिमांस्त्रा फलप्रद” ज्योतिषोक्तेषु क्षेत्रादिषु षट्सु । स च ज्यो०त० उक्तो यथा

“कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभुवाम् । जीवार्किमन्दजीवानां क्षेत्राणि१ स्युरजादयः । विषमर्क्षेषु प्रथमा होरा२ स्युः सप्तरोः स्मृ । द्वितीया शशिनोयुग्मे व्यत्ययाद्गणयेत् सदा । स्वपञ्चनवमा ये राशीनामधिपाः स्मृताः । ते द्रेक्काणाधिपा राशौ द्रेक्काणाश्च त्रय एव हि । मेषकेसरिधनुषां मेषाद्याश्च नवांशका’४ । मृगकन्यावृषाणाञ्च मृगाद्यास्तु नवांशकाः । तुलामिथुनकुम्भानां तु लाद्याः समुदाहृताः । कर्किवृश्चिकमीनानां कर्कटाद्या नवांशकाः । चराणां प्रथमे चांशे स्थिराणां पञ्चमे तथा । नवमे तु तकानाञ्च वर्गोत्तम इति स्मृतः । स्वनवांशस्तु राशीनां वर्गोत्तम इति स्मृतः । सर्वेषां मेषपूर्वाणां स्वकाद्या द्वादशांशका५ । कुजार्कीगुरुसौम्यानां भागाः शुक्रस्य च क्रमात् । पञ्चपञ्चाष्टसप्तेषु त्रिंशांशेषु राशिषु । त्रिंशांशाद् व्यत्ययादेते युग्मराशिषु कीर्तिताः” । स्वाधिकशुभाशुभप्राप्त्या शुभाशुभद इति बोध्यम् ।

**षण(न)** सम्भक्तौ भ्वा०पर०सक०सेट् षस्य सत्वे णस्य नत्वम् । सनति असनीत् असानीत् । दन्त्यान्तोऽयमित्येके ।

**षण(न)** दाने तना०उभ० सक० सेट् षस्य सत्वे णस्य नत्वम् उदित् । दन्त्यान्त इत्येके सनोति सनु असनीत्-असानीत् असनिष्ट-असात । सिषासति सिसनिषति इत्येके ।

**ष(श)ण्ड** पु० सन–ड उस्य नेत्वम् पृषो० षत्वं शत्वं वा । १वृषे अमरः २नपुंसके जटा० । ३पद्मादिसमूहे पु० न० अमरः । [पाठान्तरम् ।

**षण्ढ** पु० सन–ढ तस्य नेत्वम् पृषो० ष० । नपुंसके अमरे

**षण्मुख** पु० षट् मुखानि यस्य । १कार्त्तिकेये हला० षड्भुजायां स्त्री राजनि० टाप् ।

**षद** गतौ भ्वा० उभ० सक० सेट् । सादयति ते असीषदत् ।

**षद** विशरे अवसादे अक०हिंसायां गतौ च सक०तु०पर० अनिट् । सीदति लृदित् असदत् । ज्वला०। सदः सादः ।

**षन्च** गतौ भ्वा० पर० सक० सेट् । सञ्चति असञ्चीत् ।

वेत्⁄ वचोत्कटम् । तद्दर्शनोपासिकता नित्यं तद्भावभाविता । तत्कारितप्रश्रयिता हृत्त सश्रयिष्य स्तुतम्” अग्निपु०२३अ०। अधिक कामन्द० नीतिशास्त्रे दृश्यम्।

**षाण्मातुर** पु० षण्णां मातृणामपत्यम् अण् उदादेश रपर । कार्त्तिकेये तस्य कृत्तिकाः षट्, गङ्गा पृथिवी पार्वती चेति षट् मातरः पुराणेषु प्रसिद्धा । अग्निकुमारमन्त्रे तु तस्य षण्णां स्वपिण्डीनां मातृत्वं दर्शितम् ।

**षात्वणत्विक** त्रि० षत्वणत्वे अधिकृत्य कृतो ग्रन्थः ठक् । षत्वणत्वप्रतिपादके ग्रन्थे सि० कौ० ।

**षाण्मासिक** न० षष्ठे मासि भवं ठञ् । मृतस्य एकाहीन षष्ठमासे कर्त्तव्ये श्राद्धभेदे “आद्यं षाण्मासिके तथेति” स्मृतिः “एकाहेन्यून षण्मासि तस्य विधानम्”ति०त०रघु०

**षाध** सिद्धौ स्वा० दि० च पर० अक० अनिट् । साघ्नोति साध्यति असात्सीत् सिषाधयिषति । [ति असषान्त्वत् त ।

**षान्त्व** सामयुक्तसम्पादने अद०चु०उभ०सक० सेट् । सान्त्वयति

**षि** बन्धे स्वा० क्र्या० च उ०सक० अनिट् । सिनोति सिनुते सिनाति सिनीते असैषीत् । असेष्ट । [चद् त । सिक्त

**षिच** आर्द्रीकरणे तु०सु०उभ०सक०अनिट् । सिञ्चति ते असि-

**षिट** अनादरे भ्वा० पर०सक० सेट् । सेटति असेटीत् ।

**षिड्ग** पु० षिट–गन् तस्य नेत्वम् पृषो० । १विट (लम्पट) २कामुके हेमच० । [धीत्-असैत्सीत् । सिद्ध ।

**षिध** माङ्गल्ये अक० शासने सक० उदित् वेट् । सेधति असे

**षिध** गतौ भ्वा०पर०सक० सेट् । सेधति असेधीत् सेधितः ।

**षिध** सिद्धौ दिवा० पर० अक० अनिट् क्त्वा वेट् । सिध्यति असैत्सीत् णिचि साधयति । सिषाधयिषति ।

आ+राजाज्ञयाऽवरोधे सक० । आसेधः ।

उद्+उच्चतायाम् अक० । उत्सेध ।

नि+निवारणे सक० । निषेधः ।

परि+निवारणे सक० । परिषेध ।

प्रति+निवारणे सक० । प्रतिषेधः ।

वि+आ+विशेषेण निषेधे । व्याषेधः ।

वि+प्रति+विरुद्धत्वे आघाते । विप्रतिषेध ।

**षिम्भ** हिंसने सक० दीप्तौ अक० भ्वा० पर० सेट् क्त्वा वेट् । सिम्भति असिम्भीत् ।

**षिम** हिंसने भ्वा०पर० सक० सेट् । सेमति असेमीत् ।

**षिल** उञ्छ,तत्पश्चेभावात् कणश आदाने तुदा०पर०सक० सेट् । सिलति असेलीत् । [सीव्-स्यू त सीवनं सेवनम् ।

**षिव** तन्तुविस्तारे दि०प०सक०सेट् क्त्वा वेट् । सीव्यति असे

**षु** उरा(?)ख्यावमभूषे सन्धाने सोमादेः पीडने मन्थने च स्वा० उ० सक० स्नाने अक०अनिट् वुक्ष पर० सेट । सुनोति सुनुते असावीत् असोष्ट । सोता

**षु** गतौ भ्वा०उभ०सक०अनिट् । सवति ते असौषीत् असोष्ट ।

**षु** प्रसवे ऐश्वर्य्ये च भ्वा०प०सक०अनिट् । सवति असौषीत् ।

**षु** ऐश्वर्य्ये प्रसवे च अदा० पर० सक० येट् लिटि नित्येट् । सौति असावीत्-असौषीत् । सुषुविव ।

**षु** पु० सु–बा० कु पृषो०षत्वम् । गर्भविमोचने एकाक्षरकोष०

**षुट्ट** अनादरे चु०उभ० सक० सेट् । सुट्टयति ते असुसुट्टत् त ।

**षुन्भ** दीपने अक०हिंसने स०भ्वा०प०सेट् । सुम्भति असुम्भीत्

**षुर** दीप्तौ अक० ऐश्वर्य्ये स०तु०प० सेट् । सुरति असोरीत् ।

**षुह** तृप्तौ अक०अमाया सक०दि०पर०सेट् । सुह्यति सुहद् असुहत् । [सुवे असविष्ट असोष्ट ।

**षू** प्रसवे गर्भविमोचने च अदा० आत्म० सक० वेट् । सूते

**षू** प्रसवे दि०आ०स०वेट् । सूयते असविष्ट असोष्ट सोढ़ा सवि०

**षू** प्रेरणे तुदा० पर० सक० सेट् । सुवति असावीत् ।

**षूद** निवारणे भ्वा०आ० सक० सेट् । सूदते असूदिष्ट ।

**षूद** मारणे भ्वा० पर० सक० सेट् । सूदति असूदीत् ।

**षूद** क्षरणे अक० प्रतिज्ञायां निरासे च सक० अद०चु० उभ० सेट् । सूदयति ते असुषूदत् त । [रिष्ट ईर्दिर सूर्ण ।

**षूर** स्तम्भे अक० हिंसने स० दि०आ०सेट् । सूर्य्यते असू

**षूर्क्ष** अनादरे भ्वा० पर० सक० सेट् । सूर्क्षति असूर्क्षीत् ।

**षूर्क्ष्य** ईर्ष्यायां भ्वा० पर० सक० सेट् । सूर्क्ष्यति असूर्क्ष्यीत् ।

**षूष** प्रसवे भ्वा० पर० सक० सेट् । सूषति असूषीत् ।

**षृन्भ** हिंसने भ्वा० पर० सक० सेट् । सृम्भति असृम्भीत् ।

**षृभ** हिंसने भ्वा० पर० सक० सेट् । सर्भति असर्भीत् । षृन्भ षृभधातू पाणिनीयगणपाठे मूर्द्धन्यादितया पठितौ । तेन षोपदेशत्वात् षति निमित्ते षत्वम् । कविकल्पद्रुमे तु दन्त्यादितया पठितौ । तेन षति निमित्ते न षत्वम । तन्मतम् अपाणिनीयत्वादुपेक्ष्यम् ।

**षेक** सर्पणे भ्वा० आत्म० सक०सेट् ऋदित् चङि न ह्रस्व । सेकति असेकीत् । [ह्रस्वः । सेकति असेकीत् ।

**षेल** चालने गतौ च भ्वा० पर० सक० सेट् ऋदित् चङि न

**षेव** आराधने उपभोगे आश्रये च भ्वा० उभ सक०सेट् ऋदित् चङि न ह्रस्व । सेवति सेवते असेवीत् असेविष्ट ।

**षै** क्षये भ्वा० पर० अक० अनिट् । सायति असासीत् ।

**षो** नाशे दि०पर० सक० अनिट् । स्यति असात्-असासीत् ।

अव+समाप्तौ अवसानम् ज्ञाने सक० अवसीयते ।

अधि+अव+ उत्साहे अक०निश्चय ज्ञाने सक० अध्यवस्यति । वि+अव+विशेषेण निश्चये सक० उद्यमे अक० व्यवस्यति । अनु+वि+अव ज्ञानज्ञाने अनुव्यवसायः घटमहं जानामीत्यादिरूप ।

**षोडत्** पु० षट् दन्ता यस्य दन्तस्य दत् षत्वम् दस्य डुत्वम् । [षड्दन्तयोग्यवयस्के वृषादौ ।

**षोडशन्** त्रि० ब०व० षडधिका दश षत्वम् दस्य डुत्वम् । (षोल) १सङ्ख्याभेदे २तत्सङ्ख्यान्विते च ।

**षोडश** पु० षोडशानां पूरणः डट् । येन षोडशसङ्ख्या पूर्य्यते १तादृशे । चन्द्रमण्डलस्य २षोडशभागरूपकलायां ३त्रिपुरासुन्दर्य्याञ्च स्त्री ङीप् । "काली तारा महाविद्या षोडशी भुवनेश्वरी" तन्त्रसा० ।

**षोडशक** न० षोडश परिमाणान्यस्य कन् । षोडशसङ्ख्याते वस्तुनि "भूम्यासनं जलं वस्त्रं प्रदीपोऽन्नं ततः परम् । ताम्बूलच्छत्रगन्धाश्च माल्यं फलमतः परम् । शय्या च पादुका गावः काञ्चनं रजतं तथा । दानमेतत् षोडशकं प्रेतमुद्दिश्य दीयते" शु०त० उक्तेषु प्रेतोद्देशेन दीयमानेषु २षोडशसु भूम्यादिषु "स्वर्णं रौप्यं तथा ताम्रं कांस्यं गावो गजा हयाः । रत्नं भूमिर्दशो वस्त्रं शय्या चलत्पानहौ । दासश्च पितृयज्ञेषु दानं षोडशकं मतम्" इति वायुपुराणोक्तेषु पितृकृत्येषु देयेषु ३स्वर्णादिषु षोडशसु च ।

**षोडशभुजा** स्त्री षोडश भुजा यस्याः । दुर्गामूर्त्तिभेदे "यदा तु षोडशभुजा महामाया प्रपूजयेत् । दुर्गातन्त्रेण मन्त्रेण विशेषं तत्र वै शृणु । कन्यायां कृष्णपक्षस्य एकादश्यामुपोषितः । द्वादश्यामेकभक्तन्तु नक्तं कुर्य्यात् परेऽहनि । चतुर्दश्यां महामाया बोधयित्वा विधानतः । गीतवादित्रनिर्घोषैर्नानानैवेद्यभेदनैः । अयाजितं बुधः कुर्य्यात् उपवासं परेऽहनि । एवमेव व्रतं कुर्य्यात् यावद्वै नवमी भवेत्" कालिकापु० ५९अ० ।

**षोडशमातृका** स्त्री ब०व० षोडशसङ्ख्याः मातरः स्वार्थे क । "गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । शान्तिः पुष्टिर्धृतिस्तुष्टिः कुलदेवात्मदेवता" इत्युक्तासु गौर्य्यादिषु षोडशसु मातृकासु ।

**षोडशर्त्विज्** पु० कर्म० । होमादिषु षोडशसु ऋत्विक्षु ते च अच्छावाकशब्दे ८५ पृ० दर्शिताः । तत्साध्यश्च याग सोमयागादिः सत्रयागश्च ।

**षोडशाङ्ग** पु० षोडश द्रव्याणि अङ्गान्यस्य । "गुग्गुलु सरलं दारु पत्रं मलयसम्भवम् । ह्रीबेरमगुरुं कुष्ठं गुडं सर्जरसं घनम् । हरीतकीं नखीं लाक्षां जटामांसीञ्च शैलजम् । षोडशाङ्गं विदुर्धूपं दैवे पैत्रे च कर्मणि" इत्युक्ते गुग्गुल्वादिषोडशद्रव्यरचिते धूपे तन्त्रसा० ।

**षोडशाङ्घ्रि** पु० षोडश अङ्घ्रयश्चरणा यस्य । कर्कटे हेमच० ।

**षोडशांशु** पु० षोडश अंशवो यस्य । शुक्रग्रहे शब्दचा० । षोडशार्चिरप्यत्र ।

**षोडशार** न० षोडश अराः कोणा इव वा अस्य । १षोडशदलयुक्ते कमले तन्त्रोक्ते २यन्त्रभेदे च । तुलादानाद्युक्ते ३चक्रभेदे च. षोडशारचक्रनिर्माणप्रकारस्तु तुलादानादिपद्धतौ विधानपारिजाताद्युक्तोऽस्माभिर्दर्शितो यथा "गुरुर्वेदिमध्ये त्रिहस्तदीर्घविस्तारं चतुरस्रं प्रसाध्य तत्र प्राक्पश्चिमयोर्दक्षिणोत्तरतश्च नव नव रेखाः कृत्वा चतुःषष्टिकोष्ठकं मण्डलं कुर्य्यात् । तत्र च सर्वाणि कोष्ठानि नवाङ्गुलदीर्घायामानि सम्पद्यन्ते । तत्र बाह्यासु पङ्क्तिषु चतुर्दिक्षु मध्ये पार्श्वयोः द्वे द्वे कोष्ठे परित्यज्य चत्वारि कोष्ठानि मार्जयित्वा चतुष्कोष्ठानामेकतां सम्पाद्य तत्तत्संलग्नोपान्त्यपङ्क्तिषु द्वे द्वे मध्यकोष्ठे पार्श्वयोः त्रीणि त्रीणि कोष्ठानि त्यक्त्वा मार्जयेत्तेन चतुर्दिक्षु षट् षट् कोष्ठात्मकानि चत्वारि द्वाराणि जायन्ते । ततो मध्यस्थानि षोडश कोष्ठानि प्रतिदिशं चत्वारि चत्वारि कोष्ठानि परित्यज्य मार्जयेत् । ततो बाह्यपङ्क्तिषु एकैकं कोणग कोष्ठमुत्सृज्य कोणकोष्ठद्वारपीठान्तरालवर्त्तीनि पञ्च पञ्च कोष्ठानि प्रतिदिशं मार्जयेत् । तेन मध्यचतुरस्रपीठस्य पादाः भवन्ति । ततो मध्यपीठमारभ्य क्रमशश्चत्वारि वृत्तानि कुर्य्यात् । तत्राद्ये चतुरङ्गुलो द्वितीयेऽष्टाङ्गुलस्तृतीये चतुर्विंशत्यङ्गुलः चतुर्थे च षड्विंशत्यङ्गुलो व्यासः । तत्राद्य चतुरङ्गुलव्यासकं वृत्तं कर्णिकारूपं पीतेन रजसा पूरयित्वा कर्णिकावधि रेखां सितेन रजसा विदध्यात् । तद्बहिरष्टाङ्गुलव्यासे द्वितीयवृत्ते क्रमेण पीतरक्तसितरजोभिः सम्पादितमध्यमूलाग्राणि षोडश केसराणि कृत्वा केसरावधिरेखां सितेनैव रजसाङ्कुलोन्नतां कुर्य्यात् । ततस्तद्बहिश्चतुर्विंशत्यङ्गुलव्यासे तृतीयवृत्ते षट्सु दिक्ष्वष्टौ पत्राणि सितरजसा विधाय रक्ताभाणि कुर्य्यात् । ततो दलान्तरेषु सितेन रजसा रेखां विधाय दलमध्यानि कृष्णेन रजसा पूरयेत् । तद्बहिरेकाङ्गुलान्तरालां बहिर्व्यासस्य चतुर्थरेखां सितरजसा संपाद्य तृतीयचतुर्थवृत्तद्वयान्तरस्थानेषु

परितोऽष्टदलायततत्सन्निभम् षोडशभिः पत्रैः षोडशधा विभज्य प्रतिभागं यथाकारान् षोडशारान् श्यामपीतारुणश्वेतरजोभिः कल्पयित्वा तन्मध्ये यथायोगं रजोभिः पूरयेत्। तद्बहिः सितपीतारुणश्यामहरिताः पञ्च रेखाः क्रमशो लिखेत्। तद्बहिः पीठक्षेत्रं चतुरस्रं यथायोग्यं रजोभिरलङ्कृत्य पीठावधिरेखां सितेन रजसा कृत्वा द्वारक्षेत्राणि पूर्वादितः पीतश्वेतश्यामहरितरजोभिः पूरयेत्। तत आग्नेयादिकोणस्थकोष्ठचतुष्टयं क्रमेण लोहितहरितश्यामधवलैः पूरयित्वा आग्नेयादिपीठपादचतुष्टयं पञ्चकोष्ठात्मकं क्रमात् सितरक्तपीतकृष्णरजोभिः पूरयेत्। ततः सितेन रजसाकुञ्चितेन बहिश्चतुरस्ररेखां कुर्य्यात्। ततः प्राच्यां वज्रम्, आग्नेय्यां शक्तिं, दक्षिणे दण्डं, नैरृत्यां खड्गं, पश्चिमायां पाशं, वायव्यां ध्वजं, कौबेर्य्यां गदाम्, ऐशान्यां शूलं तद्वामे चक्रं, पाशदक्षिणे पद्मञ्च लिखेत्"।

**षोडशिन्** पु० षोडश कला विद्यन्तेऽस्य इनि। १सोमे २यज्ञाङ्गे तन्नामसोमरसस्थापनपात्रे च "अतिरात्रे षोडशिनं गृह्णातीति" श्रुतिः "षोडशिनः पात्रं खादिरं चतुरस्रम्" कात्या०श्रौ० ९।७ कर्कधृतिः।

**षोडशोपचार** पु० ष० त० षोडशसङ्ख्याता उपचाराः। "आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्। मधुपर्काचमस्नानं वसनाभरणानि च। गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा" इत्युक्तेषु षोडशसु पूजाङ्गद्रव्येषु।

**षोढा** अव्य० षट् प्रकारा धाच् षत्वं षस्य ढुत्वम्। षट्सु प्रकारेषु।

**षोढान्यास** पु० षोढा षट्प्रकारो न्यासः। तन्त्रोक्ते षट्प्रकारन्यासभेदे षोढान्यासप्रकारो यथा वीरतन्त्रे "केवलां मातृकां न्यस्य मातृकां तारसम्पुटाम्। मातृकापुटितं तारं न्यसेत् साधकसत्तमः। श्रीबीजपुटितां तान्तु मातृकापुटितं तु तत्। कामेन पुटितां देवीं तत्पुटं काममेव च। शक्त्या च पुटितां देवीं शक्तिञ्च तत्पुटां न्यसेत्। क्रीं हन्दञ्च पुनर्न्यस्य। स्वकृतेस्तस्य पूर्ववत्। मूलेन पुटितां देवीं तत्पुटं मन्त्रमेव च। चतुर्थोपविधानेन न्यस्य मन्त्रं यथाविधि। मूलेनाष्टशतं कुर्य्यात् व्यापकं तदनन्तरम्"। कालीतारादिषोढान्यासास्तन्त्रसारे दृश्याः। [कीत् घटादि० ष्टकयति।

**ष्टक** प्रतीघाते भ्वा० पर० सक० सेट्। ष्टकति अष्टा(ष्ट)-

**ष्टग** संवरणे भ्वा०प०सक सेट् एदित् सिचि न वृद्धिः घटा०। ष्टगति अष्टगीत्। [णीत् अष्टगीत् ष्टा(ष्ट)गयति।

**ष्टन** शब्दे भ्वा०पर० सक० सेट् वा घटा०। ष्टनति अष्टा-

**ष्टभ** स्तम्भे अक० स्तम्भने सक० भ्वा० आत्म० सेट् इदित्। ष्टम्भते अष्टम्भिष्ट।

**ष्टम** वैकल्ये अद० चु०उ०स० सेट्। ष्टमयति त अतष्टमत् त

**ष्टम** वैकल्ये अक० भ्वा० पर० सेट्। ष्टमति अष्टमीत्।

**ष्टिघ** अभियोगे स्वा०आत्म०सक० सेट्। ष्टिघ्नुते अष्टेघिष्ट।

**ष्टिप** क्षरणे भ्वा०आत्म०अक० सेट् ऋदित् चङि न ह्रस्वः। स्तेपते अस्तेपिष्ट। अतिष्टेपत् त।

**ष्टिम** क्लेदे दि०प०अक० सेट्। स्तिम्यति अस्तेमीत् स्तेमनम्

**ष्टीम** क्लेदे दि०प०अ०सेट्। स्तीम्यति अस्तीमीत् स्तीमनम्।

**ष्टु** स्तुतौ अदा०उ० सक०अनिट् सिचि सेट् लिटि नित्येट्। स्तौति स्तवीति स्तुते स्तुवीते स्तुते स्तुवीते सि०कौ० मुग्धबोधमते आर्द्धातुके न ईट् स्तुते इत्येवंभेद। अस्तावीत् अस्तोष्ट। तुष्टाव। तादाद्यर्द्धधातुके वेट्। स्तोता स्तविता। स्तोष्यति स्तुतः।

**ष्टुच** प्रसादे अक० भ्वा० आत्म० सेट्। स्तोचते अस्तोचिष्ट।

**ष्टुभ** स्तम्भे अक० स्तम्भने सक० भ्वा०आत्म० सेट् क्त्वा वेट्। स्तोभते अस्तोभिष्ट। [अतुष्टूपत् त स्तूप।

**ष्टूप** समुच्छ्राये अद० चु० उभ० अक० सेट्। स्तूपयति ते

**ष्टूप** समुच्छ्राये दि०पर०अक०सेट्। स्तूप्यति इरित् अस्तूपत् अस्तूपीत्।

**ष्टृक्ष** गतौ भ्वा०प०स०सेट्। स्तृक्षति अस्तृक्षीत् तस्तृक्षे

**ष्टृह** वधे तु०प०सक०वेट्। स्तृहति अस्तर्हीत् अस्तृक्षत्।

**ष्टृंह** वधे तु०आत्म०सक०वेट्। स्तृंहति अस्तृंहीत् अस्तृंहत्

**ष्टेप** क्षरणे भ्वा० आ० अक० सेट् ऋदित् चङि न ह्रस्वः। स्तेपते अस्तेपिष्ट।

**ष्टै** वेष्टने सक० भ्वा० पर० अनिट्। स्तायति अस्तासीत्।

**ष्ट्यै** संहतौ ध्वनौ च अक० भ्वा० पर० अनिट्। स्त्यायति। अस्त्यासीत् इत्येके। प्रस्त्यायति इत्येवेति।

**ष्ठग** संवरणे भ्वा० पर० सक० सेट् घटा० सिचि न वृद्धिः। स्थगति अस्थगीत्।

**ष्ठल** स्थितौ भ्वा०प०अक० सेट् ज्वला०। स्थलति अस्थालीत्।

**ष्ठस** निरासे दि०प०स०सेट्। स्थस्यति अस्थासीत्-अस्थसीत्।

**ष्ठा** गतिनिवृत्तौ भ्वा०पर० अक० अनिट्। तिष्ठति अस्थात्।
अधि+आधारतयावस्थितौ सक०।
अनु+करणे अनुष्ठानम्।
अव+अवधाने अवस्थाने।

पञ्चम्यर्थे ६समासार्थे च यथा सपितृकः सङ्घ इत्यादि। “कोऽन्तगुरुः क्वाऽयगाऽन्तलघुस्तु” छन्दो० गाल्लर्ञ्को ७अन्तलघुके आदिमध्यगुरुके दवर्णगणे पु०। सगणोऽप्यत्र।

**संक्षेप** पु० सम्+क्षिप–घञ्। भूयसोऽर्थस्य स्वल्पवाक्यादिना प्रकाशने भरतः। ल्युट्। तत्रार्थे न०। सर्वत्र सम स्थाने झरपरे वा परसवर्णः पञ्चमवर्णः।

**संक्षोभ** पु० सम्+क्षुभ–घञ्। चाञ्चल्ये क्षोभे च वा ङ।

**संग्राहिन्** पु० सम्+ग्रह–णिनि। १कुटजवृक्षे राजनि०। २सङ्ग्रहकारके ३धारके च। वा ङ् सङ्ग्राहीति रूपम्।

**संघ** पु० सम्+हन–ड नि०। १समूहे २जन्तुसमूहे च अमर अस्य वा ङ्। सङ्घ इति वा रूपम्।

**संघट्ट** पु० सम्+घट्ट–भावे अच्। १अन्योन्यविमर्दे २गठने च ‘स्टाहरणसंघट्टं प्रतिष्ठाप्यासमेव च” ति०त०। ३लतायां स्त्री शब्दच०। ल्युट्। तत्रार्थे न०।

**संघर्ष** पु० सम्+घृष–घञ्। १अन्योन्यदृढसंयोगे २स्पर्द्धायां ३संमर्दने च शब्दर० वा ङ।

**संज्ञ** न० सम्+ज्ञा–क। १पीतकाष्ठे कालीयके गन्धद्रव्ये शब्दच०। सम्+ज्ञा–अङ्। २चेतनायां ३बुद्धौ ४आख्यायां ५हस्ताद्यैरर्थसूचने च स्त्री अमर। ६गायत्र्यां ७सूर्यपत्न्याञ्च स्त्री मेदि०। वा ञ्। ८संहतजानुके त्रि० शब्दसा०।

**संज्ञपन** सम्+ज्ञा–णिच्–पुक् मारणे मुक्श्च ल्युट्। १मारणे अमर। २ज्ञापने न मुक्। क्तिन्। संज्ञप्तिरप्यत्र स्त्री हेमच० वा ञ्।

**संज्ञासुत** पु० संज्ञायाः सूर्यपत्न्याः सुतः। शनैश्चरे।

**संज्ञु** त्रि० संहते जानुनी यस्य जानुस्थाने ज्ञु। संहतजानुके अमर। वा ञ्। [ञ्।

**संज्वर** पु० सम्+ज्वर–अप्। अग्निजाते तापे अमरः वा

**संमर्द** पु० सम्+मृद–घञ्। अन्योन्यदृढसंयोगरूपे सङ्घर्षे वा म

**संय** पु० सं+यम्–ड। कङ्काले शब्दमा०। [समे च।

**संयत** त्रि० सम्+यम–क्त। १बद्धे अमरः २कृतसंयमोक्तनि-

**संयत्** स्त्री संयम्यतेऽत्र सम्+यम–आधारे क्विप् तुक् च। १युद्धे अमरः। कर्त्तरि क्विप्। २संयमनकर्त्तरि त्रि०।

**संयत्वर** पु० सम्+यम–क्वरप् तुक् च। १जन्तुसमूहे २संयम्यते त्रि० संक्षिप्तसा०।

**संयद्वर** पु० ६त०। नियन्तॄणां वरे नृपे उणादि०।

**संयद्वाम** पु० वामं संयाति सम्+या–शतृ पृषो० पूर्वनिपातः। अक्षिपुरुषे “एतं हि सर्वाणि पुरुष संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयन्ति” छान्दोग्यो०।

**संयन्तृ** त्रि० संयच्छति सम्+यम–तृच्। नियन्तरि।

**संयाम** पु० सम्+यम–घञ् वा वृद्धिः। व्रताङ्गतया पूर्वदिनकर्त्तव्ये १नियमभेदे अमर २इन्द्रियनिग्रहे ३बन्धने च

**संयमन** न० सम्+यम–ल्युट्। १बन्धने २व्रतभेदे मेदि० ३चतुःशाले गृहे च भरत। यम–णिच्–ल्यु। ४यमे पु० “वैवस्वत संयमन” श्रुति।

**संयमनी** स्त्री संयम्यते बध्यतेऽत्र सम्+यम–आधारे ल्युट्। यमाधिष्ठितपुर्याम् मेदि० “अन्येऽपि ये संयमिनः संयमन्याश्रयन्त ते” काशीख० ८अ०। यमसभावर्णनं भा०स० ८अ०दृश्यम्। संयमननगरपरत्वे न० “एतत् संयमनं पुण्यमतीवाद्भुतदर्शनम्” भा०व० १६२अ०।

**संयमिन्** पु० सम्+यम–णिनि न वृद्धिः। १मुनिभेदे धरणिः २इन्द्रियसंयमयुते त्रि० गीता।

**संयाव** पु० सम्यक् घृतादिभिर्यूयते मिश्रीक्रियते गोधूमचूर्णाद्यत्र सम्+यु–आधारे घञ्। “संयावस्तु घृतक्षीरगुडगोधूमपाकजः” इत्युक्ते घृतादिना पक्वगोधूमचूर्णे शब्दच०।

**संयुज्** त्रि० सम्यक् युनक्ति सम्+युज–क्विन्। १गुणाढ्ये त्रिका० २संयुक्ते च। [रिते हलवर्णे च पा०।

**संयुक्त** त्रि० सम्+युज–क्त। १संयोगयुते पदार्थे २अव्यवहित-

**संयुग** न० संयुज्यतेऽत्र सम्+युज–क न्यङ्क्वा० कस्य गः। युद्धे अमर। तत्र साधु० अञ्। सांयुगीनः रणेसाधौ।

**संयुत** त्रि० सम्+यु–क्त। संयुक्ते।

**संयोग** पु० सम्+युज–घञ्। १मेलने क्रियाजन्ये द्रव्याश्रिते गुणभेदे २सम्बन्धमात्रे च “अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः। कीर्त्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः। तथोभयोः कर्मजन्यो भवेत् संयोगजोऽपरः। आदिमः श्येनशैलादिसंयोगः परिकीर्त्तितः। मेषयोः सन्निपातो यः स द्वितीय उदाहृतः। कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः। तृतीयः स्यात् कर्मजोऽपि द्विधैव परिकीर्त्तितः। अभिघातो नोदनञ्च शब्दहेतुरिहादिमः। शब्दाहेतुर्द्वितीयः स्यात्” भाषा० “उदयात् प्राक् दशम्यास्तु येन संयोग उच्यते। उपरिष्टात् प्रवेशस्तु तस्मात् तत् परिवर्जयेत्” ति०त०। उक्ते उदयात् प्राक्दशम्याः योगे च।

**संयोगपृथक्त्व** न० संयोगेन फलसम्बन्धभेदेन पृथक्त्वं नानारूपत्वं यत्र। एकस्यैव कर्म्मणो नित्यानित्यत्वप्रतिपादके मीमांसकोक्ते न्यायभेदे स च तन्त्रवा० दर्शितो यथा

"अग्नीषोमीयपशौ श्रूयते "खादिरे पशुं बध्नाति खादिरं वीर्य्यकामस्य यूपं कुर्वीत" । अत्र पशुबन्धनाय यूपो विहितः स च नित्यत्वेनावश्यकः यागसाधनत्वात् पशुकामनावतश्च अन्यो यूपो विहितः स च कामनाधीनत्वादनावश्यकः । अत्र संशयः किं काम्य एव खादिरो नित्योऽपि स्यात् उत एकः खादिरः क्रतुपुरुषोभयार्थः उत काम्य एव खादिरो नित्यस्त्वन्यकाष्ठनिर्मित इति । तत्र काम्यनित्यप्रयोगाङ्गता न सम्भवति कामनाधीनत्वेन तस्यानावश्यकत्वात् नित्यस्यावश्यकः न ह्यावश्यकत्वमनावश्यकत्वञ्च सम्भवति विरोधात् । तस्मात् काम्य एव खादिरः नित्यस्त्वन्यकाष्ठनिर्मितः । तदुक्तं शास्त्रदीपिकायाम् एतदधिकरणीयोदाहरणान्तरे "दध्ना जुहोति दध्नेन्द्रियकामस्य जुहुयादित्यत्र "पूर्वाधिकरणन्यायात् काम्यत्वेन श्रुतं दधि । अनित्यार्थमुपादेयमतोऽन्यन्नित्यमिष्यताम्" । अन्यद्द्रव्यान्तरं पूर्वाधिकरणन्यायात् प्रागुक्तापशयन्यायात् । माधवाचार्य्योऽपि "नित्येऽग्निहोत्रे पूर्वाधिकरणन्यायेन दधि न प्रयोक्तव्यं किन्तु अन्यदेव किञ्चित् द्रव्यम्" इत्याह । ननु नित्येऽपि खादिर एव श्रूयते अतो नित्य एकः खादिरः काम्यश्चान्यः खादिर इति यूपद्वयं विधीयते अन्यथा नित्ये खादिरत्वविधानं व्यर्थं स्यात् तथा च क्व विरोधः येनैकस्योभयार्थत्वे विरोधभयस्य समाहितमिति चेन्न खादिरेण वीर्य्यं कुर्य्यादिति वीर्य्यकामपर्य्यवसन्नं खादिरत्वाभिधानं व्यर्थमिति तथाभिधाने खादिरविधानात् काम्य एव खादिरः नित्यस्तु काष्ठान्तरीय इति प्राप्ते आह "एकस्य तूभयत्वे संयोगपृथक्त्वम्" सू० । यद्योगः सम्बन्धः एकस्य खादिरस्य नित्यत्वकाम्यत्वोभयरूपत्वे संयोगश्च पशुबन्धस्य पृथक्त्वं परस्परनिरपेक्षेण पृथगभिधानं नियामकमिति शेषः । अयमाशयः यदि द्वयोरेकस्य आकाङ्क्षा तदा द्वयोरेकवाक्यता स्यात् इह तु उभयमेव निराकाङ्क्षं तथा हि नित्यवाक्यं यूपस्य पशुबन्धनसम्बन्धे अन्यत् किमपि नापेक्षते पशुबन्धनदृष्टफलत्वात् खादिरत्वस्य तत्पूरणाभिधानाच्च । काम्यवाक्यमपि आश्रयरूपद्रव्यान्तरं किमपि प्रमाणं नापेक्षते सन्निधानादेवाश्रयलाभे हि तथा स्यात् पृथक्पृथक् संयोगस्य निरपेक्षेण वाक्यद्वयेनाभिधानात् कामनाभावे च खादिरं दृष्टफलद्वारा क्रतोरुपकरिष्यति पुरुषस्य वीर्य्यं सम्पादयति । किन्त्वयं विशेषः कामनाभावे तदुपकारेण पुरुषार्थत्वभावेन च न सम्पर्क इति । तदुक्तम् "द्वयोरेकस्य साकाङ्क्षा भवेद् यदि तयोस्ततः । एकवाक्यं नैकवाक्यत्वं निराकाङ्क्षत्वतोऽभयमिति" तस्मादुभयार्थो खादिरेणेति । ननु नित्य एव खादिरोऽस्तु खादिरमित्यादिना त्वस्य प्रशंसार्थं फलश्रुत्यर्थवादोऽस्तु यथा यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोति" इत्यत्रेति किमेकस्योभयार्थत्वाङ्गीकारेणेति चेन्न तत्र जुह्वाः प्राप्तावपि तद्भिन्नाद्द्रव्यविशेषस्याभावात् तत्परिचायकत्वेनैव स्तुत्यर्थवादत्वोचितत्वात् न चात्र तथा पूर्ववाक्यत एव खादिरत्वप्राप्तौ पुनः खादिरपदाभ्यासेनान्यस्य वीर्य्यसामर्थ्यकत्वबोधनैकप्रयोजनकत्वात् । एवं दध्ना जुहोति दध्नेन्द्रियकामस्य जुहुयादित्यादावपि उभयार्थता दध्नो बोध्या उभयत्र दध्नः कीर्त्तनात्" ।

**संयोगविरुद्ध** न० संयोगेन विरुद्धम् । द्रव्यान्तरसंयोगेन विरुद्धगुणाश्रये द्रव्यभेदे तच्च राजवल्लभेन दर्शितं यथा "शाकाम्लपललपिण्याकगुल्मत्वचयवानिभिः । करीरदधिमाषैश्च प्रायः क्षीरं विरुध्यते । प्राणहारी तु कारोतो हारिद्रालवणे भृतः । उष्टोष्णानलैर्भृष्टं विषं मायूरमामिषम् । वराहमथवा भृष्टा वलाका तु हरत्यसून् । संयुक्ता चैव वारुण्या कुल्माषैश्च विरुध्यते । अपि सघृतपाकेन मधुक्तैलैः कथं त्यजेत् । मांसैरिक्षुविकाराश्च कांजिकैस्तिलशष्कुलीम् । कपोतः सार्षपे भृष्टो हतः कांस्ये दशाहिकम् । विषं हतसमं क्षौद्रं मधुना गगनाम्बु च । मूलकं माषसूपेन मधुना च न भक्षयेत् । एकत्र सर्वमांसानि विरुध्यन्ते परस्परम् । रक्तपित्तगुल्मदकोदराणां विस्फोटकोन्मादभगन्दराणाम् । मूर्च्छामदाध्मानगलग्रहाणां पाण्ड्वामयस्याऽऽमविषस्य चैव किलासकुष्ठग्रहणीगदानां शोथातिसारज्वरपीनसानाम् । सन्तानदोषस्य तथैव मृत्योर्विरुद्धमन्नं प्रवदन्ति हेतुम् । विरुद्धाहारजान् रोगान् निहन्ति विरेचनम् । वमनं शमनं वापि पूर्वं वा हितसेवनम्" ।

**संयोजन** न० सम्+युज–णिच्–आधारादौ ल्युट् । १मैथुने हारा० । २सम्यग्योजने च । [नरेण कृतयोजने पदार्थे

**संयोजित** त्रि० सम्+युज–णिच् क्त । कृतमेलने पदार्थे ।

**संरम्भ** पु० सम्+रभ–घञ्–मुम् च । १कोपे शब्दर० । २आटोपे त्रिका० । ३उत्साहे मेदि० ४वेगे च "अट्टहासरसाभिमाम्बुवाहम्" इति कुमार० । [चिन्तने च ।

**संराधन** न० सम्+राध–ल्युट् । १सम्यक् तोषणे २सम्यक्-

**संराव** पु० सम्+रु–घञ् । शब्दे अमर० ।

ताः तेभ्यो विश्लेषकराय दण्डभूमिकाः प्रदद्यादिति। एवं नियुक्तैर्यत्कर्त्तव्यं तदाह याज्ञवल्क्यः "निजधर्माविरोधेन यस्तु सामयिको भवेत्। सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः" इति। निजधर्माविरोधेन श्रौतस्मार्त्तधर्माविरोधेन सामयिकः समयात् प्राप्तो यो धर्मो गोप्रचारोदकरक्षणदेवगृहपालनादिरूपः सोऽपि यत्नेन रक्षणीयः। यश्च राज्ञा कृतो निजधर्माविरोधेनैव च सामयिको धर्मो यावत्पथिकसन्त्रिकेयमस्मद्राज्ये कुले तुरगादयो न ग्राह्यापनीया इत्येवंरूपः सोऽपि यत्नेन रक्षणीय इत्यर्थः। बृहस्पतिरपि "नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकं तथा। पौराणां कर्म कुर्युस्ते सन्दिग्धे निर्णयं तथेति"। पौराणां पुरवासिजनानामित्यर्थः। एवं राजनियुक्तसमुदायविशेषस्य कार्य्यविशेष उक्तः। सर्वसमुदायानाञ्च कार्य्यमाह स एव "ग्रामश्रेणिगणानाञ्च सङ्केतः समयक्रिया। बाधाकाले तु सा कार्य्या धर्मकार्य्ये तथैव च। चाटचौरभये बाधा सर्वसाधारणा स्मृताः। तत्रोपशमनं कार्य्यं सर्वैर्नैकेन केनचिदिति"। गणानामित्यत्र चशब्दः पाषण्डनैगमादीनां समुच्चयार्थः। ततश्च गणपाषण्डनैगमादीनां समयकरणमन्तरेण यद्युपद्रवो दुष्परिहरः धर्मकार्य्यं च दुःसाध्यं तदा पारिभाषिकी समयक्रिया सर्वैः संहतैः कार्य्या। चाटोद्यकः। चाटचौरादिभ्यो भये प्राप्ते तदुपशमनं सर्वैः कार्य्यमित्यर्थः। धर्मकार्य्यमपि सम्भूय कार्य्यमित्युक्तं तेनैव "सभाप्रपादेवगृहतडाकारामसंस्कृतिः। तथाऽनाथदरिद्राणां संस्कारो यजनक्रिया। कुलायननिरोधश्च कार्य्यमस्माभिरंशतः। यत्रैतल्लिखितं पत्रे धर्म्या सा समयक्रिया। पालनीया समस्तैस्तैर्यः समर्थो विसंवदेत्। सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरादिति"। सभा मण्डपः। प्रपा पानीयशालिका। आरामः उपवनम्। संस्कृतिः जीर्णोद्धारः। संस्कार उपनयनादिकः प्रेतदहनादिकश्च। यजनक्रिया सोमयागादिकर्त्तृभ्यो दानम्। कुलायननिरोधः। कुलायनस्य दुर्भिक्षाद्युपगमपर्यन्तस्य धारणम्। कुल्यायननिरोधश्चेति कल्पतरौ पाठः। कुल्यायननिरोधः कुल्यायाः प्रवर्त्तनप्रतिबन्धश्च। एवं कृता समयक्रिया न केवलं समुदायिभिरेव पालनीया अपि तु राज्ञापि इत्याह नारदः "पाषण्डनैगमश्रेणीपूगव्रातगणादिषु। संरक्षेत् समयं राजा दुर्गे जनपदे तथेति"। पाषण्डा वेदोक्तलिङ्गधारणव्यतिरिक्ताः सर्वे लिङ्गिनः। तेषु विहितभिक्षाचरणाद्याः सन्ति। नैगमाः सार्थिका वणिक्प्रभृतयः। तेषु सकृच्छुकसन्देशहरपुरुषतिरस्कारिणो दण्ड्या इत्येवमादयो बहवः समया विद्यन्ते। अथ वा नैगमाः आप्तप्रमाणत्वेन ये वेदप्रामाण्यमिच्छन्ति पाशुपतादयः। श्रेणय एकशिल्पोपजीविनः। तास्वेवमयश्रेणया विक्रेयमूल्यव्यवस्थादिकाः समया वर्त्तन्ते। पूगा हस्त्यश्वारोहादयः। व्रातगणशब्दयोरर्थमाह कात्यायनः "नानायुधधरा व्राताः समवेतास्तु कीर्त्तिताः। कुलानां हि समूहस्तु गणः सम्परिकीर्त्तितः" इति। पूगे व्राते वा सम्भूतस्य समरे न गन्तव्यमित्येवमादयः समया वर्त्तन्ते। गणे तु पञ्चमे दिने पञ्चमे वर्षे वा कर्णवेधः कर्त्तव्य इत्येवमादि समयः समस्ति। गणादीत्यत्रादिशब्देन ब्रह्मपुरीनिविष्टस्य महाजनादेः परिग्रहः। तत्र गुरुदक्षिणाद्यर्थमागता माननीया इत्यादि समयोऽस्ति। दुर्गे तु धान्यादिकं गृहीत्वा अन्यत्र न विक्रेयमित्यादिरास्ते समयः। जनपदे तु क्वचिद्विक्रेतव्यकाष्ठकुलत्थादिकं ग्रामत्याद्यनेकविधः समयो वर्त्तते। तद्व्यतिक्रमो यथा न भवति तथा राजा कुर्य्यादित्यर्थः। समूहादिषु कार्य्यविषये विशेषमाह बृहस्पतिः "कोषेण लेख्यक्रियया मध्यस्थैर्वा परस्परम्। विश्वासं कृत्वा च कुर्य्युः कार्य्याणि समनन्तरम्" इति। कोषेण देवतास्नानोदकपानेन। लेख्यक्रियया समयपत्रेण। मध्यस्थैः प्रतिभूभिः कार्य्याणि समूहकार्य्याणि। एतदुक्तं भवति। समुदायिभिः परस्परं समयातिक्रमाभावाय कोशादिभिर्विश्वासमुत्पाद्य सामयिककार्य्याणि कर्त्तव्यानीति। कात्यायनोऽपि "समूहानां तु यो धर्मस्तेन धर्मेण ते सदा। प्रकुर्युः सर्वकर्माणि स्वधर्मेषु व्यवस्थिताः" इति। सामयिकधर्मं निजधर्मानतिक्रमेण सर्वकार्य्याणि समुदायिनः कुर्युरित्यर्थः। याज्ञवल्क्योऽपि "निजधर्माविरोधेन यस्तु सामयिको भवेत्। सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः" इति। निजधर्माविरोधेनेत्यनेन निजधर्मविरोधी सामयिको धर्मो यथा सन्ध्यावन्दनवेलायां सर्वैरेव स्वस्वागारपरिहारेण राजभवनं प्रत्यागन्तव्यं यो नायाति प्रथमसाहसं दण्ड्य इति नासौ रक्ष्य इत्यर्थादुक्तम्। कात्यायनोऽपि "अविरोधेन धर्मस्य निर्जितं राजशासनम्। तस्यैवाचरणं पूर्वं कर्त्तव्यन्तु नृपाज्ञयेति"। धर्मस्य श्रौतस्मार्त्तादि

पाटो मेलनम् । मत्युपादानजीवनाय तापसवेषपरि-
ग्रहः । एषां पाषण्डिनामित्यर्थः । अन्यदपि राजकृत्य
माह स एव "प्रतिकूलञ्च यद्राज्ञः प्रकृत्या च मतञ्च यत् ।
बाधकञ्च यदर्थानां तत्तेभ्योऽपि निवर्त्तयेत्" इति ।
यद्राज्ञः प्रतिकूलम् "यथा यस्य राष्ट्रस्तु कुरुते स्वस्त्रीधर्म
विवेचनम् । तस्य प्रणश्यते राष्ट्रं बलं कोशश्च नश्यति"
इति । एवञ्च सार्थिकादिस्वदूतविवादे धर्मविवेचन
च यद्राज्ञ इत्यस्योदाहरणमन्वेष्यम् । प्रकृत्या अमा-
त्य एव मतम् अवस्थातार्थं पाषण्डादिषु ताम्बू-
लभक्षणादिकम् । यच्चार्थानां बाधकञ्च जनानाशकचौराद्-
युपाधादिवं तत्तेभ्योऽपि निवर्त्तयेत् । यथा ते न कुर्वन्ति
तथा कुर्य्यादित्यर्थः । अन्यदपि निवर्त्त्यमाह स एव
"दोषवत्करणं यत् स्यादनाम्नायप्रकल्पितम् । प्रवृत्तमपि
तद्राजा श्रेयस्कामो निवर्त्तयेत्" । लोभादिदोषवत्करणं
श्रुतिस्मृतिविरुद्धं विधवादौ वेग्रात्वादिकं पाषण्डा-
दिभिः प्रकल्पितम् । तदनुबन्धकालप्रवृत्तमपि राज्ञा निव-
र्त्तनीयमित्यर्थः । त्रैविद्यादिना प्रतिपादित धर्मं श्रेण्या-
दिष्वतिदिशति याज्ञवल्क्यः "श्रेणिनैगमपाषण्डिगणा-
नामप्ययं विधिः । भेदञ्चैषां नृपो रक्षेत् पूर्ववृत्तिं च
पालयेत्" इति । समूहकार्य्यार्थमागताय यद्राज्ञा समूह
पूजार्थं दत्तं तद्यदि समूहायासौ न ददाति तदा त
द्दत्तं एकादशगुणं दाप्य इत्याह स एव "समूहकार्य्य
आयातान् कृतकार्यान् विसर्जयेत् । सदानमानसत्कारैः
पूजयित्वा महीपतिः । समूहकार्य्यं प्रहितो यल्लभेत
तदर्पयेत् । एकादशगुणं दाप्यो यद्यसौ नार्पयेत् स्वयम्" ।
इति । यल्लभेत समूहसम्माननार्थमिति शेषः । यतो रा-
जदत्तं सर्वसाधारणमतो यथांशतो विभागं कृत्वा ग्राह्य
भिक्षादिभ्यो वा दातव्यमित्याह वृहस्पतिः "ततो लभ्येत
यत्किञ्चित् सर्वेषामेव तत्समम् । षण्मासिकं मासिकं वा
विभक्तव्यं यथांशतः । देयं वा निःस्वपङ्ग्वन्धस्त्रीबाल
वृद्धरोगिषु । सान्तानिकादिषु तथा धर्म एव सनातनः"
इति । एतच्च पुरुषस्य षण्मासनिर्वाहाय पर्य्याप्त त्रुट-
स्य वैतस्य षण्मासनिर्वाहाय पर्य्याप्त, अल्पं वा यथा-
शतः समवायादूर्ध्वेण विभजनीयं भिक्षादिभ्यो वा देय-
मिति तात्पर्यार्थः । राजप्रसादलब्धवदर्पणमपि सर्वेषां सम-
मित्याह स एव "यत्तैः प्राप्तं रक्षितं वा गणार्थं वा
ऋणं कृतम् । राजप्रसादलब्धञ्च सर्वेषामेव तत्समम्"
इति । अयमर्थः । तैः समूहकार्य्यार्थं प्रहितैर्यत्सीमा-
विवादादवधिं क्षेत्रारामादिकं धर्माधिकरणे न्यायतः प्रा-
प्तम् । यच्च परैरपह्रियमाणं रक्षितं यच्च समूहप्रयो-
जनार्थमुपात्तमृणम्, यच्च राजप्रसादलब्धं तत् सर्वं
सर्वेषां समुदायिनां सममिति । गणकृतमृणं सर्वेषां
सममित्यस्य कश्चिदपवादमाह कात्यायनः "गणमुद्दिश्य
यत्किञ्चित् कृत्वर्णं भक्षितं भवेत् । आत्मार्थं विनियुक्तं
वा देयं तैरेव तद्भवेत्" इति । तैः ऋणैः । ये तु समुदा
यात्पश्चात्तदन्तर्भावं प्राप्ता ये च समुदायतोऽभाटिना
ततो बहिर्भूतास्तान् प्रत्याह स एव "गणानां श्रेणि
वर्गाणां गताः स्युर्येऽपि मध्यताम् । प्राक्तनस्य धनर्णस्य
समांशाः सर्व एवेति । तथैव भोज्यदेयस्य दानधर्म्मक्रि-
यासु च । समूहस्थोऽंशभागी स्यात् प्रागगतस्त्व गः
हनमर्हति" । [१रचनायाञ्च ।

**संविधान** न० सम्+वि+धा—ल्युट् । १उपाये २आयोजने

**संविषा** स्त्री स मर्दितं विषं यया प्रा०ब० धातुजस्य उत्तर-
पदलोपः । अतिविषायाम् (आतइच्) शब्दच० ।

**संवीक्षण** न० सम्यग्वीक्ष्यते अन्विष्यते वा सम्+वि+ईक्ष-भावे
ल्युट् । १सम्यग्दर्शने २दृष्टवस्तुनोलाभाय अन्वेषणे च ।

**संवीत** त्रि० सम्+व्येञ्—क्त । १आवृते २रुद्धे च अमरः ।
सम्+वि+इण-क्त । ३सङ्गते । [वर्णोच्चारणाभ्यन्तरयत्ने च

**संवृत** त्रि० सम्+वृ-क्त । १आवृते २कृतगोपने ३संवाहरूपे

**संवेग** पु० सम्+विज—घञ् । १भयादिना त्वरायाम् अमरः
२सम्यग्वेगे च । [युच् । संवेदनाप्यत्र स्त्री ।

**संवेद** पु सम्+विद—घञ् । ज्ञाने अमरः । स्वार्थे णिच्—

**संवेश** पु० सम्यक् विशत्यत्र सम्+विश-आधारे घञ् । १नि-
द्रायाम् अमरः । संपूर्वकस्य तस्य निद्रार्थकत्वात्तथात्वम् ।
यथा "संविष्टः कुशशयने निशां निनायेति" रघुः ।
२पीठे हेमच० ३स्त्रीरतिबन्धभेदे मेदि० ।

**संवेशन** न० सम्+विश—णिच्-ल्युट् । रतिक्रियायां हेमच०
तदुत्तरं हि निद्राधिक्येन तस्या निद्राहेतुत्वात्तथात्वम् ।

**संव्यान** न० संवीयते सम्+व्येञ्—कर्मणि ल्युट् । १उत्त-
रीयवस्त्रे अमरः । २वस्त्रमात्रे मेदि० ।

**संशप्तक** पु० सम्यक् शपथकृतीकारो यस्य कप् । प्रतिज्ञाय
संग्रामादनिवर्त्तिनि सैन्ये नारायणीये सैन्यभेदे
च तेषां प्रतिज्ञा यथा "ब्राह्मणांस्तर्पयित्वा च निष्क-
न्दत्त्वा पृथक् पृथक् । गावः वासांसि च पुनः समा-
भाष्य परस्परम् । प्रज्वाल्य कृष्णवर्त्मानमुपगम्य रणे व्र
तम् । तस्मिन्नग्नौ तदा चक्रुः प्रतिज्ञां दृढनिश्चयाः ।

गृह्णता सर्वभूतानामसुश्चैवाघोषमारिरे। ते च धनञ्जयमर्धे प्रतिज्ञाश्चापि चक्रिरे। ये वै लोकाश्चानृतिनां ये च वै ब्रह्मघातिनाम्। मद्यपस्य च लोका ये गुरुदाररतस्य च। ब्रह्मस्वहारिणश्चैव राजपिण्डापहारिणः। शरणागतं च त्यजतो याचमानं तथा घ्नतः। अगारदाहिनाञ्चैव ये च गां निघ्नतामपि। अपकारिणाञ्च ये लोका ये च ब्रह्मद्विषामपि। स्वभार्य्यामृतुकाले च यो मोहान्नाभिगच्छति। श्राद्धमैथुनिकानाञ्च ये चाप्यात्मापकारिणाम्। न्यासापहारिणां ये च श्रुतं नाशयताञ्च ये। क्लीवेन युध्यमानानां ये च नीचानुसारिणाम्। नास्तिकानाञ्च ये लोका येऽग्निमातृपरित्यजाम्। तानाप्नुयामहे लोकान् ये च पापकृतामपि। यद्यहत्वा वयं सर्वे निवर्त्तेम धनञ्जयम्। तेन चाभ्यर्दितास्त्रासाद्भये हि पराङ्मुखाः। यदि त्वसुकरं लोके कर्म कुर्य्याम संयुगे। इष्टान् लोकान् प्राप्नुयाम वयमद्य न संशयः। एवमुक्त्वा ततो राजंस्तेऽभ्यवर्त्तन्त संयुगे। आह्वयन्तोऽर्जुनं वीराः पितृजुष्टां दिशं प्रति" भा०द्रो० १७अ०।

**संशय** पु० सम्+शी–अच्। सन्देहे एकस्मिन् धर्म्मिणि भावाभावयोः, विरुद्धधर्म्मद्वयस्य वा सन्देहे। यथा पर्वतो वह्निमान्न वा, अयं स्थाणुर्वा पुरुषो वेति। "स संशयो मतेर्या धीरेकत्राभावभावयोः। साधारणादिधर्म्मस्य ज्ञानं संशयकारणम्" भाषा०। "एकधर्म्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशयः इत्यर्थः। साधारणेति। उभयसाधारणो यो धर्म्मस्तज्ज्ञानं संशयकारणम्। यथा उच्चैस्तरत्वं स्थाणुत्वसाधारणं ज्ञात्वा अयं स्थाणुर्न वेति सन्दिग्धे। एवम् असाधारणज्ञानं तत्कारणम्। यथा शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे गृहीत्वा शब्दो नित्यो न वेति सन्दिग्धे। विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणम्। शब्दव्याप्तिप्रामाण्याद्बोधानाम् निश्चयमात्रजनकत्वस्वाभाव्यात्। किन्तु तत्र शब्देन कोटिद्वयज्ञानं जन्यते। संशयस्तु तत्र मानस एवेति। एवं ज्ञाने प्रामाण्यसंशयाद् विषयसंशय इति। एवं व्याप्यसंशयादपि व्यापकसंशय इत्यादिकं बोध्यम्। किन्तु संशये धर्म्मिज्ञानं धर्म्मीन्द्रियसन्निकर्षो वा कारणमिति" सि०मु०। "समानानेकधर्म्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः" न्यायसू०। "समानधर्म्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति स्थाणुपुरुषयोः समानं धर्म्ममारोहपरिणाहौ पश्यन् पूर्वदृष्टञ्च तयोर्विशेषं बुभुत्समानः किंस्विदित्यन्यतरं नावधारयति तदनवधारणं ज्ञानं संशयः। समानयोर्धर्म्मयोरुपलब्धौ विशेषस्यान्यतरस्य नोपलब्धौ इत्येषा बुद्धिरपेक्षा संशयस्य प्रवर्त्तिका वर्त्तते. तेन विशेषापेक्षो विमर्शः संशयः। अनेकधर्म्मोपपत्तेरिति समानजातीयमसमानजातीयञ्चानेकं तस्यानेकस्य धर्म्मोपपत्तेर्विशेषस्योभयथा दृष्टत्वात् समानजातीयेभ्योऽसमानजातीयेभ्यश्चार्था विशिष्यन्ते। गन्धवत्त्वात् पृथिवी अबादिभ्यो विशिष्यते गुणकर्म्मभ्यश्च, अस्ति च शब्दे विभागजत्वं विशेषः, तस्मिन् द्रव्यं गुणः कर्म्म वेति सन्देहः विशेषस्योभयथा दृष्टत्वात् किं द्रव्यस्य सतो गुणकर्म्मभ्यो विशेष आहोस्विद्गुणस्य सत इति अथ कर्म्मणः सत इति विशेषापेक्षा अन्यतमस्य व्यवस्थापकं धर्म्मं नोपलभे इति बुद्धिरिति। विप्रतिपत्तेरिति व्याहतमेकार्थदर्शनं विप्रतिपत्तिः व्याघातो विरोधोऽसहभाव इति। अस्त्यात्मेत्येकं दर्शनम् नास्त्यात्मेत्यपरम्, न च सद्भावासद्भावौ सहैकत्र सम्भवतः, न चान्यतरसाधको हेतुरुपलभ्यते तत्र तत्त्वानवधारणं संशय इति। उपलब्ध्यव्यवस्थातः सच्चोदकमुपलभ्यते तडागादिषु मरीचिषु चाविद्यमानमुदकमिति ततः क्वचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्यते अथासदिति संशयो भवति। अनुपलब्ध्यव्यवस्थातः सच्च नोपलभ्यते मूलकीलकोदकादि, असच्चानुत्पन्नं निरुद्धं वा, ततः क्वचिदनुपलभ्यमाने संशयः किं सन्नोपलभ्यते उतासदिति संशयो भवति विशेषापेक्षा पूर्ववत्, पूर्वः समानोऽनेकश्च धर्म्मो ज्ञेयस्थः, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे, एतावता विशेषेण पुनर्वचनम्, समानधर्म्माधिगमात् समानधर्म्मोपपत्तेर्विशेषस्मृत्यपेक्षो विमर्श इति, स्थानवतो लक्षणवचनमिति समानम्" वा०भा०। "संशय इति लक्ष्यनिर्द्देशः विमर्श इत्यत्र विशब्दो विरोधार्थः मृशिर्ज्ञानार्थः एकस्मिन् धर्म्मिणीति पूरणीय तेन एकधर्म्मिणि विरोधेन भावाभावप्रकारकं ज्ञानं संशयः तत्र कारणत्वेन विशेषणान्याह समानेत्यादि उपपत्तिर्ज्ञानं तथा च समानस्य विरुद्धकोटिद्वयसाधारणधर्म्मस्य ज्ञानादित्यर्थः। अनेकधर्म्मः असाधारणधर्म्मः तज्ज्ञानादित्यर्थः। तथा च साधारणधर्म्मवद्धर्म्मिज्ञानजन्योऽसाधारणधर्म्मवद्धर्म्मिज्ञानजन्यश्चेत्यर्थः, विप्रतिपत्तिर्विरुद्धकोटिद्वयोपस्थापकः शब्दः शब्दाच्चादिस्वर्थः यद्यपि शब्दस्य न संशायकत्वं तथापि

किल्बिषम् अश्नाति इत्यनेनापि पापाभावो गम्यते। उच्यते न पूर्वपापस्य सङ्क्रान्त्यभावेन अन्यान्तरसम्बन्धः सम्भवति गुणस्य द्रव्यान्तरगमनेनायोग्यत्वात् किन्तु तत्तत्स्पर्शसम्बन्धे गौणोऽयं संक्रान्त्यादिशब्दः। तथा च देवलः "बान्धवोऽपि पृथग् भूत्वा तत्पापं नाप्नुयात् क्वचित्। पृथग्जनोऽपि संयोगात् भजते तुल्यदोषताम्"। तत्पाप तज्जातीयं पापमित्यर्थः। तुल्यदोषता तत्समानपापतामित्यर्थः। "शुद्धोऽशुद्धन्तु शोधयेदिति" यत्र ब्राह्मणादिसम्पर्क एव पापजनकहेतुस्तत्र बोद्धव्यम्। यथोशनाः "कान्तनागैर्दग्धस्पर्शनस्य पर्णानि वर्जयेत्" इत्युक्त्वा "सम्भाषणे ब्राह्मणस्य पापमित्यादि"। कृतलक्षणो राज्ञा कृतपापचिह्नः। किन्तु यदि पापिष्ठस्यास्य संसर्गः पापहेतुस्तदेतत्प्रायश्चित्तवदिदमपि केनापि मुनिना प्रायश्चित्तरूपतया पठितं स्यात् प्रत्युत निषेध एव श्रूयते यथा मनुः "प्रायश्चित्तीयतां प्राप्य दैवात् पूर्वकृतेन वा। न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः" इति। किञ्च "मिश्रितस्तेन सोऽप्यब्दान्ते स्वयञ्च पतितो भवेदिति" देवलवचने चाण्डालान्मूलपापकर्तुरपि पापस्थितिरवगम्यते मूलपापकर्त्ता पतितः स्वयमपि पतति इत्यर्थः। इदानीञ्च कियता कालेन कतमस्य संसर्गस्य पतितसम्पादनमिति निरूप्यते। तत्र देवलः "पतितेन सहोषित्वा जानन् संवत्सरं नरः। मिश्रितस्तेन सोऽप्यब्दान्ते स्वयञ्च पतितो भवेत्। याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम्। कृत्वा सद्यः पतन्त्येते पतितेन न संशयः"। यानादिसंसर्गं ज्ञानकृतं संवत्सरेण पतति याजनादिभिर्युक्तिभिः सद्यः पततीत्यर्थः। तथा बौधायनः "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद्यौनात् सद्यो न शयनासनात्"। शयनादिना सद्यःपातनिषेधात् साकाङ्क्षं संवत्सरेण पततीत्यस्य शयनादिना सम्बन्धः। याजनादिपदं सहभोजनमप्युपलक्षयति। विष्णुः। "संवत्सरात् पतति पतितेन सहाचरन्। एकयानासनाशनात् यौनात् स्रौवात् मौखात् सद्य एव"। यानासनाभ्यामिति लघुसंसर्गोपलक्षणम्। यौनात् इत्यादि गुरुसंसर्गोपलक्षणम्। कूर्मपुराणे व्यासः "ब्रह्महा मद्यपः स्तेनो गुरुतल्पग एव च। महापातकिनस्त्वेते यश्चैतैः सह संवसेत्। संवत्सरन्तु पतितैः संसर्गं कुरुते तु यः। यानशय्यासनैर्नित्यं जानन् वै पतितो भवेत्"। एभिर्वचनैर्याजनादिना सद्यःपातो यानादिना ज्ञानतः संवत्सरेणेत्यवगम्यते। ननु याजनादिना संवत्सरेण पतति न तु यानादिनेत्याह मनुर्विष्णुश्च "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद्यौनात् न तु यानासनाशनात्"। यानासनाशनादुत्पन्नसंयोगमाचरन्नित्यर्थः। तथा पैठीनसिः "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनात् यौनात् नत्वेवं शयनासनात्"। अत्र सर्वदेवकल्पतरुकारादयः देवलबौधायनादिवचनैर्याजनादीनां सद्यःपातहेतुत्वादर्गते मनुपैठीनसिवचनयोर्नत्विति मध्यपठितस्य पूर्वेण याजनादिना सम्बन्धो न तु परेण यानादिना, याजनाध्यापनात् न तु संवत्सरेण पतति किन्तु यानादिभिरित्याहुः। तदसङ्गतम् सुमन्तुवचनविरोधात् यथा पतितानभिधायाह सुमन्तुः "यश्चैतैर्यौनमौखस्रौवाणां सम्बन्धानामन्यतमेन सह संवत्सरं सम्पर्कमियात् तस्याप्येतदेव प्रायश्चित्तं विदध्यात्" इयात् कुर्यात् एतदेव द्वादशवार्षिकव्रतम् इत्यर्थः। अत्र याजनादीनामन्यतमेन संवत्सरेण पततीत्यवगम्यते। तथा हारीतः "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद्यौनादेकशय्यैकभोजनात्"। एकभोजनमेकपात्रे कालभेदेन भोजनं जलपानञ्च। तथा बृहस्पतिः "षाण्मासिके तु संयोगे याजनाध्यापनादिना। एकासनशय्याभिः प्रायश्चित्तार्द्धमाचरेत्। तथा वत्सरसंसर्गे योनियुक्तं विशेषतः। पूर्वोक्तेन विधानेन पतितव्रतमाचरेत्"। अनेन याजनादिना षाण्मासिकसंसर्गे प्रायश्चित्तार्द्धं वदता वत्सरेण सम्पूर्णप्रायश्चित्तमर्थादुक्तम् उत्तरवचने पुनः स्फुटीकृतम्। योनियुक्तपदेन याजनादीनामप्युपसंग्रहः। एकासनशय्यादिरिति पाठोऽनाकारः रागाऽलिखितत्वात्; लिखनादृष्टस्तु यदि प्रत्येकं विभक्तिनिर्देशात् भोजनं कृत्वा पतति योनिसम्बन्धं कृत्वा पततीति एवं सम्बन्धोऽभिधीयते तदा कृत्वा पततीति पदयोरन्वयाश्रितानुपपत्तेः प्रत्येकं वाक्यभेदः चत्वारि वाक्यानि स्युः। अतः कृत्वेति पदेन तन्त्रेण याजनादिकर्मषट्कमादाय पततीति सम्बन्धे बोधिते न वाक्यभेदः संवत्सरपदेन उपस्थितानामपि कृत्वेति पदेन तन्त्रेणोपनयनात्। दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्याग्नेयादियागषट्कानामिव। अत एकवाक्यानुरोधाद्याजनादीनां तन्त्रेण

कूर्म्मपुराणे "ब्रह्महा मद्यपः स्तेनो गुरुतल्पग एव च। महापातकिनस्त्वेते यश्च तैः सह संवसेत्। संवत्सरन्तु पतितैः संसर्गं कुरुते तु यः। यानशय्यासनैर्नित्यं जानन् वै पतितो भवेत्"। तथा बृहस्पतिः "षाण्मासिके तु संयोगे याजनाध्यापनादिना। एकत्रासनशय्याभिः प्रायश्चित्तार्द्धमाचरेत्"। एकत्रासनशय्यापदेन लघुसंसर्गान्तरं लक्ष्यते अन्यथा बहुवचनानुपपत्तेः। यथा प्रोद्गातृणां भक्ष इत्यत्र प्रोद्गातृशब्दस्य प्रोद्गातृपरत्वमुक्तम्। यद्वा त्वेकत्रासनशय्यादिरिति पाठस्तदादिशब्दात् संसर्गान्तरलाभः अयन्त्वपपाठः दा॰ ष्मा॰ऽलिखितत्वात्। उच्यते। यानादीनां लघुसंसर्गाणां समुच्चितानां पातहेतुत्वं द्वन्द्वनिर्देशात् तथाच द्वन्द्वनिर्देशो बहुषु वचनेष्ववगम्यते। अत्र च यानादीनामनियतत्वश्रवणात् बाधनात् एभिस्त्रिभिः लघुसंसर्गैर्वत्सरेण पततीत्येकैव श्रुतिः कल्पनीया सह यानासनाभ्यामित्यत्र सहशब्दादेककालत्वमवगम्यते एककाले चैकपीठाद्युपवेशनं स्पर्शनिश्वासाद्यापत्तः गुरुतरसंसर्गत्वनियतमतस्तद्व्यवच्छेदेन गम्यते एभिस्त्रिभिर्लघुतरसंसर्गैरेको लघुसंसर्गः समानः अतस्तत्रापि लघुसंसर्गत्रयमेव मन्वादिवचनेषु सहशब्दाभावात् कालभेदेन सततपतितोपभुक्तासनाद्युपवेशन याज्यमतस्त्रिभिर्लघुसंसर्गैर्वत्सरेण साम्यम् एतच्च ज्ञानतः "जानन् संवत्सरम्" इति देवलवचनात् अज्ञानतो वत्सरद्वयेन एकैकयो ज्ञानाद्वत्सरत्रयेण अज्ञानात् वत्सरषट्केन संलापादीनाम् एकैकयानादिसमानत्वात् ज्ञानतो वत्सरत्रयेण पातः। अज्ञानतो वत्सरषट्केन ज्ञानादेकैकयो वत्सरनवकेन। अज्ञानादेकैकयोऽष्टादशभिर्वत्सरैरित्यर्थः। ननु संलापादीनां कथं यानादिभ्यो लघुत्वम्। उच्यते लघु प्रायश्चित्तश्रवणात् यथो यमः "कृतघ्नपक्षैर्दर्शनस्पर्शनसम्भाषणादीनि वर्जयेत् दर्शने ज्योतिषां दर्शनं स्पर्शने कृत्याचमनं सम्भाषणे ब्राह्मणसम्भाषणमघमर्षणं स्पर्शनञ्चेति"। कृतघ्नपक्षे पतितैः पदादिभिश्चिह्नितैः, दर्शनस्य न संसर्गः प्रकरणेऽपाठात् पतितस्य ऽनमत परम्परया पाद्यं साक्षात् स्पर्शने स्नानश्रवणात् तथा मनुः "दिवाकीर्त्तिमुदक्यां च पतितं सूतिकां तथा। शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति"। पतितान्नभोजनपतितद्रव्यप्रतिग्रहयोश्च प्रत्येकं ज्ञानतः षड्भिर्मासैरज्ञानाद्वर्षेण पातित्यापादकत्वं यथा पतितानभिधायाह संवर्त्तः "एभिः संसर्गमायाति यः कश्चित् काम-मोहितः। षण्मासान्वत्सरमेकं वा ब्रह्महत्याव्रतञ्चरेत्"। न चास्य ज्ञानाज्ञानकृतयोरसंसर्गविषयत्वम् अविशेषश्रुतेर्यौनतुल्यत्वादितयो तथा च पतितान्नभोजनस्य संवत्सरेण पातहेतुत्वमाह देवलः "संवत्सरेण पतति पतितेन सहाचरन्। भोजनासनशय्यादि कुर्वाणः सार्वकालिकम्"। भोजनं तदन्नभोजनं सार्वकालिकमनवच्छिन्नभोजने च तथा दर्शनात् प्रतिग्रहेऽपि तथात्वमूहनीयं तयोः समानत्वदर्शनात् साम्ये हेतुमाह बृहस्पतिः "पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च। मासोपवासं कुर्वीत चान्द्रायणमथापि वा"। मासोपवासो ज्ञानाभ्यासे तत्र च पञ्चदश धेनवः। चान्द्रायणमज्ञानाभ्यासे तत्र सार्द्धसप्त धेनवः। गृहं गत्वेति अनेकसंवत्सरेणेति। तथा मनुः "चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति"। तथा रजकादीनभिधायाह यमः "भुक्त्वा चैषां स्त्रियो गत्वा पीत्वाप प्रतिगृह्य च। कृच्छ्राब्दं चरेज्ज्ञानादज्ञानादैन्दवद्वयम्"। पतितान्नभक्षणप्रायश्चित्तात् पतितस्पृष्टान्नभक्षणप्रायश्चित्तार्द्धेन ह्रासदर्शनादर्द्धहानिः तेन ज्ञानतः पतितस्पृष्टान्नभोजने संवत्सरेण साम्यमज्ञानतो वत्सरद्वयेनेति। तथा प्रचेताः "पतितान्नन्तु यो भुङ्क्ते सप्ताहमुदके वसेत्। पानीयपानतश्चैव कुशवारि पिबेत् त्र्यहम्"। सप्ताहोदकवासे धेनुद्वयं वक्ष्यते एतत् सकृज्ज्ञानविषयं सकृज्ज्ञानकृतपतितस्पृष्टान्नभक्षणे यमः "भुक्तोच्छिष्टोऽन्त्यजैः स्पृष्ट प्राजापत्यं समाचरेत्। अर्द्धोच्छिष्टे ततः पादं पादं आमाशने तथा"। "अमेध्यपतितचाण्डालपुल्कसरजस्वलावधूतकुणिकुष्ठिकुनखिस्पृष्टानि भुक्त्वा कृच्छ्रमाचरेत्"। पातकिस्पृष्टपाकान्नभोजने तु संसर्गस्य किञ्चिद्व्यवधानात् पादहानिः तेन ज्ञानतः सपादवत्सरेणाज्ञानतः सार्द्धवत्सरद्वयेन साम्यम्। पातकिसम्पर्कीयपाकान्नभोजने तु ततोऽपि व्यवहितत्वादपरपादहानिः। तेनात्र ज्ञानकृते सार्द्धवत्सरेणाज्ञानतो वत्सरत्रयेण साम्यम्। पतितान्नभक्षणे पतितस्पृष्टान्नभक्षणस्य चतुर्थभाग एव पतितपानीयपानेऽपि चाण्डालान्नभक्षणे तथा दर्शनात्। "यथा विष्णुः चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धान्नं भुक्त्वा पराकः"। इति अत्रान्नमात्रादमन्नस्य सिद्धान्नदर्शनात् पराके च द्वादशोपवासाः। तथा प्रचेताः "पतितान्नन्तु यो भुङ्क्ते सप्ताहमुदके वसेत्। पानीयपानतश्चैव कुशवारि त्र्यह

वेगजो वेगः। स्थितिस्थापकसंस्कारस्त्वतीन्द्रियः श्लाकृष्टशाखादीनां परित्यागे यत् पूर्वदेशगमनं तत्र स्थितिस्थापको हेतुः उपेक्षानात्मकनिश्चयेन भावनाख्यसंस्कारो जन्यते स च स्मरणे प्रत्यभिज्ञायां च हेतुः जीववृत्तिरतीन्द्रियश्च स च चरमफलनाश्यः क्वचित् रोगादिनाश्यः क्वचित् कालनाश्यः" सि॰मु॰ अन्ये तु समानविषयकस्मरणमेव संस्कारनाशकम् अतएव "जायते च पुनः पुनः स्मरणादृढतमसंस्कारः" इति दीधितिः इत्याहुः।

संस्कारत्वं तु न जातिरिति उपकारादौ व्यवस्थापितम्। ६शास्त्राभ्यासजन्यव्युत्पत्तौ, व्याकरणोक्तदिशा शब्दानां ६साधनप्रकारे, विप्रादीनां वैदिककर्मार्हत्वप्रयोजके ७गर्भाधानादौ क्रियाकलापे दपाके च। विप्रादीनां देहसंस्काराश्च अष्टाचत्वारिंशत् तच्छब्दे ५१॰ पृ॰ दर्शिताः। इदानीन्तनास्तु गर्भाधानाद्याविवाहान्ताः दशविधा प्रसिद्धाः। तेषां च देहदोषनाशकता यथोक्तं हारीतेन "गर्भाधानवदुपेतो ब्रह्मगर्भं सन्दधाति पुंसवनात् पुंसीकरोति फलस्थापनात् मातापितृजपाप्मानमपोहति रेतोरक्तगर्भोपघातः पञ्चगुणो जातकर्मणा प्रथममपोहति नामकरणेन द्वितीयं प्राशनेन तृतीयं चूडाकरणेन चतुर्थं स्नापनेन पञ्चममेतैरष्टाभिः संस्कारैर्गर्भोपघातात् पूतो भवति"। "स्नापनं समावर्त्तनम्" उपनयनस्य वेदपठनार्थत्वम् विवाहस्याग्निसाध्यकार्म्मकार्यार्थत्वमितिविवेकः अतो दशविधाः। "गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा। षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म च। अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः। षष्ठेऽन्नप्राशनं मासि चूडा कार्य्या यथाकुलम्। एवमेनः शमं याति वीजगर्भसमुद्भवम्" याज्ञ॰। अत्र जातकर्मनिष्क्रमावधिको संस्कारो वीजादिदोषनिवारकतयोक्तौ। अग्निस्थापनार्थंश्च पञ्चविधः भूसंस्कारः तच्छब्दे दर्शितः ते च समूहनसमुपलेपनसमुल्लेखन सिकतोद्धरणमभ्युक्षणञ्चेति। दीक्षणीयतान्त्रिकमन्त्रसंस्काराश्च दशविधाः दीक्षा॰त॰ दर्शिता यथा शारदायाम् "मन्त्राणां दश कथ्यन्ते संस्कारा सिद्धिदायिनः। जननं जीवनं पश्चात्ताडनं बोधनं तथा। अथाभिषेको विमलीकरणाप्यायने तथा। तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः। मन्त्राणां मातृकायन्त्रादुद्धारो जननं स्मृतम्। प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत् सुधीः। एतज्जीवनमित्याहुर्मन्त्रतन्त्रविशारदाः। मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसा। प्रत्येकं वायुना मन्त्री ताडनं तदुदाहृतम्"। वायुना वायुवीजेन "यमित्यनेन तं मन्त्री प्रसूनैः करवीरजैः। तन्मन्त्राक्षरसंख्यातैर्हन्याद्यान्तेन बोधनम्"। यान्तेन रमित्यनेन इति "स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसंख्यया। अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद्विशुद्धये। स्वतन्त्रोक्तविधानेन मूर्ध्नि तोयेन देशिकः। नमोऽन्तं मन्त्रमुच्चार्य तदन्ते देवताभिधाम्। द्वितीयान्तामहं पश्चादभिषिञ्चाम्यनेन तु। तोयैरञ्जलिवद्भिश्चाप्यभिषिञ्चेत् स्वशक्तितः"। स्वतन्त्रोक्तविधानेन पुरश्चर्याप्रकरणोक्तविहिताञ्जलिना इत्यभिहितेन "सञ्चिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत्। मन्त्रे मलत्रयं मन्त्री विमलीकरणं त्विदम्"। मलत्रयं मायिकं कार्मिकं मानसञ्चेति "तारव्योमाग्निमनुयुग्दन्तो ज्योतिर्मनुर्मतः"। तार प्रणवः व्योम हकारः अग्नीरेफः मनुरौकारः तद्युक्तोदन्तोऽनुस्वारः। तेन ओम् ह्रौं इति मन्त्रः। "कुशोदकेन मन्त्रेण प्रत्यर्णं प्रोक्षणं मतो"। प्रत्यर्णं प्रत्यक्षरम् "तेन मन्त्रेण विधिवदेतदाप्यायनं मतम्। मन्त्रेण वारिणा मन्त्रतर्पणं तर्पणं मतम्"। मन्त्रेण मूलमन्त्रेण। "मूलमन्त्रं समुच्चार्य तदन्ते देवताभिधाम्। द्वितीयान्तामहं पश्चात्तर्पयामि नमोऽन्तकम्"। इति पुरश्चर्य्याक्रमेण लिखितमन्त्राधारकपर्यन्ते। "तारमायारमायोगो मनोर्दीपनमुच्यते"। तारः ओम् माया ह्रीं रमा श्रीम् "जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम्। संस्कारा दश संख्याताः सर्वतन्त्रेषु गोपिताः। यान् कृत्वा सम्प्रदायाच्च मन्त्री वाञ्छितमश्नुते"।

देवप्रतिष्ठासंस्काराश्च देवताप्रतिष्ठाशब्दे २७२१पृ॰ दृश्याः। अन्येऽपि तत्तत्प्रकरणसंस्कारास्तत्तच्छब्दे दृश्याः।

**संस्कारवर्जित** त्रि॰ ३त॰। १गर्भाधानादिसंस्कारहीने २शास्त्रादौ व्युत्पत्तिहीने च संस्कारहीनादयोऽप्यत्र।

**संस्कृत** त्रि॰ सम्+कृ—क्त सुट् च। १कृतसंस्कारे पदार्थे व्याकरणगुणाधीनसाधनयुक्ते २शब्दे ३पक्वे ४भूषिते ५शास्त्रभेदे मेदि॰ ६शोधिते जटा॰।

**संस्तर** पु॰ सम्+स्तॄ—अप्। १यज्ञे २शय्यायां हेमच॰ ३पल्लवादिरचितशय्यायां च "नवपल्लवसंस्तरे यथेति" कुमारः

**संस्तव** पु॰ सम्+स्तु—अप्। १परिचये अमरः २सम्यक्स्तुतौ च

**संस्ताव** पु॰ संस्तूयतेऽत्र सम्+स्तु—घञ्। यज्ञार्थं स्तावकविप्राणां स्थानभूमौ अमरः।

**संस्तुत** त्रि० सम्+स्तु–क्त । १परिचिते २सम्यक्स्तुते च ।
**संस्त्याय** पु० सम्+स्त्यै–घञ् । १संघाते २निविडसंयोग-रूपे सन्निवेशे अमर० । ३विस्तृतौ ४संस्थाने च मेदि० करणे घञ् । ५गृहे हेमच० ।
**संस्थ** त्रि० सम्+स्था–क । १अवस्थिते मेदि० २मृते शब्दर० ३चरे पु० मेदि० ४निवासके ५व्यवस्थिते ६व्यक्तौ ७प्रलयप्रकारभेदे ८समाप्तौ च हेमच० । ९प्रकारे "नैमित्तिकः प्राकृतिको नित्य आत्यन्तिकोलयः । संस्थेति कविभिः प्रोक्तश्चतुर्धास्य स्वभावतः" इत्युक्ते प्रलये च । ,
**संस्था** स्त्री सम्+स्था–अङ् । १न्याय्यपथावस्थितौ अमर० । २स्थितौ ३नाशे मेदि० ४यज्ञभेदे ५व्यवस्थायां ६व्यक्तौ ७साहश्ये ८प्रान्ते च ।
**संस्थान** न० सम्+स्था–ल्युट् । १चतुष्पथे अमरः । २सन्निवेशे मेदि० ३आकारे ४अवयवव्यापारात्मकयोगभेदे ५मृत्यौ ६चिह्ने अजय० । ७सम्यक्स्थितौ च ।
**संस्थित** त्रि०सम्+स्था–क्त । १मृते अमर० २सम्यक्स्थिते च
**संस्पर्शा** स्त्री संस्पृश्यते सम्+स्पृश–कर्मणि घञ् टाप् । रजनीगन्धद्रव्ये अमर ।
**संस्फाल** पु० सम्यक् स्फालः स्फुरणं यस्य । मेषे त्रिका० ।
**संस्फुट** त्रि० सम्+स्फुट–क । विकसिते शब्दच० ।
**संस्फेट** न० सम्+स्फुट–आधारे घञ् पृषो० । युद्धे भरत०
**संस्फोट** पु० सम्+स्फुट–आधारे घञ् । युद्धे अमर० ।
**संहत** त्रि० सम्+हन–क्त । १दृढसन्धौ अमर० । २मिलिते ३दृढे मेदि० । ४परार्थं मिलिते "संहतपरार्थत्वादिति" सांख्यसू० । ५दृढसयोगयुक्ते ६सम्यग्हते च । भावे क्त । ७संघाते न० । [मितपाणिद्वये अमर ।
**संहतल** पु० संहतं संहननं सङ्घातं तलति–तल–क । मि-
**संहतपुष्पिका** स्त्री संहतानि दृढसंयुक्तानि पुष्पाण्यस्याः कप् अत इत्त्वम् । मिश्रेयायां राजनि० ।
**संहतजानु** त्रि० संहते जानुनी यस्य । कन्नजानुके अमरः वा कप् । तत्रार्थे ।
**संहति** स्त्री सम्+हन–क्तिन् । १समूहे अमरः । २सम्यग्हनने च । [१देहे अमर. २सङ्घाते ३वधे च ।
**संहनन** न० संहन्यते परार्थं संहन्यते सम्+हन–ल्युट् ।
**संहर्ष** पु० सम्यक् हर्षः प्रा० सम्+हृष–घञ वा । १आनन्दे २स्पर्द्धाया संहृष्यत्वेन करणे घञ् । ३वायौ मेदि० ।
**संहार** पु० सम्+हृ–घञ् । १प्रलये हेमच० २नाशे ३संक्षेपे ४नरकभेदे अमर० । ५विसर्जने ६कालिकाभैरवभेदे च

जटा० । "अचिताङ्गोऽरूढ्रक्त्व' क्वाध समन्त एव च । कपालौ भीषणश्चैव संहारश्चाष्ट भैरवाः" तन्त्रसा० ।
**संहारमुद्रा** स्त्री संहारार्थां विसर्जनार्थां मुद्रा । तन्त्रोक्ते मुद्राभेदे तल्लक्षणम् "अधोमुखे वामहस्ते ऊर्द्ध्वास्यं दक्षहस्तकम् । क्षिप्त्वाङ्गुलीरङ्गुलीभिः संग्रह्य परिवर्त्तयेत् । प्रोक्ता संहारमुद्रेयमर्पणे तु प्रशस्यते" पदार्था० धृतवाक्यम् । अर्पणे आत्मनि देवार्पणे" ति०त० ।
**संहिता** स्त्री सम्यक् हितं प्रतिपाद्यं यस्याः । १मन्वादिप्रणीते धर्मशास्त्रे २पुराणे ३इतिहासादौ ४धर्मकाण्डप्रतिपादके वेदभागे च संहितापाठप्रकारस्तु ति०त० धृत वृहद्धोक्तः पञ्चोयशब्दे २८५० पृ० दर्शितः । "परः सन्निकर्षः संहिता" पा०उक्ते ६पूर्वापरवर्णयोः आनन्तर्यसन्निकर्षे तत्र नियमविशेषः कथ्यते "संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते" । [अमर० ।
**संहृति** स्त्री सम्+ह्वे–क्तिन् । बहुभिः सार्द्धं आह्वाने
**संहृत** त्रि० सम्+हृ–क्त । १कृतसंहारे २सङ्कुचिते च ।
**संहृति** स्त्री० सम्+हृ–क्तिन् । संहारे ।
**संह्राद** पु० सम्+ह्राद–घञ् । शब्दभेदे ।
**संह्रादिन्** त्रि० सम्+ह्राद–णिनि । शब्दायमाने ।
**संह्लाद** पु० सम्+ह्लाद–घञ् । आनन्दभेदे ।
**सकण्टक** पु०सह कण्टकेन सहस्य सः । १करञ्जभेदे (नाटाकरमचा) रत्नमा० । २शैवाले शब्दच० । ३कण्टकयुक्ते त्रि०
**सकर्ण** त्रि० सह कर्णेन श्रवणेन तद्व्यापारेण वा । १श्रुतियोगे जटा० २कर्णयुक्ते च ।
**सकर्म्मक** त्रि० सह कर्मणा सहस्य स कप् । व्याकरणोक्ते कर्मयुक्तक्रियाबोधके धातौ "फलव्यापारयोरेकनिष्ठतायामकर्मकः" । धातुसयोगभेदे सकर्मक शब्दाहृतः" इत्युक्तदिशा धातोः सकर्मकत्वमवसेयम् ।
**सकल** त्रि० सह कलया अवयवमात्रया चतुष्षष्ट्या कलाभिर्वा सहस्य सः । १समग्रे २खण्डे अमर० ३कलावर्द्धिते च
**सकारण** त्रि० सह कारणेन । कार्ये । [अन्तिके समीपे ।
**सकाश** पु० कशनं गमनं काशः कश–घञ् सह कारोन ।
**सकुरण्ड** पु०सह समान कुरण्डेन । बाकरण्डवृक्षे राजनि०
**सकुल** पु० सह समानं कुलमस्य । १मत्स्यभेदे (सल) स्त्रीत्वे ङीप् । २समानवंशे त्रि० ।
**सकुल्य** त्रि० समाने कुले भवः यत् । सप्तपुरुषावधि आचतुर्धपुरुषमारभ्य दशमपुरुषपर्यन्तं दायादेषु सपिण्डानां मध्ये चि

ग्रेतसूतके। त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति ब्रा-
ह्मणाः" इत्यु०। सपिण्डशब्दे दृश्यम्। [अन्ये।

**सकृत्** अव्य० एक+सि०। १एकवारे अमर०। २विहाया स्त्री

**सकृत्प्रज** पुस्त्री० सकृत् एकवार प्रजायते प्र+जन—ड।
१काके अमर० स्त्रियां ङीष्। २एकवारजातापत्ये च।

**सकृत्फला** स्त्री सकृत् फलति फल-अच्। कदलीवृक्षे राजनि०

**सकृद्गर्भ** पु० सकृत् गर्भो यस्य। खेसरे राजनि० एकवार
गर्भवत्यां स्त्रियां स्त्री।

**सकृद्वीर** पु० कर्म०। एकवीरवृक्षे राजनि०।

**सक्त** त्रि० सन्ज—क्त। १आसक्ते २अविरते च हेमच०।

**सक्तु** पु० सन्ज—तुन् किच्च। भृष्टयवादिचूर्णे (छातु) शब्दच०
"सेवाटौ सक्तवो देया वारिपूर्णो च गर्गरी" ति०त०।

**सक्तुफला(ली)** स्त्री सक्तव इव क्षुद्राणि फलान्यस्याः वा
ङीप्। शमीवृक्षे अमरः ङीबन्त० तन्नार्थे शब्दर०।

**सक्थि** न० सन्ज—क्थिन्। १ऊरौ अमर० २शकटावयव-
भेदे च उणादि०। बहु० स्वाङ्गे अच्-समा०। मृग-
सक्थ इत्यादि। [इन्द्रियत्वदेहत्वादिधर्मे।

**सखण्डोपाधि** पु० कर्म०। वहुपदार्थघटिते धर्मे यथा

**सखि** त्रि० सह समानं ख्यायते ख्या-ङिन् नि०। सौहार्द-
युक्ते अमर०। सखायौ सख्या सख्युरित्यादि।

**सखी** स्त्री सखि+स्त्रीत्वे ङीष्। १सहचर्यां हेमच० २वय-
स्यायाम् अमर०।

**सख्य** न० सख्युर्भावः यत्। १मित्रतायां २सौहार्दे च।

**सगन्ध** पु०सह गन्धेन लेशेन वा सहस्य सः। १ज्ञातौ त्रिका०
२गन्धयुते त्रि०।

**सगर** पु० सह गरेण विषेण जातः। १सूर्यवंश्ये नृपभेदे
"सगरात् सागरोजात" इति पुराणम्। स च इक्ष्वाकु-
नामराजतः यादव्यां जातः तत्सपत्न्या गरदाने-
ऽपि स न ममार तत्कथा "तस्या (यादव्याः) अमे
च सा गर्भं सुषुवे ज्वलनप्रभम्। अजायत महाबाहु-
र्गरेणैव सह द्विज।। सगरो नाम तेनाभूत् बालको-
ऽतिमनोहरः" पद्मपु० १२अ०। २विषयुक्ते त्रि०।

**सगर्भ** पु० सह समानो गर्भोऽस्य। १सहोदरे भ्रातरि
शब्दर०। सह गर्भेण। २गर्भयुक्ते मध्यवर्त्तिछन्नपत्र-
युक्ते कुशदूर्वादौ त्रि० स्त्रियां टाप्। [भ्रातरि।

**सगर्भ्य** पु० समाने गर्भे भवः यत् सहस्य सः। सहोदरे

**सगोत्र** न० सह समानं गोत्रम् सहस्य सः। १कुले शब्दच०
सह सम गोत्रमस्य। २ज्ञातौ त्रि० अमरः।

**सग्धि** स्त्री अद्-क्तिन् नि०सह ग्धत्रा सहस्य सः। सहभोजने
अमरः।

**सङ्कट** त्रि० सम्+कटच् सम्+कट-अच् वा। १अल्पावकाशे
स्थाने अमर०। २सम्बाधे ३दुःखे "नरोमुच्येत सङ्क-
टादिति" देवीमा०। ४देवीभेदे स्त्री ज्योतिषोक्ते दशा-
भेदे च स्त्री टाप्। दशाशब्दे ३४८४पृ० दृश्यम्।

**सङ्कथा** स्त्री सम्+कथ—भावे अ। परस्परकथने हेमच०।

**सङ्कटाक्ष** पु०सङ्कटं संबाधमक्षति अक्ष—अण्। धवहक्षे विश्व०

**सङ्कर** पु० सम्+कॄ—कर्मणि अप्। १सम्मार्जन्यादिभि च्छिप्ते
रजसि अमर०। इतरजातिपुरुषेण इतरजातिस्त्रियां
२जाते जातिभेदे। भावे अप्। ३मेलने ४परस्पराभावसा-
माधिकरण्ये सत्येकाधिकरणवृत्तित्वे च स च जातिबा-
धकः। "व्यक्तेरभेदस्तुल्यत्व सङ्करोऽथानवस्थितिः। रूप-
हानिरसम्बन्धो जातिबाधकसंग्रह" सि० मु०। यथा
भूतत्वाभाववति मनसि मूर्त्तत्वस्य सत्त्वात् मूर्त्तत्वाभा-
ववति च गगने भूतत्वस्य सत्त्वात् भूम्यादिभूतचतुष्टये
चोभयोः सामानाधिकरण्यात् तयोर्न जातित्वम्। वर्ण-
सङ्करजातिश्च नानाविधा दिङ्मात्रमत्रोच्यते "वर्ण-
सङ्करजात्यादि इत्युपक्रमे "विप्रान्मूर्द्धावसिक्तो हि
क्षत्रियायां, विशः स्त्रियाम्। जातोऽम्बष्ठस्तु शूद्रायां
निषादः पार्शवोऽपि च" इत्यादि गरु० ९६ अ०। "स्त्रीषु
दुष्टासु वार्ष्णेय! जायते वर्णसङ्करः" गीता। ५अ-
लङ्कारभेदे अलङ्कारशब्दे ४०५पृ० दृश्यम्। ६संसर्गे
स्पर्शादिसम्बन्धे चण्डालादिसङ्करे भवनादिदहनादि तत्र
च प्रायश्चित्तादि प्रा० वि० उक्तं यथा
"अथ चाण्डालसङ्करप्रायश्चित्तम्। तत्र च्यवनः "चाण्डा-
लसङ्करेषु भवनदहनं पूरणं सर्वभाण्डभेदनं दारवाणाम्
तक्षणं गङ्गाप्लाविरजतचेलानामद्भिः प्रक्षालनं कांस्यता-
म्राणामाकरशुद्धिः सौवीरपयोदधितक्राणां परित्यागः
शेषरसयवसद्रव्यरक्षणं गोमूत्रयावकाहारो मासं क्षपयेत्
बालवृद्धस्त्रीणामर्द्धं प्रायश्चित्तम् आषोडशाद्बालः सप्त-
त्यूर्द्धं स्थविरः शेषं प्रायश्चित्ते ब्राह्मणभोजनं
गोमतञ्च दद्यादभावे सर्वस्वम्"। पूरणं पूर्वमृत्तिकाकर्ष-
णेन मृत्तिकान्तरदानम् तक्षणं वास्यादिनाग्रियोज-
नम् भाण्डभेदनं मृण्मयभाण्डभेदनम्। आकरे अग्ना-
वित्यर्थः अग्निसंयोगात्ताम्रादीनामुत्पत्तेः। शेषरसानां
लावणादीनां यवसद्रव्याणां च धान्यानां रक्षणम्।
तथा च पराशरः 'आकरे तु भस्मशुचिस्ताम्रशूद्रे सर्वं-

सूके । जलशौचन्तु वस्त्राणां परित्यागस्तु मृण्मये । कुसुमगुडकार्पासलवण सह सर्पिषा । द्वारि कुर्वीत धान्यानि दद्याद्वेश्मनि पावकम् । हुताशज्वालासंस्पृष्ट शुचि तन्मनुरब्रवीत्” । तेन रक्षणं घृतादीनाम् अग्निज्वालापवित्रीकृतानां कर्त्तव्यम् । एतच्च प्रायश्चित्त सद्य पातहेतुयोनादिवर्जिते संसर्गमात्रनतो यावता कालेन पातित्यं भवति अज्ञानतस्तावत्कालसंसर्गे सति वेदितव्यम् इति तेन संवत्सरैकचाण्डालसम्बन्धे मासैकगोमूत्रयावकाहार कर्त्तव्यः । अनेन च द्वादश धेनवो मासोपवासात् पञ्चमभागापकर्षात् । गोशतञ्च दक्षिणा । एतच्च प्रायश्चित्त ब्राह्मणक्षत्रियविशां तुल्यमेव । तथा चापस्तम्ब “अन्त्यजातिरविज्ञातो निवसेद् यस्य वेश्मनि । स वै ज्ञात्वा तु काले तु कुर्य्यात्तत्र विशोधनम् । चान्द्रायण पराक वा द्विजातीनां विशोधनम् । प्राजापत्यन्तु शूद्राणां तथा संसर्गदूषणे । यैस्तत्र भुक्तं पक्वान्नं कृच्छ्र तेषां विधीयते । तेषामपि च यैर्भुक्तं तदर्द्धं तेषु विद्यते । तेषामपि च यैर्भुक्तं कृच्छ्रपादो विधीयते । कूपैकपानदुष्टानां तथा संसर्गदूषणे । उपवासेन शुद्धिः स्यात् पञ्चगव्येन चैव हि । बालापत्या तथा रोगी गर्भिणी वृद्ध एव च । तेषां नक्तं प्रदातव्य बालानां प्रहरद्वयम् । यच यां क्रियमाणे तु येषामार्त्तिः प्रदृश्यते । शेष सम्पादयेत्तेषां विपत्तिर्न भवेत् यथा” । तत्र पूर्व्वोक्तकालादल्पकालसङ्करे चान्द्रायणम् । स्वल्पतरे पराकः । शूद्रस्य प्राजापत्यम् । कूपैकपानदुष्टानामिति एकस्मिन्नेव कूपे द्विजानां चाण्डालादीनां सह जलपान कुर्वतां संसर्गदुष्टानां सोपवासपञ्चगव्यं विशोधनमित्यर्थः । संवर्त्तः “चाण्डालसङ्करे विप्र श्वपाके पुक्कशेऽपि वा । गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति । एतदपि स्वल्पकालसङ्करविषय मासार्द्धयावकाहाराशक्तौ षड्धेनव । इमन्तु “अगम्यागमनस्तेयवधचाण्डालसम्पर्केषु कृच्छ्रत्रयम्” । एतदत्यन्तस्वल्पकालविषयं कृच्छ्रत्रयाशक्तस्य धेनुत्रयम् । तथा “अविज्ञातस्तु चाण्डालो निवसेद् यस्य वेश्मनि । विज्ञाते तूपसन्यस्य द्विजाः कुर्य्युरनुग्रहम्” इत्युपक्रम्याह पराशरः “दधिसर्पिःपयो मूत्रं यदा गोमूत्रयावकम् । भुञ्जीत सह भृत्यैस्तु त्रिसन्ध्यमवगाहनम् । त्र्यहं दुग्धं न भुञ्जीत भोक्तव्यं गोरसं तम् । त्रिपल चोद्धरेत् पलमेकन्तु सर्पिषः” । तथा “इह पूतः सह भृत्यैश्च कुर्य्याद्ब्राह्मणभोजनम् । अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्” । दधिसर्पिःपयो मूत्रं यदा गोमूत्रयावक द्वादशाह भुञ्जीतेत्यर्थः । तत्र परिमाणमेतेषाम् त्रयाणामुक्तम् । चर्म्मकारादीनामविज्ञात सङ्करे तु चाण्डालसङ्करप्रायश्चित्तस्य षष्ठो भाग करणीय चाण्डालस्पर्शप्रायश्चित्ताच्चर्म्मकारादिस्पर्शे प्रायश्चित्तस्य षष्ठभागदर्शनात् । यथा स्वल्पयम “चाण्डाले श्वपचे स्पृष्टे विण्मूत्रे च कृते द्विज । त्रिरात्रं तत्र कुर्वीत भुक्त्वोच्छिष्टः षडाचरेत्” । चर्म्मकारादिस्पर्शे तु संवर्त्तः “एतैः स्पृष्टश्चोच्छिष्ट एकरात्रं पय पिबेत्” देवल “चाण्डालसंयोगे जातश्चाण्डाल एव स्यात् ब्रह्महत्योद्दिष्ट प्रायश्चित्त वार्षिक षाण्मासिक कृच्छ्र वा ब्राह्मणस्य । चतुस्त्रिशद्द्व्येकमासाः शेषाणाम्” । अविज्ञातचाण्डालसम्पर्के विद्यमान एव दम्पत्यो संयोगे यो जातो ब्राह्मणः स वार्षिक ब्रह्महत्याव्रत प्राजापत्यं वा षाण्मासान् कुर्य्यात् वार्षिकब्रह्महत्याव्रताशक्तौ पञ्चदश धेनवो देयाः । षाण्मासिकब्रह्महत्याव्रताशक्तावर्द्धार्द्धः । अस्पृश्यस्पर्शनप्रायश्चित्तमभिहितमिदानीं स्पर्श एव निरूप्यते । किं साक्षात् स्पर्श एव स्पर्शशब्दार्थः उत परम्परास्पर्शोऽपि न प्रथम परम्परया चाण्डालस्पर्शे आकाशाद्यभावप्रसङ्गात् नापि द्वितीय संयोगे संयुक्तसंयोगे चैकस्पर्शपदप्रवृत्तिनिमित्ताभावात् आकाशादिद्वारेण सर्वेषामेव तत्प्रसङ्गाच्च किञ्चैवम् “औडुम्बरी सर्वा वेष्टयितव्या औडुम्बरी स्पृष्टोद्गायेत्” इत्यत्र सर्ववेष्टनस्पर्शयोरविरोध स्यात् उपस्पर्शस्यापि स्पर्शशब्दवाच्यत्वात् तथा च विरोधाधिकरणोदाहरणं भाष्यकारस्याप्यसङ्गतं स्यात् । तथा च वृद्धशातातप “अशुचिं संस्पृशेद् यस्तु एक एव स दुष्यति । तत्स्पृष्टोऽन्योन दुष्येत सर्वद्रव्येष्वयं विधिः” । “तथा संहतानान्तु पाषाणा यद्येकमुपहन्यते । तस्यैव शोधनं प्रोक्तं न तु तत्स्पृष्टिनामपि” । उच्यते । सत्यम् उपस्पर्शो यद्यपि न स्पर्शशब्दार्थस्तथाप्यत्र वचनादेकावयविद्वारकपरम्परास्पर्शोऽपि ग्राह्यः । तथा चापस्तम्ब “एकशाखां समारूढ़श्चाण्डालादिर्यदा भवेत् । ब्राह्मणस्तत्र निवसन् स्नानेन शुचितामियात्” । आदिशब्दाद्रजकादीनां ग्रहणम् । शाखाग्रहणमेकावयव्युपलक्षणार्थं तेनैकपाषाणादेरपि ग्रहणम् । तथा स एव “एकवृक्ष समारूढौ चाण्डालब्राह्मणौ यदि । फलं भक्षयतस्तत्र प्रायश्चित्तं कथं भवेत् । ब्राह्मणमपृष्ट्वा स्नात्वा तु सचेलः प्राश्नीयाद्ध्रुतं च

ण्डोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति”। तथा स एव “एकशाखा समारूढः फलान्यश्नात्यसौ यदि। प्रायश्चित्तं त्रिरात्रं स्यात् पञ्चगव्यं विशोधनम्”। अत्र व्यवधानसन्निधानाभ्यामेकरात्रत्रिरात्रे। स्नानविषयञ्चैतदुभयम्। तथा च ब्रह्मपुराणम् “विप्रश्चाण्डालसंस्पृष्टो यत्रैकस्मिन् वनस्पतौ। अस्नानात्तु फलं भुङ्क्ते चरेत्तत्राघमर्षणम्”। उपस्पर्शत्वात्। “पाद आमासने तथेति” पूर्वोक्तापस्तम्बेन न विरोधः। तथाचापस्तम्बः “मूढः खरे वा संस्पृशन् अप्रयतान् प्रयतो मन्येत”। तृणप्रस्तरादौ चाण्डालादिभिः सहावस्थितोऽपि स्पृशन्नपि तान् प्रयतमात्मानं मूढो मन्येत वस्तुतस्तु अशुचिरेवासौ इति पूर्ववाक्यापात्तं स्नानमेव कुर्यात् तथा “तृणकाष्ठादिषु निखातेषु च”। सङ्क्रमादौ निखातेषु तृणकाष्ठेषु चाण्डालेन सहावस्थितोऽप्यशुचिरेव तथा “प्रोक्ष्य वास उपयोजयेत्”। न सचेलं स्नानमित्यर्थः। अयमेव विशेषः साक्षात्स्पर्शादस्य। अतोवचनादेकाश्रयद्वारा परम्परास्पर्शे स्नानादिकमिति। नौकादिषु न दोष इत्याह पराशरः। “रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च। स्पर्शनान्न प्रदुष्यन्ति पक्वेष्टकचितानि च”। तृणसमूहः पक्वेष्टकचितानि मठादीनि। नन्वेवं याज्ञवल्क्यवचनविरोधः तद् यथा “उदक्याशौचिभिः स्नायात् संस्पृष्टस्तैरुपस्पृशेत्। अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा स्मरन्”। अत्र परस्परयोदक्यया -अशुचिभिश्च स्पर्शे आचमनमवगम्यते। तथा “शवं तत्स्पृष्टिनञ्चैवेति” मनुवचने तत्स्पृष्टीत्यभिधीयते तदनर्थकं स्यात् चाण्डालादिस्पृष्टस्पृष्टिनोरपि स्नानाभ्युपगमात् “शवस्पृश्युपस्पर्शे सर्वोदकस्पर्शाच्छुद्धिरिति” गौतमविरोधः “शवस्पृग् दिशाकीर्त्तिम्” इत्यादि बृहस्पतिवचन “शवस्पृक्च स्पृष्ट्वेत्यादिविष्णुवचनाभ्याञ्च विरोधः स्यात् तच्छब्देन सर्वेषामेव चाण्डालादीनां परामर्शात् एषु सर्वेषु शवस्पृष्टिग्रहणात्। उच्यते। एकशाखा समारूढ इत्याद्यापस्तम्बवचनं वर्त्तमानाशुचिसंसर्गिस्पर्शविषयम् याज्ञवल्क्यादिवचनन्त्वतीतसंसर्गिस्पर्शविषयमित्यविरोधः। अतएव “संस्पृश्याशुचिसंस्पृष्टं तृतीयं वापि मानवः। हस्तौ पादौ च प्रक्षाल्य तोयेनाचम्य शुध्यति” इति देवलवचनमपि वर्त्तमानाशुचिसंसर्गिस्पृष्टौ मूलाभूताशुच्यपेक्षया तृतीयो भवति न स्नानाचमनमात्रं चतुर्थे नेत्यर्थः। अतीतविषये द्वितीयमेव स्पृष्ट्वाचमनमिति व्यवस्थितविकल्पवाचिवाशब्दार्थः। तृतीयस्पर्शे न किञ्चित्। चाण्डालादिस्पर्शविषयञ्चैतत् अतीतान्त्यजस्पर्शविषये तु द्वितीय एव नाचमनम्। तथा च शातातपः “अशुचिं संस्पृशेद् यस्तु एक एव स दुष्यति। तत्स्पृष्टोऽन्योन दुष्येत्तु सर्वद्रव्येष्वयं विधिः”। एतच्छुनाद्यशुचिद्रव्याधस्तान्निर्दिष्टस्पर्शविषयमपि। अत्रापि वर्त्तमानान्त्यजसंसर्गिस्पर्शे साक्षात्स्पर्शे इवाचमनमेवेति सर्वमुपपन्नम्”।

पराशरेणाऽत्र कश्चिद्विशेष उक्तो यथा

“उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन। अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्। मार्जनोपाञ्जनैर्वेश्म प्रोक्षणेन च पुस्तकम्। सम्मार्जनेनाञ्जनेन सेकेनोल्लेखनेन च। दाहेन च भुवः शुद्धिर्वासेनाप्यथ वा गवाम्”। अत्रापि लघुगुरुसंसर्गविषयभेदात् व्यवस्था। “नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम्। ब्राह्मणान्तरितं भैक्ष्यमाकराः सर्व एव हि”।

**सङ्करी** स्त्री सङ्कीर्य्यते सम्+कॄ—कर्मणि घ गौरा० ङीष्। नष्टदूषितकन्यायां मेदि०।

**सङ्करीकरण** न० सङ्करः क्रियतेऽनेन च्वि+कृ-करणे ल्युट्। पापभेदे तत्स्वरूपप्रायश्चित्तादिक प्रा०वि० दर्शितं यथा

“अथ सङ्करीकरणापात्रीकरणमलावहप्रायश्चित्तम्। तत्र मनुः “खरोष्ट्राश्वमृगेभानामजाविकवधस्तथा। सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च। निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्। अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम्। कृमिकीटवयोहत्या मद्यानुगतभोजनम्। फलैधःकुसुमस्तेयमधैर्य्यञ्च मलावहम्”। मद्यानुगतभोजनं मद्यपानसमये यदुपस्थापितं फलमूलादि। अधैर्य्यं गौतमवचनादि “अल्पेऽप्यपचये अत्यन्तवैकल्यमिति” कल्पतरुः। “सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम्। मलिनीकरणीये तु तप्तं स्यात् यावकं त्र्यहम्”। तथा विष्णुः “ग्राम्यारण्यानां पशूनां हिंसा सङ्कीर्णकरम्। सङ्कीर्णकरणं कृत्वा मासमश्नीत यावकम्। कृच्छ्रातिकृच्छ्रमथ वा प्रायश्चित्तन्तु कारयेत्। निन्दितेभ्यो धनादानं वाणिज्यं कुसीदजीवनम्”। असत्यं शूद्रसेवनमित्यपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुद्ध्यति। “शीतकृच्छ्रेण वा भूयो महासान्तपनेन वा”। “पक्षिणां जलचराणाञ्च घातनं कृमिकीटघातनं मद्यानुगतभोजनमिति मलावहानि” “मलिनीकरणीये तु तप्तकृच्छ्रं स-

माचरेत् । कृच्छ्रातिकृच्छ्रमथ वा प्रायश्चित्तं विशोधनम्”। अत्र सङ्करीकरणे सकृत्करणे मासयावकम् अभ्यासे कृच्छ्रातिकृच्छ्रम्। अत्यन्ताभ्यासे चान्द्रायणम् । अपात्रीकरणे च सकृत्करणे तप्तकृच्छ्रं चतुरहसाध्यम् । शीतकृच्छ्रो वा शीतकृच्छ्रे तप्तकृच्छ्रेतिकर्त्तव्यतैव किन्तु तदेव द्रव्यमत्र शीतञ्चमिति विशेषः । अभ्यासे तु महासान्तपनम् अत्यन्ताभ्यासे चान्द्रायणम् । मलावहे तु सकृदाचरणे त्र्यहयावकम् अभ्यासे तु तप्तकृच्छ्रम् अत्यन्ताभ्यासे कृच्छ्रातिकृच्छ्रमिति यथायोग्यमूह्यम् । एषु च त्रिषु यत्र यत्र प्रायश्चित्तविशेषो नोक्तस्तत्रैव एव बोद्धव्यः”।

**सङ्कर्षण** पु० सङ्कृष्यते गर्भात् गर्भान्तरं नीयतेऽसौ सम्+कृष-युच् । १बलदेवे अमरः । तत्कथा हरिवं० ५८अ० “सप्तमो देवकीगर्भः योऽंशः सौम्यो ममाग्रजः । स संक्रामयितव्यस्ते सप्तमे मासि रोहिणीम् । सङ्कर्षणात्तु गर्भस्य स तु सङ्कर्षणो युवा । भविष्यत्यग्रजो भ्राता मम” शीतांशुदर्शनः”निद्रात्मिकां विष्णुमायां प्रति भगवदुक्ति । भावे ल्युट् । २आकर्षणे ३स्थानान्तरनयने च न० ।

**सङ्कलन** न० सम्+कल-ल्युट् । १एकत्रीकरणे २योजने (ठिकदेया) लीला० ३उपहे च ।

योजनं च नानासङ्ख्यास्थकाङ्कानामेकसङ्ख्यापादकाङ्ककरणं तच्च द्विविधं शुद्धसङ्कलनं भिन्नसङ्कलनञ्च तत्र शुद्धसङ्कलनं तु “कार्य्यः क्रमादुत्क्रमतोऽथ वाङ्कयोगो यथास्थानमथान्तरं वा” लीला० उक्त्या यथास्थानम् एकादिस्थाने एकाद्यङ्कयोग एव दशशतादिस्थाने दशशताद्यङ्कयोगः । भिन्नसङ्कलनञ्च छेदसहिताङ्कयोजनम् । तत्रांशसवर्णनं नक्तोक्तं यथा “अन्योन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेवम्” ।

न्यास ३/१ १/५ १/३ समच्छेदे जातम् ४५/१५ ३/१५ ५/१५

“योगोऽन्तरं तुल्यहरांशकानां कल्प्यो हरो रूपमहारराशेः” इत्युक्तदिशा योजने जातम् ५३/१५ एवं प्रभागभागानुबन्धभागापवाहेषु समच्छेदकरणं तत्र द्रष्टव्यम् ।

**सङ्कलित** त्रि० सम्+कल-क्त । १योजिते २रेखादिना सङ्घटते अमर । ३सङ्गृहीते च भावे क्त । ४सयोजने न० ।

**सङ्कलितैक्य** न० ६त० । “सैकपदघ्नपदार्द्धमथैकाद्यङ्कयुतिःकिल सङ्कलिताख्यम्” लीला० उक्ते एकाद्यङ्कानां योगे

**सङ्कल्प** पु० सम्+कॢप-घञ् गुणे रस्य लः । १अभीष्टसिद्धये (इदमित्थमेव कार्य्यम्) इत्येवंरूपे मनसोव्यापारभेदे अमरः । २कर्मसाधनाय अभिलापवाक्ये “सङ्कल्पेन विना राजन् । यत् किञ्चित् कुरुते नर । फलञ्चाल्पाल्पकं तस्य धर्मस्यार्द्धक्षयो भवेत्” मत्स्यपु० । धर्मस्य अर्द्धक्षयोक्तिः फलस्याल्पाल्पकत्वमर्थपरत्वे युक्ता धर्माधीनत्वात् फलस्य । “आशास्य च शुभं कार्य्यमुद्दिश्य च मनोगतम्” अगस्त्यपूजने उक्तम् “मनोगतं शुभफलमाशास्य मनसा सङ्कल्प्य, उद्दिश्य वाचा अभिलप्य, कार्य्यं कर्मणा उपपाद्यम्” ति०त०रघु० । “मनसा सङ्कल्पयति वाचा अभिलपति कर्मणा चोपपादयति” हारीतः । तत्प्रकारो यथा “शुक्तिशङ्खाश्महस्तैश्च कांस्यरूप्यादिभिस्तथा । सङ्कल्पो नैव कर्त्तव्यो मृण्मयेन कदाचन । गृहीत्वोदुम्बरं पात्रं वारिपूर्णं शुभान्वितम् । दर्भत्रयं साग्रमूलं फलपुष्पतिलान्वितम् । जलाशयारामकूपे सङ्कल्पे पूर्वदिङ्मुखः । साधारणे चोत्तरास्य ऐशान्यां निक्षिपेज्जलम्” भविष्यपु० अत्र नीरजहस्तनिषेधस्तु पात्रान्तरसत्त्वविषयः एकहस्तपरो वा एका०त०रघु० । मानससङ्कल्पश्च द्विविधः भावाभावविषयभेदात् तत्राद्यः मयैतत्कर्त्तव्यमित्येवंरूपः द्वितीयः मयैतन्न कर्त्तव्यमित्येवं रूपः । तत्र पूजादिसङ्कल्पो भावविषयः उपवासादिसङ्कल्पोऽभावविषय इति भेदः । ध्यम् । “सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः । व्रतानियमधर्माश्च सर्वे सङ्कल्पजाः स्मृताः” एका०त० ।

**सङ्कल्पजन्मन्** पु० सङ्कल्पात् जन्म यस्य । १कामदेवे हला० सङ्कल्पजादयोऽप्यत्र । सङ्कल्पजातमात्रे यज्ञादौ च त्रि०

**सङ्कल्पयोनि** पु० सङ्कल्पोयोनिरुत्पत्तिकारणं यस्य । कामदेवे “सङ्कल्पयोनेरभिमानभूतमिति” कुमारः ।

**सङ्कसुक** त्रि० सम्+कस-उकञ् । १अस्थिरे अमर । २मन्दे सि०कौ० ३दुर्बले उणादि० । ४सङ्कीर्णे ५अपवादयोग्ये च सिद्धान्तकौ० ।

**सङ्कार** पु० सम्+कॄ-कर्मणि वा० घञ् । १सम्मार्जनादिक्षिप्तधूल्यादौ शब्दर० । २सच्छूषितकन्यायां स्त्री मेदि० गौरा० ङीष् । भावे घञ् । ३अग्निचटत्कारे मेदि० ।

**सङ्काश** त्रि० सम्यक् काशते काश-अच् । १सदृशे “तद्वा दित्यसङ्काशमिति” तन्त्रम् । अस्यार्थे निभादिवदस्य नित्यसमासता । २अन्तिके च विश्व० ।

**सङ्किल** पु० सम्+किल-क । यङ्कैरुल्कायां त्रिका० ।

**सङ्कीर्ण** त्रि० सम्+कॄ-क्त । सङ्कलनसङ्कर्षेण निरवकाशे १स्थाने भरतः । २मिश्रितनानाजातीये अमरः । ३व्याप्ते ४मिश्रिते ५सङ्कट अजयः । एकत्र ६मिश्रितयोः पर-

परविजातीययोश्च । इतरवर्णेन इतरवर्णस्त्रियां जाते ७जातिभेदे पु० ८सङ्कटे अमरः । ९मिश्रितरागे सङ्गीत०

**सङ्कीर्त्तन** न० सम्+कीर्त्त-ल्युट् । १स्तुतौ २देवादेर्नामोच्चारणे ३गानेन देवगुणाद्यनुकीर्त्तने च "श्रीकृष्णरस-सङ्कीर्तं वीणाध्वनिसमन्वितम् । कुरु वत्स ! गुणान्वेव शृण्वन्तु सुमयः सुराः । गोपीनां वस्त्रहरणं परं रास-महोत्सवम् । ताभिः सार्द्धं जलक्रीडां हरेस्तत्कीर्त्तनं कुरु । कृष्णसङ्कीर्त्तनस्थाने ये च नृत्यन्ति वैष्णवाः । तेषां पादरजःस्पर्शात् सद्यः पूता वसुन्धरा" नारदपञ्चरात्रम् ।

**सङ्कुचित** त्रि० सम्+कुच-क्त । १कृतसङ्कोचे २संक्षिप्ते ३अप्रफुल्ले च हेमच० । ४ग्रस्ते राजनि० ।

**सङ्कुल** न० सम्+कुल-क । १परस्परपराहते "यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता । माता तु मम वन्ध्यैव पुत्त्रहीनः पितामहः ।" इत्येव वाक्ये अमरः । २परस्परहननरूपे युद्धे ३जनादिभिः संबाधेन निरवकाशे स्थाने ४सङ्कीर्णे त्रि० अमर ।

**सङ्केत** पु० सम्+कित-घञ् । मनोगतभावव्यञ्जनाय कृते हस्तादिचालनरूपे १व्यापारे (इसारा) त्रिका० । "अस्माच्छब्दादयमर्थो बोध्यः, अयं शब्दः अमुमर्थं बोधयतु वा" इत्येवंशब्दनिष्ठे २अर्थबोधनार्थशक्तिविशेषे सङ्केतश्च जात्यादिचतुष्के इति वैयाकरणाः ।

"शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः । चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विधः" काव्यादर्शः । "सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च" हरिः "जातिद्रव्यगुणस्पन्दैर्मैः सङ्केतवत्तया । जातिशब्दादिभेदेन चातुर्विध्यं परे जगुः" वैयाकरणमतम् शब्दश० प्र० उक्तम् । "रूढः सङ्केतवन्नाम सैव स चेति कीर्त्यते" शब्दश० । शक्तिशब्दे ५०७६ पृ० दृश्यम् । ३प्रियसङ्गमार्थं गुप्तस्थाने च ।

**सङ्केतित** त्रि० सङ्केतो जातोऽस्य तार० इतच् । सङ्केतयुते वाच्ये अर्थे "साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः" काव्यप्र० ।

**सङ्कोच** पु० सम्+कुच-घञ् । बहुविषयकवाक्यस्याल्पविषयकतया १व्यवस्थापने सामान्यशब्दस्य २विशेषपरतायाम् आदवि० ३अङ्गीभावे ४बोधे ५बन्धे च मेदि० । सम्+कुच-अच् । ६मत्स्यभेदे पुंस्त्री० मेदि० स्त्रियां ङीष् । ७कुङ्कुमे न० अमर । [तायां रत्नमा० ।

**सङ्कोचनी** स्त्री सम्+कुच-ल्यु-गौरा० ङीष् । लज्जालुल-

**सङ्क्रन्दन** पु० सङ्क्रन्दयत्यसुरान् सम्+क्रन्द-णिच्-ल्यु । १इन्द्रे अमरः । भावे ल्युट् । २सम्यक्क्रन्दने न० ।

**सङ्क्राम** पु० सङ्क्रामत्यनेन सम्+क्रम-घञ् वा वृद्धिः । १जलमध्यमस्थाने (साँको) अमरः "आत्मानं सङ्क्रमं कृत्वेति" स्मृतिः । भावे घञ् । २रव्यादेः राश्यन्तरसञ्चारे धरणिः । "लुटेः वहबभागो य न-कालो रविसंक्रमः" ति०त० । ३ एकत्रस्थितवस्तुनः तत् स्थानत्यागेनान्यत्रगमने च । [राश्यन्तरगमने च ।

**सङ्क्रमण** न० सम्+क्रम-ल्युट् । १सङ्क्रान्तौ २रव्यादेर्ना

**सङ्क्रान्त** त्रि० सङ्क्रान्तिरस्यास्ति अच्, सम्+क्रम-क्त वा । १सङ्क्रान्तियुक्ते २सङ्क्रमणकर्त्तरि ३प्राप्ते दायरूपेण भर्त्रादित आगते स्त्रिया ४प्राप्तधने च । दायभा० मते स्त्रीणां संक्रान्तधने उपभोगमात्रं तन्मरणे स्वपत्यादि दायादानां तद्धनम् "भुञ्जीतामरणात् क्षान्ता दायादा ऊर्द्धमाप्नुयुः" कात्या० वचनात् । मिता० मते तद्दायादानामिति विवेकः ।

**संक्रान्ति** स्त्री सम्+क्रम-भावे क्तिन् । संक्रमणशब्दे सङ्क्रान्तिपदार्थरविसंक्रान्तिनामभेदफलभेदादि उ० चि० पी०धा० निरूपित यथा

"घोरा१ऽर्कसंक्रमणमुत्तरयो हि शूद्रान्, ध्वाङ्क्षी२ विशो, लघुविधौ च चरर्क्षभोमे । चौरान्, महोदरयुता३ नृपतीन्, समैत्रे मन्दाकिनी४ स्थिरगुरौ सुखयेच्च, मन्दा५ । विप्रांश्च, मिश्रभगता तु पशूंश्च मिश्रा६, तीक्ष्णार्कजेऽन्त्यजसुखा खलु राक्षसी७ च । तत्र मे दिनस्य नृपतीन् प्रथमे निहन्ति मध्ये द्विजानपि विशोऽपरके च शूद्रान् । अस्ते निशाप्रहरकेषु पिशाचकादीन्नक्तञ्चरानपि नटान् पशुपालकांश्च । सूर्योदये सकलविद्विजनस्य सौम्ययाम्यायनं मकरकर्कटयोर्निरुक्तम् । षडशीत्याननञ्चापद्युकन्याझषे भवेत् । तुलाजौ विषुव, विष्णुपद सिंहालिगो घटे । सङ्क्रान्तिकालादुभयत्र नाडिकाः पुण्या मताः षोडशषोडशोष्णगोः । निशीथतोऽर्वागपरत्र सङ्क्रमे पूर्वापराह्नान्तिमपूर्वभागकौ । पूर्णे निशीथे यदि सङ्क्रमः स्यात् दिनद्वयं पुण्यमथोदयास्तात् । पूर्वं परस्ताद् यदि वा स्यसौम्यायने दिने पूर्वपरे तु पुण्ये । सन्ध्या त्रिनाडीप्रमितार्कबिम्बादर्द्धोदितास्तादधऊर्ध्वमत्र । चेद्याम्यसौम्ये अयने क्रमात्तदाः पुण्यौ तदा नौ परपूर्वघस्रौ । याम्यायने विष्णुपदे चाद्या मध्यस्तुलाजयोः । षडशीत्यानने सौम्ये परा नाड्योऽतिपुण्यदाः" इ० चि० ।

विशेष एवोक्तः “द्विसप्तपञ्चसप्ताष्टनवद्वादश एव च। क्रमेण घटिकाह्येतास्तत् पुण्यं पारमार्थिकम्” इति। अस्यार्थः मन्दायामन्तरालवर्त्ति घटिकाद्वयं मन्दाकिन्याः सप्त घटिकाः ध्वाङ्क्ष्याः पञ्च, घोराया सप्त, महोदर्याः अष्टौ, राक्षस्यां नव, मिश्रायां दश प्रागभिहितदेवीपुराणोक्तमन्दादिसंज्ञावाक्यात् तत्तज्जनितसंज्ञाया मन्दादिस्थले विचारो न वारप्रयुक्तसंज्ञाप्रचारात् एवं संक्रान्तिषु पुण्यकालमभिधाय इदानीं रात्रिसंक्रान्तौ विशेषमुपजानुक्रमेण आह निशीथत इति। निशीथोऽर्द्धरात्रं तस्मादर्वाक् पूर्व्वस्य अपरस्य पश्चाच्च संक्रमे संक्रान्तिकाले सति पूर्व्वापरयोरह्नो क्रमेणान्तिमपूर्व्वभागौ पुण्यौ ज्ञाता भागकाविति स्वार्थे कः। यद्यर्द्धरात्रात् प्राक् संक्रान्तिस्तदा पूर्व्वदिनस्योत्तरार्द्धं पुण्यं यद्यर्द्धरात्रादुपरि संक्रान्तिस्तदोत्तरदिनस्य पूर्व्वार्द्धमेव पुण्यमित्यर्थः। उक्तञ्च ब्रह्मसिद्धान्ते “भवनान्तं बिम्बमध्यं रात्र्यर्द्धात् प्रागुपैति चेत्। स्नानदानादि मध्याह्नात् कुर्य्यादूर्द्ध्वं गते दिने। रात्र्यर्द्धादुपरि चेत् याति चेदन्यथार्यमा। अह्नागामिनि मध्याह्नात् पूर्व्वं स्नानादि पुण्यदम्”। भवनं राशिः बिम्बमध्यं रवेः, चेत् राशिः। वृद्धवशिष्ठोऽपि “अर्द्धरात्रे तु संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम्। रात्रौ संक्रमणे भानोर्द्दिनार्द्धं स्नानदानयोः। अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया। ऊर्द्ध्वं संक्रमणे चोर्द्ध्वमुदयात् प्रहरद्वयम्” इति। ननु रात्रौ मेषादिसंक्रान्तौ वा रात्रावपि पुण्यकालसत्त्वात् तदा स्नानादि कुतो न क्रियते यदर्थमयमुद्यम आरब्ध उच्यते “रात्रौ स्नानं न कुर्व्वीत दानञ्चैव विशेषतः” इति सुमन्तुवाक्याद्रात्रौ स्नानाद्यधिकाराभावात्। यत्तु नैमित्तिक ग्रहणादिप्रयुक्तं तद्भवत्येव ‘नैमित्तिकञ्च कुर्व्वीत स्नानं दानञ्च रात्रिषु” इति सुमन्तुवाक्यशेषात् “अर्द्धरात्रसमये संक्रमणे मकरकर्कयोश्च विशेषमनुपजातिकयाह। पूर्व्वे इति। “अर्द्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ” इत्यभिधानादर्द्धरात्रो निशीथशब्दवाच्यः तस्मिन्निशीथे पूर्ण्णे रात्रिद्वितीयप्रहरान्तिमकलावच्छिन्ने यदि संक्रमः स्यात् तदा प्रागपरदिनद्वये पुण्यमुक्तम्। उक्तञ्च वृद्धवशिष्ठेन “पूर्ण्णे चेदर्द्धरात्रे तु यदा संक्रमते रविः। प्राहुः दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटाविति”। ब्रह्मसिद्धान्तेऽपि “यद्यर्द्धरात्र एव स्यात् सम्पूर्णे संक्रमो रवेः। तदा दिनद्वयं पुण्यं स्नानदानादिकर्म्मसु”। अत्र मुक्त्वा मकरकर्कटावित्युक्तं तत्र मकरकर्कटयोस्तु कथमित्यत आह अथेति अथानन्तरमुदयास्तात् सूर्य्योदयात् सूर्य्यास्ताच्च पूर्व्वं परस्माच्च यदि याम्यसौम्यायने कर्कटमकरसंक्रान्ती भवतस्तदा पूर्व्वपरदिने पुण्ये ज्ञाता यदि सूर्य्योदयात् पूर्व्वं कर्कटसंक्रमणं स्यात् तदा पूर्व्वदिन एव पुण्यकालो न परदिने। तदाह वृद्धगार्ग्यः “यदास्तमयवेलायां मकरे याति भास्करः प्रदोषे चार्द्धरात्रे वा स्नानं दानं परेऽहनि। अर्द्धरात्रे तदूर्द्ध्वं वा संक्रान्तौ दक्षिणायने। पूर्व्वमेव दिनं ग्राह्यं यावन्नोदयते रविः” इति। अस्तमयवेलाया इति पञ्चम्यन्तं पदं वाशब्द इवार्थे। भविष्योत्तरपुराणेऽपि “कार्कन्तु परित्यज्य मृगं संक्रमते रविः। प्रदोषे चार्द्धरात्रे वा कुर्य्यादहनि पूर्व्वतः” इति। प्रदोषलक्षणं स्कान्दपुराणे “त्रिमुहूर्त्तः प्रदोषः स्याद्भानावस्तं गते सति” इति।

अथार्द्धोदयास्तादिति वक्ष्यमाणपद्यमिन्द्रवज्राछन्दसाह अर्द्धेति अर्द्धोदितादर्द्धास्ताच्चाध ऊर्द्ध्वं च क्रमात्त्रिघटिकाभिः प्रमिता सन्ध्यासन्ध्याकालः स्यात् अर्द्धोदितार्कबिम्बात्पूर्व्वं त्रिघटीप्रमिता प्रातः सन्ध्या तथार्द्धास्तार्कबिम्बादुपरि त्रिनाडीप्रमिता सायंसन्ध्येत्यर्थः। तदाह वराहः “अर्द्धास्तमितानुदितात् सूर्य्यादस्पष्टं नभो यावत्। तावत् सन्ध्याकालश्चिह्नैरेतैः फलं ब्रूयादिति”। तत्प्रमाणमाह नारदः “अर्द्धास्तमनसन्ध्या हि घटिकात्रयसम्मिता। तथैवार्द्धोदयात् प्रातर्घटिकात्रयसम्मिता” इति। स्कान्दपुराणेऽपि “उदयात् प्राक्तनी सन्ध्या घटिकात्रयमुच्यते। सायंसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः” इति। अत्र सन्ध्यालक्षणे अर्द्धास्तमितानुदितवाक्यस्य स्कान्दपुराणीयवाक्यस्य च सौहित्यसम्बद्धिकल्पः। अथ सन्ध्याप्रयोजनमाहाद्यते। अथ सन्ध्यायां प्रातःसन्ध्यायां सायंसन्ध्यायां च क्रमाच्चेद् याम्यसौम्ये अयने दक्षिणोत्तरायणे तदाभी परपूर्व्वौ पूर्व्वौ दिवसौ पुण्यौ याम्यसौम्ये अयने इत्यत्र यदि प्रातःसन्ध्यायां दक्षिणायनप्रवृत्तिस्तदा सूर्य्योदयादनन्तरं सम्पूर्णमहः पुण्यं तथा यदि सायंसन्ध्यायामुत्तरायणप्रवृत्तिस्तदा सूर्य्यास्तात्पूर्व्वं सम्पूर्णमहः पुण्यं स्यादित्यर्थः। यदाह नारदः “सूर्य्यस्योदयसन्ध्यायां यदि याम्यायनं भवेत्। तदोदयादहः पुण्यं पूर्व्वाह्णः पूर्व्वतो यदि। सूर्य्यास्तमनसन्ध्यायां यदि सौम्यायनं भवेत्। तदाहः पुण्यकालः स्यात् परतश्चेत्परेऽहनि” इति। अत्र यद्युदयसन्ध्यातः प्राक्कर्कसंक्रम

स्तदा प्राग्दिन एव पुण्यकालो नोत्तरदिने । तथा यद्यस्तसन्ध्यामतिक्रम्य मकरसङ्क्रान्तिस्तदोत्तरदिन एव पुण्यकालो नोत्तरदिने इति निष्कृष्टोऽर्थः । अतो वृद्धगार्ग्यादिशाकुनमारटवाक्ययोः प्रदोषसन्ध्यापदोपादानेन सामान्यविशेषभावोऽवगन्तव्यः । यत्तु हेमाद्रौ स्कन्दपुराणीय वाक्यम् "धनुर्मीनावतिक्रम्य कन्यां च मिथुनं ततः । पूर्वापरविभागेन रात्रौ संक्रमते यदा । दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः । उदये च तथा पञ्च दैवे पित्र्ये च कर्मणि" इति । तदपि सन्ध्याविषयकमेवेत्याहुरभियुक्ताः । विषुवे तु यथाश्रुतम् एवेति, अन्यदपि सन्ध्यालक्षणप्रयोजनं प्राक्सन्ध्यागर्जित इत्यादिषु वक्ष्यति । ननु नायमयनपुण्यकालोक्तो न्यायः सफलः शास्त्रान्तरविरुद्धत्वात्तथा हि "अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम् । रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः । अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरिक्रिया । ऊर्द्ध्वं संक्रमणे चोर्द्ध्वमुदयात् प्रहरद्वयम् । पूर्णे चेदर्द्धरात्रे च यदा संक्रमते रविः । प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ" इति वृद्धवसिष्ठेनायनव्यतिरिक्तेषु दशसु संक्रमेषु रात्रिगतेषु "याः याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः" इति कश्यपोक्तसामान्यवाक्यात् प्राप्तरात्रावेवानुष्ठानं प्रसक्तमह्नि संक्रम इत्यादिनाप्यतिदेशानुष्ठानं विहितं तथापि पर्य्युदासः क्रियते मुक्त्वा मकरकर्कटाविति तस्मात् मकरकर्कटयोः संक्रमणे रात्रावेवानुष्ठानं कर्त्तव्यमित्युक्तं भवति अतएवाह वाम्नवल्क्यः "राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु । स्नानदानादिकं कार्य्यं निशि काम्यव्रतेषु च" इति वसिष्ठोऽपि "सुतजनने संक्रान्तावुपरागे चन्द्रसूर्य्ययोर्नियतम् । रात्रावपि कर्त्तव्यं स्नानं दानं विशेषतो नृणामिति" सुमन्तुश्च "पुत्त्रजन्मोद्वाहसंक्रान्तियात्रार्त्तिमरणेषु च । श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते" इति । एषु वाक्येषु सामान्यशायिनोऽपि संक्रान्तिपदस्य मकरकर्कटसंक्रान्तिपरत्वमवसीयते यत्तु "रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः" इति निषेधः स संक्रान्त्यन्तरे व्यवतिष्ठते अतएवोक्तं कश्यपेन "स्नानं दानं प्रकुर्वीत सौम्ययाम्यायनद्वये" इति । तस्मादयनसंक्रमे रात्रौ सत्यां तत्रैव स्नानदानाद्यनुष्ठातव्यमिति । अत्राहुः शास्त्रैकदेशेन तत्त्वनिरूपणाभिज्ञौ तत्तद्देशप्रसिद्धशिष्टाचारेण व्यवस्था द्रष्टव्या । तत्र गौर्जरास्तु कश्यपादिवाक्यमभ्युपेत्य रात्रावयनसम्भवे सति रात्रौ एव स्नानदानादिकं कुर्वन्ति । दाक्षिणात्यास्तु वृद्धगार्ग्यादिवाक्यमङ्गीकृत्य दिवस एव स्नानदानादि कुर्वन्तीत्यलमतिप्रसङ्गेन । यदा तु दिने कर्कमकरसंक्रमस्तदा क्रमेण पूर्व्वोत्तरघटिकानियममाह वृद्धवसिष्ठः "अतीतानागते पुण्ये द्वे उदग्दक्षिणायने । त्रिंशत् कर्कटके नाड्यो मकरे विंशतिः स्मृताः" इति । उत्तरायणमतीतं सत् पुण्यं कर्कटायनमागामि पुण्यं तत्र कर्कटसंक्रान्तेः प्राक् त्रिंशत् घटिकाः पुण्याः मकरे तूत्तरविंशतिर्घटिकाः पुण्या इत्यर्थः । अत्र वाक्ये यद्यपि दिनपदानुपादानं तथापि यदास्तमयवेलायामिति रात्रिपरविशेषवाक्यालोचनादिदं दिनपरं प्रतिभाति तथा सति केनापि हेतुना समीपघटीषु श्राद्धाद्यनुष्ठानासम्भवे परमावधित्वेन त्रिंशदादयो घटिका अत्रानुज्ञायन्ते यदा तु प्रतिबन्धस्तदा "याः याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः" इति कश्यपोक्तेः समीपघटिकास्वेव श्राद्धादि विधेयं 'सन्निहितपरित्यागे कारणाभावादिति' न्यायविदः । "अथ पूर्व्वापराः षोडश घटिकाः पुण्या इति पूर्व्वं सामान्येनोक्तमिदानीं विष्णुपदादिषु संक्रमेषु विशेषमनुष्टुभाह याम्येति । याम्यायने कर्कसंक्रान्तौ तथा विष्णुपदे वृषसिंहवृश्चिककुम्भसंक्रान्तिकाले आद्याः नाड्यः प्रथमाः षोडशघटिकाः अतिपुण्यदाः स्नानदानादावनन्तफलदायिन्यः अपरास्तु न तथेति निष्कृष्टोऽर्थः । तुलाजयोस्तुलामेषयोः मध्याः उभयतः षोडश षोडश घटिकाः पुण्याः अथ वा षोडशैव घटिकाः पुण्याः । षडशीत्यानने मिथुनकन्याधनुर्मीनसंक्रान्तिषु तथा सौम्ये मकरसंक्रान्तौ संक्रान्तिकालात्परा अपिमाः षोडश घटिकाः अतिपुण्यदा प्रथमास्तु न तथेति निष्कृष्टोऽर्थः । यदाह श्रीपतिः "याम्यायने विष्णुपदे तथाद्यौ दानाद्यनन्तं विषुवे च मध्ये । वदन्त्यतीते षडशीतिवक्त्रे महर्षयः स्वस्त्ययने च सौम्ये" । तत्र कर्के प्रागेव मकरसंक्रान्तौ पश्चादेव पुण्यकाल इति तु प्राङ्निरणायि । विष्णुपदे तु आपिमादिघटीनां पुण्यकाले तरतमभावः "पुण्याया विष्णुपद्याः च प्राक्पश्चादपि षोडश" इति वृद्धवसिष्ठोक्तेः । विषुवे तु सामान्यनिर्णय एवेति केचित् दीपिकाटीकाकारस्त्वेवमाह "मेषे तुलायां संक्रान्तिमध्य एव संक्रान्तिकालात्पूर्व्वमष्टौ घटिका परतश्चाष्टौ घटिकाः पुण्या इति" । युक्तं चैतत् । विषुवे च मध्यपदोपादानात् मध्ये षोडश घटिकाः पुण्याः इत्युच्यते कस्मात्

भौमवारे संक्रान्तौ दिनकरस्य तन्मासे । पित्तकफानिलजामयमरपतिकलहस्वदृष्टिश्च । बुधगुरुसितचन्द्राह्वे क्षिति संक्रान्तावनामय नृणाम् । क्षितिपतिनिकरक्षेमं सस्यविवृद्धिर्विधर्मिणां पीडा" । अत्र मेषसंक्रान्तौ विशेषमाह कश्यप "यदा मेषगतः सूर्य्यो भरण्यादिचतुष्टये । सस्यवृद्धिर्भवेत्तत्र हानिरार्द्राचतुष्टये । मघादिदशके हानिः क्षेमं चानुक्तभेषु च" । अस्यार्थः । यस्मिन् दिने मेषसंक्रमणस्तद्दिने चन्द्रो यदि भरण्यादिनक्षत्रचतुष्टये स्यात् तदा सस्यवृद्धिः एवमन्योऽपि व्याख्येयम् । अथ जन्मनक्षत्रे संक्रान्तिफलं दीपिकायां "यस्य जन्मर्क्षमासाद्य रविसंक्रमणं भवेत् । तन्मासाभ्यन्तरे तस्य रोगः क्लेशो धनक्षयः" इति । तत्र शान्तिकमपि दीपिकायामुक्तम् "नगरसरोरुहपद्मैरजनीसिद्धार्थलोध्रसंयुक्तैः । स्नानं जन्मन्यृक्षे रविसंक्रान्तौ नृणां शुभदमिति" । अथ संक्रान्तिषु वृष्टौ जातायां फलमुक्तम् वसिष्ठेन "अजकन्याझषकर्किणि संक्रान्तौ यदि भवेद्वर्षम् । अतुलं क्षेमसुभिक्षं नृपसज्जनगोकुलक्षेमम् । घटचापसिंहमिथुनसंक्रान्तौ यदि भवेद्वर्षम् । आमयडामरभूभृद्युद्धमनर्थं स्पृष्टिश्च । वृषवृश्चिकतुलमकरे वृष्टिः स्यात् संक्रमे समये । विस्फोटामयतस्करपीडावृष्टिः क्षयात् भयमिति" । अथ सौम्येति मकरकर्कटयोः संक्रान्तिश्चेत् तदा क्रमेण सौम्ययाम्यायनं निरुक्तं कथितं मकरे उत्तरायणं कर्कटे याम्यायनं स्यादित्यर्थः । यदाह नारदः "सौम्ययाम्यायने मृगे भवतो मृगकर्किणि" इति । अथाशीत्यादयः संक्रान्तीनां षडशीतिमुखादिकाः संज्ञा अत उक्ता षडशीतीति धनुर्मिथुनकन्यामीनेषु संक्रान्तिश्चेत् तदा षडशीतिमुखा नाम्नी संक्रान्तिः, तुलामेषयोः संक्रान्तिर्विषुवनाम्नी । सिंहवृश्चिकवृषकुम्भेषु संक्रान्तिर्विष्णुपदाख्या । उक्तञ्च नारदेन "स्थिरभेष्वर्कसंक्रान्तिर्ज्ञेया विष्णुपदाह्वया । षडशीतिमुखं प्रोक्तं द्विस्वभावेषु राशिषु । तुलाधराजयोः प्रोक्तं विषुवं सूर्य्यसंक्रमम्" । संज्ञाप्रयोजनञ्च "याम्यायने विष्णुपदे चाद्या मध्यास्तुलाजयोः । षडशीत्यानने सौम्ये परा नाड्योऽतिपुण्यदाः" । इति वक्ष्यति । अत्र मनुः "संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः । तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि । रविसंक्रमणे पुण्ये न स्नायाद् यदि मानवः । सप्तजन्मसु रोगी स्याद् दुःखभागी हि जायते" इति शातातपोक्तेः स्नानदानश्राद्धादिकमस्य संक्रान्तिकालेऽवश्यकर्त्तव्यता प्रतीयते तत्र श्राद्धादेरनेकक्षणसाध्यत्वादनुष्ठानलक्षणप्रामाण्यमापद्येत संक्रान्तिकालस्यातिसूक्ष्मत्वात् तदुक्तम् देवीपुराणे "सुप्ते नरे सुखासीने यावत् स्पन्दति लोचनम् । तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्त्तितः । तस्माच्छततमो भागस्त्रुटिरित्यभिधीयते । त्रुटेः सहस्रभागो यः स कालो रविसंक्रमः" इति । देवलोऽपि "संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः" इति पिशितेक्षणैः मनुष्यैः । अतो मुख्यकालानुपलब्धौ गौणकालेऽपि कार्य्यं वचनप्रामाण्यात् । स च गौणकालः प्रतिनिधिरित्यतो गौणकालमुपजातिकाच्छन्दःपूर्वार्द्धेनाह संक्रान्तीति । गणितमार्गेण यः उष्णगोः सूर्य्यस्य संक्रान्तिकाल आगतस्तत उभयत्र पूर्वतः परतश्च षोडश नाड्यः पुण्यास्तत्सम्पादकत्वात् पुण्याः मताः सम्मताः सूर्य्यसंक्रान्तिसमयात् पूर्वं षोडश पश्चाच्च षोडश घटिकाः पुण्यकाल इति द्वात्रिंशद्घटिका भवन्तीत्यर्थः । तदाह वसिष्ठः "दिनपतिसंक्रमणात् प्राक् षोडश नाड्यश्च पुण्यकालः स्यात् । परतः षोडश नाड्यः सर्व्वत्र स्नानदानकार्य्येषु । ब्रह्मसिद्धान्तेऽपि "संक्रान्तेः प्राक्परतश्चाद्याः षोडश नाडिकाः । प्रवर्त्तिंशत् संक्रमस्य पुण्याः सर्व्वस्य नाडिकाः" । अनेन "संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः" इति स्मृतिवाक्ये "षः पूर्व्वतः परतश्चाष्टावष्टौ घटिकाः पुण्यकाल इत्येवं षोडशेति व्याख्यानं तदपास्तं भवति । सिद्धान्तमतेनाशनाविदः सूर्य्यसिद्धान्तेऽभिहितः "अर्कमानकलाः षष्ट्या गुणिता भुक्तिभाजिताः । तदर्द्धनाड्यः संक्रान्तेरर्व्वाक् पुण्यं तथा परे" । सिद्धान्तशिरोमणावपि "षष्टिघ्नबिम्बं ग्रहभुक्तिभक्तं संक्रान्तिनाड्योऽखिलधर्म्मकार्य्ये । रवेस्तु ताः पुण्यतमा ग्रहः स्वसंक्रान्तिगोबिम्बफलं विधत्ते" । इति शाणना चेत् यदि ग्रहस्पष्टगतिसम्बन्धकलाभिरहोरात्रमानरूपाः षष्टिघटिकालभ्यन्ते तदा ग्रहबिम्बकलाभिः किमिति त्रैराशिकेन ग्रहे बिम्बकलाना षष्टिगुणितो ग्रहभुक्तिभाजको निष्पन्न इत्यर्थः । एवं सर्व्वग्रहाणामपि संक्रान्तिः स्यात् तदुक्तं सिद्धान्त एव । अत्र तु विस्तरभयादनुपयुक्तत्वाच्च नाभिरलेखि । अतएव त्रिंशद् एकत्रिंशद्वा द्वात्रिंशत्त्रयस्त्रिंशद्वादिभेदेन स्मृतिषु पुण्यघटिकाभिधानं स्पष्टीकृत्य भेदसम्भवाद्भिन्नं तदेव सामान्यतः संक्रान्तिषु द्वात्रिंशत् घटिकारूपः पुण्यकालो निर्णीतः । देवीपुराणे तु मन्दादिसंज्ञाभेदात् पुण्यकाल-

मिलित्वा पुण्यकाल इत्यर्थः। अत्र वासना प्रागुक्ता एतदर्थं नाद्य प्राक्परतश्च पुण्यता। अत्र गणितागतघटीपलेषु लिखितजैमिनिवाक्ये च क्वचित् किञ्चिदुपलभेदो घटिकाभेदश्च सगतिस्पष्टकृतिवशतः। युक्तं चैतत् आकाशे हि वेधादिना स्पष्टा एव खगा दृश्यन्ते न मध्यमाः "दिनद्वयस्पष्टखगान्तरालकालः स्फुटस्तु स्फुटभुक्तिबिम्बैरिति" स्पष्टगत्यैव बिम्बसंक्रान्तिघट्यानयनमुचितम् उक्तञ्च केशवार्केण "कुजादिकानामपि बिम्बलिप्ताः षष्ट्याहताः स्पष्टजवेन भक्ताः। नाड्यादिकः संक्रमणान्तरालकालः स्फुटस्तु स्फुटभुक्तिबिम्बैरिति" अपिशब्दात् सूर्यचन्द्रमसोर्ग्रहणं तथा सति मध्यमापेक्षया स्पष्टगतिबिम्बयोरुपचयापचयाभ्यां साम्येऽप्यन्तद्घटिकानामप्युपचयापचयसाम्यापत्तिक्रमेणापतति तेषां चानियतत्वात्तद्ये उपनिबन्धायोगाज्जीर्णैर्नियतमध्यगत्या सूर्यादीनां ग्रहाणां पुण्यकालघटीरानीयोपनिबन्धः कृतः। अत्र मत्कृतं पद्यम् "नाड्यो रामगुणाः३३ रवेरथ विधोः षट्दोः पलैः युग्मद्वयः१।२६ भौमस्याब्धिपलैर्युता नव८।४ विदो६।२०युक्ताः पलैः व्याश्विभिः। मन्दाद्योऽष्टगजाद्द८ गुरोरथ भृगोर्नन्दा९।८ पलैरष्टभिः पुण्याः स्युः खन्दपाः शनेः१६ उभयतो राश्यन्तयोः संक्रमे। अतो यो जैमिनिवाक्ये चान्द्रीवतसः पलसप्तयुक्ता गुरोरितिपाठो माधवादिभिरपाठि तथा हेमाद्रिणापि द्विनागनाड्यः इति पदे नागा अष्टौ द्विराहता नागा द्विनागाः षोडशनाडिकाः शनैश्चरसंक्रान्तौ पुण्यकाल इति यत् व्याख्यातवान् तदुभयमपास्तं भवति तथा रामचन्द्राचार्या अपि कालनिर्णयदीपिकायां हेमाद्र्यादिमूलकमसमर्थं स्वपद्येनोपानिबध्नात् अतश्चिन्त्योक्तयोगेयाः। तस्मात्सर्वग्रहाणां राशिनक्षत्रयोः संक्रान्तिषु पुण्यकालताप्यस्ति। भास्करोऽपि "रवेस्तु ता पुण्यतमाः" इतिवदचन्द्रादिसंक्रान्तिषु नाड्यः पुण्या इत्यसूचयत्। अतिशायने तमपिति पाणिनिवचनात् "चन्द्रः स्वसंक्रान्तिगोमित्रफल विपन्ने" इति। सूर्यादिसंक्रान्तिसाधारणं तत्र सकलसंक्रान्तिषु दिनरात्रिविष्णुपदादिभेदेन सूर्यस्य क्रमवन्निर्णयोऽध्येव। एतत्संक्रान्तिमान्यता हि गुर्जरदेशेऽस्तीत्यलं प्रसक्तानुप्रसक्तेन। इति सकलग्रहसंक्रान्तिनिर्णयः" पी॰धा॰

करणभेदेऽर्कसंक्रान्तिफलं तत्रैव

नारदः "निविष्टो वणिजे विष्ट्यां बालवे च बवे गरे। कौलवे शकुनौ भानुः किंस्तुघ्ने चोर्द्ध्वसंस्थितः। चतुष्पात्तैतिले नागे सुप्तः क्रान्तिं करोति सः। धान्यार्घवृष्टिषु सर्वं श्रेष्ठ हीन भवेत्क्रमात्" क्रान्तिं संक्रान्तिम्। रत्नमालायामपि "चतुष्पदे तैतिलनागयोश्च सुप्तो रविः संक्रमणं करोति। विष्ट्यां बवाख्ये च गराह्वये च स बालवाख्ये वणिजे निविष्टः। किंस्तुघ्ननाम्नि शकुनावपि कौलवाख्ये चोर्द्ध्वस्थितस्य खलु संक्रमणं रवेः स्यात्। धान्यार्घवृष्टिषु भवेत् क्रमशस्तदनिष्टमध्येष्टतेति मुनयः प्रवदन्ति पूर्वे" इति।

"संक्रान्तौ ग्रहणर्क्षं वा जन्मन्युभयपार्श्वयोः। नेष्टं त्रयं षट्शुभदं पर्यायाच्च पुनःपुनः। हानिर्वृद्धिः स्थानहानिस्तथा प्राप्तिरिति क्रमात्" नारदेनोक्तम्।

संक्रान्तेर्यन्नक्षत्रं ग्रहणनक्षत्रं वा यदि जन्मभं भवेद्य वा ताभ्यामुभयपार्श्वगतं जन्मभं भवेत्तदा अनिष्टमेव नक्षत्रत्रयं निषिद्धं ततो नक्षत्रषट्कं शुभं ततस्त्रिकेऽर्थहानिस्ततः षट्के वृद्धिः ततस्त्रिके स्थानहानिस्ततः षट्सु वृद्धिः षट्सु स्थानप्राप्तिरिति। अतएव पठन्ति दाक्षिणात्याः "संक्रान्त्यधरनक्षत्राद्गणयेज्जन्मभावधि। त्रिकं षट्कं त्रिकं षट्क त्रिकं षट्कमिति क्रमात्। पन्थाभोगो व्यथा वस्त्रं हानिश्च विपुलं धनम्" इति त्रिक शुभ षट्कमशुभमिति फलितोऽर्थः" पी॰धा॰। अधिकमयनसंक्रान्तिशब्दे ३२९९०दृश्यम्।

स्थूलतया मेषादौ रविसंक्रान्तेर्वारदण्डाद्यानयनप्रकारः ज्यो॰त॰ उक्तो यथा

"नवाष्टशक्र१४८९हीनेन शकाब्दाङ्केन पूरिताः। भूवेदचन्द्रावेकाब्धी कुरामौ वेदयुग्मकौ। १।४१।२१।२१।२४ अङ्का अनुपदादेस्तु सप्ता लब्धाङ्कमिश्रिताः। दशांशात् अब्धौ हृयेषू च १०।५७ पला॰द्युत्वा ततः पुन। सप्तावशिष्टा वाराः स्युस्ततो दण्डादिकाः परे। मेषसंक्रमणे भानोः सिद्धान्तस्फुटसम्मताः। भुजो वह्निमूरामाग्नी २।५६।१३ कालोजातिर्गजाब्धयो। ६।२२।१८ रामचन्द्रोऽग्नियुग्मश्च ३।१।२३ तर्कोऽङ्कदृक् नगाशुगौ। ६।२९।५९ द्वावङ्कदृग् वेदबाणा २।२९।५४ अब्धिनीपशरौ शराः। ४।५५।१३ पक्षागवेदौ शून्येन्दू ६।४८।१० एक शैलभुजौ शराः। १।१७।५। द्वौ षडग्नी तथा काला २।३६।६ अब्धीरामः शरावनी। ४।३।१५। पक्षाग्नीषू तथा रुद्रा ५।५३।११ मेषसंक्रमवारतः। अब्दैर्योज्या वृषादेस्तु वाराद्याः संक्रमे रवे"।

राशिभेदे संक्रान्तिनामभेदः तत्संक्रमकाले स्नानदानस्य पुण्यातिशयः क्रान्तिचक्रस्थानविशेषस्थितौ फलभेदश्च तत्रोक्तो यथा "मकरकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने। विषुवती तुला-

ष्टारार्थं कृता पूर्वैः"। तन्नामाकं पु॰-नामान्तराणां तानि यथा "एकं दश शतं चैव सहस्रमयुतं तथा। लक्षं च नियुतञ्चैव कोटिरर्बुदमेव च। वृन्दः खर्वो निखर्वश्च शङ्खपद्मौ च सागरः। अन्त्यं मध्यं परार्द्धं च दशवृद्ध्या यथोत्तरम्"। संख्या च गणनव्यवहारे हेतुः यथोक्तं "गणनव्यवहारे तु हेतुः सङ्ख्याभिधीयते। नित्येषु नित्यमेकत्वमनित्येऽनित्यमुच्यते। द्वित्वादयः परार्द्धान्ता अपेक्षाबुद्धिजा मता। अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिताः। अपेक्षाबुद्धिनाशाच्च तेषां नाशो निरूपितः। अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरुच्यते" भाषा॰ पर्य्याप्तिसम्बन्धेनैव अनेकाश्रिता समवायेन तु प्रत्येकाश्रितेति बोध्यम्।

सङ्ख्यात त्रि॰ सम्+ख्या-क्त। १कृतसङ्ख्ये २गणिते ३सम्यक् ख्याते च तेन राशिशब्दस्य समासे अच् सङ्ख्या॰। संख्यातराशः। [४परिकृते अमरः। २संख्यायुक्ते त्रि॰।

सङ्ख्यावत् पु॰ सङ्ख्या विचारणाऽस्त्यस्य मतुप् मस्य वः।

सङ्ख्येय त्रि॰ सङ्ख्यायतेऽसौ सम्+ख्या-यत्। १गणनीये २संख्याकरणयोग्ये।

सङ्ग पु॰सन्ज-भावे घञ्। १मेलने २सम्बन्धे ३विषयादिरागे च"ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते" गीता।

सङ्गणिका सम्+गण-भावे ण्वुल्। अप्रतिरूपकथायां त्रिका॰

सङ्गत न॰ सम्+गम-भावे क्त। १सौहार्दे २सङ्गतौ च। कर्त्तरि क्त। ३मिलिते त्रि॰। ४सङ्गतियुते ५युक्तिसंसिद्धे अमरः।

सङ्गति स्त्री सम्+गम-क्तिन्। १सङ्गमे २मेलने न्यायोक्ते अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषये "सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा। निर्वाहकैककार्य्यत्वे षोढा सङ्गतिरिष्यते" इत्युक्ते ३प्रसङ्गादौ पदार्थे च।

सङ्गम पु॰ सम्+गम-घञ् न वृद्धिः। १सङ्गतौ २स्त्रीपुंसयोः सम्भोगे पु॰न॰ अमरः। ३नद्यादेर्नद्यादियोगस्थाने च "लक्षासागरसङ्गम" इति पुराणम्।

सङ्गर पु॰ सङ्गीर्य्यते सम्+गॄ-भावादौ अप्। १आपदि २प्रतिज्ञायां ३युद्धे च अमरः। कर्त्तरि अच्। ४क्रियाकारके ५विषे मेदि॰ ६शमीवृक्षफले न॰ मेदि॰।

सङ्गव पु॰ सङ्गता गावो दोहनायात्र काले नि॰। "प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु" इति दक्षोक्ते प्रातःकालानन्तरं मुहूर्त्तत्रयात्मके कालभेदे।

सङ्गिन् त्रि॰ सन्ज-घिनुण्। सङ्गयुक्ते स्त्रियां ङीप्।

सङ्गीत न॰ सम्+गै-क्त। १दर्शनार्थे नाट्यगीत[illegible] हेमच॰। २तत्प्रतिपादकग्रन्थे च। कर्म्मणि क्त। ३सम्यग्गीते त्रि॰। सङ्गीतशास्त्राणि च नानाविधानि मूलग्रन्थकर्त्तारश्चत्वारः भरतहनुमत्सोमेश्वर[illegible] हनूमद्ग्रन्थस्यैव लोकेऽधुना बहुलप्रचार। [illegible] च स्वराध्यायः रागाध्यायः तालाध्यायः न[illegible] भावाध्यायः कोकाध्यायः हस्ताध्यायश्चेति स[illegible] सङ्गीतसारादौ विस्तरो दृश्यः। [illegible]

सङ्गीति स्त्री सम्+गै-क्तिन्। १सम्यग्गाने २[illegible]

सङ्गीर्ण त्रि॰ सम्+गॄ-क्त। स्वीकृते अमरः।

सङ्ग्रह पु॰ सम्+ग्रह-अप्। १सञ्चये २संक्षिप्तार्थकवाक्यान[illegible] सङ्कलने च "विस्तरेणोपदिष्टानामर्थानां सूत्र[illegible] निबन्धोय समासेन संग्रहं तं विदुर्बुधा"। [illegible] ४ग्रहणे ५ग्रहणे ६संक्षेपे मेदि॰७सहौ विश्व॰ [illegible] ८महोद्योगे नानार्थरत्नमा॰। १०व्याडिप्रणीते व्याकरण ग्रन्थभेदे "सङ्ग्रहेऽस्तमुपागते" वाक्यपदीयम्।

सङ्ग्रहणी स्त्री संश्रिता ग्रहणी। ग्रहणीरोगभेदे।

सङ्ग्राम युद्धे अद॰चु॰उभ॰सक॰ सेट्। सङ्ग्रामयति [illegible] असङ्ग्रामत् त। अत्राफलवत्कर्त्तर्य्यपि आ॰ इत्येके।

सङ्ग्राम पु॰ सङ्ग्राम-भावे अच्। युद्धे अमर॰।

सङ्ग्रामपटह पु॰ ६त॰। रणवाद्यभेदे त्रिका॰।

सङ्ग्राह पु॰ संगृह्यते सम्+ग्रह-कर्म्मणि घञ्। म[illegible] मुष्टिबन्धस्थाने अमरः।

सङ्ग्राहिन् पु॰सम्यक् गृह्णाति मलम् सम्+ग्रह-णि[illegible] १कुटजवृक्षे राजनि॰। [illegible] च त्रि॰। [अमरः। [illegible]

सङ्घ पु॰ सम्+हन-अप् घनादेशः। १सजातीयप्राणिसमू[illegible]

सङ्घचारिन् पु॰ सङ्घीभूय चरति [illegible] हेमच॰। २सङ्घीभूयचारिणि जन्तुमात्रे [illegible]

सङ्घजीविन् पु॰ सङ्घेन जीवति जीव-[illegible] जीविनि ग्रातीने हेमच॰।

सङ्घट्ट पु॰ सम्+घट्ट-भावे घञ्। १परस्परस[illegible] कर्त्तरि अच्। ३लतायां शब्दर॰। [illegible]

सङ्घट्टन न॰ सम्+घट्ट-ल्युट्। १मेलने [illegible] याञ्च। युच्। तत्रैव स्त्री। [illegible]

सङ्घतल पु॰ सङ्घे संहते मिलित [illegible]

सङ्घपुष्पी स्त्री सङ्घानि संहतानि [illegible] तको पुष्पवृक्षाम् (धाइ फुल) [illegible]

**सङ्घर्ष** पु० सम्+घृष-घञ्। १परस्परघर्षणे २स्पर्द्धायां ३सं मर्दे च शब्दर० ।

**सङ्घशस्** अव्य० सङ्घ+वीप्सार्थे-शस्। भूरिश इत्यर्थे ।

**सङ्घाटिका** स्त्री सङ्घटयति सम्+घट-णिच्-ण्वुल्। १युग्मे २कुट्टन्या ३जलकण्टके मेदि० । ४घ्राणे विश्व० ।

**सङ्घात** पु० सम्+हन-घञ्। १समूहे २नरकभेदे अमरः । ३सम्यग्हनने मेदि० ४दृढसंयोगे ५कफे च राजनि० ।

**सङ्घातपत्रिका** स्त्री सङ्घातयुक्तं पत्रमस्याः कप् अत इत्वम्। शतपुष्पायां राजनि० ।

**सचि(ची)** स्त्री षच-इन् वा ङीप्। इन्द्राण्यां रामाश्रम० [रोगभेदे राजनि० ।

**सचिल्लक** पु० सह क्लिन्नेन सहस्य स० कप् नि०। क्लिन्न-नेत्रे (पिचुटियुक्तनेत्रे) शब्दच० ।

**सचिव** पु० षच-इन् तथा सन् याति-क। १सहाये २म-न्त्रिणि अमरः ३२१ पृ० दृश्यम्। ४कृष्णधुस्तूरे राजनि० ।

**सचिवामय** पु० सचिवं सहाय आमयो यस्य । विसर्पे

**सचीनन्दन** न० ६त०। वैष्णवसम्प्रदायप्रवर्त्तके नवद्वीपाविर्भूते वैष्णवाचार्य्यभेदे तदाविर्भावश्च "शाके मुनिव्योमयुगेन्दुमाने(१४०७) पुण्ये तिथौ फाल्गुनपौर्णमास्याम् । त्रैलोक्यभाग्योदयपुण्यकीर्त्तिर्देवः सचीनन्दन आविरासीत्" चैतन्यचन्द्रोदयः। अस्य कर्त्ता गुणभगवद्वक्ता रत्न वैष्णवमन्यन्ते तत्र न किञ्चित् प्रमाणमुपलभामहे

**सचेतन** त्रि० सह चेतनया सहस्य स०। विशिष्टज्ञानयुक्ते ।

**सचेष्ट** पु० सचते सच-अच् तथाभूतः सन् इष्टः। १आम्रे शब्दमा०। सह चेष्टया सहस्य सः। २चेष्टान्विते त्रि० ।

**सच्चारा** स्त्री सन् चारो गात्रानुलेपने विष्वग्गतिरस्याः । हरिद्रायां शब्दच० ।

**सच्चिदानन्द** पु० सन् नित्यं चित् चैतन्यमानन्दः त्रिपद कर्म०। १नित्यज्ञानसुखमये ब्रह्मणि वेदा०। ६त०। २तद्युते ईश्वरादौ त्रि० न्यायमतम् ।

**सच्छूद्र** पु० कर्म०। गोपनापितादौ शूद्रभेदे "सच्छूद्रौ गोपनापिताविति" स्मृति । [अमरः ।

**सजम्बाल** त्रि० सह जम्बालेन सहस्य स०। पङ्कयुक्ते देशे

**सजाति** पु०समाना जातिरस्य समानस्य सः। सवर्णेन सवर्णाया मूढायाम् उत्पादिते पुत्रे । २तुल्यजातौ त्रि० "सवर्णेभ्यः सवर्णासु जायन्ते च सजातय" मिता०स्मृति० ।

**सजातीय** त्रि० समानां जातिमर्हति छ समानस्य स। समानधर्मयुक्ते अमरः ।

**सजुष्** अव्य०सह जुषते क्विप् सहस्य सः। १सहार्थे जुषा-हलादौ र। सजुः अव्यो०। "सजुःशल्य रतिं वसेदिति" भट्टि०। २प्रीतियुक्ते ३सेवायुक्ते च त्रि०४तापसे वाचस्पत्य०

**सज्ज** त्रि०षस्ज-अच्। १उद्युक्ते २वर्मिते अमर। ३सम्भृते विश्व० ४निश्चिते शब्दर०। भावे अ। ५आयोजने ६वेशे च स्त्री यतोजायते जन-ड। ७साधुजाते त्रि० ।

**सज्जन** न०षस्ज-णिच्-ल्युट्। १रक्षार्थं सैन्यस्थापने अमर० २घट्टे (घाटी) मेदि०। ३आयोजने। सन् जनः। ४सौजन्यवति जने पु०"निजाचाररताश्चैव ये कुर्वन्ति वेदसम्मतम्। पापाभिलाषरहिता सज्जनास्ते प्रकीर्त्तिताः" पद्मपु० "कुरु सज्जनरञ्जनमिति" उद्भट । ५सत्कुलोद्भवे च पु०। षस्ज-णिच्-युच्। ६गजपादीनामारोहणार्थं गजभूषाकरणादौ स्त्री अमर ।

**सज्जित** त्रि०सज्जा जातास्य तार०इतच् षस्ज् णिच्-कर्मणि क्त वा। १कृतवेशे २भूषिते ३वर्मिते च। [देवीपु० ।

**सञ्च** सञ्चीयतेऽत्र सम्+चि-ड। लेखनार्थे पत्रभेदे (साँच)।

**सञ्चत्** त्रि० सम्+चत-क्विप्। प्रतारके सि०कौ० ।

**सञ्चय** पु०सम्+चि-अच्। १समूहे अमर। २संग्रहे च। ल्युट्। सञ्चयन। सङ्ग्रहे न०। [चीदतीति पुराणम्

**सञ्चयिन्** पु० सम्+चि-इनि। सङ्ग्रहकारके "सञ्चयी नाव-

**सञ्चा(चा,र** पु० सञ्चरत्यनेन सम्+चर-घञर्थे करणे क घञ् वा। १सेतौ रत्नमा० २देहे हेमच०। भावे घञ्। ३प्रहारे राश्यन्तरगमने ४सम्यग्गतौ च ।

**सञ्चाय्य** पु० सञ्चीयतेऽग्निरत्र सम्+चि-ण्यत् नि०। यज्ञभेदे ।

**सञ्चारिका** स्त्री सञ्चारयति नायकयोर्वार्त्ताम् सम्+चर-णिच्-ण्वुल्। १दूत्याम् अमर०। २कुट्टिन्याम् ३युग्मे ४घ्राणे च मेदि० ।

**सञ्चारिन्** पु० सम्+चर-णिनि। १धूपे त्रिका० २वायौ शब्दच०। अलङ्कारोक्ते शृङ्गारादिरसाद्यनुगुणे ३भावभेदे च भावभेदश्च व्यभिचारिभाव। "नानाभिनयसम्बन्धात् भावयन्ति रसान् यतः। तस्माद्भावा अमी प्रोक्ता स्थायिसञ्चारिसात्त्विकाः"। "व्यक्तः सञ्चारिणा तथेति" सा०द०। ४सञ्चारकारके त्रि० स्त्रियां ङीप्। "सञ्चारिणी दीपशिखेवेति" रघु। सा च ५हंसपद्याम् राजनि० ।

**सञ्चाली** स्त्री सञ्चलति सम्+चल-अ गौरा० ङीष्। गुञ्जायां त्रिकाण्डशेष ।

**सञ्चित्रा** स्त्री प्रा० स०। मूषिकपर्ण्यां शब्दर० [कर्मभेदे च

**सञ्चित** त्रि० सम्+चि-क्त। १संगृहीते २अनारब्धफलके

**सञ्ज** पु॰ सम्+जन–ड। चतुर्मुखे १ब्रह्मणि २शिवे च मेदि॰ ३छाग्यां स्त्री त्रिका॰।

**सञ्जय** पु॰ भारतप्रसिद्धे धृतराष्ट्रसारथिभेदे।

**सञ्जवन** न॰ सम्+जु–युच्। परस्पराभिमुखतया स्थिते च- तुःशाले गृहे अमरः।

**सञ्जीवन** न॰ सम्+जीव–ल्युट्। १चतुःशालगृहे शब्दर॰। २सम्यक्प्राणधारणे च। सञ्जीवयति सम्+जीव–णिच्- ल्युट्। ३ओषधीभेदे स्त्री ङीप्।

**सट** न॰ स्त्री सठ–अच् पृषो॰ ठस्य टः। १व्रतिनां केशसङ्घाते २जटायाम् शब्दर॰। ३शिखायां ४सिंहादेः केशरे च मेदि॰ “सटच्छटाभिन्नघनेनेति” माघः। [ङीप्।

**सटाङ्क** पुस्त्री॰ सटा अङ्को यस्य। सिंहे शब्दर॰ स्त्रियां

**सटि(टी)** स्त्री सठ–इन् वा ङीप् पृषो॰। १शट्यां शब्दरत्ना॰ स्वार्थे क। २गन्धपत्रशट्यां राजनि॰। सट–इन् ङीप्। पृषो॰। सटीत्यत्र। ठान्तः तत्रार्थे राजनि॰।

**सट्वा** स्त्री सठ–व पृषो॰। १पक्षिभेदे २वाद्ये सं॰क्षिप्तसा॰।

**सठ** श्वठार्थे गतौ सत्कारे असत्कारे च चुरा॰ उभ॰ सक॰ सेट्। साठयति ते सोपदेशत्वमेव न्याय्यम्।

**सणसूत्र** न॰ शणसूत्र+पृषो॰। शणसूत्रे रायमुकुटः।

**सण्डिश** पु॰ सदंश+पृषो॰। सन्दंशे (साड़ाशि) “सण्डिशैरप- कृष्यन्ते नरैर्यस्यैर्सुखान्तत.” मार्कण्डेयपु॰ १४अ॰।

**सण्डीन** न॰ सम्+डी–क्त। पक्षिणां सङ्गत्य गमनरूपे गति- भेदे अमरः।

**सत्** त्रि॰अस–शतृ। १सत्ये २साधौ ३पूजिते ४धीरे ५प्रशस्ते ६विद्यमाने च अमरः। स्त्रियां ङीप्। सा च ७पति- व्रतायां स्त्रियां ८दक्षकन्याभेदे “सती सती योगवि- सृष्टदेहेति” कुमारः। ९सौराष्ट्रमृदि हेमच॰ १०ब्रह्मणि न॰ “ओंतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः” इति गीता। ११आदरे अव्य॰ “सदसती आदरानादरयो- रिति” पाणिनि उप॰स॰“सत्कृत्य” सि॰कौ॰। पतिव्र- तापरत्वे सं॰ज्ञात्वात् तस्याभावः त्व “सतस्तोऽगुणवचनस्य” पा॰न पुंस्त्वः सतीत्वम् “तेन नारद! नारीणां सतीत्व- मुपजायते” पुराणम्।

**सतत** न॰ सम्+तन–क्त समोऽन्त्यलोप। १निरन्तरे २तद्वति त्रि॰ अमर॰। [“सततत्वतान्यथा प्रथा” वेदा॰प॰।

**सतत्त्व** न॰ सह प्रशस्तं तत्त्वेन। १स्वभावे हेमच॰ २यथार्थे

**सतानन्द** पु॰ गौतमपुत्रे अहल्यागर्भजे मुनिभेदे शब्दच॰।

**सतीन** पु॰ सतीं नयति नी–ड। १वंशभेदे शब्दच॰ (क्षुद्र मटर) २कलायभेदे भरत॰। स्वार्थे क। तत्रैव अमरः।

**सतीर्थ्य** पु॰ समाने तीर्थे गुरौ वसति यत् समानस्य स। परस्परैकगुरुके छात्रे अमरः। ६त॰। निर्यकारोऽप्यत्र- मतार्थे। [व्याडि॰। २वंशे हारा॰ ३वायौ रायमु॰।

**सतील** पु॰ सतीं लज्जयति लज्ज–ड। (क्षुद्रमटर) १कलाये

**सतीलक** पु॰ सतील इव कायति कै–क, सह तिलेन तिलचि- ह्नेन कप् पृषो॰ दीर्घः। १वंशे (क्षुद्रमटर) २कलायभेदे च अमरः। [दीर्घः। कलायभेदे (तेओड़ा) अमरः।

**सतीला** स्त्री सह तिलेन तिलचिह्नेन सहस्य सः पृषो॰

**सतेर** पु॰ सन–एर तान्तादेशः। सतुषे संक्षिप्तसा॰।

**सत्कदम्ब** पु॰ नित्यक॰। कैलिकदम्बे शब्दच॰।

**सत्कर्त्तृ** पु॰सत्+कृ–तृच्। १विष्णौ विष्णुस॰२सत्कारके त्रि॰।

**सत्कर्म्मन्** न॰ कर्म॰। वेदादिविहिते यागादौ कर्मणि।

**सत्काञ्चनार** पु॰कर्म॰। रक्तकाञ्चने शब्दच॰। [स्त्रियां ङीप्

**सत्काण्ड** पुस्त्री॰सत्काण्डं शब्दव्यापारोऽस्य। चिल्ले शब्दच॰

**सत्कार** पु॰ सत्+कृ–घञ् उप॰स॰। १सम्मानने २पूजने च।

**सत्कार्य्यवाद** पु॰ ६त॰। कार्य्यस्य सत्त्वनिर्णायके वादे कथा- भेदे स च वादः उत्पत्तिशब्दे ११०८पृ॰ दृश्यः।

**सत्कृत** त्रि॰ सत्+कृ–क्त। १पूजिते २कृतसम्माने च।

**सत्क्रिया** स्त्री सत्+कृ–श। १सत्कारे २सम्मानने ३पूजने च

**सत्तम** त्रि॰ अतिशयेन सन् तमप्। अतिशयसाधौ अमर॰।

**सत्ता** स्त्री सतोभावः तल्। १द्रव्यगुणकर्मवृत्तौ २जातिभेदे “द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते” भाषा॰। जाति- शब्दे ३०८१ पृ॰ दृश्यम्। ३विद्यमानतायाञ्च विद्यमा- नत्व च कालसम्बन्ध.। आत्मधारणानुकूलव्यापार इति शब्दिकाः “आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते। अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मक” हरिः। तत्र विद्यमानता च वेदान्तमते त्रिविधा पारमार्थिकी१ ब्रह्मणः त्रैकालिकाबाध्यत्वरूपा व्यावहारिकी। घटादीनां सा च तत्त्वज्ञानबाध्या प्रातीतिकी३ शुक्तिरजतादेः सा चाधिष्ठानसाक्षात्कारनाश्या। ब्रह्मसत्तयैव सर्वेषां स- त्ताव्यवहारः सदुत्पन्नत्वात् इति वेदान्तिन॰।

**सत्त्र** न॰ सद–ष्ट्रन्। १स्थाने २यज्ञभेदे ३सदादाने ४आच्छा- दने ५अरण्ये ६कैतवे मेदि॰ ७धने दम्भे ८दाने १०स- रसि नानार्थकोषः। सदादानञ्च सदक्षिणं सततासदानम्। यज्ञभेदश्च द्वादशाहादिसाध्यः ज्योतिष्टोमादिः यथोक्तं कात्या॰श्रौ॰१२।३।४। तद्भाष्यादौ “द्वादशाहः सत्त्र- महीनश्च”सू॰ “सत्त्ररूपः अहीनरूपश्च भवति द्विविधः।

आपत उपयन्तीति सत्रस्य लिङ्गं यजते इत्यहीनस्य। अत्र विशेषमाह "द्वादशाहमृद्धिकामा उपेयुरिति तथा त्रयोदशरात्रमासीरन्निति सत्त्रलिङ्गम् द्वादशाहेन प्रजाकामं याजयेदित्यहीनलिङ्गम्। अस्यानुकथनप्रयोजनम् सत्त्रे सत्त्रात्मको धर्मो दाढर्त्येन प्रवर्त्तते अहीने चाहीनात्मकः। "उभयतोऽतिरात्रं सत्त्रमुपरिष्टादहीनस्य" सू॰ उभयत इत्यादावन्तेऽतिरात्रौ यस्य तदुभयतोऽतिरात्रम् उपरिष्टात् अन्तएव। "यजमानाः सर्वे सत्त्रेषु" सू॰। कर्त्तारो भवन्ति य ऋत्विजस्ते यजमाना इत्यनेनार्त्विजीनान् पदार्थान् लक्षयानूद्य यजमानाः कर्त्तृत्वेन विधीयन्ते। "अदक्षिणानि च स्वामियोगात्" सू॰। सत्त्राणि भवन्ति न हि कश्चिदात्मनैवात्मानं परिक्रीणाति। अत्र हि स्वामिन एवार्त्विज्यम् अनुपपन्नश्चात्मपरिक्रयः "गृहपतिर्याजमानमयुक्तत्वात्" सू॰ याजमानं यत्कर्म तद्गृहपतिः करोति कर्मान्तरे तस्यायुक्तत्वात् इतरेषां चाध्वर्य्यवादिषु योगात्। "दर्शनाच्च" सू॰ दृश्यते चायमर्थः तस्माद् यदि बहवो प्रयक्षेयुरिति। "सर्वे संस्कारान्" सू॰ यद्यत् संस्कारकं याजमानं यथा वपनादि तत्सर्वे कुर्युः तेन हि यजमाना संस्क्रियन्ते। "दर्शने वचनात्" सू॰ यत्तु दर्शनमुक्तम् तद्वचनम् गृहपतये एकस्मै दानमुक्तम् वचन किमिव न कुर्य्यात्। "अविभवति गृहपत्यन्वारम्भः" सू॰ न सम्भवत्यनेककर्त्तृके पदार्थे वेदत्वमाग्न्यन्वाधानादौ गृहपतेरन्वारम्भः सर्वैः कर्त्तव्यः। "पदार्थेष्वेकं कृतत्वात्" सू॰ यत् पुनः कृत्स्नमभिनिर्वर्त्त्यमेव कर्म यथा पात्रासादनमाज्यावेक्षणं वा तत्रासत्स्वेव कर्त्तृत्वम् कृतत्वात् पदार्थस्य। परार्थे यजमानकर्त्तृके आज्यावेक्षणादौ एको गृहपतिः कृतः कृतत्वात् एकेनापि कृतः कृत एव यतः। "अग्निं चेष्यमाणा समारोह्य गृहपतिमध्ये मन्त्यर्थेन इतरे दक्षिणोत्तरा" सू॰ समारोहेति च पूर्वकालतामात्रे ल्यबादेशो न समानकर्त्तृकतायाम्। "गृहपत्याहवनीयेऽङ्गारप्रासनम्" सू॰। "तत्र प्राजापत्यः पशुः" सू॰। तत्र विहारे प्राजापत्यः पशुर्भवति। पुनर्ग्रहणाश्वाहर्गणे प्राजापत्यस्य नियमः तथा चाश्वमेधे नियमदर्शनं भवति प्राजापत्यमालभेतेति। तत्र साधारणीकृते विहारे। "आज्येन पत्नीशालां गृहपतिवर्जम्" सू॰। [व्रात्यें अमरे पाठान्तरम्।

सत्त्रम् अव्य॰ सद्-ष्ट्रन्। १छद्मार्थे जटा॰। स्वा। सत्राप-

सत्त्रशाला स्त्री ६त॰। अन्नजलादेर्दानार्थं कल्पिते गृहे हेमच॰। [श्रीकृष्णश्वशुरे सत्यभामाजनके राजभेदे।

सत्त्राजित् पु॰ सत्त्रेणाजयति लोकान् आ+जि–क्विप्।

सत्ति पु॰ सद्–बा॰ ति। १मेघे २गजे ३जयशीले त्रि॰ उणादिकोष। [अमरः २गृहस्थे च।

सत्त्रिन् पु॰ सत्त्रं गृहं यज्ञो वा विद्यतेऽस्य इनि। १गृहपतौ

सत्त्व न॰ सतो भावः त्व। १साङ्ख्यसिद्धे प्रकाशादिसाधने प्रकृत्यवयवे पदार्थे प्रकृतिशब्दे दृश्यम् "सत्त्वं लघु प्रकाशकमिष्टम्" सां॰का॰। अस्य द्वितकारः पृषो॰ एकतकारः। २द्रव्ये ३प्राणेषु ४व्यवसाये ५बले ६स्वभावे ७पिशाचादौ शब्दच॰ दमित्ते मेदि॰ "सत्त्वे तप्यमाने तत्प्रमुक्तः पुरुषोऽपि तप्यत इव" पात॰ भा॰। ८रसे १०आयुषि ११धने। १२आत्मनि च शब्दच॰ १३चित्तारूपे १४जातिभेदे १४विद्यमानतायाञ्च द्वितकारः। १५जन्तुषु पु॰ स्त्री॰ अमर।

सत्पत्त्र न॰ सत् शोभनं पत्त्रम्। १पद्मस्य नवदले शब्दच॰। कर्म॰। २सुन्दरदले त्रि॰। [विहिताचारे च।

सत्पथ पु॰ कर्म॰ अच्समा॰। शोभनमार्गे अमरः २वेदादि॰

सत्पुत्त्र पु॰ कर्म॰। वेदादिविहितकार्य्यकर्त्तरि पुत्रे "पुन्नाम्नो नरकाद् यस्मात्त्रायते पितरं सुतः। सुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः" इत्युक्त्य कृतनरकतारणाय "ऋणमस्मिन् सन्नयति अमृतत्वञ्च विन्दति। पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्" इति वशिष्ठोक्तेश्चोपनयनाद्य च यत् पश्येदिति नियमविधानं तदकृतपुत्रकार्य्यपुत्रपरम्। सत्पुत्रस्तु मुखदर्शनं विनापि नरकनिस्तारकः। तथा च विष्णुपु॰ "सत्पुत्रेण तु जातेन वेनोऽपि त्रिदिवं ययौ। पुन्नाम्नो नरकात्त्रातः स तेन सुमहात्मना"। ब्रह्मपुराणेऽपि "सत्पुत्रेण भो विप्राः सत्पुत्रेण महात्मना। त्रातः स (वेनः) पुरुषव्याघ्र पुन्नाम्नो नरकात्तदा" शु॰त॰।

सत्प्रतिग्रह पु॰ सद्भ्यः प्रतिग्रहः। साधुदत्तधनस्य प्रतिग्रहे "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। विभागः कर्मयोगश्च सत्प्रतिग्रह एव च" इति स्मृतिः।

सत्प्रतिपक्ष पु॰ कर्म॰। तुल्यविरोधिनि १प्रतिवादिनि २न्यायोक्ते हेतुदोषे हेत्वाभासभेदे। स च बाधोपस्थितिसमर्थपरामर्शकालीनसाध्यविरहसमर्थपरामर्शविषय। यत्र साध्याभावसाधकं हेत्वन्तरं विद्यते सः। यथा शब्दोऽनित्यः श्रावणत्वाच्छब्दत्ववत्। शब्दोऽनित्यः कार्य्यत्वात्

पटवत्। अन्ये तु अगृहीताप्रामाण्यकसाध्यवत्त्वेनोपस्थितविषय इति वदन्ति। साध्याभावव्याप्यवत्पक्षः। साध्यवदन्यत्वव्याप्यवत्पक्षः। पक्षनिष्ठ साध्याभावव्याप्यः पक्षनिष्ठ साध्यवद्भेदव्याप्यो वा। साध्यवद्वृत्तिव्याप्यवत्पक्षः। पक्षनिष्ठः साध्यवद्वृत्तिव्याप्य। पक्षवृत्त्यभावप्रतियोगित्वव्याप्यवत्साध्यम्। साध्यनिष्ठः—पक्षवृत्त्यभावप्रतियोगित्वव्याप्यो वा। "विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षिता" भाषा०। तुल्यबलयोरेव सत्प्रतिपक्षत्वं नातुल्यबलयोः तेनैकतरत्र तर्कादिबलसत्त्वे तस्यैवान्यतरबाधकतेति बोध्यम्।

**सत्फल** पु० सन्ति शोभनानि फलान्यस्य। १दाडिमवृक्षे शब्दच०। २शुभफलयुते त्रि०।

**सत्य** न० सते हितं यत्। १सत्ययुगे २शपथे ३याथार्थ्ये च ४तद्वति त्रि० मेदि०। "यथार्थकथनं यच्च सर्वलोकसुखप्रदम्। तत् सत्यमिति विज्ञेयमसत्यं तद्विपर्ययः" पद्मपु० सर्वलोकसुखप्रदमिति न लक्षणघटकं सत्यस्याप्रियत्वे कथननिषेधात् अतएव मनुनोक्तं "सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्"। ५अश्वत्थवृक्षे ६नान्दीमुखश्राद्धीयदेवभेदे च पु० "इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः" श्रा०त०धृतवचनम्। ७सिद्धान्ते शब्दर०। शपथरूपसत्यापालने दोषो यथा "कृत्वा शपथरूपं यः सत्यं हन्ति न पालयन्। स कृतघ्नः कालसूत्रे वसेदेव चतुर्युगम्। सप्तजन्मसु काकश्च सप्तजन्मसु पेचकः। ततः शूद्रो महाव्याधिः सप्तजन्मस्वतः शुचिः" ब्रह्मवै० प्र० २८अ०। ८परमात्मनि "सत्यं ज्ञानमानन्दं ब्रह्मेति" श्रुतिः। ९श्रीरामे पु० शब्दर०। १०विष्णौ "औत्तमेऽन्तरे विष्णुः सत्यैः सह सुरोत्तमैः। सत्यायामभवत् सत्यः सत्यरूपो जनार्दनः" कूर्मपु० ४८अ०। ११तन्मातरि स्त्री। १२तपोलोकादूर्द्ध्वस्थे लोके सत्यलोकशब्दे दृश्यम्। सन्ति पृथिव्यप्तेजांसि च त्यौ वाय्वाकाशौ च सत्+त्यद् निरु० समा० द्वितकार। १३भूतपञ्चके "सच्च त्यच्च भूतपञ्चकं सत्यमित्याचक्षते" श्रुतिः। सत्यत्वञ्च त्रिकालाबाध्यत्वमिति वेदान्तिनः यथार्थज्ञानविषयत्वं सत्यत्वमिति नैयायिकाः। सन्धिसन्ध्यंशाभ्यां सहितसत्ययुगमानं दैवमानेन १२०० वर्षाः मानुषमानेन १७२८००० वर्षाः।

**सत्यङ्कार** पु० सत्य+कृ—घञ् नि० मुम्। 'मयैतत् अवश्यं कर्त्तव्यमित्येवम्' सत्यकरणे सत्यापने (वायनादेर्या) अमर

**सत्यतपस्** पु० सत्यं तपोऽस्य। मुनिभेदे तस्यैव दुर्वाससो वरेण वेदव्यासरूपेणाविर्भावः तत्कथा वराहपु०।

**सत्यधृति** पु० शतानन्दपुत्रे ऋषिभेदे मत्स्यपु० ४८अ०।

**सत्यनारायण** पु० कर्म०। सङ्क्रान्त्यादिषु पूज्ये नारायणमूर्त्तिभेदे स्कन्दपु० रेवा० ४अ० तत्कथा दृश्या।

**सत्यपुर** न० सत्ययुक्तं पुरम्। विष्णुलोके।

**सत्यफल** पु० सत्यं सदातनं फलमस्य। बिल्ववृक्षे राजनि०।

**सत्यभामा** स्त्री सत्राजितोऽपत्यभूतायां श्रीकृष्णस्य भार्य्याभेदे शब्दच०।

**सत्यभारत** पु० वेदव्यासे त्रिका०।

**सत्यम्** अव्य० सत्+यत्। स्वीकारे।

**सत्ययुग** न० सत्यप्रधानं युगम् शाक० त०। सत्यप्रचुरे प्रथमे युगे

**सत्ययौवन** पु० सत्यं यौवनमस्य। विद्याधरे देवयोनिभेदे जटा०

**सत्यरत** त्रि० ७त०। सत्यवाक्यासक्ते हरिश्चन्द्रनृपपितरि पु० मत्स्यपु० १२अ०।

**सत्यलोक** पु० सत्यप्रचुरो लोकः। ऊर्द्ध्वस्थसप्तलोकमध्ये सर्वोपरिस्थे तपोलोकादूर्द्ध्वस्थे लोके।

"षड्गुणेन तपोलोकात् सत्यलोको विराजते। अपुनर्मारका यत्र ब्रह्मलोकाभिधः स्मृतः" विष्णुपु० २अ० ७अ०

**सत्यवचस्** पु० सत्यं वचोऽस्य। १मुनौ अमरः। २सत्यवचनयुक्ते त्रि०। सत्यवचनादयोऽप्यत्र।

**सत्यवत्** पु० सत्यं विद्यतेऽस्य मतुप् मस्य वः। १सावित्रीपतौ नृपभेदे भा०व०२९३अ०। २मुनिभेदे च। ३सत्ययुक्ते त्रि० स्त्रियां ङीप्। सा च ४व्यासस्य मातरि शब्दर०। ५नारदपत्न्यां ६ऋचीकमुनिपत्न्यां मेदि० कालिकापु० ८४अ०। [शब्दर०।

**सत्यवतीसुत** पु० ६त०। मत्स्यगन्धापुत्रे व्यासे मुनिभेदे

**सत्यवाच्** पु० सत्या वाक् यस्य। १ऋषौ शब्दच०। २काके त्रिका०। तस्य शब्देन हि शुभाशुभनिश्चयेन तस्य तथात्वम्। ३सत्यवदनशीले त्रि०। [धर्म्मारि।

**सत्यवादिन्** त्रि० सत्यं वदति वद–णिनि। यथार्थवाक्य

**सत्यव्रत** पु० सत्यं व्रतमस्य। १त्रिशङ्कुनामके राजभेदे मत्स्यपु० १२अ०। २सत्यव्रतपरे त्रि०। [२सत्यप्रतिज्ञे त्रि०

**सत्यसङ्कर** सत्यं सङ्करः प्रतिज्ञा यस्य। १कुवेरे त्रिका०।

**सत्यसन्ध** त्रि० सत्या सन्धा सन्धानं यस्य। १सत्याभिसन्धौ सत्यसन्धस्य तप्तपरशुग्रहणं छान्दोग्ये दर्शितम्। २श्रीरामे ४दशरथसुते भरते ५जनमेजयनृपे च पु० शब्दर०।

**सत्या** स्त्री १रामपत्न्यां २व्यासमातरि सत्यवत्यां शब्दर०। ३दुर्गायां ब्रह्मवै०पु० प्र०। ४द्रौपद्यां शब्दच०।

वृक्षे ३स्कन्दफलवृक्षे च मेदि०। ४विल्वे जटा०। ५षा-र्ताकभेदे स्त्री राजनि० टाप्। "सदाफला त्रिदोषघ्नी रक्तपित्तप्रसादनी। कण्डूकच्छूहरी चैव वार्त्ताकी गुणवत्तमा" राजव०।

**सदाभद्रा** स्त्री सदा भद्रमस्याः ५व०। गाम्भारीवृक्षे रत्नमा०।

**सदायोगिन्** पु०सदा युज्यते युज्-विनुण्। १विष्णौ त्रिका० २सदायोगयुते त्रि० स्त्रियां ङीप्।

**सदाशिव** पु० सदा शिवमस्मात् ५व०। महादेवे।

**सदुत्तर** न० कर्म०। १व्यवहारे प्रतिज्ञापत्रानुसारिण्युत्तरे ६त०। २सम्यगुत्तरे च। ३तद्वति त्रि०।

**सदृक्ष** त्रि० समानं दर्शनमस्य दृश+क्स समानस्य सादेशः। तुल्यरूपे अमर०। [तुल्यरूपे अमरः।

**सदृश्** त्रि० समानं दर्शनमस्य समान+दृश-क्विप् सादेशः।

**सदृश** त्रि० समानं दर्शनमस्य समान+दृश-टक्। तुल्यरूपे स्त्रियां ङीप्।

**सदृशस्यन्दन** त्रि० ऋश-गतौ क सव् ऋशं गत स्यन्दन यस्मात् ५व०। निष्पन्दे त्रिका०।

**सदेश** पु० सह देशेन सहस्य सः। १निकटे अमरः २देशा-न्विते त्रि०।

**सद्धेतु** पु० कर्म०। न्यायोक्ते हेत्वाभासदोषरहिते हेतौ। पक्षसत्त्वं१ सपक्षसत्त्वं२ विपक्षासत्त्वं३ अबाधितविषय-त्वं४ असत्प्रतिपक्षितत्वं५ इति पञ्चरूपोपन्नो हेतुः स द्धेतुः "व्याप्त्यादिविशिष्टो हेतुः सः" नीलकण्ठः "प्रमि-तव्याप्तिपक्षताको हेतुः सः" गदा०। २वृत्तिमद्धेतौ च "अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमाशङ्क्याह" दीधितिः। अत्र सद्धेतौ वृत्तिमति हेतावित्यर्थः गगनादेः संयोगेन वृत्तिमत्त्वाभावात् तत्राव्याप्तिर्न सम्भवतीत्युक्तं सदिति।

**सद्भाव** पु० सतोभावः, सन् वा भावः। १विद्यमानत्वे २सा-धुभावे च "सद्भावमागत" इति भट्टिः।

**सद्भूत** न० एवत् सत् भूतम् सत्+चि-भू-क्त। १यथार्थे २तद्वति त्रि० हेमच०। [च मेदि०।

**सद्मन्** न० सीदत्यस्मिन् सद-मनिन्। १गृहे अमरः २जले

**सद्यःकृत** त्रि० सद्यस्तत्क्षणात् कृत कृ-क्त। तत्क्षणकृते।

**सद्यःप्राणकर** त्रि० सद्योऽझटात् प्राण बलम् आयुष्टं द्विस्य करोति कृ-अच्। "सद्योमांस नवान्नं च बाला स्त्री क्षीरभोजनम्। घृतमुष्णोदकश्चैव सद्य प्राणकराणि षट्" इति चाणक्योक्ते द्रव्यसमूहे।

**सद्यःप्राणहर** त्रि०सद्यः प्राणमायुर्बलं वा हरति हृ-अच्। "शुष्क मांस स्त्रियो वृद्धा बालार्कस्तरुणं दधि। प्रभाते मैथुनं निद्रा सद्य प्राणहराणि षट्" इति चाणक्योक्ते शुष्कमांसादिद्रव्यसमूहे। [शब्दच०

**सद्यःशोथा** स्त्री सद्य शोथो यस्याः ५व०। कपिकच्छ्वाम्

**सद्यःशौच** न० सद्य शौचमपनेयमशौचम्। १सत्युक्ते शौचनाशत्रे अशौचे ६व०। २तद्वति शिल्पिन्दासोत्रि-यादौ त्रि०। अशौचशब्दे ४८८ पृ० दृश्यम्।

**सद्यस्** अव्य० समेऽह्नि नि०। १तत्क्षणे अमरः। २समान-दिवसे एकस्मिन् दिने इत्यर्थे च।

**सद्यस्क** त्रि० सद्योभवः कन् कस्का०। सद्योजाते।

**सद्यस्क्री** पु० सद्य क्रीणाति सोमम् यत्र क्री-आधारे क्विप् कस्का०। सद्यःसोमक्रयसाध्ये यागभेदे "एकरात्रोऽति-रात्रः सद्य क्रीः प्रक्रीरुक्थ्यः" अथर्व०११।७।१०। नाना-यज्ञोक्तौ। भावे क्विप्। २सद्यस्क्रये स्त्री। तया साध्यः अण्। साद्यस्क्र सद्य सोमक्रयेण एकाहसाध्ये यज्ञभेदे। "साद्यस्क्राश्च षट्" कात्या०श्रौ०२२।२।९। उक्ता यथा "षट् साद्यस्क्रा।" सू० "स्वर्गकामपशुकामभ्रातृव्यवता प्रथमः" सू०।१ साद्यस्क्र स्वर्गकतुर्भवति। "दीर्घव्याधिप्रतिष्ठाकामा-न्नाद्यकामाना द्वितीय" सू०। साद्यस्क्रो२ भवति एषा-मत्राधिकार। "हीनस्यानुक्री।" सू० अनुक्रीनाम३ साद्यस्कः स हीनस्य भवति य कर्मणा हीन तस्यासौ भवति। "विश्वजिच्छिल्पः" सू० नाम साद्यस्क४। "श्येनोऽभिचरत"सू०। श्येनो५ नाम साद्यस्क पञ्चमः सोऽभिचरतो भवति। "एकत्रिक."सू०षष्ठः६ साद्यस्क। तत्र षट् षष्टिशत दक्षिणा। साद्य क्रधर्मो व्याख्या-स्यन्त इति सूत्रशेषः। दीक्षादि सद्यः सर्वं क्रियत" भाष्यम् तारञ्जना० भाष्ये चोक्तं यथा

अथ साद्यस्क्रा नाम पञ्च एकाहास्तेषु प्रथमद्विती-ययोर्दीक्षाप्रभृत्यवभृथान्तं, सर्वमेकस्मिन्नेवाहन्यनु-ष्ठेय तृतीयस्य तु एकस्मिन् दिवसे दीक्षा परस्मिन् दिवसे सोमक्रयाद्यवभृथान्तं, चतुर्थपञ्चमयोरप्येव यद्वा एका दीक्षा सोमक्रयप्रभृति उपवसथान्त द्वितीयेऽहनि सुत्येति एवं सूत्रकारमत पञ्चस्वपि साद्यस्क्रान्वयात् सद्य एव एकस्मिन्नेवाहनि दीक्षाद्यवभृथान्त कर्त्तव्य-मिति मतान्तरम्। एतत्सर्वं साद्यस्क्रेण वक्ष्यमाणे म-हाराजे प्रातराङ्गति हुत्वेत्यादिना सूत्रकारेण विस्प-ष्टमुक्तम्। तत्र प्रथमस्य यदुक्त सर्वं सद्योऽनुष्ठेयमिति तद्विधिवत्सराह "आदित्याश्चाङ्गिरसश्चादीक्षन्त ते स्वर्गे लोकेऽस्पर्द्धन्त तेऽङ्गिरस आदित्येभ्यः श्व सुत्या प्राब्रुवं

न्त आदित्या एतमपश्यन् तं सद्यः परिक्रीयायाहृत्सुद्गातारं कृत्वा तेन स्तुत्वा स्वर्गं लोकमायन्नहीयन्ताङ्गिरस” ताण्ड्यब्रा० १६।१२।१। “पुरा आदित्याश्चाङ्गिरसश्च अदीक्षन्त यज्ञाय दीक्षां कृतवन्त ते उभे स्वर्गे लोके स्वर्गलोकनिमित्तमस्पर्द्धन्त वयं प्रथमं गमिष्यामो वयं प्रथमं गमिष्याम इति स्पर्द्धां कृतवन्त एव स्पर्द्धमानास्तेऽङ्गिरस आदित्येभ्य उत्वा श्वः परश्विन्दीक्षानन्तरदिने करिष्यमाणं सोमयागं प्राब्रुवन् प्रोक्तवन्तः अथ ते आदित्या एव सद्यमात्रयज्ञमपश्यन् तं यज्ञं सद्यः एतस्मिन्नेवाहनि परिक्रीय सोमं क्रीत्वा अयास्यं म्र्मधुद्गातारं कृत्वा स्तावयित्वा समापयन् दीक्षादारम्भ्यान्तं सर्वं कर्म एकस्मिन्नेवाहनि अन्वतिष्ठन्नित्यर्थः। यज्ञसमाप्त्यनन्तरमेव ते स्वर्गलोकमायन् प्राप्नुवन् आङ्गिरसस्त्वहीयन्त दीक्षानन्तरदिवसे सुत्येति तैरुक्तत्वात् एतस्मिन् दिने दीक्षाद्यवसानस्य सर्वस्यानुष्ठानेन स्वर्गप्राप्त्यभावात् दीक्षितैरादित्यैः सद्योऽनुष्ठानेन स्वर्गं गतैः हीना भूमावेव परित्यक्ता आसन्” भा०।

सद्योजात ५ सद्योजायते जन–कर्त्तरि क्त। १वत्से श ब्दच०। २मूर्त्तिभेदे च ३ज्ञात्युजाते त्रि०।

सद्योभाविन् पु० सद्योभवति भू–णिनि। १वत्से शब्दच०। २आशुजाते त्रि०। स्त्रियां ङीप्।

… अ० सद गतौ रु। गन्तरि सि०कौ०।

…वृत्त न… –भावे क्त कर्म०। १साधुत्वभावे जटा० २साधुवर्त्तने। … । ३सच्चरित्रयुते त्रि०। “सद्वृत्तसच्चिकथो ह्यपगाङ्गमपि गच्छते” इति ति०त०।

…न स्त्री कर्म०। १उत्तमचरित्रे २उत्तमव्याख्यानछ्गे गान्ये च सती वृत्तिर्यस्य। ३सद्वृत्तियुते त्रि० “सद्वृत्तिं सन्निबध्नतेनेति” माघ०। [सदृशे स्त्रियां वा टाप्।

… मन् हि समानो धर्मोऽस्य अनिच् सना० समासश्च स।

सधर्मचारिणी स्त्री सह धर्मं चरति चर–णिनि। सह धर्मचारिण्यां भार्यायां हला०।

…सिन् त्रि० समानं धर्मं चरति इनि। १तुल्यधर्मचरणे … स्त्रियां ङीप्। सा च २पत्न्याञ्च हेमच० [जटा०

…तेन सहस्य सः। जीवन्तिकायां स्त्रियां

… नाभि–इन् पृषो० हस्व। इङ्गौ त्रिका०।

…मन् स्त्र्य धश्च। इषमे सि०कौ०।

… –अञ्चति अनुच–क्विन् सहस्य सध्रि।

…दा… भवे सध्रीचः। स्त्रियां ङीप् सध्रीची

सा च १भार्य्यायां २सख्याञ्च हेमच०। [स्फ०ले ऋ…।

**सन** पु० सन–अच्। १घण्टापारलिङ्गत्वे। २हस्तिकर्ण…

**सनक** पु० सन–वुन्। ब्रह्मणो मानसपुत्रे मुनिभेदे “भगवद्ध्यानपूतेन मनसाऽन्यांस्ततोऽसृजत। सनकञ्च सनन्दञ्च सनातनमथात्मभूः। सनत्कुमारञ्च मुनीन् निष्क्रियानूर्द्ध्वरेतसः। तान् बभाषे स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः। तन्नैच्छन्मोक्षधर्माणो वासुदेवपरायणाः” भाग० ३।१२ अ०। “धर्मस्य भार्य्या हिंसाख्या तस्यां पुत्रचतुष्टयम्। सम्प्राप्तं मुनिशार्दूल योगशास्त्रविचारकम्। ज्येष्ठ सनत्कुमारोऽभूत् द्वितीयश्च सनातनः। तृतीयः सनको नाम चतुर्थश्च सनन्दनः” वामनपु० ५७ ५८ अ० उक्ते धर्मपुत्रभेदे। [अव्य० रामाश्रम।

**सनत्** पु० सन–अति। १चतुर्मुखे ब्रह्मणि त्रिका० २सदेत्यर्थे

**सनत्कुमार** पु० ६त०। ब्रह्मणः पुत्रे मुनिभेदे अमरः। तस्य नित्यकुमारत्वादपि तन्नामता यथोक्तम् “स्मृतः पूर्वञ्च वयसा यथैव पञ्चहायनः। अपूर्वोऽनुपवीतश्च वेदसन्ध्याविहीनकः। कृष्णेति मन्त्रं जपति यस्य नारायणो गुरुः। अनन्तकालकल्पञ्च भ्रातृभिश्च त्रिभिः सह। वैष्णवानामग्रणीर्यो ज्ञानिनाञ्च गुरोर्गुरुः” ब्रह्मवै० श्रीकृष्णजन्मख० १२८ अ०। [न्दयुक्ते त्रि०।

**सनन्द** पु० सह नन्देन। १सनकशब्दोक्ते मुनिभेदे २आन-

**सनपर्णी** स्त्री सनस्येव पर्णान्यस्याः ङीप्। अश्वनपर्ण्यां शब्दच०

**सनसूत्र** न० शणस्य सूत्रमस्त्यस्य अच् पृषो०। मत्स्यधारणार्थं शणसूत्रकृते जाले अमरे पाठान्तरम्।

**सना** अव्य० सदा–नि० दस्य नः। सदेत्यर्थे अमरः।

**सनातन** त्रि० सदा+भवार्थे ट्युल् तुट् च नि० दस्य नः। १सदाभवे नित्ये वस्तुनि अमरः। २निश्चले विश्वः। स्त्रियां ङीप्। सा च ३दुर्गायां “सर्वकाले सना प्रोक्ता विद्यमाने तनोति च। सर्वत्र सर्वकालेषु विद्यमाना सनातनी” ब्रह्मवै०प्र० ५४अ०। तन्नामनिरुक्तिः। ४सरस्वत्यां ५लक्ष्म्याञ्च शब्दमा०। ६शिवे ७विष्णौ ८ब्रह्मणि ९दिव्यमनुष्ये ब्रह्मणोमानसपुत्रभेदे १०पितॄणामतिथौ च पु० हेमच०।

**सनात्** पु० सना नित्यमतति अत–क्विप्। विष्णौ विष्णुस० सदेत्यर्थे अव्य०अमरटीकायां रामाश्रमः। [स्त्रियां स्त्री।

**सनाथ** त्रि० सह नाथेन सहस्य सः। १युक्ते २जीवद्भर्त्तृक-

**सनाभि** पु० समाना नाभिर्यस्य। १ज्ञातौ अमरः। तस्य एकदेहोत्पन्नत्वेन तुल्यनाभितया तथात्वम्। २सध्युक्ते ३स्नेहयुक्ते ४तुल्ये च त्रि० मेदि०।

**सनामक** पु॰ सना सदा अमयति अम-ण्वुल्। १शोभाञ्जनवृक्षे शब्दच॰। तस्य पत्राटिभोजनस्य रोगहेतुत्वात्तथात्वम्। सह नाम्ना कप्। २नामयुक्ते त्रि॰।

**सनि** पु॰ सन-भावे इन्। १पूजायां २दाने च सि॰कौ॰। ३सतकारपूर्वकनियोगे पुंस्त्री॰ अमर स्त्रियां वा ङीप्। ४ङीवल॰ हस्तिकर्णास्फाले शब्दर॰५दिशि स्त्री शब्दमा॰

**सनित** त्रि॰ सन-वा॰ इत। प्रतिपन्ने हेमच॰।

**सनिष्ठी(ष्ठे)व** न॰ सह निष्ठी(ष्ठे)वेन। १सथूत्कृतवाक्ये सथूत्कारे अमरः।

**सनीड** त्रि॰ समानं नीडं सह नीडेन वा सादेश॰। १निकटस्थे अमर। २नीडयुक्ते त्रि॰।

**सन्त** पु॰ सन-वा॰ त। सहतले शब्दर॰।

**सन्तत** न॰ सम्+तन-क्त। १सतते निरन्तरे। २नैरन्तर्ययुते त्रि॰ अमर ३विस्तीर्णे च।

**सन्तति** स्त्री सन्तन्यते सम्+तन-क्तिच्। १गोत्रे अमर। २पुत्रे ३कन्यायाञ्च विश्व। भावे क्तिन्। ४विस्तारे ५पङ्क्तौ ६अविच्छिन्नधारायाञ्च विश्व॰।

सन्ततिश्च दैशिकी कालिकी च। तत्र दैशिकी तैलादीनां, कालिकी ज्ञानसुखादीनाम्। तत्र दैशिकसन्ततित्वं स्वाधिकरणदेशीयमानावच्छेदकवृत्तिधर्मत्वं तच्च मूर्त्तानामेव कालिकसन्ततित्वञ्च नानाकालीनकार्य्यमात्रवृत्तिधर्मत्वम्, तच्चिन्तादि गन्तव्यं तच्च मूर्त्तामूर्त्तयोरतएव दुःख दुःख ज्ञानादिसन्ततिर्भवतीति तदुक्तं तत्रैव "दैवदुत्तवृत्तिदुःखत्वं दुःखत्वं वा स्वाश्रयसमानकालीनध्वंसप्रतियोगिवृत्ति कार्य्यमात्रवृत्तिधर्मत्वात् सन्ततित्वाद्ङ्येत्युक्त्वा सन्ततित्वं च नानाकालीनकार्य्यमात्रवृत्तिधर्मत्वम्" इत्युक्तम्।

**सन्तप्त** त्रि॰ सम्+तप-क्त। १अध्वगत्यादिना परिश्रान्ते २अग्नितप्ते ३तेन विशुद्धे च "सन्तप्तचामीकरवल्गुवर्ज"मिति भट्टिः।

**सन्तमस** न॰ सन्तत तमः प्रा॰स॰ अच् समा॰। १गाढान्धकारे अमरः। २महामोहे च मोहस्य सर्वावरत्वात् तमस्त्वेन महामोहस्य गाढान्धकाररूपत्वात्तथात्वम्।

**सन्तर्पण** न॰ सन्तृप्यत्यनेन सम्+तृप-करणे ल्युट्। "द्राक्षादाडिमखर्जूरीशर्करामधुसंयुतम्। लाजाचूर्णन्तु खाद्यं यत् तत्तु सन्तर्पणं विदुः" राजनि॰ उक्ते द्राक्षादिभिर्युते लाजाचूर्णे खाद्यभेदे। सम्+तृप-णिच् ल्यु। २सन्यक्तर्पके त्रि॰। [हिक्के ३अपत्ये ४विस्तारे च मेदि॰।

**सन्तान** पु॰ सम्+तन-घञ्। १वंशे अन्वये अमरः। २कल्प-

**सन्तानिका** स्त्री सम्+तन-ण्वुल् टाप् अत इत्वम्। १क्षीरसरे "सन्तानिका गुरु शीता वृष्या॰ पित्तास्रवातजित्" राजव॰। २मर्कटजाले ३फेने ४छुरिकाफले च हारा॰। [२सम्यक्तापे च।

**सन्ताप** पु॰सम्यक् तापः प्रा॰स॰। १वह्निजाते तापे अमर॰।

**सन्तापन** पु॰ सन्तापयति सम्+तप-णिच्-ल्यु। कामदेवस्य-१पञ्चशरान्तर्गते शरभेदे त्रिका॰। २सन्तापकारके त्रि॰।

**सन्ति** स्त्री सन-ति। १दाने २अवसाने च मुग्धबोधटीका।

**सन्तोष** पु॰ सम्+तुष-करणादौ घञ्। १धैर्य्ये २स्वास्थ्ये च हेमच॰। ३सम्यक्तुष्टौ "सन्तोषमूलं हि सुखम्" मनुः।

**सन्दंश** पु॰ सम्+दन्श-अच्। (साँड़ाशी) यन्त्रभेदे हेमच॰।

**सन्दंशपतित** पु॰ सन्दंशे तन्मध्ये पतित इव। सोमाधकोक्ते न्यायभेदे न्यायशब्दे ४१६९ पृ॰ दृश्यम्।

**सन्दर्भ** पु॰ सम्+दृभ-घञ्। १रचनायां हला॰। २ग्रन्थने ३प्रबन्धे त्रिका॰ "गूढार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठता गिरा। नानार्थवत्त्वं वेद्यत्वं सन्दर्भः कथ्यते बुधैः" इत्युक्ते ४कथनभेदे ५वक्तृतात्पर्य्यविशेषे च।

**सन्दान** न॰ सम्+दो-करणादौ ल्युट्। १दाम्नि २बन्धने अमरः ३सम्यक्खण्डने च। दा-ल्युट्। ४सम्यग्दाने न॰ ५गजस्याष्ठीवतोरधोभागे पु॰ त्रिका॰। [राजनि॰।

**सन्दानिका** स्त्री सन्दान सम्यक्छेदनमस्त्यस्य ठन्। विट्खादिरे

**सन्दानित** त्रि॰सन्दानं जातमस्य तार॰ इतच्। बद्धे अमर "रशनासन्दानितचरणे"ति मालविकाग्निमित्रम्।

**सन्दानिनी** स्त्री सन्दानं बन्धनं गवामत्र वा॰ इनि ङीप्। गोशालायाम् हेमच॰।

**सन्द्राव** पु॰ सम्+द्रु-भावे घञ्। पलायने अमर॰।

**सन्दाह** पु॰ सम्+दह-करणादौ घञ्। १मुखादिशोषे राजनि॰। २सम्यग्दाहे च।

**सन्दिग्ध** त्रि॰ सम्+दिह-कर्त्तरि क्त। १सन्देहयुक्ते। कर्मणि क्त। २सन्देहविषये ३सम्यग्लिप्ते च। भावे क्त। ४सन्देहे ५संशेषे च।

**सन्दित** त्रि॰ सम+दो-क्त। बद्धे अमर॰।

**सन्दिष्ट** न॰ सम्+दिश-भावे क्त। १वाचिकार्थकथने वार्त्तायाम् शब्दर॰। कर्मणि-क्त। २उपदिष्टे त्रि॰।

**सन्दिहान** त्रि॰ सम्+दिह-शानच्। सन्देहयुक्ते जटा॰।

**सन्दी** स्त्री सम्+दो-ड गौरा॰ ङीप्। खट्वायां त्रिका॰।

**सन्दीप्य** पु॰ सन्दीप्यतेऽसौ सम्+दीप-कर्त्तरि य। मयूरशिखावृक्षे शब्दच॰।

**सन्देश** पु० सम्+दिश–घञ्। वाचिकार्थकथने वार्त्तायाम् अमर। "सदर्थसन्देशसृणालमन्थर" नैष०।

**सन्देशहर** पु० सन्देश हरति अभीष्टस्थानं कथनाय नयति हृ–अच्। १दूते "तवैव सन्देशहरादिति" रघु०। ण्वुल्। सन्देशहारकोऽप्यत्र।

**सन्देह** पु० सम्+दिह–घञ्। १संशयशब्दार्थे अमरः। २अलङ्कारभेदे अलङ्कारशब्दे ४०५पृ०दृश्यम्। सन्देह विशेषश्च पक्षतैत्वाचार्य्यो स च प्रकृतपक्षविशेष्यकसाध्यस-त्तानिश्चयप्रतिबन्धकतानिरूपितप्रतिबध्यताशालिसंशय०।

**सन्दोह** पु० सम्+दुह–घञ्। १समूहे अमर। २सम्यग्दोहे कर्मणि घञ्। ३दुग्धे च "सन्दोहशाप्मेऽह्नि" मिता०।

**सन्द्राव** पु० सम्+द्रु–घञ्। पलायने अमर।

**सन्धा** स्त्री सम्+धा–अङ्। १स्थितौ २प्रतिज्ञायां मेदि०। ३सन्धाने सुरोत्पादनानुगुणे व्यापारभेदे शब्दर० ४अनुसन्धाने ५सन्ध्यायां वाचस्पति।

**सन्धान** न० सम्+धा–ल्युट्। १सुरादिसम्पादनानुगुणे व्यापारे २शोमरसकण्डनात्मके अभिषवे ३अनुसन्धाने ४सङ्घट्टने च मेदि०। सन्धाने स्त्रीत्वमपि तत्र ङीप्। सा च ५कृष्यशालायां शब्दर०। सङ्घट्टन च योजनम्। "यदर्द्धं विच्छिन्नं भवति कृतसन्धानमिव तत्" शकु०। ५काञ्जिके हेमा०। ६मदिरायाम् ७अवदंशे ८सौराष्ट्रे राजनि० ९धनुषि शरस्य योजने च।

**सन्धि** पु० सम्+धा–कि। १नृपाणां षड्गुणान्तर्गते मेलनार्थं मैत्रीकरणरूपे व्यापारे षाड्गुण्यान्तर्गतसन्धिविषयादिकं शुक्रनीतिपरि०उक्तं यथा "बलीयसाऽभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः। आपन्नः सन्धिमन्विच्छेत् कुर्वाण कालयापनम्। एक एवोपहारस्तु सन्धिरेव मतो हित०। उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिता। अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्त्तते। उपहारादृते यस्मात् सन्धिरन्य न विद्यते। शत्रोर्बलानुसारेण उपहारं प्रकल्पयेत्। सेवां वापि च स्वीकुर्य्याद् दद्यात् कन्यां भुवं धनम्। स्वसामन्तांश्च सन्धीयात् मन्त्रेणान्यजयाय वै। सन्धिः कार्य्योऽप्यनार्य्येण २प्राप्योत्सादयेद्धि स। संघातवान् यथा वेणुर्निविडैः कण्टकैर्वृत। न शक्यते समुच्छेत्तु वेणु सघातवांस्तथा। सन्धिशान्तिकले, युद्धं साम्ये, यानन्तु दुर्बले। बलिना सह सन्धाय भवे साधारणे यदि"। "आत्मानं गोपयेत् काले दङ्गमिन्द्रेषु बुद्धिमान्"। "राजा न गच्छेद्विश्वास सन्धितोऽपि हि बुद्धिमान्। अद्रोहसमयं कृत्वा वृत्तमिन्द्र सदाऽवधीत्"। "सन्धायान्यत्र यात्राया पार्ष्णिग्राहेण शत्रुणा। सन्धाय गमनं प्रोक्त तज्जिगीषो फलार्थिन"। तद्भेदलक्षणादिकं हितोपदेशे न्यरूपि यथा "कपाल उपहारश्च सन्तान सङ्गतस्तथा। उपन्यास प्रतीकार संयोग पुरुषान्तर। अदृष्टनर आदिष्ट आत्मादिष्ट उपग्रह। परिक्रयस्तथोच्छिन्नस्तथा च परभूषण। स्कन्धोपनेय सन्धिश्च षोडशैते प्रकीर्त्तिता। इति षोडशक प्राहु सन्धि सन्धिविचक्षणा। कपालसन्धिर्विज्ञेय, केवल समसन्धित। सम्प्रदानाद्भवति य उपहार२ स उच्यते। सन्तानसन्धिर्विज्ञेयो दारिकादानपूर्वक। सद्भिस्तु सङ्गत ४ सन्धिर्मैत्रीपूर्व उदाहृत। यावदायुःप्रमाणस्तु समानार्थप्रयोजनः। सम्पत्तौ वा विपत्तौ वा कारणैर्यो न भिद्यते। सङ्गत सन्धिरेवायं प्रकृष्टत्वात् सुवर्णवत्। तथान्ये सन्धिकुशलै काञ्चनः स उदाहृत। दृष्ट्वात्मकार्य्यसिद्धिं तु समुद्दिश्य क्रियेत य। स उपन्यासकुशलैरुपन्यास५ उदाहृत। मयास्योपकृत पूर्वं ममाप्येष करिष्यति। इति य क्रियते सन्धि प्रतीकारः६ स उच्यते। उपकारं करोम्यस्य ममाप्येष करिष्यति। अयं चापि प्रतीकारो रामसुग्रीवयोरिव। एकार्थां सम्यगुद्दिश्य क्रियां यत्र हि गच्छति। सुसंहितप्रमाणस्तु स च संयोग७ उच्यते। आवयोर्योधमुख्यैस्तु मदर्थः साध्यतामिति। यस्मिन् पणस्तु क्रियते स सन्धि पुरुषान्तर०८। त्वयैकेन मदीयोऽर्थ सम्प्रसाध्यस्त्वसाविति। यत्र शत्रु पणं कुर्य्यात् सोऽदृष्टपुरुष ९स्मृत। यत्र भूम्येकदेशेन पणेन रिपुवर्जित। सन्धीयते सन्धिविद्भि आदिष्ट १० स उदाहृत। स्वसैन्येन तु सन्धानमात्मादिष्ट११ उदाहृत। क्रियते प्राणरक्षार्थं सर्वदानादुपग्रह १२। कोषांशेनार्द्धकोषेण सर्वकोषेण वा पुन। शिष्टस्य प्रतिरक्षार्थं परिक्रय१३ उदाहृत। भुवा सारवतीनां तु दानादुच्छिन्न१४ उच्यते। भूम्युत्थफलदानेन सर्वेण परभूषण १५। परिच्छिन्न फलं यत्र प्रतिस्कन्धेन दीयते। स्कन्धोपनेय१६ त प्राहु सन्धि सन्धिविचक्षणा। परस्परोपकारस्तु मैत्री सम्बन्धकस्तथा। उपहारश्च विज्ञेयश्चत्वारश्चैव सन्धय। एक एवोपहारस्तु सन्धिरेव मतो मम। उपहारविभिन्नास्तु सर्वे मैत्रविवर्जिता। अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्त्तते। उपहारादृते तस्मात् सन्धिरन्यो न विद्यते"।

सन्धिलक्षणादिकं युक्तिकल्पतरौ प्रदर्शितं यथा "पणबन्धो भवेत् सन्धिः स्वयं हीनस्तमाचरेत्। मर्य्यादोल्लङ्घनं नास्ति यदि शत्रोरिति स्थितिः। मर्य्यादोल्लङ्घनं यत्र शत्रौ सम्भवितं भवेत्। न तं सम्भवितं कुर्य्यादित्युवाच बृहस्पतिः"। षाड्गुण्यशब्दे ५१७८२ पृ० दृश्यम् २संयोगे अमरः। ३अस्थिद्वयसंयोगस्थाने ४चौरादिकृतसुरङ्गायां 'सन्धिं कृत्वा तु ये चौर्य्यमिति' स्मृतिः। ५भगे ६सङ्घट्टने ७नाटकाङ्गविशेषे ८सविकाशे मेदि० ९व्याकरणोक्ते वर्णद्वयजाते १०वर्णविकारभेदे ११भेदे विश्वः। नाटकाङ्गसन्धिश्च "अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति"। एकार्थेन सम्बन्धः सन्धिः। तद्भेदानाह "मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः। इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते" सा० द०। मुखादिलक्षणम् तत्तच्छब्दे दृश्यम्। १२सत्यादियुगानामाद्यन्तयोः कालयोः सन्ध्यांशशब्दे दृश्यम् "ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश। कृतप्रमाणः कल्पादौ सन्धिः पञ्चदश स्मृतः" मनुः। तेन सन्धिसन्ध्यंशसहित सत्ययुगमानम् ४८०० दैववर्षाः। "कृतावद्दसङ्ख्यस्थान्ते सन्धिः प्रोक्तो जलप्लवः"। तत्र युगानामादौ सन्धिः अन्ते सन्ध्यंशः। मन्वन्तराणामादौ सन्धिः कल्पानामन्ते सन्धिरिति भेदः। १३तिथ्यादेराद्यन्तभागभेदे च उपपदशब्दे १२५८५९ पृ० दृश्यम्।

**सन्धिका** स्त्री स्वार्थे क। मद्यसन्धाने शब्दच०।

**सन्धिचोर** पु० सन्धिना कृतसुरङ्गया चोरः। सन्धिं कृत्वा चौर्य्यकारके (सिँधेल) शब्दमाला।

**सन्धिजीवक** पु० सन्धिना अभिसन्धिना जीवति जीव-ण्वुल् शाठ्येन परार्थहारके त्रिका०। [लिते च।

**सन्धित** त्रि० सन्धा जाताऽस्य तार० इतच्। १कृतसन्धे २मि-

**सन्धिनी** स्त्री सन्धा वृषभसंयोगस्तज्जगर्भोऽस्त्यस्याः इनि ङीप्। १वृषभसंयोगेन धृतगर्भायां स्त्रीगव्याम् अमरः। २अकालदुग्धायां गवि मेदि०। तद्दुग्धपाननिषेधः "न पिबेत् सन्धिनीक्षीरम्" स्मृतिः।

**सन्धिपूजा** स्त्री सन्धौ अष्टम्याः शेषे नवम्याश्च आद्ये दण्डे पूजा। आश्विनशुक्लाष्टमीनवमीसन्धिकाले विहितपूजायाम् "अष्टमी नवमीसन्धौ तृतीया खलु कथ्यते। तत्र पूज्या त्वया पुत्र! योगिनीगणसंयुता"। ज्योतिषे "अष्टम्याः सन्धियोगे सकलपरिजने पूजयेत् सर्वभावैः"। कामरूपीयनिबन्धे स्मृतिसागरे च "अष्टम्याः शेषदण्डश्च नवम्याः पूर्व एव च। अत्र या क्रियते पूजा विज्ञेया सा महाफला" मत्स्यसूक्तेऽपि "अष्टमीनवमीयोगो रात्रिभागे विशिष्यते। अर्द्धरात्रे दशगुणा सन्ध्यायां त्रिगुणं भवेत्"। आश्विनाधिकारे "अष्टमी नवमीयुक्ता नवमी चाष्टमीयुता। अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः"। इति विष्णुधर्मोत्तरीयमप्येतद्विषयं न तु महानवमीपूजापरम्। तस्मात् अष्टम्युपवासपरदिनविधानेन सप्तमीयद्युग्मानादरात्। ततश्च सप्तमीपूजावन्महाष्टम्यादिकृत्यमपि षष्टिदण्डात्मिकायामेव न तु परदिवसीयखण्डतिथौ किन्तु पूर्वोक्तसन्ध्यनुरोधात् निशादाविव खण्डतिथावपि सन्धिपूजेति। एवञ्च यस्मिन् दिने महाष्टमीपूजा तस्मिन् दिन एव उपवासः। न तु सन्धिपूजादिने अष्टमीत्वेनोपवासविधेः पूर्वमुक्तत्वात्। एवञ्च पूर्णाष्टम्यामष्टमीपूजा तत्परदिने अष्टमीनवम्योः सन्धौ सन्धिपूजा तत्परदिने महानवमीपूजा प्रागुक्तनन्दिकेश्वरपुराणाद्युक्तोदयगामितिथ्यनुरोधात् तत्परदिने दशम्यां विसर्जनं पूजानुरोधेनाधिकदिनत्वाभावात्" ति० त०।

**सन्धिबन्ध** पु० सन्धिं बध्नाति संयुनक्ति सम्+बन्ध—अण्। भूमिचम्पके शब्दच०। तत्सेवने हि भग्नसन्धियोजनं वैद्यके प्रसिद्धम्। २स्नायौ सन्ध्यर्थनियमबन्धने च।

**सन्धिला** स्त्री सन्धिं लाति ला—क। १नद्यां स्वार्थे कन्। २सुरङ्गायां ३मदिरायाञ्च मेदि०।

**सन्धिविग्रहाधिकारिन्** पु० सन्धिविग्रहेषु अधिकरोति अधि+कृ—णिनि। नृपाणां सन्धिविग्रहाद्यधिकारिणि मन्त्रिभेदे।

**सन्धिवेला** स्त्री सन्धियुक्ता वेला समयः। अहोरात्रसन्धिसमये। सन्ध्याशब्दे दृश्यम्। ततः सन्धिवेलादि० भवार्थे अण् नक्षत्राट्ठञ्। सान्धिवेल तत्र भवे त्रि०।

**सन्धिहारक** पु० सन्धिना सुरङ्गया हरति परद्रव्यम् हृ—ण्वुल्। सन्धिचौरे (सिँधेल) हारा०।

**सन्धुक्षित** त्रि० सम्+धुक्ष-क्त। उद्दीपिते।

**सन्धेय** त्रि० सम्+धा-यत्। १संयोज्ये २मेलनीये ३सन्धिकरणयोग्ये च

सन्धेया असन्धेयाश्च हितोप० दर्शिता यथा

"सत्यार्य्यौ धार्मिकोऽनार्य्यो भ्रातृसङ्घातवान् बली। अनेकयुद्धविजयी सन्धेयाः सप्त कीर्त्तिताः। सत्योऽनुपालयन् सत्यं सन्धितो नैति विक्रियाम्। प्राणनाशेऽपि सद्व्यक्तमार्य्यो नायात्यनार्य्यताम्। धार्मिकस्याभियुक्तस्य सर्व एव हि युध्यते। प्रजानुरागाद्धर्माच्च दुःखोच्छेद्यो

हि धार्मिकः। सन्धिं कार्य्योऽप्यनार्य्येण४ विनाशे समुपस्थिते। विना तस्याश्रयेणान्यः कुर्य्यान्न कालयापनम्। रुद्धतत्वाद्यथा वेणुर्निविडः कण्टकैर्वृतः। न शक्यते समुच्छेत्तुं भ्रातृसङ्घातवांस्तथा। बलिना सह योद्धव्यमिति नास्ति निदर्शनम्। प्रतिवातं न हि घनः कदाचिदुपसर्पति। जामदग्न्येः सुतस्येव सर्वं सर्वत्र सर्वदा। अनेकयुद्धजयिनः७ प्रतापादेव भुज्यते। अनेकयुद्धविजयी सन्धानं यस्य गच्छति। तत्प्रतापेन तस्याशु वशमायान्ति शत्रवः"। "बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः। भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा। विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान्। अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः। दैवोपहतकश्चैव दैवचिन्तक एव च। दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुलः। अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न। सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी। एते सन्धिं न कुर्वीत विगृह्णीयात् तु केवलम्। एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम्"

**सन्ध्या** स्त्री सम्+ध्यै—अङ् सन्धौ भव यत् वा। १एकरूपकालोत्तरभाविपररूपकालयोरवकाशभेदे दिवारात्र्योः २मध्यवर्त्तिकाले अमरः। स च दिवाशेषदण्डसहितरात्रिप्रथमदण्डात्मकः कालः तयोश्चतुर्दण्डात्मकः कालश्च "त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टये। नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते" इति दक्षः। "अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्जितः। सा च सन्ध्या समाख्याता" इति स्मृतिः। ३सायाह्ने ४सन्ध्याकाले उपास्यदेवताभेदे ५तदुपासनायाम् व्यासः। "सन्ध्यामुपासते ये तु नियतं शंसितव्रताः" इति स्मृतिः "प्रातः सन्ध्यां ततः कृत्वा सङ्कल्पं बुध आचरेत्" स्मृतिः। "अनर्हः कर्मणां विप्रः सन्ध्याहीनो यतः स्मृतः"। "एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम्। यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते" छन्दोगप०। "अनागतान्तु यः पूर्वां सादित्यां चैव पश्चिमाम्। नोपासीत द्विजः सन्ध्यां स पतोऽब्राह्मणः स्मृतः" शाता०। अत्र सन्ध्यात्रयस्य नित्यत्वाभिधानात् "सर्वकालमुपस्थानं सन्ध्यायाः पार्थिवेष्यते। अन्यत्र सूतकाशौचविभ्रमातुरभीतितः" इति विष्णुपुराणीये सन्ध्याया इत्येकवचनान्तपाठो धर्मकोषोक्तो युक्तः। एवमेव नव्यवर्द्धमानः। सर्वकालं प्रातर्मध्याह्नसायरूपकालत्रये। अन्यथा तदुपादानं व्यर्थं स्यात् विभ्रमश्चित्तविक्षेपः। तेन आतादावपि सन्ध्यामाचरन्ति अतएव याज्ञवल्क्यः "सर्वावस्थोऽपि यो विप्रः सन्ध्योपासनतत्परः। ब्राह्मण्याच्च न हीयते अन्त्यजन्मगतोऽपि सन्"। सर्वावस्थो नित्यसेवकादिकर्मरतोऽपि। यथोचितशौचेऽशक्तोऽपीति रत्नाकरः। अन्यादृशस्यापन्नोऽपीति युक्तम्। सन्ध्यात्रयसाधारणलक्षणमाह योगियाज्ञवल्क्यः "त्रयाणाञ्चैव देवानां ब्रह्मादीनां समागमः। सन्धिः सर्वसुराणाञ्च तेन सन्ध्या प्रकीर्त्तिता" सन्ध्याद्वयकालस्तु अहोरात्रसन्धिमुहूर्त्तात्मकः। तथा च दक्षः "अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्जितः। सा च सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः" सूर्य्यनक्षत्रवर्जितः अर्द्धास्तमितार्द्धोदितसूर्य्यमण्डलप्रकटतेजोनक्षत्रवर्जितः। तथा च वराहः "अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत्। तेजःपरिहानिमुखाद् भानोरर्द्धोदयं यावत्"। अत्र आद्यन्तता उक्ता परिमाणमाह दक्षः "रात्र्यन्तकाले नाड्यौ द्वे सन्ध्यादिः काल उच्यते। दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः"। नाडी दण्डः योगियाज्ञवल्क्यः "ह्रासवृद्धी च सततं दिनरात्र्योर्यथाक्रमम्। सन्ध्या मुहूर्त्तमाख्याता ह्रासवृद्धौ समा स्मृता"। अत्रोपासनाया अपि सन्ध्यात्वमाह व्यासः "उपास्ते सन्धिवेलायां निशाया दिवसस्य च। तामेव सन्ध्यां तस्मात्तु प्रवदन्ति मनीषिणः"। उपास्ते यद्ध्यानप्राणायामादिक्रिययेति यावत्। तत्काले उपास्यापि देवता सन्ध्या तथा च याज्ञवल्क्यः "सन्ध्यौ सन्ध्यामुपासीत नास्तगे नोद्गते रवौ"। उपासनोपक्रममाह संवर्त्तः "प्रातः सन्ध्यां सनक्षत्रामुपासीत यथाविधि। सादित्यां पश्चिमां सन्ध्याम् अर्द्धास्तमितभास्कराम्"। सनक्षत्रामित्यनेन तदुयुक्तकाले उपक्रम्य प्रातः सन्ध्यामुपासीत एवमेवार्द्धास्तमितभास्करारब्धां पश्चिमां सादित्यामित्यनेन तदुयुक्तकाले उपक्रम्य उपासीतेत्यर्थः। मध्याह्नसन्ध्याया अष्टममुहूर्त्तं कालमाह स्मृतिः "पूर्वापरे तथा सन्ध्ये सनक्षत्रे प्रकीर्त्तिते। समसूर्य्येऽपि मध्याह्ने मुहूर्त्ते सप्तमोपरि"। साङ्ख्यायनगृह्यम् "अरण्ये समित्पाणिः सन्ध्यामुपास्ते नित्यं वाग्यत उत्तरापराभिमुखोऽन्वष्टमदिशमानक्षत्रदर्शनात् अतिक्रान्तायां महाव्याहृतीः सावित्रीं स्वस्त्ययनादि जप्त्वा एवं प्रातः प्राङ्मुखस्तिष्ठन् आमण्डलदर्शनादिति"। उत्तरापराभिमुखो वायुकोणाभिमुखः कोणं विहायेति अन्वष्टमदिशमिति। उभयदिगन्तर्भाग-

मिति यावत्" भा०त०। अधिके गायत्रीशब्दे दृश्यम्। ६युगसन्धिकाले ७नदीभेदे मेदि०। ८नद्यापत्नीभेदे स्त्री। ६चिन्तायां १०सन्धने ११सीमायां १२सन्धाने १३पुष्पभेदे हेमच० "चत्वार्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः। इतरेषु सस-न्ध्येषु ससन्ध्यांशेषु च त्रिषु। एकापायेन वर्त्तन्ते सह-स्राणि शतानि च"मनुः। चत्वार्य्याहुरिति चत्वारि वर्ष-सहस्राणि कृतयुगं कालं मन्वादयो वदन्ति। तस्य ताव-द्वर्षशतानि सन्ध्या सन्ध्यांशश्च भवति युगस्य पूर्वा सन्ध्या उत्तरश्च सन्ध्यांशः। तदुक्तं विष्णुपुराणे "तत्प्रमाणैः शतैः सन्ध्या पूर्वा तत्राभिधीयते। सन्ध्यांशकश्च तत्तुल्यो युगस्यानन्तरोहि सः। सन्ध्यासन्ध्यांशयोरन्तर्यः कालो मुनिसत्तम। युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञक" एकापायेनेति। त्रीणि सहस्राणि त्रेतायुगं त्रीणि शतानि तस्य सन्ध्या सन्ध्यांशश्च। द्वे सहस्रे द्वापरयुगं द्वे शते तस्य सन्ध्या सन्ध्यांशश्च। एकसहस्रं कलियुगमेकशतं तस्य सन्ध्या सन्ध्यांशश्च भवतीत्यर्थः।

१४प्रबोधसम्प्रसादयोः सन्धिभवे स्वप्ने "सन्ध्ये सृष्टिराह हि" शा०सू० "सन्ध्यमिति स्वप्नस्थानमाचष्टे वेदे प्रयो-गदर्शनात् "सन्ध्यं तृतीयं स्वप्नस्थानम्" इत्यालोकस्था-नयोः प्रबोधसम्प्रसादस्थानयोः सन्धौ भवतीति सन्ध्यम्" भा०। "तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने प-श्यति इदञ्च परलोकस्थानञ्च" इत्यप्र० स्मृतिः समूर्णे सर्वेन्द्रियोपसंहारादेतल्लोकानुभवे सति वासनामात्रेण इह लोक स्मरतः कर्मवशात् हृदये मानसं परलोकस्य चिह्नयः स्वप्नो भवति सोऽयं लोकद्वयसन्धौ भवतीति सन्ध्यं स्वप्नं इत्यप्र०।

**सन्ध्यांश** पु० सन्ध्या तत्प्रमाणः सत्ययुगादेरंश। सत्ययुगा-देरंशभेदे तत्प्रमाणम् सन्ध्याशब्दे मनूक्तम् दृश्यम् "स-न्ध्यासन्ध्यांशयोर्मध्ये विज्ञेयं तच्चतुर्युग"मिति मनुः।

**सन्ध्यानल** पु० "सन्ध्या वशिष्ठः कृतवान् तत्र यस्मादिर्षि-सत्तः। ततः सन्ध्याचलं नाम तस्य गायन्ति देवताः" कालिकापु० ५० अ० निरुक्ते पर्वतभेदे।

**सन्ध्यानाटिन्** सन्ध्यायां नटति नट-णिनि। १शिवे त्रिका०

**सन्ध्यापुष्पी** स्त्री सन्ध्यायां पुष्पमस्याः ङीप्। जातिफले राजनि०।

**सन्ध्याबल** पु स्त्री०सन्ध्यायां सन्ध्योपलक्षिते रात्रिकाले बल-बलं। रात्रौ बलयुक्ते राक्षसे त्रिका० स्त्रियां ङीप्।

**सन्ध्याभ्र** न० सन्ध्याकालीनमभ्रमिव। १सुवर्णगैरिके रा जनि०। २सन्ध्याकालीनमेघे च।

**सन्ध्याराग** पु० सन्ध्याया इव रागोऽस्य। १सिन्दूरे राजनि०। १त०। सन्ध्याकालीने २रक्तवर्णे च।

**सन्ध्याराम** पु० सन्ध्यायां तदाख्यभार्यायां रमते रम-संज्ञायां कर्त्तरि घञ्। चतुर्मुखे ब्रह्मणि शब्दमा०।

**सन्न** पु०सीदति सद-क्त। १पियालवृक्षे भरत. १२अवसन्ने त्रि० स्वार्थे क। खर्वे भरतः। [२खर्ववृक्षे च।

**सन्नकद्रु** पु० सन्न एव सन्नकः कर्म०। १पियालवृक्षे अमरः।

**सन्नत** त्रि० सम्+नम-क्त। १प्रणते २अवनियुते च।

**सन्नति** स्त्री सम्+नम-क्तिन्। १प्रणामे २ध्वनौ मेदि०। ३नम्रतायाञ्च। ४होमभेदे स च आश्व०४।१३।१ एकादिभि-र्दशभिर्मन्त्रैर्विधेय। तैत्तिरीयब्रा०३।८।१८।५विहितश्च।

**सन्नद्ध** त्रि० सम्+नह-क्त। १कृतसन्नाहे धृतवर्मणि २व्यूह-रचनयावस्थिते सैन्यादौ मेदि०। ३आततायिनि रायमु० ४सन्नाहादियुक्ते शब्दर०।

**सन्नय** पु० सम्+नी-अच्। १समूहे २पृष्ठस्थिते-बले च अमरः

**सन्नहन** न० सम्+नह-ल्युट्। १वर्मधारणे २उद्योगे ३स-म्यग्बन्धने च। [हेमच०। भावे घञ्। इमबन्धने।

**सन्नाह** पु०सन्नह्यते सम्+नह-कर्मणि घञ्।(साँजोया)वर्मणि

**सन्नाह्य** पु० सम्+नह-ण्यत्। समरोचिते गजे हेमच०।

**सन्निकर्ष** पु० सम्+नि-कृष-घञ्। १सान्निध्ये हेमच० "यद् सन्निकर्षो हि चणार्द्धमपि शस्यते" इति पुराणम् न्यायमते २विषयेन्द्रियसम्बन्धे ज्ञानलक्षणासामान्यलक्षणा-योगजधर्मविशेषात्मके ३अलौकिकप्रत्यक्षसाधने उपायभेदे च। "इन्द्रियार्थसन्निकर्षोत्पन्न ज्ञान प्रत्यक्षम्" गौ० सू०। सन्निकर्षो द्विविधः लौकिकालौकिकभेदात् लौकि कोऽपि षड्विधः अलौकिकस्तु त्रिविधः यथोक्तं भाषाप० "सङ्क्षेपं षड्विधे हेतुरिन्द्रियं करणं मतम्। विषये-न्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः। द्रव्यग्रहस्तु संयोगात्१ संयुक्तसमवायतः२। द्रव्येषु समवेतानां, तथा तत्समवायतः३। तत्रापि समवेतानां, शब्दस्य समवायतः४। तद्वृत्तीनां समवेतसमवायेन५ तु ग्रहः। विशेषणतया६ तदभावानां ग्रहो भवेत्। यदि स्यादुपलभ्येतेत्येव यत्र प्रसज्यते। प्रत्यक्षं समवायस्य विशेषणतया भवेत्। अलौकिकः सन्निकर्षस्त्रिविधः परिकीर्त्तितः। सामान्य-लक्षणा१ज्ञानलक्षणा२योगजस्तथा" भाषा० "यद्यपि विशेषणता नानाविधा तथाहि भूतलादौ घटाभावः

संयुक्तविशेषणतया गृह्यते संख्यादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया, शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया, कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया। एवं कत्वावच्छिन्नाभावे खत्वाभावादिक विशेषणविशेषणतया। एष घटाभावादौ पटाद्यभावः संयुक्तविशेषणविशेषणतया। एवमन्यदप्यूह्यं तथापि विशेषणतात्वरूपेणैकैव सा गण्यते अन्यथा षोढा सन्निकर्ष इति भाषा प्रवादो व्याहन्यतेति" सि०मु०।

**सन्निकर्षण** न० सम्+नि+कृष-ल्युट्। सन्निधाने अमरः।

**सन्निकृष्ट** त्रि० सम्+नि+कृष-क्त। १निकटस्थे अमरः २इन्द्रियसम्बन्धविषये च। [पस्थिते त्रि०।

**सन्निध** न० सम्+नि+धा-क। १नैकट्ये वोपालितः। २समी-

**सन्निधान** न० सम्+नि+धा-ल्युट्। १नैकट्ये सामीप्ये हेमच०। २आश्रये च।

**सन्निधि** पु० सम्+नि+धा-कि। १सामीप्ये अमरः कर्मणि कि। २इन्द्रियविषये मेदि० कर्म०। ३साधुनिधौ। ६त०। ४सतां निधौ। [२स्थते च।

**सन्निपतित** त्रि० सम्+नि-पत-क्त। १मिलिते २उपस्थिते

**सन्निपात** पु० सम्+नि+पत-घञ्। १मेलने "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति" व्या० परि०। २कफादिधातुत्रयस्य वैषम्यरूपत्रिदोषजे ज्वरभेदे ३नाशे ४उपस्थितौ च। ५तालभेदे "एक एव गुरुर्यत्र सन्निपात स चोच्यते" सङ्गीतदा०।

ज्वरभेदस्तन्निदानभेदादिकं भावप्र० उक्तं यथा "तत्र सन्निपातज्वरस्य विप्रकृष्टसन्निकृष्टकारणकथनपूर्विका सम्प्राप्तिमाह "त्रिदोषजनकैर्यातपित्तश्लेष्मामगेहगाः। बहिर्निरस्य कोष्ठाग्निं रसगाज्वरकारिणः"। पूर्वरूपमाह "प्राग्रूपाणि त्रिदोषाणां स्युस्त्रिदोषज्वरे खलु"। अथ सन्निपातज्वरस्य सामान्यानि लक्षणान्याह "क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा। सास्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने। सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः। तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः। परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परा। ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च। शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा। स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः। कृशत्वं नातिगात्राणां सततं कण्ठकूजनम्। कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम्। मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च। चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः।" लोचने सास्रावे साश्रुणी कलुषे अस्वच्छे निर्भुग्ने निर्गते कुटिले च कण्ठः शूकैरिवावृतः धान्याग्रैरिवावृतः। "जिह्वा परिदग्धा परिदग्धेव जायते।" अथवा परिदग्धा इव कृष्णा दृश्यते स्रस्ताङ्गता शिथिलाङ्गता। ष्ठीवनमित्यादि कफसंयुक्तस्य रक्तस्य ष्ठीवनं शिरसो लोठनमितस्ततश्चालनं कृशत्वञ्चातिगात्राणामिति, गात्राणाम् अतिशयितं कार्श्यं न व्याधिप्रभावात् सततं निरन्तरं कोठः। "वरटीदष्टसंस्थानः कोठ इत्यभिधीयते" श्यावः कपिशो वर्णः। मूकत्वमवचनत्वमल्पवचनत्वं वा स्रोतसां कर्णनासादीनाम्।

अथ सामान्यसन्निपातज्वरस्य त्रयोदश विशेषानाह "एकोल्वणास्त्रयस्तेषु द्व्युल्वणाश्च तथेति षट्। समुल्बणश्च भवेदेको विज्ञेयः स तु सप्तमः। प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च षट्। सन्निपातज्वरस्यैव स्युर्विशेषास्त्रयोदश"। तत्र प्रवृद्धवातः मध्यपित्तो हीनकफः १ मध्यवातः प्रवृद्धपित्तो हीनकफः २ हीनवातः प्रवृद्धपित्तो मध्यकफः ३ प्रवृद्धवातः हीनपित्तो मध्यकफः ४ मध्यवातः हीनपित्तः प्रवृद्धकफः ५ हीनवातो मध्यपित्तः प्रवृद्धकफः ६ इति षट्। तेषां नामानि क्रमादाह "विस्फारकस्त्वाशुकारी कम्पनो बभ्रुसंज्ञकः। शीघ्रकारी तथा भल्लु सप्तम कूटपाकलः। संमोहक पाककश्च याम्यः क्रकच इत्यपि। तत कर्कटकः प्रोक्तस्ततो वैदारिकाभिधः" तन्त्रान्तरे विस्फारक इत्यत्र विस्फोरक इति पाठः। बभ्रुस्थाने बभ्रुरितिपाठ कुत्रापि वभ्र इति पाठ भल्लुरित्यत्र फल्गुरिति पाठ याम्य इत्यत्र संग्राम इति पाठ कर्कटक इत्यत्र कर्कोटक इति पाठः। तत्र वातोल्बणस्य लक्षणमाह "श्वासः कासो भ्रमो मूर्छा प्रलापो मोहवेपथू। पार्श्वस्य वेदना जृम्भा कषायत्वं मुखस्य च। वातोल्बणस्य लिङ्गानि सन्निपातस्य लक्षयेत्। एष विस्फारको नाम्ना सन्निपातः सुदारुणः।" अथ पित्तोल्बणस्य लक्षणमाह "अतिसारो भ्रमो मूर्छा मुखपाकस्तथैव च। गात्रे च बिन्दवो रक्ता दाहोऽतीव प्रजायते। पित्तोल्बणस्य लिङ्गानि सन्निपातस्य लक्षयेत्। भिषग्भिः सन्निपातोऽयमाशुकारी प्रकीर्तितः"। अथ कफोल्बणस्य लक्षणमाह "जडता गद्गदा वाणी रात्रौ निद्रा भवत्यपि। प्रस्तब्धे नयने चैव मुख-

माधुर्य्यमेव च । कफोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत् । मुनिभिः सन्निपातोऽयमुक्तः कम्पनसंज्ञकः१ ।” अथ वातपित्तोल्वणस्य लक्षणमाह “वातपित्ताधिकोऽयन्तु सन्निपातः प्रकुप्यति । तस्य ज्वरो मदस्तृष्णा मुखशोषः प्रमीलकः । आध्मानारुचितन्द्राश्च कासश्वासभ्रमश्रमाः । मुनिभिर्वल्गुनामायं२ सन्निपात उदाहृतः ।” अथ वातश्लेष्मोल्वणस्य लक्षणमाह “वातश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति । तस्य शीतज्वरो मूर्च्छा क्षुत् तृष्णा पार्श्वनिग्रहः । शूलमस्थिरं मानस्य तन्द्रा श्वासश्च जायते । असाध्यः सन्निपातोऽयं शीघ्रकारीति कथ्यते । नहि जीवत्यहोरात्रमनेनाविष्टविग्रहः ।” “अथ पित्तश्लेष्मोल्वणस्य लक्षणमाह “पित्तश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति । अन्तर्दाहो बहिःशीतं तस्य तृष्णा प्रवर्द्धते । तुद्यते दक्षिणे पार्श्वे उरःशीर्षगलग्रहः । ष्ठीवति श्लेष्मपित्तञ्च कृच्छ्रात् कोठश्च जायते । विड्भेदश्वासहिक्काश्च वर्द्धन्ते सप्रमीलकाः । ऋषिभिर्मधुनामायं३ सन्निपात उदाहृतः ।” अथ वातपित्तश्लेष्मोल्वणस्य लक्षणमाह “सर्व्वदोषोल्वणो यस्य सन्निपातः प्रकुप्यति । तथाथाऽपि दोषाणां तस्य रूपाणि लक्षयेत् । व्याधिभ्यो दारुणश्चैव वज्रशस्त्राग्निसन्निभः । कैवल्योत्कचपरमस्तश्चाक्ष्णोः रक्तलोचनम् । त्रिरात्रात् परमेतस्य जन्तोर्हरति जीवितम् । तदवस्थन्तु तं दृष्ट्वा मूढो व्याहरते जनः । धर्षितो राक्षसैर्भूतसेवायां चरन्ति ये । अन्यथा ब्रुवते केचिद् यक्षिण्या ब्रह्मराक्षसैः । पिशाचैर्गुह्यकैश्चैव तथान्यैः संस्तकैर्हतम् । कुलदेवार्च्चनाहीनं धर्षितं कुलदेवतैः । नक्षत्रपीडामपरे गरकर्म्मेति चापरे । सन्निपातमिमं प्राहुर्भिषजः कूटपाकलम्७ ।” अथ प्रवृद्धमध्यहीनवातादिजनितसन्निपातज्वराणां लक्षणान्याह “प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च यः । तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः । प्रलापायाससम्मोहकम्पमूर्च्छाऽरतिभ्रमाः । एकपक्षाभिघातश्च तत्राप्येते विशेषतः । एष सम्मोहको८ नाम्ना सन्निपात उदाहृतः ।” रोगास्तएवोक्ताः उक्ता एव ते रोगाः व्यथाक्षेपशुल्निद्रानाशविष्टम्भादयो वातजाः दाहतृष्णोष्णताच्छेदादयः पित्तजाः गौरवाग्निमान्द्योत्क्लेशनासिकास्रावप्रसेकादय कफजाः । तत्रापि प्रलापादयः प्रवृद्धवातानां विशेषाद्भवन्ति । ननु वातः प्रवृद्धः सज्वरं करिष्यति पित्तन्तु मध्यममिति यावत् तत्कथं ज्वरं करिष्यति यत आह “धातवस्तन्मला दोषा ध्नन्त्यसमाःसमाः । समाः सुखाय विज्ञेया बलायोपचयाय च ।” इति उच्यते । अत्र पित्तं मध्यमपि अप्रकृतमेव यतोऽप्रकृतयोर्वातश्लेष्मणोरपेक्षया मध्यं तेन मध्यकुपितमित्यर्थः । ननु कफक्षीणः स कथं ज्वरं करिष्यति हीनशक्तित्वात् उच्यते दोषाः क्षीणा अपि व्याधीन् कुर्व्वन्त्येव यत आह “वातक्षयेऽल्पचेष्टत्वं मन्दवाक्त्वं विसंज्ञता । पित्तक्षयेऽधिकः श्लेष्मा वह्निर्मन्दः प्रभाक्षयः ।” शिथिलाः सन्धयो मूर्च्छा रौक्ष्यं दाहः कफक्षये” । इत्याशङ्कासिद्धान्तश्च परत्रापि । “मध्यप्रवृद्धहीनैस्तु वातपित्तकफैश्च यः । तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः । मोहप्रलापमूर्च्छाः स्युर्मन्यास्तम्भः शिरोग्रहः । कासः श्वासो भ्रमस्तन्द्रा सज्ञानाशो हृदिव्यथा । खेभ्यो रक्तं विसृजति सरक्तं स्तब्धनेत्रता । तत्राप्येते विशेषाः स्युर्मृत्युरर्व्वाक् त्रिवासरात् । भिषग्भिः सन्निपातोऽयं कथितः पाकलाभिधः९ । हीनप्रवृद्धमध्यैस्तु वातपित्तकफैश्च यः । तेन रोगास्त एवोक्ता यथारोगबलाश्रयाः । हृदयं दह्यते चास्य यकृत्प्लीहान्त्रफुप्फुसाः । पच्यन्तेऽत्यर्थमूर्द्ध्वं च पूयशोणितनिर्गमः । शीर्णदन्तश्च मृत्युश्च तत्राप्येतद् विशेषतः । भिषग्भिः सन्निपातोऽयं याम्यो१० नाम्ना प्रकीर्त्तितः । प्रवृद्धहीनमध्यैस्तु वातपित्तकफैश्च यः । तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः । प्रलापायाससंमोहाः कम्पमूर्च्छाऽरतिभ्रमाः । मन्यास्तम्भेन मृत्युः स्यात् तत्राप्येतद्विशेषतः । भिषग्भिः सन्निपातोऽयं क्रकच११ संप्रकीर्त्तितः । मध्यहीनप्रवृद्धैस्तु वातपित्तकफैश्च यः । तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः । अन्तर्दाहो विशेषोऽत्र न च वक्तुं स शक्यते । रक्तमालकलेनेव लक्ष्यते मुखमण्डलम् । पित्तेनाकर्षितः श्लेष्मा हृदयाच्च प्रसिच्यते । इषुणेवाहत पार्श्वं तुद्यते भिद्यते हृदि । प्रमीलकः श्वासहिक्का वर्द्धते च दिने दिने । जिह्वा दग्धा खरस्पर्शा गलः शूकैरिवावृतः । विसर्गं नाभिजानाति कूजेच्चापि कपोतवत् । अतीव श्लेष्मणा पूर्णः शुष्कवक्त्रोष्ठतालुकः । तन्द्रानिद्रातियोगार्त्तो हतवाग्निहतद्युतिः । न रतिं लभते नित्यं विपरीतानि चेष्टति । आयस्यते च बहुशो रक्तं ष्ठीवति चाल्पश । एष कर्कटको१२ नाम्ना

षति। तं प्रोर्णुनाव२ जुष्टं विचित्रकष्टं विजानीयात्। स्वेदभ्रमाङ्गभेदाः कम्पोद्वथुर्वमिर्व्यथा कण्ठे। गात्रस्य गुरुतीव प्रलापि३जुष्टस्य जायते लिङ्गम्। अन्तर्दाहः शैत्यं बहिः, श्वयथुररतिरपि तथा श्वासः। अङ्गमपि दग्धकल्पं सोऽन्तर्दाह४इति कथितः। नक्तं दिवा न निद्रामुपैति गृह्णाति मूर्धानमसौ। उत्थाय दण्डपातो५ भ्रमातुरः सर्वतो भ्रमति"। भ्रमसौ गृह्णाति आकाशात् किञ्चित् गृहीतं करौ प्रसारयतीत्यर्थः। "संपूर्यते शरीरं ग्रन्थिभिरभितस्तथोदरं मरुता। श्वासातुरस्य सततं विचेतनस्यान्तकाहूतस्य"। परिधावतीव गात्रे रुकपात्रे भुजङ्गपतङ्गहारिणगणः। वेपथुमतः सदाहस्यै पीटाह७ज्वरार्त्तस्य"। रुकपात्रे पीडाभाजने गात्रस्य विशेषणमेतत्। "यस्यातिपीतमङ्गं नयने सुतरां मलस्रवोऽप्यधिकम्। दाहोऽतिशीतता बहिरस्य स हारिद्रकोद्र ज्ञेयः। छगलकसमानगन्धः स्वान्धरुजावान्विरुद्ध गलरन्ध्रः। अजघोष८ सन्निपातादातास्याद्यः पुमान् भवति। शब्दादीनधिगच्छति न स्वान्विषयान् यदिन्द्रियग्रामैः। हसति प्रलपति परुषं च स्रेयो भूतहासा१०र्त्तः। येन सुदुर्ज्वरवेगात् यन्त्रेणेवावपीड्यते गात्रम्। रक्तं पीतञ्च वमेद्यन्त्रापीड११ स विज्ञेयः। अतिसरति वमति कूजति मालाग्र्यमितश्चिरं नरः स्विपति। सन्न्यास१२सन्निपाते प्रलपत्यथाचिनयङ्को भवति। मेचकवपुरतिमेचकलोचनयुगलो मलोत्सर्गात्। संशोषिण्य१३सितपिण्डकामण्डलयुक्तो ज्वरे नरो भवति। नारायण एव भिषक् भेषजमेतेषु जाह्नवीनीरम्। नैरुज्यहेतुरेको नित्यं मृत्युञ्जयो ध्येयः।" अथासाध्यस्य सन्निपातज्वरस्य लक्षणमाह "सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः। शोथः संजायते तेन कश्चिदेव प्रमुच्यते।" सुदारुणः मारकत्वात् यतस्तेन शोथेन कश्चिदेव प्रमुच्यते कोऽपि जीवितं त्यजति इत्यर्थः। "सन्निपातज्वरान् कष्टानसाध्यानपरे जगुः। दोषे प्रवृद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः। सन्निपात ज्वरोऽसाध्यः कष्टसाध्यस्ततोऽन्यथा।" सर्वाणि दाहशीतादीनि सम्पूर्णानि आतुरगतानि प्रोक्तानि यावल्लक्षणानि यस्य सः। ततोऽन्यथा दोषे पक्वे अग्नौ दीप्ते स्वल्पलक्षणकः कष्टसाध्य इत्यर्थः।

**सन्निपातज्वर** पु० सन्निपातजो ज्वरः। सन्निपातशब्दोक्ते त्रिदोषजविकारजाते ज्वरे।

**सन्निपातनुद्** पु० सन्निपातं त्रिदोषजविकारं नुदति नुद-क्विप्। नेपालनिम्बे राजनि०।

**सन्निबन्धन** न० सम्यक् निबन्धनं प्रा०स०। १नानाख्यानस्यवाक्यानामेकत्र सङ्कलने २तदुपयोगिग्रन्थभेदे च। ७प्र०। ३सम्यग्निबन्धनयुते त्रि० "सद्वृत्तिः सन्निबन्धनेति" माघः

**सन्निभ** त्रि० सम्+नि+भा—क। सदृशे जटा०। निभादिवदस्य नित्यसमासता।

**सन्निवेश** पु० सम्+नि+विश-आधारे घञ्। १पुरादेर्बहिःस्थे विहारार्थं देशे अमरः। भावे घञ्। २सम्यक् स्थितौ।

**सन्निहित** त्रि० सम्+नि+धा—क्त। १निकटस्थे "सन्निहित बुद्धिरन्तरङ्गम्" न्यायः "या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः" ति०त०। २सम्यक्स्थापिते च। भावे क्त। ३नैकट्ये न०। [त्यागे ३युक्ते ४अर्पिते च।

**सन्यस्त** त्रि० सम्+नि+अस—क्त। १निक्षिप्ते २कृतसम्यक्-

**सन्यास** पु० सम्+नि+अस—घञ्। "काम्यानां कर्मणां त्यागं सन्न्यासं कवयो विदुः" गीतोक्ते विहितकर्मणां विधानेन १सम्यक्त्यागे २तदुपयोगि चतुर्थाश्रमे आश्रमशब्दे ८४२ पृ० दृश्यम्। ३चैत्रे मासि क्रियादिकर्त्तव्ये पुराणप्रसिद्धे शिवव्रतभेदे च। "चैत्रे शिवोत्सवं कुर्यात् नृत्यगीतमहोत्सवैः। स्नायात् त्रिसन्ध्यं रात्रौ च हविष्याशी जितेन्द्रियः। शिवस्वरूपतां याति शिवप्रीतिकरः परः। पतियादिषु यो मर्त्यो देहं संपीड्य भक्तितः। अश्वमेधफलं तस्य जायते च पदे पदे। सर्वकर्मपरित्यागी शिवोत्सवपरायणः। भक्तो जागरणं कुर्याद्रात्रौ नृत्यकुतूहलैः। नानाविधैर्महावाद्यैर्नृत्यैश्च विविधैरपि। नानावेशधरैर्नृत्यैः प्रीयते शङ्करः प्रभुः। किमलभ्यं भगवति प्रसन्ने नीललोहिते। तस्मात् सर्वप्रयत्नेन तोषणीयो महेश्वरः। शङ्खवाद्यं शङ्खतोयं वर्जयेत् शिवसन्निधौ। प्रासादद्बहिरिव शम्भोरुत्सवं कारयेन्मुदा। उपोष्य कृत्वा संक्रान्त्यां व्रतमेतत् समापयेत्" ब्रह्मवैपु० उत्तरख० ४अ०। ४जटामांस्यां शब्दच०।

**सन्यासिन्** पु० सम्+नि+अस—णिनि। १सन्न्यासयुते २चतुर्थाश्रमयुते तेषां धर्मभेदेन नामभेदो यथा

"तीर्थाश्रमवनारण्यगिरिपर्वतसागराः। सरस्वती भारती च पुरीति दश कीर्त्तिताः"। तेषां लक्षणानि यथा "त्रिवेणीसङ्गमे तीर्थे तत्त्वमस्यादिलक्षणे। स्नायात्तत्त्वार्थभावेन तीर्थनामा१ स उच्यते। आश्रमग्रहणे प्रौढ़ आशापाशविवर्जितः। यातायातविनिर्मुक्त एतदा-

अमललक्षणम् २ । सुरम्ये निर्झरे देशे वने वासं क-रोति यः । आशापाशविनिर्मुक्तो वननामा स उच्यते । अरण्ये संस्थितो नित्यमानन्दं नन्दने वने । त्यक्त्वा सर्व-मिदं विश्वमरण्यं लक्षणं ४ किल । वासो गिरिवरे नित्यं गीताभ्यासे हि तत्परः । गम्भीराचलबुद्धिश्च गिरिनामा ५ स उच्यते । वसेत् पर्वतमूलेषु प्रौढो यो ध्यानधार-णात् । सारासारं विजानाति पर्वतः ६ परिकीर्त्तितः । वसेत् सागरगम्भीरो न च रत्नपरिग्रहः । मर्य्यादां न लङ्घयेत् सागरः ७ परिकीर्त्तितः । स्वरज्ञानवशो नित्यं स्वरवादी कवीश्वरः । संसारसागरे सारामिज्ञो यो हि सरस्वती ८ । विद्याभारेण सम्पूर्णं सर्वभारं परित्यजेत् । दुःखभारं न जानाति भारती ९ परिकीर्त्तिता । ज्ञान-तत्त्वेन सम्पूर्णः पूर्णतत्त्वपदे स्थितः । परब्रह्मरतो नित्यं पुरीनामा १० स उच्यते" इति तन्त्रसङ्ग्रहधृते विद्या रण्यस्वामिकृतम् । २चैत्रे कर्त्तव्यशिवव्रतकर्त्तरि च । [भ

सपत्न पु० समानं पत्नं यस्य । १तुल्यरूपे २निश्चितसाध्यके पक्षे

सपत्नाकरण न० सह [illegible] पत्नेन सपत्न तथा क्रियते सपत्न+डाच्+कृ— । पत्नेन सह शरवेधनरूपे अत्यन्तव्यथने । कर्म्मणि क्त । सपत्नाकृत । तथा पी-ड़िते त्रि० । [अमर ।

सपत्र पु० सह एकार्थे पतति यतते पत—न सहस्य सः । शत्रौ

सपत्नारि पु० सपत्नस्य अरिरिव । (वेडवांश) वंशभेदे शब्दच० ।

सपत्नी स्त्री समानः पतिर्यस्याः ङीप् न च । १एकभर्त्तृकायां स्त्रियाम् २समस्वामिकायां भूम्यादौ च । तत्र सपत्नि-रित्यपि ।

सपदि अव्य० सह पद्यते पद—इन् सहस्य सः । तत्क्षणे इत्यर्थे "सपदि मुकुलिताक्षीमिति" कुमार । [यति ।

सपर पूजायां कण्ड्वा० पर० सक० सेट् । सपर्य्यति असप

सपर्य्या स्त्री सपर—यक् अ टाप् । पूजायाम् "सोऽहं सपर्य्या-विधिभाजनेनेति" रघु । [हिते २चतुर्थांशसहिते च ।

सपाद त्रि० सह पादेन चरणेन चतुर्थांशेन वा । १पादयु

सपिण्ड त्रि० समानः पिण्डः स्वदेहारम्भकांशभेदः श्राद्धे देयपिण्डो वा यस्य समानस्य सः । एकदेहारब्धदेहे मा-तृक्रमे "असपिण्डा च या मातुरिति" स्मृतिः । शरीरा-न्तर्गतात् परम्परया अविपरम्परया वा एकदेहार-म्भकत्वाच्च सापिण्ड्यम् मिता० । २श्राद्धे तत्पात्रोक्तरूपपिण्डयुते दायभा० । एतच्च दायपरम्परोपयोगिसापिण्ड्यमिति । सपिण्डता हि विषयभेदेन द्विविधा श्राद्धोपयोगिनी

विवाहोपयोगिनी दायोपयोगिनी चेति । तत्र समानदेह सम्बन्धे या सपिण्डता साऽशौचग्रहणार्थं विवाहार्थं च । श्राद्धे देयपिण्डसम्बन्धात् सपिण्डता तु दायग्रहणोपयोगिनीति विवेकः । यथोक्तं शु०त० रघुनन्दनेन "मत्स्यपुराणे "लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्ड-भागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरु-षम्" । नन्वेवं मात्रादिभिः सह पिण्डतल्लेपभाक्-त्वासम्भवात् कथं सपिण्डत्वमिति चेदुच्यते तेषामपि पिण्डलेपयोः सम्बन्धोऽस्ति तथाच बौधायनः "प्रपिता-महः पितामहः पिता स्वयं, सोदर्य्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रो वा एतानविभक्तदायादान् सपिण्डा-नाचक्षते । विभक्तदायादान् सकुल्यानाचक्षते सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवति" इति अस्यार्थः पित्रा-दिपिण्डत्रयेषु सपिण्डनेन भोक्तृत्वात् पुत्रादिभिस्त्रिभि-स्तत्पिण्डदानात् । यश्च जीवन् यस्य पिण्डदाता स मृतः सन् सपिण्डनेन तत् पिण्डभोक्ता एव सति मध्यस्थितः पुरुषः पूर्वेषां जीवन् पिण्डदाता मृतः सन् तत्-पिण्डभोक्ताऽपरेषां जीवतां पिण्डसम्प्रदाता भवेत् । मृतश्च तैः सह दौहित्रादिदेयपिण्डभोक्ता अतो येषा-मयं पिण्डदाता ये चास्य पिण्डभोक्तारस्तेऽविभक्त-पिण्डरूपं दायमश्नन्तीति अविभक्तदायादाः सपिण्डा इति । इदञ्च सपिण्डत्वं सकुल्यत्वञ्च दायग्रहणार्थम् अशौचाद्यर्थन्तु पिण्डलेपभुजामपि "लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः" इति प्रागुक्तमत्स्यपुराणात् । वक्ष्यमाणकूर्मपुराणशङ्खलिखितवचनाच्च । पिण्डे यथा-परस्परं भाक्त्वं तथा लेपे तुल्यन्यायात् । हारलतायां कूर्मपुराणम् "सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने । पिता पिता-महश्चैव तथैव प्रपितामहः । लेपभाजश्चतुर्थाद्याः सा-पिण्ड्यं साप्तपौरुषम्" । लेपभागिभ्य ऊर्द्ध्वं यावज्जन्म-नाम्नोरवेदनं यावदस्मकनाम्नोऽस्मात् पूर्वपुरुषादयं जात इति विशेषतः अयमस्मात् कुले जात इति सामान्यतो वा स्मर्य्यते तावत् समानोदकत्वमिति हारलता । अत्र परवचनेनैव सापिण्ड्यसिद्धौ पूर्ववचनपूर्वार्द्धं जीवत्पितृ-कत्वादिना अधिकपुरुषेषु पिण्डलेपसम्बन्धेऽपि सपिण्ड-त्वनिवृत्तिज्ञापनाय । सर्वदेशीयाचारोऽपि तथा" । "अथ य एतत् पिण्डान् दत्त्वैव मृतः परतश्चायम-विभक्तः स कथं सपिण्डः । एकपिण्डदातृत्वभोक्तृत्व-

तत्तत्सम्बन्धाभावादिति चेत् तद्योग्यतयेति ब्रूमः। योग्यताप्रयोजकञ्च सामान्यशास्त्रविषयत्वम्। ततश्चात्यतिवृद्धप्रपितामहाद्यवधिकाधस्तनानां चतुर्णां पुंसां प्रत्येकापेक्षया सप्तानामेकगोत्राणां स्वावधिपरतनानां सप्तानाञ्च सापिण्ड्यं पिण्डलेपयोर्दातृत्वभोक्तृत्वसम्बन्धादिति। स्त्रीणान्तु भर्तृसापिण्ड्येन सापिण्ड्यम् "प्रत्तानां भर्तृसापिण्ड्यमिति" वचनात्। नन्वेवं कन्यायाः कथं सपिण्डतेति चेत् आदिपुराणवचनात् त्रैपुरुषं सापिण्ड्यम्। यथा "सपिण्डता तु कन्यानां सवर्णानां त्रिपौरुषी"। अत्र कन्यानामूढानाम् "अप्रत्तानां त्रिपौरुषमिति" वशिष्ठवचनात्। तेन आत्मपञ्चमे वृद्धप्रपितामहे सापिण्ड्यं निवर्त्तते इति प्रतिपादितम्। अत एव कन्यायाः प्रपितामहभ्रात्रा तत्सन्ततिभिः सह सापिण्ड्याभावात् कन्यामरणजननयोस्तेषां सपिण्डाशौचं नास्ति किन्तु समानोदकनिमित्तमेवाशौचमिति एवं तेषामपि जननमरणयोः कन्यानामिति शूलपाणिमहामहोपाध्यायः। यत्तु कूर्मपुराणम् "अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्। प्रत्तानां भर्तृसापिण्ड्यं प्राह देवः पितामह" इति रत्नाकरधृतम्। तद्विवाहे पितृपक्षविषयम्। यथा विष्णुपुराणम् "सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम्। उद्वहेत द्विजो भार्य्यां न्यायेन विधिना नृप।" सप्तमीं पञ्चमीं हित्वेति शेषः। भर्तृसापिण्ड्यमित्यत्र साप्तपौरुषमित्यनुषज्यते। तेन भर्तृसमानसापिण्ड्यमित्यर्थः। शङ्खलिखितौ "सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी। पिण्डश्चोदकदानञ्च शौचाशौचं तदानुगम्"। गोत्रतः गोत्रैक्ये तेन मातामहकुले कदाचित् षट्पुरुषपर्य्यन्तं पिण्डसम्बन्धेऽपि न सपिण्डता। तान् सप्तपुरुषान् आ समन्तात् पिण्डादिकमनुगच्छतीति तदानुगम्। एतेन "सपिण्डता एकशरीरावयवान्वयेन भवति तथाहि पितुः शरीरावयवान्वयेन पित्रा सह एव पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात्। एव मातृशरीरावयवान्वयेन भ्रात्रादिभिरिति। एव पत्न्या सह पत्या एकशरीरारम्भकतया सापिण्ड्यम्। तथाच गर्भोपनिषदि "एतत् षाट्कौषिकं शरीरं त्रीणि पितृतः त्रीणि मातृतः अस्थिस्नायुमज्जानः पितृतः, त्वङ्मांसरुधिराणि मातृतश्चेति" तत्र तत्रावयवान्वयप्रतिपादनात्। निर्वाप्यपिण्डाभावे तु सापिण्ड्ये भ्रातृपितृव्यादिसापिण्ड्यं न स्यात्।

अतिप्रसङ्गस्तु सप्तान्यतमत्वेन प्रयोगोपाधिना निरसनीयः। यद्येव मातामहादीनामपि मरणे सपिण्डत्वेन दशाहाशौचं प्राप्नोति, स्यादेतत् यदि मातामहादीनां मरणे "त्रिरात्रं स्यादशौचकम्" इत्यादिविशेषवचनं न स्यात्। यत्र तु विशेषवचनं नास्ति तत्र दशाहमिति मिताक्षरारत्नाकरादिमतमपास्तं लेपभाजइत्यादि वाचनिकेऽर्थे सापिण्ड्ये एकशरीरावयवान्वयरूपस्वकपोलरचितार्थनवकाशात् निर्वाप्यपिण्डसम्बन्धेन भ्रात्रादीनां सापिण्ड्यस्य मत्स्यपुराणबौधायनाभ्यां पूर्व्वमुक्तत्वात् कामधेनुहारलताकल्पतरुपारिजातकारादिभिस्तथैव व्याख्यातत्वाच्च। रेतःशोणितपरिणामरूपत्वाद्यस्य शरीरस्य भवतु वा तथा पत्न्या सह पत्या एकशरीरारम्भकतायाः प्रत्यक्षबाधितत्वात् कथं सापिण्ड्यं प्रमातामहादीनां विशेषवचनाभावात् सपिण्डत्वेन दशाहाद्यशौचप्रसङ्गाच्च मातामहादौ सापिण्ड्यस्य लोकविरुद्धत्वाच्च। भवतु वा तथा शरीरद्वारा सापिण्ड्यं तथापि वचनात् यथासप्तान्तर्गतत्वं तन्त्रं तथा "गोत्रतः साप्तपौरुषीति" वचनात् गोत्रैक्यमपि प्रागुक्तवचनात् कन्यायाः त्रैपौरुषम् ऊढायाश्च भर्त्तृसपिण्डनेन सापिण्ड्यमिति चेत् तदेतन्मतेऽपि व्यवस्थायां न क्षतिरिति अतएव सुमन्तुवचनाभिहितं यद्दशमपुरुषपर्य्यन्तमशौचं तत् सप्तमपुरुषाभ्यन्तराशौचान्न्यूनं त्रिरात्रं यथा "ब्राह्मणानामेकपिण्डस्वधानामादशमात्कर्म्मविच्छित्तिर्भवति आसप्तमात् एककर्म्मविच्छित्तिर्भवति आतृतीयात् स्वधाविच्छित्तिर्भवति" अन्यथा पिण्डशौचक्रियाद्युच्छेदात् ब्रह्महत्यातुल्यो भवति" अस्यार्थः। एका समाना पिण्डस्वधा येषां ते तथा यथैकोद्दिष्टस्य पिण्डे तु अनुशब्दो न युज्यते इत्यत्रानुशब्देनानुशब्दयुक्तमन्त्रो लक्ष्यते अनुयुक्तमन्त्रस्तु "ये चात्र त्वामनु याश्च त्वमनु तस्मै ते स्वधा" इति तथा पिण्डस्वधाशब्देन पिण्डसम्बन्धिस्वधाशब्दयुक्तमन्त्रकरणकदेयजलं लक्षितम्। तथा च "ऊर्ज्जं वहन्तीरमृतं घृतं पयःकीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन्" इत्यनेन पिण्डान् सिञ्चेदित्युक्तम्। ततश्च एकपिण्डस्वधानां समानोदकानामित्यर्थः। अतएव मनुः। "जन्मन्येकोदकानान्तु त्रिरात्रात् शुद्धिरिष्यते"। विष्णुपुराणं "मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेन वा" मातृपक्षस्य मातामहपक्षस्य ये जलेन सम्बद्धाः समानोदका इति श्राद्धविवेकेऽपि व्याख्यातम्। "असम्बन्धा भवेद्वा या तु

पिण्डेनैवोदकेन वा" इति विवाहेऽप्युक्तम्। अत्र पुत्रिकायाः पार्वणे पिण्डोदकयोः सम्बन्धात् कन्यामात्रेऽपि तद्योग्यतायाः सत्त्वात्। कन्या पिण्डोदकसम्बन्धोच्यते एतदनुसारादपि तस्याः सपिण्डता बोद्धव्या तस्मादेकपिण्डस्वधानामित्यनेन समानोदकभावः समाख्यातः न तु दशमपर्य्यन्तं, पित्रादिजीवनादिना सापिण्ड्यसम्बन्धेऽपि सापिण्ड्यं विहितं प्रागुक्तयुक्तेः स्वधेत्यस्य तद्द्वययुक्तत्वेन वैयर्थ्यापत्तेः। अपुत्रधनाधिकारस्तु सन्निहिततराभावे सप्तमपुरुषपर्य्यन्तं मृतपितृकस्य स्वधोपलक्षितश्राद्धाधिकारः पुरुषत्रयपर्य्यन्तमिति अत्र स्वधाशब्दो मन्त्रपरः पितृभक्षपरोऽपि। तथा च शुणविष्णुधृता श्रुतिः "स्वधा वै पितृणामन्नमिति।" दशमपुरुषपर्य्यन्तं समानोदकत्वेऽपि न त्रिरात्रं किन्तु पक्षिण्यादि तथाहि उदकक्रियामधिकृत्य पारस्करः "सर्वे ज्ञातयो भावयन्ति आसप्तमाद्दशमाद्वा समानग्रामवासेन यावत् सम्बन्धमनुस्मरेयुर्वा" इति भावयन्ति निष्पादयन्ति अत्र यावत्सम्बन्धमनुस्मरेयुरेककुलजातावयमिति स्मरणं भवतीत्यनेनैव सर्वेषामुदकदाने प्राप्ते यद् आसप्तमाद्दशमादित्युक्तं तत्सन्निकर्षतारतम्येनाशौचभेदेऽप्युदककर्मसमानार्थमिति। अशौचभेदस्तु सप्तमपर्य्यन्तं सपिण्डत्वाद्दशाहं। ततश्च दशमपुरुषपर्य्यन्तं त्र्यहं। तथा च विष्णुबृहस्पती। "दशाहेन सपिण्डास्तु शुध्यन्ति मृतसूतके। त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः।" ततश्चतुर्दशपुरुषपर्य्यन्तं पक्षिणी ततश्च जन्मनामस्मृतिपर्य्यन्तमेकाहः। तथा च मिताक्षराविवादचिन्तामण्योर्बृहन्मनुः। "सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु निवर्त्तेताचतुर्दशात्। जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते।" अत्र समानोदकत्वे द्विविधे पूर्वत्र गौतमः "पक्षिणीमसपिण्डे" परत्र हारीतः। "मातामहे त्रिरात्रं स्यादेकाहस्त्वसपिण्डके" इति। अत एव गोत्रजानामहः स्मृतमिति जाबालवचनं ततः परं सर्वथा समानोदकतानिवृत्तेः। स्नानमात्रमिति "स्नात्वा शुध्यन्ति गोत्रजाः" इति इह स्नात्वेत्युक्तत्वादिति"।

तथा च गोत्रैक्ये सति पिण्डलेपयोर्दातृत्वभोक्तृत्वान्यतरवत्त्वम् अशौचसापिण्ड्यम्। साक्षात्परम्परया सप्तमपर्य्यन्तदेहसम्बन्धवत्त्वं विवाहसापिण्ड्यं त्रिपुरुषपर्य्यन्तं देयपिण्डदातृत्वभोक्तृत्वान्यतरवत्त्वं दायग्रहणे सापिण्ड्यमिति विवेकः मिता० मातृसपत्न्या अपि सापिण्ड्यं स्वीकृत्य धनाधिकारोऽभिहितः तन्मते समानदेहसम्बन्धयोग्यतयैव सापिण्ड्यात्। दायभागमते तु श्राद्धे देयपिण्डदातृत्वभोक्तृत्वाभावात् न तस्याः सापिण्ड्यं तद्योग्यत्वेऽपि स्त्रीमात्रस्य विशेषवचनाभावे धनाधिकारपर्युदासात् इति विवेकः एवं स्नुषाया अपि।

**सपिण्डीकरण** न० सह पिण्डेन सपिण्डं तत अभूततद्भावे च्वि+कृ-ल्युट्। प्रेतत्वविमोचनाय प्रेतोद्देशेन कर्त्तव्ये पित्रादिपिण्डसमन्वयकरणरूपे श्राद्धभेदे सपिण्डीकरणप्रकारस्तत्कालादिकं श्रा०त० निरूपितं यथा "अथ सपिण्डीकरणम्। तत्र गोभिलः "पूर्णे संवत्सरे षण्मासे त्रिपक्षे यदहर्वा वृद्धिरापद्येत तदहश्चत्वार्युदकपात्राणि सतिलगन्धपुष्पोदकानि पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति। ये समानाः समनसः पितरो यमराज्ये तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्। ये समानाः समनसो जीवा जीवेषु मामकाः। तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः" इति एतेनैव पिण्डो व्याख्यातः" इति। पूर्णे संवत्सरे इति मुख्यः कल्पः। तदशक्तौ नवमो मासः "संवत्सरान्ते विसर्जनं नवममासमित्येके" इति पैठीनसिवचनात्। तदशक्तौ षष्ठो मासः। तत्राप्यशक्तौ त्रिपक्षः तत्राप्यशक्तौ अशौचापगमे प्रथममासस्य द्वादशभिर्दिनैर्द्वादशमासिकानि श्राद्धानि निर्वर्त्त्य त्रयोदशाहः सपिण्डीकरणकालः शूद्रस्य द्वादशाहो न तु त्रयोदशाहः एवं "मासिकार्थवत् द्वादशाहश्राद्धं कृत्वा त्रयोदशेऽह्नि वा तत्कुर्य्यान्मन्त्रवर्जं हि शूद्राणां द्वादशेऽह्नीति" विष्णुवचनात्। मासिकार्थवदिति मासिकार्थं मासि मासि क्रियमाणश्राद्धप्रयोजनं प्रेताप्यायनादि तद्युक्तं द्वादशाहक्रियमाणश्राद्धमित्यर्थः। यत्र त्वेकादशमासाभ्यन्तरेऽधिमासपातस्तत्र त्रयोदशसु दिनेषु त्रयोदश मासिकानि कृत्वा चतुर्दशेऽह्नि सपिण्डनं कार्यमिति "संवत्सराभ्यन्तरे यद्यधिमासो भवति तदा मासिकार्थं दिनमेकं वर्द्धयेत्" इति विष्णुवाक्यात् शूद्रस्य त्रयोदश दिनेषु त्रयोदश मासिकानि त्रयोदशेऽह्नि सपिण्डनं दृष्टपरिकल्पनान्यायात्। एतच्च वृद्धिमात्रे न दिनवृद्धिरिति मिश्रोक्तं हेयम्। तदुक्तविष्णुवाक्ये दिनमेकं वर्द्धयेदिति श्रुतेः। श्राद्धाधिकमाह सत्यव्रतः "संवत्सरस्य मध्ये तु यदि स्यादधिमासकः।

तथाचरण प्रतिपत्तिरूपकर्माङ्ग एव प्रतिपाद्याभावे तन्निवृत्ति पशुयागे "लोहितं निरस्यति शकृन्निरस्यति" इत्यादावुक्ता। अतएव यज्ञवास्तुरूपप्रतिपत्तियागेऽपि यज्ञो यत्र भवति इति यज्ञवास्तुसमाख्यानुरोधेनास्तृतकुशविनाशेऽपि कुशान्तरप्रतिनिधिर्भट्टनारायणैर्गोभिलभाष्ये उक्तः "प्राक् स्विष्टकृत आवाप" इति गोभिलसूत्रस्य व्याख्यानेऽपि आवपत इत्यावाप प्रधानहोमः स तु स्विष्टकृद्धोमात् प्राक् न पश्चादित्यर्थः। एवञ्च मुख्यहोमे त्वकृते यदि चरुर्नष्टो दुष्टो वा भवति तदाज्य पात्रस्थे कृते चेन्नाशदुष्टौ तदाज्येनैव स्विष्टकृद्धोम इति सरला। एतेन शेषनाशे पिण्डनिवृत्तिरिति वाचस्पतिमिश्रोक्तं हेयम्। एतेनाध्ययनविधानेन पिण्डनिर्माणप्रकारो व्याख्यात उक्तः"।

"पितरि पूर्वं मृते तद्वर्षाभ्यन्तरे पितामहे प्रपितामहे मृते यथा कर्त्तव्यं तथाह छन्दोगपरिशिष्टे कात्यायनः "पितुः सपिण्डनं कृत्वा कुर्य्यान्मासानुमासिकम्। असंस्कृतौ न संस्कार्य्यौ पूर्व्वौ पौत्रप्रपौत्रकैः। पितरं तत्र संस्कुर्य्यादिति कात्यायनोऽब्रवीत्। पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा। पितामहेन पितरं कुर्य्यादिति विनिश्चयः"। पितुः सपिण्डनं कृत्वा प्रेतीभूतयोरपि पितामहप्रपितामहयोः सत्त्वे प्रतिमासविहितं पार्व्वणं पितृवृद्धप्रपितामहातिवृद्धप्रपितामहानां कर्त्तव्यं न तु तयोः सपिण्डीकरणापेक्षा कार्य्या ननु सपिण्डनेनासंस्कृताभ्यां सह पिण्डैः कथं सपिण्डनाख्यसंस्कारस्तस्मात्तदर्थं तयोः सपिण्डीकरणमपकर्षणीयं पितुरेव वा सपिण्डनमुत्कर्षणीयमित्यत आह असंस्कृतेनेति। उत्कर्षापकर्षौ न कार्य्यावित्यनेन वचनेनोक्तं कथमसंस्कृतेन सह संस्कार इत्यत्राह पापिष्ठमपीति पापिष्ठमकृतसपिण्डीकरणं शुद्धेन कृतसपिण्डीकरणेन पितामहेन पापकृता अकृतसपिण्डीकरणेनापि शुद्धं कुर्य्यादिति शास्त्रनिश्चयः। अतो वचनबलाददोष इति तात्पर्य्यम्। अत्र तु प्रेतीभूतपितामहेन पितुः सपिण्डने पितामहैकोद्दिष्टमेव। "असपिण्डं कृतं प्रेतमेकोद्दिष्टेन तर्पयेत्" इति प्रागुक्तजाबालवचनात्। एवमन्यत्रापि बोध्यं वृद्धप्रपितामहस्य प्रेतत्वे तेन सह न कार्य्यमिति तात्पर्य्यम्। अत्र मातुः सपिण्डने श्वश्रूश्वशुरयोः पिण्डौ कुर्य्यादित्याद्यौ। तथा च गार्ग्यः "पतिनैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः। मृता हि तैः सह कुर्य्युरन्यान् पितॄन्। श्वशुर

व्यापत्तौ यस्याश्चिरं पञ्चादनक्रिया। पुत्रैर्दौहित्रैर्वा कार्य्या मातुरभ्युदयार्थिभिः"। अन्तरयन्तीत्यर्थे अन्तरयन्तीति लिङ्गव्यत्ययेन पुंस्त्वमिति हलायुधः। परान्वन गोभिलश्राद्धसूत्रभाष्यकृतापि लिखितम्। अतएव प्रव्रजिते पतिते वा पितरि मृतेऽपि न पितामहादिभिर्मातुः सपिण्डीकरणं किन्तु पितामह्यादिभिरेव। "स्वभर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः। एकत्वं सा गता यस्माच्चरुमन्त्राहुतव्रतैः। तस्मिन् सति सुताः कुर्य्युः पितामह्या सहैव तु"। इत्यत्र तस्मिन् सतीति श्राद्धानर्हभर्तुरुपलक्षणम्। अतएव "तस्याश्चैव तु जीवन्त्यां तस्याः श्वश्रूरिति निश्चयः" इति लघुहारीतेन श्वश्रूजीवने तस्याः श्वश्रूरुक्ता न तु श्वशुरेणेति कश्चिदप्युक्तम्। एवं पितामह्यादिभिर्मातुः सपिण्डीकरणेऽपि सामगेन "ये चात्र त्वामनुयान्ति त्वमनु तेभ्यस्ते स्वधा" इति मन्त्रो न पाठ्यः मन्त्रलिङ्गविरोधात् अतएव आभ्युदयिके मातृपक्षे गौरीत्यादिमन्त्रान्तरं लिखितं न तु ये चात्र त्वामिति वस्तुतस्तु आभ्युदयिके छन्दोगानां मातृपक्ष एव नास्तीति वक्ष्यते"।

लघुहारीतः "सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश। पृथङ्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित्। प्रेतसंस्कारकर्म्माणि यानि श्राद्धानि षोडश। यथाकालन्तु कार्य्याणि नान्यथा मुच्यते ततः"। पृथग्द्रव्या अपि विभक्तधना अपि पृथक् न कुर्य्युः सुतरामपृथग्धनाः पृथक् न कुर्य्युः किन्त्वपृथक् कुर्य्युः अत्र विशेषयति मरीचिः। "मृते पितरि पुत्रेण क्रिया कार्य्या विधानतः। बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः। सर्व्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम्। द्रव्येण चाविभक्तेन सर्व्वैरेव कृतं भवेत्"। पुत्रत्वाविशेषात् सर्व्वेषामधिकारे प्राप्ते ज्येष्ठस्य साक्षात् कर्त्तृतामाह बहव इति। ज्येष्ठेनापि सर्व्वेषां मत्करणेनैव करणं भवतु इति मतं ज्ञानं कृत्वा विभक्तत्वे द्रव्यसंक्षेपेण च कृतं कर्म्म सर्व्वैरेव कृतमेव भवेत्। तदानीं द्रव्यासंक्षेपेण च तस्मात् द्रव्यं प्राप्तव्यमिति कृत्वा कर्त्तव्यम्। यदि तेन तन्न परिगृह्यते तदा स ऋणी भवति प्रत्यवायी च भवतीति। न तु तेन श्राद्धान्तरं कर्त्तव्यमिति श्राद्धविवेकोक्तं युक्तम्। "पृथङ्नैव सुताः कुर्य्युरित्यनेन पृथक्करणस्य पर्य्युदस्तत्वेनानधिकारात्। यथाकालमिति अशौचान्तद्वितीयदिनद्वादशमासमृतति-

ष्येकाहन्यूनषण्मासद्वितीयसंवत्सरेषु । न च विधान-
सामर्थ्यादेव तत्तत्कालप्राप्तेरनर्थकमिदमिति वाच्यम्
तत्तत्कालानां द्वादशाहाद्यपेक्षया प्राधान्यबोधनार्थत्वात्
अत्र "आनन्त्यात् कुलधर्माणां पुंसाञ्चैवायुषः क्षयात् ।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते" इति व्यास-
वचनोक्तप्रशस्त इत्यनेन कुलाचारज्योतिःशास्त्रोद्दिष्टात-
भाटतिमरणराष्ट्रोपप्लवादिम्लेच्छदेशादिगमनानुसारादेव
सपिण्डीकरणापकर्षे द्वादशाहापेक्षया प्रागुक्तनवममासा-
दिगौणकालपरिग्रहः । अथ वा यथाकालमित्यादेर्यदहर्वा
वृद्धिरापद्येतेत्यनेनावश्यकनामकरणादिवृद्ध्यर्थमेवापकर्षो
न त्वनावश्यकेष्टपूर्त्ताद्यर्थोपकर्षः कार्य्य इति तात्पर्य्यम् ।
अतएव लघुहारीतेन "तथैव काम्यं यत् कर्म वत्सरात्
प्रथमादृते" इत्यनेन काम्यस्यापकर्षनिमित्तता नास्तीत्युक्तम्
यदि त्वावश्यकवृद्धिनिमित्तेनापकर्षः कृतस्तदा इष्टापूर्त्तादि
काम्यं वत्सराभ्यन्तरेऽपि कर्त्तव्यमिति श्राद्धविवेकोऽप्येवं
यद्यपि गोभिलसूत्रादौ सपिण्डीकरणस्यैवापकर्षः प्रागुक्त-
स्तथापि सपिण्डीकरणापकर्षे तत्पूर्वकर्त्तव्यश्राद्धानामपि
तदाविनाकृतन्यायादपकर्षः । "सपिण्डीकरणान्ता तु ज्ञेया
प्रेतक्रिया बुधैः" इति शातातपवचने प्रेतक्रियाया
सपिण्डीकरणान्तत्व प्रतीयते । अत्र वृद्धिनिमित्त दिना
सपिण्डनापकर्षे कृते पूर्णसंवत्सरकालं प्राप्य प्रेतत्वपरी-
हारमाह विष्णुधर्मोत्तरम् "कृते सपिण्डीकरणे नरः
संवत्सरात् परम् । प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते"
वृद्धिनिमित्तकसपिण्डीकरणापकर्षे कृते तत्क्षणादेव
प्रेतत्वपरीहारः तदर्थएवापकर्षात् एवञ्चान्यनिमित्ताप
कर्षे वृद्धिकाल प्राप्य प्रेतत्वपरीहार तत्कालस्य पूर्ण-
संवत्सरकालतुल्यत्वात् । "अर्वाक् संवत्सरात् यस्य
पूर्णे संवत्सरेऽपि वा । ये सपिण्डीकृताः प्रेता न
तेषान्तु पृथक्क्रिया" इति शातातपवचनात्" ।

**सपिण्डीकृत** त्रि॰ सह पिण्डेन पित्रादिपिण्डेन सपिण्ड
तत च्वि-कर्मणि क्त । यदुद्देशेन सपिण्डीकरणं श्राद्धं
कृत तस्मिन् मृते जने "ये सपिण्डीकृता प्रेता" इति
शाता॰ स्मृतिः । [वोपालकीटके राजनि॰ ।

**सपीतक** पु॰ सह समं न॰ पीतकेन सहत्व स । राज-

**सपीति** स्त्री पा-क्तिन् पीतिः पानम् उह एकत्र पीतिः ।
साम्य टीका सह भोजने शब्दर॰ । [तकीटके राजनि॰ ।

**सपीतिका** स्त्री सह पीतेन कप् अत इत्त्वम् । हस्तिघोषा-

**सप्तक** न॰ सप्तानामवयवम् कन् । १सप्तसङ्ख्यायाम् । सप्त प्र-
माणमस्य कन् । २सप्तसङ्ख्यान्विते त्रि॰ । पूरणे कन् ।
३सप्तमा पूरणे च । [खलायाम् अमरः ।

**सप्तकी** स्त्री सप्तभिः स्वरैरिव कायति शब्दायते कै-क । मे-

**सप्तचत्वारिंशत्** स्त्री सप्ताधिका चत्वारिंशत् शाक॰ ।
(सातचल्लिश) १सङ्ख्यायां २तत्सङ्ख्यान्विते च । एवं सप्त-
शादयः सप्ताधिकतत्तत्सङ्ख्यायां तत्सङ्ख्यान्विते च । पूरणे
डट् । सप्तचत्वारिंश तत्तत्संख्यापूरणे त्रि॰ स्त्रियां ङीप्
एव सप्तदशादयोऽपि तत्पूरणे एव तमप् सप्तचत्वारि
शत्तम तत्पूरणे त्रि॰ स्त्रियां टाप् ।

**सप्तच्छद** पु॰ सप्त सप्त छदाः प्रतिपत्त्रम् यस्य वृत्तौ सङ्ख्या-
शब्दस्य वीप्सार्थता भाष्योक्ता । (छातिम) वृक्षे राजनि॰ ।

**सप्तजिह्व** पु॰ सप्त जिह्वा इव आस्वादसाधनानि अर्च्चिषो
यस्य । वह्नौ त्रिका॰ । "काली कराली च मनोजवा च
सुलोहिता चैव सुधूम्रवर्णा । उग्रा प्रदीप्ता च कपीट-
योनेः सप्तैव लीलाः कथिताश्च जिह्वाः" इत्युक्तानां सप्ता-
नामग्निज्वालानामेव तज्जिह्वात्वमुक्तम् । वह्निजिह्वानां
वर्णभेद अवस्थानदिग्भेदश्च गणेशविमर्षिण्या दर्शितो
यथा "हिरण्या तप्तहेमाभा मूलपाणौ दिशि स्थिता ।
वैदूर्य्यवर्णा कनका प्राच्या दिशि समाश्रिता । तरुणा-
दित्यसङ्काशा रक्ता जिह्वाग्निसंस्थिता । कृष्णा नीलाभ्र-
सङ्काशा नैर्ऋत्या दिशि संस्थिता । अतिरक्ता जवा-
भासा वायव्यां दिशि संस्थिता । बहुरूपा तथा ख्याता
दक्षिणोत्तरसंस्थिता" ।

**सप्तज्वाल** पु॰ सप्त काल्याद्यः ज्वाला यस्य । १वह्नौ
हेमच॰ । २सप्तार्च्चिरादयोऽप्यत्र अमरः । [यज्ञे अमर ।

**सप्ततन्तु** सप्तभिः भूरादिभिर्व्याहृतिभिस्तन्यते तन-तुन् ।

**सप्तति** स्त्री सप्तगुणिता दशति नि॰ । (सत्तर) १सङ्ख्यायां
२तत्सङ्ख्यान्विते च । तत पूरणे डट् । सप्तत तत्सङ्ख्यापू-
रणे त्रि॰ स्त्रियां ङीप् ।

**सप्ततितम** त्रि॰ सप्तते पूरणः तमप् । येन सप्ततिसंख्या
पूर्य्यते तस्मिन् अर्थे स्त्रियां टाप् ।

**सप्तद्वीपा** स्त्री सप्त जम्बुप्रभृतयो द्वीपा यस्याः । जम्बुप्रभृ-
तिसप्तद्वीपयुक्तायां पृथिव्याम् । जम्बुद्वीपशब्दे ३०४३२॰ दृश्यम्

**सप्तधा** अव्य॰ सप्तन्+प्रकारे धाच् । सप्तप्रकारे ।

**सप्तधातु** पु॰ ब॰ व॰ सप्तगुणिता धातवः । देहस्थेषु "रसासृ
मांसमेदोऽस्थिमज्जानः शुक्रसंयुताः । शरीरस्था इमे
ज्ञेयाः पण्डितैः सप्त धातवः" इत्युक्तेषु रसादिषु धातुषु
राजनि॰ ।

**सप्तन्** पु० त्रि० । सप–तनिन् । (सात) १संख्यान्विते २तत्संख्यायां महाभाष्यम् । [पु० दृश्यम् ।

**सप्तनाडीचक्र** न० वृष्टिज्ञानार्थे चक्रभेदे चक्रशब्दे २८३१

**सप्तनामा** स्त्री सप्त नामानि यस्याः डाप् । आदित्यभक्तायाम् राजनि० । [राजनि० । २सप्तच्छदवृक्षे च ।

**सप्तपत्र** पु० सप्त सप्त पत्राणि प्रतिपत्रं यस्य । १मुद्गरवृक्षे

**सप्तपदी** स्त्री सप्तानां पदानां समाहारः ङीप् । विवाहकाले मण्डलिकासु गन्तव्येषु सप्तसु पदेषु । तत्प्रकारो भवदेवभट्टोक्तो यथा "ततो जामाता प्रागुदीच्यां गत्वा वधूं सप्तभिर्मन्त्रैः सप्तसु मण्डलिकासु सप्त पदानि नयेत् । वधूश्च दक्षिणपादं नीत्वा पश्चात् वामपादं मण्डलिकां नयेत् । जामाता च वधूं ब्रूयात् वामेन पादेन दक्षिणपादमाक्रमयेति" इत्यादि । अस्यैव कर्मणो विवाहनिष्ठाकरत्वमुक्तं मनुना "पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे"।

**सप्तपर्ण** पु० सप्त सप्त पर्णान्यस्य प्रतिपर्वम् । (छातिम) वृक्षे अमरः । "सप्तपर्णो व्रणश्लेष्मवातकुष्ठास्रजन्तुजित् । दीपनः श्वासगुल्मघ्नः स्निग्धोष्णस्तुवरः सरः" भावप्र० तद्गुणा उक्ताः । २लज्जालुलतायां स्त्री रत्नमा० ङीप् । "द्राक्षादाडिमखर्जूररम्भादिताक्षं सशर्करम् । लाजाचूर्णं समध्वाज्यं सप्तपर्णसदाकृतम्" गरुड़पु० उक्ते ३खाद्यभेदे न० ।

**सप्तपाताल** न० समाहारद्विगुः पातालादि । "अतलं वितलञ्चैव नितलञ्च गभस्तिमत् । महातलञ्च सुतलं पातालं सप्त कीर्त्तितम्" इत्युक्तेषु सप्तसु भूमेरधःस्थलोकेषु ।

**सप्तप्रकृतिविकृति** स्त्री ब०व० सप्तसंख्याताः प्रकृतिविकृतयः । सांख्यसिद्धे महदहङ्कारसहितसूक्ष्मपञ्चभूतहेतुशब्दादितन्मात्रात्मके पदार्थसप्तके "महदाद्याः प्रकृतिविकृतयः सप्त" इति सांख्यकारिका । षोडशकपदार्थहेतुत्वात् प्रकृतित्वम् प्रकृतिकार्य्यत्वाच्च विकृतित्वमेषाम् ।

**सप्तभद्र** पु० सप्तसु स्थानेषु भद्रमस्य । शिरीषवृक्षे शब्दच० ।

**सप्तम** त्रि० सप्तानां पूरणः मट् । येन सप्तसंख्या पूर्य्यते तस्मिन् अर्थे स्त्रियां ङीप् । सा च चन्द्रस्य सप्तमकलाया ह्रासवृद्धिरूपायां तिथौ च तिथिशब्दे ३२८९पृ० दृश्यम् ।

**सप्तरक्त** पु० सप्त रक्तानि प्रशस्तान्यस्य । "पाणिपादतले रक्ते नेत्रान्तरनखानि च । तालुकाधरजिह्वाश्च प्रशस्ता सप्त रक्तता" इत्युक्तस्थानेषु रक्ततावति जने ।

**सप्तर्षि** पु० ब०व० । सप्त ऋषयः संज्ञात्वात् कर्म० । "मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः । वशिष्ठश्च महाभाग । सप्तैते ब्रह्मणः सुताः" इत्युक्तेषु सप्तसु ऋषिषु । मन्वन्तरभेदे तेषां नामभेदा ऋषिशब्दे उक्ताः १४५१ पृ० दृश्याः ।

**सप्तर्षिमण्डल** त्रि० ६त० । आकाशे नित्य ध्रुवमण्डलपरिभ्रामके नक्षत्रसप्तकात्मके नक्षत्रमण्डलभेदे "सप्तर्षिमण्डलं तस्मादुद्दृश्यते सर्वकोपरीति" पुराणम् । तच्चारादि ऋषिशब्दे १४५२ पृ० दृश्यम् ।

**सप्तला** स्त्री सप्तधा लाति ला–क । १नवमालिकायाम् अमरः २चर्मकषायां ३गुञ्जायां ४पाटलायाञ्च मेदि० ।

**सप्तशती** स्त्री सप्तानां शतानां समाहारः । मार्कण्डेयपुराणान्तर्गतसप्तशतमन्त्रसमुदायरूपे देवीमाहात्म्यबोधके त्रयोदशाध्यायात्मके ग्रन्थभेदे तन्मन्त्रविभाग चण्डीशब्दे २८५५ पृ० दृश्य । "मध्ये सप्तशतीं जपेदिति" तत्र दर्शितवाक्यम् ।

**सप्तशलाक** पु० सप्त शलाकाकारा रेखा यत्र । ज्योतिषोक्ते विवाहादौ वर्ज्यदोषसूचके सप्तशलाकाकाररेखचक्रभेदे चक्रशब्दे २८१०पृ०दृश्यम् । उपयमशब्दे १२६२पृ०दृश्यम् ।

**सप्तशिरा** स्त्री सप्त शिरा यस्याः । ताम्बूलवल्ल्यां राजनि० ।

**सप्तसप्ति** पु० सप्त सप्तयोऽश्वा यस्य । १सूर्य्ये हेमच० २अर्कवृक्षे च । सप्ताश्वादयोऽप्यत्र ।

**सप्तसागर** पु० ब०व० । सप्तसंख्याताः सागराः । "नवनीतसुरासर्पिर्दधिदुग्धजलान्तकाः" इत्युक्तेषु सप्तसु सागरेषु सप्त घृतादिकल्पिताः सागरा इव देयपदार्था यत्र कप् । मत्स्यपुराणोक्ते तन्नामख्याते महादानभेदे मत्स्यपु० २८६अ० तद्विधानं दृश्यम् ।

**सप्तांशु** पु० सप्त अंशवो ज्वाला यस्य । सप्तजिह्वशब्दे "काली कराली चेत्याद्युक्तसप्तज्वालायुते वह्नौ । [वह्नेः जटा० ।

**सप्ताश्वपुङ्गव** पु० सप्तभिरश्वैः पुङ्गव इव श्रेष्ठत्वात् । शनि० ।

**सप्तार्चिस्** पु० सप्त अर्चींषि यस्य । १वह्नौ अमरः २चित्रकवृक्षे ३शनिग्रहे हेमच० । ४क्रूरनेत्रे त्रि० मेदि० ।

**सप्ताश्व** पु० सप्त अश्वा यस्य । १सूर्य्ये २अर्कवृक्षे अमरः ।

**सप्ताश्ववाहन** पु० सप्त अश्वा वाहनान्यस्य । १सूर्य्ये २अर्कवृक्षे च "शुचिः सप्ताश्ववाहन" सूर्य्यस्तवः ।

**सप्ति** पु० सप–ति । अश्वे अमरः ।

**सफर** पु स्त्री० सप–अरन् पृषो० पस्य फः । (पुँटी) मत्स्ये स्त्रीत्वे ङीष् । "मध्नन् जलसफरीविघट्टितोरूः" माघः अस्य तालव्यादितेत्यन्ये ।

**सफल** त्रि० सह फलेन सहस्य सः। १सार्थे २फलयुक्ते च जटा०।

**सबल** त्रि० सह बलेन सामर्थ्येन सैन्येन वा सहस्य सः। १सामर्थ्यान्विते २सैन्ययुक्ते ३व्यो०क्तकवचाद्ये "सबलेऽ न्दधतौ यस्ये राज्यानि सुखक्लैकैः" नील०ता०।

**सब्रह्मचारिन्** पु० समानं ब्रह्म वेदपठनकालीनं व्रतं चरति चर-णिनि समानस्य सः। एकगुरुसकाशात् वेदाध्ययनकाले तन्नियमजनसमानव्रताचारयुते अमरः।

**सभर्तृका** स्त्री सह भर्त्रा पत्या सहस्य सः कप्। विद्यमानपतिकायां स्त्रियाम् अमरः।

**सभा** स्त्री सह भान्ति अभीष्टनिश्चयार्थमेकत्र यत्र गृहे। १बहूनां समावेशनस्थाने २तदधिष्ठायिजनसमूहे च अमरः "यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः। राज्ञः प्रतिकृतो विद्वान् ब्राह्मणस्तां सभां विदुः"। विद्वत्सहितायामपि सभापर्य्यायपरिषच्छब्दमाह "त्रैविद्यो हैतुकस्तर्की निरुक्तो धर्मपाठकः। त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा" मनुः। ३द्यूते ४गृहे मेदि० ५समूहे हेमच०। समूहपरत्वे ६त० न०। दासीसभं नृपसभमित्यादि। व्यवहारदर्शनार्थसभास्थानञ्च वीरमि० दर्शितं यथा बृहस्पतिः "दुर्गमध्ये गृहं कुर्य्याज्जलवृक्षान्वितं पृथक्। प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम्। प्रतिमालेख्यदेवैश्च युक्तामग्न्यम्बुना तथा" इति लक्षण्यां वास्तुशास्त्रोक्तलक्षणेन लक्षिताम्। अग्न्यम्बुनेति समाहारद्वन्द्वः। सभाया धर्माधिकरणत्वं कात्यायन आह "धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम्। यत्राधिक्रियते स्थाने धर्माधिकरणं हि तदिति"। तत्र सभ्योपवेशनमाह मनुः "यस्मिन् देशे इत्यादि" प्रागुक्तम् अत्र इत्युपलक्षणम् अधिकानामपि सूचितत्वात्। तत्र मनुः "अधिकृतो विद्वान् प्राड्विवाकः अत्र प्रविशेत् सभाम्, सभामेव प्रविश्येत्यादिवचनात् सभा मुख्यव्यवहारदर्शनस्थानम्। अन्यान्यमुख्यानि व्यवहारस्थानानाशाक्यादर्शनत्वाभि। "दश स्थानानि वादानां पञ्च चैवाब्रवीद्भृगुः। निर्णयं येन गच्छन्ति विवादं प्राप्य वादिनः। आरण्यास्तु स्वकैः कुर्य्युः सार्थिकाः सार्थिकैस्तथा। सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिभिः। उभयानुमतश्चैव स्मृते स्थानसमीपवितम्। कुलिकाः सार्थमुख्याश्च पुरग्रामनिवासिनः। ग्रामपौरगणश्रेण्यश्चातुर्विद्याश्च वर्गिणः। कुलानि कुलिकाश्चैव नियुक्ता नृपतिस्तथा"

इति। स्वकैरारण्यकैः ग्रामेऽपीत्यपिशब्दात् ये ग्रामेऽरण्यादौ च निवसन्ति ते उभयवासिभिर्निर्णयं कुर्य्युः उभयव्यवहाराभिज्ञत्वात्तेषाम्। कुलिकाः कुलश्रेष्ठाः। सार्थो ग्रामदेशान्तरादौ मिलितो जनसङ्घः तन्मुख्याः सार्थवाहाद्यः। पुरं मुख्यनगरम् तस्मादर्वाचीनो ग्राम इति पुरग्रामनिवासिनोर्भेदः सार्थकुलिकादीनि पञ्च स्थानानि तानि चारण्यकादीनामेव, ग्रामादीनि दश स्थानानि साधारणानि। ग्रामो ग्रामाकारेणावस्थितोजनः। पौरः पुरवासिनां समूहः। श्रेण्यो रजकाद्यष्टादशहीनजातयः। चातुर्विद्यः आन्वीक्षिक्यादिविद्याचतुष्टयोपेतः वर्गिणो गणप्रभृतयः। राज्ञः सभाप्रवेशस्तत्रैव दर्शितः। तत्र मनुः "व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः। मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत् सभाम्। तत्रासीनः स्थितो वापि पाणिमुद्यम्य दक्षिणम्। विनीतवेशाभरणः पश्येत् कार्य्याणि कार्य्यिणाम्। प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः। अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक्। धर्मासनमधिष्ठाय संवीताङ्गः समाहितः। प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेत्" इति।

**सभाज** सेवने दर्शने च सक० प्रीतौ अ०अद०चु० उभ० सेट्। सभाजयति ते असमभाजत्-त। अनेकाच्त्वात् षोपदेशः

**सभाजन** न०सभाज—भावे ल्युट्। गमनागमनादिकाले सख्यामन्त्रप्रीतिसाधने सम्भाषणे २पूजने च अमरः।

**सभासद्** पु०सभायां सीदति—क्विप्। सामाजिके सभ्ये अमरः तल्लक्षणमाह याज्ञ० "श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः। राज्ञा सभासदः कार्य्या रिपौ मित्रे च ये समाः" इति। श्रुतेन मीमांसाव्याकरणादिश्रवणेन वेदाध्ययनेन च सम्पन्नाः। धर्मज्ञाः सत्यवादिनः सत्यवदनशीलाः रिपौ मित्रे च समाः द्वेषरागशून्याः एवंविधाः सभासदः सभायां सदसि यथा सीदन्ति तथा दानमानसत्कारैः राज्ञा कर्त्तव्याः सभ्यत्वेन वरीतव्या इत्यर्थः। अतश्चोपात्तपादित्वात् स्वाध्यायोऽध्येतव्यो यूपं छिनत्ति पुरोहितस्तं प्रकुर्वीतेत्यादिवत् सत्यपि कर्मत्वेऽप्रहेयत्वात् तद्गतैकत्ववद्बहुत्व विवक्षितम्। तत्र यद्यपि कपिञ्जलन्यायेन त्रित्वमात्रेणापि चरितार्थं तथापि सत्यन्तरोक्तसप्तत्वविधानपरम्। तथा च बृहस्पतिः "लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा। यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा" इति। मनुना तु त्रय एवोक्ताः।

"यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः" इति। अत्र त्रिभ्योऽन्यूनाः सप्तभ्योऽधिकाश्च न कार्य्या इत्यत्र तात्पर्य्यं सङ्ख्यावैषम्यन्तु "भूयोऽल्पविरोधे भूयसां स्यात् सधर्मकत्वमिति न्यायेन विप्रतिपत्तावधिकसङ्ख्यावचनमादरणीयं गुणसाम्ये। तद्वैषम्ये तु शतमप्यन्धानान्न पश्यतीति न्यायेन गुणवत्तरवचनमेवेति प्रदर्शनार्थम्। "यत्तु चत्वारो धर्मज्ञाः पर्षत्त्रैविद्यमेव वा। सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः" इति योगीश्वरेण विषमसङ्ख्यत्वमपि बहुत्वमपि चानादृतम्। तत्तु पूर्वोक्तानां धर्मकारकज्ञापकहेतुना सन्देहनिर्णयविषयं प्रक्रमात्। व्यवहारविषये तु त्र्यवराणां विषमसङ्ख्यानामेव सभ्यत्वं विशेषविधानादित्यवसेयम्। एते च ब्राह्मणा एव। मनुबृहस्पतिभ्यां विप्रपदोपादानात्। स तु सभ्यैः स्थेयैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः। धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैरिति" द्विजोत्तमपदस्य च कात्यायनेनोपादानात्। नारदेन "राजा तु धार्मिकान् सभ्यान्नियुञ्ज्यात् सुपरीक्षितान्। व्यवहारधुरां वोढुं ये शक्ताः पुङ्गवा इव। धर्मशास्त्रेषु कुशलाः कुलीनाः सत्यवादिनः। समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः" इति। विचार्य्य श्रेणिभिः कार्य्यं कुलैर्यन्न विचारितम्। गणैश्च श्रेण्यविज्ञातं गणाज्ञातं नियुक्तकैः। कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षोऽधिकः कृतः। सर्वेषामधिको राजा धर्म्यं यत्तेन निश्चितम्। उत्तमाधममध्यानां विवादानां विचारणात्। उपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः" वर्णभेदोऽनादृत।

शुक्रनीतिपरिशिष्टेऽपि तथैवोक्तं यथा "यद्वर्णजो भवेद्राजा योज्यस्तद्वर्णजः सदा। तद्वर्ण एव गुणिनः प्रायशः सम्भवन्ति हि। व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः। रिपौ मित्रे समा ये च धर्मज्ञाः सत्यवादिनः। निरालसा जितक्रोधकामलोभाः प्रियंवदाः। राज्ञा ते च नियोक्तव्याः स्युः सभ्याः सर्वासु जातिषु" "राजा तु धार्मिकान् सभ्यान् नियुञ्ज्यात् सुपरीक्षितान्। व्यवहारधुरं वोढुं ये शक्ताः पुङ्गवा इव। लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा। यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा। श्रोतारो वणिजस्तत्र कर्त्तव्याः सुविचक्षणाः। अनियुक्तो नियुक्तो वा धर्मज्ञो वक्तुमर्हति। एकः शास्त्रमधीयानो विन्द्यान्न कार्य्यनिर्णयम्। तस्माद् बह्वागमः कार्य्यो विवादेषूत्तमो नृपैः। स ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तमः। एकद्वित्रिचतुर्वीरं व्यवहारानुचिन्तनम्। कार्य्यं पृथक् पृथक् सभ्यै राज्ञा श्रेष्ठान्तरैः सह। अर्थिप्रत्यर्थिनो सभ्यान् लेखकप्रेक्षकांश्च यः। धर्मवाक्यै रञ्जयति स सभास्तारतामियात्। नृपोऽधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ। हेमाग्न्यम्बु स्वं पुरुषः साधनाङ्गानि वै दश। एतद्दशाङ्गकरणं यस्यामध्यास्य पार्थिवः। न्यायान् पश्येत् कृतमतिः सा सभाऽध्वरसन्निभा"।

**सभापति** पु० ६त०। सभायाः स्थापके नृपे "सभापतिश्च नृपतिरेव "दुर्गमध्ये गृहं कुर्य्यादित्यादिना वृहस्पत्यादिभिः सभानिर्म्माणतद्गुणादेस्तत्र सभ्योपवेशनादेश्च तस्यैव विधानात्" वीरमि०।

**सभास्तार** पु० सभां स्तृणाति स्तृ—अण्। १सभ्ये अमरः। "अर्थिप्रत्यर्थिनो सभ्यान् लेखकप्रेक्षकांश्च यः। धर्मवाक्यै रञ्जयति स सभास्तारतामियात्" शुक्रनीतिपरि० उक्ते २सभ्यभेदे च।

**सभिक** पु० सभा द्यूतसभा आश्रयत्वेनास्त्यस्य ठन्। द्यूतकारके अमरः।

**सभीक** पु० सभा द्यूत प्रयोजनमस्य ईकन्। द्यूतकारे शब्दच०।

**सभोचित** पु० सभा उचिता परिचिता यस्य। १पण्डिते धनञ्जयः। २सभायोग्ये त्रि०। ३विज्ञे त्रि० जटा०।

**सभ्य** पु० सभायां साधुः यत्। १सामाजिके २द्यूतकारे च

**सम्** अव्य० सो—बा० कमु। १सङ्गतार्थे २प्रकर्षे ३सङ्गतौ ४शोभनार्थे शब्दच०। ५समुच्चये हेमच०।

**सम** त्रि० सम—अच्। १समाने तुल्ये २सर्वे अमरः ३साधौ मेदि०। (योड) ४युग्मे "समेऽर्द्धिते वर्ग" इति लीला० सख्यतयाख्यातेषु द्वितीयचतुर्थषष्ठादिषु ५राशिषु च। अतुल्येऽपि सर्वनामता। गीतवाद्ययोरेककालभवे गायकहस्तादिचालनरूपे ६तालभेदे न० ७प्रस्तुमितभिन्ने पद्ये प्रकृत्या० अभेदे तृतीया। समेन याति समं यातीत्यर्थः।

**समक्ष** अव्य० अक्ष्णः समीपम् अव्ययी० अच्। १चक्षुःप्रतिकर्षे तद्व्याप्ति अच्। २प्रत्यक्षविषये त्रि०।

**समकोण** त्रि० समः कोणो यस्य। रेखागणितोक्ते समकोणयुक्ते त्रिकोणादौ। क्षेत्रशब्दे २१६० पृ० १५अङ्किते दृश्यम्।

**समकोल** पुंस्त्री० ६त०। सर्पे त्रिका०। स्त्रियां ङीष्।

**समगन्धक** पु० समास्तुल्यभागेन निवेशिता गन्धा गन्धद्रव्याण्यत्र कप्। कृत्रिमधूपभेदे शब्दमा०।

**समगन्धिक** पु० सम. सर्वदा तुल्यरूप. गन्धोऽस्त्यस्य ठन्।

वशीरे (वेणारमूल) राजनि०। [१सकले अमरः २पूर्णे च

**समग्र** त्रि० सम सकलं यथा स्यात्तथा गृह्यते ग्रह–ड ।

**समङ्गा** स्त्री समज्यतेऽनया सम्+अन्ज-करणे घञ् टाप् । मञ्जिष्ठायाम् अमरः । [तुल्यदर्शके तत्त्वज्ञानिनि ।

**समचित्त** त्रि० समं सर्वत्र समभावं चित्तं यस्य । सर्वत्र

**समज** न०समजन्त्यत्र सम्+अज–आधारे अप् व्यभाव०। १वने मेदि० २समूहे ३पशूनां सघे ४मूर्खवृन्दे च अमर० ।

**समज्ञा** स्त्री समस्मिन् सर्वत्र ज्ञायतेऽनया ज्ञा-क । कीर्त्तौ अमरः । [अमर० २कीर्त्तौ च रमानाथ० ।

**समज्या** स्त्री सम्+अज–क्यप् न वीभावः । १सभायाम्

**समञ्जस** त्रि० सम्यक् अञ्ज औचित्यं यत्र अच् समा०। १उचिते अमर २युक्ते च । प्रा०स०। ३औचित्ये न०।४सभाधाने त्रिका० ५स्वस्थे अमर ।

**समण्ठ** पु० गण्डीरे हारा० । [गुडत्रये राजनि०।

**समत्रय** न० सम त्रय यत्र। समभागयुते हरीतकीनागर-

**समदर्शिन्** त्रि० समस्मिन् सर्वत्र ब्रह्मभावेनाऽभिन्नतया पश्यति दृश–णिनि । सर्वत्र समदर्शके तत्त्वज्ञानिनि । "विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" इति गीता ।

**समदृष्टि** स्त्री कर्म० । १सर्वत्र तुल्यदर्शने । "दुःखे सुखे च विप्रेन्द्र ! या दृष्टिर्वर्त्तते सदा । तथा शत्रौ च मित्रे च समदृष्टिश्च सा स्मृता" पद्मपु०क्रिया०१६अ० । ६ब० । २समदर्शिनि त्रि० ।

**समधिक** त्रि० सम्यक् अधिकः प्रा० । अत्यन्ताधिके अमर० ।

**समनियत** त्रि० समेन नियतः । व्यापकत्वे सति व्याप्य त्व-युत गदा० । समव्याप्तादयोऽप्यत्र ।

**समन्त** पु०सम्यक् अन्त , स यत्र वा ।१सर्वागन्ते २सीमायाञ्च

**समन्ततस्** अव्य० समन्त+तसिल् । सर्वत्र व्याप्तौ अमर ।

**समन्तदुग्धा** स्त्री समन्ततो दुग्धमस्याः । स्नुहीवृक्षे अमर ।

**समन्तपञ्चक** न० समन्तात् पञ्चक ह्रदपञ्चकं यत्र । कुरुक्षेत्रस्थे तीर्थभेदे "त्रि सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः । समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान् । स तेषु तर्पयामास भृगून् भृगुकुलोद्वह" भा०आ०२अ०। "अन्तरे चैव सम्प्राप्ते कलिद्वापरयोरभूत् । समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः" एतत् कुरुक्षेत्र समन्तपञ्चक पितामहस्योत्तरवेदिरुच्यते" भा०व० ८३अ० ।

**समन्तभद्र** पु० समन्तात् भद्रमस्य । बुद्धे अमरः।

**समन्तभुज्** पु०समन्तात् भुङ्क्ते भुज–क्विप् । वह्नौ त्रिका०

**समन्तात्** अव्य० समन्त+आति । १समन्ततइत्यर्थे शब्दमा० २सर्वत्रव्याप्तौ च ।

**समन्वित** त्रि० सम्+अनु+इण–क्त । सङ्गते ।

**समपद** न० समं पद यस्मिन् । धन्विनां समपदनिवेशनपूर्वके "स्थानानि धन्विनां पञ्च" इत्युपक्रम्य "अन्तरं स्यात् समपदमि"त्युक्ते अवस्थानभेदे अमर । २रतिबन्धभेदे पु० "योषित्पादौ हृदि स्थाप्य कराभ्यां पीडयेत् स्तनौ। यथेष्टं ताडयेत् योनिं बन्धः समपदः स्मृतः" रतिमञ्ज० ।

**समभिव्याहार** पु० सम्+अभि+वि+आ+हृ-घञ् । १साहित्ये २पूर्वापरीभावे ३शेषशेषिवाचकयोः सहोच्चारणे च मीमांसकाः । [२सहोच्चरिते । ३अव्यवहिते च ।

**समभिव्याहृत** त्रि० सम्+अभि+वि+आ+हृ-क्त । १सहिते

**समभिहार** पु० सम्+अभि+हृ-घञ् । १पौनःपुन्ये क्रियासातत्ये २भृशार्थे मेदि० "क्रियासमभिहारेण विराध्यन्तं सहेत कः" माघ ।

**समम्** अव्य० सम–अम् । १साहित्ये अमरः । २एकदेत्यर्थे "सममेव समाक्रान्तं द्वयं द्विरदगामिना" रघु० ।

**समय** पु० सम+इण–अच् । १काले २शपथे ३आचारे ४सिद्धान्ते ५अङ्गीकारे च अमर० । ६क्रियाकारके ७निर्देशे ८सङ्केते ९भाषायां मेदि० १०सम्पदि ११नियमे १२अवसरे हेमच० १३कालविधाने शब्दच० । १४नियमबन्धे अस्य शब्दस्येदमभिधेयमित्यभिधानाभिधेयनियमबन्धे वात्स्या० १५शास्त्रे च ।

**समया** अव्य० सम+इण–आ । नैकट्ये २मध्ये च अमर० ।

**समयाकार** पु० समयस्य सङ्केतस्याकार । सङ्केते त्रिका० ।

**समयाध्युषित** न० समयः अध्युषितो यत्र । सूर्यतारारहितकाले "तथा प्रभातसमये नष्टे नक्षत्रमण्डले । रवियावन्न दृश्येत समयाध्युषितश्च तत्" कर्म०कात्या० । "उदितेऽनुदिते चैव समयाध्युषिते तथा" इति मनु ।

**समयाशुद्धि** स्त्री ६त०। कालाशुद्धौ कालाशुद्धिशब्दे दृश्यम्

**समर** पु० न० सम्+ऋ–आधारे अप् । युद्धे अमर० ।

**समरभ** रतिबन्धभेदे "स्वहस्ताभ्यां ... तथा योषित्पदद्वयम् । स्तनौ धृत्वा रमेत् कामी बन्धः समरभः स्मृतः" रतिमञ्ज० ।

**समरमूर्द्धन्** पु० ६त० । समराग्रे ।

**समर्चन** न० सम्यक् अर्चनं प्रा०स० । सम्यक्पूजने ।

**समर्ण** त्रि० सम्+अर्द-क्त । सम्यक्पीडिते ।

**समर्थ** त्रि० सम्+अर्थ-अच् । १शक्ते २हिते च अमर । सम्यगर्थः प्रा० स० । ३प्रशस्तामीष्टे पु० । सङ्गतोऽर्थो यस्य प्रा०स० । "समर्थः पदविधिः" पा० परिभाषिते सङ्गतार्थे समसादौ समासशब्दे दृश्यम् ।

**समर्थन** न० सम्+अर्थ-ल्युट् । इदमित्यमेवेति निश्चयहेतु पन्यासेन निश्चायकव्यापारभेदे अमर । युच् । तत्र, आम-र्षेऽध्यवसाये च स्त्री । [नरि देशादौ अमरः ।

**समर्द्धक** त्रि० समर्द्धयति सम्+ऋध-ण्वुल् । इष्टफलदा-

**समर्य्याद** त्रि० सह मर्य्यादया सहस्य सः । १सीमायुते २समीपे पु० मेदि० ।

**समल** न० सम्यक् मलम् । १विष्ठायां शब्दच० । सह मलेन सहस्य सः । २कलुषे त्रि० त्रिका० । [अवतरणसोपाने ।

**समवतार** पु० समवतीर्य्यतेऽनेन सम्+अव+तृ-घञ् । जला-

**समवर्त्तिन्** पु० सम वर्त्तते वृत-णिनि । १यमे धर्मराजे अमर । २सर्वत्र समभावेन वर्त्तिनि त्रि० ।

**समवकार** पु० सम्+अव+कृ-आधारे घञ् । नाटकभेदे सा०द० उक्तो यथा

"वृत्तं समवकारे तु ख्यातं देवासुराश्रयम् । सन्धयो निर्विमर्शास्तु त्रयोऽङ्कास्तत्र चादिमे । सन्धी द्वावन्त्य-योस्तद्वदेक एको भवेत् पुनः । नायका द्वादशोदात्ताः प्रख्याता देवदानवाः । फलं पृथक् पृथक् तेषां वीर-मुख्योऽखिलो रसः । वृत्तयो मन्दकैशिक्यो नात्र विन्दु प्रवेशकौ । वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश । गायत्र्युष्णिङ्मुखान्यत्र छन्दांसि विविधानि च । त्रि-शृङ्गारस्त्रिकपटः कार्य्यश्चायं त्रिविद्रवः । वस्तु द्वादश-नाडीभिर्निष्पाद्यं प्रथमाङ्कगम् । द्वितीयेऽङ्के च तिसृ-भिर्द्वाभ्यामङ्के तृतीयके । नाडिका घटिकाद्वयमुच्यते । विन्दुप्रवेशकौ च नाटकोक्तावपि नेह विधातव्यौ । तत्र धर्मार्थकामैस्त्रिविधः शृङ्गारः कपटः पुनः । स्वाभाविकः कृत्रिमश्च दैवजो विद्रवः पुनः । अचेतनैश्चेतनैश्च चेतना-चेतनैः कृतः" । तत्र शास्त्राविरोधेन कृतो धर्मशृङ्गारः अर्थलाभार्थकल्पितः अर्थशृङ्गारः । प्रहसनशृङ्गारः कामशृङ्गारः । तत्र कामशृङ्गारः प्रथमाङ्क एव । अन्य-योस्तु न नियमः इत्याहुः । चेतनाचेतना गजादयः । समवकीर्य्यन्ते बहवोऽर्था अस्मिन्निति समवकारः । यथा समुद्रमन्थनम्" ।

**समवाय** पु० सम्+अव-अय-अच् । १समूहे अमर २मे-लने न्यायोक्ते नित्यद्रव्यादिषु जात्यादीनां ३सम्बन्धभेदे च "घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः । तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः" भाषा० "समवायं दर्शयति । घटादीनामिति अवयवावयविनोर्जातिव्यक्त्योर्गुणगु-णिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायः समवायत्वं नित्यसम्बन्धत्वं तत्र प्रमाणन्तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया वि-शिष्टबुद्धित्वात् इत्यनुमानं संयोगादिबाधात् समवाय-सिद्धिः । न च स्वरूपसम्बन्धेन सिद्धसाधनम् अर्थान्तरं वा, अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवात् लाघवा-देकसमवायसिद्धिः । न च समवायस्यैकत्वे वायौ रूप-सत्त्वाद् प्रसङ्गः तत्र रूपसमवायसत्त्वेऽपि रूपाभावात् । न चेवम् अभावस्य वैशिष्ट्यं सम्बन्धान्तरं सिध्येदिति वाच्यं तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटा-भावबुद्धिप्रसङ्गात् घटाभावसम्बन्धस्य तत्र सत्त्वात् तस्य नित्यत्वात् अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्यात् वै-शिष्ट्यस्य च तत्र सत्त्वात्, मम तु मते घटे पाकरक्तता-दशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः । वैशिष्ट्यस्या-नित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवम् इत्यङ्ग तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां सम्बन्धः" । अयुतसिद्धयोः सम्बन्धः स इति वैशेषिकाः स च सम्बन्धो नाना नित्यश्चेति नव्यनैयायिकाः प्राभाकराश्चाहुः । समवायश्च प्रत्यक्षः "प्रत्यक्षं समवायस्य विशेषणतया भवेत्" भाषा० । अतीन्द्रियोऽनुमेयश्चेति वैशेषिकाः, स्वरूपस्यैव सम्बन्धत्वोपपत्तेः समवायो न पदार्थान्तरमिति भाट्टाः ।

**समवायिजनक** न० कारणभेदे "यत् समवेतं कार्य्यं भवति ज्ञेयं तु समवायिजनकं तत्" "समवायिकारणत्वं द्रव्यस्यैव विज्ञेयम्" भाषा० । इदमेव उपादानकारणमिति सा-ङ्ख्यवेदान्तिनश्चाहुः ।

**समवायिन्** त्रि०समवायोऽस्त्यत्र । समवायसम्बन्धानुयोगिनि यथा घटादीनां कपालादि गुणक्रिययोर्द्रव्याणि ।

**समवेत** त्रि० सम्+अव-इण-क्त । १मिलिते २समूहान्विते न्यायोक्ते समवायसम्बन्धेन ३स्थिते च ।

**समशनीय** पु०सम्यगशनाय हितं छ । विवाहोत्तरं दम्पत्योः सम्यगशनाय विहिते स्थालीपाके" तद्विधानादि स० त० गोभिलोक्तं यथा "श्वोभूते वा समशनीयं स्थालीपाकं कुर्वीत" "यदि विवाहे यज्ञादिना सह मिश्रा भूता तदा तदपरदिने सम्यगशनार्थं क्रियते इति सम्यगशनीयं स्थालीपाकं कुर्वीत" रघु० । तद्धोमविधानादि तत्र दृश्यम् ।

**समष्टि** स्त्री सम्+अश–व्याप्तौ क्तिन् । १सम्यग्व्याप्तौ २समस्ततायाञ्च । कर्त्तरि क्तिच् । ३सर्वीभूते समस्ते पदार्थे वेदान्तसा० "समष्टिरीशः सर्वेषां स्वात्मतादात्म्यवेदनात् । तदभावात्ततोऽन्ये तु ज्ञायन्ते व्यष्टिसंज्ञया" पञ्चद० ।

**समष्ठिल** पु० समं तिष्ठति स्था–इलच् पृषो० षत्वं वा दीर्घ । (गुँडिया) शाके अमर ।

**समसन** न० सम्+अस-ल्युट् । १समासे २संक्षेपे अमर' ।

**समसूत्रपातन्याय** पु० न्यायभेदे समतया सूत्रस्य पातने यस्य तत्सूत्रत्वेनैवतदुपर्य्यधःस्थितानां पदार्थानां तत्सूत्रसंलग्नैकदेशकालावच्छेदेन सद्भावस्थानं येन ज्ञायते तादृशे न्याये "परः सन्निकर्षस्य उपर्य्यधोभावापन्नसमसूत्रपातन्यायेन राश्येकावच्छेदेन सद्भावस्थानरूप' तिं०त० रघु० ।

**समस्त** त्रि० सम्+अस–क्त । १सङ्क्षिप्ते २सकले अमर । ३व्याकरणोक्ते कृतसमासे शब्दभेदे च ।

**समस्थ** त्रि०सम तिष्ठति स्था-क । समभावेन तुल्यतया स्थिते

**समस्थली** स्त्री कर्म० । अन्तर्वेदिदेशे हेमच० ।

**समस्या** स्त्री समस्यते संक्षिप्यतेऽनया सम्+अस–करणे क्यप् । सङ्क्षेपेण उक्तस्य श्लोकपादादेः परकृतेन स्वकृतेन वा अवशेषेण भागान्तरेण संघटनार्थं कृते प्रश्ने अमर' ।

**समा** स्त्री समयति विकलयति भावान् सम-अच्–टाप् । वत्सरे अमरकृतास्य नित्यबहुवचनान्तताङ्गीकृता पाणिनिना तु "समांसमां विजायते" इति सूत्रे एकवचनान्तता निर्दिष्टा ।

**समांसमीना** स्त्री समां समां विजायते प्रसूते ख नि० अत्र समांसमामित्यत्र कालाधारे द्वितीया । प्रतिवर्षं प्रसूतायां गवि अमर' ।

**समाकर्षिन्** पु०सम्+आ+कृष–णिनि । १अतिदूरगामिनि गन्धे अमर । २सम्यगाकर्षणकर्त्तरि त्रि०स्त्रियां ङीप् ।

**समाख्या** स्त्री समाख्यायतेऽनया सम्+आ+ख्या–अङ् । १कीर्त्तौ अमरः २सञ्ज्ञायाञ्च । ३योगेनार्थबोधने "स्थान क्रमो योगबलं समाख्या" च तत्त्वदीपिका ।

**समाघात** पु० समाहन्यतेऽत्र सम्+आ+हन–आधारे घञ् । १युद्धे अमर' । भावे घञ् । २सम्यगाघाते च ।

**समाज** पु०सम्+अज–घञ् न वीभाव' । पशुभिन्नानां १समूहे अमर । २सभायां हेमच० ३हस्तिनि नानार्थकोषः ।

**समादान** न० सम्+आ+दा–भावे ल्युट् । १सम्यगादाने कर्मणि ल्युट् । २बौद्धानां नित्यकर्मणि मेदि० ।

**समाधा** स्त्री सम्+आ+धा-अङ् । १निष्पत्तौ २विवादभञ्जने २पूर्वपक्षस्य स्वसिद्धान्तानुगुणतया सिद्धान्तानुकूलतकोटिना सम्यगर्थोपधारणे च । ल्युट् । समाधानमप्यत्र न० । तत्र ध्येयवस्तुनि चित्तस्य निरन्तरस्थापनरूपे समाधौ च ।

**समाधि** पु० सम्+आ+धा-कि । १समाधानं ध्येयवस्तुनि एकाग्रतया मनसःस्थापनरूपे २ध्यानभेदे ३अवनाभावे ४नियमे च अमर । ध्यानभेदश्च समाधि यथोक्त पात० सू० "तत्र प्रत्ययैकतानता ध्यानम्" सू० "तस्मिन् देशे ध्येयालम्बनस्य प्रत्ययस्यैकतानता सदृशप्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम्" भा० "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" सू० "ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात्तदा समाधिरित्युच्यते" भा० "ध्यानसाध्यं समाधिं लक्षयितु व्याचष्टे ध्यानमेवेति । ध्येयाकारनिर्भासमिति ध्येयाकारस्य निर्भासो न ध्यानाकारस्येति अतएवाह शून्यमिति । ननु शून्य चेत् कथं ध्येयप्रकाशक इत्यत आह इवेति । अत्रैव हेतुमाह ध्येयस्वभावावेशादिति । अत्रापि पुराणम् "तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते"इति । ध्येयात् ध्यानस्य भेदकल्पना तद्धीनमित्यर्थः" विवर०।

एकाग्रतात्मकसमाधिलक्षणं पुराणान्तरोक्तं यथा "नित्यं शुद्धं बुद्धियुक्तं सत्यमानन्दमद्वयम् । तुरीयमक्षरं ब्रह्म अहमस्मिपरं परं पदम् । अहंब्रह्मेत्यवस्थानं समाधिरिति गीयते" गारुडे ४४अ०। "द्वादशध्यानपर्य्यन्तं मनो ब्रह्मणि यो नरः । तुपश्च स यतो युक्तं समाधिः सोऽभिधीयते । ध्येयमेव हि सर्वत्र ध्याता तन्मयतां गतः । पश्यति द्वैतरहितं समाधिः सोऽभिधीयते" २४०अ०। "इमं गुणसमाहारमनात्मत्वेन पश्यतः । अन्तःशीतलता यस्य समाधिरिति कथ्यते" योगवाशिष्ठे उपशमप्र० । ५अर्थालङ्कारभेदे अलङ्कारशब्दे ४०६ पृ० दृश्यम । ६इन्द्रियनिरोधे शब्दर० । ७काव्यगुणभेदे मेदि० "श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः । इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः । एषां विपर्य्ययः प्रायो दृश्यते गौडवर्त्मनि" काव्याद० तस्यौजस्यन्तर्भावः सा०द० उक्तो यथा "श्लेषः समाधिरौदार्यं प्रसाद इति ये पुनः । गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते" । समाधिरारोहावरोहक्रमरूपः

आरोह उत्कर्षः । अवरोहोऽपकर्षस्तयोः क्रमो वैरस्थानावह्नो विन्यासः । यथा “चञ्चच्चन्द्रेत्यादि” । अत्र पादत्रये क्रमेण वक्ष्यस्य गाढ़ता । चतुर्थपादे त्वपकर्षः” ।

**समाघ्रात** त्रि॰ सम्+आ+घ्रा—क्त । १सम्यग्गन्धिते २संस्पृष्टे ३कथञ्चिते च ।

**समान** त्रि॰ समनामयति अन—अच् । १तुल्ये २साधौ ३एकस्मिन्नित्यर्थे “समानतन्त्रसिद्ध” गौत॰ “यत्समानाधिकरणे”ति चिन्तामणिः । सम्+अन—णिच् । भुक्तान्नादेः समीकरणे नाभिदेशस्थे प्राणादिपञ्चकान्तर्गते ४वायुभेदे पु॰

**समानविभक्तिक** त्रि॰ समाना विभक्तिर्यस्मात् कप् । स्वप्रकृतिविभक्तिसजातीयविभक्तिके पदे साजात्यञ्च प्रथमात्वादिना । तेन वेदाः प्रमाणमित्यादौ समानविभक्तिकत्वम् ।

**समानविषयक** त्रि॰ समानो विषयो यस्य कप् । तुल्यरूपविशेष्यविशेषणताशालिनि ज्ञाने स च समाननिरूप्यनिरूपकभावापन्नविषयताशाली बोधः समानाकारकोऽप्युक्त ।

**समानाधिकरण** त्रि॰ समानमेकमधिकरणं यस्य । एकाधिकरणवृत्तिके स्वाधिकरणवृत्तिमति पदार्थे । २भिन्नविभक्तिराहित्ये सति अभेदेनैकार्थबोधजनकत्वयुते पदे च “घटः प्रत्ययानचावप्रथमासमानाधिकरणे” पा॰ घटोऽपि प्रथमासामानाधिकरण्यं विभिन्नविभक्तिराहित्यादुबोध्यम् । “समानाधिकरणस्तत्पुरुषः कर्मधारय” पा॰ ।

**समानाशौच** न॰ कर्म॰। समवृद्धिकालाभ्यां तुल्ये अशौचे यथा सपिण्डजननाशौचस्य सपिण्डान्तरजननाशौचम् एव त्रिरात्राद्यन्तस्य व्यत्यस्तसपिण्डमरणाशौचस्य तथाविधसपिण्डान्तरमरणाशौच, जननमरणाशौचयोर्न तुल्यता नापि स्वानापनेयाङ्गास्य व्यत्ययुक्तपुत्रजननाशौचेन सपिण्डजननाशौचस्य तुल्यता न वा यावद्शौचाधारतत्वाद्यापितायुक्तमरणाशौचस्य सपिण्डमरणाशौचस्य तुल्यता ।

**समानोदक** पु॰ समानमेकं तर्पणादौ देयमुदकं यस्य । “समानोदकभावस्तु निवर्त्तेता चतुर्दशात्” इत्युक्ते एकादशादिचतुर्दशपुरुषपर्य्यन्ते ज्ञातिभेदे सपिण्डशब्दे दृश्यम् ।

**समानोदर्य्य** पु॰ समाने उदरे भवः यत् वा न सादृश्यः । १एकोदरजभ्रात्रादौ २भगिन्यां स्त्री अमर । [सि॰कौ॰।

**समाप** पु॰ सम्यक् आपोऽत्र अच् समा॰ नि॰। देवयजनस्थाने

**समापन** न॰ सम्+आप-ल्युट् । १समाप्तौ चरमकालसम्बन्धे २परिच्छेदे ३वधे च मेदि॰ ४समाधाने विश्वः । ५छन्दे धरणि॰ ।

**समापन्न** त्रि॰ सम्+आ-पद-क्त । १समाप्ते २प्राप्ते ३क्लिष्टे ४वधे च विश्व । भावे क्त । ५समाप्तौ न॰ ।

**समाप्त** त्रि॰ सम्+आप—क्त । १अवसानप्राप्ते २सम्यक्प्राप्ते च

**समाप्तपुनरात्तता** स्त्री समाप्ते वाक्यसमाप्तौ पुनरात्तता ग्रहणम् । क्रियान्वयेन निवृत्ताकाङ्क्षस्य विशेष्यवाचकपदस्य विशेषणान्तरायोन्वयार्थं पुनरुच्चारणरूपे काव्यदोषभेदे दोषशब्दे ३७६४पृ॰ दृश्यम् ।

**समाप्ताल** पु॰ समाप्नाय अलति पर्य्याप्नोति अल-अच् । पत्यौ शब्दच॰ ।

**समाप्ति** स्त्री सम्+आप-क्तिन् । १अवसाने २समर्थने मेदि॰।

**समायोग** पु॰ सम्+आ+युज—घञ् । १संयोगसमवायरूपादिसम्बन्धे “स्वदेहे हि समायोगादिति” पुराणम् । २प्रयोजने मेदि॰ ।

**समालम्बिन्** पु॰ समालम्बते सम्+आ+लवि-णिनि । मूलपर्णे राजनि॰ । २समालम्बनकर्त्तरि त्रि॰ ।

**समालम्भ** पु॰ सम्+आ+लभ-घञ् मुम् च । कुङ्कुमादिना गात्रलेपने अमरः । ल्युट् । तत्रैवार्थे न॰ ।

**समावर्त्तन** न॰ समावर्त्तते गुरुकुलादनेन सम्+आ+वृत—करणे ल्युट् । वेदाध्ययनानन्तर गार्हस्थ्याय गुरुकुलादागमनहेतुके संस्कारभेदे तद्विधिः संस्कारतत्त्वे गोभिलोक्तो दृश्यः ।

**समाविष्ट** त्रि॰ सम्+आ+विश-क्त । १युक्ते २मनोऽभिनिवेशयुते अभीष्टकर्त्तव्यकर्मणि चित्तैकाग्र्यविशेषयुक्ते च ।

**समावृत्त** पु॰ सम्+आ+वृत-क्त । कृतसमावर्त्तनसंस्कारे “अत परं समावृत्तः कुर्य्याद्दारपरिग्रहम्” याज्ञ॰ ।

**समावेश** पु॰ सम्+आ+विश-घञ् । १बहूनामर्थानामेकत्र वाक्यादौ व्यवस्थापने २कर्त्तव्येऽभिनिवेशे च ।

**समावेशित** त्रि॰ सम्+आ+विश—णिच्—क्त । कृतसमावेशने

**समास** पु॰ सम्+अस—घञ् । १संक्षेपे २समर्थने मेदि॰ । ३समाहारे ४व्याकरणोक्ते सुबादिपदानामेकपदतासम्पादके पदसाधुतार्थके ५संस्कारभेदे च यथा “समर्थः पदविधि” पा॰ “समर्थः संसृष्टार्थः सङ्गतार्थ इति यावत् । सामर्थ्यञ्च द्विविधम् अपेक्षालक्षणमेकार्थीभावश्च । तत्र स्वार्थपर्य्यवसायिपदानामाकाङ्क्षादिवशात् य परस्परं सम्बन्धः सा अपेक्षा । राज्ञः पुरुषस्तस्यादौ वाक्ये सत्यामाकाङ्क्षायां यो यो यस्मिन् सन्निहितो योग्यश्च स तेन तेन सम्बध्यते यथा राज्ञः पुरुषोऽश्वश्च राज्ञो देवदत्तस्य च पुरुष गुरुष राज्ञोऽश्वो भवश्चेत्यादि । वृत्तौ तु नैवम् वृत्तीया-

मेकार्थीभावात् । एकार्थीभावश्च विशेष्यविशेषणभावाप-न्नार्थैकोपस्थितिजनकत्वम् । तथा च राजपुरुषादिश-ब्देन विशिष्टैकार्थबोधकतया न तदेकदेशे षष्ठ्यादेरन्वय पुरुषांशे विशेषणतयोपस्थितस्य नाम्नादिसम्बन्धिना रा-जादीनाम् जनिताकाङ्क्षाया निराकाङ्क्षतया न देवदत्तादेः स्वामितया पुरुषादावन्वय इति द्रष्टव्यम् । देवदत्तस्य गु-रुकुलमित्यादौ देवदत्तादेस्तु प्रधानीभूतकुलादिनैवान्वयः सम्बन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः यथोक्तं हरिणा "समुदायेन सम्बन्धो येषां गुरुकुलादिना । संस्पृश्याव-यवांस्ते तु युज्यन्ते तद्वता सह" इति । यद्वा सम्बन्धि-शब्दार्थस्य पदार्थैकदेशत्वेऽपि भवत्येव केषाञ्चित् सम्ब-न्धान्वयः तदुक्तं तेनैव "सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत् सा व्यपेक्षापि वृत्तावपि न हीयते" । अतएव वार्त्तिककृता "सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यत इति वक्तव्यमिति" सा-मान्यतो वृत्तिमतो विशेषणस्य स्वातन्त्र्येण प्रयोगाभाव-मभिधाय "अगुरुकुलपुत्रादीनां वक्तव्यम्" इत्यनेन गुरु-कुलगुरुपुत्रादीना विशेषणत्वेऽपि पृथक्प्रयोगाय नञा पर्युदासः कृतः । समानाधिकरणविशेषणस्य तु "समा-नाधिकरणसमर्थश्च भवतीत्यनेन सर्वथा स्वातन्त्र्येण सामर्थ्याभावात् प्रयोगाभावो भङ्ग्याऽभिहितः । एत-न्मूलकमेव प्राचां नाम "सापेक्षे प्रत्ययो न स्यात् समासो वा कथञ्चन । सापेक्षं तद्विजानीयादसमस्तवि-शेषणम् । प्रतियोगिपदादन्यत् यदन्यत् कारका-दपि । वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते" इति । अयाचं विशेषः भवति प्रधानस्य सापेक्षत्वेऽपि समास इत्युक्तेः प्रधानस्य वृत्त्युपस्थाप्यविशेष्यस्य राजपुरुषादेः सुन्दरादिविशेषणापेक्षायामपि समास । समासे चाव-यवशक्त्यैव तत्तदर्थपदार्थोपस्थित्या विशेष्यविशेषणभावा-द्यभ्युपगमे सापेक्षत्वादौ समासाभावादिक वाचनिक कल्प्यम् तथान्याप्यधिककल्पना स्यादतः समुदायशक्ति-कल्पनम् यथोक्तं हरिणा "बहूना वृत्तिधर्माणां वचनैरेव साधने । स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः । चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् । कर्त्तव्य ते न्यायसिद्ध त्वर्थाद तर्द्दति स्यितमिति" । तथाहि द्व-न्द्वादिविग्रहवाक्ये चकारादि प्रयुज्यते समस्ते तु न तत्र वचनैरेव तन्निषेध कल्पनीय समुदायशक्तिपक्षे तु चार्थादीनामप्रयोग इत्युक्तन्यायादेव सिद्धम् । नानार्थयो-

रभेदान्वयः क्लृप्तः स च राजपदादुपस्थापितराजादि पुरुषे स्वस्वामिभावसम्बन्धेनान्वये परित्यक्त स्यात् । सम्बन्धलक्षणायान्तु किमपराद्धम् विशिष्टलक्षणया । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थः प्रधानमिति नियमश्च क्लृप्तः स च प्राप्तानन्दादौ भज्येत आनन्दकर्त्तृकप्राप्तिकर्मत्वार्थ-बोधस्योभयसम्मतत्वेन कर्त्तृविहितक्तान्तार्थस्य कर्त्तुर्विशेष्य-तौचित्येन प्रकृते तद्वैपरीत्यात् आनन्दसम्बन्ध्यादिलक्ष-णास्वीकारे समुदायशक्तिपक्ष एव प्रवेशः । तथा प्राप्त आनन्दो यमिति विग्रहे आनन्दादौ अत्यन्तादिविशेषण-योगवत् समासे तद्वारणाय वृत्तस्य न विशेषणयोग इति वाचनिकत्वकल्पनाऽधिका एतन्मते न्यायसिद्धा इत्यादि बहुविप्रतिपत्तिरतः समुदाये शक्तिरित्यन्यत्र विस्तर । वार्त्तिककृता तु असमर्थं कस्यचित् नञ्समासस्यासमर्थ-समासस्य गमकस्य साधुत्वं वक्तव्यमित्युक्तत्वात् असूर्यम्-पश्येत्यादौ असमर्थेन नञा वाक्येन हतमारीचो राम इत्यादौ वाणादेर्विप्रकृष्टार्थस्य गमकवृत्तौ सापेक्षत्वेऽपि तदर्थबोधकतयैव समास इति द्रष्टव्यम्" मनुकृतसरला । "पदसम्बन्धो यो विधिः स समर्थाश्रितो बोध्यः" सि॰कौ॰ "पदस्य पदयोः पदानां वा विधि पदविधिरिति वचन-विशेषस्याविवक्षितत्वं द्योतयन्नाह पदसम्बन्धीति । तत्र पदेति किम् वर्णाश्रये कार्येऽसमर्थेऽपि यथा स्यात् तथा च तिष्ठतु दधि आनयास्मिन्नित्यत्र दध्यानयेति पदयोः सामर्थ्याभावेऽपि वर्णाश्रयं यणादिक भवत्येव । सूत्रे समर्थपदं सापेक्षिकमिति द्योतयन्नाह समर्थाश्रित इति समर्थेति किं पश्यति कृष्ण श्रितो राममित्यादौ समासो मा भूत् वस्त्रं कृष्णस्य अपत्यं देवदत्तस्येत्यादौ मा भूत् कृष्णशब्दादपत्यार्थकतद्धितः । इयञ्च परिभाषा समासकृत्-तद्धितादिवृत्तिमात्रे प्रवर्त्तते इति बोध्यम्" मनुकृतसरला । स च समासः षड्विधः ।

"सुपा सुपा तिङा नाम्ना धातुनाऽथ तिङा तिङा । सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधै" (सुपां सुपा) पदद्वयमपि सुबन्तम् । राजपुरुष इत्यादिः । (सुपा तिङा) । पूर्वपद सुबन्तमुत्तर तिङन्तम् । पर्य्य-भूषयत् । "गतिमतोदात्तवता तिङापि समास" इति वार्त्तिकात् समासः । (सुपा नाम्ना) कुम्भकार इत्यादि । "उपपदमतिङि"ति समास । स च "गतिकारकोपपदाना कृद्भिः समासवचनं प्राक् सुबुत्पत्तेरिति" परिभाषया भवति सुबुत्पत्तेः प्राक् । अतोत्तरपदे सुबुत्पत्तेः प्रागि-

त्यर्थः। अन्यथा चर्मक्रीतीत्यादौ नञोऽनुपपत्तेः। (सुपां धातुना) उत्तरपदं धातुमात्रं न तिङन्तम्। कटप्रू आयतस्तुः। "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्चेति" वार्त्तिकात् समासः। "तिङा तिङा" पिबतखादता। पचतभृज्जतेत्यादि। "आख्यातमाख्यातेन क्रियासातत्ये" इति मयूरव्यंसकाद्यन्तर्गणसूत्रात् समासः "तिङां सुबन्तेन" पूर्वपदं तिङन्तमुत्तरं सुबन्तम्। जहिस्तम्बः। "जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधातीति" मयूरव्यंसकाद्यन्तर्गणसूत्रात् समासः। अयं षड्विधोऽपि समासः, "सह सुपा" इत्यत्र योगविभागेन भाष्ये व्युत्पादित इष्टः शब्दकौस्तुभादौ। अयं भाष्यादिसिद्धस्तद्भेदं व्युत्पाद्य प्राचीनवैयाकरणोक्तविभागस्याव्याप्त्यादिभिस्तल्लक्षणस्य प्रायिकत्वं दर्शयति"। "समासस्तु चतुर्द्धेति प्रायोवादस्तथाऽपरः। योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च। भौतपूर्व्यात् सोऽपि रैखागवयादिपदास्थितः"। चतुर्धा अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहिभेदात्। अयं प्रायोवादः। भूतपूर्वः इनभूः उदतस्नूः वागर्थाविवेत्याद्यसंग्रहात्। तथा पूर्वपदार्थप्रधानोऽव्ययीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः सर्वपदार्थप्रधानो द्वन्द्वः। अन्यपदार्थप्रधानो बहुव्रीहिरित्यादि लक्षणमपि प्रायिकम्। उन्मत्तगङ्गं सूपप्रति अर्द्धपिप्पली द्वित्राः कुशकाशमित्यादौ परस्परव्यभिचारात्। तथाहि उन्मत्तगङ्गमित्यव्ययीभावे पूर्वपदार्थप्रधान्याद्बहुव्रीहिलक्षणातिव्याप्तिरव्ययीभावलक्षणाव्याप्तिश्च। "अन्यपदार्थे च संज्ञायामिति" पा॰ समासः। सूपप्रतीत्यव्ययीभावे उत्तरपदार्थप्राधान्यात् तत्पुरुषलक्षणातिव्याप्तिरव्ययीभावाव्याप्तिश्च। "सुपः प्रतिना मात्रार्थे" पा॰ समासः। अर्द्धपिप्पलीति तत्पुरुषे पूर्वपदार्थप्राधान्यसत्त्वादव्ययीभावातिव्याप्तिस्तत्पुरुषाव्याप्तिश्च "अर्द्धं नपुंसकमिति" पा॰ समासः। एवं पूर्वकायाद्यस्मिन्नादौ द्रष्टव्यम्। द्वित्रा इति बहुव्रीहावुभयपदार्थप्राधान्यात् द्वन्द्वातिव्याप्तिर्बहुव्रीह्यव्याप्तिश्च। कुशकाशमित्यादिद्वन्द्वे समाहाराख्यपदार्थप्राधान्याद्बहुव्रीह्यतिव्याप्तिर्द्वन्द्वाव्याप्तिश्च स्यादिति भावः। सिद्धान्ते त्वव्ययीभावाधिकारपठितत्वमव्ययीभावत्वमित्यादि द्रष्टव्यम्। तद्व्यवहाराभिप्रायेणाह भौतपूर्व्यादित्यादि। रैखागवयादिष्विवाङ्कारादेर्गवयपदवाच्यत्वव्यपदेशवदेतेषामपि न समासलक्षणम्। बोधकता तु तद्वदेव स्यादिति भावः" वैया०

शब्दशक्तिप्रकाशिकायाम् अन्यथा समासलक्षणादिकमुक्तं यथा "याडशस्य महावाक्यस्यान्तस्त्यादिर्निजार्थकः। याडशार्थस्य धीहेतुः स समासस्तदर्थकः"। "याडशमहावाक्योत्तरस्यतबादेः स्वार्थस्य याडशार्थावच्छिन्नविषयताशालिबोधे हेतुस्ताडशं तद्वाक्यं तथाविधार्थे समासः। पाचकादिकन्तु पाककर्त्राद्यर्थकं वाक्यमपि स्फुटकारकानभिव्यक्ततादृशार्थकत्वविरहान्न महावाक्यं प्रकृत्यर्थमात्रावच्छिन्नप्रत्ययार्थस्यान्वयबोधं प्रत्ययोग्यत्वं वा प्रकृते वाक्यस्य महत्त्वं वाच्यं तेन उपकुम्भादौ नाव्याप्तिर्न वा नीलघटत्वमित्यादौ नीलघटत्वादिभागेऽतिप्रसङ्गः। चौरपायीत्यादिकस्तु प्रकृत्यर्थावच्छिन्नकदर्थस्यान्वयबोधे समर्थोऽपि न प्रकृत्यर्थमात्रावच्छिन्नस्य तत्र पानशीलसामान्यस्याप्रत्ययात्। राजन्येव पुरुषभावः प्रतीयते न तु राजपुरुषस्य भावः तद्धितानां प्रकृत्यर्थमात्रान्वितस्वार्थबोधकत्वादतो राज्ञः पुरुषेत्यादिभागे न प्रसङ्गः। पाय पायमित्यादिणमन्तभागस्तु स्वार्थावच्छिन्नस्य धात्वन्तरार्थस्यैवान्वयबोधको न तु त्यादिप्रत्ययार्थस्य प्रस्थायेत्यादौ समासव्यपदेशोऽस्य सादिशब्दसंस्कारप्रयोजनको गौणः" विभजते "स चायं षड्विधः कर्मधारयादिप्रभेदतः। यच्चोपपदसंज्ञोऽन्यस्तेनासौ सप्तधा मतः। स चायं निरुक्तसमासः कर्मधारयद्विगुतत्पुरुषाव्ययीभावबहुव्रीहिद्वन्द्वभेदात् षड्विधः यश्च कुम्भकारादिरुपपदसंज्ञकः समासोऽस्ति तेन समं समासः सप्तविधः। सङ्ख्यानिमनौकाधादीनामिव कारादीनामपि शब्दानामुपपदार्थान्वितस्यैव स्वार्थस्य बोधकतया तथाविधनामान्तत्वमेवैतस्य समासान्तराद्विशेषः। ननु यदि षड्विधः सप्तविधो वा समासस्तदास्य पञ्चविधत्वोक्तिः प्राचामसङ्गतेत्यत आशुपपादयति" "पूर्वमध्यान्तसर्वान्यपदप्राधान्यतः पुनः। प्राच्यैः पञ्चविधः प्रोक्तः समासो वामटादिभिः। कश्चित्समासः पूर्वपदार्थधर्मिकान्वयबोधजनकतया पूर्वपदप्रधान उच्यते यथा प्राप्तजायार्द्धपिप्पलीपूर्वकायादिकस्तत्पुरुषः यथा वा उपकुम्भाद्यव्ययीभावः पुरुषसिंहादिकर्मधारयश्च। कश्चिन्मध्यपदार्थधर्मिकधीजनकतयैव मध्यपदप्रधानो, यथा घटानधिकरणप्रतियोगितानवच्छेदकेत्यादिकस्तत्पुरुषः घटस्य नाधिकरणमित्यादिविग्रहे मध्यपदार्थस्यैव विशेष्यत्वात् बहुपदे बहुव्रीहिरेवेत्यस्य तत्पुरुषादेर्बहुनामगर्भत्वाभावे तात्पर्यमित्यपि व्युत्पाद्यत्वात्। कश्चिदन्त्यपदार्थधर्मिकधीहेतुत्वादन्त्यपदप्रधानः

यथा राजपुरुषादिकस्तत्पुरुषो नीलोत्पलादिकः कर्मधारयो द्विगाम्यादिरव्ययीभावश्च। कश्चित् सर्वपदार्थस्य संकर्षकत्वात् सर्वपदप्रधानः यथेतरेतरद्वन्द्वो द्वन्द्वमात्रं वा। कश्चित् स्वघटकान्यपदार्थधर्मिकज्ञानजनकत्वादन्यपदार्थप्रधानः यथा बहुव्रीहिः स्वलेयवाद्यव्ययीभावश्च। तदेवं पञ्च भेदानादायैव पञ्चविधत्वं प्राच्यैरुक्तमतो न विरोधः। नित्यानित्यभेदेन समासस्य द्वैविध्यमप्यस्ति यदुक्तं जयादित्येन "विभक्तिमात्रप्रक्षेपाद्विज्ञातान्तर्गतनामसु। स्वार्थस्याबोधबोधाभ्यां नित्यानित्यौ समासकाविति।" स्वान्तर्गतनामसु विभक्तिमात्रप्रक्षेपेण यत्तदर्थस्याबोधः स नित्यः समासः यथा कृष्णसर्पनिर्मक्षिकासुरादि कृष्णः सर्पो मक्षिकाया नि॰ न सुर इत्यादितस्तत्प्रत्ययस्य वैजात्यादेरग्रहात्। यत्तदर्थस्य च बोधः सोऽनित्यो यथा राजपुरुषपूर्वकायादि तत्तदर्थस्य राज्ञः पुरुषः पूर्वं कायस्येत्यादिवाक्यादपि प्रतीतेः। स्फुरद्बाणो चलच्चैल इत्यादिकः कर्मधारयोऽप्यनित्य एव समासः स्फुरन्तो बाणीत्यादिविग्रहस्य बाणयादौ स्फुरदादिविधेयकबोधाजनकत्वेऽपि स्फुरदभिन्नबाणादावैकात्वादिबोधकत्वमादायैव तदर्थप्रकाशकत्वात् स्फुरन्तौ बाणौभित्यादिवाक्यस्यैव तत्र विग्रहत्वसम्भवात्। विग्रह एव समासलभ्यार्थस्य बोधकत्वं तन्त्रं न तु समासे विग्रहार्थस्य। विग्रहलभ्यालिङ्गसङ्ख्ययोर्व्यञ्जकवैधुर्येण प्रायशः समासाबोध्यत्वात्। अतएव यत्र समासे तयोर्व्यञ्जकसद्भावस्तत्रावगमोऽपि यथा जरतीपितृगुणेन प्रियतिष्ठा पुरुष इत्यादौ स्त्रीत्वस्य स्त्रीप्रत्ययतिष्ठादेरुयोस्तदभिव्यञ्जकयोः सत्त्वात् तथा अक्षपरि शलाकापरि इत्यादावेकत्वादेः अक्षशलाकयोरेकत्व एवाव्ययीभावस्य युष्मदस्मदोर्द्वित्व एव युवाद्यादेशस्य सेनाङ्गानां बहुत्व एव समाहारद्वन्द्वस्य विधानात्। तदुक्तमभियुक्तैः "सङ्ख्या तु व्यञ्जकाभावादव्यक्ता मातरादिवत्। यत्र तु व्यञ्जकं किञ्चित्तत्र सङ्ख्या प्रकाशते। शलाकापरि इत्यत्र पूर्वायोऽर्थेऽपि प्रमीति" । पूर्वादेरर्थस्य च हि सर्वैकत्वमन्तर्भाव्यैवावयविना तत्पुरुषस्य व्युत्पन्नत्वात् सरसिजादौ कण्ठेकालादौ चालुक् समासे सुपः सङ्ख्यावगमेऽपि न क्षतिः तत्र व्यञ्जकसुपः सत्त्वेऽपि सङ्ख्या न बुध्यते इति समाससमासशब्दिन पातञ्जला"। अधिकं तत्र दृश्यम्।

**समासक्त** त्रि॰ सम्+आ+सञ्ज–क्त। १सयुक्ते २सतन्त्रासक्ते ३अभिनिविष्टे च।

**समासङ्ग** पु॰ सम्+आ+सञ्ज-घञ्। १सयोगे २सम्यगभिनिवेशे च।

**समासवत्** पु॰ समास+अस्त्यर्थे मतुप् मस्य व। १व्याकरणोक्तसमासयुक्ते शब्दे २सक्षेपयुक्ते त्रि॰ ३तन्त्रज्ञे पु॰ शब्दच॰। समासेन तुल्यं वति। ४समासतुल्यक्रियायां अव्य॰। [२निकटस्थिते ३प्राप्ते त्रि॰।

**समासादित** त्रि॰ सम्+आ+सद+णिच् क्त। १सम्यगाहृते

**समासान्त** पु॰ ६त॰। व्याकरणोक्तसमासस्य शेषावयवे तत्प्रत्योत्तरविहितविधिश्च अनित्यः "समासान्तविधिरनित्य" परिभा॰।

**समासार्था** स्त्री समासेन संक्षेपेणार्थोऽभिहितोयस्याः। १समस्यायाम् अमर। ६त॰। २समासबोध्यार्थे पु॰।

**समाहार** पु॰ सम्+आ+हृ–घञ्। १समुच्चये अमर २अनुक्तावयवभेदे समूहे, समाहारे द्वन्द्वे तु द्वित्वादिस्त्वादिमेः समुदयबोधात समूहत्वमेव प्रवृत्तिनिमित्तम्। द्वन्द्वशब्दे ३७६१ पृ॰ द्विगुशब्दे च ३८१२ पृ॰ दृश्यम्।

**समाहारद्वन्द्व** पु॰ व्या॰ उक्ते समासभेदे ३७६२पृ॰ दृ॰

**समाहारद्विगु** पु॰ व्या॰ उक्ते समासभेदे द्विगुशब्दे ·· दृश्यम्।

**समाहित** त्रि॰ सम्+आ+धा–क्त। १कृतसमाधौ २आहिते ३प्रतिज्ञाते मेदि॰ ४निष्पन्ने धरणि॰ ५शुद्धे शब्दच॰। ६कृतसमाधाने। भावे क्त। ६समाधाने न॰।

**समाहृत** त्रि॰सम्+आ+हृ-क्त। १सगृहीते २एकत्रीकृते।

**समाहृति** स्त्री सम्+आ+हृ-क्तिन्। १संक्षेपे २सग्रहे अमरः। ३समुच्चये च।

**समाह्वय** पु॰ समाहूयते सम्+आ+ह्वे–अच् आत्वाभावः। १आह्वाने २प्राणिकरणकद्यूते च "प्राणिभिः क्रियमाणस्तु स विज्ञेय समाह्वयः" इति मनुः। ३तद्विकारेण प्रवृत्तविवादभेदे च द्यूतशब्दे १७७४पृ॰दृश्यम्।

**समाह्वा** स्त्री समा–आह्वा आह्वा। १गोजिह्वावृक्षे शब्दच॰। प्रा॰स॰। २समाख्यायाम्। [शब्दर॰।

**समिक** न॰ सम्–इण-डि सत्तया कन्। नेजाख्ये (वर्छा)

**समित्** स्त्री समीयतेऽत्र सम्+इण्-आधारे क्विप्। युद्धे अमरः

**समिता** स्त्री सम्+इण्–क्त। १गोधूमचूर्णभेदे "गोधूमा धवला धौताः कुट्टिता गोधितास्ततः। पिष्टाक्ता विनिर्मुक्ता चालिता समिता स्मृताः" राजनि॰। २एकृते त्रि॰।

**समिति** स्त्री सम्+इण-आधारे क्तिन्। १सभायाम् अमर

**समुत्पत्ति** स्त्री सम्+उद्+पद–क्तिन् । समुद्भवे ।

**समुत्पन्न** त्रि॰ सम्+उद्+पद–क्त । समुद्भूते ।

**समुत्पाट** पु॰ सम्+उद्+च॰पट–अच् । उन्मूलोकरणे ।

**समुत्पाटित** त्रि॰ सम्+उद्+चु–पट–क्त । उन्मूलिते ।

**समुत्पिञ्ज** त्रि॰ सम्+उद्+पिञ्ज–अच् । १अत्याकुले हेमच॰ २आकुलसैन्ये पु॰ अमर॰ ।

**समुत्सर्ग** पु॰ सम्+उद्+सृज–घञ् । सम्यक्त्यागे ।

**समुत्सुक** त्रि॰ सम्यगुत्सुकः प्रा॰स॰ । १अत्यन्तोत्सुके इष्टवस्तुलाभाय त्वरान्विते ।

**समुत्सृष्ट** त्रि॰ सम्+उद्+सृज–क्त । सम्यक्त्यक्ते ।

**समुत्सेध** पु॰ सम्+उद्+सिध–घञ् । १अत्युन्नतौ २अतिस्फीततायाञ्च । [अमर॰ ।

**समुदक्त** त्रि॰ सम्+उद्+अन्च–क्त । कूपादेरुद्धृतजलादौ

**समुदय** पु॰ सम्+उद्+इण–अच् । १समूहे अमरः २युद्धे ३समुद्गमे मेदि॰ ४दिवसे शब्दर॰ । ज्योतिषोक्ते ५लग्ने न॰ । ३षड्नाडीचक्रस्थे जन्मतारवधिके अष्टादशनक्षत्रे चक्रशब्दे दृ॰श्यम् । अच्च्न्त समूहे युद्धे पु॰अमरः । पृष्ठस्थसैन्ये अजय अत्युन्नतौ मेदि॰ ।

**समुदागम** पु॰ सम्+उद्+आ+गम–घञ् न वृद्धिः । १सम्यग्ज्ञाने त्रिका॰ । [त्रिका॰ । २सम्यगाचारे च ।

**समुदाचार** पु॰ सम्+उद्+आ–चर–घञ् । १अभिप्राये

**समुदित** त्रि॰ सम्+उद्+इण्–क्त । १प्राप्तसमूतौ पदार्थे सम+वद–कर्मणि क्त । २सम्यक्कथिते ।

**समुदीरण** न॰ सम्+उद्+ईर–क्त । सम्यक्कथने ।

**समुदीरित** पु॰ सम्+उद्+ईर–क्त । सम्यक्कथिते ।

**समुद्ग** पु॰ सम्+उद्+गम–ड । १सम्पुटके हेमच॰ २सम्पुटकाकारकदार्थे ३समुद्गेन सहिते । स्वार्थे क । तत्रैव अमरः

**समुद्गम** पु॰ सम्+उद्+गम–घञ् न वृद्धिः । १ऊर्द्ध्वगतौ २समुद्भवे च ।

**समुद्गीत** त्रि॰ सम्+उद्+गै–क्त । उच्चैर्गीते । [थिते च ।

**समुद्गीर्ण** त्रि॰ सम्+उद्+गॄ–क्त । १वमिते २उत्तोलिते ३क-

**समुद्दिष्ट** त्रि॰ सम्यक् उद्दिश्य उद्+दिश–क्त । सम्यगुद्देश-विषयं पदार्थे 'तत्समुद्दिष्टं कर्मेति'' स॰व्यप्रसारः ।

**समुद्देश** पु॰सम्यक् उद्देशः उद्+दिश–घञ् । सम्यगभिसन्धौ । २सम्यगुद्देशे च यथा "शाक्यादा आतिसमुद्देशे" मञ्जूषा

**समुद्धत** त्रि॰ सम्+उद्+हन–क्त । १अत्यन्तप्रगल्भे अत्यन्ताविनीते अमरः ३समुद्गीर्णे हेमच॰ ।

**समुद्धरण** न॰ सम्+उद्+हृ–ल्युट् । १उत्तोलने कूपादेर्जलोद्धयने २भुक्तान्नस्य वमने ३उन्मूलने च । कर्मणि ल्युट् । ४वान्ते अन्नादौ ५उन्मूलित च अमर ।

**समुद्धृत** त्रि॰ सम्+उद्+हृ–क्त । १अपनीत २समुत्कीर्णे मेदि॰ ३उत्तोलिते ४उन्मूलिते च ।

**समुद्धर्त्तृ** त्रि॰ सम्+उद्+हृ–तृच् । १वमनकारिणि २उन्मूलयितरि ३उत्थापके ४हृतद्रव्यस्य पुनरादानकर्त्तरि ५

**समुद्भव** पु॰ सम्+उद्+भू–अप् । समुत्पत्तौ ।

**समुद्भूत** त्रि॰ सम्+उद्+भू–क्त । समुत्पन्ने ।

**समुद्यत** त्रि॰ सम्+उद्+यम–क्त । सम्यगुद्यमयुते ।

**समुद्यम** त्रि॰ सम्+उद्+यम–घञ् न वृद्धि । सम्यगुद्यमे ।

**समुद्र** पु॰ सम्+उन्द–क्लेदने रक्, सम्+उद्+रा–क वा । १स्वनामख्याते प्रचुरजले सागरे अमर । सह मुद्रया २मुद्रासहिते त्रि॰ "वभौ मरुत्वान् विकृत. समुद्र' वभौ मरुत्वान् विकृत समुद्र" इति भट्टिः । ३शम्या ४शस्याञ्च स्त्री टाप् राजनि॰ । सागरस्य सप्ताणो भेदात् उक्तम "क्षाराद् वाक, विक्ष्वो स्नेहात्" भाग॰ ३।१२अ॰ । स च सप्तविध "लवणेक्षुसुरासर्पिर्दधिदुग्धजलार्णवाः" समुद्रनामनिरुक्तिः तद्वृद्ध्यादिकारणञ्च मत्स्यपु॰ १२२अ॰ उक्तं यथा "अपाश्चैव समुद्रेकात् समुद्र इति सञ्ज्ञितः । उदयतीन्दौ पूर्णे तु समुद्रः पूर्यते सदा । प्रक्षीयमाणे बहुले क्षीयतेऽस्तमिते च वै । आपूर्यमाणो ह्युदधिरात्मनैवापि पूर्यते । ततो वै क्षीयमाणे तु स्वात्मन्येव ह्यपां क्षयः । उद्दीयन्तेऽग्निसंयोगादुखास्थापो यथा स्वयम् । तथा स्वतः समुद्रोऽपि वर्द्धते शशिनोदये । अन्यूनानतिरिक्तात्वात् वर्द्धन्त्यापो ह्रसन्ति च । उदयेऽस्तमये चेन्दो पक्षयाः शुक्लकृष्णयोः । क्षयवृद्धी समुद्रस्य शशिवृद्धिक्षये तथा । दशोत्तराणि पञ्चाङ्गुलानामा शतानि च । अपां वृद्धि क्षयो दृष्टः समुद्राणान्तु पर्वसु" ।

**समुद्रकफ** पु॰ समुद्रस्य कफ इव । जलधिफेने त्रिका॰ ।

**समुद्रकान्ता** स्त्री ६त॰ । १पृक्कायां राजनि॰ । २नद्याञ्च स्त्रीष्वा॰ समुद्रप्रियादयोऽप्यत्राम् ।

**समुद्रगा** स्त्री समुद्रं गच्छति गम–ड । १नद्यां हेमच॰ । "सर्वा नद्यः समुद्रगाः" इति पुराणम् । साक्षात् परम्परया वा सर्वासां जलधिगामित्वात् तथात्वम् । साक्षात् समुद्रगा च गङ्गादि "सर्वा नद्यो रजोयुक्ता वर्जयित्वा समुद्रगाः" इति प्रा॰ त॰ । गङ्गाया एव प्रतस्रो धाराः सीतालकनन्दाचक्षुभद्राख्यतया ख्याता

जम्बूद्वीपशब्दे ३०४४पृ० दर्शिताः । भारतवर्षस्थाः समुद्रगाश्च "नदीं पिबन्ति विपुलामित्यादिना "दशमाश्च महानदीमित्यन्तेन" भा०भी०उक्ताः ३०४६ पृ० दर्शिताः । क्षुद्रनदीनामपि महानद्यामिलितानां समुद्रगामित्व यथोक्तं माघे "प्राप्यु याम्भाधिमभ्येति महानद्या नगापगा" । [त्रिका० ।

**समुद्रगृह** न० समुद्र इव प्रचुरजलं गृहम् । जलयन्त्रगेहे

**समुद्रचुलुक** पु० समुद्रश्चुलुकः गण्डूषजलमितजलमिव अनायासेन पीतत्वाद्यस्य । अगस्त्ये मुनौ त्रिका० ।

**समुद्रनवनीत** न० समुद्रस्य नवनीतमिव । समुद्रमन्थनोद्भूतसाराशे १अमृते २चन्द्रे च मे०ट० ।

**समुद्रफल** न० ओषधिभेदे "समुद्रनाम प्रथमं पश्चात् फलमुदीरयेत् । समुद्रफलमित्यादि नाम वाच्यं भिषग्वरैः । फलं समुद्रस्य कटूष्णकारि वाताघ्न भूतनिरोधकारि । त्रिदोषदावानलदोषहारि कफामयभ्रान्तिविरोधकारि" राजनि० तद्गुणा उक्ताः ।

**समुद्रफेन** पु० ६त० । समुद्रस्य फेने अमरः "समुद्रफेनश्चक्षुष्यो लेखनः शीतलश्च सः । कषायो विषपित्तघ्नः कर्णरुक्कफहृल्लघु" भावप्र० तद्गुणा उक्ताः ।

**समुद्रमेखला** स्त्री समुद्रः मेखलेव वेष्टनाकारत्वात् यस्याः । पृथिव्यां त्रिका० । समुद्ररशनादयोऽप्यत्र ।

**समुद्रयान** न० यायतेऽनेन या-करणे ल्युट् ६त० । पोते समुद्रतरणसाधने नौकाभेदे वराहपु० ।

**समुद्रयात्रा** स्त्री ६त० । समुद्रस्य तीर्थत्वेन गमने । कलौ तन्निषेधः कलिशब्दे १८०४ पृ० दृश्यम् ।

**समुद्ररमणा** स्त्री समुद्रः रमण इव वेष्टकत्वात् यस्याः । पृथिव्यां शब्दा० ।

**समुद्रलवण** न० समुद्रजलजातं लवणम् । (करकच)सामुद्रे लवणे राजनि० । "सामुद्रं यत्तु लवणमक्षीवं वशिरं च तत् । सामुद्रं मधुरं पाके सतिक्तं मधुरं गुरु । नात्युष्णं दीपनं भेदि सक्षारमविदाहि च । श्लेष्मलं वातनुत्तिक्तमरूक्षं नातिशीतलम्" भावप्र० ।

**समुद्रवह्नि** पु० ६त० । समुद्रस्थे अग्नौ वाडवानले शब्दा० ।

**समुद्रवेला** स्त्री ६त० । समुद्रस्य कूले ।

**समुद्रसुभगा** स्त्री ६त० । गङ्गायां राजनि० ।

**समुद्रान्त** न० समुद्रस्यान्तः पर्य्यन्तदेशः उत्पत्तिस्थानत्वेनास्त्यस्य अच् समुद्रः अन्तो यस्य वा । १जातीफले शब्दच० २दुरालभायां स्त्री अमरः । ३कार्पास्यां ४पृक्कायां मेदि० ५यवासे स्त्री राजनि० । ६त० । ६समुद्रपर्य्यन्ते त्रि० ।

**समुद्राम्बरा** स्त्री समुद्रः अम्बरमिव वेष्टनाकारत्वात् यस्याः । पृथिव्यां त्रिका० । सागराम्बरादयोऽप्यत्र ।

**समुद्रार** पु० समुद्रमृच्छति ऋ-कर्त्तरि करणे वा अण् । १कुम्भीरे २सेतुबन्धे ३तिमिङ्गिलमत्स्ये मेदि० । [पटार्थे ।

**समुद्रि(द्री)य** त्रि० समुद्र+भवार्थे घ छ वा । समुद्रभवे

**समुद्वह** त्रि० सम्+उद्+वह-अच् । श्रेष्ठे सम्यगुद्वहनकर्त्तरि च । [अमरः ।

**समुन्दन** न० सम्+उन्द्-ल्युट् । सम्यगार्द्रीभावे (भिजा)

**समुन्न** न०सम्+उन्द्-क्त । १क्लिन्ने २आर्द्रे अमर । [धरणि

**समुन्नत** त्रि० सम्+उद्+नम-क्त । १अत्युच्चे २स्तम्भभेदे पु०

**समुन्नति** स्त्री० सम्+उद्+नम-क्तिन् । १उन्नतायाम् "प्रायः पयोधरसमुन्नतिरत्र हेतुः" उद्भटः । २उत्कर्षे स्फोतयायां जटा० ।

**समुन्नद्ध** त्रि० सम्+उद्+नह-क्त । १गर्विते २पण्डितमन्ये अमरः । ३प्रभौ अजयः । ४समुद्धृते मेदि० ५उद्भिन्नबद्धे हेमच० । ६समुद्धृते च । भावे क्त । ७उत्तोलनबन्धने न० । [२उत्क्षेपणे ४समुद्भावने च ।

**समुन्नय** पु० सम्+उद्+नी-अच् । १ऊर्द्ध्वनयने २सम्यग्नीतौ

**समुपचित** त्रि० सम्यक् उपचितम् उप+चि-क्त । १उपकीलते २संवर्द्धिते च । [रामाश्रमः ।

**समुपजोषम्** अव्य० सम्+उप+जुष-अम् । अत्यन्तानन्दे

**समुपेयिवस्** त्रि० सम्+उप+इण-क्वसु । समीपगते ।

**समुपोढ** त्रि० सम्+उप+वह-क्त । १धृते २संज्ञाते च ।

**समुल्लेख** पु० सम्+उद्+लिख-घञ् । पादादिना भूम्यादेः खनने ।

**समूढ** त्रि० सम्+ऊह+वह-वा क्त । १राशीकृते २अभग्नते "समूढमस्य पांसुरे" इति ऋग्वेदः । ३भुग्ने ४सद्योजाते मेदि० ५दमिते ६कृतविवाहे भरतः ७शोधिते जटा० । सह मूढेन । ८मूढसहिते त्रि० ।

**समूरु** पु०सङ्गतौ सन्धिहीनत्वात् ऊरू यस्य । मृगभेदे अमरः पृषो० । समूर तत्रार्थे पुस्त्री० हेमच० स्त्रियां ङीष् ।

**समूल** त्रि० सह मूलेन । मूलसहिते "समूले उपपदे कषादिभ्य णमुल् तत्प्रकृतिधातोरनुप्रयोगश्च "समूलकाषं कषं" "समूलघात न्यवधीत्" इति च भट्टिः।

**समूह** पु० सम्+ऊह-घञ् । १समुदाये अमरः । समूहत्वञ्च अपेक्षाबुद्धिविषयविषयत्व त्रित्वादिपर्य्याप्तिसङ्ख्याविशेषो वा । २सम्यग् ऊहे तर्के च ।

**समूहनी** स्त्री समुह्यतेऽनया सम्+ऊह–करणे ल्युट् ङीप्। १सम्मार्जन्यां हेमच०। भावे ल्युट्। २सम्मार्जने परिसमूहनशब्दे ४२५८ पृ० दृश्यम्। ३सम्यगूहकरणे च न०।

**समूहालम्बन** त्रि० समूहमालम्बते विषयतया आ+लवि-अच्। नानाप्रकारतानिरूपितनानाविशेष्यताशालिनि ज्ञाने। तत्र ज्ञाने नानाप्रकारतानिरूपिताया एकविशेष्यतायाः सत्त्वात् न समूहालम्बनत्वम्। धवखदिरौ द्वावित्यादौ दण्डी कुण्डी च देवदत्त इत्यादौ वाक्यजनितबोधस्यापि समूहालम्बनत्व तत्रोभयनिरूपितयोः विशेष्यतयोर्द्वयोरेवाङ्गीकारात् द्वन्द्वात्परश्रूयमाणशब्दस्य प्रत्येकान्वयनियमेन प्रथमार्थद्वित्वस्य प्रत्येकवृत्तित्वात् तस्य समवायेनैवेति बोध्यम्। अतएव शब्दचिन्तामणौ कथितता धवखदिरपलाशान्छिनत्तीत्यादौ प्रत्येककर्मताया एव विभिन्नक्रियायामन्वय इत्युक्तम्। अत उक्तस्थले विशेष्यताद्वयम्। धवखदिरौ द्वावित्यादावपि द्वित्वस्य समवायसम्बन्धेन धवादिवृत्तित्वात् विशेष्यताद्वयाङ्गीकारेऽपि न क्षतिभावात्। तेनैव धवखदिरौ न द्वाविति प्रतीतिवारणसम्भवात्। घट पटश्च पश्यतीत्यादौ च दर्शनक्रियायां घटपटयोरन्वयसम्भवे तु न समूहालम्बनमिति भेट-इत्यादिबोध्यम्। यदि च आत्मघटयोर्नीलत्वमित्यादि प्रयोगसाधुत्वार्थं पर्याप्तिसम्बन्धेनैव द्वित्वादेर्बोधोऽङ्गीक्रियते तदा तस्य न समूहालम्बनत्वम्।

**समूहिन्** त्रि० समूहोऽस्त्यस्य इनि सम्+ऊह–णिनि वा। समूहावयवे प्रत्येकवस्तुनि यथा घटपटसमूहान्तर्गता घट पटश्च समूही। २सम्यक्तर्कयुते त्रि० स्त्रियां ङीप्

**समूह्य** पु० सम्+ऊह–ण्यत्। १यज्ञियाग्नौ अमर २सम्यक् तर्क्ये त्रि० ३यज्ञाग्निसंस्कारभेदे सि०कौ०।

**समृद्ध** त्रि० सम्यक् ऋद्धः ऋध–क्त। १अधिकसम्पत्तियुक्ते अमरः। २अतिवृद्धे च शब्दमा०।

**समृद्धि** स्त्री सम्यक् ऋद्धिः सम्+ऋध–क्तिन् वा। १अतिसम्पत्तौ अमरः २सम्यग्वृद्धौ च "मधुसमृद्धिसमेधित या मेधया" माघः।

**समेत** त्रि० सम्+आ–इण क्त। १समागते २सङ्गते च।

**समेधित** त्रि० सम्+एध+णिच्–क्त। सवर्द्धिते "मधुसमृद्धिसमेधितमेधयेति" माघ।

**समोदक** न० समम् अर्द्धभागेन तुल्यमुदक यत्र। अर्द्धाम्बुसंयोगेन मथितदधिजाते १तक्रभेदे हेमच०। सह मोदकेन वहस्य वः। २मोदकसहिते त्रिकाण्डशेषः।

**सम्पत्ति** स्त्री सम्+पद–क्तिन्। १अतिविभवे अमर २अनुरूपात्मभावे यस्य यद्रूपता उचिता तस्य तथाभवने च सि०कौ० ३विभूतौ मेदि०।

**सम्पद्** स्त्री सम्+पद–सम्प० भावे क्विप्। १विभवे २सम्पत्तौ च अमर०। ३गुणोत्कर्षे। करणे क्विप्। ४हारभेदे पु० मेदि०। घञर्थे क। सम्पद तत्रार्थे न० शब्दमा०।

**सम्पन्न** त्रि० सम्+पद–क्त। १साधिते २सम्पद्युक्ते च मेदि०

**सम्पराय** पु० सम्+परा+इण–आधारे अच्। १युद्धे २आपदि ३उत्तरकाले च अमर।

**सम्परायिक** न० सम्परायाय आपदे हितम् ठन्। १युद्धे तदर्थे ठण्। २साम्परायिकमप्यत्र अमर०। [मेदि०।

**सम्पर्क** पु० सम्+पृच–घञ्। १सम्बन्धे २रतौ ३मेलके च

**सम्पर्किन्** त्रि० सम्+पृच–घिनुण्। सम्बन्धयुक्ते।

**सम्पा** स्त्री सम्यक् अतर्कितं पतति पत–ड। विद्युति अमरः।

**सम्पाक** पु० सम्यक् पाको यस्मात् ५व०। आरग्वधवृक्षे अमर तद्भोजने हि भुक्ताद्यारे सम्यक्पाको भवतीति वैद्यके प्रसिद्धम्। २धूर्त्ते ३तर्कके मेदि० ४लम्पटे ५अल्पे च त्रि० धरणिः।

**सम्पात** पु० सम्+पत–घञ्। १पक्षिगतिभेदे जटा० २सम्यक्पतने च। ३रेखासङ्घाटे सम्पतने च।

**सम्पाति** पु० सम्+पत–णिच् इन्। जटायुषो ज्येष्ठभ्रातरि पक्षिभेदे रामा०। स्वार्थे क। तत्रैव। साम्पातिरिव कायति कैन्क। सम्पातिक गरुडज्येष्ठतनये शब्दमा०।

**सम्पुट** पु० सम्+पुट–क। १कुरवकवृक्षे अमर। सम्यक् पुटमिव उभयपार्श्ववर्त्ति यस्य। २एकजातीयपटार्थेन भिन्नजातीयस्य उभयतो व्याप्ते त्रि० "चकारैः सम्पुटीकृत्य." इति तन्त्रम्।

**सम्पुटक** पु० सम्पुटयति सम्+पुट–अच स्वार्थे वुन्। समुद्गके मञ्जूषाख्ये (पेटारा) पदार्थविशेषे अमरः।

**सम्पूर्ण** त्रि०सम्+पूर–क्त। १परिपूर्णे २समस्ते च "आदित्योदयवेलायां प्राङ्मुहूर्त्तद्वयान्विता। एकादशी तु सम्पूर्णे"ति स्मृत्युक्ते ३एकादशीभेदे स्त्री ति०त०। शुद्धे ४षष्टिदण्डात्मकतिथिमात्रे स्त्री तिथिशब्दे ३२८३ पृ०दृश्यम्।

**सम्पृक्त** त्रि० सम्+पृच–क्त। १मिश्रिते हेमच० २सम्बद्धे च

**सम्प्रणयन** न० सम्+प्र+णी–ल्युट्। १सम्यगग्न्यादेः शोधनाय संस्कारविशेषे २विधाने च। [अमरः।

**सम्प्रति** अव्य० सम्+प्रति+समाहारद्वन्द्वः। इदानीमित्यर्थे

**सम्प्रतिपत्ति** स्त्री सम्+प्रतिपद्यते क्तिन्। १वाद्युक्तार्थवि-

ऽभिहिताः। शिखी मुण्डी जटी चैव द्विदण्डी क्रमेण च। एकदण्डी महेशानि! गौरवैष्णवस्तथैव च। सप्त पाशुपताः प्रोक्ता दशधा वैष्णवा मताः। एतेषां लक्षणं देवि! शृणु यत्नेन शाम्भवि!॥ वेदेषु सर्वं सञ्चाप्य यस्तिष्ठति स वैष्णवः। वैष्णवमन्त्रादिदीक्षाद्यैर्भूषितः ख्यातवैष्णवः। श्रीराधावल्लभ देवि! शृणु यत्नेन शाम्भवि!॥ वैष्णवाचारनिरतो विष्णुतन्त्रैकपारगः। अनन्यचेताः शान्तात्मा विष्णुचिन्तापरायणः। श्रीराधावल्लभो देवि! गोकुलेश शृणु प्रिये!॥ नानाभूषणसम्पन्नो नानासुगन्धिभूषितः। सदा कृष्णं तोषयिता कैलिकृष्णस्वरूपधृक्। शरीरमर्थं प्राणांश्च संनिवेदितोऽस्तु यः। अन्तःशाक्तोऽपरो देवि! बहिर्वैष्णवरूपधृक्। गन्धर्वाचारनिरतो लतावेष्टनतत्परः। सम्प्रदायो गोकुलेश सर्वसिद्धिकरो भुवि। वृन्दावनाख्य देवेशि! शृणु यत्नेन साम्प्रतम्। विमताश्च प्रसन्नात्मा विष्णुभक्तिपरायणः। कामिनीसङ्गचपलो वनक्रीडाविनोदधृक्। सौगन्धभूषिततनुः स्त्रीध्यानैकपरायणः। विष्णुदास्यतत्त्वज्ञः प्रोक्तो वृन्दावनी शिवे!॥ पाञ्चरात्रो महेशानि तथैव वीरवैष्णवः। पूर्वमेव महेशानि कीर्त्तितं परमेश्वरि!॥ रामशक्तिरिति विख्याता सा शिवः परिकीर्त्तितः। रामानन्दो शान्तचित्तो प्रसन्नात्मा विचारधृक्। सर्वत्र समरूपा च रामानन्दी प्रकीर्त्तिता। हरिव्यासी महेशानि! यथावदवधारय। पापसंहरणासक्तो विष्णुभक्तो जितेन्द्रियः। यमादिनियमैर्युक्तो भक्ताचारपरायणः। स्वोपयोगफलत्यागी परकार्य्यपरायणः। हरिव्यासी महेशानि! शिवभक्तिस्वरूपधृक्। निम्बार्कोऽख्य सम्प्रदाय शृणु यत्नेन साम्प्रतम्। नित्यार्चनक्रमासक्तः स्वतन्त्रैकपरायणः। बाह्यपूजादिनिरतो नान्यभक्तः प्रसन्नधीः। आर्य्यपक्षान्वितः स्वच्छः स्वच्छन्दाचारतत्परः। स्वतन्त्रश्चार्त्तविद्वेषी निम्बार्को भगवान् हरिः। अथ भागवतं देवि! कथ्यते शृणु साम्प्रतम्। विष्णुभक्तैकनिपुणो विजितात्मा प्रसन्नधीः। आर्त्तगर्वान्वितो देवि! तदन्याचारतत्परः। आर्य्यपक्षान्वितो देवि! तथा स्वरूपवेशधृक्। शैवद्वेषी तस्य सङ्गात् पुनः ध्यानपरायणः। केवलविष्णुतत्त्वज्ञः प्रोक्तो भागवतः शिवे" शक्तिसङ्ग०त०

**सम्प्रधारणा** स्त्री सम्+प्र+धृ–णिच्–युच्। युक्तायुक्तत्वविवेचनार्थसमर्थने अमरः।

**सम्प्रयोग** पु० सम्+प्र+युज–घञ्। १द्रव्यादिदानेच्छया धनादिविनियोगे "विभागः सम्प्रयोगश्चे"ति स्मृतिः। २रणमध्ये ३निधुवने ४अन्वये ५स्वार्थते त्रि० अजय ६सान्द्र्ये ७कार्मणे वशीकरणादौ मेदि० ८इन्द्रियविषयसम्बन्धे च

**सम्प्रयोगिन्** त्रि० सम्+प्र+युज–घिनुण्। १कामुके २कलाकेलिकारके ३सम्यगलाभार्थं धनादिविनियोजके। ३सम्प्रयोजके त्रि० मेदि०। [दृश्यम्।

**सम्प्रसन्न** त्रि०। १सम्यक्प्रसन्ने २सुप्रसन्ने च सम्प्रसादशब्दे

**सम्प्रसाद** पु० सम्+प्र+सद–करणे घञ्। १योगादिशास्त्रोक्ते चित्तस्य नैर्मल्यसम्पादके प्रयत्नभेदे। भावे घञ्। २सम्यक् प्रसन्नतायाम्। आधारे घञ्। ३सुषुप्तौ "तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानातीति" श्रुतिः। सम्प्रसन्नशब्दे च सुप्रशब्दे दृश्यम्।

**सम्प्रसाधन** न० सम्+प्र+साध-णिच् करणे ल्युट्। १कटकादौ भूषणे। भावे ल्युट्। २भूषणक्रियायाम्।

**सम्प्रसारण** न० सम्+प्र+सृ–णिच्-ल्युट्। १सम्यग्विस्तारणे व्याकरणोक्ते यणः स्थाने जायमाने २इकसवर्णे च। "इग्यणः सम्प्रसारणम्" पा०।

**सम्प्रहार** पु० सम्प्रह्रियतेऽत्र सम्+प्र+हृ–आधारे घञ्। १युद्धे अमरः। भावे घञ्। २सम्यक्प्रहरणे ३गमने च मेदि०।

**सम्प्राप्ति** स्त्री सम्+प्र+आप–क्तिन्। १सम्यक्प्राप्तौ २वैद्यकोक्ते रोगोत्पत्तिभेदे च तल्लक्षणं भावप्र० उक्तं यथा "अथ सम्प्राप्तेर्लक्षणमाह "यथा दुष्टेन दोषेण यथा चानुविसर्पता। उत्पत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागतिः"। यथा दुष्टेन दोषेण यथा कारणभेदेन दोषेण यथा चानुविसर्पता अनेकधा दोषाणां विसर्पता मूर्ध्वाधस्तिर्य्यगादिगतिभेदेन तथा च विसर्पता। आमयस्य या उत्पत्तिः असौ सम्प्राप्तिः। शास्त्रव्यवहाराय सम्प्राप्तेः पर्य्यायावाह जातिरागतिरिति। सम्प्राप्तेरौपाधिकभेदानाह "सङ्ख्याविकल्पप्राधान्यबलकालविशेषतः। सा भिद्यते यथात्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति"। सङ्ख्यादिकालविशेषान्तेभ्यः सा संप्राप्तिर्भिद्यते भेदवती क्रियत इत्यर्थः। तत्र सङ्ख्यां विवृणोति। यथा ज्वरोऽष्टधा अतीसारः षड्विध इत्यादि विकल्पं विवृणोति। "दोषाणां समवेतानां विकल्पोंऽशांशकल्पना" समवेतानां सम्मिलितानां दोषाणाम् अंशांशकल्पनाहीनमध्याधिकभेदेभोगकल्पना विकल्पः। प्राधान्यं विवृणोति। "स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत्"। व्याधेः

"प्रयोगं कुर्वते ये तु हेमधान्यरसादिना। समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः। समो न्यूनोऽधिको वांशो येन क्षिप्तस्तथैव सः। व्ययं दद्यात् कर्म कुर्य्याल्लाभं गृह्णीत चैव हि" इति। यत्र पुनरस्य द्वौ भागावस्यैक इति संवित् कृता तत्र तदनुरोधेन व्ययलाभौ प्रकल्पनीयावित्याह याज्ञवल्क्यः "समवायेन वणिजां लाभार्थं कर्म कुर्वताम्। लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ" इति। सम्भूयकारिणा कर्त्तव्यमाह व्यास "समक्षमसमक्षं वाऽवञ्चयन्त परस्परम्। नानापण्यानुसारास्ते कुर्युः क्रयविक्रयौ। अगोपयन्तो भाण्डानि दद्युः शुल्कञ्च तेऽध्वनि। अन्यथा द्विगुणं दाप्याः शुल्कस्थानस्थमेह स्थिताः" इति। नारदोऽपि "भाण्डपिण्डव्ययोद्धारभारसारान्ववेक्षणम्। कुर्युस्तेऽव्यभिचारेण समये स्वे व्यवस्थिताः" इति। अथ वा सर्वानुज्ञया सर्वेषां कार्य्यमेक एव कुर्य्यात्। अतएव वृहस्पति "बहूनां सम्मतो यस्तु दद्यादेको धनन्नरः। करणं कारयेद्वापि सर्वैरेव कृतं भवेत्" इति। करणं लेख्यादिकम्। सम्भूयकारिणामन्योन्यविवादे निर्णयप्रकारमाह स एव "परीक्षकाः साक्षिणश्च त एवोक्ताः परस्परम्। सन्दिग्धेऽर्थे वञ्चनायां न चेद्विद्वेषसंयुताः" इति। यदा तु विद्वेषयुक्तास्तदाप्याह स एव "यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये। शपथैः सोऽपि शोध्यः स्यात् सर्ववादेष्वयं विधिः" इति। सर्ववादेऽपि वञ्चनरहितवादेऽपि। वञ्चकत्वे सिद्धे सति किं कार्य्यमित्यपेक्षिते आह याज्ञवल्क्य "जिह्मं त्यजेयुर्निर्लाभम्" इति। जिह्मं वञ्चकं निर्लाभं कृत्वा त्यजेयुर्वहिः कुर्युरितरे सम्भूयकारिण इत्यर्थः। सम्भूयकारिष्वसमर्थं प्रत्याह स एव "अशक्तोऽन्येन कारयेत्" इति। स्वांशानुरूपं कर्मेति शेषः। दैवराजकृतद्रव्यहानिविषये सर्वान् प्रत्याह वृहस्पतिः "द्रव्यहानिर्यदा तत्र दैवराजकृता भवेत्। सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः" इति। सम्भूयकारिभिः सर्वैरिति शेषः। अयहानिरिति पाठे क्षयायैव हानिः अयहानिरपण्यार्थव्यतिरिक्ता हानिरित्यर्थः। प्रातिस्विकदोषेण द्रव्यनाशे स एवाह "अनिर्दिष्टो वार्य्यमाणः प्रमादाद्यस्तु नाशयेत्। तेनैव तद्भवेद्देयं सर्वेषां समवायिनाम्" इति। अनिर्दिष्टः समवाय्यननुज्ञातः। याज्ञवल्क्योऽपि "प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम्। स तद्दद्यात्"। पालने त्वाह स एव "विप्लवाच्च रक्षिताद्दशमांशभाक्" इति। वृहस्पतिरपि "दैवराजभयाद्यस्तु स्वशक्त्या परिपालयेत्। तस्यांशं दशमं दत्त्वा गृह्णीयुस्तेंऽशतोऽपरम्" इति। तस्मै तस्मै दशमं संगन्तृसमवायिद्रव्यमिति शेषः। प्रतिपालयेत् समाहरेत स्वशक्त्या प्रत्याहरेदित्यर्थः। नारदोऽपि "दैवतस्करराजाग्निव्यसने समुपस्थिते। यस्तत् स्वशक्त्या रक्षेत तस्यांशो दशमः स्मृत" इति। यस्तु समवायिद्रव्यं समवायिभिः सह प्रतियाचनादिना न साधयति तस्य लाभहानिरित्याह वृहस्पतिः "समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत्। न याचते च यः कश्चिल्लाभात् स परिहीयते" इति। "याचनग्रहणं येन यत्कर्म स्वांशानुरूपं कर्त्तव्यं तस्याप्युपलक्षणार्थं तेन तत्कर्माकरणेऽपि लाभहानिरित्यस्मादेव वचनात् प्रतिपत्तव्यमिति" स्मृतिचन्द्रिकायाम्। सम्भूयकारिणामृत्विजां कर्त्तव्यमाह मनुः "ऋत्विजः समवेतास्तु यत्र सर्वे निमन्त्रिताः। कुर्युर्यथांशं तत्कर्म गृह्णीयुर्दक्षिणां तथा" इति। अत्र सर्वशब्दो यज्ञमात्रविवक्षया प्रयुक्तो न पुनर्बहुयजमानकर्त्तृकयज्ञविशेषविवक्षया। तत्र यजमानानामेवाध्वर्य्यवादिकर्मकारित्वे दक्षिणाग्राहिणामृत्विजामभावात्। तथा कर्मानुसारेण दक्षिणां गृह्णीयुरित्यर्थः। तथा च स एव "सम्भूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः। अनेन कर्मयोगेन कर्त्तव्यांशप्रकल्पना" इति। स्वानि कर्माणि याजमानव्यतिरिक्तानीति शेषः। इयं चांशकल्पना द्वादशशतं गावो दक्षिणेत्येवं क्रतुसम्बन्धित्वेन विधीयमानायां दक्षिणायामेव न ऋत्विग्विशेषाद्धानेन विहितायास्तद्विधायकश्रुतिविरोधापत्तेः अतएवाहतुर्मनुवृहस्पती "रथं हरेत्तथाध्वर्युर्ब्रह्माधाने च वाजिनम्। होता निषिद्वरं चाश्वमुद्गाता चाप्यनः क्रये" इति। निषिद्वरं निविष्टमनलक्ष्य वरम्। उद्गात्रग्रणी द्वादशगणमध्यस्थः धनह्लापो गृह्यत इति मदनरत्ने। अनः शकटम् क्रये सोमक्रये। दक्षिणांशकल्पनायाः प्रकारमाहतुः मनुवृहस्पती "सर्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे। तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः" इति। सर्वेषां षोडशानामृत्विजां मध्ये ये मुख्या गणस्वामिनः होतृब्रह्माध्वर्य्यूद्गातारस्तेऽर्द्धिनः. शतदक्षिणायाः किञ्चिन्न्यूनमर्द्धं ४८ गृह्णीयुः समग्रार्द्धग्रहणे वक्ष्यमाणविभागकल्पनाविरोधः स्यात्। अपरे द्वितीयाः

यत्र शिल्पं सम्भूय कुर्वते। कर्मानुरूपं निर्वेशं लभेरंस्ते यथागतम्” इति। कुप्यं हेमरूप्यव्यतिरिक्तत्रपुसीसादिकम्। हेमरूप्ये इति प्रस्तुत्य ताभ्यां यदन्यत्कुप्यमित्यमरसिंहेनोक्तत्वात्। निर्वेशो भृतिः। कात्यायनोऽपि “शिक्षकाभिज्ञकुशला आचार्य्याश्चेति शिल्पिनः। एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम्” इति। हर्म्यादिनिर्माणां मध्ये मुख्यस्य भागद्वयमाह वृहस्पतिः “हर्म्यं देवगृहं वापि वाटिकोपस्कराणि च। सम्भूय कुर्वतां तेषां प्रमुखो द्व्यंशमर्हति” इति। नर्त्तकेष्वपि मुख्यस्यांशद्वयभागित्वमतिदिशन् विशेषान्तरमाह स एव “नर्त्तकानामेष एव धर्मः सद्भिरुदाहृतः। तालज्ञो लभतेऽध्यर्द्धं गायनास्तु समांशिनः” इति। अध्यर्द्धं सार्द्धांशिकमंशम्। सम्भूयकारिणाञ्चौराणां लाभभागेऽंशपरिकल्पनाप्रकारमाह कात्यायनः “परराष्ट्राद्धनं यत् स्याच्चौरैः स्वाम्याज्ञया हृतम्। राज्ञे दशांशमुद्धृत्य विभजेरन् यथाविधि। चौराणां मुख्यभूतस्तु चतुरोऽंशांस्ततो हरेत्। शूरोऽंशास्त्रीन् समर्थो द्वौ शेषास्त्वेकैकमेव च” इति। एतद्धनं दुर्बलैरदेशादाहृतविषयम्। प्रबलैरदेशादाहृते त्वाह वृहस्पतिः “स्वाम्याज्ञया तु यच्चौरैः परदेशात् समाहृतम्। राज्ञे दत्त्वा तु षड्भागान् भजेयुस्ते यथांशतः। चतुरोंऽशान् भजेन्मुख्यः शूरस्त्र्यंशमवाप्नुयात्। समर्थस्तु हरेद्द्व्यंशं शेषास्त्वन्ये समांशिनः” इति। समर्थः शक्तः। एतेषां चानिरर्थक्यमेवेत्याह कात्यायनः “तेषां चेत् प्रसृतानां तु ग्रहणं समवाप्नुयात्। तन्मोक्षणार्थं यद्दत्तं वहेयुस्ते यथांशतः” इति। इयमंशपरिकल्पना ऋत्विग्भिन्नसम्भूयकारिणां समयाभावविषया कृते तु समये तदनुसारेणैव। अतएव तेनैवोक्तम् “वणिजां कर्षकाणाञ्च चौराणां शिल्पिनां तथा। अनियम्यांशकर्तॄणां सर्वेषामेष निर्णयः” इति। अनियम्य लाभहान्योः समयेन प्रतिपुरुषमंशमकृत्वेत्यर्थः”।

**सम्भृति** स्त्री सम्+भृ-क्तिन्। सम्यक् पोषणे।

**सम्भेद** पु० संभिद्यते संश्लिष्यतेऽत्र सम्+भिद--आधारे घञ्। १नद्योः सङ्गमस्थाने अमरः। भावे घञ्। २सङ्गमे ३सम्यग्भेदने ४स्फुटने ५मिलने मेदि० ६ऐकरूप्ये च “सम्भेदे नान्यतरवैयर्थ्यम्” इति मीमांसाया न्यायः।

**सम्भोग** पु० सम्+भुज-घञ्। १सम्यग्भोगे २सुरते ३मिल्लमाषभेदे मेदि० ४हर्षे शब्दच० ५केलिनागरे जटा० “दर्शनस्पर्शनादीनि निषेवेते विलासिनौ। यत्रानुरक्तावन्योन्यं सम्भोगः स उदाहृतः” इत्युक्तलक्षणे ६शृङ्गारस्यावस्थाभेदे सा०द०।

**सम्भ्रम** पु० सम्+भ्रम-घञ् न वृद्धिः। १भयादिजनिते वेगे अमरः। २त्वरायां ३तर्कुके ४भये ५आदरे मेदि०। ६अतिशयभ्रमे ७भ्रान्तौ अजयः।

**सम्मति** स्त्री सम्+मन-क्तिन्। १अनुमतौ २अभिलाषे च मेदि०। ३आत्मज्ञाने अजयः। [२हर्षयुक्ते त्रि०।

**सम्मद** पु० सम्+मद-घञर्थे क। १हर्षे अमरः। कर्त्तरि अच्

**सम्मर्द** पु० सम्मृद्यतेऽत्र सम्+मृद आधारे घञ्। १युद्धे। भावे घञ्। २अन्योन्यसंघर्षे च।

**सम्मातुर** पु० समीच्या सत्या मातुरपत्यम् अण् उत् रपरः वा० न वृद्धिः। सतीतनये भाद्रमातुरे हेमच०।

**सम्मान** पु० सम्+मन-घञ्। आदरे। [इते च।

**सम्मानित** त्रि० सम्+मन--णिच्-क्त। १कृतगौरवे २सम्मा-

**सम्मार्जन** स्त्री सम्+मृज-ल्युट्। संशोधने रत्नमा०।

**सम्मार्जनी** स्त्री सम्मृज्यतेऽनया सम्+मृज-करणे ल्युट् ङीप्। धूल्याद्यपसारणार्थे पदार्थे (झाँटा) अमरः। ण्वुल्। सम्मार्जक तदर्थे पु० शब्दर०।

**सम्मित** त्रि०सम्+मा-क्त। १सदृशे २तुल्यपरिमाणे च जटा०

**सम्मुख** त्रि०सङ्गतं मुखं येन प्रा०ब०। अभिमुखागते त्रिका०।

**सम्मुखीन** त्रि० सम्मुखं पतति ख। अभिमुखे पातिनि।

**सम्मूर्च्छज** न० सम्मूर्च्छात् जायते जन-ड। तृणादौ हेमच०

**सम्मूर्च्छन** न० सम्+मूर्च्छ-ल्युट्। १सम्यग्विस्तारे अमरः। २उन्नतौ ३मोहे च मेदि०। ४सम्यक्मूर्च्छने स्वरभेदे।

**सम्मूर्छनोद्भव** पु० सम्मूर्छनादुद्भवति उद्+भू-अच् ५त०। मत्स्ये हेमच०।

**सम्मृष्ट** त्रि० सम्+मृज-क्त। १कृतमार्जने अमरः। मक्षिकाद्यपसारणेन २शोधितेऽन्नादौ च भरतः।

**सम्मोद** पु० सम्+मुद-घञ्। १हर्षे २प्रीतौ च शब्दच०।

**सम्यच्** अव्य० सम्+अन्च-क्विप् सम्यादेश। १शोभने २सङ्गते ३मनोज्ञे च मेदि०। ४सत्यवाक्ये न० भरतः ५त० इति त्रि० सत्वे समीच इत्यादि। स्त्रियां ङीप् समीची।

**सम्राज्** पु० सम्यक् राजते राज-क्विप् नानुस्वारः। कृतराजसूययज्ञे सर्वभूमीश्वरे नृपतौ अमरः।

**सय्यँम** पु० सम्+यम-करणे घञ् समो वा परसवर्णोऽनुनासिको यँ पक्षे संयमः। पात०सू० परिभाषिते धारणाध्यानसमाधित्रये “त्रयमेकत्र संयमः” पात०सू० “तदेतत्

धारणाध्यानसमाधित्रयस्यैकत्र संयमः एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते तदस्य त्रयस्य तान्त्रिकी परिभाषा संयम इति” भा० ।

**सर** न० सरति सृ–अच् । १सरोवरे शब्दच० । २जले जटा० । ३लवणे ४वाणे च हेमच० । ५दध्यग्रे दधिसारे रत्नमा० । ६तज्जाते नवनीते च । भावे अप् । ७भेदने ८गमने च । कर्त्तरि अच् । ९सारके १०भेदके राजनि० ।

**सरक** पु०न० सृ–वुन् । १मद्यपानपात्रे भरतः २मद्यपरिवेषणे ३इक्षुजमद्ये ४तत्पाने ५अविरलपथिकपङ्क्तौ च मेदि० ६गतिशीले त्रि० शब्दर० । [कायाम् अमरः ।

**सरघा** स्त्री सरं मद्यभेदं हन्ति हन–ड नि० । मधुमक्षि-

**सरङ्ग** पुस्त्री० सृ–अङ्गच् । १चतुष्पाज्जन्तौ २खगे च स-च्छिष्यमा० स्त्रियां ङीष् ।

**सरज** न० सरात् जायते जन–ड । नवनीते हारा० ।

**सरजस्** स्त्री सह रजसा सहस्य स० । १ऋतुमत्यां स्त्रियाम् २रजोयुक्ते त्रि० । अव्ययी० अच् समा० । सरजसम् ३रजःसाहित्ये अव्य० अमरः ।

**सरट** पुस्त्री० सृ–अटन् । कृकलासे ( काकलास ) अमरः । स्त्रियां ङीष् । देहे तत्प्ररोहणादिफलं यथा “सरटस्य प्रपाते च फलं सरटस्य प्ररोहणे । शीर्षे राजश्रियोऽवाप्तिर्भाले चैश्वर्यमेव च । कर्णयोर्भूषणावाप्तिर्नेत्रयोर्बन्धुदर्शनम् । नासिकायां च सौगन्ध्यं वक्त्रे मिष्टान्नभोजनम् । कण्ठे चैव श्रियोऽवाप्तिर्भुजयोर्विभवो भवेत् । धनलाभो बाहुमूले करयोर्धनसञ्चयः । स्तनमूले च सौभाग्यं हृदि सौख्यविवर्द्धनम् । पृष्ठे नित्यं सुखी लाभः पार्श्वयोर्बन्धुदर्शनम् । कटिद्वये वस्त्रलाभो गुह्ये स्त्रीसमागमः । ऊर्वोः पादयोर्नित्यं गुदे रोगभयं भवेत् । जङ्घयोर्वाहनावाप्तिर्गुल्फयोऽर्थसञ्चयः । वामदक्षिणयोः पादयोर्भ्रमणं नियतं भवेत् । सर्वत्र प्ररोहणे चैव पतने सरटस्य च । व्यत्यासान्न फलं चैव तद्वदेव प्रजायते । सर्वत्र प्ररोहणं रात्रौ सरटस्य प्रपातनम् । निधनायैव भवति व्याधिपीडाविपर्ययौ । पतनानन्तरं चैवारोहणं यदि जायते । पतने फलमुत्कृष्टं रोहणेऽन्यत् फलं भवेत् । आरोहणस्योर्ध्वं वक्त्रे अधोवक्त्रे च पातनम् । भवेदिष्टफलं तस्य तत्फलं जायते ध्रुवम् । स्पृष्टमात्रेण वा सद्यः सचेलं जलमाविशेत् । पञ्चगव्यप्राशनं च कुर्यात् दर्पणावलोकनम्” दिवाकर

**सरट्** पु० सृ–अटि । १वायौ २मेघे उणादिकोषः ।

३सरघायां सिद्धान्तकौमुदी । ४कृकलासे अमरटीका ।

**सरटि** पु० सृ–अटिन् । १वायौ २मेघे च उणादि० ।

**सरटु** पु० सृ–अटु । कृकलासे उणादिकोषः ।

**सरण** न० सृ–ल्युट् । १गमने २लोहमले हेमच० । (गन्धभादाल) ३लतायां स्त्री अमरः टाप् । ४त्रिवृतायां शब्दमा० ।

**सरणि(णी)** स्त्री सृ–अनि वा ङीप् । १पथि २पङ्क्तौ मेदि० ३प्रसारण्यां भरतः । ४त्रिवृतायां स्त्री शब्दमा० ।

**सरण्ड** पु० सृ–अण्डच् । १खगे २कामुके शब्दच० ३धूर्त्ते ४सरटे ५भूषणभेदे मेदि० सर्वत्र जातौ स्त्रियां ङीष् ।

**सरण्यु** सृ–अन्यु । १वायौ २मेघे ३जले शब्दर० ४वसन्ते ५अग्नौ उणादिकोषः । [न० शब्दमाला ।

**सरत्** त्रि० सृ–शतृ । १गन्तरि स्त्रियां ङीप् सरन्ती । २सूत्रे

**सरति** पु० सह रतिना । रतिशब्दार्थे अमरटीका ।

**सरपत्रिका** स्त्री सरे जले पत्रमस्त्यस्याः ठन् । १पद्म-पत्रे २पद्मे च शब्दच० ।

**सरमा** स्त्री सह रमते रम–अच् । १कुक्कुरयोषिति २देव-शुन्यां ३राक्षसीभेदे विभीषणपत्न्यां तु मेदि० । ४कश्यपपत्नीकन्याभेदे “गान्धारीं नन्दकोरस्य श्येन्यापत्यं तथैव च । अपत्यं सरमायाश्च यथा ये श्वसरादयः” वह्निपु० ।

**सरयु** पु० सृ–अयु । १वायौ त्रिका० । ऊङ् । २अयोध्यान्तिकवाहिनदीभेदे स्त्री । तदुत्पत्ति कालिकापु० २१अ० यथा “एवं विवाह्य विधिवत् सौवर्णे मानसाचले । तत्र यत् पतितं तोयं मानसाचलकन्दरे । तत्तोयं सप्तधा भूत्वा मानसाचलकन्दरात् । हेमाद्रेः कन्दरे यान्ति सरस्तु पृथक् पृथक्” इत्युपक्रमे “तेनाभूत् सरयूनाम्नी नदी पुण्यतमा शुभा” । तस्या भव अण् नि० । सारवं तत्र भवे त्रि० अमरः ।

**सरल** पु० सृ–अलच् । १पीतशाले अमरः “सरलो मधुरस्तिक्तः कटुपाकरसो लघुः । स्निग्धोष्णः कर्णकण्ठाक्षिरोगरक्षोहरः स्मृतः । कफानिलस्वेदयूकामलविद्रध्यपहः” भावप्र० तद्गुणोक्तिः । २धूपकाष्ठभेदे शब्दर० ३उदारे ४ऋजौ च त्रि० मेदि० ५त्रिपुटायां स्त्री अमरः

**सरलद्रव** पु० ६त० । सरलनिर्यासे (टारपीन) अमरः ।

**सरलाङ्ग** पु० सरलो ऽङ्गं साधनं यस्य । श्रीवेष्टे गन्धद्रव्ये राजनि० ।

**सरस्** न० सृ–असुन् । १जले उज्ज्व० । २सरोवरे अमरः । गौरा० ङीष् । ३सरसीशब्दार्थे स्त्री अमरः “सरसीः परिशीलितुं मया” नैषधम् ।

**सरस** न० सह रसेन जलेन आस्वादेन च वर्त्तते स० । १सरोवरे शब्दच० २रसान्विते ३आर्द्रे च त्रि० । "सरसा सरसा परिमृज्य तनुम्" भट्टिः । ३श्वेतनिर्दिष्टतायां स्त्री रायमु० ।

**सरसप्रत** न० सरसिव निर्यास सम्प्रतनोति सम्+प्र+तन-ड । त्रिकण्टकवृक्षे (तेकाटासिजु) शब्दच० ।

**सरसिज** न० सरसि जायते जन-ड अलुक् समा० । १पद्मे राजनि० "सरसिजमनुविद्धं शैवलेनापि रम्यम्" शकुन्तला । २सारसखगे पुस्त्री० स्त्रियां ङीष् । लुकि सरोजमप्यत्र । [स्त्रियां ङीष् ।

**सरसीक** पुस्त्री० सरस्यां कायति कै-क । सारसखगे शब्दर०

**सरसीरुह** न० सरस्यां सरोवरे रोहति रुह-क । १पद्मे २सारसखगे च पुस्त्री० अमरः स्त्रियां ङीष् ।

**सरस्वत्** पु० सरांसि जलानि सन्त्यस्य मतुप् मस्य वः । १सरोवरे २सागरे ३नदे ४रसिके त्रि० मेदि० ५नद्यां ६वाण्यां ७गवि ८स्त्रीरत्ने स्त्री मेदि० ङीप् । स च ९ज्योतिष्मत्यां १०ब्राह्म्यां शब्दौ राजनि० ११देवीभेदे मेद० १२सोमलतायां शब्दच० । १३बुद्धशक्तिभेदे त्रिका० १४दुर्गायाम् "सरा सर्वाण्डोनित्यात् गेयाख्ये सुकीर्त्तिता । इति मापण्यदाने या तेन देवी सरस्वती" देवीपु० ४५अ० तन्नामनिरुक्तिः । तथोक्। १५वागधिष्ठातृदेव्याम् "आविर्बभूव तत्पश्चात् मुखतः परमात्मनः । एषा देवी शुक्लवर्णा वीणापुस्तकधारिणी । वागधिष्ठातृदेवी सा कवीनामिष्टदेवता । शुद्धसत्त्वस्वरूपा च शान्तरूपा सरस्वती" ब्रह्मवै० प्र०ख० ३अ० । तत्रैव गणे० ७०अ० "वागधिष्ठात्री या देवी शश्वद्वाग्वादिनी सदा । कृष्णकण्ठोद्भवा या च सा च देवी सरस्वती" । "बन्धुजीवस्य पुष्पाणि सरस्वत्यै न दापयेत्" मत्स्यसू० तत्पूजादिकं तन्त्रसा० दृश्यम् । १६सन्ध्याकाले उपास्यदेवतायां गायत्रीशब्दे २५८२ पृ० दृश्यम् । सरः प्रक्षसरः उत्पत्तिस्थानत्वेनास्त्यस्याः मतुप मस्य वः ङीप् । १७नदीभेदे सरस्वतीनद्याः तदुत्पत्तिश्च यथा च "प्लक्षात् सि महाभागे सरसो ब्रह्मणः पुरा । जानन्ति त्वां सरिच्छ्रेष्ठे मुनयः संशितव्रताः" भा० श० ५अ० । तस्याश्च सप्तनामत्वं यथा "राजन् ! सप्त सरस्वत्यो याभिर्व्याप्तमिदं जगत् । आहूता बलवद्भिर्हि तत्र तत्र सरस्वती । सुप्रभा१ काञ्चनाक्षी२ च विशाला३ च मनोरमा४ । सरस्वती५ चौघवती६ सुरेणु७र्विमलोदका" भा०श० ३८अ० । तासां नामकारणञ्च तत्राध्याये दृश्यम् तस्या माहात्म्यं तत्रैव सारस्वतोपाख्याने दृश्यम् । [पृ०कोषः ।

**सरा** स्त्री सृ-अच् । १प्रसारण्यां राजनि० २निर्झरे त्रिका०

**सराव** पु० सरं जलमवति अव-अण् । १जलाधारे मृण्मये पात्रभेदे(शरा)हिरूपकोष । सह रावेण । २सशब्दे त्रि०

**सरि** पुस्त्री० सृ-इन् स्त्रीत्वपक्षे वा ङीप् । निर्झरे हेमच० ।

**सरिका** स्त्री सरोऽस्त्यस्याः ठन् सृ-वुन् वा । हिङ्गुपत्रिकायाम् शब्दर० ।

**सरित्** स्त्री सृ-इति । १नद्याम् अमरः २सूत्रे शब्दमा० । "क्रियाकारकरूपत्वात् सरणाच्च सरित्स्मृता" देवीपु० ४५अ० निरुक्तायां ३दुर्गायाम् ।

**सरित्पति** पु० ६त० । समुद्रे अमरः । सरिन्नाथादयोऽप्यत्र

**सरित्वत्** पु० सरित् स्वामित्वेनास्त्यस्य मतुप् मस्य व० तान्तत्वेन पदत्वाभावात् न तस्य दः । समुद्रे ।

**सरित्सुत** पु० ६त० । गङ्गापुत्त्रे भीष्मे ।

**सरिताम्पति** पु० ६त० अलुक् समा० । १समुद्रे शब्दर० । सरितांनाथादयोऽप्यत्र ।

**सरिद्वरा** स्त्री सरित्सु वरा श्रेष्ठा । गङ्गायाम् हेमच० ।

**सरिल** न० सृ-इलच् । जले अमरटीकायां भरतः ।

**सरिमन्** पु० सृ-इमनिन् । १वायौ २गतौ च उणादि० ।

**सरिषप** पु० सर्षप+पृषो० । सर्षपे त्रिका० ।

**सरीसृप** पुस्त्री० वक्रं सर्पति सृप-यङ् लुक्, अच् । १सर्पे अमरः । २वृश्चिकादौ । ज्योतिषोक्तेषु ३मीनवृश्चिककर्कटराशिषु "वृश्चिकराशिर्निशि सरीसृपत्वेन निर्दिष्टः" ज्यो०त० । "मृगपतिवशे तिष्ठन्त्येते विहाय सरीसृपान्" ज्यो०त० बहुवचनात् मीनकर्कटयोर्ग्रहणम्

**सरु** पु० सृ-उन् । खड्गादिमुष्टौ शारसुन्दरी ।

**सरूप** त्रि० समानं रूपमस्य समानस्य स० । तुल्यरूपे सदृशे जटा०

**सरोज** न० सरसि जले जायते जन-ड । १पद्मे हेमच० । २सारसखगे पुस्त्री० स्त्रियां ङीष् । ३सरोजातमात्रे त्रि० ।

**सरोजन्मन्** न० सरसि जले जन्म यस्य । १पद्मे हेमच० । २सारसखगे ३तडागजातमात्रे त्रि० ।

**सरोजिन्** पु० सरोजं विष्णुनाभिपद्ममुत्पत्तिस्थानत्वेनास्त्यस्य इनि । चतुर्मुखे ब्रह्मणि त्रिका० ।

**सरोजिनी** स्त्री सरोजानां समूहः पद्मिन्यादेशो वा इनि ङीप् । १पद्मसमूहे रत्नमा० २तद्युक्तदेशरूपायां पद्मवत्यायाम् ३पद्माधारदीर्घिकायाञ्च मेद०। [स्त्रियां ङीष् ।

**सरोत्सव** पुस्त्री० सरे जले उत्सवोऽस्य । सारसखगे शब्दर०

**सरोरुह्(ह)** सरसि रोहति रुह-क्विप् क वा । १पद्मे

यदा वैश्यः पश्चाद्वै शूद्रं खादयेत् । मदकाले तु सम्प्राप्ते पीड्यमाना महाविषा । अवेलायां दशन्ते वै मैथुनार्त्ता भुजङ्गमाः । पुष्पगन्धाः स्मृता विप्राः क्षत्रियाश्चन्दनावहाः । वैश्याश्च घृतगन्धा वै शूद्राः मत्स्यगन्धिनः । वासं तेषां प्रवक्ष्यामि यथावदनुपूर्व्वशः । नदीकूपतडागेषु गिरिप्रस्रवणेषु च । आरामेषु पवित्रेषु शुचिष्वायतनेषु च । वसन्ति ब्राह्मणाः सर्पा ग्रामद्वारे चतुष्पथे । क्षत्रियो वसते नित्यं तोरणेषु पुरेषु च । गोशालाश्वशालासु पलालेषु तटेषु च । गोष्ठेषु पथि हर्म्म्येषु विप्र ! वैश्या वसन्ति च । अविविक्तेषु स्थानेषु निर्झरेषु वनेषु च । शून्यागारे श्मशाने च शूद्रा विप्र ! वसन्ति च । श्वेताश्च कपिलाश्चैव ये सर्पास्त्वनलप्रभाः । मनस्विन सात्त्विका ये ब्राह्मणास्ते बुधैः स्मृताः । रक्तवर्णसुवर्णाभाः प्रवालमणिसन्निभाः । सूर्य्यप्रभास्तथा विप्र ! क्षत्रियास्ते भुजङ्गमाः । नानाविचित्रराजीभिः रजतीवर्णसन्निभाः । बाणपुष्पसुवर्णाभा वैश्यास्ते च भुजङ्गमाः । काकोदरनिभाः केचित् ये च अञ्जनसन्निभाः । काकवर्णा धूम्रवर्णास्ते शूद्राः परिकीर्त्तिताः । यस्य सर्पेण दष्टस्य दशमङ्गुलमन्तरम् । कालदष्टं विजानीयात् कश्यपस्य वचो यथा । यस्य सर्पेण दष्टस्य दंशं द्व्यङ्गुलमन्तरम् । यौवनस्थेन दष्टस्य एतद्भवति लक्षणम् । यस्य सर्पेण दष्टस्य सार्द्धद्व्यङ्गुलमन्तरम् । वृद्धदष्टं विजानीयात् कश्यपस्य वचो यथा" भविष्यपु० । "स्थानान्यादौ प्रवक्ष्यामि नष्टा दष्टो न जीवति । चितावल्मीकशैलादौ कूपे च विवरे तरोः । दंशे रेखात्रयं यस्य प्रच्छन्नं स न जीवति । षष्ठ्यास्तु कर्कटे मेषे मूलाश्लेषामघादिषु । कक्षाश्रोणिगले सन्धौ शङ्खकर्णोदरादिषु । दण्डी शस्त्रधरो भिक्षुर्नग्नादिः कालदूतकः । वक्त्रे बाह्वोश्च ग्रीवायां पृष्ठे च न हि जीवति । पूर्व्वं दिनपतिर्भुङ्क्ते स्वार्द्धयामन्ततः परे । शेषाः षष्ठांशं प्रतिदिनं षट्सङ्ख्यापरिवर्त्तनैः । नागभोगक्रमो ज्ञेयो रात्रौ वारविवर्त्तनैः । शेषोऽर्कः फणिपश्चन्द्रस्तक्षको भौम ईरितः । कर्कोटोऽज्ञो गुरुः पद्मो महापद्मश्च भार्गवः । शङ्खः शनैश्चरो राहुः कुलिकश्चाह्वयो मताः । रात्रौ दिवा सुरगुरोर्भोगे स्यादनरान्तकः । पङ्क्तेः कालो दिवा राहुः कुलिकेन सह स्थितः । शनार्कसन्धिसत्त्वः च येषां कालयतीश्वरेत् । याच दिनक्षक्रियालियुगभूरेकमागतः । दिवा षड्वेदनेत्रादि-पञ्चत्रिवसुसप्तांशकैः । पादाङ्गुष्ठे पादपृष्ठे गुल्फे जानुनि लिङ्गके । नाभौ हृदि स्तनतटे कण्ठे नासापुटेक्षणे । कर्णयोश्च भ्रुवोः शङ्खे मस्तके प्रतिपत्क्रमात् । तिष्ठेच्चन्द्रश्च जीवेन पुंसो दक्षिणभागके । कायस्य वामभागे तु स्त्रिया वायुवहक्रमात् । अमृतत्वगतो मोक्षो निवर्त्तेत च मर्द्दनात्" गारुडे १८ अ० । "आषाढादित्रिमासेषु स्यात् गर्भो मासचतुष्टये । अण्डकानां शते द्वे च चत्वारिंशत् प्रसूयते । सर्पा ग्रसन्ति सूतौ तान् विना स्त्रीं, पुंनपुंसकान् । उन्मीलतेऽक्षि सप्ताहात् कृष्णो मासाद्भवेद्बहिः । द्वादशाहात् सुबोधः स्याद्दन्ताः स्युः सूर्य्यदर्शनात् । द्वात्रिंशद्दिनविंशत्या चतस्रस्तेषु दंष्ट्रिकाः । कराली मकरी कालरात्री च यमदूतिका । एतास्ताः सविषा दंष्ट्रा वामदक्षिणपार्श्वगाः । षण्मासान्मुच्यते कृत्तिं जीवेत् षष्टिसमाद्वयम् । नागाः सूर्य्यादिवारेशाः सप्त उक्ता दिवानिशि । तेषां षट् प्रतिवारेषु कुलिकः सर्व्वसन्धिषु । शङ्खेन वा महाब्जेन सह तस्योदयोऽथ वा । द्वयोर्वै नाडिकयोरन्तरं कुलिकोदयः । दुष्टः स कालः सर्व्वत्र सर्व्वदंशे विनिर्द्दिशेत् । कृत्तिका भरणी स्वातिर्मूलं पूर्व्वत्रयाश्विनी । विशाखार्द्रा मघाश्लेषा चित्रा श्रवणरोहिणी । हस्ता मन्दकुजौ वारौ पञ्चमी चाष्टमी तिथिः । षष्ठी रिक्ता शिवा निन्द्या पञ्चमी च चतुर्द्दशी । सन्ध्याचतुष्टयं दुष्टं दग्धयोगाश्च राशयः । एकद्विबहवो दंशा दष्टविद्धश्च खण्डितम् । अदंशमवगुप्तं स्याद्दंशमेवं चतुर्विधम् । त्रयो द्व्येकक्षता दंशा वेदना रुधिरं क्षपाम् । नक्तं द्व्येकाङ्घ्रिकूर्माभा दंशाश्च यमचोदिताः । दाही पिपीलिकास्पर्शी कण्ठशोथरुजान्वितः । सतोदो ग्रन्थितो दंशः सविषो न्यस्तनिर्विषः । देवालये शून्यगृहे वल्मीकोद्यानकोटरे । रथ्या सन्धौ श्मशाने च शुष्कद्रौ सिन्धुसङ्गमे । द्वीपे चतुष्पथे सौधे गृहेऽब्जे पर्व्वताग्रतः । बिलद्वारे जीर्णकूपे जीर्णवेश्मनि कुड्यके । शिग्रुश्लेष्मातकाक्षेषु जम्बूडुम्बरकेषु च । वटे च जीर्णप्राकारे खास्यहृत्कक्षजत्रुषि । तालौ शङ्खे गले मूर्ध्नि चिबुके नाभिपादयोः । दंशोऽशुभः" अग्निपु० । सुश्रुते तद्दंशलक्षणभेदादिर्द्दर्शितो यथा

"तत्र सर्व्वेषां सर्पाणां सामान्यत एव दष्टलक्षणं वक्ष्यामः । किं कारणं विषं हि निशितमिति शायनिकृतमहदाशुकारि मुहूर्त्तमप्युपेक्षितमातुरमतिपातयति । अ वात-

**सर्वकर्त्तृ** पु० सर्वं करोति कृ-तृच् । १चतुर्मुखे ब्रह्मणि शब्दर० । २परमेश्वरे च ।

**सर्वकर्मीण** त्रि० सर्वकर्म्मभ्योऽलं ख । सर्वकरणसमर्थे पदार्थे "मत्या मे सर्वकर्मीणाः" इति भट्टिः । [नटे शब्दर० ।

**सर्वकेशिन्** पु० अभिनेयानां सर्वेषामिव केशोऽस्त्यस्य इनि ।

**सर्वक्षार** पु० सर्वं क्षारमयं । (सावान)ख्याते पदार्थे राजनि०

**सर्वग** न० सर्वं गच्छति गम-ड । १जले २शिवे ३परमेश्वरे पु० मेदि० । ४वायौ ५आत्मनि च पु० शब्दमा० । ६सर्वगामिनि त्रि० । ७प्रियङ्गुवृक्षे स्त्री शब्दच० टाप् ।

**सर्वगन्ध** न० सर्वे गन्धा अत्र । "चातुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम् । लवङ्गसहितञ्चैव सर्वगन्धं प्रकीर्त्तितम्" भावप्र० उक्ते १गन्धद्रव्यसमूहभेदे । सर्वान् गन्धयति हिनस्ति संहारकाले गन्ध-अच् सर्वगन्धा उत्पादकतया सन्त्यस्य वा । २परमेश्वरे सर्वनाशकत्वात् सर्वगन्धहेतुत्वाद्वाऽस्य तथात्वम् ।

**सर्वग्रन्थि** पु० सर्वत्र ग्रन्थिरिवास्य । १पिप्पलीमूले राजनि० ।

**सर्वङ्कष** पु० सर्वं कषति कष खच् मुम् च । १पामे २सर्वातिरेकिणि त्रि० । [हि०को० ।

**सर्वजनीन** त्रि० सर्वजनेषु विदितः ख । सर्वत्र विख्याते

**सर्वज्ञ** पु० सर्वं जानाति ज्ञा-क । १शिवे २बुद्धे अमर । ३परमेश्वरे च "यः सर्वज्ञः सर्ववित्" श्रुतिः । ४सर्वज्ञानकर्त्तरि त्रि० । ५दुर्गायां स्त्री "सर्वज्ञा सर्ववेत्तृत्वात्" देवीपु० ४५अ० ।

**सर्वतःशुभा** स्त्री सर्वत्र शुभं यस्याः । प्रियङ्गुवृक्षे शब्दच० ।

**सर्वतस्** अव्य० सर्व+तसिल् । समन्तत इत्यर्थे अमरः ।

**सर्वतिक्ता** स्त्री सर्वत्र तिक्ता । काकमाच्यां राजनि० ।

**सर्वतोभद्र** पु०न० सर्वतो भद्राणि स्थानानि यस्य । १चतुर्द्वारयुक्ते १गृहभेदे प्रतिष्ठादौ पूज्यदेवतानां २मण्डलभेदे सर्वतोभद्रमण्डलशब्दे दृश्यम् । ज्योतिषोक्ते ३शुभाशुभज्ञानार्थे चक्रभेदे चक्रशब्दे २८१५पृ० दृश्यम् । अलङ्कारोक्ते बन्धभेदात्मके ४चित्रकाव्ये च । अलङ्कारशब्दे ४०७पृ० दृश्यम् सर्वतो भद्रकत्वात् । ५निम्बवृक्षे पु० अमर । ६गाम्भार्यां ७नटयोषिति च स्त्री मेदि० ।

**सर्वतोभद्रचक्र** न० सर्वतो भद्रं यत्र तादृशं चक्रम् । ज्योतिषोक्ते शुभाशुभज्ञानार्थे चक्रभेदे चक्रशब्दे २८१५ पृ० दृश्यम् । [भेदे अलङ्कारशब्दे ४०७पृ० दृश्यम् ।

**सर्वतोभद्रबन्ध** पु० सर्वतो भद्राकारेण बन्धः । चित्रकाव्य

**सर्वतोभद्रमण्डल** न० सर्वतो भद्रनामकं मण्डलम् । शारदातिलकाद्युक्ते प्रतिष्ठादौ—पूज्यदेवतामण्डलभेदे तल्लक्षणप्रकारस्तु हेमाद्रौ स्कान्दे "प्रागुदीच्यां गता रेखाः कुर्य्यादेकोनविंशतिम् । खण्डेन्दुवह्निपात् कोष्ठैरङ्कुला पञ्चभिः पदैः । एकादशपदा वल्ली भद्रन्तु नवभिः पदैः । चतुर्विंशतिपदा वापी परिधिर्विंशता पदैः । मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम् । श्वेतेन्दुः खण्डवा, कण्ठं वल्लीं नीलेन पूरयेत् । भद्रा रक्ता सिता वापी परिधिः पीतवर्णकः । बाह्यान्तरदलैः श्वेता कर्णिका पीतवर्णिका । परिध्यावेष्टितं पद्मं बाह्ये सत्त्वरजस्तमः । तन्मध्ये स्थापयेद्देवान् ब्रह्माद्यान् सुरासुरानिति" । शारदायामन्यथोक्तं यथा "चतुरस्रचतुष्कोष्ठे कर्णसूत्रसमन्विते । चतुर्ष्वपि च कोष्ठेषु कोणसूत्रचतुष्टयम् । तत कोष्ठेषु मत्स्याः सुसूत्रेषु सूत्राणि पातयेत् । यावत् शतद्वयं मन्त्री षट्पञ्चाशत् पदान्यपि । तावदनेन विधिना तत्र सूत्राणि पातयेत् । षट्त्रिंशता पदैर्मध्ये लिखेत् पद्मं सुलक्षणम् । षट्पङ्क्तया भवेत् पीठं पङ्क्तियुग्मं तु वीथिका । द्वारशोभोपशोभाः स्युः शिष्टाभ्यां परिकल्पयेत् । शास्त्रोक्तविधिना मन्त्री ततः पद्मं समालिखेत् । पद्मक्षेत्रस्य सन्त्यज्य द्वादशांशं बहिः सुधीः । तन्मध्यं विभजेद् वृत्तैस्त्रिभिः समविभागतः । आद्यं स्यात् कर्णिकास्थानं केशराणां द्वितीयकम् । तृतीयं पद्मपत्राणां सम्प्रोक्तेन दलात्मकम् । बाह्यवृत्तान्तरालस्य मानेन विधिना सुधीः । निधाय केशराग्रेषु परितोऽष्टनिशाकरान् । लिखित्वा सन्धिसंस्थानि तत्र सूत्राणि पातयेत् । दलाग्राणां यन्मानं तन्मानाद् वृत्तमालिखेत् । तदन्तरालतन्मध्यसूत्रयोरुभयतः सुधीः । आलिखेद् बाह्यकोणेन दलाग्राणि समन्ततः । दलमूलेषु युग्मं केशराणि प्रकल्पयेत् । एतत् साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः । पदानि त्रीणि पादार्थं पीठकोणेषु मार्जयेत् । अवशिष्टैः पदैर्विद्वान् पीठगात्राणि कल्पयेत् । पदानि वीथिसंस्थानि मार्जयेत् पङ्क्तिभेदतः । दिक्षु द्वाराणि रचयेत् द्विपक्षं कोष्ठकैस्ततः । पदैस्त्रिभिरथैकेन शोभाः स्युर्द्वारपार्श्वयोः । उपशोभाः स्युरेकेन त्रिभिः कोष्ठैरनन्तरम् । अवशिष्टैः पदैः षड्भिः कोणानां स्याच्चतुष्टयम् । रक्तेन पञ्चभिर्द्वैर्मण्डलं तन्मनोहरम् । पीतं हरिद्राचूर्णं स्यात् सितं तण्डुलसम्भवम् । कुसुम्भचूर्णमरुणं कृष्णं दग्धपुलाकजम् । बिल्वादिपत्रजं श्याममित्युक्तं वर्णपञ्चकम् । पङ्कजोक्तविधिविस्ताराः सीमारेखाः सिताः

शुभाः। कर्णिका पीतवर्णेन केसराण्यरुणेन च। शुक्लवर्णानि पत्राणि तत्सन्धीन् श्यामलेन च। रजसा रञ्जयेन्मन्त्री यद्वा पीतेन कर्णिका। केसराः पीतरक्ताः स्यू रक्तानि दलान्यपि। सन्धयः कृष्णवर्णाः स्युः सितेनाप्यसितेन वा। रञ्जयेत् पीठमागांश्च पादाः स्यू रक्तप्रभाः। गात्राणि तस्य शुक्लानि वीथीषु चतसृष्वपि। आलिखेत् कल्पलतिकादलपुष्पफलान्विताः। वर्णैर्नाना विधैश्चित्रा सर्वदृष्टिमनोहराः। द्वाराणि श्वेतवर्णानि शोभा रक्ताः समीरिताः। उपशोभाः पीतवर्णाः कोणान्यसितभानि च। तिस्रो रेखा बहिः कार्य्याः सित रक्तासिताः क्रमात्। मण्डलं सर्वतोभद्रमेतत् साधारणं स्मृतम्"। अपरञ्च "चतुरस्रं भुवं भित्त्वा दिग्भ्यो द्वादशधा सुधीः। पातयेत् तत्र सूत्राणि कोष्ठानां दृश्यते शतम्। चतुश्चत्वारिंशदाढ्यं पश्चात् षट्त्रिंशता स्वजम्। कोष्ठैः प्रकल्पयेत् पीठं पङ्क्त्या नैवाम्न वीथिकाः। द्वारशोभे यथा पूर्वमुपशोभा न दृश्यते। अवशिष्टैः पदैः कुर्य्यात् षड्भिः कोष्ठानि तन्त्रवित्। विदध्यात् पूर्ववत् शेषमेवं वा मण्डलं स्मृतम्"। "चतुरस्रे चतुःषष्टिं पदान्यारचयेत् सुधीः। पदैश्चतुर्भिः पद्मं स्यात मध्ये तत् पूरिता पुनः। वीथीशतस्य कुर्वीत मण्डलान्तरशालिकाः। दिग्गतेषु चतुष्कोषु पङ्कजानि समालिखेत्। विदिग्गतचतुष्काणि भित्त्वा षोडशधा सुधीः। मार्जयेत् स्वस्तिकाकारं श्वेतपीतारुणासितैः"। मार्जनमाह राघवभट्टधृतम् "विदिग्गतचतुष्कोणान् भित्त्वा षोडशधा सुधीः। वज्राद्रिकोष्ठसिद्ध्यै मध्योर्ध्वमपि मार्जयेत्। रजोभिः पूरयेत्तानि स्वस्तिकानि शिवादिषु। प्राक् प्रोक्तेनैव मार्गेण शेषमन्यत् समापयेत्। नवनाभमिदं प्रोक्तं मण्डलं सर्वसिद्धिदम्। पञ्चाब्जमण्डलं प्रोक्तमेतत् स्वस्तिकमण्डितम्। दीक्षाया देवपूजाया मण्डलानां चतुष्टयम्। सर्वतन्त्रानुसारेण प्रोक्तं सर्वसमृद्धिदम्"।

**सर्वतोमुख** न० सर्वतोमुखमस्य। १जले अमर २आकाशे मेदि० ३शिवे ४ब्रह्मणि ५परमेश्वरे ६आत्मनि च पु० मेदि०। ७ब्रह्मणे शब्दच० ८स्वर्गे ९अग्नौ शब्दमा०। "सर्वतःपाणिपादान्तं सर्वतोऽक्षिशिरोमुखम्"। विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु" ति०त० उक्ते वह्नेस्तथात्वम्। [त्रित्यर्थे।

**सर्वत्र** अव्य० सर्व-त्रल्। सर्वस्मिन् काले देशे सदार्थे दिशि

**सर्वत्रग** पु० सर्वत्र गच्छति गम-ड। १वायौ शब्द५० २सर्वत्रगामिनि त्रि०। [र्वत्र गन्तरि त्रि० स्त्रियां ङीप्।

**सर्वत्रगामिन्** पु० सर्वत्र गच्छति गम-णिनि। १वायौ २स

**सर्वथा** अव्य० सर्वप्रकारम् थाल्। १सर्वप्रकारे २अत्यन्ते ३प्रतिज्ञायां ४हेतौ च शब्दर०।

**सर्वदम** पु० सर्वान् दमयति दम-णिच्-अण्। सर्वदमने शाकुन्तले भरतनृपे हेमच०।

**सर्वदमन** पु० सर्वान् दमयति दम-णिच्-ल्यु। १दुष्मन्तपुत्रे भरतनृपे त्रिका०। २सर्वदमनकर्त्तरि त्रि०।

**सर्वदर्शिन्** पु० सर्वं समभावेन पश्यति दृश-णिनि। १बुद्धे २परमेश्वरे च। ३सकलद्रष्टरि त्रि० स्त्रियां ङीप्।

**सर्वदा** अव्य०सर्वस्मिन् काले दाच्। सर्वस्मिन् काले इत्यर्थे।

**सर्वदुःखक्षय** पु० सर्वेषामाध्यात्मिकाधिदैविकाधिभौतिकानां दुःखानां क्षयः। आत्यन्तिकदुःखत्रयनिवृत्तौ मोक्षे हेमच० "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" सां० सू० "स्वसमानाधिकरणदुःखासमानकालीनत्वं दुःखध्वंसरूपनिवृत्तेरात्यन्तिकत्वम्।

**सर्वदेवमुख** पु० सर्वेषां देवानां मुखं यस्य। अग्नौ रत्नमा०।

**सर्वद्र्यञ्च्** त्रि०सर्वमञ्चति पूजयति अञ्च-क्विप् अद्र्यागमः न नलोपः। सर्वस्य पूजके। भत्वे सर्वद्रीचः इत्यादि। गत्यर्थस्य नलोपे सर्वद्र्यच् इत्येव सर्वगामिनि। भत्वे सर्वद्रीच इति भेदः।

**सर्वधुरावह** त्रि० सर्वेषां धूः अचसमा० सर्वधुरां ताः वहति वह-अच्। सर्वभारवाहके वृषादौ अमरः।

**सर्वधुरीण** त्रि० सर्वां धुरं वहति ख। सकलभारवाहके वृषादौ अमर।

**सर्वनाम** पु० सर्वेषां नाम वाचकम् सत्त्वेऽपि संज्ञा० न णत्वम्। व्याकरणोक्ते कार्य्यविशेषार्थं कृतसञ्ज्ञायुते सर्वादिशब्दभेदे "सर्वादीनि सर्वनामानि" पा०सर्वनामशब्दार्थस्तु वक्तृबुद्धिविषयतावच्छेदकधर्मोपलक्षितधर्मविशिष्ट।

**सर्वपूर्णत्व** न० सर्वैः पूर्णत्वम्। कश्मीरे सामग्राम त्रिका०।

**सर्वप्रहरणायुध** पु० सर्वेषां प्रहरणानि सर्वाणि वा प्रहरणानि आयुधान्यस्य। विष्णौ "सर्वप्रहरणायुधः" विष्णु स० व्युत्पत्तिद्वययोगात् नामद्वयम् तेन नामसङ्ख्यापूर्त्तिः" भा०। [भक्षके त्रि० ३वह्नौ पु०।

**सर्वभक्षा** स्त्री भक्ष-अण् टाप्। १छागायां हेमच० २सर्व-

**सर्वमङ्गला** स्त्री सर्वाणि मङ्गलान्यस्याः ५ब० सर्वाणि मङ्गलानि देयत्वेनास्त्यस्याः अच् वा। दुर्गायाम् अमर। "सर्वाणि हृदयस्थानि मङ्गलानि शुभानि च। ददाति

**सव्य** त्रि० सू-प्रेरणे यत् । १वामे २दक्षिणे च अमरः । ३प्रतिकूले हेमच० ४विष्णौ शब्दमा० ।

**सव्यभिचार** पु० सह व्यभिचारेण सहस्य सः । अनैकान्तिके दुष्टहेतुभेदे तल्लक्षण तु "अनैकान्तिकः सव्यभिचारः" गौ०सू० "अभिचार एकत्राव्यवस्था सह व्यभिचारेण वर्त्तते इति सव्यभिचारः निदर्शन नित्यः शब्दोऽस्पर्शत्वात्" वा०भा० । तच्च साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वम् चिन्ता० । सव्यभिचारपदादौ धित्वादौ दृश्यम् ।

**सव्यसाचिन्** पु० सव्येन वामेनापि सचति सन्दधाति बाणं सच-णिनि । अर्जुने हेमच० "उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे । तेन देवमनुष्येषु सव्यसाचीति मां विदुः" भा०वि० ४४अ० ।

**सव्येष्ठ** पु० सव्ये तिष्ठति स्था-क अलुकस० षत्वञ्चादि० षत्वम् । सारथौ हला० । [सारथौ अमरः ।

**सव्येष्ठृ** पु० सव्ये तिष्ठति स्था-तृन् किच्च अलुकस० षत्वम् ।

**सशस्या** स्त्री सह शस्येन । १नागदन्त्या रत्नमा० २शस्ययुक्ते त्रि० । [त्रि० "न सशस्त्रेषु गर्त्तेषि"ति मनुः ।

**ससत्वा** स्त्री सह सत्वेन । १गर्भवत्यां स्त्रियां २प्राणियुक्ते

**स(श)सन** न०स(श)स हिंसने ल्युट् । यज्ञार्थं पशुहनने अमरः

**सस्य** न०सस-यत् । १वृक्षादीनां फले अमरः २क्षेत्रगते धान्ये च हेमच० "सस्यं क्षेत्रं गतं प्रोक्तम्" स्मृतिः । "सस्यस्य गृहमागतम्" चाणक्यः तालव्यादिरयमित्येके । ३शस्त्रे ४गुणे विश्व० ।

**सस्यक** पु० सस्यमिव कायति कै-क । "सस्यको नारिकेलाम्लसस्याभो मणिखड्गयोः" मेदि० उक्ते १मणिभेदे २खड्गे च ।

**सस्यमारिन्** पु० सस्यं मारयति मृ-णिच् णिनि । १मूषके राजनि० २सस्यघातके त्रि० । [अमर ।

**सस्यसंवर** पु० सस्यं संवृणोति सम्+वृ-अच् । शालवृक्षे

**सस्यसंवरण** पु० सस्यं संवृणोति सम्+वृ-ल्युट् । अश्वकर्णवृक्षे राजनि० । [२संवरयुक्ते त्रि० ।

**सस्वेदा** स्त्री सह स्वेदेन सहस्य सः । १दूषितकन्यायां शब्दर०

**सह** अव्य० सह-अच् । १साहित्ये अमरः २साकल्ये ३सादृश्ये ४यौगपद्ये ५विद्यमानत्वे ६समृद्धौ ७सम्बन्धे मेदि० । ८सामर्थ्ये शब्दमा० । सहशब्दार्थस्तु समभिव्याहृतक्रियाकारकः स्वक्रियाकारकेनक्रिया वा । तत्र गौणक्रियान्वयिनि तृतीया । पुत्रेण सहागतः पिता ।

**सह** पु० सहते सह-अच् । १अग्रहायणमासे २मारादिषड्विंशौ त्रि० हेमच० ३शक्तमात्रे ४बले पु०न० मेदि० ।

**सहकार** पु० सह युगपत् किरति सौरभम् दूरात् कृ-अच् । अतिदूरगामिसौरभान्विते १आम्रे अमरः । भावे घञ् । २सहकर्मकरणे पु० ।

**सहकारिन्** त्रि० सह सम्भूय करोति कार्य्यं कृ-णिनि । हेतुभेदे स्वभिन्ने स्वकार्य्यकारके हेतौ । [हगतौ च

**सहगमन** न०सह+गम-ल्युट् । १पत्या सह पत्न्या मरणे २सह-

**सहचर** पु० सह चरति चर-अच् । १पीतझिण्ट्यां २नीलझिण्ट्यां च रत्नमा० । ३वयस्ये ४प्रतिबन्धके ५झिण्ट्यां हेमच० । ६सहाये ७अनुचरे त्रि० मेदि० "सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्र" कुमार० । स्त्रियां ङीप् ।

**सहचरी** स्त्री सह चरति चर-ट ङीप् । १पीतझिण्ट्यां २सख्यां जटा० । सह चरति धर्मम् चर-ट ङीप् । धर्मपत्न्यां हेमच० । [करणदक्षिते ।

**सहचार** पु० सह+चर-घञ् । सामानाधिकरण्ये तदधि०

**सहज** पु० सह जायते जन-ड । १सहोदरे अमरः २निसर्गजे स्वभावसिद्धे च "सहजमाकृताऽपि" माघः । ३सहोत्पिते त्रि० मेदि० ज्योतिषोक्ते जन्मलग्नात् ४तृतीयस्थाने । तत्र स्यात् शुभादिचिन्तनाल्लक्षणत्वम् ।

**सहजमित्र** न० सहजं स्वभावसिद्धम् मित्रम् । स्वभावतो मित्रे भागिनेयादौ मिता० ।

कतिचित् सहजमित्राणि शुक्रनी०परि० उक्तानि यथा "केचित् स्वभावतोऽमित्रा मित्राणि सन्ति सर्वदा । माता मातृकुलं चैव पिता तत्पितरौ तथा । पितृपितृव्यात्मकन्या पत्नी तत्कुलमेव हि । पितृमातात्मभगिनी कन्यका सन्ततिस्तथा । प्रजापालो गुरुश्चैव मित्राणि सहजानि तु" । २विद्यादौ च "विद्या शौर्य्यञ्च दाक्ष्यं च बलं धैर्य्यञ्च पञ्चमम् । मित्राणि सहजान्याहुर्वर्त्तयन्ति हि तैर्बुधाः" शुक्रनीतिपरिशिष्टम् ।

**सहजारि** पु० सहजः स्वभावसिद्धः अरिः । सापत्नभ्रातृपितृव्यपुत्रादौ मिता० ।

शुक्रनीतिपरिशिष्टे अन्येऽप्युक्ता यथा

"स्वभावतो भवन्त्येतेऽरयो दुष्टा एव च । ऋणकारी पिता शत्रुर्माता स्त्री व्यभिचारिणी । आत्मपितृभ्रातरश्च तत्स्त्रीपुत्राश्च शत्रवः । स्नुषा श्वश्रूः सपत्नी च ननान्दा यातरस्तथा । मूर्खः पुत्रः कुवैद्यश्चारपकश्च पतिः प्रभुः । पक्षद्वयस्य प्रत्ता शत्रुर्दाता धनिकश्च

वाक्येषु निरपेक्षफलश्रुतेः कामनाभेदे च कर्त्तैक्यं ततश्च चशब्देन प्रकृतवाचिना निरपेक्षाणामेव पुत्रादिफलानां दर्शपौर्णमाससम्बन्धोऽवगते प्रयोगभेदादेव भवतु तत्र तत्तत्फलसिद्धिः तथाच तदधिकरणसिद्धान्तसूत्रं “योगसिद्धिर्वा अर्थस्योत्पत्त्यसंयोगित्वात्” जैमि०। अस्यार्थः वाशब्दः सिद्धान्तद्योतनार्थः सर्वेभ्यो दर्शपौर्णमासाविल्यर्थस्य तत्तत्फलस्य योगेन प्रयोगभेदेन सिद्धिः उत्पत्त्यसंयोगित्वात् सर्वशब्दानुकर्षणीयानां यः पुत्रकामो यः पशुकाम इत्यादाद्युत्पत्तिवाक्ये फलानां युगपदसम्बन्धात्। न चार्थस्य नानाविधस्य उत्पत्त्यसंयोगित्वात् महेन्द्रादितत्तल्लोकवासादीनां एकदोत्पत्त्यसम्भवादिति व्याख्यानं युक्तमिति वाच्यं तडागोत्सर्गादौ एकस्मात् कर्मणः क्रमिकनानाफलोक्तेः”। “तथेहापि सर्वनामपदाभावादर्थवादिकफलानि समुच्चितान्येव कामनाविषयो लाघवात् अर्थवादिकसमुच्चितनानाफलविषयकविधिरप्येक एव कल्प्यते लाघवात् न हि निमित्तसाधारण्ये बाधकं विना नैमित्तिकानां पर्य्यायता सम्भवति वह्निसामीप्ये दाहप्रकाशयोः पर्य्यायताया अदर्शनात्। तस्मात् सकृदनुष्ठितेन कर्मणा यथैकं फलं निष्पाद्यते तथा बाधकं विना फलान्तरमपि विनिगमकाभावात्। ज्योतिष्टोमादिषु षष्टिवर्षावच्छिन्नफलश्रुतेः पृथगनुष्ठानादेव पृथक् फलसिद्धिः अन्यथा षष्टिसंख्याद्यभिधानं व्यर्थं स्यात्। यत्र तु कर्मफले कालविशेषो नोक्तस्तत्रापि तत्कर्मसम्पादकानुरूपेण कालविशेषो बोध्यः “फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यादिति” न्यायात्। तेषां कर्मणां लोकवत् कृष्यादिवत्। तथाच भवदेवभट्टाः “एकस्मै वा कामायान्ये यज्ञक्रतव आह्रियन्ते” इति संकीर्त्य “सर्वेभ्यो दर्शपौर्णमासाविति” प्रयोगभेदविधानात् भवतु तत्र पृथगनुष्ठानसाध्यत्वं ब्रह्मवधप्रायश्चित्ते तथाभूतपृथगनुष्ठानसाध्यत्वप्रतिपादकवचनाभावात् अनेकफलानाश्च तन्त्रेण दशहरान्यायेन एककामनाविषयतासम्भवात् तन्त्रत्वम्” इत्याहुः। हरिनाथोपाध्यायास्तु “इमे स्वर्गफलान्युद्दिश्यैतानि चार्थवादिकफलानि समुच्चितान्येव कामनाविषयः, पुरुषविशेषणत्वस्य कल्प्यत्वात् तथाच मिलितानामेककामनाविषयत्वकल्पना अग्नीषोमयोरिव देवतात्वे लाघवन्यायस्य विशिष्टत्वात्” इत्याहुः। अथ वा “य एतां रात्रीरधीयीत तस्य पितरो घृतकुल्याः मधुकुल्याः वा क्षरन्ति” इत्यत्रापि वैकल्पिकान्वयोऽपगमे जातेष्टिनयभङ्गप्रसङ्गात् लाघवादिकल्पेऽष्टदोषाच्च एकस्य कार्यस्य नियोज्याकाङ्क्षाया सकलार्थवादोपस्थितफलकामो यथैक एव नियोज्यः स्त्रीकृतस्तथात्रापीति। अथानुत्पन्नब्रह्महत्यादिपातकायास्तत्पूतस्वरूपफलबाधात् तत्तत्कामनाविरहेणानधिकारः स्यादिति चेत् उक्तयुक्त्या समुच्चितफलसिद्धेरनन्यथासिद्धार्थवादबलेन सन्दिग्धपापकामनया एवाधिकारो मङ्गलवत्। सति जन्मान्तरीये तादृशपातके ससर्गादिकृते वा तद्ध्वंसोऽपि जायते असति तु न तथा प्रतियोगिरूपसहकारिविरहात् निर्विघ्नस्य कृतमङ्गलवत्” शु०त० रघु०। “समुच्चितफलककर्मणोऽपि प्रत्येकफलकामनया करणे तत्तत्कामनासहकारेण प्रत्येकफलजनकत्वम्” विधिस्वरूपे गदा०। [त्रि०।

**सहरसा** स्त्री सह रसेन। १मुद्गपर्ण्यां शब्दर० २रसान्विते

**सहर्ष** पु० सह हर्षेण समानो वा हर्षो यत्र। १स्पर्द्धने २हर्षे च त्रिका०। ३हर्षयुक्ते त्रि०।

**सहस्** न० सह—असि। १बले २ज्योतिषि च शब्दर० ३मार्गशीर्षे मासे पु० अमर। “सहसा सहसा कृतवेपथुरिति” माघः।

**सहसा** अव्य० सह+सो—डा। १हठादित्यर्थे अमर। २अकस्मादित्यर्थे शब्दर०। ३हास्ययुते त्रि० “न सहसा सहसा परिरभ्य तम्” माघः।

**सहस्य** पु० सहसे बलाय हित यत्। पौषमासे अमरः।

**सहस्र** न० समानं हसति हस—र। १दशशतसंख्यायां २बहुसंख्यायां ३तत्संख्यान्विते च हेमच०।

सहस्रसंख्यकाश्च केचित् पदार्थाः कविकल्प० यथा “गङ्गावक्त्रं शेषमूर्द्धा पद्मदलम् रविकरः कार्त्तवीर्य्यबाहुः वेदशाखा शक्रनयनम्”। “तत्र बहुसंख्यात्वे सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्” श्रुतिः। बहुशीर्षादिपरत्वमत्र भाष्यादावुक्तम्। संख्यासंख्येययोः परत्वेऽस्य सर्वदैकवचनत्वम् यथा घटानां सहस्रं सहस्रं घटा इत्यादि आवृत्तौ तु द्वित्वादिकं यथा द्वे सहस्रे त्रीणि सहस्राणीति “चत्वार्य्याहुः सहस्राणि” मनु।

**सहस्रकर** पु० सहस्रं कराः किरणा अस्य। १सूर्य्ये सहस्रकिरणादयोऽप्यत्र हला०। २अर्कवृक्षे च।

**सहस्रकाण्डा** स्त्री सहस्रं बहवः काण्डा यस्याः। श्वेतदूर्वायां राजनि०।

**सहस्रदंष्ट्र** पु स्त्री० सहस्रं बहुसंख्या दंष्ट्रा अस्य। पाठीनम

कर्द्दमोऽकीर्त्तिः कलङ्कः कृष्णवर्णकः। अन्धकारः केशपाशोऽप्यतिशोभमानकम्। अकीर्त्तेः कृष्णवस्तूनि मालिन्यं तमसा ततिः। कस्तूरिकाया भ्रमरो नीलकान्तमणिर्घनः। दुर्गन्धिद्रव्यदग्धोत्थधूमः कज्जलकं तथा। कृष्णपुष्पाभ्रमरयं कामाकीर्त्तिः स्थलान्तरे। कामिनीरयमस्तद्वत् कज्जलस्यापि तानि च। कर्पूरस्य तथा चन्द्रशशाङ्ककिरणास्तथा। यूथिकाकुन्दकुसुमं विरहिणश्च फलं तथा। छिन्नवीरपिण्डं ग्रथित उपमानतया मतं। मनोरथस्य विज्ञेयं फलपुष्पादियुक्तरुः। कविबुद्धिकल्पना स्यादानन्दस्य सुधार्णव। ब्रह्मसाक्षात्कृतिस्तद्वत्, कामिनीदर्शनस्य तु। अतिप्रियतमप्राप्तिश्च ब्रह्मसाक्षात्कृतिस्तथा। सुधारसो नित्यसुखसाक्षात्कारस्तथा मतः। पूर्णचन्द्रादिकस्यापि साक्षात्कारः प्रकीर्त्तितः। अमृतस्य तु सत्काव्यं कामिन्यधरपानकम्। ब्रह्मसाक्षात्कृतिस्तद्वत्, विषस्याथ प्रकीर्त्त्यते। साध्वीस्त्रीविरहः पापं मलिनं दुःखदं च यत्। पौषाग्निं शीतकालीनशीतोदं परिकीर्त्तितम्। व्यभिचारिणी च या नारी सापि तद्वत् प्रकीर्त्तिता। विरहस्याग्निराशिश्च यातना च पयोनिधिः। दुःखदानि च वस्तूनि तप्तानि कथितानि च। पुण्यानां कामिनी चन्द्रः कर्पूरश्च यशस्तथा। चन्द्रस्य प्रमदावक्त्रमतिशुभ्रश्च यद्भवेत्। यशः पुण्यादिकं वस्तु सोपमानतयेष्यते। सूर्यस्य शिवनेत्राग्निः काञ्चनस्याकहस्तथा। आशुवाग्निर्जयापुष्पं वसन्तोत्थपलाशकम्। पद्मस्य कामिनीवक्त्रं पाटलं रक्तवस्तु च। इन्दीवरस्य कस्तूरी नीलकान्तमणिस्तथा। कामिनीनयनं तद्वत् कैरवस्य तु चन्द्रमाः। कुन्दादिपुष्पमन्यच्च शुभ्रवर्णश्च यद्भवेत्। रामश्चेन्द्रः कुबेरश्च चन्द्रमा भास्करस्तथा। नलप्रभृतयो ये तु मान्धाताश्चक्रवर्त्तिनः। मेघस्य कामी कृष्णश्च नीलपाथोजसन्ततिः। इन्दीवरं वनं दाता कृष्णार्थी भ्रमरावली। शरन्मेघस्य चन्द्रादिशुक्लवर्णपदार्थकाः। कन्दर्पस्य नलश्चन्द्र आश्विनौ च पुरूरवाः। दीपस्यापि च-मनस्य प्रतापः शास्त्रकं तथा। वायोः शीघ्रगवस्तूनि कीर्त्तितानि पुरातनैः। अश्वश्च वायुर्हरिणो मनश्च, पक्षिणो गिरिः। मेघश्यामावनञ्च तमसाञ्च समुच्चय। शौक्ल्योद्देशे च वा चन्द्रः कैलासैरावतौ मतौ। शिवस्य शौधवत् सर्वं कृष्णस्य यमुना घनः। तमालवृक्षो भ्रमरश्चापीन्दीवरकं नभः। नीलकान्तमणिर्नीलपद्मं रामस्य पूर्ववत्। नवदूर्वादलं कच्चपक्षयं चाषिकं पुनः। लक्ष्म्यास्तु पार्वती चन्द्रकान्तिः सीता रतिस्तथा। द्रौपदी पद्मकान्तिश्च पुराणे परिकीर्त्तिता। सरस्वत्याश्चन्द्रकला कैलासाचलकान्तय। शुक्लवर्णपदार्थाश्च, विपक्षेस्तु समुद्रक। ब्रह्माण्डखण्डितमनस्तथा नारायणोदरम्। समुद्रस्य च मेघादि वस्तु कृष्णं च यद्भवेत्। विदूरस्थ्या भारतस्य तथापस्मारिरोगवान्। पुरस्य स्वर्गं कैलासो यत् सुन्दरं स्यात् मनोरमम्। रथस्य पृथ्वी वैकुण्ठपुरी पोतश्च पुष्पकम्। कामिन्यास्तु तडित्तारा स्वर्णवर्णा च केतकी। उपमानतया स्वर्णलतापि परिकीर्त्तिता। नायकस्य तु कन्दर्प ऐन्द्रश्चन्द्रोऽश्विनौ तथा। सभायास्तु सुधर्मा स्यात् गङ्गा सूर्यस्य मण्डलम्। गण्डकी पर्वतो मेरुरुपमानतया मतः। पण्डितस्य सुराचार्य्य ऋषिः शुक्रः सरस्वती। श्रीरामस्तु विरहिणः शिवोऽजो दुःखितो जनः। उन्मत्तचन्दनतरुः शिवशेखरचन्द्रमाः। वाडवाग्नियुताब्धिश्च वल्मीकोऽद्रीन्द्रशेखरः। दाता कर्णः कल्पवृक्षः कामधेनुरुशीनरः। रोहणोऽब्धिर्दधीचो जैमिनिश्च युधिष्ठिरः। वसन्तर्त्तौर्मत मद्युन्मादो मलयानिलः। यमोऽग्निर्विषवह्नी च स स्यात् विरहिणं प्रति। ग्रीष्मर्त्तोरग्निर्विरहोऽहिनिश्वासस्तथा पुनः। विरहिणश्च निश्वास उपमानतया मतः। वर्षर्त्तौ रजनी व्योम नारायणसमुद्रकाः। शरदः काशपुष्पादिरूपशीतांशुचामराः। ऐरावतगजा ज्ञेया उपमानतया बुधैः। शीतर्त्तौरुपमानं स्यात् राज्यशून्यस्तु भूपतिः। तथापस्माररोगाढ्यो विद्भिः परिकीर्त्तितः। शिशिरर्त्तौस्तु गुणिनः समुद्रोऽद्रिर्दराश्विनौ। राजागमनकालश्च मदनोऽपि मतो विदाम्। सचिवस्योपमानं तु सुराचार्य्यं प्रकीर्त्तितः"।

साधक त्रि॰ साध–ण्वुल्। सिध–णिच्–ण्वुल् साधादेशो वा। १साधनकर्त्तरि २कारके तन्त्रोक्ते ३मन्त्रादिसिद्धिकारके शिष्ये च "साधकः सिद्धिभाक् स्यात्" इति तन्त्रम्। स्त्रियां टाप् अत इत्वम्। साधिका सा च ४दुर्गायां "साधनात् सिद्धिरित्युक्ता साधिका वाऽथ ईश्वरी" देवीपु॰४५ अ॰। ५जन्मतारावधिकेषु षष्ठपञ्चदशचतुर्विंशनक्षत्रेषु पु॰ "जन्मसम्पद्विपत् क्षेम प्रत्यरिः साधको वधः। मित्रं परममित्रञ्च जन्मभात् गणयेत् त्रिधा" ज्यो॰त॰। ६अनुमापके त्रि॰।

**साधकतम** न० अतिशयेन साधकं तमप् "साधकतमं करणम्" पा० परिभाषिते करणे कारकभेदे ।

**साधन** न० सिध–णिच्–साधादेशे यथायथं करणे भावे ल्युट् कर्त्तरि ल्यु वा । १करणरूपे कारकभेदे २मारणे ३मृतसंस्कारे अग्निदाने ४गतौ ५द्रव्ये ६धने ७अर्थदापने ८निष्पादने ९उपकरणे १०इन्द्रियस्वादियुद्धसामग्र्याम् ११अनुगमने अमर० । १२सैन्ये १३उपाये १४सिद्धौषधे १५मेढ्रे मेदि० १६मेले १७औषधे १८दावाग्नौ धरणिः । १९कारके २०प्रमाणे हेमच० २१व्याप्ये त्रिका० २२मोक्षने २३जये शब्दच० २४ब्रह्मविद्याहेतौ नित्यानित्यवस्तुविवेकवैराग्यशमादिषट्कमुमुक्षाचतुष्टये च । युच् । साधनाऽपि उपासनायां निष्पादनायाञ्च स्त्री ।

**साधनाप्रसिद्धि** स्त्री हेत्वदोषभेदे सा च साधने साधनतावच्छेदकधर्माभावरूपा यथा "पर्वतो वह्निमान् काञ्चनधूमादित्यादौ धूमनिष्ठ काञ्चनत्वाभाव साधनाप्रसिद्धि ।

**साधर्म्य** न० सधर्मस्य समानधर्मस्य भावः ष्यञ् । १स्वकीयसाधारणधर्मरूपे लक्षणे २अनुगतधर्मे "यदुक्तं यस्य साधर्म्यम्" भाषा० । समानो धर्मो यस्य तस्य भावः ष्यञ् । ३समानधर्मे यथा पद्ममिव सुन्दरं मुखमित्यादौ सौन्दर्यं उभयोः समानधर्मः ।

**साधर्म्यसम** पु० साधर्म्येण सम । स्थापनाहेतुदूषके जात्युत्तरभेदे "साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ" गौ० "वादिनाऽन्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिना साधर्म्यमात्रप्रवृत्तहेतुना तदभावस्थापनम् यथा शब्दोऽनित्यः कृतकत्वात् घटवत् व्यतिरेकेण वा व्योमवदित्युपसंहृते नैतदेव यद्यनित्यघटसाधर्म्यात् नित्याकाशवैधर्म्याद्वाऽनित्यः स्यात् नित्याकाशसाधर्म्यादमूर्त्तत्वात् नित्यः स्यात् विशेषो वा वक्तव्य" इति भाष्ये तु निदर्शनान्तरमुक्त्वा व्याख्यातं यथा "क्रियावानात्मा द्रव्यस्य क्रियाहेतुगुणयोगात् द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान् तथा चात्मा तस्मात् क्रियावानिति एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते । निष्क्रिय आत्मा विभुनो द्रव्यस्य निष्क्रियत्वात् विभु चाकाशं निष्क्रियं च तथा चात्मा तस्मान्निष्क्रिय इति न चास्ति विशेषहेतुः क्रियावत्साधर्म्यात् क्रियावता भवितव्यं न पुनरक्रियसाधर्म्यात् निष्क्रियेणेति विशेषहेत्वभावात् साधर्म्यसमः प्रतिषेधो भवति" ।

**साधारण** त्रि० सह धारणया स्वार्थेऽण् ।१सदृशे अमरः । २अनेकसम्बन्धिन्येकस्मिन् ३धने "साधारणं समाश्रित्य यत्किञ्चिद्वाहनादिकम्" स्मृतिः । स्त्रियां गौरा० ङीष् । सा च ४कुञ्चिकायां ५वेश्यादिनायिकायाञ्च "स सपक्षे विपक्षे च भवेत् साधारणस्तु स" भाषा० उक्ते ६हेत्वाभासभेदे पु० । यथा वह्निमान् द्रव्यत्वादित्यादौ द्रव्यत्वहेतुः सपक्षे पर्वते विपक्षे ह्रदादौ च वर्त्तते इति साधारणः । स चानैकान्तिकमध्ये "आद्यः साधारणस्तु स्यादन्योऽसाधारणो मतः । तथैवानुपसंहारी त्रिधाऽनैकान्तिको मतः" भाषा० ।

**साधारणधर्म्म** पु० कर्म० । "अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । दमः क्षमार्जवं दानं धर्मं साधारणं विदुः" इत्युक्ते अहिंसादौ सर्ववर्णाश्रमतुल्ये १धर्मे । न्यायादयुक्ते २संशयहेतौ समानधर्मे च तथाहि रजतं नवेति संशये रङ्गरजतयोः सामान्यधर्मश्चाकचिक्यशुभ्रत्वादिर्हेतुः । ३प्रजासर्जनरूपे जन्तुमात्रधर्मे च "प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थञ्च मानवाः । तस्मात् साधारणो धर्मः श्रुतौ पत्न्या सहोदितः" मनुः । स च धर्मः सर्वैर्हि जन्तुना साधारण इति मानवा इत्युपलक्षणम् ।

**साधारणस्त्री** स्त्री कर्म० । वेश्यायां हेमच० । सा च नायिकाभेदः । "अथ नायिका त्रिविधा स्वाऽन्या साधारणस्त्रीति" सा० द० नायिकाशब्दे ४०४२ पृ० तल्लक्षणं दृश्यम् । सामान्यस्त्रीप्रभृतयोऽप्यत्र ।

**साधारणी** स्त्री साधयति साधा करणीव । १कुञ्चिकायां हेमच० साधारणस्त्वत्वात्सापि स्त्रीप्रकृतौ स्त्री ङीप् स्वार्थे ष्यञ् । साधारण्यं कुञ्चिकायां न० । भावे ष्यञ् । साधर्म्यधर्मे च ।

**साधिका** स्त्री साधयति नमयति सर्वोपरमम् नम–णिच्–साधादेश ण्वुल् । १सुषुप्तौ हेमच० । सिध–णिच् ण्वुल् । २कार्यसाधिकायां स्त्रियाञ्च ।

**साधित** त्रि० सिध–णिच्–क्त । १दापिते अमरः २प्रमाणादिना उद्भाविते च "साधितात् दशक शतमिति" स्मृतिः ३निष्पादिते ४शोधिते च ।

**साधिदैव** त्रि० सह अधिदैवेन स्वार्थे अण् द्विपदरूपश्च । अधिदैवतासहिते । साधिभूतसाधियज्ञावपि परमेश्वरे ।

**साधिष्ठ** त्रि० अतिशयेन साधु बाढो वा इष्ठन् साधादेशः टिलोपो वा । १अत्यन्तदृढे अमरः २अतिसाधौ ३अतिशोभने च । ४अत्यार्थे मेदि० ५न्याय्ये हेमच० ।

**साधिष्ठान** त्रि॰ सह अधिष्ठानेन । १सन्निहिते तन्त्रोक्ते हृदयचक्रमध्ये सुषुम्णामध्यस्थे चक्रभेदे न॰ चक्रशब्दे २८०८ पृ॰ दृश्यम् ।

**साधीयस्** त्रि॰ अतिशयेन साधु' बाढो वा ईयसुन्' साधादेशो वा । १साधुतरे च २अत्यन्तदृढे अमरः । ३न्याय्ये हेमच॰ स्त्रियां ङीप् ।

**साधु** त्रि॰ साध–उन् । १उत्तमकुलजाते अमरः । २सुन्दरे ३उचिते च । स्त्रियां वा ङीप् । ४मुनौ ५जिने च पु॰ हेमच॰ "न प्रहृष्यति सम्माने नापमाने च कुप्यति । न क्रुद्धः परुषं ब्रूयादेतद्धि साधुलक्षणम्" गरुडपु॰ ६उक्तधर्मयुते हृजने ७वार्द्धुषिके ८मनोहरे मेदि॰। साधुलक्षणान्तर यथा "यथालब्धेऽपि सन्तुष्टः समचित्तो जितेन्द्रियः । हरिपादाश्रयो लोके विप्रः साधुरनिन्दकः । निर्वैरः सदयः शान्तो दम्भाहङ्कारवर्जितः । निरपेक्षो मुनिर्वीतरागः साधुरिहोच्यते । लोभमोहमदक्रोधकामादिरहितः सुखी । कृष्णाङ्घ्रिशरणः साधुः सहिष्णुः समदर्शनः" पद्मोत्त॰ख॰ ९९अ॰ "त्यक्तात्मसुखभोगेच्छाः सर्वसत्त्वसुखैषिणः । भवन्ति परदुःखेन साधवो नित्यदुःखिताः । परदुःखातुरा नित्यं स्वसुखानि महान्त्यपि । नापेक्षन्ते महात्मानः सर्वभूतहिते रताः । परार्थमुद्यताः सन्तः सन्तः किं किं न कुर्वते । तादृगप्यम्बु पाथोधेर्जलदैस्तत् प्रदीयते । एक एव सतां मार्गो यदङ्गीकृतपालनम् । दहन्तमकरोत् क्रोडे पावकं यदपाम्पतिः । आत्मानं पीडयित्वापि साधु सुखयते परम् । ह्लादयन्नाश्रितान् वृक्षो दुःखञ्च सहते स्वयम्" वह्निपु॰ । ९व्याकरणव्युत्पन्नसाधुताजात्याश्रये शब्दे "अपभ्रंशतामादिर्यद्वाऽभ्युदययोग्यता । व्याक्रियाव्यञ्जनीया वा जातिः कापीह साधुता" हरिः । तथा च अपभ्रंशभिन्नत्वमनादित्वम् अभ्युदयसाधनप्रयोगविषयत्वं व्याकरणव्यङ्ग्यजातिर्वा साधुता इति तदर्थः । स च ईश्वरसङ्केताश्रयः शब्द इति नैयायिकाः । तथा च यः शब्दो यस्मिन्नर्थे ईश्वरेण सङ्केतितः स शब्दस्तदर्थे साधुः । वैयाकरणमते यः शब्दः यस्मिन्नर्थे व्याकरणे व्युत्पादितः स शब्दस्तत्र साधुः यथा "कर्मणि द्वितीया" पा॰ द्वितीया कर्मार्थे साधु ।

**साधुज** त्रि॰ साधौ सत्कुले जायते जन–ड । उत्तमकुलोद्भवे शब्दर॰ ।

**साधुधी** स्त्री ६ब॰ । १श्वश्र्वां हारा॰ । २सुन्दरबुद्धियुते त्रि॰ । कर्म॰ । ३साधबुद्धौ स्त्री । [२उत्तमकुसुमे ।

**साधुपुष्प** न॰ साधु पुष्पं यस्य । १स्थलपद्मे शब्दमा॰, कर्म॰।

**साधुवाह** पु॰ कर्म॰ । विनीते सुशिक्षिते घोटके हेमच॰ ।

**साधुवाहिन्** पु॰ साधु यथा तथा वहति णिनि । १विनीतेऽश्वे अमरः २सुन्दरवहनकर्त्तरि त्रि॰ ।

**साधुवृक्ष** पु॰ नित्यकर्म॰, १कदम्बवृक्षे शब्दमा॰ । २वरुणवृक्षे राजनि॰ । ३शोभनवृक्षमात्रे च ।

**साध्वत** न॰ सहाध्वतेन सहस्य स । १धात्रुपत्त्रे २मयूरसमूहे ३पर्णशीर्याश्च अजय' ।

**साध्य** पु॰ सिध–णिच्–यत् । "मनोमन्ता तथा प्राणो नरोऽपानश्च वीर्य्यवान् । निर्भयो नरकश्चैव दंशो नारायणो वृषः । प्रभुश्चेति समाख्याताः साध्या द्वादश देवताः" इत्युक्ते द्वादशसंख्यके १गणदेवताभेदे ज्यो॰ उक्ते विष्कम्भादिषु योगेषु २एकविंशे योगे च । ३साधनीये त्रि॰ मेदि॰ । ४अष्टादशविवादेषु प्रमाणादिना उन्नाय्ये पदार्थे "प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् । निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः" इत्युक्ते व्यवहारे साधनार्हे प्रतिज्ञेये ४पक्षे पु॰ "ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् । ऊने वाप्यधिके चार्थे प्रोक्ते साध्यं न सिध्यति" कात्या॰ । ५अनुमित्या साधनीये वह्न्यादौ च यथा वह्निमान् धूमादित्यादौ विशेषविधितो वह्निः साध्यः । साध्यमस्त्यस्य अर्श आद्यच् । ६साध्यवति पक्षे पु॰ "साध्यनिर्देशः प्रतिज्ञे"ति गौ॰ सूत्रम् । साध्यवत्तया पक्षनिर्देश इति दीधितिकार न–न्त्रोक्ते ७मन्त्रमात्रे ८साध्यमन्त्रस्य स्वानुकूलतया छले ९दष्ट॰उक्ते अकथहचक्रस्थे द्वितीयपञ्चमादिकोष्ठस्याद्यक्षरके "सिद्धः साध्यः सुसिद्धोऽरिः क्रमात् ज्ञेया मनीषिभिः" इत्युक्ते दमन्त्रभेदे । १०देवमात्रे मेदि॰। व्याकरणोक्ते लिङ्गसंख्यानन्वयिक्रियाभेदे क्रियाशब्दे २३१७पृ॰ दृश्यम् । "साध्यरूपा क्रिया तत्र धातुरूपनिबन्धना" हरिः । "साध्यस्य साधनाकाङ्क्षा" हरिः ।

**साध्यता** स्त्री साध्यस्यानुमितिविधेयस्य भावः तल् । अनुमितिविधेयतारूपे न्यायोक्ते १विषयताभेदे । २इच्छाविषयताभेदे च । यथा घटोजायतामित्यस्य घटीया साध्यताख्या विषयता ।

**साध्यताघटकसम्बन्ध** पु॰६त॰। कर्म॰। येन सम्बन्धेन–साध्यस्य अनुमेयता तादृशे सम्बन्धे यथा पर्वतः संयोगेन वह्निमान् धूमात् इत्यादौ संयोग ।

**साध्यतावच्छेदक** पु॰साध्यतामवच्छिनत्ति विशेषयति अव–

छिट-ण्वुल्। तेन रूपेण सम्बन्धेन वा यस्य साध्यतारूपा विषयता। तस्मिन् १सम्बन्धे २धर्मे। यथा वह्निमान् धूमादित्यत्र वह्निः साध्यः तस्य साध्यता वह्नित्वमवच्छिन्न चेति वह्नित्वं साध्यतावच्छेदकम्। एवं संयोगसम्बन्धोऽपि।

**साध्यसम** पु० हेत्वाभासभेदे "साध्याविशिष्टः साध्यत्वात् साध्यसम" गौ० सू० "द्रव्य छायेति साध्यम्। गतिमत्त्वादिति हेतु। साध्येनाविशिष्टः साधनीयत्वात् साध्य सम। अयमप्यसिद्धत्वात् साध्यवत् प्रतिसाधयितव्यः। साध्यं तावदेतत् किं पुरुषवच्छायापि गच्छति? आहो स्विदावरकद्रव्ये संसर्पत्यावरणसंतानादसंनिधिसंतानोऽयं तेजसो गृह्यत इति? सर्पता खलु द्रव्येण यो यस्तेजोभाग आव्रियते तस्य तस्यासंनिधिरेवावच्छिन्नो गृह्यत इति। आवरणं तु प्राप्तिप्रतिषेधः" वात्स्या० २जात्युत्तरभेदे "उभयसाध्यत्वात् साध्यसमः" गौ० सू० "हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यः। तं दृष्टान्ते प्रसजत साध्यसमः। यदि यथा लोष्टस्तथात्मा, प्राप्तस्तर्हि यथात्मा तथा लोष्ट इति। साध्यश्चायमात्मा क्रियावानिति कामं लोष्टोऽपि साध्यः। अथ नैवम्। न तर्हि यथा लोष्टस्तथात्मा" वात्स्या०। तच्च "यद्दृष्टान्ते प्रकृतसाध्यतुल्यतापादनम्" गौ० वृ० दृष्टान्तस्य पक्षतुल्यताकथनम्। यथा, आत्मा सक्रिय क्रियाहेतुगुणवत्त्वादित्यादौ यदि यथा लोष्टस्तथात्मेति त्वयोच्यते तदा यथात्मा तथा लोष्ट इत्यप्यायातम्। तथा च यद्यात्मनि क्रियावत्त्वं साध्यते। तर्हि लोष्टेऽपि तत् साधनीयम्। नेति चेत्तर्हि यथा लोष्टस्तथात्मेति न वाच्यम्। लोष्टसदृश आत्मात्मसदृशो लोष्ट इत्यत्र विशेषकाभावादिति" नीलकण्ठः।

**साध्यसिद्धि** स्त्री साध्यस्य सिद्धिः विनिर्णयः। साध्यस्य व्यवहारे अनुमित्यादिना साधनाधीने १निर्णये २निष्पत्तौ। साध्यस्य प्रतिज्ञेयार्थस्य सिद्धिर्निर्णयो यत्र। व्यवहारे प्रतिज्ञातार्थस्य प्राड्विवाकादिभिः विनिर्णयरूपे ३व्यवहारपादभेदे च।

**साध्याप्रसिद्धि** स्त्री ६त० साध्ये साध्यतावच्छेदकस्याभावरूपे हेत्वाभासभेदे। यथा पर्वतः काञ्चनमयवह्निमान् धूमादित्यादौ वह्निनिष्ठः काञ्चनमयत्वाभावः साध्याप्रसिद्धिः।

**साध्वस** न० साधु+असति अस-अच्। भये अमरः।

**साध्वी** स्त्री साधु-ङीप्। १मेदायां राजनि० "कान्तार्ते मुदिता हृष्टे प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता" इत्युक्तलक्षणायां २स्त्रियां तत्रार्थे सत्त्वात् न पुंवद्भावः। साधुतायुक्ते ३स्त्रीमात्रे च। तत्रार्थे पुंवद्भाव इति भेदः।

**सानन्द** त्रि० सह आनन्देन। १आनन्दसहिते "सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि" मालतीमा०। २गुच्छकभेदे "अष्टादशाक्षरैर्युक्तो यत्रोऽष्टमरटो गुरुः। कङ्कल्लफलके ताले सानन्दो गीरको रवौ सगीतदा०। ३गुच्छकरञ्जे पु० राजनि०।

**सानन्दूर** पु० तीर्थविशेषे "सानन्दूरेति विख्यात भूमे! गुह्यं परं मम। उत्तरे तु समुद्रस्य मलयस्य च दक्षिणे। तत्र तिष्ठामि वसुधे! वटीर्थो दिव्यमाश्रित। प्रतिमा वै मदीयास्ति नात्युच्चा नातिनीचका। आयसीं तां वद न्त्येके अन्ये ताम्रमयीं तथा। कांस्या रीतिमयीमन्ये केचित् सीसकनिर्मिताम्। शिलामयीमित्यपरे महाश्चर्यस्वरूपिणीम्" वराहपु०।

**सानसि** पु० सन इण् अलुक् च। सुवर्णे उणादिकोषः।

**सानिका** स्त्री सन-ण्वुल् टापि अत इत्त्वम्। वंश्यां शब्दच०

**सानु** पु न० सन-ञुण्। १पर्वतस्य समभूमिदेशे प्रस्थे अमर २वने ३वातसमूहे ४पथि ५प्रस्थे ६कोविदे ७अर्के मेदि०। ८पल्लवे च जटा०।

**सानुज** न० सानौ जायते जन-ड। १प्रपौण्डरीके राजनि० २तुम्बुरुवृक्षे पु० राजनि०। सह अनुजेन। ३अनुजसहिते त्रि०

**सानुमत्** पु० सानुरस्त्यस्य मतुप्। पर्वते हेमच०।

**सानेयी** स्त्री सह आनेयेन सत्त्वेन सहस्य स गौरा० ङीष्। वंश्यां शब्दर०। स्वार्थे क हृस्व। सानेयिकाप्यत्र।

**सान्तपन** न० सन्तापयति सम्+तप-णिच् ल्युट्-स्वार्थे अण्। सन्तपनाय साधु अण्-वा। "गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम्" मनूक्ते कृच्छ्रसाध्ये व्रतभेदे एकदिने गोमूत्रादिषट्कमात्रपान परदिने उपवास इति कृच्छ्रसाध्यतास्य।

**सान्तर** न० सह अन्तरेण सहस्य सादेशः। १विरले जटा० २अवकाशसहिते त्रि०। [प्रयोजनमस्य सन्तमा० ठक्। यज्ञे विधानभेदे।

**सान्तानिक** त्रि० सन्तान प्रयोजनमस्य सन्तमा० ठक्। सन्ता०

**सान्त्व** आनुकूल्यकरणे अद० चु० उभ० सक० सेट्। सान्त्वयति ते असस्सान्त्वत् त सान्त्वायतीत्यन्ये अनेकाच्कत्वात् न षोपदेशः।

**सान्त्व** न० सान्त्व–अच् । १अत्यर्थमधुरे २आनुकूल्ये मेदि० । ३अोभमनःप्रीतिदवाक्ये प्रियवाक्यादिना क्रोधोपशमन-रूपे सामनि च अमरः ।

**सान्त्वन** न० सान्त्व–ल्युट् । १आनुकूल्यकरणे प्रियवादादिना क्रोधाद्युपशमने च । युच् । अत्रैव स्त्री ।

**सान्दीपनि** पु० सन्दीपनस्यापत्यम् इञ् । रामकृष्णयोराचार्ये अवन्तिपुरवासिनि मुनिभेदे ।
"विदिताखिलविज्ञानौ तत्कुज्ञानमयावपि । शिष्याचार्य्यक्रम वीरौ ख्यापयन्तौ यदूत्तमौ । ततः सान्दीपनिं काश्यमवन्तिपुरवासिनम् । अस्त्रार्थं जग्मतुर्वीरौ बलदेवजनार्दनौ" विष्णुपु० ५ अंशे २१अ० ।

**सान्द्र** त्रि० अदि–रक् सह अन्द्रेण । १निविडे अमरः २मृदौ मेदि० । ३स्निग्धे ४मनोज्ञे शब्दर० । ५वने न० मेदि० ।

**सान्द्रपुष्प** पु० सान्द्रं पुष्पमस्य । विभीतकवृक्षे शब्दर० ।

**सान्द्रस्निग्ध** त्रि० सान्द्रं स्निग्धः । १अतिहृद्ये शब्दर० । २अतिमनोहरे च ।

**सान्धिक** पु० सन्धा सुराद्यासवनं शिल्पं वेत्ति ठक् । १शौण्डिके शब्दमा० । सन्धिः प्रयोजनमस्य ठञ् । २सन्धिकर्त्तरि त्रि० । [सन्ध्याकालिके ।

**सान्ध्य** त्रि० सन्ध्यायां भवः सन्धिवेला० अण् न ठञ् ।

**सान्ध्यकुसुमा** स्त्री ६ब० । त्रिसन्धिपुष्पवृक्षे राजनि० ।

**सान्नाय्य** न० सन्नीयते सम्+नी–ण्यत् नि० । मन्त्रादिना संस्कार्ये हविरादौ अमरः । [कल्पय" माघाङ्कनमन्त्र ।

**सान्निध्य** न० सन्निधिरेव ष्यञ् । नैकट्ये "सान्निध्यमिह

**सान्निपातिक** त्रि० सन्निपातात् त्रिदोषविकारात् आगतः तत्र निर्वृत्तो वा ठञ् । सान्निपातात्जाते रोगे सन्निपात शब्दे ५२१६ पृ० दृश्यम् "विकारे सन्निपातके" कुमारः ।

**सान्न्यासिक** पु० सन्न्यास प्रयोजनमस्य ठक् । सन्न्यासिनि हेमच०

**सापत्न** पु० सपत्न एव स्वार्थे अण् । १शत्रौ अमरः, सपत्न्या भवः तस्या अपत्यं वा यञ् । २सपत्नीपुत्रे । अण् । सापत्नोऽप्यत्र ।

**सापिण्ड्य** न० सपिण्डस्य भावः ष्यञ् । दायाशौचसम्बन्धाद्युपयोगिनि ज्ञातिधर्मभेदे "साापिण्ड्यं साप्तपौरुषमि"ति स्मृतिः । सपिण्डशब्दे ५२२० पृ० दृश्यम् ।

**साप्तपदीन** न० सप्तभिः पदैः अवाप्यते इति नि० खञ् । सख्ये सौहार्दे अमरः "साप्तपदीनं सख्यम्" पा० ।

**साप्तपौरुष** त्रि० सप्त पुरुषान् व्याप्नोति अण् उभयपदवृद्धिः । सप्तपुरुषव्यापके ।

**साफल्य** न० सफलस्य भावः ष्यञ् । सामर्थ्ये सम्पूर्णतायाञ्च

**साम** सान्त्वने अद० चु० उ० स० सेट् । सामयति ते अससामत् त अनेकाच्कत्वात् न षोपदेश ।

**सा(षा)म** सान्त्वे चु० उभ० सक० सेट् । सामयति अयं षोपदेश एव न्याय्यः दुर्गादासेन दन्त्यादित्वमप्यौक्तमप्रमाणम् ।

**सामक** पु० साम–ण्वुल् । तच्छ्रावणे त्रिका० । सामकमेव अण् । २उद्धरिष्यते मूलधने ऋणे मिता० ।

**सामग** पु० साम तद्वेद गायति । सामवेदाध्यायिनि जटा० ।

**सामगर्भ** पु० साम गर्भे यस्य । विष्णौ शब्दर० ।

**सामग्री** स्त्री समग्रस्य भावः ष्यञ् स्त्रीत्वपक्षे ङाप् ङीषि यलोपः । १समस्ततायाम् । स्त्रीत्वाभावपक्षे सामग्र्य तत्रार्थे न० । "प्रायेण सामग्र्यविधौ गुणानाम्" कुमारः । स्वार्थे ष्यञ् । २करणसमूहे ३द्रव्ये च स्त्री ।

**सामज** पु स्त्री० साम्नो वेदभेदात् जायते जन–ड । १गजे । स्त्रियां ङीष् । तस्य तज्जन्मकथा पालकाव्ये उक्तं तच्च सामयोनिशब्दे दृश्यम् । २सामपाठजे स्वरादौ त्रि० मेदि० ।

**सामञ्जस्य** न० समञ्जसस्य भावः ष्यञ् । औचित्ये ।

**सामन्** न० सो–मनिन् । "अग्न आयाहि" इत्यादिके १वेदभेदे तत्रोक्तामृचमधिकृत्य गेये २गानभेदे "ऋच्यध्यूढं साम गीयते" छान्दोग्योप० । साम्नो गानरूपत्व गानशब्दे २५७२ पृ० दृश्यम् तच्च स्तोभादिकं वेदगाने ऊहगानादौ मूलग्रन्थे च दृश्यं सामवेदस्य विभागादि चरणव्यूहे दृश्यम् । तच्छाखाभेदाः वेदशब्दे ४९२४ पृ० दृश्याः । राज्ञां "सामभेदस्तथा दानो दण्डश्चेत्युक्ते ३उपायभेदे तस्य विषयादिकं मत्स्यपु० २२१अ० उक्तं यथा
मत्स्य उवाच "सामभेदस्तथा दानो दण्डश्च मनुजेश्वर ! । उपेक्षा च तथा माया इन्द्रजालञ्च पार्थिव ! । प्रयोगाः कथिताः सप्त तन्मे निगदतः शृणु । द्विविधं कथितं साम तथ्यञ्चातथ्यमेव च । तत्राप्यतथ्यं साधूनामाक्रोशायैव जायते । तत्र साधु प्रयत्नेन सामसाध्यो नरोत्तम ! । महाकुलीना ऋजवो धर्मनित्या जितेन्द्रियाः । सामसाध्या न चातथ्यन्तेषु साम प्रयोजयेत् । तथ्यं साम च कर्त्तव्यं कुलशीलादिवर्णनम् । तथा तदुपचाराणां कृतानाञ्चैव वर्णनम् । अनयैव तथा युक्त्या कृतज्ञाख्यापनं स्वकम् । एवं साम्ना च कर्त्तव्या वशगाः धर्मतत्पराः । साम्ना यद्यपि रक्षांसि गृह्णन्तीति पराश्रुतिः । तथाप्येतदसाधूनां प्रयुक्तं नोपकारकम् । अतिशङ्कितमित्येवं पुरुषं सामवादिनम् । असाधवो

विजानन्ति तस्मात्तेषु वर्जयेत् । ये शुद्धवंशा ऋजवः प्रणीता धर्मे स्थिताः सत्यपरा विनीताः । ते सामसाध्याः पुरुषाः प्रदिष्टा मानोन्नता ये सततञ्च राजन्”। तत्र मित्रादिसामप्रकाराः शुक्रनीतिपरिशिष्टे तत्र विशेषश्चोक्तो यथा

“त्वद्वयमस्तु मम नास्ति मित्रे साम इदं स्मृतम्। परस्परमनिष्टं न चिन्तनीयं त्वया मया। सुसाह्याय्य च कर्त्तव्यं शत्रौ साम प्रकीर्त्तितम्”। विषयभेदेनोपायभेदास्तत्र तत्रोक्तं यथा “सर्वोपायैस्तथा कुर्य्यान्नीतिज्ञः पृथिवीपतिः। यथा स्वाभ्यधिका न स्युर्मित्रोदासीनशत्रवः। सामैव प्रथमं श्रेष्ठं दानन्तु तदनन्तरम्। सर्वदा भेदनं शत्रोर्दण्डनं प्राणसंशये। प्रबलेऽरौ सामदानौ साम भेदोऽधिके स्मृतौ। भेददण्डौ समे कार्य्यौ दण्डः पूज्यः प्रहीणके। मित्रे च सामदाने स्तो न कश्चित् भेददण्डने। रिपोः प्रजानां सम्भेदः पीडनं स्वजयाय वै। रिपुप्रपीडितानाञ्च साम्ना दानेन संग्रहः। स्वप्रजानां न भेदेन नैव दण्डेन पालनम्। कुर्वीत सामदानाभ्यां सर्वदा यत्नमास्थितः”। ४स्ववशीकरणोपायभेदे ५प्रियवाक्यादिना सान्त्वने च। ५पशुवन्धनरज्ज्वां स्त्री ङीप्।

**सामन्त** पु० सन्निहितोऽन्तः एकदेशो यस्य समन्तस्येश्वरः अण्। स्वविषयानन्तरवर्त्तिदेशाधिपे १नृपे अमरः। समन्तात् भवः अण् टिलोपः। २अरेषप्रजायाम् (मण्डल) “य परम्परया मौलाः सामन्ताश्च समागताः” स्मृतिः।

**सामयिक** त्रि० समये काले नियमे वा भवः उचितो वा ठञ्। १समयभवे २समयोचिते ३नियमबद्धे च “निजधर्माविरोधेन यस्तु सामयिको भवेत्” स्मृतिः।

**सामयिकाभाव** पु० अत्यन्ताभावे त०दी०। केचित्तु, उत्पत्तिविनाशशीलोऽत्यन्ताभावादतिरिक्तोऽयमभाव इत्याहुः।

**सामयोनि** पु० साम सामगानं योनिरुत्पत्तिस्थानं यस्य। हस्तिनि, तेषाञ्च सामयोनित्वमुक्तं पालकाव्ये “सूर्य्याण्डकपाले द्वे समानीय प्रजापतिः। हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत। गायतो ब्रह्मणस्तस्मात् समुत्पेतुर्मतङ्गजाः” इति। ६त०। १चतुर्मुखे ब्रह्मणि स्त्री।

**सामर्थ्य** न० समर्थस्य भावः ष्यञ्। १देहजे बले २शक्तौ ३योग्यतायां मेदि०। ४सङ्गतार्थतायाञ्च। समासशब्दे ५२११ पृ० दृश्यम्। योग्यता च कार्य्यजननयोग्यत्वं यथा परामर्शस्यानुमितियोग्यत्वम्। ५आकाङ्क्षायोग्यत्वादिरूपे गौ० सू०यथा आप्तोक्तस्य वचनस्य, सङ्गतार्थत्वरूपं च सामर्थ्यं द्विविधम् व्यपेक्षारूपम् एकार्थीभावश्चेति” वैयाक०। तत्राद्यं राज्ञः पुरुष इत्यादिवाक्ये उपयुज्यते, द्वितीयं राजपुरुष इत्यादि समासे उपयुज्यते”।

**सामवायिक** पु० समवाये प्रसृत ठञ्। १मन्त्रिणि हेमच० तस्येदम् ठञ्। २समवायसम्बन्धिनि त्रि०।

**सामाजिक** पु० समाजः सभावेशनं प्रयोजनमस्य। १सभ्ये अमरः। २समाजसम्बन्धिनि त्रि०।

**सामानाधिकरण्य** न० समानाधिकरणस्य भावः ष्यञ्। १तदधिकरणवृत्तित्व२तद्धटनुयोगिकप्रतियोगिकत्वे सिद्धान्तलक्षणे गदा० यथा वह्निधूमयोः सामानाधिकरण्यम्। ३यावच्छेदकीभूतो यः कालस्तदवच्छिन्ना या स्वविशिष्टनिरूपिता यत्किञ्चिद्व्यक्तिनिष्ठाऽऽधेयता सा। यथा यदा शिवाधर्मिमा नासीत् परं तु पिङ्गिरासीत्तदा पिङ्गिशिवाधर्मिमाविरहयोः सामानाधिकरण्यम्। ४अभेदान्वयबोधकत्वे। यथा नीलोघट इत्यादौ नीलपदघटपदयोः सामानाधिकरण्यम् ५धर्मितावच्छेदकयत्किञ्चिद्व्यक्तिविषयकत्वे यथा पर्वतो वह्निमान् इत्यादौ यत्किञ्चित्पर्वतव्यक्तिविषयिकानुमितिः सामानाधिकरण्येनानुमितिः।

**सामान्य** न० समानस्य भावः ष्यञ्। १सादृश्यप्रयोजकधर्मे यथा मुखं पद्ममिव सुन्दरमित्यादौ सौन्दर्य्यादि। समानमेव स्वार्थे ष्यञ्। द्रव्यगुणकर्मसु तुल्यतया स्थितायां २जातौ भाषा०। जातिशब्दे ३०९१ दृश्यम्। सामान्यञ्च द्विविधं सखण्डमखण्डञ्च सामान्यलक्षणाग्रन्थे दीधित्युक्तिः। “सामान्यं विशेष इति बुद्ध्यपेक्षम्” कणा०। अनुगतधर्मत्वम् सामान्यमिति तल्लक्षणं तेन ३अनुगतधर्मस्वरूपं यथा प्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वादीति दीधितिः। ४अधिकविषयकत्वे यथा ब्राह्मणाय दधि दीयतां कौण्डिन्याय तक्रम् इत्यादौ दधिदानस्याधिकब्राह्मणविषयकता। सामान्यविषयकशास्त्रञ्च विशेषशास्त्रेण बाध्यते यथा “मा हिंस्यात् सर्वाभूतानीति” हिंसानिषेधः सर्वविषयः “वायव्यं श्वेतमालभेत” इत्यादि विशेषः हिंसाशास्त्रं तेन सामान्यशास्त्रं वैधेतरविषयएव प्रवर्त्तते। ५अर्थालङ्कारभेदे ४०७५ पृ० दृश्यम्।

**सामान्यच्छल** न० छलभेदे “सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना” गौ० सू० “अहो खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न इत्युक्ते कश्चिदाह। सम्भवति हि ब्राह्मणे विद्याचरणसम्पदिति अस्य वचनस्य विघातोऽर्थ-

विकल्पोपपत्त्या समानार्थकल्पनया क्रियते। यदि ब्राह्मणे विद्याचरणसम्पत् सम्भवति। व्रात्येऽपि सम्भवेत्। व्रात्योऽपि ब्राह्मणः। सोऽप्यस्तु विद्याचरणसम्पन्न इति। सामान्यनिमित्तं छलं सामान्यच्छलमिति” वात्स्या०। “सामान्यविशिष्टसम्भवदर्थाभिप्रायेणोक्तस्याति सामान्ययो... इतसम्भवदर्थकल्पकल्पनया दूषणाभिधानम्। यथा ब्राह्मणोऽयं विद्याचरणसम्पन्न इत्युक्ते ब्राह्मणत्वेन विद्याचरणसम्पदं साधयति इति कल्पयित्वा परो वदति। कुतो ब्राह्मणत्वेन विद्याचरणसम्पत्? व्रात्ये व्यभिचारात्” इत्त।

**सामान्यतोदृष्ट** न० सामान्यत सामान्यस्य सामान्यात् वा दृष्टं दर्शनम्। १अनुमानभेदे “अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टञ्च” गौ०सू०। “पूर्ववदिति यत्र कारणेन कार्यमनुमीयते यथा मेघोन्नत्या भविष्यति वृष्टिरिति शेषवत्तत् यत्र कार्येण कारणमनुमीयते पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वञ्च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति। सामान्यतो दृष्टं व्रज्यापूर्वकमन्यत्र दृष्टस्यान्यत्र दर्शनमिति। तथा चादित्यस्य। तस्मादस्त्यप्रत्यक्षाप्यादित्यस्य व्रज्येति” अथ वा यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते। यथेच्छादिभिरात्मा। इच्छादयो गुणाः, गुणाश्च द्रव्यसंस्थानाः, तद् यदेषां स्थानं स आत्मेति” वात्स्या०। २कार्यकारणभिन्नलिङ्गके अनुमानभेदे यथा पृथिवीत्वेन द्रव्यत्वानुमानम्। ३अन्वयव्यतिरेक्यनुमाने च। यथा वह्निमान् धूमादित्यादि उभयव्याप्तिसम्भवेन अन्वयोभयानुमानसम्भवात् गौ०सू०वृ०।

**सामान्यप्रत्यासत्ति** सामान्यं तज्ज्ञानं वा प्रत्यासत्तिः। अलौकिकप्रत्यक्षसन्निकर्षभेदे सामान्यलक्षणाशब्दे दृश्यम्।

**सामान्यलक्षणा** स्त्री सामान्यं साधारणधर्मः लक्षणं यस्याः। न्यायोक्ते अलौकिकप्रत्यक्षसाधने उपायभेदे सन्निकर्षशब्दे दृश्यम्। यथा एकघटज्ञाने घटत्वरूपसामान्यधर्मज्ञानात् सकलस्य घटत्ववतो ज्ञानम्। तस्याः प्रत्यासत्तित्वं मणिकृता व्यवस्थापितं यथा “व्याप्तिग्रह इव सामान्यलक्षणाप्रत्यासत्त्या सकलधूमादिविषयकः कथमन्यथा पर्वतीयधूमे व्याप्तिग्रहे तस्मादनुमितिः सा चेन्द्रियसम्बद्धविशेषणतातिरिक्तैव सा तद्विशेष्यकप्रत्यक्षे तदिन्द्रियसन्निकर्षस्य हेतुत्वेनानागतादौ च्योमादेरभावादिति वदन्ति”।

तस्याः अप्रत्यासत्तित्वमाशङ्क्य सिद्धान्तितं तत्रैव चिन्तामणिकृता “उच्यते यदि सामान्यलक्षणा नास्ति तदानुकूलतर्कादिकं विना धूमादौ व्यभिचारसंशयो न स्यात् प्रसिद्धधूमे वह्निसम्बन्धावगमात् कालान्तरीयदेशान्तरीयधूमस्य मानाभावेनाज्ञानात् सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनेन संशयो युज्यते”।

अत्र दीधितिः “अत्र च सामान्यं लक्षणं स्वरूपं यस्याः इत्यर्थे सामान्यमेव प्रत्यासत्तिः सामान्यं लक्षणं निरूपकं यस्या इत्यर्थे तु तज्ज्ञानम्। तत्राद्यमाह सा चेन्द्रियेति इन्द्रियेण सम्बद्धं धूमादि तस्य विशेषणं तद्विशेष्यकज्ञानप्रकारो धूमत्वादिरित्यर्थः। विशेषणतेत्यत्र भावार्थो न विवक्षितः तत्र विशेषणत्वं यस्या इति मत्वर्थीयो वा सम्बद्धपदस्यैव वा परम्परासम्बन्धस्तत्सम्बन्धविशेष्यकज्ञानप्रकारोऽर्थः तथा च सैव विशेषणतेत्यर्थः। अत्र च बहिरिन्द्रियस्य लौकिकः सम्बन्धो ज्ञानस्य तदिन्द्रियजन्यत्वस्य नियामकम् एवञ्चाणुत्वेन यत्किञ्चिदणूपस्थितावपि सकलाणुगोचरो मानसो बोध इति वदन्ति एतेन धूलीपटले धूमभ्रमे तत्र च वह्निव्याप्तिग्रहे तत्रापि धूमत्वेन धूमेषु व्याप्तिग्रहाद् अदर्शनादनुमितिर्न स्यात् हेत्वभावेन परामर्शानुत्पादात् किन्तु धर्मिणि दोषवशादयनेनाप्रत्यक्षमात्रेण आरणकारीभवता सामान्येन प्रत्यक्षेण वा लौकिकसन्निकर्षविगमेऽपि वा सुषुप्तानापत्तिरिति परास्तम्। सामान्यस्य स्वरूपज्ञानभेदेन द्वेधा-स्वरूपे चाक्षुषमेव परम्परया सम्बद्धं प्रत्यासत्तिः येन सम्बन्धेन चेन्द्रियसम्बद्धे सामान्यं ज्ञायते तेन सम्बन्धेनाधिकरणानां प्रत्यासत्तिरिति”।

दीधितिकृता तु अमते सामान्यलक्षणायाः प्रत्यासत्तित्वं निराकृतं तत्र दृश्यम्। तच्च विस्तरभयादिह नोक्तम्।

**सामान्या** स्त्री समानैव स्वार्थे ष्यञ् अजा० टाप्। साधारणस्त्रियां वेश्यायाम् “धनमात्रलाभार्थं सकलपुरुषाभिलाषा। सा त्रिधा। अन्यसम्भोगदुःखिता मानवती वक्रोक्तिगर्विता च सापि द्विविधा। प्रेमगर्विता सौन्दर्यगर्विता च” रसमञ्जरी। [२निन्दायाञ्च अमर०।

**सामि** अव्य० साम-इन्। १अर्द्धे “सामिघटिता” नैषधम्।

**सामिधेनी** स्त्री सम्+इन्ध-करणे ल्युट् नि०। अग्निसमिन्धनसाधने १ऋग्भेदे अमरः। २समित्काष्ठे मेदि०। सामिधेनीशब्दनिरुक्तिश्च शत० ब्रा० १।३।५।१ “समिन्धे सामधेनीभिर्होता तस्मात् सामिधेन्योनाम”। “इध्मेनाग्नि-

समिन्धनहेतुभूता सामिधेनीर्विधास्यन् तासां नाम निर्वक्ति सामधेनीभिः प्रयो वाजा इत्यादिभिर्ऋग्भिः” भा० तात्पर्य्य आश्व०श्रौ० १।२।७। “अथ सामिधेन्यः प्रवो वाजा अभिद्यवो १ऽग्न आयाहि वीतये त्वष्टार २ ईडेन्यो नमस्यस्तिरो ३ऽग्नि दूत वृणीमहे४ समिध्यमानो अध्वरे५ समिद्धो अग्न आहुत६।७ इ ।

**सामीप्य** न० समीपस्य भाव स्वार्थे वा ष्यञ् । १नैकट्ये २निकटे च “सामीप्यात्सर्वविषयेव्याप्ताधारश्चतुर्विध” मुग्ध० व्याकरणम् । [२समुद्रभवे त्रि० ।

**सामुद्र** न० समुद्रे भव अण् । (करकच) १लवणे हेमच० ।

**सामुद्रक** न०समुद्रेण ऋषिणा प्रोक्तम् वुञ् । हस्तादिरेखादिना स्त्रीपुरुषशुभाशुभलक्षणज्ञापके, समुद्राङ्किते १ग्रन्थभेदे “वामभागे तु नारीणां दक्षिणे पुरुषस्य च । निर्दिष्ट लक्षणं तत्र समुद्रेण यथोदितम्” इति सामुद्रकसारसुद्रणा” नैष०। सामुद्र स्वार्थे क । २समुद्रलवणे राजनि०

**सामुद्रिक** त्रि० समुद्रेण प्रोक्त वेत्त्यधीते वा ठञ् । १स्त्रीपुरुषशुभाशुभलक्षणज्ञापकग्रन्थाध्येतरि २तद्वेत्तरि च ।

**साम्परायिक** न० सम्परायाय आपदे परलोकाय वा हितम् ठक् । १युद्धे अमर २परलोकसाधने त्रि० ।

**साम्प्रतम्** अव्य०सम्+प्र+तन-डस । युक्ते । १उचिते २इदानीमत्यर्थे अमर ।

**सा(षा)म्ब** सम्बन्धे चु० उभ०सक० सेट् । साम्बयति ते असाम्बत् त । अय षोपदेशएव न्याय्य । [राजनि० ।

**साम्बर** न० सम्बरदेशे भवम् अण् । सम्बरदेशोद्भवे लवणे

**साम्भवी** स्त्री सम्भव अस्त्यस्य प्रज्ञाद्यण् गौरा० ङीष् । रक्तलोध्रे शब्दच० । [धर्मे ।

**साम्य** न० समस्य भाव ष्यञ् । तुल्यत्वप्रयोजके साधारण-

**साम्राज्य** न० सम्राजो भाव ष्यञ् । १सार्वभौमत्वे “भेजे साम्राज्यदीक्षितम्” रघु. “स्वाधिपत्यं राज्यं स्यात् साम्राज्य दशवत्सके” इत्युक्ते २दशलक्षग्रामाधिपत्ये च

**साय** पु० सो-घञ् । १दिनान्ते अमर । २बाणे मेदि० ।

**सायसन्ध्या** स्त्री सायम् दिनान्ते सन्ध्या, तत्र सन्ध्यायते सम्+ध्यै-घञर्थे क वा । १दिनान्तसन्ध्यायाम् अमर० । २दिनान्ते उपास्यदेवताभेदे च । भावे ल्युट् । ३तदुपासनायाम् ।

**सायक** पु० सो-ण्वुल् । १बाणे २खड्गे च अमर ।

**सायकपुङ्खा** स्त्री सायकस्य पुङ्खो यस्याः ५ब० । शरपुङ्खावृक्षे राजनि० ।

**सायन्तन** त्रि०सायम्भव सायम्+ट्युल् तुट् च । दिनान्तभवे । स्त्रियां ङीप् । “सायन्तनीं तिथिप्रणय” इति भट्टि । “सन्ध्यां सायन्तनीं कुर्य्यात् द्वादशाब्दादिष्वपि प्रिये !। अकुर्वन्निरयं याति यतो नित्यागमक्रिया” इत्युद्दामतन्त्रे १पटले ।

**सायिका** स्त्री सो-ण्वुल् टाप् । क्रमस्थितौ शब्दर० ।

**सायम्** अव्य० सो-अमु । दिनान्ते “साय स्नात समेत” इत्युद्भट ।

**सायाह्न** पु०सायोऽह्न एक०त० टच समा० अह्नादेश । १दिनान्ते “सायाह्नस्त्रिमुहूर्त्त स्यात् श्राद्धं तत्र न कारयेत्” इत्युक्ते पञ्चधाविभक्तदिनस्य त्रिमुहूर्त्तात्मके पञ्चमे २भागे ऽशे च ।

**सायुज्य** न० सह युनक्ति—युज-क्विप् सादेश सयुज् तस्य भाव ष्यञ् । १सहयोगे पञ्चविधमुक्तिमध्ये २एकत्वरूपे मुक्तिभेदे च “सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जना” भाग० ३स्क०२९अ०। [एतत् न अनेकाचकत्वाच्च षोपदेशः

**सार** दौर्बल्ये अद० चु०उभ० सक० सेट् । सारयति ते असमा

**सार** न० सृ-घञ्, सार-अच् वा । १जले २धने ३न्याय्ये त्रि० मेदि०। ४नवनीते न०राजनि०। ५लौहे भावप्र०। ६वने शब्दर० । ७बले दस्थिराथ ८मज्जनि पु० अमर १०सर्वसारे ११वायौ जटा० । १२रोगे धरणि १३अतिदृढे १४पाशके पु० शब्दर० १५दध्यये पु० हेमच० १६श्रेष्ठे १७वरे च त्रि० अमर । १८परमेश्वरे “एकं शिवं शान्तमनन्तमच्युत परात्परं ज्ञानमयं विशेषम् । अद्वैतमव्ययमचिन्त्यरूपं सारन्त्वेकं नास्ति सार ततोऽन्यत् । यस्मादेतज्जायते विश्वमग्र यस्मिन् लीनं स्थास्यति यत्र तुष्टितस्तु । आकाशवन्नैव लग्नश्च दृत्या यद्विश्वं वै प्रियते तस्य सारम् । अष्टाङ्गयोगैर्यदवाप्तुमिच्छन् योगी मुनक्त्यात्मरूप सदैव । निवर्त्तते प्राप्य यत्रेह लोके तद्धि सार सारमन्यन्न चास्ति” कालिकापु० ७७अ०।

**सारक** पु० सारयति रेचयति सृ-णिच्-ण्वुल् । १जयपाले राजनि० । २रेचकद्रव्यमात्रे त्रि० ।

**सारखदिर** पु० कर्म० । विट्खदिरे राजनि० ।

**सारगन्ध** पु० सार श्रेष्ठोगन्धो यस्य । चन्दने शब्दच० ।

**सारघ** न० सरघाभिर्निर्वृत्तम् अण् । मधुनि क्षौद्रे जटा० ।

**सारङ्ग** पु स्त्री० सृ-अङ्गच् । १चातकखगे अमरः । २हरिणे ३गजे मेदि०। ४भृङ्गे ५खगभेदे विश्वः । ६कर्मे ७राजहंसे

इत्युक्ते मध्यदेशभेदे सोऽभिजनोऽस्य अण्। तद्देशवासिजने। तत्रत्यब्राह्मणभेदश्च "सारस्वताः कान्यकुब्जा गौडमैथिलोत्कलाः। पञ्च गौडा इति ख्याता विन्ध्यस्योत्तरवासिनः" पुराणान्तरम्।

**सारस्वतकल्प** पु० कर्म०। १तन्त्रोक्ते सरस्वत्या उपासना-ङ्गक विधानभेदे २तन्नामके ब्रह्मदिने च। कल्पशब्दे १८१६ पृ० दृश्यम्। [शब्दर०। २दूर्वायाञ्च शब्दच०।

**सारा** स्त्री सारयति सृ-णिच्-अच्। १कृष्णत्रिवृतायाम्

**साराल** पु० सारमालाति आ+ला-क। तिलवृक्षे शब्दर०।

**सारि(री)** पु० स्त्री० सृ-इण् स्त्रीत्वपक्षे वा ङीप्। १पाशके "सारीं चरन्तीं सखि। मारयेति" नैषधम्। २पक्षिभेदे च (शालिक) शब्दच०। ङीपन्तः ३सप्तलायां राजनि०

**सारिका** स्त्री सरति गच्छति सृ-ण्वुल्। पक्षिभेदे(शालिक) अमर०।

**सारिणी** स्त्री सृ-णिनि। १सहदेवीलतायां २कार्पास्यां ३दुरालभायां ४रक्तपुनर्नवायां ५प्रसारिण्यां ६रक्तपुनर्नवायाञ्च राजनि०।

**सारिवा** स्त्री सारिरिव वाति वा-क। (अनन्तमूल)लताभेदे सा च दुग्धगर्भा जम्बुदलप्रपत्रा सुगन्धा च। सा च कृष्णशुक्लभेदात् द्विविधा "सारिवायुगलं स्वादु स्निग्धं शुक्रकरं गुरु। अग्निमान्द्यारुचिश्वासकासाम-विषनाशनम्। दोषत्रयास्रप्रदरज्वरातीसारनाशनम्" भावप्र०। [भव ठक्। विषभेदे अमर।

**सारोष्ट्रिक** पु० सारः श्रेष्ठ उष्ट्रो यत्र सारोष्ट्रः देशभेदस्तत्र

**सार्थ** पु० सृ-थन् स्वार्थे अण्। १समूहे २जन्तुसमूहे अमरः। "स जयत्यरिसार्थसार्थकीकृतनामा" नैषधम्। सह अर्थेन वाच्येन वा। ३वणिक्समूहे मेदि०। ४धनिनि त्रि०। अच्। सार्थक। ५अर्थसहिते त्रि० ६शब्दे पु० "सार्थकः सार्थबोधकादिति" शब्दशक्तिप्रकाशिका।

**सार्थवाह** पु० सार्थं वहति वह-अण्। वणिग्जने अमरः

**सार्द्र** त्रि० सह आर्द्रेण। आर्द्रतायुक्ते अमर०।

**सार्द्धम्** अव्य० सह+ऋध-अम्। १साहित्ये अमर। सह अर्द्धेन सार्द्ध २अर्द्धयुक्ते त्रि०।

**सार्प** न० सर्पदेवताकम् अण्। अश्लेषानक्षत्रे।

**सार्पिष्क** त्रि० सर्पिषा संस्कृतम् ठक्। घृतसंस्कृते व्यञ्जनादौ हेमच०। [विदिते।

**सार्वजनीन** त्रि० सर्वेषु जनेषु विदित खञ्। सर्वलोक-

**सार्वत्रिक** त्रि० सर्वत्र भव ठञ्। सर्वस्मिन् कालादौ भवे।

**सार्वधातुक** न० सर्वधातून् व्याप्नोति ठञ्। व्याकरणोक्ते सर्वधातुप्रकृतिके लट् लोट लङ् विधिलिङ् इत्यादयुक्ते। चतुर्लकारे [वृद्धि०। सर्वभूतव्यापके।

**सार्वभौतिक** त्रि० सर्वाणि भूतानि व्याप्नोति ठञ् द्विपद०

**सार्वभौम** पु० सर्वस्या भूमेरीश्वर तस्येदं भूमिषु विदितो वा अण् द्विपदवृद्धि०। १चक्रवर्त्तिनि नृपे २उत्तरदिक्स्थे गजे च अमर। ३विदूरथवंशपुत्रे उ० भाग० ९।२२।११ ४सकलभूमिसम्बद्धे त्रि०।

**सार्वलौकिक** त्रि० सर्वेषु लोकेषु विदित ठञ् द्विपदवृद्धि। सर्वलोकेषु विदिते "स राज सार्वलौकिक" भट्टि०।

**सार्वविभक्तिक** त्रि० सर्वासु विभक्तिषु तदर्थे भव-ठञ्। सर्वविभक्त्यर्थे विहिते तसिलादौ प्रत्यये पा०।

**सार्षप** त्रि० सर्षपस्य विकार अण्। सर्षपविकारतैलादौ "कटुष्ण सार्षप तैलम्" स्मृति।

**साल** पु० सल-घञ्। १प्राकारे "रसालसालः समदृश्यतामुना" नैषधम्। २स्वनामख्याते वृक्षभेदे "सालस्तु सर्जकार्श्याश्वकर्णक सस्यसम्बर"। अश्वकर्णः कषायः स्यात् व्रणस्वेदकफक्रमीन्। भग्नविद्रधिबाधिर्य्ययोनिकर्णगदान् हरेत्। सर्जकोऽन्योऽजकर्णः स्यात् शालो मरिचपत्रक। अजकर्णः कटुस्तिक्त कषायोष्णो व्यपोहति। कफवातरुजा कुष्ठगदान् मेहकुष्ठविषव्रणान्" भावप्र०। एतत्परत्वे तालव्यादितापि। ३प्राकारे मेदि० ४सालमत्स्ये भरत ५राले राजनि०।

**सालन** पु० सालः कारणत्वेनाऽस्त्यस्य पामादित्वात् न। सालनिर्य्यासे (धुना) रत्नमा०।

**सालनिर्यास** पु० ६त०। सर्जरसे (धुना) रत्नमा०।

**सालपर्णी** स्त्री सालस्येव पर्णान्यस्याः ङीप्। (सालपानि) वृक्षे शब्दर०।

**सालपुष्प** न० सालस्येव पुष्पं यस्य। स्थलपद्मे शब्दर०।

**सालभञ्जिका** स्त्री साल भनक्ति भञ्ज-ण्वुल्। १काष्ठादिनिर्मित कृत्रिमक्रीडासाधने पुत्तलिकाभेदे २वेश्यायाञ्च जटा०।

**सालरस** पु० ६त०। (धुना) राले राजनि०।

**सालवेष्ट** पु० सालं वेष्टयति वेष्ट-अच्। राले (धुना) राजनि०

**सा(शा)ला** स्त्री सालः प्राकारोऽस्त्यस्याः अच्। गृहे भरतः

**सा(शा)लावृक** पु० स्त्री० शालायां वृक इव। कुक्कुरे। स्त्रियां ङीष्। [शब्दर० स्त्रियां ङीष्।

**सा(शा)लूर** पुं० स्त्री० स(श)ल-ऊरच् णित्। भेके मण्डूके

कामयेद् यस्तु धनं तस्याखिलं हरेत्। उत्कृत्य लिङ्ग-वृषणौ भ्रामयेद् गर्दभेन तु” इति। कामयेत् परस्त्रियमुपच्छेत्। अयमेव दण्डोऽनुलोमप्रतिलोमजात्योः सजातीयपरभार्य्यागमने वेदितव्य इति मदनरत्ने। हीनजातीयपरस्त्रीगमने त्वाङ्मुपादिष्वेतदर्द्धपरिमितो दण्डः। उत्कृष्टजातीयपरदारगमने अयमेव दण्डो वधसहितः कार्य्य इत्याह स एव “दमोनेयः समायान्तु हीनायामधिकस्ततः। पुंसः कार्योऽधिकायान्तु गमने सम्प्रमापणम्” इति। दमः सहसा कामयेदिति वाक्योक्तः। नेयः प्रापणीयः। यत्तु वधमात्राभिधायक कात्यायनवचनम् “स्त्रीषु कृतोपभोगः स्यात् प्रसह्य पुरुषो यदा। वधे तत्र प्रवर्त्तेत कार्य्यातिक्रमणं हि तद्” इति। तन्निर्गुणस्य भार्य्यागमने वेदितव्यम्”। सहसा अविवेकेन कृतं कर्म। २अविमृश्यकृतकर्मणि, त्रि०। तेन साहसमनुष्ठितं पुनः” काव्यप्र० ३साहसमनुसरति अण्। कृत्यकृते ३दण्डविशेषे पु० “साशीतिपणसाहस्रोदण्ड उत्तमसाहसः। तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः” स्मृति०। “पाकयज्ञे तु साहस” इत्युक्ते ४अग्निभेदे च पु०।

**साहसिक** त्रि० साहसे प्रसृतः ठक्। १मनुष्यमारणाद्यभिरते २चौरे ३पारदारिके ४पारुष्यकारिणि च।

**साहस्र** न० सहस्राणां समूहः अण्। १सहस्रसमूहे। स्वार्थे अण्। २सहस्रसङ्ख्यायाम् न०। सहस्र परिमाणमस्य अण्। ३सहस्रसंख्यान्विते त्रि०। ४सहस्रसंख्यकगजसमूहे पु० अमरः।

**साहायक** न० सहायस्य भावः वुञ्। साहाय्ये।

**साहाय्य** न० सहायस्य भावः ष्यञ्। सहायतायाम्।

**साहित्य** न० सहितस्य भाव ष्यञ्। १मेलने २परस्परसापेक्षाणां तुल्यरूपाणामेकक्रियान्वयित्वे ३बुद्धिविशेषविषयत्वे ३तुल्यवदेकक्रियान्वयित्वे ४एकक्रियान्वयित्वमात्रे ५बुद्धिविशेषविषयत्वे शब्दश० ६पद्यात्मके काव्ये च।

**साह्य** न० सह्यस्य भाव ष्यञ् सह–ण्यत् वा। १सह्यत्वे २मेलने धर्षणे ३सहनीये त्रि०।

**साह्वय** पु० सह आह्वयेनाभिधानेन। १अभिधानसहिते “जगाम गजसाह्वयम्” भारतम्। मेषादिप्राणिकरणद्यूतरूपे समाह्वये च शब्दर०।

**सिंह** पु स्त्री० हिन्स–अच् पृषो० “सिंहो वर्णविपर्य्ययात्” इत्युक्तेः वर्णविपर्य्ययः। स्वनामख्याते १पशुभेदे अमरः स्त्रियां ङीष्। गुहाशयशब्दे सिंहभावस्तथा दयताः। २रक्तशोभाञ्जने राजनि० ३मेषादितः पञ्चमे राशौ ज्यो० सिंहराशिश्च २१६०० कलात्मकराशिचक्रस्य ७२०० कलोपरि १८०० शतकलात्मकः मघापूर्वफल्गुन्युत्तरफल्गुन्याद्यपादात्मकः। “पुमान् स्थिरोऽग्निर्दिनपित्तरूपी-नोऽप्यपूर्वेण दशवत्तुष्यात्। समोदयो दीर्घरवोऽस्थसङ्गमको हरिः शैलतपोऽथ धूम्र” नील० ता० तत्स्वभावादि उक्तम्। तस्य स्वामी सूर्य्यः। ४जिनध्वजे हेमच०। ५उत्तरपदस्थः ५श्रेष्ठार्थे अमर। नरसिंह इवेति विग्रहे “उपमितं व्याघ्रादिभिः सामान्याप्रयोगे” पा० उपमितसमासे नरसिंहादिशब्दात् सिंहतुल्यशौर्य्यादियुक्तो नर इति बोधात् नरस्य श्रेष्ठत्व द्योत्यते इति बोध्यम्। ६वार्त्ता स्त्री राजनि०। ७प्रासादभेदे देवस्तुतिशब्दे १६८१ पृ० दृश्यम् ८सिंहासनभेदे तच्छब्दे दृश्यम्

**सिंहकेलि** पु० सिंहस्येव केलिरस्य। मञ्जुघोषे त्रिका०।

**सिंहकेशर** पु० सिंहस्येव केशरोऽस्य। बकुले त्रिका०।

**सिंहतल** पु० संहतल+पृषो०। करद्वयमेकत्ररूपे अञ्जलौ। रामाश्रमः। [राजनि०।

**सिंहतुण्ड** पु० सिंहस्येव तुण्डं मुखमस्य। सेहुण्डवृक्षे

**सिंहद्वार** न० सिंहचिह्नितं द्वारम् शाक०। पुरप्रवेशनयोग्ये द्वारे हेमच०।

**सिंहध्वनि** पु० सिंहस्येव ध्वनिः। १सिंहतुल्यनादे सिंहनादादयोऽप्यत्र अमरः। हृत०। २सिंहस्य शब्दे।

**सिंहनर्दिका** पु० सिंह इव नर्दति नर्द-ण्वुल्। (सिङ्गा) वाद्यभेदे हारा०।

**सिंहनादिका** स्त्री सिंहमपि नादयति नद-णिच्-ण्वुल्। १दुरालभायाम् शब्दच०। २सिंहनर्दिकायां हारा०।

**सिंहपर्णी** स्त्री सिंहस्य पुच्छ इव पर्णमस्याः ङीप्। वासकवृक्षे जटा०।

**सिंहपुच्छिका** स्त्री सिंहस्य पुच्छ इव पश्चाद्भागोऽस्याः-कप्, अत इत्वम्। चित्रपर्णिकायां (चुड़्चाकुले) वृक्षे रत्नमा०

**सिंहपुच्छी** स्त्री सिंहस्य पुच्छ इव पुष्पाणि पर्णानि वाऽस्याः ङीप्। १चित्रपर्ण्यां २पृश्निपर्ण्याम् अमरः ३माषपर्ण्याञ्च रत्नमा०। [पर्ण्याम् राजनि०।

**सिंहपुष्पी** स्त्री सिंहस्य पुच्छ इव पुष्पाण्यस्याः ङीष्। पृश्नि-

**सिंहमुखी** स्त्री सिंहस्य मुखं मुखमस्य दन्त इव पुष्पमस्याः ङीप्। वासके राजनि०।

**सिंहयाना** स्त्री सिंहो यानं वाहनं यस्याः। दुर्गायाम् हेमच० सिंहवाहनादयोऽप्यत्र।

**सिंहल** पु॰ सिंहोऽस्त्यत्र लच्। देशभेदे। तद्देशभवत्वात् २रङ्गे धातौ हेमच॰। ३रीतौ ४त्वचे च न॰ राजनि॰॥ सिंहलदेशश्च कूर्मविभागशब्दे २१६८ पृ॰ दक्षिणस्यामुक्तः। [तायां राजनि॰।

**सिंहलस्था** स्त्री सिंहले तिष्ठति स्था–क। सिंहल्यां च

**सिंहलास्थान** पु॰ सिंहलं आस्थानं यस्य। तालसदृशे वृक्षभेदे शब्दर॰।

**सिंहलील** पु॰ रतिबन्धभेदे "स्त्रिक्कोपरि स्थिता नारी भूमौ दत्त्वा पदद्वयम्। हृदये दत्तहस्ता चेत् सिंहलीलः प्रकीर्त्तितः"। स्त्रिक्कोपरि स्थिता नारी कान्तोरस्थपदद्वया। हृदये दत्तहस्ता चेत् सिंहलीलोऽप्ययं तथा" रतिम॰।

**सिंहवाहिनी** स्त्री सिंहरूपो वाहो विद्यतेऽस्या इनि। दुर्गायाम् "सिंहमारुह्य कल्पान्ते निहतो महिषो यतः। महिषघ्नी ततो देवी तथा वै सिंहवाहिनी" देवीपु॰ ४५अ॰।

**सिंहविक्रान्त** पुंस्त्री॰ सिंह इव विक्रान्तः। १अश्वे हारा॰ स्त्रियां ङीष्। २सिंहतुल्यविक्रमे त्रि॰। [राजनि॰।

**सिंहविन्ना** स्त्री सिंह इव विन्ना विद्–क्त। माषपर्ण्याम्

**सिंहसंहनन** त्रि॰ सिंहस्येव संहननमङ्गमस्य। १सर्वाङ्गसुन्दरे अमरः २सिंहतुल्यदृढाङ्गे च। "सिंहसंहननो युवा" रघु॰।

**सिंहा(सिङ्घा)ण** न॰ सिघि–आनच् पृषो॰। १लौहमले अमर॰। २नासिकामले (सिकनी) शब्दर॰।

**सिंहावलोक** पु॰ न्यायभेदे न्यायशब्दे ४१६९ पृ॰ दृश्यम्।

**सिंहासन** न॰ सिंहचिह्नितमासनम्। १राजासनभेदे तल्लक्षणं युक्तिकल्पतरौ दर्शितं यथा

"राज्ञो नृपासनं नाम श्रीसिंहासनमुच्यते। शुभे मुहूर्त्ते शुभमासवर्षे सुवारवेलातिथिचन्द्रयोगे। काले निरुत्पातनिरीतिभाजे सिंहासनारम्भविधिं वदन्ति। स्थिरराशिस्थिते भानौ चन्द्रे च स्थिरभोदिते। आसनारम्भणिष्वस्मिन्नध्वारम्भोऽपि नेष्ट च"। एतेन रथारम्भसिंहासनयोरारम्भ एक एव कालः। तत्र क्रमः "आसनेदाग्निपर्वाणि सोपानानि युगैः क्रमात्। चत्वारिंशत्तथा त्रिंशत् विंशति षोडशैव च। सिंहाङ्कितानि ज्ञेयानि चरणानि युगैः क्रमात्। पद्मः शङ्खो गजो हंसः सिंहो भृङ्गो मृगो हयः। अष्टौ सिंहासनानीति नीतिशास्त्रविदो विदुः। भोदित्यादि दशाशाना भूपतीना यथाक्रमम्। राज्ञः अष्टोत्तराभिरासामपरिचाङ्गयोः। राजपालमिदं नाम सोपान पुरुषोन्नतम्। तदर्द्धमानं तन्मध्ये राजासनमुदाहृतम्। सर्वोन्नतमिदं रम्यं प्रोक्तं कलिमलीभुजाम्। दिगष्टकं स्थिकोणः स्यात् ब्रह्मादीनां यथायथम्"। अथाष्टानां लक्षणानि "गम्भारीकाष्ठघटितः पद्ममालोपचित्रितः। पद्मरागविचित्राङ्गः शुद्धः काञ्चनसंहतः। चरणाग्रे पद्मकोषात् पद्मरागविचित्रिताः। त्रिंशत्तौ पुत्तिका राजदादशाङ्कविसम्मिताः। राजासनं चतस्र एवं द्वादशपुत्तिका। रत्नैश्च नवभिः कार्यं निर्माणं चान्तरान्तरा। रत्नवस्त्रावृतं ह्येतत् पद्मसिंहासनं१ मतम्। अत्रोपविश्य नरपतिः प्रतापमतिविन्दति। महेन्द्रकाष्ठघटितं शङ्खमालापशोभितः। शुद्धस्फटिकचित्राङ्गः शुद्धरूप्योपशोभितः। चरणाग्रे शङ्खनाम्यः पुत्तिकाः सप्तविंशतिः। स्थाने स्थाने विधातव्याः शुद्धस्फटिककंकताः। शुक्लपट्टावृत ह्येतत् शङ्खसिंहासनं२ मतम्। पनसेनोपघटितो गजमालोपशोभितः। विद्रुमैरपि वैदूर्यैः काञ्चनेनापि शोभितः। चरणाग्रे गजशिरःपुष्पाद्यैकैकपुत्तिका। माणिक्यरचितारक्तवस्त्रादिकविभूषणम्। गजसिंहासनं३ नाम साम्राज्यफलदायकम्। शालकाष्ठेन घटितो हंसमालोपशोभितः। पुष्परागैः काञ्चनेन कुरुविन्देश्च चित्रितः। चरणाग्रे हंसरूपाः पुत्तिकास्त्वेकविंशतिः। गोमेदकोपघटिताः पीतवस्त्रविभूषणम्। हंससिंहासनं४ नाम सर्वाभीष्टविनाशनम्। चन्दनेनोपघटितः सिंहमालोपभूषितः। शुद्धहीरकचित्राङ्गः शुद्धकाञ्चननिर्मितः। चरणानां सिंहवेशाः पुत्तिकाश्चैकविंशतिः। मुक्ताशुक्तिभिरम्यैश्च निर्मलैरेव भूषणम्। शुद्धशुक्लाम्बरं ह्येतत् सिंहसिंहासनं५ मतम्। अत्रोपविश्य नरपतिः कृत्स्नां साधयति क्षितिम्। भृङ्गमालोपसहितं शुद्धचम्पकचित्रितम्। शुद्धैर्मरकतैर्युक्तं पादाग्रे पद्मकोषिकाः। द्वाविंशतिः पुत्तिकास्तु नीलवस्त्रादिभूषणम्। भृङ्गसिंहासनं६ नाम मनुजजयप्रदम्। निम्बकाष्ठेन घटितं मृगमालोपशोभितम्। शुद्धनीलैर्महानीलैः काञ्चनेनापि चित्रितम्। चरणाग्रे मृगशिरश्चत्वारिंशच्च पुत्तिकाः। नीलवस्त्रादियुक्तन्तु मृगसिंहासनं७ मतम्। लक्ष्मीविजयसम्पत्तिर्भृत्यपदप्रदम्। केशरेणोपघटितं हयमालोपशोभितम्। समस्तवस्त्रैर्भूषिताः पुत्तिकाः पञ्चषष्टि। चरणाग्रे हयशिरश्चित्रवस्त्रादिभूषणम्। हयसिंहासनं८ नाम लक्ष्मी

षोडशद्वयवर्णं तद्युतौ सखे। आनतमू। द्वादशवर्णं सुवर्णं मूर्छितयो स्वर्णमाने मे।

न्यासः १६ १०

० ०

स्वाध्यो वर्णः १२ कल्पितमिष्टम्।

अस्मै सुवर्णमाने १६ १०

२ ४

अथवा द्विकेनेष्टेन १६ १०

४ ८

अष्टेनेष्टेन या १६ १०

१ २

**सुवर्णगैरिक** सुवर्णमिव पीतं गैरिकम्। (वर्णकमाटि) गैरिकभेदे राजनि०। "गैरिकं मधुरं पीतं कषायं व्रणरोपणम्। विस्फोटार्शोऽग्निदाहघ्नं चर स्वर्णादिकं शुभम्" राजनि० तद्गुणा उक्ताः।

**सुवर्णजीविक** पुंस्त्री० सुवर्णं तत्क्रयविक्रयौ जीविका यस्य। सुवर्णवणिजि जातिभेदे स्त्रियां ङीष्। तज्जन्मकथा "गान्धिकः शाङ्खिकश्चैव कांस्यको मणिकारकः। सुवर्णजीविकश्चैव पञ्चैते वणिजः स्मृताः"। "अम्बष्ठात् रजपुत्र्यान्तु जायते गान्धिको वणिक्। गन्धचन्दनधूपादिक्रयविक्रयकारकः। गान्धिकात् रजपुत्र्यान्तु संजातः शाङ्खिको वणिक्। शङ्खं दत्त्वा मुनेः पल्यै शङ्खजीवी प्रकीर्त्तितः। शाङ्खिकात् गान्धिकाज्जातः कांस्यकाद्योपजीविकः। शाङ्खिकात् कांस्यकन्यायां मणिकार प्रजायते। कांस्यकाराच्च माणिक्यात् सुवर्णजीविको ऽभवत् परापरजातिभाषा। तस्य पातित्यकारण ब्रह्मवै० ब्रह्मख० १०अ० उक्तं यथा "कश्चिद् वणिग्विशेषश्च ससर्ज स्वर्णकारिणः। स्वर्णचौर्यादिदोषेण पतितो ब्रह्मशापतः।" [मल्लाम् राजनि०।

**सुवर्णनकुली** स्त्री० सुवर्णमिव पीता नकुली। महाज्योतिष्मत्याम्।

**सुवर्णपुष्प** पु० सुवर्णमिव पुष्पमस्य। राजतरुणीदले राजनि०

**सुवर्णप्रसर** न० सुवर्णस्य प्रसर इव यत्र। एलवालुके वैद्यक०।

**सुवर्णवणिज्** पु० सुवर्णस्य वणिक् क्रयविक्रयादिकर्त्ता। जातिभेदे (सोनारवेणे)। स्वर्णवणिक्सुवर्णजीविकशब्दे दृश्यम्।

**सुवर्णबिन्दु** पु० सुवर्णस्य बिन्दुर्यत्र। विष्णौ हेमच०।

**सुवर्णयूथी** स्त्री० सुवर्णमिव पीता यूथी। पीतवर्णयूथिकायाम् राजनि०। "यूथिका मागधाख्याता सा पीता हेम पुष्पिका। यूथीयुगं हिम तिक्तं कटुपाकं सर मधु मधुरं तुवर हृद्यं पित्तघ्नं कफनाशनम्। प्रवाससवदन्तास्थिशिरोरोगविषापहम्" भावप्र०।

**सुवर्णवर्णा** स्त्री सुवर्णस्येव वर्णो यस्याः। १हरिद्रायाम् शब्दच०। २स्वर्णतुल्यवर्णयुक्ते त्रि०। ३विष्णौ पु० विष्णुस०। "तस्माद्गणत्वात् सर्वमेव सुवर्णमिति श्रुतसाधारणम्" भा०। स्वर्णस्य मूल्यभेदक्रस्वणके ४वर्णे पु० सुवर्णगणितशब्दे दृश्यम्।

**सुवर्णा** स्त्री सुष्ठु वर्णो यस्याः। १कालागुरुणि मेदि०। २वाणक्षवके शब्दमा०। ३स्वर्णक्षीर्य्यां ४हरिद्रायाम् राजनि०। ५मायूकपर्णी स्त्री राजनि० गौ०ङीप्।

**सुवयस्** स्त्री सुष्ठु वयोऽस्याः। प्रौढायां स्त्रियाम् राजनि०।

**सुवल्लि(ल्ली)** स्त्री प्रा०स०। सोमराजीलतायाम् अमर०।

**सुवसन्त** पु० प्रा०स०। चैत्रावल्या त्रिका०।

**सुवसन्तक** पु० सुवसन्तेन कायति कै—क। माधवीलतायां २मदनोत्सवे च मेदि०।

**सुवहा** स्त्री सुखेन उह्यते वायुनासौ सु+वह—खल्। १शेफालिकायां २रास्नायां ३माषपर्ण्याम् ४सल्लकीर्याम् अमरः ५गन्धकया ६वीणायां मेदि०। ७त्रिवृतायाम् शब्दच०। ८हंसपद्यां ९महाजटायां १०गन्धनाकुल्यां ११सुमल्यां १२नीलसिन्धुवारे च राजनि०। १३सुखवाह्ये त्रि० मेदि०। सम्यग् वहति सु+वह—अच्।१४सम्यग्वाहके त्रि०हेमच०।

**सुवास** पु० सुष्ठु वासः। १सद्गन्धे २सुखनिवासे च। दृश्य०। ३सद्गन्धयुक्ते ४सम्यग्वासान्विते च त्रि०।

**सुवासिनी** स्त्री सुखेन पित्राद्यवियोगेन वसति सु+वस—णिनि ङीप्। चिरण्टीयां चिर पितृगृहवासिन्यां स्त्रियाम् अमरः।

**सुविद्** पु० सुष्ठु वेत्ति सु+विद्—क्विप्। १पण्डिते। सुष्ठु विद्यते लभ्यते सु+विद्—लाभे क्विप्। २गुणाढ्यायां स्त्रियां स्त्री रामाश्रम०।

**सुविद** पु० सु+विद्—क। १कञ्चुकिनि रायमु० २नृपे भरत०।

**सुविदत्** पु० सुविदं गुणाढ्यां स्त्रियमतति अत—क्विप्। नृपे रायमु०।

**सुविदत्र** त्रि० सु+विद कत्रच्। कुटुम्बे उणादि०।

**सुविदल्ल** पु० सुविदतं राजानं लाति ला—क। १अन्तःपुरे कृताधिकारे कञ्चुकिनि अमर। सुविदला राज्ञा जीवन्ते ला—क। २अन्तःपुरस्त्रीनार्य्यां स्त्री रायमुकुटः।

**सुविनीता** स्त्री सु+वि+नी—क्त। १सुशीलायां गवि शब्दर०। २सुविनययुक्ते त्रि०।

**सुवीज** पु० सुष्ठु वीजमतेऽस्मै वीज-क । (खसखस) इत्यभेदे राजनि० ६व० । २सुन्दरवीजयुते त्रि० । प्रा० स० । ३सुन्दरे वीजे न० ।

**सुवीरक** न० सु+वीर-ण्वुल् । सौवीराञ्जने शब्दच० ।

**सुवीराम्ल** न० सुवीरयति सुवीर्य्यामृतं करोति सु+वीर-कप् तादृशोऽम्लोऽस्य । काञ्जिके जटा० ।

**सुवीर्य्य** न० सुष्ठु वीर्य्यं यस्मात् ५ब० । १बदरीफले २वन-कार्पास्यां स्त्री शब्दर० । प्रा०स० । ३उत्तमे वीर्य्ये न० ।

**सुवृत्त** पु० सुष्ठु वृत्त वर्त्तुल० । १शूरणे (ओल) राजनि० २सुन्दरवृत्तान्विते त्रि० ३शतपत्र्यां ४काकल्यां ५द्राक्षा-यां च स्त्री राजनि० ६सुवृत्ते त्रि० ।

**सुवेगा** स्त्री सुष्ठु वेगो यस्यास्ति वारणवेगो यस्याः ५त० । १महाज्योतिष्मत्याम् राजनि०।२उत्तमवेगान्विते त्रि० ।

**सुवेल** पु० सुगता वेला समुद्रकूलं येन प्रा० ब० । १त्रिकूटपर्व्वते हेमच० सुष्ठु वेला मर्य्यादा स्थितिः यस्य । २शान्ते ३प्रणते च त्रि० मेदि० ।

**सुवेश** पु० सुखेन विश्यते उपभुज्यते सु+विश-कर्म्मणि घञ् । १श्वेतक्षौ राजनि० प्रा०ब०। २सुन्दरवेशयुक्ते त्रि० ।

**सुव्रता** स्त्री सुष्ठु व्रतं नियमो यस्याः । १सुशीलायां गवि शब्दर० । २सुन्दरव्रतयुक्ते त्रि० । ३जिनभेदे पु० हेमच० ।

**सुशर्म्मन्** पु० शॄ-मनिन् सुष्ठु शर्म्म सुखं यस्य । १नृपभेदे इदृद्भेमन्नपपुत्रे भा०आ०।८८अ० । २सुन्दरसुखयुते त्रि० । ३तृतीयमनुपुत्रभेदे पु० हरिवं० ७अ० । ४कुत्सितब्राह्मणभेदे "सुशर्म्मा नाम दुर्मेधाः कौशा पापात्मनामभूत् । धर्मा-त्मायविदा यश्च विप्राणां क्रूरकर्म्मणाम्" पाद्मो० ख० ८० अ० ।

**सुशल्य** पु० सुष्ठु शल्यं यस्य यस्मात् ५ब० । खदिरे राजनि० ।

**सुशवी** स्त्री सु+शव-अच् गौरा० ङीष् । १कारवेल्ले २कृष्ण-जीरके च भरतः ।

**सुशाक** न० सुष्ठु शाको यस्मात् ५ब० । १आर्द्रके राजनि० । शाके तद्व्योगे हि शाकस्य सुस्वादुता । सुष्ठु शाको यस्य । २चञ्चु शाके ३तण्डुलीये (नटेशाक) ४भिण्डायां पु० राजनि० ।

**सुशिख** पु० सुन्दरी शिखा यस्य । १वह्नौ जटा० २चित्रकवृक्षे च । ३शोभनशिखायुक्ते त्रि० ४मयूरशिखायां स्त्री राजनि० । [१तदति त्रि० । ३सुकण्ठके पु० राजनि० ।

**सुशीत** न० प्रा०स० । १पीतचन्दने शब्दच० २अतिशीतस्पर्शे

**सुशीतल** न० प्रा०स० । १गन्धतृणे रत्नमा० । २अतिशीतगुण-युक्ते त्रि० । [क्तायां स्त्रियां च ।

**सुशीता** स्त्री प्रा०स० । १शतपत्र्याम् राजनि० २शीतगुण-

**सुशीम** पु० सु+श्यै मक् सम्प्रसारणञ्च । १शीतस्पर्शे २तद्वति त्रि० अमर ।

**सुशील** पु० सुन्दर-शीलमस्य । विष्णुपार्षदभेदे राजनि० । २शोभनचरितान्विते त्रि० ३कृष्णस्यलक्ष्मणाख्यमहिषीभेदे स्त्री पाद्मपु० उत्तरख० ६८अ० । [शीयुक्ते त्रि० ।

**सुश्रीक** स्त्री सुन्दरी श्रीरस्य कप् । १शल्लकीवृक्षे २सुन्दर-

**सुश्रुत** पु० सुश्रु यत सु+श्रु-कर्म्मणि क्त । १विश्वामित्रस्य पुत्रे चिकित्साशास्त्रकर्त्तरि मुनिभेदे आयुर्वेदशब्दे ७८० पृ० दृश्यम् । २तत्कृतग्रन्थे च । ३सुन्दरश्रुत त्रि० । "देवा-कर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलम्" नैष० । [च ।

**सुश्लिष्ट** त्रि० सु+श्लिष-क्त ।१सुसंयुक्ते २दृढमिलिते ।३सुसङ्गते

**सुषम** पु० सुन्दरः समः प्रा०स० सुषामा० षत्वम् । । १शो-भने समे २परमायां शोभायां स्त्री अमर ।

**सुषवी** स्त्री सु+सु-अच् गौरा० ङीष् । १कारवेल्ले अमरः । २क्षुद्रकारवेल्ले राजनि० ३जीरके ४कृष्णजीरके च मेदि० ।

**सुषामन्** त्रि० सुष्ठु साम यस्य सुषामादि० षत्वम् । सुषाम्नने स्त्रियां वा ङ प् ङीप् च ।

**सुषि** स्त्री शुष-इन् पृषो० शस्य सः । शुषौ छिद्रे भरतः ।

**सुषिर** न० शुष-किरच् पृषो० शस्य सः । छिद्रे भरत ।

**सुषीम** पु० सुशीम+पृषो० । १शीतस्पर्शे २तद्वति अमर । ३मनोज्ञे त्रि० मेदि० ।

**सुषुप्त** न० सु+स्वप-भावे क्त । "यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तमिति" श्रुत्युक्ते १ज्ञानशून्यावस्थाभेदे । कर्त्तरि क्त २तदवस्थान्विते त्रि० ।

**सुषुप्ति** स्त्री सु+स्वप-क्तिन् । पुरीतति नाड्यां मनसः प्रवेश-रूपे १सर्वज्ञानशून्ये जीवावस्थाभेदे वेदान्तोक्ते २सर्व-पदार्थशून्ये स्वप्ने च ।

**सुषुम्णा** स्त्री सुषु रसव्यक्तं यत्न म्नायति यत्र म्ना-क । तन्त्रोक्ते मेरुदण्डबाह्यस्ये इडापिङ्गलानाड्योर्मध्यस्थे सूक्ष्मे नाडीभेदे । "मेरोर्बाह्यप्रदेशे शशिमिहिरशिरे सव्यदक्षे निषण्णे मध्ये नाडी सुषुम्णा त्रितयगुण-मयी चन्द्रसूर्य्याग्निरूपा" षट्चक्रभेदतन्त्रम् । तस्याः शुभाशुभज्ञानयोगो यथा "क्षणं वामे क्षणं दक्षे यदा वहति मारुतः । सुषुम्णा सा च विज्ञेया सर्वकार्यहराऽ-शुभा । तस्यां नाड्यां स्थितो वह्निर्ज्वलति कालरूपकः । विषम तं विजानीयात् सर्वकार्य्यविनाशनम् । यदाऽनु-क्रमपरिक्रम्य तस्यां नाड्यां द्वयं वहेत् । तदा तस्य विजा-नीयादशुभं समुपस्थितम्" इति शब्दार्थचिन्तामणिः ।

"मेरुमध्ये इडा नाडी पिङ्गलया समन्विता। सुषुम्णा भानुमार्गेण ब्रह्मद्वारावधि स्थिता" योगस्वरोदय।

**सुषेण** पु० सुष्ठु सेनयति सेना करोति अच् षत्वम्। १करमर्दके (करमच.) अमर। २वेतसे राजनि० ३चिकित्सके वानरभेदे। ४विष्णौ च मेदि० ५त्रिवृति स्त्री राजनि० ङीप्। स्वार्थे क अत इत्त्वम्। कृष्णत्रिवृति स्त्री अमर.।

**सुषोमा** स्त्री नदीभेदे भाग० ५।१९ अ०।

**सुष्ठु** अव्य० सु+स्था-कु। १प्रशंसायाम् २अतिशये अमरः। ३सत्ये च शब्दरत्ना०।

**सुष्म** न० सु-मक् सुक् च। रज्ज्वां क्षीरस्वामी।

**सुसंस्कृत** त्रि० सु+सम्+कृ-क्त सुम् च। १प्रयत्नेन घृतादिनानाद्रव्येण पक्वे व्यञ्जनादौ अमरः २उत्तमसंस्कारयुते त्रि०।

**सुसत्या** स्त्री जनकराजभार्यायाम् कालिकापु० ३७ अ०।

**सुसम्पद्** स्त्री प्रा०स०। १सौभाग्ये त्रिका० सुष्ठु सम्पद् यस्य। २सुसम्पन्ने त्रि०। [सारयुते त्रि०।

**सुसार** पु० सुष्ठु सारोऽस्य। १रक्तखदिरे राजनि०। २अति-

**सुसारवत्** न० सुष्ठु सारोऽस्त्यस्य मतुप् मस्य वः। स्फटिके त्रिका०। [कायाम् न० व०।

**सुसिकता** स्त्री प्रा०स०। शर्करायाम् राजनि०। २उत्तमवालु-

**सुस्थ** त्रि० सुखेन तिष्ठति सु+स्था-क। १आरोग्येण युक्ते २सुखिनि च।

**सुस्ना** पु० सु+स्ना-क्विप्। (खेँसारी) शमीधान्यभेदे राजनि० "सुस्ना दुर्जरको रूक्षः कषायो विशदो गुरुः" राजनि०।

**सुस्नात** त्रि० सुष्ठु स्नातः सु+स्ना-क्त। मङ्गलद्रव्येण कृतस्नाने।

**सुस्मिता** स्त्री सुष्ठु स्मितमस्य। नारीभेदे हेम०च०

**सुहित** त्रि० सु+धा-क्त। १तृप्ते २विहिते च विश्व। प्रा०स०। ३सुन्दरहिते न०। ५अ०। ४अग्निजिह्वाभेदे स्त्री जटा०।

**सुहृद्** पु० सुष्ठु हृदयं यस्य मित्रार्थे हृदादेश। १मित्रे २ज्योतिषोक्ते लग्नाच्चतुर्थस्थाने च। [२सुचित्ते न०।

**सुहृदय** त्रि० सुष्ठु हृदयं यस्य। १प्रशस्तमनस्के अमर०। प्रा०स०।

**सुहृद्बल** न० सुहृदेव बलम्। मित्ररूपे सैन्ये।

**सुहोत्र** पु०। चन्द्रवंशीयबृहदिषुराजपुत्रे। "बृहदिषोश्च दायादः सुहोत्रो नाम धार्मिकः। सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह" हरिवं० २० अ०।

**सू** स्त्री सू-क्विप्। १सूतौ २प्रसवे ३क्षेपे ४प्रेरणे च।

**सूक** न० सू-प्रेरणे क्विप् संज्ञायां कन्। १उत्पले २वाणे ३वाते च मेदि०।

**सूकर** पुंस्त्री० सू-इत्यव्यक्तं शब्दं करोति कृ-अच्। १वराहे २कुम्भकारे ३मृगभेदे च शब्दर० स्त्रियां ङीष्। ङीषन्तः ४वाराहक्रान्तायां शब्दमा०।

**सूक्त** न० सु+वच-भावे क्त। १सुन्दरकथने २विशिष्टकार्थप्रतिपादके एकदैवत्ये वेदमन्त्रसमुदाये च यथा श्रीसूक्तं पुरुषसूक्तमित्यादि। तानि च वेदे बहूनि सन्ति तत्र महादानोपयोगीनि कति चित् सूक्तानि तुलादानादिपद्धतौ अस्माभि उद्धृतानि तानि च तत्र द्रष्टव्यानि। "जप्यानि सूक्तानि तथैव चैषाम्" वह्निपुराणम्। ३शारिकायां स्त्री त्रिका०। क्तिन्। सूक्ति सुष्ठूक्तौ स्त्री।

**सूक्ष्म** न० सूच-मन् सुक् च नेट्। १कैतवे २अध्यात्मपदार्थे मेदि० ३अर्थालङ्कारभेदे अलङ्कारशब्दे ४०७पृ० दृश्यम्। ४कतकवृक्षे पु० शब्दर०। ५अणुपरिमाणयुते ६स्वल्पे च त्रि०। [जम्बूवृक्षे रत्नमा०।

**सूक्ष्मकृष्णफला** स्त्री सूक्ष्मं कृष्णं फलं यस्याः। मध्यम-

**सूक्ष्मतण्डुल** पु० सूक्ष्मस्तण्डुलोऽस्य। (खसखस) इति ख्याते १वृक्षे २पिप्पल्यां स्त्री राजनि०। [कुशाग्रीयबुद्धौ।

**सूक्ष्मदर्शिन्** त्रि० सूक्ष्मं पश्यति दृश-णिनि। अत्यन्तसूक्ष्म-

**सूक्ष्मपत्र** पु० सूक्ष्मं पत्रमस्य। १धन्यके २वनजीरके ३देवसर्षपे ४लघुबदरे ५सुरपर्णे ६लोहितेक्षौ च राजनि०। ७वनबर्बर्य्यां दशावकृष्ये शब्दर०। कप् अत इत्त्वम्। सूक्ष्मपत्रिका शतपुष्पायां शतावर्य्यां लघुब्राह्मयां दुरालभायाम् आकाशमांस्यां स्त्री राजनि०।

**सूक्ष्मपिप्पली** स्त्री कर्म०। वनपिप्पल्याम् राजनि०।

**सूक्ष्मपुष्पी** स्त्री सूक्ष्माणि पुष्पाण्यस्याः ङीप्। यवतिक्तायाम् राजनि०। [२भूकर्बुदारे राजनि०।

**सूक्ष्मफला** स्त्री सूक्ष्मं फलमस्याः। १भूम्यामलक्याम् रत्नमा०

**सूक्ष्मबदरी** स्त्री कर्म०। भूमिबदर्य्याम् राजनि०।

**सूक्ष्मभूत** न० कर्म०। वेदान्तप्रसिद्धे अपञ्चीकृते भूम्यादीनां पञ्चानां भूतानां सूक्ष्मांशभेदे। [मशके राजनि०।

**सूक्ष्ममक्षिक** पु० सूक्ष्मा मक्षिका तदाकारोऽस्त्यस्य अच्।

**सूक्ष्ममूला** स्त्री सूक्ष्मं मूलमस्याः। जयन्त्याम् राजनि०।

**सूक्ष्मवल्ली** स्त्री कर्म०। १ताम्रवल्ल्यां २जतुकायाञ्च राजनि०।

**सूक्ष्मबीज** पु० सूक्ष्मं बीजमस्य। (खसखस) ख्याते वृक्षे राजनि०।

**सूक्ष्मशर्करा** स्त्री कर्म०। वालुकायाम् राजनि०।

**सूक्ष्मशाख** पु० सूक्ष्मा शाखाऽस्य। जालबर्बुरे राजनि०।

**सूक्ष्मशालि** पु० कर्म०। अणुधान्ये श्यामाकादौ राजनि०।

**सूक्ष्मषट्चरण** पु॰ सूक्ष्मः षट्चरण इव । पक्ष्मयूके राजनि॰

**सूक्ष्मा** स्त्री सूच–मन् सुक् च नेट् टाप् । १यूथिकायां शब्दच॰ । २क्षुद्रैलायां ३करुणायां ४वालुकायाञ्च राजनि॰ ।

**सूक्ष्माङ्ग** न॰ कर्म॰ । "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्" वेदान्तोक्ते भोगसाधने लोकद्वयगामिनि लिङ्गदेहे । सूक्ष्मशरीरादयोऽप्यत्र । सांख्यमते त्वयान्यविधसप्तदशावयवत्त्व यथोक्तं सा॰ का॰ तत्त्वकौ॰ । "सूक्ष्मास्तेषां नियता मातापितृजा निवर्त्तन्ते" का॰ "सूक्ष्मादेहाः परिकल्पिता" तत्त्वकौ॰ । "परिकल्पिता अनुमिता परलोके कर्मफलभोग सूक्ष्मदेह विनाऽनुपपन्नः भोगत्वात् स्थूलदेहारब्धकृष्यादिजनितस्य सस्यस्य स्वदेहेनैव भोगवत् स्वदेहारब्धकर्मादिफलं यत्तत् स्वदेहेनैव भोग्यम् नेतरेण अन्यथा कृतहानाकृताभ्यागमप्रसङ्ग इत्यादितर्कस्तत्रानुसन्धेय । "पूर्वोत्पन्नमस(स)क्तं नियतं महदादिसूक्ष्मपर्य्यन्तम् । संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" का॰ । "प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् । अस(श)क्तमव्याहत शिलामप्यनुविशति नियतम् आ आदिसर्गात् आ च महाप्रलयादवतिष्ठते महदादिसूक्ष्मपर्य्यन्तं महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्य्यन्तम् एषां समुदाय सूक्ष्मशरीरं शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेष" कौ॰ ।

**सूक्ष्मैला** स्त्री कर्म॰ । क्षुद्रैलायाम् (गुजराटी एलाच्) रत्नमा॰

**सूच** पैशुन्ये (अन्तर्दोषे) अद॰ चु॰ उभ॰ सक॰ सेट् । सूचयति ते असुसूचत् त । वक्षचकत्वान्न षोपदेशः ।

**सूचक** त्रि॰ सूचयति अन्तर्दुष्यति सूच–ण्वुल् । १पिशुने अमरः अन्तर्दोषवति २बाधके च । ३काके ४कुक्कुरे ५विडाले पु स्त्री॰ मेदि॰ स्त्रियां ङीष् । ६पिशाचे ७सिद्धगणे ८बुद्धे शब्दर॰ । ९नाटकप्रसिद्धे सूत्रधाराख्ये प्रधाननटे १०कथके हेमच॰ ११सूक्ष्मशालौ पु॰ राजनि॰ १२सीवनसाधनद्रव्ये पु॰ मेदि॰ ।

**सूचन** न॰ सूच-भावे ल्युट् । १छिद्रने २ज्ञापने च । युच् । तत्र दृष्टौ पीडयाम् अभिनये च स्त्री विश्व ।

**सूचि(ची)** स्त्री सूच–इन् वा ङीप् । १सीवनसाधने स्वनामख्याते लोहमयपदार्थे अमर २शिखायां ३नृत्यभेदे रत्नको॰ । [जोविमि (टरजि) शब्दर॰ ।

**सूचिक** त्रि॰ सूचि तया सीवन शिल्पमस्त्यस्य ठन् । सूच्या-

**सूचिका** स्त्री सूचि+स्वार्थे क । १सूच्याम् । सूचिरिव कायति कै–क । २हस्तिशुण्डायाम् । सूचिकाधरः ।

**सूचिकाधर** पुंस्त्री॰ सूचिका शुण्डा धरति धृ–अच् । गजे शब्दर॰ स्त्रियां ङीष् ।

**सूचिकाभरण** न॰ वैद्यकोक्ते औषधभेदे तत्पाकादि यथा "विष पलमितं सूतं शाणकं चूर्णयेद्द्वयम् । तच्चूर्णं सम्पुटे कृत्वा काचलिप्तशरावयोः । मुद्रां कृत्वाथ संशोष्य ततश्चुल्ल्यां निवेशयेत् । वह्निं शनैः शनैः कुर्य्यात् प्रहरद्वयसङ्ख्यया । तत उद्घाटय तन्मुद्रामुपरिस्थशरावकात् । संलग्नो यो भवेत् सूतस्तं गृह्णीयाच्छनैः शनैः । वायुस्पर्शो यथा न स्यात्तत कूप्यां निवेशयेत् । यावत् सूच्या मुखे लग्नं कूप्या निर्याति भेषजम् । तावन्मात्रो रसो देयो मूर्च्छिते सन्निपातिनि । क्षुरेण प्रच्छिते मूर्ध्नि तत्राङ्गुल्या च घर्षयेत् । रक्तभेषजसम्पर्कात् मूर्च्छितोऽपि हि जीवति । तथैव सर्पदष्टोऽपि मृतावस्थोऽपि जीवति । यदा तापो भवेत्तस्य मधुरं तत्र दीयते" भैषज्यरत्ना॰ । "विष पल रस शाणं तच्चूर्णं काचलेपिते । मृत्संपुटे च संरुध्य चुल्ल्यां संस्थाप्य पाचयेत् । शनैर्यामद्वयं पक्त्वा तं समुद्घाट्य शीतलम् । ऊर्ध्वपात्रगत धूमं गृहीत्वाऽस्य तु मारुतम् । यावत् सूच्या मुखे लग्नं कूप्या आयाति भेषजम् । क्षुरेण प्रच्छिते शीर्षे तत्राङ्गुल्या च घर्षयेत् । त्रिदोषे मूर्च्छितो जीवो रक्तभेषजसङ्गमात् । सर्पदष्टो मृतावस्थः सोऽपि जीवति तत्क्षणात् । दद्याच्च मधुरं तोय सूचिकाभरणे रसे" इति रसप्रदीप ।

**सूचिकामुख** पु॰ सूचिकेव क्रमसूक्ष्म मुखमस्य । १शङ्खे हारा॰ ६त॰ । ६सूच्यामुखे न॰ ।

**सूचि(ची)क्षेत्र** न॰ सूच्याकार क्षेत्रम् । लीलावतीप्रसिद्धे सूच्याकारके क्षेत्रभेदे क्षेत्रशब्दे २४०० पृ॰ दृश्यम् ।

**सूचित** त्रि॰ सूच–क्त । १कथिते २बोधिते ३हिंसिते च ।

**सूचिपत्त्रक** पु॰ सूचिरिव पत्त्रमस्य कप् । शितावरशाके राजनि॰ । सूचीदलादयोऽप्यत्र ।

**सूचिपुष्प** पु॰ सूच्याकार पुष्प पुष्पाग्रं यस्य । केतकवृक्षे जटा॰ । सूचीपुष्पादयोऽप्यत्र ।

**सूचिरोमन्** पु॰ सूचिरिव रोमाऽस्य । वराहे हारा॰ सूचीरोमन् तत्रार्थे त्रिका॰ । [व । गरुडे शब्दर॰ ।

**सूचिवत्** पु॰ सूचिरिव तदाकारपक्षु रस्त्यस्य मतुप् मस्य

**सूचिवदन** पु स्त्री॰ सूचिरिव वदनं यस्य । १नकुले स्त्रियां जातित्वात् ङीष् । २मशके पु॰ राजनि॰ ।

**सूचिशालि** पु॰ कर्म॰ । सूक्ष्मधान्ये श्यामाकादौ राजनि॰ ।

शुद्धिं शुभग्रहे। सूतिकागृहप्रवेशे कालविशेषमाह ज्योतिर्विदाभरणे "अथातः सम्प्रवक्ष्यामि सूतिकागारवेशनम्। मासे तु नवमे प्राप्ते पूर्वपक्षे शुभे दिने। प्रसूतिसमये काले सद्य एव प्रवेशयेत्" इति। पूर्वपक्षे शुक्लपक्षे नक्षत्रादीन्याह गर्गः "रोहिण्यैन्द्रवपौष्णेषु स्वातीवारुणयोरपि। पुष्ये पुनर्वसौ हस्तधनिष्ठा त्रुत्तरासु च" इति। "मैत्रत्वाष्ट्रे तथाश्विन्या सूतिकागारवेशनम्। सर्वे शुभग्रहा केन्द्रे पापाश्च त्रिषडायगाः। शुभांशे शुभसन्दृष्टौ सूतिकागारवेशनमिति"।

तदाकारमाह भावप्र० "अष्टहस्तायतं चारु चतुर्हस्तविशालकम्। प्राचीद्वारमुदग्द्वार विदध्यात् सूतिकागृहम्"।

**सूतिकारोग** पु० ६त०। भावप्र० उक्ते रोगभेदे तन्निदानादि यथा "मिथ्योपचारात् संक्लेशात् विषमाजीर्णभोजनात्। सूतिकायास्तु ये रोगा जायन्ते दारुणाश्च ते"। मिथ्योपचारात् अनुचिताचरणात् प्रवातादिसेवनात्। संक्लेशात् संक्लिश्यन्ते दोषा अनेन इति संक्लेशः दोषजनकश्रमस्तस्मात्। दारुणाः कष्टसाध्याः। के ते व्याधय इत्याकाङ्क्षायामाह "अङ्गमर्दो ज्वरः कासः पिपासा गुरुगात्रता। शोथ शूलातिसारौ च सूतिकारोगलक्षणम्। एतेऽङ्गमर्दादयः प्रायेण सूतिकाया भवन्तः सूतिकारोगत्वेन लक्ष्यन्ते। ज्वरादीनां रोगविशेषाणां निदानविशेषमाह "ज्वरातीसारशोथाश्च शूलानाहबलक्षयाः। तन्द्रारुचिप्रसेकाद्या वातश्लेष्मसमुद्भवाः। कृच्छ्रसाध्या हि ते रोगाः क्षीणमांसबलाश्रिताः। ते सर्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवाः" सूतिकाभवत्वेन सूतिकानाम्ना ते रोगाः क्षाम्यवाश्रित शोरभेदोपचारात् ते चाप्युपद्रवा इति त एव ज्वराद्य उक्तानां रोगाणामन्यतम प्रधानीकृत्योपद्रवाः"।

**सूतिकाषष्ठी** स्त्री सूतिकागृहे पूज्या षष्ठी शाक०। सूतिकागारे प्रसवावधि षष्ठे दिवसे पूज्यायां षष्ठीदेव्याम्। यथाह "विष्णुधर्मोत्तरे "सूतिकावासनिलया जन्मदा नाम देवता। तस्या यागनिमित्तार्थं शुद्धिर्जन्मनि कीर्त्तिता। षष्ठेऽह्नि रात्रियागन्तु जन्मदानाञ्च कारयेत्। रक्षणीया तदा षष्ठी निशा तत्र विशेषतः। रात्रौ जागरणं कार्य्यं जन्मदानां तथा बलिः"। रात्रौति सम्बोधनम्। तत्र शौचान्तरदोषोऽपि नास्ति। "अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्। कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचाद्विशुध्यति" इति प्रजापतिवचनात्। पुत्रजन्मेति श्रवणात् पितुरेवाशौचाभाव न तु मातुः कर्त्तुरिति पुंलिङ्गनिर्देशाच्च। कारयेदिति जन्मगोत्रजाभिप्रायेण। तत्रादौ विनायकादिषष्ठितषोडशमातृकापूजनम्। तथा च कृत्यचिन्तामणौ "जागजागरणं कार्य्यं खड्गो धार्य्यः समीपतः। आवाह्य पूजयेद्देवीं गणेशं मातृका गिरिम्"। देवीं षष्ठीम्। गिरिं मन्थानदण्डम्। भोजराज "गणेशश्चैव नन्दा च पूतना मुखमण्डिका। बिडालिका शकुनिका शुष्कनन्दा च जम्भिका। षाष्ठका रेवती च पिलिपिञ्छा ततः परम्। स्कन्दा च द्वादशैतेऽर्च्यां रक्षार्थं मातृका मताः" ज्यो०त०। [अमर।

**सूत्थान** त्रि० सु+उत्थानम् उद्योगो यस्य। चतुरे कर्मक्षमे

**सूत्पर** न० सु+उत्+पृ—अप्। सुरासन्धाने शब्दच०।

**सूत्या** स्त्री सू-क्यप् नि०। यज्ञाङ्गस्नानभेदे २अभिषवे सोमरसनिष्पीडने च अमरः।

**सूत्याशौच** न० सूतिनिमित्तकमशौचम्। जननाशौचे "शावाशौचं न कर्त्तव्यं सूत्याशौच विधीयते" स्मृतिः।

**सूत्र** यन्त्रणे वेष्टने च चुरा०उभ०सक०सेट्। सूत्रयति ते असुसूत्रत् त। अङ्गपरत्वात् न णोपदेशः।

**सूत्र** न० सूत्र-अच्। १तन्तुसाधने तन्तौ २व्यवस्थायां ३नाटकोपकरणे प्रस्तावे "स्वल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः" इत्युक्ते शास्त्रवाक्यभेदे च।

**सूत्रकण्ठ** पु० सूत्रं यज्ञसूत्र तदिव वा कण्ठे यस्य। १विप्रे २कपोते ३खञ्जरीटे च मेदि०। [तन्तौ त्रिका०।

**सूत्रकोण** पु० सूत्रवद्धः कोणोऽस्य। डमरौ हारा०अप्।

**सूत्रगण्डिका** स्त्री सूत्रं गण्डयति गण्ड-ण्वुल्। तन्तुवायोपकरणभेदे एलक्यां शब्दमा०।

**सूत्रतन्तु** पु० सूत्रमेव तन्तुः। सूत्राकारे तन्तौ हेमच०।

**सूत्रतर्कुटी** स्त्री सूत्रवर्त्तिता तर्कुटी। (टेको) पदार्थे जटा०

**सूत्रधार** पु० सूत्रं नाट्योपकरणं धारयति धृ-णिच्-अण्। नाट्याङ्गसाधनयुक्ते नाटकप्रस्तावके १प्रधाननटे। "नाट्योपकरणादीनि सूत्रमित्यभिधीयते। सूत्रं धारयतीत्यर्थे सूत्रधारो मतो बुधैः" इति तल्लक्षणं "पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते" सा० द०। "सूत्रधारेण सहिताः संलाप यत्र कुर्वते" दशरूपकम्। २इन्द्रे ३शिल्पिभेदे (छुतार) च। शिल्पभेदसूत्रधारश्च शूद्रागर्भे विश्वकर्मणा जातो जातिभेदः ब्रह्मवै०ब्रह्मख०१०अ०।

**सूत्रपुष्प** पु० सूत्रनिभं पुष्पं यस्य। कार्पासे त्रिका०।

**सूत्रभिद्** पु॰ सूत्रं भिनत्ति सूच्या, भिद–क्विप्। सूच्याजीवे (दरजी) शब्दर॰। [शब्दच॰।

**सूत्रमध्यभू** पु॰ सूत्रमध्यमिव भवति भू–क्विप्। यक्षधूपे

**सूत्रयन्त्र** न॰ सूत्रवापनं यन्त्रम् शाक॰। (ताँत) सूत्रवापनयन्त्रे शब्दमा॰। [हारा॰।

**सूत्रला** स्त्री सूत्रं लाति–ला–क। तर्कुटग्राम् (टेको)

**सूत्रवीणा** स्त्री सूत्रबद्धा वीणा शाक॰। वीणाभेदे हारा॰।

**सूत्रवेष्टन** न॰ सूत्रं वेष्ट्यतेऽनेन वेष्ट–करणे ल्युट्। तन्तुवायोपकरणभेदे तसरं (तासनी) अमर।

**सूत्रात्मन्** पु॰ सूत्रमिव सर्वानुस्यूत आत्मा स्वरूपं यस्य। समष्ट्युपहितचैतन्ये हिरण्यगर्भे वेदा॰सा॰। [पत्ति।

**सूत्रामन्** पु॰ इन्द्रे अमरे पाठान्तरम्। सुत्रामन् शब्दे व्युत्

**सूत्राली** स्त्री ६त॰। १सूत्रश्रेण्यां २गलमेखलायां हारा॰।

**सूत्रिन्** त्रि॰ सूत्र+अस्त्यर्थे इनि। १सूत्रविशिष्टे स्त्रियां ङीप्। २काके पु॰ त्रिका॰।

**सूद** पु॰ सूदयति पशून् पाकार्थं सूद–अच्। १सूपकारके २व्यञ्जनभेदे सूपे अमरः। ३सारथ्ये ४अपराधे ५लोध्रे ६पापे च अजय। [च।

**सूदन** न॰सूद–भावे ल्युट्। १हिंसने २निःक्षेपे ३अङ्गीकारे

**सूदशाला** स्त्री सूदाधिष्ठिता शाला शाक॰। पाकशालायाम् पाचकशब्दे ४२४६ पृ॰ विवरणम्।

**सूदाध्यक्ष** पु॰ ६त॰। पाकशालाध्यक्षे तल्लक्षणं यथा "अमात्यार्थः शुचिर्दक्षः किंल्कितविद्वरः। सूद शास्त्रविशेषज्ञः सूदाध्यक्षः प्रशस्यते" पाचकशब्दे तल्लक्षणादि ४२८६ पृ॰ दृश्यम्।

**सून** न॰ सू–क्त तस्य न। १पुष्पे २प्रसवे च। कर्त्तरि–क्त। ३विकसिते त्रि॰ मेदि॰ ४जात च।

**सूना** स्त्री सू–क्त तस्य नः। १प्राणिवध स्थाने "पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्कर। कण्डनी चोदकुम्भश्च" मनुः २तनयायां ३गलशुण्डिकायां मेदि॰ ४मांसविक्रये च सांख्यप्र॰। [५कन्याया स्त्री वा ऊङ् हेमच॰।

**सूनु** पु॰ सू–नुक्। १पुत्रे २अनुजे ३सूर्य्ये मेदि॰ ४अर्कवृक्षे च।

**सूनृत** न॰ सुष्ठु नृत्यति अनेन सु–नृत–घञर्थे क। १सत्ये प्रिये वाक्ये अमरः। २मङ्गले च ३तद्वति त्रि॰ अमरः।

**सूप** पु॰ सुखेन पीयते सु+पा–कर्मणि क पृषो॰। (दालि) व्यञ्जनभेदे कृत अशब्दे २१८१ पृ॰ दृश्यम्। सुवपति सु+वप–मूलवि॰ क। २सूपकारे पाचके मेदि॰। आधारे च। ३भाण्डे। सूद–करणे क पृषो॰। ४शायके शब्दर॰।

**सूपकार** त्रि॰सूपं करोति कृ–अण्। पाचके अमर॰। पाचकशब्दे ४२८६ पृ॰ दृश्यम्।

**सूपधूपन** न॰ सूपो धूप्यतेऽनेन धूप–करणे ल्युट्। १हिङ्गौ त्रिका॰ सूपपाके हि हिङ्गुधूपदानं पाकशास्त्रे प्रसिद्धम्।

**सूपपर्णी** स्त्री सूपसाधनस्य मुद्गस्येव पर्णमस्याः ङीप्। मुद्गपर्ण्याम् रत्नमा॰।

**सूपश्रेष्ठ** पु॰ सूपेषु तत्साधनेषु श्रेष्ठः। मुद्गे राजनि॰।

**सूपाङ्ग** न॰ सूपस्य तत्संस्कारकमङ्गमुपकरणम्। हिङ्गौ राजनि॰।

**सूम** न॰ सू–मक् १आकाशे २क्षीरे मेदि॰। ३जले शब्दर॰।

**सूर** पु॰ सरति प्रेरयति कर्मणि लोकानुदयेन सृ–क्रन्। १सूर्य्ये २अर्कवृक्षे च अमरः। सूर–क। ३पण्डिते ४जिनभेदे पु॰ हेमच॰। "सूर्य्योदयं विना नैव स्नानदानादिका क्रिया" इत्युक्तेस्तदुदयेन लोकानां सर्वकर्मप्रवर्त्तकत्वात्तथात्वम्।

**सूरण** पु॰ सूर–ल्युट्। शूरणे (ओल) शब्दरत्ना॰। "मकरे मूलकञ्चैव सिंहे चालाबुकं तथा। कार्त्तिके (सू)शूरणञ्चैव चञ्चौ गोमांसभक्षणम्" कर्मलो॰।

**सूरत** त्रि॰ सु+रम-क्त पृषो॰। दयालौ अमर॰।

**सूरसूत** पु॰ ६त॰। अरुणे गरुडाग्रजे सूर्य्यसारथौ अमरः। अरुणशब्दे १६१ पृ॰ दृश्यम्।

**सूरि** पु॰ सू–क्रिन्। १सूर्य्ये २अर्कवृक्षे ३यादवभेदे ४पण्डिते च अमरः "सदा पश्यन्ति सूरयः" इति श्रुतिः। ४राजसर्षपे स्त्री ङीप् रत्नमा॰।

**सूरिन्** पु॰ सूर–णिनि। पण्डिते शब्दर॰।

**सू(षू)र्च्च(र्य)** अनादरे भ्वा॰पर॰सक॰सेट्। सूर्च्च(र्य्य)ति असूर्च्चीत्(र्य्यीत्) षोपदेश एव न्याय्य॰।

**सूर्च्च** पु॰ सूर्च्च–कर्मणि घञ्। माषे (कमाइ) शब्दर॰।

**सूर्च्च(र्य्य)ण** न॰ सूर्च्च(र्य्य) भावे ल्युट्। अनादरे।

**सूर्प** पुंन॰। शूर्प-पृषो॰ शस्य सः। १शूर्पशब्दार्थे शब्दर॰। २कुम्भपरिमाणे ३द्रोणपरिमाणे च वैद्यकम्।

**सूर्पणखा** स्त्री शूर्प इव नखा अस्याः पृषो॰ शस्य सः णत्वम्। रावणभगिन्याम्।

**सूर्म्मि** स्त्री शूर्म्मि+पृषो॰ शस्य स॰। शूर्म्मिशब्दार्थे वा ङीप्।

**सूर्य्य** पु॰ सृ–क्यप् नि॰। १दिवाकरे २अर्कवृक्षे च अमरः। ३दानवभेदे शब्दर॰ ४अर्कपर्णवृक्षे मेदि॰।

सूर्य्यपक्षकथादिकं खगोलशब्दे २४२५ पृ॰ दृश्यम्। तस्य प्रकृतिस्वरूपादिकं सर्वार्थचि॰ उक्तं यथा

**सृ** गतौ भ्वादि॰ पर॰ सक॰ अनिट् सरति । असरत् असार्षीत् पर्युदासात् नोपदेशः । "नानाम करिणा सस्रे" इत्यप्रयोगात् आत्म॰ । [सात् नोपदेशः ।

**सृ** गतौ जु॰ वैदिक पर॰सक॰सेट् । ससर्त्ति असरत् पर्युदा

**सृक** पु॰ सृ-कक् । १कैरवे २वाणे उणा॰ । ३पद्मे ४वायौ च सि॰ कौ॰ ।

**सृकण्डु** पु॰ सृ-क्विप् पृषो॰ कर्म॰ कण्डुरोगे शब्दर॰ ।

**सृकाल** पु॰ सृ-कालन् कस्य नेत्वम् शृगाले शब्दच॰ ।

**सृक(न्)** न॰ सृज-क्वन् कनिन् वा कस्य नेत्वम् । ओष्ठप्रान्तभागे "सृक्कणी परिलेढि च" स्मृतिः । "महासृक्काय शोभितो न्वसिंहवप्रिति" स्त्रीभाव कान्ततापस्य ।

**सृक्कन्** न॰ सृज-कनिप् । ओष्ठप्रान्तभागे अमरः । पृषो॰ । सृक्किन् अप्यत्र अरुणः । सृक्कणी मत्वर्थे स्त्री राजनि॰

**सृग** पु॰ सृ-गक् गस्य नेत्वम् । भिन्दिपालास्त्रे अमरः ।

**सृगाल** पुस्त्री॰ सृ-गालन् गस्य नेत्वम् । १जम्बुके (शेयाल) शब्दर॰ । स्त्रियां ङीप् । २दैत्यभेदे हरिव॰ ।

**सृज** विसर्गे त्यागे दिवा॰ आत्म॰ अनिट् सक॰ । सृज्यते असृष्ट । पर्युदासात् नोपदेशः ।

**सृज** विसर्गे तु॰ पर॰सक॰अनिट् सृजति अस्राक्षीत् ससर्जिथ सस्रष्ठ स्रष्टा स्रक्ष्यति । पर्युदासात् नोपदेशः ।

**सृजकाचार** पु॰ सृजति वर्चस्त्वं सृज-क ततः स्वार्थे क सृजका सर्जिका कर्म॰ । सर्जिकाक्षारे रत्नमाला॰ ।

**सृणि** पु॰ सृ-निक् । १शत्रौ शब्दमा॰ । २अङ्कुशास्त्रे स्त्री अमरः । तत्र वा ङीप् । सृणीत्यपि ।

**सृणि(णी) का** स्त्री सृणि+कन् इकम् वा । लालायाम् अमरः

**सृति** स्त्री सृ-भावे क्तिन् । १गमने । करणे क्तिन् । २पथि च मेदि॰ । [सं॰क्षिप्त॰]

**सृत्वन्** पु॰ सृ-क्वनिप् ।१प्रजापतौ उज्ज्वल॰। २विसर्पे ३बुद्धौ

**सृत्वर** त्रि॰ सृ-क्वरप् ।१गमनकर्त्तरि स्त्रियां ङीप् । सा च २मातरि च क्षिप्रसा॰ ।

**सृदर** पु॰ सृ-अरक् दुक् च सर्पे सि॰ कौ॰ ।

**सृदाकु** पु॰ सृ-काकु दुक् च ।१वायौ २वज्रे ३अग्नौ ४प्रतिसूर्यके मेदि॰ । ५मृगे सं॰क्षिप्त॰ । नद्यां स्त्री उणा॰ ।

**सृप** गतौ भ्वा॰ पर॰ सक॰ अनिट् । सर्पति असृपत् । पर्युदासात् नोपदेशः ।

**सृपाट** सं॰ स्त्री॰ सृप-काटन् । १परिमाणभेदे २रक्षधारायां गोवर्द्धनः । स्त्रियां ङीप् । स्वार्थे क अत इत्वम् । सृपाटिका । चञ्चौ हेमच॰ ।

**सृप्र** पु॰ सृप-क्रन् । चन्द्रे उणा॰ । [२गमनशीले त्रि॰ ।

**सृमर** पुस्त्री॰ सृ-क्मरच् ।१मृगभेदे अमरः । स्त्रियां ङीप् ।

**सृष्ट** त्रि॰ सृज-क्त । १निर्मिते २युक्ते ३निश्चिते ४बहुले मेदि॰ ।५भूषिते अजयः । ६त्यक्ते च ।

**सृष्टि** स्त्री सृज-क्तिन् । १निर्माणे २स्वभावे च मेदि॰ कर्मणि क्तिन् । ३सृज्यमाने "या सृष्टिः स्रष्टुराद्ये"ति शकुन्तला॰ ४निर्गुणे शब्दर॰ ।

ब्रह्माण्डसृष्टिप्रकारः नानापुराणेषूक्तः तत्र मत्स्यपु॰ उक्तः प्रकारो यथा

"महाप्रलयकालान्त एतदासीत्तमोमयम् । प्रसुप्तमिव चातर्क्यम् अप्रज्ञातमलक्षणम् । अविज्ञेयमविज्ञातं जगत् स्थास्नु चरिष्णु च । ततः स्वयम्भूरव्यक्तः प्रभवः पुण्यकर्मणाम् । व्यञ्जयन्नेतदखिलं प्रादुरासीत्तमोनुदः । योऽतीन्द्रियः परो व्यक्तादणुर्ज्यायान् सनातनः । नारायण इति ख्यातः स एकः स्वयमुद्बभौ । यः शरीरादभिध्याय सिसृक्षुर्विविधं जगत् । अप एव ससर्जादौ तासु बीजमवासृजत् । तदेवाण्डं समभवद्धेमरूप्यमयं महत् । संवत्सरसहस्रेण सूर्यायुतसमप्रभम् । प्रविश्यान्तर्महातेजाः स्वयमेवात्मसम्भवः । प्रभावादपि तद्व्याप्त्या विष्णुत्वमगमत् पुनः । तदन्तर्भगवानेष सूर्यः समभवत् पुरा । आदित्यश्चादिभूतत्वात् ब्रह्मा ब्रह्म पठन्नभूत् । दिवं भूमिं समकरोत्तदण्डशकलद्वयम् । स चाकरोद्दिशः सर्वा मध्ये व्योम च शाश्वतम् । जरायुर्मेरुमुख्याश्च शैलास्तस्याभवंस्तदा । यदुल्बं तदभून्मेघस्तडित्सङ्घातमण्डलम् । नद्योऽण्डनाम्नः सम्भूताः पितरो मनवस्तथा । सप्त येऽमी समुद्राश्च तेऽपि चान्तर्जलोद्भवाः । लवणेक्षुसुराद्याश्च नानारत्नसमन्विताः । स सिसृक्षुरभूद्देव प्रजापतिररिन्दम ! । तत्तेजसश्च तत्रैव मार्त्तण्डः समजायत । मृतेऽण्डे जायते यस्मान्मार्त्तण्डस्तेन स स्मृतः । रजोगुणमयं यत्तद्रूपं तस्य महात्मनः । चतुर्मुखः स भगवानभूल्लोकपितामहः । येन सृष्टं जगत्सर्वं स देवासुरमानुषम् । तमवेहि रजोरूपं महत्सत्त्वमुदाहृतम्" । मनुरुवाच "चतुर्मुखत्वमगमत् कस्माल्लोकपितामहः । कथं तु लोकानसृजत् ब्रह्मा ब्रह्मविदां वरः" । मत्स्य उवाच "तपश्चचार प्रथमममराणां पितामहः । आविर्भूतास्ततो वेदाः साङ्गोपाङ्गपदक्रमाः । पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् । नित्यं शब्दमयं पुण्यं शतकोटिप्रवि

कालद्वयेनास्य समस्तोऽधुना" । सर्गशब्दे ५२५० पृ० तत्स्वामर्षविधत्वं दृश्यम् । [गर्भदात्रीक्षुपे राजनि० ।

**सृष्टिप्रदा** स्त्री सृष्टिं तद्वेतुं गर्भं प्रददाति प्र+दा-क ।

**सृ (षृ)** इच्छायां क्र्या० प० सक० सेट् । सृणाति असा-रीत् सीर्षः. सीर्षि. । षोपदेश एव न्याय्यः ।

**सेक** गतौ भ्वा० आ० सक० सेट् । सेकते असेकिष्ट षयु-दासात् षोपदेशः । षादित् षत्वि न छुक्त' ।

**सेक** पु० सिच-घञ् । सेचने जलादिना आर्द्रीकरणे हेमच० ।

**सेकपात्र** न० सिच्यतेऽनेन सिच-करणे घञ् कर्म० । (सेउनी) सेचनपात्रभेदे अमरः ।

**सेकिम** न० सेकेन निर्वृत्तम् सेक-वा डिम । मूलके हेमच०

**सेक्तृ** पु० सिञ्चति रेतः सिच-तृच् । १पत्यौ हेमच० । २सेचके त्रि० स्त्रियां ङीप् ।

**सेक्त्र** न० सिच-करणे ष्ट्रन् । सेकपात्रे शि० कौ० ।

**सेचक** पु० सिञ्चति तोयेन पृथिवीम् सिच-ण्वुल् । १मेघे २सेककर्त्तरि त्रि० मेदि० ।

**सेचन** न० सिच-भावे ल्युट् । १जलादिना आर्द्रीकरणे २क्षरणे । करणे ल्युट् । ३सेचन्यां क्षुद्रसेकपात्र्यां स्त्री ङीप् मेदि० ।

**सेटु** पु० सिट-त्रन् । (तरमुज) इति त्रिका० ।

**सेतु** पु० सि-तुन् । १क्षेत्रादौ जलधारणार्थे (आल) (जाङ्गाल) पदार्थे अमरः । २वरुणवृक्षे मेदि० । मन्त्रजपाङ्गे ३प्रण-वात्मके मन्त्रे च स्वार्थे क । सेतुक वरुणवृक्षे शब्द र० । "सेतुप्रदानादिन्द्रस्य लोकमाप्नोति मानवः" मठादि० त० । सेतुभेदश्च । सीमाविवादशब्दे ५३०० पृ० उक्तः । "सेतुश्च द्विविधः प्रोक्तः खेयो बन्ध्यस्तथाऽपरः । तोय-प्रवर्त्तनात् खेयो बन्ध्यस्तु तन्निवर्त्तनात्" नारद' । मन्त्रजपाङ्गसेतुश्च कालिकापु० ५५ अ० उक्तो यथा "मन्त्राणां प्रणवः सेतुस्तत्सेतुः प्रणवः स्मृतः । स्रवत्यनो-ङ्कृतं पूर्वं परस्ताच्च विशीर्य्यति । नमस्कारो महामन्त्रो देव इत्युच्यते सुरैः । द्विजातीनामयं मन्त्रः शूद्राणां सर्वकर्मणां । अकारश्चाप्युकारश्च मकारश्च प्रजापतिः । वेदत्रयात् समुद्धृत्य प्रणवं निर्ममे पुरा । स उदात्तो द्विजातीनां राज्ञां स्यादनुदात्तकः । स्वरितश्चोरुजातानां मनसापि तथा स्मरेत् । चतुर्दशस्वरो योऽसौ सेतुरौ-कारसंज्ञकः । स चानुस्वारचन्द्राभ्यां शूद्राणां सेतुरुच्यते । निःसेतुक यथा तोयं क्षणान्निम्नं प्रसर्पति । मन्त्रस्त-थैव निःसेतुः क्षणात् क्षरति यज्वनाम् । तस्मात् सर्वेषु मन्त्रेषु चतुर्वर्णां द्विजादयः । पार्श्वयोः सेतुमाधाय जपकर्म समारभेत् । शूद्राणामादिसेतुर्वै द्विसेतुर्वै यथेप्सतः । द्विसेतवः समाख्याता सर्वदैव द्विजातय" ।

**सेतुबन्ध** पु० ६त० । लङ्कागमनार्थं श्रीरामेण नलकपिद्वारा कारिते समुद्रोपरि १आलीबन्धे २क्षेत्रादेरालीबन्धे च । "ततोऽब्रवीद्रघुश्रेष्ठं सागरो विनयान्वितः । नलः सेतुं करोत्वस्मिन् जले मे विश्वकर्मणः । सुतो धीमान् समर्थो-ऽस्मिन् कार्य्ये लब्धवरो हरिः । कीर्त्तिं गायन्तु ते लोकाः सर्वलोकमलापहाम् । इत्युक्त्वा राघवं नत्वा ययौ सिन्धुरदृश्यताम् । ततो रामस्तु सुग्रीवलक्ष्मणाभ्यां समन्वितः । नलमाज्ञापयच्छीघ्रं वानरैः सेतुबन्धनात् । ततोऽतिहृष्टः प्लवगेन्द्रयूथपैर्महानगेन्द्रप्रतिमैर्युतो नलः । बबन्ध सेतुं शतयोजनायतं सुविस्तरं पर्वत-पादपैर्दृढम्" अध्यात्मरा० ३ अ० । "सेतुमारभमाणस्तु तत्र रामेश्वरं शिवम् । सङ्कल्पनियतो गत्वा पुरीं वारा-णसीं नरः । आनीय गङ्गासलिलं रामेशमभिषिच्य च । क्षिप्त्वा समुद्रे तद्भारं ब्रह्म प्राप्नोत्यसंशयः । कृतानि प्रथमेनाह्ना योजनानि चतुर्दश । द्वितीयेन तथा चाह्ना योजनानाञ्च विंशतिः । तृतीयेन तथा चाह्ना योजना-न्येकविंशतिः । चतुर्थेन तथा चाह्ना द्वाविंशतिः तथा कृतम् । पञ्चमेन त्रयोविंशद्योजनानां समन्ततः । बबन्ध सागरे सेतुं नलो वानरसत्तम । तेनैव क्रमशः कपयो योजनानां शतं द्रुतम् । असंख्याताः सुवेलाद्रिं रुरुधुः प्लवगोत्तमाः" 8अ० ।

**सेतुभेदिन्** पु० सेतुं भिनत्ति भिद-णिनि । दन्तीवृक्षे शब्दर० ।

**सेतुवृक्ष** पु० सेतुनामको वृक्षः । वरुणवृक्षे शब्दर० । २सेतूप-रिस्थे वृक्षे च ।

**सेत्र** न० सि-बन्धने ष्ट्रन् । (बेडि) निगडे शि० कौ० ।

**सेना** स्त्री सि-न, सह इनेन प्रभुणा वा । १सैन्ये अमर । २जिनानां ३मातृभेदे हेमच० । [२सेनायाः उपकरणे च ।

**सेनाङ्ग** न० ६त० । १हस्त्यश्वरथपदातिसंघाते अमरः ।

**सेनाचर** पु० सेनायां चरति चर-ट । सेनानुगामिनि "सेना-चरीभवदिभाननेति" नैष० ।

**सेनानी** पु० सेनां देवसेनां वा नयति नी-क्विप् । १कार्त्ति-[केये २सेनापतौ च अमरः

**सेनापति** पु० ६त० । १कार्त्तिकेये २सैन्याध्यक्षे च मेदि० । "कुलीनः शीलसम्पन्नो धनुर्वेदविशारदः । हस्ति-शिक्षाश्वशिक्षासु कुशलः श्लक्ष्णभाषिता । निमित्ते शकुने ज्ञाता वेत्ता चैव चिकित्सिते । कृतज्ञः कर्मणां शूरस्तथा

क्रोशसङ्ख्यातु। व्यूहतत्त्वविधानज्ञः फल्गुसार-विशेषवित्। राज्ञा सेनापतिः कार्यो ब्राह्मणः क्षत्रियो ऽथ वा" मत्स्यपु० १८९ अ०।

**सेनामुख** न० ६त०। १सैन्यस्य सङ्ख्याविशेषयुते हस्त्यश्वादौ "हस्तिनः त्रय रथा त्रयः अश्वा नव पत्तयः पञ्चदश एतत्समुदाये अमरः। [भिन्ने सैन्ये अमर०।

**सेनारक्ष** पु० सेना रक्षति रक्ष-अण्। सेनारक्षाकारके या-

**सेफ** पु० सि-फ। शेफे पुंसोऽसाधारणचिह्ने जटा०।

**सेमन्ती** स्त्री सिम-झि गौ० ङीष्। (सेवती) पुष्पभेदे।

**सेर** पु० "पादोनगद्याणकद्वयाधिकद्विसप्तत्याख्ये कथितो-ऽत्र सेरः। सप्ताभिधान अयनैः ४०।७ सेरैर्धान्या दितौल्येषु ससप्तकर्षः १। १६ग्रह्नेन्दु १८१। अष्टौ-घंटकैश्च सेरैः पञ्चभिः खाड़िका च ताभिः। मणो ऽष्टभिस्त्रालयगौरवाङ्कतान्त्र च ग्रा निजराजधान्याम्" लीला० उक्ते मानभेदे।

**सेरराह** पुंस्त्री०। श्वेताश्वे हेमच० स्त्रियां ङीष्।

**सेरु** त्रि० सि-बन्धने रु। बन्धनकर्त्तरि उणा०।

**सेलु** पु० सि-लु। श्लेष्मातकवृक्षे हिरूपको०।

**सेव** न० सेव-कर्मणि घञर्थे क। सेविफले (सेओ) राजनि०

**सेवक** पु० सीव्यति षिव-ण्वुल्। १सीवनकर्त्तरि (दरजी) सेव-ण्वुल्। २भृत्ये ३दासे ४अनुचरे च त्रि० मेदि०।

**सेवकालु** पु० सेव सेविफलमिव कायति कै-क कर्म०। निशामल्लिकावृक्षे (दुग्धमेया) शब्दच०। [निधौ भरत।

**सेवधि** पु० सेवं सेवनं दधाति धा-कि। श्रमपुरुषप्रभृतौ

**सेवन** न० षिव-सेव-वा ल्युट्। १सूच्यादिना वस्त्रादेर्योजने अमर०। २आश्रयणे ३उपभोगे ४भजने ५पूजने ६भजने च मेदि०। सीव्यतेऽनया ल्युट्। ७सूच्यां स्त्री ङीप् हेमच०॥

**सेवा** स्त्री सेव-अ। १भजने २आराधने ३उपभोगे ४आश्रये च। सेवापराधास्व अपराधशब्दे २१३ पृ० दर्शिता वाराहेऽन्यथोक्ता यथा "कर्मणा मनसा वाचा ये पापं चयो जना। भक्ष्यं दन्तकाष्ठस्य राजान्नस्य तु भोजनम्। मैथुनं शवसंस्पर्शः पुरीषोत्सर्ग एव च। ..तस्युदक्या खपनं स्पर्शनं मोक्षणं तथा। अभाष्यभाषणं कोप विस्तारका च भक्षणम्। रक्तपारकमसितमौसला-मरभारणम्। पुरीषादीकनिर्मलः पतितान्नस्य भक्षणम्। अभक्ष्यभक्षणश्चैव तण्डुलीयविभीतकम्। आ-हार्णं च वराकस्य जालपादवराकयोः। भक्षणं देव-तागारे सोपानत्कोपसर्पणम्। तथैव देवपूजायां नि-निर्गुणमार्चनम्। अप्रसार्य च निर्माल्य पूजा जो शान्यकारयोः। पान सुराया देवस्य अन्धकार प्रबा-धनम्। वातकर्मोर्पणे विष्णोरनमस्करणं तथा। अप राधास्त्वयसि मत् समाख्याता मया धरे। एभिर्युक्तस्तु पुरुषो विष्णु नैव प्रपद्यते। दूरस्थो न नमस्कारं कुर्यात् पूजां तु राजनी"।

**सेवि** न० सेव-कर्मणि इन्। फलभेदे (सेओ) राजनि०।

**सेविका** स्त्री पक्वान्नभेदे कृताक्षगन्धे २१२१ पृ० दृश्यम्।

**सेवित** त्रि० सेव-क्त। १आराधिते शब्दर०। २आश्रित ३उप युक्ते च ५सेविफले न० राजनि०।

**सेव्य** न० सेव-यत्। १वीरणमूले अमरः। २अश्वत्थे पु० राजनि०। ३हिज्जलवृक्षे पु० शब्दर०। ४सेवार्हे त्रि०। ५वन्दाकर्षे स्त्री हेमच०। [राजनि०।

**सैंहली** स्त्री सिंहले देशे भवा अण् ङीप्। सिंहपिप्पल्याम्

**सैंहिक** पु० सिंहिकाया अप ठक्। १राहौ शब्दर०। तस्या अपत्यम् ढक्। सैंहिकेयोऽप्यत्र अमर।

**सैकत** न० सिकता सन्त्यत्र अण्। वालुकाप्रचुरे नद्यादि-तटे अमर। २सिकताप्रचुरदेशे त्रि० राजनि०।

**सैकतिक** पु० सह एकतया सैकत तटमस्ति इन्। १संन्यस्ते २क्षपणके ३सन्देहजीविनि त्रि० मेदि०। ४मङ्गलसूत्रे ५मङ्गलसूत्रके न० मेदि०। [२सैकतप्रिये त्रि०।

**सैकतेष्ट** न० सैकत स्थानमिष्टं यस्य। १आर्द्रके राजनि०।

**सैतवाहिनी** स्त्री सिताया शर्करायाः अयम् अण् सैतो मधु रसस्तं वहति वह-णिनि। वाहुदाया नद्याम् अमरः।

**सैद्धान्तिक** पु० सिद्धान्त वेत्ति सिद्धान्त+ठक्। सिद्धान्ताभिज्ञे हेमच०। [२तत्कर्मणि च "सैनापत्यमुपेत्य व" कुमार०।

**सैनापत्य** न० सेनापतेर्भाव कर्म वा ष्यञ्। १सेनापतित्वे,

**सैनिक** पु० सेनायां समवैति ठक्। १भिक्षिते हस्त्यश्वादौ अमर०। प्राणिवधनियुक्ते भाग०५।६।६अ० ति०त०रघु०। वस्तुतस्तु सैनिका इव अधिगतिनेत्येव तत्र पाठः साधु ३सेनासम्बन्धिनि त्रि०।

**सैन्धव** न० सिन्धुनदीसमीपे देशे भवम् अण्। १लवणभेदे अमरः "सैन्धवं लवणं स्वादु दीपनं पाचनं लघु। स्निग्धं रुच्यं हिमं वृष्यं सूक्ष्मं नेत्र्यं त्रिदोषहृत्" भावप्र०। सिन्धोरदूरभवः अण्। २घोटकभेदे पुंस्त्री० अमरः तत्र सप्तद्वीपसमीपवर्त्तिसमुद्रेष्वस्योत्पत्तिसत्त्वाद् तथात्वम्। स्त्रियां ङीष्।

**सैन्धवखिल** न॰ सैन्धवमेव खिलम्। सैन्धवशिलाशकलसमे चिदानन्दस्वरूपे परमेश्वरे "स यथा सैन्धवखिल्यमनन्तरमबाह्य रसघनम्" शत॰ब्रा॰१४।७।३।१२।

**सैन्धी** स्त्री तालादिनिर्यासे राजनि॰।

**सैन्य** पु॰ सेनायां समवैति ञ्य। १सैनिके हस्त्यश्वादौ अमरः। सेनानां सङ्घः ष्यञ्। २सेनासमुदाये न॰।

**सैरन्ध्री** स्त्री सीरं हलं धरति धृ-मूल॰ क मुम् च सीरन्ध्रस्तस्येदं शिल्पकर्म अण् तदस्यास्ति अच् गौरा॰ ङीष्। परगृहस्थे स्ववशे शिल्पकारिणि स्त्रीभेदे पृषो॰ सैरिन्ध्रीत्यप्यत्र अमरः।

**सैरिक** पु॰ सीरेण लाङ्गलेन खनति भूमिं सीरं वहति वा ठक्। १कर्षके हालिके अमरः। २लाङ्गलवोढरि वृषे (हालेर गरु) अमर।

**सैरिभ** पु स्त्री॰ सीरे हले तद्वहने इभ इव गुरुत्वात् शाक॰ ततः स्वार्थेऽण्। १महिषे अमरः स्त्रियां ङीप्। "देवि सैरिभमर्दिनोमिह महालक्ष्मीम्" महालक्ष्मीध्यानम्। २स्वर्गे त्रिका॰। [झिण्टाम् शब्दर॰। स्वार्थे क तत्रैव।

**सैरीय** पु॰ सीरस्येदम् अण् सैरं हलाकारमर्हति छ।

**सैरेय** पु॰ सैरं सीराकारमर्हति ढक्। १झिण्टाम् शब्दर॰ ढकञ्। सैरेयकोऽप्यत्र राजनि॰।

**सैवाल** न॰ सेवायै मीनादीनामुपभोगाय अलति पर्याप्नोति अच् सेवालं ततः स्वार्थे अण्। शैवाले स्वार्थे क। तत्रैव "या पांशुपाण्डुरवपुर्विरसा पुरासीत् सैवालका कुरलतामधुना बिभर्त्ति उद्भटपदो श्लेषात् इत्यादि

**सोढ** त्रि॰ सह–क्त इडभावः। १क्षान्ते तितिक्षिते अमर कर्त्तरि क्त। २शीतादिसहनशीले त्रि॰। [शीले सोढ॰।

**सोढृ** त्रि॰ सह–तृच् वा इडभाव। १सहनकर्त्तरि २क्षमा-

**सोत्कण्ठ** त्रि॰ सह उत्कण्ठया सहस्य स॰। औत्सुक्यान्वित अभीष्टलाभेच्छया विलम्बासहिष्णुत्वयुक्ते जटा॰।

**सोत्प्रास** न॰ उद्+प्र–अस–घञ् सह उत्प्रासेन सहस्य स॰ सोल्लुण्ठने अन्यार्थकस्य वाक्यस्य अन्यार्थकत्वकल्पनया तदुत्तरार्थके १वाक्ये २प्रियवाक्ये च शब्दर॰। ३सगर्व्व-हास्येन सहिते त्रि॰।

**सोदय** त्रि॰ सह उदयेन प्रादुर्भावेण वृद्ध्या वा सहस्य स १प्रादुर्भूते २वृद्धि(उद)युक्ते ३लाभयुक्ते च "व्यय उद्याच्च सोदयम्" स्मृतिः। [भ्रातरि २तादृशभगिन्यां स्त्री शब्दर॰

**सोदर** पु॰ समानमुदरं यस्य समानस्य स। १एकोदरभवे

**सोदर्य्य** पु॰ समाने उदरे शयितो यत् सादेशः। १एको-

दरजाते भ्रातरि। २तादृशभगिन्यां स्त्री अमर॰।

**सोनह** न॰सु–विच् सवे नह्यते नह घञर्थे क। लशुने शब्दर॰

**सोन्माद** पु॰ सह उन्मादेन सादेशः। उन्मत्ते उन्मादिन्यौ।

**सोपप्लव** पु॰ सह उपप्लवेन सादेश। समाक्रान्तभूच्छायेन राहुणा योगरूपोपप्लवसहिते १चन्द्रे तथाभूत ग्रहच्छाया-योगयुक्ते २सूर्य्ये च अमरः। ३उपद्रवयुत त्रि॰। चन्द्रार्कयोर्ग्रासकारणमुपरागशब्दे प्रायेणोक्तं देवीपुरा-णोक्तमधिकमत्रोच्यते।

"ब्रह्मोवाच "यदयं वदते लोको राशिमत्रानुकामते। तदहं संप्रवक्ष्यामि चन्द्रसूर्य्योपरागिकम्। यदि सत्यमयं यस्तत्तेजोराशिर्दिवाकरः। तत्कथं नोदरस्थेन राहुणा भस्मसात् कृतः। अथ वा राहुणाक्रम्य निजवक्त्रं प्रवे-शितः। तत्कथं दशनैस्तीक्ष्णैः शतधा न विखण्डितः। विमुक्तश्च पुनर्दृष्टस्तथैवाखण्डमण्डलः। न चाप्यप-हृत तेजो न स्थानादपसारितः। यदि वा शोभ निष्पीतः कथं दीप्ततरोऽभवत्। तस्माच्च तेजसां राशी राहोर्वक्त्रं गमिष्यति। मख्यार्थं सर्व्वदेवानां सोमः सृष्टः स्वयम्भुवा। तत्रस्थममृतञ्चापि सम्भृतं सूर्यतेजसा। पिबन्त्यमृतमय देवाः पितरश्च स्वधाऽमृतम्। त्रयश्च त्रिशतश्चैव त्रय-स्त्रिंशत्तथैव च। त्रयश्च त्रिसहस्राश्च देवाः सोमं पिबन्ति ये। राहोरप्यमृतं भाग पुरा सृष्टं स्वयम्भुवा। तस्मा-त्तद्राहुरागत्य पातुमिच्छति पर्वसु। उद्धृत्य पार्थिवीं छायामभ्राकारां तमोमयः। पातुमिच्छन् ततश्चेन्दु-माच्छादयति छायया। शुक्ले च चन्द्रमभ्येति कृष्णे पर्वणि भास्करम्। सूर्य्यमण्डलसंस्थस्तु चन्द्रमेव निवाषति। तस्मात् पिबति त राहुस्तनुमध्ये विभा-वयन्। अविच्छिन्दन् यथा पद्मं पिबति भ्रमरो मधु। चन्द्रस्थममृतं तद्वदभेदाद्राहुरश्नुते। चन्द्रवान्तो यथि-र्यद्वत्तु छिन्नं चरते यथात्। चरन्नपि न क्षीयेत तेजसा नैव मुच्यते। यथा सूर्य्यमणिः सूर्य्यांशुतपाच्च पावक शुभम्। न भवत्यङ्गहीनोऽपि तेजसा नैव मुच्यते। एवं चन्द्रश्च सूर्य्यश्च छादितावपि राहुणा। स्वतेजसा न मुच्येते नाङ्गहीनौ बभूवतुः। वर्णश्च च चन्द्रस्य माणिक्यकनकाकृति। सोमो दैवतयोगात् छाया योगाच्च पार्थिवात्। राहोश्च वरलब्ध्या वै प्रभावेऽमृतं शशी। स्वदोहकाले सम्प्राप्ते वत्सं दृष्ट्वा च गौर्यथा। स्वाङ्गादेव क्षरेत् क्षीरं तथेन्दुः क्षरतेऽमृतम्। पितेव सूर्य्यो देवानां सोमो मातेव कथ्यते। यथा मातुस्तन

**सोमगर्भ** पु० सोमस्य तदात्मकामृतरूपसोमस्य गर्भः स्थानम्। विष्णौ त्रिका० ।

**सोमज** न० सोमात् तत्सदृशौषधिस्थरसपानात् जायते जन-ड । १दुग्धे हेमच० । २चन्द्रजाते त्रि० । ३बुधे पु० ।

**सोमतीर्थ** न० सोमेन तपस्तप्त्वा कृतं तीर्थम् शाक०। प्रभास तीर्थे त्रिका० । "यत्र तत्र तपस्तेन सोमेन सुमहात्मना । पञ्च वर्षसहस्राणि तथैवाङ्गुष्ठ स्थित । एकस्मिं पुन पञ्च पञ्च मौनव्रतस्तथा । तथैवैकेन पादेन दश पञ्च च तिष्ठता । एवमुग्रं तपः कृत्वा कान्तिमानभवच्च सः । महापराधात् मुक्तश्च ब्राह्मणानां पतिस्तथा" वराहपु०।

**सोमधारा** स्त्री सामस्य धारेव । आकाशे त्रिका० ।

**सोमप** पु० सोमं तद्रसं पिबति पा-क । १यज्ञे सोमरसपानकर्त्तरि २पितृगणभेदे व०व० । पा—क्विप् सोमपाप्यत्र ।

**सोमपत्र** पु० सोमस्य औषधिविशेषस्येव पत्रमस्य । (उलुखड) तृणभेदे शब्दच० ।

**सोमपीति(थि)न्** पु० पीतमनेन इनि सोम पीतौ पृषो० वा तस्य थ । यज्ञे सोमरसपायिनि अमरः । पा—क्विप् सोमपीवाप्यत्र ।

**सोमबन्धु** पु० सोमस्य बन्धु, सोमो बन्धुरस्य वा । १सूर्ये तदुपकारकत्वात् तस्य तथात्वम् ।२चन्द्रजे बुधे पु० ज्यो० ३कुमुदे न० । [वंश्ये क्षत्रिये च ४जिनराजभेदे हेम० ।

**सोमभू** पु० सोम एव भूरुत्पत्तिस्थानं यस्य । १बुधे २चन्द्र

**सोमयाग** पु० सोमनीमको याग । त्रिवर्षसाध्ये सोमरसपानाङ्गके यागभेदे ।

"नारद उवाच "सोमयागविधानञ्च ब्रूहि मां मुनि सत्तम ।। कथं त कारयामास गुरुश्च किं फलं परम्" । नारायण उवाच "ब्रह्महत्याप्रशमनं सोमयागफलं मुने ।। वर्षं सोमलतापानं यतमानः करोति च । वर्षमेकं फलं भुङ्क्ते वर्षमेकं जलं सदा । त्रैवार्षिकमिदं यागं सर्वपापप्रणाशनम् । यस्य त्रैवार्षिकं धान्यं निहितं भृत्यवृत्तये । अधिकं वापि विद्येत स सोमं पातुमर्हति । महाराजश्च देवो वा यागं कर्त्तुमलं मुने ।। न सर्वसाध्यो यज्ञोऽयं बहुश्रो बहुदक्षिणः" ब्रह्मवै० श्रीकृष्णज० ३० अ० । सोमशब्दे दृश्यम् ।

**सोमयाजिन्** पु० सोमेन यजते यज—णिनि । सोमयागकर्त्तरि । तस्य सौत्रामण्यामधिकारः सौत्रामणीशब्दे दृश्यम् ।

**सोमयोनि** न० सोमः योनिरस्य । चन्दनभेदे शब्दच० ।

**सोमराजी** स्त्री सोमेन राजते राज-अच् गौरा० ङीष् । (सोमराज) १ओषधिभेदे । २वाकुचयां भावप्र०। "अवल्गुजा वाकुची स्यात् सोमराजी सुपर्णिका" इत्युपक्रमे "वाकुची मधुरा तिक्ता कटुपाका रसायनी । विष्टम्भहृद्धिमा रुच्या सरा श्लेष्मास्रपित्तनुत् । रूक्षा हृद्या श्वासकुष्ठमेहज्वरकृमिप्रणुत् । तत्फलं पित्तलं कुष्ठकफानिलहरं कटु । केश्यं त्वच्यं कृमिश्वासकासशोथामपाण्डुहृत्" भावप्र० । स्वार्थे क । सोमराजिकाप्यत्र । राज—णिनि । सोमराजिन् अप्यत्र पु०अमर । [राजनि०

**सोमलता** स्त्री सू-मन् कर्म० । स्वनामख्यातायां लतायाम्

**सोमलतिका** स्त्री सोमलतेव इवार्थे कन् अत इत्वम् । १गुडूच्याम् राजनि० । स्वार्थे क । २सोमलतायाञ्च ।

**सोमवंश** पु० सोमस्य वंशः । १चन्द्रवंशे २चन्द्राधिके गोत्रपरम्पराजाते क्षत्रिये भाग० ६स्कन्धे दृश्यम् ।

**सोमवल्क** पु० सोमस्येव वल्कोऽस्य ।१करञ्जे जटा०। २रीठाकरञ्जे राजनि० ३श्वेतखदिरे ४कट्फले च मेदि० ।

**सोमवल्लिका** स्त्री सोमवल्लीव कायति कै—क । सोमराज्याम् अमरः। स्वार्थे क ।२सोमलतायाम् । सोमवल्लरीत्यप्यत्र ।

**सोमवल्ली** स्त्री सोमायामृताय वल्ली । १गुडूच्याम् अमरः । सोमरूपा वल्ली । २सोमलतायाम् भरतः । ३सोमराज्यां शब्दर०।४ब्राह्म्यां ५सुदर्शनायां ६पातालगरुड्यां राजनि०। "सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता । सोमार्ही गुल्मवल्ली च यज्ञवल्ली द्विजप्रिया । सोमक्षीरा च सोमा च यज्ञाङ्गा रुद्रसङ्ख्यया । सोमवल्ली कटुः शीता मधुरा पित्तदाहहृत् । तृष्णा विशेषात् शमनी पावनी यज्ञसाधनी" राजनि० ।

**सोमवामिन्** पु० सोम तद्रसं वमति वम—णिनि । सोमरसपानाधिक्ये मुखेन सोमवमनकर्त्तरि तस्य सौत्रामण्यामधिकारः सौत्रामणीशब्दे दृश्यम् ।

**सोमवार** पु० सोमस्वामिको वारः । चन्द्रस्वामिके दिने ।

**सोमविक्रयिन्** पु०सोम विक्रीणाति वि+क्री—णिनि। सोमलताया. विक्रेतरि "पापो हि सोमविक्रयी" श्रान्त्र० ।

**सोमवृक्ष** पु० सोम इव वृक्षः । १कट्फलवृक्षे रत्नमा० २श्वेतखदिरे च राजनि० । [राजनि० ।

**सोमसार** पु० सोम इव श्रुभ्र सारोऽस्य । श्वेतखदिरे

**सोमसिद्धान्त** पु० सोमकृतः सिद्धान्तः । चन्द्रप्रोक्ते ज्योतिषसिद्धान्तग्रन्थभेदे जटा० । [त्रिका० ।

**सोमसिन्धु** पु० सोमस्यामृतस्य सिन्धुरिव आधारः । विष्णौ

दर्शपौर्णमासधर्मेण व्रीहिश्यामाकयोश्चरू वरुणले पक्वा स्तेनालम्भनानन्तरं तयोश्चरोर्निःस्रावयुष्णं पृथक्पात्रयो-रादाय शष्पादिचतुर्णां चूर्णैं संसृज्य स्थापयेत् इय चूर्णानामयं मासराख्यम्। "ओदनौ चूर्णमासरे स-सृज्य स्वाद्वीं त्वा स्वादुनात इति त्रिरात्रं निदधाति" का॰ एवमाचामयोश्चूर्णसंसर्गे मासरत्वनिष्पादनानन्तरमोदनौ व्रीहिश्यामाकचरू चतुर्भिश्चूर्णैं संसृज्य स्वाद्वीं त्वेति मन्त्रेण स्वादुना ते इति विशाध्यायसम्बन्धिन्या ऋचा चैकस्मिन् पात्रे चूर्णसंसृष्टावोदनौ मासराभ्यां संसृज्य त्रिरात्र शालानैर्ऋतकोणे गर्त्तं कृत्वा तत्र स्थापयेत्। अयमर्थ चरू उद्वास्य इयो पृथगाचामग्रहणम् तत शष्पतोक्मलाजचूर्णाना। पृथग् त्रिधा कृताना तृतीयांशं द्वेधा कृत्वाचामयो क्षिपेत् ततो नग्नहुचूर्णं द्वेधा कृत्वैकमर्धं द्विधा विभज्याचामयोः क्षिपेत्। एवं चूर्णसंसृष्टाचानयोर्मासरसंज्ञा। तत शष्पतोक्मलाज-चूर्णानां द्वितीय तृतीयांशं द्विधा कृत्वैकैक भागमोद-नयोः क्षिपेत् नग्नहुचूर्णद्वितीयार्द्धं द्वेधा कृत्वौदनयो क्षिपेत् तत ओदनावेकपात्रे कृत्वा तत्राचामौ क्षिपेत् ततः "स्वाद्वीं त्वा" "स्वादुना ते" इति मन्त्राभ्यां चूर्णमासरैः स-हौदनयोराङ्‌वालनेन संसर्गः कार्य्यं ततस्त्रिरात्रनिधा नम् शष्पतोक्मलाजचूर्णं तृतीयाशाना प्रतिदिन सुराया मिश्रणाय रक्षणमित। एकस्या पयस्यायाः कृतेनाश्वि नेन परिषिक्षुति परीतो षिञ्चतेति शष्पचूर्णानि चाश्वपति स्वारस्वतेन इयो मातस्तोक्मचूर्णानि चैन्द्रोणोत्तमे तमृणाः लाजचूर्णानि च। साय होमान्तेऽश्विभ्या-मपाकरोमीति करण गा स्पृष्ट्वा एका ता दुग्ध्वा तत्-पयसाध्वर्युः सुरा षिञ्चति परीत इति मन्त्रेण। रक्षित शष्पचूर्णाना तृतीयांश सुराभाण्डे क्षिपेत्। द्वितीये-ऽह्नि निशान्ते सरस्वत्या अपाकरोमीति गावौ स्पृष्ट्वा दोहितेन तयोर्दुग्धेन तेनैव मन्त्रेण सुरा षिञ्चति तोक्म-चूर्णतृतीयांशक्षेपश्च। तृतीयेऽह्नि रात्रौ इन्द्राय सु-त्रामणेऽपाकरोमीति तिस्रो गा स्पृष्ट्वा ता दुग्ध्वैकीकृत तत्पयसा सुरा सिञ्चति तेनैव मन्त्रेण तत्र लाजचूर्णं ततोयांशक्षेपश्चेति"। (आचामोभक्तरस)

**सौदामनी** स्त्री सुदामा पर्वतभेदस्तेनैका दिक् तद्प्रान्त भवत्वात् अण्। १विद्युति अमरः। सा हि स्फटिक-मयस्य सुदाम्न पर्वतस्यैकदेशे जाता। २अप्सरोभेदे च हेमच॰। सुदामा ऐरावतगजस्तस्य पत्नी ङीप्। ३ऐरा-वतयोषिति शब्दर॰। तत्र ङीपि अतोऽल्लोपे सौदा-म्नीत्यपि शब्दर॰।

**सौदायिक** न॰ सुदायात् बन्धुकुलात् आगत ठञ्। "ऊ-ढया कन्यया वापि पत्यु पितृगृहेऽथ वा। भर्तुः स-काशात् पित्रोर्वा लब्ध सौदायिक स्मृतम्" कात्या॰ स्मृत्युक्ते स्त्रीधनभेदे 'सौदायिक धन प्राप्य स्वातन्त्र्यं परिकीर्त्तितम्" स्मृत । स्त्रीधनशब्दे दृश्यम्।

**सौदास** पु॰ सूर्य्यवंश्ये कल्माषपादे नृपतौ।

**सौध** पु न॰ सुधया लेपनद्रव्येण रक्तम् अण्। १राजसदनभेदे अमर। सुधा तद्वर्णमर्हति अण्। २रूप्ये न॰ ३दुग्धपाषाणे पु॰ राजनि॰। ४सुधासम्बन्धिनि त्रि॰।

**सौनन्द** न॰ सुनन्द+स्वार्थे अण्। बलदेवमुसले हेमच॰।

**सौनिक** पु॰ सूना वध्यस्थानं तदुपलक्षितमांसादि पण्यमस्य ठण्। मांसक्रयविक्रयोपजीविनि व्याधे (कसाइ)। हेमच॰ शैनिकशब्दे उदा॰ दृश्यम्।

**सौन्दर्य्य** न॰ सुन्दरस्य भावः ष्यञ्। १चारुतायां "अङ्ग-प्रत्यङ्गकानां य सन्निवेशो यथोचितम्। सुश्लिष्ट सन्धि बन्धः स्यात् तत्सौन्दर्य्यमुदाहृतम्" उज्ज्वलमण्युक्ते २अङ्गादीना सन्निवेशभेदे।

**सौपर्ण** न॰ सुपर्णं गरुड तद्वर्णमर्हति अण्। १मरकतमणौ २शुण्ठ्यां राजनि॰। सुवर्णमधिकृत्य कृतो ग्रन्थः अण्। भा॰आ॰ २०अध्यायावधौ २४अध्यायपर्य्यन्ते ३अवान्तर-पर्वभेदे न॰ ४पात लगरुडोक्ततायां स्त्री राजनि॰ ङीप्। तस्येदमण् ५गरुडसम्बन्धिनि त्रि॰।

**सौपर्णेय** पु॰ सुपर्ण्यां विनतायां अपत्यम् ढक्। १गरुडे हेमच॰ २गायत्र्यादिछन्दःसु "गायत्र्यादीन छन्दांसि सौपर्णेयानि पाक्षिण" वह्निपु॰।

**सौप्तिक** त्रि॰ सुप्तिकाले रात्रौ भवम् ठञ्। १रात्रियुद्धे जटा॰। सुप्तानधिकृत्य कृतो ग्रन्थ ठञ्। २महाभार-तान्तर्गते पर्वभेदे।

**सौभ** न॰ सुष्ठु सर्वत्र लोके भाति भा—क स्वार्थे अण्। १कामचारिणि पुरे २हरिश्चन्द्रनृपपुरे जटा॰। तस्य राजा अण्। ३राजभेदे स च वासुदेवेन निहत तत्कथा भा॰ व॰ १४अ॰ अवधि २२अ॰ पर्य्यन्ते दृश्या।

**सौभद्र** पु॰ सुभद्राया भव अण्। १सुभद्रापुत्रे अभिमन्यौ गीता। शुभद्राय हित अण्। २विभीतकवृक्षे शब्दच॰।

**सौभद्रेय** पु॰ सुभद्राया अपत्यम् ढक्। सुभद्रासुते अभिमन्यौ

**सौभरि** पु॰ मुनिविशेषे भाग॰ १०।१७ अ॰ ज्यो॰त॰।

३कुन्दुरुके पु० राजनि० ४कांस्ये न० ५तुवर्य्यां स्त्री राजनि० टाप्। सुगन्धिमृत्तिकाभेदे स्त्री रत्नमा० ङीप् संज्ञायां कन्। सौराष्ट्रक पञ्चलौहे न० हेमच०।

**सौराष्ट्रिक** न० सुराष्ट्रदेशे भव ठक्। विषभेदे शब्दर०।

**सौरि** पु० सूरस्यापत्यम् इञ्। १शनैश्चरे "सौरिवारेऽमृतानीति" ज्यो०त०। २यमे ३कर्णे ४सुग्रीवे च पु०। ५असन वृक्षे ६सावर्णिमनु इत्याहु:?याया राजनि०।

**सौरिक** पु० सुराया देवानामधिवासाय हित: ठक्। १स्वर्गे स्वार्थे क। २सूर्य्यापत्ये शनैश्चरादौ।

**सौरिरत्न** न० सौरिप्रियं रत्नम् शाक०। नीलके मणौ राजनि०

**सौरेय** पु० सुरायै हितम् ठक्। शुक्लझिण्टायाम् स्वार्थे क तत्रैव। "सौरेय: कुष्ठवातास्रकफकण्डूविषापहः। तिक्तोष्णो मधुरो दन्त्य सुस्निग्ध केशरञ्जन" भावप्र०।

**सौल्विक** त्रि० शुल्वं ताम्रपात्रादिनिर्माणं शिल्पमस्य ठक्। ताम्रमयपात्रनिर्माणकर्त्तरि (कासारि)। वणिग्भेदे

**सौव** त्रि० स्वस्येदम् स्वर्गे इदम् वा अण् अव्ययटिलोपो न वृद्धि: वात्पूर्वमौत्। १आत्मसम्बन्धिनि २स्वर्गसम्बन्धिनि।

**सौवग्रामिक** त्रि० स्वग्रामे भव: ठक् न वृद्धि वात्पूर्वमौत्। स्वग्रामभवे पदार्थे।

**सौवर्चल** प० सुवर्चलदेशे भवम् अण्। लवणभेदे अमर:।

**सौवर्णभेदिनी** स्त्री सुवर्णस्य विकार: अण् सौवर्णमिव भिनत्ति प्रकाशते भिद-णिनि। प्रियङ्गौ शब्दमा०।

**सौवस्तिक** पु० स्वस्तिकरणे कुशल: ठक् न वृद्धि वात्पूर्वमौत्। पुरोहिते हेमच०। [रक्षके अमर।

**सौविद** पु० सुवेत्ति सु+विद्-क स्वार्थेऽण्। अन्त:पुर-

**सौविदल्ल** पु०सुष्ठु विदन् न्दव तं लाति ला-क स्वार्थेऽण्। अन्त:पुररक्षके अमर।

**सौवीर** न० सुष्ठु वीरो यत्र सुवीरो देशभेद तत्र भवम् अण्। १स्रोतोऽञ्जने २बदरफले "सौवीरन्तु यवैरामैः पक्वैर्वा निस्तुषै: कृतम्। गोधूमैरपि सौवीरम्" इत्युक्ते ३काञ्जिके अमर "सौवीरन्तु ग्रहण्यर्शः कफघ्नं भेदि दीपनम्। उदावर्त्ताङ्गमर्द्दास्थिशूलानाहेषु शस्यते" भावप्र०। ४बदरवृक्षे पु० राजनि०।

**सौवीरसार** पु०न० कर्म०। स्रोतोऽञ्जने राजनि०।

**सौवीराञ्जन** न० सौवीरास्यमञ्जनम्। अञ्जनभेदे अमर: स्वार्थे क। काञ्जिकभेदे न०।

**सौष्ठव** न० सुष्ठु भद्रं तस्य भाव: अण् न टिलोप। आतिशये "स सौष्ठवौदार्य्यविशेषशालिनीम्" किरा०।

**सौहार्द** न०सुहृदो भाव ष्यञ् द्विपदवृद्धि:। १स्नेहे २मित्रत्वे हेमच०। [सौहित्यमाचरेत्" इति।

**सौहित्य** न० सुहितस्य तृप्तस्य भाव: ष्यञ्। तृप्तौ "नाति

**सौहृद** न० सुहृदो भाव अण्। मित्रत्वे बन्धुतायाम् हेम०

**स्कद** उत्प्लुत्य गतौ अक० उद्धृतौ आप्लावे च सक० भ्वा० आ० सेट् इदित्। स्कन्दते अस्कन्दिष्ट। [स्कन्दव त।

**स्कन्द** समाहारे अद०चु०उभ०सक०सेट्। स्कन्दयति ते अच-

**स्कन्द** गतौ शोषणे च भ्वा० पर० सक० अनिट्। स्कन्द ति इरित् अस्कदत् अस्कान्त्सीत् चस्कन्द। आ+आक्रमणे

**स्कन्द** पु०स्कन्दते उत्प्लुत्य गच्छति अच्। कार्त्तिकेये अमर: अग्निकुमारशब्दे ५४ पृ०तस्योत्पत्तिरुक्ता। स्कन्दग्रह-स्कन्दापस्मारौ ग्रहशब्दे २७४५ पृ०सुश्रुतोक्तौ दर्शितौ। २न्दपतौ जटा० ३देहे त्रिका० ४पारदे राजनि० ५बाल-ग्रहभेदे सुश्रुत:। [४शोषणे च।

**स्कन्दन** न० स्कन्द-ल्युट्। १रेचने त्रिका० २क्षरणे ३गतौ

**स्कन्दांशक** पु०स्कन्दस्यांश एवांशो यस्य कप्। पारदे। तयो: शिववीर्य्यजत्वादेकांशत्वम्।

**स्कन्ध** पु० स्कन्द्यते आरुह्यतेऽसौ सुखेन शाखया वा कर्मणि घञ् पृषो०। १अंसे (काध) २वृक्षस्य काण्डे (गुँडि) अमर। ३न्दपे ४युद्धे ५समूहे ६काये ७भद्रादौ दण्डकोभेदे मेदि० सौगतमतसिद्धेषु ९विज्ञानादिषु पञ्चसु "ह्यङ्गस्कन्धपञ्चकम्" माघ। १०पथि शब्दर० ११ग्रन्थपरिच्छेदे च। "स्कन्धेऽष्टमभियुक्तम्" इति भागवतविशेषणम्। १२व्यूहे हेमच०। [विहङ्गिकाया हारा०।

**स्कन्धचाप** पु० स्कन्धे चाप इव। वंशादिनिर्मितशिक्याधाने

**स्कन्धज** पु० स्कन्धात् जायते जन-ड। स्कन्धाङ्कुरे सल्लक्यादौ "पर्य्योनय इत्याद्या स्कन्धजा सल्लकीमुखा" हेमच०।

**स्कन्धतरु** पु० स्कन्धप्रधान तरु। नारिकेलवृक्षे राजनि०।

**स्कन्धफल** पु० स्कन्धे फलमस्य। १नारिकेलवृक्षे राजनि० २उडुम्बरवृक्षे च शब्दच०। [शब्दच०।

**स्कन्धबन्धना** स्त्री स्कन्धे बन्धनमिवास्या:। मधुरिकायाम्

**स्कन्धरुह** पु० स्कन्धात् रोहति रुह-क। वटवृक्षे राजनि०।

**स्कन्धवाह** पु० स्कन्धेन वाहयति वह-णिच्-अच्। स्कन्धेन शकटादिवाहके वृषादौ हारा०एवुल्। स्कन्धवाहक तत्रैव हेमच०। [शाखायाम् अमर।

**स्कन्धशाखा** स्त्री स्कन्धात् पभति शाखा। वृक्षस्य प्रधान-

**स्कन्धशृङ्ग** पुस्त्री० स्कन्धपर्य्यन्त शृङ्गमस्य। महिषे स्त्रियां ङीष्।

**स्कन्धाग्नि** पु० स्कन्धजातोऽग्निः। हृहत्काष्ठजाते वह्नौ जटा०।

**स्कन्धावार** पु० स्कन्धाधेमाधार: आ+ह—घञ्। युद्धार्थे

उद्युक्तसैन्यानां १स्थापने २तदाधारे कटके च ३राजधान्यां

यज्ञपत्र०। [हृमादौ हेमच०

**स्कन्धिक** पु० स्कन्धस्तेन वहनमस्यास्य ठन्। स्कन्धवाहके

**स्कन्धिन्** पु० स्कन्धस्तेन वहनमस्यास्य इनि। स्कन्धेन वा-

हके हृमादौ रत्नमा०।

**स्कन्न** त्रि० स्कन्द्-क्त। १च्युते अमरः २गलिते ३चरिते

४शुष्के ५गते च। भावे क्त। ६क्षरणे न०।

**स्कन्भ** प्रतिघाते क्र्या० स्वा० उ० सक० सेट्। स्कभ्नाति

स्कभ्नीते स्कभ्नोति स्कभ्नुते। अस्कम्भीत् अस्कम्भिष्ट।

चस्कम्भ चस्क(भ)म्भे। [स्मिष्ट।

**स्कम्भ** स्तम्भे स्वा० क्र्या० सक० सेट् इदित्। स्कभ्नाति अस्क-

**स्कु** उद्धृतौ आप्लावने च क्र्या० स्वा० उ० सक० अनिट्। स्कु-

नाति स्कुनीते स्कुनोति स्कुनुते। अस्कौषीत् अस्कोष्ट।

चुस्काव चुस्कुवे। [स्कुन्दते अस्कुन्दिष्ट।

**स्कुद्** आप्लवने उद्धृतौ च भ्वा० आ० सक० सेट् इदित्।

**स्कुन्भ** रोधने सौ० क्र्या० स्वादि० कार्य्यभागी प० सक० सेट्

स्कुभ्नाति स्कुभ्नोति। अस्कुम्भीत्। उदित् क्त्वा वेट्।

**स्खद्** विदारे दि० आ० सक० सेट्। स्खद्यते अस्खदिष्ट

घटादि० स्खदयति। [स्खादयति स्खादयति।

**स्खल** चले भ्वा० प० अक० सेट्। स्खलति अस्खालीत् वा घटा०

**स्खलन** न० स्खल-भावे ल्युट्। १चलने २पतने अमरः।

**स्खलित** न० स्खल-भावे क्त। १कूटयुद्धादौ प्रकृत्या धीर-

मर्य्यादातः १पतने २स्वस्वममार्गे च अमर। कर्त्तरि

क्त। ३चलिते त्रि०।

**स्तन** मेघशब्दे अद० चु० उभ० सक० सेट्। स्तनयति ते

अतस्तनत् त। अदन्तत्वात् नोपदेशः।

**स्तन** पु० स्तन-अच्। (माइ) स्त्रीणामङ्गभेदे पयोधरे अमर।

"अरोमशौ समौ पीनौ घनावविरलौ शुभौ" स्तनयोः

शुभलक्षणं गारुडे ६६अ०। [शब्दे च मेदि०।

**स्तनन** न० स्तन-ल्युट्। १ध्वनिमात्रे २मेघशब्दे ३कुन्थन

**स्तनन्धय** पुंस्त्री० स्तनं धयति धे-खश् मुम् च। अतिशिशौ

पेटद्वित्वात् स्त्रियां ङीप्। [अमरः। स्त्रियां टाप्।

**स्तनप** पुंस्त्री० स्तनं पिबति पा-क। अतिशिशौ बालके

**स्तनभर** पु० ६त०। १स्तूलस्तनभारे २तदाभोगे च त्रिका०।

**स्तनयित्नु** पु० स्तन-इत्नु। १मेघे २मुस्तके अमर ३मेघशब्दे

मेदि० ४विद्युति शब्दर०। ५मृत्यौ ६रोगे च हेमच०।

**स्तनवृन्त** पु० स्तनस्य वृन्तमिव। १स्तनाग्रे चूचुके हेमच०

स्तनशिखाद्योऽप्यत्र हेमच०। [च।

**स्तनान्तर** न० स्तनयोरन्तरम्। १हृदये हेमच० २स्तनमध्ये

**स्तनाभोग** पु० ६त०। स्तनस्य परिपूर्णतायाम् त्रिका०।

**स्तनित** न० स्तन-भावे क्त। १मेघशब्दे अमरः। २करतालि-

शब्दे च। कर्त्तरि-क्त। ३ध्वनिते त्रि०।

**स्तनितफल** पु० स्तनिते मेघशब्दे फलति फल-अच्। विक-

ङ्कतवृक्षे राजनि०।

**स्तन्भ** रोधने क्र्या० स्वा० प० सक० सेट् उदित् क्त्वा वेट्।

स्तभ्नाति स्तभ्नोति इरित् अस्तभत् अस्तम्भीत्। इदित्वन्ये

षोपदेश एव न्याय्यः सौत्रोऽयमित्यन्ये तेन न षोपदेश।

**स्तन्य** न० स्तने भवम् यत्। स्तनजाते दुग्धे हेमच०। [भूते च

**स्तब्ध** त्रि० स्तम्भ-कर्मणि कर्त्तरि वा क्त। १जडीकृते २जडी-

**स्तब्धरोमन्** पु० स्तब्धं रोमास्य। १शूकरे अमरः जडीकृत-

रोमणि त्रि० स्त्रियां वा डाप् ङीप् च।

**स्तम्ब** पु० स्था-अम्बच् किच्च पृषो०। काण्डरहिते क्षिपट-

कादौ हवे २तृणमुष्टौ ३तृणादेः गुच्छे च अमरः।

**स्तम्बकरि** पु० स्तम्बं गुच्छं करोति कृ-इन्। व्रीहिधान्ये

अमरः। [मूलके खनित्रादौ अमरः।

**स्तम्बघन** पु० स्तम्बो हन्यतेऽनेन हन-क नि०। स्तम्बो-

**स्तम्बघ्न** त्रि० स्तम्बो हन्यतेऽनेन हन-घञर्थे क। स्तम्बो-

न्मूलके खनित्रादौ अमरः। स्तम्बहननमपात्र।

**स्तम्बपुर्** स्त्री स्तम्बप्रधाना पूः न समासान्त। ताम्रलिप्ते

पुरभेदे हेमच०।

**स्तम्बेरम** पुंस्त्री० स्तम्बे तृणादीनां काण्डे गुच्छे गुल्मे

वा रमते रम-अच् अलुक्स०। गजे अमरः स्त्रियां ङीप्।

**स्तम्भ** पु० स्तम्भ-अच्। (थाम) १स्थूणायाम् अमरः। भावे

घञ्। २जडीभावे पु०।

**स्तम्भन** पु० स्तम्भयति स्तम्भ-णिच् ल्यु। कन्दर्पस्य पञ्चसु

वाणेषु मध्ये वाणभेदे जटा०। भावे ल्युट्। २जडीकरणे

न०। करणे ल्युट्। षट्कर्मान्तर्गते तन्त्रोक्ते ३अभिचारकर्मभेदे

**स्तम्भित** त्रि० स्तम्भ आस्य जातो णिच्-कर्मणि क्त। जडीकृते

**स्तरिमन्** पु० स्तृ-कर्मणि इमनिच्। तल्पे उणा०।

**स्तरी** स्त्री स्तृ-कर्मणि ई। धूमे हेमच०।

**स्तव** पु० स्तु-अप्। १प्रशंसायाम् २स्तुतौ च।

**स्तवक** पु० स्तु-इन् स्वा-अरक पृषो० वा। गुच्छे अमरः।

२ग्रन्थपरिच्छेदे ३समूहे च मेदि०।

**स्तवेय्य** पु० स्तु-एय्य। इन्द्रे उणा०।

**स्तावक** त्रि० स्तु–ण्वुल् । स्तुतिकारके प्रशंसाकारके ।

**स्तिमित** न० स्तिम–भावे क्त । १आर्द्रतायाम् अमरः । २अचाञ्चल्ये च मेदि० कर्त्तरि क्त । ३अचञ्चले ४आर्द्रे च त्रि० ।

**स्तिम्भि** पु० स्तिम–इन् मुक् च । १समुद्रे २वायौ च उणा० ।

**स्तीर्वि** पु० स्तॄ–क्विन् न वेरित्वम् । १आकाशे २रुधिरे ३तृणजातौ ४अध्वर्य्यौ ५जयसि ६शरीरे च उणादि० ।

**स्तुत** पु० स्तु-कर्म्मणि क्त । स्तुतिकर्म्मणि अमरः ।

**स्तुति** स्त्री स्तु-क्तिन् । स्तवे अमर । [अमर

**स्तुतिपाठक** पु० स्तुतिं पठति पठ–ण्वुल् । राजादेर्वन्दिनि

**स्तुन्भ** रोधने सौ० क्र्या० स्वा० कार्य्यभागी पर० सक० सेट् उदित् क्त्वावेट् । स्तुभ्नोति स्तुभ्नाति । अस्तुम्भीत् । सौत्रत्वादषोपदेश इत्यन्ये ।

**स्तुतिव्रत** पु० स्तुतौ व्रतमस्य । स्तुतिपाठके जटा० । ३६८पृ० दृश्यम्

**स्तुत्यर्थवाद** पु० ३त० । प्रशंसया अर्थवादभेदे अर्थवादशब्दे

**स्तुनक** पु स्त्री० स्तु–नकक् । छागे शब्दच० स्त्रियां ङीष् ।

**स्तुभ** पु स्त्री० स्तुन्भ–मूलक । छागे भरत स्त्रियां ङीष् ।

**स्तूप** उच्छ्राये अद० चु० अक० उभ० सेट् । स्तूपयति ते अतुस्तूपत् त । बहुपक्षत्वात् अषोपदेश एव । ५।७२ पृष्ठे ष्टूप इति धातु षोपदेशतया प्रमादात् लिखित ।

**स्तूप** पु० स्तु-पक् पृषो० स्तूप-अच् वा । १राशीकृते मृत्तिकादौ २संघाते ३वधे ४मिथ्याप्रयोजने च शब्दच० ।

**स्तृ** विस्तारे स्वा० उ० सक० अनिट् । स्तृणोति स्तृणुते अस्तार्षीत् अस्तृत अस्तरिष्ट । पर्युदासान्न षोपदेश ।

**स्तृ** प्रीतौ अक० रक्षणे सक० स्वा० प० अनिट् । स्तृणोति अस्तार्षीत् । पर्युदासेन अषोपदेश एव ।

**स्तॄ** आच्छादने क्र्या० प्वा० उ० सक० सेट् । स्तृणाति स्तृणीते अस्तारीत् अस्तरिष्ट अस्तरीष्ट अस्तीर्ष्ट । अयं षोपदेश एव न्याय्य ।

**स्तेन** चौर्य्ये अद० चु० उभ० सक० सेट् । स्तेनयति–ते अतिस्तेनत्–त । बहुपक्षत्वात् अषोपदेश ।

**स्तेन** न० स्तेन-भावे अच् । १चौर्य्ये । कर्त्तरि अच् । २चौरे त्रि० अमर ।

**स्ते(ष्टे)प** क्षेपे चु० उभ० सक० सेट् । स्तेपयति–ते अतिस्तेपत्–त । अषोपदेशत्वे मूलं चिन्त्यम् ।

**स्तेम** पु० स्तिम–घञ् १आर्द्रीभावे २क्लेदे च अमर ।

**स्तेय** न० स्तेनस्य भाव यत् नलोप । १चौर्य्ये अमर । "प्रत्यक्षं वा परोक्षं वा रात्रौ वा यदि वा दिवा । यत् परद्रव्यहरणं स्तेयं तत्परिकीर्त्तितम्" इत्युक्ते परद्रव्यापहारे स्तेय तच्च अष्टादशविवादान्तर्गतविवादपदभेदः तत्स्वरूपादिकं वीरमि० उक्तं चौरशब्दे २९६८ पृष्ठादौ दृश्यम् । [ङीप् ।

**स्तेयिन्** त्रि० स्तेयमस्त्यस्य इनि । परद्रव्यापहारके स्त्रियां

**स्तै न(न्य)** न० स्तेनस्य भाव अण्, ष्यञ् वा । १चौर्य्ये परद्रव्यापहरणे । स्तेन एव स्वार्थे ष्यञ् । २चौरे त्रि० भरत ।

**स्तैमित्य** न० स्तिमितस्य भाव ष्यञ् । १जाड्ये २क्लेदे ३आर्द्रीभावे च । [२जलविन्दौ ३अल्पे त्रि० अमर ।

**स्तोक** पु स्त्री० स्तुच–घञ् १चातके मेदि० स्त्रियां ङीष् ।

**स्तोकक** पु स्त्री० स्तोकाय जलविन्दवे कायति शब्दायते कै–क । चातके अमर स्त्रियां ङीष् ।

**स्तोम** न० स्तु-इन् । १स्तवे-गुणकर्मादिभिः प्रशंसने अमरः । "द्रव्यस्तोत्रं कर्म्मस्तोत्रं विधिस्तोत्रं तथैव च । तथैवाभिजनस्तोत्रं स्तोत्रमेतच्चतुर्विधम्" मत्स्यपु० १२१ अ० द्रव्याद्युपाधिकतया स्तवस्य चातुर्विध्यमुक्तम् । २स्तुतिसाधने वाक्ये स्तुतिश्च गुणिनिष्ठगुणज्ञानानुकूलव्यापारः तादृशाना गुणाना प्राधान्येन कथनरूपा अन्येटमात्रे कल्पिता । यथा यो देवदत्तः स चतुर्वेदाभिज्ञ इत्युक्ते सर्वे जना स्तुतिं मन्यन्ते यद्यपि इत्थं स्तुतौ शस्त्र स्तुताविव्येकार्थौ तथापि प्रगीतमन्त्रसाध्य स्तोत्रम् अप्रगीतमन्त्रसाध्यं शस्त्रमिति तयोर्विवेक इति च तत्रोक्ते प्रगीतमन्त्रसाध्ये ३स्तवने गुणकथने च । शस्त्रशब्दे प्रगीतमन्त्रे इति यदुक्तं तत्र अप्रगीतमन्त्रे इत्येव बोध्यम् । प्रगीतऋग्जातं शस्त्रमिति इ० उ० भाष्यटीकायामानन्दगिरिणोक्ते ४प्रगीते ऋग्जाते च ।

**स्तोत्रिय** त्रि० स्तोत्राय हितं य । स्तोत्रसाधने ऋगादौ "कत्ययमद्यास्मिन् यज्ञे स्तोत्रिया स्तोष्यतीति तिस्र इति कतमास्तास्तिस्र इति पुरोऽनुवाक्या च याज्या शस्यैव च तृतीया इति" छ० उ० । "स्तोत्रिया नाम ऋक्सामसमुदायः" शा०भा० । "स्तोत्रिया नाम गीतिविशिष्टा ऋग्जातम" शत०ब्रा०१४।६।१।१२ वाक्यव्याख्याया सायनभाष्यम् । "यावत्सु स्तोत्रं स्तोत्रियां वर्षं वाम वा तावतोऽपरोऽभ्यवत् कृत्वा यजेत" कात्या०श्रौ० २४ ७ २० "एका स्तोत्रियासेका ऋचामन्या कुर्यात्" कर्कः ।

**स्तोभ** पु० स्तुभ-घञ् । १अर्थशून्ये गानादिस्वरपरिपूरणार्थे शब्दभेदे यथा वा.मदेव्ये हवा होइ प्रभृतय. । २हेलने ३स्तम्भने च हेमच० ।

सकाशादिति कल्पतरौ पाठः। अध्यग्न्यादिशब्दास्तु योगरूढास्तादृशस्त्रीधनादावेव प्रयोगात्। गृहोपस्कर वाहादीनां यन्मूल्यं कन्यापणोपाधित्वेन वरादिभ्यः कन्या- र्थक्रमेण गृह्यते तच्छुल्कमिति मदनरत्ने व्याख्या- तम्। मिताक्षरायां तु यद्गृहीत्वा कन्या दीयते तच्छुल्कमित्युक्तम्। उभयत्रापि पित्रादीनां कन्याया इदमित्युद्देशो विवक्षितः अन्यथा तत्स्वस्वाभावेन स्त्रीधनत्वव्यपदेशत्वानुपपत्तेः। जीमूतवाहनेन तु कार्म्मि- णामिति पठित्वा गृहादिकर्म्मिभिः शिल्पिभिस्तत्कर्म- करणे भर्त्रादिप्रेरणार्थं स्त्रियै यदुत्कोचदानं तच्छु- ल्कं तदेव मूल्यं प्रकृत्यर्थत्वादिति व्याख्यातम्। पुनश्चोक्तम् "यदानेतु भर्तृगृहे शुल्कन्तत्परिकीर्त्ति- तमिति" व्यासोक्तं वा। भर्तृगृहगमनार्थमुत्कोचादि यद्दत्तं तच्छुल्कमित्यर्थ इति। तदुभयमपि स्वा- मिक भवत्येव तस्या एव दत्तत्वादिति तत्र स्त्री- धनत्वव्यपदेशोऽन्यस्त्रीधनवत् सुगम एव। आधि- वेदनिकं स्त्र्यन्तरविवाहकाले पूर्वभार्य्यायै यद्दीयते। यदाह याज्ञवल्क्यः "अधिविन्नस्त्रियै दद्यादाधि- वेदनिकं समम्। न दत्तं स्त्रीधनं यासां दत्ते त्वर्द्धं प्रकल्पयेत्" इति। पित्रादिभिर्जीवनाद्यर्थं स्त्रीभ्यो धनदाने विशेषमाह कात्यायनः "पितृमातृपति- भ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै। यथाशक्त्या द्विसा- हस्राद्दातव्यं स्थावरादृते"। स्थावरेतरद्धनं यथाशक्ति आकार्षापणसहस्रद्वयपर्य्यन्तं देयमित्यर्थः। व्यासोऽपि "द्विसहस्रः परो दायः स्त्रियै देयो धनस्य तु"। आद्वि- सहस्रादिति कात्यायनेन, पर इति च व्यासेनोक्ते- रितोऽधिकमिति धनिनापि न स्त्रीभ्यो देयमिति दर्शितम्। अयञ्च नियमः प्रतिवत्सरमसकृद्दाने ज्ञेयस्त- मानेकवत्सरेषु जीवनार्थं दीयमानमितोऽधिकमपि भवति चेन्न दोषः। जीवनार्थत्वाद्दानस्य यावज्जीवन्तु द्विसाहस्रमात्रेण तन्निर्वाहासम्भवात्। स्त्रीधनेऽपि भर्त्तुरनुमतिमन्तरेण स्त्रीणां न स्वातन्त्र्यमित्याह मनुः "न निर्हारं स्त्रियः कुर्य्युः कुटुम्बाद्बहुमध्यगात्। स्वकादपि च वित्ताद्धि स्वस्य भर्त्तुरनाज्ञया" इति निर्हारो व्ययः। क्वचित्तु स्त्रीधने तासां स्वातन्त्र्य- माह तदाह सौदायिकस्वरूपमुक्त्वा कात्यायनः "सौदायिके सदा प्राप्ते स्त्रीणां स्वातन्त्र्यमिष्यते। यस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम्। सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितम्। विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि"। भर्त्तृदत्ते तु स्थाव- रेतरत्रैव स्वातन्त्र्यमित्याह नारदः "भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत्। सा यथा काम- मश्नीयाद्दद्याद्वा स्थावरादृते"। स्थावरे भर्त्तृदत्ते स्त्रिया निवासाद्युपभोगमात्रं न दानविक्रयादिकमित्यर्थः। अपुत्रा शयनं भर्त्तुरित्यादि कात्यायनवचोऽपि भर्त्तृ- दत्तस्थावरविषयमेव नारदैकवाक्यतयेति केचित्। अस्माभिस्तु पत्नी दुहितर इति व्याख्यानावसरेऽस्य विषयः प्रपञ्चितः। पुरुषाणामपि कस्यचिदपि स्त्रीधने न स्वातन्त्र्यं स्वाम्याभावादित्याह कात्यायनः "न भर्त्ता नैव च सुतो न पिता भ्रातरो न च। आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः। यदि त्वेकतरो- ऽप्येषां स्त्रीधनं भक्षयेद्बलात्। सवृद्धिकं स दाप्यः स्याद्दण्डञ्चैव समाप्नुयात्। तदेव यद्यनुज्ञाप्य भक्षयेत् प्रीतिपूर्वकम्। मूल्यमेव तदा दाप्यो यदा स धनवान् भवेत्। अथ चेत् स द्विभार्य्यः स्यान्न च तां भजते पुनः। प्रीत्या विसृष्टमपि चेत् प्रतिदाप्यः स तद्बलात्। ग्रासाच्छादनवासानामुच्छेदो यत्र योषितः। तत्र स्वमा- ददीत स्त्री विभागं रिक्थिनान्तथा"। स्त्रिया धनं गृहीत्वा यद्यपरभार्य्यया सह वसत्येनाञ्चावमन्यते तदा गृहीतं तद्धनं राज्ञा बलाद्दाप्यः। भक्ताच्छा- दननिवासान् यदि भर्त्ता न ददाति तदा तेऽपि स्त्रिया बलाद्ग्राह्यास्तत्पर्य्याप्तं धनं वा ग्राह्यमिति श्लोकद्वयस्यार्थः। इदमपि तस्या दोषराहित्ये बोध्यं दुष्टा पुनः किमपि स्त्रीधनं न लभते इत्याह स एव "अपकारक्रियायुक्ता निर्लज्जा चार्थना- शिका। व्यभिचाररता या च स्त्रीधनं न तु सा- र्हति"। नार्हतीत्यनेन तया लब्धमप्याच्छिद्य ग्राह्य- मिति सूचितम्। अपकारक्रियायुक्ता सदा भर्तृप्रतिकूला- चरणपरा "निर्मर्य्यादार्थनाशिका" इत्यपि पाठः। देवलः "वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत्। भोक्त्री तत् स्वयमेवेदं पतिर्नार्हत्यनापदि। वृथा मोक्षे च भोगे च स्त्रियै दद्यात् सवृद्धिकम्" इति। वृत्ति- र्जीवनार्थं पित्रादिना दत्तमिति स्मृतिचन्द्रिकायाम्। मदनरत्ने तु वृत्तिरिति पठित्वा। वृत्तिर्जीवितार्थं पित्रादिभिर्दत्तमिति व्याख्यातम्। लाभो गौर्य्यादि- प्रीत्यर्थं यल्लभ्यते क्वचित्। वृथा आपदमन्तरेण।

भोक्तुं गोदानमिति यावत्। अननुज्ञातस्त्रामभोगविषयमेतत्। तदनुज्ञया स्वनाशेऽपि न दोषः “स्वयमेवैत्येवकारः स्वापद्यानां व्युदासार्थः। भर्त्तृव्युदासस्य पतिर्नार्हतीत्यनेनाभिधानात्। भर्त्तृव्युदासे सतो भर्त्तृरक्षणीयभ्रात्रादीनां व्युदासस्यापि दण्डापूपिकया सिद्धत्वात्। अन्यापदीत्यभिधानादापदि न दोषः। अतएव ‘पुत्त्रार्त्तिहरणे चापि स्त्रीधनं भोक्तुमर्हतीति” तस्यैव वाक्यशेषः। पतिरित्यनुषङ्गः। पुत्त्रग्रहणं कुटुम्बोपलक्षकं तस्यार्त्तिर्भक्ष्याद्यभावनिमित्ता पीडा तस्या हरणे। अन्यतःदन्यत्रापि धनाभावनिमित्ते सङ्कटे स्त्रीधनमननुज्ञातमपि पतिस्त्यक्तुं भोक्तुमर्हतीत्यर्थः। ननु परधने त्यागभोगयोः स्वाम्यनुज्ञया विना कथमर्हता बाधिताऽनेन बोध्यते। अनुज्ञायान्त्वनापद्यपि न विरोधः। उच्यते। यथनयत्नासाध्यविषये व्यये स्वत्वमेव तस्य तत्रेऽप्यदोषः। अतएव योगीश्वरोऽपि “दुर्भिक्षे धर्मकार्य्ये च व्याधौ सम्प्रतिरोधके। गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति”। धर्मकार्य्ये आवश्यके नित्ये नैमित्तिके च सम्प्रतिरोधके दण्डाद्यर्थं राजावरोधे कृते। वाचस्पतिस्तु सम्प्रतिरोधक इति व्याधिविशेषणं कार्य्यानुष्ठानबाधके इति च तदर्थं इत्याह। नाकामो दातुमर्हतीत्यपि दारिद्र्यादिकृतदानासामर्थ्ये दुर्भिक्षादिगृहीतमवश्यं देयमेतावतैव वचनोपपत्तौ सामर्थ्येऽप्यदानमिच्छयेत्यस्य कल्पयितुमनर्हत्वात्। पतिपदस्यादापद्यपि पत्युरेव पत्नीधनग्रहणाधिकारं प्रतिदानस्त्रेच्छया नान्यस्येति ज्ञेयम्। भर्त्ता दातुं प्रतिश्रुतं भार्य्यायै तस्मिन् मृते पुत्त्रादिभिस्तस्यै देयमित्याह स एव “भर्त्रा प्रतिश्रुतं देयमृणवत् स्त्रीधनं सुतैरिति”। सुतपदञ्च पौत्त्रप्रपौत्त्रयोरुपलक्षणमृणवदित्यभिधानात्। अनेन स्त्रीधने जीवन्त्यान्तस्याः सुतानां जन्मना स्वत्वेऽपि नास्ति विभाग इति गम्यते। एवं स्त्रीधनमुक्तम्”। दायभागमतं पारिभाषिकपरत्वपक्ष एव। अनयोर्युक्तायुक्तत्वं सुधीभिर्भाव्यम्। उत्तराधिकारिशब्दे ११०१ पृ० च तद्विभागो दृश्यः।

**स्त्रीधव** पु० स्त्रियं धुनाति धु–अच्। पुरुषे जटा०।

**स्त्रीधर्म्म** पु० ६त०। ऋतौ नारीणामार्त्तवविकाशे रजसि हेमच०

**स्त्रीधर्म्मिणी** स्त्री स्त्रीधर्म्मोऽस्त्यस्या इनि। रजस्वलायां स्त्रियाम् अमरः।

**स्त्रीपण्योपजीविन्** पु० स्त्रीरूपेण पण्येन जीवति जीव-णिनि। धन दत्त्वा परस्त्रीया सम्भोगार्थमन्यस्मै स्त्रियं दत्त्वा तल्लब्धधनोपजीविनि।

**स्त्रीपुंधर्म्म** पु०। स्त्रियाः पुंसश्च धर्म्मः तदधिकृत्य व्यवहारो वा। स्त्रीपुंसयोः यथाशास्त्राचाररूपे धर्म्मे तद्विषयके अष्टादश विवादपदेषु मध्ये विवादपदभेदे स्त्रीपुंसयोगोऽप्यत्र। वीर० तत् न्यरूपि यथा “तत्स्वरूपमाह नारदः “विवाहादिविधिः स्त्रीणां यत्र पुंसाञ्च कीर्त्त्यते। स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते” इति। विवाहादिशब्देन स्त्रीपुंधर्म्मा गृह्यन्ते। अतएव मनुर्व्यवहारपदोद्देशकाले स्त्रीपुंधर्म्मो विभागश्चेत्युद्दिश्य प्रतिज्ञापूर्वकं तेषां निरूपणं चकार “पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतो। संयोगे विप्रयोगे च धर्म्मान् वक्ष्यामि शाश्वतान्” इत्यादिना संयोगे अन्योन्यसंश्लेषाने विप्रयोगे देशतः कालतो वा व्यवधाने। शाश्वतान्नित्यान् अवश्यानुष्ठेयानिति यावत्। के ते धर्म्मा इत्याकाङ्क्षायामाह स एव “अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम्। विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे” इत्यादि। पुरुषैः भर्त्त्रादिभिः। विषये दण्डहेतभूतचापल्यादिविषये। नारदोऽपि “स्वातन्त्र्याद्विप्रणश्यन्ति कुले जाता अपि स्त्रियः। अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत्” इति। अतोऽन्यैरपि स्वस्त्रीणामस्वातन्त्र्यं यथा भवति तथा कर्त्तव्यमित्याशयः। पुरुषेण स्वस्त्री व्यभिचारादवश्यं रक्षणीया। तथा च हारीतः “एकव्रतसुकस्वभावात् परेन्द्रियोपहतत्वाच्च दुष्टा कुलसङ्करकारिण्यो भवन्ति जीवति जारजः कुण्डो मृते भर्त्तरि गोलकस्तस्माद्रेतोधाधानाच्छाया रक्षेज्जायानाशे कुलनाशः कुलनाशे तन्तुनाशस्तन्तुनाशे देवपितृयज्ञनाशो देवपितृयज्ञनाशे आत्मनाश आत्मनाशे सर्व्वनाश” इति। एकव्रतसुकस्वभावात् स्त्रीणां एकभर्त्तेति नियमनाशात्। परेन्द्रियोपहतत्वात् परस्मिन् पुंसि इन्द्रियस्य मनसो रागादिना उपहतत्वात्। कुलसङ्करकारिण्यः तज्जातिस्वभावानुगतप्रकोत्पादनेन कुलसाङ्कर्य्यकारिण्यः। अतएव शङ्खलिखितौ “यस्मिन् भावोऽर्पितः स्त्रीणामार्त्तवे तादृशं तनुं जनयन्तीति”। तन्तुः पुत्त्रादिसन्ततिः। मनुरपि “सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः। द्वयोर्हि

विशेषतः। बलोपधिकृते द्वे तु तृतीयमनुरागजम्" इति। एतेषां स्वरूपं दर्शयति स एव "अनिच्छन्त्या यत् क्रियते मत्तोन्मत्तप्रमत्तया। विलपन्त्या वा रहसि बलात्कारकृतन्तु तत्। छद्मना गृहमानीय दत्त्वा स्वं मदकारणम्। संयोगः क्रियते यत्र तदुपधिकृतं विदुः। अन्योन्यचक्षूरागेण दूतीसंप्रेषणेन वा। कृतं रूपार्थलोभेन ज्ञेयं तदनुरागजम्" इति। अनुरागजसंग्रहस्य त्रिविधत्वं दर्शयति स एव "तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमोत्तमम्" इति। व्यासोऽपि "संग्रहस्त्रिविधो ज्ञेयः प्रथमो मध्यमस्तथा। उत्तमश्चेति शास्त्रेषु लक्षणं च पृथक् पृथक्" इति। एतेषां स्वरूपमाह व्यासवृहस्पती "कटाक्षावेक्षणं हास्यं दूतीसम्प्रेषणं तथा। स्पर्शो भूषणवस्त्राणां प्रथमं संग्रहं स्मृतः। प्रेषणं गन्धमाल्यानां फलधूपान्नवाससाम्। सम्भाषणञ्च रहसि मध्यमं संग्रहं विदुः। एकशय्यासनं क्रीडा चुम्बनालिङ्गनं तथा। एतत् संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः" इति। स्त्रीसंग्रहणस्य ज्ञानोपायमाह याज्ञवल्क्यः "पुमान् संग्रहणे ग्राह्यः केशाकेशि परस्त्रिया। सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा" इति। परभार्य्यया सह केशाकेशि क्रीडनेन सद्यः अभिनवैः कामजैः करजदशनादिकृतव्रणादिचिह्नैर्द्वयोः सम्प्रतिपत्त्या च स्त्रीसंग्रहणवान् इति प्रतिपत्तव्य इत्यर्थः। उपायान्तरमाह स एव "नीवीस्तनप्रावरणसक्थिकेशावमर्शनम्। अदेशकालसम्भाषं सहैकस्यासनमेव च" इति। कुर्वाण इति शेषः। सक्थि ऊरुः। मनुरपि "स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत् तया। परस्परस्यानुमते सर्वं संग्रहणं स्मृतम्"। यस्तु दर्पादिना मयेयं भुक्तेति वदति सोऽपि तथाविधत्वेन ग्राह्य इत्याह व्यासवृहस्पतिनारदौ "दर्पाद्वा यदि वा मोहात् श्लाघया वा स्वयं वदेत्। पूर्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतम्" इति। बलात्कारकृतस्य स्त्रीसंग्रहणस्य साहसान्तर्भूतत्वेन तत्रैव दर्शितत्वादुपधिकृते दण्डमाह वृहस्पतिः "दर्पाद्वा कामयेद्यस्तु तस्य सर्वहरो दमः। अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत् ततः" इति। सर्वहरः सर्वस्वहरः एतत् सजातीयविषयम्। हीनोत्कृष्टागमने तु क्रमेणार्द्धं धनं सर्वस्वहरणरूपो वधचिह्नितसर्वस्वहरणरूपो वा दण्डोऽवगन्तव्यः। "दमानेव समायान्ति" साहसादिनिरूपण-

दर्शितवचनात्। तत्र वचने पुरुषस्यापकर्षमात्रे युक्तो दण्डो न स्त्रिया इति नाक्तस्या दण्डः, तत्र साहसस्त्रीसंग्रहणवत् प्रकृतेऽपि सजातीयोपभुक्तायाः सव्यवहार्य्यायाः प्रायश्चित्ताचरणानन्तरं पुनरपि दमोपभुक्ताया इति ज्ञातव्यमित्युक्तं मदनरत्ने। अनुरागजत्रिविधसंग्रहणे दण्डमाह स एव "त्रयाणामपि चैतेषां प्रथमो मध्यमोत्तमौ। विनयः कल्पनीयः स्यादधिकोऽत्र यथाधिकः" इति। अधिकः प्रथमस्य साहसादिभ्योऽधिकः। संयोगे दण्डमाह याज्ञवल्क्यः "सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः। प्रातिलोम्ये वधः पुंसो नार्य्याः कर्णादिकर्त्तनम्" इति। चतुर्णामपि वर्णानां बलात्कारेण सजातीयपरभार्य्यागमने साशीतिपणसहस्रो दण्डः। यदा त्वानुलोम्येन हीनजातीयागमनं तदा मध्यमसाहसः, उत्कृष्टजातीयागमने गन्तुर्वधः। तस्याः कर्णादिकर्त्तननियमः। एतच्चानुरागजसंग्रहणविषयं स्त्रिया अपि दण्डाभिधानात्। बलात्कारोपधिकृतयोस्तु स्त्रिया अनपराधित्वेन दण्डाभावात्। अथाद्येन प्रातिलोम्येन गमने पुरुषस्य वधं विधाय स्त्रियास्तदर्द्धतुल्यकर्णनासादिकर्त्तनविधानात् सजातीयागमने पुरुषस्य यावुक्तावुत्तममध्यमसाहसौ दण्डौ तदर्द्धं स्त्रिया दण्ड इति सूचितम्। अतएव कात्यायनः "सर्वेषु चापराधेषु पुंसो योऽर्थदमः स्मृतः। तदर्द्धं योषितो दद्युर्वधे पुंसोऽङ्गकर्त्तनम्" इति। स्त्रिया इति शेषः। यदा पुनः सवर्णामगुप्तामानुलोम्येन गुप्तां वा व्रजति तदा विशेषमाह मनुः "सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद् व्रजन्। शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः। सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन्। शूद्रायां क्षत्रियविशोः सहस्रन्तु भवेद्दमः" इति। ते क्षत्रियवैश्यौ। एतच्च गुरुसखिभार्य्यादिव्यतिरिक्तविषयम्। तत्र दण्डान्तरविधानात्। तदाह नारदः "माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा। दुहिता चार्य्यभार्य्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या। शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते" इति। यत्तु प्रातिलोम्येन गमने क्षत्रियादेः पुरुषस्य वध इत्युक्तं योगीश्वरवचने। तद्गुप्ताविषयमन्यथार्थदण्डः। तथा च मनुः "उभावपि हि तावेव ब्रा-

**स्थलेरुहा** स्त्री स्थले रोहति रुह—क अलुक्स०। १घृतकुमार्य्याम् २दग्धारुहायां च राजनि०।

**स्थलेशय** पु० स्थले शेते शी—अच् अलुक्स०। १वराहरुरुप्रभृतौ पशौ राजनि०। २स्थलशायिनि त्रि०।

**स्थवि** पु० स्था किच् वेर्नित्त्व। १तन्तुवाये उज्ज्वलद०। २स्वर्गे ३जङ्गमे च संक्षिप्त०।

**स्थविर** न० स्था—किरच् स्थवादेश। १शैलेये गन्धद्रव्ये राजनि० २चतुर्मुखे ब्रह्मणि पु० हेमच०। ३अचले ४स्थिरे त्रि० उणा० ५वृद्धे च त्रि० अमरः। ५महाश्रावणिका स्त्री राजनि०।

**स्थविष्ठ** त्रि०अतिशयेन स्थूल इष्ठन् लोपे गुणः। अतिवृद्धे अमरः। इयसुन् स्थवीयानपि अतिवृद्धे त्रि०स्त्रियां ङीप्।

**स्थाणु** पु० स्था नु पृषो० णत्वम्। १शिवे २शाखाशून्यवृक्षे च अमर ३आयुधभेदे पु०नीलक०। ४दृढे त्रि० धराणि शिवस्य स्थाणुशब्दवाच्यत्वे कारणमुक्तं वामनपु०४६अ०। यथा "समुत्तिष्ठन् जलात्तस्मात् प्रजास्ता ददृशानघ। ततोऽहं ता प्रजा दृष्ट्वा रहिता एव तेजसा। क्रोधेन महता युक्तो लिङ्गमुत्पाट्य चाक्षिपम्। तत्क्षिप्तं सरसो मध्ये ऊर्द्ध्वमेव यदा स्थितम्। तदाप्रभृति लोकेषु स्थाणुरित्येव विश्रुतम्"।

**स्थाणुतीर्थ** न० शैवे तीर्थभेदे वामनपु० ४२अ०।

**स्थाण्डिल** पु० स्थण्डिले शयिताऽण्। व्रतार्थं स्थण्डिले शयितरि अमर।

**स्थाण्वाश्रम** पुन० ६त०। हिमाचलस्थिते शिवस्य तपश्चरणाश्रमभेदे "स स्थाण्वाश्रम हैमवतं जगाम" कुमार।

**स्थाण्वीश्वर** पु० शिवलिङ्गभेदे "स्थाणुनाम्ना हि लोकेषु पूजनीयो दिवौकसाम्। स्थाणोरीशः स्थितो यस्मात् स्थाण्वीश्वरस्ततः स्मृतः" वामने ४२अ० तन्माहात्म्यादिकम्। तत्र दृश्यम्।

**स्थान** न० स्था—ल्युट्। १स्थितौ २सादृश्ये ३अवकाशे मेदि० ४सन्निवेशे ५वसतौ हेमच० ६मन्यसन्धौ त्रिका० ७भाजने हला० ८निकटे ९व्याकरणोक्ते प्रसङ्गे आदिश्यमानस्य यणादेः कारणभूते इगादौ। १० नीतिवेदिनामुपचयापचयहीने साम्यावस्थाने च अमर। उपचयापचयौ च आदिवर्गशब्दोक्तस्य तन्त्रादेर्ज्ञेयौ भरत। वसतिश्च लोकभेदः। सम्यग्वर्त्तिना स्वस्वधर्मानुष्ठायिना जनाना लोकविशेषात्मक स्थानमुक्तं अग्निपु० उक्तं यथा "प्राजापत्य ब्राह्मणाना स्मृत स्थानं क्रियावताम्। स्थानमैन्द्र क्षत्रियाणा तथा चेन्द्र संग्रामेष्वनुवर्त्तिनाम्। गान्धर्व शूद्रजातीनां परिचर्य्यानुकारिणाम्। अष्टाशीतिसहस्राणा यतीनामूर्द्धरेतसाम्। स्मृत तेषान्तु यत् स्थान तदेव गुरुवासिनाम्। सप्तर्षीणान्तु यत् स्थानं स्मृत तद्वत् वनौकसाम्। प्राजापत्य गृहस्थाना गृहधर्मानुवर्त्तिनाम्। न्यासिनान्तु पर ब्रह्म योगिनाममृत स्मृतम्। एकान्तवादिना ब्रह्मध्यायिना परम पदम्। तामिस्रमन्धतामिस्रमहारौरवरौरवम्। असिपत्रवनं घोरं कालसूत्रमवीचिमत्। वेदस्य निन्दकानान्तु यज्ञव्याघातकारिणाम्। स्थानमेतत् समाख्यात स्वधर्मविनिवर्त्तिनाम्" श्रुतिलिङ्गाधिकरणोक्ते ११क्रमे मीमां०। "स्थान क्रमो योगबलं समाख्या पार्थसारथि"। १२ज्ञापके नियहस्थानमित्यादि।

**स्थानक** न० स्वार्थे क।१स्थानशब्दार्थे। स्थाने क जलसेक। २आलवाले हेमच०।

**स्थानचञ्चला** स्त्री स्थाने स्थितावपि चञ्चला। १वर्वरीदले शब्दच०। अल्पवातेन चञ्चलत्वात्तस्यास्तथात्वम्।

**स्थानच्युत** त्रि० स्थानात् स्वस्थानात् च्युत। पदच्युते "स्थानस्थितस्य पद्मस्य मित्रे वरुणभास्करौ। स्थानच्युतस्य तस्यैव क्लेदशोषणकारकौ" गरुडपु० ११५ अ०। स्थानभ्रष्टादयोऽप्यत्र। "स्थानस्थिताश्च पूज्यन्ते पूज्यन्ते च पदस्थिताः। स्थानभ्रष्टा न पूज्यन्ते केशा दन्ता नखा नराः" गरुडपु० ११५अ०।

**स्थानाध्यक्ष** त्रि० स्थाने अध्यक्षः। स्थानरक्षके हेमच०।

**स्थानिक** त्रि० स्थानेऽधिकृत ठक। स्थानाध्यक्षे हेमच०।

**स्थानिन्** त्रि० स्थानमस्यास्ति रक्ष्यत्वेन इनि। १स्थानरक्षके स्थान प्रसङ्ग अस्त्यर्थे इनि। व्याकरणोक्ते आदिश्यमानस्य यणादे कारणे इगादौ "स्थानिवदादेशोऽनल्विधाविति" पाणिनि०।

**स्थानीय** न० स्थीयतेऽस्मिन् स्था—आधारे अनीयर्। १नगरे अमरः। स्थान साहश्य माम वाऽर्हति स्थानछेदम् वा छ। २वासयोग्ये देशे ३सदृशे ४स्थानसम्बन्धिनि च त्रि०।

**स्थाने** अव्य० स्था—ने। १योग्यत्वे २औचित्ये च "स्थाने भवानेकनराधिप इत्यति" रघु। ३सत्ये ४सादृश्ये ५करणार्थे च शब्दर०।

**स्थापत्य** पु० स्थपतिरेव स्वार्थे ष्यञ्। १अन्तःपुररक्षके कञ्चुकिप्रभृतौ अमरः। तस्य भावः ष्यञ्। २स्थपतिधर्मे न०

**स्थापक** त्रि० स्थापयति स्था—णिच्—पुक् ण्वुल्। यथावस्थानरक्षित तथा निवेशके। स्थितिस्थापक।

स्तु रिवाविरमभा"भट्टि०। ३याचते भरत०। ४हवे गोधरः

**स्थित** त्रि० स्था–क्त। १ऋजुस्ततया दण्डायमाने "स्थितायां स्थानमापरे" रघु०। २निश्चये ३प्रतिज्ञायुक्ते मेदि०। ४स्थितियाजिनि च।

**स्थिति** स्त्री स्था–क्तिन्। १मर्यादायां मेदि० २न्याय्यपथावस्थाने अमर०। ३स्थाने च। स्थानभेदे स्थितिनिषेधो यथा "नास्थिभस्मकपालानि न केशान् वा कथञ्चन। तुषाङ्गारकरीषाद्यं नाधितिष्ठेत् कदाचन" कौर्मपु०१५अ०।

**स्थितिस्थापक** स्थितिं स्थापयति स्था–णिच्–पुक् ण्वुल्। न्यायोक्ते संस्कारविशेषे "संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने" "स्थितिस्थापकसंस्कारः क्षितौ केचित् चतुर्ष्वपि। अतीन्द्रियोऽसौ विज्ञेयः क्वचित् स्पन्देऽपि कारणम्" भाषाप०।

तल्लक्षणं पृथिवीमात्रसमवेतसंस्कारत्वव्याप्यजातिमत्त्वम्। संस्कारत्वव्याप्यजातित्वं तु तद्व्याप्यधर्मत्वम्। तथा च पूर्वसंयोगजनितसंयोगजनकत्वे सति पूर्वसंयोगजातीयसंयोगजनकत्वं तत्त्वम्। स च क्रियाविशेषजन्यः क्रियाविशेषजनकः स्वजन्यक्रियानाश्यो गुणविशेषः। अन्यथाकृतस्य पुनस्तदवस्थतया स्थापकः गुणविशेषः इत्यन्ये। यथाऽऽकृष्टशाखादीनां त्यागे पुनस्तथावस्थिततया अवस्थापकः। स च अतीन्द्रियः।

**स्थिर** पु० स्था–किरच्। १पर्वते २देवे ३वृक्षे ४कार्त्तिकेये शब्दर०। ५शनौ ६मोक्षे मेदि०। ७वृषे राजनि०। ८धववृक्षे भावप्र०। ज्योतिषोक्ते ९वृषसिंहवृश्चिककुम्भराशिषु च। १०कठिने ११निश्चले च त्रि०। १२शालपर्ण्यां स्त्री शब्दच० एव १३काकोल्यां जटा० १४पृथिव्यां १५गाम्भार्य्याञ्च स्त्री अमर०। पृथिव्याः स्थिरत्वं मतभेदेन वसुधाशब्दे ८२ पृ० दर्शितम्। स्थिरतया वर्ण्यौ पदार्थौ कविकल्प० उक्ता यथा युद्धे प्रधानभटः साध्वीयम सज्जनमन। धर्माधर्मौ मम भोगा सम्पादनभावे तयोर्वर्ण्यत्वात्स्थिरत्वात् स्थिरत्वम्।

**स्थिरगन्ध** पु० स्थिरो गन्धो यस्य। १चम्पकवृक्षे २पाटलायां ३केतक्याञ्च स्त्री राजनि०। ४स्थिरगन्धयुक्ते द्रव्यमात्रे त्रि०

**स्थिरच्छद** पु० स्थिरश्छदो यस्य। भूर्जपत्रवृक्षे रत्नमा०।

**स्थिरच्छाय** पु० स्थिरा नियता छाया यस्य। १वृक्षमात्रे शब्दमा० २छायाप्रधाने वटादौ त्रिका०।

**स्थिरजिह्व** पु० स्थिरा अचला जिह्वा यस्य। मत्स्ये हेमच०।

**स्थिरजीविता** स्त्री स्थिरं जीवितमायुर्यस्याः। १शाल्मलीवृक्षे शब्दर०। २चिरजीविनि त्रि०।

**स्थिरतर** त्रि० अतिशयेन स्थिरः तरप्। १अत्यन्तस्थिरे अमरः २ईश्वर पु०।

**स्थिरदंष्ट्र** पुंस्त्री० स्थिरा दंष्ट्रा यस्य। १सर्पे स्त्रियां ङीष्। २वराहाकृतिविष्णौ पु० मेदि० ३ध्वनौ शब्दच०।

**स्थिरपत्र** पु० स्थिराणि पत्राण्यस्य। हिन्ताले राजनि०।

**स्थिरपुष्प** पु० स्थिरं पुष्पमस्य। १चम्पकवृक्षे २बकुलवृक्षे च राजनि०। [कवृक्षे राजनि०।

**स्थिरपुष्पिन्** पु० स्थिरं पुष्पमस्त्यस्य बाहुल्येन इनि। तिल

**स्थिरमति** स्त्री स्थिरा–मतिः। १स्थिरबुद्धौ स्थिरा मतिर्यस्य। २स्थिरबुद्धियुक्ते त्रि०। "अनिकेतः स्थिरमतिः" गीता।

**स्थिरयौवन** न०पु० स्थिरं यौवनमस्य। १विद्याधरादौ देवयोनिभेदे त्रिका०। २चिरस्थायियौवनयुक्ते त्रि०।

**स्थिररङ्गा** स्त्री स्थिरो रङ्गो रागो यस्याः। नील्याम् राजनि०। [द्रायाम् राजनि०। २निश्चलरागयुते त्रि०।

**स्थिररागा** स्त्री स्थिरो रागो रञ्जनं यस्याः। दारुहरि-

**स्थिरसाधनक** पु० स्थिरं साधयति साध ण्वुल् ततः स्वार्थे क। सिन्दुवारवृक्षे राजनि०।

**स्थिरसार** पु० स्थिरः सारो यस्य। (सेगुण) शाकवृक्षे राजनि०

**स्थिराङ्घ्रिप** पु० कर्म०। हिन्तालवृक्षे राजनि०।

**स्थिरायुस्** पु० स्थिरम् आयुरस्य। १शाल्मलिवृक्षे अमर० दीर्घकालस्थायित्वात्तस्य तथात्वम्। २चिरजीविनि त्रि०।

**स्थुड** वरणे तुदा० कुटा० पर० सक० सेट्। स्थुडति अस्थुडीत् तुस्थोड। थोपदेश इद न्याय्य।

**स्थूणा** स्त्री स्था–नक् उङ्गलादेश पृषो०। (खुँटी) १गृहस्तम्भे "स्थूणावयव घटम्" साहि० २लौहप्रतिमायाञ्च अमर

**स्थूणानिखननन्याय** पु० न्यायशब्दे ४१७ पृ० न्यायभेदे।

**स्थूर** पु० स्था–ऊरन् किच्च। १वृषे सिद्धान्तकौ०। २मनुष्ये सि० कौ०।

**स्थूरिन्** पु० स्था–ऊरन् किच्च स्थूरो वृषादिर्भारवाहकः स्थूरोऽस्त्यस्य साहस्येन इनि। पृष्ठादिवत्पृष्ठेन भारवाहकाश्वे खरे च स्थूरस्य भाव अण् स्थौरं तदस्त्यस्य इनि स्थौरीत्यपि अमर।

**स्थूल** वृंहणे चुरा० उभ० अक० सेट्। स्थूलयति–ते अतस्थूलत्–त। बहुलवचनात् णोपदेश।

**स्थूल** त्रि० स्थूल–अच्। १पीवरे (मोटा) अमर०. २मूर्खे ३पमूढे च न० मेदि०। ४पनसे पु० राजनि०। ५गजपिप्पल्याम् स्त्री शब्दच०। एव ६एर्वारौ राजनि०। ७वृहदेलायाञ्च रत्नमा० स्वार्थे क। पीवरे त्रि०।

संज्ञायां कन् (चकुड) वृक्षभेदे पु० रत्नमालाकोष. ।
स्थूलकङ्गु पु० कर्म० । वरकधान्ये (गोरधान) राजनि० ।
स्थूलकणा स्त्री कर्म० । १स्थूलजीरके राजनि० ३ब० । २पीनकणयुते त्रि० ।
स्थूलकण्टक पु० स्थूलः कण्टकोऽस्य । जालबर्बुरे राजनि० काप् अत इत्वम् । स्थूलकण्टिका शाल्मलिवृक्षे स्त्री ।
स्थूलकण्टा स्त्री स्थूलं कण्टं कण्टकोऽस्याः । वृहत्याम् राजनि० ।
स्थूलकन्द पु० स्थूलः कन्दोऽस्य । १रक्तलशुने २शूरणे ३हस्तिकन्दे ४मानके च राजनि० ।
स्थूलक्ष्वेड पु० स्थूलः क्ष्वेडो यत्र । वाणे त्रिका० ।
स्थूलचञ्चु पु० स्थूला चञ्चुरिव शिखाऽस्य । १महाचञ्चुशाके राजनि० २वृहच्चञ्चुयुते त्रि० ।
स्थूलजीरक पु० कर्म० । जीरकभेदे (कालजिरा) भावप्र० ।
स्थूलताल पु० कर्म० । हिन्ताले राजनि० ।
स्थूलत्वचा स्त्री स्थूला त्वचा यस्य । काश्मर्य्याम् राजनि० ।
स्थूलदण्ड पु० स्थूलो दण्डोऽस्य । देवनले राजनि० । स्थूलनालोऽप्यत्र । [राजनि० ।
स्थूलदर्भ पु० स्थूल दर्भं दृश्यतेऽनेन दृभ-घञ् । मुञ्जे (मुञ्ज)
स्थूलदला स्त्री स्थूलानि दलानि यस्याः । घृतकुमार्य्याम् राजनि० ।
स्थूलनास पु स्त्री० स्थूला नासाऽस्य । १शूकरे हेमच० स्त्रियां ङीष् । २वृहन्नासायुते त्रि० स्त्रियां ङीप् । स्त्रियां टाप् स्थूलनासिकोऽप्यत्र ।
स्थूलपट्ट पु० स्थूलं पट्टं यस्मात् । कार्पासे शब्दर० तत्सूत्रज पट्टस्य स्थूलत्वात्तथात्वम् । पृषो० स्थूलपट्टाक तत्रार्थे पु० शब्दर० ।
स्थूलपाद पु स्त्री० स्थूलाः पीनाः पादा यस्य नान्त्यलोपः समा० । १गजे शब्दमा० स्त्रियां ङीष् । ७त० । २श्लीपदरोगे च ।
स्थूलपुष्प पु० स्थूलं पुष्पं यस्य । १वकवृक्षे २पर्वतजातापराजितायां स्त्री रत्नमा० । ३यवतिक्तायां स्त्री राजनि० ङीप् ।
स्थूलफल पु० स्थूलं फलमस्य । १शाल्मलीवृक्षे राजनि० । २वृहत्फलान्विते त्रि० । ३शणपुष्प्यां स्त्री राजनि० ।
स्थूलभूत न० कर्म० । वेदान्तोक्ते प्रत्येक पञ्चात्मकतामापन्ने पृथिव्यादौ भूते ।
स्थूलमरिच न० नित्यकर्म० । कक्कोले राजनि० ।
स्थूलमूल न० । ६ब० । माणकमूले राजनि० ।

स्थूललक्ष(क्ष्य) त्रि० स्थूलं लक्षयति दानाय संकल्पते लक्ष-अच् स्थूलं लक्ष्यं वाऽस्य । बहुदातरि अमरः ।
स्थूलवर्त्मकृत् पु० स्थूलं वर्त्म करोति कृ-क्विप् । माषप-यष्टिकायाम् शब्दर० । [२स्थूलपथान्विते त्रि० ।
स्थूलवल्कल पु० स्थूलं वल्कलमस्य । १रक्तलोध्रे जटा० ।
स्थूलवृत्तफल पु० स्थूलं वृत्तमेव फलमस्य । चिरवि-पिच्छीलकवृक्षभेदे (मयना) राजनि० ।
स्थूलवैदेही स्त्री विदेहे भवा अण् कर्म० । गजपिप्पल्याम् [राजनि० ।
स्थूलशाटक पु० कर्म० । स्थूलवस्त्रे अमरः स्थूलशाटिकादयोऽप्यत्र स्त्री जटा० ।
स्थूलशालि पु० कर्म० । महाशालौ राजनि० ।
स्थूलशीर्षिका स्त्री स्थूलं शीर्षं यस्याः कप् अत इत्वम् । क्षुद्रपिपीलिकायाम् हेमच० । २वृहन्मस्तकयुते त्रि० ।
स्थूलषट्पद पु० षट्पद इव स्थूलः राज० । वरोलायाम्
स्थूलस्कन्ध पु० स्थूलः स्कन्धोऽस्य । लकुचे (मान्दार) राजनि० ।
स्थूलहस्त न० स्थूलः हस्त इवाकारोऽस्य । गजशुण्डे त्रिका०
स्थूलांशा स्त्री स्थूलः अंशोऽवयवोऽस्याः । १गजपिप्पल्याम् राजनि० २स्थूलावयवे त्रि० ।
स्थूलाम्र पु० कर्म० । आम्रभेदे राजाम्रे राजनि० ।
स्थूलास्य पु स्त्री० स्थूलमास्यं यस्य । १सर्पे शब्दच० स्त्रियां जातित्वेऽपि योपधत्वात् टाप् । २वृहन्मुखयुते त्रि० ।
स्थूलैरण्ड पु० कर्म० । वृहदेरण्डवृक्षे राजनि० ।
स्थूलैला स्त्री कर्म० । वृहदेलायाम् (बड एलाइच) राजनि० ।
स्थूलोच्चय पु० स्थूलानामुपलानामुच्चयो यत्र । १गण्डशैले स्थूलस्य गजस्य उच्चयः । २गजमध्यगतौ ३वरण्डे ४असाकल्ये मेदि० ५गजदन्तच्छिद्रे च शब्दमा० ।
स्थेय पु० स्थीयते विवादनिर्णायकतयाऽत्र स्था-कर्मणि यत् । विवादे १सभ्यनिर्णायके (जुरी) २पुरोहिते च मेदि० ३स्थिरे त्रि० हेमच० ।
स्थेयस् त्रि० अतिशयेन स्थिरः ईयसुन् स्थादेशः । १स्थिरतरे २शाश्वते त्रि० भरतः । स्त्रियां ङीप् । इष्ठन् स्थेष्ठोऽप्यत्र त्रि
स्थैर्य्य न० स्थिरस्य भावः ष्यञ् । स्थिरतायाम् ।
स्थौणेय(क) पु० स्थूणाया तत्समीपे भवः ढक् ढकञ् वा । ग्रन्थिपर्णनामगन्धद्रव्ये (गांठिआला) अमरः । "स्थौणेयकं दृश्यितं शुकवर्हञ्च कुक्कुरम् । शीर्णं रोमशकं चापि शुकपुष्पं शुकच्छदम् । स्थौणेयकं कटु स्वादु तिक्तं स्निग्धं त्रिदोषनुत । मेधाशुक्रकरं रुच्यं रक्षोऽघ्नीज्वरजन्तुजित् । हन्ति कुष्ठास्रदृग्दाहदौर्गन्ध्यतिलकालकान् ।

अदारेण चापथेन क्वचिदपि नगरे ग्रामे मन्दिरे वा न प्रविशेत्। न कदाचन प्राकारातिक्रमणकारिणो राज्ञः च-ण्डालात् प्रतिगृह्णीयात्" मिता०। "प्रतिग्रहे सूनिचक्रि-ध्वजिवेश्यानराधिपाः। दुष्टा दशगुणं पूर्वात् पूर्वादेते यथा-क्रमम्" याज्ञ०। प्रतिग्रहेषु सूनाद्याः पञ्च पूर्व-स्मात् पूर्वस्मात् परःपरो दशगुणदुष्टः। सूना प्राणिहिंसा सा अस्यास्तीति सूनी प्राणिहिंसापरः चक्री तैलिकः। ध्वजी सुराविक्रयी। वेश्या पण्यस्त्री। नराधिपः अनन्तरोक्तः" मिता०।

"देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः। नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनादि च" याज्ञ०। "देवानाम् ऋत्विक्स्नातकाचार्यराज्ञां परस्त्रियाश्च छायां नाक्रामेत् नाधितिष्ठेत् स्वच्छन्देन बुद्धिपूर्वम् यथाह मनुः "देवतानां गुरो राज्ञः स्नातकाचार्ययोरपि। नाक्रामेत् कामतश्छायां बभ्रुणो दीक्षितस्य च" इति। बभ्रुणो नकुलवर्णस्य यस्य कस्य चित् पिङ्गलस्य वा सोमादेर्वा च इति मनुवचनविरोधनिर्देशात्। रक्तादीनि च नाधितिष्ठेत्। आदिग्रहणात् स्नानोदकादेर्ग्रहणम् "उद्वर्त्तन-मपस्नानं विण्मूत्रे रक्तमेव च। श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत्तु कामतः" इति मिता०। "विप्राहिक्षत्रि-यात्मानो नावज्ञेयाः कदाचन। आमृत्योः श्रियमाका-ङ्क्षेत् न कञ्चिन्मर्मणि स्पृशेत्" याज्ञ०। "विप्रो बहुश्रुतोऽहिः सर्पः क्षत्रियो नृपतिः। एते कदाचिदपि नावमन्तव्याः आत्मा च स्वयं नावमन्तव्यः। आमृत्योर्यावज्जीवं श्रिय-मिच्छेत्, कञ्चिन्मर्मणि न स्पृशेत् कस्यचिदपि मर्म तुदन्तं न प्रकाशयेत्" मिता०। "दूरादुच्छिष्टविण्मूत्रपादाम्भांसि स-मुत्सृजेत्। श्रुतिस्मृत्युदितं सम्यक् नित्यमाचारमाचरेत्" याज्ञ०। "भोजनाद्युच्छिष्टं विण्मूत्रे पादप्रक्षालनजलञ्च गृहाद् दूरात् समुत्सृजेत्। श्रौतं स्मार्त्तं चाचारं नित्यं सम्यगनुतिष्ठेत्" मिता०। "गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत्। न निन्दाताडने कुर्यात् पुत्रं शिष्यं च ताडयेत्" याज्ञ०। गां ब्राह्मणमग्निमन्नमदनीयं विशेषतः पक्वमशुचिर्न स्पृशेत्। पादेन त्वशुचिरपि "यदा पुनः प्रमादात् स्पृशति तदाचमनोत्तरकालं मनूक्तं का-र्यम् "स्पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत्। गात्राणि चैव सर्वाणि नाभिं पाणितलेन तु" इति तत्र प्राणादीनुपस्पृशेत्। कस्यचिदपि निन्दाताडने न कुर्यात्। एतच्चानपकारिणः "अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृगङ्गतः। दुःखं सुमहदाप्नोति प्रेत्याप्राज्ञ-तया नरः" इति। पुत्रशिष्यौ शिक्षार्थमेव ताडयेत्। चकाराद् दासादीनपि। ताडनञ्च रज्ज्वादिनोत्तमाङ्ग-व्यतिरेकेण कार्यम् "शिष्यशिष्टिरवधेनाशक्तौ रज्जु-वेणुदलाभ्यां तनुभ्यामन्येन घ्नन् राज्ञा शास्यः" इति गौतमवचनात्। "पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथ-ञ्चन" इति मनुवचनात्" मिता०। "कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत्। अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्या-चरेन्न तु" याज्ञ०। कर्मणा कायेन यथाशक्ति धर्ममनुतिष्ठेत्। तमेव मनसा ध्यायेत्। वाचा वदेत्। धर्मं विहितमपि लोकविद्विष्टं लोकाभिशस्तिजनकं मधुपर्के गोवधादिक नाचरेत्। यस्मादसौ मन्दोपोषीयवत् स्वर्गसाधनं न भ-वति" मिता०। "मातृपितृतिथिभ्रातृजामिसम्बन्धिमातुलैः। वृद्धबालातुराचार्यवैद्यसंश्रितबान्धवैः। ऋत्विक्पुरोहि-तापत्यभार्यादाससनाभिभिः। विवादं वर्जयित्वा तु सर्वाँल्लोकाञ्जयेद् गृही" याज्ञ०। माता जननी। पिता जनकः। अतिथिरध्वनीनः। भ्रातरो भिन्नोदरा अपि। जामयो विद्यमानभर्तृकाः स्त्रियः। सम्बन्धिनो वै-वाह्याः। मातुलो मातृभ्राता। वृद्धः सप्तत्युत्तरव-यस्कः। बालः आषोडशवर्षात्। आतुरो रोगी। आचार्य उपनेता। वैद्यो विद्वान् भिषग्वा। संश्रित उपजीवी। बान्धवाः पितृपक्षा मातृपक्षाश्च। मातुलस्य पृथगुपादानम् आदरार्थम्। ऋत्विग्याजकः। पुरोहितः शान्त्यादेः कर्त्ता। अपत्यं पुत्रादि। भार्या सहधर्म-चारिणी। दासः कर्मकरः। सनाभयः सोदरा भ्रा-तरः पृथगुपादानं स्नेहाभिमानप्राप्त्यर्थम्। एतैः मात्रादिभिः सह वाक्कलहं परित्यज्य सर्वान् प्राजा-पत्यादीन् लोकान् प्राप्नोति"। "पञ्च पिण्डाननुद्धृत्य न स्नायात् परवारिषु। स्नायान्नदीदेवखातह्रदप्रस्रवणेषु च" याज्ञ०। परवारिषु परस्वामिकेषु सर्वसत्त्वोद्देशेन त्यक्तेषु तडागादिषु पञ्च पिण्डाननुद्धृत्य न स्नायात्। अनेनात्मी-योत्सृष्टाद्युत्सृष्टेषु पिण्डोद्धरणमन्तरेणापि स्नानमभ्यनु-ज्ञातम्। नद्यादिषु कथं तर्हीत्याह स्नायान्नदीति। साक्षात् परम्परया वा समुद्रगाः स्रवन्त्यो नद्यः। देव-खातं देवनिर्मितं पुष्करादि। उदकमहाप्रवाहाभिघातजन-ितो महानिम्नप्रदेशो ह्रदः। पर्वताद्युन्नतप्रदेशात् प्रस्रुतम् उदकं प्रस्रवणं एतेषु पञ्चपिण्डोद्धरणेनैव स्नायात्। एतच्च नित्यस्नानविषयम् यदि अस्मै

"नदीषु देवखातेषु तड़ागेषु सरःसु च । स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च" इति नारदस्मरणात् । शौचाद्यर्थन्तु यथासम्भवं परकीयेषु पिण्डानुद्धरणेऽपि सर्वस्य न निषेधः" मिता० । "परशय्यासनोद्यानगृहयानानि वर्जयेत् । अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि" याज्ञ० । शय्या कशिपुः । आसनं पीठादि । उद्यानमाम्रवणादि । गृहं प्रसिद्धम् । यानं रथादि परसत्कान्येतान्यदत्तान्यननुज्ञातानि वर्जयेन्नोपभुञ्जीत । अभोज्यान्नान्याह । अग्निहीनस्येति । श्रौतस्मार्त्ताग्न्यधिकाररहितस्य शूद्रस्य प्रतिलोमजस्य वाधिकारवतोऽप्यग्निरहितस्यान्नमनापदि न भुञ्जीत न प्रतिगृह्णीयाच्च । "तस्मात् प्रशस्तानां स्वकर्मणा शुद्धजातीनां ब्राह्मणो भुञ्जीत गृह्णीयाच्चेति" गौतमवचनात्" मिता० । "कदर्य्यबद्धचौराणां क्लीवरङ्गावतारिणाम् । वैणाभिशस्तवार्द्धुष्यगणिकागणदीक्षिणाम्" याज्ञ० । कदर्य्यो लुब्धः "आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयेत् । लोभाद् यः पितरौ भृत्यान् स कदर्य्य इति स्मृतः" इत्युक्तः । बद्धो निगडादिना वाचा संनिरुद्धश्च । चौरो ब्राह्मणसुवर्णव्यतिरिक्तपरस्वापहारी । क्लीवो नपुंसकः । रङ्गावतारो नटचारणमल्लादि । वेणुच्छेदजीवी वैणः । अभिशस्तः पतनीयैः कर्मभिरभियुक्तः । वार्द्धुष्यो निषिद्धवृद्ध्युपजीवी । गणिका पण्यस्त्री गणदीक्षी बहुयाजकः । एतेषामन्नं नाश्नीयादित्यनुवर्त्तते" मिता० । "चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् । क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम्" याज्ञ० । "चिकित्सकोऽभिषगृहत्त्युपजीवी । आतुरो महारोगोपसृष्टः । "वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः । अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्त्तिताः" इति । क्रुद्धः कुपितः । पुंश्चली व्यभिचारिणी । मत्तो विद्यादिना गर्वितः । विद्विट् शत्रुः । क्रूरो हृदाभ्यन्तरकोपः । वाक्कायव्यापारेणोद्वेजक उग्रः । पतितो ब्रह्महादि । व्रात्यः पतितसावित्रीकः । दाम्भिको वञ्चकः । उच्छिष्टभोजी परभुक्तोज्झिताशी । एतेषाञ्चिकित्सकादीनामन्नं नाश्नीयात्" मिता० । "अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् । शस्त्रविक्रयकर्मारतन्तुवायश्ववृत्तिनाम्" याज्ञ० । "अवीरा स्त्री स्वतन्त्रा व्यभिचारमन्तरेणापि । पतिपुत्ररहितेत्यन्ये । स्वर्णकारः सुवर्णस्य विकारान्तरकृत् । स्त्रीजितः सर्वत्र स्त्रीवशवर्त्ती । ग्रामयाजी ग्रामस्य शान्त्यादिकर्त्ता बहूनामुपनेता च । शस्त्रविक्रयी शस्त्रविक्रयोपजीवी । कर्मारो लौहकारः तक्षादिश्च । तन्तुवायः सूचीशिल्पोपजीवी । श्ववृत्तिः जीवनमस्यास्तीति श्ववृत्ती । एतेषामन्नं नाश्नीयात्" मिता० । "नृशंसराजरजककृतघ्नवधजीविनाम् । चैलधावसुराजीवसहोपपतिवेश्मनाम् । पिशुनानृतिनोश्चैव तथा चाक्रिकवन्दिनाम् । एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा" याज्ञ० । "नृशंसो निर्दयः । राजा भूपतिः । तत्साहचर्य्यात्पुरोहितश्च । यथाह शङ्खः "भीतावगीतरुदिताक्रन्दितावघुष्टक्षुधितपरिभुक्तविस्मितोन्मत्तावधूतराजपुरोहितान्नानि वर्जयेत्" । रजको वस्त्रादीनां नील्यादिरागकारकः । कृतघ्न उपकृतस्य हन्ता । वधजीवी प्राणिनां वधेन वर्त्तकः । सुराजीवी मद्यविक्रयजीवी । उपपतिर्जारः सहोपपतिना वेश्म यस्यासौ सहोपपतिवेश्मा । पिशुनः परदोषस्य ख्यापकः । अनृती मिथ्यावादी । चाक्रिकस्तैलिकः । शाकटिक इत्यन्ये "अभिशस्तपतितचाक्रिकतैलिक" इति भेदेनाभिधानात् । वन्दिनः स्तावकाः सोमविक्रयी सोमलताया विक्रेता । एतेषामन्नं न भोक्तव्यम् । सर्वे चैते कदर्य्यादयो द्विजा एव कदर्य्यत्वादिदोषदुष्टा अभोज्यान्ना इतरेषां प्राप्त्यभावात् प्राप्तिपूर्वकत्वाच्च प्रतिषेधस्य । अग्निहीनस्य नान्नमद्यादनापदीत्यत्र शूद्रस्याभोज्यान्नत्वमुक्तम् । तत्र प्रतिप्रसवमाह" मिता० । "शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः । भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत्" याज्ञ० । "दासा गर्भदासादयः गोपालो गवां पालकः गवां पालनेन यो जीवति । कुलमित्रं पितृपितामहादिक्रमागतः । अर्द्धसीरी हलपर्य्याय सीरोपलक्षितकृषिफलभागग्राही । नापितः गृहव्यापारकारयिता नापितश्च । यश्च वाङ्मनःकायकर्मभिरात्मानं निवेदयति तवाहमिति । एते दासादयः शूद्राणां मध्ये भोज्यान्नाः । चकारात् कुम्भकारश्च । "गोपनापितकुम्भकारकुलमित्रार्द्धकर्षिनिवेदितात्मानो भोज्यान्ना" इति वचनात् ।

स्नातकश्च त्रिविधः व्रतस्नातकः विद्यास्नातकः उभयस्नातकश्चेति भेदात् । तत्र विहितकालपर्य्यन्तं ब्रह्मचर्य्यं कृत्वा वेदमसमाप्यैव व्रतकालोत्तरं कृतसमावर्त्तन आद्यः । विहितकालमध्येऽपि वेदविद्यां लब्ध्वा स्नातो द्वितीयः । विहितकालपर्य्यन्तं ब्रह्मचर्य्यं कृत्वा वेदमलब्ध्वा तं लब्ध्वैव तत्कालोत्तरं कृतस्नानस्तृतीयः ।

स्नातकव्रत न० ६त० । स्नातककर्त्तव्ये शास्त्रोक्ते व्रतभेदे

वाच्यम् अत्र विशुद्धय इत्यभिधानेनाधोवृतवस्त्रस्यैव स्वत्त्रवेण प्रक्षालनम् उत्तरीयस्य एतदर्थमेकवचनम्। अतएव "स्रवन्त्वेणाधरीयवस्त्र" प्रक्षाल्यं वशिष्ठवचनैकवाक्यतया। इत्याह्निकचिन्तामणिः। "स्नातो नाङ्गानि निर्मृज्यात् स्नानशाट्या न पाणिना" इति विष्णुपुराणीयेनाधरीयवस्त्रेणैव गात्रमार्जनं निषिध्यते। "एतेन निर्मृज्य स्नानवस्त्रमिति" कात्यायनवचने एकत्वमविवक्षितमिति निरस्तम्। अतएव सर्वत्रैकत्वं निर्दिष्टम्। शिष्टानाम् आचारोऽपि तथा इति। "नाजस्रमिति पुनः पुनः स्नाननिषेधः रागप्राप्तस्नानविषयो दृष्टार्थकत्वात्। यदत्रैकस्मिन् दिने नानातीर्थादिनिमित्तप्राप्तस्नानावृत्तिर्भवत्येव वैधत्वात्। अत्रापि तन्त्रप्रसङ्गयोः सम्भवे तत्रैवेति। अहः स्नानप्रधानकालमाह दक्षः "चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्। तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले"। विष्णुः "कुशाभावे कुशस्थाने काशं दूर्वां वा दद्यादिति विद्याकरधृतम् "तर्जनी रूप्ययुक्ता हेमयुक्ता त्वनामिका। रैव युक्ता तु दर्भेण कार्या विप्रेण सर्वदा"। मत्स्यसूक्ते "शक्ता दमना दर्भाश्च शुष्केन नाधिक फलम्। सव्यः गोपयन्त्या कार्यो दक्षिणः सपवित्रक" इति रोगिणश्चाण्डालादिस्पर्शोऽपि न दोषायेत्याह रत्नाकरे बृहस्पतिः "तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे। नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति। आपद्यपि च कष्टायां सूतके मृतके तथा। मातापित्रोर्गुरौ चैव निर्देशे वर्त्तने तथा"। स्पृष्टास्पृष्टीत्यव्ययम् क्रियाव्यतिहारे। तथेति न दुष्यतीत्यर्थः। गारुडे "सर्वतीर्थाभिषेकाद्धि पवित्रं विदुषां वचः। धर्मश्रवणवेलायां विप्रो व्याससमः स्थितः"। तथाविधातुरं प्रति जाबालः "अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्मिणाम्। आर्द्रेण वाससा वापि दोहर्षं मार्जनं स्मृतम्" कर्मिणाम् "शिरःस्नातस्तु कुर्वीत दैवं पैत्र्यमथापि वा" इति मार्कण्डेयपुराणोक्तकर्म चिकीर्षूणां मार्जनमिह प्रोञ्छनं, योगियाज्ञवल्क्यः "असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया। मान्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः। मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च। वारुणं मानसञ्चैव सप्त स्नानं प्रकीर्त्तितम्। "आपो हि ष्ठेति" वै मान्त्रं मृदालम्भस्तु पार्थिवम्। आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम्। यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते। वारुणञ्चावगाहश्च मानसं विष्णुचिन्तनम्। समस्तं स्नानमुद्दिष्टं मन्त्रस्नानक्रमेण तु। कालदोषादसामर्थ्यात् सर्वं तस्य फलं स्मृतम्"। आपो हिष्ठेति आपो हिष्ठादि ऋक्त्रयमत्र विवक्षितम्। एवञ्च "कालदोषादसामर्थ्यात् न शक्नोति यदम्भसि। तदा स्नात्वा तु ऋषिभिर्मन्त्रैर्दृष्टन्तु मार्जनम्। शन्न आपस्तु द्रुपदा२ आपो हि ष्ठा३ऽघमर्षणम्४। एभिश्चतुर्भिः ऋग्मन्त्रैर्मन्त्रस्नानमुदाहृतम्। इति योगियाज्ञवल्कीय यन्मन्त्रस्नानान्तरं तत् प्राधान्यख्यापनाय। अतएव पितृदयितायां सन्ध्यातः पूर्वं तल्लिखितम्। मृदालम्भस्तु गङ्गामृत्तिकातिलकरूपः। भस्मना इत्यत्र भस्मना इति छन्दोगाह्निकः। अवगाहनं मन्त्राद्यङ्गशून्यावगाहनमात्रं विवक्षितम् अतो मुख्यावगाहनरूपस्नानानुकल्पत्वमयुक्तम्। कालदोषोऽतिवृष्ट्यादिः असामर्थ्यं शरीरापाटवहेतुः अशक्तत्वेन सम्पूर्णवारुणस्नानविधिकालायोग्यत्वं वेति। एतन्मूलकं "गेहे चेत्तदमन्त्रवदिति" छन्दोगपरिशिष्टीय प्रागुक्तम् अन्यथा मूलभूतश्रुत्यन्तरकल्पनापत्तेः सामर्थ्ये तु तज्जलेनापि समन्त्रकस्नानमाह पराशरभाष्ये व्यासः "शीतास्त्वपो निषिञ्चोष्णा मन्त्रसम्भारसंस्कृताः। गेहेऽपि शस्यते स्नानं तद्धीनमफलं स्मृतम्"। पद्मपुराणम् "नैर्मल्यं भावशुद्धिश्च विना स्नानं न जायते। तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते। अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत्। तीर्थं प्रकल्पयेद्विद्वान् मूलमन्त्रेण मन्त्रवित्। नमो नारायणायेति मूलमन्त्र उदाहृतः। दर्भपाणिस्तु विधिना आचान्तः प्रयतः शुचिः। चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः। प्रकल्प्यावाहयेद्गङ्गाम् एभिर्मन्त्रैर्विचक्षणः"। काशीख० अन्यप्रकारो दर्शितो यथा

"प्रातः स्नानं चरित्वाथ शुद्धे तीर्थे विशेषतः। प्रातःस्नानाद्यतः शुद्ध्येत् कायोऽयं मलिनः सदा। छिद्रितो नवभिश्छिद्रैः स्रवत्येव दिवानिशम्। उत्साहमेधासौभाग्यरूपसम्पत्प्रवर्त्तकम्। मनःप्रसन्नताहेतुः प्रातःस्नानं विशिष्यते। प्रस्वेदलालाद्याक्लिन्नो निद्राधीनो यतो नरः। प्रातःस्नानात्ततोऽर्हः स्यान्मन्त्रस्तोत्रजपादिषु। प्रातः प्रातस्तु यः स्नानं संजाते चारुणोदये। प्राजापत्यसमं प्राहुस्तन्महाघविघातकृत्। प्रातःस्नानं हरेत् पापमलक्ष्मीं ग्लानिमेव च। अशुचित्वञ्च दुःस्वप्नं तुष्टिं पुष्टिं प्रयच्छति। नोपसर्पन्ति वै दुष्टाः प्रातःस्नायिजनं क्वचित्। दृष्टादृष्टफलं तस्मात् प्रात-

त। इन्त्यान्तत्वादितयायं षोपदेश एव न्याय्यः।

**स्नु** पु० सानु+स्नु आदेशः स्ना—क्तु वा। १पर्वतस्य समभूभागे अमरः २स्नायौ च। "त्रिष्टुप् मांसात् स्नुतोऽनुष्टुप्" भाग० ३।१२अ०। "स्नुतं स्नायुतः" इति श्रीधरः।

**स्नुक्छद** पु० स्नुहि स्नुह-क्विप् तस्याः स्नुक् छदोऽस्य। चोरकपुष्पवृक्षे रत्नमा०।

**स्नुत** पु० स्नु-क्त। क्षरिते जटाधरः अमरः। [शब्दर०।

**स्नुषा** स्त्री स्नु-सक्। १पुत्रवध्वाम् अमरः २स्नुहीवृक्षे च

**स्नुह्(हा)** स्त्री स्नुह-क्विप् वा टाप्। स्नुहीवृक्षे अमरः।

**स्नुहि(ही)** स्नुह-इन् वा ङीप्। (मनसासिज) वृक्षे अमरः "स्नुहीविटपसंश्रिताम्" ति०त० देवीपु०।

**स्नेह** पु० स्निह-घञ्। १प्रेमणि अमरः २तैलादिरसभेदे ३स्नायास्तो गुणभेदे च यद्वशात् दाहाद्युत्कम्। स च गुणः जलस्य चूर्णादिपिण्डीभावहेतुः। "जले मधुरशीतलौ। स्नेहस्तत्र द्रव्यत्वन्तु सांसिद्धिकमुदाहृतम्" भाषा० "घृतादावपि तदन्तर्वर्त्तिजलस्यैव स्नेहः जलस्य स्नेहसमवायिकारणत्वात् तेन जल एव स्नेह इति मन्तव्यम्" मुक्ता० 'स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ। तैलान्तरे तत्प्रकर्षात् दहनस्यानुकूलता' भाषा० "ननु पृथिव्यामपि तैले स्नेह उपलभ्यते न चासौ जलीयः तथा सति दहनप्रातिकूल्यं स्यादत आह तैलान्तरे इति तत्प्रकर्षात् स्नेहप्रकर्षात्। तैले उपलभ्यमानः स्नेहोऽपि जलीय एव तस्य प्रकर्षादग्नेरानुकूल्यम्। अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः" मुक्ता०। ४मनरूपस्नेहस्य वत्सलरसस्य स्थायिभावः स च रसः भरतसम्मतः सा०द० उक्तो यथा "स्फुटं चमत्कारितया वत्सलञ्च रसं विदुः। स्थायी वत्सलता स्नेहः पुत्राद्यालम्बनं मतम्। उद्दीपनानि तच्चेष्टा विद्याशौर्य्यदयादयः। आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम्। पुलकानन्दवाष्पाद्या अनुभावाः प्रकीर्त्तिताः। सञ्चारिणोऽनिष्टशङ्काहर्षगर्वादयो मताः। पद्मगर्भच्छविवर्णो दैवतं लोकमातरः"। "अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम्। परोपकारनिरतामणिदीपा इवोत्तमाः" उद्भ०।

**स्नेहन्** पु० स्निह कनिन् नि० गुणाभावभेदे उणा०।

**स्नेहन** न० स्निह–णिच्-ल्युट्। १तैलादिमर्दने अभ्यङ्गे राजनि० २स्निग्धतासाधने क्रियाभेदे भावप्र० तत्प्रकार उक्तो यथा "स्नेहनविधिः "स्नेहश्चतुर्विधः प्रोक्तो घृतं तैलं वसा तथा। मज्जा च तं पिबेन्मर्त्यः किञ्चिदभ्युदिते रवौ।

स्थावरो जङ्गमश्चैव द्वियोनिः स्नेह उच्यते। तिलतैलं स्थावरेषु जङ्गमेषु घृतं वरम्। द्वाभ्यां त्रिभिश्चतुर्भिर्वा यमकस्त्रिवृतो महान्"। अस्यायमर्थः द्वाभ्यां स्नेहाभ्यां घृततैलाभ्यां यमकाख्यः स्नेहः स्यात्। त्रिभिः स्नेहैः घृततैलवसाख्यैः त्रिवृताख्यः स्यात्। चतुर्भिर्घृततैलवसामज्जाभिर्महान्महास्नेहः स्यादित्यर्थः। "पिबेत् त्र्यहं चतुरहं पञ्चाहं षडहानि वा"। मृदुमध्यक्रूरकोष्ठापेक्षया त्र्यहं चतुरहं पञ्चाहं षडहानि चेति। यदुक्तम् "मृदुकोष्ठस्त्रिरात्रेण स्निग्धस्नेहोपसेवया। मध्यकोष्ठश्चतुर्भिश्च दिवसैः स्निह्यति ध्रुवम्। पञ्चभिर्वाथ षड्भिर्वा दिनैः क्रूरो विशुद्ध्यति। सप्तरात्रात्परं स्नेहः सात्मीभवति सेवितः"। मृदुमध्यक्रूरकोष्ठानां सर्वेषां सप्तरात्रात्परं सात्मीभवति वातानुलोम्याग्निदीप्तिकोष्ठशुद्धिमृदुस्निग्धाङ्गतास्वरवर्णाङ्गवाक्प्रसादपुष्टिर्हिजदाङ्गनिर्जरतादर्शनकारी भवति। न तु मलहरो वातानुलोम्यादीन् करोति। "दोषकालवयोवह्निबलान्यालोक्य योजयेत्। हीनाञ्च मध्यमां ज्येष्ठां मात्रां स्नेहस्य बुद्धिमान्। अमात्रया तथाऽकाले मिथ्याहारविहारतः। स्नेहः करोति शोफार्शस्तन्द्रानिद्राविसंज्ञिताः। देया दीप्ताग्नये मात्रा स्नेहस्यैकपलोन्मिता। मध्यमाय त्रिकर्षा स्याज्जघन्याय द्विकार्षिकी"। मध्यमाय मध्यमाग्नये जघन्याय हीनाग्नये "अथ वा स्नेहमात्रास्तु तिस्रोऽन्याः सर्वसम्मताः। अहोरात्रेण महती जीर्य्यत्यह्ना तु मध्यमा। जीर्य्यत्यल्पा दिनार्द्धेन या विज्ञेया सुखावहा"। अयमर्थः अहोरात्रेण जीर्य्यति या मात्रा महती। एवं मध्यमा कनिष्ठा च ज्ञेया "अल्पा स्याद्दीपनी वृष्या स्वल्पदोषे प्रपूजिता। मध्यमा स्नेहनी ज्ञेया वृंहणी भ्रमहारिणी। ज्येष्ठा कुष्ठविषोन्मादग्रहापस्मारनाशिनी"। सुश्रुतः पुनरेवमाह "या मात्रा प्रथमे यामे गते जीर्य्यति वासरे। सा मात्रा दीपयत्यग्निमल्पदोषे च पूजिता। या मात्रा वासरस्यार्द्धे व्यतीते परिजीर्य्यति। सा वृष्या वृंहणी च स्यान्मध्यदोषे प्रपूजिता। या मात्रा चरमे यामे स्थिरोऽह्नः परिजीर्य्यति। सा मात्रा स्नेहनी ज्ञेया बहुदोषेषु पूजिता। केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम्। देयं बहुकफे चापि व्योषक्षारसमन्वितम्। रूक्षक्षतविषार्त्तानां वातपित्तविकारिणाम्। हीनमेधास्मृतीनाञ्च सर्पिःपानं प्रश-

ष्यते। अग्निकोष्ठानिलाविष्टाः प्रवृद्धकफमेदसः। पिबेयुरुष्णकाले तैलं दार्ढ्यार्थिनस्तु ये। व्यायामकर्षिताः शुष्करेतोरक्तामहारुजाः"। क्रूराशयाः क्रूरकोष्ठाः सर्वत्र सर्वथा स्नेहात्। "शीतकाले दिवा स्नेहमुष्णकाले पिबेन्निशि। वातपित्ताधिके रात्रौ वातश्लेष्माधिके दिवा। नस्याभ्यञ्जनगण्डूषमूर्द्धकर्णाक्षितर्पणे। तैलं घृतं वा युञ्जीत दृष्ट्वा दोषबलाबलम्। घृते कोष्णं जलं पेयं तैले यूषः प्रशस्यते। वसामज्ज्ञोः पिबेन्मण्डमनुपानं सुखावहम्। स्नेहद्विषः शिशून् वृद्धान् सुकुमारान् कृशानपि। तृष्णालुकानुष्णकाले सह भक्तेन पाययेत्। सर्पिष्मती बहुतिला यवागूः स्वल्पतण्डुला। सुखोष्णा सेव्यमाना तु सद्यः स्नेहनकारिणी। शर्कराचूर्णसंयुक्ते दोहनस्थे घृते तु वा। दुग्ध्वा क्षीरं पिबेद्यः स सद्यः स्नेहनमुत्तमम्। मिथ्याचाराद् बहुत्वाद्वा यस्य स्नेहो न जीर्य्यति। विष्टभ्य वापि जीर्य्येत वारिणोष्णेन वामयेत्। स्नेहस्याजीर्णशङ्कायां पिबेदुष्णोदकं नरः। तदोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा। स्नेहेन पैत्तिकस्याग्निर्यदा तीव्रतरीकृतः। तदास्योदीर्य्यते तृष्णा विषमा तस्य पाययेत्। शीतलं पायसं, तेन तृष्णा तस्य प्रशाम्यति। दुर्बलोऽरोचकी स्थूलो मूर्च्छातिमेहपीडितः। रक्तवर्ज्यातिरिक्तश्च वान्तस्तृष्णाश्रमान्वितः। अकालप्रसवा नारी दुर्द्दिने च विवर्जयेत्। स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचित्तकाः। वृद्धबालकृशा रूक्षाः क्षीणास्राः क्षीणरेतसः। वातार्त्तास्तिमिरार्त्ता ये तेषां स्नेहनमुत्तमम्। वातानुलोम्यं दीप्तोऽग्निर्वर्च्चः स्निग्धमसंहतम्। मृदुस्निग्धाङ्गता ग्लानिः स्नेहद्वेषोऽथ लाघवम्। विमलेन्द्रियता सम्यक् स्निग्धे रूक्षे विपर्य्ययः। भक्तद्वेषो मुखस्रावो गुदे दाहः प्रवाहिका। तन्द्रातीसारपाण्डुत्वं भृशं स्निग्धस्य लक्षणम्। रूक्षस्य स्नेहनं स्नेहैरतिस्निग्धस्य रूक्षणम्। श्यामाकचणकाद्यैश्च तिलपिण्याकसक्तुभिः। दीप्ताग्निः शुद्धकोष्ठश्च पुष्टधातुर्दृढेन्द्रियः। निर्जरो बलवर्णाढ्यः स्नेहसेवी भवेन्नरः। स्नेहे व्यायामसंशीतवेगाघातप्रजागरान्। दिवास्वप्नमभिष्यन्दि रूक्षान्नञ्च विवर्जयेत्"। करणे-ल्युट्। स्नेहसाधने त्रि०। स्त्रियां ङीप्। उदा० फलञ्च दृश्यम्।

**स्नेहप्रिय** पु० स्नेहः तैलादिः प्रियोऽस्य। प्रदीपे हेमच०।

**स्नेहभू** स्त्री ६त०। १श्लेष्माख्ये देहस्थे धातुभेदे हेमच० २स्नेहपात्रे च शब्दर०। [शब्दच०।

**स्नेहरङ्ग** पु० स्नेहेन रज्यते रन्ज-कर्मणि घञ्। तिले

**स्नेहवत्** त्रि० स्नेहोऽस्त्यस्य मतुप् मस्य वः। १स्नेहयुक्ते स्त्रियां ङीप्। सा च २मेदायां पुस्त्री० राजनि०।

**स्नेहविद्ध** न० स्नेहेन विद्धम्। देवदारुणि जटा०।

**स्नेहवस्ति** स्त्री स्नेहपूरिता वस्तिः। तैलादिस्नेहयुतद्रव्यपूरिते अनुवासनाख्ये पदार्थे (पिचकारी) वस्तिशब्दे ४८६४ पृ० दृश्यम्। [६त०। २स्नेहकारणे न०।

**स्नेहवीज** पु० स्नेहाढ्यं वीजमस्य। पियालवृक्षे राजनि०।

**स्नेहाश** पु० स्नेहमश्नाति अश-अण्। प्रदीपे त्रिका०।

**स्नेहिन्** पु० स्निह-णिनि। १वयस्ये सख्यौ त्रिका०। २स्नेहयुक्ते त्रि० स्त्रियां ङीप्।

**स्नेहु** पु० स्निह-उन्। रोगभेदे उणा० को०। २चन्द्रे सं०क्षिप्त०

**स्पद** ईषत्कम्पे भ्वा० आ० अक० सेट् इदित्। स्पन्दते अपस्पन्दिष्ट स्पन्दितम्।

**स्पन्द** पु० स्पदि-घञ्। १ईषच्चलने ईषत्कम्पे २क्रियाभेदे च। ल्युट्। तत्रार्थे न०। नेत्रस्पन्दादौ शुभाशुभविवेचनं मत्स्यपु० २४१ अ० उक्तं यथा

"ब्रूहि मे त्वं निमित्तानि अशुभानि शुभानि च। सर्वधर्मभृतां श्रेष्ठ! त्वं हि सर्वविदुच्यसे" मत्स्य उवाच "अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत्। अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च"। मनुरुवाच "अङ्गानां स्पन्दनञ्चैव शुभाशुभविचेष्टितम्। तन्मे विस्तरतो ब्रूहि येन स्यान्महितो भुवि"। मत्स्य उवाच "पृथ्वीलाभो भवेन्मूर्ध्नि ललाटे रविनन्दन!। स्थानं विवृद्धिमायाति भ्रूनसोः प्रियसङ्गमः। भृत्यलब्धिश्चाक्षिदेशे दृगुपान्ते धनागमः। उत्कण्ठोपगमो मध्ये दृष्टेः राजन्! विचक्षणैः। दृग्बन्धने सङ्गरे च जयं शीघ्रमवाप्नुयात्। योषिद्भोगोऽपाङ्गदेशे श्रवणान्ते प्रियाश्रुतिः। नासिकायां प्रीतिसौख्यं प्रजाप्तिरधरोष्ठजे। कण्ठे तु भोगलाभः स्याद्भोगवृद्धिरथांसयोः। सुहृत्स्नेहश्च बाहुभ्यां हस्ते चैव धनागमः। पृष्ठे पराजयः सद्योऽजयो वक्षःस्थले भवेत्। कुक्षिभ्यां प्रीतिरुद्दिष्टा स्त्रियाः प्रजननं स्तने। स्थानभ्रंशो नाभिदेशे अन्त्रे चैव धनागमः। जानुसन्धौ जानसन्धिर्बलवद्भिर्नृप!। देशैकदेशनाशोऽथ जङ्घायां रविनन्दन!। उत्तमं स्थानमाप्नोति पद्भ्यां प्रस्फुरणान्नृप!। सलाभञ्चाध्वगमनं भवेत् पादतले नृप!। लाञ्छनं पिटकञ्चैव ज्ञेयं स्फु-

रथवत्तथा। विपर्य्ययेण विहिता सर्वस्त्रीणां फलागमः। दक्षिणेऽपि प्रशस्तोऽङ्गे प्रशस्तः स्याद्विशेषतः। अतोऽन्यथा विहितप्रजल्पनात्तु फलस्य शस्तस्य च निन्दितस्य। अनिष्टचिह्नोपगमे द्विजानां कार्य्यं सुवर्णेन तु तर्पणं स्यात्"। [स्पर्द्धते अस्पर्द्धिष्ट।

**स्पर्द्ध** संघर्षे (पराभिभवेच्छायाम्) भ्वा० आत्म० अक० सेट्।

**स्पर्द्धा** स्त्री स्पर्द्ध–अ। १संघर्षे २पराभिभवेच्छायां ३साम्ये ४क्रमोन्नतौ च मेदि०। [स्पर्शते।

**स्पर्श** ग्रहणे क्षेपे च चु० आ० सक० सेट्। स्पर्शयते अप

**स्पर्श** पु० स्पर्श–स्पृश–भावे अच् घञ् वा। न्यायोक्ते १त्वगिन्द्रियग्राह्ये गुणभेदे २स्पर्शने "मात्रास्पर्शास्तु कौन्तेय" गीता। ३रोगे ४युद्धे ५गुप्तचरे मेदि० ६उपतप्ते अमरः। ७वायौ पु० ८स्पर्शके त्रि० मेदि०। स्पृश-णिच्–अच्। ९दाने मेदि० स्पृश्यन्ते वायुना जिह्वाग्रादय एषु रन्ध्राय घञ्। १०कादिषु मावसानेषु वर्णेषु पु० कादयो मावसानाः स्पर्शाः सि० कौ०। "स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः। अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो मतः। काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत्। एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित्। तथापि परमाणौ स्यात् पाको वैशेषिके नये। नैयायिकानान्तु नये द्व्यणुकादावपीष्यते"

"स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः। अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो मतः। काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत्। एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित्। तत्रापि परमाणौ स्यात् पाको वैशेषिके नये। नैयायिकानान्तु नये द्व्यणुकादावपीष्यते" भाषा०। "उपकारक इति स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः। अनुष्णाशीतेति। पृथिव्या वायोश्च स्पर्शोऽनुष्णाशीतः। जलस्य शीतः। तैजस उष्णः। काठिन्यादीति। कठिनसुकुमारस्पर्शौ पृथिव्या एवेत्यर्थः। कठिनत्वादिकन्तु न संयोगनिष्ठो जातिविशेषः चक्षुर्ग्राह्यतापत्तेः। पूर्ववदिति। जलतेजोवायुपरमाणूनां स्पर्शा नित्या द्व्यणुकादेस्त्वनित्या इत्यर्थः। एतेषामिति। एतेषां रूपरसगन्धस्पर्शानाम्। नान्यत्रेति। पृथिव्यां हि रूपरसगन्धस्पर्शपरावृत्तिः पावकसंयोगादुपलभ्यते। न हि शतधापि ध्मायमाने जलादौ रूपादिकं परावर्त्तते। नीरे सौरभमौष्ण्यञ्च अन्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते पवनपृथिव्योः शीतस्पर्शादिवत्। तत्रापि पृथिवीत्वेऽपि मध्ये परमाणावेव पाक इति वैशेषिका वदन्ति। तेषामयमाशयः। अवयविनाऽवष्टब्धेष्ववयवेषु पाको न सम्भवति। परन्तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः। पुनश्च पक्वपरमाणुसंयोगाद्‌द्व्यणुकादिक्रमेण पुनर्महावयविपर्य्यन्तोत्पत्तिः। तेजसामतिशयितवेगवशात् पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति। अथ द्व्यणुकादिविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पत्त्या रूपादिमद्भवतीति शिष्यबुद्धिवैशद्याय प्रक्रिया। "तत्र संयोगविभागयोरनपेक्षकारणं कर्म" इति वैशेषिकसूत्रम्। स्वोत्तरोत्पत्तिभावान्तरानपेक्षत्वं तदर्थः। अन्यथा कर्मणोऽप्युत्तरसंयोगस्य जनने पूर्वसंयोगनाशापेक्षणादव्याप्तिः स्यादिति। तत्र विभागजविभागानङ्गीकारे नव क्षणाः। तदङ्गीकारेऽपि विभागः किञ्चित्सापेक्षो विभागं जनयेत् निरपेक्षस्य तस्य कर्मत्वं स्यात्। तत्र यदि द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात् तदा दश क्षणाः। अथ द्रव्यनाशविशिष्टं कालसमयं चापेक्ष्य विभागजविभागः स्यात् तदा एकादश क्षणाः। तथा हि वह्निसंयोगात् परमाणौ कर्म। ततः परमाण्वन्तरेण विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशः १। ततः परमाणौ श्यामादिनाशः २। ततो रक्ताद्युत्पत्तिः ३। ततो द्रव्यारम्भानुगुणक्रिया ४। ततो विभागः ५। ततः पूर्वसंयोगनाशः ६। तत आरम्भकसंयोगः ७। ततो द्व्यणुकोत्पत्तिः ८। ततो रक्ताद्युत्पत्तिः ९। ननु श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणक्रियाऽस्त्विति चेत्। न। अग्निसंयुक्ते परमाणौ यत् कर्म तद्विनाशमन्तरेण गुणोत्पत्तिमन्तरेण च तत्र परमाणौ क्रियान्तराभावात् कर्मवति कर्मानुत्पत्तेः निर्गुणे द्रव्ये द्रव्यारम्भानुगुणक्रियानुपपत्तेश्च। तथापि परमाणौ श्यामादिनिवृत्तिसमकालं रक्ताद्युत्पत्तिः स्यादिति चेत् न। पूर्वरूपादिध्वंसस्य रूपान्तरे हेतुत्वात्। इति नव क्षणाः। अथ दश क्षणाः। सा च आरम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागस्य जनने सति स्यात्। तथा हि वह्निसंयोगाद्‌द्व्यणुकारम्भके परमाणौ क्रिया। ततो विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशविभागजविभागौ १। ततः श्यामनाशपूर्वसंयोगनाशौ २। ततो रक्तोत्पत्त्युत्तरसंयोगौ ३। ततो वह्निनोदनजन्यपरमाणुकर्मणो नाशः ४।

**स्पृष्टास्पृष्ट** न० स्पृष्टेन था सम्यक् स्पृष्टम् । परस्परस्पर्शने

**स्पृष्टास्पृष्टि** न० स्पृश-भावे-क्त कार्मव्यतिहारे इच्समा० पूर्वपददीर्घ । परस्परस्पर्शने "तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे । नगरग्रामदाहे च स्पृष्टास्पृष्टि न दुष्यति । आपद्यपि च कष्टायां रुग्भये पीडिते तथा । मातापित्रोर्गुरोश्चैव निदेशवर्त्तने तथा" इत्यस्मृति ।

**स्पृष्टि** स्त्री स्पृश-क्तिन् । स्पर्शे अमर । [अपस्पृहत् ।

**स्पृह** इच्छायां अद०चुरा० उभ० सक० सेट् । स्पृहयति-ते

**स्पृहणीय** त्रि० स्पृह-अनीयर् । १वाञ्छनीये २श्लाघ्ये च "अतो वतासि स्पृहणीयवीर्य" कुमार० ।

**स्पृहयालु** त्रि० स्पृहि-आलुच् । स्पृहाशीले ।

**स्पृहा** स्त्री स्पृह-अङ् । इच्छायाम् अमरः । "मिथुने स्पृहावती" कुमार ।

वर्णभेदे विषयभेदे स्पृहौचित्यं यथा

"तपोधनं ब्राह्मणानां तपः कल्पतरुस्तथा । तपश्च कामधेनुश्च सन्तत तपसि स्पृहा । ऐश्वर्यं क्षत्रियाणाञ्च वाणिज्ये च तथा विशाम् । शूद्राणां विप्रसेवायां स्पृहा वेदेष्वनिन्दिता । क्षत्रियाणाञ्च तपसि स्पृहा-णीव प्रशंसिता । ब्राह्मणानां विवादेषु स्पृहातीव वि-निन्दिता । क्षत्रियाणां रणो धर्मो रणे मृत्युर्न गर्हित । रणे स्पृहा ब्राह्मणानां लोके वेदे विडम्बना । ब्रह्मवै० ग० ख० २५अ० । [नीयेमि० ।

**स्पृह्य** पु०स्पृह-कर्मणि यत् १मातुलङ्गवृक्षे शब्दा०२वाञ्छ

**स्फट** विशीर्णतायाम् अक० भ्वा० पर० सेट् । स्फटति अस्फ-टीत्-अस्फाटीत् । इदित्प्यन्नार्थे स्फण्टति अस्फण्टीत् ।

**स्फट** पु स्त्री० स्फट-अच् । सर्पफणायाम् अमरटीका ।

**स्फटि(टी)** स्त्री स्फट-इन् वा ङीप् । (फट्किरी) वणिग् द्रव्यभेदे भावप्र० । स्वार्थे क । तत्रार्थे "स्फटिका तु कषायोष्णा वातपित्तकफव्रणान् । निहन्ति श्वित्रवीसर्पान् योनिसङ्कोचकारिणी" भावप्र० ।

**स्फटि(टी)क** पु० स्फटि(टी)रिव कायति कै-क । १स्वनामख्याते मणौ हेमा० स्वार्थे क वा दुष्य० । २स्फट्यां भावप्र० । स्वार्थेऽण् । स्फाटिकमप्यत्र न०शब्दर० । "स्फटिक सर्वदोषघ्न पित्तदाहार्त्तिदोषघ्नृत् । तस्याक्ष मालां जपतां दत्ते कोटिगुणं फलम्" । तद्दर्शेषा यथा "वहुमङ्गलीयविन्दुश्चातिविमलतमं स्निग्धं नेत्र-रुग्न शिशं पद्मरागस मधुरमतिहिमं पित्तदाहाप हारि । पाषाणे यत्सिएद' स्फाटिकमपि शिवा स्वच्छतां नैव जह्यात् तच्चान्यं जातु कश्च शुभलुपचिनुते नैव रत्नञ्च रत्नम्" राजनि० ।

"मुक्ताविद्रुमवज्रेन्द्रवैदूर्यस्फटिकादिकम् । मणिरत्नं सरं शीत कषाय स्वादु लेखनम् । चक्षुष्यं धारणात्तच्च पापा-लक्ष्मीविनाशनम्" राजवल्लभ० । तस्य उत्पत्तिकथादिकं यथा "कावेरीविन्ध्ययवनचीननेपालभूमिषु । लाङ्गली व्यकिरन्मेदो दानवस्य प्रयत्नतः । आकाशशुद्ध तेजस्य सुत्पन्न स्फटिक तत । मृणालशङ्खधवलं किञ्चिद्वर्णा-न्तरान्वितम् । न तत्तुल्य हि रत्नानामथ वा पाप-नाशनम् । संस्कृतं शिल्पिना सद्यो मूल्य किञ्चिल्लभे-त्तत" गारुडे ७६अ० । तथा "हिमालये सिंहले च विन्ध्याटवितटे तथा । स्फटिकं जायते चैव नानारूप समप्रभम् । हिमाद्रौ चन्द्रसङ्काश स्फटिकं तद् द्विधा भवेत् । सूर्यकान्तञ्च तत्रैकं चन्द्रकान्तं तथाऽपरम् । सूर्यांशुस्पर्शमात्रेण वह्निं वमति यत् क्षणात् । सूर्य-कान्तं तदाख्यातं स्फटिकं रत्नवेदिभिः । पूर्णेन्दुकर संस्पर्शादमृत स्रवति क्षणात् । चन्द्रकान्तं तदाख्यातं दुर्लभं तत् कलौ युगे । अशोकपल्लवच्छाय दाडिमी-बीजसन्निभम् । विन्ध्याटवीतटे देशे जायते मन्दकान्ति कम् । सिंहले जायते कृष्णमाकरे गन्धनीलके । पद्म-रागभवस्थाने विविध स्फटिक भवेत् । अत्यन्तनिर्मलं स्वच्छं द्रवतीव जलं शुचि । ज्योतिश्चन्द्रसमाश्लिष्ट मुक्ताज्योतीरस द्विज । तदेव लोहिताकार रागावर्त्त-समोद्भवम् । आनील तत्तु पाषाणं प्रोक्त राजमयं शुभम् । ब्रह्मसूत्रमय यत्तु प्रोक्तं ब्रह्ममय द्विज" युक्तिकल्प० ।

**स्फटिकाचल** पु० स्फटिक इव शुभ्रत्वात् अचल । १कैलासप-र्वते २स्फाटिकमयपर्वते च । स्फटिकाद्रिप्रभृतयोऽप्यत्र

**स्फटिकाद्रिभिद्(द्)** पु० स्फटिकाद्रि स्फटिकपर्वत भिनत्ति मादकत्वात् भिद-क्विप् क वा । कर्पूरे राजनि० ।

**स्फटिकाभ्र** पु० स्फटिकवर्णं अभ्र इव । कर्पूरे राजनि० ।

**स्फटिकारि** पु० इन० । (फट्किरि) वणिग्द्रव्यभेदे तस्य स्फटिकतुल्यशीतत्वात्तथात्वम् रत्नमा० ।

**स्फड** परिहासे चु० उभ० सक० सेट् इदित् । स्फण्डयति-ते अपस्फण्डत्-त । [रीत् ।

**स्फर** चल स्फूर्त्तौ च तुदा० प० अक० सेट् । स्फरति अस्फा-

**स्फरण** न० स्फर-भावे ल्युट् । स्फुरणे । [अस्फालीत् ।

**स्फल** चले स्फूर्त्तौ च तुदा० पर० अक० सेट् । स्फलति

**स्फाटिकोपल** पु० स्फटिक इव उपल० । स्फटिक शिला० ।

ललाटदेशे । भ्रूघ्राणमध्ये प्रियसङ्गमः स्यात् नासान्ति-
मध्ये च सुहृदागमः । दृगन्तमध्यस्फुरणेऽर्थलाभोत्कण्ठे
क्रमादिस्फुरिते दृगन्तौ । जयो दृशाध स्फुरणे रणे स्यात्
प्रियश्रुतिः स्यात् स्फुरिते च कर्णे । योषित्सम्प्राप्तिः
स्फुरिते च गण्डे घ्राणे तु सौगन्ध्यसुहृदौ भवेताम् ।
ओष्ठे प्रसङ्गाश्रयतोऽथ योश्च स्कन्धे गले भोगविवृद्धिलाभौ ।
स्पन्दो भुजस्य प्रियसमागमाय स्पन्दः करस्य द्रविणाप्तिहेतुः ।
स्पन्दश्च पृष्ठस्य पराजयाय स्पन्दो जयायोरसि मानसा
नाम । पार्श्वप्रकम्पे विषयस्य लाभः कटिप्रकम्पे तु
वलप्रमोदौ । नाभिप्रकम्पे निजदेशनाशः धनर्द्धि
रस्त्रश्च भुवि प्रकम्पे । गुह्य प्रधानं हृदयस्य कम्पे
स्फिक्पायुकम्पेऽपि च वाहनाप्तिः । वराङ्गकम्पे
वरयोषिदाप्तिर्मुष्के प्रकम्पे तनयस्य जन्म । वस्तौ च
कम्पे युवतिप्रदृप्तिः दोषस्य कम्पे पुनरूरुपृष्ठे । ऊरः-
प्रकम्पे सुसहायलाभः स्याज्जानुकम्पे त्वचिरेण
सिद्धिः । जङ्घाप्रकम्पे निजदेशनाशः स्थानाप्तिरुक्ता चर-
णस्य कम्पे । यात्रा सलाभाऽङ्घ्रितलप्रकम्पे पुंसां सदा
दक्षिणदेहभागे । स्त्रीणां च वामावयवे प्रजात । स्पन्दः
फलानि प्रतिशत्यवश्यम्” वसन्तराजशाकुने ४र्थप्र० ।

**स्फुर्च्छ** विस्मरणे भ्वा० प० सक० सेट् । स्फूर्च्छति अस्फू-
र्च्छीत् आदित् स्फूर्च्छितं स्फूर्णम् ।

**स्फुर्ज** वज्रशब्दे भ्वा० प० अक० सेट् । स्फूर्जति अस्फू-
र्जीत् ह्विन् स्फूर्जथुः । आदित् स्फूर्जितः स्फूर्णम् ।

**स्फुर्जथु** पु० स्फुर्ज अथु नि० न दीर्घः । वज्रनिर्घोषे भरतटीका ।

**स्फुल** स्फूर्त्तौ चले च अक० सञ्चये सक० तुदा० कुटा० प०
सेट् । स्फुलति अस्फुलीत् । पुस्फोल । [युते त्रि० ।

**स्फुल** न० स्फुल-क । १वस्त्रागारे (ताँबु) शब्दर० । २स्फूर्त्ति-

**स्फुलन** न० स्फुल-भावे ल्युट् । स्फुरणे नीलकण्ठः ।

**स्फुलिङ्ग** पु स्त्री० स्फुल-इङ्गच्, स्फुल् इतव्यक्तः शब्दो
लिङ्गति गच्छति यस्मात् लिगि-घञ् पृषो० वा । अग्नि-
कणे अमरः ।

**स्फुलिङ्गिनी** स्त्री स्फुलिङ्ग-अस्त्यर्थे इनि । १अग्नि-
ज्वालायाम् जटा० । २स्फुलिङ्गयुक्ते त्रि० ।

**स्फूर्जक** पु० स्फुर्ज-ण्वुल् । तिन्दुकवृक्षे अमरः ।

**स्फूर्जथु** पु० स्फुर्ज-अथु । वज्रपातशब्दे अमरः ।

**स्फूर्त्ति** स्त्री स्फुर्च्छ-स्फुर-वा क्तिन् । १स्फुरणे २विक-
शने ३प्रतिभायाञ्च रमानाथः ।

**स्फूर्त्तिमत्** पु० स्फूर्त्तिरस्त्यस्य मतुप् । १पाशुपताख्ये शैवभेदे
त्रिका० । २प्रतिभायुक्ते ३विकाशयुक्ते च त्रि० स्त्रियां ङीप् ।

**स्फेयस्** त्रि० अतिशयेन स्फिरः, प्रचुरः इयसुन् स्फादेशः ।
अतिप्रचुरे, स्त्रियां ङीप् । इष्ठन् । स्फेष्ठोऽप्यत्र त्रि० ।

**स्फोट** पु० स्फुटत्यर्थोऽनेन स्फुट-करणे घञ् । व्याकरणोक्ते
वर्णातिरिक्ते पूर्वपूर्ववर्णानुभवसंस्कारसहितचरमवर्णानुभवव्यङ्ग्ये
अर्थप्रत्यायके अखण्डे शब्दभेदे स्वार्थे क तत्रार्थे । व्याक-
रणमते वर्णसमुदायानां नार्थबोधकत्वं किन्तु स्फोट-
स्यैवेति प्रपञ्चितमस्माभि शब्दार्थरत्ने यथा
“तत्र वर्णानां प्रत्युच्चारणमन्यथाप्रतीयमानतया अनित्य-
त्वेन आशुविनाशिनाञ्च तेषां मेलनासम्भवेन तत्समुदा-
यस्यापि सम्भवित्वाभावेन प्रत्येकं वर्णेषु वृत्तौ व्यभि-
चारेण च पूर्वपूर्ववर्णानुभवाहितसंस्कारसचिवजति अन्त्य-
वर्णजनितपरिपाकशालिनि हृदये झटिति समुदीयमानस्य
स्फोटरूपस्यैव शब्दस्य नित्यतया तत्रैव नित्यसम्बन्धस्य
योग्यतया वृत्तिमत्त्वमुचितमित्याकरे सुस्पष्टम् । तथाहि ।
वर्णा यदि वाचकाः स्युः स्यादेव तेभ्यो व्यस्तेभ्योऽर्थो-
पगतिः । न च तथा । प्रत्येकं वृत्तिमत्त्वाभावेन तत्-
समुदायस्य वृत्तिमत्त्वं सुदूरपराहतम् । आशुविना-
शिनां वर्णानां मेलनासम्भवेन तत्समुदायस्यासिद्धेः पूर्व-
पूर्ववर्णानुभवाहितसंस्कारसहितस्य चरमवर्णस्य वाच-
कत्वन्तु सम्भावितमपि दिनान्तरीयतादृशसंस्कारा-
नादाय वर्त्तमानचरमवर्णमात्रानुभवेन अर्थावगत्यापत्त्या
निराकृतम् । अन्त्यवर्णपर्यन्तानामनुभवानन्तरं समुदा-
यानां संस्कारोदयकल्पनया पुनः उच्चरितवर्णानां चर-
णात्मकज्ञानतोऽर्थावगतिरित्यपि न युक्तं जारा राजे-
त्यादावविशेषेण तत्तद्वर्णसंस्कारसद्भावादुभयत्रैवावगत्या-
नुपपत्तेः । अतोऽवश्यं वर्णातिरिक्तोऽन्त्यवर्णानुभवव्यङ्ग्यः
स्फोटनामा शब्दः स्वीकार्य्यः स्फुटति प्रकाशतेऽर्थोऽने-
नेति व्युत्पत्त्या च तस्य सार्थकनामता बोध्या समर्थित-
श्चैष एव पक्षः पातञ्जलभाष्ये व्यासचरणैः “तदेतेषा-
मर्थसङ्केतेनावच्छिन्नानामुपसंहृतध्वनिक्रमाणां य एको
बुद्धिनिर्भासस्तत्पदं वाचकं वाच्यस्य संकेत्यते तदेकं
पदमेकबुद्धिविषय एकप्रयत्नाक्षिप्तमभागमक्रममवर्णं बौद्ध-
मन्त्यवर्णप्रत्ययोपस्थापितं प्रतीयते” इत्यन्तेन । अत्र
चानेकवर्णानां शक्ततावच्छेदकतापेक्षयैकस्यैव जातिरूप-
स्फोटस्य शक्ततावच्छेदकत्वकल्पने लाघवमपि द्रष्ट-
व्यम् । उक्तञ्च शब्दकौस्तुभे वोपदेवचरणैः “अतएव
इव शक्तत्वे जातिबोधकमीप्सताम् । औपाधिको वा

च चन्द्रे। स्वाधादशुक्ले निखिलं विचिन्त्यं योऽस्मिन् विशे षमथ प्रवच्मि। स तौ निशाशे प्रथमेऽभिदृष्टे शस्यानि सर्वाण्यु पयान्ति वृद्धिम्। भागे द्वितीये तिलसुद्गमाषा येषां तृतीयेऽस्ति न शारदानि। दृष्टेऽह्नि भागे प्रथमे सुदृष्टि स्तद्द्वितीये तु सरीसृपाणां। दृष्टिस्तु मध्यापरभागदृष्टे निर्मिन्नदुर्भिक्षमिदं नितं प्रदृष्टे। समुत्तरेण तारा चि त्राया कीर्त्यते प्रपाम्पत्या। तस्यामचे चन्द्रे स्वाति- योगः शिवो भवति। सप्तम्यां स्वातियोगे यदि पतति हिमं माघमासान्धकारे वायुर्वा चण्डवेगः सजलजलधरो वापि गर्जत्यजस्रम्। विद्युन्मालाकुलं वा यदि भवति नभो नष्टचन्द्रार्कतारं विज्ञेया प्राहषेण्या मुदित- जनपदा सर्वशस्यैरुपेता। तथैव फाल्गुने चैत्रे वैशा- खस्यासितेऽपि वा। स्वातियोगं विजानीयादाषाढे च विशेषतः"। [सेट्। स्वदते आस्वादिष्ट।

**स्वाद** प्रीतौ अक० प्रीणने छेदने च सक० भ्वा० आ०

**स्वाद** पु० स्वद-स्वाद-वा घञ्। १रसानुभवे २प्रीतौ ३प्रीणने ४छेदने च। ल्युट्। स्वादनमप्यत्र न०। रसानुभवप्रकारः सा० द० उक्तो यथा

"न जायते तदास्वादो विना रत्यादिवासनाम्" वासना चेदानीन्तनी प्राक्तनी च रसास्वादहेतुः। तत्र यदि आद्या न स्यात्तदा श्रोत्रियजरन्मीमांसकादीनामपि स स्यात्। यदि द्वितीया न स्यात् यद्रागिणामपि केषाञ्चिद्रसोद्बोधो न दृश्यते तन्न स्यात्। उक्तञ्च धर्मदत्तेन "सवासनानां सभ्यानां रसस्यास्वादनं भवेत्। निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः"।

**स्वादिष्ठ** त्रि० अतिशयेन स्वादु। इष्ठन् टिलोपः। अतिमधुरे ईयसुन् स्वादीयस् तत्रार्थे त्रि० स्त्रियां ङीप्।

**स्वादु** पु० स्वद-उण्। १मधुररसे हेमच० २गुडे त्रिका० ३जीवकौषधौ जटा०। ४इष्टे ५मधुरे ६मनोज्ञे च त्रि० मेदि० स्त्रियां वा ङीप्। सा च ७द्राक्षायां अमरः ८अगुरुसारे गन्धद्रव्ये पु० राजनि०।

**स्वादुकण्टक** पु० स्वादु कण्टकोऽस्य। विकङ्कतवृक्षे राजनि०

**स्वादुकन्दा** स्त्री स्वादुः कन्दोऽस्याः। विदार्य्याम् राजनि०।

**स्वादुका** स्त्री स्वादुना मधुररसेन कायति कै-क। नाग दन्त्याम् राजनि०। [१मधुरे भागे।

**स्वादुखण्ड** पु० स्वादुः मिष्टः खण्डोऽस्य। गुडे शब्दर० कर्क०।

**स्वादुगन्धा** स्त्री स्वादुरिष्टगन्धोऽस्याः। १रक्तशोभाञ्जने २लभा०। ३भूमिकुष्माण्डाञ्च जटा०।

**स्वादुपर्णी** स्त्री स्वादूनि पर्णान्यस्याः ङीप्। दुग्धिकायाम् राजनि०।

**स्वादुपाका** स्त्री स्वादुः पाकोऽस्याः। काकमाच्याम् राजनि०

**स्वादुपिण्डा** स्त्री स्वादुः पिण्डः पिण्डाकारफलमस्याः। पिण्डखर्जूर्य्याम् राजनि०।

**स्वादुफला** स्त्री स्वादु फलमस्याः। १बदरीफले शब्दर० कर्क०। २मिष्टे फले न०। ३कोलौ स्त्री शब्दर० टाप्।

**स्वादुमज्जन्** पु० स्वादुः मज्जा यस्य। पर्वतजे पीलौ जटा०

**स्वादुमांसी** स्त्री स्वादु मांसमिव फलमस्याः गौरा० ङीष्। काकोल्याम् राजनि०।

**स्वादुमूल** न० स्वादु मूलमस्य। गर्जरे (गाँजर) राजनि०।

**स्वादुरसा** स्त्री स्वादुः रसो यस्याः। १काकोल्याम् अमरः २मदिरायाम् हेमच०। ३शतावर्य्यां ४द्राक्षायाम् ५आम्रातके च शब्दर०।

**स्वादुलता** स्त्री स्वाद्वी लता। विदार्य्याम् राजनि०।

**स्वादुपुष्प** पु० स्वादु पुष्पं यस्य। कटभ्यां राजनि०।

**स्वादूदक** पु० स्वादु उदकं यस्य। समुद्रभेदे सि० शि०।

**स्वाद्वम्ल** पु० स्वादु अम्लः। दाडिमे त्रिका०।

**स्वाधिष्ठान** न० लिङ्गमूलस्थे सुषुम्नान्तर्गते षड्दलपद्मभेदे। "बद्धस्थे पद्मनाले सा षडानेऽनन्तलिपि। वभमैर्यरलै- र्युक्ते वर्णैः षड्भिश्च सुव्रत।" तन्त्रसा०। "सिन्दूरपूर- रुचिरारुणपद्ममन्यत् सौषुम्नमध्यघटितं ध्वजमूलदेशे। अङ्गच्छदैः परिवृतं तडिदाभवर्णैर्वाद्यैः सबिन्दुलसितैश्च पुरन्दरान्तैः (लान्तैः)। तस्यान्तरे प्रविलसद्विशदप्रकाशम- म्भोजमण्डलमथो वरुणस्य तस्य। अर्द्धेन्दुरूपलसितं शर- दिन्दुशुभ्रं वङ्कारबीजममलं मकराधिरूढम्। तस्याङ्कदेश- कलितो हरिरेव पायान्नीलप्रकाशरुचिरश्रियमादधानः। पीताम्बरः प्रथमयौवनगर्वधारी श्रीवत्सकौस्तुभधरो धृतवेदबाहुः। तत्रैव भाति सततं खलु राकिणी सा नीलाम्बुजोदरसहोदरकान्तिशोभा। नानायुधोद्यतकरै- र्लसिताङ्गलक्ष्मीर्दिव्याम्बराभरणभूषितमत्तचित्ता। स्वाधि- ष्ठानाख्यमेतत् सरसिजममलं चिन्तयेद्यो मनुष्यस्तस्या- हङ्कारदोषादिकसकलरिपुः क्षीयते तत्क्षणेन" पूर्णानन्द- षट्चक्रम्।

**स्वाधीन** त्रि० स्वस्याधीनः। स्वायत्ते स्वतन्त्रे।

**स्वाधीनपतिका** स्त्री स्वाधीनः पतिर्यस्याः कप्। नायिकाभेदे स्वाधीनभर्तृकादयोऽप्यत्र।

"कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम्। वि-

चिन्नविभ्रमा मत्ता वा स्यात् स्वाधीनभर्तृका” सा०द० । सा च पञ्चविधा “उत्तमा मध्यमा प्रौढा स्वकीया सामान्या चेति” रसमञ्जरी ।

**स्वाध्याय** पु० स्वः स्वकीयत्वेन विहित अध्यायः द्विजानाम्, अधि+इङ-कर्मणि घञ् । १द्विजै पाठ्ये वेदभागभेदे “स्वाध्यायोऽध्येतव्यः” इति श्रुतिः । सु+आ+अधि इङ भावे घञ् । २स्वयम्पाठ्यवेदाध्ययने “स्वाध्यायो जप इत्युक्तो वेदाध्ययनकर्मणीति” स्मृतिः ।

**स्वान्त** न० स्वन-क्त । १मनसि अमरः २गह्वरे मेदि० ३ध्वनिते त्रि० । [४स्वाधीनतायां च मेदि०

**स्वाप** पु० स्वप-घञ् । निद्रायाम् अमरः ।२शयने ३स्वप्ने

**स्वापतेय** न० स्वपतेरागतः ढञ् । धने अमरः ।

**स्वाभाविक** त्रि० स्वभावादागतः ठञ् । स्वभावसिद्धे स्त्रियां ङीप् ( स्वाभाविकी” [illegible] ) ।

**स्वामिन्** पु० स्व+अस्त्यर्थे मिनि दीर्घः । १भर्त्तरि पत्यौ शब्दर० । २कार्त्तिकेये मेदि० ३राजनि अमरः ।४विभौ ५गरुडे ६हरौ च शब्दर० । ७आत्मजावनगतौ त्रिका० । ८अधिपतौ त्रि० अमर । ९जैनभेदे पु० हेमच० । १०परिव्राजकोपाधिभेदे पु० । तस्य भाव त्व स्वामित्व स्वस्वत्वेऽधिपते क्रयाद्यधीने स्वायत्ते पदार्थभेदे स्वत्वशब्दे दृश्यम् ।

**स्वामिपालविवाद** पु० स्वामी च पालो च तयोर्विवादः विवादभेदे तद्व्यवस्थादिकं वीरमि०उक्तं यथा “अथ स्वामिपालविवादाख्यव्यवहारपदम् । तत्र मनुस्तदभिधानप्रतिज्ञां करोति । “पशुषु स्वामिनां चैव पालानाञ्च व्यतिक्रमे । विवादं सम्प्रवक्ष्यामि यथावद्धर्मतत्त्वत” इति । स्वामिपालयोः प्रतिदिनकृत्यमाह नारदः “उपानयेद्गा गोपाय प्रत्यहं रजनीक्षये । चीर्णाः पीताश्च ता गोपः सायाह्ने प्रत्युपानयेत्” इति । चीर्णाः तृणादिकं भक्षितवतीः । पीताः पीतवतीः । स्वामिना प्रातर्दोहनार्थं समर्पितास्तास्ता गोपालेन साय मत्यर्पणीया इत्यर्थः । गोग्रहणं पशूनामुपलक्षणार्थम् । तथा च याज्ञवल्क्यः “यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत् तथा” इति । गवादिपरिपालकस्य भृति परिमाणमाह नारदः “गवां शताद्वत्सतरी धेनुः स्याद् द्विशताद् भृतिः । प्रतिसंवत्सरं गोपे सन्दोहश्चाष्टमेऽहनि” इति । प्रतिसंवत्सरं संवत्सरे संवत्सरे गोशतपरिपालने वत्सतरी द्विहायनी गोभृतिः । द्विशतपरिपालने धेनुर्दोग्ध्री सवत्सेति यावत् । अष्टमे दिवसे सन्दोहा सर्वासां गवां सन्दोहस्य भृतित्वेन कल्पनीय इत्यर्थः । बृहस्पतिरपि “तथा धेनुभृतः क्षीरं लभेताष्टमेऽह्नि” इति । धेनुभृतः धेन्वाभृत द्विशतपालक इत्यर्थः । तथा च सन्दोहो धेन्वा सम्बध्यते न वत्सतर्य्येति मदनरत्ने । कल्पतरौ तु धेनुभृतो गोपाल इति व्याख्यानात्वेन वत्सतर्यापि सम्बध्यत इति गम्यते । गोग्रहणं महिष्यादीनामुपलक्षणम् । न्यूनाधिकपरिपालने तु तदनुसारेण भृतिकल्पना द्रष्टव्या । इयञ्च वत्सतर्यादिभृतिकल्पना परिभाषितस्वभावविषया । परिभाषिते तु परिभाषानतिक्रमेणैव देया । मनुस्तु प्रकारान्तरेण भृतिपरिमाणमाह “गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम् । गोस्वाम्यनुमतो भृत्यः सा स्यात् पालेऽभृते भृतिः” इति । दशानां दोग्ध्रीणां मध्ये वरामुत्कृष्टां क्षीरभृतः तत्क्षीरभृतो भृत्यो गोपः दशदोग्ध्रीपालनकृते गृह्णीयादित्यर्थम् । सैषा भृतिः पूर्वं द्रव्यान्तरेणाभृते देया । यस्तु द्रव्यान्तरेण भृतः तत्र तदेव भृतिरित्यर्थः । यस्तु भृतिं गृहीत्वा पश्वपचारेण विनाशयति वा न प्रत्याह याज्ञवल्क्यः “प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः” इति । प्रमादग्रहणं पशुपालकदोषोपलक्षणार्थम् मनुना प्रमादनाश स्पष्टीकृतः ‘नष्टं विनष्टं कृमिभि श्वहतं विषमे मृतम् । हीनं पुरुषकारेण प्रदद्यात् पाल एव तु” इति । श्वहतम् शुना हतम् । विषमे दुर्गमप्रदेशे । पुरुषकारः पुरुषप्रयत्नः । यत् पुरुषप्रयत्नेन क्षीणं सर्पाद्यादिकं प्राप्य तद्दातव्यमित्यर्थः । पुरुषकारस्य इयत्तापि दर्शितः “कृमिचोरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत् । व्यायच्छेच्छक्तितः क्रोशेत् स्वामिने वा निवेदयेत्” इति । व्यायच्छेत् व्यसनाभावाय यतेतेत्यर्थः । चौरैर्बलात्कारेणापहृते न दाप्य इत्याह मनुः “विघुष्य तु हृतं चौरैर्न पालो दातुमर्हति । यदि देशे च काले च स्वामिनः स्वस्य शंसति” इति । विघुष्य डिण्डिमादिभिर्घोषं कृत्वा । देशे स्वाम्यवस्थानदेशे । काले अपहरणकालाव्यवहितकाले । विषयविशेषे पशुपालस्य दण्डमाह व्यास “गृहीतमूल्यो गोपालस्त्यक्त्वा निर्जने वने । व्यालचारी क्षपैर्बाध्य यवाको च वनेचर” इति । यवाको नापित इति कल्पतरौ । पुरुषप्रयत्नाकरणे दण्डमाह नारदः “ग्रामे ह्यव्यसनं गोपो व्यायच्छेत् तत्र शक्तितः । अशक्तस्तूर्णमागम्य स्वामिने च निवेदयेत्” । अव्यायच्छन्नविक्रोशन् स्वामिने चा-

निवेदयन्। वोढुमर्हति गोपस्तं विनयञ्चैव राजनि" इति। तद्भवादिकम्। पशूनां दैवात् मरणे पालकस्य दोषाभावज्ञानोपायमाह व्यासः "मृतेषु च विशुद्धः स्याद् वालशृङ्गादिदर्शनात्"। आदिशब्देन कर्णादीनां ग्रहणम्। तथा च मनुः "कर्णौ चर्म च वालांश्च वस्तिं स्नायुञ्च रोचनाम्। पशुषु स्वामिनां दद्यान्मृतेष्वङ्गानि दर्शयेत्" इति। अङ्कादि दर्शयेदिति क्वचित् पाठः। अङ्कः शृङ्गकर्णादिच्छेदचिह्नम्। आदिशब्दः सा-चिह्नसङ्ग्रहार्थः। पशुषु मृतेष्वङ्कादिकं स्वामिने दर्शयेत्। रोचनादिकं यत्प्रयोजनं तत् तस्मै दद्याच्चेत्यर्थः। नष्टगवादिदानञ्च तत्स्वामिने मूल्यद्वारेण ज्ञातव्यम्। अत एव विष्णुः "दिवा पशूनां वृकाद्युपघाते पालेऽत्वनायति पालकदोषो विनष्टपशूनां मूल्यं स्वामिने दद्यादिति"। अनायति अनागच्छति। विनष्टद्रव्यप्रमाणमाह याज्ञवल्क्यः "पालदोषविनाशे तु पाले दण्डो विधीयते। अर्द्धत्रयोदशपणः स्वामिनो द्रव्यमेव च" इति। अर्द्धत्रयोदशपणः अर्द्धरहितत्रयोदशपणः। सार्द्धद्वादशपण इति यावत्। उत्तरपदलोपी कर्मधारयः। यत्तु केनचिदर्द्धाधिकत्रयोदशपणो दण्ड इति व्याख्यातं तत् सार्द्धद्विमात्रादिषु अर्द्धत्रिमात्रादि शब्द भाष्यकारशब्दप्रयोगदर्शनादुपेक्ष्यम्। पालदोषमाह मनुः "अजाविके तु संरुद्धे वृकैः पाले त्वनायति। यां प्रसह्य वृको हन्यात् पाले तत् किल्विषं भवेत्" इति। अनायति उपद्रवनिवारणाय अनागच्छतीत्यर्थः। याम् अजाविकजातीयाम्। सुगमस्थलस्य विषयमेतत्। दुर्गमस्थलस्थविषये त्वाह स एव "तासां चेदवरुद्धानां चरन्तीनां मिथो वने। यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्विषी" इति। अवरुद्धानां पालकेन स्थापितानामित्यर्थः। गवादिप्रचारार्थं भूमिमाह याज्ञवल्क्यः "ग्रामेच्छया गोप्रचारो भूमीराजवशेन वा"। ग्रामेच्छया ग्रामीणजनवशेन राजेच्छया वा। गोप्रचारो गवां तृणादिभक्षणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीय इत्यर्थः। गवां स्वामालक्षणोक्त्यर्थं ग्रामक्षेत्रयोरन्तरमाह स एव "धनुःशतपरीणाहो ग्रामक्षेत्रान्तरं भवेत्। द्विशते खर्वटस्य स्यान्नगरस्य चतुःशतम्" इति परीणाहशब्देनात्र सर्वासु दिक्षु चतुर्- शस्यस्थल टस्रात। एतादृशं धनुःशतं परिमितं ग्रामक्षेत्रयोरन्तरं कार्य्यम्। खर्वटस्य शतद्वयपरिमितमि-

त्यर्थः। खर्वटः अनेककारुकर्षीवलयुक्तो ग्राम इति मदनरत्ने। माधवाचार्य्यैस्तु प्रचुरकण्टकमल्लानो ग्राम इति व्याख्यातम्। तत्र शस्योत्पत्तेः प्रागेवावरणं कार्य्यमित्याह कात्यायनः "अजातेष्वेव शस्येषु कुर्य्यादावरणं महत्। दुःखेन विनिवार्य्यन्ते लब्धस्वादरसा मृगाः" इति। एवं पशुनिवारणार्थं कृतेऽप्यावरणे तमतिक्रम्य पशुभिः शस्यादिविनाशे कृते कर्त्तव्यमाह मनुः "पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः। स पालः शतदण्डार्हो विपालान् वारयेत् पशून्" इति। पथिक्षेत्रे मार्गसमीपे क्षेत्रे। ग्रामान्तीये ग्रामसमीपवर्त्तिनि। सपालः पशुः पणशतदण्डार्हः तत्पशुपालः पणशतं दण्डनीय इत्यर्थः। अयञ्च दण्डः पशुपालने समर्थेन सता पशावनिवार्य्यमाणे वेदितव्यः। अत एव नारदः "उत्क्रम्य तु वृतिं यः स्याच्छस्यघातो गवादिभिः। पालः शास्यो भवेत् तत्र न चेच्छक्तो निवारयेत्" इति। आवरणाभावेनापरिहार्य्ये शस्योपघातेऽपि न पालस्य दण्डः। तथा च मनुः "तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि। न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम्" इति। अनेनाऽवृतक्षेत्रशस्योपघाते पशुरक्षिणां दण्ड इत्यर्थादुक्तं भवति। अदीर्घकालप्रचारविषयमेतत्। दीर्घकालप्रचारे तु अपरिवृतेऽपि पशुपालो दण्डार्हो भवति। अतएवाल्पकालप्रचारे दोषाभावं दर्शयति विष्णुः "पथि ग्रामविवीतान्ते न दोषोऽल्पकालमिति"। पशुविशेषे दण्डपरिमाणमाह याज्ञवल्क्यः "माषानष्टौ तु महिषी शस्यघातस्य कारिणी। दण्डनीया तदर्द्धं तु गौस्तदर्द्धमजाविकम्। भक्षयित्वोपविष्टानां यथोक्ताद् द्विगुणो दमः। सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम्" इति। परशस्यघातकारिण्याः महिष्याः स्वामी अष्टौ माषान् दण्ड्यः। गोः स्वामी चतुरः। छागस्वामी मेषस्वामी च द्वौ। एतेषां पशूनां शस्यभक्षणादारभ्य तत्रैव उपविष्टानां स्वामी यथोक्तदण्डाद् द्विगुणं दाप्यः। विवीतस्थतृणाद्युपघातेऽपि शस्योपघातवद्दण्डनीयः। खरस्वाम्युष्ट्रस्वामी च महिषीस्वामिवद्दण्डनीयः। अत्र पशुस्वामिनो दण्ड इत्यभिधानं महिष्यादिग्रहणं प्रतिपशुदण्डप्राप्त्यर्थम्। भक्षयित्वोपविष्टवत् शस्यविषये यथोक्ताद्द्विगुणो दण्डः। तथा च स्मृत्यन्तरम् "वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः" इति। अत्रापराधानुसारेण दण्डमार्यं तान्निकमाणो ग्राह्यः न पुनः

वाजपेयाद्विशिष्यते" इति एतत्पदद्वयसंहरति मनुः "एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः। स्वामिनाञ्च पशूनाञ्च पालानाञ्च व्यतिक्रमे"।

स्वायम्भुव पु॰ स्वयंभुवोऽपत्यम्, तस्येदम् वा अण् ओरो-र्दिति वक्तव्ये ओर्गुण इत्युक्त्या संज्ञापूर्वकविधेरनित्य-त्वज्ञापनान्न गुणः उवङ्। १स्वयम्भूपुत्रे मनौ २स्वयम्भू-सम्बन्धिनि त्रि॰ "धाम स्वायम्भुवं ययुः" कुमारः। स्त्रियां ङीप्। सा च ३ब्राह्म्याम्। "भार्गवी नार-दीया च बार्हस्पत्याङ्गिरस्यपि। स्वायम्भुवस्य शास्त्रस्य चतस्रः संहिता मताः" इति तद्व्याख्यधर्मशास्त्रसंहिता-चतुष्टयम्। तदुत्पत्त्यादिकं यथा

"ततः कालेन महता तस्याः पुत्रोऽभवन् मनुः। स्वाय-म्भुव इति ख्यातः स विराडिति नः श्रुतम्। तद्रूपगुण-सामान्यादधिपूरुष उच्यते। वैराजा यत्र ते जाता बहवः संशितव्रताः। स्वायम्भुवाद् महाभागाः सप्त सप्त तथापरे। स्वारोचिषाद्या ते सर्वे ब्रह्मतुल्यस्वरूपिणः। औत्तमिप्रमुखास्तद्वद् येषान्त्वं सप्तमोऽधुना" मत्स्यपु॰ ४अ॰। "ऋषींस्तेषां प्रवक्ष्यामि पुत्रान् देवगणांस्तथा। मरीचिरत्रिर्भगवानङ्गिराः पुलहः क्रतुः। पुलस्त्यश्च वशि-ष्ठश्च सप्तैते ब्रह्मणः सुताः। उत्तरस्यां दिशि तथा राजन् सप्तर्षयः स्थिताः। यामा नाम तथा देवास्त्वासन् स्वायम्भुवेऽन्तरे। आग्नीध्रश्चाग्निबाहुश्च मेधा मेधातिथि-र्वसुः। ज्योतिष्मान् द्युतिमान् हव्यः सवनः पुत्र एव च मनोः स्वायम्भुवस्यैते दश पुत्रा महौजसः। एतत्ते प्रथमं राजन्! मन्वन्तरमुदाहृतम्" हरिवं॰ ७अ॰।

स्वाराज् पु॰ स्वः स्वर्गे राजते राज-क्विप्। इन्द्रे अमरः।

स्वाराज्य न॰ स्वराजः भावः ष्यञ्। ब्रह्मत्वे स्वाराज्यसिद्धिः।

स्वारोचिष पु॰ द्वितीये मनौ। "और्वो वशिष्ठपुत्रश्च स्तम्बः काश्यप एव च। प्राणो बृहस्पतिश्चैव दत्तो निश्च्यवन तथा। एते महर्षयस्तात! वायुप्रोक्ता महाव्रताः। देवाश्च तुषिता नाम स्मृताः स्वारोचिषेऽन्तरे। हविघ्रः सुकृतिर्ज्योतिरापो मूर्त्तिरयस्मयः। प्रथितश्च नभस्यश्च नभ ऊर्जस्तथैव च। स्वारोचिषस्य पुत्रास्ते मनोस्तात महात्मनः। कीर्तिता पृथिवीपाल! महावीर्यपराक्रमाः। द्वितीयमेतं कथितं तव मन्वन्तरं मया" हरिवं॰ ७अ॰।

स्वार्थ पु॰ स्वस्य अर्थः प्रयोजनम् अभिधेयो वा। १स्वप्रयो-जने २स्वाभिधेये च "स्वार्थकः स्वार्थबोधकदिति" सन्दर्भ॰

स्वार्थिक त्रि॰ स्वार्थे विहितः ठञ्। स्वार्थविहिते व्याकर णोक्ते प्रत्यये। "स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवच-नान्यनुवर्त्तन्ते" महाभाष्य यथा वक्रगुडीक्रयां "क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" महाभाष्यम्। देवता अपकटगुडका गुडकीर इत्यादि।

स्वास्थ्य न॰ स्वस्थस्य भावः ष्यञ्। १आरोग्ये २सन्तोषे अमरः।

स्वाहा अव्य॰ सु+आ+ह्वे-डा। १देवोद्देशेन हविस्त्यागे अमरः। २अग्निभार्य्यायां स्त्री "स्वाहयेव हविर्भुजम्" रघुः। ३मातृकाभेदे च स्त्री "नमः स्वधायै स्वाहायै" इति पितृगाथा। "प्रकृतेः कलया चैव सर्वशक्तिस्वरूपिणी। बभूव दाहिका शक्तिरग्नेः स्वाहा स्वकामिनी। ईषद्ध-मध्य,स्मितास्या प्रभाच्छादनकारिणी। त्वमग्ने दाहिका शक्तिर्भवपत्नी च सुन्दरी। दग्धुं न शक्तस्त्वदृते जडाश्च त्वया विना। त्वन्नामोच्चार्य्य मन्त्रान्ते यो दास्यति हविर्नरः। सुरेभ्यस्तत्प्राप्नुवन्ति सुराः स्वानन्द-पूर्वकम्। अग्नेः सम्पत्स्वरूपा च श्रीरूपा सा गृहे-श्वरी। देवानां पूजिता शश्वत् नरादीनां भवाम्बिके।" ब्रह्मवै॰ प्र॰ १७अ॰। ४दुर्गाशक्तिभेदे "दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते" दुर्गापूजामन्त्रः।

स्वाहाप्रिय पु॰ ६त॰। अग्नौ हला॰ स्वाहापत्यादयोऽप्यत्र।

स्वाहाभुज् पु॰ स्वाहेतिमन्त्रेण त्यक्तद्रव्यं भुङ्क्ते भुज-क्विप्। देवे अमरः।

[च मेदि॰

स्विद् अव्य॰ स्विद-क्विप्। १प्रश्ने २वितर्के अमरः ३पादपूरणे

स्विन्न त्रि॰ स्विद-क्त। १घर्मयुक्ते २स्वेदान्विते च ३पक्वे "स्विन्नमसृदाहृतम्" स्मृतिः।

[अङ्गीकारे।

स्वीकार पु॰ अस्वस्य स्वस्य कारः करणं स्व+च्वि+कृ-घञ्।

स्वीय त्रि॰ स्वस्येदम् छ अपाणिनीयैरस्य न कुगिति मन्यते। १निजसम्बन्धिनि २नायिकाभेदे स्त्री नायिकाशब्दे दृश्यम्।

[आदित् स्वूर्य्यं स्वूर्च्छितम्।

स्वुर्च्छ विस्मृतौ भ्वा॰ प॰ सक॰ सेट्। स्वूर्च्छति अस्वूर्च्छीत्

स्वृ शब्दे अक॰ उपतापे सक॰ भ्वा॰ प॰ वेट्। स्वरति अस्वा-रीत् अस्वारीत्।

स्वृ हिंसने क्र्या॰ पा॰प॰सक॰सेट्। स्वृणाति अस्वारीत्।

स्वेक गतौ भ्वादि॰ आत्म॰सक॰सेट् ऋदित् चङि न ह्रस्वः। स्वेकते असस्वेकत्।

स्वेच्छा स्त्री ६त॰। स्वाभिलाषे हेमच॰। [स्वेच्छया युक्ते त्रि॰।

स्वेच्छामृत्यु प॰ स्वेच्छया मृत्युर्यस्य। १भीष्मे त्रिका॰ २स्वेच्छा॰

स्वेद पु॰ स्विद-भावे घञ्। १घाम्मेरे (घेका) २घर्मे गात्रादितो जलादेः निःसरणे। स्विद् भावे घञ्।

टीप । स्वपरपुरुषयसुखकामिन्यां स्त्रियां च । "शातपत्रर्थं प्रसवमापत्स्वपि पठन्त्युत । अतःपरं स्वैरिणी स्यात् चतुर्थी पञ्चमे भवेत्" भा० आ० १२२अ० ।

स्वोपार्जित त्रि० स्वेन उपार्जितम् । स्वयमर्जिते धनादौ । तस्य विभागो दायभागे दर्शितो यथा

"अस्ति विभाज्यमविभाज्यञ्चोच्यते । तत्र कात्यायनः "पैतामहञ्च पित्र्यञ्च यच्चान्यत् स्वयमर्जितम् । दायादानां विभागे तु सर्वमेतद्विभज्यते" । "यच्चान्यदि"ति चकार स्वयं मत्यनेन लभ्यते स्वयमार्जितमिति चकाराद्यस्य स्वापि तदर्जन साधारणधनद्वारेणेत्यर्थः । अनुप-घातोपात्तमविभाज्यमाह मनुर्विष्णू "अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत् । स्वयमीहितलब्धं तन्नाकामो दातुमर्हति" । पितृद्रव्योपघाताभावेन द्रव्य-द्वारेण नेतरेषां व्यापारः, स्वचेष्टालब्धत्वेन शारीरो-ऽपि व्यापारो नेतरेषामिति अर्जकस्यैव तदसाधा-रणं स्वयमीहितलब्धं तदिति हेतुत्वेनोपन्यासात् । तथा च व्यासः "अनाश्रित्य पितृद्रव्यं स्वशक्त्या-प्नोति, यद्धनम् । दायादेभ्यो न तद्दद्याद्विद्यालब्धन्तु यद्भवेत्" । स्वशक्तिमात्रेण यत् प्राप्तमिति सामान्ये-नाभिधानात् सर्वमेवविध स्वोयमसाधारणं द्रव्यम् । स्वशक्तिप्राप्तस्यापि विद्याधनस्य समाधिकविदो साधा-रणत्वात् न्यूनविद्याविद्यनिराकरणार्थं विद्यालब्ध पदम् । तथा याज्ञवल्क्यः "पितृद्रव्याविरोधेन यद-न्यत् स्वयमर्जितम् । मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेत्" । मैत्रादिपदञ्च प्रदर्शनार्थं, एवमादिषु प्रायेणानुपघातसम्भवात् । तथा मनुः "विद्याधनन्तु यद्यस्य तत्तस्यैव धनं भवेत् । मैत्रमौद्वाहिकञ्चैव माधुपर्किकमेव च" । तथा व्यासः "विद्याप्राप्तं शौर्य-धनं यच्च सौदायिकं भवेत् । विभागकाले तत्तस्य नान्वेष्टव्यं स्वरिक्थिभिः" । पितृपितृव्यादिस्य सदा-यसम्बन्धिभ्यः प्रसादादिना लब्धं सौदायिकम् । तथा नारदः "शौर्यभार्य्याधने, हित्वा, यच्च विद्याधनं भवेत् त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः" । भार्य्या-प्राप्तिकाले लब्धं भार्य्याधनम् औद्वाहिकमित्यर्थः, एतानि वर्जयित्वा अन्यद्विभजेदित्यनुवर्त्तते वाक्यान्तरीयम् । तदेवमादिभि शौर्य्यादिधनत्वमविभाज्यत्वे कारणं नोच्यते शौर्य्याद्यर्जितस्यापि विभागश्रुतेः । तथा च व्यासः "साधारणं समाश्रित्य यत् किञ्चिद्वाहनायुधम् । शौर्य्या-दिनाप्नोति धनं भ्रातरस्तत्र भागिनः । तस्य भागद्वयं देयं शेषास्तु समभागिनः" । साधारणद्रव्येणार्जितस्य धनस्य विभागं वदति । तथा नारदः "कुटुम्बं बिभृयाद् भ्रातुर्यो विद्यामधिगच्छतः । भागं विद्याधनात्तस्मात् स लभेताश्रुतोऽपि सन्" । विभृयादित्यनेन वचननिर्देशात् यदि विद्यामभ्यस्यतो भ्रातुः कुटुम्बमपरो भ्राता स्वधन-व्ययशरीरायासाभ्यां संवर्द्धयति तदा तद्विद्योपार्जित-धने तस्याप्यधिकारः । तथा "वैद्योऽवैद्याय नाकामो दद्यादंशं स्वतो धनात् । पितृद्रव्यं समाश्रित्य न चेत्तेन तदर्जितम्" । पञ्चपद साधारणधनपरं तदना-श्रित्यार्जितं वैद्योऽविद्याय अनिच्छन् दद्यात् वैद्याय विदुषे पुनः साधारणमन्तरेणाप्यर्जितं दद्यादेव । तथा च गौतमः "स्वयमर्जितमवैद्येभ्यो वैद्यः कामं न दद्यात्" । असाधारणधनशरीरव्यापारार्जितं स्वयमर्जितं अवि-द्वद्भ्यो दातुमनिच्छन् न दद्यात् विद्वद्भ्यः पुनर्दद्यादेव । एतच्च विद्याधनमात्रविषयम् । तदाह कात्यायनः "ना-विद्यानान्तु वैद्येन देयं विद्याधनं क्वचित् । समविद्या-धिकानान्तु देयं वैद्येन तद्धनम्" । तन्मोक्तेरविद्या-पदम् उभाभ्यां समाधिकपदाभ्यां लभ्यते तेन समविद्या-धिकविद्यानां दातव्यं न्यूनविद्याविद्ययो पुनरनधि-कारः । "तदेवमादिवचनैर्विद्याशौर्य्यादिधनेष्वपि साधा-रणधनोपघातानुपघाताभ्यां विभागाविभागयोरवगमात् तस्यैव प्रयोजकत्वात् तत्पदवत्त्वेव श्रुतिः कल्पनीया, उपघातार्जितं विभजेदिति, न पुनः शौर्य्यादिपदवत्त्वपि, अवश्यकल्पनीयसामान्यश्रुतिकल्पनयैवोपपत्तेः । गोबा-काधिकरणन्यायस्यायमेव विषयः । यदा न्यायप्राप्त एवायमर्थः, यद्येनार्जितं तत् तस्मिन् जीवति तस्यैव, अपति विशेषवचने, यत्र पुनः साधारणधनमात्रेणैव व्यापारोऽपरस्य धनशरीराभ्यां तत्रैकस्यैको भागोऽपरस्य भागद्वय न्यायागततमेव सिद्धम् । एतेन चैतदपि सिध्यति, यत् साधारणधनोपघाते सति यस्य यावतो-ऽशस्य स्वल्पस्य महतो वोपघातः, तस्य तदनुसारेण भागकल्पना कार्य्या । किञ्च कात्यायनवचनम् "विभक्ता पितृवित्ताच्चेदेकत्र प्रतिवासिन । विभजेयु पुनर्द्रव्यं स एकमेवोदयो यतः" ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्ये सकारादिशब्दार्थसङ्कलनम् ।

---

# ह

हकारः व्यञ्जनेषु ऊष्मवर्णभेदः। कण्ठस्थानोच्चार्यः। "हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्। औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम्" शिक्षोक्तेः पञ्चमादिवर्णसंयोगे उरसोच्चार्यश्च। तदुच्चारणे आभ्यन्तरप्रयत्नः जिह्वाग्रेण कण्ठस्थानस्य अर्द्धस्पर्शः। "अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः" इति शिक्षोक्तेः। बाह्यप्रयत्नास्तु घोषसंवारनादा महाप्राणश्च। अस्य ध्येयरूपं कामधेनुतन्त्रोक्तं यथा "हकारं शृणु चार्वङ्गि! चतुर्वर्गप्रदायकम्। कुण्डलीद्वयसंयुक्तं रक्तविद्युल्लतोपमम्। रजःसत्त्वतमोयुक्तं पञ्चदेवमयं सदा। पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा। त्रिबिन्दुसहितं वर्णं हृदि भावय पार्वति!"। अस्याधिष्ठातृदेवताध्यानमुक्तं वर्णोद्धारतन्त्रे यथा "करवीरसमानाभां बाहुद्वयसमन्विताम्। अस्थिमाल्याम्बरधरां वरदाभयधारिणीम्। नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम्। सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम्। एवं ध्यात्वा हकारन्तु तन्मन्त्रं दशधा जपेत्"। मातृकान्यासेऽस्य दक्षिणकुक्षौ न्यासः। काव्ये तस्य प्रथमप्रयोगे खेदः फलं वृ॰र॰टीकायामुक्तं यथा "स सौख्यं हन्तु खेदम् विस्मयमपि च लं व्यं च सन्दिह्य करोति"। अकारादिवर्णानां प्रयोगे फलादिकं यत्र भवतीति तत्रैवोक्तं यथा "पद्यादौ गद्यमध्ये वचसि च सकले प्राकृतादौ च सोऽयम्" इति। एतेषां फलाधार निरूपणमध्याकारे "नायको वर्ण्यते यत्र फलं तस्य समादिशेत्। अन्यथा तु कृते काव्ये कर्त्तुर्दोषावहं फलम्" तस्य प्रतिप्रसवो यथा "देवता वर्ण्यते यत्र क्वापि काव्ये कवीश्वरैः। मित्रामित्रविचारो वा न तत्र फलकल्पना। देवतावाचकाः शब्दा ये च भद्रादिवाचकाः। ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा"।

अस्य वाचकशब्दास्तन्त्रोक्ता यथा "हः शिवो गगनं हंसो नागलोकोऽम्बिकापतिः। नकुलीशो जगत्प्राणः प्राणेशः कपिलामलः। परमात्मा लजो जीवः वराकः शान्तिदोऽङ्गजः। सर्गोऽभयोऽरुणः स्थाणुः कूटकृद्वनिवारकः। लक्ष्मीर्हरिहरः शम्भुः प्राणस्थिर्ललाटजः। स्वकोपचारणः स्फूर्तिश्चैतन्यं पादपूरणम्। महाकालो परः नादो मेघनादो विमर्दनः। बिन्दुदुर्गा प्रिया देवी मेघश्यामः महेश्वरः। दक्षपादः सदा शम्भुः शशाङ्को यः सोमसमुद्भवम्" वर्णाभिधानम्। "शुक्रश्चाथ हकारोऽङ्कुशः प्राणः शान्तः शिवो वियत्। अकुलो नकुलीशश्च हंसः शून्यश्च हाकिनी। अनन्तो नकुलो जीवः परमात्मा ललाटजः" इति बीजवर्णाभिधानम्। "हकारो नकुलीशोऽपि हंसः प्राणोऽङ्कुशः शिवे। महेशो नकुली चैव वराको गगनं रविः। लिङ्गं शून्या-महाशून्यः प्राणश्च परमेश्वरि!" रुद्रयामले दशपटले।

ह अव्य॰ हा–ड। १पादपूरणे अमरः २सम्बोधने ३नियोगे ४क्षेपे ५निग्रहे ६निन्दायां मेदि॰ ७प्रसिद्धौ च। ८शिवे पु॰ ९जले १०शून्ये ११आकाशे १२रक्ते १३स्वर्गे १४धारणे पु॰ मेदि॰। १५पापहरणे १६चन्द्रे शब्दर॰ १७सकोपवारणे २०शुष्के च एकाक्षरकोषः।

हंस पुंस्त्री॰ हस–अच्–पृषो॰ वर्णागमः। स्वनामख्याते १पक्षिभेदे अमरः स्त्रियां ङीष् २निर्लोभनृपे ३विष्णौ ४सूर्ये ५परमात्मनि "हंसं तमो सन्निहितं चरन्तम्" नैष॰। ६मत्सरे ७यतिभेदे ८मन्त्रभेदे ९देहस्थवायुभेदे १०अश्वभेदे मेदि॰ ११गुरौ १२पर्वते शब्दर॰। १३शिवे अमरः १४अपरस्थिते १५श्रेष्ठे हेमच॰। १६विशुद्धे अमरः। १७अजपामन्त्ररूपे वर्णे च "हकारेण बहिर्याति सकारेण विशेत् पुनः। हंसेति सततं मन्त्रं जीवो जपति सर्वदा" इति तन्त्रम्। अजपाशब्दे ८९ पृ॰ दृश्यम्।

हंसजातेर्भेदाः तन्मांसगुणाश्च यथा "हंसाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः। वातश्लेष्मप्रदाश्चापि बलशुक्रकरा मताः" भावप्र॰ तदण्डस्य गुणाः "हंसडिम्बं परं बल्यं वृष्यं वातनाशनम्। पाके लघुतरं प्रोक्तं सर्वामयविनाशनम्" राजनि॰। अस्य दर्शनादेः शुभाशुभत्वं वसन्तराजशाकुने उक्तं यथा "काष्ठस्थ सर्वोऽपि दर्शनेन हंसस्य यच्छन्तु सर्वसिद्धिम्। नामानि हंसस्य यः शृणोति यस्तु प्रयान्ति नाशं दुरितानि तस्य। चौरैः समं दर्शनमात्रमस्ते निधिर्द्वितीयेऽथ भयं तृतीये। युद्धं चतुर्थे नृपतिप्रसादः स्यात् पञ्चमे हंसरवे नराणाम्"। यतिभेदहंसलक्षणं परमहंसशब्दे ४२६७ पृ॰ दृश्यम्। प्राणस्य हंसपदार्थत्वे हेतुरुक्तः पदार्थादर्शे "उच्छ्वासे चैव निःश्वासे च हंस इत्यक्षरद्वयम्। तस्मात् प्राणस्तु हंसात्मा आत्माकारेण संस्थितः। नाभेरुच्छ्वासनिश्वासात् हृदयाग्रे व्यवस्थिति"।

हंसक पु॰ हंस इव कायति कै–क। १पादकटके नूपुरादौ

अमरः । संज्ञायां कन् । २राजहंसे शब्दच० । स्वार्थे क । ३हंसशब्दार्थे "लघुगुरुलघुयत्र सतालो हंसक स्मृत." सङ्गीतदा० उक्ते ४तालभेदे ।

**हंसकीलक** पु० "नारी पादद्वयं कृत्वा कान्तस्योरुयुगोपरि । कटिमान्दोलयेत् यत्र बन्धोऽयं हंसकीलक" स्मरदीपिकोक्ते रतिबन्धभेदे । [भाषिणया स्त्रिया त्रिका० ।

**हंसगद्गदा** स्त्री हंसस्येव गद्गदः स्वरो यस्याः । मधुर

**हंसगामिनी** स्त्री हंस इव मन्दं गच्छति गम–णिनि । १हंसतुल्यमन्दगामिन्यां स्त्रियाम् । हंसेन गच्छति णिनि ङीप् । २ब्रह्माण्याम् । ३हंसेन गन्तरि त्रि० ।

**हंसदाहन** न० हंस इव श्वेतं सुरभित्वात् दाहनमस्य । अगुरुचन्दने शब्दच० ।

**हंसनादिनी** स्त्री "गजेन्द्रगमना तन्वी कोकिलालापसंयुता । नितम्बे गुर्विणी या स्यात् सा स्मृता हंसनादिनी" इत्युक्तलक्षणायां नार्य्याम् शब्दमाला ।

**हंसपदी** स्त्री हंसस्येव पादा मूलान्यस्याः पाद्भावे स्त्रियां ङीपि पद्भाव । गोधापदीलतायाम् राजनि० । [हला० ।

**हंसपाद** न० हंसस्य पाद तद्वर्णोऽस्त्यस्य अच् । हिङ्गुले

**हंसपादिका** स्त्री हंसस्येव पादाः मूलान्यस्य कप् कापि अत इत्वम् । हंसपदीलतायां राजनि० ।

**हंसपादी** स्त्री हंसस्येव पादा मूलानि सन्त्यस्याः अच् गौरा० ङीष् । हंसपदीलतायां रत्नमा० ।

**हंसमाला** स्त्री ६त० । पङ्क्त्याकारेण स्थिते १हंससमूहे २कादम्बे हंसे च शब्दच० । [माषपर्ण्याम् राजनि० ।

**हंसमाषा** स्त्री हंसा विशुद्धः माषः तदाकारः पर्णेऽस्याः ।

**हंसरथ** पु० हंस रथो वाहनं यस्य । १चतुर्मुखे ब्रह्मणि त्रिका०, हंसवाहनादयोऽप्यत्र । [उपधातौ राजनि० ।

**हंसलोमश** न० हंस इव लोमशं लोमयुक्तम् । कासीसे

**हंसलोहक** न० हंस इव लोहकम् । पित्तले धातौ हेमच०,

**हंसवती** स्त्री हंसस्तत्पादाकारं मूलं अस्त्यस्याः मतुप् मस्य व ङीप् । २हंसपद्याम् जटा० । ३हंसयुक्ते त्रि० ।

**हंसवीज** न० हंसस्य वीजमत्र । हंसाण्डे राजनि० ।

**हंसाङ्घ्रि** पु० हंसस्याङ्घ्रिरिव लोहितत्वात् । हिङ्गुले ।

**हंसारूढ़** पु० हंसमारूढ आ+रुह–क । १ब्रह्मणि २तच्छक्त्यां ब्रह्माण्यां स्त्री हंसाधिरूढ उभयत्र सरस्वत्यां स्त्री । [हेमच०

**हंसाभिख्य** न० हंसस्येवाभिख्या शुभ्रत्वात् यस्य । रूप्ये

**हंसी** स्त्री हंसस्य भार्य्या ङीष् । १हंसयोषिति शब्दर० द्वाविंशत्यक्षरपादके २छन्दोभेदे च "मौ गौ नाथस्नारा गो गो वसुभुवनयतिरिह भवति हंसी" छन्दो० । ३हंस जातिस्त्रियाञ्च ।

**हंसोदक** न० । "शारदं नवमृद्घटेषु निहितं सन्तप्तमर्कांशुभिः यामिन्याञ्च निविष्टमिन्दुकिरणैर्मन्दानिलान्दोलितम् । एलाद्यैः परिवासितं श्रमहरं पित्तोष्णदाहे विषे मूर्च्छारक्तमदात्ययेषु च हितं शंसन्ति हंसोदकम्" राजनि० उक्ते जलभेदे ।

**हहो** अव्य० हमित्यव्यक्तं जहाति हा–डो । १सम्बोधने "हहो चिन्मयचित्तचन्द्रमणय" चन्द्रालोक । २दर्पे ३दम्भे ४प्रश्ने च शब्दर० ।

**हक्क** पु० हक् इत्यव्यक्तं कायति कै–क । गजसमाह्वाने जटा०

**हञ्जे(ञ्जा)** अव्य० हमित्यव्यक्तं जायतेऽत्र जन–ड टा वा । नाट्योक्तियायां नटाभिनेयजते चेटीसम्बोधने अमरः टावन्तस्तत्रार्थे भरत० आदन्तोऽप्यव्ययम् वसन्तराज ।

**हञ्जि** पु० हमित्यव्यक्तं जयति जि–ड । क्षुधायां जटा० ।

**हञ्जिका** स्त्री हञ्जौ क्षुधायां कायति शब्दायते कै बाहुलकात् कर्मणि क । भार्ग्यां भावप्र० क्षुधाहेतुत्वात्तस्यास्तथात्वम् ।

**हट** दीप्तौ भ्वा० प० अक० सेट् । हटति अहटीत्–अहाटीत्

**हटपर्णी** न० हटं दीप्तं पर्णं पृ० ब० ङीप् । शैवाले शब्दर० ।

**हट्ट** पु० हट–ट टस्य नेत्वम् । क्रयविक्रयस्थाने (हाट) अमर. । "प्रतिहट्टपथे घरट्टजातिति" नैष० ।

**हट्टचौरक** पु० हट्टे प्रकाशिते स्थाने इव चौरः स्वार्थे क० (हाटचोर) चौरभेदे शब्दर० ।

**हट्टविलासिनी** स्त्री हट्टं विलासयति वि+लस–णिच्–णिनि ङीप् । १गन्धद्रव्यभेदे अमर । २हरिद्रायाञ्च भावप्र० । [हठति । अहाठीत्–अहठीत् ।

**हठ** कीलबन्धे सक० बलात्कारे प्लुतौ च अक० भ्वा० पर० सेट् ।

**हठ** पु० हठ–अच् । बलात्कारे अमरः २प्रसह्यार्थे मेदि० ।

**हठपर्णी** स्त्री हठते प्लवते हठ–अच् हठः प्लवमानं पर्णं यस्याः ङीप् । १शैवाले त्रिका० २कुम्भिकायाञ्च ।

**हठयोग** पु० हठेन बलात्कारेण योगः । प्राणायामादिभिः साध्यासने राजयोगं विनैव परमात्मसाक्षात्कारक्षमे चित्तवृत्तिरोधात्मके योगे ।

योगश्च द्विविधः हठयोगः राजयोगश्च । तत्र हठयोगः क्रियाविशेषसाध्यः हठदीपिकादावुक्तप्रकारः । राजयोगस्तु भावनाविशेषसाध्यः पातञ्जलादावुक्तः । स च पातञ्जलिशब्दे ४२०४पृ० दर्शितः । हठयोगोऽत्र साङ्गोऽभिधीयते तत्साधनप्रसङ्गादि उभययोगयोरपि परस्परसापेक्षतया

नित्यकर्म्मव्याकर्त्तव्ये। "न लङ्घयेत्तो करणं निपीडयेत् श्रमं मिताशी मितनिद्रयोक्तिः। प्रातःशिरःस्नानमथो न रोचयेदाकृष्टये गोऽपि कदापि योगी। आवश्यके तूष्ण जलैर्विधेय स्नानं न कार्य्यं हिमवारिणा तत्। स्नानं प्रगेऽनिष्टमिदन्तु कण्ठस्नानं स्मृतं हैरिह मध्यमेऽह्नि। व्यायाममात्मपरुष श्रमगौरवदेशमध्यस्थपानमतिविभ्रमणं च-हैव। निद्रा दिवा निशि च जागरणं च चिन्ता क्लेशावहं यदखिलं तदिहापि जह्यात्। यत् स्वस्थान्यस्य दुःखावहमपि न भवेत् तद्गिरा मानसेन कायेनापीषदन्ते नैहि न हि वनितायाश्च सेवां विदध्यात्। हिंसा द्वेषं तथाहङ्कृतिमथ ममता प्राणिपीडा वियोगं भिन्नाभिन्नत्ववृद्धिं ज्ञानगमसहता सङ्गति सत्यजेत्त। आयामकस्यस्य तनोऽङ्गमर्द्दनं कुर्य्याद् वरिष्ठोत्तरसाधकस्य। स्यादङ्गमर्द्दनं तथा स्थिरत्वं वायोर्जयो देहलघोः समाप्ति। पानाशने कर्म सुखावहं यद्योगस्य विघ्नो न हि तेन किञ्चित्। सेव्यं तदेक परमार्थ्यमथैहिकं य मनःक्षोभकरं त्यजेत्। अभ्यासिना भूमिगृहे मठे वा न तैलदीप प्रविधेय ईक्षणे। श्वांसान् ज्वलन्त्येव सूक्ष्मतो दूराक् प्राणो विमार्गं द्रुततोऽत्यन्त त्यजेत्"। अतो यं गमठे घृतदीप एवोप युञ्जन्" हठस०। "उत्थाय प्रातःकाले रहसि च परित साधकः प्राणरोधस्याभ्यास प्रातरष्टैर्द्दिमितघटिकमथो पीठमुद्रादि कुर्य्यात्। व्यायामं चातु सार्द्धप्रहरयुगलकान्तं ततः पथ्यमल्पं भुञ्जीयादम्लतीक्ष्णोष्णलवणविदाह्यु-ज्झित चाज्यदुग्धम्। प्राणायाममथाचरेत् प्रथमके यामे निशः साधको यामैक शयन भजेदनुगतो प्राणावरोध श्रयेत्। शौचाद्य घटशोधनादिकमथो यामे निशाया श्रयेत्तुर्य्ये नाडिविशोधनं स्थितिदृढोऽभ्यासस्तु प्राणमा-यक। मध्ये मध्ये चित्तविश्रान्तिहेतोः साम्बं शम्भव संभजेदासनञ्च। अभ्यासान्तेऽभ्यासिना स्वल्पमल्पं सभो क्षाद्य भूरिवार सुखव्यम्। मध्ये मध्ये धारण मेद चालनमभ्यासादौ समभजेतादिशङ्कः। सर्शङ्गीणा नाडिका दोषपूर्णा आभ्या स्थद्य स्युर्मरुन्मध्यमास्ताः" हठस०। (आभ्यां धारणमेदचालनाभ्यां दोषा दुष्टाश्चरसकला)

गजकरणी, "दृढ स्वाटकाभ्यासतः कुर्म्मवायोर्जये मूलबन्धेन चापानसिद्धि। जये स्यादुदानस्य जालन्धरेण समानस्य चालेन च प्राणवायोः। अते गजकरण्येषा समानोदानयोर्जयम्। पक्वामाशयगाजीर्णनाशाद्यखिलशोधिनी। कोष्ठहृत्कण्ठसंस्थानामपित्तकफबाधनी। श्वासं बलं हृत्स्थ पादं वक्ष्यते स्थद्यमम्। अत्ते जलधरं कृत्वा प्राणस्य सुखवाहिताम्। हृत्कण्ठकोष्ठसंशुद्धा स्थूलाजीर्णादि-रोगहृत्। छन्ति गजकरण्येषा नाभेरूर्ध्वमधोमलान्। पक्वापक्वान् रोगहेतून् बहिः प्रक्षाल्य पातयेत्। कोष्ठ-शुद्धा दाशवान्तं गत्वान्तं आलवेत् श्रमम्। आभ्या विशुद्धकोष्ठो यः सप्राणापानयोर्गतिम्। सूक्ष्मां देह सञ्चरितां लूतिकागतिवत्सुधीः वेत्तीपिकासमा चित्ते कोष्ठान्तः परिसर्पतोः। नाडीसञ्चारविज्ञानमनयो सकलं यथा। जानाति साधकः शुद्धो नाडीसंस्थान-संविदम्। (एवं धौत्यामपि नाभ्यूर्ध्वमङ्ग ज्ञेयम्) "महाचक्रमादौ विरुध्यात्तु सम्यग् भजेद्बन्धमुद्रामथो खेचरीं च। ततो वारिपानं प्रकुर्य्यात् सुधाशी सुधा साधपेया प्रयागे स्थितिस्तु। विना ग्रन्थिभेदं विना चक्रभेदं विना ब्रह्मरन्ध्रप्रवेशं जितस्य। खगस्यात्मना कार्यसिद्धिं विनास्ते न सिद्धिर्न यागो न शून्यत्वलाभः" हठस०।

आसनफलम् "सप्राप्तबीजभावो यमनियमाभ्यामयं योगः। प्राणायामासनकैरङ्कुरवान् साधकस्य भवेत्। स्यादासने स्थैर्य्यमरोगिताङ्गे सुलाघव दुःखसहोष्णशीतैः। द्वन्द्वैर्जितोऽपि सम्भूयते नाऽनन्ते समापत्तिरतो यमाभ्याम्। साधनत्रयमिदं मरुज्जये प्रोदित प्रमितजन्मविधिरिष्टा। शक्तिचालनमथ साधनद्वयम् नाभिवायुघृतिनाडिचालनम्"। नियमैश्च यमैर्विषाणि रोगा प्रभवन्ति सुखयतस्य पीठे। चिरकालपदान्तरा असाध्या यमिनः साधुजितासनस्य पुंसः" हठस०। (यमाभ्यां यमनियमाभ्याम्)

कुक्कुटासनम् "संस्थाप्य पद्मासनमत्र सम्यक् करौ तु जानूरुयुगान्तरे दृढम्। निवेश्य संस्थाप्य तले धराया व्योमस्थ उक्त स्थिति कुक्कुटासनम्" हठस०।

उत्तानकूर्म्मकम् "कुक्कुटासनवत्स्थो दोर्भ्यां संबध्य कन्धरे। भवेत् कूर्म्मवदुत्तान एतदुत्तानकूर्म्मकम्" हठप्र०।

धनुरासनम् "पादाङ्गुष्ठौ पाणियुग्मेन धृत्वा कर्णाबध्याकर्षयेत् स्वस्य शश्वत्। कुर्य्याच्चापाकर्षणं प्रोक्तमेतदासनं रोगजिद्वाडिशुद्धौ" हठस०।

मत्स्येन्द्रासनम् "वामोरुमूलार्पितदक्षपादं जान्वोर्बहिर्वेष्टितवामदोष्णा। प्रगृह्य तिष्ठेत् परिवर्त्तिताङ्गो मत्स्येन्द्रनाम्नोदितमासनं स्यात्। मत्स्येन्द्रपीठे जठरं प्रदीप्तं प्रचण्डरुग्मण्डलखण्डनास्त्र। अभ्यासतः कुण्डलिनी प्रबोधं दत्ते स्थिरत्व हि ददाति पुंसाम्" हठस०।

तन्त्रेऽपि । वारंवारमपानमूर्ध्वमनिलं प्रोत्सारयन् पूरयन् सञ्चन् प्राणमुपैति बोधमतुलं शक्तिप्रभावादतः" हठयो॰ ।

सिद्धासनम् "योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेन्मेढ्रे पादमथैकमेव हृदये कृत्वा समं विग्रहम् । स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्येद् भ्रुवोरन्तरं चैतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते" हठयोगप्र॰ ।

वीरासनभद्रासनपद्मासनकादीनि आसनशब्दे ८८६ पृ॰ दृश्यानि सुखासनम् "येन केन प्रकारेण सुखं स्थैर्यं च जायते । तत् सुखासनमित्युक्तमशक्तस्तत् समाश्रयेत्" दत्तसंहिता । इदमेव "स्थिरसुखमासनमिति" पात॰ सूचितम् ।

षट्कर्मोपक्रमः "आसने दृढो योगी वशी हितमिताशनः । गुरूपदिष्टमार्गेण प्राणायामं समभ्यसेत् । यावद्वायुः स्थितो देहे तावज्जीवितमुच्यते । मरणं तस्य निष्क्रान्तिस्ततो वायुं निरोधयेत् । चले वाते चलं चित्तं निश्चले निश्चलं तथा । योगी स्थाणुत्वमाप्नोति ततो वायुं निरोधयेत् । मलाकुलासु नाडीषु मारुतो नैव मध्यगः । कथं स्यादुन्मनीभावः कार्यसिद्धिः कथं भवेत् । शुद्धिमेति यदा सर्वं नाडीचक्रं मलाकुलम् । तदैव जायते योगी प्राणसंग्रहणे क्षमः" इत्युपक्रमे "यदा तु नाडीशुद्धिः स्यात्तदा चिह्नानि बाह्यतः । कायस्य कृशता कान्तिस्तथा जायेत निश्चितम् । यथेष्टं धारणं वायोरनलस्य च दीपनम् । नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् । मेदःश्लेष्मादिनाशार्थं षट्कर्माणि समाचरेत् । अन्यथा नाचरेत्तानि दोषाणां समभावतः । धौती वस्ती तथा नेती त्राटकं नौलिकं तथा । कपालभातीश्चैतानि षट्कर्माणि प्रचक्षते । कर्मषट्कमिदं गोप्यं घटशोधनकारकम् । विचित्रगुणसन्धायि पूज्यते योगिपुङ्गवैः" हठ॰ ।

धौती "चतुरङ्गुलविस्तारं हस्तपञ्चदशायतम् । गुरूपदिष्टमार्गेण सिक्तं वस्त्रं शनैर्ग्रसेत् । पुनः प्रत्याहरेच्चैतदुदितं धौतिकर्म तत् । कासश्वासप्लीहकुष्ठं कफरोगाश्च विंशतिः । धौतीकर्मप्रभावेण शुध्यन्त्येव न संशयः" हठप्र॰ "चतुर्दश मितं च पञ्चदशदामानं च विस्तारतश्चाथ चतुरङ्गुलविस्तृतं सुसूक्ष्मं सिक्तं वस्त्रं ततः । स्थित्वा गोमुखविष्टरे सुशनकैरेतद् ग्रसेत् साधको मन्दं चाथ विनिर्हरेत् कफगदश्वासेषु धौती हिता" हठस॰ ।

वस्ती "नाभिदघ्ने जले पायुन्यस्तनालोत्कटासनः । आधारात् कुञ्चनं कुर्यात् क्षालनं वस्तिकर्म तत् । गुल्मप्लीहोदरं चापि वातपित्तकफोद्भवम् । वस्तिकर्मप्रभावेण क्षीयन्ते सकलामयाः । धात्विन्द्रियान्तःकरणप्रसाद दद्याच्च कान्तिं दहनप्रदीप्तिम् । अशेषदोषोपचयं निहन्यात् अभ्यस्यमानं जलवस्तिकर्म" हठप्र॰ ।

"जलं पायुविन्यस्तनालस्य मार्गात् जले नाभिदघ्ने समाकृष्य चाङ्गम् । चलत्युत्कटे विष्टरेऽपानकोषात् जलं याति तुन्देऽम्बुना वस्तिकर्म" (नालं वंशादिसूक्ष्मच्छिद्रयुक्तनालिका) । आटाकृत्कटविष्टरे परिगतः प्रोत्थाय संन्यस्तनालं पायुद्वारे विकाशकोषविधिना वायुं समाकर्षयेत् । आपूर्य त्वरितं तुन्दमभितो नौल्या प्रचाल्यानिलं कृत्वाऽधोमलसंसृजेत् सलिलं योगी बहिःकोष्ठगम् । अत्र वस्तिकर्मणि गोमुखमेव प्रशस्तमतुभूतमिति सङ्केतः । अत्र सर्वकोष्ठमलाना कोष्ठन्यासनपूर्वकत्वेन बहिः कर्तव्या भवति । तदुपायसङ्केतेन वस्तिकर्म कर्तव्यम् । पूर्वोक्तविधिना गोमुखे चोत्कटासने स्थित्वाऽपानद्वारोर्ध्वमन्तर्जलं किञ्चिद्गृह्णीयात् । तदूर्ध्वं स्वस्तिकासने स्थित्वा समाकृष्य नाभेरुपरि हृदयान्तं कर्तव्यम् । पुनरुत्कटासनेन जलं गृहीत्वा प्रागुक्ताभ्यां विधिना शक्तितः स्थेयं विधेयम् । एवं वस्तौ शक्तितः चैवं सर्वं कोष्ठं जलपूर्णं कृत्वाऽभितः कोष्ठं विभ्राम्यान्त्रसन्धिगतमन्त्रादिलीनपक्वापक्वसद्रवघनमलादि दूरीकृत्य पश्चाद्बहिस्तज्जलं कुर्यात् क्रमेण न त्वरयेत् । तदाऽनेन विधिना कोष्ठं प्रक्षालितवस्त्रवत्तोऽपास्तदोषो भवति" हठस॰ ।

नेती "सूत्रं वितस्ति सुस्निग्धं नासानाले प्रवेशयेत् । मुखान्निर्गमयेत् सा हि नेती सिद्धैर्निगद्यते । कपालशोधनी चैव दिव्यदृष्टिप्रदायिनी । जत्रूर्ध्वजातरोगौघं नेतिराशु निहन्ति च" हठप्र॰ ।

"आखुपुच्छसदृशं सुनिर्मलं षड्वितस्तिमितसूत्रमक्षतम् । संप्रवेश्य लघु नासिकाबिले वक्त्रतो रहसि निर्गमयेच्च तत् । नेतीति कर्मोदितमेतदार्यैर्जत्रूर्ध्वजाताखिलरोगहारि । कपालसंशोधनकारि कार्यं दिवाकरं दिव्यदृशश्च धत्ते" हठस॰ ।

त्राटकम् "निरीक्षेत् निश्चलदृशा सूक्ष्मलक्ष्यं समाहितः । अश्रुसम्पातपर्यन्तमाचार्यैस्त्राटकं स्मृतम् । मोचनं नेत्ररोगाणां तन्द्रादीनां कपाटकम् । यत्नतस्त्राटकं गोप्यं यथा हाटकपेटकम्" हठप्र॰ । अस्य फलान्तरं हठस॰ उक्तं

योगिनीचक्रसामान्यः सृष्टिसंहारकारकः । न क्षुधा न तृषा निद्रा नैवालस्यं प्रजायते । भवेत् स्वच्छन्ददेहस्तु सर्वोपद्रववर्जितः । अनेन विधिना यस्तु योगीन्द्रो भूमिमण्डले । स भवेत् सर्वसिद्धीनां भाजनं नात्र संशयः । नासिकामूलरन्ध्रेण यः प्राणं सततं पिबेत् । स भवेत् सर्वसिद्धीनां भाजनं नात्र संशयः । रसनातालुमूलेन यः प्राणं सततं पिबेत् । अब्दार्द्धेन भवेत्तस्य सर्वरोगपरिक्षयः" हठप्र० ।

शीतलीकुम्भकः "जिह्वया वायुमाकृष्य पूर्ववत् कुम्भसाधनम् । शनैस्तु घ्राणरन्ध्राभ्यां रेचयेदनिलं सुधीः । गुल्मप्लीहोदरं चापि ज्वरपित्तं क्षुधां तृषाम् । एतांश्च शीतली नाम कुम्भकोऽयं निहन्ति च" हठप्र० ।

भस्त्रिका "ऊर्वोरुपरि संस्थाप्य उभे पादतले तथा । पद्मासनं भवेत् सम्यक् सर्वपापप्रणाशनम् । सम्यक् पद्मासनं बद्ध्वा समग्रीवोदरः सुधीः । मुखं संयम्य यत्नेन प्राणं घ्राणेन रेचयेत् । यथा लगति हृत्कण्ठे कपालावधि पूरयेत् । वेगेन पूरयेत् सम्यक् हृत्पद्मावधि मारुतम् । पुनर्विरेचयेत् तद्वत् पूरयित्वा पुनः पुनः । यथैव लौहकारेण भस्त्रा वेगेन चाल्यते । तथैव स्वशरीरस्थं चालयेत् पवनं बलात् । यदा श्रमो भवेद्देहे तदा सूर्य्येण तेजयेत् । अथोदरे भवेत् पूर्णं पवनेन यथा लघु । धारयेन्नासिकामध्ये तर्जनीभ्यां तथा दृढम् । कुम्भकं पूर्ववत् कृत्वा रेचयेदिडयाऽनिलम् । वातपित्तश्लेष्महरं शरीराग्निविवर्द्धनम् । कुण्डलीबोधनं क्षिप्रं रोगघ्नं सुखदं शुभम् । ब्रह्मनाडीमुखे संस्थकपाटार्गलनाशनम् । सम्यग्भस्त्रा समुद्भूता ग्रन्थित्रयविभेदिका । विशेषेणैव कर्त्तव्यं भस्त्राख्यं कुम्भकं त्विदम्" हठप्र० ।

भ्रामरीकुम्भकम् "वेगोद्घोषं पूरकं भृङ्गनादं भृङ्गीनादं रेचकं मन्दमन्दम् । योगीन्द्राणां नित्यमभ्यासयोगाच्चित्ते जाता काचिदानन्दलीला" हठप्र० ।

मूर्च्छाकुम्भकः "पूरकान्ते बद्धतरं बद्ध्वा जालन्धरं शनैः । रेचयेन्मूर्च्छनाख्योऽयं मनोमूर्च्छासुखप्रदा । अन्तःप्रवर्त्तिताधारमारुतापूरितोदरः । [illegible]गाधे स विप्लवेत् पद्मपत्रवत्" हठप्र० ।

सहितकुम्भकः "प्राणायामस्त्रिधा प्रोक्तो रेचपूरककुम्भकैः । सहितः केवलश्चेति कुम्भको द्विविधो मतः । रेचकं पूरकं कुर्य्यात् स वै सहितकुम्भकः । यावत् केवलसिद्धिः स्यात् तावत् सहितमभ्यसेत्" हठप्र० ।

केवलकुम्भकः "रेचकं पूरकं त्यक्त्वा सुखाद्वायुनिरोधनम् । प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः । केवले कुम्भके सिद्धे रेचपूरकवर्जिते । न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते । शक्तः केवलकुम्भेन यथेष्टं वायुधारणम् । राजयोगपदञ्चैव लभते नात्र संशयः । आहारं क्षीयते योगे कृष्णपक्षे यथा शशी । शुक्लपक्षे यथा चन्द्रस्तथा श्वासोऽमृतोपमः । हठं विना राजयोगो राजयोगं विना हठः । न सिध्यति ततो युग्मनिष्पत्त्यै च समभ्यसेत् । कुम्भकप्राणरोधान्ते कुर्य्याच्चित्तं निराश्रयम् । एवमभ्यासयोगेन राजयोगपदं व्रजेत् । कुम्भकात् कुण्डलीबोधः कुण्डलीबोधतो भवेत् । अनर्गला सुषुम्णा च हठसिद्धिश्च जायते । वपुःकृशत्वं वदने प्रसन्नता नादस्फुटत्वं नयने सुनिर्मले । आरोग्यता विन्दुजयोऽग्निदीपनं नाडीविशुद्धिर्हठयोगलक्षणम्" हठप्र० ।

उपदेश "सशैलवनधात्रीणां यथाधारोऽहिनायकः । सर्वेषां योगतन्त्राणां तथाधारो हि कुण्डली । सुप्ता गुरुप्रसादेन बोधिता सुखदा भवेत् । तथा सर्वाणि पद्मानि भिद्यन्ते ग्रन्थयस्तथा । प्राणस्य शून्यपदवी तथा राजपथायते । तथा चित्तं निरालम्बं तथा कालस्य वञ्चनम् । सुषुम्णा शून्यपदवी ब्रह्मरन्ध्रं महापथम् । श्मशानी शाम्भवी मध्यमार्गश्चेत्येकवाचकाः । तस्मात् सर्वप्रयत्नेन प्रबोधयितुमीश्वरीम् । ब्रह्मद्वारमुखे सुप्तां मुद्राभ्यासेन बोधयेत्" हठप्र० ।

दशमुद्रोद्देशः "महामुद्रा१ महाबन्धो२ महावेधश्च३ खेचरी४ । उड्डियानं५ मूलबन्धो६ बन्धो जालन्धराभिधः७ । करणी विपरीताख्या८ वज्रोली९ शक्तिचालनम्१० । इदं हि मुद्रादशकं जरामरणनाशनम् । आदिनाथोदितं दिव्यमष्टैश्वर्य्यप्रदायकम् । वल्लभं सर्वसिद्धानां दुर्लभं मरुतामपि । गोपनीयं प्रयत्नेन यथा रत्नकरण्डकम् । कस्यचिन्नैव वक्तव्यं कुलस्त्रीसुरतं यथा । वज्रोली त्वमरोली च सहजोली त्रिधा मता । एतेषां लक्षणं पश्चात् कर्त्तव्यञ्च विशेषतः" ।

महामुद्रा १ "पादमूलेन वामेन योनिं संपीड्य दक्षिणम् । पादं प्रसारितं कृत्वा कराभ्यां धारयेद्दृढम् । कण्ठे बन्धं समारोप्य धारयेद्वायुमूर्द्ध्वनि । यथा दण्डहतः सर्पो दण्डाकारः प्रजायते । ऋज्वी भूत्वा तथा शक्तिः कुण्डली सहसा भवेत् । तदासौ मरणावस्था जायते द्विपुटा-

श्रिता। ततः शनैः शनैरेव रेचयेन्न च वेगतः। इदं खलु महामुद्रा महासिद्धैः प्रदश्यते। महाक्लेशादयो दोषाः क्षीयन्ते मरणादयः। महामुद्राञ्च तेनैव वदन्ति विबुधोत्तमाः। चन्द्राङ्गे च समभ्यस्य सूर्य्याङ्गे पुनरभ्यसेत्। यावत्तुल्या भवेत् संख्या ततो मुद्रां विसर्जयेत्। न हि पथ्यमपथ्यं वा रसाः सर्वेऽपि नीरसाः। अपि भुक्तं विषं घोरं पीयूषमिव जीर्य्यति। क्षयकुष्ठगुदावर्त्तगुल्माजीर्णपुरोगमाः। दोषाः सर्वे क्षयं यान्ति महामुद्रां च योऽभ्यसेत्। कथितेयं महामुद्रा महासिद्धिकरी नृणाम्। गोपनीया प्रयत्नेन न देया यस्य कस्यचित्" हठप्र०।

महाबन्धः २ "पार्ष्णिं वामस्य पादस्य योनिस्थाने नियोजयेत्। वामोरूपरि संस्थाप्य दक्षिणं चरणं तथा। पूरयित्वा ततो वायुं हृदये चिबुकं दृढम्। निष्पीड्य योनिमाकुञ्च्य मनोमध्ये नियोजयेत्। धारयित्वा यथाशक्ति रेचयेदनिलं शनैः। सव्याङ्गे पूर्वमभ्यस्य दक्षाङ्गे पुनरभ्यसेत्। मतान्त्वपि तु केषाञ्चित् कण्ठबन्धं विवर्जयेत्। राजदन्तस्थजिह्वाया बन्धः शस्तो भवेदिति। अयं खलु महाबन्धो महासिद्धिप्रदायकः। कालपाशमहाबन्धविमोचनविचक्षणः। अयं च सर्वनाडीनामूर्द्ध्वं गतिनिरोधकः। त्रिवेणीसङ्गमं धत्ते केदारं प्रापयेन्मनः। रूपलावण्यसम्पन्ना यथा स्त्री पुरुषं विना। महामुद्रामहाबन्धौ निःफलौ वेधवर्जितौ" हठप्र०।

महावेधः ३ "महावेधे स्थितो योगी कृत्वा पूरकमेकधीः। वायूनां गतिमावृत्य निभृतं कण्ठमुद्रया। समहस्तयुगो भूमौ स्फिचौ सन्ताडयेच्छनैः। पुटद्वयं समाक्रम्य वायुः स्फुरति मध्यगः। सोमसूर्य्याग्निसम्बन्धात् जायते च मृतिक्षयः। मृतावस्था समुत्पन्ना ततो मृत्युभयं कुतः। महावेधोऽयमभ्यासान्महासिद्धिप्रदायकः। वलीपलितवेपघ्नः सेव्यते साधकोत्तमैः। एतत् त्रयं महागुह्यं जरामृत्युविनाशनम्। वह्निवृद्धिकरञ्चैवमणिमादिगुणप्रदम्। अष्टधा क्रियते चैव यामे यामे दिने दिने। पुण्यसम्भारसन्धायि पापौघभिदुरं सदा। सम्यक् शिक्षावतामेव स्वल्पं प्रथमसाधनम्। वह्निस्त्रीपथसेवानामादौ वर्जनमाचरेत्" हठप्र०।

खेचरी ४ "छेदनचालनदोहैः कलां क्रमेण वर्द्धयेत्तावत्। यावद्भ्रूमध्यं स्पृशति तदा खेचरीसिद्धिः। स्नुहीपत्रनिभं शस्त्रं सुतीक्ष्णं स्निग्धनिर्मलम्। समादाय ततस्तेन रोममात्रं समुच्छिन्देत्। ततः सैन्धवपथ्यादिचूर्णं ताभ्यां प्रघर्षयेत्। पुनः सप्तदिने प्राप्ते रोममात्रं समुच्छिन्देत्। एवं क्रमेण षण्मासं नित्ययुक्तः समाचरेत्। षण्मासाद्रसनामूलनाड़ीबन्धो विनश्यति। अथ वागीश्वरीधाम शिरोवस्त्रेण वेष्टयेत्। शनैरुत्कर्षयेद्योगी कालवेलाविधानवित्। वितस्तिप्रमितं दैर्घ्यं विस्तारे चतुरङ्गुलम्। मृदुलं धवलं प्रोक्तं वेष्टनाम्बरलक्षणम्। पुनः षण्मासमात्रेण पुनः सङ्घर्षणात् प्रिये॥ भ्रूमध्यावधि वर्द्धेत तिर्य्यक् कर्णबिलावधि। अधस्तात् चिबुकं मूलं प्रयाति क्रमचारिता। केशान्तमूर्द्ध्वं क्रमति तिर्य्यक् शङ्खावधि प्रिये॥ पुनः संवत्सराद्देवि। द्वितीया चैव शोभया। ब्रह्मरन्ध्रान्तमावृत्य तिष्ठत्यमरवन्दित॥ स्वतामुमञ्चं सङ्कुचत्र सप्तवासरमात्रकम्। स्वगुरूक्तप्रकारेण मलं सर्वं विशोधयेत्। अङ्गुल्यग्रेण सङ्कुचत्र जिह्वा तत्र निवेशयेत्। शनैः शनैर्मस्तकाच्च महावज्रकपाटभित्। पूर्व्ववीर्य्ययुतां विद्यां व्याख्यातामतिदुर्लभाम्। अस्याः षडङ्गं प्रकुर्वीत तया षट्चक्रभिन्नया। ये निरता सकलक्रियाक्रमा चित्तचरति शाश्वतान्तरे। सा शिवत्वसमतायकारिणी खेचरी च भवखेदहारिणी। क्रमेणैव प्रकर्त्तव्याऽभ्यासेन वरवर्णिनि॥ युगपद्यतते तस्य शरीरं विलयं व्रजेत्। तस्मात् शनैः शनैः कार्य्योऽभ्यासेन युगपत् प्रिये॥ एवं वर्षत्रयं कृत्वा ब्रह्मद्वारं विशेद्ध्रुवम्। षट्चक्राणि विभिद्य शक्तिभुजगीं कोत्थाप्य मूलस्थितां भित्त्वा ग्रन्थिपुटं च पश्चिमशिरापाकारकूपं मत्कृत्। नीत्वा प्राणमतः शिराविकमलं निर्मथ्य चित्ते स्थितं तत् बिन्दुं यः पिबतीन्दुमण्डलगलत् शुक्लं स साक्षात् शिवः"। "तीक्ष्णकं हरते व्याधिं कटुकं कुष्ठनाशनम्। लवणाद्रुपमं चैवामरत्वं लभते ध्रुवम्। मधुस्वादूपमं चैव शालिशुक्रादिकं बहु। कङ्कुस्त्तगण्डकपानानि पक्वान्नानि ह्यनेकशः। दिव्यकल्पं क्रोड़े शिव सुदृढो जायते ध्रुवम्। तन्मयत्वमवाप्नोति कोषकारीव कीटकः। कपालकुहरे जिह्वा प्रविष्टा विपरीतगा। भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी। काकचञ्चुविधानेन शीतलं सलिलं पिबेत्। प्राणापानप्रयोगेण योगी भवति निर्जरः। कलां पराङ्मुखीं कृत्वा त्रिपथे परिवर्त्तयेत्। सा भवेत् खेचरी मुद्रा व्योमचक्रं तदुच्यते। रसनामूर्द्ध्वगां कृत्वा क्षणार्द्धं यदि तिष्ठति। विषैर्विमुच्यते योगी व्याधिमृत्युजरादिभिः। न रोगो

सन् स्थिरपदं भवेत्। यन्त्रितः शरनालेन फूत्कारं वज्रकन्दरे। शनैः शनैः प्रकुर्वीत सुखसञ्चारकारणात्' मस्त्रावसाशय.। "भोडशाङ्गुलमानां तु प्रकुर्यात् वंशनालिकाम्। कण्ठाग्रमूला तां लिङ्गमुखे दत्त्वाश्च तन्मुखम्। दत्त्वा फूत्कारमन्तोऽन्ताः कुर्यात् यावदुष्ठसङ्क्षः। प्रत्यह तेन विहत लिङ्गद्वारं क्रमाद्भवेत्। ततो नाल्याऽनया तोयमलं फूत्कारतोऽन्तरे। लिङ्गरन्ध्रेण टङ्कीयात् क्रमशस्त्रा सुसाधकः। लिङ्गच्छिद्रेऽथ विहते चौरागर्' ततो भवेत्" रज्वकन्दरे लिङ्गद्वारे। "अपानमाकृष्य ततो वलेनोर्ध्वं दुग्धमार्गादिविधिक्रमेण। समभ्यसेद्विवल्लमस्यमल्पं भगे पतद्विन्दुमधोर्ध्वमाहरेत्" हठस०।

वज्रोट वज्रोली "अथ हि कुशमितायां पुष्पमूर्द्धं सभूभिं क्रमश उपरि कुर्यात् कुञ्चितात् लिङ्गनालात्। मिल उपगतविन्दुं सन्निबध्यानुकुर्यात् सुरतरसनिमग्नो लिङ्गसन्धासमानि। विन्दुः पाण्डुर एव चन्द्र उदितः सूर्यो भवेदार्त्तवं सिन्दूरप्रतिमं रवेः पदगत शुक्र शशिस्थानके। ऐक्यं साध्वनयोः स्ववर्णापि नणा नो जायतेऽतो सति रन्योन्यं स्वप्रपूरते निजमहिम्नैक्यं द्वयोर्विपद्ये। अभ्यासपाटवतया विदधाति योषिदेवं तदूर्ध्वपरिकर्षणतः स्वबिन्दुम्। यद्यार्त्तवं स्वमभिरक्षति योगिनी सा वज्रोलिकेत्यखिलसिद्धिपदं प्रयाति। सङ्कीरजो विन्दुरयं महेशो द्वयो' सुयोगात् परिपश्यतेऽखिलम्। वीर्य्यं निजम् श्चार्त्तवमेतयोस्तनावैक्य हि वज्रोल्युदिता सुसिद्धिदा। सहजोली त्वमरोली वज्रोल्या भेदतो भवतः। विन्दुं देहे विदध्याद् येन च केन प्रकारेण। वज्रोली मियनोसर नरवपूल्या स्वाङ्गसव्येपनात् सद्गधाकगणोस्याम्बुहतवा भूत्वा सवं संस्थिति। सैषोक्ता सहजोलिका सुरचुतैराद्यादिनाथै शुभा वज्रोलीति सता वनोति नियतं भोगेऽतिमुक्तेऽस्मतम्। आकृष्योर्ध्वं मूलकल्पात्मक तद्वारधारं संकृष्यन्मूलनालात्। आकृष्योर्ध्वं वायुना यो हठेन निजं धत्ते विन्दुसिद्धिं स याति। इति सद्‌मासाभ्यासनाद् गुरूणोक्तपथ्येन सन्ततं योगी। शान्तिं गतः संयोगेन तस्य विन्दुः क्षय व्रजति" हठस०।

शक्तिचालनम्१० "कुटिलाङ्गी कुण्डलिनी भुजङ्गी शक्तिरीश्वरी। कुटिलारुन्धती देवीशब्दाः पर्य्यायवाचकाः। कन्दोर्द्ध्वे कुण्डली शक्तिरष्टधा कुण्डलाकृतिः। ब्रह्मद्वारमुखं नित्यं मुखेनाच्छाद्य तिष्ठति। येन मार्गेण गन्तव्यं ब्रह्मस्थानं निरामयम्। मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी। उद्घाटयेत् कपाटं तु यथा कुञ्चिकया हठात् कुण्डलिन्या तथा योगी मोक्षद्वारं विभेदयेत्। कन्दोर्द्ध्वे कुण्डलीशक्तिः सुप्ता मोक्षाय योगिनाम्। बन्धनाय च मूढानां यस्तां वेत्ति स योगवित्। सर्वाधिद्वीपशैलानामाधारः शेषकुण्डली। सर्वेषयोगतन्त्राणामाधारः कुण्डली तथा। कुण्डली कुटिलाकारा सर्पवत् परिकीर्त्तिता। सा शक्तिश्चालिता येन स मुक्तो नात्र संशयः। गङ्गायमुनयोर्मध्ये बालरण्डा तपस्विनी। बलात्कारेण गृह्णीयात् तद्विष्णोः परमं पदम्। इडा भगवती गङ्गा पिङ्गला यमुना नदी। इडापिङ्गलयोर्मध्ये बालरण्डा सरस्वती। पुच्छे प्रगृह्य भुजगीं सुप्तामुद्बोधयेच्च ताम्। निद्रां विहाय सा शक्तिर्मूर्द्ध्वमुत्तिष्ठते हठात्। परिस्थिता चैव फणावती सा प्रातश्च सायं प्रहरार्द्धमात्रम्। प्रपूर्य्य सौर्य्यात् परिधानयुक्त्या प्रगृह्य नित्यं परिचालिता सा। वितस्तिप्रमितं दीर्घं विस्तारं चतुरङ्गुलम्। मृदुलं धवलं प्रोक्तं वेष्टनाम्बरलक्षणम्। वज्रासनस्थितो योगी चालयित्वा तु कुण्डलीम्" हठप्र०।

तदङ्गसूर्य्यभेदनम् सूर्य्यादनन्तरं भस्त्रा कुण्डलीमाशु बोधयेत। भानोराकुञ्चनं कुर्य्यात् कुण्डलीं चालयेत्ततः। मृत्युवक्त्रगतस्यापि तस्य मृत्युभयं कुतः। नासादक्षिणमार्गवाहिपवनात् प्राणोऽतिदीर्घीकृतः चन्द्राम्भः परिपूरितास्ततस्तुः प्राग्घण्टिकामस्तका। भिन्दन् कालविशालवह्निवशगान् भूरन्ध्रनाडीगणान् तत्कार्य्यं कुरुते पुनर्नवतरं जीर्णद्रुमस्कन्धवत्। कुण्डलीं चालयित्वा तु कुर्य्याद्भस्त्रां विशेषतः। एवमभ्यासतो नित्यं यमिनः शङ्कते यमः। सदाश्चयेत् सूर्यभेदमभ्यासीं चापि शीतलीम्। एवमभ्यासयुक्तस्य यमस्य यमिनः कुतः। मुहूर्त्तद्वयपर्य्यन्तं निर्भरं चालनादसौ। ऊर्द्ध्वमाकृष्यते किञ्चित् सुषुम्नागतकुण्डली। मुहूर्त्तद्वयपर्य्यन्तं निर्भरं चालनादसौ। असम्पर्य्यत एव नित्यं विहितमिताशने।" हठप्र०।

समाधिक्रमः "अथेदानीं प्रवक्ष्यामि समाधिक्रममुत्तमम्। मृत्युघ्नं च सुखोपायं ब्रह्मानन्दकरं परम्। सलिले सैन्धवं यद्वत् साम्यं भजति योगतः। तथात्ममनसोरैक्यं समाधिः सोऽभिधीयते। राजयोगस्य माहात्म्यं कोवा जानाति तत्त्वतः। ज्ञानान्मुक्तिःस्थितिः सिद्धिः गुरुवाक्येन लभ्यते। दुर्लभो विषयत्यागो

३रोगे ४अस्त्रभेदे ५स्मृतौ च स्त्री जटाधरकोषः ।

**हनुग्रह** पु० हनुजात रोगभेदे तन्निदानादि “जिह्वा निर्लेखनाच्छुष्कभक्षणादभिघाततः । कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनुम् । करोति विवृतास्यत्वमथ वा संवृतास्यताम् । हनुग्रह स तेन स्यात् कृच्छ्र चर्वणभाषणम्” । स्रंसयित्वा अध कृत्वा विवृतास्यत्वं व्यात-मुखत्वम् । निर्लेखनं कर्षणम् शुष्क चणकादि संवृतास्यत्वं दन्तलग्नताम्” भावप्र० हनुस्तम्भोऽप्यत्र ।

**हनु(नू)मत्** पु० हनु(नू)+अस्त्यर्थे मतुप् । रामस्य अनुचर अञ्जनागर्भजाते पवनतनये वानरभेदे त्रिका० ।

**हनूष** पुंस्त्री० हन-ऊषन् । राक्षसे त्रिका० स्त्रियां ङीष् ।

**हन्त** अव्य० हन-त । १हर्षे २अनुकम्पायां ३विषादे अमर । ४वाक्यारम्भे ५आर्त्तौ ६पादे ७सम्भ्रमे शब्दच०। ८खेदे मेदि० ६अन्तकल्पने च अजयपाल. ।

**हन्तकार** पु० हन्तेत्यस्य कार करणं उच्चारणम् वा कृ-घञ् । १अतिथये अन्नदाने २हन्तशब्दप्रयोगे च ।

**हन्तु** पु० हन-तुन् । १मृत्यौ २दर्पे च ।

**हन्तृ** त्रि० हन-तृच् । १हननकर्त्तरि २सततहननानुशील यितरि च स्त्रियां ङीप् । “महिषासुरहन्त्र्याच प्रतिवा दक्षिणायने” देवप्र०त० ।

**हन्न** त्रि० हद-क्त । कृतपुरीषोत्सर्गे अमर ।

**हपुषा** स्त्री हेति पुष्यति पुष-क । मरीचतुल्यस्वदीर्घकृष्णवर्ण-वस्तुनि स्वनामख्यातद्रव्यविशेषे । पृषो० सस्य सः तत्रार्थे । “हपुषा हपुषा विस्रा पराऽन्यत्स्वल्पफला स्मृता । मत्स्यगन्धा प्लीहहन्त्री विषघ्नी ध्वाङ्क्षनाशिनी । हपुषा दीपनी तिक्ता कटूष्णा तुवरा गुरुः । पित्तोदरसमीरार्शो ग्रहणीगुल्मशूलहृत् । पराप्येतद्गुणा प्रोक्ता रूपभेदो द्वयोरपि” भावप्र० ।

**हम्** अव्य० हा-डम् । १रुषोक्तौ २अनुनये च मेदि० ।

**हम्भा(म्बा)** स्त्री हम्+भा-हम्ब-अच् वा । गवां ध्वनौ त्रिका० पृषो० । हम्बाप्यत्र हेमच० ।

**हम्म** गतौ भ्वा० प० सक० सेट् । हम्मति । अहम्मीत् ।

**हय** गतौ सक० क्लान्तौ अक० भ्वा० प० सेट् । हयति अहयीत् ।

**हय** पुंस्त्री० हय-हि-वा अच् । १घोटके अमर० स्त्रियां योपधत्वेऽपि हयगवयेत्यादिना ङीष् । अश्वशब्दे दृश्यम् । तत्र वर्ण्यपदार्थाः कविक० उक्ता यथा “वो नत्य वेगस्तेजश्च तथा सल्लक्षणस्थितिः । खुरोत्खातरजो रूप कान्तिर्गतिश्चित्रता” । तस्य शकुनाद्युक्तं वसन्त-राजशाकुने यथा “हेषारवं कुर्वति वामतोयं चेत्सा च तिर्दक्षिणपादघाते । कण्डूयते दक्षिणमङ्गभाग तुरङ्ग स पदं ददाति” ।

**हयकातरा** स्त्री हय कातरो यस्याः ५त० । अश्वकातरा-ख्यक्षुपे “कातरा हयपर्य्याये कातरान्ते प्रकीर्त्तिता । अश्वकातरिका तिक्ता वातघ्नी दीपनी परा” राजनि० ।

**हयगन्ध** पु० हयस्येव गन्धोऽस्य । १काचलवणे २अश्वगन्धायाम् ३अजमोदायाञ्च स्त्री राजनि० ।

**हयग्रीव** पु० हयस्येव ग्रीवा यस्याऽस्य । १विष्णोरवतारभेदे २दैत्यभेदे च “हयग्रीवेण युयुधे तत्र देवो जगत्पतिः । हयग्रीवं तत्र हत्वा मणिकूटं तथागमत्” कालिपु० ८२अ० । ३दुर्गायां स्त्री तन्मूर्त्तिलक्षणं अश्वग्रीवशब्दे ५१४१० दृश्यम् । ४राजर्षिभेदे “यद्वृत्तं पूर्वराजर्षेर्हयग्रीवस्य पाण्डव !” भा० शा० २४अ० ।

**हयग्रीवहन्** पु० हयग्रीवाख्यं दैत्यं हतवान् हन-क्विप् विष्णौ हेमच० ।

**हयङ्कष** पु० हयमश्वं कषति कष-खच् । १मातलौ इन्द्रसारथौ त्रिका० । २अश्वचालके च ।

**हयन** न० हि-गतौ करणे ल्युट् । कर्णीरथे अमरः ।

**हयपुच्छी** स्त्री हयस्य पुच्छाकारोऽस्त्यस्याः अच् गौरा० ङीष् । माषपर्ण्याम् अमर ।

**हयप्रिय** पु० ६त० । १यवे हेमच० । २अश्वगन्धायां ३खर्ज्जूर्य्यां च स्त्री राजनि० ४अश्वश्लाघे त्रि० । हयेष्टादयोऽप्यत्र

**हयमार** पु० हय मारयति निवेषणात् मृ-णिच्-अण् । करवीरे राजनि० । एवं ल्यु । तत्रैव अमर । [शब्दच०]

**हयमारण** पु० हय मारयति मृ-णिच्-ल्यु । अश्वत्थवृक्षे

**हयवाहन** पु० हयो वाहनमस्य सूर्य्यपुत्रे रेवन्ते हेमच० । १अश्ववाहनयुक्ते त्रि० । ६त० । २अश्वस्य चालने न० ।

**हयवाहनसङ्कर** पु० हयस्य वाहन चालन सङ्करोति सम्+कृ-अच् । रक्तकाञ्चने शब्दच० ।

**हयशाला** स्त्री ६त० । अश्वशालायां तत्करणप्रकारादि मत्स्यपु० १६१अ० उक्त यथा “गवां स्थानं तथैवात्र तुरगाणां तथैव च । उत्तराभिमुखी श्रेणी तुरगाणां विधीयते । दक्षिणाभिमुखी वाथ परिशिष्टास्तु गर्हिता । तुरगास्तु तथा धार्य्या प्रदीपैः सार्वरात्रिकैः । कुक्कुटान् वानरांश्चैव मर्कटांश्च नराधिप ! । धारयेदश्वशालायां सवत्सां धेनुमेव च अजाश्च धार्य्या यत्नत

तुरगाणां स्थितिर्यया । गोमन्तार्द्रादिगोलाङ्ग तत्पुरी यत्र निर्गमम् । चरन्तं यान्ति न प्रान्तैः देवदेवैः दिवाकरे । कुमारिकाखण्डमालागल्डे ५२४ पृ० श्लोके च दृश्यम् ।

**हयशीर्ष** पु० हयस्येव शीर्षमस्य । १विष्णुमूर्त्तिभेदे हयशीर्षे पञ्चरात्रे तत्पूजादिकं दृश्यम् । २शालग्रामसूर्त्तिभेदे शालग्रामशब्दे ६०५३ पृ० दृश्यम् ।

**हया** स्त्री हयः हयगन्धोऽस्त्यस्याः अच् । अश्वगन्धायाम् राजनि० । घोटक्यां तु हयीत्येव ।

**हयाध्यक्ष** पु० हयेषु तद्रक्षणेषु अध्यक्षः । अश्वरक्षणाधिकृते

**हयानन्द** पु० हयमानन्दयति आ+नन्द-णिच्-अण् । मुद्गे राजनि० ।

**हयारि** पु० ६त० । करवीरे रत्नमा० ।

**हयाशना** स्त्री हयैरश्यते अश-ल्युट् । शल्लकीवृक्षे शब्दच०

**हयोत्तम** पु० हयेषु उत्तमः । अश्वश्रेष्ठे आजानेयेऽश्वे त्रिका०

**हर** पु० हृ-अच् । १रुद्रे अमर० २अग्नौ ३गर्दभे ४विभाजके च "अन्योन्यहाराभिहतौ हरांशाविति" लीला० । हृ-भावे अप् । ५हरणे ६विभाजने च ।

**हरगौरी** स्त्री हरदेहार्द्धहरा गौरी शा०त० । अर्द्धनारीश्वररूपे शिवपार्वत्योर्मूर्त्तिभेदे तल्लक्षणम् । ३७०१ पृ० दृश्यम् । द्वन्द्व० । २शिवपार्वत्योः द्वि० व० ।

**हरचूडामणि** पु० हरस्य चूडामणिरिव । चन्द्रे ।

**हरण** न० हृ-भावे ल्युट् । १स्थानान्तरकरणे २विभाजने च कर्मणि ल्युट् । ३यौतुकादौ देये धने भा० आ० हरणाहरणपर्व २२१अ० । ४भुजे मेदि० ।

**हरतेजस्** न० ६त० । १पारदे राजनि० २शिववीर्ये च । हरवीजादयोऽप्यत्र । [शब्दमाला हेमच० ।

**हरशेखरा** स्त्री हरस्य शेखरभागस्थत्वेनास्त्यस्याः अच् ।

**हरि** पु० हृ-इन् । १विष्णौ २सिंहे ३सर्पे ४वानरे ५भेके ६शुकखगे अमरः । ७चन्द्रे ८सूर्ये ९वायौ १०अश्वे ११यमे १२हरे १३ब्रह्मणि १४किरणे जम्बुद्वीपस्थ १५वर्षभेदे १६इन्द्रे च मेदि० १७मयूरे १८कोकिले १९हंसे २०वह्नौ शब्दर० । भर्त्तृहरिनामके वाक्यप्रदीपग्रन्थकारके २१पण्डिते त्रिका० । २२पिङ्गलवर्णे २३हरिद्वर्णे हेमच० २४तद्वति त्रि० । "हरिं विदित्वा हरिभिश्च वाजिभिः" रघु । २५पीते अनेकार्थको० ।

**हरिक** पु० हरि+संज्ञायां कन् । पीतहरिद्वर्णाश्वे हेमच०

**हरिकेलीय** पु० हरिकेलिमर्हति छ । वङ्गदेशे हेमच० ।

**हरिकेश** पु० हरि: पिङ्गलः केशोऽस्य । १शिवे २शिवभक्तयक्षभेदे च । स एव तत्प्रसादात् काश्यां दण्डपाणित्व म प्राप्तोत् इति काशीखण्डे ३२अ० स्थितम् । मत्स्यपु० १८८अ० दृश्यम् । [याम् अपरा जतायां राजनि० ।

**हरिक्रान्ता** स्त्री हरिस्तद्वर्णः क्रान्तो येन । विष्णुक्रान्ता

**हरिगृह** न०६त० हरेर्विष्णुमूर्त्तेर्गृहम् । १हरिमूर्त्तिगृहे २एकचक्रपुरीभेदे च त्रिका० ।

**हरिचन्दन** न० हरेरिन्द्रस्य प्रियं चन्दनम् चन्दयति चन्द-ल्यु ६त० वा । १देवतरुभेदे अमर० । हरेर्विष्णोः प्रियं चन्दनम् । २श्वेतचन्दने ३गोशीर्षनामके मलयैकदेशजाते चन्दनभेदे ४ज्योत्स्नायां ५कुङ्कुमे मेदि० । ६पद्मकेसरे हेमा० । ७चन्द्रांशौ च न०शब्दर० । "हरिचन्दनन्तु दिव्यं हिम तदिह द्राक् सतुजः । पित्ताटोपश्लेष्मविषमज्वरशोषमान्द्यमेव हन्त्" राजनि० । "एत च तुलसीकाष्ठ कर्पूरागुरुयोगतः । अथ वा केशरैर्युक्तं हरिचन्दनमुच्यते" पद्मपु० पा०ख० १०अ० उक्ते द्रव्यसंयुक्तद्रव्यगणे च ।

**हरिण** पुस्त्री० हृ-इनन् । स्वनामख्याते १पशौ अमर० स्त्रियां ङीष् । २शिवे ३विष्णौ ४हंसे ५शुक्लवर्णे ६पाण्डुवर्णे च । ७तद्वति त्रि०अमर । "हरिणः शीतलो बद्धविण्मूत्रो दीपनो लघुः । रसे पाके च मधुरः सुगन्धः सन्निपातहा" राजव० तन्मांसगुणाः । "हरिणश्चापि विज्ञेयः पञ्चभेदोऽत्र भैरव । । ऋष्यः खड्गो रुरुश्चैव पृषतश्च मृगस्तथा । एते बलिप्रदानेषु चर्मदाने च कीर्त्तिताः" कालिकापु० ६६अ० । [शब्दर० ।

**हरिणनर्त्तक** पु० हरिण इव नृत्यति नृत-ण्वुल् । किन्नरे

**हरिणहृदय** पु० हरिणस्येव भीत हृदयमस्य । भीरौ शब्दर०

**हरिणाक्षी** स्त्री हरिणस्येवाक्षि यस्याः ५त० ६त० वा षच समा० ङीष् । १हट्टविलासिनीनामगन्धद्रव्ये शब्दच० । २हरिणतुल्यनेत्रयुते स्त्रि०स्त्रियां ङीष् । "हरिणाक्षि । कटाक्षेण आत्मानमवलोकय" इत्युद्भटः ।

**हरिणाङ्क** पु० हरिणः शशनामको मृगोऽङ्कश्चिह्नम् अङ्के क्रोडे वा यस्य । १चन्द्रे शब्दर० २कर्पूरे च ।

**हरिणी** स्त्री हरितवर्णा स्त्री ङीप् तस्य न. । १हरितद्वर्णायां स्त्रियां मेदि० २स्वर्णप्रतिमायाम् अमर । ३स्वर्णयुथ्यां ४मञ्जिष्ठायां राजनि० । ५तद्गतायां ६वरस्त्रियां शब्दर० "वृत्तयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" इ० र० उक्तलक्षणके ७सप्तदशाक्षरपादके छन्दोभेदे हरिणस्य स्त्री ङीप् । ८स्त्रीसाम् ९स्वर्णमयीभेदे ।

“चरतः किल दुश्चरं तपस्तृणबिन्दोः परिशङ्कितः पुरा। प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम्” रघुः।

**हरित्** पु० हृ–इति। १नीलपीतमिश्रितवर्णे (सबुजरङ्ग) पलाशवर्णे च अमरः २तद्वति त्रि०। ३सूर्य्याश्वे त्रिका० ४मुद्गे हेमच०। ५सिंहे ६सूर्य्ये ७विष्णौ च पु० ८दिशि स्त्री अमरः। ९हरिद्रायां राजनि० १०तृणे न० मेदि०।

**हरित्पर्ण** न० हरित् पर्णमस्य। मूलके राजनि०।

**हरित** पु० हृ–इतच्। १सिंहे २मन्थानतृणे राजनि० ३हरिद्वर्णे ४तद्वति त्रि० अमरः स्त्रियां ङीप् तस्य नश्च। ५दूर्वायां मेदि० ६जयन्त्यां ७हरिद्रायां ८कपिलद्राक्षायां ९पाच्यां १०नीलदूर्वायाञ्च स्त्री राजनि० टाप्। ११स्थौणेयके न० राजनि०। [शाके न० राजनि०

**हरितक** न० हरितेन वर्णेन कायति प्रकाशते कै–क।

**हरितपत्रिका** स्त्री हरितं पत्रं यस्याः कप् कापि अत इत्वम्। पाच्यां राजनि०।

**हरितशाक** पु० हरितं शाकमस्य। शोभाञ्जने राजनि०।

**हरिताल** न० हरिर्वर्णस्य पीतवर्णस्य तालः प्रतिष्ठा यत्र। १पीतवर्णे उपधातुभेदे “स हरितालसमानवर्णः” माघः। २पीतवर्णपक्षिभेदे पुंस्त्री० राजनि०। स्त्रियां ङीष्। स्वार्थे क। हरितालक न० अमरः। “हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञकम्। तयोराद्यं गुणैः श्रेष्ठं ततो हीनगुणं परम्। स्वर्णवर्णं गुरु स्निग्धं सपत्रं चाभ्रपत्रवत्। पत्राख्यं तालकं विद्याद् गुणाढ्यं तद्रसायनम्। निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं तथा गुरु। स्त्रीपुष्पहारकं स्वल्पगुणं तत् पिण्डतालकम्। हरति च हरितालं चारुताम् अङ्गनानाम् सृजति च बहुतापामङ्गसङ्कोचपीडाम्। वितरति कफवातौ कुष्ठरोगं विदध्यादिदमशितमशुद्धम् मारितञ्चाप्यशस्तम्”। “तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके पचेत्। दोलायन्त्रेण यामैकं ततः कूष्माण्डजद्रवैः। तिलतैले पचेद्याम यामञ्च त्रिफलाजले। एवं यन्त्रे चतुर्यामं पक्वं शुध्यति तालकम्”। अथ तालस्य मारणविधिः “पत्रतालकशुद्धं पुनर्नवारसेन तु। खल्वे विमर्दयेदेकं दिनं पश्चाद्विशोषयेत्। ततः पुनर्नवाक्षारैः स्थाल्यामर्द्धं प्रपूरयेत्। तत्र तत्तालकं कृत्वा पुनः क्षारैः प्रपूरयेत्। आकण्ठपिठरं तस्य पिधाय पात्रमन्यतः। स्थालीं चुल्ल्यां समारोप्य क्रमाद्वह्निं विवर्द्धयेत्। दिनान्यन्तरतून्यानि पञ्च वह्निं प्रदापयेत्। एवं तन्म्रियते तालं मात्रा तस्यैकरक्तिका। अनुपानान्यनेकानि यथायोग्यं प्रयोजयेत्”। एवं शोधितस्य मारितस्य तालकस्य गुणाः। “हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम्। कण्डूकुष्ठास्यरोगास्रकफपित्तकचव्रणान्”। “तालकं हरते रोगान् कुष्ठमृत्युज्वरापहम्। शोधितं कुरुते कान्तिं वीर्य्यं वृद्धिं तथायुषम्” भावप्र०।

हरितालस्याभासगुणाः “हरितालोऽल्पविट्कः स्यात् कषायो मधुरो लघुः। रक्तपित्तशमनस्त्वाम्लो वातकोपनः” राजनि०।

**हरितालिका** स्त्री हरेस्तालो हस्ततालो यस्यां कप् अत इत्वम्। १सौरभाद्रशुक्लचतुर्थ्याम् हरितवर्णेन अर्णांसि पयांसि अश्नोति अश–ण्वुल्। २दूर्वायाम् त्रिका०। अण् ङीप्। हरिताली दूर्वायाम् सा च आकाशरेखाया मेदि०। शुक्लतायाम् हरितालिकायाञ्च। “भाद्रे मासि सिते पक्षे हस्तदैवतसंयुता। हरितालो चतुर्थी स्यात् सर्वपापोमोचिदा सदा। भाद्रे मासि सिते पक्षे चतुर्थ्यां कामियोगतः। ददाति विविधं भारं इन्द्रो न संशयः। कदाचित्ताम समंसु हरौ स्वयं चतुर्दिशा। हरितालो समाख्याता सर्वपापोमोचिदा सदा” राजमार्त्तण्डः।

**हरिताश्म** न० हरितवर्णमश्म अश्मेव वा अच् समा०(पेरोजा) १मणिभेदे २तुत्थे (तुँत) उपधातुभेदे च राजनि०।

**हरिदर्भ** पु० हरित् हरिद्वर्णो दर्भः। हरिद्वर्णं कुशे अमरः।

**हरिदश्व** पु० हरिन्नामकोऽश्वो यस्य। १सूर्य्ये २अर्कवृक्षे च अमरः।

**हरिद्देव** पु० हरिदैवतोऽधिष्ठाता यस्य। श्रवणानक्षत्रे।

**हरिद्गर्भ** पु० हरिद्वर्णो गर्भो यस्य। हरिद्वर्णे कुशे राजनि०। “दर्भौ द्वौ च गुणे तुल्यौ तथापि च सितोऽधिकः। यदि श्वेतकुशाभावस्तत्र योज्योऽग्निपर्क्” राजनि०। “दर्भद्वयं त्रिदोषघ्नं मधुरं तुवरं हिमम्। मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक् प्रदरास्रजित्” भावप्र०। तन्मूलगुणाः “कुशमूलं हिमं रुच्यं मधुरं पित्तनाशनम्। रक्तज्वरतृषाश्वासकामलादोषमोचकम्” राजनि०।

**हरिद्रव** पु० हरिवर्णः पिङ्गलवर्णो द्रव इव। नागकेशररजसि त्रिका०।

**हरिद्रा** स्त्री हरिं पीतवर्णं द्रवति द्रु–गतौ ड। स्वनामख्याते ओषधिभेदे।

"हरिद्रा कटुका तिक्ता रूक्षोष्णा कफपित्तनुत्। वर्ण्या त्वग्दोषमेहास्रशोथपाण्डुव्रणापहा"। (वनहरिद्रा) "अरण्यहरिद्राकन्दः कुष्ठवातास्रनाशनः"। (कर्पूरहरिद्र) "दार्वीभेदाम्रगन्धा च सुरभिर्दारुदारु च। कर्पूरा पद्मपत्रा स्यात् सुरभिः सुरनायिका। आम्रगन्धिहरिद्रा या सा शीता वातला मता। पित्तहृन्मधुरा तिक्ता सर्वकण्डुविनाशिनी" भावप्र०।

**हरिद्रागणेश** पु० हरिद्रावर्णयुक्तो गणेशः। पीतवर्णे गणेशभेदे तन्त्रसार। [स्त्रियां ङीप्।

**हरिद्राङ्ग** पु स्त्री० हरिद्रेव अङ्गमस्य। हरितालखगे शब्दच०

**हरिद्राभ** पु० हरिद्रेव आभाति आ+भा-क। १पीतशाले (पियाशाल) २कर्बुरके ३पीतवर्णे च। ४तद्वति त्रि० अमरः।

**हरिद्राराग** त्रि० हरिद्राया इव रागः रञ्जनमनुरागः। अस्थिरानुरागे शोहरे। "क्षणमात्रानुरागश्च हरिद्राराग उच्यते" हला०।

**हरिद्रु** पु० हरिः हरिद्वर्णो दर्वादिहारी द्रुः। १वृक्षमात्रे हेमच०। २दारुहरिद्रायाञ्च अमर। [तीर्थभेदे

**हरिद्वार** न० हरेस्तत्प्राप्तेः द्वारं सेवनात्। स्वनामख्याते

**हरिनामन्** न० हरेर्नाम तद्व्याख्यानं वा। १विष्णुनामनि २तद्व्याख्याने च हरेरिव नामास्य। ३मुद्गे पु० त्रिका०।

**हरिनेत्र** न० हरेर्नेत्रमिव। १श्वेतपद्मे राजनि०। ६त०। २विष्णोर्लोचने। हरेः सिंहस्येव नेत्रमस्य दीर्घत्वात्। ३पेचके पुंस्त्री० त्रिका० स्त्रियां ङीष्।

**हरिन्मणि** पु० हरिद्वर्णो मणिः। मरकते मणौ अमरः।

**हरिन्मुद्ग** पु०हरिद्वर्णो मुद्गः। शरदि पक्वे मुद्गे राजनि०।

**हरिप्रिय** न० हरेर्विष्णोः प्रियम्। १कालीयके चन्दने शब्दच०। २उशीरे राजनि०। ३कदम्बे पु० शब्दच०। ४पीतभृङ्गराजे ५विष्णुकन्दे ६करवीरे ७शङ्खे ८वन्धूके पु० राजनि०। ९शिवे १०शाङ्खे च पु०। ११लक्ष्म्यां स्त्री १२तुलस्यां १३पृथिव्यां १४द्वादश्यां तिथौ च स्त्री। १५हरिवल्लभे त्रि०। [अमर।

**हरिवालुक** न० हरेर्विष्णोः प्रिया वालुकास्य। एलवालुके

**हरिभक्त** त्रि० हरौ विष्णौ भक्तः। १विष्णुभक्तियुते "सर्वजीवेषु यो विष्णुं भावयेत् समभावतः। हरौ करोति भक्तिञ्च हरिभक्तः स च स्मृतः" ब्रह्मवै० २५ अ० उक्ते २सर्वत्रसमदृष्टिपूर्वकहरिसेवके पु०। [शब्दर०।

**हरिभद्र** न० हरिं भद्रयति स्वर्णवर्णं करोति भद्र्। हरिवालुके

**हरिभुज्** पु० हरिं भेकं भुङ्क्ते भुज-क्विप्। सर्पे शब्दच०।

**हरिमन्थ** पु०मथ्यते मन्थः हरिर्मन्थ एकदेशो यस्य। १चणके राजनि० तस्य बहुमन्थनेऽपि पीतत्वानपायात्तथात्वम्। हरिं सर्पं मथ्नाति मन्थ-अण्। २गणिकारिकायाम् शब्दच०। ३देशभेदे पु० भरतः। [१चणके भरत।

**हरिमन्थक** पु० हरिः पीतो मन्थः एकखण्डो यस्य कप्।

**हरिमन्थज** पु० हरिमन्थे देशभेदे जायते जन-ड। चणके अमर। २कृष्णमुद्गे च हेमच०। [हेमच०।

**हरिय** पु० हरिं हरिद्वर्णं याति या-क। पीतवर्णे घोटके

**हरिलोचन** पुस्त्री० हरेरिव लोचनमस्य। १कर्कटे (काँकड़) त्रिका०। २पेचके।

**हरिवंश** पु० ६त०। १विष्णुवंशे हरेर्वंशो वर्ण्यत्वेनास्त्यत्र अच्। महाभारतान्तर्गते खिलरूपे व्यासकृते २ग्रन्थभेदे। तत्प्रतिपाद्यविषयाश्च हरिवं० ३१५ अ० उक्ता यथा "हरिवंशेऽत्र वृत्तान्ताः कीर्त्यन्ते क्रमशोदिताः। तत्रादावादिसर्गस्तु भूतसर्गस्ततः परः। पृथोर्वैण्यस्य चाख्यानं मनूनां कीर्त्तनं तथा। वैवस्वतकुलोत्पत्तिर्धुन्धुमारकथा तथा। गालवोत्पत्तिरिक्ष्वाकुवंशस्याप्यनुकीर्त्तनम्। पितृकल्पस्य चोत्पत्तिः सोमस्य च बुधस्य च। अमावसुरव्यस्य कीर्त्तनं कीर्तिवर्द्धनम्। द्युतिप्रतिष्ठा शक्रस्य प्रभवः क्षत्रविस्तरः। दिग्गेदासप्रतिष्ठा च विष्णोः श्राद्धं चाप्ययस्य च। ययातिचरितञ्चैव पुरुवंशस्य कीर्त्तनम्। कीर्त्तनं कृष्णजन्मनः स्यमन्तकमणेस्तथा। संक्षेपात् कीर्त्तिता विष्णोः प्रादुर्भावास्ततः परम्। तारकामययुद्धञ्च ब्रह्मलोकस्य वर्णनम्। योगनिद्रावस्थानं विष्णोर्नाभ्यब्जस्य तेजसः। पृथ्व्या वरस्य देवानामथावतरणं तथा। ततो नारदवाक्यञ्च स्वप्नगर्भविधिस्तथा। आर्याभिस्तवः पुनः कृष्णस्योत्पत्तिः प्रपद्यते। गोव्रजे गमनं विष्णोः शकटस्य निवर्त्तनम्। पूतनाया वधो भङ्गो यमलार्जुनयोरपि। वृकसंदर्शनञ्चैव वृन्दावननिवेशनम्। प्रावृषो वर्णनञ्चापि यमुनाह्रददर्शनम्। कालियस्यापि दमनं धेनुकस्य वधस्तथा। प्रलम्बनिधनञ्चैव शरद्वर्णनमेव च। गिरियज्ञप्रवृत्तिश्च गोवर्द्धनविधारणम्। गोविन्दस्याभिषेकश्च गोपीक्रीडनं तथा। अरिष्टस्य च दुष्टस्य केशिनो निधनं तथा। अक्रूरागमनञ्चैव नागलोकस्य दर्शनम्। धनुर्भङ्गस्य कथनं कुवलयापीडस्य परम्। कुवलयापीडनाशो चाणूरान्ध्रवधस्तथा। कंसस्य निधनञ्चापि विलापः कंसयोषिताम्। उग्रसेना-

२रावणकीडायाञ्च तल्लक्षणं यथा "पृथुं सुवृत्तं मसृणं वितस्तिमात्रोन्नतं कौ विनिखन्य शङ्कुकम्। आक्रम्य पद्भ्यामितरेतरन्तु हस्तैर्भ्रमोऽयं खलु रावणोऽयं" हरि० टी० नीलकण्ठ। [३होमे ४आह्वाने च अमर।

**हव** पु० हु-अप् ह्वे-अप् संप्र० पृषो० वा। १यज्ञे २आज्ञाया

**हवन** न० हु-भावे ल्युट्। होमे देवाद्युद्देशेन मन्त्रपूर्वक वह्नौ हविःप्रक्षेपे शब्दच०। [अमरः

**हवनी** स्त्री हूयतेऽस्याम् हु-आधारे ल्युट् ङीप्। यज्ञकुण्डे

**हवनीय** त्रि० हु-कर्मणि अनीयर्। होमीयद्रव्ये।

**हवा** अव्य० ह च वा च द्वन्द्व०। प्रसिद्धार्थे।

**हविरशन** पु० हविरश्नाति अश-युच। १वह्नौ हेमच०। २चित्रकवृक्षे च। भावे ल्युट्। ३घृतभोजने न०। [राजनि०

**हविर्गन्धा** स्त्री हविषो गन्धो यस्याम्। शम्या (शाँइ)

**हविर्गेह** न० हविषो गेहम्। यज्ञमण्डपपश्चिमदेशस्थे हवनीयद्रव्यस्थापनार्थे गेहभेदे हेमच०। [कारीवृक्षे रत्नमा०।

**हविर्मन्थ** पु० हविषे मथ्यतेऽसौ मन्थ-कर्मणि घञ्। गणि

**हविष्य** न० हविषे हितम् यत्। १घृते हेमच०। स्मृत्युक्ते हैमन्तिकाद्यन्ने च "चेरुर्हविष्यं भुञ्जाना" भाग० १०। "नारिकेलफलञ्चैव कदलीं लवलीं तथा। आम्रमामलकञ्चैव पनसञ्च हरीतकीम्। व्रतान्तरप्रशस्तञ्च हविष्यं मन्यते बुधाः" ति० त० ब्रह्मवैवर्त्तसंहिता।

**हविष्यान्न** न० कर्म०। "हैमन्तिकं सिताऽस्विन्नं धान्य मुद्गास्तिला यवाः। कलायकङ्गुनीवारा वास्तूकं हिलमोचिका। षष्टिका कालशाकञ्च मूलकं केमुकेतरत्। लवणे सिन्धुसामुद्रे गव्ये च दधिसर्पिषी। पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी। तिन्तिडी जीरकञ्चैव नागरङ्गञ्च पिप्पली। कदली लवली धात्री फलान्यगुडमैक्षवम्। अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते" इत्युक्ते व्रतादौ भक्ष्यद्रव्यभेदे।

**हविस्** न० हूयते हु-कर्मणि असुन्। १घृते अमर० २हवनीयद्रव्यमात्रे च "अपाचा मेदसो हविषोऽहम् होति" श्रुति। "सुन्वन्ति यत्र सोमो वा यदा तुषहत्वम्। पुरोडाशश्च तथैव प्रदत्ता हविरुच्यते" स्मा० त० उक्ते ३द्रव्यभेदे। भावे असुन्। ४होमे।

**हव्य** न० हु-कर्मणि यत्। १देवयोग्यान्ने अमर। २हवनीयद्रव्ये त्रि०। भावे यत्। ३होमे न०।

**हव्यपाक** पु० हव्याय होमाय पाको यत्र। होमार्थं दुग्धघृतादिमिश्रिते सिद्धे अन्ने चरौ अमरः।

**हव्यवाह** पु० हव्यं वहति देवान् वह-अण्। १अग्नौ रत्नमा० २चित्रकवृक्षे च। [अमर०। २चित्रकवृक्षे च।

**हव्यवाहन** पु० हव्यं वाहयति वह-णिच्-ल्यु। १वह्नौ

**हव्याश** पु० हव्यमश्नाति अश-अण्। १वह्नौ शब्दर० २चित्रकवृक्षे। ल्यु। हव्याशनोऽप्युभयत्र पु० हेमच०।

**हस** हासे भ्वा० प० अक० सेट् इदित् णिचि न ह्रस्वः। हसति अहसीत्। दोषदर्शनपूर्वकहासे तु सकर्मक० "स्मितोपहस्तेन पुरः सभोन" इति भट्टि। [अमर।

**ह(हा)स** पु० हस-अप् घञ् वा। हासे सुखविकासनभेदे

**हसन** न० हस-भावे ल्युट्। मौन्यात् सुखरूपोत्कटर्विकासने हासे

**हसन्ती** स्त्री हस-शतृ ङीप्। १अङ्गारधानिकायां अमर। २मल्लिकाभेदे ३शाकिनीभेदे च मेदि०। हस-मतुप्-ङीप्। हसवत् ४हर्षिणि त्रि० स्त्रियाम् ङीप्।

**हसित** न० हस-भावे क्त। १हास्ये कर्तरि क्त। २कृतहासे ३विकसिते च त्रि०। हास्यशब्दे दृश्यम्।

**हस्त** पु० हस-तन् न इट्। १देहावयवभेदे (हात) अमर। २चतुर्विंशत्यङ्गुलपरिमाणे "यवोदरैरङ्गुलमष्टसंख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः" लीला०। ३हस्तिशुण्डे च। ४अश्विन्यादिषु त्रयोदशे नक्षत्रे पुंस्त्री० मेदि०। अस्य चान्द्रे पु० इत्युग्रम्। "आर्द्रायां हस्तयोगे" इति पुराणम्। "पुष्या हस्ता तथा स्वातिः" ज्यो०। केशपाशकात् परः। ५समूहे। केशहस्त।
"हस्तदत्ताश्च ये स्नेहा लवण व्यञ्जनानि च। दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते तु किल्विषम्। तस्मादन्तरितं कृत्वा पर्णेनाथ तृणेन वा। प्रदद्यात् न तु हस्तेन नायसेन कदाचन" स्मृ० त०। [हस्ते राजनि०।

**हस्तजोड़ि** पु० हस्त जुडति जुड इन्। (हातजोड़ा)

**हस्तपुच्छ** न० ६त०। हस्तावयवभेदे (हातेर पोँछा)। त्रिका०

**हस्तवारण** न० ६त०। मारणोद्यतस्य निवारणे अमर।

**हस्तबिम्ब** न० हस्तस्य बिम्बं यत्र। अङ्गस्य चन्दनादिना देहविलेपनविशेषे हेमच०। [श्रीधरः।

**हस्तसिद्धि** स्त्री हस्तस्य तत्कर्मणः सिद्धिर्यतः। वेतने

**हस्तसूत्र** न० हस्तस्य सूत्रमिव। वलये हेमच०।

**हस्तामलक** न० हस्ते स्थितमामलकम् आमलक्याः फल तदिव वा। १करास्थितामलकफले तद्वत् २अनायासलभ्ये पदार्थे च करामलकादयोऽप्यत्र। ३वेदान्तप्रसिद्धग्रन्थभेदे च।

**हस्तिक** न० हस्तिनां समूहः कन्। हस्तिसमूहे शब्दर०।

**हस्तिकन्द** पु० हस्ती तत्प्रदर्शित कन्दोऽस्य । स्वनामख्याते कन्दभेदे (हातिकाँदा) राजनि० ।

**हस्तिकरञ्ज** पु० हस्तीव महान् करञ्जः । महाकरञ्जे राजनि० ।

**हस्तिकर्ण** पु० हस्तिनः कर्ण इव पर्णमस्य अच् । १एरण्डवृक्षे २पलाशभेदे ३गणदेवताभेदे मेदि० । ४हस्तिकन्दे ५रक्तैरण्डे च राजनि० । स्वार्थे क तत्रार्थे । हृत० । ६गजस्य कर्णे । [अमर ।

**हस्तिकर्णदल** पु० हस्तिनः कर्ण इव दलमस्य । पलाशभेदे

**हस्तिकोलि** पु० हस्तीव कोलिः । बदरीभेदे रत्नमा० ।

**हस्तिघोषा** स्त्री हस्तीव उच्चैः घोषा । हस्तिघोषायाम् भावप्रका० । [घोषायाम् रत्नमा० ।

**हस्तिघोषातकी** स्त्री हस्तीव वृहती घोषातकी । हस्ति-

**हस्तिचारिणी** स्त्री हस्तीव चरति चर-णिनि ङीप् । महाकरञ्जे राजनि० ।

**हस्तिदन्त** पु० हृत० । १करिदन्ते । तदाकारोऽस्त्यस्य अच् । २मूलके न० राजनि० तत्रार्थे पु० शब्दर० । ३हस्तिभित्ति-निखाताङ्गे काष्ठनिर्मितकीलिकाकारे पदार्थे नागदन्ता-दयोऽप्यत्र । [कर्कटीभेदे राजनि० ।

**हस्तिदन्तफला** स्त्री हस्तिदन्त इव फलमस्याः । पञ्चाली

**हस्तिन्** पु० हस्तः शुण्डादण्डोऽस्त्यस्य । १गजे २चन्द्रवंश्ये नृपभेदे च ।
"सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह । तेनेदं निर्मितं पूर्वं पुरं तु हस्तिनापुरम् । हस्तिनश्चैव दायादा स्त्रयः परमधार्मिकाः । अजमीढो द्विमीढश्च पुरुमीढ-स्तथैव च" हरिवं० २० अ० ।

**हस्तिनख** पु० हस्तिनो नख इव हस्तिना न खन्यते नञ्+खन—ड वा । १पुरद्वारस्थे मृत्कूटे अमरः । २दुर्गद्वारारोपमार्गे निम्नोन्नते स्थानोद्गते तदाग्रौ च भरतः ।

**हस्तिनापुर** न० हस्तिना तदाख्यनृपेण निर्मितं तदधिकृतत्वात् पुरम् अलुक्स० । (दिल्ली) पुरभेदे ।

**हस्तिनी** स्त्री हस्तिन योषा ङीप् । १करिण्याम् गजयो-षिति चतुर्विधस्त्रीमध्ये २स्त्रीविशेषे तल्लक्षणं यथा "स्थूलाधरा स्थूलनितम्बभागा स्थूलाङ्गुली स्थूलकुचा सुशीला । कामोत्सुका गाढरतिप्रिया च नितम्बखर्वा खलु हस्तिनी स्यात्" "हस्ते हृष्टा च हस्तिनी" रति-मञ्जरी । ३हट्टविलासिन्यां शब्दच० । [स्वार्थे क तत्रैव ।

**हस्तिप** पु० हस्तिनं पाति पा-क । हस्त्यारोहे अमरः ।

**हस्तिपत्र** पु० हस्ती तत्कर्ण इव पत्रमस्य । हस्तिकन्दवृक्षे राजनि० । [हस्तम् । राजकोशातक्याम् राजनि० ।

**हस्तिपर्णिका** स्त्री हस्ती तत्कर्ण इव पर्णमस्याः कप् अत

**हस्तिपर्णी** स्त्री हस्ती तत्कर्ण इव पर्णमस्याः ङीप् । १मोर-टालतायां रत्नमा० । २कर्कटशृङ्ग्यां राजनि० ।

**हस्तिमद** पु० हृत० । १करटकरनि सृतमदजले । स इव । २गन्धद्रव्यभेदे च राजनि० ।

**हस्तिमल्ल** पु० हस्तिषु मल्ल । १ऐरावतगजे । २गणेशे ३शङ्खे ४मागे च मेदि० । [राजनि० ।

**हस्तिरोहणक** पु० हस्तीव रोहति रुह् ल्यु स्वार्थे क । महाकरञ्जे

**हस्तिलोध्रक** पु० हस्तीव लोध्र स्वार्थे क । लोध्रभेदे राजनि०

**हस्तिविषाणी** स्त्री हस्तिविषाण गजदन्तस्तदाकार मध्य-भाग (थोड) यस्या गौरा० ङीप् । १कदल्याम् राजनि० ।

**हस्तिशुण्डा(ण्डी)** स्त्री हस्तिशुण्डस्तदाकारोऽस्त्यस्या अच् वा गौरा० ङीप् । (हातिशुँड़ा) क्षुपे राजनि० ।

**हस्तिश्यामाक** पु० हस्तीव स्थूल श्यामाकः । स्थूल-श्यामाके राजनि० । [हस्य हस्ता वा ।

**हस्ते** अव्य० हस्त+ए । १पाणौ इत्यर्थे २स्वीकारे च हस्ते-

**हस्त्य** त्रि० हस्तेन स्पृष्टः दत्तः कृतो वा यत् । १हस्तस्पृष्टे २पाणिदत्ते ३पाणिकृते सि० कौ० ।

**हस्त्यध्यक्ष** पु० ७त० । गजाध्यक्षे गजरक्षणादौ नियुक्ते "हस्तिशिक्षाविधानज्ञो वन्यजातिविशारदः । कौशलप-स्तथा राज्ञो गजाध्यक्षः प्रशस्यते" मत्स्यपु० १८९अ० ।

**हस्त्यारोह** पु० हस्तिनमारोहति आ+रुह अण् । हस्ति-पके अमरः ।

**हस्त्र** त्रि० हस-कर्मणि र । मूर्खे उज्ज्व० । [शब्दच० ।

**हहल** अव्य० हेति हलति । हालाहले स्थावरविषभेदे

**हहा** पु० हेति शब्दं जहाति हा-क्विप् । गन्धर्वभेदे शब्दमा०

**हा** त्यागे जु० प० स० अनिट् । जहाति जहति जहि जहाहि इत् हीयते अहित् जिहासति न० हीन हानि० ।

**हा** गतौ जु० आ० स० अनिट् अहित् जिहासते न० । जि-हीते अहासिष्ट अहे हानम् ।

**हा** अव्य० हा-का । १विषादे २शोके ३पीडायाम् अमरः ४कुत्सायाम् मेदि० । हाशब्दस्य निन्दापरत्वे तद्योगे षष्ठ्यर्थे द्वितीया "हा बोकं केशवद्विषम्" बोपदेवे । निन्दनीयपरत्वे न, "हा पितः" । कापि वैदेहि ।

**हाङ्गर** पु स्त्री हा विषादाय पीडायै वा अङ्गं राति रा-क । स्वनामख्याते जलजन्तुभेदे शब्दच० स्त्रियां ङीप् ।

**हाटक** न० हट-ण्वुल् । १देशभेदे २तत्रजे स्वर्णे तत्राय-

नामके धुस्तूरे च अमरकोषः। ४स्वर्णनिर्मिते त्रिलिङ्ग।

**हाटकेश्वर** पु० गोदावरीतीरस्थे शिवलिङ्गभेदे यथा "एतास्मन्नन्तरे प्राप्ता सर्वे एवर्षिपार्थिवाः। दृष्टु त्रैलोक्यभर्त्तारं त्र्यम्बकं हाटकेश्वरम्। तत कपिवर प्राप्तो हताख्या च सुन्दरि।। स्नात्वा गोदावरीतीर्थे दिदृक्षुर्हाटकेश्वरम्" वामनपु० ६०अ०।

**हात** न० हा-करणे क्त। वेतने सि० कौ०। पृषो०। हान्त। मरणे उणादि०। [कृपण" भट्टिः।

**हान** न० हा-भावे क्त। परित्यागे "हिमहानकृता न कृता

**हानि** स्त्री हा-क्तिन् तस्य नि०। १क्षतौ २अपचये च जटा०।

**हापुत्री** स्त्री हा इति रव पुत्राय यस्याः ङीप्। पक्षिभेदे हारा०। स्वार्थे क ह्रस्व। तत्रार्थे त्रिका०।

**हायन** पु० अम्बु जहाति हा–ल्यु–णि०। १व्रीहौ भाव जहाति हा–ल्यु–णि०। २वत्सरे पु स्त्री० अमर। ३अग्निशिखायां स्त्री मेदि०।

**हार** पु० हृ–कर्मणि घञ्। १मुक्तामालाभेदे अमरः "हारो नारोपितः कण्ठे" इति सीतावाक्यम्। २युद्धे मेदि०। हरतीति कर्त्तरि घञ् च वा। ३भाजके "अन्योन्य हाराभिहतौ हरांशौ" इति लीला०।

**हाफिका** स्त्री जृम्भायां (हाइतोला) हारा०।

**हारक** न० हृ–ण्वुल्। १चौरे २कितवे ३गद्यभेदे ४विज्ञानभेदे मेदि०। ५मास्फोटकभेदे शब्दच०। ६भाजकाङ्के च। ७हरणकर्त्तरि त्रि०। [कपिलद्राक्षायाम् राजनि०।

**हारहारा** स्त्री हार इव हरति आस्फाटनात् हृ–अ।

**हारहूरा** स्त्री ह्वे–क्विप् हूः हार इव हूव राति रा–क। १द्राक्षायाम् रत्ना०। २मद्ये पु० मेदि०।

**हारावली** स्त्री हार इवावली। मुक्तावल्यां "शृङ्गारहारावली" इति गङ्गास्तव०। २पुरुषोत्तमकृते कोषभेदे च।

**हारि(री)** स्त्री हृ-णिच्-इन् वा ङीप्। १द्यूतादिभङ्गे २तत्पराजये ३पथिकसमूहे च मेदि०। ङीबन्त ४मुक्तायां स्त्री शब्दमा०। [कोकिले मेदि० स्त्रियां ङीप्।

**हारिकण्ठ** पु स्त्री० हारी मनोहरः कण्ठस्वरो यस्य।

**हारित** पु स्त्री० हृ-णिच्-क्त। हारीते पक्षिभेदे शब्दा० स्त्रियां ङीप्। हरित एव स्वार्थे अण्। हरिद्वर्णे पु०।

**हारितक** न० हारितेन हरिद्वर्णेन कायति कै-क। शाके शब्दर०

**हारिद्र** पु० हरिद्रया रक्त अण्। १कदम्बवृक्षे तत्पुष्पस्य पीतप्रायत्वात् तथात्वम्। २हरिद्रया रक्ते त्रि० मेदि०।

**हारिन्** त्रि० हारोऽस्त्यस्य इनि हृ–णिनि वा। १हारके २हारविशिष्टे ३मनोहारिणि च। "हारीण्यवलानां हारीण्यवलानाम्" भट्टिः। स्त्रियां ङीप्।

**हारिल** पु स्त्री० हृ–णिच् इलच्। खनामख्याते खगभेदे राजनि० स्त्रियां जातित्वात् ङीष्।

**हारीत** पु० हृ–णिच्बा०–ईतच्। स्मृतिकर्त्तरि मुनिभेदे। २पक्षिभेदे ३कितवे च मेदि०। स्वार्थे क। हारिलखगे (हरेल) राजनि०।

**हार्द** न० हृदयस्य कर्म युवा० अण् हृदादेश। १स्नेहे २प्रेमणि अमर। हृदि भवं विदितो वा अण्। ३हृदयस्थे ४हृदयवेद्ये च त्रि० हार्दविद्या शा०भा०।

**हार्य्य** पु० ह्रियतेऽसौ हृ–ण्यत्। १विभीतकवृक्षे २हरणीये त्रि० मेदि०।

**हाल** पु० हलोऽस्त्यस्य अण् हल एव वा अण्। १बलरामे त्रिका०। २हले च मेदि०। ३शालिवाहनन्तृपे हेमच०।

**हालक** पु० हाल+संज्ञायां कन्। पीतहरितवर्णाश्वे हेमच०।

**हालह(हा,ल** न० हलाहल पृषो०। हालाहलविषे शब्दर०

**हाला** स्त्री हल-घञ्। १मद्ये अमर २तालरसजे (ताडि) मद्ये च राजनि०।

**हालाहल** पु न० हालेव हलति हल–अच्। १स्थावरविषभेदे शब्दर०। २कीटभेदे च पु० राजनि०। ३मद्ये स्त्री तत्र ङीष् राजनि०। "गोस्तनाभफला गुच्छा तालपत्रच्छदस्तथा। तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः। असौ हालाहलो ज्ञेय किष्किन्धायां हिमालये। दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते" भावप्र०।

**हालिक** त्रि० हलेन खनति हल प्रहरणमस्य तस्येदं वा ठक् ठञ् वा। १हलकर्षके २हलेन योद्धरि ३हलसम्बन्धिनि च अमरः।

**हालिनी** स्त्री हल–णिनि ङीप्। स्थूलपल्ल्याम् हेमच०।

**हाली** स्त्री हल–इण् ङीप्। कनिष्ठायां श्यालिकायाम् हेमच०।

**हालु** पु० हल–उण्। दन्ते त्रिका०।

**हाव** पु० ह्वे-भावे घञ् नि० सम्प्र०हु–करणे घञ्। १आह्वाने २स्त्रीणां शृङ्गारभावजे चेष्टाभेदे च अमरः। "युवानोऽनेन हूयन्ते नारीभिर्मदनालये। अतो निरुच्यते हावस्ते विलासादयो मताः" भरतधृतवाक्यम्। "ग्रीवारेचकसंयुक्तो भ्रूनेत्रादिविकाशकृत्। भावादीषत्प्रकाशो यः स हाव इति कथ्यते" उज्ज्वलमणिः।

**हास** पु० हस–भावे घञ्। हास्यस्थायिभावके रसभेदे तत्स्वरूपं

सा॰द॰“विकृताकारवाग्वेशचेष्टादेः कुहकाद्भवेत् । हासो हास्यस्थायिभावः श्वेतः प्रमथदैवतः । विकृताकारवाक्चेष्टं यदालोक्य हसेज्जनः । तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् । अनुभावोऽक्षिसङ्कोचवदनस्मेरतादिकः । निद्रालस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः” ।

**हासस्** पु॰ हस-णिच् असुन् । चन्द्रे वेदनि॰ ।

**हासिका** स्त्री हस–भावे ण्वुल् । हास्ये हेमच॰ ।

**हास्तिक** न॰ हस्तिनां समूहः वुण् ।१हस्तिसमूहे अमर॰ । हस्तिनमारोहति ठक् । २हस्त्यारोहे ।

**हास्तिन** न॰ हस्तिना नृपेण निर्वृत्तम् नगरम् अण् संयोगपरत्वात् टिलोपः । हस्तिनापुरे त्रिका॰ । हस्तिना इदं हस्तिनः परिमाणं वा अण् । २हस्तिसम्बन्धिनि ३हस्तिपरिमाणे च त्रि॰ ।

**हास्य** न॰ हस-ण्यत् । १हासे हसने अमरः २अलङ्कारोक्ते रसभेदे च । “अकम्पं हसितं श्रेष्ठं मौसिताख्यमथापरम् । अवसन्नहसितं दुष्येत् तत् सोन्मादस्य मैकधा” गारुडे ६६अ॰ ।

“ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च नीचानामपहसितं तथाऽतिहसितञ्च षड्भेदाः” । “ईषद्विकासि नयनं स्मितं स्यात् स्पन्दिताधरम् । किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः । मधुरस्वरं विहसितमांसशिरःकम्पमवहसितम् । अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितम्” सा॰ द॰ ।

**हाहा** पु॰ हेति शब्दं जहाति क्विप् ।१देवगन्धर्वभेदे अमरः । अदन्त हाहह शब्दोऽपि तत्रार्थे भरतः । हा–हि–क्विप् २विस्मयशब्दे ३शोकशब्दे च अव्य॰ मेदि॰ ।

**हाहाकार** पु॰हाहा इत्यस्य कारः कृ-भावे घञ् ।१युद्धशब्दे २शोकध्वनौ च । [जिघाय ।

**हि** वर्द्धने गतौ च स्वा॰पर॰सक॰अनिट् । हिनोति अहैषीत्

**हि** अव्य॰ हा-हि–वा डि । १हेतौ २अवधारणे अमर । ३विशेषे ४प्रश्ने ५सम्भ्रमे ६हेत्वपदेशे ७असूयायां च मेदि॰ ८पादपूरणे ९शोके च शब्दर॰ ।

**हिंसक** पु॰ हिन्स-ण्वुल् । १व्याघ्रादौ हिंस्रे पशौ २शत्रौ च ३आथर्वणे विप्रे ४हिंसाकारके त्रि॰ शब्दर॰ । “भोक्तानुमन्ता संस्कर्त्ता क्रयिविक्रयिहिंसकाः । उपहर्त्ता घातयिता हिंसकाश्चाष्टधा मताः” काशीख॰ ।

**हिंसा** स्त्री हिन्स–अ । १वधे मेदि॰ । २चौर्यादिकर्मणि च अमरः । “हिंसा नैव न कर्त्तव्या वैधहिंसा तु राजसी । ब्राह्मणैः सा न कर्त्तव्या यतस्ते सात्त्विका मताः” इति मनुः । वैधहिंसाशब्दे ४९७५ पृ॰ दृश्यम् ।

**हिंसारु** पु॰ हिन्स–आरु । व्याघ्रे त्रिका॰ ।

**हिसालु** पु॰ हिंसा+अस्त्यर्थे आलु । १हिंसाशीले उणा॰ । २कुक्कुरे पु॰ हारा॰ ।

**हिसीर** पु॰ हिंसा–ईरन् । १व्याघ्रे २खगे च उणा॰ ।

**हिंस्र** त्रि॰ हिन्स–र । १हिंसाशीले अमर॰ । २घोरे ३भये ४भीमसेने ५क्रूरे पु॰ उणा॰ । ६मांस्याम् ७काकादन्यां ८जटामांस्याम् ९एलुवालुकायाम् १०गवेधुकायाम् ११शिरायाम् १२नाड्यां च स्त्री शब्दच॰ । [अहिक्किष्ट ।

**हिक्क** कूजने भ्वा॰ उ॰अ॰ सेट् । हिक्कति ते अहिक्कीत्

**हिक्क** हिंसायां चु॰आ॰सक॰ सेट् । हिक्कयते अजिहिक्कत ।–

**हिक्का** स्त्री हिगिति शब्दं करोतीति पृषो॰, रोगभेदे (हेचकी) अमर ।

तन्निदानादिकं भावप्र॰ उक्तं यथा

“अथ हिक्काधिकारः । तत्र हिक्काया विप्रकृष्टं निदानमाह “विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः । शीतपानाशनस्नानरजोधूमातपाऽनिलैः । व्यायामकर्मभाराध्ववेगाघातापतर्पणैः । हिक्का श्वासश्च कासश्च नृणां समुपजायते” । अपतर्पणमनशनादि । संप्राप्तिमाह “वायुः कफेनानुगतः पञ्च हिक्काः करोति हि । अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा” । सामान्यलक्षणमाह “मुहुर्मुहुर्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन् । सघोषवानाशु हिनस्त्यसून्यतस्ततस्तु हिक्केत्यभिधीयते बुधैः” । वायुरत्र प्राणाख्यो बोद्धव्यः । उदेति ऊर्द्ध्वं याति । सस्वनः शब्दवान् । ऊर्द्ध्वगमनं विशिनष्टि यकृदित्यादि प्लिहेति शब्दोऽप्यस्ति दीर्घत्व-कल्पात् । मुखादिति ल्यब्लोपे पञ्चमी तेन यकृत्प्लीहान्त्राणि मुखमानीय आक्षिपन् निःसारयन् इवेत्यर्थः । वायुः दोषवान् दोषोऽत्र कफः तद्वान् वायुः कफेनानुगत इति यावत् । हिनस्तीति हिक्का पृषोदरादित्वात् रूपसिद्धिः हिगिति शब्दं करोतीति वा । पूर्वरूपमाह “कण्ठोरसोर्गुरुत्वञ्च वदनस्य कषायता । हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च” । वदनस्य कषायता वातात् । अन्नजामाह “पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः । हिक्कयत्यूर्द्ध्वगो भूत्वा तां विद्यादन्नजां भिषक्” अनिलः प्राणो वायुः । यमलाहिक्कामाह “चिरेण यम-

क्षेर्वेगैर्या हिक्का समवर्त्तते। कम्पयन्ती शिरोग्रीवां यमलां तां विनिर्दिशेत्"। क्षुद्रामाह "विकृष्टकालैर्या वेगैर्मन्दैः समभिवर्त्तते। क्षुद्रिका नाम सा हिक्का जत्रुमूलं प्रधावति"। विकृष्टकालैः चिरेण। जत्रु: कण्ठोरसोः सन्धिः। गम्भीरामाह "नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी। अनेकोपद्रववती गम्भीरा नाम सा स्मृता"। अनेकोपद्रववती तृष्णाज्वरादियुक्ता। महतीमाह "मर्माणि पीडयन्तीव सततं या प्रवर्त्तते। महाहिक्केति सा ज्ञेया सर्वगात्रप्रकम्पिनी"। मर्माणि बस्तिहृदयशिरःप्रभृतीनि। असाध्यत्वमाह "आयम्यते हिक्कतो यस्य देहो दृष्टिश्चोर्द्ध्वं ताम्यते नित्यमेव। क्षीणोऽन्नद्विट् क्षौति यश्चातिमात्रं तौ द्वौ चान्त्यौ वर्जयेद्धिक्कमानौ। आयम्यते विस्तार्य्यत इव तौ द्वाविति आयम्यत इत्यादिना नित्यमेवेत्यन्तेनैको हिक्कमानः। क्षीण इत्यादिनाऽतिमात्रमित्यन्तेनापरः। तौ द्वौ अन्त्यौ च गम्भीरया महत्या हिक्कया हिक्कमानौ वर्जयेत्। अपरञ्च "अतिसञ्चितदोषस्य भक्तच्छेदकृशस्य च। व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः। आसां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम्। यमिका च प्रलापार्त्तिमोहतृष्णासमन्विता"। साध्यत्वमाह "अक्षीणस्याप्यदीनस्य स्थिरधात्विन्द्रियस्य च। तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा"।

हिङ्गु न० हिम गच्छति गम-डु नि०। (हिङ्) रामठदेशोद्भवे वृक्षे अमर. यस्य निर्य्यासो हिङ्गुद्रव्यम्। "हिङ्गूष्णं पाचनं रुच्यं तीक्ष्णं वातबलासहृत्। रसे पाके च कटुकं स्निग्धञ्च वह्निदीपनम्। शूलगुल्मोदरानाहकृमिघ्नं पित्तवर्द्धनम्" भावप्र०। "हिङ्गु तीक्ष्णं कटुरसं शूलाजीर्णविबन्धनुत्। कटूष्णं पाचनं स्निग्धं दीपनं कफवातजित्" राजव०। २वंशपत्रे भावप्र०

हिङ्गुनाडिका स्त्री हिङ्गुन नाडी इव नाडी यस्याः कप्। नाडीहिङ्गौ राजनि०।

हिङ्गुनिर्य्यास पु० हिङ्गुन इव निर्य्यासोऽस्य। १निम्बवृक्षे अमर० हेम०। २हिङ्गुवृक्षनिर्य्यासे च (हिङ्)।

हिङ्गुपत्र पु० हिङ्गुन इव पत्त्रमस्य। १इङ्गुदीवृक्षे राजनि०। (हिङ्पात) २वृक्षभेदे स्त्री ङीप् भरत०।

हिङ्गुपर्णी स्त्री हिङ्गुन इव पर्णमस्याः गौरा० ङीष्। वंशपत्राम् रत्नमाला।

हिङ्गुल पुंन० हिङ्गु तद्वर्णं लाति ला-क। रक्तवर्णे वर्णकद्रव्यभेदे अमर० २वार्त्ताक्यां ३हंसपाद्यां स्त्री ङीप्। वर्णकभेदे तस्य शोधनादिकं भावप्र० उक्तं यथा "मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम्। सप्तवारान् प्रयत्नेन शुद्धिमायाति निश्चितम्"। एवं शोधितस्य हिङ्गुलस्य गुणाः। "तिक्तं कषायं कटु हिङ्गुलं स्यान्नेत्रामयघ्नं कफपित्तहारि। हृल्लासकुष्ठज्वरकामलांश्च प्लीहामवातौ च गरं निहन्ति"। अथ हिङ्गुलात् सूतकर्षणविधिः "निम्बूरसैर्निम्बपत्ररसैर्वा यामयामकम्। पश्चाद्दरदमूर्द्ध्वन्तु पातयेत् सूतयुक्तिवत्। ततोर्द्ध्वपिठरीलग्नं गृह्णीयाद्रसमुत्तमम्। शुद्धमेव हितं सूतं सर्वकर्मसु योजयेत्"। तद्वृत्तं दरदशब्दे ३४७०पृ० दृश्यम्। अतीतेहमश्मान्तस्थाने ४देवविशेषे स्त्री (हिङ्लाज)। "मध्यरन्ध्रं हिङ्गुलाया देवता भीमलोचना। कोटवी सा महामाया सिद्धिदा वा दिगम्बरी" पीठमा०।

हिङ्गुलु पुंन० हिङ्गु तद्वर्णं लाति ला-डु। (हिङ्गुल) वर्णकद्रव्ये अमर०।

हिङ्गुसिराटिका स्त्री हिङ्गुन इव सिरां पत्त्रसिरामटति अट-ण्वुल् अत इत्त्वम्। वंशपत्राम् रत्नमा०।

हिङ्गूल न० हिङ्गु+उल+पृषो०। मधुरमूले (थाकु) शब्दच०।

हिञ्ज पु० हिनोति हि-क्विप् तथा सन् जायते जन-ड कर्म०। हिन्तालवृक्षे शब्दर०। [भेदे (हिजल) जटा०

हिञ्जल पु० हि-क्विप् हिः हितकारि जलं यस्य। वृक्ष-

हिञ्जीर पु० हस्तिपादबन्धे हेमच०। [चहिञ्ज्यिक।

हिट गतौ भ्वा० प०। अक०सेट् इदित्। हिण्टते

हिडिम्ब पु० राक्षसभेदे स हि भीमेन हतः २तद्भगिन्यां स्त्री

हिडिम्बजित् हिडिम्बं राक्षसभेदं जितवान् जि-क्विप्। भीमसेने हिडिम्बसम्भवतयोऽस्य। [भार० आ०

हिडिम्बापति पु० ६त०। १घटोत्कचे शब्दर० २भीमसेने

हिण्डन न० हिडि-ल्युट्। १भ्रमणे २रमणे मेदि०। ३सेवने च विश्वः। [शब्दे हारा०

हिण्डिक पु० हिडि-इन् हिण्डौ कायति कै-क। ज्योति-

हिण्डि(ण्डी)र पु० हिडि-इरन् ईरन् वा। १समुद्रफेने अमर०। २वार्त्ताकौ ३पुरुषे मेदि० ४रुचके च उणा०।

हिण्डी स्त्री हिडि-इन् ङीप्। दुर्गायां त्रिका०।

हिण्डीप्रियतम पु० ६त०। शिवे शब्दर० हिण्डीपवादयोऽप्यत्र। [४मङ्गल्ये-च।

हित त्रि० धा-क्त हि-क्त वा। १गते २पथ्ये ३इष्टसाधने

हितक पु० हित+स्वार्थे क। शिशौ राजनि०।

**हितकारिन्** त्रि॰ हितं करोति कृ-णिनि । शुभकारके । [कारिणि स्त्रियां ङीप् ।

**हितप्रणी** पु॰ हितं प्रणयति प्र+णी क्विप् । चारे शब्दर॰ ।

**हितावली** स्त्री हितम् आवलयति आ+वल-इन् ङीप् । ओषधिभेदे अमरः ।

**हितैषिन्** त्रि॰ हितमिच्छति इष-णिनि । हितेच्छा

**हितोपदेश** पु॰ हितस्य इष्टसाधनस्य उपदेशः । १हितस्य उपदेशे विष्णुशर्मकृते २नीतिग्रन्थभेदे च ।

**हिन्ताल** पु॰ हीनस्तालो यस्मात् पृषो॰ । (हेँताल) वृक्षे अमरः "हिन्तालो मधुरास्तश्च कफकृत् पित्तदाहनुत् । श्रम व्यापहारी च शिशिरो वातदोषकृत्" राजनि॰ ।

**हिन्दोल** पु॰ हिल्लोल+घञ् पृषो॰ । १श्रावणशुक्लपञ्चविहिते दोलमहत्सवे च भगवतो दोलनकर्म्मणि २उत्सवभेदे ३रागभेदे च सङ्गीतदा॰ । ४दोलायां स्त्री स्वार्थे क । यानभेदे जटा॰ ।

**हिन्दु** पु॰ हीनं दूषयति दुष+डु पृषो॰ । जातिभेदे । "पश्चिमाम्नायमन्त्रास्तु प्रोक्ताः पारस्यभाषया । अष्टोत्तरशताशीतिर्येषां संसाधनात् कलौ । पञ्च खानाः सप्त मीरा नव शाहा महाबलाः । हिन्दुधर्मप्रलोप्तारो जायन्ते चक्रवर्त्तिनः । हीनञ्च दूषयत्येव हिन्दुरित्युच्यते प्रिये ! । पूर्व्वाम्नाये नवशतं षडशीतिः प्रकीर्त्तिताः । फिरिङ्गभाषया मन्त्रास्तेषां संसाधनात् कलौ । अधिपा मण्डलानाञ्च संग्रामेष्वपराजिताः । इंरेजा नवषट् पञ्च लण्ड्रजाश्चापि भाविनः" मेरुतन्त्रे २३प्र॰ । अप्रमाणमिदम् ।

**हिम** न॰ हि-मक् । १आकाशच्युते जलकणे २शीतलस्पर्शे ३तद्वति त्रि॰ अमरः । ४शुक्लेलायां ५रेणुकायां ६भद्रमुस्तायाम् ७नागरमुस्तायां ८पृक्कायां ९पद्मिकायां च स्त्री राजनि॰ । १०अग्रहायणपौषमासात्मके ऋतुभेदे ११चन्दनवृक्षे पु॰ हेमच॰ १२कर्पूरे पु॰ राजनि॰ ।

**हिमक** पु॰ हिमेन कायति कै-क विकङ्कतवृक्षे राजनि॰ ।

**हिमकर** पु॰ हिमः करः किरणो यस्य हिम करोति शिशिरत्वात् कृ-अच् वा । १चन्द्रे २कर्पूरे च राजनि॰ । हिमकिरणादयोऽप्यत्र ।

**हिमकूट** पु॰ हिमस्य कूट यत्र । १शिशिरर्त्तौ राजनि॰ हिमप्रचुरं कूटमस्य । २हिमगिरौ हिमालयपर्वते ।

**हिमगिरि** पु॰ हिममयो गिरिः हिमप्रधानो वा गिरिः । हिमालयपर्वते हिमपर्वतादयोऽप्यत्र ।

**हिमज** पु॰ हिमात् हिमालयात् जायते जन-ड । १मैनाकपर्वते । २पार्वत्यां ३शठ्यां स्त्री मेदि॰ । हिमे हिमकाले जायते जन-ड । ४क्षीरिण्यां लतायां स्त्री राजनि॰ ।

**हिमझण्टि** पु॰ झटि इन् ६त॰ । कुज्झटौ हारा॰ ।

**हिमतैल** पु॰ हिमवीर्य्यं तैलम् । कर्पूरजाते तैले राजनि॰ ।

**हिमदुग्धा** स्त्री हिमवीर्य्यकरं दुग्धमस्याः । क्षीरिण्याम् राजनि॰ ।

**हिमदुर्दिन** न॰ हिमहेतुकं दुर्दिनम् शाक॰ । हिमपातेन दृष्यकरे दिने कुज्झटिकायुक्तदिने त्रिका॰ । [राजनि॰

**हिमद्रुम** पु॰ हिमप्रधाने जायमानः द्रुमः । निम्बवृक्षे

**हिमप्रस्थ** पु॰ हिमः शीतलः प्रस्थो यस्य । हिमालयपर्वते हेमच॰ । [राजनि॰ ।

**हिमवालुक** पु॰ हिममयी वालुकेव अंशो यस्य । कर्पूरे

**हिमवालुका** स्त्री हिमस्य वालुकेव । कर्पूरे अमरः ।

**हिमवत्** पु॰ हिमानि प्राचुर्य्येण सन्त्यस्य मतुप् मस्य वः । हिमालयपर्वते हेमच॰ ।

**हिमवत्सुत** पु॰ ६त॰ । १मैनाकपर्वते २गङ्गायाम् ३उमायाञ्च स्त्री । "गङ्गा हिमवतो जज्ञे सर्वलोकैकपावनी । स योगाग्निबलाद्देवी लेभे पुत्रीं महेश्वरीम्" देवीपु॰१२अ॰ ।

**हिमशर्करा** पु॰ हिमप्रधाना शर्करा शा॰त॰ । यावनाले राजनि॰ ।

**हिमशैल** पु॰ हिमप्रधान शैलः । हिमाचले ।

**हिमशैलजा** स्त्री हिमशैलाज्जायते जन-ड । १उमायां शब्दर॰ २गङ्गायाम् । [(बरफ) पदार्थे च अमरः ।

**हिमसंहति** स्त्री ६त॰ । १हिमसमूहे २हिमेन जलसङ्घाते

**हिमह्रासक** पु॰ हिम ह्रसति शीतवीर्य्यत्वात् ह्रस-ण्वुल् । हिन्तालवृक्षे जटा॰ । [राजनि॰ ।

**हिमांशु** पु॰ हिमा अंशवोऽस्य । १चन्द्रे अमरः २कर्पूरे च

**हिमांश्वभिख्य** न॰ हिमांशोरिवाभिख्या शोभा यस्य । रौप्ये हेमच॰ । तस्य अतिशुभ्रत्वात् तथात्वम् ।

**हिमागम** पु॰ हिमस्यागमो यत्र । हेमन्ते अग्रहायणपौषमासात्मके ऋतौ राजनि॰ ।

**हिमाद्रिजा** स्त्री हिमाद्रौ हेमाद्रेर्वा जायते जन-ड । १क्षीरिण्यां राजनि॰ । २पार्वत्यां ३गङ्गायाञ्च ।

**हिमाद्रितनया** स्त्री ६त॰ । १दुर्गायां २गङ्गायाञ्च हिमाद्रिसुतादयोऽप्यत्र । ३मैनाके पु॰ ।

**हिमानी** स्त्री हिमानां संहतिः हिम+ङीप् आनुक् च । हिमसमूहे अमरः "आगता यत जरेव हिमानी" उद्भटः

**हिमाराति** पु॰ ६त॰ । १सूर्ये २वह्नौ मेदि॰ ३अर्कवृक्षे ४चित्रकवृक्षे च ।

**हिमालय** पु० हिमानामालयः। १हिमवत्पर्वते त्रिका०। हिमप्रधान आलयो यस्य। २शुक्लखदिरे शब्दच०। ३भूम्यामलक्यां स्त्री राजनि०। स च नग भारतवर्षस्य सीमापर्वतः। जम्बुद्वीपशब्दे दृश्यम्। [राजनि०।

**हिमाब्ज** न० हिमकाले अप्सु-जायते जन-ड। उत्पले

**हिमावती** स्त्री हिम हिमशैत्यं विद्यतेऽस्य सेवने मतुप् मस्य व मत्वाया दीर्घः। स्वर्णक्षीर्याम् अमरः।

**हिमाश्रया** स्त्री हिम हिमशैत्य माश्रयति आ+श्रि-अच्। अर्कजीवन्त्याम् राजनि०। कपिलद्राक्षायाम् राजनि०।

**हिमोत्तरा** स्त्री हिममुत्तरं यस्याः सेवने शीतशैत्यकरत्वात्।

**हिमोत्पन्ना** स्त्री हिमे उत्पन्ना। यावनाल्याः राजनि०।

**हिमोद्भवा** स्त्री हिमे तत्प्रधानस्थाने उद्भवति उद्-भू-अच्। शठ्याम् राजनि०। [मेदि०।

**हिरण** न० हृ-क्युट् नि०। १रेतसि २स्वर्णे ३वराटके च

**हिरण्मय** त्रि० हिरण्यात्मकम् मयट् नि०। १हिरण्यात्मके स्त्रियां ङीप्। "हिरण्मयी शालवृतेव जङ्गमा" भट्टिः। जम्बुद्वीपे नववर्षमध्ये २वर्षभेदे न० त्रिका०। "उत्तरेणेलावृतं नील श्वेत शृङ्गवान् इति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्यादागिरयः प्रागायता उभयतः क्षारोदावधयो द्विसहस्रयोजन पृथव एकैकशः पूर्वस्मात् पूर्वस्मादुत्तरोत्तरं दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति" भाग० ५।१६अ०।

**हिरण्य** न० हिरणमेव स्वार्थे यत्। १सुवर्णे २धुस्तूरे अमरः। ३रेतसि शब्दर०। ४द्रव्ये ५वराटके ६अक्षये ७मानभेदे ८अकुप्ये मेदि० ९रजते १०धने च।

**हिरण्यकशिपु** पु० दैत्यविशेषे। स च कश्यपात् दित्यां जातः "दित्याः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम्। हिरण्याक्षश्च दुर्धर्षो हिरण्यकशिपुस्तथा" "हिरण्यकशिपुर्दैत्यश्चचार परमं तपः। ततो वर्षसहस्राणि निराहारो ह्यधःशिराः। तं ब्रह्मा छन्दयामास दैत्यं तुष्टो वरेण वै। अवध्यत्वं वव्रे स शस्त्रास्त्रैर्न दिवानिशम्। अहं त्वं विनिर्जित्य सर्वदेवत्वमास्थित। अणिमादिगुणैश्वर्यमेष मे दीयतां वरः। तेनैवमुक्तो ब्रह्मा तु तस्मै दत्त्वा यथेप्सितम्। दत्त्वा चास्य सभां दिव्यां तत्रैवान्तरधीयत। हिरण्यकशिपुर्दैत्य श्लोके गीतः पुरातनः। राजा हिरण्यकशिपुर्दैत्यो यां यां निषेवते। तस्यां तस्यां नमश्चक्रुर्दैवता ऋषिभिः सह। एवंप्रभावो दैत्योऽभूत् हिरण्यकशिपुः पुरा। स्वयमग्निश्च चन्द्रश्च वायुरिन्द्रो जलं स्वयम्। भूत्वा चकार राज्यं स मन्वन्तरचतुर्दश। तस्यासीत् नरसिंहस्तु मृत्युर्विष्णुः पुरा किल। नखैस्तेन विनिर्भिन्नो नाड्यः शुष्का नखाः स्मृताः" वह्निपु०।

**हिरण्यकशिपुहन्** पु० हन-क्विप् ६त०। विष्णौ।

**हिरण्यकामधेनु** स्त्री विधानेन हिरण्यरचिता कामधेनुः। तुलादिषोडशमहादानमध्ये दानार्थं हिरण्येन कल्पितायाम् १धेनौ उपचारात् २तद्दाने च। तद्दानविधि "अथातः सम्प्रवक्ष्यामि कामधेनुविधिं परम्। सर्वकामप्रदं नृणां महापातकनाशनम्। लोकेशावाहनं तद्वद्धोमः कार्योऽधिवासनम्। तुलापुरुषवत् कुर्यात् कुण्डमण्डपवेदिकाः। स्वल्पेऽप्येकाग्निवत् कुर्यात् गुरुरेकः समाहितः"। कुण्डमण्डपवेदिका इत्युपलक्षणम्। इह हि देशकालद्विजाह्वानशिवादिपूजाशान्तिकपौष्टिकगुरुऋत्विग्वरणमधुपर्कदानवेदिकोपरि चक्रलेखनपञ्चवर्णवितानतोरणपताकादिकं सर्वं मत्स्यपुराणोक्ततुलापुरुषदानविहितं वेदितव्यम्। स्वल्पेऽप्येकाग्निमदिति, एकाग्निमत्करणं व्याख्यातम्। "काञ्चनस्यातिशुद्धस्य धेनुं वत्सञ्च कारयेत्। उत्तमा पलसाहस्रैस्तदर्द्धेन तु मध्यमा। कनीयसी तदर्द्धेन कामधेनुः प्रकीर्त्तिता। शक्तितस्त्रिशतादूर्द्ध्वमशक्तोऽपीह कारयेत्"। अत्र यद्यपि वत्सपरिमाणमनुक्तं तथापि कामधेनुविधानवत् तस्य काञ्चनचतुर्थांशेन वत्सः कल्पनीयः। समस्तधेनुपरिगणितद्रव्यनिष्कृष्टवदनिश्चये प्रदर्शनादिद्वारा धेनुदानत्वाविशेषात् तथैव गृह्यते। तथा च गुडधेन्वादिषु "तच्चतुर्थांशेन वत्सः स्यात्" इति तत्र तत्र श्रूयते। "वेद्यां कृष्णाजिनं न्यस्य गुडप्रस्थसमन्वितम्। न्यसेदुपरि तां धेनुं महारत्नैरलङ्कृताम्। कुम्भाष्टकसमोपेतां नानाफलसमन्विताम्"। कल्पतरुदाने, प्रस्थो व्याख्यातः। "महारत्नानि पद्मरागप्रभृतीनि, "वत्सं दद्यात् च विन्यसेदिति" क्वचित्पाठः, नानाफलानि नागरङ्गजम्बीरपुष्पप्रभृतीनि शोभनानि कल्पतरुदानोक्तानि। "तथाष्टादश धान्यानि समन्तात् परिकल्पयेत्। इक्षुदण्डाष्टकं तद्वन्नानाफलसमन्वितम्। भाजनं चासनं तद्वत् ताम्रदोहनकं तथा"। अष्टादश धान्यानि परिभाषायां दृष्टव्यानि नानाफलानि मातुलिङ्गादीनि। "कौशेयवस्त्रद्वयसम्प्रयुक्तां दीपातपत्राभरणाभिरामाम्। सचामरां कुण्डलिनीं सघण्टां सौवर्णशृङ्गां रजतखुरोपपादाम्।

रत्नैश्च सर्वैः परितोऽभिजुष्टां हरिद्रया पुष्पफलैरनेकैः । अन्यानि शुभ्राम्बरशर्कराभिः वितानकं चोपरि पञ्चवर्णम् । स्नातस्ततो मङ्गलवेदघोषैः प्रदक्षिणीकृत्य सपुष्पहस्तः । आवाहयेत् ताङ्गुडधेनुमन्त्रै द्विजाय दद्यादथ दर्भपाणिः” हेमा० दा०मत्स्यपु० । [हेमच० ।

**हिरण्यकोष** पु० हिरण्यस्य कोष इव । कृताकृतस्वर्णरौप्ये

**हिरण्यगर्भ** पु० हिरण्यं स्वर्णमयाण्डं गर्भ उत्पत्तिस्थानमस्य । १चतुर्मुखे ब्रह्मणि तस्य हैमाण्डप्रभवत्वात्तथात्वम् “तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः” मनूक्तेः । तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिना कल्पिते २हिरण्यगर्भाख्ये पात्रे ३उपचारात्तद्दाने ४शालग्राममूर्त्तिभेदे च शालग्रामशब्दे दृश्यम् । तस्य दानविधिः हेमा०दा०मत्स्यपु० “अथातः संप्रवक्ष्यामि महादानमनुत्तमम् । हेम्ना हिरण्यगर्भाख्यं महापातकनाशनम् । पुण्यं दिनमथासाद्य तुलापुरुषदानवत् । ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् । कुर्यादुपोषितस्तद्वल्लोकेशावाहनं बुधः । पुण्याहवाचनं कृत्वा तद्वत् कृत्वाधिवासनम्” । अत्र देशकालशुद्धिश्राद्धविधादिपूजाब्राह्मणवाचनगुरुऋत्विग्वरणमधुपर्कदानकुण्डमण्डपवेदिसम्भारहोमाधिवासनादि सर्वं हिरण्यगर्भादिपञ्चदशमहादानप्रकृतिभूतमत्स्यपुराणोक्ततुलापुरुषदानविहितं वेदितव्यम् । “ब्राह्मणैरानयेत् कुण्डं तपनीयमयं शुभम् । द्वासप्तत्यङ्गुलोच्छ्रायहेमपङ्कजगर्भवत् । त्रिभागहीनविस्तारं प्रशस्तं मुरजाकृति” । कुण्डमिति, हिरण्यगर्भाख्यं पात्रं, तपनीयमयं, स्वर्णमयं हेमपङ्कजम् तदेव नाभिशब्दवाच्यं, त्रिभागहीनविस्तारमिति, अष्टाचत्वारिंशदङ्गुलविस्तारमित्यर्थः । मुरजाकृति, मृदङ्गाकृति । आज्यक्षीरातिपूरितमिति क्वचित्पाठः । तत्र दधिक्षीरे तुल्यपरिमाणे, यद्यपि चातिपूरितमित्युच्यते तथापि यजमानप्रवेशेन यथा तन्न वहिरुच्छलति तथा पूरणीयम् । “दशास्त्राणि सरत्नानि दात्रं सूचीं तथैव च । हेमनालं सपिटकं बहिरादित्यसंयुतम् । तथैवावरणं नाभेरुपवीतञ्च काञ्चनम् । पार्श्वतः स्थापयेत् तद्वद्धेमदण्डं कमण्डलुम्” । दशास्त्राणि, दशखण्डानि, अस्त्राणीति क्वचित्पाठः । तानि काञ्चनानि अस्त्राकारतया, अस्त्राणीति । अस्त्रं खनित्रमिति केचित्, रत्नानि पञ्च प्रसिद्धानि, सपिटकं, पञ्चरत्नान्वितं बहिरिति । हेमकुण्डाद् बहिःप्रदेशे पार्श्वतः स्थापयेदित्यनेन सम्बन्धः । वह्निभास्करसंयुतमिति च पाठान्तरम् “वह्निभास्करयोर्लक्ष्म ब्रह्माण्डदाने वक्ष्यते । वाङ्मात्रप्रसंयुतमिति, स पाठ तदा चाप्य प्रसदृशः” । तल्लक्षणमपि तत्रैव, नाभेरावरणमिति, नाभ्यावरणार्थं सौवर्णं वस्त्रं दामादीन्यपि सुवर्णमयान्येव कार्य्याणि । “पद्माकारं विधानं स्यात् समन्तादङ्गुलाधिकम् । मुक्तावलीसमोपेतं पद्मरागदलान्वितम् । तिलद्रोणोपरिगतं वेदीमध्ये ततोऽर्चयेत्” । द्रोणः परिभाषायां व्याख्यातः । इह खलु हिरण्यगर्भनिर्माणसुवर्णपरिमाणस्यानाम्नानात् यावता यजमानस्य प्रवेशावारणोपायिकं कुण्डं भवति तावता घटनीयं, तच्च वेदिकामध्ये लिखितचक्रस्योपरि तिलद्रोणं निधाय तदुपरि संस्थाप्य पूजयेत् । अथ तुलापुरुषदानसदधिवासनदिनादन्येद्युर्ब्राह्मणवाचनं विधाय पूर्णाहुतिप्रभृतिकर्मशेषसमाप्तिं कुर्य्यात् । ततश्च कुण्डसमीपवर्त्तिकलशजलैः पूर्ववदभिषेकं, तदुक्तं । “ततो मङ्गलशब्देन ब्रह्मघोषरवेण च । सर्वौषध्युदकस्नानं स्नापितो वेदपुङ्गवैः” । सर्वौषध्यः, व्याख्याताः, “शुक्लमाल्याम्बरधरः सर्वाभरणभूषितः । इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः । नमो हिरण्यगर्भाय हिरण्यकवचाय च । सप्तलोकसुराध्यक्ष । जगद्धात्रे नमो नमः । भूर्लोकप्रमुखा लोकास्तव गर्भे व्यवस्थिताः । ब्रह्मादयस्तथा देवा नमस्ते विश्वधारिणे । नमस्ते भुवनाधार । नमस्ते भुवनाश्रय । । नमो हिरण्यगर्भाय गर्भे यस्य पितामहः । यतस्त्वमेव भूतात्मा भूतेभूते व्यवस्थित । तस्मात् मामुद्धराशेषदुःखसंसारसागरात् । एवमामन्त्र्य तन्मध्यमाविश्यास्त उदङ्मुखः । मुष्टिभ्यां परिसंगृह्य धर्मराजचतुर्मुखौ । जानुमध्ये शिरः कृत्वा तिष्ठेदुच्छासपञ्चकम्” । धर्मराजोऽत्र सुवर्णमयः, तल्लक्षणञ्च तुलापुरुषेऽभिहितं चतुर्मुखोऽपि सौवर्णः, तल्लक्षणं ब्रह्माण्डदाने वक्ष्यते । तत्र दक्षिणमुष्टौ धर्मराजः, वाममुष्टौ चतुर्मुख इति । “गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा । कुर्य्युर्हिरण्यगर्भस्य ततस्ते द्विजपुङ्गवाः” । अनवलोकनमप्यत्र विज्ञेयं, एतेषु, गर्भाधानादिषु वक्ष्यमाणेषु जातकर्मादिषु, मन्त्रयुक्तमनुध्यानमात्रमाचरणीयम् “गीतमङ्गलघोषेण गुरुं सन्तोषयेत् ततः । जातकर्मादिकाः कुर्य्यात् क्रियाः षोडश चापराः” । ता अभिधीयन्ते । जातकर्म१ नामकरणं२ निष्क्रमणं३ अन्नप्राशनं४ चूडाकर्म५ उपनयनं६ प्राजापत्यम्७ ऐन्द्रं

आग्नेयं ६ सौम्यं १० इति, चत्वारि ४ वेदव्रतानि गोदानं १५ केशान्ताः १६ चेति द्वादश, पूर्वोक्तचतुष्टयेषु षोडशत्वम्। "कृत्वोदकञ्च गुरवे दत्त्वा मन्त्रमिमं जपेत्। नमो हिरण्यगर्भाय विश्वगर्भाय ते नमः। चराचरस्य जगतो गृहभूताय वै नमः। मन्त्रोऽयं कथितः पूर्वं सर्व्वधर्माद्विजोत्तमः। त्वद्गर्भसमाचारेण दिव्यदेहो भवाम्यहम्। चतुर्भिः कलशैर्भूयस्ततस्ते द्विजपुङ्गवाः। स्नानं कुर्व्वु प्रसन्नाश्च सर्वाभरणभूषिताः"। कलशैः कुण्डसमीपस्थितैरेव, स्नानं कुर्व्वु यजमानस्येति शेषः "देवस्य त्वेति मन्त्रेण स्थितस्य कनकासने। अद्य जातस्य तेऽङ्गानि अभिषेक्ष्यामहे वयम्। दिव्येनानेन वपुषा चिरञ्जीव सुखी भव। ततो हिरण्यगर्भं तं तेभ्यो दद्याद्विचक्षण"।

**हिरण्यनाभ** पु० हिरण्यं नाभौ यस्य बहुव्री०। मैनाकपर्वते हेमच०।

**हिरण्यय** हिरण्यस्य विकारः तदात्मकं वा मयट् वेदे निपातनात् मलोपः। १ हिरण्यात्मके २ स्वर्णविकारे च "हिरण्ययेन सविता रथेना" यजु०। ३ ब्रह्म० स्वर्यं मन्त्र "अथ य एष हिरण्मयः पुरुषो दृश्यते" छान्दो० उ०।

**हिरण्यरेतस्** पु० हिरण्यं रेतो यस्य। १ वह्नौ २ चित्रकवृक्षे च अमरः। आग्नेयशब्दे दृश्यम्। ३ सूर्ये मेदि० ४ अर्कवृक्षे ५ शिवे जटा०।

वह्नेस्तन्नामकारणं यथा "यत्पीत वीतिहोत्रेण वीर्य्यं त्र्यक्षं पिनाकिना। तेनाक्रान्तोऽभवत् सद्यः मन्दतेजा हुताशनः"। "हुताशनोऽपि च भयात् यत्र तत्र परिभ्रमन्। पञ्च वर्षसहस्राणि ध्यायन् हव्यभुक् ततः। मांसमस्थीनि रक्तानि मेदोमज्जात्वचस्तथा। रोमाणि चाक्षिनासाद्या सर्वे जाता हिरण्मयाः। हिरण्यरेता लोकेऽस्मिन् विख्यातः पावकस्ततः" वामनपु० ५४ अ०।

**हिरण्यवर्णा** स्त्री हिरण्यस्येव वर्णो यस्याः। १ नदीभेदे हेमच० २ हेमतुल्यवर्णयुते त्रि० "हिरण्यवर्णां हरिणीम्" श्रीसू०।

**हिरण्यवाह(हु)** हिरण्यं वाहयति प्रापयति भक्तान् हिरण्यवर्णौ बाहुरिव वा यस्य। १ महादेवे २ शोणे नदभेदे च अमरः।

**हिरण्याक्ष** पु० कश्यपस्य पुत्रे दैत्यभेदे। हिरण्यकशिपुशब्दे दृश्यम्। स च वराहरूपेण विष्णुना हतः। "हतो हिरण्यकशिपु हरिणा सिंहरूपिणा। हिरण्याक्षो धराद्धारे बिभ्रता शौकरं वपु" भाग० ७।१ अ०।

**हिरण्याश्व** पु० हिरण्यनिर्मितोऽश्वः। तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिना १ कल्पितेऽश्वे २ तद्दाने च। "अथातः सम्प्रवक्ष्यामि हिरण्याश्वविधिं परम्। यस्य प्रसादाद्भवनमनन्तफलमश्नुते। पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम्। लोकेशावाहनं कुर्यात् तुलापुरुषदानवत्। ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम्। स्वल्पेऽप्येकाग्निवत् कुर्याद्धेमराजिमतां बुधः" अस्यादिशब्देन लोकेशावाहनग्रहादिपूजा गुरुस्त्विग्वरणमधुपर्कदानवेदिकोपरिचक्रलेखनवितानतोरणपताकाधिवासनादि मत्स्यपुराणोक्ततुलापुरुषदानवदिह कर्त्तव्यं, स्वल्पेऽप्येकाग्निमदिति, व्याख्यातं, "स्थापयेद्वेदिमध्ये तु कृष्णाजिनतिलोपरि" कृष्णाजिनविरचितद्रोणपरिमिततिलोपरीति विज्ञेयम्। "कौशेयवस्त्रसंवीतं कारयेद्धेमवाजिनम्। शक्तितस्त्रिपलादूर्द्ध्वमाशतत्रयपलाद् बुधः। पादुकोपानहच्छत्रचामरासनभाजनैः। पूर्णकुम्भाष्टकोपेतं माल्यैक्षुफलसंयुतम्। शय्यां सोपस्करां तद्वद्धेमाश्वसंयुतम्"। शय्योपस्करा विविधाभरणोपधानवस्त्रफलपुष्पभृङ्गारकर्पूरागुरुचन्दनताम्बूलदर्पणकङ्कतिकाचामरव्यजनासनपतद्ग्रहस्थितपात्रासितद्विकोपानद्युगलताम्रघटिकादिजलपात्रदीपिकावितानादयः। मार्त्तण्डसंयुतामिति, शय्योर्द्धदत्तस्य सौवर्णमश्वं कुर्य्यादित्यर्थः। सूर्यलक्षणयुक्तं ब्रह्माण्डदाने "ततः सर्वौषधिस्नानस्नापितो वेदपुङ्गवैः। इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः"। अत्रापि पूर्वेद्युरधिवासनं विधाय द्वितीयदिवसे पूर्ववत् पुण्याहवाचनादिपूर्णाहुतिपर्य्यन्तं कर्म, गुरुः समापयेत्। अथ सर्वौषधिजलस्नातः शुक्लाम्बरो यजमानस्त्रिःप्रदक्षिणीकृत्य वक्ष्यमाणमन्त्रमुदीरयेत्। "नमस्ते सर्वदेवेश! वेदाहरणलम्पट!। वाजिरूपेण मामस्मात् पाहि संसारसागरात्। त्वमेव सप्तधा भूत्वा छन्दोरूपेण भास्करम्। यस्मात् भासयसे लोकानतः पाहि सनातन!। एवमुच्चार्य्य गुरवे तमश्वं विनिवेदयेत्। दत्त्वा पापक्षयाद्भानोर्लोकमभ्येति शाश्वतम्। गोभिर्विभवतः सर्वान् ऋत्विजश्चाभिपूजयेत्। सर्वधान्योपकरणं गुरवे विनिवेदयेत्। सर्वं शय्यादिकं दत्त्वा भुञ्जीतातैलमेव हि। पुराणश्रवणं तद्वत् कारयेद्भोजनादिकम्"। दानवाक्यञ्च पूर्ववदनुसन्धेयम्, अनुष्ठानाङ्गेषु सुवर्णं दास्यामीति, यथाशक्ति सुवर्णदक्षिणा, विभवतः स्वविभवानुसारेण सर्वान् सदस्यादीन् ऋत्विजश्च गोभिः पूजयेत्, सर्वधान्योपकरणमिति विनियोगात्

हीराङ्ग पु० हीरमिव दृढमङ्गमस्य । इन्द्रस्य वज्रे शब्दमा० ।
हीलं न० ही-विस्मय लाति ला-क । शुक्रे धातौ देवधि ।
हीलुक न० हिल-उक पृषो०। गोक्षीमद्ये शब्दच०।
हीहीं अव्य० ही+हिलम् । १विस्मये २हास्ये च मेदि० ।
हु आह्वाने अदने च ज० प०सक० अनिट् । जुहोति अहौषीत् जुहाव । प्रीणने च । "जुहुधीह पावकम्" किरा०।
हुङ्कार पु० हु(हुं)मित्यव्यक्तशब्दस्य कारः कृ-घञ् । हुमित्यव्यक्तस्य प्रतिषेधस्वचकशब्दस्योच्चारणे । "सौनन्दं महाकष्ट हु(हूं)ङ्कारेणापि नश्यति" इति पुराणम् टीचमध्योऽपि ।
हुड राशीकरणे सक० मज्जने स्वाने च अक० तु० कु० प० सेट् । हुडति अहुडीत् जुहोड ऋदित् चङि न ह्रस्व ।
हुड राशीकरणे भ्वा० आ० सक० सेट् इदित् । हुण्डते अहुण्डिष्ट । [होडते अहोडिष्ट ।
हुड गतौ भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्व
हुड पु० हुड-क । १मेषे हेमच० । चौरनिवारणार्थं भूमौ निखाते २लौहकीलके च ३सैनाश्रयस्थाने ४रथोपरि विण्मूत्रत्यागार्हस्थानघट्टके च "पुरी समन्ताद्विहिता सपताका सतोरणा । सचक्रा सहुडा चैव सयन्त्रखनका तथा" भा० व० १५अ० । "चक्राणि योधगणाः हुडा-सटाश्रमस्थानानि भाषाया (हुड्ज)सथानि । अन्ये तु विण्मूत्रोत्सर्जनस्थानघट्टा'ख हुडा इत्याहुः । घटा-हरन्ति च । "कल्पान्ते हुडघट्टकाणि रथस्योपरि हरि-भि विण्मूत्रसर्गयुग्मयकराटिकार्य उद्यत इति" नीलक०
हुडुक पु० कु० हुड-बा० उक ।१वाद्यभेदे २दात्यूहखगे ३मत्-तने मेदि० (हुडक) इति ख्याते ४कपाटगडे शब्दर०।
हुडुत् न० कु० हुड-उति ।१हषशब्दे २अव्यक्ते शब्दे काशीख०।
हुडुम्ब पु० कु० हुड-उम्ब । भद्रचिपिटे शब्दमा० ।
हुणड पु० स्त्री० हुडि-अच् । १व्याघ्रे २ग्राम्यशूकरे ३राक्षसे च स्त्रियां ङीप् ।४मूर्खे त्रि०। [अमरः । भावे क्त । २होमे न०
हुत त्रि० हु-क्त । देवोद्देशेन मन्त्रद्वाराऽग्नौ प्रक्षिप्ते घृतादौ
हुतभुज् पु० हुत मन्त्रेण प्रक्षिप्त घृतादि भुङ्क्ते भुज-क्विप् । १अग्नौ २चित्रकवृक्षे च अमर ।
हुतवह पु० हुत घृतादिक वहति प्रापयति देवान् प्रीत्यर्थम् वह-अच् । १अग्नौ हेमच० २चित्रकवृक्षे च अमर ।
हुताश पु० हुतमश्नाति अश-अण् । १वह्नौ शब्दर० २चित्रकवृक्षे च । ल्यु हुताशनोऽप्यत्र । स च कर्मविशेष-विहितवह्नौ च । "कोटिहोमे हुताशनः" ति० त० ।

हुताशनी स्त्री हुताशनस्तद्दीपनमस्त्यस्या अच् गौ० ङीप् । फाल्गुनपूर्णिमायां होलाकाशब्दे दृश्यम् ।
हुम् अव्य० हु-डुमि । १स्मरणे २प्रश्ने ३अनुज्ञायां च ४निवारणे मेदि० । "गुरु हुङ्कृत्य त्वङ्कृत्येति" स्मृतिः ।
हुर्च्छ कौटिल्ये भ्वा० प० सक० सेट् । हूर्च्छति अहूर्च्छीत् हुर्च्छापाठपक्षात् क्विपि छलोपे हूः हुरौ हुर इत्यादि ।
हुल हतौ संवरणे च भ्वा० प० सक० सेट् । होलति अहोलीत ज्वला० हुलः होल ।
हुलहुली स्त्री हुल-क आभीक्ष्ण्ये द्वित्वम् गौरा० ङीष् । स्त्रीणां मङ्गलध्वनिभेदे (उलुउलु) । त्रिका०।
हुहु(हू) हे-डु नि० । गन्धर्वभेदे पृषो० हूहूरित्यप्यत्र ।
हूङ्कार पु० हूम्+कृ-घञ् । अवज्ञासूचक शब्दभेदे "हूङ्कारे-णैव त भस्म सा चकाराम्बिका तत" देवीमा० ।
हूड गतौ भ्वा० आ० सक०सेट् ऋदित् चङि न ह्रस्व । हूडते अहूडिष्ट ।
हूत त्रि० ह्वे-क्त सम्प्रसारणम् । आहूते कृताह्वाने ।
हूति स्त्री ह्वे-क्तिन् सम्प्रसारणम् । आह्वाने अमरः ।
हून पु० ह्वे-नक सम्प्रसारणं च । १म्लेच्छजातिभेदे २तद्-वासस्थानभेदे च "हूनवङ्गखसेष्वेव नान्यदेशे कदाचन" ज्यो० । ३तत्र प्रचलिते स्वर्णमुद्राभेदे इत्यन्ये । "यवनाश्च तरुष्काश्च हूनो यवन इत्यपि । चोलकाञ्चस्तु सो वालिशपाशाच रक्षितः । म्लेच्छः किरात शबर पुलिन्दाद्यास्तु तद्भिदा" जटाध० ।
हूम् अव्य० हु-बा०डूमि । १प्रश्ने २वितर्के अमरः ३स्मृतौ ४क्रोधे ५भये निन्दायाम् अवज्ञायाञ्च चक्रवर्त्ती ।
हूर्च्छन न० हूर्छ-ल्युट् । कौटिल्य । [ङीष् ।
हूरव पु स्त्री० हू इति रवो यस्य । शृगाले हेमच० स्त्रियां
हूहु(हू) पु० गन्धर्वविशेषे शब्दर० ।
हृ हरणे भ्वा० उ० द्वि० अनिट् । हरति ते अहार्षीत् अहृत जहार जह्रे हरिष्यति ते । मुख्ये कर्मणि लकारादि । ह्रियते अहारि अहारिषाताम् अहृषाताम् जिहीर्षति ते
अनु+सदृशीकरणे आ० अनुहरते पैतृकमश्व ।
अप+दूरीकरणे अपहरति अपसारयतीत्यर्थ चौर्ये च ।
अभि+आभिमुख्येन हरणे ।
सम्+अभि+पौनः पुण्येन सम्पादने ।
अभि+अव भोजने अभ्यवहरति भुङ्क्ते इत्यर्थः ।
सम्+अभि+वि+आ+नैकट्यसम्बन्धसम्पादने ।
अव+दूरीकरणे सैन्यावहार० ।

वि+अव विवादे शयनभोजनादिना संसर्ग उपभोगे च।
आ+भोजने आहारः। नानास्थानस्थितानामेकत्रसङ्कलने च
अधि+आ+तर्के अन्यत्रश्रुतपदस्यान्वयार्थमाकर्षणे च।
अभि+आ+आभिमुख्येनाहरणे।
उद्+आ+दृष्टान्ततयोपन्यासे कथने च।
प्रति+उद्+आ—प्रतिरूपतया उपन्यासे।
परि+आ+परित आहरणे [विषयेभ्यो मनसो निवारणे च
प्रति+आ+तन्त्रेण पठितानामेकैकस्य ग्रहणे प्रत्याहारः
वि+आ—कथने शब्दोत्पादकव्यापारे।
सम्+आ—समाहृते नानास्थानस्थितानामेकत्रोपन्यासे संघाते च
उद्+उत्तोलने उत्क्षेपणे च।
अभि+उद्+आभिमुख्येन उद्धरणे। अभितो वा उत्क्षेपणे।
प्रति+उद्+प्रतिकूलतया प्रातिरूप्येण वा उद्धरणे।
उप+सामीप्येन आनतीकरणार्थं दाने उपढौकने।
प्रति+उप+प्रतिरूपतया उपढौकने।
नि+नितरां हरणे छिमनिस्रवणे च।
निस्+(र)बहिष्करणे अपसारणे च।
परि+दोषादिनिवारणे।
प्र+ताडने निघाते।
प्रति+प्र+प्रतिरूपतया ताडने।
प्रति+प्रत्येकहरणे प्रतिरूपतया हरणे च।
वि+देशविशेषेषु गत्यादिना सन्तोषकरणार्थव्यापारे विहारः।
वि+अति परस्परमेकजातीयक्रियाकरणे आ०।
सम्+मारणे ताडने च। [योजने यथा गुणोपसंहारः।
उप+सम्+प्रकरणपठितस्य समापने अन्यत्र पठितस्यान्यत्र
हृ बलात्कारहरणे जु०पर०सक० अनिट् वैदिक०। जहर्त्ति
अहार्षीत्। [दयस्थिते त्रि०।
हृच्छय पु० हृदि शेते शी-अच्। १कामदेवे हला०। २हृ-
हृच्छूल न० ६त०। शूलरोगभेदे वैद्यकम्।
हृणी लज्जायां कण्ड्वा०आत्म०अक०सेट्। हृणीयते अहृ-
णीयिष्ट "हृणीयते वीरवती न भूमिः" भट्टिः।
हृणीया स्त्री हृणीय-भावे अ। निन्दायाम् अमरः।
हृत्(द्) त्रि० हृ-क्विप् तुक् च। १हारिणि। पृषो०तस्य दः,
हृदयस्य हृदादेशो वा। २हृदये ३मानसे च न० अमरः।
हृत्कम्प पु० ६त०। भयादिहेतुके हृदयकम्पे।
हृत त्रि० हृ-क्त। १अपहृते २स्थानान्तरं गमिते च ३विभक्ते
हृदय न०हृ-कयन् दुक् च। १मनसि २वक्षसि च सिद्धा०। हृद्
एति इण-अच्। परमब्रह्मणि "हृदय तस्माद्धृदयम्" छा०उ०

हृदयग्रन्थि पु० हृदयस्य ग्रन्थिरिव। अविद्यासम्बन्धरूपे
संसारबन्धे "भिद्यते हृदयग्रन्थिः" इति भागवतम्।
हृदयङ्गम त्रि० हृदय गच्छति गम-ख मुम् च। १युक्तियुक्ते
२मनोहरे त्रि० अमरः "हृदयङ्गममूर्त्तिस्त्वम्" भट्टिः।
हृदयस्थान न०हृदयस्य मनसः स्थानम् हृदयरूपं वा स्थानम्—
वक्ष स्थले हेमच०। [इनि। हृदयिन् तत्रार्थे जटा०
हृदयिक त्रि० हृदय प्रशस्तं मनोऽस्त्यस्य ठन्। प्रशस्तचित्ते
हृदयेश पु० ६त०। १भर्त्तरि २भार्य्यायां स्त्री हेमच०।
हृदावर्त्त पु० हृदि स्थ आवर्त्तः। अश्वस्य हृदयस्थे आव-
र्त्ताकारे रोमावलीभेदे त्रिका०। [हरिवं०३८अ०।
हृदिक पु० स्वयम्भाजात्मजे कृतवर्मपितरि यादवभेदे
हृदिकात्मज पु० ६त०। कृतवर्मणि यादवे।
हृदिस्पृश् त्रि० हृदि-हृदये स्पृश्यतेऽसौ कर्मणि क्विन्
अलुक्स०। १हृद्ये मनोज्ञे। कर्त्तरि क्विन्। २मर्म-
स्पृशि दुःखदे च। [क्रमेण तद्देशवासिनि त्रि० कौ०।
हृद्गोल पु०पर्वतभेदे सोऽभिजनोऽस्य छ। हृद्गोलीय पित्रादि-
हृद्ग्रन्थ पु० हृदं बध्नाति ग्रन्थ-अच्। हृद्ग्रहे राजनि०
हृद्य न० हृदि स्पृश्यते मनोज्ञत्वात् हृद्+यत्। १गुडत्वचि
(दारचिनि) शब्दर०। २मनोज्ञे त्रि०अमरः। ३दक्षिणा-
मोषधौ स्त्री। ४शक्तमन्त्रभेदे पु० मेदि०।
हृद्यगन्ध न०हृद्यो गन्धोऽस्य। चुक्रजीरके हेमच०। २बिल्व-
वृक्षे पु० जटा०। ३शाल्यां स्त्री राजनि०। ५सूक्ष्मा०।
हृद्यगन्धीत्यपि ४चुक्रजीरके न० राजनि०।
हृद्रोग पु० ६त०। हृदयस्य रोगभेदे हृदामयोऽप्यत्र।
भावप्र० तस्य निदानादि लक्षणं प्रोक्तं यथा
"हृद्रोगस्य विप्रकृष्टनिदानमाह "अत्युष्णगुर्वम्ल-
कषायतिक्तश्रमाभिघाताध्यशनप्रसङ्गैः। सञ्चिन्तनैर्वेगवि-
धारणैश्च हृदामयः पञ्चविधः प्रदिष्टः"। प्रसङ्ग-
शब्दः सततं सेवा। सञ्चिन्तनम् अतिचिन्ता राजभयादि-
जनिता। हृदामयः स च पञ्चविधः वातिकः पैत्तिकः
श्लैष्मिकः साम्निपातिकः क्रिमिजश्चेति। तस्य सम्प्राप्ति-
पूर्वकं लक्षणमाह। "दूषयित्वा रसं दोषा विगुणा
हृदयङ्गताः। हृदि बाधां प्रकुर्वन्ति हृद्रोगन्तं प्रचक्षते"।
विगुणाः दुष्टाः बाधां दोषभेदेन नानाविधां व्यथाम्।
अङ्गुष्ठतोडादिति गणदासः। वातिकं हृद्रोगमाह
"आयम्यते मारुतजे हृदयन्तुद्यते तथा। निर्मथ्यते
दीर्य्यते च स्फोट्यते पाट्यतेऽपि वा"। मारुतजे हृद्रोगे
इति शेषः। आयम्यते व्यथया विस्तार्य्यते इव। तु-

द्यते सूचीभिरिव भिद्यते। निर्मथ्यते मथनेनेव दीर्य्यते करपत्रेण द्विधाक्रियत इव। स्फोट्यते अस्त्रेणेव पाट्यते कुठारेण बहुधाक्रियत इव। अथ पैत्तिकमाह तृष्णोष्मदाहचोषाः स्युः पैत्तिके हृदये क्लमः। धूमायनञ्च मूर्च्छा च स्वेदः शोषो मुखस्य च"। उष्मा शीतगात्रस्येव शीतवातादिलाभहेतु किञ्चिदिवौष्ण्यम्। दाहः पार्श्वस्थेन वह्निनेव दुःखहेतुर्गात्रस्य सन्तापः। चोषः चूषणेनेव पीडा। हृदये क्लमः हृदयाकुलत्वं ग्लानिर्वाटलत्वं। धूमायनम् कण्ठाद्धूमनिर्गम। क्लेदः किञ्चिद्दुर्गन्ध घटित इव। वातश्लैष्मिकमाह "गौरवं कफसंस्रावोऽरुचिस्तम्भोऽग्निमार्दवम्। माधुर्य्यमपि चास्यस्य बलासावतते हृदि"। बलासावतते हृदि कुपितकफव्याप्ते गौरवं हृदयस्य। स्तम्भो जडता। माधुर्य्यं आस्यस्येति माधुर्य्यं मुखे। त्रिदोषजमाह "विद्यात्त्रिदोषमप्येवं सर्वलिङ्गकृतामयम्"। क्रिमिजमाह क्रिमयो जायन्ते यस्मिन्निति क्रिमिज इति निरुक्तिः। तस्य विप्रकृष्टनिदानपूर्विका सम्प्राप्तिमाह "त्रिदोषहेतुहृद्रोगे यो दुरात्मा निषेवते। तिलक्षीरगुडादींश्च ग्रन्थिस्तस्योपजायते। मर्म्मैकदेशे सङ्क्लेदं रसश्चाप्युपगच्छति। सङ्क्लेदात् क्रिमयश्चास्य भवन्त्युपहतात्मनः"। मर्म्मैकदेशे हृदयैकदेशे संक्लेदं ग्रथितत्वं रस उपगच्छति। सङ्क्लेदात् रसस्य ग्रथितत्वात् उपहतात्मनः तिलाद्यहिताहारेण। तस्य लक्षणमाह "उत्क्लेदः ष्ठीवनञ्चोदः सूचितोदः शूलकस्तमः। अरुचिः श्यावनेत्रत्वं शोषश्च क्रिमिजे भवेत्"। उत्क्लेदः वमनमिवोपस्थितम्। शोषो यक्ष्म। हृद्रोगस्योपद्रवानाह "क्लमः सादो भ्रमः शोषो ज्ञेयास्तेषामुपद्रवाः। क्रिमिजे च क्रिमीणां ये श्लैष्मिकाणां हि ते मताः"। क्लमः पिपासास्थानस्य सादः शोषः। शोषो मुखस्य। तेषां हृद्रोगाणां, क्रिमिजे च हृद्रोगे श्लैष्मिकाणां क्रिमीणाम् ये उपद्रवा हृद्रोगात् समग्राः ता शिरःपाकादयस्ते मताः" २कुम्भराशौ ग्रुक्तिदीपिका।

**हृद्रोगवैरिन्** पु० ६त०। अर्जुनवृक्षे शब्दर०।

**हृद्वण्टक** पु० ६त०। हृदयस्य विभाजके जठरे शब्दर०।

**हृन्नाम** पु० हृदयस्य नामो यत्र हृदादेश। हिक्कारोगे हेमच०। तेन हि हृदयस्य स्फूर्त्तिरिव भवति।

**हृल्लेख** पु० हृदय लिखति स्पृशति लिख-अण् हृदादेशः। १ज्ञाने राजनि०, २तर्के त्रिका०। ३तन्त्रोक्ते मन्त्रभेदे च।

४औत्सुक्ये स्त्री टाप्। [उदित् हृषित्वा हृष्ट्वा हृष्टः।

**हृष** चित्तोत्साहे भ्वा० पर० अक० सेट्। हर्षति अहर्षीत्।

**हृष** हर्षे चित्तोत्साहे दि० प० अ० सेट्। हृष्यति इरित् अहृषत् अहर्षीत् जीव हृष्टोऽसि। [हर्षति अहर्षीत्।

**हृष** मिथ्याकरणे भ्वा० पर० सक० सेट् उदित् क्त्वा वेट्।

**हृषित** त्रि० हृष-क्त वा० इट्। १प्रीते २विस्मिते ३प्रहते ४जातरोमाञ्चे च मेदि०। [अमर०।

**हृषीक** न० हृष-ईकक्। विषयग्राहके चक्षुरादौ इन्द्रिये

**हृषीकेश** पु० ६त०। विष्णौ अमर। अन्तर्यामिरूपेण तस्य सर्वनियन्तृत्वोक्तौ सर्वेन्द्रियप्रवर्त्तकत्वादीशत्वम्।

**हृष्ट** त्रि० हृष-क्त। १प्रीते २जातहर्षे अमरः। ३जातरोमाञ्चे ४विस्मिते च मेदि०।

**हृष्टमानस** त्रि० हृष्ट प्रीत मानसमस्य। हृष्टचित्ते शब्दर०

**हृष्टरोमन्** त्रि० हृष्टमिव जाताङ्कुर रोम यस्य। जातरोमाञ्चे पुलकिते त्रिका०। [धरणिः।

**हृष्टि** स्त्री हृष-क्तिन्। १आनन्दे २हर्षे ३ज्ञाने च

**हे** अव्य० हा-डे। १सम्बोधने २आह्वाने ३असूयादौ च मेदि०

**हेक्का** स्त्री हिक्का+पृषो०। हिक्कारोगे हेमच०।

**हेठ** विघाते भ्वा० प० सक० सेट्। हेठति अहेठीत्।

**हेठ** भूतौ उत्पत्तौ च अक० पवित्रीकरणे सक० ऋ०प० सेट्। हेठति अहेठीत्। [हेठते अहेठिष्ट।

**हेठ** बाधने भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः।

**हेठ** पु० हेठ-घञ्। १बाधायाम् २विघाते च मेदि०।

**हेड** अनादरे भ्वा०आ०सक० सेट् ऋदित् चङि न ह्रस्वः हेडते अहेडिष्ट।

**हेड** वेष्टने भ्वा० प० सक० सेट् घटा०। हेडति अहेडीत्।

**हेडावुक्क** पु० अश्वविक्रयकारके त्रिका०।

**हेति** स्त्री हन-करणे क्तिन् नि०। १अस्त्रे २अग्निशिखायां ३सूर्यकिरणे अमरः। ४तेजोमात्रे भरत। ५बाधने च श्रीधरः।

**हेतु** पु० हि-तुन्। १कारणे अमरः २अनुमितिसाधने व्याप्ये ३फले च। हेतुत्वञ्च उत्पादकज्ञापकान्यतरत्वम्। मृदो घटो जायते इत्यादौ उत्पादकत्व पर्वतो वह्निमान् धूमादित्यादौ ज्ञापकत्व तत्र ज्ञापकमेव लिङ्गशब्देन व्यवह्रियते। ४न्यायावयवभेदे तच्च लिङ्गप्रतिपादकतृतीयान्तपञ्चम्यन्तपदरूपम् तल्लक्षणन्तु अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्याविषयकशाब्दधीजनकहेतुविभक्तिमत्त्वम्। हेतु

स्वप्रतिप्राटकविभक्तिमन्न्यायावयवत्वं वा । तदाकरणप्रयोजकाकाङ्क्षाजनकमाद्यज्ञानजनकन्यायावयवत्वं वा । साध्याविषयकज्ञानजनकहेतुपञ्चम्यन्तानुमितिपरत्वत्वं वा । प्रतिज्ञावाक्यधीजन्यकारणाकाङ्क्षानिवर्त्तकज्ञानजनकहेतुविभक्तिमद्वाक्यत्वं वा" चिन्तामणिः । ४अलङ्कारभेदे अलङ्कारशब्दे ४०८ पृ० दृश्यम् ।

**हेतुता** स्त्री हेतोर्भावः तल् । हेतुत्वे कार्य्याव्यवहितपूर्व्वक्षणे नियतकार्य्याधिकरणवृत्तित्वरूपे कारणत्वे १अङ्गुलिविशेषे च "हेतुतावशरस्या" इति प्राञ्चः ।

**हेतुमत्** त्रि० हेतुरस्त्यस्य मतुप् । कार्य्ये स्त्रियां ङीप् ।

**हेत्वपह्नुति** अलङ्कारभेदे अलङ्कारशब्दे ४०८ पृ० दृश्यम् ।

**हेत्वन्तर** गौतमोक्ते निग्रहस्थानभेदे । "अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्" गौ०सू० तल्लक्षणसुक्तं "परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्टवचनम् । यथा शब्दोऽनित्यो बाह्येन्द्रियप्रत्यक्षत्वादित्युक्ते सामान्ये नैकान्तिकत्वेन च प्रत्युक्ते सामान्यवत्त्वे सतीति विशेषणम् । मा भवतु, हेतौ विशेषणदानम् एव हेत्वन्तरमित्याहुः" गौ०वृ०

**हेत्वसिद्धि** स्त्री असिद्धिभेदे स्वरूपासिद्धिरूपहेत्वाभासभेदे

**हेत्वाभास** पु० हेतुरिव आभासते आ+भास-अच्, हेतोर्वा आभासः आ+भास-घञ् । न्यायोक्ते १दुष्टे हेतौ २हेतुदोषे च । स च दोषः पञ्चविधः व्यभिचारः विरुद्धता असिद्धिः सत्प्रतिपक्षता बाधश्च । तादृशदोषवत्त्वञ्च अनुमितिप्रतिबन्धकत्वमिति । यस्य हि ज्ञानमनुमितिप्रतिबन्धकं स हेत्वाभासः । अत्र हेतुवदाभासते इति व्युत्पत्त्या हेत्वाभासपदस्य हेतुदोषपरत्वम् । तल्लक्षणञ्च हेत्वाभासत्वम् तच्च अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् । यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वम् । ज्ञायमानं यद्यद् यदनुमितिप्रतिबन्धकं तत्त्वम् । यादृशकनिश्चयस्य विरोधिविषयताप्रयुक्तस्तदुत्तरमनुमितावनाहार्य्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वस्य च द्वयाव्यतिरेकत्वत्त्वम् । केचित्तु, यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः सम्भवन्ति तावदन्यान्यत्वमिति प्राहुः" दीधि० । हेतवः सामान्याभावाद्धेतुहेतुसामान्याद्धेत्वदाभासमानाः' वा

हेत्वा० "पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेण भासमान." गौ० वृ० । "पक्षधर्मत्वादीनां पञ्चानां रूपाणां मध्ये एकमपि रूपेण हीनो हेतुः । सोऽपि कतिपयहेतुरूपयोगाद्धेतुवदवभासमानम्" त० भा० । स्वसाधको हेतुत्वेनाभिमतः । यथा वायुर्गन्धवान् स्नेहादिमत्त्वादौ स्नेहो हेत्वाभासः । स च हेत्वाभासः । पञ्चधा सव्यभिचारः । विरुद्धः । प्रकरणसमः । साध्यसम । अतीतकालः" गौ० सू० पर्य्यायान्तरेण हेत्वाभासः पञ्चधा "असिद्धः विरुद्धः । अनैकान्तिकः । प्रकरणसमः । कालात्ययापदिष्टः" । पर्य्यायान्तरेणापि हेत्वाभासः पञ्चधा । सव्यभिचारः । विरुद्धः । असिद्धः । सत्प्रतिपक्षितः बाधितः इति ।

**हेम** न० हि—मन् । १स्वर्णे २धुस्तूरे अमरः ३नागकेशरे राजनि० । ४माषकपरिमाणे च पु०विश्वः ५कृष्णवर्णाश्वे-१ हेमवर्णे च पु० ज्यो० त

**हेमकन्दल** पु० हेमवर्णं कन्दं लाति ला—क । प्रवाले हेमच०

**हेमकान्ति** स्त्री हेम्न इव कान्तिरस्याः । दारुहरिद्रायाम् राजनि० । २स्वर्णतुल्यद्युतियुक्ते त्रि० । हेम० । ३स्वर्णच्छ टीप्तौ स्त्री ।

**हेमकार** पु० हेम तन्मयं भूषणं करोति कृ-अण् । स्वर्णकारे वर्णसङ्करजातिभेदे (सेकरा) । [राजनि० ।

**हेमकिञ्जल्क** न० हेमेव पीतं किञ्जल्कं यस्य । नागकेशरे

**हेमकूट** पु० हेममयः कूटो यस्य । किंपुरुषवर्षस्य हिमालयादुत्तरस्य पर्वतभेदे अमरः । [राजनि० ।

**हेमकेतकी** स्त्री हेमेव पीतकेतकी । स्वर्णकेतक्याम्

**हेमकेलि** पु० १अग्नौ शब्दमा० । २चित्रकवृक्षे च [राजनि०

**हेमक्षीरी** स्त्री हेम इव पीत क्षीरं यस्याः । स्वर्णक्षीर्य्याम्

**हेमगन्धिनी** स्त्री हेम्नः नागकेशरस्येव गन्धोऽस्त्यस्याः इनि ङीप् । रेणुकाख्ये गन्धद्रव्ये रत्नमा० ।

**हेमगिरि** पु०हेममयो गिरिः १सुमेरुपर्वते २नैर्ऋतस्थे देशभेदे वृ०सं० कूर्मविभागशब्दे २१६८ पृ० दृश्यम् ।

**हेमगौर** पु० हेमेव गौरः पीतः पुष्पे यस्य । १अशोकवृक्षे राजनि० २स्वर्णतुल्यपीते त्रि० । [अकवृक्षे च

**हेमज्वाल** पु० हेमेव ज्वाला यस्य । १अग्नौ शब्दमा० । २चि-

**हेमतार** न० हेम तारयति उत्कृष्टं करोति तॄ—णिच्—अण् । तस्ये हेमच० ।

**हेमदुग्धक** पु० हेमवर्णं दुग्धं निर्य्यासोऽस्य कप् । १उदुम्बरे वृक्षे अमरः । २स्वर्णक्षीर्य्यां स्त्री जटा० अप

भावे तन्नार्थे स्त्री जटा०टाप् । ङीप् राजनि० ।

**हेमदुग्धिन्** पु० हेमवर्णं दुग्धं निर्यासोऽस्त्यस्य इनि । उडुम्बरे वृक्षे शब्दर० [हिंगरे राजनि० ४हिमे च माधव

**हेमन्** न० हि—मनिन् । १स्वर्णे धातौ २धुस्तूरे अमर० ३नाग

**हेमन्त** पु न० । हि-झ मुट् च । अग्रहायणपौषमासात्मके ऋतौ कालभेदे अमर । [कपिले शब्दच० ।

**हेमन्तनाथ** पु० हेमन्ते नाथ्यते याच्यते नाथ—कर्मणि घञ् ।

**हेमपुष्प** न० हेमेव पीतं पुष्पमस्य । १अशोकवृक्षे २जवापुष्पे च मेदि० । ३चम्पकवृक्षे पु० कप् । तत्र मात्रे च शब्दच०

**हेमपुष्पी** स्त्री हेमेव पीतं पुष्पमस्या ङीप् । १मञ्जिष्ठायाम् शब्दर०। २स्वर्णजीवन्त्याम् ३इन्द्रवारुण्याम् ४सुवर्ण्याम् ५कण्टकार्याञ्च राजनि० । संज्ञायां कन् ह्रस्व । स्वर्णयूथिकायाम् स्त्री । [(चाँपाकला) राजनि० ।

**हेमफला** स्त्री हेमेव पीतं पक्वफलमस्याः । स्वर्णकदल्याम्

**हेममालिन्** पु० हेमेव किरणानां मालास्त्यस्य इनि । १सूर्ये त्रि० त० । २स्वर्णहारे च [राजनि०।

**हेमयूथिका** स्त्री हेमेव पीता यूथिका । स्वर्णयूथिकायाम्

**हेमरागिणी** स्त्री हेम्न इव रागोऽस्त्यस्याः इनि ङीप् । हरिद्रायाम् त्रिका० ।

**हेमल** पु० हेम तद्वर्णं निर्मलत्वमस्यात्, तद्वर्णं वा लाति ला-क । १कलादे स्वर्णकारे २कषपाषाणे ३कृकलासे ४स्वा० मेदि० स्त्रियां ङीष् ।

**हेमलता** स्त्री हेमेव पीता लता । स्वर्णजीवन्त्याम् राजनि०।

**हेमवल** न० हेम्ना वलते शोभते वल-अच् । मौक्तिके राजनि० हिमवलमित्यपि पाठान्तरं तन्नार्थे हिमवत् शुभ्रत्वात्तथात्वम् ।

**हेमशङ्ख** पु० हेमेव शुचिः शङ्खोऽस्य । विष्णौ त्रिका० ।

**हेमशिखा** स्त्री हेमेव पीता शिखा यस्याः । स्वर्णक्षीर्याम् शब्दर० । [रत्ने रत्नच० ।

**हेमसार** न० हेम सारयति निर्मलीकरोति सृ—णिच्-अण् ।

**हेमहस्तिरथ** पु० हेमनिर्मितहस्तियुक्तो रथः । तुलापुरुषादिषोडशमहादानमध्ये दानार्थं कल्पिते १स्वर्णमयहस्तियुक्ते हेममयरथे २तद्दाने न० । तद्विधिः हेमा०दा० "अथातः संप्रवक्ष्यामि हेमहस्तिरथं शुभम् । यस्य प्रदानाद्भवनं वैष्णवं याति मानवः । पुण्यां तिथिमथासाद्य तुलापुरुषदानवत् । विप्रवाचनकं कुर्याल्लोकेशावाहनं बुधः । ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् । अत्राप्युपोषितस्तद्वद् ब्राह्मणैः सह भोजनम्" । इत्याद्यादिशब्देन देशकालदक्षिणादिसङ्कल्पनं मत्स्यपुराणोक्ततुलापुरुषस्थितं वेदितव्यम् । उपोषित इति, उपवासासक्तौ नक्तमपि पठितव्यम् । "कुर्यात् पुष्परथाकारं काञ्चनं मणिमण्डितम् । वलभीभिर्विचित्राभिश्चतुश्चक्रसमन्वितम् । लोकपालाष्टकोपेतं शिवार्कब्रह्मसंयुतम् । मध्ये नारायणोपेतं लक्ष्मीपुष्टिसमन्वितम्" । पुष्परथः, क्रीडार्थो रथः, स च चतुष्काकारेणोपर्याच्छादितो भवति सत्रभ्यो लोकपालाष्टका । लोकपालब्रह्मशिवकेशवाणमुक्तं ब्रह्माण्डदाने । मध्यशब्दः पूर्वापरव्यवस्था सम्बध्यन, शिवादीनामपि स्थानापेक्षायास्तेनैव निर्दिष्टे । नारायणादिन्यासः पञ्चरात्रात् "नारायणस्य बाहौ शङ्खं चक्रं तथोत्तरे । दक्षिणे तु महापद्मं नीलजीमूतसन्निभे । वामे कौमोदकीहस्ता पुष्टिः पद्मकरा परा" इति । "कृष्णाजिने तिलद्रोणं कृत्वा संस्थापयेद्रथम् । तथाष्टौ धान्यानि भाजनासनचन्दनैः । दीपिकोपानहच्छत्रपादुकादर्पणान्वितम् । ध्वजे तु गरुडं कुर्यात् कूबराग्रे विनायकम् । नानाफलसमायुक्तं उपरिष्टाद्वितानकम् । कौशेयं पञ्चवर्णं च अम्लानकुसुमान्वितम् । चतुर्भिः कलशैः सार्द्धं गोभिरष्टाभिरन्वितम् । चतुर्भिर्हेममातङ्गैः मुक्तादामविभूषितैः । संयुक्तं करिभ्यां च युक्तं कृत्वा निवेदयेत् । कुर्यात् पञ्चपलादूर्ध्वमाभारादपि शक्तितः" । ध्वजे तु गरुडं कुर्यादित्यादि, ध्वजो दण्डः । गरुडलक्षणमुक्तं नारदीये "उपेन्द्रस्याग्रतः पक्षी गुडाकेशः कृताञ्जलिः । सव्यजानुनतो भूमौ ऊर्द्ध्वं च फणिमण्डितः । पक्षिराजो महाबाहुस्तुङ्गनासो नताङ्गकः । द्विबाहुः पक्षयुक्तश्च कर्त्तव्यो विनतासुतः" । अथ विनायकस्य "चतुर्भुजस्त्रिनेत्रश्च कर्त्तव्योऽत्र गजाननः । नागयज्ञोपवीतश्च शशाङ्ककृतशेखरः । दन्तं दक्षकरे दद्याद् द्वितीये चाक्षसूत्रकम् । तृतीये परशुं दद्याच्चतुर्थे मोदकं तथा" । उपर्यधोहस्तयोर्दन्तादि, देयमिति, कूबरो व्याख्यातः । अम्लानकुसुमं, पुष्पविशेषः रूढ० यौगिकमपहरतीति न्यायात् अम्लानकेति प्रसिद्धमेव गृह्यते । भारो व्याख्यातः । ध्वजगतदेवताः पञ्चपलादिपरिमितेन रथनिर्माणसुवर्णेनैव निष्पादनीयाः एवं सम्भारानुपकल्प्य पूर्वेद्युरधिवासनं विधाय परदिने पुण्याहवाचनादि सकलं कर्मकाण्डं समाप्य सर्वौषधिजलैराचार्यो यजमानस्य स्नापनं कुर्यात् । "ततो मङ्गल

शब्देन स्थापितो वेदपुङ्गवैः । त्रिःप्रदक्षिणमावृत्य तर्ङ्गी- तक्रतुमार्गभिः । इममुच्चारयेन्मन्त्रं ब्राह्मणेभ्यो निवेद- येत् । नमो नमः शङ्करपद्मजार्कलोकेशविद्याधरवासुदेवैः । त्वं सेव्यसे देव ! पुराण ! यस्मात्तेजोमय स्यन्दन ! पाहि यस्मात् । यत् तत्पदं गुह्यतमं मुरारेरानन्दहेतुर्गुणरूप- मत्तः । योगैकमानसदृशो मुनयः समाधौ पश्यन्ति तत्त्व- मसि नाथ ! रथेऽधिरूढ़ । यस्मात्त्वमेव भवसागर- मग्निमानामानन्दभावजनितमध्वरपानपात्रम् । तस्मादघौ- घशमनेन कुरु प्रसादं चामीकरेभरथदानसम्प्रदानात्" । मन्त्रेणानेन प्रथमं यथाशक्ति सुवर्णदक्षिणासुपकल्प्य पूर्ववत् प्रयोगमस्याथ्य तं गजरथं गन्धर्वगजाश्वा संयुत ब्राह्मणेभ्यः प्रतिपादयेत्, आचार्याद्दीनामर्द्धचतुर्भागा- दिव्यवस्था तदनुज्ञया चान्येभ्योऽपि दानं, दीनानाथपूरण चेति, ब्रह्मविदाचरणीय तत्र पुण्याहवाचने कृते यजमानो वेदिसमीप गत्वा देवतापूजा विदध्यात् । आचार्यस्तु आहूतदेवान् विसर्जयेत्" ।

हेमाङ्ग पु० हेमेव पीतमङ्गं यस्य । १गरुडे २सिंहे ३सुमेरौ ४ब्रह्मणि मेदि० । ५चम्पकवृक्षे शब्दर० । ६विष्णौ च वि- ष्णुस० ७स्वर्णवर्णाङ्गयुक्ते त्रि० । कर्म० । हेमवस्त्येऽङ्गे न० ।

हेमाद्रि पु० हेममयोऽद्रिः । १सुमेरौ पर्वते अमरः । चतुर्वर्गचिन्तामणिमुक्ताफलादिग्रन्थकारके २विद्वद्भेदे ।

हेमाद्रिजरथ पु० हेमाद्रौ जीर्यति जॄ-क्षु । स्वर्णजीर्णम् रत्नमा० । हेमसारपयोम्ब्व त्रि० ।

हेमाह्व पु० हेम तद्वर्णमाह्वयते स्पर्द्धते स्ववर्णेन आ+ह्वे-क । १वनचम्पके राजनि० । हेम्न आह्वा आह्वा यस्य । २धुस्तूरे ३नागकेशरे च अमरः ४स्वर्णजीवन्त्यां स्त्री राजनि० ।

हेय त्रि० हा-यत् । त्याज्ये "हेयं दुःखमनागतम्" पात०सू०

हेर न० हि-रन् । १हरिद्रायाम् २मुकुटभेदे च ।

हेरम्ब पु० हे शिव रम्बते रवि-अच् अलुक्स० । १गणेशे अमरः २महिषे ३शौर्यगर्विते त्रि० मेदि० ४बुद्धभेदे पु० त्रिका० ।

हेरम्बजननी स्त्री ६त० । दुर्गायाम् शब्दर० ।

हेरम्बहट्ट पु० दक्षिणस्थे देशभेदे शब्दर० ।

हेरिक पु० हि-इक रुट् च । चरे हेमच० ।

हेरुक पु० हि-उक रुट् च । १बुद्धभेदे २महाकालगणे मेदि० ३कामाख्यापीठस्थे शिवलिङ्गभेदे "शिवलिङ्गञ्च तत्रास्ति शिलायां हेरुकाह्वयम् । मदोदक्षिणपूर्वायां नायकं तत्तु पूजयेत्" कालिकापु० ८०अ० ।

हेलञ्जी स्त्री हिल-घञ् हेलं चिनोति चि-ड पृषो० गौरा० ङीष् । हिलमोचिकायाम् शब्दच० ।

हेलन न० हिल-ल्युट् । अवज्ञायाम् शब्दर० ।

हेला स्त्री हेड-अनादरे भावे अ डस्य लः । १अनादरे स्त्रीणां शृङ्गारभावजे "प्रौढेच्छा याऽतिरूढानां नारीणां सुरतोत्सवे । शृङ्गारशास्त्रतत्त्वज्ञैः हेला सा परिकीर्त्तिता" इत्युक्ते २चेष्टाविशेषे । "देहात्मकं भवेत् सत्त्वं सत्त्वात् भावः समुत्थितः । भावात् समुत्थितो हावो हावात् हेला समुत्थिता" हाव एव भवेद्धेला व्यक्तं शृङ्गारसूचक" उज्ज्वल० ३ज्योत्स्नायाञ्च ।

हेलावुक पु० अश्वविक्रयापजीविनि हारा० ।

हेलि पु० हिल-इन् । १सूर्ये २अर्कवृक्षे च ३अवज्ञायां ङ्कर्डन्ध्रुः ४सूर्ये ज्यो०त०यानि हेलिन् सूर्ये ज्यो०त०

हेष अव्यक्तशब्दे भ्वा०आ० अ० सेट् ऋदित् चङि न ह्रस्वः । हेषते अहेषिष्ट ।

हेषा स्त्री हेष-भावे अ । घोटकानां शब्दे अमरः ।

हेषिन् पु० हेष-णिनि । अश्वे त्रिका० ।

हेहे अव्य० हे च हे च द्व० । १सम्बोधने २आह्वाने मेदि० ।

है अव्य० हा-कै । १सम्बोधने २आह्वाने च मेदि० ।

हैतुक त्रि० हेतौ प्रसृत ठक् । हेतुवादरते अयुक्तिक- वाक्यवादिनि "त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपा- ठकः" परिषदर्थे मनुः ।

हैम त्रि० हिमे भवम् अण् । १हिमजातमात्रे २प्रातःका- लीनहिमजाते जले न० राजनि० । ३भूनिम्बे पु०राजनि० । हेम्नो विकारः अण् टिलोपः । ४स्वर्णविकारे ५स्वर्ण- मयपदार्थे च त्रि० ।

हैमन पु० हेमन्त एव हेमन्ते भवो वा अण् तलोपः । १हेमन्ते काले शब्दर० । २तत्र जाते त्रि० । हेम्न इदमण् न टिलोपः । स्वर्णसम्बन्धिनि त्रि० स्त्रियां ङीप् ।

हैमन्तिक त्रि० हेमन्ते काले भवः ठञ् । हेमन्तकालभवे शालिधान्यभेदे (आमनधान) "हैमन्तिकं सिताऽस्विन्न धान्य मुद्गाश्चिता यवाः" हविष्याह्नोक्तौ ति०त० ।

हैमल पु० हिमल एव स्वार्थे अण् । हेमन्ते ऋतौ शब्दर०

हैमवत न० हिमवतोऽदूरभवो देशः तस्येदं वा अण् । १भारतवर्षस्य वर्षभेदे त्रिका० । "एतद्धैमवतं वर्षं भारती यत्र सन्ततिः" विष्णुपु० । २हिमालयसम्बन्धिनि त्रि० ३विष- भेदे पु० हेमच० । तस्यापत्यं तत्र भवो वा अण् । ४पार्वत्यां ५हरीतक्यां अमरः स्त्री ङीप् । ७स्वर्णक्षीर्यां

स्रोतश्चायाञ्च स्त्री मेदि॰ ङीप् ६गङ्गायां १०रेखाकारायां स्त्री धरणिः ङीप्। [सर्पयूथिकायां शब्दर॰।

**हैमा मी)** स्त्री हेम तद्वर्णोऽस्त्यस्य अच् वा ङीप्।

**हैयङ्गवीन** न॰ ह्योगोदोहाद् भवम् ह्यस्+गो+ख नि॰। १नवनीते रत्नमा॰। पूर्वदिनदुग्धोद्भवे २घृते च अमर॰।

**हैरिक** पु॰ हि-र हेरः तत्र प्रसृत॰ ठक्। चौरे धरणिः।

**हैहय** पु॰ पश्चिमस्थे देशविशेषे बृ॰स॰ कूर्मविभाग २१६८ पृ॰ दृश्यम् तेषां राजा अण्। २हैहयेश्वरे कार्त्तवीर्य्ये हेमच॰ पृषो॰ हैहेय तत्रार्थे शब्दर॰।

**हो** अव्य॰ ह्वे-डो नि॰। १सम्बोधने २आह्वाने च मेदि॰।

**होड** गतौ अनादरे च भ्वा॰ आ॰ सक॰ सेट् ऋदित् चङि न ह्रस्वः। होडते अजुहोडत्।

**होड** पु॰ होड-अच् हुड-अच् वा। १समुद्रगामिनौकाभेदे (डुङ्गि) त्रिका॰ २चौरापहृते च मिता॰।

**होतृ** पु॰ हु-तृच्। १ऋग्वेदाभिज्ञे अमरः। २होमकर्त्तरि त्रि॰ स्त्रियां ङीप्। "या हविर्या च होत्री" शकुन्तला।

**होत्र** न॰ हु-ष्ट्रन्। १होमे हेमच॰। २हविषि घृतादौ च त्रिका॰ ३स्तुतौ स्त्री टाप्।

**होत्रीय** न॰ होत्राय हितम् होतुरिदं वा छ। १हविर्गृहे हेमच॰। २होतृसम्बन्धिनि त्रि॰।

**होम** पु॰ हु-मन्। देवतोद्देशेन वह्नौ मन्त्रद्वारा घृतादित्यागरूपे हवने नित्यं स्वाहास्वधावषट्सु पञ्चसु यज्ञेषु मध्ये २देवयज्ञे अमरः। ३आशीर्व्विषप्रपाशौ आशीर्य्याप्यभागस्य मन्त्रे च दाने च श्रा॰ त॰।

**होमकुण्ड** पुंन॰ होमार्थं कुण्डम्। होमार्थे कुण्डे त्रिका॰

**होमधान्य** न॰ होमोपयुक्तं धान्यम्। १तिले २यवे च राजनि॰।

**होमधूम** पु॰ होमजः धूमः। होमार्थाग्निजाते धूमे हेमच॰

**होमभस्मन्** न॰ होमस्य भस्म। हुतद्रव्यजाते भस्मनि हेमच॰

**होमाग्नि** पु॰ ६त॰। यज्ञियाग्नौ हेमच॰।

**होमि** पु॰ हु-मि सुट् च। १अग्नौ २घृते च मेदि॰ ३जले शब्दर॰। ४चित्रकवृक्षे। [राजनि॰

**होमिन्** पु॰ होमोऽस्त्यस्य इनि। होमकर्त्तरि।

**होम्य** त्रि॰ होमाय हितम् यत्। होमोपयुक्ते घृतादौ

**होरा** स्त्री हु-रन्। ज्योतिषोक्ते १लग्ने २राश्यर्द्धभागे ३होराज्ञापकशास्त्रभेदे ४रेखायाञ्च मेदि॰। 'विषमर्क्षेषु प्रथमा होरा' सूर्यस्योदिता॰। द्वितीया॰ शशिनो युग्मे व्यत्ययाद्गणयेत् सदा" ज्यो॰ त॰। "चतुर्विंशतिरेताभिरहोरात्रं प्रचक्षते। पश्चिमादह-रात्रादि होराख्या विद्यते क्रमः" वह्निपु॰।

**होलक** पु॰ हु-क्विप् लकति लक-अच् कर्म॰। "अर्द्धपक्वैः शमीधान्यैस्तृणभ्रष्टैश्च होलकः" इत्युक्ते तृणादिना अर्द्धपक्वे शमीधान्ये "होलकोऽल्पानिलो मेदःकफदोषत्रयापहः। भवेद् यो होलको यस्य स च तत्तद्गुणो भवेत्" भावप्र॰।

**होलाक** पु॰ स्वेदविशेषार्थव्यापारभेदे चरकः तत्र दाकाक इत्यत्र होलाक पाठान्तरम्।

**होलाका** स्त्री हु-क्विप् तं लाति ला-क सप्तम्यां अलुक्। १वसन्तोत्सवभेदे उपचारात् तत्काले फाल्गुनपौर्णमास्याञ्च। पृषो॰ होली होलिका होलकाऽप्यत्र। होलाकाविधिश्च आचारप्राप्त इति माधवाचार्य्याः। पुराणादिप्रसिद्धः शास्त्रमूलोऽयम् आचार इति हेमाद्रिनिर्णयसिन्धुप्रभृतयः। तद्विधिकालौ नि॰सि॰ उक्तौ यथा "फाल्गुनपौर्णमासी होलिका सा च सायाह्नव्यापिनी ग्राह्या "सायाह्ने होलिकां कुर्य्यात् पूर्वाह्णे क्रीडनं गवामिति" वचनादिति निर्णयामृते उक्तम्। ज्योतिर्निबन्धे तु "प्रतिपद्भूतभद्रासु याऽर्च्चिता होलिका दिवा। संवत्सरञ्च तद्राष्ट्रं पुरं दहति साद्भुतम्। प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा। तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे" इति नारदवचनात् प्रदोषव्यापिनीत्युक्तम्। हेमाद्रौ मदनरत्ने च भविष्ये "तस्यां निशागमे पार्थ! संरक्ष्याः शिशवो गृहे। गोमयेनोपलिप्ते च सचतुष्के गृहाङ्गणे" इत्यादिना तत्रैव तद्विधानाच्च। तेनेयं पूर्वविद्धा "श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी। पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्" इति ब्रह्मवैवर्त्तोक्तेश्च। दिनद्वये प्रदोषव्याप्तौ परैव पूर्वदिने भद्रासत्त्वात् तत्र च होलिकानिषेधात् तदुक्तं निर्णयामृते मदनरत्ने च पुराणसमुच्चये "भद्रायां दीपिता होली राष्ट्रभङ्गं करोति वै। नगरस्य च नैवेष्टा तस्मात् तां परिवर्जयेत्"। तथा "भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा। श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी"। तथा "दिनार्धात् परतोऽपि स्यात् फाल्गुनी पूर्णिमा यदि। रात्रौ भद्रावसाने तु होलिका दीप्यते तदा" इति। यदा तु पूर्वदिने चतुर्दशी प्रदोषव्यापिनी परदिने च क्षयवशात् सायाह्नात् प्रागेव पूर्णिमा समाप्यते तदा पूर्वदिने संपूर्ण

